७२३. २१ **जननाम्नः**—न-*मॅ । जरनाम्नः—इतरेषु मु-पुस्तके च । अनु., बृहद्दे. ५. १४, देवराज ( निरु. ४. १८ ), ताण्ड्य ब्रा. १३. ३. १२ एषु द्रष्टव्यम् ॥ ७२३. २४ **वृशो वा जानः**—स-मॅ । वृशो वा जारः—इतरेषु मु-पुस्तके च ॥ ७२४. ६ **वृशो जानः**—य-स-मॅ । वृशो जारः—इतरेषु मु-पुस्तके च ॥ ७२४. १० **निहतो द्विजः**—ख-ग-च-ण-त-फ-य-ल । निहतो द्विजाः—मॅ-मु ॥ ७२४. २५ **जानो वा**—*मॅ । जारो वा—§-मु ॥ ७२६. ११ **व्ययोजयन्**—*मॅ । वियोजयन्—मु ॥

७३०. ८ **मित्रमिव त्वाम्**—§ । मित्रमिव—मॅ-मु ॥ ७३१. २१ **मर्तान्**—ग-घ-ज-ण-प-भ-य-ल-स-मु । मर्त्यान्—मॅ ॥

७३५. ७ **उपरितनभागे आज्योपेतम्**—ख-ग-ण-न-भ-य-ल-स-मु । उपरितनभागाज्योपेतम्—मॅ ॥ ७३६. २ **उपागच्छ**—ख-ग-घ-ण-त-न-प-फ-भ-य-स । उपगच्छ—मॅ-मु ॥ ७३७. ९. **दुःखेन गाह्यानि**—*मॅ । दुःखेन ग्राह्याणि—मु ॥ ७३७. १९ **अविनाशम्**—ख-ग-घ-च-ण-न-प-भ । अनाशम्—य-मॅ-मु ॥ ७३८. ९ **गोमन्तं गोभिर्युक्तम्**—ख-ग-च-ण-प-फ-भ । गोमन्तम्—य-मॅ-मु ॥

७४५. ७ **सं संस्कुरुत**—ख-ग-च-ण-प-फ-भ । संस्कुरुत—य-मॅ-मु ॥ ७४५. २३ **मानुषाणां मनुष्याणाम्**—ख-ग-घ-च-ण-त-प-फ-भ-स-मु । मनुष्याणाम्—य । मानुषाणाम्—मॅ ॥ ७४७. ३ **चित् पूरणः**—ख-ग-च-ण-प-फ-भ । मॅ-मु–पुस्तकयोः नास्ति ॥ ७४७. १० **उरु भवन्**—न-ल-स-*मॅ-मु ॥ ७४८. १० **अग्नेः** । ‘अग्ने’ इत्यस्य स्थाने ‘अग्नेः’ इति सायणेन पठितम् ॥

७४९. १६ **होत्राणां होमानाम्**—ख-ग-च-ण-फ-भ । होमानाम्—य-मॅ-मु ॥ ७५०. ८ **बहुभिः स्तुत**—ख-ग-च-ण-फ-भ । बहुभिः स्तुत्य—य-मॅ-मु ॥

७५३. २० **औणादिकइस्प्रत्ययान्तः**—ख-च-झ-त-न-र-मु । औणादिकइस्प्रत्यय° ( स्वरेणान्तोदात्तः )–य । औणादिकइस्प्रत्ययान्तत्वात्—मॅ ॥ ७५३. २२ **देवम्**—मॅ-मु-× ॥ **मर्तासः**—मॅ-मु-× ॥ ७५३. २४ **टेरेत्वम्**—§-मु । झेरेत्वम्—मॅ ॥ ७५४. २५ **मतुप आदुपधत्वात् वत्वम्** । प्रकृतेराकारोपधत्वात्ततः परस्य मतुपो मकारस्य ‘मादुपधायाः°’ ( पा. सू. ८. २. ९ ) इति सूत्रेण वत्वमित्यर्थः । मतुप आदुपधात्वाद्वत्वम्—य । मतुपोऽदुपधत्वाद्वत्वम् ?–मॅ-मु ॥ ७५५. १७-१८ **विभक्तेरुदात्तत्वम्**—मॅ-मु । विभक्तेरन्तोदात्तत्वम्—§ ॥ ७५६. १४ **ध्मातरि यथा** । यथा ध्मातृसमीपे—मॅ-मु । ध्मातरि यथा ध्मातृसमीपे—§ ॥ ७५६. १९ **उभे अभ्यस्तमित्यभ्यस्तसंज्ञायाम्**—§-मु । उभे अभ्यस्तसंज्ञायाम्—मॅ ॥ ७५६. २५ **हे अग्ने अहम्**—§-मु । हे अग्ने–मॅ ॥ ७५७. ३ **इत्यन्तोदात्तत्वेन**—ख-च-झ-ण-न-भ-य । इत्यन्तोदात्तत्वे–मु । इत्यन्तोदात्तः–मॅ ॥ ७५७. ५ **गतेः प्रकृतिस्वरत्वम्**—ख-च-झ-ण-न-भ-य-र । गतेरुदात्तत्वम्—मॅ-मु ॥ ७५७. १४ **हविषां नेता त्वम्**—त । हविषां नेतारः—य-मॅ-मु ॥

७५८. ९ **उब्जेर्बले बलोपश्च**—§-मु । उब्जेर्बलोपश्च–मॅ ॥ ७५८. १५ **तत्तथोक्तम्**—*मॅ-मु । तथोक्तम्—§ ॥ ७५९. २ **यज्ञघातुकराक्षस°**—ख-च-झ-ण-न-भ-य-र-श । यज्ञघातकराक्षस°—मॅ-मु ॥ ७५९. १८-१९ **वर्धय वृद्धिं प्रापय**—ग-ज-न-र-मु । वर्धय प्रापय वृद्धिं प्रापय—य-मॅ ॥ ७६०. २ **सर्वसमृद्धि°**—झ-त-न-य-र-श-मु । समृद्धि°-मॅ ॥ ७६०. ४-५ **सर्वदिगन्तरालवर्तिनी**—ख-च-झ-ण-न-भ-य-र-मु । सर्वदिगन्तरावर्तिनी—मॅ ॥ ७६०. १७ **तव अर्चयः**—§-मु । तव अर्चिषः—य । अर्चयः—मॅ ॥ ७६१. १ **दारिद्र्यनिमित्त°**—झ-न-भ-य-र-मु । दारिद्रनिमित्त°—मॅ ॥ ७६१. २ **अस्माकासः आस्माकाः**—ग-न । अस्माकासः अस्माकाः ?-य-मॅ-मु ॥ ७६१. १७

पूर्वैः—§। पूर्वैः पुरातनैः—मॅ-मु ॥ ७६१. २३ भवतेरगागमम्—ख-च-झ-ण-न-भ-य-र। भवतेरगागमे—मॅ-मु ॥

७६२. १५ इत्युत्तरपदान्तोदात्तत्वम्—मॅ। इत्युत्तरपदाद्युदात्तत्वम्–§-मु ॥ ७६३.३ प्रत्ययस्वरेण मध्योदात्तः—*मॅ। प्रत्ययस्वरेणान्तोदात्तः—§-मु ॥ ७६३. ८ स्वजनननिमित्तत्वात्—झ-न-भ-य-र-श-मु। स्वजनननिमित्तात्—मॅ ॥ ७६३. १५ क्रमेरिन्—न-*मॅ। कमेरिन्—मु ॥

७६५. १३ सस्यपोषणार्थम्—ख-च-झ-त-न-भ-य-र। तस्य पोषणार्थम्—मॅ-मु ॥ ७६५.२४ पश्वादिलक्षणस्य धनस्य—ख-च-झ-ण-त-न-भ-य-र। पश्वादिलक्षणस्य—मॅ-मु ॥ ७६६. ९ ते त्वदीयाः कीदृशाः—ख-च-झ-ण-न-भ-र। ते त्वदीयाः के कीदृशाः—य। त्वदीयाः के कीदृशाः—मॅ-मु ॥ ७६६. १३ द्युमन्तः दीप्तिमन्तः—§। द्युमन्तः—मॅ-मु ॥ ७६६. २१ परनिन्दादीनि कुर्वाणाः—ख-च-झ-ण-त-न-भ-य-र। परनिन्दादिकुर्वाणाः—मॅ-मु ॥ ७६७. १० त्वत्परिचर्यां गच्छतः—ख-च-झ-ण-त-न-भ-य-र। परिचर्यां गच्छतः—मॅ-मु ॥

७६७. १३ आग्नेये क्रतौ गायत्रे छन्दसि—झ-त-न-भ-य-र-श-मु। आग्नेयक्रतौ गायत्रछन्दसि-मॅ ॥ ७६८. १३ त्वां वर्धन्ति—§-मु। तं त्वां वर्धन्ति—मॅ ॥ ७६८. २० राध्नुवन्ति साधयन्ति अनेन—ख-झ-ण-त-न-य-र-श-मु। साधयन्त्यनेन—मॅ ॥

७७०. ३ अष्टादश सूक्तानि—ख-च-झ-ण-त-न-भ-य-र-मु। दश सूक्तानि?–मॅ ॥ ७७०. २० नॄन् नेतॄन्—§-मु। नॄन्—मॅ॥ ७७१. २१-२२ यद्वा तमापद्भ्योऽपारयः—ख-च-झ-ण-त-न-भ-य-र-श-मु। मॅ-पुस्तके नास्ति ॥

७७१. २३ पूरोरार्षम्—मॅ-मु। पुरोरार्षम्–§। ७७२. १६ अत्राप्येवमेव ॥ ७७२. १४ हविः आनुषक्—ख-झ-फ-य-र-मु। हविर्देवेषु आनुषक्—मॅ ॥ ७७२. २१ वृद्धानि प्रवृद्धानि शोचींषि—ख-ग-च-ज-ण-त-न-प-फ-ब-भ-य-र। वृद्धानि शोचींषि—घ-श-मॅ ॥

७७४. ६ साधनेन तं प्रसिद्धम्—ख-च-झ-ण-न-भ-य-र-श-मु। साधनेन प्रसिद्धम्–मॅ ॥ ७७४. २१ दस्मस्य दर्शनीयस्य—ख-च-झ-ण-न-भ-य-र-श-मु। अस्य दस्मस्य दर्शनीयस्य–मॅ ॥ ७७५. ५ क्षिप्रं प्रयच्छ—ख-झ-ण-त-न-भ-य-र-श-मु। क्षिप्रं यच्छ–मॅ ॥ ७७५. ८-९ व्यत्ययेन मध्यमः—ख-च-झ-ण-त-न-भ-य-र-श-मु। व्यत्ययेन मध्यमा—मॅ ॥

७७७. १६ जनाः अनिमिषम्—ख-च-झ-ण-न-भ-य-र-मु। जनास्त्वा अनिमिषम्—मॅ ॥ ७७७. १६ जुहुरे जुहुविरे—ख-च-झ-ण-त-न-भ-य-र। जुहुरे जुह्विरे—मु। जुहुरे-मॅ ॥

७७८.२० अस्तेर्लेटि रूपम्—मॅ। अस्तेर्लिटि रूपम्—मु। अस्तेर्लोटि रूपम्—श। अस्तेर्लङि रूपम्—ख-च-झ-ण-त-न-भ-र। अस्तोर्लङि—य ॥

७७९. ६ श्रवणीयं प्रशस्यम्—ख-च-झ-ण-त-न-भ-य-र-श-मु। श्रवणीयं शस्यम्—मॅ ॥ ७७९. १३ अपनीताः—मॅ। अप अपनीताः—मु। अपनीत्वा—ख-च-झ-णं-भ; अपनीयाः—ग-घ-ज-त; अपनीचाः—न-य-र; अपनीय—श ॥ ७७९. १५ ह्वरः अति हिंसाम्—मॅ। ह्वरः हिंसाम् —§-मु। एवमेव पठनीयम् ॥

७८१. १८ योनिं कारणम्—झ-न-भ-य-श। योनिः कारणम्—मु। योनिं योनिकारणम्—मॅ ॥

७८२. १४ प्रैतु प्रगच्छतु—ख-च-झ-ण-न-भ-य-र। प्रैतु प्रगच्छतु—मु। प्रैतु गच्छतु—मॅ ॥ ७८३. १ स्तोत्रं च चिकिद्धि—ख-च-झ-ण-त-न-भ-य-र-मु। स्तोत्रं चिकिद्धि—मॅ ॥

७८३. १२ मह्यं ऋषये—ग-घ-ज-प-फ-ब। मम ऋषये—य-मॅ-मु॥ ७८४. ९ अस्मदीयेषु एषु क्षयेषु—ख-झ-न-प-फ-ब-भ-य-र। अस्मदीयेषु क्षयेषु—मॅ-मु॥ ७८४. १० आदीदिहि आदीप्यस्व—त-न-भ-य-र-मु। दीदिहि दीप्यस्व—मॅ॥

७८४. १४-१५ इत्युक्तत्वाच्चतस्रो......लौपायना वा—झ-त-न-भ-य-र-मु। इत्युक्तत्वाच्च—मॅ॥ ७८५. ९ अतिशयेन शोचिष्मन्—ख-च-झ-ण-न-भ-य-र। अतिशोचिष्मन्—मॅ-मु॥ ७८५. १४ इत्यृचमनुब्रूयात्......इत्यृचमन्वाह?—§-मॅ। इति तृचमनुब्रूयात्......इति तृचमन्वाह—मु। आश्व. श्रौ. ५. ७ अत्र द्रष्टव्यम्॥ ७८७. १ याज्यानुवाक्ये—मॅ-मु। याज्यानुवाक्ये इति—§॥ ७८७.१७ जेतारं शत्रून्—§। जेतारं शत्रूणाम्—मॅ-मु॥ ७८८. २ अन्नं धनं चार्चं—ग-घ-च-झ-न-य-र-श। अन्नं धनमर्चं—मु। अन्नं धनं वार्चं—मॅ॥ ७८८. १० उतो अपि च—मॅ। उत अपि च—§-मु॥ ७८८. १६ अस्माकं बलमाचरन्तम्—ख-च-झ-ण-त-न-भ-य-र-श। अस्माकं बलमिवाचरन्तम्—मॅ-मु॥

७९१. २ सतां पालयिता—§-मु। सतां साधूनां पालयिता—मॅ॥ ७९१. ४ गवां हिरण्यानां वा—ख-च-झ-ण-न-भ-य-र-मु। गवां हिरण्यादीनाम्—मॅ॥ ७९१. १८ यथा मां ब्रवीति—ख-च-झ-ण-न-भ-य-र-मु। तथा मां ब्रवीति—मॅ॥

७९३. २५-२६ अग्ने त्वं जास्पत्यं—ख-च-झ-न-प-भ-य-र। अग्ने त्वं जाःपत्यम्—ग-घ-ज-फ। अग्ने सं जास्पत्यम्—श-मॅ-मु॥

७९५. १ मण्डलादिपरिभाषया—§-मु। मण्डलादिपरिभाषाया:—मॅ॥ ७९६. १४ व्ययतेर्वा—*मॅ-मु। वेतेर्वा—§॥ ७९७. २ कः अकार्षीः—मॅ। अकः अकार्षीत्—ख-च-झ-ण-न-भ-र-मु; अकः अकार्षीः—ग-घ-ज-प-फ-ब-य-श॥ ७९७. २ स्वश्वपुत्रेण—*मॅ। स्वभावेन—त-न-श-मु; स्वभावे—झ-भ-य-र; स्वभाव—ख-च-ण॥ ८००. ८ त्वं या चो—मॅ। या चो—§-मु॥ ८०१.३ उपहारवत् ग्राह्याणि—ख-च-झ-ण-न-भ-य-र-श। उपसंहारवत् ग्राह्याणि—मॅ-मु॥

८०२. ९-१० विद्वान् शृणवच्च—*मॅ। शृणवच्च—§-मु॥ ८०३.४ कीदृशीः—य-मॅ। कीदृश्यः-ग-घ-ज; कीदृशाः—इतरलिखितपुस्तकेषु मु-पुस्तके च॥ ८०३. २४ एतन्नामकस्य दासस्य—ख-ग-घ-च-ज-झ-ण-न-प-फ-ब-भ-य-मु। एतन्नामकस्य—र-श-मॅ॥ ८०४. १५ प्रहितवान्—च-त-य-मु। प्रतिहितवान्—मॅ॥ ८०५. २३ प्रतिगृहीतवन्तः स्मः—मॅ। प्रतिगृहीतवन्तः स्म—§-मु॥

८०७. १६ अन्यत् वस्तुजातम्—§। अन्यद्वसुजातम्—मॅ-मु॥ ८०९. १३ मायाः प्रज्ञाः—*मॅ। मायाः युवतीः—मु। मायाः वञ्चनाः—§॥ ८०९. १४ समीपं वा यन्—*मॅ-मु। समीपं यन्-झ-न-भ-य-र; समीपयन्—ख-च-ण-त-श॥ ८०९. २२ अयातमगच्छतम्—मु। अगच्छतम्—य। अयातमागच्छतम्-मॅ॥ ८१०. २३ गच्छन्त्यस्यां भटाः—ख-च-झ-ण-त-न-भ-र। गच्छन्त्यस्यां भये—मॅ-मु॥ ८११. १० प्रेरणं चरन्ति कुर्वन्ति—ख-च-झ-ण-त-न-भ-य-र-श-मु। प्रेरणं चरन्ति—मॅ॥ ८११. १६ धनार्थिनो ये जनाः—ख-च-झ-ण-न-भ-य-र-श। धनार्थं ये जनाः—मॅ-मु॥

८१२. ७ मेघस्थोदकनिर्गमनद्वाराणि-झ-न-भ-य-र। मेघस्थोदकानां निर्गमनद्वाराणि-मॅ-मु॥ बाध्यमानान्-*मॅ-मु॥ ८१२.१९-२० ऊधः जलमरंहः-ख-च-झ-ण-न-भ-य-र-श। ऊधः बलमरंहः-मॅ-मु॥८१३.६ अन्यः असुरः शुष्णः—ग-घ-ज-प-फ-ब। अन्यः असुरः-य-मॅ-मु॥ ८१३.१५ दामवस्य

**दनुजस्य वृत्रस्य**—ख-च-झ-ण-त-न-भ-य-र । दानवस्य दनुजस्य—मॅ-मु ॥ ८१४.६ **त्वं चित्तमेव वृत्रम्**—§ । तं चित्तमेव वृत्रम्—मु । तं चित्तमेव वृत्रासुरम्—मॅ ॥ ८१४.८ **तं चिदिति**—§ । त्वं चिदिति—मॅ-मु ॥ ८१४.२३ **सपत्नानवक्षेप्तारम्**—ग-घ-ज-त-प-फ-ब । सपत्नानां क्षेप्तारम्—य । सपत्नानामवक्षेप्तारम्—मॅ-मु ॥ ८१४.२४ **स इमाँल्लोकानवृणोत् यदिमाँल्लोकानवृणोत्**—§-मु । स इमाँल्लोकानवृणोत्—मॅ ॥ ८१५. २ **अमत्रममात्रम्**—य-मॅ । अत्रममात्रम्—मु । नूनं सायणः 'अत्रम्' इत्यस्य स्थाने 'अमत्रम्' इति पठति ॥ ८१५.१९ **स्वधृतिः**—मॅ-मु-× ॥ ८१६.५ **एकं नु मुख्यमेव**—श-वर्जलिखितपुस्तकेषु मु-पुस्तके च । एकं मुख्यमेव-श-मॅ ॥ ८१६.६ **सतां पालकम्**—§-मु । सतां साधूनां पालकम्—मॅ ॥ ८१६. १७ **किं गृह्णते**-§ । किं गृह्णन्ते ?-मॅ-मु ॥

८१७. ७ **प्रजापतिपुत्रः संवरणाख्य ऋषिः**—ख-च-झ-ण-त-न-भ-य-र । प्रजापतिपुत्रः संवरण ऋषिः—मु । प्रजापतिपुत्रस्य संवरणस्यार्षम्—मॅ ॥ ८१७.७-८ **तथा चानुक्रान्तम् । महि दश प्राजापत्यः संवरणः**—ख-च-झ-ण-न-भ-र-श-मु । महि...संवरणः इति—य । महि दश प्राजापत्यः संवरण इत्यनुक्रान्तम्—मॅ ॥ ८१९. १८ **अव पालय**—मॅ । अव पाहि अवपालय—मु । अव पाहि पालय—ग-घ-ज-प-फ-ब । अव च पालय—य ॥ ८२०. १३ **माहनीया अश्वाः**—मॅ । महनीया अश्वाः—मु । मोहनीया अश्वाः—ख-च-झ-ण-न-भ-य-र-श । साहनीयः अश्वाः—ग-घ-ज-प-फ-ब ॥ ८२०. २२ **जुष्टाः मां प्राप्ताः**—ख-च-झ-ण-न-भ-य-र-श-मु । मा जुष्टा मां प्राप्ताः—मॅ ॥ ८२०.२३ **वहनाय यतमानाः**—झ-न-भ-य । वहमानाय यतमानाः—मॅ-मु ॥

८२१. १७ **जठरं स्वकीयम्**—§-मु । जठरं स्वकीयोदरम्—मॅ ॥ ८२२. १५ **प्रयता प्रदत्तानि**—ख-च-झ-ण-त-न-भ-य-र-मु । प्रयता दत्तानि—मॅ ॥ ८२२. १७ **पित्रादिवध°**—*मॅ । पित्रादिधन°—मु ॥ ८२३. २० **वणिज इव**—न-श-*मॅ-मु ॥

८२५. १२ **चतुर्षु**—*मॅ । चतुरुषु—मु ॥ ८२५.१२ **यत् याश्च हे शूर**—ग-घ-ज-प-फ-ब । याश्च हे शूर—य-मॅ-मु ॥ ८२६. १९ **शत्रूणां हन्तरिन्द्र**—ख-च-झ-ण-न-भ-य-र-श-मु । वृत्राणां हन्तरिन्द्र—मॅ ॥

८२९. ५ **द्योततेः दीव्यतेर्वा**—मॅ-मु । द्योततेः दीव्यतेः—§ ॥

८३०. ११ **जरति स्तौति**—मॅ-मु । जरते-§ ॥

८३२. १० **उभा उभौ देवौ**—ग-घ-ज-प-फ-ब । उभौ देवौ—य-मॅ-मु ॥

८३३. १२ **हे चित्र चायनीय**—ग-घ-च-ज-ण-न । हे इन्द्र हे चित्र चायनीय—य-मॅ-मु ॥ ८३३. १४ **यदिन्द्र चित्र चायनीय**—य-मॅ । यदिन्द्र चित्र चायनीयम्-मु । अत्र निरुक्तपुस्तकेषु विभिन्नाः पाठा दृश्यन्ते—यदिन्द्र चित्रं चायनीयम्—निरु. ( बॉम्बे संस्कृत सीरीज; वेंकटेश्वर प्रेस ); यदिन्द्र चित्र चायनीयम्—निरु. ( आनन्दाश्रम ) ॥

८३६. ५ **गतसारस्य सोमस्य**—ग-घ-ज-झ-न-र-श । गतसारस्य सोमरसस्य—*मॅ-मु ॥ ८३६. ९ **आगत्य च माध्यंदिने सवने**—ख-च-झ-ण-न-भ-य-र । माध्यंदिने सवने—मॅ-मु ॥ ८३७. ३ **निरावरणं शुद्धं वा** । 'निवारणं शुद्धं वा' इति मॅ-मु-पुस्तकयोः लिखितपुस्तकेषु च । तथापि 'ब्राह्मणो ब्रह्मा' इत्यष्टममन्त्रभाष्ये 'निरावरणं तेजःसंस्त्यायम्' इति पाठस्य लिखित-पुस्तकानुसारेण अर्थानुसारेण च स्वीकृतत्वादत्रापि 'निरावरणम्' इत्येव पाठः स्वीकृतः ॥ ८३७.११ **तमसा**—§ । तमसान्धकारेण-मॅ-मु ॥ ८३७. १४ **स च वरुणश्च**—ख-च-झ-ण-न-भ-य-र ।

**वरुणश्च**—मॅ-मु ॥ ८३७.१९ **अत्रिः**—ख-च-झ-ण-त-न-भ-य-र-श-मु । अत्रिर्मामिहावतमित्युपशिक्षन्-मॅ ॥ ८३७. १९ **अभिषवसाधनानि**—ख-च-झ-ण-त-न-भ-य-र-श । अभिषवसाधनाय-मॅ-मु ॥ ८३७. २१-२२ **किंच नमसा...एवमुक्तैः**—ख-च-झ-ण-त-न-भ-य-र-श-मु । नमसा उक्तैः—*मॅ ॥ ८३७. २४ **स्वाश्रयमव्यामोहयन्ती**—ख-च-झ-ण-त-न-भ-य-र । ८३७ पृष्ठे ३०-३१ पङ्क्तौ 'स्वाश्रयमव्यामोहन्ती' इति यदुक्तं तत्प्रमादजनितमिति बोध्यम् । स्वाश्रयमया मोहयन्ती—मॅ-मु ॥ **परांस्तु तथा**—ख-च-ण । परांस्तथा—झ-त-न-भ-र-श-मॅ-मु ॥ **यत्तुरीयेण**—ख-च-झ-ण-न-भ-य-र-श । तुरीयेण—मॅ-मु ॥ ८३७. २५ **तुरीयं ब्रह्म**—ख-च-झ-ण-न-भ-य-र । यत्तुरीयं ब्रह्म—मॅ-मु ॥ ८३८. १ **निरावरणं तेजःसंस्त्यायम्**—झ-न-भ-य-र । निवारणं तेजःसंस्त्यायम्—मॅ-मु ॥ ८३८. ८ **निगदव्याख्यैषा**—श । निगदितं वाख्यैषा-य । निगतव्याख्यैषा-मॅ-मु ॥ ८३८. ९ **तमोऽवरुध्य लब्धवन्तः**—ख-च-झ-ण-न-भ-र । तमोऽवरुध्यदब्धलब्धवन्तः—य । तमो विरुध्य लब्धवन्तः—मॅ-मु ॥

८३८. १९ **तस्मात्कृपयैव**—ख-च-झ-ण-त-न-भ-य-र-श । तस्मात्कृतं मयैव—मॅ-मु ॥ ८३८. २१ **यज्ञायते यज्ञमिच्छते**—ग-घ-ज-प-फ-ब-मु । यज्ञायते-य-मॅ ॥ ८३९.१ **प्रयच्छथः**—*मॅ-मु । प्रयच्छथ-भ; प्रयच्छतम्-घ-न ॥ ८४१. ३-४ **प्रकृणुध्वं स्तुत**—*मॅ-मु । प्रकृणुध्वं स्तुतिम्—§ ॥ ८४५. १ **केन प्रकारेण**—मॅ-मु-× ॥ ८४५. २१ **प्रतिगम्याः प्रतिगम्यात्**—ख-च-झ-ण-त-न-भ-य-र-मु । प्रतिगम्याः गम्यात्—मॅ ॥ ८४६.८ **वा अथवा**—§ । अस्य स्थाने मु-पुस्तके 'अथवा अन्तरिक्षस्थाना देवता नोऽस्माकं प्राशस्त्यं गृणातु । वा अथवा उर्वशी बहूनां वशयित्री आदित्याख्या द्युस्थानदेवता नः प्राशस्त्यं गृणातु । कीदृशी सा' इति वर्तते ॥ ८४६. १० **उदकस्य वा**—*मॅ-मु । उदकस्य—§ ॥

८४६. २४ **शंतमा**—ख-च-झ-ण-भ-य-र-मु । प्र शंतमा—मॅ ॥ ८५०. ६ **शशमानस्य शंसमानस्य**—ख-च-झ-ण-त-न-भ-य-र-मु । शशमानस्य—मॅ ॥ ८५०. १५ **सांसारिकस्य चारित्रस्य**—§ । सांसारिकस्य वारिष्ठस्य—मॅ-मु ॥ ८५०. १५ **ईश्वरव्यतिरिक्तस्य**—ख-च-ण-न । ईश्वरसेवातिरिक्तस्य—मु । ईश्वरस्य व्यतिरिक्तस्य—य-मॅ ॥

८५३. ९ **सुखस्य भावयित्रीः**—मॅ । सुखस्य भावयित्र्यः—§-मु ॥ ८५६. १४ **अनन्यप्रेरणयैव**—ख-च-झ-ण-त-न-भ-य-र । अनन्यप्रेरणायैव ?—मॅ-मु ॥ ८५७. १७ **तथा संतम्**—*मॅ-मु । तम्-ग-घ-ज । स यथा सन्तम्—इतरेषु ॥ ८५७. १८ **हिरण्यवर्णं हितरमणीयवर्णम्**—झ-न-भ-य-मु । हिरण्यवर्णम्—मॅ ॥ ८५८. २ **कामान् प्रयच्छन् वा**—ख-झ-न-भ-य-र-श-मु । कामान् प्रयच्छन् आ—मॅ ॥ ८५८. १४ **रातहव्या दत्तहविष्काः**—ग-घ-ज-त-न । रातहव्या दत्तहव्या हविष्काः—य-मॅ-मु ॥ ८५८. २१ **स्त्रिया अप्यधिकारः**—ख-च-ण-भ । स्त्रिया अग्न्यधिकारः—य-मॅ-मु ॥

८५९.१८ उपपत्तिमेवमाहुः—ख-च-झ-ण-न-भ-र-मु । उत्पत्तिमेवमाहुः—य । उपपत्तिमेवाहुः-मॅ ॥ ८५९. २० **इन्द्रं प्रातः प्रातःसावस्य**—मॅ-मु । इन्द्राय प्रातःसावस्य—§ ॥ ८६०. २ **तद्द्वयमपि**—ख-ग-घ-ज-झ-त-न-भ-य-र-श । तद्दयमपि-मॅ-मु ॥ ८६०.२ **त्वमपि ज्येष्ठतातिम्**—श-मॅ-मु । ज्येष्ठतातिम्—इतरलिखितपुस्तकेषु ॥ ८६०. १५ **शोभनवृष्टिप्रदानादिकर्मन्निन्द्र**—न । °कर्मेन्द्र—इतरलिखितपुस्तकेषु । °कर्मकेन्द्र—मॅ-मु ॥ ८६१. ३ **सः स खलु होता**—§-मु । सः स खलु—य । स खलु होता—मॅ ॥ ८६३. १४ **सवनं यज्ञगृहम्**—य-मॅ-मु । सदनं यज्ञगृहम्—§ ॥ ८६४. २२ **तस्मादेवं भवतीति**—ख-च-झ-ण-त-न-भ-य-र । तस्मादेवं भातीति—मॅ-मु ॥

८६६.६ गा निगूढा इति संबन्धः—मॅ-मु। गा इति संबन्धः निगूढाः—ख-च-झ-ण-त-न-भ-य-र-श; गा इति संबन्धः—ग-घ-ज ॥ ८७०. ५ अग्निमित्ताम्—ग-घ-ज-श-*मॅ-मु ॥ ८७०. ६-७ अतरन् सचमनुतिष्ठन्तः—ख-च-झ-ण-न-भ-य-र। अतरन् समनुतिष्ठन्तः—मॅ-मु ॥ ८७२. १५ नोऽस्माकं भुवन्—न-य-मु। अस्माकं भुवन्—मॅ ॥ ८७३. १६ वेतु—*मॅ। व्यन्तु—मु ॥

८७५. ११ संमोदन्तेऽस्मिन् देवाः—ख-च-ण-त-भ-श ॥ संमोदन्ते तस्मिन् देवाः—य-मॅ-मु ॥ अवयवलक्षणेयम्—*मॅ। पूर्वावयवलक्षणेयम्—मु ॥

८७८. १३-१४ तपनपरिस्पन्दाधीनत्वात्—ख-झत-न-भ-य-र। तपपरिस्पन्दा°—मु। तपनपरिस्यन्दा°—मॅ॥ ८७८. २० स्वस्वामिनोऽभिमतम्—ग-घ-ज। स्वस्वामिनेऽभिमतम्—य। स्वस्वामिन्यभिमतम्—मॅ-मु ॥

८८०. ७ गमयन्तम्—*मॅ। ददतम्—मु ॥ ८८०. १९ भद्रा शोभनानि—ख-च-झ-ण-त-न-भ-य-र। भद्रा शोभनीयानि—मॅ-मु ॥

८८२. ८ आपृचे आपर्चनीयाः—मॅ-मु। आपृचे आपृचनीये—ख-च-ण; आपृचे आपर्चनीये—ग-घ-ज-झ-न-भ-य-र-श ॥

८८३.१२ सप्तमम्—*मॅ-मु। षष्ठम्—§॥ ८८५.२० आगहि–? (आगच्छ) ॥ ८८७.६ स्वस्त्यात्रेये—मॅ। स्वस्त्यात्रेयम्—ख-च-झ-ण-त-र-श-मु; स्वस्त्यात्रेयो—न ॥ ८८७. ७ तथा भयादिके सति—ख-च-ण-त; तयादिके सति—झ-न-भ-र। तथारूपादिके सति—श-मॅ-मु ॥ ८८७. २१ पन्था अन्तरिक्षमार्गः—ग-घ-ज-*मॅ। पथ्या स्वस्ति देवि पन्था अन्तरिक्षमार्गः—मु ॥ ८८८. ८ बन्धुजनेन सं गमेमहि संगच्छेमहि—ख-च-झ-ण-न-भ-य-र। बंधुजनेन संगमेमहि—मॅ-मु ॥ ८८८.९ प्रवासकोपेन—ख-च-ण-श; प्रयासकोपेन— झ-त-न-भ-र। प्रयामकोपेन—*मॅ-मु॥

८९०. १५ एतान्—मॅ-मु। तान्—§ ॥ ८९१. १५-१६ ऊर्णाः दीप्ताः शुन्ध्यवः शोधिकाः—य-र-मॅ। ऊर्णा दीप्ताः (झ-दीप्तिः; न-दीप्तयः) शुन्ध्यवः शोधिकाः—ख-ग-घ-च-ज-झ-ण-त-न-श। ऊर्णा दीप्ताः शुन्ध्यवः शोधिका अपः—मु ॥ ८९४.१६ गोसंबन्धि वा राधः—मॅ-मु। गोसंबन्धिनं वा राधः—§ ॥ ८९४.१७ तत्संबन्धि वा राधः—मॅ-मु। तत्संबन्धिनं वा राधः—§॥

८९७. ५ स्यन्दमाना अपः—मॅ-मु। स्यन्दमाना आपः–§ ॥ ८९७. ७ अश्वा इव अश्वा यथा—ख-च-झ-ण-त-न-भ-य। अश्वा इव यथा—मॅ-मु ॥ ८९९. २० स मर्त्यश्च सुदेवः—ख-च-झ-ण-ने-भ-य। सुदेवः–मॅ-मु ॥ ८९९. २१ स सुवीरः—ख-च-झ-ण-न-भ-य। स मर्त्यः सुवीरः—मॅ। सुमर्त्यः सुवीरः—मु ॥ ८९९. २२ एवं भवति—य-मॅ। य एवं भवति–त-मु। अनन्वितमिदम् ॥

९०१. १०-११ अब्दया मुंहुरुदकानाम्—§-मु। अब्दयाचिन्मुहुरुदकानाम्—मॅ ॥ ९०१. ११ जसो याजादेशः—ख-च-झ-ण-न भ-य। शसो याजादेशः ?—मॅ-मु ॥ ९०२. १० निहतवन्तः स्थ—झ-त-न-भ-र; निहितवन्तः स्थ–य। निहतवन्तः–मॅ-मु ॥ ९०४.८ स्नुगतयः—*मॅ। सुगतयः–मु। स्नुतयः—ख-च-ण-न; मतयः–ग-घ-ज; स्तुतयः–झ-त-भ-र; सुमतयः—श ॥ ९०५. २ मधुराप्रुषाः ?—मॅ-मु। मधुराः प्रुष्टाः—न-भ; मधुराः–घ ॥ ९०५. २५ रमयत हे मरुतः—*मॅ-मु। रमयन्त हे मरुतः—§ ॥ ९०६. ५ धत्थ दत्थ—*मॅ-मु। धत्थ दत्त—§ ॥

९०९. १० विश्वस्य उक्तस्य—ख-च-झ-ण-त-न-भ-य-र। विश्वस्योत्कृष्टस्य—मॅ-मु ॥

९११. १५ गावो न—मॅ-मु। गावो न अश्व इव–§ ॥

९१५. २ **सुसदृशः**—§-मु । सुसदृशाः---मॅ ॥ ९१५. १३ **नमनहेतुकम्**---मॅ-मु । नमनहेतुम्-§ ॥ ९१५.१९ **विपरिणन्तव्यः**---*मॅ । विपरिणेतव्यः-§-मु ॥ ९१५. २० **ओजो नाम**—ख-च-झ-ण-त-न-भ-य-र-श-मु । ओजनाम-मॅ ॥ ९१५. २२ **तनूषु युष्मदीयेषु**—ख-च-झ-ण-न-भ-य-र । तनूषु तदीयेषु—मॅ-मु । तनूशब्दस्य स्त्रीलिङ्गत्वात् 'युष्मदीयासु' इति युक्तम् ॥ ९१६. १८ **हविर्भिः सेविताः**—ग-घ-ज-न-मॅ-मु । हविर्भिः सेकिताः—ख-च-झ-ण-त-भ-य-र; हविर्भिः सेचिताः-श ॥

९१७. २ **एषाम्**—ग-घ-ज-श-*मॅ-मु ॥ ९१८. १८ **वैसादृश्याभावः**—त-य-र-मु । वैसदृश्याभावः--मॅ ॥ ९१९. ३ **सामानाधिकरण्यप्रयोगः**—ख-च-झ-ण-त-न-भ-य-र-श-मु । समानाधिकरण्यप्रयोगः—मॅ ॥

९२०. ७ **लङि तिपि रूपम्**—ख-च-झ-ण-न-भ-य-र-श । लुङि तिपि रूपम्—मॅ-मु ॥ ९२१. १ **°पट्टादिकम्**—मॅ-मु । °भेद्यदिकम्—ख; °भट्टादिकम्—च-झ-ण-न-भ-य-र; °पदिकम्—श ॥ ९२१. १६ **करोतीत्यर्थः**—मॅ-मु । करोतीति—§ ॥ ९२२. १७ **भनतेः**—*मॅ । नभतेः—§-मु ॥ ९२२. १८ **प्राचुच्यवुः**—मॅ-मु । प्रचुच्यवुः—§ ॥ ९२२. १९ **आग्रयणादौ**—ख-च-झ-ण-न-भ-य-र-श-मु । आग्रायणादौ—मॅ ॥ ९२३. ४ **पुत्रा इति शेषः**—ख-च-झ-ण-न-भ-य । पुत्रा इत्यर्थः—मॅ-मु ॥

९२५. १६ **प्रक्षिपाम**—§ । प्रक्षिपामः—य-मॅ-मु ॥ ९२५. २४ **निवसथेत्यर्थः**—*मॅ-मु । निवसतेत्यर्थः—§ ॥

९२६. २० **अत्राश्चर्य...** इत्यादि । बृहद्देवता ५. ५०-८०; अनु. भा. ५. ६१ ( मॅकडोनेल-पृ. ११७ ) अत्र द्रष्टव्यम् ॥ ९२७.६ **राज्ञ्या**—न-*मॅ । राज्ञा—मु॥ ९२७. १९ **तच्च दृश्यते**—ख-च-झ-ण-न-भ-य-र । तत्र दृश्यते—मॅ-मु॥ ९२८.१ **पुत्रोत्पादनकामाः**—ख-च-झ-ण-न-भ-य-र । पुत्रोत्पादनकाले— मॅ-मु ॥ ९२८. २३ **देवा अनेन त्रायन्ते स्तुत्यादिना स देवत्रः । न देवत्रः अदेवत्रः**—( न-सदेवत्रः )—न । देवा न येन त्रायन्ते स्तुत्यादिना सोऽदेवत्रः—*मॅ-मु॥ ९२९. ४ **उपक्षपणकर्मा**-ख-च-झ-ण-त-न-भ-र । वा उपक्षपणकर्मा-य । उपक्षेपणकर्मा—श-मॅ-मु ॥ ९३१. १६ **संपन्न°**......इत्यादि । बृहद्देवता ५. ५०-८०; अनु. भा. ५. ६१ अत्र द्रष्टव्यम् ॥ ९३१. १८ **स सत्यमृषिम्**—मॅ-मु । स सत्य ऋषिम्—ख-च-झ-ण-न-भ-य-र । स सद्य ऋषिम्—श ॥ ९३१. २२ **भगवन्नृषेः**—ख-च-झ-ण-त-न-भ-य-श । भगवानृषेः—मॅ-मु ॥ ९३२. ८ **कन्यां......** इत्यादि । बृहद्देवता ५. ५०-८०; अनु. भा. ५. ६१ अत्र द्रष्टव्यम् ॥

९३२. २० **स्थितिस्तत्**—*मॅ । स्थितं तत्—मु ॥ ९३४. २० **मित्रावरुणौ**—§-मु । मित्रवरुणौ—मॅ ॥ ९३५. १२ **यूपयष्टिरवस्थितः**—ग-घ-ज-श-मॅ-मु । यूपयष्टिरवस्थितम्—ख-च-झ-ण-त-न-भ-य-र । अनन्वितमेतत् । 'यूपयष्टिरिव स्थितः' ( रथः ) इति भाव्यमिति प्रतिभाति ॥

९३८. १६ **मेघेन वृष्ट्या**—मॅ-मु । मेघेन वृष्ट्या च—§ ॥ ९३८. १७ **पर्जन्य देव**—ग-घ-ज । पर्जन्य देव त्वया—य-मॅ-मु ॥ ९३८. १७ **प्रेरितेन त्वया**—§ । प्रेरितेन-मॅ-मु ॥ ९३९. १९ **विदीपयथः**—ग-घ-ज-श-*मॅ-मु ॥

९४०. १४ आत्मैव ज्ञाता—ख-च-झ-ण-न-भ-य-र-श। आत्मैव ज्ञाता—मॅ-मु ॥ ९४१.१६ नोऽस्माकम्—ख-च-झ-ण-त-न-भ-र। नोऽस्मभ्यम्–य-मॅ-मु ॥ ९४१. २४ युवाभ्यां घृतमन्नं च—ग-घ-ज-र-श। युवाभ्यां घृतं धनमन्नं च—ख-च-झ-ण-न-भ-य। युवाभ्यां घृतं बलमन्नं च—मु। अयमेव समीचीनः पाठः ॥ ९४२. १० अर्चनानसं......युवाम्—ग-घ-ज। मॅ-मु-पुस्तकयोरेतन्नास्ति ॥

९४२. २० यश्च। 'यस्य' इत्यस्य स्थाने 'यश्च' इति भाष्यकारेण पठितम् ॥ ९४३. २० सुचेतुना। मूले 'सु चेतुना' इति भिन्ने पदे ॥

९४६. १५ आह्वयामः—मॅ-मु। आह्वयामि—ख-च-झ-ण-न-भ-य-र; आह्वयाम—ग-घ-ज ॥

९४८. १ उदकस्पर्शस्य कर्तारः—न। उदकस्पर्शत्वस्य कर्तारः—मॅ। उदकस्पृशत्वस्य कर्तारः—य-मु ॥ ९४८. १२ अनाम्नानात्—न-*मॅ-मु ॥

९४९. २३ दातुमुचितायाः—त। दानमुचितायाः—ख-च-झ-ण-न-भ-य-र। दातृपूचितायाः—ग-घ-ज-श-*मॅ-मु ॥ ९४९. २३ महानुभावौ—मॅ-मु। महानुभावौ युवाम्—§ ॥

९५२. ५ रुद्राद्भिः—श-*मॅ-मु ॥ ९५२. १० त्रायेथां पालयेथाम्—ख-च-झ-ण-न-भ-य-मु। त्रायेथां पालयेतम्—मॅ ॥ ९५६. १५ सुखमपेक्षते—ख-च-ग-न-भ। सुखपेक्षते—झ; सुमुक्षते-त; सुखमुपेक्षते—य-र; सुखमुक्षत—श। सुखमुक्ष्यते ?—मॅ-मु ॥ ९५७. ८ द्रवर्णीयौ—य-मॅ-मु। द्रावर्णीयौ—त ॥

९५८. १४ अथवा—मॅ-मु-× ॥ ९५८.२३ तिष्ठतः—*मॅ। तिष्ठथः-§-मु ॥ ९५९.८ कस्यं चन—भ-य। कस्य वचन—झ; कस्य न—ख। कस्य च—मॅ-मु ॥ ९५९.१७ युवाम्—*मॅ। युवाम्। ईमिति पूरणः—ख-च-झ-ण-न-भ-र-श-मु; युवाम्। हि पूरणः—ग-घ-ज ॥ ९६१. २ बहूनपि—घ। बहून्यपि ?—मॅ-मु ॥ ९६१. ५ उक्तलक्षणाश्विनो रथस्य। ? ( उक्तलक्षणस्याश्विनो रथस्य ) ॥ ९६१. ११ युवाभ्याम्। ? ( युवयोः ) ॥ ९६३. १२ मृगो मृगयिता—*मॅ। मृगो मृगयितः—मु ॥

९६४. ६ अश्विना अश्विनौ—ग-घ-ज-मु। अश्विना—य। अश्विनौ—मॅ ॥ ९६५. १ अश्विना अश्विनौ—ख-च-झ-ण-त-न-भ-र। अश्विना—मॅ-मु ॥

९६६. ९ हिंस्ताम्—ग-घ-ज-*मॅ-मु ॥ ९६६.१८ पञ्चदशधा समानाः—*मॅ। पञ्चदशधेति समानाः-मु। लिखितपुस्तकेषु अशुद्धाः पाठाः ॥ ९६६.१९ दोहभूमिम्—ख-च-झ-ण-न-भ-य-र-श। दोहनभूमिम्—मॅ-मु ॥ ९६७. १२ अपां कारणात्—*मॅ-मु। अपः करणात्—ख-च-ण-त-न-र; अपः कारणात्–ग-घ-ज-झ-भ-य; अप करणात्—श ॥

९६८. ५ यज्ञं गन्तारौ—ख-ग-व-च-ज-ण-न-श। यज्ञगन्तारौ–झ-भ-य-र-मॅ-मु ॥ ९६९. ४ दुर्गमनान् मार्गान्—ग-घ-ज-मॅ। दुर्गमनान् मार्गान् वा—ख-च-झ-ण-त-न-भ-य-र-श। पापानि दुर्गमनान् मार्गान् वा—मु ॥ ९६९. ११ पालयेत्—ग-घ-ज-श-*मॅ-मु ॥

९७०. ७ तौ यथा—*मॅ-मु–× ॥ ९७१. ८ निर्माथिष्यन्ति—मॅ-मु। निर्भत्सिष्यन्ति—ख-च-ण; निर्ममिष्यन्ति—झ-त-भ-र; निर्गमिष्यन्ति—न; निर्मिमिष्यन्ति—ग-घ-ज-श ॥ ९७२. १७ जरया सहितः पतेत्–ख-भ। जयसा सहितः पतेत्–च-ण; जरयासूततः पतेत्—झ-य-र; जरयागततः पतेत्–न; जरायुक्तः पतेत्–श। जरायुजस्ततः पतेत् ?–*मॅ। जरायुयुज आपत–मु ॥

९७३. २० उच्छी विवासे—मॅ-मु । व्युच्छी विवासे—ख-च-ण; उछी विवासे—झ-न-भ-य-र-श ॥ ९७४. २१ यच्चिद्धीत्यत्र—ख-च-ण-श । यद्यद्धीत्यत्र—य । यद्धीत्यत्र—मॅ-मु ॥ ९७६. २ मा तनुथाः मा कृथाः—ख-च-ण-न-भ-य । मा तनुथाः—मॅ-मु ॥

९७६. १३ अत्रानुक्रमणिका—झ-न-भ-य-र-श-मु । तत्रानुक्रमणिका—मॅ ॥ ९७७. २१ प्रथममध्यमयोः स्थानयोः—ख-च-झ-ण-त-न-भ-य-र-मु । प्रथममध्यमयोः—मॅ ॥

९८१. १५ असुरादयः—*मॅ-मु । सुरादयः—§ ॥ ९८३. १ स हि सर्वात्मा—न । स हि सर्वात्मत्वात्—त-भ । तं हि सर्वात्मत्वात् ?–मॅ-मु ॥ ९८३. १८ प्र सुवाति च—ख-च-झ-ण-त-न-भ-य-र-श-मु । प्र सुवाति-मॅ ॥ ९८३. १९ वृणीमह इति—§-मु । वृणीमह इत्यर्थः—मॅ ॥

९८७. २० °स्तोमे चैषा—*मॅ । °स्तोमेत्येषा—झ-त-र-श-मु । °स्तोमेऽप्येषा—न । °स्तोमे ह्येषा—भ ॥ ९८८. १ प्रत्यक्षा देवतापि च—ख-च-झ-ण-न-भ-य-श-मु । प्रत्यक्षदेवतापि च—मॅ ॥

९८९. ८ चैतन्नामकाय—ख-च-झ-ण-न-भ-य-र । एतन्नामकाय—मॅ-मु ॥ ९८९. २३ ध्यायति—न-श-मु । ध्याययति—मॅ ॥ ९९२. ५-६ ते दीवि न—ख-च-ण-त-भ-य-श । न दीवि न—मॅ-मु ॥

९९३. २ अन्नेषु वा—*मॅ-मु । अन्नेषु—§ ॥ ९९३. १० द्रुमविकारेण—ख-च-झ-ण-त-न-भ-य-र-श । द्रुविकारेण—मॅ-मु ॥ ९९३.११ आवरकमेघहननाय—मॅ-मु । आवरकमेघे हननाय—ख-झ-भ-य; आचरमेघे हननाय—च-ण ॥ ९९३. ११ प्रतीषते प्रतिगच्छतः—*मॅ-मु । भवति ईषते अभिगच्छति—ख-च-झ-ण-न-भ-य-र; प्रतिगच्छतः । आ पूरणः—ग-घ-ज; प्रतिगच्छति—श ॥ ९९३. २५ मर्तेव । 'मर्ताय' इत्यस्य स्थाने 'मर्तेव' इति भाष्यकारेण पठितम् ॥

९९५. २१ बृहतः महतः—ख-च-झ-ण-भ-य । बृहतः—मॅ-मु ॥ ९९५. २२ शुशुक्वानः । मूले 'सुशुक्वानः' इति ॥ ९९६. ७ विस्तीर्णक्रमणः—मॅ-मु । विस्तीर्णाक्रमणः—§ ॥ ९९६. २० द्वितीयायाः लुक्—ख-च-ण-भ-मु । द्वितीयालुक्—मॅ ॥ ९९७. १७ ते मरुतः—§-मु । हे मरुतः—मॅ ॥

---

# ॥ ऋग्वेदसंहिता ॥

श्रीमत्सायणाचार्यविरचितभाष्यसमेता

२-५ मण्डलानि

ॐ

# ऋग्वेदसंहिता

## श्रीमत्सायणाचार्यविरचितभाष्यसमेता

## ॥ अथ द्वितीयं मण्डलम् ॥

शतर्चिनां प्रथमं मण्डलं व्याख्यातम् । अथ गार्त्समदं द्वितीयं मण्डलं व्याख्यायते । 'त्वमग्ने द्युभिः' इत्यादिकं द्वितीयं मण्डलम् । चत्वारोऽनुवाकाः । तेषु प्रथमेऽनुवाके एकादश सूक्तानि । तत्र 'त्वमग्ने द्युभिः' इति षोडशर्चं प्रथमं सूक्तम् । मण्डलद्रष्टा गृत्समद ऋषिः । स च पूर्वम् आङ्गिरसकुले शुनहोत्रस्य पुत्रः सन् यज्ञकालेऽसुरैर्गृहीत इन्द्रेण मोचितः । पश्चात् तद्वचनेनैव भृगुकुले शुनकपुत्रो गृत्समदनामा अभूत् । तथा चानुक्रमणिका–'य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत् स गृत्समदो द्वितीयं मण्डलमपश्यत्' इति । तथा तस्यैव शौनकस्य वचनम् ऋष्यनुक्रमणे–'त्वमग्न इति गृत्समदः शौनको भृगुतां गतः । शौनहोत्रः प्रकृत्या तु[1] य आङ्गिरस उच्यते' इति । तस्मान्मण्डलद्रष्टा शौनको गृत्समद ऋषिः । जगती छन्दः । मण्डलादिपरिभाषया आग्नेयम् । अत्रानुक्रमणिका–'त्वमग्ने जागतं तु' इति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसि इदमादिसूक्तद्वयस्य विनियोगः । 'त्वमग्ने द्युभिरिति सूक्ते' (आश्व. श्रौ. ४. १३) इति सूत्रितत्वात् ॥ उपाकरणोत्सर्जनयोरपि[2] आद्या विनियुक्ता ॥

त्वम॑ग्ने द्यु॒भिस्त्वमा॑शुशु॒क्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒स्परि॑ ।
त्वं वने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वं नृ॒णां नृ॑पते जायसे॒ शुचि॑ः ॥ १ ॥

त्वम् । अ॒ग्ने॒ । द्युऽभि॑ः । त्वम् । आ॒शु॒शु॒क्षणि॑ः । त्वम् । अ॒त्ऽभ्यः । त्वम् । अश्म॑नः । परि॑ ।
त्वम् । वने॑भ्यः । त्वम् । ओष॑धीभ्यः । त्वम् । नृ॒णाम् । नृ॒ऽप॒ते॒ । जा॒य॒से॒ । शुचि॑ः ॥ १ ॥

हे अग्ने अग्रणीत्वादिगुणविशिष्ट हे नृणां नृपते । नृणां मनुष्याणां मध्ये ये नरा यष्टारः सन्ति तेषां विशेषेण पालयितः । यद्वा उभाभ्यां पदाभ्यां बहुत्वं नित्यस्वामित्वं च प्रतिपाद्यते[3] । सर्वेषामपि नराणां नित्यपालकेत्यर्थः ॥ नृणामित्यस्य निघाताभावश्छान्दसः ॥ तादृश हे देव त्वं द्युभिः यागदिवसैर्निमित्तभूतैः जायसे यागार्थं मथनेन[4] उत्पद्यस इत्यर्थः । यद्वा । तादृशैर्दिवसैः सहितो जायसे । तत्तद्यागदिवसेषु प्रसिद्धः[5] भवसीत्यर्थः । तथा त्वम् आशुशुक्षणिः जायसे आ सर्वतो

१. ण-ण१-न-व- नु । २. म–उपाकर्मोत्सर्जनयोरपि । ३. ण–प्रतिपद्येते । ४. ण१-म–मन्थनेन । ५. क-झ-झ१-म–प्रवृद्धः ।

दीप्यमानो भवसि ॥ आङ्युपपदे 'शुच दीप्तौ' इत्येतस्य सनन्तस्य छान्दसमिदं रूपम् । यद्वा । आशु शीघ्रं शुच् दीप्तः सन् यतः संसेव्यते इति । आशु शुचं शोकं सनोति ददाति शत्रुभ्यो दाहादिना इत्याशुशुक्षणिः ॥ तादृशो भवसि । एवं सर्वत्र प्रतिविशेषणं जायस इति योज्यम् । हे अग्ने ᵛत्वम् ᵛअद्भ्यः वृष्ट्युदकेभ्यो जायसे वैद्युतरूपेण वाडवरूपेण वा समुद्रोदकेभ्यः । ᵛअश्मनः मेघात्पाषाणाद्वा ᵛपरि जायसे । 'यो अश्मनोरन्तरग्निं जजान' ( ऋ. सं. २. १२. ३ ) इति हि मन्त्रान्तरम् । ᵛत्वं ᵛवनेभ्यः वृक्षादिसमूहेभ्यो दावरूपेण । ᵛत्वम् ᵛओषधीभ्यः वैश्वानररूपेण[1] । एवं महानुभावस्त्वं मथनेनोत्पन्नः सन् सर्वात्मको भवसीत्यर्थः । ᵛशुचिः एव जायसे । यद्वा । शुचिः आदित्यरूपः[2] जायस इत्यर्थः । अत्र 'त्वमग्ने द्युभिरहोभिः' ( निरु. ६. १ ) इत्यादि निरुक्तमनुसंधेयम् ।

तवा॑ग्ने हो॒त्रं तव॑ पो॒त्रमृ॒त्विय॑ं॒ तव॑ ने॒ष्ट्रं त्वम॒ग्निदृ॑ताय॒तः ।
तव॑ प्रशा॒स्त्रं त्वम॑ध्वरीयसि ब्र॒ह्मा चासि॑ गृ॒हप॑तिश्च नो॒ दमे॑ ॥ २ ॥

तव॑ । अ॒ग्ने॒ । हो॒त्रम् । तव॑ । पो॒त्रम् । ऋ॒त्विय॑म् । तव॑ । ने॒ष्ट्रम् । त्वम् । अ॒ग्नित् । ऋ॒त॒ऽय॒तः ।
तव॑ । प्र॒ऽशा॒स्त्रम् । त्वम् । अ॒ध्व॒रि॒ऽय॒सि॒ । ब्र॒ह्मा । च॒ । असि॑ । गृ॒ह॒ऽप॑तिः । च॒ । नः॒ । दमे॑ ॥२॥

हे ᵛअग्ने ᵛहोत्रं होतुः कर्म शस्त्रयाज्यादिलक्षणं यदस्ति तदपि ᵛतव एव त्वदर्थमित्यर्थः । तथा ᵛपोत्रं पोतुः कर्म यदस्ति तदपि ᵛतव एव । तथा ᵛऋत्वियं प्राप्तकालमार्त्विज्यं तवैव । ᵛनेष्ट्रं नेष्टुः कर्म प्रस्थितयाज्यादिरूपं ᵛतव । हे अग्ने ᵛत्वम् ᵛअग्नित् आग्नीध्रश्च त्वमेवासि । तथा ᵛऋतायतः यज्ञमिच्छतः ᵛतव एव ᵛप्रशास्त्रं यत्प्रशास्तुर्मैत्रावरुणस्य कर्म तत् । हे अग्ने ᵛत्वम् ᵛअध्वरीयसि अध्वरं यज्ञं कामयसे । अध्वर्युर्भवसीत्यर्थः । तथाध्वर्युशब्दव्युत्पत्तेः । 'अध्वर्युरध्वरयुरध्वरं कामयत इति वा' ( निरु. १. ८ ) इति हि निरुक्तम् । तथा ᵛब्रह्मा ब्राह्मणाच्छंस्यपि[3] ᵛअसि । तथा ᵛनो ᵛदमे अस्मद्यज्ञगृहे ᵛगृहपतिश्च असीति ॥

त्वम॑ग्न॒ इन्द्रो॑ वृष॒भः स॒ताम॑सि॒ त्वं विष्णु॑रुरुगा॒यो न॑म॒स्यः॑ ।
त्वं ब्र॒ह्मा र॑यि॒विद्ब्र॑ह्मणस्पते॒ त्वं वि॑धर्तः सचसे॒ पुर॑न्ध्या ॥ ३ ॥

त्वम् । अ॒ग्ने॒ । इन्द्रः॑ । वृ॒ष॒भः । स॒ताम् । अ॒सि॒ । त्वम् । विष्णुः॑ । उ॒रु॒ऽगा॒यः । न॒म॒स्यः॑ ।
त्वम् । ब्र॒ह्मा । र॒यि॒ऽवित् । ब्र॒ह्म॒णः॒ । प॒ते॒ । त्वम् । वि॒ध॒र्त॒रिति॑ विऽधर्तः ।
स॒च॒से॒ । पुर॑म्ऽध्या ॥ ३ ॥

हे ᵛअग्ने ᵛत्वं यतः ᵛसतां ᵛवृषभः वर्षिता ᵛअसि अतः ᵛइन्द्रः असि । यद्वा । सतां साधूनाम् इन्द्रोऽसि । कामानां वर्षितासि । ᵛत्वं ᵛविष्णुः असि । यतः ᵛउरुगायः बहुभिर्गीयमानः ᵛनमस्यः नमस्कार्यश्च भवसि । हे ᵛब्रह्मणस्पते परिवृढस्य कर्मणो मन्त्रस्य वा पालयितः ᵛत्वं यतः ᵛरयिवित्

---

१ क-झ१-म-व्रीह्यादिभ्यो वैश्वानररूपेण । २. त-म-व-आदित्यरूपेण । ३. क-ण-ण१-न-व-ब्राह्मणाच्छन्दस्यपि ।

गवादिधनस्य वेत्ता अतः ᵛब्रह्मा असि । हे ᵛविधर्तः विविधकारक वैश्वानररूपाग्ने ᵛपुरंध्या बहुप्रकारया[1] बुद्ध्या ᵛसचसे सह वर्तसे सर्वदा बुद्ध्या स्तूयस इत्यर्थः ॥

त्वम॑ग्ने राजा॒ वरु॑णो धृ॒तव्र॑त॒स्त्वं मि॒त्रो भ॑वसि द॒स्म ईड्यः॑ ।

त्वम॑र्य॒मा सत्प॑ति॒र्यस्य॑ सं॒भुजं॒ त्वमंशो॑ वि॒दथे॑ देव भाज॒युः ॥ ४ ॥

त्वम् । अ॒ग्ने॒ । राजा॑ । वरु॑णः । धृ॒तऽव्र॑तः । त्वम् । मि॒त्रः । भ॒व॒सि॒ । द॒स्मः । ईड्यः॑ ।

त्वम् । अ॒र्य॒मा । सत्ऽप॑तिः । यस्य॑ । स॒म्ऽभुज॑म् । त्वम् । अंशः॑ । वि॒दथे॑ । दे॒व॒ । भा॒ज॒युः ॥४॥

हे ᵛअग्ने ᵛत्वं यतः ᵛधृतव्रतः धारितकर्मासि अतः ᵛवरुणः ᵛराजा असि । यतः ᵛदस्मः शत्रूणामुपक्षपयिता ᵛईड्यः स्तुत्यश्च अतः ᵛमित्रः एतन्नामको देवोऽसि । यतः ᵛसत्पतिः सतामभिमतप्रदानेन पालयिता अतः ᵛअर्यमा ᵛभवसि । दातृत्वं च अर्यम्णो लिङ्गम् । अर्यमेति तमाहुर्यो ददातीति। ᵛयस्य अर्यम्णः दानं ᵛसंभुजं संततभुजं[2] व्यापकं[2] भवति । यद्वा । यस्य धनं संभुजं सम्यक् भोगाय साधु ग्रहीतृणाम् । तथा ᵛत्वम् ᵛअंशः सूर्यमूर्त्यन्तरभूत एतन्नामको देवोऽसि । तादृश हे ᵛदेव ᵛविदथे अस्मदीये यज्ञे ᵛभाजयुः फलानां भाजयिता प्रापयितासि ॥

त्वम॑ग्ने॒ त्वष्टा॑ विध॒ते सु॒वीर्यं॒ तव॒ ग्नावो॑ मित्रमहः सजा॒त्य॑म् ।

त्वमा॑शु॒हेमा॑ ररिषे॒ स्वश्व्यं॒ त्वं न॒रां शर्धो॑ असि पुरू॒वसुः॑ ॥ ५ ॥

त्वम् । अ॒ग्ने॒ । त्वष्टा॑ । वि॒ध॒ते । सु॒ऽवीर्य॑म् । तव॑ । ग्नावः॑ । मि॒त्र॒ऽम॒हः॒ । स॒ऽजा॒त्य॑म् ।

त्वम् । आ॒शु॒ऽहे॒मा॑ । र॒रि॒षे॒ । सु॒ऽअश्व्य॑म् । त्वम् । न॒राम् । शर्धः॑ । अ॒सि॒ । पु॒रु॒ऽव॒सुः॑ ॥५॥

हे ᵛअग्ने ᵛत्वष्टा फलस्य साधु संपादयिता ᵛत्वं ᵛविधते परिचरते जनाय ᵛसुवीर्यं शोभनवीर्यं धनम् । तद्धेतुर्भवसि । ᵛग्नावः याः स्तुतिवाचः सन्ति ताः ᵛतव स्वभूताः । हे ᵛमित्रमहः हितकारितेजः ᵛसजात्यम् अस्माकं बान्धवं भजस इत्यर्थः । हे अग्ने ᵛआशुहेमा आशु प्रेरयिता ᵛत्वं ᵛस्वश्व्यं शोभनाश्वसमूहोपेतं फलं ᵛररिषे ददासि । हे अग्ने ᵛपुरूवसुः प्रभूतधनः ᵛत्वं ᵛनरां नराणां ᵛशर्धः बलस्थानीयः ᵛअसि ॥ ॥ १७ ॥

त्वम॑ग्ने रु॒द्रो असु॑रो म॒हो दि॒वस्त्वं शर्धो॒ मारु॑तं पृ॒क्ष ई॑शिषे ।

त्वं वातै॑ररु॒णैर्या॑सि शंग॒यस्त्वं पू॒षा वि॑ध॒तः पा॑सि॒ नु त्मना॑ ॥ ६ ॥

त्वम् । अ॒ग्ने॒ । रु॒द्रः । असु॑रः । म॒हः । दि॒वः । त्वम् । शर्धः॑ । मारु॑तम् । पृ॒क्षः । ई॒शि॒षे॒ ।

त्वम् । वातैः॑ । अ॒रु॒णैः । या॒सि॒ । श॒म्ऽग॒यः । त्वम् । पू॒षा । वि॒ध॒तः । पा॒सि॒ । नु । त्मना॑ ॥६॥

---

१. व–बहुप्रजाकारया । २. थ–संभुजव्यापकम्; क-म-व–सततभुजव्यापकम्; ण-न–सततं भुजव्यापकम् ।

हे अग्ने त्वं महो दिवः महतो द्युलोकात् । उपलक्षणमेतत् । लोकत्रयात् । असुरः शत्रूणां निरसिता रुद्रः असि । रुदुःखं दुःखहेतुर्वा पापादिः । तस्य द्रावयिता एतन्नामको देवोऽसि । ‘रुद्रो वा एष यदग्निः’ (तै. सं. ५. ४. ३.१) इत्यादिष्वग्नेः रुद्रशब्देन व्यवहारात् । यद्वा । त्वं रुद्रः । रौति मामनिष्ट्वा नरा दुःखे पतिष्यन्तीति रुद्रः । तादृशोऽसि । ‘रुद्रो रौतीति सतः’ ( निरु. १०. ५ ) इति हि निरुक्तम् । तथा महो महतो द्युलोकस्य संबन्धी असुरोऽसि । असुर्बलम् । तस्य दाता आदित्यरूपश्च त्वमसि । अग्नेर्द्युलोकसंबन्ध्यसुरत्वम् ‘उत वा दिवो असुराय मन्म’ ( ऋ. सं. ५.४१.३ ) इत्यादिषु । तथा त्वं मारुतं शर्धः मरुत्समूहरूपं बलमसि । वायुरूपश्च त्वमसीत्यर्थः । एवम् अग्न्यादित्यवायुरूपस्त्वम् । पृक्षः अन्नस्य हविर्लक्षणस्य त्वम् ईशिषे ईश्वरो भवसि । यस्मादेवं तस्मात् त्वं वातैः वायुसदृशैः अरुणैः अरुणवर्णैरश्वैः शंगयः सुखस्य गृहरूप आवासभूतः सन् यासि प्राप्नोषि यागगृहम् । यद्वा । अरुणैर्गमनशीलैर्वातैर्वायुभिः नुन्नः[1] सन् यासि वने । तथा त्वं पूषा सर्वस्य पोषकः[2] सन् नु क्षिप्रं त्मना आत्मना अनुग्रहरूपया स्वबुद्ध्यैव[3] विधतः परिचरतो यजमानान् पासि[4] ॥

त्वमग्ने द्रविणोदा अरंकृते त्वं देवः सविता रत्नधा असि ।

त्वं भगो नृपते वस्व ईशिषे त्वं पायुर्दमे यस्तेऽविधत् ॥ ७ ॥

त्वम् । अग्ने । द्रविणःऽदाः । अरम्ऽकृते । त्वम् । देवः । सविता । रत्नऽधाः । असि ।

त्वम् । भगः । नृऽपते । वस्वः । ईशिषे । त्वम् । पायुः । दमे । यः । ते । अविधत् ॥ ७ ॥

हे अग्ने त्वम् अरंकृते त्वामलंकुर्वते यजमानाय द्रविणोदाः हिरण्यस्य[5] दाता[5] असि । देवः द्योतमानः सविता[6] सर्वस्य सत्कर्मसु प्रेरकः त्वं रत्नधाः रमणीयानां धनानां मणिमुक्तादीनां धारयिता असि । तथा हे नृपते नृणां पालकाग्ने त्वं भगः भजनीयः सन् वस्वः वसुनः धनस्य ईशिषे समर्थो भवसि दातुम् । यः यजमानः दमे यज्ञगृहे ते त्वाम् अविधत् परिचरति तस्य पायुः पालकः त्वम् असि ॥

त्वामग्ने दम आ विश्पतिं विशस्त्वां राजानं सुविदत्रमृञ्जते ।

त्वं विश्वानि स्वनीक पत्यसे त्वं सहस्राणि शता दश प्रति ॥ ८ ॥

त्वाम् । अग्ने । दमे । आ । विश्पतिम् । विशः । त्वाम् । राजानम् । सुऽविदत्रम् । ऋञ्जते ।

त्वम् । विश्वानि । सुऽअनीक । पत्यसे । त्वम् । सहस्राणि । शता । दश । प्रति ॥ ८ ॥

हे अग्ने विश्पतिं यजमानानां पालकं त्वां विशः यजमानाः दमे स्वकीये यज्ञगृहे आ आसादयन्ति ॥ उपसर्गवशाद्योग्यक्रियाध्याहारः ॥ तथा कृत्वा राजानं दीप्यमानं सुविदत्रं शोभनज्ञानम् अस्मदनुकूलचेतस्कं सुधनं वा त्वाम् ऋञ्जते प्रसाधयन्ति ॥ ‘ऋञ्जतिः प्रसाधनकर्मा’ इति

---

१. च-ण१-व—उत्पन्नः । २. ण-त-न-म-त्र१—पोषणः । ३. क-म—सुबुद्ध्यैव । ४. क-ज्ञ१—पासि रक्षसि । ५. थ-ब—हिरण्यदाता । ६. म—सविता सर्वस्य प्रसविता ।

यास्कः ॥ यत एवं ततो हे स्वनीक शोभनज्वालारूपसेन त्वं विश्वानि सर्वाणि । हवींषीति शेषः ॥ षष्ठ्यर्थे द्वितीया ॥ विश्वेषां हविषाम् आज्यसोमपुरोडाशादीनां पत्यसे ईश्वरो भवसि ॥ ईश्वरनामैतत् । ' इरज्यति पत्यते ' ( नि. २. २१. २. ) इति तन्नामसु पाठात् ॥ यद्वा पतिभावमाचरसि । त्वं तु सहस्राणि शता शतानि दश एतत्संख्याकानि प्रति । एतत्संख्याकानामभिमतसाधनानां प्रतिनिधिरित्यर्थः ॥ ' प्रतिः प्रतिनिधिप्रतिदानयोः ' ( पा. सू. १. ४. ९२ ) इति कर्मप्रवचनीयत्वम् । तैर्यत्फलं भवति तत्त्वया लभ्यत इत्यर्थः ॥

त्वाम॑ग्ने पि॒तर॑मि॒ष्टिभि॒र्नर॒स्त्वां भ्रा॒त्राय॒ शम्या॑ तनू॒रुच॑म् ।
त्वं पु॒त्रो भ॑वसि॒ यस्तेऽवि॑ध॒त्त्वं सखा॑ सु॒शेवः॑ पास्या॒धृषः॑ ॥ ९ ॥

त्वाम् । अ॒ग्ने॒ । पि॒तर॑म् । इ॒ष्टिऽभिः॑ । नरः॑ । त्वाम् । भ्रा॒त्राय॑ । शम्या॑ । त॒नू॒ऽरुच॑म् ॥
त्वम् । पु॒त्रः । भ॒व॒सि॒ । यः । ते॒ । अवि॑धत् । त्वम् । सखा॑ । सु॒ऽशेवः॑ ।
पा॒सि॒ । आ॒ऽधृषः॑ ॥ ९ ॥

हे अग्ने पितरं पालकं त्वां नरः नेतारो यजमानाः इष्टिभिः एषणसाधनैर्यागैर्यजन्त इति शेषः । पितृवत्पालनाय यजन्त इत्यर्थः । तथा तनूरुचं शरीराणां दीपकं शरीरेषु दीप्यमानं वैश्वानरात्मना त्वां भ्रात्राय भ्रातृत्वाय सौभ्रात्राय शम्या ॥ कर्मनामैतत् ॥ कर्मणा यजन्त इति शेषः । यद्वा । उभयत्र वक्ष्यमाणेन ' अविधत् ' इत्यनेन संबन्धः । हे अग्ने यः नरः ते त्वाम् अविधत् परिचरति तस्य त्वं पुत्रो भवसि पुत्रवत्पालयिता भवसि । तथा त्वं सखा समानख्यानः सखिवद्धितकारी सुशेवः ॥ शेवमिति[1] सुखनाम ॥ सुष्ठु सुखकारी सन् आधृषः आधर्षकात्मा पासि रक्षसि । पितृत्वकामाय पितृत्वेन भ्रातृत्वकामाय भ्रातृत्वेन पुत्रत्वकामाय[2] पुत्रस्थानीयो भवसि । त्रिप्रकारेण रक्षसीत्यर्थः ॥

त्वम॑ग्न ऋ॒भुरा॒के न॑म॒स्य१॒॑स्त्वं वाज॑स्य क्षु॒मतो॑ रा॒य ई॑शिषे ।
त्वं वि भा॑स्यनु॑ दक्षि दा॒वने॒ त्वं वि॒शिक्षु॑रसि य॒ज्ञमा॒तनिः॑ ॥ १० ॥

त्वम् । अ॒ग्ने॒ । ऋ॒भुः । आ॒के । न॒म॒स्यः॑ । त्वम् । वाज॑स्य । क्षु॒ऽमतः॑ । रा॒यः । ई॒शि॒षे॒ ।
त्वम् । वि । भा॒सि॒ । अनु॑ । ध॒क्षि॒ । दा॒वने॑ । त्वम् । वि॒ऽशिक्षुः॑ । अ॒सि॒ । य॒ज्ञम् । आ॒ऽतनिः॑ ॥ १० ॥

हे अग्ने त्वम् ऋभुः । उरुभासमानो मेधावी वा । त्वम् आके अन्तिके संनिधावेव नमस्यः नमस्कार्यः । स्तुत्य इत्यर्थः । इतरदेवतावत् मन्त्रप्रतिपाद्याकारेण[3] स्तुत्यो न भवसि किंतु प्रत्यक्ष इत्यर्थः । तथा त्वं क्षुमतः शब्दवतः सर्वत्र श्रूयमाणस्य वाजस्य अन्नस्य रायः धनस्य च ईशिषे स्वामी भवसि । अतस्तद्देहीत्यर्थः । हे अग्ने त्वं वि भासि विशेषेण दीप्यसे । तदर्थम्

---

१. त-वा-शेव इति ।　२. ण-त-न-पुत्रकामाय ।　३. क-ख-च-झ१-ण१-मन्त्रप्रतिपाद्यत्वाकारेण ।

अनुक्रमेणैव ᵛधक्षि दहसि काष्ठादीन्[1] ॥ दहेर्लेटि सिपि रूपम् । संहितायां भष्भावाभावश्छान्दसः ॥ किमर्थमेवम् । ᵛदावने छेदनायान्धकारस्य । यद्वा । हविषो दानवते यजमानाय वा । किंच ᵛत्वं ᵛयज्ञं ᵛविशिक्षुः विशेषेण शिक्षयिता[2] साधयिता[2] ᵛअसि ॥ 'न लोकाव्यय°' (पा. सू. २. ३. ६९) इति षष्ठ्या निषेधः ॥ तथा ᵛआतनिः फलस्य सर्वतो विस्तारयिता ॥ ॥ १८ ॥

त्वम॑ग्ने॒ अदि॑ति॒र्दे॑व दा॒शुषे॒ त्वं होत्रा॒ भार॑ती वर्धसे गि॒रा ।

त्वमिळा॑ श॒तहि॑मासि॒ दक्ष॑से॒ त्वं वृ॑त्र॒हा व॑सुपते॒ सर॑स्वती ॥ ११ ॥

त्वम् । अ॒ग्ने॒ । अदि॑तिः । दे॒व॒ । दा॒शुषे॑ । त्वम् । होत्रा॑ । भार॑ती । व॒र्ध॒से॒ । गि॒रा ।

त्वम् । इळा॑ । श॒तऽहि॑मा । अ॒सि॒ । दक्ष॑से । त्वम् । वृ॒त्र॒ऽहा । व॒सु॒ऽप॒ते॒ । सर॑स्वती ॥ ११ ॥

हे ᵛअग्ने ᵛदेव ᵛत्वं ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛअदितिः अखण्डयिता परिपालयितासि। यद्वा । अदीना भूमिरसि । किंच ᵛत्वं ᵛहोत्रा होमनिष्पादिका ᵛभारती भरतस्य आदित्यस्य[3] आदित्यसंबन्धिनी[3] रश्मिरूपा सती ᵛगिरा स्तुत्या ᵛवर्धसे प्रवृद्धो भवसि । किंच ᵛत्वं ᵛशतहिमा । हिमशब्दः कालोपलक्षकः । अपरिमितकाला नित्या ᵛइळा भूमिः ᵛअसि । तादृशी सती ᵛदक्षसे दानाय समर्था[4] भवसि ॥ तिङ उत्तरत्वादनिघातः ॥ तथा हे ᵛवसुपते धनपालक ᵛवृत्रहा पापादेर्हन्ता ᵛत्वं ᵛसरस्वती सरणवान् वायुः । तत्संबन्धिनी एतन्नियामिका माध्यमिकासि । आदित्याग्निवायूनां संबन्धिन्यो भारतीळासरस्वत्याख्या यास्तिस्रो देव्यः सन्ति ता अपि त्वमेवेत्यर्थः ॥

त्वम॑ग्ने सु॒भृ॑त उ॒त्त॒मं वय॒स्तव॑ स्पा॒र्हे व॒र्ण आ सं॒दृशि॒ श्रियः॑ ।

त्वं वाजः॑ प्र॒तर॑णो बृ॒हन्न॑सि॒ त्वं र॒यिर्ब॑हु॒लो वि॒श्वत॑स्पृ॒थुः ॥ १२ ॥

त्वम् । अ॒ग्ने॒ । सु॒ऽभृ॑तः । उ॒त्ऽत॒मम् । वयः॑ । तव॑ । स्पा॒र्हे । व॒र्णे । आ । स॒म्ऽदृशि॑ । श्रियः॑ ।

त्वम् । वाजः॑ । प्र॒ऽतर॑णः । बृ॒हन् । अ॒सि॒ । त्वम् । र॒यिः । ब॒हु॒लः । वि॒श्वतः॑ । पृ॒थुः ॥ १२ ॥

हे ᵛअग्ने ᵛत्वं ᵛसुभृतः सुष्ठु पोषितः सन् ᵛउत्तमं निरतिशयं ᵛवयः अन्नमायुष्यं वा त्वमसि तत्संपादकोऽसीत्यर्थः । तथा ᵛतव ᵛस्पार्हे स्पृहणीये ᵛवर्णे लोहितशुक्लादिलक्षणे ᵛसंदृशि सम्यग्दर्शनीये ᵛश्रियः ऐश्वर्याणि कान्तयो वा ᵛआ आश्रित्य वर्तन्ते ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ किंच ᵛत्वं ᵛवाजः अन्नम् । तत्साधकत्वात्ताच्छब्द्यम् । अन्नसाधक इत्यर्थः । ᵛप्रतरणः प्रतारयिता पापात्[5] । अत एव ᵛबृहन् महान् ᵛअसि । तथा ᵛत्वं ᵛरयिः धनरूपोऽसि । ᵛबहुलः सर्वविषयबाहुल्योपेतः ᵛविश्वतः[6] ᵛपृथुः विस्तीर्णः प्रख्यात इत्यर्थः ॥

---

१. त–कायादीन्; थ–कामादीन् २. म–शिक्षयिता शोधयिता; ण-न–क्षिपयिता साधयिता; व–क्षेपयिता साधयिता । ३. क-झ१–आदित्यस्य संबन्धिनी । ४. ख-म-समर्थः । ५. त-थ-न-व–पातात् । ६. झ१–विश्वतः सर्वतः ।

त्वाम॑ग्न आदि॒त्यास॑ आ॒स्यं॑१॒ त्वां जि॒ह्वां शुच॑यश्चक्रिरे कवे ।

त्वां रा॑ति॒षाचो॑ अध्व॒रेषु॑ सश्चिरे॒ त्वे दे॒वा ह॒विर॑द॒न्त्याहु॑तम् ॥ १३ ॥

त्वाम् । अ॒ग्ने॒ । आ॒दि॒त्यास॑ः । आ॒स्य॑म् । त्वाम् । जि॒ह्वाम् । शुच॑यः । च॒क्रि॒रे॒ । क॒वे॒ ।

त्वाम् । रा॒ति॒ऽसाच॑ः । अ॒ध्व॒रेषु॑ । स॒श्चि॒रे॒ । त्वे इति॑ । दे॒वाः । ह॒विः । अ॒द॒न्ति॒ । आऽहु॑तम् ॥ १३ ॥

हे अग्ने त्वाम् आदित्यासः अदितेः पुत्रा इन्द्रादयः आस्यं स्वकीयं मुखं भक्षणपानादिसाधनं चक्रिरे इति वक्ष्यमाणेन संबन्धः । तथा हे कवे क्रान्तप्रज्ञ त्वाम् एव शुचयः शुद्धा दीप्ता वा देवाः जिह्वां स्वकीयजिह्वास्थानीयम् आस्वादनसाधनं चक्रिरे । त्वन्मुखेनैव भक्षयन्ति त्वजिह्वयैव आस्वादयन्तीत्यर्थः । तथा त्वाम् एव रातिषाचः । रातिर्दानं दत्तं हविरादि धनं वा । तेन समवेता देवाः अध्वरेषु यज्ञेषु सश्चिरे सेवन्ते त्वामेव प्रतीक्षन्ते विना त्वया स्वेषां[1] हविर्भक्षणायोगात् । एवं कृत्वा त्वे त्वयि देवाः सर्वे आहुतं सर्वतो दत्तं हविरदन्ति भक्षयन्ति । एवं सर्वदेवोपकारिणं महानुभावं स्तौमीत्यर्थः ॥

त्वे अ॑ग्ने॒ विश्वे॑ अ॒मृता॑सो अ॒द्रुह॑ आ॒सा दे॒वा ह॒विर॑द॒न्त्याहु॑तम् ।

त्वया॒ मर्ता॑सः स्वदन्त आसु॒तिं त्वं गर्भो॑ वी॒रुधां॑ जज्ञिषे॒ शुचि॑ः ॥ १४ ॥

त्वे इति॑ । अ॒ग्ने॒ । विश्वे॑ । अ॒मृता॑सः । अ॒द्रुह॑ः । आ॒सा । दे॒वाः । ह॒विः । अ॒द॒न्ति॒ । आऽहु॑तम् ।

त्वया॑ । मर्ता॑सः । स्व॒द॒न्ते॒ । आ॒ऽसु॒तिम् । त्वम् । गर्भ॑ः । वी॒रुधा॑म् । ज॒ज्ञि॒षे॒ । शुचि॑ः ॥ १४ ॥

हे अग्ने त्वे त्वयि विश्वे सर्वे अमृतासः अमरणधर्माणः अद्रुहः अद्रोग्धारः देवाः आसा त्वदीयेन आस्येन आहुतं हविरदन्ति भक्षयन्ति । आस्यशब्दस्य तृतीयैकवचने 'पद्दन्नोमास्°' इत्यादिना आसन्नादेशः । 'ऊडिदंपदादि°' इति विभक्तेरुदात्तत्वम् । तथा मर्तासः मनुष्या अपि त्वया साधनभूतेन आसुतिं रसरूपमन्नादिकं स्वदन्ते आस्वादयन्ति । त्वम् एव वीरुधां लतादीनां गर्भः गर्भस्थानीयः तेषां मध्येऽवस्थानात् । वसुः सर्वेषां निवासभूतः सन् जज्ञिषे । उत्पादयसि सस्याद्यन्नम् ॥

त्वं तान्त्सं च॒ प्रति॑ चासि म॒ज्मनाग्ने॑ सुजात॒ प्र च॑ देव रिच्यसे ।

पृ॒क्षो यद॑त्र महि॒ना वि ते॒ भुव॒दनु॒ द्यावा॑पृथि॒वी रोद॑सी उ॒भे ॥ १५ ॥

त्वम् । तान् । सम् । च॒ । प्रति॑ । च॒ । अ॒सि॒ । म॒ज्मना॑ । अग्ने॑ । सु॒ऽजा॒त॒ । प्र । च॒ । दे॒व॒ । रि॒च्य॒से॒ ।

पृ॒क्षः । यत् । अत्र॑ । म॒हि॒ना । वि । ते॒ । भुव॑त् । अनु॑ ।

द्यावा॑पृथि॒वी इति॑ । रोद॑सी॒ इति॑ । उ॒भे इति॑ ॥ १५ ॥

---

1. क-ञ१-म-तेषाम् ।

हे अग्ने $^v$त्वं $^v$मज्मना बलेन $^v$तान् प्रसिद्धान् देवान् $^v$सं $^v$च $^v$असि संगच्छसि । तैः सहितोऽपि भवसि । तथा सामर्थ्येन $^v$प्रति $^v$चासि । प्रत्येकं तैर्विभिन्नः प्रतिनिधिर्वा भवसि । प्रतिस्वीकारसमये तैः सहितो भवसि वियुक्तश्च भवसीत्यर्थः । हे $^v$सुजात शोभनजनन । मन्त्रसहितमथनेन उत्पन्नत्वात् अग्नेः सुजन्मत्वम् । तादृश $^v$अग्ने हे $^v$देव $^v$प्र $^v$रिच्यसे $^v$च । तैर्बलेन चाधिको भवसि । आधिक्ये कारणमाह । $^v$यत् यस्मात् $^v$अत्र अस्मिन् यज्ञे $^v$पृक्षः सर्वमप्यन्नम् । व्यत्ययेन बहुवचनम् । $^v$ते तवैव $^v$वि $^v$भुवत् समर्थं भवति $^v$महिना माहात्म्येन । यतो महत्त्वमस्ति अत इत्यर्थः । कुत्रेति तदुच्यते । $^v$रोदसी सर्वनिरोदनस्वभावे $^v$उभे द्यावापृथिव्यौ $^v$अनु । ते प्रति । तयोर्मध्ये व्याप्तमित्यर्थः । त्वयि हुतमन्नं त्वन्महत्त्वेन लोकत्रये व्याप्तमित्यर्थः ॥

ये स्तोतृभ्यो गोअ॑ग्रामश्व॑पेशसमग्ने॑ रा॒तिमु॑पसृ॒जन्ति॑ सू॒रयः॑ ।

अ॒स्मा॒ञ्च॒ ताँश्च॒ प्र हि नेषि॒ वस्य॒ आ बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥ १६ ॥

ये । स्तो॒तृऽभ्यः॑ । गोऽअ॑ग्राम् । अश्व॑ऽपेशसम् । अग्ने॑ । रा॒तिम् । उ॒प॒ऽसृ॒जन्ति॑ । सू॒रयः॑ ।

अ॒स्मान् । च॒ । तान् । च॒ । प्र । हि । नेषि॑ । वस्यः॑ । आ ।

बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥ १६ ॥

अनया होता स्तुतिनिगमव्याजेन[1] अभिमतमाशास्ते । हे $^v$अग्ने $^v$सूरयः मेधाविनः प्रेरयितारो वा यजमानाः $^v$स्तोतृभ्यः स्तुतिकर्तृभ्यः $^v$गोअग्रां गावोऽग्रगामिन्यो यस्याः तादृशीं गोप्रमुखाम् $^v$अश्वपेशसम् ॥ पेश इति रूपनाम ॥ अश्वेन निरूपणीयाम् । एतद्द्वयं प्राधान्याभिप्रायम् । गौश्च अश्वश्च अजाश्चेति दक्षिणापरिगणनेषु गवाश्वयोः प्राथम्यात् । तादृशीं $^v$रातिम् $^v$उपसृजन्ति ददते । $^v$तान् यजमानान् $^v$अस्मांश्च ऋत्विजः $^v$वस्यः वसीयः श्रेष्ठं स्वर्गादिस्थानम् $^v$आ सर्वतः $^v$प्र[2] $^v$हि $^v$नेषि[2] प्रकर्षेण नयसि खलु । नयेरर्थः । हि प्रसिद्धौ । वयं च $^v$सुवीराः शोभनपुत्रादिसहिताः $^v$विदथे यज्ञे $^v$बृहत् महन्मन्त्रजातं $^v$वदेम उच्चारयामः स्तुम इत्यर्थः ॥ १९ ॥

'यज्ञेन वर्धत' इति त्रयोदशर्चं द्वितीयं सूक्तं मण्डलद्रष्टुर्गृत्समदस्यार्षम् । 'मण्डलादिष्वाग्नेयम्' इति परिभाषयाग्नेयम् । तुशब्दानुकर्षादिदमपि जागतम् । 'यज्ञेन ससोना' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसि अस्य विनियोगः । सूत्रं तु पूर्वसूक्ते एवोक्तम् । तथा चातुर्विंशिके तृतीयसवने जातवेदस्यनिविद्धानीयम्[3] इदम् । 'यज्ञेन वर्धतेत्याग्निमारुतम्' ( आश्व. श्रौ. ७. ४ ) इति सूत्रितत्वात् । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहन्यपि जातवेदस्यनिविद्धानम्[4] इदम् । 'चातुर्विंशिकं तृतीयसवनम्' इति चतुर्विंशादतिदिष्टत्वात् ।

---

१. म–स्तुतिं निगमव्य । २. म–प्र णेषि हि; ख-ण१-न-व–प्र हि णेषि; न–प्र णहि षि; क–प्रणेषि । ३. ण-न-म– °निविद्धानम् । ४. ख-ण– °निविद्धानीयम् ।

यज्ञेन वर्धत जातवेदसमग्निं यजध्वं हविषा तना गिरा ।
समिधानं सुप्रयसं स्वर्णरं द्युक्षं होतारं वृजनेषु धूर्षदम् ॥ १ ॥

यज्ञेन । वर्धत । जातऽवेदसम् । अग्निम् । यजध्वम् । हविषा । तना । गिरा ।
सम्ऽइधानम् । सुऽप्रयसम् । स्वःऽनरम् । द्युक्षम् । होतारम् । वृजनेषु । धूःऽसदम् ॥ १ ॥

हे यजमाना ऋत्विजो वा यूयं जातवेदसं जातानां वेदितारं जातधनं जातप्रज्ञं वा अग्निं यज्ञेन यागेन वर्धत प्रवर्धत[1] । सामान्येनोक्त्वा विशेषेणाह । हविषा चरुपुरोडाशादिना तना विस्तृतया गिरा स्तुत्या च यजध्वं पूजयध्वम् । कीदृशं तम् । समिधानं समिध्यमानम् । सुप्रयसं शोभनान्नम् । स्वर्णरं स्वर्गं नेतव्या यजमाना यस्य तादृशम् । यद्वा स्वरिति सर्वपर्यायः । स्तुतीनां नेतारः स्तोतारः । बहुस्तोतारमित्यर्थः । द्युक्षं दीप्तं द्युनिवासिनं वा । होतारं होमसंपादकम् । वृजनेषु बलेषु धूर्षदं[2] बलस्य कर्तारमित्यर्थः । अग्निपाटवे सति शारीरं बलं[3] भवतीति प्रसिद्धम्[3] ॥

अभि त्वा नक्तीरुषसो ववाशिरेऽग्ने वत्सं न स्वसरेषु धेनवः ।
दिवइवेदरतिर्मानुषा युगा क्षपो भासि पुरुवार संयतः ॥ २ ॥

अभि । त्वा । नक्तीः । उषसः । ववाशिरे । अग्ने । वत्सम् । न । स्वसरेषु । धेनवः ।
दिवःऽइव । इत् । अरतिः । मानुषा । युगा । आ । क्षपः । भासि । पुरुऽवार । सम्ऽयतः ॥२॥

हे अग्ने त्वा त्वां अभि प्रति नक्तीः रात्रीः उषसः अहानि । सर्वासु रात्रिषु सर्वेष्वपि[4] अहःसु । यद्वा नक्तशब्दः सायंकालं लक्षयति सायंप्रातरग्निहोत्रस्य सद्भावात् । सर्वेषु कालेषु सायंप्रातः-कालेषु वा ववाशिरे आकांक्षन्ते यजमाना यष्टुम् । यद्वा अहानि रात्रयश्च त्वामेव कामयन्ते होतुम् । काले कर्मणश्चोदनात् कालानां कामनमुपचर्यते । तत्र दृष्टान्तः । स्वसरेषु स्वयंसरणशीलेष्वहःसु सुखसरणाधिकरणेषु[5] गोष्ठेषु वा धेनवः वत्सं न । वत्समिव । किंच हे पुरुवार बहुभिर्वरणीयाग्ने संयतः नियतस्त्वं दिवइव द्युलोकस्येव अरतिः । व्याप्तो विस्तृतः । तत्रस्थानां देवानां हविः-प्रदानायैव सर्वत्र व्याप्त इत्यर्थः । मानुषा मनुष्याणां[6] यजमानानां संबन्धीनि युगा युगानि । युगशब्दः कालोपलक्षकः । प्रातरादिसवनानि । सर्वेषु सवनेषु ॥ अत्यन्तसंयोगे द्वितीया ॥ क्षपः रात्रीः । सर्वासु रात्रिष्वपि आ भासि समन्ताद्दीप्यसे ॥

---

१. म–प्रवधर्यत । २. थ-म-धूर्षदं तम् । ३. म-शरीरस्य बलं भवति हि सिद्धम् । ४. क-ज-ण-१ म-ख–सर्वेषु । ५. ब–सुखशरणाधिकरणेषु । ६. क-ण-न-म- मानुषाणाम् ।

तं देवा बुध्ने रजसः सुदंससं दिवस्पृथिव्योररतिं न्येरिरे ।
रथमिव वेद्यं शुक्रशोचिषमग्निं मित्रं न क्षितिषु प्रशंस्यम् ॥ ३ ॥

तम् । देवाः । बुध्ने । रजसः । सुऽदंससम् । दिवः पृथिव्योः । अरतिम् । नि । एरिरे ।
रथम्ऽइव । वेद्यम् । शुक्रऽशोचिषम् । अग्निम् । मित्रम् । न । क्षितिषु । प्रऽशंस्यम् ॥३॥

तं प्रसिद्धम् उक्तगुणविशिष्टमग्निं देवाः प्रसिद्धा व्यवहर्तार ऋत्विजो वा रजसः रञ्जनात्मकस्य लोकस्य बुध्ने मूले । पृथिव्यां वेद्यामित्यर्थः । तत्र न्येरिरे नितरामीरयन्ति । व्यापारयन्ति स्वस्वहविर्लाभाय । ऋत्विक्पक्षे स्तोत्रादिना नितरां गच्छन्ति भजन्ते । कीदृशमित्याह । सुदंससं शोभनदर्शनं दिवस्पृथिव्योः द्यावापृथिव्योः अरतिम् । ईश्वरं गन्तारं व्याप्तं वा । वेद्यम् । वेदो धनम् । तस्मै हितम् । रथमिव । रथं यथा स्वाभिमतलाभाय आश्रयन्ते तद्वत् । यद्वा रथमिव प्राप्तिसाधनत्वेन वर्तमानं वेद्यं वेदितव्यम् । शुक्रशोचिषं दीप्तवर्णम् अग्निं मित्रं[1] न[1] सखिवत्कार्यसाधकम् । यद्वा आदित्यमिव । क्षितिषु यागभूमिषु मनुष्येषु वा प्रशंस्यं प्रकर्षेण स्तुत्यम् । एवं महानुभावमग्निं न्येरिर इति ॥

तमुक्षमाणं रजसि स्व आ दमे चन्द्रमिव सुरुचं ह्वार आ दधुः ।
पृश्न्याः पतरं चितयन्तमक्षभिः पाथो न पायुं जनसी उभे अनु ॥ ४ ॥

तम् । उक्षमाणम् । रजसि । स्वे । आ । दमे । चन्द्रम्ऽइव । सुऽरुचम् । ह्वारे । आ । दधुः ।
पृश्न्याः । पतरम् । चितयन्तम् । अक्षऽभिः । पाथः । न । पायुम् ।
जनसी इति । उभे इति । अनु ॥ ४ ॥

तं स्तुत्यतरं रजसि अन्तरिक्षे आ उक्षमाणं सर्वतः सिञ्चन्तं वृष्टिजलं रजसि पृथिव्यां वेद्यां घृतादिना आसिच्यमानं[2] वा । स्वे स्वकीये ह्वारे विजने[3] दमे यागगृहे आ दधुः आदधते । कीदृशं तम् । चन्द्रमिव सुरुचम् । चन्द्रमिति हिरण्यनाम । हिरण्यमिव शोभनदीप्तिम् । पश्चात् प्रवृद्धावस्थायां पृश्न्याः पतरं द्युलोकस्यान्तरिक्षस्य गन्तारम् । अक्षभिः स्वकीयैर्ज्वालारूपैरवयवैः चितयन्तं चेतयमानम् । पाथो न पायुम् । उदकमिव रक्षकम् । उभे जनसी सर्वस्य जनयित्र्यौ द्यावापृथिव्यौ अनु व्याप्तम् । भूम्यां होमाधारत्वेन स्थित्वा हविष्प्रापणाय द्युलोकगामिनमिति भावः । एवंरूपमग्निमादधते ॥

---

१. क-झ१-म—मित्रमिव; व—मित्रं न मित्रमिव । २. म—अभिसिच्यमानम् । ३. म—वृजने ।

स होता विश्वं परि भूत्वध्वरं तमु हव्यैर्मनुष ऋञ्जते गिरा ।
हिरिशिप्रो वृधसानासु जर्भुरद्द्यौर्न स्तृभिश्चितयद्रोदसी अनु ॥ ५ ॥

सः । होता । विश्वम् । परि । भूतु । अध्वरम् । तम् । ऊँ इति । हव्यैः । मनुषः । ऋञ्जते । गिरा ।
हिरिऽशिप्रः । वृधसानासु । जर्भुरत् । द्यौः । न । स्तृऽभिः । चितयत् । रोदसी इति । अनु ॥५॥

^v^सः अग्निः ^v^होता होमनिष्पादकः सन् ^v^विश्वं सर्वम् ^v^अध्वरं यागं ^v^परि ^v^भूतु परितो भवतु[1]। ^v^तमु तमेवाग्निं ^v^हव्यैः हविर्भिः ^v^गिरा स्तुत्या च ^v^मनुषः मनुष्याः ^v^ऋञ्जते प्रसाधयन्ति। ऋञ्जतिः प्रसाधनकर्मा । ^v^हिरिशिप्रः हरणशीलहनुर्दीप्तोष्णीषो वा । 'शिप्राः शीर्षसु वितता हिरण्ययीः' (ऋ. सं. ५. ५४. ११) इत्यादि मन्त्रान्तरात् । ^v^वृधसानासु प्रवर्धमानास्वोषधीषु ज्वालासु वा ^v^जर्भुरत् । पूर्यमाणो यज्ञं गन्ता । शत्रन्तं पदम् । यद्वा द्वितीयार्थे सप्तमी । वर्धमाना ओषधीर्जर्भुरत् । पुनःपुनर्दहन्नित्यर्थः । ^v^द्यौः द्युलोकान्तरिक्षं ^v^स्तृभिः ^v^न नक्षत्रैरिव ^v^रोदसी ^v^अनु द्यावापृथिव्यावनु ^v^चितयत् चेतयति । ज्वालाभिर्विस्फुलिङ्गैश्च भुवमन्तरिक्षं च व्याप्नोतीत्यर्थः ॥　　॥ २० ॥

स नो रेवत्समिधानः स्वस्तये संददस्वान्रयिमस्मासु दीदिहि ।
आ नः कृणुष्व सुविताय रोदसी अग्ने हव्या मनुषो देव वीतये ॥ ६ ॥

सः । नः । रेवत् । सम्ऽइधानः । स्वस्तये । सम्ऽददस्वान् । रयिम् । अस्मासु । दीदिहि ।
आ । नः । कृणुष्व । सुविताय । रोदसी इति । अग्ने । हव्या । मनुषः । देव । वीतये ॥६॥

हे अग्ने ^v^सः तादृशस्त्वं ^v^नः अस्माकं ^v^स्वस्तये । स्वस्तीत्यविनाशनाम । क्षेमाय । ^v^रेवत् रयिमत् ^v^रयिं धनं उपर्युपरिवृद्धिमद्दानयोग्यं वा धनम् ^v^अस्मासु ^v^संददस्वान् सम्यक् प्रयच्छन् ^v^समिधानः अस्माभिः सम्यगिध्यमानः सन् ^v^दीदिहि दीप्यस्व । यद्वा रेवदिति क्रियाविशेषणम् । रा धनं समृद्धिमद्यथा तथा दीप्यस्वेति । तथाभूतः सन् ^v^नः अस्मभ्यं ^v^सुविताय सुहिताय शोभनफलाय ^v^रोदसी द्यावापृथिव्यौ ^v^आ ^v^कृणुष्व सर्वतः कुरुष्व । उभौ लोकौ भोगप्रदौ कुर्वित्यर्थः । किमर्थमिति तदुच्यते । हे ^v^देव ^v^अग्ने ^v^मनुषः मनुष्यस्य यजमानस्य मम संबन्धीनि ^v^हव्या हवींषि ^v^वीतये देवेभ्यो भक्षणाय । पुनःपुनर्यागाद्यनुष्ठानायेत्यर्थः ।

दा नो अग्ने बृहतो दाः सहस्रिणो दुरो न वाजं श्रुत्या अपा वृधि ।
प्राची द्यावापृथिवी ब्रह्मणा कृधि स्वर्ण शुक्रमुषसो वि दिद्युतः ॥ ७ ॥

दाः । नः । अग्ने । बृहतः । दाः । सहस्रिणः । दुरः । न । वाजम् । श्रुत्यै । अप । वृधि ।
प्राची इति । द्यावापृथिवी इति । ब्रह्मणा । कृधि । स्वः । न । शुक्रम् । उषसः । वि । दिद्युतः ॥७॥

---

1. क-झ१-म-भवतु व्याप्नोतु ।

हे अग्ने नः अस्मभ्यं बृहतः महतः प्रभूतान् गवाश्वादिधनविशेषान् दाः देहि । तथा सहस्रिणः सहस्रसंख्योपेतान् पुत्रभृत्यादीन् दाः देहि ॥ ददातेश्छान्दसे लुङि रूपम् । वाक्यभेदादनिघातः ॥ श्रुत्यै कीर्त्यै वाजम् अन्नं दुरो न तस्य द्वाराण्यपि । नशब्दश्चार्थे[1] । अप वृधि अपवृणु । प्रेरयेत्यर्थः । यद्वा द्वाराणीव । तत्प्राप्त्युपायान् विशदयति । तदर्थं द्यावापृथिवी ब्रह्मणा परिवृढेन कर्मणा प्राची प्रकृष्टाञ्चने अस्मदनुकूले कृधि कुरु । स्वर्ण आदित्य इव । स यथा जगत्प्रकाशयति तद्वत् । शुक्रं दीप्तं त्वाम् उषसः उषःकालाः वि दिद्युतुः विद्योतयन्ति । उषःकाले ह्यग्नयः प्रज्वाल्यन्ते ॥

स इधान उषसो राम्या अनु स्वर्ण दीदेदरुषेण भानुना ।
होत्राभिरग्निर्मनुषः स्वध्वरो राजा विशामतिथिश्चारुरायवे ॥ ८ ॥

सः । इधानः । उषसः । राम्याः । अनु । स्वः । न । दीदेत् । अरुषेण । भानुना ।
होत्राभिः । अग्निः । मनुषः । सुऽअध्वरः । राजा । विशाम् । अतिथिः । चारुः । आयवे ॥ ८ ॥

सः अग्निः राम्याः रमणहेतुभूताः उषसः अनु अनुलक्ष्य इधानः इध्यमानो दीपितः सन् अरुषेण रोचमानेन भानुना तेजसा स्वर्ण आदित्य इव दीदेत् दीप्यते । सः अग्निः मनुषः मनुष्यस्य होतुः होत्राभिः । होत्रेति वाङ्नाम । होमसाधनभूताभिः स्तुतिभिः स्तूयमानः स्वध्वरः शोभनयागः विशां प्रजानां राजा राजमानः स्वामी आयवे मनुष्याय यजमानाय तदर्थं चारुः चरणशीलः अतिथिः अतिथिवत्पूज्यो भवति ॥

एवा नो अग्ने अमृतेषु पूर्व्य धीष्पीपाय बृहद्दिवेषु मानुषा ।
दुहाना धेनुर्वृजनेषु कारवे त्मना शतिनं पुरुरूपमिषणि ॥ ९ ॥

एव । नः । अग्ने । अमृतेषु । पूर्व्य । धीः । पीपाय । बृहत्ऽदिवेषु । मानुषा ।
दुहाना । धेनुः । वृजनेषु । कारवे । त्मना । शतिनम् । पुरुऽरूपम् । इषणि ॥ ९ ॥

बृहद्दिवेषु प्रभूतद्युतिषु अमृतेषु देवेषु मध्ये हे पूर्व्य पूर्वभाविन् अग्ने त्वां मानुषा मनुष्याणां मध्ये नः अस्मदीया धीः बुद्धिः स्तुतिः कर्म वा एव एवं पीपाय प्याययति । यद्वा मानुषा मनुष्यान्[2] धीस्त्वदीया बुद्धिः कर्म वा प्याययतु । तथा त्वदीया धीः वृजनेषु यज्ञेषु कारवे स्तोत्रे दुहाना धेनुः । दोग्ध्री धेनुरिव । लुप्तोपममेतत् । त्मना आत्मनैव इषणि एषणायां सत्यां शतिनम् अपरिमितसंख्याकं पुरुरूपं गवाश्वादिरूपेण नानारूपं धनसमूहं दुहाना भवति ॥

---

१. ख-ज-त्र—नशब्दश्चार्थे । प्रादयोऽर्थव्यवसायेन व्यवहरन्ति । २. झ-झ१-म—मनुष्यान् अस्मान् ।

वयमग्ने अर्वता वा सुवीर्यं ब्रह्मणा वा चितयेमा जनाँ अति ।
अस्माकं द्युम्नमधि पञ्च कृष्टिषूच्चा स्वर्ण शुशुचीत दुष्टरम् ॥ १० ॥

वयम् । अग्ने । अर्वता । वा । सुऽवीर्यम् । ब्रह्मणा । वा । चितयेम । जनान् । अति ।
अस्माकम् । द्युम्नम् । अधि । पञ्च । कृष्टिषु । उच्चा । स्वः । न । शुशुचीत । दुस्तरम् ॥१०॥

हे अग्ने वयं यजमानाः सुवीर्यं शोभनसामर्थ्योपेतं यथा तथा अर्वता वा अरणकुशलेनाश्वेन। वाशब्दश्चार्थे । ब्रह्मणा वा अन्नेन च त्वद्दत्तेन जनान् अस्मत्समानान् अति चितयेम अतिक्रम्य ज्ञायेमहि । कर्मणि कर्तृप्रत्ययः । यद्वा त्वद्दत्तेनाश्वेनान्नेन च सुवीर्यं चितयेम प्रकाशयेम । तदर्थम् अस्माकं पञ्च पञ्चसु कृष्टिषु जनेषु निषादपञ्चमेषु चतुर्षु वर्णेषु उच्चा उच्चैरतिप्रभूतं दुस्तरम् अन्येनाप्राप्तं द्युम्नं धनं स्वर्ण सूर्य इवाधिकं शुशुचीत दीप्यताम् । अधीत्ययमनर्थको वा ।

स नो बोधि सहस्य प्रशंस्यो यस्मिन्त्सुजाता इषयन्त सूरयः ।
यमग्ने यज्ञमुपयन्ति वाजिनो नित्ये तोके दीदिवांसं स्वे दमे ॥ ११ ॥

सः । नः । बोधि । सहस्य । प्रऽशंस्यः । यस्मिन् । सुऽजाताः । इषयन्त । सूरयः ।
यम् । अग्ने । यज्ञम् । उपऽयन्ति । वाजिनः । नित्ये । तोके । दीदिऽवांसम् । स्वे । दमे ॥११॥

हे अग्ने सहस्य शत्रूणामभिभवितर्बलप्रभव वा प्रशंस्यः स्तुत्यः सः त्वं नः अस्मदीयं स्तोत्रादिकं बोधि बुध्यस्व। स इत्युक्ते क इत्याह । यस्मिन् अग्नौ सुजाताः शोभनजननाः सूरयः स्तोतार ऋत्विजः इषयन्त गमयन्ति स्तोत्राणि । किंच हे अग्ने यज्ञं यजनीयं यं वाजिनः हविर्लक्षणान्नवन्तो यजमानाः नित्ये तोके औरसे पुत्रे निमित्तभूते सति। यद्वा। तस्मिन् यथा दीप्यते । पुत्रगृहे यथा पिता दीप्यते तद्वत् स्वे दमे स्वकीये यागगृहे सवनीयादिस्थाने दीदिवांसं दीप्यमानम् उपयन्ति हविःस्तोत्रादिना । स बोधि इत्यन्वयः ॥

उभयासो जातवेदः स्याम ते स्तोतारो अग्ने सूरयश्च शर्मणि ।
वस्वो रायः पुरुश्चन्द्रस्य भूयसः प्रजावतः स्वपत्यस्य शग्धि नः ॥ १२ ॥

उभयासः । जातऽवेदः । स्याम । ते । स्तोतारः । अग्ने । सूरयः । च । शर्मणि ।
वस्वः । रायः । पुरुऽचन्द्रस्य । भूयसः । प्रजाऽवतः । सुऽअपत्यस्य । शग्धि । नः ॥१२॥

हे जातवेदः जातानां वेदितः अग्ने स्तोतारः त्वां स्तुवन्त ऋत्विजः सूरयः मेधाविनो यजमानाः च इति उभयासः उभये वयं शर्मणि सुखे निमित्तभूते सति ते त्वत्संबन्धिनः स्याम भवेम । यद्वा । ते शर्मणि स्याम । त्वं च नः अस्माकं वस्वः निवासहेतोर्वसिष्ठस्य रायः

गवादिधनस्य ᵛपुरुश्चन्द्रस्य अतिशयेनाह्लादकस्य बहुहिरण्योपेतस्य वा ᵛभूयसः प्रभूतस्य ᵛप्रजावतः भृत्याद्युपेतस्य पुत्रादिभोगपर्याप्तस्य वा ᵛस्वपत्यस्य शोभनपुत्रस्य । ईदृग्रूपं धनं ᵛनः अस्मभ्यं ᵛशग्धि देहि। दातुं शक्तो भवसि ॥

ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः ।
अस्माञ्च तांश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥ १३ ॥

ये । स्तोतृऽभ्यः । गोऽअग्राम् । अश्वऽपेशसम् । अग्ने । रातिम् । उपऽसृजन्ति । सूरयः ।
अस्मान् । च । तान् । च । प्र । हि । नेषि । वस्यः । आ । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १३ ॥

' ये स्तोतृभ्यः ' इति त्रयोदशी व्याख्याता ॥ ॥ २१ ॥

' समिद्धो अग्निः ' इत्येकादशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभम् । सप्तमी जगती । समिद्धोऽग्निरग्निना नराशंसतनूनपादादय एकादश प्रयाजदेवताः । ' समिद्ध एकादशाप्रं सप्तमी जगती ' इत्यनुक्रमणिका । पशौ शुनकानामिदमाप्रीसूक्तम् । गृत्समदस्यापि शुनकत्वात् । ' समिद्धो अग्निरिति शुनकानाम् ' ( आश्व. श्रौ. ३. २ ) इति हि सूत्रितम् ।

समिद्धो अग्निर्निहितः पृथिव्यां प्रत्यङ् विश्वानि भुवनान्यस्थात् ।
होता पावकः प्रदिवः सुमेधा देवो देवान्यजत्वग्निरर्हन् ॥ १ ॥

सम्ऽइद्धः । अग्निः । निऽहितः । पृथिव्याम् । प्रत्यङ् । विश्वानि । भुवनानि । अस्थात् ।
होता । पावकः । प्रऽदिवः । सुऽमेधाः । देवः । देवान् । यजतु । अग्निः । अर्हन् ॥ १ ॥

ᵛपृथिव्यां वेदिलक्षणायां ᵛसमिद्धः सम्यक् दीप्त एतन्नामकः ᵛअग्निः ᵛनिहितः स्थापितः सन् ᵛविश्वानि सर्वाणि ᵛभुवनानि भूतजातानि ᵛप्रत्यङ् अभिमुखः सन् ᵛअस्थात् तिष्ठति । यथा सर्वे जनाः पश्यन्ति तथा प्रवृद्धः[1] अभवदित्यर्थः । किंच सोऽग्निः ᵛहोता होमनिष्पादको देवानामाह्वाता वा ᵛपावकः शोधकः ᵛप्रदिवः पुराणः ᵛसुमेधाः शोभनप्रज्ञः ᵛदेवः द्योतमानः । एवं महानुभावः ᵛअग्निः ᵛअर्हन् यागयोग्यः सन् ᵛदेवान्यजतु । अत्र यष्टव्यानिन्द्रादीन् पूजयतु[2] ।

नराशंसः प्रति धामान्यञ्जन् तिस्रो दिवः प्रति मह्ना स्वर्चिः ।
घृतप्रुषा मनसा हव्यमुन्दन्मूर्धन्यज्ञस्य समनक्तु देवान् ॥ २ ॥

नराशंसः । प्रति । धामानि । अञ्जन् । तिस्रः । दिवः । प्रति । मह्ना । सुऽअर्चिः ।
घृतऽप्रुषा । मनसा । हव्यम् । उन्दन् । मूर्धन् । यज्ञस्य । सम् । अनक्तु । देवान् ॥ २ ॥

---

१. क-म-वृद्धः । २. व-तथा पूजयतु ।

ᵛनराशंसः नरैर्नेतृभिः ऋत्विग्भिः[1] शंसनीयः एतन्नामकोऽग्निः ᵛस्वर्चिः शोभनज्वालः सन् ᵛधामानि स्थानान्याहुत्यधिकरणानि तेजांसि ᵛप्रति प्रत्येकं ᵛमह्ना स्वमहिम्ना ᵛअञ्जन् व्यक्तीकुर्वन् ᵛतिस्रो ᵛदिवः द्योतमानांस्त्रीन् भूम्यादिलोकांश्च ᵛप्रति प्रत्येकमञ्जन् । स्थित्या[2] भूमिं प्रकाशेनान्तरिक्षं हविष्प्रापणेन दिवमित्यभिप्रायः । यद्वा लोकानां प्रत्येकं त्रित्वोपेतत्वात् तिस्रो दिव इत्यविरुद्धम् । 'तिस्रो दिवः पृथिवीस्तिस्रः' (ऋ. सं. ४. ५४. ५) इत्यादिमन्त्रवर्णात् 'त्रयो वा इमे त्रिवृतो लोकाः' (ऐ. ब्रा. २. १७) इति ब्राह्मणाच्च । तथा ᵛघृतप्रुषा घृतं सिञ्चता ᵛमनसा ᵛहव्यम् ᵛउन्दन् क्लेदयन् स्निग्धीकुर्वन् ᵛयज्ञस्य ᵛमूर्धन् मूर्धनि मुखे होमसमये ᵛदेवान् यष्टव्यान् ᵛसमनक्तु सम्यक् व्यक्तीकरोतु । तर्पयत्वित्यर्थः ॥

ई॒ळि॒तो अ॑ग्न॒ मन॑सा नो॒ अर्ह॑न्दे॒वान्य॑क्षि॒ मानु॑षा॒त्पूर्वो॑ अ॒द्य ।
स आ व॑ह म॒रुतां॒ शर्धो॒ अच्यु॑त॒मिन्द्रं॑ नरो ब॒र्हि॒षदं॑ यजध्वम् ॥ ३ ॥

ई॒ळि॒तः । अ॒ग्ने॒ । मन॑सा । नः॒ । अर्ह॑न् । दे॒वान् । य॒क्षि॒ । मानु॑षात् । पूर्वः॑ । अ॒द्य ।
सः । आ । व॒ह॒ । म॒रुता॑म् । शर्धः॑ । अच्यु॑तम् । इन्द्र॑म् । न॒रः॒ । ब॒र्हि॒ऽसद॑म् । य॒ज॒ध्व॒म् ॥३॥

हे ᵛअग्ने ᵛईळितः अस्माभिः स्तुतः सन् ᵛमनसा अस्मदनुरक्तेन देवानां यागबुद्ध्या वा ᵛअर्हन् यागयोग्यः सन् ᵛमानुषात् होतुः ᵛपूर्वः पूर्वभावी ᵛनः अस्मदर्थम् ᵛअद्य अस्मिन् दिने ᵛदेवान् यष्टव्यान् ᵛयक्षि त्वमेव यजसि । ᵛसः तादृशो यष्टा त्वम् ᵛआ ᵛवह आकारय । कान् । ᵛमरुतां ᵛशर्धः गणम् । ᵛअच्युतम् अक्षीणम् ᵛइन्द्रं तदविनाभूतमिन्द्रमपि । यद्वा मरुद्बलोपेतमिन्द्रम् । अनन्तरं हे ᵛनरः नेतार ऋत्विजः ᵛबर्हिषदं बर्हिषि सीदन्तं तमिन्द्रं ᵛयजध्वं पूजयध्वम् ॥

देव॑ बर्हि॒र्वर्ध॑मानं सु॒वीरं॑ स्ती॒र्णं रा॒ये सु॒भरं॒ वेद्य॒स्याम् ।
घृ॒तेना॒क्तं व॑सवः सीदते॒दं विश्वे॑ देवा आदित्या य॒ज्ञिया॑सः ॥ ४ ॥

देव॑ । ब॒र्हिः॒ । वर्ध॑मानम् । सु॒ऽवीर॑म् । स्ती॒र्णम् । रा॒ये । सु॒ऽभर॑म् । वेदी॒ इति॑ । अ॒स्याम् ।
घृ॒तेन॑ । अ॒क्तम् । व॒स॒वः॒ । सी॒द॒त॒ । इ॒दम् । विश्वे॑ । दे॒वाः॒ । आ॒दि॒त्याः॒ । य॒ज्ञिया॑सः ॥४॥

हे ᵛबर्हिः ᵛदेव एतदभिमानिन्नग्ने ᵛवर्धमानं ᵛसुवीरं शोभनवीरसंपादकं ᵛसुभरं सुपूर्णं ᵛस्तीर्णम् अस्मदीयैर्ऋत्विग्भिरास्तृतं भव । किमर्थम् । ᵛराये धनाय । ᵛअस्यां ᵛवेदी वेद्याम् ॥ सप्तम्यर्थे प्रगृह्यसंज्ञा । संहितायां यणादेशश्छान्दसः ॥ ᵛघृतेन आज्येन ᵛअक्तम् ᵛइदं स्निग्धं बर्हिः ᵛसीदत । के । हे ᵛवसवः एतन्नामकाः । हे ᵛविश्वे सर्वे ᵛदेवाः । हे ᵛआदित्याः । ᵛयज्ञियासः यज्ञार्हास्ते यूयमिदं बर्हिर्निषीदत अस्मिन् बर्हिषि निषीदतेत्यर्थः ॥

---

१. न-म–नृभिः ।　　२. ख-झ१-ण-न-वा–स्थित्वा.

वि श्रयन्तामुर्विया हूयमाना द्वारो देवीः सुप्रायणा नमोभिः ।
व्यचस्वतीर्वि प्रथन्तामजुर्या वर्णं पुनाना यशसं सुवीरम् ॥

वि । श्रयन्ताम् । उर्विया । हूयमानाः । द्वारः । देवीः । सुप्रऽअयनाः । नमःऽभिः ।
व्यचस्वतीः । वि । प्रथन्ताम् । अजुर्याः । वर्णम् । पुनानाः । यशसम् । सुऽवीरम् ॥ ५ ॥

ᵛद्वारो ᵛदेवीः अग्नेर्द्वाराभिमानिन्यो देव्यः ᵛवि ᵛश्रयन्तां विविच्य श्रयन्तां विवृतापिधाना भवन्तु । कीदृश्यस्ताः । ᵛउर्विया । उर्व्यो महत्यः । ᵛनमोभिः नमस्कारोपेतैः स्तोत्रैः ᵛहूयमानाः । ᵛसुप्रायणाः सुष्ठु प्रकर्षेण गन्तव्याः । ईदृश्यो देव्यो विश्रयन्ताम् । किंच ᵛव्यचस्वतीः व्याप्तिमत्यः ᵛअजुर्याः अहिंस्या अजनना वा ᵛसुवीरं शोभनपुत्राद्युपेतं ᵛयशसं यशोयुक्तं ᵛवर्णं वर्णनीयं रूपविशेषं ᵛपुनानाः यजमानाय शोधयित्र्यः संपादयित्र्यो देव्यः ᵛवि ᵛप्रथन्तां विशेषेण प्रख्याता भवन्तु ॥ ॥२२॥

साध्वपांसि सनता न उक्षिते उषासानक्ता वय्येव रण्विते ।
तन्तुं ततं संवयन्ती समीची यज्ञस्य पेशः सुदुघे पयस्वती ॥ ६ ॥

साधु । अपांसि । सनता । नः । उक्षिते इति । उषसानक्ता । वय्याऽइव । रण्विते इति ।
तन्तुम् । ततम् । संवयन्ती इति सम्ऽवयन्ती । समीची इति सम्ऽईची ।
यज्ञस्य । पेशः । सुदुघे इति सुऽदुघे । पयस्वती इति ॥ ६ ॥

ᵛसाधु साधूनि ᵛनः अस्मदीयानि ᵛअपांसि कर्माण्युद्दिश्य ᵛसनता सनातनेनाविच्छिन्नप्रवृत्तिकेन स्तोत्रादिना ᵛउक्षिते पूजिते । यद्वा । पुराणवाची विभक्त्यन्तः सनच्छब्दोऽस्ति । तस्य प्रथमाद्विवचनस्याकारः । सनातने नित्ये इत्यर्थः । अस्मिन् पक्षे उक्षिते फलस्य सेचयित्र्यौ ॥ कर्तरि निष्ठा ॥ ᵛउषासानक्ता अहोरात्रदेवते ᵛवय्याइव वानकुशले इव ᵛरण्विते शब्दिते स्तुते परस्परं गच्छन्त्यौ वा ᵛततं विस्तृतं ᵛतन्तुं तन्तुस्थानीयं यज्ञावयवं ᵛसंवयन्ती सम्यक् चित्रं सह वा वयन्त्यावुत्पादयित्र्यौ ᵛसमीची सम्यक्प्रवृत्तिके परस्परानुकूले । किमर्थं संवयन्ती । ᵛयज्ञस्य अनुष्ठीयमानस्य ᵛपेशः रूपं निर्मातुमिति शेषः । यज्ञं निर्वर्तयितुं तदवयवानुक्रमेण[1] अनुष्ठापयित्र्यावित्यर्थः । अहोरात्राभ्यां हि यज्ञास्तन्यन्ते । ᵛसुदुघे सुष्ठु फलस्य दोग्ध्र्यौ ᵛपयस्वती उदकवत्यौ । अहोरात्राभ्यां खलु वृष्टिर्जायते । एवं महानुभावे अहोरात्रदेवते अस्मद्यज्ञं निर्वहतामित्यर्थः ॥

दैव्या होतारा प्रथमा विदुष्टर ऋजु यक्षतः समृचा वपुष्टरा ।
देवान्यजन्तावृतुथा समञ्जतो नाभा पृथिव्या अधि सानुषु त्रिषु ॥ ७ ॥

दैव्या । होतारा । प्रथमा । विदुःऽतरा । ऋजु । यक्षतः । सम् । ऋचा । वपुःऽतरा ।
देवान् । यजन्तौ । ऋतुऽथा । सम् । अञ्जतः । नाभा । पृथिव्याः । अधि । सानुषु । त्रिषु ॥७॥

---

१. क-क्ष-त-न-म१-तदवयवान् क्रमेण ।

ᵛदैव्या । दिवि भवो दिव्योऽग्निः । तस्माद्दिव्यादग्नेर्जातौ ᵛहोतारा आह्वातारौ देवानां होमनिष्पादकौ वा अग्नी पार्थिवान्तरिक्ष्यौ ᵛप्रथमा प्रथमं[1] यष्टव्यौ[1] ᵛविदुष्टरा विद्वत्तमौ ᵛवपुष्टरा प्रकृष्टवपुषौ देवौ ᵛऋचा मन्त्रेण ᵛऋजु अविकलं यथा तथा सम्यक् ᵛयक्षतः पूजयतः । ᵛऋतुथा तत्तदतौ तत्र तत्र काले ᵛदेवान् यष्टव्यान् ᵛयजन्तौ[2] देवौ ᵛपृथिव्याः ᵛनाभा नाभावुत्तरवेद्याम् ᵛअधि उपरि ᵛत्रिषु ᵛसानुषु समुच्छ्रितेषु प्रदेशेषु गार्हपत्यादिषु ᵛसमञ्जतः समाङ्क्ताम् ॥ अञ्जेर्लेट्यडागमः ॥

सर॑स्वती सा॒धय॑न्ती॒ धियं॑ न॒ इळा॑ दे॒वी भार॑ती वि॒श्वतू॑र्तिः ।
ति॒स्रो दे॒वीः स्व॒धया॑ ब॒र्हिरेदमच्छि॑द्रं पान्तु श॒रणं॑ नि॒षद्य॑ ॥ ८ ॥

सर॑स्वती । सा॒धय॑न्ती । धिय॑म् । न॒ः । इळा॑ । दे॒वी । भार॑ती । वि॒श्वऽतू॑र्तिः ।
ति॒स्रः । दे॒वीः । स्व॒धया॑ । ब॒र्हिः । आ । इ॒दम् । अच्छि॑द्रम् । पा॒न्तु॒ । श॒रण॑म् । नि॒ऽसद्य॑ ॥ ८ ॥

ᵛनः अस्मदीयां ᵛधियं बुद्धिं यागं वा ᵛसाधयन्ती निर्वर्तयन्ती ᵛसरस्वती[3] एतन्नामिकेयं देवी तथा ᵛइळा ᵛदेवी ᵛभारती च[3] ᵛविश्वतूर्तिः विश्वानि तूर्णानि यस्याः सा तादृशी सर्वविषयगता वाक् । एतदुभयविशेषणम् । ᵛतिस्रो ᵛदेवीः एतास्तिस्रो देव्यः ᵛस्वधया अस्मद्दत्तहविषा निमित्तेन ᵛइदं ᵛबर्हिः यज्ञम् ᵛअच्छिद्रं यथा तथा ᵛपान्तु पालयन्तु । किं कृत्वा । ᵛशरणं यागगृहम् ᵛआ ᵛनिषद्य आश्रित्य । यद्वा । स्वधया इदं बर्हिः इमं यज्ञमागत्यास्मदीयं शरणं गृहं निषद्याच्छिद्रं यथा तथा पान्तु ॥

अथ 'पिशङ्गरूपः' इति नवमी त्वाष्ट्रे पशौ पुरोडाशस्य याज्या । 'पिशङ्गरूपः सुभरो वयोधाः प्रथमभाजं यशसं वयोधाम्' ( आश्व. श्रौ. ३. ८ ) इति सूत्रितत्वात् । पाठस्तु[4]—

पि॒शङ्ग॑रूपः सु॒भरो॑ वयो॒धाः श्रु॒ष्टी वी॒रो जा॑यते दे॒वका॑मः ।
प्र॒जां त्वष्टा॒ वि ष्य॑तु॒ नाभि॑म॒स्मे अथा॑ दे॒वाना॒मप्ये॑तु॒ पाथः॑ ॥ ९ ॥

पि॒शङ्ग॑ऽरूपः । सु॒ऽभरः॑ । व॒यः॒ऽधाः । श्रु॒ष्टी । वी॒रः । जा॒य॒ते॒ । दे॒वऽका॑मः ।
प्र॒ऽजाम् । त्वष्टा॑ । वि । स्य॒तु॒ । नाभि॑म् । अ॒स्मे इति॑ । अथ॑ । दे॒वाना॑म् । अपि॑ । ए॒तु॒ । पाथः॑ ॥ ९ ॥

ᵛपिशङ्गरूपः सुवर्णवर्णो नानारूपो वा ᵛसुभरः शोभनयज्ञः शोभनभरणो वा ᵛवयोधाः वयसोऽन्नस्य धारयिता दाता वा ᵛश्रुष्टी क्षिप्रगुणः ᵛवीरः विविधमीरयिता ᵛदेवकामः देवाः काम्यन्ते येन तादृशः[5] पुत्रः ᵛजायते जायतामुत्पद्यतां त्वष्टुरनुग्रहात् । स च ᵛत्वष्टा एतन्नामको देवः ᵛअस्मे अस्मभ्यं ᵛनाभिं कुलस्य बन्धिकां ᵛप्रजां पुत्रादिरूपां ᵛवि ᵛष्यतु विमुञ्चतु वितरत्वित्यर्थः । ᵛअथ अपि च ᵛदेवानां संबन्धि ᵛपाथः अन्नम् ᵛअपि अस्मान् ᵛएतु गच्छतु । अपिः क्रियया वा संबध्यते । गच्छत्वित्यर्थः ॥

---

१. म-व—प्रथमयष्टव्यौ । २. क-झ-झ१-म—यजन्तौ पूजयन्तौ । ३. ख-ग-च-ण-थ-न-व—सरस्वती एतन्नामिका देवी भारती च । ४. त—नवमीपाठस्तु । ५. झ१-ण-त-थ-न-व—तादृशः । ईदृशः ।

वनस्पतिरवसृजन्नुप स्थादग्निर्हविः सूदयाति प्र धीभिः ।
त्रिधा समक्तं नयतु प्रजानन्देवेभ्यो दैव्यः शमितोप हव्यम् ॥ १० ॥

वनस्पतिः । अवऽसृजन् । उप । स्थात् । अग्निः । हविः । सूदयाति । प्र । धीभिः ।
त्रिधा । समऽअक्तम् । नयतु । प्रऽजानन् । देवेभ्यः । दैव्यः । शमिता । उप । हव्यम् ॥१०॥

वनस्पतिः यूपाभिमान्येतन्नामकोऽग्निः अवसृजन् अस्मदीयं कर्मानुजानन् उप अस्मत्समीपे स्थात् तिष्ठतु । अग्निः पाकाधारोऽग्निश्च हविः पशुरूपं धीभिः कर्मभिः विशेषैः पाकसाधनैः प्रकर्षेण सूदयाति क्षारयति । अपाकाधिकपाकादिराहित्येन[1] हविः पचतीत्यर्थः । किंच दैव्यः देवसंबन्ध्याहुत्यधिकरणभूतोऽग्निः शमिता हविषः संस्कर्ता । यद्वा । दैव्यः शमितैतन्नामकोऽग्निः । 'अग्निर्वै देवानां शमिता' इति श्रूयते । त्रिधा त्रिप्रकारम् उपस्तरणावदानाभिघारणैः समक्तं सम्यक् सिक्तं हव्यं हविः प्रजानन् विद्वान् नयनप्रकाराभिज्ञः सन् देवेभ्यः उप नयतु समीपं प्रापयतु ॥

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ ११ ॥

घृतम् । मिमिक्षे । घृतम् । अस्य । योनिः । घृते । श्रितः । घृतम् । ऊँ इति । अस्य । धाम ।
अनुऽस्वधम् । आ । वह । मादयस्व । स्वाहाऽकृतम् । वृषभ । वक्षि । हव्यम् ॥ ११ ॥

अस्य अग्नेः घृतम् आज्यं मिमिक्षे सिञ्चामि । यतः अस्य घृतं योनिः कारणम् । उत्पन्नोऽपि घृते श्रितः आश्रितः । अस्य अग्नेः घृतम् एव धाम तेजः । घृतेन हि अयं दीप्यते । इदानीं संबोध्योच्यते । हे अग्ने वृषभ फलस्य वर्षितस्त्वम् अनुष्वधं प्रतिहविः सर्वेष्वपि हविःषु दीयमानेषु आ वह देवान् । आहूय तान् मादयस्व प्रीणय । ततस्त्वं स्वाहाकृतं स्वाहाकारेण दत्तं हव्यं[2] वक्षि वह ॥ ॥ २३ ॥

'हुवे वः' इति नवर्चं चतुर्थं सूक्तम् । भार्गवः सोमाहुतिनामक ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः । 'हुवे नव सोमाहुतिर्भार्गवो ह' इत्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसीदम् । सूत्रितं च–'हुवे वः सुद्योत्मानं नि होता होतृषदन इति सूक्ते' ( आश्व. श्रौ. ४. १३ ) इति ॥

हुवे वः सुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम् ।
मित्रइव यो दिधिषाय्यो भूद्देव आदेवे जने जातवेदाः ॥ १ ॥

हुवे । वः । सुऽद्योत्मानम् । सुऽवृक्तिम् । विशाम् । अग्निम् । अतिथिम् । सुऽप्रयसम् ।
मित्रःऽइव । यः । दिधिषाय्यः । भूत् । देवः । आऽदेवे । जने । जातऽवेदाः ॥ १ ॥

---

१. ख-थ-म–अपाकादिराहित्येन । २. क-ख-च-झ-झ१-ण-ण१-त-थ-न-म-व–'हव्यं' नास्ति ।

हे यजमानाः ᵛवः युष्मदर्थम् ᵛअग्निं ᵛहुवे आह्वयामि । कीदृशं तम् । ᵛसुद्योत्मानं सुष्टु द्योतमानं ᵛसुवृक्तिं सुवर्जितं पापैः शोभनस्तुतिं वा । ᵛविशां यजमानानाम् ᵛअतिथिम् अतिथिवत्सदा पूज्यं ᵛसुप्रयसं शोभनहविर्लक्षणान्नम् । किंच ᵛजातवेदाः जातानां वेदिता ᵛयः ᵛदेवः अग्निः ᵛमित्रइव सखेव आदित्य इव वा ᵛदिधिषाय्यः धारयिता ᵛभूत् भवति । कुत्रेति उच्यते । ᵛआदेवे देवपर्यन्ते ᵛजने मनुष्यप्रभृतिदेवपर्यन्तेषु । तेषां धारकोऽभवदित्यर्थः ॥

इ॒मं वि॒धन्तो॑ अ॒पां स॒धस्थे॑ द्वि॒ताद॑धु॒र्भृग॑वो वि॒क्ष्वा॒३॑योः ।
ए॒ष विश्वा॑न्य॒भ्य॑स्तु॒ भूमा॑ दे॒वाना॑म॒ग्निर॑र॒तिर्जी॒राश्वः॑ ॥ २ ॥

इ॒मम् । वि॒धन्तः॑ । अ॒पाम् । स॒धऽस्थे॑ । द्वि॒ता । अ॒द॒धुः॒ । भृग॑वः । वि॒क्षु । आ॒योः ।
ए॒षः । विश्वा॑नि । अ॒भि । अ॒स्तु॒ । भूम॑ । दे॒वाना॑म् । अ॒ग्निः । अ॒र॒तिः । जी॒रऽअ॑श्वः ॥ २ ॥

ᵛइमम् अग्निं ᵛविधन्तः परिचरन्तः ᵛभृगवः अस्मत्पूर्वे महर्षयः ᵛअपां ᵛसधस्थे सहस्थाने अन्तरिक्षे ᵛआयोः मनुष्यस्य यजमानस्य स्वभूतासु ᵛविक्षु प्रजास्वृत्विक्षु तेषां मध्ये च ᵛद्विता द्वयोः[1] स्थानात् ᵛअदधुः अधारयन्[1] ॥ दधातेर्लिङि रूपम् ॥ ᵛएषः ᵛअग्निः ᵛभूम भूम्ना अत्यर्थं ᵛविश्वानि भूतजातानि अस्मद्विरोधीनि ᵛअभ्यस्तु अभिभवतु । स कीदृशः । ᵛदेवानाम् ᵛअरतिः ईश्वरः । तेषां मध्ये शीघ्रम् अरणशीलो वा अस्मद्यागं प्रति । तथा ᵛजीराश्वः क्षिप्राश्वः ॥

अ॒ग्निं दे॒वासो॒ मानु॑षीषु वि॒क्षु प्रि॒यं धुः॑ क्षे॒ष्यन्तो॒ न मि॒त्रम् ।
स दी॑दयदु॒श॒तीरूर्म्या॒ आ द॒क्षाय्यो॒ यो दास्व॑ते॒ दम॒ आ ॥ ३ ॥

अ॒ग्निम् । दे॒वासः॑ । मानु॑षीषु । वि॒क्षु । प्रि॒यम् । धु॒रिति॑ । क्षे॒ष्यन्तः॑ । न । मि॒त्रम् ।
सः॒ । दी॒द॒य॒त् । उ॒श॒तीः । ऊर्म्याः॑ । आ । द॒क्षाय्यः॑ । यः । दास्व॑ते । दमे॑ । आ ॥ ३ ॥

ᵛदेवासः देवाः ᵛक्षेष्यन्तः स्वर्गं प्रति गच्छन्तः सन्तः पूर्वं ᵛमानुषीषु मनुष्यसंबन्धिनीषु ᵛविक्षु प्रजासु ᵛप्रियं देवानां प्रीणयितारम् अग्निं ᵛधुः अधुः स्थापितवन्तः । तत्र दृष्टान्तः । ᵛक्षेष्यन्तः ᵛमित्रं ᵛन । रायं प्रति गच्छन्तो नराः मित्रं प्रियं सखायं स्वगृहरक्षार्थं स्थापयन्ति तद्वत् । ᵛयः एवं देवैः स्थापितो योऽग्निः ᵛदास्वते हविर्दत्तवते यजमानाय तदर्थं ᵛदमे तदीये यागगृहे ᵛआ आहितः स्थापितः ᵛदक्षाय्यः समर्धयिता दाता वा ᵛसः अग्निः ᵛउशतीः कामयमानाः ᵛऊर्म्याः रात्रीः सर्वासु रात्रिषु ᵛआ ᵛदीदयत् दीप्यते सर्वतः । सर्वरात्रीरादीपयति वा ॥

---

१. क-म—द्वयोः स्थानयोस्तायः तायमानम् । छान्दसं रूपम् । यद्वा द्विता द्वित्वेन वैद्युतात्मनान्तरिक्षं यागार्थमृत्विक्षु वा अधारयन्; झ१—क्षित्यन्तरिक्षयोः स्थानयोस्तु अस्तायमानम् । छान्दसं रूपम् । यद्वा द्विता द्वित्वेन वैद्युतात्मनान्तरिक्षे यागार्थमृत्विक्षु वादधुः अधारयन् ।

अस्य रण्वा स्वस्येव पुष्टिः संदृष्टिरस्य हियानस्य दक्षोः ।
वि यो भरिभ्रदोषधीषु जिह्वामत्यो न रथ्यो दोधवीति वारान् ॥ ४ ॥

अस्य । रण्वा । स्वस्यऽइव । पुष्टिः । सम्ऽदृष्टिः । अस्य । हियानस्य । धक्षोः ।
वि । यः । भरिभ्रत् । ओषधीषु । जिह्वाम् । अत्यः । न । रथ्यः । दोधवीति । वारान् ॥४॥

vअस्य अग्नेः पुष्टिः शरीरवृद्धिः vरण्वा रमणीया शब्दयुक्ता वा । तत्र दृष्टान्तः । vस्वस्य vपुष्टिः vइव । यथा लोके स्वकीया पुष्टिः स्वस्मै रमणीया भवति तद्वत् । यद्वा[1] अस्याग्नेः संबन्धिनी पुष्टिः यजमानविषया रण्वा स्वस्याग्नेः पुष्टिर्यथा रण्वा तद्वत्[1] । किंच vहियानस्य समृद्धिं गच्छतो व्याप्नुवतः vधक्षोः[2] काष्ठान् दिधक्षोर्दग्धुमिच्छोः अस्य अग्नेः vसंदृष्टिः संदर्शनाविर्भावोऽपि रण्वा । vयः अग्निः vओषधीषु काष्ठेषु vजिह्वां ज्वालाम् । जात्येकवचनम् । ज्वालाः vवि vभरिभ्रत् अत्यर्थं विहरति । कम्पयतीत्यर्थः ॥ हरतेर्यङ्लुगन्तत्वेन दाधर्त्यादिषु ( पा. सू. ७.४.६५ ) निपातितात्[3] लेट्यडागमः । यद्योगादनिघातः॥ तत्र दृष्टान्तः । vरथ्यः रथार्हः vअत्यो vन वाजी यथा vवारान् दंशवारणसाधनान् वालान् vदोधवीति कम्पयति तद्वत् । योऽग्निर्ज्वालाः कम्पयति अस्याग्नेः पुष्टी रण्वेति ॥

आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम् ।
स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत् ॥ ५ ॥

आ । यत् । मे । अभ्वम् । वनदः । पनन्त । उशिक्ऽभ्यः । न । अमिमीत । वर्णम् ।
सः । चित्रेण । चिकिते । रम्ऽसु । भासा । जुजुर्वान् । यः । मुहुः । आ । युवा । भूत् ॥ ५ ॥

vयत्[4] यस्य vअभ्वं महत्त्वं vमे मम संबन्धिनः vवनदः वनन्तः संभक्तारः । यद्वा वनदोऽवनदो भृशं शब्दयन्तः[5] स्तोतारः ॥ अवशब्दो भृशार्थवाची। तत्पूर्वान्नदेः क्विप् । 'अवाप्योः' इत्यकारलोपः ॥ vआ vपनन्त समन्तात् स्तुवन्ति । vसः अग्निः vउशिग्भ्यः अस्मदीयं रूपं कामयमानेभ्य ऋत्विग्भ्यः vवर्णं स्वसदृशं[6] रूपं vनामिमीत । नशब्दश्चार्थे । निर्मिमीते च । स च vरंसु रमणीयेष्वाज्यादिहविःषु निमित्तेषु vचित्रेण vभासा हिरण्यकनकादिनानावर्णया दीप्त्या vचिकिते विज्ञायते । किंच vयः अग्निः vजुजुर्वान् जीर्णः सन् ज्वालोपशमे स एव vमुहुः पुनः पुनः vआ vयुवा सर्वतो मिश्रयिता तरुणो वा आ vभूत् आभवति पुनराज्यादिसंयोगात् ॥ ॥ २४ ॥

---

१. त–यद्वास्याग्नेः संबन्धिनी तद्वत् । यद्वा अस्याग्नेः संबन्धिनी पुष्टिर्यजमानविषया रण्वा तस्याग्नेः पुष्टिर्यथा रण्वा तद्वत्; ख-ग–यद्वा अस्याग्नेः संबन्धिनी पुष्टिर्यथा यजमानविषया रण्वा तद्वत् । २. ख-च-झ१-ध–दक्षोः । ३. व–निपातितः । ४. क-ख-च-झ-ण-ण१-त-ध-न-म-व–यतः । ५. ख-ग-च-ण१–शब्दवन्तः । ६. त–सदृशम् ।

आ यो वना॑ ता॒तृ॒षा॒णो न भाति॒ वार्ण प॒था रथ्ये॑व स्वानीत् ।
कृ॒ष्णाध्वा॒ तपू॑ र॒ण्वश्चि॑केत॒ द्यौरि॑व॒ स्मय॑मानो॒ नभो॑भिः ॥ ६ ॥

आ । यः । वना॑ । त॒तृ॒षा॒णः । न । भाति॑ । वाः । न । प॒था । रथ्या॑ऽइव । स्वा॒नी॒त् ।
कृ॒ष्णऽअ॑ध्वा । तपु॑ः । र॒ण्वः । चि॒के॒त॒ । द्यौःऽइ॑व । स्मय॑मानः । नभः॑ऽभिः ॥ ६ ॥

ᵛयः अग्निः ᵛवना वनानि वृक्षसमूहान् ᵛततृषाणो ᵛन तृषित[1] इव[1] । त्वरमाण इत्यर्थः । ᵛआ ᵛभाति आभासयति । दहतीत्यर्थः । यद्वा वना वने आभाति । किंच ᵛवार्ण उदकमिव ᵛपथा प्रवणेन मार्गेण गच्छति तद्वत् इतस्ततो गच्छति । ᵛरथ्येव[2] रथस्य वोढाश्व इव ᵛस्वानीत् शब्दयति । यद्वा रथशब्दात् सोऽर्थ्यादेशः । यथा रथो युद्धमार्गेण गच्छन् स्वनति तद्वत् । किंच ᵛकृष्णाध्वा कृष्णवर्त्मा ᵛतपुः तापकः ᵛरण्वः रमणीयः एवंभूतः सन् ᵛचिकेत ज्ञायते । प्रकाशत इत्यर्थः । क इव । ᵛनभोभिः नक्षत्रैः ᵛस्मयमानः प्रकाशमानः ᵛद्यौरिव द्युलोक इव । यद्वा नभोभिरन्तरिक्षप्रदेशविशेषैः स्मयमानः शोभमानो द्यौरादित्य इव । नीलवर्णान्तरिक्षचार्यादित्यो यथा ज्ञायते तद्वत् स्वसंचारेण कृष्णीभूते मार्गे ज्ञायते । प्रकाशत इत्यर्थः ॥

स यो व्यस्था॑द॒भि दक्ष॑दु॒र्वीं प॒शुर्नैति॑ स्व॒युरगो॑पाः
अ॒ग्निः शो॒चिष्माँ॑ अत॒सान्यु॒ष्णन्कृ॒ष्णव्य॑थिरस्वदय॒न्न भूम॑ ॥ ७ ॥

सः । यः । वि । अस्था॑त् । अ॒भि । धक्ष॑त् । उ॒र्वीम् । प॒शुः । न । ए॒ति॒ । स्व॒ऽयुः । अगो॑पाः ।
अ॒ग्निः । शो॒चिष्मा॑न् । अ॒त॒सानि॑ । उ॒ष्णन् । कृ॒ष्णऽव्य॑थिः । अ॒स्व॒द॒य॒त् । न । भूम॑ ॥ ७ ॥

ᵛयः अग्निः ᵛव्यस्थात् विविधं तिष्ठति । व्याप्नोति विश्वम् । तथा योऽग्निः ᵛउर्वीं विस्तृतां पृथिवीं सर्वाम् । यश्च ᵛअभि ᵛदक्षत् आभिमुख्येन प्रवर्धमानो भवति ॥ उभे अपि यच्छब्दयोगान्न निहन्येते ॥ ᵛसः ᵛअग्निः ᵛपशुर्न पशुरिव । यथा जातः[4] पशुः स्वच्छन्देन चरति तथा ᵛस्वयुः स्वयमेव गच्छन् ᵛअगोपाः गोपरहितः[5] । नियामकवर्जित इत्यर्थः । ᵛएति गच्छति । किं कुर्वन् । ᵛशोचिष्मान् प्रकृष्टदीप्तिः ᵛकृष्णव्यथिः कृष्णवर्णं प्राप्ता दग्धा व्यथाकराः कण्टकादयो येन तादृशः सन् ᵛभूम अत्यधिकम् ᵛअस्वदयन्न आस्वादयतीव वृक्षगतान् रसान् । ᵛअतसानि संततानि नीरसानि वा तरुगुल्मादीनि ᵛउष्णन् दहन्नेति ॥

नू ते॒ पूर्व॒स्याव॑सो॒ अधी॑तौ तृ॒तीये॑ वि॒दथे॒ मन्म॑ शंसि ।
अ॒स्मे अ॑ग्ने सं॒यद्वी॑रं बृ॒हन्तं॑ क्षु॒मन्तं॒ वाजं॑ स्वप॒त्यं र॒यिं दाः ॥ ८ ॥

नु । ते॒ । पूर्व॑स्य । अव॑सः । अधि॑ऽइतौ । तृ॒तीये॑ । वि॒दथे॑ । मन्म॑ । शं॒सि॒ ।
अ॒स्मे इति॑ । अ॒ग्ने॒ । सं॒यत्ऽवी॑रम् । बृ॒हन्त॑म् । क्षु॒ऽमन्त॑म् । वाज॑म् । सु॒ऽअ॒प॒त्यम् । र॒यिम् । दा॒ः ॥ ८ ॥

---

१. क-झ१-तृषित इव बुभुक्षित इव । २. झ१-तथा रथ्येव । ३. ख-ग-च-ण१-फ-शोभमानः । ४. झ१-जातमात्रः । ५. झ१-गोपविरहितः ।

हे अग्ने ते तव संबन्धिनः पूर्वस्य पूर्वं यागसमये कृतस्य अवसः अभिमततर्पणस्य अधीतौ स्मरणे सति तत्स्मृत्या नु अद्यापि तृतीये विदथे यागे तृतीयसवने । यद्वा प्रातरनुवाकसंबन्धिनाम् आग्नेयोषस्याश्विनानां मध्येऽन्यतमे तृतीये क्रतौ मन्म मननीयं स्तोत्रं शंसि अशंसि । शस्यतेऽस्माभिः। हे अग्ने त्वं च अस्मे अस्मभ्यं संयद्वीरं संयतो वीरा यस्मिन् तादृशं बृहन्तं महान्तं क्षुमन्तं शब्दवन्तं कीर्तिमन्तं वाजम् उक्तलक्षणमन्नं स्वपत्यं रयिं च दाः देहि ॥

त्वया यथा गृत्समदासो अग्ने गुहा वन्वन्त उपराँ अभि ष्युः ।
सुवीरासो अभिमातिषाहः स्मत्सूरिभ्यो गृणते तद्वयो धाः ॥ ९ ॥

त्वया । यथा । गृत्सऽमदासः । अग्ने । गुहा । वन्वन्तः । उपरान् । अभि । स्युरिति स्युः ।
सुऽवीरासः । अभिमातिऽसहः । स्मत् । सूरिऽभ्यः । गृणते । तत् । वयः । धाः ॥ ९ ॥

हे अग्ने त्वया रक्षकेण वन्वन्तः छान्दसं[1] भजन्तो[1] गृत्समदा ऋषयः । आत्मनि पारोक्ष्येण[2] वचनम् । यथा गुहा गुहायां वर्तमानान् उपरान् उपरमणसाधनान् उपरि उत्कृष्टे वर्तमानान्वा धनविशेषान् अभि स्युः अभिभवेयुः । स्वाधीनान् कुर्युः । यद्वा गूढानुपरान् उपरेऽधिकत्वेन वर्तमानान् पापान् अभिस्युः अभिभवेयुः । तथा कुर्वित्यर्थः । कीदृशाः । सुवीरासः शोभनपुत्राद्युपेताः अभिमातिसहः वैरिणां पापादीनां सोढारः । किंच सूरिभ्यः मेधाविभ्यो यजमानेभ्यो गृणते ॥ व्यत्ययेनैकवचनम् ॥ शब्दयद्भ्यः स्तोतृभ्यः । यद्वा सूरिभ्यो यजमानेभ्यो गृणते स्तोत्रे च स्मत् सुमत् अतिप्रभूतं तत् तादृशं प्रसिद्धं वयः अन्नं धाः धेहि ॥ ॥ २५ ॥

'होताजनिष्ट' इत्यष्टर्चं पञ्चमं सूक्तं सोमाहुतेरार्षमाग्नेयमानुष्टुभम् । 'होताष्टावानुष्टुभम्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ अस्य विनियोगः । सूत्रितं च–' अग्नायो होताजनिष्ट ' ( आश्व. श्रौ. ४. १३ ) इति । चतुर्विंशेऽहन्यपीदमेवाज्यम् । ' चतुर्विंशे होताजनिष्टेत्याज्यम् ' ( आश्व. श्रौ. ७. २ ) इति । आभिप्लविके द्वितीयेऽहनीदमेवाज्यम् । 'द्वितीयस्य चतुर्विंशेनाज्यम् ' ( आश्व. श्रौ. ७. ६ ) इत्यतिदिष्टत्वात् ॥

होताजनिष्ट चेतनः पिता पितृभ्य ऊतये ।
प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमम् ॥ १ ॥

होता । अजनिष्ट । चेतनः । पिता । पितृऽभ्यः । ऊतये ।
प्रऽयक्षन् । जेन्यम् । वसु । शकेम । वाजिनः । यमम् ॥ १ ॥

होता होमनिष्पादकः चेतनः चेतयितास्मदनुष्ठितस्य पिता पालकोऽस्मद्यज्ञस्य ईदृशोऽग्निः अजनिष्ट उत्पन्नः । किमर्थम् । पितृभ्यः पालकेभ्यो यजमानेभ्यः ॥ षष्ठ्यर्थे चतुर्थी ॥ तेषाम् ऊतये रक्षणाय च । वयं च वाजिनः हविर्लक्षणान्नवन्तः सन्तः प्रयक्षं प्रकर्षेण पूज्यं जेन्यं जेतव्यं यमं यमयितव्यं[3] वसु धनं शकेम । शक्ता भूयास्म लब्धुमिति शेषः । यद्वा वाजिनोऽन्नस्य यमं यमनं कर्तुं शकेम । प्रयक्षं जेन्यं वसु धनमित्युपमानम् । उक्तलक्षणं धनमिव । तद्यथावरोद्धुं शक्नुमस्तद्वत् ॥

---

१. झ१-म–' छान्दसं भजन्तः ' नास्ति । २. झ-झ१-ण-म-व–परोक्षेण । ३. न-त–यमितव्यम्; क-ख-च-ण१-त-थ-व–यमेतव्यम् ।

आ यस्मिन्त्सप्त रश्मयस्तता यज्ञस्य नेतरि ।
मनुष्वद्दैव्यमष्टमं पोता विश्वं तदिन्वति ॥ २ ॥

आ । यस्मिन् । सप्त । रश्मयः । तताः । यज्ञस्य । नेतरि ।
मनुष्वत् । दैव्यम् । अष्टमम् । पोता । विश्वम् । तत् । इन्वति ॥ २ ॥

यज्ञस्य नेतरि यागस्य निर्वाहके यस्मिन् अग्नौ सप्त रश्मयः सप्तसंख्याका रश्मिवद्व्याप्ता होत्रकाः आ तताः स्वस्वकर्मभिः सर्वतो व्याप्ता भवन्ति। सः पोता पावको देवानां पोत्राख्य ऋत्विग्रूपो वा अग्निः मनुष्वत् मनुष्यपोतृवत् दैव्यम्। देवो यज्ञः। तत्संबन्धि अष्टमम् अष्टर्त्विक्संबन्धि तत् विश्वं कर्तव्यजातं सप्तहोत्रकैः[1] सह स्वयमष्टमः सन् इन्वति व्याप्नोति। यद्वा तदित्यस्य लिङ्गव्यत्ययः। स पोतेति संबन्धः। सप्तहोत्रकैः सहाष्टमो भूत्वा तद्यज्ञं निर्वहतीत्यर्थः ॥

दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् ।
परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥ ३ ॥

दधन्वे । वा । यत् । ईम् । अनु । वोचत् । ब्रह्माणि । वेः । ऊँ इति । तत् ।
परि । विश्वानि । काव्या । नेमिः । चक्रम्ऽइव । अभवत् ॥ ३ ॥

पूर्वस्मिन् मन्त्रे होत्रादिवत् स्वयमपि[2] यज्ञं निर्वहतीत्युक्तम्। अत्र तु सर्वं तत्तदात्मना स्थित्वा स्वयमेव निर्वहतीत्याह। वा अथवा ईम् एनं यज्ञम् अनु लक्षीकृत्य यत् हविरादिकं दधन्वे धारयति अध्वर्य्वादिरूपः। यानि ब्रह्माणि शस्त्रादीनि अनु वोचत् अनुवक्ति होत्रादिरूपः। अत्र वानु इत्येतद्योज्यम्। तत् सर्वं वेरु वेरेव। कामयते जानाति वा स्वयमनुष्ठातुम्। अयमग्निः विश्वानि सर्वाणि काव्या[3] काव्यानि[3]। कवयो मेधाविन ऋत्विजः। तत्संबन्धीनि कर्माणि परि अभवत् परिभवति। स्वायत्तानि करोति। व्याप्नोतीत्यर्थः। व्याप्तौ दृष्टान्तः। नेमिः बहिर्वेष्टनवलयः चक्रं रथाङ्गं यथा कार्त्स्न्येन व्याप्नोति तद्वत् ॥

साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि ।
विद्वाँ अस्य व्रता ध्रुवा वयाइवानु रोहते ॥ ४ ॥

साकम् । हि । शुचिना । शुचिः । प्रऽशास्ता । क्रतुना । अजनि ।
विद्वान् । अस्य । व्रता । ध्रुवा । वयाःऽइव । अनु । रोहते ॥ ४ ॥

शुचिः स्वयं शोधकः प्रशास्ता देवानाम् एतन्नामक ऋत्विक् प्रशासिता वा यज्ञविघ्नानां शुचिना क्रतुना शोधकेन अग्निहोत्रादिकर्मणा साकं हि सहैव अजनि उत्पन्नः। जातमात्र एव

---

१. क-ख-च-झ-झ-ण-ण१-न-म-व—सप्तहोत्रैः। २. म—अयमपि। ३. क-झ-ण१-ध-व—काव्यानि।

शुद्धः सर्वस्य प्रशास्ता च सन् अग्निहोत्रादिनिर्वोढाभवदित्यर्थः। ᵛअस्य अग्नेः ᵛध्रुवा ध्रुवाणि फलपर्यवसायीनि व्रतानि कर्माणि ᵛविद्वान् जानन् यजमानः ᵛवयाइव विस्तृताः शाखा इव ᵛअनु ᵛरोहते क्रमेणानुतिष्ठति ॥

ता अस्य वर्णमायुवो नेष्टुः सचन्त धेनवः ।
कुवित्तिसृभ्य आ वरं स्वसारो या इदं ययुः ॥ ५ ॥

ताः । अस्य । वर्णम् । आयुवः । नेष्टुः । सचन्त । धेनवः ।
कुवित् । तिसृऽभ्यः । आ । वरम् । स्वसारः । याः । इदम् । ययुः ॥ ५ ॥

ᵛयाः वक्ष्यमाणलक्षणा अङ्गुलयः[1] ᵛइदम् अनुष्ठीयमानं कर्म ᵛययुः प्राप्नुवन्ति । अनुतिष्ठन्ति । ᵛताः ᵛआयुवः गन्त्र्यो व्याप्ताः ᵛधेनवः प्रीणयित्र्यः ᵛस्वसारः स्वयं सारिण्योऽङ्गुलयः ᵛनेष्टुः हविर्याचितुर्भक्षयितुः शोधयितुः[2] पोषयितुः[2] नेतुर्वा ᵛअस्य अग्नेः । यद्वा एतन्नामकऋत्विग्रूपस्य[3] । ᵛतिसृभ्य ᵛआ गार्हपत्यादिमूर्तीनामपि ᵛवरं ᵛवर्णं ᵛकुवित् बहुकृत्वः ᵛसचन्त सेवन्ते । परिचरन्ति ॥

यदी मातुरुप स्वसा घृतं भरन्त्यस्थित ।
तासामध्वर्युरागतौ यवो वृष्टीव मोदते ॥ ६ ॥

यदि । मातुः । उप । स्वसा । घृतम् । भरन्ती । अस्थित ।
तासाम् । अध्वर्युः । आऽगतौ । यवः । वृष्टीऽइव । मोदते ॥ ६ ॥

ᵛयदि यदा ᵛमातुः सर्वस्य निर्मातुर्भूम्या वेदिलक्षणायाः ᵛस्वसा स्वसृस्थानीया जुहूः ᵛघृतं ᵛभरन्ती सती ᵛउप ᵛअस्थित उपतिष्ठेदग्निम्[4] । एकवचनमविवक्षितम् । जुहूपभृद्ध्रुवा घृतं भरन्त्यस्तिष्ठन्तीत्यर्थः । तदा ᵛतासां जुह्वादीनाम् ᵛआगतौ यागाय प्राप्तौ सत्याम् ᵛअध्वर्युः एतन्नामक ऋत्विग्रूपोऽध्वरं कामयमानो वा अयमग्निः ᵛमोदते हृष्यति । ᵛयवो ᵛवृष्टीव वृष्ट्या यथा मोदते तद्वत् ॥

स्वः स्वाय धायसे कृणुतामृत्विगृत्विजम् ।
स्तोमं यज्ञं चादरं वनेमा ररिमा वयम् ॥ ७ ॥

स्वः । स्वाय । धायसे । कृणुताम् । ऋत्विक् । ऋत्विजम् ।
स्तोमम् । यज्ञम् । च । आत् । अरम् । वनेम । ररिम । वयम् ॥ ७ ॥

---

१. थ-व–या अङ्गुलयः । २. थ–शोधयितुः; म–पोषयितुः । ३. क-झ-झ१-म–'°ऋत्विग्रूपस्य' इत्यस्यानन्तरं 'तिसृभ्यो लोकत्रयवर्तिश्रुतिभ्यो वे(व)रमधिकं वर्णं वर्णनीयं रूपम् । यद्वा । तिसृभ्योऽपि श्रुतिभ्योऽधिकाम् । यद्वा । षष्ठ्यर्थे चतुर्थी' इत्यधिकम् । ४. झ१–उपतिष्ठतेऽग्निम् ।

अयमग्निः ᵛस्वः स्वयमेव ᵛस्वाय स्वकीयाय ᵛधायसे कर्मणे हविषां धारणाय वा ᵛऋत्विक् 'होताजनिष्ट' इत्यादिनोक्तलक्षणो होतृपोतृप्रशास्त्राद्यृत्विग्रूपः सन् ᵛऋत्विजम् आर्त्विज्यम् ॥ भावप्रधानोऽयं निर्देशः॥ देवर्त्विग्रूपः सन् ऋत्विजं मानुषमार्त्विज्यं ᵛकृणुताम् करोतु । ᵛवयं च तदनुग्रहात् ᵛआत् अनन्तरमेव ᵛस्तोमं स्तोत्रं ᵛयज्ञं ᵛच तदाश्रयं यागमपि ᵛअरम् अलमत्यर्थं ᵛवनेम संभजेमहि। ᵛररिम ददेमहि च हविः । यद्वा स्तोमं वनेम यज्ञं यज्ञयोग्यं हविः ररिम ॥

यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः ।
अयमग्ने त्वे अपि यं यज्ञं चकृमा वयम् ॥ ८ ॥

यथा । विद्वान् । अरम् । करत् । विश्वेभ्यः । यजतेभ्यः ।
अयम् । अग्ने । त्वे इति । अपि । यम् । यज्ञम् । चकृम । वयम् ॥ ८ ॥

हे ᵛअग्ने ᵛविद्वान् त्वन्माहात्म्याभिज्ञः प्रयोगज्ञो वा यजमानः ᵛयथा ᵛविश्वेभ्यो ᵛयजतेभ्यः सर्वेभ्यो यजनीयेभ्यो देवेभ्यः ᵛअरं पर्याप्तं ᵛकरत् कुर्यात् तथा त्वमनुगृहाणेत्यर्थः । ᵛवयम् अपि ᵛयं ᵛयज्ञं यागविशेषं ᵛचकृम कुर्महे स यागः ᵛत्वे ᵛअपि। अपिरेवार्थे। तवैव त्वत्प्रीत्यर्थः । तमेव तस्मात्त्वं सर्वदेवार्थं[1] यागं[1] तत्तदृत्विग्रूपः सन् निर्वहेत्यर्थः ॥ ॥ २६ ॥

'इमां मे' इत्यष्टर्चं षष्ठं सूक्तं सोमाहुत्यार्षमाग्नेयं गायत्रम्। 'इमां मे गायत्रं हि' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दस्यस्य विनियोगः। सूत्रितं च – 'इमां मे अग्ने समिधमिमामिति त्रयाणामुत्तमामुद्धरेत्' (आश्व. श्रौ. ४.१३) इति। अपराह्णिक्यामुपसदि 'इमां मे अग्ने समिधम्' इति तिस्र ऋचस्त्रिरभ्यस्ता नव सामिधेन्यः कृत्वा विनियोक्तव्याः। 'अथोपसत्' इति खण्डे सूत्रितम्– 'इमां मे अग्ने समिधमिमामिति तु सामिधेन्यः' (आश्व. श्रौ. ४. ८) इति॥

इमां मे अग्ने समिधमिमामुपसदं वनेः । इमा उ षु श्रुधी गिरः ॥ १ ॥

•इमाम् । मे । अग्ने । सम्ऽइधम् । इमाम् । उपऽसदम् । वनेरिति वनेः ।
इमाः । ऊँ इति । सु । श्रुधि । गिरः ॥ १ ॥

हे ᵛअग्ने ᵛमे मदीयाम् ᵛइमाम् आधीयमानां ᵛसमिधम् ᵛइमामुपसदम् उपसदनसाधनामाहुतिम् उपसद्यागे क्रियमाणां वा ᵛवनेः संभजेथाः। तथा ᵛइमा ᵛउ इमा अपि ᵛगिरः स्तुतीः ᵛसु सुष्ठु ᵛश्रुधि श्रृणु ॥

अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे । एना सूक्तेन सुजात ॥ २ ॥

अया । ते । अग्ने । विधेम । ऊर्जः । नपात् । अश्वम्ऽइष्टे । एना । सुऽउक्तेन । सुऽजात ॥ २ ॥

---

१. ख-ङ१-थ–°देवार्थयागम् ।

• ऋ. २–४

हे ᵛअग्ने ᵛते त्वाम् ᵛअया अनयाहुत्या ᵛविधेम परिचरेम। हे ᵛऊर्जो ᵛनपात् बलस्य नप्तः तस्य नपातयितर्वा हे ᵛअश्वमिष्टे व्यापकयज्ञ। यद्वा आशु क्रियमाणं कर्माश्वम्। तदिच्छतीत्यश्वमिष्टिः। संस्वरमाणा[1] ह्युपसदमाचरन्ति[1]। 'ते कर्मभिः समस्वरन्त ते तिस्रः सामिधेनीरनूच्य तिस्रो देवता अयजन्'( ऐ. ब्रा. ३. ४५ ) इति ब्राह्मणम्। तादृशाग्ने ते त्वामयानयाहुत्या विधेम परिचरेम। तथा हे ᵛसुजात शोभनजनन ᵛएना एतेन ᵛसूक्तेन स्तोत्रेण प्रीणयेमेति शेषः। यद्वा स्तुत्युपबृंहितेन[2] विधेम॥

तं त्वा॑ गी॒र्भिर्गिर्व॑णसं द्रवि॒ण॒स्युं द्र॑विणोदः। स॒प॒र्येम॑ स॒प॒र्यव॑ः॥ ३ ॥

तम्। त्वा॒। गी॒ःऽभिः। गिर्व॑णसम्। द्र॒वि॒ण॒स्युम्। द्र॒वि॒णः॒ऽद॒ः। स॒प॒र्येम॑। स॒प॒र्यव॑ः॥ ३ ॥

हे ᵛद्रविणोदः धनस्य दातः अग्ने ᵛतं तादृशं ᵛगिर्वणसं गीर्भिः स्तुतिभिः वननीयं ᵛद्रविणस्युं हविर्लक्षणधनेच्छुं ᵛत्वा त्वां ᵛसपर्यवः परिचरणकर्तारो वयं ᵛगीर्भिः स्तुतिभिः ᵛसपर्येम परिचरेम॥

स बो॑धि सू॒रिर्म॒घवा॒ वसु॑पते॒ वसु॑दावन्। यु॒यो॒ध्य॑१॒स्मद्द्वेषां॑सि॥ ४ ॥

सः। बो॒धि॒। सू॒रिः। म॒घऽवा॑। वसु॑ऽपते। वसु॑ऽदावन्। यु॒यो॒धि। अ॒स्मत्। द्वेषां॑सि॥ ४ ॥

ᵛमघवा अन्नवान् ᵛसूरिः विद्वान् प्रेरको वा ᵛसः उक्तलक्षणकः[3] त्वं ᵛबोधि बुध्यस्व अस्मदीयं स्तोत्रम्। किंच हे अग्ने ᵛद्वेषांसि द्वेष्टॄन् ᵛअस्मत् अस्मत्तः ᵛयुयोधि पृथक्कुरु॥

स नो॑ वृ॒ष्टिं दि॒वस्परि॒ स नो॒ वाज॑मन॒र्वाण॑म्। स नः॑ सह॒स्रिणी॒रिष॑ः॥५॥

सः। न॒ः। वृ॒ष्टिम्। दि॒वः। परि॑। सः। न॒ः। वाज॑म्। अ॒न॒र्वाण॑म्।

सः। न॒ः। स॒ह॒स्रिणी॑ः। इष॑ः॥ ५ ॥

ᵛसः स एवाग्निः ᵛनः अस्मदर्थं ᵛदिवस्परि द्युलोकादन्तरिक्षात्॥ परीति पञ्चम्यर्थानुवादी॥ ᵛवृष्टिं करोतीति च शेषः। ᵛसः एव ᵛनः अस्मदर्थम् ᵛअनर्वाणम् अविचलमनल्पं ᵛवाजं बलं ददातु। तथा ᵛसहस्रिणीः अपरिमितप्रकाराणि ᵛइषः अन्नानि ᵛसः एवाग्निर्ददातु॥

ईळा॑नायाव॒स्यवे॒ यवि॑ष्ठ दूत नो गि॒रा। यजि॑ष्ठ हो॒त॒रा ग॑हि॥ ६ ॥

ईळा॑नाय। अ॒व॒स्यवे॑। यवि॑ष्ठ। दू॒त॒। न॒ः। गि॒रा। यजि॑ष्ठ। हो॒त॒ः। आ। ग॒हि॒॥ ६ ॥

हे ᵛयविष्ठ युवतम ᵛदूत देवानां यज्ञादिसूचक ᵛयजिष्ठ अतिशयेन यष्टव्य ᵛहोतः देवानामाह्वातः अग्ने ᵛनः ᵛगिरा अस्मदीयया स्तुत्या ᵛईळानाय पूजयित्रे ᵛअवस्यवे स्वरक्षणमिच्छते मदर्थम् ᵛआ ᵛगहि आगच्छ॥

---

१. क-ख-ग-च-झ-झ१-ण-त-थ-न-म-व–सत्वरमाणा ह्युपसदाचरन्ति। २. क-च-झ-ण-थ-न-म-व–स्तुत्या उपबृंहि तेन (?); झ१–स्तुत्युपबृंहितेन मंत्रहितेम (?)। ३. ख-ग-च-ण१-व–उक्तलक्षणः; झ१–उक्तगुणकः

अन्तर्ह्यग्न ईयसे विद्वान् जन्मोभया कवे । दूतो जन्येव मित्र्यः ॥ ७ ॥

अन्तः । हि । अग्ने । ईयसे । विद्वान् । जन्म । उभया । कवे । दूतः । जन्याऽइव । मित्र्यः ॥७॥

हे ᵛकवे मेधाविन् ᵛअग्ने ᵛअन्तः जनानां हृदये[1] ᵛईयसे ᵛहि गच्छसि जानासि वा । हिः 'स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते' (ऋ.सं. ४. ८. ४) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः । कीदृशस्त्वम् । ᵛउभया उभयविधानि ᵛजन्म जन्मानि यष्टॄणां यजमानानां यष्टव्यानां देवानां च संबन्धीनि ᵛविद्वान् जानन् सन् ईयसे इति संबन्धः । तत्र दृष्टान्तः । ᵛजन्यः जनेभ्यो हितः ᵛमित्र्यः विशेषेण मित्रेभ्यो हितः ᵛदूतः ᵛइव । स यथा प्रजानां चित्तवृत्तिज्ञानाय[2] राज्ञा प्रेरितः तासां मनो जानाति तद्वत् त्वमप्यस्माकमन्तरीयसे इत्यर्थः ॥

स विद्वाँ आ च पिप्रयो यक्षि चिकित्व आनुषक् ।

आ चास्मिन्त्सत्सि बर्हिषि ॥ ८ ॥

सः । विद्वान् । आ । च । पिप्रयः । यक्षि । चिकित्वः । आनुषक् ।

आ । च । अस्मिन् । सत्सि । बर्हिषि ॥ ८ ॥

हे अग्ने ᵛसः त्वं ᵛविद्वान् विशेषाभिज्ञः सन् ᵛआ ᵛच ᵛपिप्रयः सर्वतोऽस्मान् पूरय च कामैः । हे ᵛचिकित्वः चेतनावन् ᵛआनुषक् अनुक्रमेण ᵛयक्षि यज देवान् । ᵛआ ᵛसत्सि आसीद ᵛचास्मिन् स्तीर्णे ᵛबर्हिषि ॥　　॥ २७ ॥

' श्रेष्ठं यविष्ठ ' इति षडृचं सप्तमं सूक्तं सोमाहुत्यार्षम् आग्नेयं गायत्रम् । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसि अस्य विनियोगः पूर्वसूक्त एवोक्तः । श्रावणीकर्मण्याद्या[3] विनियुक्ता ॥

श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर । वसो पुरुस्पृहं रयिम् ॥ १ ॥

श्रेष्ठम् । यविष्ठ । भारत । अग्ने । द्युऽमन्तम् । आ । भर । वसो इति । पुरुऽस्पृहम् । रयिम् ॥१॥

हे ᵛअग्ने ᵛयविष्ठ युवतम हे ᵛभारत । भरता ऋत्विजः । तेषां संबन्धी भारतः । ते[4] अध्वर्य्वादिभिः मथनहविःस्तोत्रादिना व्याप्रियमाणत्वात् । तादृश हे ᵛवसो वासक व्याप्त वा एवंरूपाग्ने ᵛश्रेष्ठम् अतिप्रशस्यं ᵛद्युमन्तं दीप्तिमन्तं ᵛपुरुस्पृहं बहुभिरर्थिभिः स्पृहणीयं ᵛरयिम् ᵛआ ᵛभर आहर ॥

मा नो अरातिरीशत देवस्य मर्त्यस्य च । पर्षि तस्या उत द्विषः ॥ २ ॥

मा । नः । अरातिः । ईशत । देवस्य । मर्त्यस्य । च । पर्षि । तस्याः । उत । द्विषः ॥ २ ॥

---

१. ण-त-थ-व- हृदये हृदये । २. थ-व-चित्तज्ञानाय । ३. ज्ञ१-श्रावण॰ ४. ज्ञ१-प-व-तैः ।

हे अग्ने त्वदनुग्रहात् नः अस्मान् अरातिः अदानं शत्रुत्वम्। यद्वा छन्दसि अरातिशब्दः शत्रुवाची स्त्रीलिङ्गो भवति। अदाता शत्रुः मा ईशत पराभवितुं शक्तो मा भूत्। मा विषयीकुर्यात्। अरातिर्विशेष्यते। देवस्य च मर्त्यस्य च संबन्धिनी तैः कारिता। उत अपि च तस्याः उभयविधायाः द्विषः[1] अस्मदरातेः पर्षि पूरय ॥

**विश्वा उत त्वया वयं धारा उदन्याइव। अति गाहेमहि द्विषः ॥ ३ ॥**

विश्वाः। उत। त्वया। वयम्। धाराः। उदन्याःऽइव। अति। गाहेमहि। द्विषः ॥ ३ ॥

उत अपि च हे अग्ने वयं त्वदनुग्रहात् विश्वाः द्विषः सर्वानपि द्वेष्टॄन् उदन्याः धाराः इव उदकसंबन्धिनीर्धारा अल्पस्रुतीरिव[2] त्मना आत्मनैव अन्यनिरपेक्षेण अति गाहेमहि अतिक्रम्य[3] गच्छेम ॥

**शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे। त्वं घृतेभिराहुतः ॥ ४ ॥**

शुचिः। पावक। वन्द्यः। अग्ने। बृहत्। वि। रोचसे। त्वम्। घृतेभिः। आऽहुतः ॥ ४ ॥

हे पावक शोधक अग्ने शुचिः शुद्धः वन्द्यः नमस्कार्यः सन् बृहत् महत् अत्यधिकं वि रोचसे विविधं दीप्यसे। यतः त्वं घृतेभिः घृतैः आहुतः समन्तात् सिक्तः। अतो विरोचसे ॥

**त्वं नो असि भारताग्ने वशाभिरुक्षभिः। अष्टापदीभिराहुतः ॥ ५ ॥**

त्वम्। नः। असि। भारत। अग्ने। वशाभिः। उक्षऽभिः। अष्टाऽपदीभिः। आऽहुतः ॥५॥

हे भारत ऋत्विजां पुत्रस्थानीय अग्ने नः अस्मदीयः त्वं वशाभिः वन्ध्याभिर्गोभिः उक्षभिः सेक्तृभिर्बलीवर्दैः अष्टापदीभिः गर्भिणीभिश्च आहुतः आराधितः असि ॥

**द्र्वन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः। सहसस्पुत्रो अद्भुतः ॥ ६ ॥**

द्रुऽअन्नः। सर्पिःऽआसुतिः। प्रत्नः। होता। वरेण्यः। सहसः। पुत्रः। अद्भुतः ॥ ६ ॥

द्र्वन्नः समिद्रूपान्नः सर्पिरासुतिः सर्पिः आसूयते आसिच्यते यस्मिन् तादृशः प्रत्नः पुरातनः होता होमनिष्पादकः वरेण्यः वरणीयः सहसस्पुत्रः सहसो बलस्य पुत्रस्थानीयः। बलेनोत्पन्नत्वात्। अद्भुतः आश्चर्यभूतः। रमणीय इत्यर्थः। एवंमहानुभावोऽग्निः मामनुजानात्वित्यर्थः[4] ॥ ॥ २८ ॥

---

१. क-ख-ग-च-झ-ण-ण१-थ-न-प-म-व–विद्विषः। २. ख-ग-ण१-त-प-फ-झ–असस्त्रुतिरिव; क-ज-झ-थ-म-व–असस्तुतीरिव; न–असुतीरिव; च– असस्रुतिरिव; झ१–अल्पस्रुतिरिव; ण–आसस्तुतीरिव। ३. ख-ग-च-ण-ण१-त-थ-न-व–अभिक्रम्य। ४. झ१–मामनुजानातीत्यर्थः।

'वाजयन्निव' इति षडृचमष्टमं सूक्तम्। सोमाहुतेर्हशब्दानुवृत्तस्याभावात् मण्डलद्रष्टा गृत्समद ऋषिः। अग्निर्देवता। हिशब्दाद्गायत्री छन्दः। अन्त्यानुष्टुप्। 'वाजयन्निवान्त्यानुष्टुप्' इत्यनुक्रान्तम्। प्रातरनुवाकाश्विनशस्त्रयोस्तृतीयसूक्तत्वेन अस्योत्तमावर्जितस्य विनियोग उक्तः॥

वाजयन्निव नू रथान्योगाँ अग्नेरुप स्तुहि। यशस्तमस्य मीळ्हुषः॥ १॥

वाजयन्ऽइव। नु। रथान्। योगान्। अग्नेः। उप। स्तुहि। यशःऽतमस्य। मीळ्हुषः॥१॥

हे अन्तरात्मन् ᵛनु क्षिप्रम् ᵛअग्नेः ᵛयोगान् अश्वान् ᵛउप ᵛस्तुहि। कीदृशस्याग्नेः। ᵛयशस्तमस्य प्रवृद्धयशसः॥ मत्वर्थो लुप्यते॥ ᵛमीळ्हुषः सेक्तुः फलस्य। ईदृशस्य योगान् स्तुहि। होतरिति वा संबोध्यम्। स्तुतौ दृष्टान्तः। ᵛवाजयन्निव अन्नमिच्छन् पुरुष इव। स यथा अश्वान् गमनाय स्तौति तद्वत्। यथोक्तलक्षणस्याग्नेः[1] गमनसाधनान् ᵛरथान् स्तुहि॥

यः सुनीथो ददाशुषेऽजुर्यो जरयन्नरिम्। चारुप्रतीक आहुतः॥ २॥

यः। सुऽनीथः। ददाशुषे। अजुर्यः। जरयन्। अरिम्। चारुऽप्रतीकः। आऽहुतः॥ २॥

ᵛसुनीथः शोभननयनः ᵛअजुर्यः अजरणीयोऽनभिभाव्यः ᵛचारुप्रतीकः शोभनोपक्रमः ᵛयः अस्ति सोऽग्निः ᵛददाशुषे हविर्दत्तवते यजमानाय तदर्थम् ᵛअरिं तस्य शत्रुं ᵛजरयन् नाशयन् ᵛआहुतः समन्तादाराधितो भवति॥

य उ श्रिया दमेष्वा दोषोषसि प्रशस्यते। यस्य व्रतं न मीयते॥ ३॥

यः। ऊँ इति। श्रिया। दमेषु। आ। दोषा। उषसि। प्रऽशस्यते।
यस्य। व्रतम्। न। मीयते॥ ३॥

ᵛयः अग्निः ᵛउ ᵛश्रिया ज्वालया युक्तः सन् ᵛदमेषु ᵛआ आगत्य ᵛदोषा रात्रिषु ᵛउषसि अहःसु च ᵛप्रशस्यते स्तूयते। ᵛयस्य अग्नेः ᵛव्रतं कर्म ᵛन ᵛमीयते न हिंस्यते न क्षीयते वा॥

आ यः स्वर्ण भानुना चित्रो विभात्यर्चिषा। अञ्जानो अजरैरभि॥ ४॥

आ। यः। स्वः। न। भानुना। चित्रः। विऽभाति। अर्चिषा। अञ्जानः। अजरैः। अभि॥४॥

ᵛयः अग्निः ᵛचित्रः चायनीयो नानावर्णो वा ᵛअर्चिषा ज्वालया रश्मिसमूहेन ᵛआ ᵛविभाति सर्वतो भासते। तत्र दृष्टान्तः। ᵛस्वः ᵛभानुना किरणेन सूर्य इव। स यथा विभाति तद्वत्। किं कुर्वन्। ᵛअजरैः नित्यैः ज्वालासमूहैः ᵛअभि सर्वतः ᵛअञ्जानः व्यञ्जयन् प्रकाशयन्॥

---

१. क-ख-ग-च-ञ-ण१-म-यद्वोक्तलक्षणस्याग्नेः।

अत्रिमनुं स्वराज्यमग्निमुक्थानि वावृधुः । विश्वा अधि श्रियो दधे ॥ ५ ॥

अत्रिम् । अनु । स्वऽराज्यम् । अग्निम् । उक्थानि । ववृधुः । विश्वाः । अधि । श्रियः । दधे ॥५॥

ᵛअत्रिं शत्रूणामन्नानां वा भक्षकं ᵛस्वराज्यं स्वयमेव राजमानं स्वाराज्यम्[1] ᵛअनु अभिलक्ष्य वा ᵛअग्निम् ᵛउक्थानि शस्त्राणि ᵛववृधुः[2] वर्धयन्ति । स चाग्निः ᵛविश्वाः सर्वाः ᵛश्रियः ᵛअधि ᵛदधे धारयति ॥

अग्नेरिन्द्रस्य सोमस्य देवानामूतिभिर्वयम् ।
अरिष्यन्तः सचेमह्यभि ष्याम पृतन्यतः ॥ ६ ॥

अग्नेः । इन्द्रस्य । सोमस्य । देवानाम् । ऊतिऽभिः । वयम् ।

अरिष्यन्तः । सचेमहि । अभि । स्याम । पृतन्यतः ॥ ६ ॥

ᵛअरिष्यन्तः केनाप्यहिंस्यमानाः ᵛवयम् ᵛअग्नेः ᵛइन्द्रस्य ᵛसोमस्य ᵛदेवानाम् अन्येषामपि ᵛऊतिभिः रक्षणाभिः ᵛसचेमहि संगच्छेमहि । युक्ता भवेम । तथा रक्षायुक्ता वयं ᵛपृतन्यतः पृतनामात्मन इच्छतः शत्रून् ᵛअभि ᵛष्याम अभिभवेम ॥ पृतनाशब्दात् क्यचि ‘ कव्यध्वरपृतनस्यर्चि लोपः ’ इत्यवर्णलोपः ॥ ॥ २९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण[3] विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्ये द्वितीयाष्टके
पञ्चमोऽध्यायः
समाप्तः ॥

---

१. ग-झ१-म—स्वराज्यम् । २. न-व—वावृधुः । ३. क-ज-झ-झ१-ण-त-म—सायणामात्येन ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

'नि होता' इति पङृचं नवमं सूक्तं गृत्समदस्यार्षं 'नि होता' इत्यनुक्रान्तत्वात् । अनुक्तत्वात् त्रिष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे[1] छन्दसि[1] अस्य विनियोगः । 'अथैतस्याः' इति खण्डे सूत्रितं–'नि होता होतृषदन इति सूक्ते' (आश्व. श्रौ. ४. १३) इति ॥ अग्निप्रणयन आद्ये ऋचौ विनियुक्ते । 'पञ्चम्यां पौर्णमास्याम्' इति खण्डे सूत्रितं– 'नि होता होतृषदन इति द्वे' (आश्व. श्रौ. २. १७) ॥

नि होता॑ होतृ॒षद॑ने॒ विदा॑नस्त्वे॒षो दी॑दि॒वाँ अ॑सदत्सु॒दक्षः॑ ।
अद॑ब्धव्रतप्रमति॒र्वसि॑ष्ठः सहस्रंभ॒रः शुचि॑जिह्वो अ॒ग्निः ॥ १ ॥

नि । होता॑ । हो॒तृ॒ऽसद॑ने । विदा॑नः । त्वे॒षः । दी॒दि॒ऽवान् । अ॒स॒द॒त् । सु॒ऽदक्षः॑ ।
अद॑ब्धव्रतऽप्रमतिः । वसि॑ष्ठः । स॒ह॒स्र॒म्ऽभ॒रः । शुचि॑ऽजिह्वः । अ॒ग्निः ॥ १ ॥

गृत्समदः स्तौति । ᵛहोता देवानामाह्वाता ᵛविदानः विद्वान् ᵛत्वेषः प्रवृद्धः ᵛदीदिवान् दीप्यमानः ᵛसुदक्षः शोभनबलः ᵛअदब्धव्रतप्रमतिः । अदब्धान्यहिंसितानि व्रतानि कर्माणि यस्याः सा अदब्धव्रता प्रमतिः प्रकृष्टा बुद्धिर्यस्य स तथोक्तः । ᵛवसिष्ठः सर्वस्य वासयितृतमः ॥ वासयतेस्तृजन्तस्य इष्ठनि रूपम् ॥ ᵛसहस्रंभरः सहस्रस्यानेकविधस्य भर्ता । विहरणेन नानाविधरूपस्य धारक इत्यर्थः । यद्वा सहस्रस्य सर्वस्य भर्ता । तथा च वाजसनेयं–'सर्वं वै सहस्रं सर्वंभर इत्येव तदाह' इति । ᵛशुचिजिह्वः शुचिर्दीप्ता जिह्वा ज्वाला यस्य स तथोक्तः । एवंभूतः ᵛअग्निः ᵛहोतृषदने । होतात्र सीदतीति होतृषदनम् उत्तरा[2] वेदी[2] ॥ अधिकरणे ल्युट् ॥ तत्र ᵛनि ᵛअसदत् नितरां सीदतु ॥ उक्तार्थे ब्राह्मणं–'नि होता होतृषदने विदान इत्यग्निर्वै देवानां होता तस्यैतद्धोतृषदनं यदुत्तरवेदीनाभिस्त्वेषो दीदिवाँ असदत्सुदक्ष इत्यासन्नो हि स तर्हि भवत्यदब्धव्रतप्रमतिर्वसिष्ठ इत्यग्निर्वै देवानां वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निरित्येषा ह वा अस्य सहस्रंभरता यदेनमेकं सन्तं बहुधा विहरन्ति' (ऐ. ब्रा. १. २८) इति ॥

त्वं दू॒तस्त्वमु॑ नः पर॒स्पास्त्वं वस्य॒ आ वृ॑षभ प्रणे॒ता ।
अग्ने॑ तो॒कस्य॑ न॒स्तने॑ त॒नूना॒मप्र॑यच्छ॒न्दीद्य॑द्बोधि गो॒पाः ॥ २ ॥

त्वम् । दू॒तः । त्वम् । ऊँ इति॑ । नः॒ । प॒रः॒ऽपाः । त्वम् । वस्यः॑ । आ । वृ॒ष॒भ॒ । प्र॒ऽने॒ता ।
अग्ने॑ । तो॒कस्य॑ । नः॒ । तने॑ । त॒नूना॑म् । अप्र॑ऽयुच्छन् । दीद्य॑त् । बो॒धि॒ । गो॒पाः ॥ २ ॥

---

१. म–त्रिष्टुप्छन्दसि । २. ण-म–उत्तरवेदी ।

हे वृषभ अभिमतफलवर्षक[1] हे अग्ने त्वं दूतः अस्मदीये यज्ञे देवाह्वानार्थं[2] दूतो भव । त्वमु त्वमेव नः अस्माकं परस्पाः आपद्भ्यः पारयिता पाता च भव । किंच त्वं वस्यः वसुनो धनस्य आ प्रणेता अस्मदाभिमुख्येन प्रापयिता भव । अप्रयुच्छन् अप्रमाद्यन् । दीद्यत् । दीदयतिर्दीप्तिकर्मा । शोभमानः । त्वं नः अस्माकं तोकस्य पुत्रस्य तने । तनोति विस्तारयति कुलमिति तनः पौत्रः । तस्मिन् अस्मदीयानां तनूनां गोपाः गोपायिता[3] । तथा च ब्राह्मणम्–'अग्निर्वै देवानां गोपा अग्निमेव तत्सर्वतो गोप्तारं परिदत्त आत्मने च यजमानाय च' (ऐ. ब्रा. १. २८) इति । तादृशस्त्वं च गोपायिता भवामीति बोधि बुध्यस्व ॥

**विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।**

**यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे ॥ ३ ॥**

विधेम । ते । परमे । जन्मन् । अग्ने । विधेम । स्तोमैः । अवरे । सधऽस्थे ।

यस्मात् । योनेः । उत्ऽआरिथ । यजे । तम् । प्र । त्वे इति । हवींषि । जुहुरे । सम्ऽइद्धे ॥३॥

हे अग्ने परमे उत्कृष्टे जन्मन् । जायते प्रादुर्भवत्यस्मिन्निति जन्मस्थानं द्यौः । तस्मिन् द्युलोकेऽवस्थिताय ते तुभ्यं विधेम स्तुतिभिः परिचरेम । अवरे द्युलोकादधस्तने सधस्थे अन्तरिक्षे स्थिताय तुभ्यं स्तोमैः स्तोत्रैः विधेम परिचरेम । यस्माद्योनेः पृथिवीरूपात् स्थानात् त्वम् उदारिथ उद्गतोऽसि प्रादुर्भूतोऽसि तं पृथिवीप्रदेशं यजे पूजयामि । तत्र हि समिद्धे समिद्भिः समिध्यमाने त्वे त्वयि हवींषि पुरोडाशादीनि प्र जुहुरे अध्वर्य्वादयः प्रजुह्वति ॥ जुहोतेर्लिटि रूपम् ॥

**अग्ने यजस्व हविषा यजीयाञ्छ्रुष्टी देष्णमभि गृणीहि राधः ।**

**त्वं ह्यसि रयिपती रयीणां त्वं शुक्रस्य वचसो मनोता ॥ ४ ॥**

अग्ने । यजस्व । हविषा । यजीयान् । श्रुष्टी । देष्णम् । अभि । गृणीहि । राधः ।

त्वम् । हि । असि । रयिऽपतिः । रयीणाम् । त्वम् । शुक्रस्य । वचसः । मनोता ॥ ४ ॥

हे अग्ने यजीयान् यष्टृतमस्त्वं हविषा अस्मद्दत्तेन यजस्व देवान् संयोजय । देष्णं देयं राधः अन्नं श्रुष्टी । श्रुष्टीति क्षिप्रनाम । क्षिप्रम् अभि गृणीहि । देवानां पुरत इदं स्वादुतरमिदं स्वादुतरमिति ब्रूहि । यद्वा श्रुष्टी क्षिप्रकारी त्वं देष्णं देयं राधो धनमभिगृणीहि अस्मदाभिमुख्येन ब्रूहि प्रयच्छेत्यर्थः । दानसामर्थ्यं दर्शयति । त्वं रयीणां धनानां मध्ये रयिपतिः उत्तमस्य धनस्य पतिः असि हि । यद्वा रयीणां रयिपतिरित्यत्रैको रयिशब्दोऽनुवादः । त्वं शुक्रस्य दीप्तस्य वचसः अस्मदीयस्य स्तोत्रस्य मनोता प्रज्ञाता भवसि । यद्वा मनोता (?) ॥

---

१. म–अभिमतफलप्रवर्षक । २. ख-ग-च-ण१–देवतार्थम्; व–देवताह्वानार्थम् । ३. झ१–गोपायिता भव ।

उभयं ते न क्षीयते वसव्यं दिवेदिवे जायमानस्य दस्म ।
कृधि क्षुमन्तं जरितारमग्ने कृधि पतिं स्वपत्यस्य रायः ॥ ५ ॥

उभयम् । ते । न । क्षीयते । वसव्यम् । दिवेऽदिवे । जायमानस्य । दस्म ।
कृधि । क्षुऽमन्तम् । जरितारम् । अग्ने । कृधि । पतिम् । सुऽअपत्यस्य । रायः ॥ ५ ॥

ᵛदस्म दर्शनीय हे ᵛअग्ने ᵛदिवेदिवे प्रतिदिनमग्निहोत्रकाले ᵛजायमानस्य ᵛते तव ᵛउभयं ᵛवसव्यं दिव्यं भौमं च वसु ॥ वस्वादित्वात्स्वार्थिको यत्प्रत्ययः ( पा. सू. ५. ४. ३०. ४ ) ॥ तादृशमुभयं वसु ᵛन ᵛक्षीयते न हीयते । अस्योभयविधधनसद्भावे मन्त्रवर्णः–' त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य' ( ऋ. सं. १.१४४. ६ ) इत्यत्रोक्तः । अतस्त्वं ᵛजरितारं तव स्तोत्रं कुर्वाणमिमं यजमानं ᵛक्षुमन्तम् अन्नवन्तं[1] कीर्तिमन्तं वा ᵛकृधि कुरु । किंच ᵛस्वपत्यस्य शोभनापत्ययुक्तस्य ᵛरायः धनस्य ᵛपतिं स्वामिनं कुरु ॥

साकमेधे पर्वणि पूर्वेद्युरनुसवनं तिस्र इष्टयः कर्तव्याः । प्रथमायामग्नेरनीकवतः 'सैनानीकेन' इति याज्या । तथा ' ततः साकमेधाः ' इति खण्डे सूत्रितं–' सैनानीकेन सुविदत्रो अस्मे ' ( आश्व. श्रौ. २. १८ ) इति ॥

सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठः स्वस्ति ।
अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥ ६ ॥

सः । एना । अनीकेन । सुऽविदत्रः । अस्मे इति । यष्टा । देवान् । आऽयजिष्ठः । स्वस्ति ।
अदब्धः । गोपाः । उत । नः । परःऽपाः । अग्ने । द्युऽमत् । उत । रेवत् । दिदीहि ॥ ६ ॥

हे ᵛअग्ने ᵛसः तादृशस्त्वम् ᵛएना एतेन ᵛअनीकेन युक्तस्त्वं ᵛसुविदत्रः सुप्रतिज्ञः सुधनो वा ᵛअस्मे अस्माकं भव । ᵛदेवान् ᵛयष्टा देवानां हविष्प्रदानेन पूजकः ᵛआयजिष्ठः यष्टृतमः ᵛअदब्धः केनाप्यतिरस्कृतः ᵛगोपाः देवानां गोपायिता । ᵛउत अपि च ᵛनः अस्माकं ᵛपरस्पाः दुरितेभ्यः पारयिता पाता च त्वं ᵛद्युमत् कान्तियुक्तम् ᵛउत अपि च ᵛरेवत् धनयुक्तं यथा भवति तथा ᵛस्वस्ति ᵛदिदीहि क्षेमेण सर्वतो दिदीहि क्षेमेण सर्वतो दीप्यस्व ॥ ॥ १ ॥

' जोहूत्रः ' इति षडृचं दशमं सूक्तं गार्त्समदं त्रैष्टुभमाग्नेयं ' जोहूत्रः ' इत्यनुक्रान्तत्वात् । सूक्तविनियोगः पूर्वेण सहोक्तः ॥

---

१. व–यज्ञवन्तम् ।

जोहूत्रो अग्निः प्रथमः पितेवेळस्पदे मनुषा यत्समिद्धः ।
श्रियं वसानो अमृतो विचेता मर्मृजेन्यः श्रवस्यः स वाजी ॥ १ ॥

जोहूत्रः । अग्निः । प्रथमः । पिताऽइव । इळः । पदे । मनुषा । यत् । सम्ऽइद्धः ।
श्रियम् । वसानः । अमृतः । विऽचेताः । मर्मृजेन्यः । श्रवस्यः । सः । वाजी ॥ १ ॥

ᐯजोहूत्रः सर्वैर्यज्ञार्थं ह्वातव्यो होतव्यो वा ॥ ह्वयतेर्जुहोतेर्वा रूपम् ॥ तादृशः ᐯप्रथमः । ' अग्निर्वै देवानामवमः ' ( ऐ. ब्रा. १.१ ) इत्याम्नानात् । मुख्यो यः ᐯअग्निः । ᐯयत् यदा ᐯइळः इळायाः ᐯपदे उत्तरवेद्यात्मके स्थाने ᐯमनुषा मनुष्येण यजमानेन ᐯसमिद्धः सोऽग्निः ᐯपितेव देवानां हविष्प्रापणेन पालको भवति । ᐯश्रियं दीप्तिं ᐯवसानः आच्छादयन् ᐯअमृतः मरणधर्मरहितः ᐯविचेताः विविधप्रज्ञः ᐯश्रवस्यः । श्रव इत्यन्ननाम । तस्मै हितः । ᐯवाजी बलवान् । ᐯसः अग्निः ᐯमर्मृजेन्यः सर्वैः परिचरणीयो भवति ॥ यङ्लुगन्तात् केन्यप्रत्ययः ॥

श्रूया अग्निश्चित्रभानुर्हवं मे विश्वाभिर्गीर्भिरमृतो विचेताः ।
श्यावा रथं वहतो रोहिता वोतारुषाह चक्रे विभृत्रः ॥ २ ॥

श्रुयाः । अग्निः । चित्रऽभानुः । हवम् । मे । विश्वाभिः । गीःऽभिः । अमृतः । विऽचेताः ।
श्यावा । रथम् । वहतः । रोहिता । वा । उत । अरुषा । अह । चक्रे । विऽभृत्रः ॥ २ ॥

ᐯअमृतः मरणधर्मरहितः ᐯविचेताः विशिष्टप्रज्ञः ᐯचित्रभानुः विचित्रदीप्तिश्चायनीयदीप्तिर्वा सः ᐯअग्निः ᐯविश्वाभिर्गीर्भिः स्तुतिसाधनभूतैः सर्वैर्वाक्यैः क्रियमाणं ᐯमे मम ᐯहवं स्तोत्रं ᐯश्रूयाः शृणोतु । तस्याग्नेः ᐯरथं ᐯश्यावा श्यावर्णावश्वौ ᐯवहतः । ᐯवा अपि वा ᐯरोहिता रोहिद्वर्णौ अश्वौ[1] रथं वहतः[1] । ᐯउत अपि च ᐯअरुषा आरोचमानौ शुक्लवर्णावश्वौ[2] वहतः[3] । रोहिद्वर्णयोरश्वयोः श्यावादिवर्णपरिग्रहः स्वेच्छया भवति । ᐯविभृत्रः नानास्थानेषु विहृतः ᐯचक्रे ऋत्विग्भिरकारि खलु ॥ करोतेः कर्मणि लिट् ॥

उत्तानायामजनयन्त्सुषूतं भुवदग्निः पुरुपेशासु गर्भः ।
शिरिणायां चिदक्तुना महोभिरपरीवृतो वसति प्रचेताः ॥ ३ ॥

उत्तानायाम् । अजनयन् । सुऽसूतम् । भुवत् । अग्निः । पुरुऽपेशासु । गर्भः ।
शिरिणायाम् । चित् । अक्तुना । महःऽभिः । अपरिऽवृतः । वसति । प्रऽचेताः ॥ ३ ॥

---

१. ण-' अश्वौ रथं वहतः ' नास्ति । २. ण-अश्वौ । ३. ण-रथं वहतः ।

ᵛउत्तानायाम् उत्तानशयायामरण्यां ᵛसुपूतम् अग्निहोत्रार्थं सुष्ठु प्रेरितमग्निम् ᵛअजनयन् अध्वर्य्वादय उदपादयन् । सः ᵛअग्निः ᵛपुरुपेशासु । पेश इति रूपनाम । बहुरूपास्वोषधीषु ᵛगर्भः ᵛभुवत् अन्तर्वर्तमानतया गर्भ इव भवेत् ॥ भवतेर्लिङि रूपम् ॥ ᵛशिरिणायाम् । शीर्यन्तेऽस्यां भूतानीति शिरिणा रात्रिः । तस्यामपि ᵛअक्तुना । अञ्जनादक्तुस्तमः । तेन तमसा ᵛअपरीवृतः[1] असंस्पृष्टः अत एव ᵛमहोभिः तेजोभिर्युक्तः ᵛप्रचेताः प्रकृष्टप्रज्ञः सन् ᵛवसति दीप्यमानो वर्तते ॥

जिघर्म्यग्निं हविषा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम् ॥ ४ ॥

जिघर्मि । अग्निम् । हविषा । घृतेन । प्रतिऽक्षियन्तम् । भुवनानि । विश्वा ।
पृथुम् । तिरश्चा । वयसा । बृहन्तम् । व्यचिष्ठम् । अन्नैः । रभसम् । दृशानम् ॥ ४ ॥

ᵛविश्वा सर्वाणि ᵛभुवनानि ᵛप्रतिक्षियन्तं वैश्वानरात्मनाधितिष्ठन्तं ᵛपृथुं महान्तं ᵛतिरश्चा सर्वतः प्रवर्तमानेन ᵛवयसा पेशसा[2] ᵛबृहन्तं प्रवृद्धम् ᵛअन्नैः हविर्लक्षणैः ᵛव्यचिष्ठं व्याप्तं ᵛरभसं बलवन्तं ᵛदृशानम् एवंगुणवत्तया दृश्यमानम् ᵛअग्निं पुरोडाशादिलक्षणेन ᵛहविषा ᵛघृतेन च ᵛजिघर्मि सिञ्चामि दीपयामि वा ॥ 'घृ क्षरणदीप्त्योः'। लटि रूपम् ॥ अस्मिन्नृचे (?) वाजसनेयकम्–'जुहोम्यग्निं हविषा घृतेन प्रति ह्येष सर्वाणि भूतानि क्षेति पृथिव्या एष वयसा धूमेन बृहन्तं व्यचिष्ठमन्नै रभसं दृशानमित्यनवकाशनवन्तमन्नैरन्नादं दीप्यमानमित्येतदा विश्वत इत्या सर्वतः प्रत्यञ्चं जुहोमीत्येतदरक्षसेत्यहेळमानेन मनसेदं जुषेतेत्येतन्मर्यश्रीरिति मर्यश्रीरित्येष स्पृहयद्वर्णो अग्निर्नाभिमृश इति न ह्येष मृशेत दीप्यमानो भवति' इति ॥

आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत ।
मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा३ जर्भुराणः ॥ ५ ॥

आ । विश्वतः । प्रत्यञ्चम् । जिघर्मि । अरक्षसा । मनसा । तत् । जुषेत ।
मर्यऽश्रीः । स्पृहयत्ऽवर्णः । अग्निः । न । अभिऽमृशे । तन्वा । जर्भुराणः ॥ ५ ॥

ᵛविश्वतः सर्वत्र व्याप्य वर्तमानं ᵛप्रत्यञ्चं यज्ञं प्रत्यागच्छन्तमग्निं येन घृतेन ᵛआ ᵛजिघर्मि आसिञ्चामि । ᵛअरक्षसा बाधकरहितेन[3] ᵛमनसा स्तोत्रेण सह ᵛतत् आज्यं ᵛजुषेत भवान् सेवेत । ᵛमर्यश्रीः । मर्यैर्मर्त्यैः श्रयणीयो भजनीयः । ᵛस्पृहयद्वर्णः । यादृशं वर्णं यजमानः स्पृहयति तादृशवर्णोपेतः । ᵛतन्वा तेजसा ᵛजर्भुराणः पूर्यमाणः ᵛअग्निः ᵛनाभिमृशे । अतितेजस्वितयाभिमर्शनीयो न भवति ॥ अभिपूर्वात् मृशेः कृत्यार्थे केन्प्रत्ययः ॥

---

१. ण-थ-अपरिवृतः । २. ङ्ख१-म-तेजसा; थ-पयसा; ण-'पेशसा' नास्ति । ३. म-बाधरहितेन ।

ज्ञेया भागं सहसानो वरेण त्वादूतासो मनुवद्वदेम ।
अनूनमग्निं जुह्वा वचस्या मधुपृचं धनसा जोहवीमि ॥ ६ ॥

ज्ञेयाः । भागम् । सहसानः । वरेण । त्वाऽदूतासः । मनुऽवत् । वदेम ।
अनूनम् । अग्निम् । जुह्वा । वचस्या । मधुऽपृचम् । धनऽसाः । जोहवीमि ॥ ६ ॥

ᵛवरेण । वारयत्यनेन शत्रूनिति वरं तेजः । तेन ᵛसहसानः शत्रूनभिभवन् त्वं ᵛभागं भजनीयं स्तोत्रं ᵛज्ञेयाः जानीहि ॥ आशीर्लिङि ' वान्यस्य संयोगादेः ' ( पा. सू. ६. ४. ६८ ) इति एत्वम् ॥ ᵛत्वादूतासः । त्वं दूतो येषामसि[1] ते त्वादूतासः । यद्वा त्वया प्रेरिता वयं ᵛमनुवत् मनुरिव ᵛवदेम स्तोत्रं ब्रूयाम । ᵛजुह्वा । हूयतेऽस्यामिति जुहूर्ज्वाला पात्रविशेषो वा । तया ᵛअनूनं संपूर्णं ᵛमधुपृचं मधुना कर्मफलेन यजमानं संयोजयन्तम् ᵛअग्निं ᵛधनसाः धनस्य संभक्ताहं ᵛवचस्या स्तुतिकामनया ᵛजोहवीमि आह्वयामि ॥ ॥ २ ॥

' श्रुधी हवम् ' इत्येकविंशत्यृचमेकादशं सूक्तं गार्त्समदम् । अत्रानुक्रमणिका–' श्रुधि सैकेन्द्रं विराट्स्थानमृतेऽन्त्याम् ' इति । विराट्स्थाना त्रिष्टुप् । तल्लक्षणमनुक्रमण्यामुक्तं–' नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थाना ' इति । अन्त्या त्रिष्टुप् विशेषस्यानुक्तत्वात् । इन्द्रो देवता । पृष्ठ्यस्य चतुर्थेऽहनि मरुत्वतीयशस्त्रे द्वे सूक्ते निविद्धाने । तत्रेदं तृतीयं सूक्तम् । ' चतुर्थेऽहनि ' इति खण्डे सूत्रितं–' श्रुधी हवमिन्द्र मरुत्वाँ इन्द्रेति मरुत्वतीयम् ' ( आश्व. श्रौ. ७. ११ ) इति ॥

श्रुधी हवमिन्द्र मा रिषण्यः स्याम ते दावने वसूनाम् ।
इमा हि त्वामूर्जो वर्धयन्ति वसूयवः सिन्धवो न क्षरन्तः ॥ १ ॥

श्रुधि । हवम् । इन्द्र । मा । रिषण्यः । स्याम । ते । दावने । वसूनाम् ।
इमाः । हि । त्वाम् । ऊर्जः । वर्धयन्ति । वसुऽयवः । सिन्धवः । न । क्षरन्तः ॥ १ ॥

गृत्समदः स्तौति । हे ᵛइन्द्र मे ᵛहवं मदीयमिदं स्तोत्रं ᵛश्रुधि शृणु । ᵛमा ᵛरिषण्यः मा हिंसीः । इदमल्पं न साधीय इति मा निराकार्षीः ॥ ' दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ' इति निपातितः ॥ वयं ᵛते तव ᵛवसूनां ᵛदावने दानाय ᵛस्याम पात्रभूता भवेम । ᵛइमाः अस्माभिर्दत्तानि ᵛवसूयवः दातुर्यजमानस्य धनमिच्छन्ति ॥ छन्दसि परेच्छायां क्यच् ॥ तादृशानि ᵛक्षरन्तः स्रवन्तः ᵛसिन्धवः इव घृतक्षरणोपेतानि ᵛऊर्जः हविर्लक्षणान्यन्नानि ᵛत्वां ᵛवर्धयन्ति ᵛहि ॥

सृजो महीरिन्द्र या अपिन्वः परिष्ठिता अहिना शूर पूर्वीः ।
अमर्त्यं चिद्दासं मन्यमानमवाभिनदुक्थैर्वावृधानः ॥ २ ॥

सृजः । महीः । इन्द्र । याः । अपिन्वः । परिऽस्थिताः । अहिना । शूर । पूर्वीः ।
अमर्त्यम् । चित् । दासम् । मन्यमानम् । अव । अभिनत् । उक्थैः । ववृधानः ॥ २ ॥

---

1. म-येषामिति ।

शूर शत्रूणां हिंसक हे इन्द्र याः अपः अपिन्वः अवर्धयः । पूर्वीः प्रभूतास्ताः अहिना मेघेन वृत्रेण वा परिष्ठिताः अधिष्ठिताः[1] आक्रान्ताः । ततस्त्वं तस्मादहेः सकाशात् महीः महतीरपः सृजः व्यसृजः । उक्थैः शस्त्रैः वावृधानः वर्धमानस्त्वं दासं सर्वस्योपक्षपयितारम् अमर्त्यं चित् मरणधर्मरहितमेवात्मानं मन्यमानं तमसुरम् अवाभिनत् अवाङ्मुखं यथा भवति तथा ॥ ‘ भिदिर् विदारणे ’ । लङि सिपि रूपम् ॥

उक्थेष्विन्नु शूर येषु चाकन्स्तोमेष्विन्द्र रुद्रियेषु च ।
तुभ्येदेता यासु मन्दसानः प्र वायवे सिस्रते न शुभ्राः ॥ ३ ॥

उक्थेषु । इत् । नु । शूर । येषु । चाकन् । स्तोमेषु । इन्द्र । रुद्रियेषु । च ।
तुभ्य । इत् । एताः । यासु । मन्दसानः । प्र । वायवे । सिस्रते । न । शुभ्राः ॥ ३ ॥

हे शूर इन्द्र येषु उक्थेषु होत्रादिभिः क्रियमाणेषु शस्त्रेषु रुद्रियेषु । रुद्रियं सुखम् । तत्साधनभूतेषु । यद्वा रुद्राः स्तोतारः । तत्कृतेषु उद्गातॄणां स्तोमेषु । च नु क्षिप्रं चाकन् स्तुतीः कामयसे ॥ कमतेः कनतेर्वा यङ्लुकि रूपम् ॥ यासु स्तोत्रशस्त्ररूपासु स्तुतिषु मन्दसानः हृष्यन् भवसि ताः एताः शुभ्राः दीप्यमानाः स्तुतयः वायवे अस्मदीयं यज्ञं प्रत्यागच्छते तुभ्येत् तुभ्यमेव प्र सिस्रते त्वदर्थमेव प्रसरन्ति । न संप्रत्यर्थे । ता अधुना सेवस्व ॥

शुभ्रं नु ते शुष्मं वर्धयन्तः शुभ्रं वज्रं बाह्वोर्दधानाः ।
शुभ्रस्त्वमिन्द्र वावृधानो अस्मे दासीर्विशः सूर्येण सह्याः ॥ ४ ॥

शुभ्रम् । नु । ते । शुष्मम् । वर्धयन्तः । शुभ्रम् । वज्रम् । बाह्वोः । दधानाः ।
शुभ्रः । त्वम् । इन्द्र । ववृधानः । अस्मे इति । दासीः । विशः । सूर्येण । सह्याः ॥ ४ ॥

हे इन्द्र ते तव शुभ्रं शोभनं शुष्मं बलं स्तोत्रैः वर्धयन्तः शुभ्रं दीप्तं वज्रम् आयुधं नु क्षिप्रं तव बाह्वोर्दधानाः निदधानाः । स्तूयमानो हि इन्द्रः असुरवधाय वज्रमादत्त इतीत्थंरूपेण[2] आयुधं निदधाना भवामः । वावृधानः स्तोत्रैः वर्धमानः शुभ्रः तेजसा युक्तः त्वं अस्मे अस्माकं दासीः उपक्षपयित्रीः विशः आसुरीः प्रजाः सूर्येण सुष्टु प्रेरकेण । आयुधं हि प्रेरयति त्वं युध्यस्वेति। एवंरूपेण बाह्वोर्निहितेन वज्रेण सह्याः अभिभव ॥ सहतेर्व्यत्ययेन लिङि परस्मैपदम् ॥

गुहा हितं गुह्यं गूळ्हमप्स्वपीवृतं मायिनं क्षियन्तम् ।
उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण ॥ ५ ॥

गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु । अपिऽवृतम् । मायिनम् । क्षियन्तम् ।
उतो इति । अपः । द्याम् । तस्तभ्वांसम् । अहन् । अहिम् । शूर । वीर्येण ॥ ५ ॥

---

१. त-थ–‘ अधिष्ठिताः ’ नास्ति । २. ख-ग-ण-त-थ-न-व–इतीत्येवंरूपेण ।

हे ^v^शूर इन्द्र ^v^गुहा गुहायां ^v^हितं निहितं अत एव ^v^गुह्यम् अप्रकाश्यं ^v^गूळ्हं गूढम् ^v^अपीवृतं तिरोहितम् । अत्रैकस्मिंस्तिरोधानरूपेऽर्थे पुनरुक्तयस्तिरोधानभूयस्त्वप्रतिपादनपराः । अभ्यासे हि भूयानर्थो भवति । यथाहो दर्शनीयाहो दर्शनीयेति । तादृशं ^v^मायिनं मायाविनमसुरं ^v^क्षियन्तं निवसन्तं ^v^उतो अपि च ^v^अपो ^v^द्यां दिवं च ^v^तस्तभ्वांसं स्वसामर्थ्येन स्तम्भयन्तम् इत्थंभूतम् ^v^अहिम् असुरं मेघं वा ^v^वीर्येण सामर्थ्यभूतेन वज्रेण ^v^अहन् हतवानसि ॥ ' हन हिंसागत्योः ' इत्यस्य लङि रूपम् ॥ ॥ ३ ॥

स्तवा नु त इन्द्र पूर्व्या महान्युत स्तवाम नूतना कृतानि ।
स्तवा वज्रं बाह्वोरुशन्तं स्तवा हरी सूर्यस्य केतू ॥ ६ ॥

स्तव । नु । ते । इन्द्र । पूर्व्या । महानि । उत । स्तवाम । नूतना । कृतानि ।
स्तव । वज्रम् । बाह्वोः । उशन्तम् । स्तव । हरी इति । सूर्यस्य । केतू इति ॥ ६ ॥

हे ^v^इन्द्र ^v^पूर्व्या पुरातनानि ^v^महानि महान्ति ^v^ते तव कर्माणि ^v^नु क्षिप्रं ^v^स्तव स्तवाम । ^v^उत अपि च ^v^नूतना अधुनातनानि ^v^कृतानि कर्माणि ^v^स्तवाम । ^v^बाह्वोरुशन्तं दीप्यमानं ^v^वज्रं ^v^स्तव स्तवाम । किंच ^v^सूर्यस्य सुष्ठु प्रेरकस्य सुवीर्यस्य वा सूर्यात्मनो वेन्द्रस्य ^v^केतू प्रज्ञापकौ ^v^हरी एतन्नामकावश्वौ ^v^स्तव स्तवाम ॥ ' ष्टुञ् स्तुतौ ' । ' तिङां तिङो भवन्ति ' इत्युत्तमबहुवचनस्य मध्यमैकवचनादेशः । ' बहुलं छन्दसि ' इति शपो लुगभावः ॥

हरी नु त इन्द्र वाजयन्ता घृतश्चुतं स्वारमस्वार्ष्टाम् ।
वि समना भूमिरप्रथिष्टारंस्त पर्वतश्चित्सरिष्यन् ॥ ७ ॥

हरी इति । नु । ते । इन्द्र । वाजयन्ता । घृतऽश्चुतम् । स्वारम् । अस्वार्ष्टाम् ।
वि । समना । भूमिः । अप्रथिष्ट । अरंस्त । पर्वतः । चित् । सरिष्यन् ॥ ७ ॥

हे इन्द्र ^v^वाजयन्ता वेगं कुर्वन्तौ ॥ ' तत्करोति° ' इति णिच् ॥ ^v^ते तव ^v^हरी एतन्नामकावश्वौ ^v^घृतश्चुतं घृतस्योदकस्य च्यावयितारं ^v^स्वारं मेघध्वनिं ^v^नु क्षिप्रम् ^v^अस्वार्ष्टाम् ॥ स्वरतिः शब्दकर्मा । पाकं पचतीतिवत् एकधातुः[1] अनुवादः । लङि रूपम् ॥ ^v^समना समस्थला यद्वा समना सर्वतः ^v^वि ^v^अप्रथिष्ट । गर्जनं श्रुत्वा ममोपरि वृष्टिर्भवतीति प्रथिताभूत् । तथा ^v^पर्वतश्चित् मेघोऽपि ^v^सरिष्यन् वर्षणार्थमितस्ततो गमिष्यन् ^v^अरंस्त अरमत ॥ रमतेर्लुङि रूपम् ॥

---

१. क–एको धातुः; च–एकधातोः; झ–एकवादको धातुः; झ१–एवको धातुः; ण-त-थ-न–एका धातुः;

नि पर्वतः साद्यप्रयुच्छन्त्सं मातृभिर्वावशानो अक्रान् ।
दूरे पारे वाणीं वर्धयन्त इन्द्रेषितां धमनिं पप्रथन्नि ॥ ८ ॥

नि । पर्वतः । सादि । अप्रऽयुच्छन् । सम् । मातृऽभिः । वावशानः । अक्रान् ।
दूरे । पारे । वाणीम् । वर्धयन्तः । इन्द्रऽइषिताम् । धमनिम् । पप्रथन् । नि ॥ ८ ॥

ᵛअप्रयुच्छन् अप्रमाद्यन् वर्षणे सावधानः ᵛपर्वतः मेघः ᵛनि ᵛषादि नभसि निषण्ण आसीत् । ᵛमातृभिः अद्भिर्माध्यमिकाभिर्वाग्भिर्वा ᵛसं ᵛवावशानः सह शब्दं कुर्वाणः ᵛअक्रान् अक्रमीत् । इतस्ततः संचारमकरोत् ॥ क्रमतेर्लङि ' बहुलं छन्दसि ' इति विकरणस्य लुक् ॥ ᵛदूरे ᵛपारे अतिदूरेऽन्तरिक्षे स्थितां ᵛवाणीं माध्यमिकां वाचं ᵛवर्धयन्तः स्तोत्रैः समृद्धां कुर्वन्तः स्तोतारो मरुतो वा ᵛइन्द्रेषिताम् इन्द्रेण प्रेरितां ᵛधमनिं शब्दं कुर्वाणां तां वाचं नितरां ᵛपप्रथन् अप्रथयन् ॥

इन्द्रो महां सिन्धुमाशयानं मायाविनं वृत्रमस्फुरन्निः ।
अरेजेतां रोदसी भियाने कनिक्रदतो वृष्णो अस्य वज्रात् ॥ ९ ॥

इन्द्रः । महाम् । सिन्धुम् । आऽशयानम् । मायाऽविनम् । वृत्रम् । अस्फुरत् । निः ।
अरेजेताम् । रोदसी इति । भियाने इति । कनिक्रदतः । वृष्णः । अस्य । वज्रात् ॥ ९ ॥

बलवान् ᵛइन्द्रो ᵛमहां महान्तं ᵛसिन्धुम् । स्यन्दते इतस्ततः संचरतीति सिन्धुर्मेघः । तम् ᵛआशयानं तमधिष्ठाय शयानं ᵛमायाविनं ᵛवृत्रम् असुरम् । यद्वा सिन्धुरुदकम् । तदधिष्ठाय शयानं वृत्रम् । वृणोत्याकाशमिति वृत्रो मेघः । तं ᵛनिः ᵛअस्फुरत् निरहन् । ᵛवृष्णः वर्षकस्य ᵛअस्य इन्द्रस्य ᵛकनिक्रदतः शब्दं कुर्वाणात् ᵛवज्रात् ᵛभियाने भयं प्राप्ते ᵛरोदसी द्यावापृथिव्यौ ᵛअरेजेताम् अकम्पेताम् ॥ ' दाधर्तिदर्धर्ति° ' इत्यादिना कनिक्रदत्शब्दो निपातितः ॥

अरोरवीद्वृष्णो अस्य वज्रोऽमानुषं यन्मानुषो निजूर्वात् ।
नि मायिनो दानवस्य माया अपादयत्पपिवान्त्सुतस्य ॥ १० ॥

अरोरवीत् । वृष्णः । अस्य । वज्रः । अमानुषम् । यत् । मानुषः । निऽजूर्वात् ।
नि । मायिनः । दानवस्य । मायाः । अपादयत् । पपिऽवान् । सुतस्य ॥ १० ॥

ᵛवृष्णः कामानां वर्षकस्य ᵛअस्य इन्द्रस्य ᵛवज्रः ᵛअरोरवीत् भृशं शब्दमकरोत् । कदेत्यपेक्षायामाह । ᵛयत् यदा ᵛअमानुषं मनुष्याणां रहितम् । यद्वा मानुषोऽहं न भवामीत्येवं मन्यमानं तमसुरं ᵛमानुषः मनुष्याणां हितकारी यद्वा मतिमानिन्द्रः ᵛनिजूर्वात् नितरां हिंस्यात् जिघांसतीत्यर्थः ॥ जूर्वतेर्हिंसाकर्मणो लेटि रूपम् ॥ ᵛसुतस्य अभिषुतं सोमं ᵛपपिवान् पीतवान् ᵛमायिनः मायाविनः

<sup>v</sup>दानवस्य। दानुर्नाम वृत्रमाता, 'दानुः शये' इत्यादिषु दृष्टत्वात्। तस्याः पुत्रस्य वृत्रस्य <sup>v</sup>मायाः वञ्चनानि[1] <sup>v</sup>नि <sup>v</sup>अपादयत् न्यपातयत् बबाधेति यावत्॥ ॥ ४॥

पिबापिबेदिन्द्र शूर सोमं मन्दन्तु त्वा मन्दिनः सुतासः।
पृणन्तस्ते कुक्षी वर्धयन्त्वित्था सुतः पौर इन्द्रमाव॥ ११॥

पिबऽपिब। इत्। इन्द्र। शूर। सोमम्। मन्दन्तु। त्वा। मन्दिनः। सुतासः।
पृणन्तः। ते। कुक्षी इति। वर्धयन्तु। इत्था। सुतः। पौरः। इन्द्रम्। आव॥ ११॥

<sup>v</sup>शूर बलवन् हे <sup>v</sup>इन्द्र <sup>v</sup>पिबपिबेत्[2] अभिषुतमिमं <sup>v</sup>सोमं पिबैव। आदरार्थैषा वीप्सा। <sup>v</sup>मन्दिनः मदकराः सुतास्तेऽभिषुताः सोमाः <sup>v</sup>त्वा <sup>v</sup>मन्दन्तु त्वां मादयन्तु॥ मदि स्तुत्यादिषु। व्यत्ययेन परस्मैपदम्॥ ते सोमाः <sup>v</sup>ते तव <sup>v</sup>कुक्षी उदरस्योभौ पार्श्वौ <sup>v</sup>पृणन्तः पूरयन्तः सन्तस्त्वां <sup>v</sup>वर्धयन्तु। <sup>v</sup>इत्था अनेन प्रकारेण <sup>v</sup>पौरः उदरपूरकः <sup>v</sup>सुतः अभिषुतः सोमः <sup>v</sup>इन्द्रं त्वाम् <sup>v</sup>आव तर्पयतु॥ अवतेस्तर्पणार्थस्य लिटि[3] रूपम्॥

त्वे इन्द्राप्यभूम विप्रा धियं वनेम ऋतया सपन्तः।
अवस्यवो धीमहि प्रशस्तिं सद्यस्ते रायो दावने स्याम॥ १२॥

त्वे इति। इन्द्र। अपि। अभूम। विप्राः। धियम्। वनेम। ऋतऽया। सपन्तः।
अवस्यवः। धीमहि। प्रऽशस्तिम्। सद्यः। ते। रायः। दावने। स्याम॥ १२॥

हे <sup>v</sup>इन्द्र <sup>v</sup>विप्राः मेधाविनो वयं <sup>v</sup>त्वे त्वयि त्वद्धृदये <sup>v</sup>अभूम। अपि सानुनयप्रश्ने वर्तते। ते तव हृदये किं वर्तामहे इति। <sup>v</sup>ऋतया। ऋतं कर्मफलम्। तत्कामनया <sup>v</sup>सपन्तः त्वां परिचरणाख्येन कर्मणा स्पृशन्तो वयं <sup>v</sup>धियं त्वदुद्देशेन क्रियमाणं कर्म <sup>v</sup>वनेम संभजेमहि॥ 'वन षण संभक्तौ'। आशीर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः॥ किंच <sup>v</sup>अवस्यवः त्वत्तो रक्षणमिच्छन्तः <sup>v</sup>प्रशस्तिम्। शस्तिः शंसनम्। प्रकृष्टं[4] शंसनं[4] स्तोत्रं <sup>v</sup>धीमहि त्वयि निदधीमहि। ततः <sup>v</sup>ते त्वदीयस्य <sup>v</sup>रायः धनस्य <sup>v</sup>दावने दानाय पात्रभूताः[5] <sup>v</sup>सद्यः <sup>v</sup>स्याम इदानीं भवेम॥

स्याम ते त इन्द्र ये त ऊती अवस्यव ऊर्जं वर्धयन्तः।
शुष्मिन्तमं यं चाकनाम देवास्मे रयिं रासि वीरवन्तम्॥ १३॥

स्याम। ते। ते। इन्द्र। ये। ते। ऊती। अवस्यवः। ऊर्जम्। वर्धयन्तः।
शुष्मिन्ऽतमम्। यम्। चाकनाम। देव। अस्मे इति। रयिम्। रासि। वीरऽवन्तम्॥ १३॥

---

१. क-ख-ग-च-झ-ण१-न-म-व- वचनानि। २. झ१-पिबपिब। ३. ख-ग-ण-त-थ-म-लङि।
४. ख-ग-ण१-प्रकृष्टशंसनम्; च-प्रकृष्टशसनम्। ५. क-झ-म-पात्रीभूताः।

हे इन्द्र ते तव ऊती ऊत्या प्रणयनेन ॥ अवतेः प्राप्त्यर्थस्य क्तिनि रूपम् ॥ ये[1] ते तव[1] अवस्यवः रक्षाकामाः ऊर्जं हविर्लक्षणमन्नं वर्धयन्तः भवन्ति ते[2] तव वयं ते[2] स्याम त्वदधीना भवेम । देव द्योतमान हे इन्द्र शुष्मिन्तमं दानभोगायार्हतया[3] बलवत्तमं यद्वा शत्रूणां शोषयितृतमं यं रयिं चाकनाम कामयामहे ॥ कनतेः कान्त्यर्थस्य यङ्लुगन्तस्य लोटि रूपम् ॥ वीरवन्तं पुत्रपौत्रैः सहितं तादृशं रयिं अस्मे अस्मभ्यं रासि देहि ॥

रासि क्षयं रासि मित्रमस्मे रासि शर्ध इन्द्र मारुतं नः ।
सजोषसो ये च मन्दसानाः प्र वायवः पान्त्यग्रणीतिम् ॥ १४ ॥

रासि । क्षयम् । रासि । मित्रम् । अस्मे इति । रासि । शर्धः । इन्द्र । मारुतम् । नः ।
सऽजोषसः । ये । च । मन्दसानाः । प्र । वायवः । पान्ति । अग्रऽनीतिम् ॥ १४ ॥

हे इन्द्र क्षयम् । क्षियन्ति निवसन्त्यत्रेति क्षयो गृहम् । तदस्मभ्यं रासि देहि । तथा मित्रं सखायम् अस्मे अस्मभ्यं रासि ॥ वाक्यभेदादनिघातः ॥ मारुतं मरुतां देवविशां संबन्धि शर्धः बलं नः अस्मभ्यं रासि । एतेन मरुतामप्यागमनं प्रार्थ्यते । ये मरुतः सजोषसः सह प्रीयमाणाः मन्दसानाः[4] मोदमानाः वायवः यज्ञं प्रति गन्तारः सन्तः अग्रणीतिम् अग्रे नीयमानं सोमं प्र पान्ति प्रकर्षेण पिबन्ति तेषां शर्ध इति समन्वयः । यद्वा ये च वायवः अग्रे नीयमानं सोमं पिबन्ति तेषां वायूनां बलं रासि ॥ वायवः इति पूजायां बहुवचनम् । वायुर्हि सोमस्याग्रपातेति ॥

व्यन्त्विन्नु येषु मन्दसानस्तृपत्सोमं पाहि द्रह्यदिन्द्र ।
अस्मान्त्सु पृत्स्वा तरुत्रावर्धयो द्यां बृहद्भिरर्कैः ॥ १५ ॥

व्यन्तु । इत् । नु । येषु । मन्दसानः । तृपत् । सोमम् । पाहि । द्रह्यत् । इन्द्र ।
अस्मान् । सु । पृत्ऽसु । आ । तरुत्र । अवर्धयः । द्याम् । बृहत्ऽभिः । अर्कैः ॥ १५ ॥

हे इन्द्र येषु तव सहायभूतेषु मरुत्सु मन्दसानः माद्यन् भवसि ते मरुतः नु क्षिप्रं व्यन्तु सोमं भक्षयन्तु । इत् एवार्थे[5] । द्रह्यत् ॥ दृंहतेरिदं रूपम् ॥ आत्मानं दृढीकुर्वन् त्वं तृपत् तर्पयन्तमिमं सोमं पाहि पिब । तरुत्र शत्रूणां हिंसक हे इन्द्र बृहद्भिः बलवद्भिः अर्कैः अर्चनीयैर्मरुद्भिः सहितस्त्वम् । आ इति चार्थे । तेन अस्मान् द्यां च सु सुष्ठु पृत्सु पशुपुत्रादिभिः[6] अस्मान् अस्मत्पालनेन[7] च दिवम् अवर्धयः । यद्वा येषु सोमेषु मन्दसानो मोदमानो भवसि ते सोमा व्यन्तु त्वां गच्छन्तु । शेषं पूर्ववत् ॥ ॥ ५ ॥

---

१. ख-ग–तेन; झ१-ण-त-थ-न-व–ते तव । २. म–तव ते । ३. ख-ग-च-ण-ण१–दानभागायार्हतया; झ१–दानाय भोगाय वार्हतया; थ-न–दानाभागायार्हतया । ४. ख-ग-च-ण-ण१-थ-न–मदन्तः; झ१–मन्दसानाः मदन्तः । ५. ख-ग-ण-त–इवार्थे; झ१–चार्थे; थ–वार्थे । ६. क-झ–पशुपुरोडाशादिभिः; म–पुरोडाशादिभिः । ७. क-च-झ-ण१-त-थ-न-व–पालनेन; ख-ग-ण–अस्मान् पालनेन; झ१–सोमपानेन; म–पालयते न ।

बृहन्त इन्नु ये ते तरुत्रोक्थेभिर्वा सुम्नमाविवासान् ।
स्तृणानासो बर्हिः पस्त्यावत्त्वोता इदिन्द्र वाजमग्मन् ॥ १६ ॥

बृहन्तः । इत् । नु । ये । ते । तरुत्र । उक्थेभिः । वा । सुम्नम् । आऽविवासान् ।
स्तृणानासः । बर्हिः । पस्त्यऽवत् । त्वाऽऊताः । इत् । इन्द्र । वाजम् । अग्मन् ॥ १६ ॥

तरुत्र आपद्भ्यस्तारक[1] हे इन्द्र ये पुमांसः सुम्नं सुखकरं त्वामुक्थैः शस्त्रैः आविवासान् परिचरेयुः ॥ विवासतेर्लेटि अडागमः ॥ ते तव पुमांसः नु क्षिप्रमविलम्बेन बृहन्तः महान्तो भवन्ति । वेति[2] पूरणः । किंच बर्हिः स्तृणानासः वेद्यां बर्हिराच्छादयन्तो ये त्वां परिचरन्ति ते त्वोता इत् त्वया रक्षिताः सन्त एव पस्त्यावत् गृहसहितं वाजम् अन्नम् अग्मन् गच्छन्ति ॥

उग्रेष्विन्नु शूर मन्दसानस्त्रिकद्रुकेषु पाहि सोममिन्द्र ।
प्रदोधुवच्छ्मश्रुषु प्रीणानो याहि हरिभ्यां सुतस्य पीतिम् ॥ १७ ॥

उग्रेषु । इत् । नु । शूर । मन्दसानः । त्रिऽकद्रुकेषु । पाहि । सोमम् । इन्द्र ।
प्रऽदोधुवत् । श्मश्रुषु । प्रीणानः । याहि । हरिऽभ्याम् । सुतस्य । पीतिम् ॥ १७ ॥

हे शूर बलवन् इन्द्र उग्रेषु उद्गूर्णेषु बहुस्तोत्रशस्त्रवत्सु त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकेष्वाभिप्लविकेष्वहःसु मन्दसानः हृष्यन् सोमं पाहि पिब । ततः प्रीणानः सोमपानेन प्रीतो भवन् श्मश्रुषु लिप्तं सोमं प्रदोधुवत् ॥ 'धूञ् कम्पने' । यङ्लुगन्तस्य शतरि रूपम् ॥ पुनःपुनर्धुन्वन् सुतस्य अभिषुतस्य पीतिं पानमुद्दिश्य हरिभ्यां अश्वाभ्याम् युक्तः सन् याहि गच्छ ॥

धिष्वा शवः शूर येन वृत्रमवाभिनद्दानुमौर्णवाभम् ।
अपावृणोर्ज्योतिरार्याय नि सव्यतः सादि दस्युरिन्द्र ॥ १८ ॥

धिष्व । शवः । शूर । येन । वृत्रम् । अवऽअभिनत् । दानुम् । और्णऽवाभम् ।
अप । अवृणोः । ज्योतिः । आर्याय । नि । सव्यतः । सादि । दस्युः । इन्द्र ॥ १८ ॥

शूर हे इन्द्र शवः तादृशं बलं धिष्व धारय ॥ दधातेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति थास आर्धधातुकत्वात् इडागमः ॥ येन बलेन दानुं दानोः[3] पुत्रं वृत्रम् और्णवाभम् । ऊर्णवाभिः[4] कीटविशेषः और्णवाभः इत्युच्यते । तमिव अवाभिनत् बिभेदिथ । यद्वा और्णः[5] ऊर्णनाभिः । तदाभं तत्सदृशमित्यर्थः । ततस्तमोरूपस्य हननात् आर्याय कर्मणाम्

१. ख-ण-त-थ—आपद्भिस्तारक; ग—तारक । २. झ१—इदिति; ३. क-ख-ग-च-झ१-ण१—दनोः ।
४. ख—ऊर्णनाभः; ग—कूर्णनाभिः; ण-त-थ—कुम्भनाभिः । ५. म—और्णवः ।

अनुष्ठात्रे जनाय कुत्साय राजर्षये वा ज्योतिः प्रकाशकमादित्यम् अपावृणोः उद्घाटितवानसि। दस्युः कर्मणामुपक्षपयिता स वृत्रः सव्यतः तव सव्यपार्श्वे नि षादि त्वया नितरां सन्नो बाधितो वर्तते॥

सनेम ये त ऊतिभिस्तरन्तो विश्वाः स्पृध आर्येण दस्यून् ।
अस्मभ्यं तत्त्वाष्ट्रं विश्वरूपमरन्धयः साख्यस्य त्रिताय ॥ १९ ॥

सनेम । ये । ते । ऊतिऽभिः । तरन्तः । विश्वाः । स्पृधः । आर्येण । दस्यून् ।
अस्मभ्यम् । तत् । त्वाष्ट्रम् । विश्वऽरूपम् । अरन्धयः । साख्यस्य । त्रिताय ॥ १९ ॥

सनेम तान् पुरुषान् संभजेम ये ते तव ऊतिभिः पालनैः विश्वाः स्पृधः स्पर्धमानाः सर्वा विशः तरन्तः हिंसन्तः तथा आर्येण आर्यभावेन दस्यून् उपक्षपयितॄन् हिंसन्तो भवन्ति । तत् अस्मभ्यं वशमानय । किं तत् । तदाह । त्वाष्ट्रं त्वष्टुः सुतं विश्वरूपम् एतन्नामकमसुरम् अरन्धयः ॥ ‘ रध्यतिर्वशगमने ’॥ वशमानयः । यद्वा तमसुरमवधीः ॥ ‘ रध हिंसासंराद्ध्योः ’। ‘ रधिजभोरचि ’ इति नुम् ॥ इन्द्रस्त्वाष्ट्रमवधीदित्ययमर्थस्तैत्तिरीयके ‘ विश्वरूपो वै त्वाष्ट्रः ’ ( तै. सं. २. ५. १. १ ) इत्यत्र महता प्रबन्धेन प्रपञ्चितः । किंच साख्यस्य सखिभावस्यानुपालनाय त्रिताय महर्षये वशमानयः । यद्वा सनेम ते वयं प्रवृद्धा भवेम ये वयं तव रक्षाभिः स्पर्धमानाः प्रजा दस्यूंश्च तरन्तोऽतिक्रामन्तो भवेम ॥ सनेम इति वृद्ध्यर्थः आद्युदात्तः । ‘ यथा सनेम मित्रावरुणा सनन्तः ’ ( ऋ. सं. ७. ५२. १ ) इति । सकर्मकश्चेत् मध्योदात्तः । ‘ सनेम वाजं तव ’ ( ऋ. सं. ८. ६१. ४ ) इति ॥ तरन्तः । ‘ तॄ प्लवनतरणयोः ’। शतरि रूपम् । संज्ञावचनश्चेदन्तोदात्तः । यथा ‘ तरन्त इव मंहना ’ ( ऋ. सं. ५. ६१. १० ) इति ॥

अस्य सुवानस्य मन्दिनस्त्रितस्य न्यर्बुदं वावृधानो अस्तः ।
अवर्तयत्सूर्यो न चक्रं भिनद्वलमिन्द्रो अङ्गिरस्वान् ॥ २० ॥

अस्य । सुवानस्य । मन्दिनः । त्रितस्य । नि । अर्बुदम् । ववृधानः । अस्तरित्यस्तः ।
अवर्तयत् । सूर्यः । न । चक्रम् । भिनत् । वलम् । इन्द्रः । अङ्गिरस्वान् ॥ २० ॥

मन्दिनः अस्य मदकरमिमं सुवानस्य सुतवतः त्रितस्य तीर्णतमस्कस्य महर्षेरर्थं वावृधानः सोमेन वर्धमान इन्द्रः अर्बुदम् । अम्बूनि ददातीत्यर्बुदो मेघः । अनुस्वारस्य रेफश्छान्दसः । यद्वा नामैतत् । अर्बुदाख्यमसुरं नि अस्तः ॥ ‘ स्तॄ हिंसायाम् ’ इत्यस्य लङि तिपि ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । गुणे कृते हल्ङ्यादिना तिलोपः ॥ नितरामवधीत् । ‘ महान्तं चिदर्बुदं नि क्रमीः पदा ’ (ऋ. सं. १. ५१. ६) इत्यादिषु अर्बुदवधः[1] स्पष्टमुक्तः[1]। किंच अङ्गिरस्वान् अङ्गिरोभिः सहितः इन्द्रः अवर्तयत् असुरहननार्थं वज्रमभ्रामयत् । सूर्यो न । यथा सूर्यः चक्रं भ्रामयति

तद्वत् । यद्वा यस्मादसुराङ्गिया सूर्यः स्वकीयं रथचक्रं नावर्तयत्[1] । निषेधार्थीयोऽत्र नकारः । वर्तयितुं नाशकत् तं ᵛवलं पणीनां प्रभुमसुरं ᵛभिनत् वज्रेणाभिनत्[2] । यद्वा द्विचक्रो हि पूर्वं सूर्यस्य रथः । तस्य एकं चक्रमिन्द्रेणापहृतम् ॥ सूर्यं इति ' सुपां सुलुक्° ' इति षष्ठ्येकवचनस्य सुः ॥ सूर्यस्य संबन्ध्यपहृतं तदेकं चक्रमवर्तयत् । रक्षोहननार्थमभ्रामयत् । तेन चक्रेण वलमभिनच्च । नश्चार्थे ॥

अहर्गणेषु माध्यंदिनसवनेषु तायमानरूपेषु अच्छावाकस्य अहरहः शस्यसंज्ञकम् ' अभितष्टेव ' इति सूक्तम् । ' नूनं सा ते ' इत्येषा तस्यान्ते शंसनीया । सूत्रितं च–' नूनं सा त इत्यन्तमुत्तमम् ' ( आश्व. श्रौ. ७. ४ ) इति ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ २१ ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥२१॥

हे ᵛइन्द्र या ᵛदक्षिणा । दक्षमुत्साहनं करोतीति दक्षिणा । स्तोतृभ्यो देया ᵛते त्वत्संबन्धिनी ᵛमघोनी धनवती[3] ᵛजरित्रे[3] स्तोत्रे ᵛवरं श्रेष्ठमभिमतमर्थं ᵛनूनं ᵛप्रति ᵛदुहीयत् इदानीं प्रतिदोग्धि संपादयतीत्यर्थः । तादृशीं दक्षिणां ᵛस्तोतृभ्यः अस्मभ्यं ᵛशिक्ष प्रयच्छ । किंच ᵛभगः भजनीयस्त्वं ᵛमाति ᵛधक् ॥ दहेर्दानार्थस्य लुङि 'मन्त्रे घस°' इत्यादिना च्लेर्लुक् ॥ ᵛनः अस्मान् अतिक्रम्यान्येभ्यो दक्षिणां मा दाः । प्रथममस्मभ्यं दत्त्वा पश्चादन्येभ्यो दीयतामित्यर्थः । यद्वा नोऽस्माकं कामान् मा धक् मा धाक्षीः अपेक्षितफलदानेन पूरयेत्यर्थः । ᵛसुवीराः शोभनपुत्रपौत्राः सन्तो वयं ᵛविदथे अस्मिन्यज्ञे ᵛबृहत् प्रभूतं स्तोत्रं ᵛवदेम त्वामुद्दिश्य ब्रवाम । अत्र ' सा ते प्रतिदुग्धाम् ' इति प्रकृत्य ' वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा ' ( निरु. १. ७ ) इत्यन्तं निरुक्तमनुसंधेयम् ॥ ६ ॥ ॥ १ ॥

द्वितीयेऽनुवाके एकादश सूक्तानि । तत्र ' यो जातः ' इति पञ्चदशर्चं प्रथमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् ॥ संसवे निष्केवल्ये निविद्धानीयस्य पुरस्तात् ' यो जात एव ' इति सूक्तं[4] शंसेत्[4] । ' यदि पर्यायान् ' इति खण्डे सूत्रितं–' यो जात एवेति निष्केवल्ये ' (आश्व. श्रौ. ६. ६) इति । आभिप्लविके तृतीयेऽहनि निष्केवल्ये ' यो जात एव ' इति निविद्धानीयम् । सूत्रितं च– ' तृतीयस्य त्र्यर्यमा यो जात एवेति मध्यंदिनः[5] ' ( आश्व. श्रौ. ७.७ ) इति । विश्वजिति माध्यंदिनसवने मैत्रावरुणः स्वशस्त्रे प्राकृतात् सूक्तात्पूर्वं ' यो जातः' इति सामसूक्तं शंसेत् । ' विश्वजितोऽग्निं नरः ' इति खण्डे सूत्रितं– ' सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानि ' ( आश्व. श्रौ. ८. ७ ) इति । अग्निष्टुन्निष्केवल्ये[6] निविद्धानमिदम् । ' श्येनाजिराभ्याम् ' इति खण्डे सूत्रितं—' तिष्ठा हरी इति यो

१. ण-थ-म–आवर्तयत् । २. ण-थ–' वज्रेणाभिनत् ' नास्ति; ख-ग-म–तेन वज्रेणाभिनत् । ३. क–धनवती धनवते; झ-म-व–धनवती सा दक्षिणा धनवती धनवते । ४. क-ख-ग-झ-म-व–सूक्तं शंस्येत्; झ१–शंसत्; ण-थ-न–शंस्येत् । ५. च-झ१-ण१-थ–माध्यंदिनः; न-व–माध्यंदिने । ६. क-झ–अनिनि°; ख-ग-च-ण१–अतिषु नि°; झ१–आतिषु नि°; ण-थ-न–अनिषु नि°; त-व–अग्निषु नि°; म–अतिनि° ।

जात एवेति मध्यंदिनः[1] ' ( आश्व. श्रौ. ९. ७ ) इति । महाव्रते निष्केवल्ये ' यो जात एव ' इति सूक्तम् । ' ऊरू ' इति खण्डे सूत्रितं—' वने न वा यो न्यधायि चाकन् यो जात एव प्रथमो मनस्वान् ' ( ऐ. आ. ५. ३. १ ) इति । अत्रेतिहासो बृहद्देवतायामुक्तः–' संयुज्य तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः । अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ॥ तमिन्द्र इति मत्वा तु दैत्यौ भीमपराक्रमौ । धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः ॥ विदित्वा स तयोर्भावमृषिः पापं चिकीर्षतोः । यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत् '(बृहद्दे. ४.६६-६८) ॥ अन्ये त्वन्यथा वर्णयन्ति । पुरा किल इन्द्रादयो वैन्ययज्ञं समाजग्मुः । गृत्समदोऽपि तत्रागत्य सदस्यासीत् । दैत्याश्चेन्द्रजिघांसया तत्र समागमन् । तान् दृष्ट्वा निर्जगामेन्द्रो यज्ञाद्गृत्समदाकृतिः । स च गृत्समदो वैन्येन पूजितो यज्ञवाटान्निरगच्छत् । निर्गच्छन्तं तमृषिं दृष्ट्वा अयमेवेन्द्र इति मन्यमानास्तमसुराः परिवव्रुः । नाहमिन्द्रस्तुच्छः किंत्वेवंगुणोपेतः स इत्यनेन सूक्तेन तान् प्रत्युवाच ॥ अपरे त्वेवं कथयन्ति । गृत्समदस्य यज्ञे प्रविष्टमेकाकिनमिन्द्रं ज्ञात्वासुराः परिवव्रुः । स इन्द्रो गृत्समदरूपेण यज्ञवाटान्निर्गत्य स्वर्गं जगाम । ततोऽसुरा इन्द्रो विलम्बित इत्यन्तः प्रविश्य गृत्समदं दृष्ट्वा पूर्वमेव गृत्समदो गतः अयं त्विन्द्रोऽस्मद्भयात् गृत्समदरूपेणास्ते इति तं जगृहुः । स तान् नाहमिन्द्रोऽयमित्यनेन सूक्तेन प्रत्युवाच । अयमेवार्थो महाभारते प्रपञ्चितः ॥

**यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् ।**
**यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥**

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना । परिऽअभूषत् ।
यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् । नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ॥ १ ॥

गृत्समदो ब्रूते । जनासः जना हे असुराः यो जात एव जायमान एव[2] सन् प्रथमः देवानां प्रधानभूतः मनस्वान् मनस्विनामग्रगण्यः देवः द्योतमानः सन् क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् सर्वान् यागदेवान् पर्यभूषत् रक्षकत्वेन[3] पर्यग्रहीत् ॥ ' भूष अलंकारे ' । भूवादिः लङि रूपम् ॥ यद्वा सर्वानन्यान्देवान्पर्यभूषत् पर्यभवत् अत्यक्रामत् ॥ अस्मिन्[4] पक्षे भवतेर्व्यत्ययेन क्सः[4] । ' श्र्युकः किति ' इति इट्प्रतिषेधः ॥ यस्य इन्द्रस्य शुष्मात् शरीरात् बलात् रोदसी द्यावापृथिव्यौ अभ्यसेताम् अबिभीताम् ॥ ' भ्यस भये ' । अनुदात्तेत् । ' भ्यस भयवेपनयोः ' ( निरु. ३. २१ ) इति नैरुक्ताः ॥ अभ्यसेतामवेपेतां वा । तथा च मन्त्रान्तरम्–' इमे चित्तव मन्यवे वेपेते भियसा मही ' ( ऋ. सं. १. ८०. ११ ) इति । नृम्णस्य सेनालक्षणस्य बलस्य मह्ना महत्त्वेन युक्तः सः इन्द्रः नाहमिति ॥ अत्र निरुक्तं–'यो जायमान[5] एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा यस्य बलात् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता ' ( निरु. १०. १० ) इति ॥

---

१. च-झ१-ण१–माध्यंदिनः; थ-न-म-घ–माध्यंदिने । २. झ१-ण-त-थ-न-व–' एव ' नास्ति । ३. क-झ-ण-त-थ-न-म-व–रक्षत्वेन; झ१–रक्ष्यत्वेन । ४. ख-ग–अस्मिन्यज्ञे प्रवृत्तव्यत्ययेन क्यः; ण-त-थ–अस्मिन्यज्ञे प्रत्यये व्यत्ययेन क्सः; म–अस्मिन्यज्ञे पवतेर्व्यत्ययेन च सः । ५. ख-ग-च-ण-ण१-त-थ-न-व–जात ।

**यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान्प्रकुपिताँ अरम्णात् ।**
**यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात्स जनास इन्द्रः ॥ २ ॥**

यः । पृथिवीम् । व्यथमानाम् । अदृंहत् । यः । पर्वतान् । प्रऽकुपितान् । अरम्णात् ।
यः । अन्तरिक्षम् । विऽममे । वरीयः । यः । द्याम् । अस्तभ्नात् । सः । जनासः । इन्द्रः ॥२॥

हे जनाः यः इन्द्रः व्यथमानां चलन्तीं पृथिवीम् अदृंहत् शर्करादिभिर्दृढामकरोत् ॥ 'दृह दृहि वृद्धौ' ॥ यः च प्रकुपितान् इतस्ततश्चलितान् पक्षयुक्तान् पर्वतान् अरम्णात् नियमितवान् स्वे स्वे स्थाने स्थापितवान् ॥ अरम्णात् । 'रमु क्रीडायाम्'। अन्तर्भावितण्यर्थस्य व्यत्ययेन श्नाप्रत्ययः ॥ यः च वरीयः उरुतमम् अन्तरिक्षं विममे निर्ममे विस्तीर्णं चकारेत्यर्थः । यः च द्यां दिवम् अस्तभ्नात् तस्तम्भ[1] निरुद्धामकरोत्[1] ॥ 'स्तम्भु रोधने[2]' इति सौत्रो धातुः ॥ सः एव इन्द्रः नाहमिति ॥

**यो हत्वाहिमरिणात्सप्त सिन्धून्यो गा उदाजदपधा वलस्य ।**
**यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः ॥ ३ ॥**

यः । हत्वा । अहिम् । अरिणात् । सप्त । सिन्धून् । यः । गाः । उत्ऽआजत् । अपऽधा । वलस्य ।
यः । अश्मनोः । अन्तः । अग्निम् । जजान । सम्ऽवृक् । समत्ऽसु । सः । जनासः । इन्द्रः ॥३॥

यः अहिं मेघं हत्वा मेघहननं कृत्वा सप्त सर्पणशीलाः सिन्धून् स्यन्दनशीला अपः अरिणात् प्रैरयत् । यद्वा सप्त गङ्गायमुनाद्या मुख्या नदीररिणात् ॥ 'रीङ् स्रवणे[3]'। क्र्यादिः ॥ यः च वलस्य वलनामकस्यासुरस्य अपधा तत्कर्तृकान्निरोधान्निरुद्धाः गाः उदाजत् निरगमयत्॥ अपधा । अपपूर्वाद्धधातेः 'आतश्चोपसर्गे' ( पा. सू. ३. ३. १०६ ) इति भावे अङ्प्रत्ययः । 'सुपां सुलुक्°' इति पञ्चम्या आकारः ॥ यः च अश्मनोः । अश्नुते व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः । अत्यन्तमृदुरूपयोर्मेघयोः अन्तः मध्ये वैद्युतम् अग्निं जजान उत्पादयामास । यश्च समत्सु । संभक्षयन्ति योद्धॄणामायूंषीति समदः संग्रामाः । तेषु संवृक्[4] भवति ॥ वृणक्तेर्हिंसार्थस्य क्विपि रूपम् ॥ सः इन्द्रः नाहमिति ॥

**येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः ।**
**श्वघ्नीव यो जिगीवाँ लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥ ४ ॥**

येन । इमा । विश्वा । च्यवना । कृतानि । यः । दासम् । वर्णम् । अधरम् । गुहा । अकरित्यकः ।
श्वघ्नीऽइव । यः । जिगीवान् । लक्षम् । आदत् । अर्यः । पुष्टानि । सः । जनासः । इन्द्रः ॥ ४ ॥

---

१. ख-ग-च-झ-ण-ण१-त-थ-न-म-व—स्तम्भनिरुद्धामकरोत् । २. झ१-ण-थ-न-व—निरुद्धे । ३. च—प्रस्रवणे; ण ण१-त-थ-न-व—श्रवणे । ४. ख-ग-म—संवृक् । वृणक्ति हिनस्ति शत्रूनिति संवृणक् ।

ᵛयेन इन्द्रेण ᵛइमा इमानि ᵛविश्वा[1] ᵛच्यवना नश्वराणि भुवनानि ᵛकृतानि स्थिरीकृतानि । ᵛयः च ᵛदासं ᵛवर्णं शूद्रादिकम् । यद्वा दासमुपक्षपयितारम् । ᵛअधरं निकृष्टमसुरं ᵛगुहा गुहायां गूढस्थाने नरके वा ᵛअकः अकार्षीत् ॥ करोतेर्लुङि ' मन्त्रे घस° ' इत्यादिना च्लेर्लुकि रूपम् ॥ ᵛलक्षं लक्ष्यं ᵛजिगीवान् ॥ ' जि जये ' । क्वसौ ' सन्लिटोर्जेः ' इति अभ्यासादुत्तरस्य कुत्वम् । दीर्घश्छान्दसः ॥ जितवान् । ᵛयः ᵛअर्यः अरेः ॥ षष्ठ्येकवचने छान्दसो यणादेशः ॥ शत्रोः संबन्धीनि ᵛपुष्टानि समृद्धानि ᵛआदत् आदत्ते । तत्र दृष्टान्तः । ᵛश्वघ्नीव । श्वभिर्मृगान् हन्तीति श्वघ्नी व्याधः । यथा व्याधो जिघृक्षितं[2] मृगं परिगृह्णाति तद्वत् ॥

यं स्मा॑ पृ॒च्छन्ति कुह॒ सेति॑ घो॒रमु॒तेमा॑हु॒र्नैषो अ॒स्तीत्ये॑नम् ।
सो अ॒र्यः पु॒ष्टीर्विज॑इ॒वा मि॑नाति॒ श्रद॑स्मै धत्त॒ स ज॑नास॒ इन्द्रः॑ ॥ ५ ॥

यम् । स्म॒ । पृ॒च्छन्ति॑ । कुह॑ । सः । इति॑ । घो॒रम् ।
उ॒त । ई॒म् । आ॒हुः॒ । न । ए॒षः । अ॒स्ति॒ । इति॑ । ए॒न॒म् ।
सः । अ॒र्यः । पु॒ष्टीः । विजः॑ऽइव । आ । मि॒ना॒ति॒ ।
श्रत् । अ॒स्मै॒ । ध॒त्त॒ । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥ ५ ॥

अपश्यन्तो जनाः ᵛघोरं शत्रूणां घातकं ᵛयं ᵛपृच्छन्ति ᵛस्म ᵛकुह ᵛसेति । स इन्द्रः कुत्र वर्तते इति ॥ सेति । ' सोऽचि लोपे चेत्पादपूरणम् ' इति सोर्लोपे गुणः ॥ न क्वचिदसौ तिष्ठतीति मन्यमाना जनाः ᵛएनम् इन्द्रम् ᵛआहुः ᵛएषः इन्द्रः ᵛन ᵛअस्तीति । तथा च मन्त्रः[3]—' नेन्द्रो अस्तीति नेम उ त्व आह ' (ऋ. सं. ८. १००. ३ ) इति । ᵛईम् इति पूरणः । ᵛसः इन्द्रः ᵛविजइव । इवशब्द एवार्थे । उद्वेजक एव सन् ᵛअर्यः अरेः संबन्धीनि ᵛपुष्टीः पोषकाणि गवाश्वादीनि धनानि ᵛआ ᵛमिनाति सर्वतो हिनस्ति ॥ ' मीङ् हिंसायाम् ' । ' मीनातेर्निगमे ' इति ह्रस्वः ॥ तस्मात् ᵛश्रदस्मै इन्द्राय ᵛधत्त । स इन्द्रोऽस्तीति विश्वासमत्र कुरुत । यद्यप्यसौ विशेषतोऽस्माभिर्न दृश्यते तथापि अस्तीति विश्वासं कुरुत । एवं निर्धारणीयमहिमोपेतः[4] ᵛसः ᵛ इन्द्रः नाहमिति ॥ ॥ ७ ॥

यो र॒ध्रस्य॑ चोदि॒ता यः कृ॒शस्य॒ यो ब्र॒ह्मणो॒ नाध॑मानस्य की॒रेः ।
यु॒क्तग्रा॑व्णो॒ यो॑ऽवि॒ता सु॑शि॒प्रः सु॒तसो॑मस्य॒ स ज॑नास॒ इन्द्रः॑ ॥ ६ ॥

यः । र॒ध्रस्य॑ । चो॒दि॒ता । यः । कृ॒शस्य॑ । यः । ब्र॒ह्मणः॑ । नाध॑मानस्य । की॒रेः ।
यु॒क्तऽग्रा॑व्णः । यः । अ॒वि॒ता । सु॒ऽशि॒प्रः । सु॒तऽसो॑मस्य । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥ ६ ॥

---

१. ख-ग-ण१-फ—विश्वा विश्वानि; च—विश्वानि । २. ख-ग-च-झ१-ण१-फ—जिघृक्षन्तम् ; ण-त-थ-न-व—जिघृक्षतम् । ३. ख-ग-च-झ—मन्त्रैः; झ१-त-थ-व—मन्त्रे । ४. ख-ग-च-झ१ण-णं-१-थ-न-व—निर्धारणमहिमोपेतः ।

यो रध्रस्य ॥ ‘ रध हिंसासंराद्ध्योः ’ ॥ समृद्धस्य चोदिता धनानां प्रेरयिता भवति । यः[1] च कृशस्य च[1] दरिद्रस्य च यः च नाधमानस्य ॥ ‘ नाधृ णाधृ याच्ञोपतापैश्वर्याशीःषु ’॥ याचमानस्य कीरेः ॥ करोतेः कीर्तयतेर्वा ॥ स्तोतुः ब्रह्मणः ब्राह्मणस्य च धनानां प्रेरयिता । यः च सुशिप्रः शोभनहनुः सुशीर्षको वा सन् युक्तग्राव्णः अभिषवार्थमुद्यतग्राव्णः सुतसोमस्य अभिषुतसोमस्य यजमानस्य अविता रक्षिता भवति सः एव इन्द्रः नाहमिति । ब्रह्मशब्दस्य त्वन्नपरत्वे ह्याद्युदात्तता स्यात् यथा ‘ ब्रह्म वन्वानो अजरं सुवीरम् ’ ( ऋ. सं. ३. ८. २ ) इति । अयं त्वन्तोदात्तः पठ्यत इति नान्नपरः ॥

**यस्याश्वा॑सः प्र॒दिशि॒ यस्य॒ गावो॒ यस्य॒ ग्रामा॒ यस्य॒ विश्वे॒ रथा॑सः ।**

**यः सूर्यं॒ य उ॒षसं॒ ज॒जान॒ यो अ॒पां ने॒ता स जना॑स॒ इन्द्रः॑ ॥ ७ ॥**

यस्य॑ । अश्वा॑सः । प्र॒ऽदिशि॑ । यस्य॑ । गावः॑ । यस्य॑ । ग्रामाः॑ । यस्य॑ । विश्वे॑ । रथा॑सः ।

यः । सूर्य॑म् । यः । उ॒षस॑म् । ज॒जान॑ । यः । अ॒पाम् । ने॒ता । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥ ७ ॥

यस्य सर्वान्तर्यामितया वर्तमानस्य प्रदिशि प्रदेशनेऽनुशासने अश्वासः अश्वा वर्तन्ते । यस्य अनुशासने गावः । यस्य अनुशासने ग्रामाः । ग्रसन्तेऽत्रेति ग्रामा जनपदाः । यस्य आज्ञायां विश्वे सर्वे रथासः रथा वर्तन्ते । यः च वृत्रं हत्वा सूर्यं जजान जनयामास । यः च उषसम् । तथा मन्त्रः–‘ जजान सूर्यमुषसं सुदंसाः ’ ( ऋ. सं. ३. ३२. ८ ) इति । यः च मेघभेदनद्वारा अपां नेता प्रेरकः सः इन्द्रः इत्यादि प्रसिद्धम् ॥

**यं क्रन्द॑सी सं॒यती॑ वि॒ह्वये॑ते॒ परेऽव॑र उ॒भया॑ अ॒मित्राः॑ ।**

**स॒मा॒नं चि॒द्रथ॑मातस्थि॒वांसा॒ नाना॑ हवेते॒ स जना॑स॒ इन्द्रः॑ ॥ ८ ॥**

यम् । क्रन्द॑सी॒ इति॑ । सं॒यती॒ इति॑ स॒म्ऽय॒ती । वि॒ह्वये॑ते॒ इति॑ वि॒ऽह्वये॑ते ।

परे॑ । अव॑रे । उ॒भया॑ः । अ॒मित्राः॑ ।

स॒मा॒नम् । चि॒त् । रथ॑म् । आ॒त॒स्थि॒ऽवांसा॑ ।

नाना॑ । ह्वे॒ते॒ इति॑ । सः । ज॒ना॒सः॒ । इन्द्रः॑ ॥ ८ ॥

यं क्रन्दसी रोदसी शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने वा संयती परस्परं संगच्छन्त्यौ यमिन्द्रं विह्वयेते स्वरक्षार्थं विविधमाह्वयतः । परे उत्कृष्टाः अवरे अधमाश्च उभयाः उभयविधाः अमित्राः[2] शत्रवः यमाह्वयन्ति[2]। समानम् इन्द्ररथसदृशं रथम् आतस्थिवांसा आस्थितौ द्वौ रथिनौ तमेवेन्द्रं नाना पृथक् पृथक् हवेते आह्वयेते । यद्वा समानमेकरथमारूढाविन्द्राग्नी हवेते यज्ञार्थं यजमानैः पृथगाहूयेते तयोरन्यतरः सः इन्द्रः नाहमिति ॥

---

१. म–यः कृशस्य । २. ख-ग-च-ण-ण१-थ-न–उभयमाह्वयन्ति ; ञ१–उभयविधमाह्वयन्ति ।

यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते ।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत्स जनास इन्द्रः ॥ ९ ॥

यस्मात् । न । ऋते । विऽजयन्ते । जनासः । यम् । युध्यमानाः । अवसे । हवन्ते ।
यः । विश्वस्य । प्रतिऽमानम् । बभूव । यः । अच्युतऽच्युत् । सः । जनासः । इन्द्रः ॥ ९ ॥

यस्मात् ऋते जनासः जनाः न विजयन्ते विजयं न प्राप्नुवन्ति । अतः युध्यमानाः युद्धं कुर्वाणा जनाः अवसे स्वरक्षणाय यम् इन्द्रं हवन्ते आह्वयन्ति । यः च विश्वस्य सर्वस्य जगतः प्रतिमानं प्रतिनिधिः बभूव । यः च अच्युतच्युत् अच्युतानां क्षयरहितानां पर्वतादीनां च्यावयिता सः इन्द्रः इत्यादि प्रसिद्धम् ॥

यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान ।
यः शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः ॥ १० ॥

यः । शश्वतः । महि । एनः । दधानान् । अमन्यमानान् । शर्वा । जघान ।
यः । शर्धते । न । अनुऽददाति । शृध्याम् । यः । दस्योः । हन्ता । सः । जनासः । इन्द्रः ॥१०॥

यः महि महत् एनः पापं दधानान् शश्वतः बहून् अमन्यमानान् आत्मानमजानत इन्द्रमपूजयतो वा जनान् शर्वा । शृणाति शत्रूननेनेति शरुर्वज्रः । तेनायुधेन जघान ॥ हन्तेर्लिटि रूपम् ॥ यः च शर्धते उत्साहं कुर्वते अनात्मज्ञाय जनाय शृध्याम् उत्साहनीयं कर्म नानुददाति न प्रयच्छति ॥ अनुपूर्वात् 'डुदाञ् दाने' जौहोत्यादिकः । 'अभ्यस्तानामादिः' इति 'तिङि चोदात्तवति' इति गतेर्निघातः । यः च दस्योः उपक्षपयितुः शत्रोः हन्ता घातकः सः इन्द्रः इत्यादि पूर्ववत् ॥ ॥ ८ ॥

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् ।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥ ११ ॥

यः । शम्बरम् । पर्वतेषु । क्षियन्तम् । चत्वारिंश्याम् । शरदि । अनुऽअविन्दत् ।
ओजायमानम् । यः । अहिम् । जघान । दानुम् । शयानम् । सः । जनासः । इन्द्रः ॥ ११ ॥

यः पर्वतेषु क्षियन्तम् इन्द्रभिया बहून् संवत्सरान् प्रच्छन्नो भूत्वा पर्वतगुहासु निवसन्तं शम्बरम् एतन्नामकं मायाविनमसुरं चत्वारिंश्यां शरदि चत्वारिंशे संवत्सरे अन्वविन्दत् अन्विष्यालभत । लब्ध्वा च यः ओजायमानम् ॥ 'कर्तुः क्यङ् सलोपश्च', 'ओजसोऽप्सरसो नित्यम्' ( पा. सू. ३. १. ११. २ ) इति सकारलोपः ॥ बलमाचरन्तम् अहिम् आहन्तारं दानुं दानवं शयानं शम्बरमसुरं जघान हतवान् सः इन्द्रः नाहमिति ॥

यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥

यः । सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे । सप्त । सिन्धून् ।
यः । रौहिणम् । अस्फुरत् । वज्रऽबाहुः । द्याम् । आऽरोहन्तम् । सः । जनासः । इन्द्रः ॥ १२ ॥

यः सप्तरश्मिः सप्तसंख्याकाः पर्जन्या रश्मयो यस्य । ते च रश्मयः[1] 'वराहवः स्वतपसो विद्युन्महसो धूपयः श्वापयो गृहमेधाश्चेत्येते ये चेमेऽशिमिविद्विषः पर्जन्याः सप्त पृथिवीमभिवर्षन्ति वृष्टिभिः' ( तै. आ. १. ९. ४-५ ) इति तैत्तिरीयारण्यके ह्याम्नाताः । वृषभः वर्षकः तुविष्मान् वृद्धिमान् बलवान् वा सप्त सर्पणस्वभावान् सिन्धून् अपः[2] सर्तवे सरणाय अवासृजत् अवसृष्टवान् । यद्वा गङ्गाद्याः सप्त मुख्या नदीरसृजत् । यः च वज्रबाहुः सन् द्यां दिवम् आरोहन्तं रौहिणम् असुरम् अस्फुरत् जघान ॥ 'स्फुर स्फुरणे' । तुदादिः ॥

द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥ १३ ॥

द्यावा । चित् । अस्मै । पृथिवी इति । नमेते इति । शुष्मात् । चित् । अस्य । पर्वताः । भयन्ते ।
यः । सोमऽपाः । निऽचितः । वज्रऽबाहुः । यः । वज्रऽहस्तः । सः । जनासः । इन्द्रः ॥ १३ ॥

अस्मै इन्द्राय द्यावा पृथिवी ॥ इतरेतरापेक्षया द्विवचनं 'प्र मित्रयोर्वरुणयोः' ( ऋ. सं. ७. ६६. १ ) इतिवत् ॥ नमेते स्वयमेव प्रह्वीभवतः ॥ 'णमु प्रह्वत्वे' । कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' इति यकः प्रतिषेधः ॥ चित् अपि च अस्य इन्द्रस्य शुष्मात् बलात् पर्वताः भयन्ते बिभ्यति । यः सोमपाः सोमस्य पाता निचितः सर्वैः । यद्वा अन्येभ्योऽपि देवेभ्यो दृढाङ्गः । वज्रबाहुः वज्रसदृशबाहुः । यः च वज्रहस्तः वज्रयुक्तः सः इन्द्रः इत्यादि प्रसिद्धम् ॥

यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती ।
यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ॥ १४ ॥

यः । सुन्वन्तम् । अवति । यः । पचन्तम् । यः । शंसन्तम् । यः । शशमानम् । ऊती ।
यस्य । ब्रह्म । वर्धनम् । यस्य । सोमः । यस्य । इदम् । राधः । सः । जनासः । इन्द्रः ॥ १४ ॥

यः सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानम् अवति रक्षति । यः च पुरोडाशादीनि हवींषि पचन्तं यः च ऊती ऊतये ॥ 'सुपां सुलुक्°' इति चतुर्थ्याः पूर्वसवर्णदीर्घः । स्वरक्षायै शस्त्राणि

---

१. झ-म—सप्तरश्मयः । २. थ—यः ।

vशंसन्तं vयः च vशशमानम् अवति स्तोत्रं कुर्वाणं रक्षति । vब्रह्म परिवृढं स्तोत्रं vयस्य vवर्धनं वृद्धिकरं भवति । तथा vयस्य vसोमः वृद्धिहेतुर्भवति । vयस्य च vइदम् अस्मदीयं vराधः पुरोडाशादिलक्षणमन्नं वृद्धिकरं भवति । vसः vइन्द्रः इत्यादि प्रसिद्धम् ॥

यः सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः ।
वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥ १५ ॥

यः । सुन्वते । पचते । दुध्रः । आ । चित् । वाजम् । दर्दर्षि । सः । किल । असि । सत्यः ।
वयम् । ते । इन्द्र । विश्वह । प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥ १५ ॥

इदानीमृषिः साक्षात्कृतमिन्द्रं प्रति ब्रूते[1] । हे vइन्द्र vयः vदुध्रः दुर्धरः सन् vसुन्वते सोमाभिषवं कुर्वते पुरोडाशादिहवींषि vपचते यजमानाय vवाजम् अन्नं बलं वा vआ vदर्दर्षि भृशं प्रापयसि vसः तादृशस्त्वं vसत्यः यथार्थभूतः vअसि न पुनर्नास्तीति बुद्धियोग्योऽसि । vकिल इति प्रसिद्धौ । vते तव vप्रियासः vसुवीरासः कल्याणपुत्रपौत्राः सन्तः vवयं vविश्वह सर्वेष्वहःसु vविदथं स्तोत्रम् vआ vवदेम ब्रूयाम ॥ ॥ ९ ॥

'ऋतुर्जनित्री' इति त्रयोदशर्चं द्वितीयं सूक्तं गार्त्समदम् । 'ऋतुः सप्तोनान्त्या त्रिष्टुप्' इत्यनुक्रमणिका । 'अस्मभ्यं तद्वसो' इति त्रयोदशी त्रिष्टुप् । शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । इन्द्रो देवता । उक्थ्ये तृतीयसवने अच्छावाकशस्त्रेऽस्य सूक्तस्य विनियोगः । सूत्रितं च–'ऋतुर्जनित्री नू मर्तो भवा मित्रः' (आश्व. श्रौ. ६. १) इति । दशरात्रे षष्ठेऽहन्यपि तृतीयसवने अच्छावाकशस्त्रे एतत्सूक्तम् । 'ऋतुर्जनित्रीति नित्यान्यैकाहिकानि' (आश्व. श्रौ. ८. ४) इति सूत्रितम् ॥

ऋतुर्जनित्री तस्या अपस्परि मक्षू जात आविशद्यासु वर्धते ।
तदाहना अभवत्पिप्युषी पयोंऽशोः पीयूषं प्रथमं तदुक्थ्यम् ॥ १ ॥

ऋतुः । जनित्री । तस्याः । अपः । परि । मक्षु । जातः । आ । अविशत् । यासु । वर्धते ।
तत् । आहनाः । अभवत् । पिप्युषी । पयः । अंशोः । पीयूषम् । प्रथमम् । तत् । उक्थ्यम् ॥ १ ॥

vऋतुः वर्षाख्यः कालः vजनित्री सोमस्य जनयित्री जननी भवति । vतस्याः vपरि तस्या जनन्याः सकाशात् vजातः सोमः vअपः उदकानि vमक्षु शीघ्रम् vआविशत् । vयासु अप्सु सोमः vवर्धते ता अविशदित्यन्वयः । तस्मादप्सु प्रविष्टत्वात् सोमः vआहनाः आहन्तव्योऽभिषोतव्यो भवति । आहनाः इति सकारान्तमिदं पदम् । तथा च मन्त्रवर्णः–'ये ते मदा आहनसो विहायसः' ( ऋ. सं. ९. ७५. ५ ) इति । या च अंशुरूपा सोमलता vपयः सारभूतं vपिप्युषी वर्धयन्ती vअभवत् ॥ प्यायतेर्लिटि क्वसौ 'लिड्यङोश्च' इति पीभावः । वसोः संप्रसारणम् । 'उगितश्च' इति ङीप् ॥ vअंशोः तस्याः सोमलतायाः vपीयूषं रसभूतं पयः vउक्थ्यं प्रशस्यं हविरिन्द्रस्य भवति ॥

१. ख-ग-च-ण१-थ-व–प्रति प्रब्रूते ।

सध्रीमा यन्ति परि बिभ्रतीः पयो विश्वप्स्न्याय प्र भरन्त भोजनम् ।
समानो अध्वा प्रवतामनुष्यदे यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥ २ ॥

सध्री । ईम् । आ । यन्ति । परि । बिभ्रतीः । पयः । विश्वऽप्स्न्याय । प्र । भरन्त । भोजनम् ।
समानः । अध्वा । प्रऽवताम् । अनुऽस्यदे । यः । ता । अकृणोः । प्रथमम् । सः । असि । उक्थ्यः ॥ २ ॥

vसध्री । अञ्चतेर्लुक् छान्दसः । 'सहस्य सध्रिः' इति सध्र्यादेशोऽन्तोदात्तत्वेन निपातितः । सध्रीचीनाः vपयः उदकं vपरि परितः vबिभ्रतीः बिभ्राणाः vईम् एता नद्यः vआ vयन्ति सर्वतो गच्छन्ति । ता नद्यः vविश्वप्स्न्याय विश्वासामपाम् आश्रयभूताय[1] समुद्राय vभोजनम् । भुज्यते इति भोजनं पयः । vप्र vभरन्त प्रकर्षेण संपादयन्ति । कुत एतत् तदाह । vप्रवतां प्रवणवतां निम्नगानां पयसाम् vअनुष्यदे ॥ 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति केन्प्रत्ययः ॥ अनुष्यन्दनीयः vअध्वा मार्गः vसमानः एको हि । vयस्ता तानि सोमोत्पादननदीप्रवर्तनादीनि कर्माणि vप्रथमं पूर्वम् vअकृणोः अकरोः । vसः तादृङ्महिमोपेतस्त्वम् vउक्थ्यः vअसि सर्वैः प्रशस्यो भवसि ॥

अन्वेको वदति यद्ददाति तद्रूपा मिनन्तदपा एक ईयते ।
विश्वा एकस्य विनुदस्तितिक्षते यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥ ३ ॥

अनु । एकः । वदति । यत् । ददाति । तत् । रूपा । मिनन् । तत्ऽअपाः । एकः । ईयते ।
विश्वाः । एकस्य । विऽनुदः । तितिक्षते । यः । ता । अकृणोः । प्रथमम् । सः । असि । उक्थ्यः ॥ ३ ॥

यजमानः vयत् हविः देवेभ्यः vददाति vतत् vएकः होता vअनु vवदति । याज्यापुरोनुवाक्याभ्यां देवताः स्मारयति । vएकः अध्वर्युः vरूपा पश्वादीनां रूपाणि vमिनन् हिंसन् vतदपाः तत् विशसनाख्यम् अपः कर्म यस्य तादृशः सन् vईयते देवयजने सर्वत्र गच्छति । vएकस्य अध्वर्योः vविश्वाः vविनुदः सर्वाणि तत्कर्तृकाणि विक्षेपणरूपाणि कर्मवैगुण्यानि vतितिक्षते । तद्योग्यप्रायश्चित्तकरणेन ब्रह्मा सहते ॥ गुपिज्किद्भ्यः सन् क्षमायामिष्यते ॥ तानि हविष्प्रदानादीनि कर्माणि vयः त्वम् vअकृणोः अकारयः vसः त्वम् vउक्थ्यः vअसि ॥

प्रजाभ्यः पुष्टिं विभजन्त आसते रयिमिव पृष्ठं प्रभवन्तमायते ।
असिन्वन्दंष्ट्रैः पितुरत्ति भोजनं यस्ताकृणोः प्रथमं सास्युक्थ्यः ॥ ४ ॥

प्रऽजाभ्यः । पुष्टिम् । विऽभजन्तः । आसते । रयिम्ऽइव । पृष्ठम् । प्रऽभवन्तम् । आऽयते ।
असिन्वन् । दंष्ट्रैः । पितुः । अत्ति । भोजनम् ।
यः । ता । अकृणोः । प्रथमम् । सः । असि । उक्थ्यः ॥ ४ ॥

---

१. म–आलयभूताय ।

हे इन्द्र पुष्टिं त्वया दत्तं पोषकं धनं स्वकीयाभ्यः प्रजाभ्यः विभजन्तः अस्यैतावदस्यैतावदिति[1] विभागं कुर्वन्तो गृहमेधिनः आसते स्वस्वगृहेषु निवसन्ति । तत्र दृष्टान्तः । आयते गृहं प्रत्यागच्छतेऽतिथये पृष्ठं धारकं प्रभवन्तं बहुभरणसमर्थं रयिं धनं यथा विभज्य प्रयच्छन्ति तद्वत् । असिन्वन् सेतुबन्धादिकं कर्म कुर्वन् लोकः पितुः पालयित्र्या दिवः सकाशादागतं भोजनम् उदकं तत्कार्या ओषधीः दंष्ट्रैः दन्तैः अत्ति भक्षयति । यद्वा असिन्वन् अव्याप्रियमाणोऽग्निः पितुः पालकस्य यजमानस्य संबन्धि भोजनं हविर्लक्षणमन्नं दंष्ट्रैर्दन्तरूपैर्ज्वालैरत्ति । यस्ताकृणोः इत्यादि सिद्धम्[2] ॥

अधाकृणोः पृथिवीं संदृशे दिवे यो धौतीनामहिहन्नारिणक्पथः ।
तं त्वा स्तोमेभिरुदभिर्न वाजिनं देवं देवा अजनन्त्सास्युक्थ्यः ॥ ५ ॥

अध । अकृणोः । पृथिवीम् । सम्ऽदृशे । दिवे । यः । धौतीनाम् । अहिऽहन् । अरिणक् । पथः ।
तम् । त्वा । स्तोमेभिः । उदऽभिः । न । वाजिनम् ।
देवम् । देवाः । अजनन् । सः । असि । उक्थ्यः ॥ ५ ॥

हे इन्द्र अध अपि च त्वं दिवे द्योतमानाय सूर्याय पृथिवीं चलितां सतीं दृढीकृत्य संदृशे संदर्शनीयाम् अकृणोः अकरोः ॥ ' दृशे विख्ये च ' इति केन्प्रत्ययान्तत्वेन निपातितः ॥ यः च त्वं धौतीनां चलन्तीनां नदीनां पथः मार्गान् अरिणक् व्यरेचयः[3] । गन्तुं योग्यानकरोरित्यर्थः ॥ ' रिचिर् विरेचने ' । लङि सिप् । तस्य हल्ङ्यादिना लोपः ॥ अहिहन् अहेर्वृत्रस्य मेघस्य वा हन्तर्हे इन्द्र देवाः स्तोतारः तं तादृशं देवं त्वां स्तोमेभिः स्तोत्रैः अजनन् अवर्धयन् । तत्र दृष्टान्तः । उदभिर्न वाजिनम् । यथा वाजिनमश्वमुदभिरुदकैर्वर्धयन्ति तद्वत् ॥ ' पद्दन्नोमास्° ' इत्यादिना उदकस्य उदन्भावः ॥ शेषं सिद्धम् ॥  ॥ १० ॥

यो भोजनं च दयसे च वर्धनमार्द्रादा शुष्कं मधुमद्दुदोहिथ ।
सः शेवधिं नि दधिषे विवस्वति विश्वस्यैक ईशिषे सास्युक्थ्यः ॥ ६ ॥

यः । भोजनम् । च । दयसे । च । वर्धनम् । आर्द्रात् । आ । शुष्कम् । मधुऽमत् । दुदोहिथ ।
सः । शेवऽधिम् । नि । दधिषे । विवस्वति । विश्वस्य । एकः । ईशिषे । सः । असि । उक्थ्यः ॥६॥

हे इन्द्र यः त्वं भोजनम् । भुज्यते इति भोजनमन्नादि । च दयसे यजमानेभ्यः प्रयच्छसि ॥ ' दय दानगतिरक्षणहिंसाग्रहणेषु ' । आत्मनेपदी ॥ किंच वर्धनं वृद्धिकरं धनं बलं वा दयसे । तथा आर्द्रात् काण्डात्[4] शुष्कम् अनार्द्रं व्रीह्यादिकं मधुमत् मधुररसोपेतं[5] दुदोहिथ दुग्धवानसि ॥ दुहेर्लिटि क्रादिनियमादिडागमः ॥ सः तादृशस्त्वं विवस्वति ते परिचरणं कुर्वाणे यजमाने शेवधिं धनसदनं नि दधिषे निदधासि । किं बहुना । विश्वस्य सर्वस्य जगतः एकः अद्वितीय एव सन् ईशिषे स्वामी भवसि ॥ ' ईश ऐश्वर्ये ' । ' ईशः से ' इतीडागमः ॥ सः इत्यादि सिद्धम् ॥

१. ख-ग-झ१-ण-त-न-व—अस्यैतावदिति । २. क-झ-म—प्रासिद्धम् । ३. ख-ग-च—अरेचयः ४. ख—काष्ठात् ।
५. क-झ-ण-ण१-म—मधुरसोपेतम् ।

यः पुष्पिणीश्च प्रस्वश्च धर्मणाधि दाने व्य१वनीरधारयः ।
यश्चासमा अजनो दिद्युतो दिव उरुरूर्वाँ अभितः सास्युक्थ्यः ॥ ७ ॥

यः । पुष्पिणीः । च । प्रऽस्वः । च । धर्मणा । अधि । दाने । वि । अवनीः । अधारयः ।
यः । च । असमाः । अजनः । दिद्युतः । दिवः ।
उरुः । ऊर्वान् । अभितः । सः । असि । उक्थ्यः ॥ ७ ॥

हे इन्द्र ᵛयः त्वं ᵛपुष्पिणीः पुष्पवतीः ᵛच ᵛप्रस्वः प्रसूताः प्रसूयमाना वा ᵛअवनीः अवित्री- रोषधीः ᵛदाने ᵛअधि ॥ उपलूयन्ते सस्यान्यत्रेति दानं क्षेत्रम् । अधिकरणे ल्युट् ॥ तस्मिन् क्षेत्रे ᵛधर्मणा सकललक्षणेन कर्मणा ᵛवि ᵛअधारयः न्यदधाः । ᵛयः ᵛच त्वं ᵛदिवः द्योतमानस्य सूर्यस्य ᵛअसमाः विषमा नानाप्रकाराः ᵛदिद्युतः दीप्तीः ᵛअजनः अजनयः । यद्वा दिवो नक्षत्राणि ॥ जनेर्लङि व्यत्ययेन शप् ॥ यः च ᵛउरुः महांस्त्वम् ᵛअभितः सर्वतः ᵛऊर्वान् महतः प्राणिनिकायान् पर्वतान् वा अजनयः ॥ शिष्टं स्पष्टम् ॥

यो नार्मरं सहवसुं निहन्तवे पृक्षाय च दासवेशाय चावहः ।
ऊर्जयन्त्या अपरिविष्टमास्यमुतैवाद्य पुरुकृत्सास्युक्थ्यः ॥ ८ ॥

यः । नार्मरम् । सहऽवसुम् । निऽहन्तवे । पृक्षाय । च । दासऽवेशाय । च । अवहः ।
ऊर्जयन्त्याः । अपरिऽविष्टम् । आस्यम् ।
उत । एव । अद्य । पुरुऽकृत् । सः । असि । उक्थ्यः ॥ ८ ॥

ᵛपुरुकृत् पुरूणां कर्मणां कर्तः हे इन्द्र ᵛयः त्वं ᵛनार्मरम् । नॄन् मनुष्यान्मारयतीति नृमरः कश्चिदसुरः । तस्यापत्यं नार्मरः । तं ᵛसहवसुम् । वसुना सह वर्तत इति सहवसुः । असुरनामैतत् । एतन्नामकमसुरं ᵛनिहन्तवे ॥ हन्तेस्तुमर्थे तवेन्प्रत्ययः । 'तादौ च निति°' इति गतेः प्रकृतिस्वरत्वम् ॥ निहन्तुम् ᵛऊर्जयन्त्याः बलवत्या वज्रधारायाः ᵛअपरिविष्टं मलादिभिरव्याप्तम् ᵛआस्यम् ᵛअद्य ᵛएव ᵛअवहः तमसुरं प्रापयः । यद्वा ऊर्जयन्त्याः पिशाचिकाया आस्यं प्रापयः । किमर्थम् । ᵛपृक्षाय तव हविर्लक्षणान्नलाभाय । ᵛदासवेशाय दासानां दस्यूनां वेशाय विनाशाय ᵛच । यद्वा अस्माक- मन्नलाभाय दस्युविनाशाय च ॥

शतं वा यस्य दश साकमाद्य एकस्य श्रुष्टौ यद्ध चोदमाविथ ।
अरज्जौ दस्यून्त्समुनब्दभीतये सुप्राव्यो अभवः सास्युक्थ्यः ॥ ९ ॥

शतम् । वा । यस्य । दश । साकम् । आ । अद्यः । एकस्य । श्रुष्टौ । यत् । ह । चोदम् । आविथ ।
अरज्जौ । दस्यून् । सम् । उनप् । दभीतये । सुप्रऽअव्यः । अभवः । सः । असि । उक्थ्यः ॥ ९ ॥

हे इन्द्र vएकस्य एकाकिनः श्रेष्ठस्य वा vयस्य ते vश्रुष्टौ सुखनिमित्ते तदर्थं vशतं vदश दश शतानि हरयो वाहनार्थं भवन्ति । तथा च मन्त्रवर्णः—' इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ' ( ऋ. सं. ६. ४७. १८ ) इति । अपि च यश्च vआ vअद्यः सर्वेषां सर्वत उपजीव्यः । ' न तस्येशे यं नाद्याद्यद्वैनं नाद्युः ' इति हि श्रुतिः । vयद्व यश्च त्वं vचोदं स्तोत्राणां[1] प्रेरकं यजमानम् vआविथ रक्षितवानसि । किंच यस्त्वम् vअरज्जौ रज्जुवर्जिते बन्धनागारे vदस्यून् उपक्षपयितॄन् vदभीतये । दभीतिर्नाम कश्चिदृषिः । तदर्थं vसमुनत् हिंसितवानसि ॥ उभतेः[2] हिंसाकर्मणो लङि व्यत्ययेन श्नम् । हल्ङ्यादिना सिपो लोपः । अडभावश्छान्दसः ॥ किंच vसुप्राव्यः सुखेन सर्वैरुपसर्पणीयः vअभवः । शिष्टं सिद्धम् ॥

विश्वेद॑नु रोध॒ना अ॑स्य॒ पौंस्यं॑ द॒दुर॑स्मै द॒धि॒रे कृ॒त्नवे॒ धन॑म् ।

षळ॑स्तभ्ना वि॒ष्टिर॒ः पञ्च॑ सं॒दृश॒ः परि॑ प॒रो अ॑भव॒ः सास्यु॒क्थ्य॑ः ॥ १० ॥

विश्वा॑ । इत् । अनु॑ । रो॒ध॒नाः॑ । अ॒स्य॒ । पौंस्य॑म् । द॒दुः । अ॒स्मै॒ । द॒धि॒रे । कृ॒त्नवे॑ । धन॑म् ।

षट् । अ॒स्त॒भ्नाः॒ । वि॒ऽस्ति॒रः॑ । पञ्च॑ । स॒म्ऽदृशः॑ ।

परि॑ । प॒रः । अ॒भ॒वः॒ । सः । अ॒सि॒ । उ॒क्थ्यः॑ ॥ १० ॥

vविश्वेत् ॥ 'सुपां सुलुक्°' इति जस आकारः ॥ सर्वा एव vरोधनाः रोधस्वत्यो नद्यः vअस्य इन्द्रस्य vपौंस्यम् । पुंसो भावः पौंस्यम् । वीर्यमिति यावत् । vअनु तद्वीर्यमनु वर्तन्ते । vअस्मै इन्द्राय vददुः हविर्लक्षणमन्नं यजमानाः प्रयच्छन्ति । किंच vकृत्नवे कर्मणां कर्त्रे इन्द्राय vधनं vदधिरे सर्वे जना धारयन्ति । तथा च मन्त्रः—' इन्द्राय द्याव ओषधीरुतापो रयिं रक्षन्ति जीरयो वनानि ' ( ऋ. सं. ३. ५१. ५ ) इति । vविष्टिरः विस्तीर्णः vषट् षट्संख्याका उर्वीः । ताश्च द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च इत्येवंरूपाः । ताः vअस्तभ्नाः नियमितवानसि । vसंदृशः । सम्यक् पश्यन्तीति संदृशो जनाः । vपञ्च संदृशः पञ्च जनान् vपरि सर्वतः vपरः पारयिता पालयिता वा vअभवः भवसि । गतमन्यत् ॥　　॥ ११ ॥

सु॒प्र॒वा॒च॒नं तव॑ वीर वी॒र्यं१॒॑ यदेके॑न॒ क्रतु॑ना वि॒न्दसे॒ वसु॑ ।

जा॒तूष्ठि॑रस्य॒ प्र वय॒ः सह॑स्वतो॒ या च॒कर्थ॒ सेन्द्र॒ विश्वा॑स्यु॒क्थ्य॑ः ॥ ११ ॥

सु॒ऽप्र॒वा॒च॒नम् । तव॑ । वी॒र॒ । वी॒र्य॑म् । यत् । एके॑न । क्रतु॑ना । वि॒न्दसे॑ । वसु॑ ।

जा॒तुऽस्थि॑रस्य । प्र । वयः॑ । सह॑स्वतः । या । च॒कर्थ॑ । सः । इ॒न्द्र॒ । विश्वा॑ । अ॒सि॒ । उ॒क्थ्यः॑ ॥ ११ ॥

vवीर बलवन् हे इन्द्र vतव vवीर्यं सामर्थ्यं vसुप्रवाचनं सुष्ठु प्रवचनीयम् । सर्वैः श्लाघनीयमित्यर्थः । किं तत् । vएकेन vक्रतुना कर्मणा vवसु vविन्दसे शत्रूणां धनं लभसे ॥ ' विद्लृ लाभे '।

---

१. त-थ–स्तोतृ ( तॄ ) णाम् । २. त-झ१–उभ्नातेः; थ–उभ्नातोः ; ण-न–उन्नातेः;

तुदादिः स्वरितेत् ॥ यद्वा तदीयं धनं स्तोतॄन् प्रापयसीति यत् तत्प्रशस्यमित्यर्थः । सहस्वतः बलवतः जातूष्ठिरस्य । एतन्नामकः कश्चित् । तस्य वयः अन्नं प्र अदः । यद्वा जातूष्ठिरस्य । जातु कदाचित् सर्वदा स्थिरस्य सहस्वतः बलवतो यज्ञादेः कर्मणः संबन्धि वयः हविर्लक्षणमन्नं प्र विन्दसे इति समन्वयः । या यानीमान्यन्यानि विश्वा सर्वाणि कर्माणि चकर्थ कृतवानसि । सः तादृशस्त्वम् उक्थ्यः सर्वैः प्रशंसनीयो भवसि ॥

अरमयः सरपसस्तराय कं तुर्वीतये च वय्याय च स्रुतिम् ।
नीचा सन्तमुदनयः परावृजं प्रान्धं श्रोणं श्रवयन्त्सास्युक्थ्यः ॥ १२ ॥

अरमयः । सरऽअपसः । तराय । कम् । तुर्वीतये । च । वय्याय । च । स्रुतिम् ।
नीचा । सन्तम् । उत् । अनयः । पराऽवृजम् ।
प्र । अन्धम् । श्रोणम् । श्रवयन् । सः । असि । उक्थ्यः ॥ १२ ॥

हे इन्द्र सरपसः । सरणमपः कर्म यासां ताः सरपसः ॥ शकन्ध्वादित्वात् पररूपत्वम् ॥ ता अपः कं सुखेन तराय तरणाय अरमयः अक्रीडयः । किंच । तुर्वीतये । तुर्वीतिर्नाम कश्चिद्राजर्षिः । तस्मै वय्याय च । वय्यो नाम कश्चित् तस्मै । ताभ्यां स्रुतिं सरणं प्रत्यरमयः । तौ हि जलपूर्णां महानदीं दृष्ट्वा तरीतुमसमर्थावास्ताम् । तौ च त्वया तारितौ । परावृजम् । परितः पापानि वृणक्ति दहतीति परावृक् कश्चिदृषिः । तमप्सु मग्नं तथा नीचा नीचं सन्तम् उदनयः आपद्भ्यः[1] ऊर्ध्वं नीतवानसि । किंच अन्धं सन्तं श्रोणं पङ्गुं सन्तं चक्षुर्दानादपङ्गुकरणाच्चोदनयः । किं कुर्वन् । प्रकर्षेण[2] श्रवयन् । आत्मानं कीर्तिमन्तं कुर्वन् । उदनयः इति समन्वयः । सः इत्यादि सिद्धम् ॥

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यम् ।
इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥ १३ ॥

अस्मभ्यम् । तत् । वसो इति । दानाय । राधः । सम् । अर्थयस्व । बहु । ते । वसव्यम् ।
इन्द्र । यत् । चित्रम् । श्रवस्याः । अनु । द्यून् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १३ ॥

वसो सर्वस्य वासक वसुमन्वा हे इन्द्र स्तोतृभ्यः अस्मभ्यं तत् राधः धनं दानाय । उपलक्षणमेतत् । भोगाय च समर्थयस्व देहि । अस्मान् संगमयेत्यर्थः ॥ 'अर्थ याचने' चुरादिरदन्त आत्मनेपदी ॥ ते तव तत् बहु प्रभूतं वसव्यम् ॥ वस्वेव वसव्यम् । वस्वादित्वात् स्वार्थिको यत् ॥ तादृशं प्रभूतं धनमस्ति खलु । चित्रं चायनीयं यत् धनम् अनु द्यून् अन्वहम् ॥ 'कालाध्वनोः०' इति द्वितीया ॥ श्रवस्याः भोग्यमिच्छेः ॥ अन्तर्णीतण्यर्थत्वात्[3] अकर्मकत्वम् । यथा रोदितीति । सत्यम् । द्वे ह्यत्र कर्मणी उद्देश्यकर्म च विधेयकर्म च । विधेयकर्मान्तर्भूतम् । उद्देश्यकर्मणा सकर्मको

---

१. ख-अद्भ्यः; न-आद्भ्यः; झ-अपेद्भ्यः; ण-आभ्यः । २. क-प्र प्रकर्षेण; म-प्र प्रव(क)र्षेण ।
३. ख-अन्तर्भावितण्यर्थत्वात्; फ-अन्तर्भावितण्यर्थात्, म-अन्तरर्ण्यर्थत्वात् ।

भविष्यति। यथा माणवकं पुत्रीयति (पा. सू. ३.१.८.२) इति भाष्ये उदाहृतम्। श्रवःशब्दाच्छन्दसि परेच्छायां क्यच्। तदन्तस्य लेट्याडागमे रूपम्। सुवीराः कल्याणपुत्रपौत्राः सन्तो वयं विदथे अस्मिन्यज्ञे बृहत् प्रभूतं शस्त्रादिकं वाक्यं वदेम॥ ॥ १२ ॥

'अध्वर्यवो भरत' इति द्वादशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम्। 'अध्वर्यवो द्वादश' इत्यनुक्रान्तम्। सूक्तविनियोगो लैङ्गिकः। अतिरात्रे प्रथमे पर्याये होतुः शस्त्रयाज्या 'अध्वर्यवः' इत्येषा। 'अध्वर्यवो भरतेन्द्राय सोममिति याज्या' (आश्व. श्रौ. ६. ४) इति सूत्रितम्॥

**अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः।**

**कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि॥ १॥**

अध्वर्यवः। भरत। इन्द्राय। सोमम्। आ। अमत्रेभिः। सिञ्चत। मद्यम्। अन्धः।

कामी। हि। वीरः। सदम्। अस्य। पीतिम्। जुहोत। वृष्णे। तत्। इत्। एषः। वष्टि॥१॥

गृत्समदो ब्रूते। अध्वर्यवः अध्वरस्य नेतारः। अध्वरं यजमानायेच्छन्तः॥ 'कव्यध्वरपृतनस्यर्चि लोपः' इत्यकारलोपः॥ अत्र यास्कः—'अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताध्वरं[1] कामयते' (निरु. १.८) इति। हे अध्वर्यवः इन्द्राय देवाय सोमं हविर्धानादुत्तरवेदिं प्रति भरत हरत॥ आमन्त्रितस्याविद्यमानत्वादनिघातः॥ हृत्वा अमत्रेभिः। अमा सहादन्त्यत्र होत्रादय इत्यमत्राणि चमसाः। तैः मद्यं मदकरम्[2] अन्धः सोमलक्षणमन्नम् आ सिञ्चत अग्नौ प्रक्षिपत। अत्र यास्कः—'आ सिञ्चतामत्रैर्मदनीयमन्धोऽमत्रं पात्रममा अस्मिन्नदन्ति' (निरु. ५. १) इति। वीरः स इन्द्रः अस्य सोमस्य पीतिं पानं प्रति सदं सदैव कामी हि काममानो हि। तस्मात् वृष्णे वर्षित्र इन्द्राय सोमं जुहोत जुहुत॥ 'हु दानादनयोः'। लोटि 'तप्तनप्तनथनाश्च' इति तबादेशः॥ एषः इन्द्रः तदित् तदेव सोमद्रव्यं वष्टि कामयते॥

**अध्वर्यवो यो अपो वव्रिवांसं वृत्रं जघानाशन्येव वृक्षम्।**

**तस्मा एतं भरत तद्वशायँ एष इन्द्रो अर्हति पीतिमस्य॥ २॥**

अध्वर्यवः। यः। अपः। वव्रिऽवांसम्। वृत्रम्। जघान। अशन्याऽइव। वृक्षम्।

तस्मै। एतम्। भरत। तत्ऽवशाय। एषः। इन्द्रः। अर्हति। पीतिम्। अस्य॥ २॥

* हे अध्वर्यवः यः इन्द्रः अपः उदकानि वव्रिवांसम् आवृत्य स्थितं वृत्रम्। वृणोत्याकाशमिति वृत्रो मेघः। तं मेघं वज्रेण जघान हतवान्। अशन्येव। यथाशन्या वैद्युताग्निना

---

१. झ१-ण-त-थ-न-व—'अध्वरं कामयते' इति नास्ति। २. ख-ग-ण१-न-व—शब्दकरम्; झ१—शब्दमदकरम्। * म—पुस्तके अस्य मन्त्रस्य भाष्यमेवं दृश्यते—

'हे अध्वर्यवः य इन्द्रः अपः मेघसंबन्धीन्युदकानि वव्रिवांसं निरोधकं वृत्रमसुरं जघानाहतवान्। यथा अशन्या वृक्षमिव। तस्मै एतस्मादेतमिन्द्रं वशां हु (ह्व) यमानायां भजत एष इन्द्रः अस्य सोमस्य पीतिं पानमर्हति।'

ᵛवृक्षं दहति तद्वत् । ᵛतस्मै ᵛतद्वशाय सोमकामाय तस्मा इन्द्राय ᵛएतं सोमं ᵛभरत उत्तरवेदिं प्रति हरत । ᵛएषः ᵛइन्द्रः ᵛअस्य सोमस्य ᵛपीतिं पानम् ᵛअर्हति ॥

अध्वर्यवो यो दृभीकं जघान यो गा उदाजदप हि वलं वः ।

तस्मा एतमन्तरिक्षे न वातमिन्द्रं सोमैरोर्णुत जूर्न वस्त्रैः ॥ ३ ॥

अध्वर्यवः । यः । दृभीकम् । जघान । यः । गाः । उत्ऽआजत् । अप । हि । वलम् । वरिति वः ।

तस्मै । एतम् । अन्तरिक्षे । न । वातम् । इन्द्रम् । सोमैः । आ । ऊर्णुत । जूः । न । वस्त्रैः ॥३॥

हे ᵛअध्वर्यवः ᵛयः इन्द्रः ᵛदृभीकम् । सर्वान् विदारयति भियं करोतीति दृभीको नामासुरः । तमसुरं ᵛजघान । ᵛयः च वलासुरेण निरुद्धाः ᵛगाः ᵛउदाजत् निरगमयत् । ततश्च[1] तमेव ᵛवलम् असुरम् ᵛअप ᵛवः अपावृणोत् । हिंसितवानित्यर्थः॥ वृणोतेर्लुङि 'मन्त्रे घस०' इत्यादिना च्लेर्लुक् । हल्ङ्यादिना तिपो लोपः ॥ ᵛतस्मै इन्द्राय ᵛएतं सोमम् ᵛअन्तरिक्षे ᵛवातं ᵛन वातमिव धाराभिः व्याप्तं कुरुत । तदेवाह । ᵛसोमैः ᵛइन्द्रम् ᵛआ ᵛऊर्णुत सर्वत आच्छादयत ॥ 'ऊर्णुञ् आच्छादने' । आदादिकः। लोटि रूपम् ॥ तत्र दृष्टान्तः । ᵛजूर्न । जीर्णो यथा ᵛवस्त्रैः अङ्गमाच्छादयति तद्वत् ॥

अध्वर्यवो य उरणं जघान नव चख्वांसं नवतिं च बाहून् ।

यो अर्बुदमव नीचा बबाधे तमिन्द्रं सोमस्य भृथे हिनोत ॥ ४ ॥

अध्वर्यवः । यः । उरणम् । जघान । नव । चख्वांसम् । नवतिम् । च । बाहून् ।

यः । अर्बुदम् । अव । नीचा । बबाधे । तम् । इन्द्रम् । सोमस्य । भृथे । हिनोत ॥४॥

हे ᵛअध्वर्यवः ᵛयः इन्द्रः ᵛनव ᵛनवतिं ᵛच एकोनशतं ᵛबाहून् ᵛचख्वांसम् ॥ चष्टेरिदं रूपम् । यद्वा खनतेः क्वसौ रूपम् । जने (? अनो ) लोपः । छान्दसं रूपम् ॥ सर्वस्य दर्शयन्तम् । यद्वा आत्मनो देहे निखातवन्तम् ᵛउरणम् एतन्नामकमसुरं ᵛजघान। ᵛयः च ᵛअर्बुदम् एतन्नामकमसुरं च ᵛनीचा अधोमुखं कृत्वा ᵛअव ᵛबबाधे । ᵛतम् एनम् ᵛइन्द्रं ᵛसोमस्य ᵛभृथे सोमं बिभ्रति पात्रे ᵛहिनोत वर्धयत । यद्वा सोमस्य भृथे भरणे संपादने सति हिनोत स्तोत्रैः प्रीणयत ॥ 'हि गतिवृद्ध्योः '। स्वादिः ॥

अध्वर्यवो यः स्वश्नं जघान यः शुष्णमशुषं यो व्यंसम् ।

यः पिप्रुं नमुचिं यो रुधिक्रां तस्मा इन्द्रायान्धसो जुहोत ॥ ५ ॥

अध्वर्यवः । यः । सु । अश्नम् । जघान । यः । शुष्णम् । अशुषम् । यः । विऽअंसम् ॥

यः । पिप्रुम् । नमुचिम् । यः । रुधिऽक्राम् । तस्मै । इन्द्राय । अन्धसः । जुहोत ॥ ५ ॥

---

1. ण-म-यश्च ।

हे ᐯअध्वर्यवः ᐯयः इन्द्रः ᐯअश्नम्। अश्नाति भक्षयति प्राणिजातमिति। यद्वा अश्नुते स्वतेजसा सर्वं व्याप्नोतीत्यश्नः कश्चिदसुरः। तमसुरं ᐯसु सुष्ठु ᐯजघान। ᐯअशुषं केनाप्यशोषणीयं ᐯशुष्णम् असुरं ᐯयः[1] च तमसुरं[1] ᐯव्यंसम् अंसहीनं कृत्वा जघान। ᐯयः च ᐯपिप्रुं तेजसा जगद्व्याप्य वर्तमानमेतन्नामकमसुरं ᐯनमुचिम् असुरं जघान ᐯयः च। तैत्तिरीयके 'नमुचिमसुरं नालभत' इति प्रकृत्य 'फेनेन शिर उदवर्तयत्' ( तै. ब्रा. १. ७. १. ५-६ ) इत्यन्तेन वाक्यसंदर्भेण नमुचिवधः प्रपञ्चितः। तथा मन्त्रश्च– 'अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः' ( ऋ. सं. ८. १४. १३ ) इति। ᐯरुधिक्राम् एतन्नामकमसुरं ᐯयः च जघान। ᐯतस्मै ᐯइन्द्राय ᐯअन्धसः हविर्लक्षणान्यन्नानि ᐯजुहोत जुहुत ॥

**अध्व॑र्यवो॒ यः श॒तं शम्ब॑रस्य॒ पुरो॑ बि॒भेदाश्म॑नेव पू॒र्वीः ।**

**यो व॒र्चिनः॑ श॒तमिन्द्रः॑ स॒हस्र॑म॒पाव॑प॒द्भर॑ता॒ सोम॑मस्मै ॥ ६ ॥**

अध्व॑र्यवः । यः । श॒तम् । शम्ब॑रस्य । पुरः॑ । बि॒भेद॑ । अश्म॑नाऽइव । पू॒र्वीः ।

यः । व॒र्चिनः॑ । श॒तम् । इन्द्रः॑ । स॒हस्र॑म् । अ॒प॒ऽअव॑पत् । भर॑त । सोम॑म् । अ॒स्मै ॥६॥

हे ᐯअध्वर्यवः ᐯयः इन्द्रः ᐯशम्बरस्य मायाविनोऽसुरस्य ᐯपूर्वीः पुरातनीः ᐯशतं ᐯपुरः पुरीः ᐯअश्मनेव अश्मसदृशेन वज्रेण ᐯबिभेद। ᐯयः च ᐯइन्द्रः ᐯवर्चिनः॥ 'वर्च दीप्तौ'। 'गमेरिनिः' ( उ. सू. ४. ४४६ ) इति विधीयमान इनिर्बहुलवचनादस्माद्भवति॥ यद्वा नामैतत्। तस्यासुरस्य ᐯशतं ᐯसहस्रम् एतत्संख्याकानपरिमितान्वीरान् पुत्रान् ᐯअपावपत् युगपदेव भूम्यामपातयत्। तथा च मन्त्रवर्णः–'शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान्' ( ऋ. सं. ७. ९९. ५ ) इति। ᐯअस्मै इन्द्राय ᐯसोमं ᐯभरत ॥     ॥ १३ ॥

**अध्व॑र्यवो॒ यः श॒तमा स॒हस्रं॒ भूम्या॑ उ॒पस्थेऽव॑पज्जघ॒न्वान् ।**

**कुत्स॑स्या॒योर॑तिथि॒ग्वस्य॑ वी॒रान्न्यवृ॑ण॒ग्भर॑ता॒ सोम॑मस्मै ॥ ७ ॥**

अध्व॑र्यवः । यः । श॒तम् । आ । स॒हस्र॑म् । भूम्याः॑ । उ॒पऽस्थे॑ । अव॑पत् । ज॒घ॒न्वान् ।

कुत्स॑स्य । आ॒योः । अ॒ति॒थि॒ऽग्वस्य॑ । वी॒रान् । नि । अवृ॑णक् । भर॑त । सोम॑म् । अ॒स्मै ॥७॥

हे ᐯअध्वर्यवः ᐯजघन्वान् पूर्वं शत्रून् हतवान् ᐯयः इन्द्रः ᐯशतं ᐯसहस्रम् असुरान् ᐯभूम्याः ᐯउपस्थे उत्सङ्गे ᐯअवपत् एकैकेन प्रकारेणापातयत्। किंच यः ᐯकुत्सस्य एतन्नामकस्य राजर्षेः। ᐯआयोः पौरूरवसस्य राजर्षेः। ᐯअतिथिग्वस्य दिवोदासस्य। एतेषां त्रयाणां ᐯवीरान् अभिगन्तॄन् प्रतिद्वन्द्विनः शुष्णादीनसुरान् ᐯन्यवृणक्। वृणक्तिर्हिंसाकर्मा। अवधीत्। तथा च मन्त्रवर्णः–'त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम्' ( ऋ. सं. १. ५१. ६ ) इति। तादृशायेन्द्राय ᐯसोमं ᐯभरत ॥

---

१. त-थ–'यश्च तमसुरं' नास्ति।

अध्वर्यवो यन्नरः कामयाध्वे श्रुष्टी वहन्तो नशथा तदिन्द्रे ।
गभस्तिपूतं भरत श्रुतायेन्द्राय सोमं यज्यवो जुहोत ॥ ८ ॥

अध्वर्यवः । यत् । नरः । कामयाध्वे । श्रुष्टी । वहन्तः । नशथ । तत् । इन्द्रे ।
गभस्तिऽपूतम् । भरत । श्रुताय । इन्द्राय । सोमम् । यज्यवः । जुहोत ॥ ८ ॥

नरः कर्मणां नेतारो हे अध्वर्यवः यत् अभिलषितमर्थं कामयाध्वे[1] ॥ कामयतेर्लेट्याडागमः ॥ श्रुष्टी क्षिप्रम् इन्द्रे सोमं वहन्तः प्रापयन्तो यूयं तत् अभिलषितं फलं नशथ प्राप्नुत । श्रुताय लोके प्रसिद्धाय इन्द्राय गभस्तिपूतं हस्ताभ्यां मार्जनदोहनादिभिः[2] शोधितं सोमं भरत उत्तरवेदिं प्रति हरत । ततः यज्यवः यागं कुर्वाणा हे अध्वर्यवः आहृतं सोमम् इन्द्राय जुहोत जुहुत । अग्नौ प्रक्षिपत ॥

अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् ।
जुषाणो हस्त्यमभि वावशे व इन्द्राय सोमं मदिरं जुहोत ॥ ९ ॥

अध्वर्यवः । कर्तन । श्रुष्टिम् । अस्मै । वने । निऽपूतम् । वने । उत् । नयध्वम् ।
जुषाणः । हस्त्यम् । अभि । वावशे । वः । इन्द्राय । सोमम् । मदिरम् । जुहोत ॥९॥

हे अध्वर्यवः अस्मै इन्द्राय सोमं श्रुष्टिं सुखकरं कर्तन कुरुत ॥ करोतेर्लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तनबादेशः। आमन्त्रितस्याविद्यमानत्वान्न निघातः ॥ किंच वने संभजनीये वने उदके निपूतम् आप्यायनेन शोधितं सोमम् उन्नयध्वम् ऊर्ध्वं नयत । यद्वा वने तद्विकारे चमसे निपूतं दशापवित्रेण शोधितं सोमं वने चमस उन्न-यध्वम् । जुषाणः प्रीयमाणः स इन्द्रः वः युष्माकं हस्त्यं हस्ताभ्यामभिषुतं सोमम् अभि वावशे कामयते ॥ 'वश कान्तौ' । यङ्लुगन्तस्य लटि व्यत्ययेनात्मनेपदम् । 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥ मदिरं मदकरमिमं सोमम् इन्द्राय जुहोत । इन्द्रोद्देशेनाग्नौ प्रक्षिपत ॥

अध्वर्यवः पयसोधर्यथा गोः सोमेभिरीं पृणता भोजमिन्द्रम् ।
वेदाहमस्य निभृतं म एतद्दित्सन्तं भूयो यजतश्चिकेत ॥ १० ॥

अध्वर्यवः । पयसा । ऊधः । यथा । गोः । सोमेभिः । ईम् । पृणत । भोजम् । इन्द्रम् ।
वेद । अहम् । अस्य । निऽभृतम् । मे । एतत् । दित्सन्तम् । भूयः । यजतः । चिकेत ॥१०॥

---

१. क-न-म–कामयाध्वे कामयध्वे । २. ख-ग-झ-झ१-व–माञ्जन°; क-च-ज-ण-ण१-थ-न-फ-म–आञ्जन°; त–माञ्जनदोहनाभिः ।

हे ᵛअध्वर्यवः ᵛयथा ᵛगोः ᵛऊधः ᵛपयसा पूर्णं तद्वत् ᵛईम् एनं ᵛभोजं फलस्य दातारं रक्षितारं च ᵛइन्द्रं ᵛसोमेभिः सोमैः ᵛपृणत पूरयत। ᵛमे मदीयस्य ᵛअस्य सोमस्य ᵛनिभृतं गूढं सुखसाधनस्वभावम् ᵛअहम् एव ᵛवेद जानामि। इति पूर्वं न परस्मै कथितं तथापि युष्मभ्यं ब्रवीमीत्येवम्। ᵛदित्सन्तं सोमं दातुमिच्छन्तं यजमानं ᵛयजतः यष्टव्य इन्द्रः ᵛभूयः अतिशयेन ᵛचिकेत॥ दित्सन्तम्। 'डुदाञ् दाने'। इच्छायां सन्। 'सनि मीमाघु°' इत्याकारस्य इसादेशः[1]। 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः। 'सः स्यार्धधातुके' इति सकारस्य तत्वम्॥

अध्व॑र्यवो॒ यो दि॒व्यस्य॒ वस्वो॒ यः पार्थि॑वस्य॒ क्षम्य॑स्य॒ राजा॑।
तमूद॑रं॒ न पृ॑णता॒ यवे॒नेन्द्रं॒ सोमे॑भि॒स्तदपो॑ वो अस्तु॥ ११॥

अध्व॑र्यवः। यः। दि॒व्यस्य॑। वस्वः॑। यः। पार्थि॑वस्य। क्षम्य॑स्य। राजा॑।

तम्। ऊद॑रम्। न। पृ॒ण॒त। यवे॑न। इन्द्र॑म्। सोमे॑भिः। तत्। अपः॑। व॒ः। अ॒स्तु॒॥११॥

हे ᵛअध्वर्यवः ᵛयः इन्द्रः ᵛदिव्यस्य द्युलोकार्हस्य ᵛवस्वः वसुनः ᵛराजा भवति। ᵛयः च ᵛपार्थिवस्य। पृथिवीशब्देन विस्तीर्णमन्तरिक्षमुच्यते। तत्रत्यं धनं पार्थिवम्। तस्य राजा। यश्च ᵛक्षम्यस्य। क्षमा भूमिः। तत्रत्यं धनं क्षम्यम्। तस्य च राजा भवति। ᵛतम् एवंविधम् ᵛइन्द्रं ᵛसोमेभिः सोमैः ᵛपृणत पूरयत। तत्र दृष्टान्तः। ᵛऊदरं ᵛन। ऊर्ध्वं[2] दीर्णमूदरं कुसूलम्[2]। यथा ᵛयवेन तत्[3] पूर्णं तद्वदिन्द्रं पूरयतेति। तादृशं सोमादिनेन्द्रोदरपूरणलक्षणम् ᵛअपः कर्म ᵛवः युष्माकम् ᵛअस्तु॥

अ॒स्मभ्यं॒ तद्व॑सो दा॒नाय॒ राधः॒ सम॑र्थयस्व ब॒हु ते॑ वस॒व्य॑म्।
इन्द्र॒ यच्चि॒त्रं श्र॑व॒स्या अनु॒ द्यून्बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑॥ १२॥

अ॒स्मभ्य॑म्। तत्। व॒सो॒ इति॑। दा॒नाय॑। राधः॑। सम्। अ॒र्थ॒य॒स्व॒। ब॒हु। ते॒। व॒स॒व्य॑म्।

इन्द्र॑। यत्। चि॒त्रम्। श्र॒व॒स्याः। अनु॑। द्यून्। बृ॒हत्। व॒दे॒म॒। वि॒दथे॑। सु॒ऽवीराः॑॥१२॥

एषा ऋग्व्याख्याता॥ ॥ १४॥

'प्र घा न्वस्य' इति दशर्चं चतुर्थं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम्। अत्रानुक्रमणिका–'प्र घ दश' इति। दशरात्रे षष्ठेऽहनि निष्केवल्ये त्रीणि सूक्तानि। तत्रेदं द्वितीयम्। 'षष्ठस्य' इति खण्डे सूत्रितम्–'एन्द्र याह्युप नः प्र घा न्वस्याभूरेक इति निष्केवल्यम्' (आश्व. श्रौ. ८. १) इति। त्र्येकमामके निष्केवल्ये 'प्र घा न्वस्य' इत्येषा सूक्तमुखीया। उशनःस्तोमे सूत्रितं—'त्र्यर्यमा मनुषो देवताता प्र घा न्वस्य महतो महानि' (आश्व. श्रौ. ९. ५) इति॥

---

१. झ-त-इकारादेशः। २. थ-ऊर्ध्वं दीर्णमूर्जेन दीर्णमूर्दरं कुसूलम्; म-ऊर्ददीर्णमूर्जेदीर्णम् उदरम्। ३. ण-'तत्' नास्ति।

प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचम् ।
त्रिकद्रुकेष्वपिबत्सुतस्यास्य मदे अहिमिन्द्रो जघान ॥ १ ॥

प्र । घ । नु । अस्य । महतः । महानि । सत्या । सत्यस्य । करणानि । वोचम् ।
त्रिऽकद्रुकेषु । अपिबत् । सुतस्य । अस्य । मदे । अहिम् । इन्द्रः । जघान ॥ १ ॥

गृत्समदो ब्रूते। vमहतः बलवतः vसत्यस्य सत्यसंकल्पस्य vअस्य इन्द्रस्य vसत्या सत्यानि यथार्थानि vमहानि महान्ति vकरणानि अस्मिन्सूक्ते वक्ष्यमाणानि कर्माणि vनु अद्य vप्र vवोचं प्रकर्षेण ब्रवीमि ॥ ‘वच परिभाषणे’। ‘छन्दसि लुङ्लङ्लिटः’ इति वर्तमाने लुङि ‘अस्यतिवक्तिख्यातिभ्योऽङ्’। ‘वच उम्’। vघ इति प्रसिद्धौ। कानि तानि उच्यन्ते। vत्रिकद्रुकेषु ज्योतिर्गौरायुरित्येवंरूपेष्वाभिप्लविकेष्वहःसु vसुतस्य अभिषुतं सोमम् इन्द्रः vअपिबत्। ततः पीतस्य vअस्य सोमस्य vमदे हर्षे संजाते सति vइन्द्रः vअहिं वृत्रमसुरं vजघान हतवान् ॥

अवंशे द्यामस्तभायद्बृहन्तमा रोदसी अपृणदन्तरिक्षम्।
स धारयत्पृथिवीं पप्रथच्च सोमस्य ता मद इन्द्रश्चकार ॥ २ ॥

अवंशे । द्याम् । अस्तभायत् । बृहन्तम् । आ । रोदसी इति । अपृणत् । अन्तरिक्षम् ।
सः । धारयत् । पृथिवीम् । पप्रथत् । च । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ २ ॥

vअवंशे आकाशे vद्यां द्योतमानं सूर्यं द्युलोकं वा vअस्तभायत् इन्द्रोऽस्तभ्नात्। अनवलम्बनस्य तस्यावस्थापनमकरोदित्यर्थः ॥ स्तम्भु इति सौत्रो धातुः क्र्यादिः। लङि ‘व्यत्ययो बहुलम्’ इत्यहावपि शायजादेशः ॥ vबृहन्तं महत् vअन्तरिक्षं vरोदसी द्यावापृथिव्यौ च vअपृणत् स्वतेजसा पूरितवान्। किंच vसः इन्द्रः vपृथिवीं विस्तीर्णां भूमिं vधारयत् अधारयत्। तथा vपप्रथच्च एनां[1] भूमिमप्रथयत् ॥ ‘प्रथ प्रख्याने’। ण्यन्तस्य लुङि चङि रूपम्। ‘चङ्यन्यतरस्याम्’ इति मध्योदात्तत्वम्। vसोमस्य vमदे हर्षे संजाते सति तानीमानि कर्माणि vइन्द्रश्चकार ॥

सद्मेव प्राचो वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् ।
वृथासृजत्पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार ॥ ३ ॥

सद्मऽइव । प्राचः । वि । मिमाय । मानैः । वज्रेण । खानि । अतृणत् । नदीनाम् ।
वृथा । असृजत् । पथिऽभिः । दीर्घऽयाथैः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ३ ॥

---

१. ख-ग-च-ण-थ-व–एताम्।

ᵛसद्मेव यथा यज्ञगृहान् ᵛमानैः षट्त्रिंशत्प्रक्रमप्राचीत्येवंरूपैः परिमाणैः प्राक्प्रवणान् कुर्वन्ति तद्वत् सिन्धून् लोकान्वानृजून्वा मानैः परिमाणैः ᵛप्राचः प्राङ्मुखान् ᵛवि ᵛमिमाय । इन्द्रो विशेषेण निर्मितवान् । तथा ᵛनदीनां ᵛखानि निर्गमनद्वाराणि ᵛवज्रेण च ᵛअतृणत् अखनत् ॥ ' तृदि हिंसाना-दरयोः ' । रुधादि । लङ् ॥ तथा च मन्त्रः—' इन्द्रो अस्माँ अरदद्वज्रबाहुः ' ( ऋ. सं. ३. ३३. ६ ) इति । तथा ᵛदीर्घयाथैः बहुकालं[1] गन्तव्यैः[1] ᵛपथिभिः मार्गैः ᵛवृथा ᵛअसृजत् अनायासेन ताः नदीः सृष्टवान् । ᵛसोमस्य इति सिद्धार्थ इति ॥

स प्रवोळ्हॄन्परिगत्या दभीतेर्विश्वमधागायुधमिद्धे अग्नौ ।
सं गोभिरश्वैरसृजद्रथेभिः सोमस्य ता मद इन्द्रश्चकार ॥ ४ ॥

सः । प्रऽवोळ्हॄन् । परिऽगत्य । दभीतेः । विश्वम् । अधाक् । आयुधम् । इद्धे । अग्नौ ।
सम् । गोभिः । अश्वैः । असृजत् । रथेभिः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥४॥

प्राक्किल चुमुरिधुनिप्रभृतयोऽसुरा दभीतेः पुरं संरुध्य परिगृह्य तस्मात्पुरान्निरगुरिति कथा । ᵛसः इन्द्रः ᵛदभीतेः । दभीतिर्नाम कश्चिद्राजर्षिः । तस्य ᵛप्रवोळ्हॄन् प्रवोढॄन् ॥ ' सहिवहोरोदवर्णस्य ' इत्यो-त्वम् ॥ प्रकर्षेण तं दभीतिं वहतस्तानसुरान् मध्येमार्गं ᵛपरिगत्य तेषां ᵛविश्वं सर्वम् ᵛआयुधम् ᵛइद्धे ᵛअग्नौ दीप्यमाने वह्नौ ᵛअधाक् अधाक्षीत् ॥ दहेर्लुङि ' मन्त्रे घस° ' इत्यादिना च्लेर्लुक् ॥ पश्चात्तं दभीतिं ᵛगोभिः ᵛअश्वैः ᵛरथेभिः रथैश्च ᵛसम् ᵛअसृजत् संयोजितवान् । सोमस्यादि सिद्धमिति ॥

अतिमूर्तिनाम्न्येकाहे मरुत्वतीये सूक्तमुखीया । ' अतिमूर्तिना ' इति खण्डे सूत्रितं-' स ईं महीं धुनिमेतोररम्णात् ' ( आश्व. श्रौ. ९. ८ ) इति ॥

स ईं महीं धुनिमेतोररम्णात्सो अस्नातॄनपारयत्स्वस्ति ।
त उत्स्नाय रयिमभि प्र तस्थुः सोमस्य ता मद इन्द्रश्चकार ॥ ५ ॥

सः । ईम् । महीम् । धुनिम् । एतोः । अरम्णात् । सः । अस्नातॄन् । अपारयत् । स्वस्ति ।
ते । उत्ऽस्नाय । रयिम् । अभि । प्र । तस्थुः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥५॥

ᵛसः इन्द्रः ᵛईम् एनां ᵛमहीं महतीं ᵛधुनिम् । धुनोति स्तोतॄणां पापानीति धुनिः परुष्णी नदी । ताम् ᵛएतोः ॥ ईश्वरपदासंनिधानेऽपि तोसुन्प्रत्ययः ( पा. सू. ३. ४. १३ ) ॥ ऋषीणां गमनार्थम् ᵛअरम्णात् उपाशमयत् । महाजलां नदीमल्पोदकामकरोदित्यर्थः । ततः ᵛसः इन्द्रः ᵛअस्नातॄन् स्नातुमशक्तान् तरणासमर्थानृषीन् ᵛस्वस्ति क्षेमेण ᵛअपारयत् । ᵛते महर्षयः ᵛउत्स्नाय तां नदीमुत्तीर्य यं रयिमपेक्ष्य गच्छन्ति तं ᵛरयिम् अभिलक्ष्य ᵛप्र ᵛतस्थुः प्रतस्थिरे । शिष्टं सिद्धम् ॥ ॥१५॥

---

१. ख-ग-च-ण-ण१-व--बहुकालगन्तव्यैः ।

सोदञ्चं सिन्धुमरिणान्महित्वा वज्रेणान उषसः सं पिपेष ।
अजवसो जविनीभिर्विवृश्चन्त्सोमस्य ता मद इन्द्रश्चकार ॥ ६ ॥

सः । उदञ्चम् । सिन्धुम् । अरिणात् । महिऽत्वा । वज्रेण । अनः । उषसः । सम् । पिपेष ।
अजवसः । जविनीभिः । विऽवृश्चन् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ६ ॥

ᵛसः इन्द्रः ᵛसिन्धुं प्राञ्चं सन्तं ᵛमहित्वा स्वकीयेन महिम्ना ᵛउदञ्चम् ᵛअरिणात् । उदङ्मुखमकरोत् ॥ सिन्धुशब्दश्छन्दसि पुलिंगः ॥ ᵛउषसः उषोदेव्याः ᵛअनः शकटं ᵛवज्रेण ᵛसं ᵛपिपेष । चूर्णीचकार । एतच्च ' दिवश्चिद्घा दुहितरम् ' ( ऋ. सं. ४. ३०. ९ ) इत्यत्र स्पष्टं वक्ष्यते । किं कुर्वन् । ᵛअजवसः जवहीना दुर्बलाः सेनाः ᵛजविनीभिः जवयुक्ताभिः सेनाभिः ᵛविवृश्चन् विशेषेण भिन्दन् । पिपेषेति समन्वयः ॥ ' ओव्रश्चू छेदने ' । शतरि ग्रहिज्यादिना संप्रसारणम् । शिष्टं स्पष्टम् ॥

स विद्वाँ अपगोहं कनीनामाविर्भवन्नुदतिष्ठत्परावृक् ।
प्रति श्रोणः स्थाद्व्य१नगचष्ट सोमस्य ता मद इन्द्रश्चकार ॥ ७ ॥

सः । विद्वान् । अपऽगोहम् । कनीनाम् । आविः । भवन् । उत् । अतिष्ठत् । पराऽवृक् ।
प्रति । श्रोणः । स्थात् । वि । अनक् । अचष्ट । सोमस्य । ता । मदे । इन्द्रः । चकार ॥७॥

पुरा किल कन्यकाश्चक्षुर्हीनं पादहीनं परावृजं जिघृक्षुमृषिं दृष्ट्वाभिदुद्रुवुः । ततः स ऋषिरिन्द्रं स्तुत्वा चक्षुः पादं च लेभे । तदेतदाह । ᵛकनीनां कन्यकानाम् ᵛअपगोहम् अपगोहनं तिरोभावं ᵛविद्वान् ᵛपरावृक् ऋषिः ᵛआविर्भवन् सर्वेषां प्रत्यक्षो भवन् ᵛउदतिष्ठत् । ᵛश्रोणः पूर्वं पङ्गुरिदानीमिन्द्रस्य प्रसादात् विभग्नजानुः[1] ताः कन्याः ᵛप्रति ᵛस्थात् । पूर्वमन्धोऽधुना चक्षुर्लाभात् ᵛवि ᵛअचष्ट । ताः कन्यका विशेषेण पश्यति स्म । तानीमानि कर्माणि सः ᵛइन्द्रश्चकार ॥

भिनद्वलमङ्गिरोभिर्गृणानो वि पर्वतस्य दृंहितान्यैरत् ।
रिणग्रोधांसि कृत्रिमाण्येषां सोमस्य ता मद इन्द्रश्चकार ॥ ८ ॥

भिनत् । वलम् । अङ्गिरःऽभिः । गृणानः । वि । पर्वतस्य । दृंहितानि । ऐरत् ।
रिणक् । रोधांसि । कृत्रिमाणि । एषाम् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥८॥

ᵛअङ्गिरोभिः ᵛगृणानः स्तूयमानः स इन्द्रः ᵛवलं वलनामकमसुरं ᵛभिनत् अभिनत् । तथा गवां निरोधकस्य ᵛपर्वतस्य ᵛदृंहितानि शिलाभिर्दृढीकृतानि द्वाराणि ᵛवि ᵛऐरत् उद्घाटितवान् । तदेवाह । ᵛएषां पर्वतानां ᵛकृत्रिमाणि क्रियया निर्वृत्तानि ᵛरोधांसि निरुद्धानि द्वाराणि ᵛरिणक् उदघाटयत् । गतमन्यत् ॥

---

१. क-झ–विसंभजानुः ।

अतिमूर्तिनाम्न्येकाहे निष्केवल्ये सूक्तमुखीया 'स्वप्नेन' इत्येषा । सूत्रितं – 'स्वप्नेनाभ्युप्या चुमुरिं धुनिं चेति सूक्तमुखीया' ( आश्व. श्रौ. ९. ८ ) इति ॥

स्वप्नेनाभ्युप्या चुमुरिं धुनिं च जघन्थ दस्युं प्र दभीतिमावः ।
रम्भी चिदत्र विविदे हिरण्यं सोमस्य ता मद इन्द्रश्चकार ॥ ९ ॥

स्वप्नेन । अभिऽउप्य । चुमुरिम् । धुनिम् । च । जघन्थ । दस्युम् । प्र । दभीतिम् । आवः ।
रम्भी । चित् । अत्र । विविदे । हिरण्यम् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ९ ॥

स त्वं ᵛदस्युं सर्वस्योपक्षपयितारं ᵛचुमुरिं ᵛधुनिं ᵛच एतन्नामानावसुरौ ᵛस्वप्नेन दीर्घनिद्रया ᵛअभ्युप्य संयोज्य ᵛजघन्थ हतवानसि । ततः ताभ्यां युध्यमानं ᵛदभीतिं राजर्षिं ᵛप्र ᵛआवः रक्षितवानसि । तथा च मन्त्रवर्णः–'त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहन्तु' ( ऋ. सं. ७. १९. ४ ) इति ॥ आवः । अवते रक्षणार्थस्य लङि सिपि रूपम् ॥ ᵛरम्भी ᵛचित् वेत्रधारी चास्य दौवारिकः ᵛअत्र अस्मिन्युद्धे तयोरसुरयोः ᵛहिरण्यं धनं ᵛविविदे लेभे । 'विद्लृ लाभे' स्वरितेत् । तानीमानि कर्माणि ᵛसोमस्य ᵛमदे सति ᵛचकार इति ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ १० ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १० ॥

एषा ऋग्व्याख्याता ॥  ॥ १६ ॥

'प्र वः सताम्' इति नवर्चं पञ्चमं सूक्तं गार्त्समदमैन्द्रम् । अत्रानुक्रमणिका–'प्र वो नवान्त्या त्रिष्टुप्' इति । नवमी त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः ॥ तृतीये पर्यायेऽच्छावाकशस्त्रे 'प्र वः सताम्' इति सूक्तम् । 'अतिरात्रे' इति खण्डे सूत्रितं–'प्र वः सतां प्रो द्रोणे हरयः कर्माग्मन्निति याज्या' ( आश्व. श्रौ. ६. ४ ) इति ॥

प्र वः सतां ज्येष्ठतमाय सुष्टुतिमग्नाविव समिधाने हविर्भरे ।
इन्द्रमजुर्यं जरयन्तमुक्षितं सनाद्युवानमवसे हवामहे ॥ १ ॥

प्र । वः । सताम् । ज्येष्ठऽतमाय । सुऽस्तुतिम् । अग्नौऽइव । समऽइधाने । हविः । भरे ।
इन्द्रम् । अजुर्यम् । जरयन्तम् । उक्षितम् । सनात् । युवानम् । अवसे । हवामहे ॥ १ ॥

गृत्समदो ब्रूते । हे यजमानाः वः युष्मदर्थं सतां महतां देवानां ज्येष्ठतमाय अतिशयेन श्रेष्ठायेन्द्राय तदर्थम् । अग्नाविव समिधाने । इवशब्द एवार्थः । दीप्यमान एवाग्नौ हविः प्र भरे संपादयामि । ततः परं सुष्टुतिं शोभनां स्तुतिं करोमि ॥ भर इति ' भृञ् भरणे ' जित्त्वा-दुभयपदी । लटि रूपम् ॥ अजुर्यम् अजरणीयं जरयन्तं सर्वमन्यज्जरयन्तम् उक्षितं सोमेन सिक्तं सनात् सनातनं युवानं नित्यतरुणं तादृशम् इन्द्रम् अवसे अस्माकं रक्षणाय तस्य तर्पणाय वा हवामहे आह्वयामः ॥

**यस्मादिन्द्राद्बृहतः किं चनेमृते विश्वान्यस्मिन्त्संभृताधि वीर्या ।**
**जठरे सोमं तन्वी३ सहो महो हस्ते वज्रं भरति शीर्षणि क्रतुम् ॥ २ ॥**

यस्मात् । इन्द्रात् । बृहतः । किम् । चन । ईम् । ऋते ।
विश्वानि । अस्मिन् । सम्ऽभृता । अधि । वीर्या ।
जठरे । सोमम् । तन्वि । सहः । महः । हस्ते । वज्रम् । भरति । शीर्षणि । क्रतुम् ॥२॥

बृहतः महतः यस्मात् इन्द्रात् ऋते किम् अपि ईम् इदं जगत् चन नास्तीत्यर्थः ॥ चेति नेति निपातद्वयसमुदायश्चनेति । चेति चिदित्यर्थे नेति निषेधार्थे[1] । ऐकपद्यं तु सांप्रदायिकम् ॥ उक्तार्थे मन्त्रः–' नेन्द्रादृते पवते धाम किं चन ' ( ऋ. सं. ९. ६९.६ ) इति । यद्वा इन्द्रादृते ईमिदं जगत् किम् । न क्षुद्रमत्यल्पमित्यर्थः । कुत एतत् तदेवोच्यते । अस्मिन् इन्द्रे विश्वानि सर्वाणि वीर्याणि सामर्थ्यानि अधि संभृता अधिकं संभृतान्यासते । यश्चेन्द्रः जठरे स्वोदरे सोमम् अभिषुतं सोमरसं भरति बिभर्ति । किंच तन्वि तन्वां स्वकीये सर्वस्मिन् शरीरे सहः बलं महः तेजश्च बिभर्ति । हस्ते वज्रम् आयुधं बिभर्ति । शीर्षणि शिरसि क्रतुं विज्ञानं भरति बिभर्ति ॥ यद्वृत्तयोगाद-निघातः । वाक्यभेदाद्वा निघाताभावः । शीर्षणि । ' शीर्षंश्छन्दसि ' इति ॥

**न क्षोणीभ्यां परिभ्वे त इन्द्रियं न समुद्रैः पर्वतैरिन्द्र ते रथः ।**
**न ते वज्रमन्वश्नोति कश्चन यदाशुभिः पतसि योजना पुरु ॥ ३ ॥**

न । क्षोणीभ्याम् । परिऽभ्वे । ते । इन्द्रियम् । न । समुद्रैः । पर्वतैः । इन्द्र । ते । रथः ।
न । ते । वज्रम् । अनु । अश्नोति । कः । चन ।
यत् । आशुऽभिः । पतसि । योजना । पुरु ॥ ३ ॥

हे इन्द्र ते तव इन्द्रियं बलं क्षोणीभ्यां द्यावापृथिवीभ्यां न परिभ्वे न परिभवनीयम् ॥ ' कृत्यार्थे तवैकेन्केन्यत्वनः ' इति केन्प्रत्ययः । ' उदात्तस्वरितयोः० ' इति स्वरितत्वम् ॥ किंच ते रथः समुद्रैः पर्वतैः च न परिभवनीयः । ते वज्रम् आयुधं कश्चन पुमान् न अन्वश्नोति

---

१. ख-ग-झ१-ण-ण१-न-ब–निषिद्धार्थे; च-झ-थ–निषिद्धार्थ ।

न व्याप्नोति परिभवितुम्॥ 'अशू व्याप्तौ'। व्यत्ययेन परस्मैपदम्॥ ᵛयत् यदा असुरवधार्थं दिग्विजयकाले ᵛपुरु पुरूणि बहूनि ᵛयोजना योजनानि ᵛपतसि गच्छसि। तदा तव बलादि न परिभवनीयमिति समन्वयः॥

विश्वे ह्यस्मै यजताय धृष्णवे क्रतुं भरन्ति वृषभाय सश्चते ।
वृषा यजस्व हविषा विदुष्टरः पिबेन्द्र सोमं वृषभेण भानुना ॥ ४ ॥

विश्वे । हि । अस्मै । यजताय । धृष्णवे । क्रतुम् । भरन्ति । वृषभाय । सश्चते ।
वृषा । यजस्व । हविषा । विदुःऽतरः । पिब । इन्द्र । सोमम् । वृषभेण । भानुना ॥ ४ ॥

हे यजमान ᵛविश्वे सर्वे जनाः ᵛयजताय सर्वैर्यजनीयाय ᵛधृष्णवे शत्रूणां धर्षणशीलाय ᵛवृषभाय कामानां वर्षित्रे ᵛसश्चते सज्जमानाय स्तुत्यादिकर्मवत्सु स्तोतृषु एतादृशायेन्द्राय ᵛक्रतुं यज्ञादिलक्षणं कर्म ᵛभरन्ति ᵛहि हरन्ति खलु। प्रणयन्तीत्यर्थः॥ भरन्ति। हियोगादनिघातः॥ यस्मादेवं तस्मात् ᵛवृषा सोमरससेचनसमर्थः ᵛविदुष्टरः॥ विद्वच्छब्दात्तरपि छान्दसं संप्रसारणम्। 'शासिवसिघसीनां च' इति संहितायां षत्वम्॥ विद्वत्तरस्त्वं ᵛहविषा तमिन्द्रं ᵛयजस्व। इदानीमिन्द्रं संबोध्याह। हे ᵛइन्द्र ᵛवृषभेण कामानां वर्षकेण ᵛभानुना दीप्यमानेनाग्निना सह ᵛसोमं ᵛपिब॥

वृष्णः कोशः पवते मध्व ऊर्मिर्वृषभान्नाय वृषभाय पातवे ।
वृषणाध्वर्यू वृषभासो अद्रयो वृषणं सोमं वृषभाय सुष्वति ॥ ५ ॥

वृष्णः । कोशः । पवते । मध्वः । ऊर्मिः । वृषभऽअन्नाय । वृषभाय । पातवे ।
वृषणा । अध्वर्यू इति । वृषभासः । अद्रयः । वृषणम् । सोमम् । वृषभाय । सुस्वति ॥५॥

हे इन्द्र ᵛवृष्णः फलस्य वर्षितुः ᵛमध्वः मदकरस्य सोमस्य ᵛकोशः रसः[1] ᵛऊर्मिः अनुष्ठातॄणां पातॄणां च प्रेरकः सन् ᵛपवते गच्छति॥ 'पव गतौ'। अनुदात्तेत्॥ किमर्थम्। ᵛवृषभान्नाय। बलवर्षकाणि[2] अन्नानि यस्य स तथोक्तः। तादृशाय ᵛवृषभाय कामानां वर्षित्र इन्द्राय ᵛपातवे पानार्थं पवत इति समन्वयः। किंच ᵛवृषणा सोमरससेचनसमर्थौ ᵛअध्वर्यू अध्वर्युप्रतिप्रस्थातारौ ᵛवृषभासः वर्षकाः ᵛअद्रयः अभिषवग्रावाणश्च ᵛवृषणं स्वर्गादिफलस्य सेक्तारं ᵛसोमं ᵛवृषभाय देवानां श्रेष्ठाय तुभ्यं ᵛसुष्वति सुन्वन्ति॥ सुनोतेर्लटि 'बहुलं छन्दसि' इति विकरणस्य श्लुः। 'अदभ्यस्तात्' इति झेरदादेशः॥ ॥ १७ ॥

---

१. झ-म-' रसः ' नास्ति । २. क-झ-म-वृषभवर्षकाणि ।

वृषा ते वज्र उत ते वृषा रथो वृषणा हरी वृषभाण्यायुधा ।
वृष्णो मदस्य वृषभ त्वमीशिष इन्द्र सोमस्य वृषभस्य तृप्णुहि ॥ ६ ॥

वृषा । ते । वज्रः । उत । ते । वृषा । रथः । वृषणा । हरी इति । वृषभाणि । आयुधा ।
वृष्णः । मदस्य । वृषभ । त्वम् । ईशिषे । इन्द्र । सोमस्य । वृषभस्य । तृप्णुहि ॥ ६ ॥

ᵛवृषभ कामानां वर्षक हे इन्द्र ᵛते तव ᵛवज्रः ᵛवृषा कामवर्षकः । तथा ᵛते ᵛरथः अपि ᵛवृषा । ते ᵛहरी एतन्नामकावश्वौ ᵛवृषणा वर्षकौ । तव ᵛआयुधा वज्रव्यतिरिक्तान्यायुधान्यपि ᵛवृषभाणि । ᵛवृष्णः वर्षकस्य ᵛमदस्य मदकरस्य सोमस्य ᵛत्वम् एव ᵛईशिषे स्वामी भवसि । हे ᵛइन्द्र ᵛवृषभस्य वर्षकेण ᵛसोमस्य सोमेन ᵛतृप्णुहि तृप्तो भव ॥ 'तृप प्रीणने'। स्वादिः। क्षुभ्नादिषु (पा. सू. ८. ४. ३९) 'नृनमन तृप्नोति' इति पठितम्। तथापि सर्वविधीनां छन्दसि विकल्पितत्वादत्र णत्वप्रतिषेधो न भवति ॥

प्र ते नावं न समने वचस्युवं ब्रह्मणा यामि सवनेषु दाधृषिः ।
कुविन्नो अस्य वचसो निबोधिषदिन्द्रमुत्सं न वसुनः सिचामहे ॥ ७ ॥

प्र । ते । नावम् । न । समने । वचस्युवम् । ब्रह्मणा । यामि । सवनेषु । दधृषिः ।
कुवित् । नः । अस्य । वचसः । निऽबोधिषत् ।
इन्द्रम् । उत्सम् । न । वसुनः । सिचामहे ॥ ७ ॥

ᵛदाधृषिः[1] त्वत्प्रसादाच्छत्रूणां धर्षकोऽहं ᵛसमने संग्रामे ᵛवचस्युवम् ॥ अमि तन्वादित्वादुवङादेशः ॥ स्तोत्रमिच्छन्तं ᵛनावं ᵛन नावमिवापद्भ्यस्तारकं ᵛते त्वां सवनेषु त्रिषु ᵛब्रह्मणा स्तोत्रेण ᵛप्र ᵛयामि प्राप्नोमि[2] । किंच ᵛअस्य ᵛवचसः स्तुतिलक्षणमेतद्वाक्यं ᵛकुवित् बहु ᵛनिबोधिषत् इन्द्रो नितरां बुध्यताम् ॥ 'बुध अवगमने'। लेटि 'सिब्बहुलम्°' इति सिप्। कुवियोगादनिघातः। 'तिङि चोदात्तवति' इति गतेर्निघातः॥ वयं च ᵛउत्सं ᵛन जलस्य निधानभूतं कूपमिव ᵛवसुनः निधानभूतम् ᵛइन्द्रं ᵛसिचामहे सोमेन सिञ्चामः ॥ 'सिचिर् क्षरणे'। स्वरितेत्। आगमानुशासनस्यानित्यत्वात् नुमभावः ॥

पुरा संबाधादभ्या ववृत्स्व नो धेनुर्न वत्सं यवसस्य पिप्युषी ।
सकृत्सु ते सुमतिभिः शतक्रतो सं पत्नीभिर्न वृषणो नसीमहि ॥ ८ ॥

पुरा । सम्ऽबाधात् । अभि । आ । ववृत्स्व । नः । धेनुः । न । वत्सम् । यवसस्य । पिप्युषी ।
सकृत् । सु । ते । सुमतिऽभिः । शतक्रतो इति शतऽक्रतो ।
सम् । पत्नीभिः । न । वृषणः । नसीमहि ॥ ८ ॥

---

१. क-ञ-म-दधृषिः । २. क-ञ-प्राप्नोमि योमि? ।

हे इन्द्र संबाधात् शत्रुजन्यात् संबाधात्[1] पुरा नः अस्मान् अभ्या वत्रृत्स्व आवर्तय[2]। यथा संबाधोऽस्मान् न स्पृशति तथा कुर्वित्यर्थः। तत्र दृष्टान्तः। धेनुर्न वत्सम्। यथा यवसस्य घासेन विप्युषी आप्यायिता धेनुर्वत्सं क्षुद्बाधात्परावर्तयति तद्वत्। हे शतक्रतो वयं सुमतिभिः त्वद्विषयैः शोभनैः स्तोत्रैः सकृत् सकृदपि सु नसीमहि सुष्ठु व्याप्येमहि। तत्र दृष्टान्तः। वृषणः न। सेक्तारो युवानो यथा पत्नीभिः व्याप्यन्ते तद्वत्॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः॥ ९॥

नूनम्। सा। ते। प्रति। वरम्। जरित्रे। दुहीयत्। इन्द्र। दक्षिणा। मघोनी।
शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुऽवीराः॥९॥

नूनं सा त इति व्याख्याता॥ ॥ १८॥

'तदस्मै' इति नवर्चं षष्ठं सूक्तं गार्त्समदमैन्द्रम्। अत्रानुक्रमणिका– 'तदस्मै द्वित्रिष्टुबन्तम्' इति। अन्त्ये द्वे त्रिष्टुभौ शिष्टाः सप्त जगत्यः। अतिरात्रे द्वितीये पर्यायेऽच्छावाकशस्त्रे 'तदस्मै' इति सूक्तम्। 'अतिरात्रे पर्यायाणाम्' इति खण्डे सूत्रितं– 'तदस्मै नव्यमस्य पिब यस्य जज्ञान इन्द्रेति याज्या' (आश्व. श्रौ. ६. ४) इति॥

तदस्मै नव्यमङ्गिरस्वदर्चत शुष्मा यदस्य प्रत्नथोदीरते।
विश्वा यद्गोत्रा सहसा परीवृता मदे सोमस्य दृंहितान्यैरयत्॥ १॥

तत्। अस्मै। नव्यम्। अङ्गिरस्वत्। अर्चत। शुष्माः। यत्। अस्य। प्रत्नऽथा। उत्ऽईरते।
विश्वा। यत्। गोत्रा। सहसा। परिऽवृता। मदे। सोमस्य। दृंहितानि। ऐरयत्॥ १॥

गृत्समदो ब्रूते। हे स्तोतारः नव्यं नवतरमन्यैरदृष्टपूर्वं तत् तादृशं स्तोत्रम् अङ्गिरस्वत् अङ्गिरस इव अस्मै इन्द्राय अर्चत ब्रूत। यत् यस्माज्जातमात्रस्य अस्य इन्द्रस्य शुष्माः शत्रूणां शोषकाणि तेजांसि प्रत्नथा॥ 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' इति इवार्थे थाल्प्रत्ययः॥ प्रत्नानि पुरातनानीव उदीरते उद्गच्छन्ति॥ 'ईर गतौ'। अनुदात्तेत्। 'तिङि चोदात्तवति' इति गतेर्निघातः॥ यत् यस्माच्च विश्वा सर्वान् गोत्रा मेघान्। गा उदकानि त्रायन्ते रक्षन्तीति गोत्रा मेघाः। परीवृता वृत्रेणाक्रान्तान्॥ सर्वत्र सुपो डादेशः॥ तान् दृंहितानि तेन दृढीकृतान् मेघान् सोमस्य मदे हर्षे संजाते सति सहसा बलेन ऐरयत् उदघाटयत्। मेघभेदनेनापः प्रेरयामासेत्यर्थः। यद्वा विश्वा सर्वाणि परीवृता वलासुरेण[3] आक्रान्तानि दृंहितानि पर्वतबिले निरुद्धानि गोत्रा॥ 'इनित्रकट्यचश्च' इति समूहार्थे त्रप्रत्ययः॥ गवां वृन्दानि सहसैरयत्॥ तस्माद्बिलान्निरगमयत्। तस्मादर्चतेति समन्वयः॥ ऐरयत्। 'ईर गतौ'। ण्यन्तस्य लङि रूपम्। यद्वृत्तयोगादनिघातः॥

---

१. झ-तृ-थ–'शत्रुजन्यात् संबाधात्' नास्ति। २. ण-न–शत्रुभिरुत्पादितादावर्तय। ३. ग-थ-म–वृत्रासुरेण।

स भूतु यो ह प्रथमाय धायस ओजो मिमानो महिमानमातिरत् ।
शूरो यो युत्सु तन्वं परिव्यत शीर्षणि द्यां महिना प्रत्यमुञ्चत ॥ २ ॥

सः । भूतु । यः । ह । प्रथमाय । धायसे । ओजः । मिमानः । महिमानम् । आ । अतिरत् ।
शूरः । यः । युत्ऽसु । तन्वम् । परिऽव्यत । शीर्षणि । द्याम् । महिना । प्रति । अमुञ्चत ॥२॥

ᵛसः इन्द्रः ᵛभूतु भवतु । वर्धतामित्यर्थः । ᵛयः इन्द्रः ᵛओजः तेजो बलं ᵛमिमानः कुर्वाणः सन् ᵛप्रथमाय प्राथमिकाय ᵛधायसे ॥ 'धेट् पाने'॥ सोमपानाय ᵛमहिमानम् ᵛआतिरत् अवर्धयत् ॥ तिरतेर्व्यत्ययेन शः । यद्योगादनिघातः ॥ ᵛशूरः शत्रूणां शातयिता ᵛयः इन्द्रः ᵛयुत्सु युद्धेषु ᵛतन्वं स्वकीयं शरीरं ᵛपरिव्यत वर्मणा[1] परिवीतमकरोत् । स इन्द्रः ᵛमहिना स्वकीयेन महिम्ना ᵛशीर्षणि स्वशिरसि ᵛद्यां ᵛप्रत्यमुञ्चत अधारयत् ॥

अधाकृणोः प्रथमं वीर्यं महद्यदस्याग्रे ब्रह्मणा शुष्ममैरयः ।
रथेष्ठेन हर्यश्वेन विच्युताः प्र जीरयः सिस्रते सध्र्यक् पृथक् ॥ ३ ॥

अध । अकृणोः । प्रथमम् । वीर्यम् । महत् । यत् । अस्य । अग्रे । ब्रह्मणा । शुष्मम् । ऐरयः ।
रथेऽस्थेन । हरिऽअश्वेन । विऽच्युताः । प्र । जीरयः । सिस्रते । सध्र्यक् । पृथक् ॥ ३ ॥

ᵛअध अपि च हे इन्द्र त्वं ᵛप्रथमं मुख्यं तत् ᵛवीर्यं सामर्थ्यम् ᵛअकृणोः अकरोः । किं तत् । ᵛब्रह्मणा स्तोत्रेण स्तुतिसाधनभूतेन वेदवाक्येन ᵛअस्य वीर्यस्य स्तोतुर्जनस्य ᵛअग्रे पुरतः ᵛयत् ᵛशुष्मं शत्रूणां शोषकं बलम् ᵛऐरयः उदगमयः । ᵛजीरयः जरयितारः बाधका असुराः ᵛरथेष्ठेन रथस्थितेन ᵛहर्यश्वेन त्वया[2] ᵛविच्युताः स्वस्थानाच्च्याविताः सन्तः ᵛसध्र्यक् सध्रीचीनाः परस्परं संगताः ᵛपृथक् भीत्या वियुक्ताः[3] सन्तः ᵛप्र ᵛसिस्रते प्रकर्षेण धावन्ति ॥ 'सृ गतौ'। जुहोत्यादिः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् ॥ सध्र्यगिति 'सहस्य सध्रिः' इति सध्र्यादेशः । अञ्चिसध्र्योरन्तोदात्तत्वेन निपातनात् 'उदात्तस्वरितयोः०' इति यणः स्वरितत्वम् ॥

अधा यो विश्वा भुवनाभि मज्मनेशानकृत्प्रवया अभ्यवर्धत ।
आद्रोदसी ज्योतिषा वह्निरातनोत्सीव्यन्तमांसि दुधिता समव्ययत् ॥ ४ ॥

अध । यः । विश्वा । भुवना । अभि । मज्मना । ईशानऽकृत् । प्रऽवयाः । अभि । अवर्धत ।
आत् । रोदसी इति । ज्योतिषा । वह्निः । आ । अतनोत् ।
सीव्यन् । तमांसि । दुधिता । सम् । अव्ययत् ॥ ४ ॥

---

१. ज-ण-न–चर्मणा; झ१–त्वर्मेण । २. झ१-ण-त-थ-न-व–'त्वया' नास्ति । ३. क-ख-ग-च-ज-झ-ण-ण१-न-फ-व–अभियुक्ताः; झ १–युक्ताः ।

ᵛअध अपि च ᵛप्रवयाः प्रवृद्धान्नः पुरातनो वा ᵛयः इन्द्रः ᵛविश्वा ᵛभुवना सर्वान् लोकान् ᵛमज्मना बलेनाभिभूय ᵛईशानकृत् आत्मानं सर्वस्याधिपतिं कुर्वन्। यद्वा अग्न्यादीन् देवान् तत्तल्लोकाधिपतीन् कुर्वन् ᵛअभ्यवर्धत सर्वतः प्रवृद्धोऽभवत्। ᵛआत् अनन्तरं ᵛवह्निः जगतां वोढा स इन्द्रः ᵛज्योतिषा स्वीयेन[1] तेजसा ᵛरोदसी द्यावापृथिव्यौ ᵛआतनोत् व्याप्नोत्। किंच ᵛतमांसि तमोरूपाणि रक्षांसि ᵛदुधिता दुःस्थितानि[2] दुर्गतानि ᵛसीव्यन् विस्तारयन् ᵛसमव्ययत् आवृणोत्। जगद्व्याप्य वर्तत इत्यर्थः ॥

स प्राचीनान्पर्वतान्दृंहदोजसाधराचीनमकृणोदपामपः ।
अधारयत्पृथिवीं विश्वधायसमस्तभ्नान्मायया द्यामवस्रसः ॥ ५ ॥

सः । प्राचीनान् । पर्वतान् । दृंहत् । ओजसा । अधराचीनम् । अकृणोत् । अपाम् । अपः ।
अधारयत् । पृथिवीम् । विश्वऽधायसम् । अस्तभ्नात् । मायया । द्याम् । अवऽस्रसः ॥ ५ ॥

ᵛसः इन्द्रः ᵛप्राचीनान् इतस्ततः प्रकर्षेणाञ्चतो गच्छतः सपक्षान् ᵛपर्वतान् ᵛओजसा बलेन ᵛदृंहत्। पक्षच्छेदं कृत्वा भूमौ दृढीचकार । अचलानकरोदित्यर्थः। ᵛअपां मेघस्थितानामुदकानाम् ᵛअपः स्यन्दनलक्षणं कर्म ᵛअधराचीनम्। अधःप्रदेशमञ्चति गच्छतीत्यधराचीनम् । तादृशम् ᵛअकृणोत्। मेघभेदनं कृत्वापो भूमावपातयदित्यर्थः। किंच ᵛविश्वधायसं विश्वस्य धात्रीं ᵛपृथिवीं बलेन ᵛअधारयत्। ᵛमायया प्रज्ञयोपायेन ᵛद्यां द्युलोकम् ᵛअवस्रसः ॥ 'स्रंसु गतौ'। संपदादिलक्षणो भावे क्विप् ॥ अवपतनात् ᵛअस्तभ्नात् ॥ ॥ १९ ॥

सास्मा अरं बाहुभ्यां यं पिताकृणोद्विश्वस्मादा जनुषो वेदसस्परि ।
येना पृथिव्यां नि क्रिविं शयध्यै वज्रेण हत्व्यवृणक्तुविष्वणिः ॥ ६ ॥

सः । अस्मै । अरम् । बाहुऽभ्याम् । यम् । पिता । अकृणोत् ।
विश्वस्मात् । आ । जनुषः । वेदसः । परि ।
येन । पृथिव्याम् । नि । क्रिविम् । शयध्यै । वज्रेण । हत्वी । अवृणक् । तुविऽस्वनिः ॥ ६ ॥

ᵛसः तादृश इन्द्रः ᵛअस्मै जगते ᵛअरम् अलं पर्याप्तो बभूव। रक्षकत्वेन स्वामी बभूवेत्यर्थः। ᵛपिता सर्वस्य पालकः प्रजापतिः ᵛविश्वस्मात् सर्वस्मात् ᵛजनुषः जनात् ᵛपरि ततोऽप्युत्कृष्टात् ᵛवेदसः ज्ञानात् तद्विशिष्टं ᵛबाहुभ्यां स्वकीयाभ्यां बाहुभ्यां ᵛयम् ᵛआ ᵛअकृणोत्। ᵛतुविष्वणिः बहुकीर्तिः महास्वनो वा स इन्द्रः ᵛयेन ज्ञानेन ᵛक्रिविम् एतन्नामानमसुरं ᵛवज्रेण ᵛहत्वी ॥ 'स्नात्व्यादयश्च' इति त्वी ॥ हत्वा ताडयित्वा ᵛपृथिव्यां भूमौ ᵛशयध्यै शयनाय दीर्घनिद्रायै ᵛनि ᵛअवृणक् ॥ वृणक्तिर्हिंसाकर्मा ॥ न्यवधीत् ॥

---

१. म–स्वकीयेन। २. म–दुःखितानि।

अमाजूरिव पित्रोः सचा सती समानादा सदसस्त्वामिये भगम् ।
कृधि प्रकेतमुप मास्या भर दद्धि भागं तन्वो३ येन मामहः ॥ ७ ॥

अमाजूःऽइव । पित्रोः । सचा । सती । समानात् । आ । सदसः । त्वाम् । इये । भगम् ।
कृधि । प्रऽकेतम् । उप । मासि । आ । भर । दद्धि । भागम् । तन्वः । येन । ममहः ॥७॥

हे इन्द्र अमाजूः यावज्जीवं गृह एव जीर्यन्ती[1] पित्रोः सचा[1] मातापितृभ्यां सह भवन्ती तयोः शुश्रूषणपरा पतिमलभमाना सती[2] दुहिता समानात् आत्मनः पित्रोश्च साधारणात् सदसः गृहात् ॥ 'अधिकरणे चोपसंख्यानम्' इति पञ्चमी ॥ गृह उपस्थायैव यथा भागं याचति तथा स्तोताहं भगं भजनीयं धनं त्वाम् इये ॥ ई गत्यादिषु । लिड्युत्तम इति व्यत्ययेनात्मनेपदम् । इयङादेशः ॥ त्वां याचे । तत्र देयं धनं प्रकेतं प्रकर्षेण ज्ञातव्यं विश्वजनीयं[3] कृधि कुरु । तत्र उप मासि एतावदिदं धनमिति कुरु[4] । आ भर तत्र धनं संपादय । भागं भजनीयं धनं तन्वः शरीराय मह्यमिति यावत् दद्धि देहि । येन धनेन ममहः स्तोतॄनिमान् पूजयसि[5] ॥

भोजं त्वामिन्द्र वयं हुवेम ददिष्ट्वमिन्द्रापांसि वाजान् ।
अविड्ढीन्द्र चित्रया न ऊती कृधि वृषन्निन्द्र वस्यसो नः ॥ ८ ॥

भोजम् । त्वाम् । इन्द्र । वयम् । हुवेम । ददिः । त्वम् । इन्द्र । अपांसि । वाजान् ।
अविड्ढि । इन्द्र । चित्रया । नः । ऊती । कृधि । वृषन् । इन्द्र । वस्यसः । नः ॥ ८ ॥

हे इन्द्र भोजं पालयितारं भोजयितारं वा त्वां वयं हुवेम ॥ ह्वयतेर्लिङि 'बहुलं छन्दसि' इति संप्रसारणम् ॥ हे इन्द्र त्वम् अपांसि कर्माणि वाजान् अन्नानि ददिः ॥ 'दाण् दाने' 'आदृगमहनजनः°' इति किप्रत्ययः । लिड्वद्भावादभ्यासादिकार्यम् । 'न लोकाव्ययनिष्ठा°' इति षष्ठी-प्रतिषेधः ॥ दाता खलु । हे इन्द्र चित्रया नानाप्रकारया ऊती ऊत्या पालनेन नः अस्मान् अविड्ढि रक्ष । वृषन् कामानां वर्षक हे इन्द्र नः अस्मान् वस्यसः अतिशयेन वसुमतः कृधि कुरु ॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ ९ ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥९॥

---

१. क-ञ्ज-म-जीवन्ती ( ञ्ज-जीर्यतीति ) पित्रोः सचां सा अमा । २. ण-त-थ-म-'सती' नास्ति ।
३. ञ्ज१-ण-त-थ-न-व-विश्वसनीयम् ( ? ) । ४. क-ञ्ज-त-थ-न-म-व-तं कुरु; ञ्ज१-मितं कुरु ।
५. च-ज-ण-ण१-न-फ-व-आपूजयसि; त-थ-आपूजयति; म-येन पूजयसि ।

नूनं सा त इति व्याख्याता ॥  ॥ २० ॥

'प्राता रथः' इति नवर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम्। 'प्रातः' इत्यनुक्रान्तम्। लैङ्गिको विनियोगः ॥

प्राता रथो नवो योजि सस्निश्चतुर्युगस्त्रिकशः सप्तरश्मिः।
दशारित्रो मनुष्यः स्वर्षाः स इष्टिभिर्मतिभी रंह्यो भूत् ॥ १ ॥

प्रातरिति। रथः। नवः। योजि। सस्निः। चतुःऽयुगः। त्रिऽकशः। सप्तऽरश्मिः।
दशऽअरित्रः। मनुष्यः। स्वःऽसाः। सः। इष्टिऽभिः। मतिऽभिः। रंह्यः। भूत् ॥ १ ॥

ᵛरथः रंहणाद्रथो यज्ञः। स च ᵛनवः। नूयते स्तूयतेऽत्रेति नवः स्तुतिमान्। ᵛसस्निः॥ 'स्ना[1] शौचे'। 'आदृगमहन॰' इति किन्प्रत्ययः॥ शुद्धः। एवंविधो यज्ञः ᵛप्रातः प्रातःकाले ᵛयोजि अयोज्यस्माभिः। ᵛचतुर्युगः। युज्यन्त इति युगानि ग्रावाणः। चत्वारि युगानि यस्य स तथोक्तः। अध्वर्य्वादृत्विगभिप्रायं वा। ᵛत्रिकशः। तिस्रः कशा वाचो मन्द्रमध्यमोत्कृष्टरूपा यस्य स तथोक्तः। सवनत्रयाभिप्रायं वा। ᵛसप्तरश्मिः। अश्नुवते व्याप्नुवन्ति कर्माणीति रश्मयश्छन्दांसि। सप्तसंख्याकानि गायत्र्यादीनि छन्दांसि यस्य स तथोक्तः। ᵛदशारित्रः। अरिभ्यः पापेभ्यस्त्रायन्त इत्यरित्रा ग्रहाः। दशसंख्याका ग्रहा यस्य स तादृशः। चमसाध्वर्य्वभिप्रायं वा। ᵛमनुष्यः मनुष्याणां हितः। ᵛस्वर्षाः स्वर्गस्य दाता। ᵛसः एवंविधो यज्ञः ᵛइष्टिभिः प्रायणीयातिथ्यादिभिः ᵛमतिभिः मननीयैः स्तोत्रैः ᵛरंह्यः शब्दनीयः ᵛभूत् अभूत्। यद्वा नवोऽभिनवः। सस्निः॥ सनोतेर्द्विवचनादि॥ कामानां दाता। रथः। रमन्तेऽस्मिन्निति रथः स्यन्दनः प्रातःसवने च सोमपानार्थं योजि अश्वैरयोजि। कीदृशः। चतुर्युगः। त्रिकशः। तिस्रः कशा यस्य स तथोक्तः। सप्तरश्मिः सप्तरज्जुः। दशारित्रो दशचक्रः[2]। मनुष्यो मनुष्यहितः स्वर्षाः स्वर्गस्य संगमयिता इन्द्ररथः[3] इष्टिभिर्यागैर्मतिभिः स्तोत्रैश्च प्राप्तव्यो भवति॥

सास्मा अरं प्रथमं स द्वितीयमुतो तृतीयं मनुषः स होता।
अन्यस्या गर्भमन्य ऊं जनन्त सो अन्येभिः सचते जेन्यो वृषा ॥ २ ॥

सः। अस्मै। अरम्। प्रथमम्। सः। द्वितीयम्। उतो इति। तृतीयम्। मनुषः। सः। होता।
अन्यस्याः। गर्भम्। अन्ये। ऊँ इति। जनन्त। सः। अन्येभिः। सचते। जेन्यः। वृषा ॥२॥

ᵛसः यज्ञः सोमो वा ᵛअस्मै इन्द्राय ᵛप्रथमं प्रातःसवने ᵛअरं पर्याप्तोऽभूत्। ᵛसः च ᵛद्वितीयं माध्यंदिने सवने पर्याप्तोऽभूत्। ᵛउतो अपि च सः ᵛतृतीयं तृतीये सवने पर्याप्तोऽभूत्। सर्वत्र 'कालाध्वनोः॰' इति द्वितीया॥ ᵛसः यज्ञः सोमो वा ᵛमनुषः मनुष्यस्य ᵛहोता शुभानां वोढा भवति। किंच ᵛअन्ये ऋत्विजः ᵛअन्यस्याः पृथिव्या वेदात्मिकायाः[4] वाचो वा ᵛगर्भं सन्तं सोमं

---

१. झ१-म-ष्णा। २. क-च-ण१-त-थ-न-फ-व-दशवक्त्रः; ख-ग-ण-दशवक्रः; झ-दशवक्रः।
३. म-ईद्रथः। ४. ख-ग-च-ज-झ१-ण-ण१-त-थ-न-फ-व-वेद्यात्मिकायाः।

यज्ञं वा ᵛजनन्त अजनयन्त । ᵛउ प्रसिद्ध्यर्थः । ᵛवृषा अभिमतफलवर्षकः ᵛजेन्यः जयसमर्थः ᵛसः यज्ञः सोमो वा ᵛअन्येभिः अन्यैः इन्द्रादिभिर्देवैः ᵛसचते संगच्छते ॥ ' सच समवाये ' । अनुदात्तेत् ॥

हरी नु कं रथ इन्द्रस्य योजमायै सूक्तेन वचसा नवेन ।

मो षु त्वामत्र बहवो हि विप्रा नि रीरमन्यजमानासो अन्ये ॥ ३ ॥

हरी इति । नु । कम् । रथे । इन्द्रस्य । योजम् । आऽयै । सुऽउक्तेन । वचसा । नवेन ।

मो इति । सु । त्वाम् । अत्र । बहवः । हि । विप्राः । नि । रीरमन् । यजमानासः । अन्ये ॥ ३ ॥

ᵛइन्द्रस्य संबन्धिनि ᵛरथे ᵛहरी एतन्नामकावश्वौ ᵛनु क्षिप्रं ᵛकं सुखेन ᵛआयै गमनाय ᵛनवेन अन्यैरकृतपूर्वेण ᵛवचसा वेदात्मकेन ᵛसूक्तेन साधनेन ᵛयोजं युनज्मि ॥ ' युजिर् योगे ' । लुङि ' इरितो वा ' इति च्लेरङादेशः ॥ ᵛअत्र अस्मिन् यज्ञे ᵛबहवः ᵛविप्राः मेधाविनः स्तोतारो भवन्ति ᵛहि । तथापि ᵛअन्ये मद्व्यतिरिक्ताः ᵛयजमानासः यजमानाः ᵛत्वां ᵛसु सुष्ठु ᵛमो ᵛनि ᵛरीरमन् नितरां मा रमयन्तु । अतोऽस्मदीयं यज्ञमागत्य सोमं पिबेति भावः ॥ रीरमन् । रमतेर्ण्यन्तस्य लुङि चङि सन्वद्भावादभ्यासस्येत्वदीर्घौ । वाक्यभेदादत्र हियोगाभावेन निघातः ॥

आ द्वाभ्यां हरिभ्यामिन्द्र याह्या चतुर्भिरा षड्भिर्हूयमानः ।

आष्टाभिर्दशभिः सोमपेयमयं सुतः सुमख मा मृधस्कः ॥ ४ ॥

आ । द्वाभ्याम् । हरिऽभ्याम् । इन्द्र । याहि । आ । चतुःऽभिः । आ । षट्ऽभिः । हूयमानः ।

आ । अष्टाभिः । दशऽभिः । सोमऽपेयम् । अयम् । सुतः । सुऽमख । मा । मृधः । करिति कः ॥ ४ ॥

हे ᵛइन्द्र होतृभिः ᵛआ ᵛहूयमानः त्वं ᵛद्वाभ्यां ᵛहरिभ्याम् अश्वाभ्यामिमं यज्ञं प्रति सोमपानार्थम् ᵛआ ᵛयाहि । ᵛचतुर्भिः हरिभिः ᵛआ याहि । तथा ᵛषड्भिः आगच्छ ᵛसोमपेयम् ॥ ' पा पाने ' । कर्मणि ' अचो यत् ' । ' ईद्यति ' इतीत्वम् । पातव्यं सोमं प्रति ᵛअष्टाभिः अश्वैः ᵛआ याहि ॥ ' अष्टनो दीर्घात् ' (पा. सू. ६. १. १७२) इति विभक्तेरुदात्तत्वम् ॥ ᵛदशभिः हरिभिरागच्छ । ᵛसुमख सुयज्ञ सुधन वा हे इन्द्र ᵛअयं सोमस्त्वदर्थमभिषुतः । अतो यज्ञस्य ᵛमृधः हिंसाः ᵛमा ᵛकः मा कार्षीः ॥ करोतेर्लुङि ' मन्त्रे घस॰ ' इत्यादिना च्लेर्लुक् । गुणे कृते हल्ङ्यादिना सिपो लोपः ॥ यद्यपीन्द्रस्य द्वावेव हरी तथापि तयोर्विभूतिभेदान्नानात्वम् । अतोऽश्वबहुत्वमविरुद्धम् ॥

आ विंशत्या त्रिंशता याह्यर्वाङा चत्वारिंशता हरिभिर्युजानः ।

आ पञ्चाशता सुरथेभिरिन्द्रा षष्ट्या सप्तत्या सोमपेयम् ॥ ५ ॥

आ । विंशत्या । त्रिंशता । याहि । अर्वाङ् । आ । चत्वारिंशता । हरिऽभिः । युजानः ।

आ । पञ्चाशता । सुऽरथेभिः । इन्द्र । आ । षष्ट्या । सप्तत्या । सोमऽपेयम् ॥ ५ ॥

हे इन्द्र सोमपेयं पातव्यं सोमं प्रति अर्वाङ् अस्मदभिमुखः सन् विंशत्या विंशतिसंख्याकैरश्वैः आ याहि । त्रिंशता त्रिंशत्संख्याकैर्हरिभिरागच्छ । चत्वारिंशता चत्वारिंशत्संख्याकैः हरिभिः युजानः युज्यमानस्त्वं सोमपानं प्रति आ याहि । सुरथेभिः सुरंहणैः सुगमनैः पञ्चाशता हरिभिः आ याहि । तथा षष्ट्या षष्टिसंख्याकैर्हरिभिः सप्तत्या एतत्संख्याकैर्हरिभिः सोमपानं प्रत्यागच्छ ॥ ॥ २१ ॥

आशीत्या नवत्या याह्यर्वाङा शतेन हरिभिरुह्यमानः ।
अयं हि ते शुनहोत्रेषु सोम इन्द्र त्वाया परिषिक्तो मदाय ॥ ६ ॥

आ । अशीत्या । नवत्या । याहि । अर्वाङ् । आ । शतेन । हरिऽभिः । उह्यमानः ।
अयम् । हि । ते । शुनऽहोत्रेषु । सोमः । इन्द्र । त्वाऽया । परिऽसिक्तः । मदाय ॥ ६ ॥

अशीत्या अशीतिसंख्याकैरश्वैः सोमपानार्थम् अर्वाङ् अस्मदभिमुखः सन् आ याहि । नवत्या एतत्संख्याकैरश्वैरागच्छ । शतेन शतसंख्याकैः हरिभिरुह्यमानः धार्यमाणस्त्वम् आ याहि । हे इन्द्र हि यस्मात् ते मदाय हर्षाय शुनहोत्रेषु । सुखेन हूयते सोमो यैरिति शुनहोत्राः पात्रविशेषाः । तेषु अयं सोमः त्वाया त्वत्कामनया परिषिक्तः ॥

मम ब्रह्मेन्द्र याह्यच्छा विश्वा हरी धुरि धिष्वा रथस्य ।
पुरुत्रा हि विहव्यो बभूथास्मिञ्छूर सवने मादयस्व ॥ ७ ॥

मम । ब्रह्म । इन्द्र । याहि । अच्छ । विश्वा । हरी इति । धुरि । धिष्व । रथस्य ।
पुरुऽत्रा । हि । विऽहव्यः । बभूथ । अस्मिन् । शूर । सवने । मादयस्व ॥ ७ ॥

हे इन्द्र मम ब्रह्म अस्मदीयामेव स्तुतिम् अच्छ अभिलक्ष्य याहि । विश्वा व्याप्तौ हरी रथस्य धुरि युगप्रान्ते धिष्व संयोजय[1] । पुरुत्रा पुरुभिर्बहुभिर्यजमानैस्त्वं विहव्यः विविधं ह्वातव्यः बभूथ बभूविथ ॥ ‘ बभूथाततन्थ जगृभ्म ववर्थ॰ ’ इति निपातनादिडभावः ॥ हे शूर अस्मिन् सवने यज्ञे मादयस्व सोमपानेन हृष्टो भव ॥

न म इन्द्रेण सख्यं वि योषदस्मभ्यमस्य दक्षिणा दुहीत ।
उप ज्येष्ठे वरूथे गभस्तौ प्रायेप्राये जिगीवांसः स्याम ॥ ८ ॥

न । मे । इन्द्रेण । सख्यम् । वि । योषत् । अस्मभ्यम् । अस्य । दक्षिणा । दुहीत ।
उप । ज्येष्ठे । वरूथे । गभस्तौ । प्रायेऽप्राये । जिगीवांसः । स्याम ॥ ८ ॥

---

१. म—योजय ।

vइन्द्रेण सह vमे मम vसख्यं यष्टृयष्टव्यलक्षणं सख्यं vन vवि vयोषत् कदाचिदपि न वियुज्यताम् ॥ यौतेर्लेटि ' सिब्बहुलम्° ' इति सिप् । अडागमः ॥ vअस्य इन्द्रस्य vदक्षिणा इन्द्रकर्तृकं दानम् vअस्मभ्यं vदुहीत अभिमतफलं दुग्धाम् ॥ दुहेर्लिङि रूपम् । vज्येष्ठे अतिशयेन प्रशस्ये vवरूथे आपदां वारके वरणीये वा vगभस्तौ बाहौ vउप समीपे वर्तिनः vस्याम । इन्द्रस्य हस्तस्पर्शयोग्या भवेमेत्यर्थः । किंच vप्रायेप्राये सोमपानार्थमिन्द्रस्य यज्ञशालायां प्रवेशेप्रवेशे vजिगीवांसः शत्रूणां जेतारो भवेम । यद्वा प्रायेप्राये । प्रकर्षेणेयते गम्यते योद्धृभिरिति प्रायं युद्धम् । तस्मिन् युद्धे जिगीवांसः शत्रून् जितवन्तो भवेम ॥

**नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।**

**शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ ९ ॥**

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।

शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥९॥

नूनं सा त इति व्याख्याता ॥ ॥ २२ ॥

'अपाय्यस्य' इति नवर्चमष्टमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । ' अपायि ' इत्यनुक्रान्तम् । लैङ्गिकः सूक्तविनियोगः । द्वितीये पर्याये होतृशस्त्रयाज्या अपायीत्येषा ( आश्व. श्रौ. ६. ४ ) ॥

**अपाय्यस्यान्धसो मदाय मनीषिणः सुवानस्य प्रयसः ।**

**यस्मिन्निन्द्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यन्तश्च नरः ॥ १ ॥**

अपायि । अस्य । अन्धसः । मदाय । मनीषिणः । सुवानस्य । प्रयसः ।

यस्मिन् । इन्द्रः । प्रऽदिवि । ववृधानः । ओकः । दधे । ब्रह्मण्यन्तः । च । नरः ॥ १ ॥

vसुवानस्य सोमाभिषवं कुर्वाणस्य vमनीषिणः प्राज्ञस्य यजमानस्य संबन्धिनः vप्रयसः ॥ ' प्रीङ् तर्पणे ' । असुन् ॥ प्रीतिकरस्य[1] vअस्य सोमलक्षणस्य vअन्धसः vमदाय vअपायि । एतदन्नमिन्द्रेण पीतमित्यर्थः ॥ यद्वा अपायीति पातेः ' व्यत्ययो बहुलम् ' इति चिण् कर्तरि भवति । ' छन्दसि लुङ्लङ्लिटः ' इति लोडर्थे लुङ् ॥ प्रीतिकरस्य[2] अन्धसो मदायापायि ॥ शेषविवक्षया कर्मणि षष्ठी ॥ इन्द्रः सोमं पिबतु । vप्रदिवि पुराणे vयस्मिन् सोमलक्षणेऽन्धसि[3] vवावृधानः वर्धमानः vइन्द्रः vओकः vदधे सेव्यतया निवासं चकार । किंच vब्रह्मण्यन्तः इन्द्राय स्तोत्रमिच्छन्तः vनरः कर्मणां नेतार ऋत्विजो यस्मिन्निवासं दधिरे[4] । तदेतदपायीति पूर्वेणान्वयः ॥

---

१. त–प्रीतिकरणस्य । २. झ१-ण-व–प्रीतिकरणस्य । ३. त- सोमलक्षणान्धसि । ४. झ१-म-व–विदधिरे ।

अस्य मन्दानो मध्वो वज्रहस्तोऽहिमिन्द्रो अर्णोवृतं वि वृश्चत् ।
प्र यद्वयो न स्वसराण्यच्छा प्रयांसि च नदीनां चक्रमन्त ॥ २ ॥

अस्य । मन्दानः । मध्वः । वज्रऽहस्तः । अहिम् । इन्द्रः । अर्णःऽवृतम् । वि । वृश्चत् ।
प्र । यत् । वयः । न । स्वसराणि । अच्छ । प्रयांसि । च । नदीनाम् । चक्रमन्त ॥ २ ॥

ᵛअस्य ᵛमध्वः ॥ तृतीयार्थे षष्ठी ॥ अनेन मदकरेण सोमेन ᵛमन्दानः हृष्यन् ᵛवज्रहस्तः वज्रयुक्तो हस्तो यस्य सः ᵛइन्द्रः ᵛअर्णोवृतम् उदकस्यावरकमुदकेनावृतं वा ᵛअहिं वृत्रं मेघं वा ᵛवि ᵛवृश्चत् विशेषेणाच्छिनत् ॥ 'ओव्रश्चू छेदने'। तौदादिकः । लङि ग्रहिज्यादिना संप्रसारणम् ॥ ᵛयत्[1] यदाहि-भेदने जाते ᵛनदीनां ᵛप्रयांसि प्रीणयितृणि जलानि ᵛअच्छ समुद्रमभिलक्ष्य ᵛप्र ᵛचक्रमन्त गन्तु-मुपाक्रमन् । तत्र दृष्टान्तः । ᵛवयो ᵛन । यथा पक्षिणः ᵛस्वसराणि । सुष्ठु अर्यन्ते प्राप्यन्त इति स्वसराणि[2] कुलायाः । तानभिलक्ष्य गच्छन्ति तद्वत् ॥

स माहिन इन्द्रो अर्णो अपां प्रैरयदहिहाच्छा समुद्रम् ।
अजनयत्सूर्यं विदद्गा अक्तुनाह्नां वयुनानि साधत् ॥ ३ ॥

सः । माहिनः । इन्द्रः । अर्णः । अपाम् । प्र । ऐरयत् । अहिऽहा । अच्छ । समुद्रम् ।
अजनयत् । सूर्यम् । विदत् । गाः । अक्तुना । अह्नाम् । वयुनानि । साधत् ॥ ३ ॥

ᵛमाहिनः महनीयः[3] पूजनीयो यद्वा महिमोपेतः । ᵛअहिहा अहिं मेघं हतवानिन्द्रः ॥ 'ब्रह्म-भ्रूणवृत्रेषु क्विप्', 'बहुलं छन्दसि' इति भूतकाले क्विप् ॥ ᵛसः ᵛइन्द्रः ᵛअपाम् ᵛअर्णः ॥ 'ऋ गतौ'॥ स्रोतोलक्षणं प्रवाहं ᵛसमुद्रम् ᵛअच्छ अभिलक्ष्य ᵛप्रैरयत् । किंच स इन्द्रोऽङ्गिरसां बिलान्तर्वर्ति-नामावृतानां गवां लाभाय ᵛसूर्यम् ᵛअजनयत् । ततः ᵛगाः पणिभिरपहृता गाः ᵛविदत् अलभत ॥ 'विदिर् लाभे'। लुङि 'इरितो वा' इति च्लेरङादेशः । वाक्यभेदादनिघातः ॥ तथा ᵛअक्तुना तेजसा ᵛअह्नां दिवसानां ᵛवयुनानि प्रज्ञानानि प्रकाशान् ᵛसाधत् असाधयत् ॥

सो अप्रतीनि मनवे पुरूणीन्द्रो दाशद्दाशुषे हन्ति वृत्रम् ।
सद्यो यो नृभ्यो अतसाय्यो भूत्पस्पृधानेभ्यः सूर्यस्य सातौ ॥ ४ ॥

सः । अप्रतीनि । मनवे । पुरूणि । इन्द्रः । दाशत् । दाशुषे । हन्ति । वृत्रम् ।
सद्यः । यः । नृऽभ्यः । अतसाय्यः । भूत् । पस्पृधानेभ्यः । सूर्यस्य । सातौ ॥ ४ ॥

---

१. ण–किंच यत् । २. क-ख-ग-झ-ण१-त-न-म-व–स्व इति स्वसराणि । ३. क-च-झ१-त-थ-म–मंहनीयः ।

ᵛसः ᵛइन्द्रः ᵛदाशुषे हविर्दत्तवते ᵛमनवे मनुष्याय यजमानाय ᵛपुरूणि बहूनि ᵛअप्रतीनि उत्कृष्टानि धनानि ᵛदाशत् ददाति। किंच ᵛवृत्रम् असुरं ᵛहन्ति। कीदृशः। ᵛयः इन्द्रः ᵛसूर्यस्य ᵛसातौ। सातिः संभजनम्। सूर्यसंभजनविषयभूते[1] ᵛपस्पृधानेभ्यः अहमेव[2] प्रथमं सूर्यं प्राप्नुयामहमेव प्रथमं सूर्यं प्राप्नुयाम्[2] इति स्पर्धमानेभ्यः स्तोतृभ्यः नृभ्यः[3] ᵛसद्यः तदानीमेव ᵛअतसाय्यः तत्प्राप्तिहेतुभूतः सन् समाश्रयणीयः ᵛभूत् अभूत्। यद्वा सूर्यस्य सातौ॥ 'षोऽन्तकर्मणि'। अधिकरणे क्तिन्॥ सूर्यस्य संबन्धिनि युद्धे पस्पृधानेभ्यः सूर्येण सह स्पर्धमानेभ्योऽतसाय्योऽभूत्॥

स सुन्वत इन्द्रः सूर्यमा देवो रिणङ्मर्त्याय स्तवान्।

आ यद्रयिं गुहदवद्यमस्मै भरदंशं नैतशो दशस्यन्॥ ५॥

सः। सुन्वते। इन्द्रः। सूर्यम्। आ। देवः। रिणक्। मर्त्याय। स्तवान्।

आ। यत्। रयिम्। गुहत्ऽअवद्यम्। अस्मै। भरत्। अंशम्। न। एतशः। दशस्यन्॥५॥

ᵛस्तवान् एतशेन स्तूयमानः ᵛदेवः द्योतमानः ᵛसः ᵛइन्द्रः ᵛसुन्वते सोमाभिषवं कुर्वते ᵛमर्त्याय मनुष्यायैतशाय ᵛसूर्यम् ᵛआ ᵛरिणक्। एतशेन स्पर्धमानं सूर्यं बलेनारेचयत्। तथा च निगमः– 'प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः' ( ऋ. सं. १. ६१. १५ ) इति। ᵛयत् यस्मात् ᵛएतशः सौवश्व्यो राजा ᵛदशस्यन् यजमानः ᵛअस्मै इन्द्राय ᵛगुहदवद्यं प्रच्छन्नावद्यं ᵛरयिं सोमरूपधनम्[4] ᵛआ ᵛभरत्[4] संपादयामास। तत्र दृष्टान्तः। ᵛअंशं ᵛन। यथा पिता अंशं भागं पुत्राय भरति तद्वत्॥ ॥ २३॥

स रन्धयत्सदिवः सारथये शुष्णमशुषं कुयवं कुत्साय।

दिवोदासाय नवतिं च नवेन्द्रः पुरो व्यैरच्छम्बरस्य॥ ६॥

सः। रन्धयत्। सऽदिवः। सारथये। शुष्णम्। अशुषम्। कुयवम्। कुत्साय।

दिवःऽदासाय। नवतिम्। च। नव। इन्द्रः। पुरः। वि। ऐरत्। शम्बरस्य॥ ६॥

ᵛसदिवः दीप्तियुक्तः ᵛसः इन्द्रः ᵛसारथये आत्मनः सारथ्यं कुर्वते ᵛकुत्साय[5] राजर्षये ᵛशुष्णम्। शोषयति सर्वमिति शुष्णः कश्चिदसुरः। तम् ᵛअशुषं[6] न केनापि शोषणीयम्। ᵛकुयवम् एतन्नामानमसुरं ᵛरन्धयत्। रध्यतिर्वशगमने। वशमनयत्॥ यद्वा 'रध हिंसासंराद्ध्योः' इत्यस्य ण्यन्तस्य 'रधिजभोरचि' इति नुम्॥ अवधीत्। किंच सः ᵛइन्द्रः ᵛदिवोदासाय एतन्नामकाय राज्ञे ᵛशम्बरस्य असुरस्य ᵛनव ᵛनवतिं ᵛपुरः ᵛव्यैरत् विदारितवान्॥

---

१. क-ख-ग-च-झ-ण-न-व–सूर्यसंभजनविषये भूते। २. ख-ग-च-झ१-ण-ण१-त-थ-न-म-व–अहमेव प्रथमं सूर्यं प्राप्नुयाम्। ३. क-झ-भ-म-व–'नृभ्यः' नास्ति। ४. क-झ–झ१-त-व–सोममभरत्; ण-न–सोममरम्भत्; थ–सोममारभत; म–सोममारभत्। ५. क-झ-थ-म-व–कुत्साय अरये ( स्मै? ); झ१– कुत्साय अस्मै। ६. म–असुरम्।

एवा त इन्द्रोचथमहेम श्रवस्या न त्मना वाजयन्तः ।
अश्याम तत्साप्तमाशुषाणा ननमो वधरदेवस्य पीयोः ॥ ७ ॥

एव । ते । इन्द्र । उचथम् । अहेम । श्रवस्या । न । त्मना । वाजयन्तः ।
अश्याम । तत् । साप्तम् । आशुषाणाः । ननमः । वधः । अदेवस्य । पीयोः ॥ ७ ॥

हे इन्द्र श्रवस्या ॥ 'सुपां सुलुक्॰' इति तृतीयायाः पूर्वसवर्णदीर्घः ॥ अन्नेच्छया वाजयन्तः त्वां बलिनं कुर्वन्तः । यद्वा श्रवस्या यशःकामनया वाजयन्तोऽन्नमिच्छन्तः ॥ इच्छायामपि णिच् दृश्यते । अश्वायन्तो गव्यन्तो वाजयन्त इति । क्यजन्तत्वे चित्प्रातिपदिकस्य[1] अन्तोदात्तत्वं स्यात् 'वाजयन्तः शतक्रतुम्' इति यथा ॥ तादृशा वयं ते तुभ्यम् एव उचथं स्तोत्रं त्मना आत्मना स्वयमेव न अहेम इदानीं प्रापयेम ॥ 'अहि गतौ'। न संप्रत्यर्थे ॥ आशुषाणाः ॥ अश्नोतेः कानचि 'व्यत्ययो बहुलम्' इति लिट्यपि विकरणद्वय उप्रत्ययः स च ॥ व्याप्नुवाना वयं[2] यदभिलषितं तत् साप्तं सप्तपुरुषसंबन्धि साप्तपदीनं सख्यम् अश्याम व्याप्नुयाम । अदेवस्य देवान् इन्द्रादीनजानतः पीयोः ॥ पीयतिर्हिंसाकर्मा ॥ हिंसकस्यासुरस्य वधः ॥ वध्यन्ते शत्रवोऽनेनेति वधमायुधम् ॥ ननमः तदधोऽनमयः ॥ ननमः । 'णमु प्रह्वत्वे'। ण्यन्तस्य लुङि चङि रूपम् । 'मितां ह्रस्वः' इति ह्रस्वः ॥

एवा ते गृत्समदाः शूर मन्मावस्यवो न वयुनानि तक्षुः ।
ब्रह्मण्यन्त इन्द्र ते नवीय इषमूर्जं सुक्षितिं सुम्नमश्युः ॥ ८ ॥

एव । ते । गृत्सऽमदाः । शूर । मन्म । अवस्यवः । न । वयुनानि । तक्षुः ।
ब्रह्मण्यन्तः । इन्द्र । ते । नवीयः । इषम् । ऊर्जम् । सुऽक्षितिम् । सुम्नम् । अश्युः ॥ ८ ॥

शूर बलवन् हे इन्द्र ते तुभ्यं गृत्समदाः । अत्र यास्कः–'गृत्समदो गृत्समदनो गृत्स इति मेधाविनाम गृणातेः स्तुतिकर्मणः' (निरु. ९.५.) इति । तथाविधाः मन्म मननीयं स्तोत्रं ते तुभ्यम् एव तक्षुः ततक्षुः चक्रुः । तत्र दृष्टान्तः । अवस्यवो न ॥ अवः । गत्यर्थादवतेरसुनि रूपम् अव इति ॥ अवो गमनमिच्छन्तः पुमांसः वयुनानि मार्गान् यथा कुर्वन्ति तद्वत् । किंच नवीयः ॥ 'सुपां सुलुक्॰' इति षष्ठ्या लुक् ॥ नवीयसो नवतरस्य ते तव ब्रह्मण्यन्तः स्तोत्रं कर्तुमिच्छन्तो गृत्समदाः सुक्षितिम् इषम् शोभननिवासोपेतमन्नम् ऊर्जं बलं सुम्नं सुखं च अश्युः प्राप्नुयुः । एकस्मिन् गृत्समदे बहुवचनं परोक्षनिर्देशश्च ॥

---

१. क-ञ्ज-न-म-व–तिप्रातिपादिकस्य; ञ१–सति प्रातिपदिकस्य; ण–अपि प्रातिपदिकस्य । २. व–वयं च ।

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी ।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ ९ ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी ।
शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥९॥

नूनं सा त इति सिद्धार्था ॥ २४ ॥

'वयं ते वयः' इति नवर्चं नवमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम् । 'वयं ते' इत्यनुक्रान्तम् । सूक्तविनियोगो लिङ्गादवधार्यताम् ।

वयं ते वय इन्द्र विद्धि षु णः प्र भरामहे वाजयुर्न रथम् ।
विपन्यवो दीध्यतो मनीषा सुम्नमियक्षन्तस्त्वावतो नॄन् ॥ १ ॥

वयम् । ते । वयः । इन्द्र । विद्धि । सु । नः । प्र । भरामहे । वाजऽयुः । न । रथम् ।
विपन्यवः । दीध्यतः । मनीषा । सुम्नम् । इयक्षन्तः । त्वाऽवतः । नॄन् ॥ १ ॥

हे इन्द्र ते तुभ्यं वयं वयः सोमलक्षणमन्नं प्र भरामहे प्रकर्षेण संपादयामः । तत्र दृष्टान्तः । वाजयुर्न । यथान्नमात्मन इच्छन् पुमान् रथं शकटं संपादयति तद्वत् । एवं हविःसंपादकान् नः अस्मान् सु सुष्ठु विद्धि जानीहि ॥ विदेर्ज्ञानार्थस्य लोटि रूपम् । वाक्यादित्वादनिघातः ॥ किं कुर्वन्तो वयम् । विपन्यवः तव स्तोत्रं कुर्वाणाः । मनीषा मनस ईषया स्तुत्या दीध्यतः दीप्यमानाः ॥ 'दीधीङ् दीप्तिदेवनयोः' । व्यत्ययेन शतृ ॥ त्वावतः ॥ 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' इति वतुप् ॥ त्वत्सदृशान् नॄन् नेतॄनग्न्यादीन् सुम्नं सुखम् इयक्षन्तः याचमानाः । यद्वा सुम्नं सुखेन नॄन् नेतॄन् अग्न्यादीन् देवानियक्षन्तः ॥ इयक्षतिर्गतिकर्मा ॥ हविषा तान् प्राप्नुवन्तो वयं भरामहे इति समन्वयः ॥

त्वं न इन्द्र त्वाभिरूती त्वायतो अभिष्टिपासि जनान् ।
त्वमिनो दाशुषो वरूतेत्थाधीरभि यो नक्षति त्वा ॥ २ ॥

त्वम् । नः । इन्द्र । त्वाभिः । ऊती । त्वाऽयतः । अभिष्टिऽपा । असि । जनान् ।
त्वम् । इनः । दाशुषः । वरूता । इत्थाऽधीः । अभि । यः । नक्षति । त्वा ॥ २ ॥

हे इन्द्र त्वं त्वाभिः त्वदीयाभिः ऊती ऊतिभिः पालनाभिः[1] नः अस्मान् पाहि । किंच त्वायतः ॥ 'सुप आत्मनः क्यच्' । 'शतुरनुमः॰' इति विभक्तेरुदात्तत्वम् ॥ त्वत्कामान् जनान् अभिष्टिपा ॥ 'सुपां सुलुक्॰' इति सोराकारः ॥ अभिष्टयोऽभिगन्तारः शत्रवः । तेभ्यः पाता रक्षकः

1. ख-ग-पालनाभि( दि )ना; च-पालनादिना ।

ᵛअसि भवसि । ᵛदाशुषः हविर्दत्तवतः यजमानस्य ᵛत्वम् ᵛइनः ईश्वरः खलु ᵛवरूता ॥ 'ग्रसितस्कभितस्तभित॰[1]' इति निपातनादीकारस्य ऊकारः ॥ बाधकानां निवारकोऽसि। किंच त्वं तस्य स्तोतुः ᵛइत्थाधीः एवंविधोपद्रवोपशमरूपकर्मासि[2] । ᵛयः ᵛत्वा त्वाम् ᵛअभि ᵛनक्षति हविषा परिचरति ॥

स नो युवेन्द्रो जोहूत्रः सखा शिवो नरामस्तु पाता ।

यः शंसन्तं यः शशमानमूती पचन्तं च स्तुवन्तं च प्रणेषत् ॥ ३ ॥

सः । नः । युवा । इन्द्रः । जोहूत्रः । सखा । शिवः । नराम् । अस्तु । पाता ।

यः । शंसन्तम् । यः । शशमानम् । ऊती । पचन्तम् । च । स्तुवन्तम् । च । प्रऽनेषत् ॥३॥

ᵛयुवा तरुणो यष्टृणां फलस्य शमयिता वा ᵛजोहूत्रः स्तोतृभिराह्वातव्यो होतव्यो वा ᵛसखा सखिभूतः ᵛशिवः सुखकरः ᵛसः ᵛइन्द्रः ᵛनराम् ॥ नृशब्दस्यामि छान्दसो गुणः नरशब्दस्य वा आमि आगमानुशासनस्यानित्यत्वान्नुडभावः ॥ कर्मनेतॄणामस्माकं ᵛपाता पालको भवति । ᵛयः शस्त्राणि ᵛशंसन्तं ᵛयः च ᵛशशमानम् ॥ 'शश प्लुतगतौ' ॥ क्रियाः कुर्वाणं पुरोडाशादिकानि[3] हवींषि ᵛपचन्तं ᵛस्तुवन्तं सामभिः स्तोत्रं कुर्वाणम् । स्तुतशस्त्रयोः प्रगीताप्रगीतमन्त्रसाध्यत्वेन[4] भेदस्य प्रतिपादितत्वात् अत्र पृथङ्निर्देशः[4] । एवमयं[5] यजमानम् ᵛऊती ऊत्या रक्षणेन ᵛप्रनेषत् । नयतेर्लेटि 'सिब्बहुलम्॰' इति सिप् । अडागमः । 'तिङि चोदात्तवति' इति गतेर्निघातः ॥ कर्मणां पारं प्रापयेत्[6] ॥

तमु स्तुष इन्द्रं तं गृणीषे यस्मिन्पुरा वावृधुः शाशदुश्च ।

स वस्वः कामं पीपरदियानो ब्रह्मण्यतो नूतनस्यायोः ॥ ४ ॥

तम् । ऊँ इति । स्तुषे । इन्द्रम् । तम् । गृणीषे । यस्मिन् । पुरा । वव्रुधुः । शाशदुः । च ।

सः । वस्वः । कामम् । पीपरत् । इयानः । ब्रह्मण्यतः । नूतनस्य । आयोः ॥ ४ ॥

ᵛतमु तमेव ᵛइन्द्रं ᵛस्तुषे स्तौमि । तथा ᵛतम् इन्द्रं ᵛगृणीषे शंसामि ॥ उभयत्र पुरुषव्यत्ययः ॥ ᵛयस्मिन् इन्द्रे ᵛपुरा पूर्वं स्तोतारः ᵛवावृधुः प्रवृद्धा अभवन् । ᵛशाशदुश्च शत्रून् हिंसितवन्तश्च ॥ 'शद्लृ शातने' । लिटि 'तुजादीनाम्॰' इत्यभ्यासस्य दीर्घः ॥ ᵛइयानः स्तोतृभिर्याच्यमानः ᵛसः इन्द्रः ᵛब्रह्मण्यतः स्तोत्रमिच्छतः ᵛनूतनस्य ᵛआयोः मनुष्यस्य यजमानस्य ᵛवस्वः वसुनः ᵛकामम् अभिलाषं ᵛपीपरत् अभिलषितफलदानेन पूरयतु ॥

---

१. ख-ग-च-झ१-ण-ण१-त-थ-न-व—प्रसितस्कभित । २. त-थ—॰शमनं (न)रूपकर्मासि । ३. ख-ग-ण-त-थ—पुरोडाशादिकम् । ४. झ१—प्रगीताप्रगीतभेदेन भेदः । ५. क-ख-ग-झ-ण-ण१-त-थ-न-म-व—एवं वयम् । ६. झ१-त-थ-व—प्रापयत् ।

सो अङ्गिरसामुचथा जुजुष्वान्ब्रह्मा तूतोदिन्द्रो गातुमिष्णन् ।
मुष्णन्नुषसः सूर्येण स्तवानश्नस्य चिच्छिश्नथत्पूर्व्याणि ॥ ५ ॥

सः । अङ्गिरसाम् । उचथा । जुजुष्वान् । ब्रह्म । तूतोत् । इन्द्रः । गातुम् । इष्णन् ।
मुष्णन् । उषसः । सूर्येण । स्तवान् । अश्नस्य । चित् । शिश्नथत् । पूर्व्याणि ॥ ५ ॥

अङ्गिरसां संबन्धीनि उचथा उक्थानि जुजुष्वान् ॥ ' जुषी प्रीतिसेवनयोः ' इत्यस्य लिटि क्वसौ रूपम् ॥ सेवमानः सः इन्द्रः गातुं पणिभिरुपद्रुतानामङ्गिरसां मार्गम् इष्णन् प्रेरयन् ब्रह्म तेषां स्तोत्रं कामप्रदानेन तूतोत् ॥ ' तु वृद्धौ ' इत्यस्य लङि ' बहुलं छन्दसि ' इति विकरणस्य श्लुः ॥ अवर्धयत् । किंच स्तवान् स्तोतृभिः स्तूयमानः सूर्येण स्वात्मभूतेन उषसः मुष्णन् अपहरन् । उदिते हि सूर्ये उषसो व्यावर्तन्ते । तादृशः स इन्द्रः अश्नस्य । अश्नुते स्वतेजसा सर्वं जगदित्यश्नः कश्चिदसुरः । तस्य पूर्व्याणि पुरातनानि पुराणि बलानि वा शिश्नथत् अश्नथयत् शिथिलीचकार ॥ ॥२५॥

स ह श्रुत इन्द्रो नाम देव ऊर्ध्वो भुवन्मनुषे दस्मतमः ।
अव प्रियमर्शसानस्य साह्वाञ्छिरो भरद्दासस्य स्वधावान् ॥ ६ ॥

सः । ह । श्रुतः । इन्द्रः । नाम । देवः । ऊर्ध्वः । भुवत् । मनुषे । दस्मऽतमः ।
अव । प्रियम् । अर्शसानस्य । सह्वान् । शिरः । भरत् । दासस्य । स्वधाऽवान् ॥ ६ ॥

देवः द्योतमानः श्रुतः कीर्तिमान् अत एव दस्मतमः सर्वैरतिशयेन दर्शनीयः सः इन्द्रः मनुषे मनोरर्थम् ऊर्ध्वः भुवत् कामप्रदाने प्रवृत्ते उन्मुखः[1] भवतु ॥ नाम प्रसिद्धौ । ह इति पूरणः ॥ तदुच्यते । साह्वान् शत्रूनभिभवन् स्वधावान् बलवानिन्द्रः अर्शसानस्य लोकं बाधमानस्य दासस्य एतन्नामकस्यासुरस्य प्रियं शिरः अव भरत् अधः पातयतु ॥ हरतेर्लेट्यडागमः । हृग्रहोर्भः ॥

स वृत्रहेन्द्रः कृष्णयोनीः पुरंदरो दासीरैरयद्वि ।
अजनयन्मनवे क्षामपश्च सत्रा शंसं यजमानस्य तूतोत् ॥ ७ ॥

सः । वृत्रऽहा । इन्द्रः । कृष्णऽयोनीः । पुरम्ऽदरः । दासीः । ऐरयत् । वि ।
अजनयत् । मनवे । क्षाम् । अपः । च । सत्रा । शंसम् । यजमानस्य । तूतोत् ॥ ७ ॥

वृत्रहा वृत्रस्य हन्ता पुरंदरः शम्बरपुरां दारयिता सः इन्द्रः कृष्णयोनीः निकृष्टजातीः दासीः उपक्षपयित्रीरासुरीः सेनाः वि ऐरयत् व्यनुदत् । किंच मनवे मनोरर्थं क्षां पृथिवीम् अपः

---

१. ज-ण-त-थ-न-व–उदङ्मुखः ।

उदकानि ᵛच ᵛअजनयत्। ᵛयजमानस्य ᵛसत्रा महान्तं ᵛशंसम् अभिलापं ᵛतूतोत् कामप्रदानेन पूरयतु ॥ 'तु वृद्धौ' इति सौत्रो धातुः। शपः श्लुः। तुजादित्वाद्दीर्घः॥ यद्वा सत्रा महत् शंसं शंसनीयं शस्त्रं कामप्रदानेन वर्धयतु। यद्वा कृष्णयोनीः कृष्णाख्येनासुरेण निषिक्तरेतस्का दासीर्भार्या व्यैरयत् व्यनुदत्। तथा मन्त्रः–'यः कृष्णगर्भा निरहन्नृजिश्वना' ( ऋ. सं. १. १०१. १ ) इति॥

तस्मै तवस्य१मनु दायि सत्रेन्द्राय देवेभिरर्णसातौ।
प्रति यदस्य वज्रं बाह्वोर्धुर्हत्वी दस्यून्पुर आयसीर्नि तारीत्॥ ८॥

तस्मै। तवस्यम्। अनु। दायि। सत्रा। इन्द्राय। देवेभिः। अर्णऽसातौ।
प्रति। यत्। अस्य। वज्रम्। बाह्वोः। धुः।
हत्वी। दस्यून्। पुरः। आयसीः। नि। तारीत्॥ ८॥

ᵛदेवेभिः देवनशीलैः स्तोतृभिः ᵛअर्णसातौ उदकलाभे निमित्ते ᵛतस्मै ᵛइन्द्राय ᵛतवस्यं तवसे बलाय हितं बलवर्धनं हविः ᵛसत्रा संततं सर्वेष्वहःसु ᵛअनु अनुक्रमेण सवनत्रये ᵛदायि अदायि। यद्वा तवस्यम्। यद्बलं प्रवृद्धाय दीयते तत्तवस्यम्। देवेभिर्देवैरुदकभजनेऽनुक्रमेण तद्बलं तस्मा इन्द्रायादायि। तथा मन्त्रः–'अनु ते दायि मह इन्द्रियाय' ( ऋ. सं. ६: २५. ८ ) इति। ᵛयत् यदा ᵛअस्य इन्द्रस्य ᵛबाह्वोः ᵛवज्रं ᵛप्रति ᵛधुः स्तोतारोऽसुरवधसूचकेन स्तोत्रेण प्रतिनिदधुः। स्तूयमानो हीन्द्रो दस्युवधार्थं वज्रमादत्ते॥ दधुः। दधातेर्लुङि 'गातिस्था०' इति सिचो लुक्। 'आतः' इति झेर्जुस्॥ ततस्तेन वज्रेण ᵛदस्यून् असुरान् ᵛहत्वी हत्वा तदीयाः ᵛआयसीः अयोमयीः ᵛपुरः ᵛनि ᵛतारीत् नितरामनाशयत्॥

नूनं सा ते प्रति वरं जरित्रे दुहीयदिन्द्र दक्षिणा मघोनी।
शिक्षा स्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः॥ ९॥

नूनम्। सा। ते। प्रति। वरम्। जरित्रे। दुहीयत्। इन्द्र। दक्षिणा। मघोनी।
शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुऽवीराः॥९॥

नूनं सा त इति व्याख्याता॥  ॥ २६॥

'विश्वजिते' इति षड़ृचं दशमं सूक्तं गार्त्समदमैन्द्रम्। अन्त्या त्रिष्टुप्। शिष्टाः पञ्च जगत्यः॥ तृतीये पर्याये होतुः शस्त्रे एतत्सूक्तम्। सूत्रितं च–'विश्वजिते तिष्ठा हरी रथ आयुज्यमानेति याज्या' ( आश्व. श्रौ. ६. ४ ) इति॥

विश्वजिते धनजिते स्वर्जिते सत्राजिते नृजित उर्वराजिते।
अश्वजिते गोजिते अब्जिते भरेन्द्राय सोमं यजताय हर्यतम्॥ १॥

विश्वऽजिते। धनऽजिते। स्वःऽजिते। सत्राऽजिते। नृऽजिते। उर्वराऽजिते।
अश्वऽजिते। गोऽजिते। अप्ऽजिते। भर। इन्द्राय। सोमम्। यजताय। हर्यतम्॥१॥

हे अध्वर्यो ᵛइन्द्राय ᵛसोमं ᵛभर संपादय। कीदृशाय। ᵛविश्वजिते सर्वस्य जेत्रे। तदेव प्रपञ्चयति। ᵛधनजिते शत्रुविजयेन तदीयधनानां जेत्रे। ᵛस्वर्जिते स्वर्गस्य जेत्रेऽधिपतये। ᵛसत्राजिते सत्रा संततं जयशीलाय महतो जेत्रे वा। ᵛनृजिते नृणां नायकानां जेत्रे। ᵛउर्वराजिते। उर्वरा सर्वसस्याढ्या भूः। तस्या जेत्रे। ᵛअश्वजिते ᵛगोजिते बलेनापहृतानां गवां जेत्रे। ᵛअब्जिते वृत्रेणाक्रान्तानामपां जेत्रे। ᵛयजताय यजनीयाय तस्मा इन्द्राय ᵛहर्यतम्॥ 'हर्य गतिकान्त्योः'। 'भृमृदृशि०' इत्यादिना कर्मण्यतच्॥ कमनीयं स्पृहणीयं वा सोमं भरेति समन्वयः॥

अभिभुवेऽभिभङ्गाय वन्वतेऽषाळ्हाय सहमानाय वेधसे।

तुविग्रये वह्नये दुष्टरीतवे सत्रासाहे नम इन्द्राय वोचत॥ २॥

अभिऽभुवे। अभिऽभङ्गाय। वन्वते। अषाळ्हाय। सहमानाय। वेधसे।

तुविऽग्रये। वह्नये। दुस्तरीतवे। सत्राऽसहे। नमः। इन्द्राय। वोचत॥ २॥

ᵛअभिभुवे सर्वस्याभिभवित्रे ᵛअभिभङ्गाय असुराणां भञ्जकाय ᵛवन्वते॥ 'वन षण संभक्तौ'। व्यत्ययेन उप्रत्ययः॥ शत्रूणां धनानां[1] संभजकाय[1]। ᵛअषाळ्हाय॥ सहेः कर्मणि निष्ठा। उत्वाभावश्छान्दसः॥ शत्रुभिरनभिभूताय। ᵛसहमानाय सर्वंसहाय ᵛवेधसे सर्वस्य विधात्रे। ᵛतुविग्रये पूर्णग्रीवाय॥ यद्वा 'गॄ शब्दे'। औणादिकः कर्मणि किप्रत्ययः॥ तुविभिर्बहुभिः स्तोतव्याय। ᵛवह्नये सर्वस्य वोढ्रे ᵛदुष्टरीतवे अन्यैर्दुस्तराय दुर्हिंसाय। ᵛसत्रासहे[2] सर्वदाभिभवित्रे महतोऽभिभवित्रे वा एवंविधाय ᵛइन्द्राय ᵛनमः नमःशब्दपूर्वकं स्तोत्रं ᵛवोचत हे स्तोतारो यूयं ब्रूत॥ ब्रूञो लुङि 'ब्रुवो वचिः'। 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङादेशः। 'वच उम्' इत्युम्। गुणः॥

सत्रासाहो जनभक्षो जनंसहश्च्यवनो युध्मो अनु जोषमुक्षितः।

वृतंचयः सहुरिर्विक्ष्वारित इन्द्रस्य वोचं प्र कृतानि वीर्या॥ ३॥

सत्राऽसहः। जनऽभक्षः। जनम्ऽसहः। च्यवनः। युध्मः। अनु। जोषम्। उक्षितः।

वृतम्ऽचयः। सहुरिः। विक्षु। आरितः। इन्द्रस्य। वोचम्। प्र। कृतानि। वीर्या॥३॥

ᵛसत्रासहः[3] बहूनामभिभविता ᵛजनभक्षः जनानां यजमानानां कामप्रदानेन संभक्ता तैः संभजनीय इति वा। ᵛजनंसहः बलिनां जनानामभिभविता ᵛच्यवनः शत्रूणां च्यावयिता स्वस्थानात्। ᵛयुध्मः योद्धा ᵛजोषम् ᵛअनु प्रीतिमनु ᵛउक्षितः सिक्तः सोमेन। ᵛवृतंचयः वृतस्याभीष्टस्याचेता संचेता दातेत्यर्थः। यद्वा वर्तते पुनःपुनरभिमुखमागच्छतीति वृत् शत्रुः। तं चयते हिनस्तीति वृतंचयः। चयतिर्हिंसाकर्मा। तथा च ब्राह्मणं–'यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते त्वेवैनम्' (ऐ. ब्रा. २. ७) इति। ᵛसहुरिः॥ 'जसिसहोरुरिन्'

---

१. क-म–वधं संभजनाय; ख-ग-ण१–धनानां संभजनस्य; झ–वधं संभजनय; झ१–वधभञ्जनाय; ण-त-थ-न–वधं भञ्जनाय; व–वधं भञ्जमानाय। २. ख-ग-ण-थ–सत्रासाहे। ३. थ-म–सत्रासाहः।

इत्युरिन्प्रत्ययः ॥ अभिभविता शत्रूणां ᵛविक्षु प्रजासु ᵛआरितः पालकत्वेन प्रापितो भवति । तादृशस्य ᵛइन्द्रस्य ᵛकृतानि वृत्रहननादिरूपाणि ᵛवीर्या सामर्थ्यानि ᵛप्र ᵛवोचं प्रकर्षेण वदामि ॥

अनानुदो वृषभो दोधतो वधो गम्भीर ऋष्वो असमष्टकाव्यः ।
रध्रचोदः श्नथनो वीळितस्पृथुरिन्द्रः सुयज्ञ उषसः स्वर्जनत् ॥ ४ ॥

अननुऽदः । वृषभः । दोधतः । वधः । गम्भीरः । ऋष्वः । असमष्टऽकाव्यः ।
रध्रऽचोदः । श्नथनः । वीळितः । पृथुः । इन्द्रः । सुऽयज्ञः । उषसः । स्वः । जनत् ॥४॥

ᵛअनानुदः[1] । अनु पश्चाद्ददातीत्यनुदः । 'आतश्चोपसर्गे' इति कर्तरि कः । स नास्ति यस्य स तथोक्तः । प्रभूतधनदानेन समानः[2] नास्तीत्यर्थः । अत एव ᵛवृषभः कामानां वर्षिता । ᵛदोधतः ॥ दुधिर्हिंसाकर्मा ॥ हिंसकस्यासुरस्य ᵛवधः हन्ता ᵛगम्भीरः महत्त्वेन गाम्भीर्योपेतः । ᵛऋष्वः महान् यद्वा दर्शनीयः सर्वैः । ᵛअसमष्टकाव्यः ॥ 'अशू व्याप्तौ' ॥ कर्मणि निष्ठा । ऊदित्त्वात् इड्विकल्पः । नञ्समासः ॥ अन्यैरव्याप्तकर्मा । ᵛरध्रचोदः ॥ 'रध हिंसासंराद्ध्योः' ॥ रध्राणां समृद्धानां प्रेरकः । यद्वा हिंसकानां[3] शत्रूणां[3] चोदकः । ᵛश्नथनः शत्रूणां बलापहारेण शातयिता । ᵛवीळितः दृढाङ्गः ᵛपृथुः स्वतेजसा जगद्व्याप्य वर्तमानः ᵛसुयज्ञः सुकर्मा । एतादृशः ᵛइन्द्रः ᵛउषसः ᵛस्वः सूर्यं ज्योतिः । 'स्वः सूर्यः' इति हि ब्राह्मणम् । सूर्यं च ᵛजनत् प्रादुश्चकार ॥

यज्ञेन गातुमप्तुरो विविद्रिरे धियो हिन्वाना उशिजो मनीषिणः ।
अभिस्वरा निषदा गा अवस्यव इन्द्रे हिन्वाना द्रविणान्याशत ॥ ५ ॥

यज्ञेन । गातुम् । अप्ऽतुरः । विविद्रिरे । धियः । हिन्वानाः । उशिजः । मनीषिणः ।
अभिऽस्वरा । निऽसदा । गाः । अवस्यवः । इन्द्रे । हिन्वानाः । द्रविणानि । आशत ॥ ५ ॥

ᵛधियो ᵛहिन्वानाः स्तुतीरिन्द्रे प्रेरयन्तः ᵛउशिजः इन्द्रं कामयमानाः ᵛमनीषिणः मेधाविनोऽङ्गिरसः ᵛअप्तुरः अपां प्रेरकादिन्द्रात् ᵛगातुं गवां मार्गं ᵛयज्ञेन तपसा ᵛविविद्रिरे लेभिरे । ततः ᵛअवस्यवः रक्षणमिच्छन्तः ᵛइन्द्रे ᵛगाः स्तुतीः ᵛहिन्वानाः ॥ 'हि गतिवृद्ध्योः' । स्वादिः ॥ प्रेरयन्तस्तेऽङ्गिरसः ᵛअभिस्वरा अभितः स्वरः स्वरणं शब्दनं यस्य तेन स्तोत्रेण ᵛनिषदा उपसदेन च ᵛद्रविणानि गोधनानि ᵛआशत प्राप्नुवन् ॥ अश्नोतेर्लुङि 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥

---

१. त–अननुदः । २. क-ञ-ण-त-थ-न-म-व–समानोऽनु । ३. ख-ग-च-झ१-ण-ण१-त-थ-न-व–शत्रूणां हिंसकानाम् ।

इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ।
पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ॥ ६ ॥

इन्द्र । श्रेष्ठानि । द्रविणानि । धेहि । चित्तिम् । दक्षस्य । सुभगऽत्वम् । अस्मे इति ।
पोषम् । रयीणाम् । अरिष्टिम् । तनूनाम् । स्वाद्मानम् । वाचः । सुदिनऽत्वम् । अह्नाम् ॥ ६ ॥

हे इन्द्र श्रेष्ठानि उत्तमानि द्रविणानि धनान्यस्मभ्यं धेहि निधेहि । दक्षस्य ॥ दक्षेर्भावे घञ् ॥ कर्मकरणसामर्थ्यस्य चित्तिं ख्यातिं धेहि । अस्मे अस्मभ्यं सुभगत्वं शोभनधनवत्त्वं सौभाग्यं वा धेहि[1] । रयीणां त्वया दत्तानां धनानां पोषं समृद्धिं धेहि । तनूनाम् अङ्गानाम् । यद्वा तायत एभिः कुलमिति तन्वः पुत्राः । तनोतेः करणे उप्रत्ययः । तेषाम् अरिष्टिम् अहिंसां धेहि । तथा अस्मदीयायाः वाचः स्वाद्मानं स्वादुताम् । अह्नां सुदिनत्वं शोभनदिनत्वं[2] च धेहि । येषु हीन्द्रादयो देवा इज्यन्ते तानि सुदिनानि । तेषां भावः सुदिनत्वम् ॥ ॥ २७ ॥

'त्रिकद्रुकेषु' इति चतुर्ऋचमेकादशं सूक्तं गात्र्समदमैन्द्रम् । अत्रेयमनुक्रमणिका–'त्रिकद्रुकेषु चतुष्कमष्ट्याद्यतिशाक्करमन्त्याष्टिर्वा' इति । आद्यायामष्टिश्छन्दश्चतुःषष्ट्यक्षरा । अवशिष्टाः षष्ट्यक्षरा अतिशक्वर्यः । अन्त्याष्टिर्वा । षोडशिशस्त्रे 'त्रिकद्रुकेषु' इति तृचः । सूत्रितं–'त्रिकद्रुकेषु महिषो यवाशिरं प्रो ष्वस्मै पुरोरथमिति तृचावातिच्छन्दसौ' ( आश्व. श्रौ. ६. २ ) इति ॥ अविवाक्येऽहनि मरुत्वतीये प्रतिपत्तृचस्य 'त्रिकद्रुकेषु' इति प्रथमा । 'दशमेऽहनि' इति खण्डे सूत्रितम्–'आ त्वा रथं यथोतय इत्येतस्याः स्थाने त्रिकद्रुकेषु महिषो यवाशिरमिति' ( आश्व. श्रौ. ८.१२ ) इति । आश्वमेधिके मध्यमेऽहनि मरुत्वतीय आद्या । 'तस्य विशेषान्वक्षामः' इति खण्डे सूत्रितं–'त्रिकद्रुकेषु महिषो यवाशिरमिति मरुत्वतीयस्य प्रतिपत्' ( आश्व. श्रौ. १०. १० ) इति ॥ महाव्रतेऽपि माध्यंदिने सवने ब्राह्मणाच्छंसिनः स्तोत्रियस्तृचः । 'त्रिकद्रुकेषु महिषो यवाशिरमिति स्तोत्रियः' ( ऐ. आ. ५.१ ) इति सूत्रितम् ॥

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सोममपिबद्विष्णुना
सुतं यथावशत् । स ईं ममाद महि कर्म कर्तवे
महामुरुं सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥ १ ॥

त्रिऽकद्रुकेषु । महिषः । यवऽआशिरम् । तुविऽशुष्मः ।
तृपत् । सोमम् । अपिबत् । विष्णुना । सुतम् । यथा । अवशत् ।
सः । ईम् । ममाद । महि । कर्म । कर्तवे । महाम् । उरुम् ।
सः । एनम् । सश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः । इन्दुः ॥ १ ॥

---

१. क-ञ-म-निधेहि । २. त-थ-शोभनत्वम् ।

गृत्समदो ब्रूते। महिषः महान् पूज्यः तुविशुष्मः बहुबलः[1] तृपत्॥ 'तृप प्रीणने'। तुदादिः। आगमानुशासनस्यानित्यत्वान्नुमभावः॥ तृप्यन् इन्द्रः त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकेष्वाभिप्लविकेष्वहःसु सुतम् अभिषुतं यवाशिरं यवमयैः सक्तुभिर्मिश्रितम्॥ आङ्पूर्वस्य श्रीणातेः क्विपि 'अपस्पृधेथाम्°' इत्यादिना शिर इत्यादेशः॥ तं सोमं विष्णुना सह अपिबत्। यथावशत् पूर्वं यथा तं सोममकामयत तथापिबत्॥ 'वश कान्तौ'। 'बहुलं छन्दसि' इति शपो लुगभावः॥ पीतः सः सोमः महां महान्तम् उरुं तेजसा विस्तीर्णम् ईम् एनमिन्द्रं ममाद अमादयत्। किमर्थम्। महि महत् वृत्रहननादिलक्षणं[2] कर्म कर्तवे कर्तुम्। सत्यः इन्दुः स्रवन् देवः दीप्यमानः सः सोमः सत्यं यथार्थभूतं देवं सोमं कामयमानम् इन्द्रं सश्चत्। सश्चतिर्व्याप्तिकर्मा। व्याप्नोतु॥

**अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवदा रोदसी अपृणदस्य मज्मना प्र वावृधे।**
**अधत्तान्यं जठरे प्रेमरिच्यत सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः॥ २॥**

अध। त्विषिऽमान्। अभि। ओजसा। क्रिविम्। युधा। अभवत्। आ।
रोदसी इति। अपृणत्। अस्य। मज्मना। प्र। ववृधे।
अधत्त। अन्यम्। जठरे। प्र। ईम्। अरिच्यत।
सः। एनम्। सश्चत्। देवः। देवम्। सत्यम्। इन्द्रम्। सत्यः। इन्दुः॥ २॥

अध अथ सोमपानानन्तरं त्विषीमान् दीप्तिमानिन्द्रः ओजसा बलेन क्रिविं नामासुरं युधा युद्धेन अभि अभवत् अभिभूतवान्। किंच स इन्द्रः रोदसी द्यावापृथिव्यौ आ अपृणत् स्वतेजसा समन्तात् पूरयामास। तथा अस्य पीतस्य सोमस्य मज्मना बलेन प्र वावृधे प्रकर्षेण वर्धते। यद्वा अस्य क्रिवेरसुरस्य मज्मना सारेण रोदसी अपूरयत्। सः इन्द्रः सोमं द्वेधा विभज्य अन्यं भागं स्वकीये जठरे अधत्त। ईम् एनम् अपरं भागं देवेभ्यः प्र अरिच्यत प्रारेचयत्। एतेनार्धमिन्द्राय अर्धमन्येभ्यः[3] देवेभ्य इत्युक्तं भवति।' तथा तैत्तिरीयकं-'यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः' (तै. सं. ५. ४. ८. ३) इति॥

**साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः**
**सासहिर्मृधो विचर्षणिः। दाता राधः स्तुवते काम्यं वसु**
**सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः॥ ३॥**

साकम्। जातः। क्रतुना। साकम्। ओजसा। ववक्षिथ।
साकम्। वृद्धः। वीर्यैः। ससहिः। मृधः। विऽचर्षणिः।
दाता। राधः। स्तुवते। काम्यम्। वसु।
सः। एनम्। सश्चत्। देवः। देवम्। सत्यम्। इन्द्रम्। सत्यः। इन्दुः॥ ३॥

---

१. त-थ-बहुलबलः। २. म-महनीयत्वादिलक्षणम्। ३. म-अर्धमन्येभ्योऽपि।

क्रतुना कर्मणा प्रज्ञया वा साकं सह जातः साकमोजसा बलेन सह ववक्षिथ विश्वं वोढुमिच्छसि ॥ वहेः सनन्तस्य लिटि मन्त्रत्वादाम् न भवति ॥ किंच त्वं वीर्यैः शत्रुहननादिलक्षणैः पराक्रमैः साकं सह[1] वृद्धः[1] प्रवृद्धः मृधः हिंसकान् संग्रामान्वा सासहिः । 'न लोकाव्यय°' इति षष्ठीप्रतिषेधः ॥ तेषामभिभविता विचर्षणिः पुण्यकृतः अपुण्यकृतश्च[2] विशेषेण द्रष्टा स्तुवते स्तोत्रं कुर्वाणाय यजमानाय राधः साधकं काम्यं प्रार्थनीयं वसु धनं दाता सन् ववक्षिथेति समन्वयः । सैनमिति परोक्षनिर्देशः सिद्धार्थश्च ॥

**तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।**
**यद्देवस्य शवसा प्रारिणा असुं रिणन्नपः ।**
**भुवद्विश्वमभ्यादेवमोजसा विदादूर्जं शतक्रतुर्विदादिषम् ॥ ४ ॥**

तव । त्यत् । नर्यम् । नृतो इति । अपः । इन्द्र । प्रथमम् । पूर्व्यम् । दिवि । प्रऽवाच्यम् । कृतम् ।
यत् । देवस्य । शवसा । प्र । अरिणाः । असुम् । रिणन् । अपः ।
भुवत् । विश्वम् । अभि । अदेवम् । ओजसा । विदात् । ऊर्जम् ।
शतऽक्रतुः । विदात् । इषम् ॥ ४ ॥

नृतो सर्वेषां नर्तयितः हे इन्द्र नर्यं नराणां हितकरं प्रथमं प्रततम्[3] ॥ 'प्रथमं प्रततम्' इति यास्कः । पूर्व्यं पूर्वकालभवं त्वया कृतं तव त्यत् तत् अपः कर्म दिवि स्वर्गलोके प्रवाच्यं प्रकर्षेण वक्तव्यम् । श्लाघनीयमित्यर्थः । किं तत् । देवस्य विजिगीषोरसुरस्य असुं प्राणं रिणन् हिंसन् त्वं अपः तेन निरुद्धान्युदकानि प्रारिणाः प्रैरयः इति यदेतत्कर्म तत्प्रवाच्यमिति समन्वयः । परोक्षनिर्देशोऽवशिष्टः[4] । स इन्द्रः विश्वं व्याप्तम् अदेवं तमोरूपमसुरम् ओजसा बलेन अभि भुवत् अभिभवतु । किंच शतक्रतुः इन्द्रः ऊर्जं बलं विदात् लभतु । इषं हविर्लक्षणमन्नं च[5] विदात् ॥ 'विदिर् लाभे' । शविकरणी । लेट्याडागमः[6] ॥ ॥ २८ ॥ ॥ २ ॥

तृतीयेऽनुवाके दश सूक्तानि । तत्रेदमेकोनविंशत्यृचं गार्त्समदं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका— 'गणानामेकोना ब्राह्मणस्पत्यं ह बार्हस्पत्यास्तु दृष्टलिङ्गाः पञ्चदश्यन्त्ये त्रिष्टुभौ' इति । पञ्चदश्येकोनविंशी च त्रिष्टुभौ । शिष्टा जगत्यः । यासु बृहस्पतिशब्दः श्रूयते ता बार्हस्पत्याः । शिष्टा ब्राह्मणस्पत्याः ॥ प्रवर्ग्ये अभिष्टवे[7] एतत्सूक्तम् । 'स्पृष्ट्वोदकम्' इति खण्डे सूत्रितं— 'गणानां त्वा प्रथमश्च यस्य' (आश्व. श्रौ. ४. ६) इति ॥

---

१. ण-त-थ-म-'सह वृद्धः' नास्ति । २. म-पापकृतश्च । ३. थ-प्रतमम् । ४. क-ख-ग-ण-ण१-न-व-परोक्षनिर्देशो वसिष्ठः; झ-झ१-परोक्षनिर्देशो वाशिष्टः ; च-त-थ-परोक्षनिर्देशोऽविशिष्टः । ५. ख-ग-ण-त-थ-'च' नास्ति । ६. ग-ण-ण१-न-लेट्यडागमः । ७. म-अभिष्टवे एव ।

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ १ ॥

गणानाम्। त्वा। गणऽपतिम्। हवामहे। कविम्। कवीनाम्। उपमश्रवःऽतमम्।
ज्येष्ठऽराजम्। ब्रह्मणाम्। ब्रह्मणः। पते।
आ। नः। शृण्वन्। ऊतिऽभिः। सीद। सदनम्॥ १ ॥

हे √ब्रह्मणस्पते ब्रह्मणोऽन्नस्य परिवृढस्य कर्मणो वा पते पालयितः √गणानां देवादिगणानां संबन्धिनं √गणपतिं स्वीयानां पतिम्। √कवीनां क्रान्तदर्शिनां √कविम्। √उपमश्रवस्तमम्। उपमीयतेऽनयेत्युपमा। सर्वेषामन्नानामुपमानं श्रवोऽन्नं यस्य स तथोक्तः। अतिशयेनोपमश्रवा उपमश्रवस्तमः॥ उपमा 'माङ् माने'। 'आतश्चोपसर्गे' करणेऽङ्प्रत्ययः। 'ङ्यापोः संज्ञाछन्दसोः°' इति ह्रस्वत्वम्॥ √ज्येष्ठराजम्। ज्येष्ठाः प्रशस्यतमाः। तेषां मध्ये राजन्तं √ब्रह्मणां मन्त्राणां स्वामिनं √त्वा त्वां √हवामहे अस्मिन् कर्मण्याह्वयामः। किंच √नः अस्माकं स्तुतीः √शृण्वन् त्वं √ऊतिभिः पालनैर्हेतुभूतैः √सादनम्। सीदन्त्यस्मिन्निति सदनम्। यज्ञगृहं √आ √सीद उपविश॥

देवाश्चित्ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः।
उस्रा इव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि ॥ २ ॥

देवाः। चित्। ते। असुर्य। प्रऽचेतसः। बृहस्पते। यज्ञियम्। भागम्। आनशुः।
उस्राःऽइव। सूर्यः। ज्योतिषा। महः। विश्वेषाम्। इत्। जनिता। ब्रह्मणाम्। असि॥२॥

√असुर्य असुराणां हन्तः हे √बृहस्पते √प्रचेतसः प्रकृष्टज्ञानाः √ते त्वदीयाः √देवाश्चित् देवा अपि √यज्ञियं यज्ञार्हं √भागम् √आनशुः प्राप्नुवन्। यद्वा प्रचेतस इति बृहस्पतेर्विशेषणम्। प्रकृष्टज्ञानवतस्ते तव संबन्धिनो देवा इति योजनीयम्। यद्वा प्रचेतसः। विभक्तिपरिणामः। प्रचेतसि त्वयि सति देवा यज्ञियं भागमानशिरे। कर्मविघ्नकारिणामसुराणां रक्षोघ्नमन्त्रैरपाकरणात्। 'न वै ब्रह्मण्वद्रिष्यति' ( ऐ. ब्रा. १. १३ ) इति श्रवणात्। √ज्योतिषा तेजसा √महः मंहनीयः[1] √सूर्यः √उस्राइव। उस्राः[2] किरणाः॥ 'स्फायितञ्चि°' इत्यादिना रक्प्रत्ययः॥ यथा किरणान् जनयति तथा √विश्वेषां सर्वेषां √ब्रह्मणां[3] मन्त्राणां[3] √जनिता जनयितैव √असि॥ 'जनिता मन्त्रे' इति निपातनात् णिलोपः॥

---

१. क-ख-ग-ङ-न-म—महनीयः। २. म—सत्वेषु (? वसत्येषु) परं तेज इति उस्राः। ३. म—ब्राह्मणानाम्।

आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।
बृहस्पते भीममर्मित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदम् ॥ ३ ॥

आ । विऽबाध्य । परिऽरपः । तमांसि । च । ज्योतिष्मन्तम् । रथम् । ऋतस्य । तिष्ठसि ।
बृहस्पते । भीमम् । अमित्रऽदम्भनम् । रक्षःऽहनम् । गोत्रऽभिदम् । स्वःऽविदम् ॥ ३ ॥

हे बृहस्पते परिरपः । परितो रपः पापरूपं रक्षः ॥ यद्वा 'रप लप व्यक्तायां वाचि'। क्विप् ॥ परिवदतो निन्दकान् तमांसि च विबाध्य तेजसा निराकृत्य ज्योतिष्मन्तं ज्योतिषा तद्वन्तम् ऋतस्य यज्ञस्य प्रापकं भीमं शत्रूणां भयंकरं अमित्रदम्भनं शत्रूणां हिंसकम् । तदेवाह। रक्षोहणं रक्षसां हन्तारं गोत्रभिदं मेघानां भेत्तारं स्वर्विदं स्वर्गस्य[1] लम्भकं[1] रथम् आ तिष्ठसि अधितिष्ठसि ॥

सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् ।
ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत्ते महित्वनम् ॥ ४ ॥

सुनीतिऽभिः । नयसि । त्रायसे । जनम् । यः । तुभ्यम् । दाशात् । न । तम् । अंहः । अश्नवत् ।
ब्रह्मऽद्विषः । तपनः । मन्युऽमीः । असि । बृहस्पते । महि । तत् । ते । महिऽत्वनम् ॥ ४ ॥

हे बृहस्पते सुनीतिभिः । शोभनं[2] नीतयः[2] येषु ते सुनीतयः सन्मार्गाः । तैः जनं नयसि । अपेक्षितफलं प्रापयसि । त्रायसे जनमापद्भ्यो रक्षसि च । यः यजमानः तुभ्यं हविर्लक्षणमन्नं दाशात् प्रयच्छेत् ॥ 'दाश्ट दाने'। लेट्याडागमः[3]॥ तम् अंहः पापं पापरूपं दारिद्र्यं वा न अश्नवत् न प्राप्नुयात् ॥ अश्नोतेर्लेटि व्यत्ययेन परस्मैपदम् । अडागमः ॥ ब्रह्मद्विषः ब्राह्मणानां मन्त्राणां वा द्वेष्टुः तपनः तापकः असि । किंच मन्युमीः मन्योः क्रोधस्य परेषां ज्ञानस्य वा हिंसकोऽसि ॥ 'मीङ् हिंसायां'। क्विप् ॥ ते तव तत् तादृशं महि महत् प्रभूतं महित्वनं माहात्म्यमस्ति ॥

न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः ।
विश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते ॥ ५ ॥

न । तम् । अंहः । न । दुःऽइतम् । कुतः । चन । न । अरातयः । तितिरुः । न । द्वयाविनः ।
विश्वाः । इत् । अस्मात् । ध्वरसः । वि । बाधसे ।
यम् । सुऽगोपाः । रक्षसि । ब्रह्मणः । पते ॥ ५ ॥

---

१. क-झ—सर्वलम्भकम्; ख-ग-च-क्ष१-ण-ण१-थ-न-व—सर्वस्य लम्भकम्; म—सर्गलम्भकम् । २. ख-ग-झ-ण-म—शोभननीतयः । ३. ख-ग-च-झ१-न—लेट्यडागमः ।

हे ᵛब्रह्मणस्पते ᵛसुगोपाः सुष्ठु पालयिता त्वं ᵛयं जनं ᵛरक्षसि पालयसि ᵛतं जनं ᵛअंहः आहन्तव्यं दुःखं ᵛन बाधते । ᵛदुरितं तत्कारणं पापं च ᵛन बाधते । ᵛअरातयः हिंसकास्तं जनं ᵛकुतश्चन सर्वासु दिक्षु ᵛन ᵛतितिरुः ॥ तिरतिर्हिंसाकर्मा । लिट् ॥ न हिंसन्ति । तथा ᵛद्वयाविनः । मनस्यन्यत्क्रियायां चान्यदित्येतद्द्वयं येषामस्ति ते द्वयाविनो वञ्चकाः । तेऽपि तं जनं ᵛन बाधन्ते । किंच ᵛध्वरसः हिंसिकाः ᵛविश्वाः सर्वाः सेनास्तदर्थं ᵛवि ᵛबाधसे विशेषेण बाधस एव ॥ ॥ २९ ॥

त्वं नो॑ गो॒पाः प॑थि॒कृद्वि॑चक्ष॒णस्तव॑ व्र॒ताय॑ म॒तिभि॑र्जरामहे ।
बृह॑स्पते॒ यो नो॑ अ॒भि ह्वरो॑ द॒धे स्वा तं म॑र्मर्तु दु॒च्छुना॒ हर॑स्वती ॥ ६ ॥

त्वम् । नः॒ । गो॒पाः । प॒थि॒ऽकृत् । वि॒ऽच॒क्ष॒णः । तव॑ । व्र॒ताय॑ । म॒तिऽभिः॑ । ज॒रा॒म॒हे॒ ।
बृह॑स्पते । यः । नः॒ । अ॒भि । ह्वरः॑ । द॒धे । स्वा । तम् । म॒र्म॒र्तु॒ । दु॒च्छुना॑ । हर॑स्वती ॥ ६ ॥

हे ᵛबृहस्पते ᵛत्वं ᵛनः अस्माकं ᵛगोपाः पालयिता ᵛपथिकृत् सन्मार्गकृच्च[1] भवसि । ᵛविचक्षणः विशेषेण द्रष्टा सर्वज्ञस्त्वम् । ᵛतव ᵛव्रताय त्वत्संबन्धिने यज्ञाय ᵛमतिभिः स्तोत्रैः ᵛजरामहे स्तुमः ॥ जरतिः स्तुतिकर्मा ॥ ᵛयः पुमान् ᵛनः अस्मान् ᵛअभि अभिलक्ष्य ᵛह्वरः ॥ 'ह्वृ कौटिल्ये' । भावेऽसुन् ॥ कौटिल्यं ᵛदधे विदधाति ᵛतं ᵛस्वा स्वीया ᵛदुच्छुना दुर्बुद्धिः ᵛहरस्वती वेगवती सती ᵛमर्मर्तु मोचयतु ॥ 'मृङ् प्राणत्यागे' । अन्तर्भावितण्यर्थस्य यङ्लुकि लोटि रूपम् ॥

उ॒त वा॒ यो नो॑ म॒र्चया॒दना॑गसोऽराती॒वा मर्तः॑ सानु॒को वृकः॑ ।
बृह॑स्पते॒ अप॒ तं व॑र्तया प॒थः सु॒गं नो॑ अ॒स्यै दे॒ववी॑तये कृधि ॥ ७ ॥

उ॒त । वा॒ । यः । नः॒ । म॒र्चया॑त् । अना॑गसः । अ॒रा॒ति॒ऽवा । मर्तः॑ । सा॒नु॒कः । वृकः॑ ।
बृह॑स्पते । अप॑ । तम् । व॒र्त॒य॒ । प॒थः । सु॒ऽगम् । नः॒ । अ॒स्यै । दे॒वऽवी॑तये । कृ॒धि॒ ॥ ७ ॥

ᵛउत ᵛवा अपि च हे ᵛबृहस्पते ᵛअरातीवा अभिमुखमागमनवान् ᵛसानुकः समुच्छ्रितः । 'सानु समुच्छ्रितम्' (निरु. २. २४) इति यास्कः । ᵛवृकः ॥ 'वृक आदाने' ॥ धनादीनामादाता ᵛयः ᵛमर्तः मनुष्यः ᵛअनागसः अपराधहीनान् ᵛनः अस्मान् ᵛमर्चयात् ॥ मर्चयतिर्हिंसाकर्मा ॥ हिंस्यात् । ᵛतं मर्तं ᵛपथः वैदिकान्मार्गात् ᵛअप ᵛवर्तय निवर्तय । ᵛनः अस्माकं ᵛअस्यै ᵛदेववीतये देवानां वीतिः सोमभक्षणम् अत्रेति[2] देववीतिर्यज्ञः । अस्यै देववीतयेऽस्मै यज्ञाय नोऽस्माकं ᵛसुगं सुष्ठु गन्तव्यं मार्गं ᵛकृधि कुरु । यज्ञानुष्ठानाय सुमतिं देहीत्यर्थः ॥

---

१. ख-ग-ण-थ–सन्मार्गश्च । २. क-ज्ञ–अर्चते; ख-ग-च-ण–अर्चन्ति; थ–अर्चयति; व–अर्चति ।

त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुम् ।
बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन् ॥ ८ ॥

त्रातारम् । त्वा । तनूनाम् । हवामहे । अवऽस्पर्तः । अधिऽवक्तारम् । अस्मऽयुम् ।
बृहस्पते । देवऽनिदः । नि । बर्हय ।
मा । दुःऽएवाः । उत्ऽतरम् । सुम्नम् । उत् । नशन् ॥ ८ ॥

अवस्पर्तः उपद्रवेभ्यः पारयितः । यद्वा अवसा रक्षणेनापद्भ्यः पारयितः हे बृहस्पते तनूनाम् अङ्गानां पुत्रादीनां वा त्रातारं पालयितारम् अधिवक्तारम् अस्मासु पक्षपातेन अधिकं[1] वक्तारम्[1] अस्मयुं हविष्प्रदानस्मान् कामयमानं त्वा[2] त्वां हवामहे अस्मिन् कर्मण्याह्वयामः । किंच देवनिदः देवनिन्दकानसुरान् नि बर्हय विनाशय । दुरेवाः दुष्टगमना दुर्बुद्धयः शत्रवः उत्तरम् उत्कृष्टतरं सुम्नं सुखं मा उन्नशन् मा व्याप्नुवन्तु ॥

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।
या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥ ९ ॥

त्वया । वयम् । सुऽवृधा । ब्रह्मणः । पते । स्पार्हा । वसु । मनुष्या । आ । ददीमहि ।
याः । नः । दूरे । तळितः । याः । अरातयः । अभि । सन्ति । जम्भय । ताः । अनप्नसः ॥९॥

हे ब्रह्मणस्पते सुवृधा सुष्टु वर्धयित्रा त्वया हेतुना वयं स्पार्हा स्पृहणीयानि वसु धनानि मनुष्या ॥ 'सुपां सुलुक्°' इति चतुर्थीबहुवचनस्याकारः ॥ मनुष्येभ्यो दातृभ्यः आ ददीमहि गृह्णीमहि ॥ 'आङो दोऽनास्यविहरणे' इत्यात्मनेपदम् ॥ दूरे दूरदेशे याः अरातयः याः च तळितः अन्तिकेऽरातयः नः अस्मान् अभि सन्ति अभि भवन्ति अनप्नसः कर्महीनान् ताः अरातीस्तान् शत्रून् जम्भय नाशय । 'जभि नाशने' । चुरादिः ॥ अत्र निरुक्तं–'त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तळितो याश्चान्तिकेऽरातयोऽदानकर्माणो वादानप्रज्ञा वा जम्भय ता अनप्नसोऽप्न इति रूपनाम' ( निरु. ३. ११ ) इति ॥

त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा ।
मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहि ॥ १० ॥

त्वया । वयम् । उत्ऽतमम् । धीमहे । वयः । बृहस्पते । पप्रिणा । सस्निना । युजा ।
मा । नः । दुःऽशंसः । अभिऽदिप्सुः । ईशत ।
प्र । सुऽशंसाः । मतिऽभिः । तारिषीमहि ॥ १० ॥

---

१. क-ञ-ण-न-म-व–अधिवक्तारम्; ख-ग-च-ण१–अधि अधिकं वक्तारम् । २. क-ञ-ञ१-ण-थ-न-म-व–'त्वा' नास्ति ।

हे ᵛबृहस्पते ᵛपप्रिणा ॥ ‘ पॄ पालनपूरणयोः ’ । ‘ आदृगमहन॰ ’ इति किन्प्रत्ययः । छान्दसो यणादेशः ॥ कामानां पूरकेण ᵛसस्निना शुद्धेन ᵛयुजा सहायेन ᵛत्वया हेतुना ᵛउत्तमं ᵛवयः हविर्लक्षणमन्नं ᵛवयं ᵛधीमहे धारयामः ॥ ‘ धी धारणे ’ । दैवादिकः ॥ ᵛदुःशंसः दुःशंसनीयः ᵛअभिदिप्सुः अभिदम्भितुमभिभवितुमिच्छुः पुरुषः ᵛनः अस्माकं ᵛमा ᵛईशत मा ईशिष्ट । ईश्वरो मा भवतु ॥ ‘ ईश ऐश्वर्ये ’ । लेट्यडागमः ॥ वयं ᵛमतिभिः स्तोत्रैः ᵛसुशंसाः शोभनशंसनोपेताः सन्तः ᵛप्र ᵛतारिषीमहि प्रकर्षेण वर्धेमहि ॥ ॥ १० ॥

अ॒ना॒नु॒दो वृ॑ष॒भो जग्मि॑राह॒वं निष्ट॑प्ता॒ शत्रुं॒ पृत॑नासु सास॒हिः ।
असि॑ स॒त्य ऋ॑ण॒या ब्र॑ह्मणस्पत उ॒ग्रस्य॑ चिद्द॒मि॒ता वी॑ळुह॒र्षिणः॑ ॥ ११ ॥

अ॒न॒नु॒ऽदः । वृ॒ष॒भः । जग्मि॑ः । आ॒ऽह॒वम् । निः॒ऽत॑प्ता । शत्रु॑म् । पृत॑नासु । स॒स॒हिः ।
असि॑ । स॒त्यः । ऋ॒ण॒ऽयाः । ब्र॒ह्म॒णः॒ । प॒ते॒ । उ॒ग्रस्य॑ । चि॒त् । द॒मि॒ता । वी॒ळु॒ऽह॒र्षिणः॑ ॥ ११ ॥

हे ᵛब्रह्मणस्पते ᵛअनानुदः । अनु पश्चाद्ददातीत्यनुदः । स यस्य नास्तीत्यननुदः । दात्रन्तरशून्य इत्यर्थः । अत एव ᵛवृषभः कामानां वर्षिता ᵛआहवम् ॥ आहूयतेऽत्रेत्याहवो युद्धम् । ‘ आङि युद्धे ’ ( पा. सू. ३. ३. ७३ ) इत्यप्प्रत्ययः संप्रसारणं च ॥ तद्युद्धं ᵛजग्मिः गन्ता ॥ ‘ आदृगमहन॰ ’ इति किन्प्रत्ययः । लिड्वद्भावादाहवमित्यत्र षष्ठीप्रतिषेधः । ᵛशत्रुं शातयितारं ᵛनिष्टप्ता नितरां तस्य तापकः ॥ तृनन्तत्वात् षष्ठीप्रतिषेधः । ‘ निसस्तपतावनासेवने ’ ( पा. सू. ८. ३. १०२ ) इति षत्वम् । ‘ तादौ च निति॰ ’ इति गतेः स्वरः ॥ ᵛपृतनासु संग्रामेषु ᵛसासहिः शत्रूणामभिभविता । एतादृशस्त्वं ᵛसत्यः सत्यपराक्रमः सत्यप्रज्ञो वा ᵛअसि । ᵛऋणयाः ऋणस्य यावयितासि । ‘ यु मिश्रणामिश्रणयोः ’ । ण्यन्तस्य क्विपि णिलोपे ‘ लोपो व्योर्वलि ’ इति वलोपः ॥ किंच ᵛउग्रस्य ᵛचित् ओजस्विनोऽपि ᵛदमिता उपशमयिता ᵛवीळुहर्षिणः दृढहर्षस्य कामुकस्य नास्तिकस्य चिद्दमितासि[1] ॥

अदे॑वेन॒ मन॑सा॒ यो रि॑ष॒ण्यति॑ शा॒सामु॒ग्रो मन्य॑मानो॒ जिघां॑सति ।
बृह॑स्पते॒ मा प्रण॒क्तस्य॑ नो व॒धो नि क॑र्म म॒न्युं दु॒रेव॑स्य॒ शर्ध॑तः ॥ १२ ॥

अदे॑वेन । मन॑सा । यः । रि॒ष॒ण्यति॑ । शा॒साम् । उ॒ग्रः । मन्य॑मानः । जिघां॑सति ।
बृह॑स्पते । मा । प्रण॑क् । तस्य॑ । नः॒ । व॒धः । नि । क॒र्म॒ । म॒न्युम् । दुः॒ऽएव॑स्य । शर्ध॑तः ॥ १२ ॥

ᵛयः पुमान् ᵛअदेवेन देवानमन्यमानेन यद्वा आसुरवृत्तिविशिष्टेन[1] ᵛमनसा अस्मान् ᵛरिषण्यति हिनस्ति ॥ ‘ दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति ’ इति निपातितः ॥ यश्च ᵛउग्रः पापचित्तः ᵛमन्यमानः आत्मानं बहु मन्यमानः पुमान्[2] ᵛशासाम् उक्थस्य शंसितारम् । यद्वा अस्माकमाशंसाम् । शासां[3] शासितॄणामुग्र इति वा योजनीयम् । अस्मान् ᵛजिघांसति हन्तुमिच्छति ॥ हन्तेः सनि ‘ अज्झनगमां सनि ’ इति दीर्घः ॥ हे ᵛबृहस्पते ᵛतस्य ᵛवधः । वध्यतेऽनेनेति वधः आयुधम् । ᵛनः अस्मान्

---

१. क-झ-त-थ-म—दमितासि । १. ख-ग-झ-ण१-म-असुरवृत्तिविशिष्टेन । २. ख-ग-च-फ-यः पुमान् । ३. क-झ-म-‘ शासां ’ नास्ति ; झ१-ण-थ-न-म—शापाम्

ᵛमा ᵛप्रगक् ॥ ' पृची संपर्के ' । श्नम्विकरणी । व्यत्ययेनामागमः । ' चादिलोपे° ' इति न निघातः । व्यत्ययेनाद्युदात्तः ॥ किंच ᵛदुरेवस्य दुष्टगमनस्य ᵛशर्धतः बलवतः । यद्वा दुष्टाभिसंधेर्वेगं कुर्वतः तस्य ᵛमन्युं क्रोधं ज्ञानं वा ᵛनि ᵛकर्म त्वत्प्रसादान्निराकुर्मश्च ॥

भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनंधनम् ।
विश्वा इदर्यो अभिदिप्स्वोऽ३ मृधो बृहस्पतिर्वि ववर्हा रथाँइव ॥ १३ ॥

भरेषु । हव्यः । नमसा । उपऽसद्यः । गन्ता । वाजेषु । सनिता । धनम्ऽधनम् ।
विश्वाः । इत् । अर्यः । अभिऽदिप्स्वः । मृधः । बृहस्पतिः । वि । ववर्ह । रथान्ऽइव ॥ १३ ॥

सः ᵛबृहस्पतिः ᵛभरेषु संग्रामेषु ᵛहव्यः योद्धृभिः स्वरक्षणार्थम्[1] आह्वातव्यः ᵛनमसोपसद्यः सर्वैर्नमसोपसदनीयः । किंच ᵛवाजेषु ᵛगन्ता संग्रामेषु रक्षार्थं गमनशीलः । तथा ᵛधनंधनं ᵛसनिता संभक्ता दाता ॥ तृनन्तत्वात् षष्ठीप्रतिषेधः ॥ तथा ᵛअर्यः स्वामी बृहस्पतिः ᵛअभिदिप्स्वः अभिभवनेच्छावतीः ᵛविश्वाः ᵛइत् सर्वा एव ᵛमृधः हिंसिकाः सेनाः ᵛरथानिव युद्धे वेगेन परकीयान् रथानिव ᵛवि ᵛववर्ह विशेषेण शिथिलीचकार । यद्वा इवशब्दश्चार्थे । रथांश्च वि ववर्ह ॥ लडर्थे लिट् ॥

तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यम् ।
आविस्तत्कृष्व यदसत्त उक्थ्यं१ बृहस्पते वि परिरापो अर्दय ॥ १४ ॥

तेजिष्ठया । तपनी । रक्षसः । तप । ये । त्वा । निदे । दधिरे । दृष्टऽवीर्यम् ।
आविः । तत् । कृष्व । यत् । असत् । ते । उक्थ्यम् । बृहस्पते । वि । परिऽरपः । अर्दय ॥ १४ ॥

हे ᵛबृहस्पते ᵛतेजिष्ठया अतिशयेन तिग्मया ᵛतपनी तापकारिण्या हेत्या ᵛरक्षसः राक्षसान् ᵛतप तापय । ᵛये राक्षसाः ᵛदृष्टवीर्यं युद्धेषु दृष्टपराक्रमं त्वां ᵛनिदे निन्दाया विषयं ᵛदधिरे कृतवन्तः तान् तापयेति समन्वयः। ᵛते तव ᵛउक्थ्यं सर्वैः प्रशंसनीयं ᵛयत् वीर्यं ᵛअसत् पूर्वमासीत् ᵛतत् अधुना ᵛआविः ᵛकृष्व प्रकटीकुरु । तेन[2] च[2] वीर्येण ᵛपरिरापः परिवदतः निन्दकानसुरान् ᵛवि ᵛअर्दय विशेषेण बाधस्व ॥

बार्हस्पत्ये पशावेषा हविषोऽनुवाक्या। ' प्रदानानाम् ' इति खण्डे सूत्रितं–' बृहस्पते अति यदर्यो अर्हात्तमृत्विया उप वाचः सचन्ते ' ( आश्व. श्रौ. ३. ७ ) इति । एषैवाश्विनशस्त्रे परिधानीया । सूत्रितं[3]–' बृहस्पते अति यदर्यो अर्हादिति परिधानीया ' ( आश्व. श्रौ. ६. ५ ) इति ॥

बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ १५ ॥

बृहस्पते । अति । यत् । अर्यः । अर्हात् । द्युऽमत् । विऽभाति । क्रतुऽमत् । जनेषु ।
यत् । दीदयत् । शवसा । ऋतऽप्रजात । तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् ॥ १५ ॥

१. क-झ-म–स्वस्वरक्षणार्थम् । २. ख-ग-च-झ-ण-न-म-व–ते तव; झ१–तेन । ३. त-थ–सूत्रितं च ।

ऋतप्रजात सत्येनोत्पन्न हे बृहस्पते अर्यः श्रेष्ठो ब्राह्मणः सर्वान् कामानतीत्य यत् ब्रह्म-वर्चसं तेजः अर्हात् पूजयेत् ॥ 'अर्ह पूजायाम्'। लेट्याडागमः ॥ जनेषु ब्राह्मणेषु द्युमत् दीप्तियुक्तं क्रतुमत् ज्ञानोपेतं यद्ब्रह्मवर्चसं विभाति विशेषेण दीप्यते। यत् च शवसा बलेन स्वाश्रयं जनं दीदयत्। दीदयतिर्दीप्तिकर्मा। दीपयति। चित्रं चायनीयं तत् ब्रह्मवर्चसरूपं[1] द्रविणम् अस्मासु धेहि निधेहि। यद्वा अर्य उदारोऽपि त्वया दत्तं धनम् अतीवार्हात् श्रद्दधीत। यच्च त्वद्दत्तं धनं जनेषु तव स्तोत्रं कुर्वाणेषु दीप्तियुक्तं कर्मसाधनं च विभाति यच्च धनं शवसा अन्नादिसमृद्ध्या दीदयत् स्वाश्रयं दीपयति तादृशं धनमस्मासु धेहि । तथा च ब्राह्मणं—'बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्तेजस्कामो ब्रह्मवर्चसकामोऽतीव वान्यान्ब्रह्मवर्चसमर्हति द्युमदिति द्युमदिव वै ब्रह्मवर्चसं विभातीति वीव वै ब्रह्मवर्चसं भाति यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चसं तदस्मासु द्रविणं धेहि चित्रमिति चित्रमिव वै ब्रह्मवर्चसं ब्रह्मवर्चसी ब्रह्मयशसी भवति' (ऐ. ब्रा. ४. ११) इति ॥ ॥ ३१ ॥

**मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।**

**आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥ १६ ॥**

मा । नः । स्तेनेभ्यः । ये । अभि । द्रुहः । पदे । निरामिणः । रिपवः । अन्नेषु । जगृधुः ।

आ । देवानाम् । ओहते । वि । व्रयः । हृदि । बृहस्पते । न । परः । साम्नः । विदुः ॥ १६ ॥

हे बृहस्पते नः अस्मान् स्तेनेभ्यः। स्त्यानमस्ति येष्विति स्तेनाश्चौराः। तेभ्यो मा दाः। तान् दर्शयति। ये चौराः द्रुहः प्राणद्रोहस्य पदे स्थाने निरामिणः नितरां रमणशीलाः रिपवः हिंसकाः सन्तः अन्नेषु परकीयेषु अभि जागृधुः अभिकाङ्क्षन्ति॥ 'गृधु अभिकाङ्क्षायाम्'। लिटि रूपम् ॥ ये च देवानां वि व्रयः विशेषेण वर्जनम्। व्री व्ली इति धातू वर्जने वर्तेते। 'य एवं विद्वान् दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्लीनाति' (तै. ब्रा. २ २. ५. १) इत्येकस्य वर्जनार्थे दृष्टत्वादपरस्यापि[2] वर्जनार्थत्वम् ॥ तत् हृदि स्वकीये हृदये आ ओहते आवहन्ति। देवानां यागान् स्तुतीश्च न करवामेति मन्यन्त इति यावत्। तेभ्योऽस्मान् मा दा इति समन्वयः। ये पुमांसः साम्नः साममयात्त्वत्तः परः परस्तादन्यदुत्कृष्टं साम यद्रक्षोघ्नम्। साम वै रक्षोहेति। न विदुः न जानन्ति। किंतु सर्वसाधकं[3] साम त्वामेव विदुषोऽस्मान् स्तेनेभ्यो मा दाः॥

**विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत्साम्नःसाम्नः कविः ।**

**स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हन्ता मह ऋतस्य धर्तरि ॥ १७ ॥**

विश्वेभ्यः । हि । त्वा । भुवनेभ्यः । परि । त्वष्टा । अजनत् । साम्नःऽसाम्नः । कविः ।

सः । ऋणऽचित् । ऋणऽयाः । ब्रह्मणः । पतिः । द्रुहः । हन्ता । महः । ऋतस्य । धर्तरि ॥ १७ ॥

---

१. क-ख-ग-च-झ-ण-ण१-थ-न-म-व—ब्रह्मवर्चसं रूपम्। २. क-ख-ग-च-झ-झ१-ण-ण१-न-व—दृष्टस्यापि; म—दृष्टस्यापि इतरस्य. ३. क-ख-ग-च-झ-ण-ण१-न-म-व—सर्वं साधकम्।

हे ब्रह्मणस्पते[1] त्वष्टा प्रजापतिः विश्वेभ्यः भुवनेभ्यः परि सर्वेभ्यो भूतजातेभ्य उत्कृष्टं त्वां अजनत् हि अजीजनत् खलु । ततस्त्वं साम्नःसाम्नः सर्वस्यापि साम्नः कविः ॥ 'कु शब्दे'। 'अच इः' इति इप्रत्ययः ॥ उच्चारयिता कर्तासि । यद्वा कविः क्रान्तदर्शी त्वष्टा साम्नःसाम्नः सर्वस्यापि साम्नः सारेण[2] त्वाम्[2] अजीजनत् । किंच सः ब्रह्मणस्पतिः महः महतः ऋतस्य यज्ञस्य धर्तरि धारके यजमाने ऋणचित् स्तोतृकाममृणमिव चिनोतीति ऋणचित् । किंच ऋणयाः पापरूपस्य ऋणस्य यावयिता पृथक्कर्ता च[3] द्रुहः कर्मणो द्रोग्धुरसुरस्य हन्ता भवति ॥

**तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः ।**

**इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् ॥ १८ ॥**

तव । श्रिये । वि । अजिहीत । पर्वतः । गवाम् । गोत्रम् । उत्ऽअसृजः । यत् । अङ्गिरः ।

इन्द्रेण । युजा । तमसा । परिऽवृतम् । बृहस्पते । निः । अपाम् । औब्जः । अर्णवम् ॥ १८ ॥

अङ्गिरः आङ्गिरस हे बृहस्पते गवाम् आवारको वलेनाधिष्ठितः पर्वतः तव श्रिये आश्रयणार्थं व्यजिहीत विवृतद्वारतामगच्छत् । ततस्त्वं यत् यदा गोत्रम् ॥ 'इनित्रकट्यचश्च' इति समूहार्थे त्रप्रत्ययः ॥ गवां समूहं उदसृजः निरगमयः तदा[4] इन्द्रेण युजा सहायेन युक्तस्त्वं तमसा वृत्रासुरेण परीवृतं परित आक्रान्तम् अपाम् अर्णवं स्थानभूतं मेघं निः औब्जः नितराम् अधोमुखमकार्षीः ॥

**ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।**

**विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ १९ ॥**

ब्रह्मणः । पते । त्वम् । अस्य । यन्ता । सुऽउक्तस्य । बोधि । तनयम् । च । जिन्व ।

विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १९ ॥

हे ब्रह्मणस्पते ब्रह्मणां स्तोत्राणामधिपते अस्य जगतः यन्ता नियामकः त्वं सूक्तस्य अस्मदीयमिदं ब्राह्मणस्पत्यं सूक्तं बोधि बुध्यस्व । त्वं तनयं पुत्रपौत्रादिलक्षणं[5] संतानं[5] जिन्व ॥ जिविः प्रीणनार्थः । लोटि रूपम् ॥ प्रीणय । भवादृशाः देवाः यदवन्ति रक्षन्ति तत् तादृशं विश्वं सर्वं भद्रं कल्याणं भवति । अतो वयं विदथे अस्मिन् यज्ञे सुवीराः शोभनपुत्रपौत्राः सन्तः बृहत् प्रभूतमिदं स्तोत्रं वदेम ब्रूयाम ॥ ॥ ३२ ॥ ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण

सायणाचार्येण[6] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये

द्वितीयाष्टके षष्ठोऽध्यायः समाप्तः ॥

---

१. क-ख-ग-च-ण-झ-झ१-ण-ण१-त-थ-न-म-व—ब्रह्मणस्पतिं महो महतो ऋतस्य यज्ञस्य धर्तरि धारके यजमाने । २ त-थ—साधारणं त्वाम्; म—साधारणत्वम् । ३. क-झ-ण-त-थ-न-म-व—त्वम् । ४. क-ख-ग-च-झ-झ१-ण-थ-न-म-व—तदा तदा । ५. ख-ण१—पुत्रपौत्रादिलक्ष°; ग-झ१-ण-थ-न-व—पुत्रपौत्रादिलक्षण° । ६. क-झ—सायणामात्येन ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ ऋषिच्छन्दोदेवताविनियोगपुरःसरं सप्तमः[1] व्याख्यायते। गार्त्समदस्य द्वितीयमण्डलस्य तृतीयेऽनुवाके दश सूक्तानि। तत्रैकं सूक्तं व्याकृतम्। 'सेमाम्' इति षोडशर्चं द्वितीयं सूक्तम्। अत्रानुक्रम्यते—'सेमां षोळशान्त्या त्रिष्टुब्द्वादशी च सैन्द्री च' इति। मण्डलद्रष्टा गृत्समद ऋषिः। द्वादशीषोडश्यौ त्रिष्टुभौ। शिष्टाश्चतुर्दश जगत्यः। 'ब्राह्मणस्पत्यं ह' इत्युक्तत्वात् तुह्यादिपरिभाषया इदमादीनि त्रीणि सूक्तानि ब्राह्मणस्पत्यानि। अस्य सूक्तस्य द्वादशी ऐन्द्री इन्द्रदेवत्या। चशब्दात् ब्राह्मणस्पत्या च। सामान्यविनियोगः पूर्वमेवोक्तः। विशेषतस्तु लिङ्गादवगन्तव्यः।

**सेमामविड्ढि प्रभृतिं य ईशिषेऽया विधेम नवया महा गिरा।**
**यथा नो मीढ्वान्स्तवते सखा तव बृहस्पते सीषधः सोत नो मतिम् ॥ १ ॥**

सः। इमाम्। अविड्ढि। प्रऽभृतिम्। यः। ईशिषे। अया। विधेम। नवया। महा। गिरा।

यथा। नः। मीढ्वान्। स्तवते। सखा। तव।

बृहस्पते। सीसधः। सः। उत। नः। मतिम् ॥ १ ॥

हे ब्रह्मणस्पते ᵛयः त्वम् ᵛईशिषे सर्वस्य जगत ईश्वरो भवसि ᵛसः त्वम् ᵛइमाम् अस्मदीयां ᵛप्रभृतिं प्रकर्षेण भृतां स्तुतिम् ᵛअविड्ढि प्राप्नुहि ॥ अवतेः प्राप्त्यर्थस्य लोटि एतद्रूपम् ॥ वयं च त्वाम् ᵛअया अनया ॥ छान्दसो वर्णलोपः ॥ ᵛनवया नूतनया प्रत्यग्रया ᵛमहा महत्या ᵛगिरा वेदरूपया स्तुतिलक्षणया वाचा ᵛविधेम परिचरेम ॥ विधतिः परिचरणकर्मा ॥ ᵛउत अपि च ᵛनः अस्माकं मध्ये ᵛमीढ्वान् सेक्ता स्तुतेर्वर्षिता कर्तेति यावत्। ᵛतव ᵛसखा मित्रभूतः सन् ᵛयथा येन प्रकारेण यत्कामनया ᵛस्तवते त्वां स्तौति। हे ᵛबृहस्पते बृहतो ब्रह्मणो मन्त्रस्य स्वामिन् ᵛसः त्वं ᵛनः अस्माकं ᵛमतिं तदभिमतं फलं ᵛसीषधः साधय ॥ छान्दसे लुङि चङि एतद्रूपम् ॥

**यो नन्त्वान्यनमन्न्योजसोतादर्दर्मन्युना शम्बराणि वि।**
**प्राच्यावयदच्युता ब्रह्मणस्पतिरा चाविशद्वसुमन्तं वि पर्वतम् ॥ २ ॥**

यः। नन्त्वानि। अनमत्। नि। ओजसा। उत। अदर्दः। मन्युना। शम्बराणि। वि।

प्र। अच्यवयत्। अच्युता। ब्रह्मणः। पतिः।

आ। च। अविशत्। वसुऽमन्तम्। वि। पर्वतम् ॥ २ ॥

---

१. च-म-सप्तमोऽध्यायः।

ᵛयः ᵛब्रह्मणस्पतिः ᵛनन्त्वानि नमनीयानि राक्षसादीनि ᵛओजसा बलेन ᵛनि ᵛअनमत् नितरामनमयत् प्रह्वीभूतान्यकरोत् । ᵛउत अपि च स ब्रह्मणस्पतिः ᵛमन्युना मन्युना क्रोधेन वा ॥ ' मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा ' ( निरु. १०. २९ ) इति यास्कः ॥ ᵛशम्बराणि । मेघनामैतत् । मेघान् ᵛवि ᵛअदर्दः वर्षणार्थं विदारितवान् ॥ ' दृ विदारणे ' इत्यस्मात् यङ्लुगन्तात् लङि एतद्रूपम् ॥ तदनन्तरम् ᵛअच्युता अच्युतानि नैश्चल्येन मेघेऽवस्थितान्युदकानि ᵛप्राच्यावयत् प्रकर्षेणागमयत् । मेघान्निरगमयदित्यर्थः । तथा ᵛवसुमन्तं गोरूपधनवन्तं ᵛपर्वतं वलनाम्ना असुरेण बिलद्वारे पिधानार्थं निहितं शिलोच्चयम् ᵛआ ᵛच आभिमुख्येन चेत् ॥ चशब्दश्चेदर्थः । समुच्चयार्थत्वे तु ' चवायोगे प्रथमा ' इति पूर्वस्य अच्यावयदित्यस्य आद्युदात्तत्वं स्यात् । अस्य च सर्वानुदात्तत्वम् । चेदर्थे तु ' निपातैर्यद्यदिहन्त° ' इति निघातप्रतिषेधः सिध्यति ॥ ᵛवि ᵛअविशत् विशेषेण प्रविशति । तदानीं तत् गोरूपं धनं प्राप्नोदित्यर्थः ॥

तद्देवानां देवतमाय कर्त्वमश्रंश्नन्दृळ्हाव्रदन्त वीळिता ।
उद्गा आजदभिनद्ब्रह्मणा वलमगूहत्तमो व्यचक्षयत्स्वः ॥ ३ ॥

तत् । देवानाम् । देवऽतमाय । कर्त्वम् । अश्रंश्नन् । दृळ्हा । अव्रदन्त । वीळिता ।
उत् । गाः । आजत् । अभिनत् । ब्रह्मणा । वलम् ।
अगूहत् । तमः । वि । अचक्षयत् । स्वरिति स्वः ॥ ३ ॥

ᵛदेवानाम् इन्द्रादीनां मध्ये ᵛदेवतमाय अतिशयेन दानादिगुणयुक्ताय ॥ षष्ठ्यर्थे चतुर्थी ॥ ईदृशस्य ब्रह्मणस्पतेः ᵛतत् ᵛकर्त्वं कर्तव्यं कर्म । किं पुनस्तदिति चेत् उच्यते । ᵛदृळ्हा दृढानि[२] पर्वतादीनि ᵛअश्रश्नन् ॥ ' श्रन्थ विमोचनप्रतिहर्षणयोः ' ॥ अस्य बलेन श्रथितानि विश्लिष्टान्यभवन् । तथा ᵛवीळिता वीळितानि संस्तम्भितानि दृढीकृतानि वृक्षादीनि । ' वीळयतिश्च व्रीळयतिश्च संस्तम्भकर्माणौ ' ( निरु. ५. १६ ) इति यास्कः । ᵛअव्रदन्त मृदून्यभवन् । व्रदतिर्मृदूभावकर्मा । अपि च स ब्रह्मणस्पतिः वलेनापहृताः ᵛगाः ᵛउत् ᵛआजत् ॥ ' अज गतिक्षेपणयोः ' ॥ देवान् प्रति उदगमयत् । तथा ᵛब्रह्मणा आत्मीयेन मन्त्रेण ᵛवलं सर्वस्यावारकम् असुरम् ᵛअभिनत् मन्त्रसामर्थ्येनाभैत्सीत् । तदनन्तरं वलेनोत्पादितं ᵛतमः ध्वान्तम् ᵛअगूहत् ॥ ' गुहू संवरणे ' ॥ गूढमदृश्यमकरोत् । तदनन्तरं ᵛस्वः आदित्यं ᵛव्यचक्षयत् तमसो निराकरणेन तत्स्थमदर्शयत् ॥ चष्टिः पश्यतिकर्मा ॥

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् ।
तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ॥ ४ ॥

अश्मऽआस्यम् । अवतम् । ब्रह्मणः । पतिः । मधुऽधारम् । अभि । यम् । ओजसा । अतृणत् ।
तम् । एव । विश्वे । पपिरे । स्वःऽदृशः । बहु । साकम् । सिसिचुः । उत्सम् । उद्रिणम् ॥४॥

---

१. ख-ग-च-ज-ण-ण१-न-फ-व-दळहानि ।

vब्रह्मणस्पतिः ब्रह्मणो मन्त्रस्य पतिः पालयिता देवः vअश्मास्यम् अश्मवत् दृढतरास्यम्। यास्कस्त्वाह—'अशनवन्तमास्यन्दनवन्तम्' (निरु. १०. १३) इति। व्यापनवन्तमासेचनवन्तमिति तस्यार्थः। vमधुधारं मधुर्मादयित्री उदकधारा यस्य तादृशम् vअवतम् अवस्तात् ततं विस्तृतं vयं मेघम् vओजसा बलेन vअभि vअतृणत्॥ 'उतृदिर् हिंसानादरयोः'॥ अहिंसीत् वर्षणार्थमवधीदित्यर्थः। vतमेव मेघं vविश्वे सर्वे vस्वर्दृशः। स्वः आदित्यः। तस्य संबन्धिनो द्रष्टारो रश्मयः vपपिरे घर्मकाले पिबन्ति। मेघेन वृष्टस्योदकस्य पानात् तमेव पिबन्तीत्युच्यते। ते च रश्मयो वर्षासु vउत्सम् उत्सेचनवन्तम् vउद्रिणम् उदकवन्तं मेघं vसाकं सह युगपदेव vबहु vसिसिचुः। घर्मकाले यत्पीतं ततोऽपि बहुतरं सहस्रगुणितं सिञ्चन्तीत्यर्थः॥

सना ता का चिद्भुवना भवीत्वा माद्भिः शरद्भिर्दुरो वरन्त वः।
अयतन्ता चरतो अन्यदन्यदिद्या चकार वयुना ब्रह्मणस्पतिः॥ ५॥

सना। ता। का। चित्। भुवना। भवीत्वा। मात्ऽभिः। शरत्ऽभिः। दुरः। वरन्त। वः।
अयतन्ता। चरतः। अन्यत्ऽअन्यत्। इत्। या। चकार। वयुना। ब्रह्मणः। पतिः॥ ५॥

हे ऋत्विग्यजमानाः vवः युष्मदर्थं vसना सनातनानि vता तानि vका vचित् कानि चित् ब्रह्मणस्पतेः प्रज्ञानानि vभुवना भुवनानाम्॥ 'सुपां सुलुक्°' इति षष्ठ्या लुक्॥ भुवनानामुदकानां vभवीत्वा भाव्यानां vदुरः द्वाराणि vमाद्भिः मासैः॥ 'पद्दन्°' इत्यादिना मासशब्दस्य मास्भावः। 'स्वतवस्मासोषसां च त इष्यते' (पा. सू. ७. ४. ४८. २) इति तत्वम्॥ vशरद्भिः संवत्सरैश्च vवरन्त विवृण्वन्ति। तत्काले वर्षणार्थं मेघद्वाराणि उद्घाटयन्तीत्यर्थः। कानि पुनस्तानि। vब्रह्मणस्पतिः vया यानि vवयुना॥ ज्ञाननामैतत्॥ ज्ञानानि मन्त्रविषयाणि vचकार कृतवान्। तदनन्तरम् vअयतन्ता अयतमानौ अप्रयत्नौ उभौ लोकौ द्यौश्च पृथिवी च vअन्यदन्यदित् अन्यदन्यदेव पृथिवी वृष्टिजलं दिव्यमुदकं द्यौः उदककार्यं हविर्लक्षणं पार्थिवमन्नम् एवं परस्परव्यतिहारेण vचरतः भुञ्जाते॥ 'चर गतिभक्षणयोः'॥　　॥ १॥

अभिनक्षन्तो अभि ये तमानशुर्निधिं पणीनां परमं गुहा हितम्।
ते विद्वांसः प्रतिचक्ष्यानृता पुनर्यत उ आयन्तदुदीयुराविशम्॥ ६॥

अभिऽनक्षन्तः। अभि। ये। तम्। आनशुः। निऽधिम्। पणीनाम्। परमम्। गुहा। हितम्।
ते। विद्वांसः। प्रतिऽचक्ष्य। अनृता। पुनः।
यतः। ऊँ इति। आयन्। तत्। उत्। ईयुः। आऽविशम्॥ ६॥

गोसमूहे पणिभिरसुरैरपहृते सति पणीनां स्थानं सरमाख्यया देवशुन्या ज्ञात्वा ब्रह्मणस्पतिना सृष्टा अङ्गिरसस्तत्स्थानं प्राप्य गोसमूहं पणिभिर्निर्मिता मायाश्च दृष्ट्वा असुरनिवासस्थानं स्वहस्तोद्भूतेनाग्निना दग्ध्वा प्रत्यागच्छन्। तदेतत् द्वृचेनोच्यते। vअभिनक्षन्तः अभितो गच्छन्तः vये अङ्गिरसः

ᵛतं ᵛनिधिं गोसमूहरूपं निधानं धनं ᵛपरमम् उत्कृष्टं ᵛपणीनाम् ॥ तृतीयार्थे षष्ठी ॥ पणिभिर्गुहायां निहितं स्थापितम् ᵛअभि ᵛआनशुः अभिलक्ष्य आनशिरे प्राप्तवन्तः । ᵛविद्वांसः अभिज्ञाः ᵛते अङ्गिरसः ᵛअनृता अनृतानि असुरैः कृता मायाः ᵛप्रतिचक्ष्य दृष्ट्वा ᵛआविशम् आवेष्टुं प्रवेष्टुं ᵛयत ᵛउ यत एव स्थानात् ᵛआयन् अगच्छन् ᵛतत् स्थानं ᵛपुनः ᵛउदीयुः उदगच्छन् । उत्कर्षेण प्राप्ताः ॥

ऋतावा॑नः प्रति॒चक्ष्यानृ॑ता पुन॒रात॒ आ त॑स्थुः क॒वयो॑ म॒हस्प॒थः ।
ते बा॒हुभ्यां॑ धमि॒तम॒ग्निमश्म॑नि नकि॒ः षो अ॒स्त्यर॑णो ज॒हुर्हि तम् ॥ ७ ॥

ऋ॒तऽवा॑नः । प्र॒ति॒ऽचक्ष्य॑ । अनृ॑ता । पुन॒रिति॑ । आ । अत॑ः । आ । त॒स्थुः॒ । क॒वय॑ः । म॒हः । प॒थः ।
ते । बा॒हुऽभ्या॑म् । ध॒मि॒तम् । अ॒ग्निम् । अश्म॑नि ।
नकि॑ः । सः । अ॒स्ति॒ । अर॑णः । ज॒हुः । हि । तम् ॥ ७ ॥

ᵛऋतावानः । ऋतमिति सत्यनामधेयम् । तद्वन्तः ᵛकवयः क्रान्तदर्शिनः सर्वज्ञा अङ्गिरसः ᵛअनृता अनृतानि ᵛप्रतिचक्ष्य पूर्वोक्तप्रकारेण दृष्ट्वा ᵛअतः अस्मात् स्थानात् ᵛपुनः आजिगमिषवः ᵛमहस्पथः महतो मार्गान् प्रति ᵛआ ᵛतस्थुः अवतस्थिरे । अवतिष्ठमानाश्च ᵛते ᵛबाहुभ्यां हस्ताभ्यां ᵛधमितं मथनोत्पादितं प्रज्वालितम् ᵛअग्निम् ᵛअश्मनि पणीनां निवासभूते शिलोच्चये ᵛजहुर्हि दग्धुं त्यक्तवन्तः खलु । ᵛअरणः अरमयिता दाहेन दुःखकारी ᵛसः अग्निः पूर्वं तत्र ᵛनकिः ᵛअस्ति न विद्यते । अविद्यमानमग्निं स्वसामर्थ्यात् उत्पाद्य तत्र प्रचिक्षिपुरित्यर्थः ॥

ऋ॒तज्ये॑न क्षि॒प्रेण॒ ब्रह्म॑ण॒स्पति॒र्यत्र॒ वष्टि॒ प्र तद॑श्नोति॒ धन्व॑ना ।
तस्य॑ सा॒ध्वीरिष॑वो॒ याभि॒रस्य॑ति नृ॒चक्ष॑सो दृ॒शये॒ कर्ण॑योनयः ॥ ८ ॥

ऋ॒तऽज्ये॑न । क्षि॒प्रेण॑ । ब्रह्म॑णः । पति॑ः । यत्र॑ । वष्टि॑ । प्र । तत् । अ॒श्नो॒ति॒ । धन्व॑ना ।
तस्य॑ । सा॒ध्वीः । इष॑वः । याभि॑ः । अस्य॑ति । नृ॒ऽचक्ष॑सः । दृ॒शये॑ । कर्ण॑ऽयोनयः ॥ ८ ॥

ऋतं सत्यमेव ज्या यस्य तेन ᵛक्षिप्रेण इषूणां क्षेपकेण ᵛधन्वना धरणभूतेन धनुषा[1] ᵛब्रह्मणस्पतिः[1] ब्रह्मणो मन्त्रस्य पालयिता देवः ᵛयत्र यस्मिन् विषये ᵛवष्टि कामयते ᵛतत् ᵛप्र ᵛअश्नोति प्रकर्षेण व्याप्नोति ॥ अश्नोतेर्व्यत्ययेन परस्मैपदम् ॥ ᵛतस्य धनुषः ᵛसाध्वीः साधिकास्ताः ᵛइषवः भवन्ति ᵛयाभिः इषुभिः ब्रह्मणस्पतिः ᵛअस्यति राक्षसादीन् क्षिपति । कीदृश्यस्ताः । ᵛनृचक्षसः नॄन् पश्यतः । उपलक्षणमेतत् । सर्वज्ञस्य ब्रह्मणस्पतेः ᵛदृशये दर्शनाय ज्ञानाय जाताः ᵛकर्णयोनयः श्रोत्रेन्द्रियेण ग्राह्या मन्त्रभूताः आकर्णकृष्टा वा बाणाः । ब्रह्मणस्पतिर्मन्त्रैरेव सर्वं साधयतीति भावः ॥

---

१. क-ज्ञ-ज्ञ१-ण-त-थ-म-व-दे ब्रह्मणस्पते त्वया सृष्टाः ब्रह्मणस्पतिः; ख-ग-फ-यः ब्रह्मणस्पतिः; न-दे ब्रह्मणस्पते त्वया सृष्टाः ।

स सं॑न॒यः स वि॑न॒यः पु॒रोहि॑त॒ः स सुष्टु॑त॒ः स यु॒धि ब्रह्म॑ण॒स्पति॑ः ।
चा॒क्ष्मो यद्वाजं॒ भर॑ते म॒ती धनादित्सूर्य॑स्तपति तप्य॒तुर्वृथा॑ ॥ ९ ॥

सः । स॒म्ऽन॒यः । सः । वि॒ऽन॒यः । पु॒रःऽहि॑तः । सः । सुऽस्तु॑तः । सः । यु॒धि । ब्रह्म॑णः । पति॑ः ।
चा॒क्ष्मः । यत् । वाज॑म् । भर॑ते । म॒ती । धना॑ ।
आत् । इत् । सूर्य॑ः । त॒प॒ति॒ । त॒प्य॒तुः । वृथा॑ ॥ ९ ॥

ᐯपुरोहितः देवैः पुरतोऽत्र स्थापितः ᐯसः ᐯब्रह्मणस्पतिः ᐯसंनयः विश्लिष्टानां मन्त्रैः संगमयिता भवति । ᐯविनयः संगतानां विविधं नेता पृथक्कर्तापि ᐯसः एव । तथा ᐯस ᐯसुष्टुतः शोभनं स्तोतृभिः स्तुतश्च भवति । तथा ᐯयुधि संग्रामे ᐯसः स्तोतॄणामनुग्रहाय प्रादुर्भवतीति शेषः । ᐯयत् यदा ᐯचाक्ष्मः ॥ चष्टेः क्षमतेर्वा ॥ सर्वस्य द्रष्टा सर्वसहो वा ब्रह्मणस्पतिः ᐯवाजम् अन्नं ᐯमती मननीयं प्रशस्तं ᐯधना धनं च स्तोतॄणामर्थाय ᐯभरते बिभर्ति वृष्टिद्वारा पोषयति । ᐯआदित् अनन्तरमेव ᐯतप्यतुः तापकः ᐯसूर्यः ᐯवृथा । अनायासवचनमेतत् । अनायासेन ᐯतपति दीप्यते । ब्रह्मणस्पतिना दत्तैरन्नैर्धनैश्च यज्ञस्य सिद्धत्वात् स्वयं केवलं हवींषि भुञ्जान एव वर्तते इत्यर्थः ॥

वि॒भु प्र॒भु प्र॑थ॒मं मे॒हना॑वतो बृह॒स्पते॑ः सुवि॒दत्रा॑णि॒ राध्या॑ ।
इ॒मा सा॒तानि॑ वे॒न्यस्य॑ वा॒जिनो॒ येन॒ जना॑ उ॒भये॑ भुञ्ज॒ते विश॑ः ॥ १० ॥

वि॒ऽभु । प्र॒ऽभु । प्र॒थ॒मम् । मे॒हना॑ऽवतः । बृ॒ह॒स्पते॑ः । सु॒ऽवि॒दत्रा॑णि । राध्या॑ ।
इ॒मा । सा॒तानि॑ । वे॒न्यस्य॑ । वा॒जिन॑ः । येन॑ । जना॑ः । उ॒भये॑ । भु॒ञ्ज॒ते । विश॑ः ॥ १० ॥

ᐯविभु विभूनि व्याप्तानि ᐯप्रभु प्रभूणि प्रौढानि ᐯप्रथमं प्रथमानि मुख्यानि एवंभूतानि ᐯमेहनावतः वर्षणवतो वृष्टिप्रदस्य ᐯबृहस्पतेः बृहतो मन्त्रस्य पालयितुः संबन्धीनि ᐯसुविदत्राणि ॥ ' विद्लृ लाभे ' । ' सुविदेः कत्रन् ' ( उ. सू. ३.३८८ ) ॥ सुष्ठु लब्धव्यानि । ' सुविदत्रं धनं भवति ' ( निरु. ७. ९ ) इति यास्कः । ᐯराध्या राध्यानि सम्यक् साधनीयानि । प्राप्तव्यानीति यावत् । ᐯइमा ᐯसातानि इमानि धनानि ᐯवेन्यस्य कमनीयस्य ᐯवाजिनः अन्नवतो ब्रह्मणस्पतेः ॥ तृतीयार्थे षष्ठी ॥ ब्रह्मणस्पतिना दत्तानि । ᐯयेन धनेन ᐯउभये उभयविधाः ᐯजनाः स्तोतारो यजमानाश्च देवा मनुष्याश्च वा ᐯविशः निविष्टाः सन्तः ᐯभुञ्जते भोगान् लभन्ते । तत्सर्वं ब्रह्मणस्पतिना दत्तमित्यर्थः ॥　　॥ २ ॥

योऽव॑रे वृ॒जने॑ वि॒श्वथा॑ वि॒भुर्म॒हामु॑ र॒ण्वः शव॑सा व॒वक्षि॑थ ।
स दे॒वो दे॒वान्प्रति॑ पप्रथे पृ॒थु विश्वेदु॒ ता परि॒भूर्ब्रह्म॑ण॒स्पति॑ः ॥ ११ ॥

यः । अव॑रे । वृ॒जने॑ । वि॒श्वऽथा॑ । वि॒ऽभुः । म॒हाम् । ऊँ॒ इति॑ । र॒ण्वः । शव॑सा । व॒वक्षि॑थ ।
सः । दे॒वः । दे॒वान् । प्रति॑ । प॒प्र॒थे॒ । पृ॒थु ।
विश्वा॑ । इत् । ऊँ॒ इति॑ । ता । प॒रि॒ऽभूः । ब्रह्म॑णः । पति॑ः ॥ ११ ॥

ᵛविश्वथा सर्वप्रकारेण ᵛविभुः व्याप्तः ᵛरण्वः रमयिता स्तोतव्यो वा ᵛयः ᵛब्रह्मणस्पतिः ᵛअवरे निकृष्टे ᵛवृजने वर्जनहेतुभूते बले वर्तमानम् । दुर्बलमिति यावत् । ᵛमहामु महान्तं च ॥ छान्दसो वर्णलोपः ॥ उभयविधं स्तोतारं ᵛशवसा आत्मीयेन बलेन ᵛववक्षिथ वोढुमिच्छति । सर्वदा वहतीति यावत् ॥ वहतेः सनन्तस्य लिटि एतद्रूपम् । पुरुषव्यत्ययः ॥ ᵛसः ᵛदेवः दानादिगुणयुक्तः ᵛदेवान् ᵛप्रति सर्वेषां देवानां प्रतिनिधिः सन् ᵛपृथु ᵛपप्रथे अत्यन्तं प्रथते । यशसा विस्तीर्णो भवतीति यावत् । यस्मादेवं तस्मात् ᵛविश्वेदु सर्वाण्येव ᵛता तानि सर्वाणि भूतजातानि ᵛपरिभूः परिभवन् अभिभवन् वर्तते इति शेषः ॥

विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनन्ति व्रतं वाम् ।
अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम् ॥ १२ ॥

विश्वम् । सत्यम् । मघऽवाना । युवोः । इत् । आपः । चन । प्र । मिनन्ति । व्रतम् । वाम् ।
अच्छ । इन्द्राब्रह्मणस्पती इति । हविः । नः । अन्नम् । युजाऽइव । वाजिना । जिगातम् ॥ १२ ॥

हे ᵛमघवाना । मघमिति धननाम । तद्वन्तौ इन्द्राब्रह्मणस्पती ᵛयुवोरित् युवयोरेव ᵛविश्वं सर्वं स्तोत्रं ᵛसत्यं यथार्थम् । स्तुत्या यद्यत् गुणजातं[1] प्रतिपाद्यते तत्सर्वं युवयोर्विद्यमानमेव नत्वारोपितमित्यर्थः। तथा चन इत्येतत्पदद्वयसमुदायः। ऐकपद्यं[2] त्वध्यापकसांप्रदायिकं यद्येव शब्दस्य पूर्वपदेन (?)। ᵛआपश्च आपोऽपि । उपलक्षणमेतत् । एतदुपलक्षितानि सर्वाण्यपि भूतानि ᵛवां युवयोः ᵛव्रतं कर्म ᵛन ᵛप्र ᵛमिनन्ति न हिंसन्ति ॥ 'मीङ् हिंसायां' । क्रैयादिकः । 'मीनातेर्निगमे' इति ह्रस्वत्वम् ॥ हे ᵛइन्द्राब्रह्मणस्पती ᵛनः अस्माकं ᵛहविः ᵛअच्छ आभिमुख्येन ᵛजिगातं गच्छतम् । आगच्छतमिति यावत् ॥ जिगातिर्गतिकर्मा । जौहोत्यादिकः ॥ तत्र दृष्टान्तः । ᵛयुजेव ᵛवाजिना । युजा रथे नियुक्तौ वाजिनौ वेजनवन्तौ अश्वौ ᵛअन्नं घासं प्रति यथा स्वयमेव शीघ्रं गच्छतः तद्वत् शीघ्रमागच्छतमित्यर्थः ॥ युजेवेत्यत्र 'सुपां सुलुक्°' इति प्रथमाद्विवचनस्य आकारः । तृतीयायां हि 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् ॥

उताशिष्ठा अनु शृण्वन्ति वह्नयः सभेयो विप्रो भरते मती धना ।
वीळुद्वेषा अनु वश ऋणमाददिः स ह वाजी समिथे ब्रह्मणस्पतिः ॥ १३ ॥

उत । आशिष्ठाः । अनु । शृण्वन्ति । वह्नयः । सभेयः । विप्रः । भरते । मती । धना ।
वीळुऽद्वेषाः । अनु । वशा । ऋणम् । आऽददिः । सः । ह ।
वाजी । समऽइथे । ब्रह्मणः । पतिः ॥ १३ ॥

ᵛउत अपि च ᵛआशिष्ठाः आशुतराः शीघ्रगामिनः ᵛवयः । अश्वनामैतत् । वोढारो ब्रह्मणस्पतेरश्वाः ᵛअनु ᵛशृण्वन्ति । अस्माभिः कृतं स्तोत्रमनुक्रमेण शृण्वन्ति । यद्वा ब्रह्मणस्पतिना

१. ख-ग-ण१-रूपजातम् । २. ख-ग-च-झ१-ण-ण१-त-थ-न-म-व-एकपद्यम् ।

कृतमनुशासनं शृण्वन्ति । अतस्ते तमस्मदीयं यज्ञं प्रापयन्त्विति शेषः । सभेयः सभायां साधुः ॥ 'ढश्छन्दसि' इति ढः ॥ विप्रः मेधावी अध्वर्युर्होता वा मती मत्या मननीयेन स्तोत्रेण ॥ 'सुपां सुलुक्°' इति पूर्वसवर्णदीर्घः ॥ धना हविर्लक्षणानि धनानि तस्मै ब्रह्मणस्पतये भरते बिभर्ति । संपादयतीति यावत् । यद्वा स्तोत्रेण धनानि भरते बिभर्ति पोषयति । अतः वीळुद्वेषाः । वीळून् दृढान् प्रबलान् राक्षसादीन् द्वेष्टीति तादृशो ब्रह्मणस्पतिः वशा वशायाः ॥ 'सुपां सुलुक्°' इति षष्ठ्या लुक् । 'ऋत्यकः' इति प्रकृतिभावः ॥ ऋणम् अस्माभिर्यज्वभिः प्रदेयमवदानात्मकम् अनुक्रमेण[1] आददिः आदाता भवत्विति शेषः । अवदानस्य ऋणत्वं च तैत्तिरीये 'त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यः' (तै. सं. ६. ३. १०. ५) इत्यादिना स्पष्टमाम्नातम् । यद्वा अनुः आनुगुण्ये । वशा वशस्य कामस्याभिलाषस्य अनुगुणमादाता भवत्विति योज्यम् । हशब्दः प्रसिद्धौ । सः खलु ब्रह्मणस्पतिः समिथे । संयन्ति संगच्छन्तेऽस्मिन्नाहुतिभिर्देवा इति समिथो यज्ञः । तस्मिन् वाजी अन्नवान् । तस्माद्धविष आदाता भवत्वित्यर्थः ॥

ब्रह्मणस्पतेरभवद्यथावशं सत्यो मन्युर्महि कर्मा करिष्यतः ।
यो गा उदाजत्स दिवे वि चाभजन्महीव रीतिः शवसासरत्पृथक् ॥ १४ ॥

ब्रह्मणः । पतेः । अभवत् । यथाऽवशम् । सत्यः । मन्युः । महि । कर्म । करिष्यतः ।
यः । गाः । उत्ऽआजत् । सः । दिवे । वि । च । अभजत् । महीऽइव ।
रीतिः । शवसा । असरत् । पृथक् ॥ १४ ॥

महि महत् कर्म करिष्यतः ब्रह्मणस्पतेः मन्युः मननसाधनो मन्त्रः क्रोधो वा यथावशं यथाकामं सत्यः अवितथः अभवत् । स यथा कामयते तथा करोतीत्यर्थः । यः ब्रह्मणस्पतिः पणिभिरपहृताः गाः उदाजत् उदगमयत् । गुहाया निरगमयदित्यर्थः । सः ब्रह्मणस्पतिः दिवे द्युलोकाय तत्रत्येभ्यो देवेभ्य इत्यर्थः । वि अभजत् च ता गा विभक्ताश्चाकरोत् । स च गोसमूहः महीव रीतिः । महती सुतिरिव[2] ॥ 'रीङ् स्रवणे[3]' ॥ यथा गङ्गादीनां स्रोतो विभक्तं सत् निम्नदेशाभिमुखं प्रसरति तथा शवसा आत्मीयेन बलेन तत्तद्देवगृहं पृथक् विभिन्नम् असरत् अगच्छत ॥

ब्रह्मणस्पते सुयमस्य विश्वहा रायः स्याम रथ्यो३ वयस्वतः ।
वीरेषु वीराँ उप पृङ्धि नस्त्वं यदीशानो ब्रह्मणा वेषि मे हवम् ॥ १५ ॥

ब्रह्मणः । पते । सुऽयमस्य । विश्वहा । रायः । स्याम । रथ्यः । वयस्वतः ।
वीरेषु । वीरान् । उप । पृङ्धि । नः । त्वम् । यत् । ईशानः । ब्रह्मणा । वेषि । मे । हवम् ॥ १५ ॥

हे ब्रह्मणस्पते मन्त्राधिपते सुयमस्य सुष्ठु नियन्तव्यस्य वयस्वतः अन्नयुक्तस्य रायः धनस्य विश्वहा विश्वेषु सर्वेष्वहःसु रथ्यः अधिपतयः स्याम भूयास्म । रथा एषां सन्तीति रथ्यः ॥

---

१. ख-ग-अनु अनुक्रमणेन; ण-अनु अनुक्रमेण । २. क-च-झ-ण१-थ-म-व-स्तुतिरिव । ३. क-च-झ-त-थ-म-व-श्रवणे ।

'छन्दसीवनिपौ०' इति मत्वर्थीय ईकारः ॥ अपि च ᵛनः अस्माकं ᵛवीरेषु वीर्याज्जातेष्वस्मदीयेषु पुत्रेषु ᵛवीरान् पुत्रान् ᵛत्वम् ᵛउप ᵛपृङ्धि संपृक्तान् कुरु उत्पादय ॥ 'पृची संपर्के'। रौधादिकः ॥ वयं पौत्रानपि लभेमहीति यावत्। ᵛईशानः सर्वस्येश्वरस्त्वं ᵛब्रह्मणा । अन्ननामैतत्। हविर्लक्षणे-नान्नेन सह ᵛमे ᵛहवं मदीयं स्तुतिलक्षणमाह्वानं ᵛवेषि कामयसे ॥ 'वी गतिप्रजनकान्त्यशन-खादनेषु'॥ अतो मयोक्तं कुर्वित्यर्थः ॥

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ १६ ॥

ब्रह्मणः । पते । त्वम् । अस्य । यन्ता । सुऽउक्तस्य । बोधि । तनयम् । च । जिन्व ।
विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १६ ॥

हे ᵛब्रह्मणस्पते ᵛयन्ता सर्वस्य जगतो नियन्ता ᵛत्वमस्य ᵛसूक्तस्य इदं सूक्तम् ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥ ᵛबोधि बुध्यस्व । बुद्ध्वा ᵛतनयं पुत्रं ᵛच अस्मभ्यं ᵛजिन्व प्रेरय ॥ जिविः प्रीणनार्थोऽत्र प्रेरणे वर्तते धातूनामनेकार्थत्वात् ॥ ᵛयत् ᵛभद्रं कल्याणं ᵛदेवाः सर्वे ᵛअवन्ति रक्षन्ति ᵛविश्वं सर्वं ᵛतत् भद्रं च जिन्वेति शेषः । वयं च ᵛसुवीराः शोभनैर्वीरैः पुत्रपौत्रादिभिरुपेताः सन्तः ᵛबृहत् प्रौढं स्तोत्रं ᵛविदथे । विदन्ति यष्टव्यतया अस्मिन् देवान् जानन्तीति विदथो यज्ञः । तस्मिन् ᵛवदेम ब्रवाम ॥ ॥ ३ ॥

'इन्धानः' इति पञ्चर्चं तृतीयं सूक्तं गार्त्समदं जागतं ब्राह्मणस्पत्यम् । तथा चानुक्रान्तम्— 'इन्धानः पञ्च जागतं तु' इति । लैङ्गिको विनियोगः ॥

इन्धानो अग्निं वनवद्वनुष्यतः कृतब्रह्मा शूशुवद्रातहव्य इत् ।
जातेन जातमति स प्र सर्सृते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ १ ॥

इन्धानः । अग्निम् । वनवत् । वनुष्यतः । कृतऽब्रह्मा । शूशुवत् । रातऽहव्यः । इत् ।
जातेन । जातम् । अति । सः । प्र । सर्सृते । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ १ ॥

ᵛअग्निम् ᵛइन्धानः ब्रह्मणस्पतेर्यागार्थमग्निं प्रज्वलयन्[1] यजमानः ᵛवनुष्यतः हिंसिष्यतो हिंसां कुर्वतो वा शत्रून् ᵛवनवत् वनुयात् हिंस्यात्। 'वनुष्यतिर्हन्तिकर्मा[2]' इति यास्कः। ᵛइत् इति चार्थे। ᵛकृतब्रह्मा । ब्रह्म स्तोत्रं कृतं येन स तथोक्तः । ᵛरातहव्यः । रातं दत्तं हव्यं हविर्येन । एवंभूतः सन् ᵛशूशुवत् वर्धते। 'टुओश्वि गतिवृद्ध्योः'। अस्माण्ण्यन्तात् लुङि चङि[3] रूपम् ॥ तथा यजमानः ᵛजातेन पुत्रेण ᵛजातं जनितमुत्पादितं[4] स्वस्य पौत्रम् ᵛअति ᵛप्र ᵛसर्सृते अतीत्य भृशं प्रसरति । पौत्रमपि पश्यन् चिरकालं जीवेदित्यर्थः ॥ सर्तेर्यङ्लुगन्तात् व्यत्ययेनात्मनेपदम् ॥ ᵛयंयं यजमानं ᵛब्रह्मणस्पतिः स्तोत्रहविषोः स्वीकरणेन ᵛयुजं सखायं ᵛकृणुते कुरुते ᵛसः समान एव भवतीत्यर्थः ॥

१. ख-म-प्रज्वालयन् । २. क-ञ-ञ१-त-म-'वनुष्यतिर्हिंसाकर्मा' । ३. च-थ-'चङि' नास्ति । ४. त-थ-उत्पादितम् ।

वीरेभिर्वीरान्वनवद्वनुष्यतो गोभी रयिं पप्रथद्बोधति त्मना ।
तोकं च तस्य तनयं च वर्धते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ २ ॥

वीरेभिः । वीरान् । वनवत् । वनुष्यतः । गोभिः । रयिम् । पप्रथत् । बोधति । त्मना ।
तोकम् । च । तस्य । तनयम् । च । वर्धते । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥२॥

स यजमानः वीरेभिः वीरैः आत्मीयैः पुत्रैः वनुष्यतः हिंसतः वीरान् शत्रुपुत्रान् वनवत् वनुयात् हिंस्यात् । अपि च गोभिः सहितं धनं[1] पप्रथत् प्रथयति विस्तारयति ॥ प्रथयतेर्लुङि चङि एतद्रूपम् ॥ तथा त्मना आत्मनैव बोधति सर्वं जानाति । अनन्याधीनज्ञानो भवतीत्यर्थः । किंच तस्य यजमानस्य तोकं पुत्रः तनयम् ॥ विभक्तिव्यत्ययः ॥ तनयस्तत्पुत्रः च वर्धते प्रवृद्धो भवति । यद्वा[2] तोकं तनयं पुत्रं पौत्रं च ब्रह्मणस्पतिर्वर्धयति ॥ वृधिरन्तर्भावितण्यर्थो द्रष्टव्यः । अन्यद्गतम् ॥

सिन्धुर्न क्षोदः शिमीवाँ ऋघायतो वृषेव वध्रीँरभि वष्ट्योजसा ।
अग्नेरिव प्रसितिर्नाह वर्तवे यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ३ ॥

सिन्धुः । न । क्षोदः । शिमीऽवान् । ऋघायतः । वृषाऽइव । वध्रीन् । अभि । वष्टि । ओजसा ।
अग्नेःऽइव । प्रऽसितिः । न । अह । वर्तवे । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ३ ॥

सिन्धुः स्यन्दनशीला नदी क्षोदः न क्षुद्यमानं कूलं यथा भिनत्ति तथा शिमीवान् । शिमीति कर्मनाम । ब्रह्मणस्पतेः परिचरणात्मना कर्मणा युक्तो यजमानः ऋघायतः हिंसतः शत्रून् ओजसा बलेन अभि वष्टि हन्तुमभितः कामयते । 'वश कान्तौ'। इदमपरं निदर्शनम् । वृषेव वध्रीन् । वध्रयो निष्पिष्टमुष्का निर्वीर्या बलीवर्दाः । तान् यथा वृषा सेचनसमर्थः सवीर्यो वृषभोऽभिभवति तद्वच्छत्रूनभिभवतीत्यर्थः। अपि चासौ अग्नेरिव प्रसितिः । प्रसीयते बध्यतेऽनयेति प्रसितिर्ज्वाला ॥ 'षिञ् बन्धने'। करणे क्तिन् ॥ यथा अग्नेर्ज्वाला प्रतिहतप्रसरा एवमपि न वर्तवे वारयितुं निवर्तयितुं वा नैव शक्यते ॥ अहशब्दोऽवधारणे । वृणोतेरन्तर्भावितण्यर्थात् वर्ततेर्वा तुमर्थे तवेन्प्रत्ययः ॥ अन्यद्गतम् ॥

तस्मा अर्षन्ति दिव्या असश्चतः स सत्वभिः प्रथमो गोषु गच्छति ।
अनिभृष्टतविषिर्हन्त्योजसा यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ४ ॥

तस्मै । अर्षन्ति । दिव्याः । असश्चतः । सः । सत्वऽभिः । प्रथमः । गोषु । गच्छति ।
अनिभृष्टऽतविषिः । हन्ति । ओजसा । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ४ ॥

---

१. म–रयिं धनम् । २. झ१-ण-त-थ-न–तथा ।

ᵛतस्मै यजमानाय ᵛदिव्याः दिवि भवा वृष्टिलक्षणा आपः ᵛअसश्चतः असज्यमाना अनिरुद्धाः सत्यः ᵛअर्षन्ति गच्छन्ति प्राप्नुवन्ति ॥ अर्तेर्लेटि रूपम् ॥ तथा ᵛसः यजमानः ᵛसत्वभिः । सत्वानः साधकाः[1] परिचारकास्तैः सहितः ᵛप्रथमः अन्येभ्यो यजमानेभ्यः पूर्वभावी सन् ᵛगोषु ᵛगच्छति । गवादिधनं प्राप्नोतीत्यर्थः । किंच ᵛअनिभृष्टतविषिः । तविषीति बलनाम । अनिभृष्टा परैरबाधिता तविषी बलं यस्य तादृशः[2] सन् ᵛओजसा बलेन ᵛहन्ति शत्रून् ॥

तस्मा इद्विश्वे धुनयन्त सिन्धवोऽच्छिद्रा शर्म दधिरे पुरूणि ।

देवानां सुम्ने सुभगः स एधते यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ५ ॥

तस्मै । इत् । विश्वे । धुनयन्त । सिन्धवः । अच्छिद्रा । शर्म । दधिरे । पुरूणि ।

देवानाम् । सुम्ने । सुऽभगः । सः । एधते । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ५ ॥

ᵛतस्मा ᵛइत् तस्मै एव यजमानाय ᵛविश्वे ᵛसिन्धवः सर्वाः स्यन्दनशीला नद्यः ᵛधुनयन्त चलयन्ति । एतदभीष्टफलसिद्ध्यर्थं प्रवहन्तीत्यर्थः । तथा ᵛअच्छिद्रा अच्छिद्राणि छिद्ररहितानि संततानि ᵛपुरूणि बहूनि ᵛशर्म शर्माणि सुखानि ᵛदधिरे तस्मा एव धार्यन्ते । यद्वा शर्मेति गृहनाम । छिद्ररहितानि बहूनि सदनानि धार्यन्ते । ᵛसुभगः शोभनधनः ᵛदेवानां ᵛसुम्ने देवैः प्रत्ते सुखे वर्तमानः सन् ᵛएधते वर्धते । शिष्टं स्पष्टम् ॥ ॥ ४ ॥

'ऋजुः' इति चतुर्ऋचं चतुर्थं सूक्तं गृत्समदस्यार्षं जागतं ब्राह्मणस्पत्यम् । तथा चानुक्रान्तम्— 'ऋजुश्चतुष्कम्' इति । गतो विनियोगः ॥

ऋजुरिच्छंसो वनवद्वनुष्यतो देवयन्निददेवयन्तमभ्यसत् ।

सुप्रावीरिद्वनवत्पृत्सु दुष्टरं यज्वेदयज्योर्वि भजाति भोजनम् ॥ १ ॥

ऋजुः । इत् । शंसः । वनवत् । वनुष्यतः । देवऽयन् । इत् । अदेवऽयन्तम् । अभि । असत् ।

सुप्रऽअवीः । इत् । वनवत् । पृत्ऽसु । दुस्तरम् ।

यज्वा । इत् । अयज्योः । वि । भजाति । भोजनम् ॥ १ ॥

ᵛऋजुरित् आर्जवयुक्त एव । यद्वा ऋञ्जतिः प्रसाधनकर्मा । स्तोत्राणां प्रसाधक एव ᵛशंसः ब्रह्मणस्पतेः स्तोता ᵛवनुष्यतः हिंसतः शत्रून् ᵛवनवत् वनुयात् हिंस्यात् ॥ वनोतेर्हन्तिकर्मण एतद्रूपम् ॥ तथा ᵛदेवयन्नित् देवं दानादिगुणयुक्तं ब्रह्मणस्पतिमात्मन इच्छन्नेव ᵛअदेवयन्तं तद्विपरीतं पुरुषम् ᵛअभ्यसत् अभिभवेत् ॥ अस्तेर्लेटि एतद्रूपम् ॥ तथा ᵛसुप्रावीरित् ॥ अवतेस्तृप्त्यर्थादौणादिक ईकार-प्रत्ययः ॥ सुष्ठु प्रकर्षेण ब्रह्मणस्पतेस्तर्पयितैव ᵛपृत्सु पृतनासु संग्रामेषु ᵛदुस्तरं तरीतुमशक्यं ᵛवनवत्

१. ण–सोदकाः; ख-ग-थ–सादकाः; म–सादरः । २. झ१–स तादृशः; त-थ–एतादृशः ।

हिंस्यात्। तथा ᵛयज्वेत् ब्रह्मणस्पतिं हविषा इष्टवानेव ᵛअयज्योः अयज्वनः ᵛभोजनं भोगसाधनं ᵛवि ᵛभजाति विशेषेण भजेत्[1] इत्यर्थः ॥

यजस्व वीर प्र विहि मनायतो भद्रं मनः कृणुष्व वृत्रतूर्ये ।
हविष्कृणुष्व सुभगो यथाससि ब्रह्मणस्पतेरव आ वृणीमहे ॥ २ ॥

यजस्व । वीर । प्र । विहि । मनायतः । भद्रम् । मनः । कृणुष्व । वृत्रऽतूर्ये ।
हविः । कृणुष्व । सुऽभगः । यथा । अससि । ब्रह्मणः । पतेः । अवः । आ । वृणीमहे ॥ २ ॥

ऋषिः आत्मीयं पुरुषं शास्ति । हे ᵛवीर विशेषेण स्तुतीनां प्रेरक सखे ᵛयजस्व ब्रह्मणस्पतिं स्तुत्या पूजय । ᵛमनायतः मन इव शीघ्रं प्रवर्तमानान् हिंसकान् । यद्वा अभिमन्यमानान् शत्रून् प्रति ᵛप्र ᵛविहि प्रकर्षेण युद्धार्थं गच्छ ॥ वी गत्यादिषु । छान्दसो ह्रस्वः ॥ ᵛवृत्रतूर्ये वृत्राणामावारकाणां शत्रूणां हिंसाहेतुभूते संग्रामे ᵛभद्रं कल्याणं धाष्टर्योपेतं ᵛमनः ᵛकृणुष्व कुरुष्व। ब्रह्मणस्पतेरनुग्रहात्तवैव जयो भविष्यति । तथा ब्रह्मणस्पतये ᵛहविः चरुपुरोडाशादिकं ᵛकृणुष्व कुरुष्व । ᵛयथा त्वं ᵛसुभगः शोभनधनः ᵛअससि भवेः ॥ अस्तेर्लेटि अडागमः ॥ ब्रह्मणस्पतेर्योगेन त्वं शोभनधनो भविष्यसीति यावत्। अपि च वयं ᵛब्रह्मणस्पतेः ᵛअवः रक्षणम् ᵛआ आभिमुख्येन ᵛवृणीमहे प्रार्थयामहे ॥

स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः ।
देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥ ३ ॥

सः । इत् । जनेन । सः । विशा । सः । जन्मना । सः । पुत्रैः । वाजम् । भरते । धना । नृऽभिः ।
देवानाम् । यः । पितरम् । आऽविवासति । श्रद्धाऽमनाः । हविषा । ब्रह्मणः । पतिम् ॥ ३ ॥

ᵛयः यजमानः ᵛश्रद्धामनाः श्रद्धा मनसि यस्य तादृशः सन् ᵛदेवानां ᵛपितरं पालयितारं ᵛब्रह्मणस्पतिं ᵛहविषा चरुपुरोडाशादिना ᵛआविवासति परिचरति । विवासतिः परिचरणकर्मा । ᵛस ᵛइत् स एव यजमानः ᵛजनेन जातेन सर्वेण लोकेन ᵛवाजम् अन्नं ᵛभरते बिभर्ति संभरति वा । ᵛसः एव ᵛविशा प्रजया आत्मीयेन बन्धुजनेन वाजं भरते। ᵛस एव ᵛपुत्रैः आत्मीयैरपत्यैः वाजं भरते । तथा ᵛनृभिः नेतृभिरन्यैः परिचारकैः ᵛधना धनानि भरते बिभर्ति संपादयति वा । ब्रह्मणस्पतिमिष्टवतो यजमानस्य सर्वतो जना अन्नधनयोः साधका भवन्तीति यावत् ॥

यो अस्मै हव्यैर्घृतवद्भिरविधत्प्र तं प्राचा नयति ब्रह्मणस्पतिः ।
उरुष्यतीमंहसो रक्षती रिषोंऽहोश्चिदस्मा उरुचक्रिरद्भुतः ॥ ४ ॥

यः । अस्मै । हव्यैः । घृतवत्ऽभिः । अविधत् । प्र । तम् । प्राचा । नयति । ब्रह्मणः । पतिः ।
उरुष्यति । ईम् । अंहसः । रक्षति । रिषः । अंहोः । चित् । अस्मै । उरुऽचक्रिः । अद्भुतः ॥४॥

---

१. ख-ग-च-ण-ण१-त-थ-न-व-भजते; झ-म-भजति ।

ᵛयः यजमानः ᵛअस्मै ब्रह्मणस्पतये ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थी ॥ इमं ब्रह्मणस्पतिं ᵛघृतवद्भिः उपस्तरणाभिघारणात्मकेनाज्येनोपेतैः ᵛहव्यैः हविर्भिः ᵛअविधत् परिचरति ॥ 'विध विधाने'। तौदादिकः। अयं परिचरणकर्मसु पठितः ॥ ᵛतं यजमानं ᵛब्रह्मणस्पतिः ᵛप्राचा प्राचीनेन ऋजुना मार्गेण ᵛप्र ᵛनयति प्रकृष्टं फलं प्रापयति। अपि च ᵛईम् एनम् ᵛअंहसः पापात् ᵛउरुष्यति रक्षति। 'उरुष्यती रक्षाकर्मा' इति यास्कः। तथा ᵛरिषः हिंसकादेनं ᵛरक्षति। ᵛअंहोश्चित् अवृत्तेर्दारिद्र्यात्। यद्वा आगत्य हन्तुरपि रक्षति । अपि च ᵛअस्मै यजमानाय ᵛअद्भुतः। महन्नामैतत्। आचार्यभूतो महान् ब्रह्मणस्पतिः ᵛउरुचक्रिः उरोः विस्तीर्णस्य उपकारस्य कर्ता भवति ॥ ॥ ५ ॥

'इमा गिरः' इति सप्तदशर्चं पञ्चमं सूक्तं गृत्समदपुत्रस्य कूर्मस्य आर्षं गृत्समदस्यैव वा त्रैष्टुभमादित्यदेवताकम्। तथा चानुक्रान्तम्–'इमा गिरस्त्र्यूना कूर्मो गार्त्समदो हि वादित्यम्' इति। सूक्तविनियोगो लैङ्गिकः। आदित्यदेवताके पशौ पुराडाशस्य 'इमा गिरः' इत्येषा[1] अनुवाक्या। 'अग्नीषोमौ' इति खण्डे सूत्रितम्–'इमा गिर आदित्येभ्यो घृतस्नूरुत आदित्यास उरवो गभीराः' (आश्व. श्रौ. ३. ८) इति ॥

**इ॒मा गिर॑ आदि॒त्येभ्यो॑ घृ॒तस्नू॑ः स॒नाद्राज॑भ्यो जु॒ह्वा॑ जुहोमि।**
**शृ॒णोतु॑ मि॒त्रो अ॑र्य॒मा भगो॑ नस्तुविजा॒तो वरु॑णो॒ दक्षो॒ अंश॑ः ॥ १ ॥**

इ॒माः। गिर॑ः। आ॒दि॒त्येभ्य॑ः। घृ॒तऽस्नू॑ः। स॒नात्। राज॑ऽभ्यः। जु॒ह्वा॑। जु॒हो॒मि॒।
शृ॒णोतु॑। मि॒त्रः। अ॒र्य॒मा। भग॑ः। न॒ः। तु॒वि॒ऽजा॒तः। वरु॑णः। दक्ष॑ः। अंश॑ः ॥ १ ॥

ᵛआदित्येभ्यः अदितेः पुत्रेभ्यः ᵛराजभ्यः राजमानेभ्य ईश्वरेभ्यो वा मित्रादिभ्यः ᵛघृतस्नूः घृतप्रस्राविणीर्घृतं क्षरन्तीः ᵛइमा ᵛगिरः स्तुतिलक्षणा वाचः ᵛसनात् सर्वदा ᵛजुह्वा। वाङ्नामैतत्। वागिन्द्रियेण ᵛजुहोमि प्रयच्छामि[2] करोमीति यावत्। यद्वा जुहूस्थानीयेन[3] घृतं क्षरन्ति वाग्रूपाणि हवींषि जुहोमि आदित्यानुद्दिश्य त्यजामि। मन्त्राणां पयोघृतादिक्षरणहेतुत्वं च 'यदृचोऽधीते पयसः कूल्या अस्य' (तै. आ. २. १०) इत्यादिना तैत्तिरीये स्पष्टमाम्नातम्। ᵛनः अस्मदीयास्ता गिरो मित्रादयः प्रत्येकं ᵛशृणोतु। ते च तैत्तिरीये 'अष्टौ पुत्रासो अदितेः' इत्युपक्रम्य स्पष्टमनुक्रान्ताः– 'मित्रश्च वरुणश्च धाता चार्यमा च अंशुश्च भगश्च इन्द्रश्च विवस्वांश्चेत्येते' (तै. आ. १. १३. ३) इति। ᵛमित्रः प्रमीतेस्त्रायकः। यद्वा सर्वेषां स्निग्धः। अरीन् यच्छति नियच्छतीति ᵛअर्यमा। ᵛभगः भजनीयो देवः। तुवीति बहुनाम। बहुषु देशेषु अनुग्रहार्थं प्रादुर्भूतः। वरुणविशेषणमेतत्। पापस्य निवारणात् ᵛवरुणः। ᵛदक्षः[4] समर्थः[4]। एतच्च अंशस्य[5] विशेषणम्। एते प्रत्येकं शृण्वन्तु ॥

पूर्वोक्त एव पशौ 'इमं स्तोमम्' इत्येषा वपाया[6] याज्या[6]। सूत्रितं च–'इमं स्तोमं सक्रतवो मे अद्य तिस्रो भूमीर्धारयन् त्रीरुँत द्यून्' (आश्व. श्रौ. ३. ८) इति ॥

---

१. ण-त–इत्येका। २. ख-ग-च-ञ१-ण-ण१-थ-न-व–'प्रयच्छामि' नास्ति। ३. ख-ग-च-ण१–न–जुह्वास्थानीयेन। ४. ण१-त-थ-म–'दक्षः समर्थः' नास्ति। ५. क-ञ-म–अंशोः। ६. ञ१-त-थ-न-म-व–वपाया यागस्य याज्या; ण– वपायागस्य याज्या।

इमं स्तोमं सक्रतवो मे अद्य मित्रो अर्यमा वरुणो जुषन्त ।
आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः ॥ २ ॥

इमम् । स्तोमम् । सऽक्रतवः । मे । अद्य । मित्रः । अर्यमा । वरुणः । जुषन्त ॥
आदित्यासः । शुचयः । धारऽपूताः । अवृजिनाः । अनवद्याः । अरिष्टाः ॥ २ ॥

ᵛइमं ᵛमे[1] अस्मदीयं ᵛस्तोमं स्तोत्रं ᵛसक्रतवः समानकर्माणः समानप्रज्ञा वा मित्रादयः ᵛअद्य इदानीं ᵛजुषन्त जुषन्तां सेवन्ताम् । कीदृशास्ते । ᵛआदित्यासः अदितेः पुत्राः ᵛशुचयः दीप्यमानाः ᵛधारपूताः उदकधाराभिरिव पूताः । निर्मला इत्यर्थः । ᵛअवृजिनाः । 'वृजी वर्जने'। अवर्जितारः सर्वानुग्राहका इत्यर्थः । ᵛअनवद्याः अवद्येन गर्ह्येण पापेन रहिताः ᵛअरिष्टाः केनाप्यहिंसिताः ॥

तस्मिन्नेव पशौ 'त आदित्यासः' इति हविषोऽनुवाक्या । सूत्रं तु पूर्वमेवोदाहृतम् ॥

त आदित्यास उरवो गभीरा अदब्धासो दिप्सन्तो भूर्यक्षाः ।
अन्तः पश्यन्ति वृजिनोत साधु सर्वं राजभ्यः परमा चिदन्ति ॥ ३ ॥

ते । आदित्यासः । उरवः । गभीराः । अदब्धासः । दिप्सन्तः । भूरिऽअक्षाः ।
अन्तरिति । पश्यन्ति । वृजिना । उत । साधु । सर्वम् । राजऽभ्यः । परमा । चित् । अन्ति ॥३॥

ᵛते ᵛआदित्यासः अदितेः पुत्राः ᵛउरवः महान्तः ᵛगभीराः गाम्भीर्योपेताः ᵛअदब्धासः शत्रुभिरहिंसिताः सन्तः ᵛदिप्सन्तः शत्रून् दम्भितुं[2] हिंसितुमिच्छन्तः ॥ 'दम्भु दम्भे'। अस्मात् इच्छासनि 'सनीवन्तर्ध°' इति इडभावपक्षे 'दम्भ इच्च' इति इकारः । 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्' (पा. सू. १. २. १०. १) इति सनः कित्त्वे अनुनासिकलोपः ॥ तथा ᵛभूर्यक्षाः भूरीणि बहूनि अक्षीणि चक्षूंषि येषां ते तथोक्ताः बहुतेजसो वा ॥ 'बहुव्रीहौ सक्थ्यक्ष्णोः°' इति षच् समासान्तः ॥ एवंभूता आदित्याः ᵛअन्तः मध्ये प्राणिनां हृदि प्रेरकतया वर्तमानाः सन्तः ᵛवृजिना वृजिनानि पापानि ᵛउत अपि च ᵛसाधु साधूनि पुण्यानि च प्राणिभिः कृतानि ᵛपश्यन्ति जानन्ति । ᵛपरमा ᵛचित् परमाणि दूरदेशावस्थितान्यपि ᵛसर्वं सर्वाणि दृश्यमानानि ᵛराजभ्यः राज्ञामीश्वराणामादित्यानाम् ᵛअन्ति अन्तिके समीपे वर्तते इति शेषः ॥ 'कादिलोपो बहुलम्' इत्यन्तिकशब्दस्य कादिलोपः ॥

साग्निचित्ये क्रतौ दीक्षणीयायामादित्ययागस्य 'धारयन्तः' इत्यादिके द्वे याज्यानुवाक्ये । अत एव भुवद्वद्भुवनपतिविशेषणविशिष्टादित्ययागेऽपि । तथा च 'दीक्षणीयायाम्' इति खण्डे सूत्रितं—'धारयन्त आदित्यासो जगत्स्था इति द्वे[3] एते एव भुवद्वद्भ्यो भुवनपतिभ्यो वा' (आश्व. श्रौ. ४. २) इति ।

---

१. ण-त-थ-म-'मे' नास्ति । २. ग-ण१-दभितुम् । ३. झ१-ण त-थ-न-म-द्वे इति ।

धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः ।
दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि ॥ ४ ॥

धारयन्तः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य । भुवनस्य । गोपाः ।
दीर्घऽधियः । रक्षमाणाः । असुर्यम् । ऋतऽवानः । चयमानाः । ऋणानि ॥ ४ ॥

√जगत् जङ्गमं √स्थाः स्थावरं च ॥ तिष्ठतेः कर्तरि असुन् ॥ एतदुभयविधं भूतजातं √धारयन्तः अवस्थापयन्तः √देवाः दानादिगुणयुक्ताः √विश्वस्य √भुवनस्य सर्वस्य लोकस्य √गोपाः गोपयितारो रक्षकाः √दीर्घाधियः दीर्घाणि धियः कर्माणि ज्ञानानि वा येषां तादृशाः ॥ 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः ॥ √असुर्यम् । असवः प्राणाः । तेन च तद्धेतुभूता आपो लक्ष्यन्ते । अपां तद्धेतुत्वं च छान्दोग्ये स्पष्टमाम्नातम्—'आपोमयः प्राणः' ( छा. उ. ६. ५. ४ ) इति । असुमुदकं ददातीत्यसुरो मेघः । तत्र भवं मेघान्तर्वर्तमानमुदकं √रक्षमाणाः । तत्तत्काले वृष्ट्युत्पादनाय रक्षन्तः ॥ असुरशब्दात् 'भवे छन्दसि' इति यत् ॥ √ऋतावानः सत्यवन्तो यज्ञवन्तो वा ॥ 'छन्दसीवनिपौ' इति मत्वर्थीयो वनिप् । पूर्ववद्दीर्घः ॥ √ऋणानि स्तोतृभिः अन्येभ्यः प्रदेयानि √चयमानाः अपगमयन्तः ॥ 'चय गतौ' । भौवादिकोऽनुदात्तेत् ॥ एवंगुणविशिष्टा महानुभावा अस्मदधीना भवन्त्विति शेषः ॥

विद्यामादित्या अवसो वो अस्य यदर्यमन्भय आ चिन्मयोभु ।
युष्माकं मित्रावरुणा प्रणीतौ परि श्वभ्रेव दुरितानि वृज्याम् ॥ ५ ॥

विद्याम् । आदित्याः । अवसः । वः । अस्य । यत् । अर्यमन् । भये । आ । चित् । मयःऽभु ।
युष्माकम् । मित्रावरुणा । प्रऽनीतौ । परि । श्वभ्राऽइव । दुःऽइतानि । वृज्याम् ॥ ५ ॥

हे √आदित्याः अदितेः पुत्राः √वः युष्माकम् √अस्य √अवसः ॥ कर्मणि षष्ठी ॥ इदं रक्षणं √विद्यां लभेय । √भये राक्षसादिभ्य आगते सति √यत् युष्मदीयं रक्षणम्[1] । चिच्छब्दश्चार्थे । √मयोभु मयसः सुखस्य भावयितृ च तदिदं लभेयेत्यन्वयः । हे √अर्यमन् हे मित्रावरुणौ √युष्माकं √प्रणीतौ अस्मद्विषये प्रकृष्टे नयने सति √श्वभ्रेव श्वभ्राणीव स्थातुमयोग्यानि गर्तवन्ति स्थलानीव √दुरितानि पापानि √परि √वृज्यां परित्यजेयम् ॥ 'वृजी वर्जने' । 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥ ॥६॥

सुगो हि वो अर्यमन्मित्र पन्था अनृक्षरो वरुण साधुरस्ति ।
तेनादित्या अधि वोचता नो यच्छता नो दुष्परिहन्तु शर्म ॥ ६ ॥

सुऽगः । हि । वः । अर्यमन् । मित्र । पन्थाः । अनृक्षरः । वरुण । साधुः । अस्ति ।
तेन । आदित्याः । अधि । वोचत । नः । यच्छत । नः । दुःऽपरिहन्तु । शर्म ॥ ६ ॥

---

१. म–रक्षणं विद्याम् ।

हे ᵛअर्यमन् ᵛमित्र ᵛवरुण ᵛवः युष्माकं ᵛसुगः सुखेन गन्तव्यः ᵛअनृक्षरः । ' ऋक्षरः कण्टक ऋच्छतेः ' इति । तद्रहितः ᵛसाधुः साधकः शोभनो वा । एवंगुणविशिष्टः ᵛपन्थाः मार्गः ᵛअस्ति विद्यते खलु । अतः ᵛतेन पथा अस्मान् शोभनं नयतेति शेषः । हे ᵛआदित्याः ᵛनः अस्माकम् ᵛअधि ᵛवोचत अधिवचनं पक्षपातेन वचनं कुरुत । अपि च ᵛनः अस्मभ्यं ᵛदुष्परिहन्तु परिहन्तुं विनाशयितुमशक्यं ᵛशर्म सुखं ᵛयच्छत दत्त ॥ ' दाण् दाने ' । शपि ' पाघ्रा° ' इत्यादिना यच्छादेशः ॥

पिपर्तु नो अदिती राजपुत्राति द्वेषांस्यर्यमा सुगेभिः ।
बृहन्मित्रस्य वरुणस्य शर्मोप स्याम पुरुवीरा अरिष्टाः ॥ ७ ॥

पिपर्तु । नः । अदितिः । राजऽपुत्रा । अति । द्वेषांसि । अर्यमा । सुऽगेभिः ।
बृहत् । मित्रस्य । वरुणस्य । शर्म । उप । स्याम । पुरुऽवीराः । अरिष्टाः ॥ ७ ॥

ᵛराजपुत्रा राजानो राजमाना मित्रादयः पुत्रा यस्यास्तादृशी ᵛअदितिः अदीना[1] अखण्डनीया वा देवी ᵛनः अस्मान् ᵛद्वेषांसि द्वेष्टॄणि रक्षांसि ᵛअति ᵛपिपर्तु अतिपारयतु । अतिक्रम्य तद्रहितं देशं प्रापयत्वित्यर्थः । ᵛअर्यमा च ᵛसुगेभिः सुष्ठु गन्तव्यैर्मार्गैरस्मान् पारयतु । अपि च वयं ᵛपुरुवीराः बहुभिर्वीरैः पुत्रादिभिरुपेताः ᵛअरिष्टाः केनाप्यहिंसिताश्च सन्तः ᵛमित्रस्य ᵛवरुणस्य च ᵛबृहत् परिवृढं ᵛशर्म सुखम् ᵛउप ᵛस्याम उपगता भवेम ॥

पूर्वोक्ते पशौ ' तिस्रो भूमीः ' इति पुरोडाशस्य याज्या । सूत्रं पूर्वमेवोदाहृतम् ॥

तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्त्रीणि व्रता विदथे अन्तरेषाम् ।
ऋतेनादित्या महि वो महित्वं तदर्यमन्वरुण मित्र चारु ॥ ८ ॥

तिस्रः । भूमीः । धारयन् । त्रीन् । उत । द्यून् । त्रीणि । व्रता । विदथे । अन्तः । एषाम् ।
ऋतेन । आदित्याः । महि । वः । महिऽत्वम् । तत् । अर्यमन् । वरुण । मित्र । चारु ॥ ८ ॥

ᵛतिस्रो ᵛभूमीः । अत्र भूमिशब्दो लोकत्रये वर्तते । ' यो द्वितीयस्यां तृतीयस्यां पृथिव्याम् ' इत्यत्र यथा पृथिवीशब्दः । भूम्यन्तरिक्षस्वर्गाख्यान् त्रीन् लोकान् आदित्याः ᵛधारयन् वृष्टिप्रदानादिना धारयन्ति । ᵛउत अपि च ᵛद्यून् दीप्तान् तत उपरितनान् महरादिकानपि ᵛत्रीन् लोकान् धारयन्ति । यद्वा दीप्तान् अग्निं वायुं सूर्यं च धारयन्ति । अपि च ᵛएषाम् आदित्यानां ᵛविदथे यज्ञे ᵛअन्तः मध्ये त्रीणि ᵛव्रता सवनत्रयनिष्पाद्यानि ᵛत्रीणि कर्माणि सन्ति । यद्वा एषां लोकानामन्तर्मध्ये विदथे यज्ञे निमित्तभूते सति एषामादित्यानां त्रीणि कर्माणि रसादानधारणविसर्जनलक्षणानि[2] सन्ति । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । हे ᵛआदित्याः ᵛऋतेन सत्येन यज्ञेन वा ᵛमहि महत् प्रभूतं ᵛवः युष्माकं ᵛमहित्वं महत्त्वं यन्महाभाग्यं हे ᵛअर्यमन् ᵛवरुण ᵛमित्र ᵛतत् महाभाग्यं ᵛचारु शोभनम् । सर्वोत्कृष्टमित्यर्थः ॥

---

१. ख-अदीना देवमाता । २. म-रसानां धारण° ।

त्री रो॑च॒ना दि॒व्या धा॑रयन्त हिर॒ण्ययाः॒ शुच॑यो॒ धार॑पूताः ।
अस्व॑प्नजो अनिमि॒षा अद॑ब्धा उरु॒शंसा॑ ऋ॒जवे॒ मर्त्या॑य ॥ ९ ॥

त्री । रो॒च॒ना । दि॒व्या । धा॒र॒य॒न्त॒ । हि॒र॒ण्यया॑ः । शुच॑यः । धार॑ऽपूताः ।
अस्व॑प्नऽजः । अ॒नि॒ऽमि॒षाः । अद॑ब्धाः । उ॒रु॒ऽशंसा॑ः । ऋ॒जवे॑ । मर्त्या॑य ॥ ९ ॥

ᵛत्री ᵛरोचना त्रीणि रोचनानि रोचमानाग्न्यादीनि तेजांसि ᵛदिव्या दिव्यानि दिवि भवानि ᵛधारयन्त आदित्या अवास्थापयन् । किमर्थम् । ᵛऋजवे ऋजीकाय स्तोत्राणां ᵛमर्त्याय मनुष्याय भोगसिद्ध्यर्थमिति यावत् । कीदृशा आदित्याः । ᵛहिरण्ययाः हिरण्मयाः[1] हिरण्यालंकृतसर्वाङ्गाः । यद्वा हितरमणीयवेषाः । ᵛशुचयः दीप्यमानाः ᵛधारपूताः उदकधारया क्षालिता इव निर्मलाः । ᵛअस्वप्नजः असंजातस्वप्नाः ॥ 'सुपां सुलुक्°' इति जसः सुः ॥ अपर आह । अस्वप्नजः अस्वपन्तो विगतनिद्राः ॥ 'स्वपितृषोर्नजिङ्' इति नजिङ्प्रत्यय इति । तदेतत् पदकारस्यानभिमतम् ॥ ᵛअनिमिषाः निमेषरहिताः । ᵛअदब्धाः असुरादिभिरहिंसिताः ᵛउरुशंसाः उरुभिर्बहुभिः शंसनीयाः स्तोतव्याः । एवंगुणविशिष्टा अधारयन्तेत्यन्वयः ॥

त्वं विश्वे॑षां वरुणासि॒ राजा॒ ये च॑ दे॒वा अ॑सुर॒ ये च॒ मर्ताः॑ ।
श॒तं नो॑ रास्व श॒रदो॑ वि॒चक्षे॒ऽश्यामायूं॑षि॒ सुधि॑ताति॒ पूर्वा॑ ॥ १० ॥

त्वम् । विश्वे॑षाम् । व॒रु॒ण॒ । अ॒सि॒ । राजा॑ । ये । च॒ । दे॒वाः । अ॒सु॒र॒ । ये । च॒ । मर्ताः॑ ।
श॒तम् । नः॒ । रा॒स्व॒ । श॒रदः॑ । वि॒ऽचक्षे॑ । अ॒श्याम॑ । आयूं॑षि । सु॒ऽधि॑तानि । पूर्वा॑ ॥ १० ॥

हे ᵛअसुर शत्रूणां क्षेपक ᵛवरुण ᵛत्वं ᵛविश्वेषां सर्वेषां ᵛराजा ᵛअसि । केषाम् । ᵛये ᵛच ᵛदेवाः देवजनाः ᵛये ᵛच ᵛमर्ताः मरणधर्माणो मनुष्याः तेषामित्यर्थः । अतस्त्वं ᵛनः अस्मभ्यं ᵛशतं ᵛशरदः शतसंख्याकान् संवत्सरान् ᵛविचक्षे विशेषेण दर्शनाय ᵛरास्व प्रयच्छ ॥ 'रा दाने'। व्यत्ययेनात्मनेपदम् ॥ वयं च ᵛपूर्वा पूर्वैर्देवैः ᵛसुधितानि सुष्ठु हितानि शतसंवत्सरलक्षणानि ᵛआयूंषि ᵛअश्याम व्याप्नुयाम ॥ 'सुधितवसुधितनेमधितधिष्वधिषीय च' इति निपात्यते । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । पूर्वा । 'सुपां सुलुक्°' इति तृतीयाया डादेशः ॥ ॥ ७ ॥

आदित्यदेवताके पशौ 'न दक्षिणा' इत्येषा हविषो याज्या । 'तिस्रो भूमीर्धारयन्त्रीँरुत द्यून् न दक्षिणा वि चिकिते न सव्या' ( आश्व. श्रौ. ३. ८ ) इति ॥

न द॑क्षि॒णा वि चि॑कि॒ते न स॒व्या न प्रा॒चीन॑मादित्या॒ नोत प॒श्चा ।
पा॒क्या॑ चिद्वसवो धी॒र्या॑ चिद्युष्मानी॑तो॒ अभ॑यं॒ ज्योति॑रश्याम् ॥ ११ ॥

न । द॒क्षि॒णा । वि । चि॒कि॒ते॒ । न । स॒व्या । न । प्रा॒चीन॑म् । आ॒दि॒त्याः॒ । न । उ॒त । प॒श्चा ।
पा॒क्या॑ । चि॒त् । व॒स॒वः॒ । धी॒र्या॑ । चि॒त् । यु॒ष्माऽनी॑तः । अभ॑यम् । ज्योतिः॑ । अ॒श्या॒म् ॥ ११ ॥

---

१. क-ङ-ङ१-व-हिरण्यमयाः; म-'हिरण्मयाः' नास्ति ।

हे ˅आदित्याः ˅दक्षिणा दक्षिणो भागः ˅न ˅वि ˅चिकिते मया म विज्ञायते[1]। ˅सव्या सव्यो वामभागोऽपि ˅न ज्ञायते॥ उभयत्र ‘ सुपां सुलुक्° ’ इति सोः आजादेशः ॥ तथा ˅प्राचीनं पुरस्तादपि ˅न ज्ञायते ॥ ‘ विभाषाञ्चेरदिक्स्त्रियाम् ’ इति स्वार्थे खः॥ ˅उत अपि च ˅पश्चा पश्चात् पृष्ठभागोऽपि ˅न ज्ञायते। नैशेन तमसा आवृतत्वात् आन्तरादज्ञानाद्वा ॥ ‘ पश्च पश्चा च छन्दसि ’ (पा. सू. ५. ३. ३३ ) इति निपात्यते ॥ किं बहुना । ˅पाक्या ˅चित् पाक्यः पक्तव्यः अपरिपक्वज्ञानोऽपि ॥ ‘ डुपचष् पाके ’। ‘ ऋहलोर्ण्यत् ’। तित्स्वरितः ॥ ˅धीर्या ˅चित् धीरे नेतव्यत्वेन भवो धीर्यः कातरः ॥ ‘ भवे छन्दसि ’ इति यत् ॥ कातरोऽपि ॥ उभयत्र ‘ सुपां सुलुक्° ’ इत्याकारः ॥ हे ˅वसवः वासयितार आदित्याः ˅युष्मानीतः युष्माभिर्नीतः शोभनेन मार्गेण प्रापितः सन् ˅अभयं भयरहितं ˅ज्योतिः सौरं तेजः आन्तरं वा ज्ञानात्मकम् ˅अश्यां प्राप्नुयाम्॥

**यो राजभ्य ऋतनिभ्यो ददाश यं वर्धयन्ति पुष्टयश्च नित्याः ।**
**स रेवान्याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः ॥ १२ ॥**

यः । राजऽभ्यः । ऋतनिऽभ्यः ददाश । यम् । वर्धयन्ति । पुष्टयः । च । नित्याः ।
सः । रेवान् । याति । प्रथमः । रथेन । वसुऽदावा । विदथेषु । प्रऽशस्तः ॥ १२ ॥

˅यः यजमानः ˅राजभ्यः राजमानेभ्यः ˅ऋतनिभ्यः ऋतस्य यज्ञस्य[2] सत्यस्य वा नेतृभ्य आदित्येभ्यः ˅ददाश चरुपुरोडाशादिकं ददाति । ˅यं यजमानं ˅पुष्टयः पोषकाः ˅नित्याः शाश्वता आदित्याः च ˅वर्धयन्ति । ˅सः यजमानः ˅रेवान् धनवान् ˅प्रथमः प्रथितः प्रख्यातः ˅वसुदावा वसूनां धनानां दाता सन् ˅प्रशस्तः सर्वैः प्रशस्यमानः ˅विदथेषु वेद्येषु लब्धव्येषु गृहेषु ˅रथेन वाहनेन ˅याति गच्छति ॥

**शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः ।**
**नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥ १३ ॥**

शुचिः । अपः । सुऽयवसाः । अदब्धः । उप । क्षेति । वृद्धऽवयाः । सुऽवीरः ।
नकिः । तम् । घ्नन्ति । अन्तितः । न । दूरात् । यः । आदित्यानाम् । भवति । प्रऽनीतौ ॥ १३ ॥

स यजमानः ˅शुचिः दीप्यमानः शुद्धो वा ˅अदब्धः सपत्नैरबाधितः ˅वृद्धवयाः प्रभूतान्नः ˅सुवीरः शोभनपुत्रश्च सन् ˅सूयवसाः शोभनसस्यानि ˅अपः वृष्टिलक्षणान्युदकानि ˅उप ˅क्षेति उपनिवसति। सर्वदा सुसस्यानामपां समीपे निवसतीत्यर्थः। तथा ˅नकिः न च ˅तं[3] ˅घ्नन्ति हिंसन्ति ˅अन्तितो ˅न अन्तिकात् समीपदेशाच्च ˅दूरात् विप्रकृष्टाच्च देशादागता बाधकाः ॥ अन्तिकस्य तसि[4] ‘ कादिलोपः°[4] ’ इति लोपः ॥ ˅यः यजमानः ˅आदित्यानाम् अदितेः पुत्राणां मित्रादीनां ˅प्रणीतौ प्रकृष्टे नयने प्रापणे ˅भवति वर्तते स इति पूर्वत्र संबन्धः ॥

---

१. झ-म–विज्ञायते । २. क-झ-झ१-ण-थ-न-म-व–‘ यज्ञस्य ’ नास्ति । ३. ण-त-थ-म–यम् ।
४. ख-ग-त-थ-म–तसिलादिलोपः ।

अदि॑ते॒ मित्र॒ वरु॑णो॒त मृ॒ळ यद्वो॑ व॒यं च॑कृ॒मा कच्चि॒दागः॑ ।
उ॒र्व॑श्या॒मभ॑यं॒ ज्योति॑रिन्द्र॒ मा नो॑ दी॒र्घा अ॒भि न॑श॒न्तमि॑स्राः ॥ १४ ॥

अदि॑ते । मित्र॑ । वरु॑ण । उ॒त । मृ॒ळ । यत् । वः॒ । व॒यम् । च॒कृ॒म । कत् । चि॒त् । आगः॑ ।
उ॒रु । अ॒श्या॒म् । अभ॑यम् । ज्योतिः॑ । इ॒न्द्र॒ ।
मा । नः॒ । दी॒र्घाः । अ॒भि । न॒श॒न् । तमि॑स्राः ॥ १४ ॥

Vउत अपि च हे Vअदिते Vमित्र Vवरुण ॥ 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वपूर्वस्य आमन्त्रितस्य अविद्यमानवद्भावात् सर्वेषां षाष्ठिकम् 'आमन्त्रितस्य' इत्याद्युदात्तत्वम् ॥ यूयं प्रत्येकं Vमृळ अस्माकमुपरि दयां कुरु । रक्षेत्यर्थः । Vयत् यद्यपि Vवयं Vवः युष्माकं Vकच्चित् किंचित् Vआगः अपराधं Vचकृम अकर्म । तथापि मृळेत्यर्थः । हे Vइन्द्र परमैश्वर्योपेत आदित्य Vउरु विस्तीर्णम् Vअभयं भयरहितं Vज्योतिः त्वदीयं प्रकाशं ज्ञानात्मकं वा Vअश्याम् अहं प्राप्नुयाम् । Vदीर्घाः विस्तृताः Vतमिस्राः तमसा युक्ता निशाः ॥ 'ज्योत्स्नातमिस्राशृङ्गिणा°' (पा. सू. ५. २. ११४) इति निपात्यते ॥ ताः Vनः अस्मान् Vमा Vअभि Vनशन् मा आभिमुख्येन प्राप्नुवन्तु[1] ॥

उ॒भे अ॑स्मै पीपयतः स॒मी॒ची दि॒वो वृ॒ष्टिं सु॒भगो॒ नाम॒ पुष्य॑न् ।
उ॒भा क्षया॑वा॒जय॑न्याति पृ॒त्सूभाव॒र्धौ॑ भवतः सा॒धू अ॑स्मै ॥ १५ ॥

उ॒भे इति॑ । अ॒स्मै॒ । पी॒प॒य॒तः॒ । स॒मी॒ची इति॑ स॒म्ऽई॒ची ।
दि॒वः । वृ॒ष्टिम् । सु॒ऽभगः॑ । नाम॑ । पुष्य॑न् ।
उ॒भा । क्षयौ॑ । आ॒ऽजय॑न् । या॒ति॒ । पृ॒त्ऽसु ।
उ॒भौ । अर्धौ॑ । भ॒व॒तः॒ । सा॒धू इति॑ । अ॒स्मै॒ ॥ १५ ॥

'य आदित्यानां भवति प्रणीतौ' इति व्यवहितोऽप्यत्र इदंशब्देन परामृश्यते । Vअस्मै यजमानाय Vसमीची संगच्छमाने Vउभे द्यावापृथिव्यौ Vपीपयतः प्याययतः कामान् वर्धयतः ॥ 'प्यायी वृद्धौ'। अस्माण्ण्यन्तात् छान्दसो लुङ् । व्यत्ययेन तसस्तामादेशाभावो धातोः पीभावश्च ॥ स च Vसुभगः शोभनधनः Vदिवः द्युलोकादागतां Vवृष्टिं Vपुष्यन् वर्धयन् भवति । Vनाम इति प्रसिद्धिर्द्योत्यते । किंच Vपृत्सु पृतनासु संग्रामेषु Vआजयन् शत्रूनाभिमुख्येनाभिभवन् Vउभा Vक्षयौ उभौ निवासौ ॥ क्षियन्ति निवसन्त्यस्मिन्निति क्षयो निवासस्थानम् । 'पुंसि संज्ञायां घः प्रायेण' इति अधिकरणे घः । 'क्षयो निवासे' इत्याद्युदात्तत्वम् ॥ तौ परैरनाक्रान्तं स्वकीयं निवासस्थानम् आत्मनापहृतं परकीयं निवासस्थानं च Vयाति गच्छति । तथा Vअस्मै यजमानाय Vउभावर्धौ जगतो भागौ चराचरात्मकौ मर्त्यामर्त्यात्मकौ वा Vसाधू साधकौ Vभवतः ॥

---

१. क-ङ-म-व्याप्नुवन्तु ।

या वो माया अभिद्रुहे यजत्राः पाशा आदित्या रिपवे विचृत्ताः ।
अश्वीव ताँ अति येषं रथेनारिष्टा उरावा शर्मन्त्स्याम ॥ १६ ॥

याः । वः । मायाः । अभिऽद्रुहे । यजत्राः । पाशाः । आदित्याः । रिपवे । विऽचृत्ताः ।
अश्वीऽइव । तान् । अति । येषम् । रथेन । अरिष्टाः । उरौ । आ । शर्मन् । स्याम ॥ १६ ॥

हे ^v^यजत्राः यष्टव्याः ^v^आदित्याः ^v^वः युष्माकं ^v^याः ^v^मायाः ^v^अभिद्रुहे अभितो[1] द्रोहं[1] कुर्वते राक्षसादये निर्मिताः ये च ^v^पाशाः ^v^रिपवे शत्रवे ^v^विचृत्ताः ॥ 'चृती हिंसाग्रन्थनयोः' ॥ प्रसारिता इत्यर्थः । ^v^तान् पाशान् मायाश्च ^v^रथेन ^v^अति ^v^येषम् अतीत्य प्रयतेयम् । अतितरेयमित्यर्थः । तत्र दृष्टान्तः । ^v^अश्वीव । यथा शोभनाश्वः कश्चित् पुरुषः[2] दुस्तरान्मार्गान् शीघ्रमतिक्रामति तद्वत् ॥ 'येषृ प्रयत्ने' । भौवादिकोऽनुदात्तेत् । छान्दसो लङ् । व्यत्ययेन परस्मैपदम् ॥ तथा वयम् ^v^अरिष्टाः शत्रुभिः अहिंसिताः सन्तः ^v^उरौ विस्तीर्णे ^v^शर्मन् । शर्मेति गृहनाम । त्वया दत्ते सुखे गृहे वा ^v^आ समन्तात् ^v^स्याम वर्तमाना भवेम ॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ १७ ॥

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १७ ॥

हे ^v^वरुण ^v^मघोनः धनवतः ^v^प्रियस्य अनुकूलस्य ^v^भूरिदाव्नः भूरेर्बहुलस्य दातुराढ्यस्य ^v^अहं ^v^मा ^v^आ ^v^विदं मा आवेदयानि । आवेदनं विज्ञापनं मा करवाणि । किं तदनावेद्यम् । ^v^आपेः ज्ञातेः ^v^शूनं शून्यं दारिद्र्यम् ॥ वर्णलोपश्छान्दसः ॥ यद्वा शूनं गतं प्राप्तं दारिद्र्यम् ॥ 'टुओश्वि गतिवृद्ध्योः' । 'श्वीदितो निष्ठायाम्' इति इट्प्रतिषेधः । यजादित्वात् संप्रसारणम् । 'ओदितश्च' इति नकारः । वृषादित्वादाद्युदात्तत्वम् ॥ एतदुक्तं भवति । अस्मदीयाः पुत्रादयः क्षुधिता इति प्रभुप्रभुसमीपे[3] अभिधाय याचमानो मा भूवमिति । हे ^v^राजन् ^v^सुयमात् । सुष्ठु नियम्यतेऽनेन पुरुषो गृहे इति सुयमः ॥ 'ईषद्दुःसुषु॰' इति खल् ॥ तादृशात् ^v^रायः धनात् ^v^मा ^v^अव ^v^स्थाम् अवयुत्य स्थितो मा भूवम् । वयं ^v^सुवीराः शोभनपुत्राः ^v^विदथे यज्ञे गृहे वर्तमानाः सन्तः ^v^बृहत् प्रौढं स्तोत्रं ^v^वदेम उच्चारयाम ॥ ॥ ८ ॥

'इदम्' इत्येकादशर्चं षष्ठं सूक्तम् । अत्रानुक्रम्यते—'इदमेकादश वारुणम्' इति । पूर्वसूक्ते 'कूर्मो गार्त्समदो हि वा' इत्युक्तत्वादस्योत्तरस्य च कूर्मो गृत्समदो वा ऋषिः । त्रिष्टुप् छन्दः । वरुणो देवता । विनियोगो लैङ्गिकः । अत्र केचिदाहुः—'इदमेकादशर्चं तु वारुणं भयपापनुत् । ऋणदारिद्र्यदुःस्वप्ननाशनं चेति शुश्रुम' इति ॥

---

१. थ—अभिद्रोहम् । २. क-ज्ञ-ज्ञ१-ण-त-थ-न-म-ब—'पुरुषः' नास्ति । ३. ख-ग-फ—प्रभुसमीपे ।

इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना ।
अति यो मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥ १ ॥

इदम् । कवेः । आदित्यस्य । स्वऽराजः । विश्वानि । सन्ति । अभि । अस्तु । मह्ना ।
अति । यः । मन्द्रः । यजथाय । देवः । सुऽकीर्तिम् । भिक्षे । वरुणस्य । भूरेः ॥ १ ॥

ᵛकवेः क्रान्तदर्शिनः ᵛआदित्यस्य अदितेः पुत्रस्य ᵛस्वराजः स्वयमेव राजमानस्य ईश्वरस्य वा ᵛवरुणस्य ᵛइदं हविः स्तोत्रं वा यजमानः करोतीति शेषः । स च ᵛविश्वानि सर्वाणि ᵛसन्ति द्वितीयभावविकारभाञ्जि भूतजातानि ᵛमह्ना महिम्ना वरुणप्रसादात् लब्धेन ᵛअभ्यस्तु अभिभवतु । ᵛयः ᵛदेवः द्योतमानो वरुणः ᵛयजथाय यष्ट्रे पुरुषाय ᵛअति अतिशयेन ᵛमन्द्रः स्तुत्यो हर्षयिता वा भवति तस्य ᵛभूरेः भर्तुर्वरुणस्य ᵛसुकीर्तिं शोभनां स्तुतिं ᵛभिक्षे प्रार्थये । यद्वा वरुणस्येति तृतीयार्थे षष्ठी । तेन वरुणेन दातव्यां शोभनां कीर्तिमहं याचे ॥

तव व्रते सुभगासः स्याम स्वाध्यो वरुण तुष्टुवांसः ।
उपायन उषसां गोमतीनामग्नयो न जरमाणा अनु द्यून् ॥ २ ॥

तव । व्रते । सुऽभगासः । स्याम । सुऽआध्यः । वरुण । तुस्तुऽवांसः ।
उपऽअयने । उषसाम् । गोऽमतीनाम् । अग्नयः । न । जरमाणाः । अनु । द्यून् ॥ २ ॥

हे ᵛवरुण ᵛस्वाध्यः शोभनाध्यानाः ᵛतुष्टुवांसः स्तुतवन्तः[1] वयं ᵛतव ᵛव्रते त्वदीये परिचरणाख्ये कर्मणि वर्तमानाः ᵛसुभगासः ᵛस्याम शोभनधना भवेम । अपि च ᵛगोमतीनां रश्मिभिर्युक्तानाम् ᵛउषसाम् ᵛउपायने उपागमने सति ᵛअग्नयो ᵛन यथाग्नयोऽग्निहोत्रादिकर्मार्थं समिध्यन्ते एवम् ᵛअनु ᵛद्यून् अनुदिनं ᵛजरमाणाः त्वां स्तुवन्तो वयं दीप्यमाना भवेम ॥

तव स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः ।
यूयं नः पुत्रा अदितेरदब्धा अभि क्षमध्वं युज्याय देवाः ॥ ३ ॥

तव । स्याम । पुरुऽवीरस्य । शर्मन् । उरुऽशंसस्य । वरुण । प्रनेतरिति प्रऽनेतः ।
यूयम् । नः । पुत्राः । अदितेः । अदब्धाः । अभि । क्षमध्वम् । युज्याय । देवाः ॥ ३ ॥

हे ᵛप्रणेतः सर्वस्य जगतः प्रकर्षेण नेतः ᵛवरुण ᵛपुरुवीरस्य पुरुभिर्बहुभिर्वीरैरुपेतस्य । यद्वा पुरूणां बहूनां शत्रूणां विशेषेण प्रेरकस्य ᵛउरुशंसस्य उरुभिर्बहुभिः स्तूयमानस्य ᵛतव ᵛशर्मन् शर्मणि सुखे गृहे वा ᵛस्याम । ᵛअदितेः ᵛपुत्राः मित्रादयः ॥ 'परमपि छन्दसि' इति परस्य षष्ठ्यन्तस्य

---

१. क-ञ-म-स्तुताः ; घ-स्तुवन्तः ।

पूर्वामन्त्रिताङ्गवद्भावेन[1] अनुप्रवेशात् पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वम् ॥ अदब्धाः शत्रुभिरहिंसिताः । एवंभूता हे देवाः यूयं नः अस्मान् कृतापराधान् युज्याय सख्याय अभि क्षमध्वम् अस्माभिः कृतमपराधं सहध्वम् ॥

प्र सीमादित्यो असृजद्विधर्ता ऋतं सिन्धवो वरुणस्य यन्ति ।
न श्राम्यन्ति न वि मुचन्त्येते वयो न पप्तू रघुया परिज्मन् ॥ ४ ॥

प्र । सीम् । आदित्यः । असृजत् । विऽधर्ता । ऋतम् । सिन्धवः । वरुणस्य । यन्ति ।
न । श्राम्यन्ति । न । वि । मुचन्ति । एते । वयः । न । पप्तुः । रघुऽया । परिऽज्मन् ॥ ४ ॥

विधर्ता सेतुरिव जलस्य विधारयिता आदित्यः अदितेः पुत्रो वरुणः ऋतं विधारणहेतुभूतं सत्यं यद्वा नदीनामुपादानभूतमुदकं सीं सर्वतः प्र असृजत् प्रकर्षेण सृष्टवान् ॥ 'अणोऽप्रगृह्यस्यानुनासिकः' इत्याकारः सानुनासिकः ॥ तेन वरुणस्य ऋतेन सिन्धवः स्यन्दनशीला नद्यः यन्ति गच्छन्ति । प्रवहन्ति । एते सिन्धवः न श्राम्यन्ति श्रान्तिं न प्राप्नुवन्ति । न वि मुचन्ति उपरता न भवन्ति । अनलसाः सर्वदा ऐकरूप्येण प्रवहन्तीत्यर्थः । एतदेवोच्यते । वयो न । वयः पक्षिण इव रघुया रघवः[2] शीघ्रगामिनः परिज्मन् परिज्मनि भूम्यां पप्तुः पतन्ति । गच्छन्ति ॥ 'पत्लृ गतौ' । लिट्युसि 'तनिपत्योश्छन्दसि' इति उपधालोपः । स्थानिवद्भावात् द्विर्वचनादि । रघुया इत्यत्र 'सुपां सुलुक्०' इति जसो याजादेशः ॥

वि मच्छ्रथाय रशनामिवाग ऋध्याम ते वरुण खामृतस्य ।
मा तन्तुश्छेदि वयतो धियं मे मा मात्रा शार्यपसः पुर ऋतोः ॥ ५ ॥

वि । मत् । श्रथय । रशनाम्ऽइव । आगः । ऋध्याम । ते । वरुण । खाम् । ऋतस्य ।
मा । तन्तुः । छेदि । वयतः । धियम् । मे । मा । मात्रा । शारि । अपसः । पुरा । ऋतोः ॥ ५ ॥

हे वरुण मत् मत्सकाशात् रशनामिव रज्जुमिव आगः विहिताननुष्ठानजनितं[3] पापं[3] वि श्रथय शिथिलीकुरु । विमोचयेत्यर्थः । ते त्वत्संबन्धिनः ऋतस्य उदकस्य पूर्णां खां नदीम् । खा इति नदीनाम । ताम् ऋध्याम लभेमहि । अपि च धियं कर्म वयतः संतन्वतः मे मम तन्तुः कर्मसंततिः मा छेदि छिन्नो मा भूत् । नैरन्तर्येणेत्यर्थः । तथा ऋतोः समाप्तिकालात् पुरा पूर्वम् अपसः कर्मणः मात्रा शरीरं प्राच्योदीच्याङ्गलक्षणं मा शारि शीर्णं विकलं[4] मा भूत् ॥ 'शॄ हिंसायाम्' । कर्मणि लुङ् । पुर ऋतोः इत्यत्र 'ऋत्यकः' इति प्रकृतिभावः ॥ ॥ ९ ॥

---

१. ख-ग-ण-पूर्वमनाङ्ग°; त-पूर्वमताङ्ग°; थ-पूर्वाङ्ग° । २. व-लघवः । ३. ख-ग-ण-त-थ-म-°जनितपापम् । ४. म-शिथिलम् ।

अपो सु म्यक्ष वरुण भियसं मत्सम्राळृतावोऽनु मा गृभाय ।
दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्चनेशे ॥ ६ ॥

अपो इति । सु । म्यक्ष । वरुण । भियसम् । मत् । सम्ऽराट् । ऋतऽवः । अनु । मा । गृभाय ।
दामऽइव । वत्सात् । वि । मुमुग्धि । अंहः । नहि । त्वत् । आरे । निऽमिषः । चन । ईशे ॥ ६ ॥

हे वरुण भियसं भयं मत् मत्तः सु सुष्ठु अपो म्यक्ष अपगमय । हे सम्राट् सम्यग्राजमान हे ऋतावः सत्यवन् यज्ञवन् वा वरुण मा माम् अनु गृभाय अनुगृहाण ॥ ' छन्दसि शायजपि ' इति श्नः शायजादेशः । ' हग्रहोर्भः० ' इति भत्वम् ॥ अपि च दामेव वत्सात् यथा दोग्धा वत्सकाशात् बन्धनीं रज्जुं विमुञ्चति तथा अंहः पापं मत्सकाशात् वि मुमुग्धि विमुञ्च ॥ छान्दसः शपः श्लुः ॥ पृथक्कुरु । त्वदारे त्वत्तो दूरदेशे वर्तमानस्त्वदन्य इत्यर्थः । त्वत्तोऽन्यः कश्चित् निमिषश्चन निमेषस्यापि अक्षिपक्ष्मचलनस्यापि नहि ईशे नेष्टे । त्वमेवेश्वर इत्यर्थः ॥ ' लोपस्त आत्मनेपदेषु ' इति तलोपः ॥

मा नो वधैर्वरुण ये त इष्टावेनः कृण्वन्तमसुर भ्रीणन्ति ।
मा ज्योतिषः प्रवसथानि गन्म वि षू मृधः शिश्रथो जीवसे नः ॥ ७ ॥

मा । नः । वधैः । वरुण । ये । ते । इष्टौ । एनः । कृण्वन्तम् । असुर । भ्रीणन्ति ।
मा । ज्योतिषः । प्रऽवसथानि । गन्म । वि । सु । मृधः । शिश्रथः । जीवसे । नः ॥ ७ ॥

हे वरुण नः अस्मान् वधैः हननसाधनैरायुधैः मा हिंसीरिति शेषः । हे असुर पापकृतां निरसितः ते त्वदीये इष्टौ यज्ञे एनः विहिताननुष्ठानेन[1] जनितं पापं कृण्वन्तं कुर्वन्तं पुरुषं ये वधाः भ्रीणन्ति हिंसन्ति तैः इति पूर्वत्र संबन्धः ॥ ' भ्रीप् हिंसायाम् ' । क्रैयादिकः ॥ अपि च ज्योतिषः गृहे वर्तमानादग्नेः सौरप्रकाशात् वा प्रवसथानि प्रवासान् मा गन्म मा गच्छाम । सर्वदा गृहे वर्तमानः सूर्यं पश्यन् चिरकालं जीवेयमित्यर्थः ॥ गमेर्लुङि ' मन्त्रे घस० ' इति च्लेर्लुक् ॥ तथा नः अस्माकं जीवसे जीवनाय मृधः हिंसकान् सुष्ठु वि शिश्रथः विश्लेषय । बाधस्वेत्यर्थः ॥

नमः पुरा ते वरुणोत नूनमुतापरं तुविजात ब्रवाम ।
त्वे हि कं पर्वते न श्रितान्यप्रच्युतानि दूळभ व्रतानि ॥ ८ ॥

नमः । पुरा । ते । वरुण । उत । नूनम् । उत । अपरम् । तुविऽजात । ब्रवाम ।
त्वे इति । हि । कम् । पर्वते । न । श्रितानि । अप्रऽच्युतानि । दुःऽदभ । व्रतानि ॥ ८ ॥

---

१. म-अविहितानुष्ठानेन ।

हे vवरुण vपुरा पूर्वस्मिन् काले vते तुभ्यं vनमः ममस्कारप्रतिपादकं नम इति शब्दमवादिष्म। vउत अपि च vनूनम् अद्यापि vब्रवाम । vउत अपि च हे vतुविजात बहुषु[1] प्रदेशेषु[1] प्रादुर्भूत वरुण vअपरम्[2] आगामिन्यपि काले नमःशब्दं ब्रवाम उच्चारयाम। कस्मादिति चेदुच्यते। vदूळभ दुर्दभ दम्भितुं[3] हिंसितुमशक्य ॥ 'दुरो दाशनाशध्यादभेषु॰' (पा. सू. ६. ३. १०९. ५) इति रेफस्योत्वम् उत्तरपदादेः ष्टुत्वं च । vकम् इत्येतत् पादपूरणम्[4]॥ vहि यस्मात् vत्वे त्वयि vपर्वते vन शिलोच्चये इव vअप्रच्युतानि अन्यैः प्रच्यावयितुमशक्यानि vव्रतानि कर्माणि विधरणानि vश्रितानि आश्रितानि। तस्मादित्यर्थः ॥

परा ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजम् ।

अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान्वरुण तासु शाधि ॥ ९ ॥

परा । ऋणा । सावीः । अध । मत्ऽकृतानि । मा । अहम् । राजन् । अन्यऽकृतेन । भोजम् ।

अविऽउष्टाः । इत् । नु । भूयसीः । उषसः । आ । नः । जीवान् । वरुण । तासु । शाधि ॥९॥

हे vवरुण vऋणा ऋणानि पित्रादिभिः कृतान्यस्माभिर्देयानि vपरा vसावीः परा सुव । पराचीनं प्रेरय ॥ 'षू प्रेरणे'। छान्दसो लुङ् ॥ vअध अधुना vमत्कृतानि मया निष्पादितानि ऋणानि परा सुव। अपि च हे vराजन् स्वामिन् वरुण vअहम् vअन्यकृतेन अन्यैरर्जितेन धनेन vमा vभोजं भोगं मा लभेयम्। किं कारणमिति चेदुच्यते। vभूयसीः भूयस्यो बहुतराः vउषसः vअव्युष्टाः vइन्नु । सत्यमव्युष्टा एव । अपररात्रेपूत्थाय ऋणानि चिन्तयतो जाग्रतो मम व्युष्टा अप्यव्युष्टकल्पा आसन् । हे वरुण vतासु उषःसु vनः अस्मान् vजीवान् जीवनवतः vआ vशाधि आ समन्तात् अनुशिष्टान् कुरु । ऋणान्यपकृत्य भोगपर्याप्तं धनं प्रयच्छेत्यर्थः ॥

यो मे राजन्युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।

स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद्वरुण पाह्यस्मान् ॥ १० ॥

यः । मे । राजन् । युज्यः । वा । सखा । वा । स्वप्ने । भयम् । भीरवे । मह्यम् । आह ।

स्तेनः । वा । यः । दिप्सति । नः । वृकः । वा ।

त्वम् । तस्मात् । वरुण । पाहि । अस्मान् ॥ १० ॥

हे vराजन् वरुण vमे मदीयः vयुज्यः योजनसमर्थः पित्रादिः vवा vसखा समानख्यानोऽन्यो बान्धवः vवा vस्वप्ने दृष्टं त्वद्विषयं vभयं vभीरवे भयशीलाय vमह्यं vयः vआह ब्रूते । तथा vस्तेनः चोरः vवा vवृकः अरण्यश्वा vवा vयः vनः अस्मान् vदिप्सति जिघांसति॥ 'सनीवन्तर्ध॰' इति विकल्पनादिडभावः । 'दम्भ इच्च' इति इत्वम् ॥ हे vवरुण vत्वं vतस्मात् सर्वस्मात् vअस्मान् vपाहि रक्ष॥

---

१. ण-त-थ–बहुप्रदेशेषु; म–प्रदेशेषु । २. ण-थ-म–अपरं कालम् । ३. ख-ग-ण-त-थ–दाभितुम् ।
४. क-ञ-ञ१-ण-त-थ-न-म-व–पदपूरणम् ।

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ ११ ॥

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ११ ॥

हे वरुण प्रियस्य भूरिदाव्नः भूरेर्धनस्य दातुर्धनवत आढ्यस्य पुरतः पुत्रादेर्दारिद्र्यम् अहं मा आ विदम् आवेदयानि ज्ञापयानि । हे राजन् सुष्ठु नियामकाद्धनात् अव[1] स्थाम् अवयुत्य स्थितः[1] मा भूवम् । शोभनपुत्राः[2] यज्ञे गृहे वा वर्तमानाः प्रौढं स्तोत्रमुच्चारयाम ॥ ॥ १० ॥

'धृतव्रताः' इति सप्तर्चं सप्तमं सूक्तं गार्त्समदस्य[3] कूर्मस्य गृत्समदस्य वा[3] आर्षं त्रैष्टुभं वैश्वदेवम् । तथा चानुक्रान्तं–'धृतव्रताः सप्त वैश्वदेवम्' इति । गतो विनियोगः ॥

धृतव्रता आदित्या इषिरा आरे मत्कर्त रहसूरिवागः ।
शृण्वतो वो वरुण मित्र देवा भद्रस्य विद्वाँ अवसे हुवे वः ॥ १ ॥

धृतऽव्रताः । आदित्याः । इषिराः । आरे । मत् । कर्त । रहसूःऽइव । आगः ।
शृण्वतः । वः । वरुण । मित्र । देवाः । भद्रस्य । विद्वान् । अवसे । हुवे । वः ॥ १ ॥

हे धृतव्रताः धृतकर्माणः आदित्याः अदितेः पुत्राः इषिराः गमनशीलाः सर्वैरभ्येषणीयाः प्रार्थनीया वा हे विश्वे देवाः मत् आरे मत्तो दूरदेशे आगः विहिताननुष्ठानादिजनितं पापं कर्त कुरुत ॥ करोतेश्छान्दसो विकरणस्य लुक् । 'तप्तनप्तनथनाश्च' इति तबादेशः ॥ तत्र दृष्टान्तः । रहसूरिव । रहस्यन्यैरज्ञाते प्रदेशे सूयत इति रहसूर्व्यभिचारिणी । सा यथा गर्भं पातयित्वा दूरदेशे परित्यजति तद्वत् । हे वरुण मित्र देवाः वः युष्मदीयस्य भद्रस्य युष्माभिः करणीयं श्रेयः विद्वान् जानन्नहं शृण्वतः मत्कृतानि स्तोत्राणि श्रोत्रेण जानतः वः युष्मान् अवसे रक्षणार्थं हुवे आह्वयामि ॥

यूयं देवाः प्रमतिर्यूयमोजो यूयं द्वेषांसि सनुतर्युयोत ।
अभिक्षत्तारो अभि च क्षमध्वमद्या च नो मृळयतापरं च ॥ २ ॥

यूयम् । देवाः । प्रऽमतिः । यूयम् । ओजः । यूयम् । द्वेषांसि । सनुतः । युयोत ।
अभिऽक्षत्तारः । अभि । च । क्षमध्वम् । अद्य । च । नः । मृळयत । अपरम् । च ॥ २ ॥

---

१. क-ख-ग-च-ञ-झ-झ१-ण-ण१-त-थ-म–'अव स्थाम् अवयुत्य स्थितः' नास्ति । २. व–सुवीराः शोभनपुत्राः । ३. म–गृत्समदस्य ।

हे ^v^देवाः ^v^प्रमतिः प्रकृष्टा मतिर्यस्य पित्रादेस्तादृशा अपि ^v^यूयम् एव । तथा ^v^ओजः बलमपि ^v^यूयम् एव । अपि च ^v^यूयं ^v^द्वेषांसि द्वेष्टॄणि रक्षःपिशाचादीनि । ^v^सनुतः इत्यव्ययम्। अन्तर्हितनामैतत्.। अन्तर्हिते प्रदेशे ^v^युयोत पृथक्कुरुत ॥ ' यु मिश्रणामिश्रणयोः'। छान्दसः शपः श्लुः । पूर्ववत् तस्य तबादेशः ॥ ^v^अभिक्षत्तारः अभितः शत्रूणां हिंसितारः यूयम् ^v^अभि ^v^च ^v^क्षमध्वम् अभिभवत च शत्रून् । ^v^अद्य अस्मिन् दिने ^v^नः अस्मान् ^v^मृळयत सुखयत। ^v^अपरं ^v^च अपरमपि कालम् आगामिन्यपि काले अस्मान् मृळयत ॥

किमू नु वः कृणवामापरेण किं सनेन वसव आप्येन ।

यूयं नो मित्रावरुणादिते च स्वस्तिमिन्द्रामरुतो दधात ॥ ३ ॥

किम् । ऊँ इति । नु । वः । कृणवाम । अपरेण । किम् । सनेन । वसवः । आप्येन ।

यूयम् । नः । मित्रावरुणा । अदिते । च । स्वस्तिम् । इन्द्रामरुतः । दधात ॥ ३ ॥

हे देवाः ^v^वः युष्माकं ^v^नु अद्येदानीं ^v^किमु ^v^कृणवाम किं खलु कर्तुं शक्नवाम । न किमपीत्यर्थः। तथा ^v^अपरेण अपरकालभाविना कर्मणा ^v^किं कर्तुं शक्ताः । तथा हे ^v^वसवः वासयितारो देवाः ^v^सनेन सनातनेन ^v^आप्येन आसव्येन कर्मणा युष्माकं किं कर्तुं शक्ताः । सर्वदापि युष्मदनुगुणं परिचरणं कर्तुं न शक्ता इत्यर्थः । हे मित्रावरुणौ हे ^v^अदिते हे ^v^इन्द्रामरुतः ॥ ' देवताद्वन्द्वे च ' इति पूर्वपदस्यानङ् ॥ ते च सर्वे ^v^यूयं ^v^स्वस्तिम् अविनाशं ^v^नः अस्मभ्यं ^v^दधात .धत्त प्रयच्छत ॥ लोटि तस्य तबादेशे ङित्त्वाभावेन अतोलोपाभावः ॥

हये देवा यूयमिदापयः स्थ ते मृळत नाधमानाय मह्यम् ।

मा वो रथो मध्यमवाळृते भून्मा युष्मावत्स्वापिषु श्रमिष्म ॥ ४ ॥

हये । देवाः । यूयम् । इत् । आपयः । स्थ । ते । मृळत । नाधमानाय । मह्यम् ।

मा । वः । रथः । मध्यमऽवाट् । ऋते । भूत् । मा । युष्मावत्ऽसु । आपिषु । श्रमिष्म ॥४॥

^v^हये ^v^देवाः ॥ छान्दसो वर्णोपजनः ॥ हे देवाः ^v^यूयमित् यूयमेव ^v^आपयः धनस्य प्रापयितारो बन्धवः ^v^स्थ भवथ । ^v^ते यूयं ^v^नाधमानाय अभिमतं फलं याचमानाय ^v^मह्यं स्तोत्रे ^v^मृळत सुखयत । तथा ^v^वः युष्माकं ^v^रथः ^v^ऋते अस्मदीये यज्ञे निमित्तभूते ^v^मध्यमवाट् ^v^मा ^v^भूत् मध्यमेन मन्दगमनेन वाहको मा भूत्। शीघ्रं युष्मान् वहत्वित्यर्थः । वयं ^v^युष्मावत्सु युष्मत्सदृशेषु ^v^आपिषु बन्धुषु सत्सु ^v^मा ^v^श्रमिष्म श्रान्ता मा भूम ॥ ' वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ' इति वतुप् । 'आ सर्वनाम्नः ' इत्यात्वम् ॥

प्र व एको मिमय भूर्यागो यन्मा पितेव कितवं शशास ।
आरे पाशा आरे अघानि देवा मा माधि पुत्रे विमिव ग्रभीष्ट ॥ ५ ॥

प्र । वः । एकः । मिमय । भूरि । आगः । यत् । मा । पिताऽइव । कितवम् । शशास ।
आरे । पाशाः । आरे । अघानि । देवाः । मा । मा । अधि । पुत्रे । विम्ऽइव । ग्रभीष्ट ॥५॥

हे देवाः ᵛवः युष्माकं मध्ये अहम् ᵛएकः सन् ᵛभूरि बहुलम् ᵛआगः पापं ᵛप्र ᵛमिमय अहं प्रकर्षेण अहिंसिषम् । कथमस्माकं मध्ये त्वमेवेति चेदुच्यते । ᵛयत् यस्मात् मां ᵛपितेव ᵛकितवं यथा अपथप्रवृत्तं पुत्रं पिता अनुशास्ति तथा ᵛशशास अनुशिष्टं चकृद्वे ॥ ‘ शासु अनुशिष्टौ ’ इत्यस्माल्लिटि मध्यमस्य रूपम् ॥ अपि च हे ᵛदेवाः युष्मदीयाः ᵛपाशाः ᵛआरे अस्मत्तो दूरदेशे सन्तु । ᵛअघानि पापानि च ᵛआरे सन्तु । ᵛमा ᵛमाधि ᵛपुत्रे ॥ अधिः सप्तम्यर्थानुवादी ॥ पुत्रे पश्यति सति पितरं सन्तं ᵛविमिव पक्षिणमिव व्याधः मा ग्रभीष्ट मा गृह्णीध्वम् ॥ माङि लुङि ‘ हृग्रहोर्भः° ’ इति भत्वम् ॥

अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् ।
त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्तादवपदो यजत्राः ॥ ६ ॥

अर्वाञ्चः । अद्य । भवत । यजत्राः । आ । वः । हार्दि । भयमानः । व्ययेयम् ।
त्राध्वम् । नः । देवाः । निऽजुरः । वृकस्य । त्राध्वम् । कर्तात् । अवऽपदः । यजत्राः ॥६॥

हे ᵛयजत्राः यष्टव्या देवाः ᵛअद्य इदानीम् ᵛअर्वाञ्चः अस्मदभिमुखाः ᵛभवत । ᵛवः युष्माकं ᵛहार्दि हृद्यवस्थितं रक्षणं ᵛभयमानः बिभ्यदहम् ᵛआ ᵛव्ययेयम् आभिमुख्येन प्राप्नुयाम् ॥ ‘ व्यय गतौ ’ । भौवादिकः ॥ हे ᵛदेवाः ᵛवृकस्य तस्करस्य अरण्यश्वनो वा संबन्धिनः ᵛनिजुरः निहननात् ॥ जूरी हिंसार्थः । अस्मात्संपदादिलक्षणो भावे क्विप् । छान्दसो ह्रस्वः ॥ ᵛनः अस्मान् ᵛत्राध्वं त्रायध्वम् । तथा[1] हे ᵛयजत्राः ᵛअवपदः आपदः ᵛकर्तात् कर्तुः सकाशात् ᵛत्राध्वं त्रायध्वम्[1] ॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ ७ ॥

मा । अहम् । मघोनः । वरुण । प्रियस्य । भूरिऽदाव्नः । आ । विदम् । शूनम् । आपेः ।
मा । रायः । राजन् । सुऽयमात् । अव । स्थाम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥७॥

व्याख्यातेयम् ॥ ॥ ११ ॥

१. क-ण-त-थ-न-म-व–‘ तथा... त्रायध्वम् ’ नास्ति ।

'ऋतं देवाय' इत्येकादशर्चमष्टमं सूक्तं गार्त्समदम्। अन्त्या जगती शिष्टास्त्रिष्टुभः। 'प्र हि क्रतुम्' इत्येषा इन्द्रासोमदेवताका। 'सरस्वति त्वमस्मान्' इत्यर्धर्चः सारस्वतः। 'यो नः सनुत्यः' इत्येषा बार्हस्पत्या। अन्त्या मारुती। शिष्टा ऐन्द्र्यः। तथा चानुक्रान्तम्—'ऋतमेकादश जगत्यन्तं षष्ठ्यैन्द्रासोमी सरस्वति त्वमिति सारस्वतोऽर्धर्चो यो नो बृहस्पतिस्तं[1] वोऽन्त्या[1] मारुती' इति। गतो विनियोगः॥

ऋतं देवाय कृण्वते सवित्र इन्द्रायाहिघ्ने न रमन्त आपः।
अहरहर्यात्यक्तुरपां कियात्या प्रथमः सर्ग आसाम्॥ १॥

ऋतम्। देवाय। कृण्वते। सवित्रे। इन्द्राय। अहिऽघ्ने। न। रमन्ते। आपः।
अहःऽअहः। याति। अक्तुः। अपाम्। कियति। आ। प्रथमः। सर्गः। आसाम्॥१॥

ऋतम् उदकं वृष्टिलक्षणं कृण्वते कुर्वते देवाय द्योतमानाय सवित्रे सर्वस्य प्रेरकाय अहिघ्ने अहिं वृत्रं हतवते इन्द्राय यागार्थम् आपः न रमन्ते। तस्माद्धेतोर्भीत्या नोपरता भवन्ति॥ तस्मात् व्यत्ययेन चतुर्थी॥ अपि तु तासाम् अपाम् अक्तुः सेचकं स्रोतः अहरहः प्रत्यहं याति गच्छति। आसां प्रथमः सर्गः प्राथमिकं जन्म कियात्या कियति काले निष्पन्नम्। आकारः प्रश्ने। किंशब्दः आक्षेपे। यावति काले ता अजायन्त स कालः कियान्। किं परिमाणं तस्य कालस्य। न किमपि। नित्या एव हि ता इत्यर्थः॥

यो वृत्राय सिनमत्राभरिष्यत्प्र तं जनित्री विदुष उवाच।
पथो रदन्तीरनु जोषमस्मै दिवेदिवे धुनयो यन्त्यर्थम्॥ २॥

यः। वृत्राय। सिनम्। अत्र। अभरिष्यत्। प्र। तम्। जनित्री। विदुषे। उवाच।
पथः। रदन्तीः। अनु। जोषम्। अस्मै। दिवेऽदिवे। धुनयः। यन्ति। अर्थम्॥२॥

यः पुरुषः वृत्राय असुराय सिनम् अन्नम् अत्र पाकस्थाने आहर्तुम् अभरिष्यत् संपादितवान् तं पुरुषं जनित्री जनयित्री इन्द्रस्य माता अदितिः विदुषे अभिज्ञायेन्द्राय प्र उवाच प्रोक्तवती। प्रवचनस्य हननार्थत्वात् तं वृत्रं हतवानिति शेषः। अपि च अस्मै अस्येन्द्रस्य अनु जोषम् अनुकामम्। इच्छामनुसृत्य पथः मार्गान् रदन्तीः विलिखन्त्यः धुनयः नद्यः दिवेदिवे प्रतिदिवसम् अर्थम् अर्तव्यं गन्तव्यं समुद्रं प्रति यन्ति गच्छन्ति॥

ऊर्ध्वो ह्यस्थादध्यन्तरिक्षेऽधा वृत्राय प्र वधं जभार।
मिहं वसान उप हीमदुद्रोत्तिग्मायुधो अजयच्छत्रुमिन्द्रः॥ ३॥

ऊर्ध्वः। हि। अस्थात्। अधि। अन्तरिक्षे। अध। वृत्राय। प्र। वधम्। जभार।
मिहम्। वसानः। उप। हि। ईम्। अदुद्रोत्। तिग्मऽआयुधः। अजयत्। शत्रुम्। इन्द्रः॥३॥

---

१. च-बार्हस्पत्या तं वो।

हि हेतौ । यस्मादयं वृत्रः अन्तरिक्षे ऊर्ध्वः सन् सर्वमावृत्य अधि अस्थात् अधिष्ठितोऽभूत् । अध अतः कारणात् वृत्राय वृत्रं प्रति वधं हननसाधनं वज्रमिन्द्रः प्र जभार प्रचिक्षेप ॥ 'हृग्रहोर्भः०' ॥ सः हि खलु[1] वृत्रः मिहं वृष्टेः सेक्तारं मेघं वसानः आच्छादयन् ईम् एनमिन्द्रम् उप अदुद्रोत् उपागमत् ॥ 'दु द्रु गतौ' । लङि छान्दसः शपः श्लुः ॥ तिग्मायुधः तीक्ष्णायुधः इन्द्रः शत्रुं शातयितारं तं वृत्रम् अजयत् जितवान् ॥

**बृहस्पते तपुषाश्नेव विध्य वृकद्वरसो असुरस्य वीरान् ।**
**यथा जघन्थ धृषता पुरा चिदेवा जहि शत्रुमस्माकमिन्द्र ॥ ४ ॥**

बृहस्पते । तपुषा । अश्नाऽइव । विध्य । वृकऽद्वरसः । असुरस्य । वीरान् ।
यथा । जघन्थ । धृषता । पुरा । चित् । एव । जहि । शत्रुम् । अस्माकम् । इन्द्र ॥४॥

हे बृहस्पते बृहतां परिवृढानां पालयितरिन्द्र तपुषा तापकेन दीप्तेन वज्रेण अश्नेव अशन्येव वृकद्वरसः संवृतद्वारस्य असुरस्य वीरान् पुत्रान् । यद्वा संवृतद्वारानसुरस्य वीरान् विध्य ताडय ॥ वृणोतेः 'सृवृभूशुषिमुषिभ्यः कित्' इति कर्मणि कन्प्रत्ययः । 'द्रु गतौ' । अस्मादौणादिकः असुन्प्रत्ययः । वृकाणि संवृतानि द्वरांसि द्वाराणि येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ हे इन्द्र पुरा चित् पुरापि धृषता धर्षकेण वज्रेण यथा जघन्थ त्वं हतवान् एव एवमेव अस्माकं शत्रुं जहि नाशय ॥ 'हन्तेर्जः' इति हौ जादेशः ॥

**अव क्षिप दिवो अश्मानमुच्चा येन शत्रुं मन्दसानो निजूर्वाः ।**
**तोकस्य सातौ तनयस्य भूरेरस्माँ अर्धं कृणुतादिन्द्र गोनाम् ॥ ५ ॥**

अव । क्षिप । दिवः । अश्मानम् । उच्चा । येन । शत्रुम् । मन्दसानः । निऽजूर्वाः ।
तोकस्य । सातौ । तनयस्य । भूरेः । अस्मान् । अर्धम् । कृणुतात् । इन्द्र । गोनाम् ॥५॥

हे इन्द्र दिवः नभसः सकाशात् अश्मानम् अश्मवत्कठिनं वज्रम् उच्चा उच्चैर्वर्तमानस्त्वम् अव क्षिप अस्मदीयान् शत्रूनुद्दिश्य अवस्तात् प्रक्षिप[2] । येन वज्रेण मन्दसानः स्तोतृभिः स्तूयमानः सन् शत्रुं निजूर्वाः न्यहिंसीः ॥ जुर्वी हिंसार्थः । लेट्याडागमः[3] ॥ तथा तोकस्य पुत्रस्य[4] भूरेः भर्तव्यस्य तनयस्य पौत्रस्य सातौ संभजने ॥ निमित्ते सप्तम्येषा ॥ संभजनार्थम् । तथा हे इन्द्र गोनां गवां संभजनार्थं च अस्मान् अस्माकम् ॥ विभक्तिव्यत्ययः ॥ अर्धं समृद्धिं कृणुतात् कुरु ॥ 'गोः पादान्ते' इति गोशब्दस्यामो नुडागमः ॥ ॥ १२ ॥

---

१. क-झ-झ१-ण१-न-म-व-स खलु । २. ग-च-क्षिप । ३. च-झ१-ण१-लेट्यडागमः । ४. ख-ग-च-झ१-ण-ण१-थ-न-'पुत्रस्य' नास्ति ।

प्र हि क्रतुं वृहथो यं वनुथो रध्रस्य स्थो यजमानस्य चोदौ ।
इन्द्रासोमा युवमस्माँ अविष्टमस्मिन्भयस्थे कृणुतमु लोकम् ॥ ६ ॥

प्र । हि । क्रतुम् । वृहथः । यम् । वनुथः । रध्रस्य । स्थः । यजमानस्य । चोदौ ।
इन्द्रासोमा । युवम् । अस्मान् । अविष्टम् ।
अस्मिन् । भयऽस्थे । कृणुतम् । ऊँ इति । लोकम् ॥ ६ ॥

हे इन्द्रासोमौ यं वैरिणं वनुथः हिंसथः । 'वनुष्यतिर्हन्तिकर्मा[1]' इति यास्कः । तं क्रतुं द्वेषस्य कर्तारं प्र हि वृहथः प्रकर्षेणोद्यच्छथः खलु । उन्मूलयथ इत्यर्थः ॥ 'वृहू उद्यमने' । तौदादिकः ॥ तथा रध्रस्य राधकस्य यजमानस्य चोदौ शत्रूणां प्रेरकौ स्थः भवथः । तथा हे इन्द्रासोमौ युवं युवाम् अस्मान् अविष्टम् अवतम् । अस्मिन् भयस्थे भयस्थाने युद्धे ॥ 'घञर्थे कविधानम्' इति अधिकरणे कप्रत्ययः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥ तस्मिन् युद्धे लोकं भयरहितं स्थानं कृणुतं कुरुतम् । उ इति पूरणः[2] ॥

न मा तमन्न श्रमन्नोत तन्द्रन्न वोचाम मा सुनोतेति सोमम् ।
यो मे पृणाद्यो ददद्यो निबोधाद्यो मा सुन्वन्तमुप गोभिरायत् ॥ ७ ॥

न । मा । तमत् । न । श्रमत् । न । उत । तन्द्रत् । न । वोचाम । मा । सुनोत । इति । सोमम् ।
यः । मे । पृणात् । यः । ददत् । यः । निऽबोधात् ।
यः । मा । सुन्वन्तम् । उप । गोभिः । आ । अयत् ॥ ७ ॥

स इन्द्रो मां न तमत् न तमयतु न ग्लपयतु । तथा न श्रमत् श्रान्तं मा करोतु ॥ 'तमु ग्लानौ[3]', 'श्रमु तपसि खेदे च' । अनयोर्हेतुमण्ण्यन्तयोर्लेट्यडागमः । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः ॥ उत अपि च मां न तन्द्रत् न तन्द्रयेत् । तन्द्रया आलस्येन युक्तं मा करोतु ॥ तन्द्रीशब्दात् 'तत्करोति°' इति णिच् । 'णाविष्ठवत्प्रातिपदिकस्य' इति टिलोपः । अन्यत् पूर्ववत् ॥ इन्द्रयागाय सोमं मा सुनोत माभिषुणुत इति अन्यान् यजमानान् प्रति न वोचाम न ब्रवाम ॥ वक्तेश्छान्दसो लुङ् । सुनोतेत्यत्र 'तप्तनप्तनथनाश्च' इति तस्य तबादेशः । तस्य पित्त्वेन ङित्त्वाभावाद्गुणः ॥ यः इन्द्रः मे मम पृणात् कामान् पूरयेत् यः च ददत् अभीष्टं फलं दद्यात् यः च निबोधात् अस्मदीयं स्तोत्रं यागं वा अवगच्छेत् यः इन्द्रः सुन्वन्तं सोममभिषुण्वन्तं मामस्मभ्यं दातव्यैः गोभिः सह उप[4] आयत्[4] उपागच्छेत् । स इन्द्रः इति पूर्वत्रान्वयः ॥ पृणादित्यादिषु लेट्याडागमः[5] ॥

---

१. क-झ-झ१-म-वनुष्यतिर्हिंसाकर्मा । २. त-थ-पदपूरणः । ३. क-झ-झ१-थ-म-ग्लाने; ण-त-न-व-ग्लामे । ४. ख-ग-झ-ण-थ-म-उपयात् । ५. ग-च-झ१-ण१-न-लेट्यडागमः ।

सर॑स्वति॒ त्वम॒स्माँ अ॑विड्ढि म॒रुत्व॑ती धृष॒ती जे॑षि॒ शत्रू॑न् ।

त्यं चि॒च्छर्ध॑न्तं तविषी॒यमा॑ण॒मिन्द्रो॑ हन्ति वृष॒भं शण्डि॑कानाम् ॥ ८ ॥

सर॑स्वति । त्वम् । अ॒स्मान् । अ॒वि॒ड्ढि॒ । म॒रुत्व॑ती । धृ॒ष॒ती । जे॒षि॒ । शत्रू॑न् ।

त्यम् । चि॒त् । शर्ध॑न्तम् । त॒वि॒षी॒ऽयमा॑णम् । इन्द्रः॑ । ह॒न्ति॒ । वृ॒ष॒भम् । शण्डि॑कानाम् ॥८॥

हे सरस्वति सरणवति देवि त्वमस्मान् स्तोतॄन् अविड्ढि रक्ष ॥ रक्षार्थस्यावतेर्लेटि एतद्रूपम् ॥ तथा मरुत्वती मरुद्भिर्युक्ता । मध्यमस्थाना हि वाक् सरस्वती मरुतश्च मध्यमस्थानस्थाः । अतस्तद्वती सती धृषती धर्षयन्ती शत्रून् शातयितॄन् वैरिणः जेषि जय ॥ जयतेश्छान्दसः शपः श्लुः ॥ किंच अयम् इन्द्रः त्यं चित् तमप्यसुरं हन्ति हतवान् ॥ व्यत्ययेन भूतार्थे लट् ॥ कीदृशम् । शर्धन्तं प्रसहनशीलम् ॥ 'शृधु प्रसहने' ॥ तविषीयमाणम् । तविषी बलमिवाचरन्तं सर्वस्य भञ्जने शक्तम् । शण्डिकानाम् । 'शण्डामर्कावसुरपुरोहितौ' (तै. सं. ६. ४. १०. १) । शण्डवंश्यानां मध्ये वृषभं प्रधानम् ॥

यो नः॒ सनु॑त्य उ॒त वा॑ जिघ॒त्नुर॑भि॒ख्याय॒ तं ति॑गि॒तेन॑ विध्य ।

बृह॑स्पत॒ आयु॑धैर्जेषि॒ शत्रू॑न्द्रुहे रीष॑न्तं॒ परि॑ धेहि राजन् ॥ ९ ॥

यः । न॒ः । सनु॑त्यः । उ॒त । वा॒ । जि॒घ॒त्नुः । अ॒भि॒ऽख्याय॑ । तम् । ति॒गि॒तेन॑ । वि॒ध्य॒ ।

बृह॑स्पते । आयु॑धैः । जे॒षि॒ । शत्रू॑न् । द्रु॒हे । रिष॑न्तम् । परि॑ । धे॒हि॒ । रा॒ज॒न् ॥ ९ ॥

हे बृहस्पते यो नः अस्माकं सनुत्यः । सनुतरित्यन्तर्हितनाम । अन्तर्हिते देशे भवश्चोरः ॥ 'सगर्भसयूथसनुताद्यत्' ॥ उत वा अपि वा यः जिघत्नुः जिघांसुर्भवति । तम् अभिख्याय संवीक्ष्य तिगितेन तीक्ष्णेनायुधेन विध्य ताडय । तथा अस्मदीयान् शत्रून् आयुधैः आयोधनसाधनैः इष्वादिभिः जेषि जय । तथा हे राजन् राजमान बृहस्पते द्रुहे द्रोग्ध्रे शत्रवे रिषन्तं हिंसन्तं वज्रं परि धेहि परितो धारय प्रक्षिपेत्यर्थः ॥

अ॒स्माके॑भिः॒ सत्वा॑भिः शूर॒ शूरै॑र्वी॒र्या॑ कृधि॒ यानि॑ ते॒ कर्त्वा॑नि ।

ज्योग॑भूव॒न्ननु॑धूपितासो ह॒त्वी तेषा॒मा भ॑रा नो॒ वसू॑नि ॥ १० ॥

अ॒स्माके॑भिः । सत्व॑ऽभिः । शू॒र॒ । शूरैः॑ । वी॒र्या॑ । कृ॒धि॒ । यानि॑ । ते॒ । कर्त्वा॑नि ।

ज्योक् । अ॒भू॒व॒न् । अनु॑ऽधूपितासः । ह॒त्वी । तेषा॑म् । आ । भ॒र॒ । न॒ः । वसू॑नि ॥१०॥

हे शूर शौर्यवन्निन्द्र अस्माकेभिः आस्माकीनैः सत्वभिः परेषां सादकैः शूरैः शौर्योपेतैर्भटैः तानि वीर्या वीर्याणि[1] वीरकर्माणि कृधि कुरु यानि ते त्वया कर्त्वानि करणीयानि ॥ 'कृत्यार्थे

१. ण१–'वीर्याणि' नास्ति ।

तवैकेन्०' इति करोतेस्त्वन्प्रत्ययः ॥ ᐯज्योक् चिरकालम् ᐯअनुधूपितासः धूपायमानहृदया मदीयाः शत्रवः ᐯअभूवन् आसन् । ᐯहत्वी तान् हत्वा ॥ ' स्नात्व्यादयश्च ' इतीकारः ॥ ᐯतेषां शत्रूणां ᐯवसूनि धनानि ᐯनः अस्मभ्यम् ᐯआ ᐯभर आहर ॥

तं वः शर्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनम् ।

यथा रयिं सर्ववीरं नशामहा अपत्यसाचं श्रुत्यं दिवेदिवे ॥ ११ ॥

तम् । वः । शर्धम् । मारुतम् । सुम्नऽयुः । गिरा । उप । ब्रुवे । नमसा । दैव्यम् । जनम् ।

यथा । रयिम् । सर्वऽवीरम् । नशामहै । अपत्यऽसाचम् । श्रुत्यम् । दिवेऽदिवे ॥ ११ ॥

हे मरुतः ᐯवः युष्माकं ᐯशर्धं बलं ᐯमारुतं मरुत्समूहरूपं ᐯदैव्यं देवेनेन्द्रेण संबद्धं ᐯजनं प्रादुर्भूतम् एवंगुणविशिष्टं बलं ᐯनमसा नमस्कारेण हविषा वा ᐯगिरा स्तोत्रेण ᐯउप ᐯब्रुवे स्तौमि । ᐯयथा येन प्रकारेण वयं ᐯसर्ववीरं सर्वैर्वीरैः विशेषेण शत्रूणां प्रेरकैर्भटैरुपेतम् ᐯअपत्यसाचम् अपत्यैः अपतनहेतुभूतैः पुत्रादिभिरुपेतं ᐯश्रुत्यं श्रवणीयं प्रशस्यभूतं ᐯरयिं ᐯदिवेदिवे प्रतिदिवसं ᐯनशामहै व्याप्नवाम ॥ नशतिर्व्याप्तिकर्मा । लेट्याडागमः[1] । ' वैतोऽन्यत्र ' इत्यैकारः ॥  ॥ १३ ॥

' अस्माकम् ' इति सप्तर्चं नवमं सूक्तं गृत्समदस्यार्षं वैश्वदेवम् । अन्त्या त्रिष्टुप् शिष्टा जगत्यः । तथा चानुक्रान्तम्—' अस्माकं सप्त वैश्वदेवं त्रिष्टुबन्तम् ' इति । विनियोगो लैङ्गिकः ॥

अस्माकं मित्रावरुणावतं रथमादित्यै रुद्रैर्वसुभिः सचाभुवा ।

प्र यद्वयो न पप्तन्वस्मनस्परि श्रवस्यवो हृषीवन्तो वनर्षदः ॥ १ ॥

अस्माकम् । मित्रावरुणा । अवतम् । रथम् । आदित्यैः । रुद्रैः । वसुऽभिः । सचाऽभुवा ।

प्र । यत् । वयः । न । पप्तन् । वस्मनः । परि । श्रवस्यवः । हृषीवन्तः । वनऽसदः ॥ १ ॥

ᐯमित्रावरुणा हे मित्रावरुणौ ᐯआदित्यैः धात्रर्यमादिभिर्द्वादशभिः ᐯरुद्रैः एकादशसंख्याकैः ᐯवसुभिः धरो[2] ध्रुवः[2] इत्यादिभिरष्टसंख्याकैः एवं त्रिभिर्देवगणैः ᐯसचाभुवा सह भवन्तौ सह वर्तमानौ युवाम् ᐯअस्माकं ᐯरथम् अन्नलाभाय प्रवृत्तम् ᐯअवतम् । ᐯयत् यदा अस्मदीया रथाः ᐯवस्मनस्परि । वसन्त्यस्मिन्निति वस्म निवासस्थानम् । औणादिको मनिन् ॥ तस्मात् स्थानात् परि उपरि देशान्तरे॥ ' पञ्चम्याः परावध्यर्थे ' इति सत्वम् । अध्यर्थ उपर्यर्थ इति वृत्तिः । ᐯवयो ᐯन पक्षिण इव ᐯप्र ᐯपप्तन् प्रपतन्ति प्रकर्षेण गच्छन्ति ॥ पतेश्छान्दसे लुङि लृदित्त्वात् च्लेरङादेशः । ' पतः पुम् ' इति पुमागमः ॥ कीदृशा वयः । ᐯश्रवस्यवः अन्नकामाः । ᐯहृषीवन्तः प्राप्तहर्षाः । ᐯवनर्षदः वने वृक्षादौ निषण्णाः ॥ सांहितिकश्छान्दसो रेफोपजनः ॥

---

१. ख-ग-च-ण१–लेट्यडागमः । २. त-थ–वरो ध्रुवः ।

अध स्मा न उदवता सजोषसो रथं देवासो अभि विक्षु वाजयुम् ।
यदाशवः पद्याभिस्तित्रतो रजः पृथिव्याः सानौ जङ्घनन्त पाणिभिः ॥ २ ॥

अध । स्म । नः । उत् । अवत । सऽजोषसः । रथम् । देवासः । अभि । विक्षु । वाजऽयुम् ।
यत् । आशवः । पद्याभिः । तित्रतः । रजः । पृथिव्याः । सानौ । जङ्घनन्त । पाणिऽभिः ॥२॥

हे Vसजोषसः समानं प्रीयमाणाः Vदेवासः देवाः Vअध अधुना Vनः अस्माकं Vवाजयुं वाजमन्नं कामयमानं गतिविशेषयुक्तं वा Vरथं Vविक्षु प्रजासु जनपदेषु[1] Vअभि[2] अभिमुखम् Vउदवत उदगमयत । अवतिरत्र गत्यर्थः । Vयत् यदा अस्मिन् रथे युक्ताः Vआशवः व्यापनशीला अश्वाः Vपद्याभिः पादसाध्याभिर्गतिभिः Vरजः रञ्जकं मार्गं Vतित्रतः तरन्तः ॥ तरतेः शतरि 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ Vपृथिव्याः प्रथिताया भूमेः Vसानौ समुच्छ्रिते प्रदेशे Vपाणिभिः पाण्युपलक्षितैः पादैः Vजङ्घनन्त अत्यर्थं गच्छन्ति ॥ हन्तेर्यङ्लुगन्तात् छान्दसो लङ् । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति शपो लुगभावः ॥

उत स्य न इन्द्रो विश्वचर्षणिर्दिवः शर्धेन मारुतेन सुक्रतुः ।
अनु नु स्थात्यवृकाभिरूतिभी रथं महे सनये वाजसातये ॥ ३ ॥

उत । स्यः । नः । इन्द्रः । विश्वऽचर्षणिः । दिवः । शर्धेन । मारुतेन । सुऽक्रतुः ।
अनु । नु । स्थाति । अवृकाभिः । ऊतिऽभिः । रथम् । महे । सनये । वाजऽसातये ॥ ३ ॥

Vउत अपि च Vविश्वचर्षणिः विश्वस्य सर्वस्य द्रष्टा यद्वा विश्वे चर्षणयः मनुष्याः यस्य परिचारकाः । अथवा विश्वे सर्वे लोकाश्चर्षणयो द्रष्टव्या येन ॥ 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् ॥ Vमारुतेन मरुत्समूहरूपेण Vशर्धेन बलेन सह Vसुक्रतुः शोभनकर्मा शोभनप्रज्ञो वा Vस्यः सः Vइन्द्रः Vअवृकाभिः हिंसकरहिताभिः Vऊतिभिः रक्षाभिः सहितः सन् Vदिवः द्युलोकात् आगत्य Vनु अद्य Vनः अस्माकं Vरथम् Vअनु Vस्थाति आनुगुण्येनाधितिष्ठतु ॥ छान्दसः शपो लुक् ॥ किमर्थम् । Vमहे Vसनये महते धनाय । तथा Vवाजसातये वाजस्यान्नस्य सातये संभजनार्थम् ॥

उत स्य देवो भुवनस्य सक्षणिस्त्वष्टा ग्नाभिः सजोषा जूजुवद्रथम् ।
इळा भगो बृहद्दिवोत रोदसी पूषा पुरंधिरश्विनावधा पती ॥ ४ ॥

उत । स्यः । देवः । भुवनस्य । सक्षणिः । त्वष्टा । ग्नाभिः । सऽजोषाः । जूजुवत् । रथम् ।
इळा । भगः । बृहत्ऽदिवा । उत । रोदसी इति ।
पूषा । पुरम्ऽधिः । अश्विनौ । अध । पती इति ॥ ४ ॥

---

१. म-जनेषु । २. ण१-'अभि' नास्ति ।

ᵛउत अपि च ᵛस्यः सः ᵛदेवः दानादिगुणयुक्तः ᵛभुवनस्य भूतजातस्य ᵛसक्षणिः सचनीयः सेव्यः ᵛग्नाभिः देवपत्नीभिः । 'छन्दांसि वै ग्नाः' इति तैत्तिरीयकम् । गायत्र्यादीनि छन्दांसि च देवपत्न्यः इत्युक्तम् । ᵛसजोषाः समानप्रीतिः । एवंगुणविशिष्टः ᵛत्वष्टा अस्मदीयं ᵛरथं ᵛजूजुवत् प्रेरयतु ॥ जु इति सौत्रो धातुर्गत्यर्थः । अस्माण्ण्यन्तात् लुङि चङि[1] रूपम् ॥ तथा ᵛइळा तिसृणां देवीनाम् आद्या[2] इडाख्या देवी च रथं प्रेरयतु । ᵛबृहद्दिवा । बृहन्महद्दीव्यति द्योतते इति बृहद्दिवः ॥ इगुपधलक्षणः कः । 'सुपां सुलुक्°' इति विभक्तेराकारः ॥ तादृशः ᵛभगः च प्रेरयतु । ᵛउत अपि च ᵛरोदसी द्यावापृथिव्यौ ᵛपुरंधिः बहुधीः ᵛपूषा पोषको देवश्च ॥ अधशब्दश्चार्थे॥ ᵛपती सूर्याया भर्तारौ ᵛअश्विनौ च एते सर्वेऽस्मदीयं रथं प्रेरयन्त्वित्यर्थः ॥

उ॒त त्ये दे॒वी सु॒भगे॒ मि॑थू॒दृशो॒षासा॒नक्ता॒ जग॑तामपी॒जुवा॑ ।
स्तु॒षे यद्वां॑ पृथिवि॒ नव्य॑सा॒ वचः॑ स्था॒तुश्च॒ वय॒स्त्रिव॑या उप॒स्तिरे॑ ॥ ५ ॥

उ॒त । त्ये इति॑ । दे॒वी इति॑ । सु॒भगे॒ इति॑ सु॒ऽभगे॑ । मि॒थु॒ऽदृशा॑ । उ॒षसा॒नक्ता॑ । जग॑ताम् । अ॒पि॒ऽजुवा॑ ।
स्तु॒षे । यत् । वा॒म् । पृ॒थि॒वि॒ । नव्य॑सा । वच॑ः । स्था॒तुः । च॒ । वय॑ः । त्रिऽव॑याः । उ॒प॒ऽस्तिरे॑ ॥५॥

ᵛउत अपि च ᵛत्ये ते प्रसिद्धे ᵛदेवी देव्यौ देवनशीले ᵛसुभगे शोभनधने ᵛमिथूदृशा मिथः परस्परं पश्यन्त्यौ एवंभूते ᵛउषासानक्ता उषाश्च रात्रिश्च ᵛजगतां जङ्गमानाम् ᵛअपीजुवा[3] प्रेरयित्र्यौ भवतः । तस्मादस्मदीयमपि रथं प्रेरयताम् । उत्तरोऽर्धर्चो द्यावापृथिव्योः प्रत्यक्षकृतः । हे ᵛपृथिवि ᵛवां युवां त्वां दिवं च ᵛनव्यसा नवीयसा नवतरेण प्रशस्येन ᵛवचः वचसा ॥ 'सुपां सुलुक्°' इति तृतीयाया लुक् ॥ ᵛयत् यदा ᵛस्तुषे स्तुवे ॥ उत्तमस्य व्यत्ययेन मध्यमः ॥ तदानीं ᵛस्थातुः स्थावरस्य[4] व्रीह्यादेः संबन्धि ᵛवयः अन्नं चरुपुरोडाशादिलक्षणं ᵛत्रिवयाः । वय इत्यन्ननाम । ओषधिपशुसोमात्मकानि[5] हविर्लक्षणान्यन्नानि यस्य तादृशोऽहम् ᵛउपस्तिरे उपस्तृणे । आज्येनोपस्तरणाभिघारणपूर्वकं प्रयच्छामीत्यर्थः ॥ 'स्तृञ्[6] आच्छादने' । लट्युत्तमे छान्दसो विकरणस्य लुक् । अत्रत्यश्चशब्दः चणिति निपातान्तरं पादपूरणम्[7] । 'ऋत इद्धातोः' इतीत्वम् । 'निपातैर्यद्यदिहन्त°' इति निघातप्रतिषेधः॥

उ॒त वः॒ शंस॑मु॒शिजा॑मिव श्मस्य॒हिर्बु॒ध्न्यो॒३॑ज एक॑पादु॒त ।
त्रि॒त ऋ॑भु॒क्षाः स॑वि॒ता चनो॑ दधे॒ऽपां नपा॑दाशु॒हेमा॑ धि॒या शमि॑ ॥ ६ ॥

उ॒त । वः॒ । शंस॑म् । उ॒शिजा॑म्ऽइव । श्म॒सि॒ । अहि॑ः । बु॒ध्न्य॑ः । अ॒जः । एक॑ऽपात् । उ॒त ।
त्रि॒तः । ऋ॒भु॒क्षाः । स॒वि॒ता । चन॑ः । द॒धे॒ । अ॒पाम् नपा॑त् । आ॒शु॒ऽहेमा॑ । धि॒या । शमि॑ ॥६॥

ᵛउत अपि च हे देवाः ᵛउशिजामिव । इवेति संप्रत्यर्थीयः । अस्मत्तः स्तुतिं कामयमानानां ᵛवः युष्माकं ᵛशंसं स्तुतिं संप्रति ᵛश्मसि उश्मसि कामयामहे ॥ 'वश कान्तौ' । इदन्तो मसिः[8] ।

---

१. ण-थ-व-'चङि' नास्ति । २. ण-थ-साद्या; म-सद्यो । ३. ख-ग-झ१-ण१-व-अपिजुवा । ४. म-स्थावरस्य चरस्य । ५. ख-ग-ण-ओषधयश्च । ६. ख-ग-झ१-ण-ण१-व-स्तृञ् । ७. ख-ग-ण१-पूरणम्; थ-व-पदपूरणम् । ८. ख-ग-झ१-ण१- मसि ।

ग्रहिज्यादिना संप्रसारणम् । छान्दसो वर्णलोपः ॥ ᵛउत अपि च ᵛअहिर्बुध्न्यः । बुध्नमन्तरिक्षम् । तत्र भवः अहिनामा देवः । ᵛअजः ᵛएकपात् । न जायते इत्यजः । एक एव पद्यते गच्छतीत्येकपात् । अज एकपात्संज्ञकः सूर्यः । ᵛत्रितः तीर्णतमः[1] ᵛऋभुक्षाः उरुक्षयः उरुनिवासः ऋभूणां निवासयिता वा इन्द्रश्च ᵛसविता सर्वस्य प्रसविता ᵛचनः अन्नं ᵛदधे विदधातु । अस्मभ्यं करोतु । तथा ᵛआशुहेमा शीघ्रगामी ॥ ' हि गतौ ' इत्यस्मात् ' अन्येभ्योऽपि दृश्यन्ते ' इति मनिन् ॥ तादृशः ᵛअपां ᵛनपात् अपां पौत्रीयस्थानीयोऽग्निः । अद्भ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्यश्चायमग्निर्जायते इत्यग्नेरपां पौत्रत्वम् । स च ᵛधिया स्तुत्या ᵛशमि । शमीति कर्मनाम । यज्ञकर्मणि प्रीतो भवत्विति शेषः । यद्वा धिया कर्मणा अस्मदीयेन परिचरणलक्षणेन शमि शं सुखं तन्निमित्तं भवत्विति शेषः ॥

एता वो॑ व॒श्म्युद्य॑ता यजत्रा॒ अत॑क्षन्ना॒यवो॒ नव्य॑से॒ सम् ।
श्र॒व॒स्यवो॒ वाजं॑ चका॒नाः सप्ति॒र्न रथ्यो॒ अह॑ धी॒तिम॑श्याः ॥ ७ ॥

ए॒ता । वः॒ । व॒श्मि॒ । उत्ऽय॑ता । य॒ज॒त्राः॒ । अत॑क्षन् । आ॒यवः॑ । नव्य॑से । सम् ।
श्र॒व॒स्यवः॑ । वाज॑म् । च॒का॒नाः । सप्तिः॑ । न । रथ्यः॑ । अह॑ । धी॒तिम् । अ॒श्याः॒ ॥ ७ ॥

हे ᵛयजत्राः यजनीया विश्वे देवाः ᵛवः युष्मदीयानि ᵛएता एतानि ᵛउद्यता उद्यतानि वचांसि ᵛवश्मि कामये । ᵛनव्यसे नवतराय स्तुत्यतमाय युष्मद्गणाय ᵛआयवः मत्प्रभृतयो मनुष्याः कामितानि[2] स्तोत्राणि ᵛसम् ᵛअतक्षन् समस्कुर्वन् । किमिच्छन्तः । ᵛश्रवस्यवः श्रवणीयं यशोऽन्नं वा आत्मन इच्छन्तः । ᵛवाजं बलं ᵛचकानाः कामयमानाः ॥ ' कन दीप्तिकान्तिगतिषु ' । लिटः कानच् ॥ ᵛरथ्यः रथसंबन्धी ᵛसप्तिर्न सर्पणशीलोऽश्व इव युष्मद्गणः ᵛधीतिम् अस्मदीयं कर्म ᵛअश्याः प्राप्नोतु ॥ ' अशू व्याप्तौ ' । व्यत्ययेन परस्मैपदमध्यमौ । ' बहुलं छन्दसि ' इति विकरणस्य लुक् ॥ ॥ १४ ॥

' अस्य मे ' इत्यष्टर्चं दशमं सूक्तं गृत्समदस्यार्षं षष्ठ्याद्यास्तिस्रोऽनुष्टुभः । शिष्टाः पञ्च जगत्यः । प्रथमा द्यावापृथिवीया ततो द्वे ऐन्द्र्यौ त्वाष्ट्र्यौ वा । ततो द्वे राकादेवत्ये द्वे सिनीवालीदेवत्ये अन्त्या गुङ्ग्वादिषड्देवताका । तथा चानुक्रान्तम्–' अस्य मेऽष्टौ जागतं त्र्यनुष्टुबन्तम् । द्यावापृथिव्यैका द्वे ऐन्द्र्यौ त्वाष्ट्र्यौ वा द्वे द्वे राकासिनीवाल्योरन्त्या लिङ्गोक्तदेवता ' इति । आभिप्लविके चतुर्थेऽहनि वैश्वदेवशस्त्रे आद्यस्तृचो द्यावापृथिवीयनिविद्धानः । तथा च सूत्रितम्–' अस्य मे द्यावापृथिवी इति तिस्रस्ततं मे अप इति वैश्वदेवम् ' ( आश्व. श्रौ. ७. ७ ) इति ॥

अ॒स्य मे॑ द्यावापृथिवी ऋताय॒तो भू॒तम॑वि॒त्री वच॑सः॒ सिषा॑सतः ।
ययो॒रायुः॑ प्रत॒रं ते इ॒दं पु॒र उप॑स्तुते वसू॒युर्वां॑ म॒हो द॑धे ॥ १ ॥

अ॒स्य । मे॒ । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । ऋ॒त॒ऽय॒तः । भू॒तम् । अ॒वि॒त्री इति॑ । वच॑सः । सिसा॑सतः ।
ययोः॑ । आयुः॑ । प्र॒ऽत॒रम् । ते इति॑ । इ॒दम् । पु॒रः ।
उप॑स्तुते॒ इत्युप॑ऽस्तुते । व॒सु॒ऽयुः । वा॒म् । म॒हः । द॒धे॒ ॥ १ ॥

---

१. क-ङ्ग-ण१-म–विस्तीर्णतमः । २. ख-ग-ण-त-थ–कमितानि ।

द्यावापृथिवी हे द्यावापृथिव्यौ ऋतायतः ऋतं यज्ञमात्मन इच्छतः सिषासतः युवां संभक्तुमिच्छतः अस्य[1] वचसः ॥ वक्तीति वचाः स्तोता । असुन् ॥ स्तोतुः अस्य मे मम अवित्री अवित्र्यौ पालयित्र्यौ भूतं भवतम् । ययोः द्यावापृथिव्योः आयुः अन्नं प्रतरं प्रकृष्टतरम् उत्पद्यते इति शेषः । इदम् इदानीं ते द्यावापृथिव्यौ उपस्तुते तत्र तत्र स्थितैः स्तोतृभिः स्तुते वां युवां वसूयुः धनकामोऽहं महः महतः ॥ विभक्तिव्यत्ययः ॥ महता स्तोत्रेण पुरः दधे पुरस्करोमि ॥

मा नो गुह्या रिप आयोरहन्दभन्मा न आभ्यो रीरधो दुच्छुनाभ्यः ।

मा नो वि यौः सख्या विद्धि तस्य नः सुम्नायता मनसा तत्त्वेमहे ॥ २ ॥

मा । नः । गुह्याः । रिपः । आयोः । अहन् । दभन् । मा । नः । आभ्यः । रीरधः । दुच्छुनाभ्यः ।

मा । नः । वि । यौः । सख्या । विद्धि । तस्य । नः । सुम्नऽयता । मनसा । तत् । त्वा । ईमहे ॥२॥

हे इन्द्र त्वष्टर्वा आयोः मनुष्यस्य शत्रुभूतस्य गुह्याः गोप्याः ज्ञातुमशक्याः रिपः हिंसारूपा मायाः नः अस्मान् अहन् । उपलक्षणमेतत् । अहनि रात्रौ च मा दभन् मा हिंसिषुः । तथा नः अस्मान् आभ्यः दुच्छुनाभ्यः । शुनमिति सुखनाम । दुःशुनाः दुच्छुनाः । दुःखकारिणीभ्यः शत्रुसेनाभ्यः[2] मा रीरधः वशं मा नैषीः ॥ 'रध्यतिर्वशगमने' इति यास्कः । 'रध हिंसासंराद्ध्योः'। अस्माण्ण्यन्तात् लुङि चङि रूपम् ॥ अपि च नः अस्माकं सख्या सख्यानि सखित्वानि मा वि यौः त्वया वियुक्तानि मा कार्षीः । अपि तु नः अस्माकं तस्य तत्सखित्वं सुम्नायता सुखमस्माकमिच्छता मनसा विद्धि जानीहि ॥ 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥ तत् त्वा तादृशं त्वाम् ईमहे अभिमतफलं याचामहे ॥ 'सुपां सुलुक्०' इति तच्छब्दात् उत्तरस्या विभक्तेर्लुक् ॥

अहेळता मनसा श्रुष्टिमा वह दुहानां धेनुं पिप्युषीमसश्चतम् ।

पद्याभिराशुं वचसा च वाजिनं त्वां हिनोमि पुरुहूत विश्वहा ॥ ३ ॥

अहेळता । मनसा । श्रुष्टिम् । आ । वह । दुहानाम् । धेनुम् । पिप्युषीम् । असश्चतम् ।

पद्याभिः । आशुम् । वचसा । च । वाजिनम् । त्वाम् । हिनोमि । पुरुऽहूत । विश्वहा ॥३॥

हे इन्द्र त्वष्टर्वा अहेळता अक्रुध्यता मनसा श्रुष्टिं सुखकरीं दुहानां दोग्ध्रीं पिप्युषीं प्रवृद्धां पीनाम् ॥ 'प्यायी वृद्धौ' । लिटः क्वसुः । 'लिड्यङोश्च' इति पीभावः । 'उगितश्च' इति ङीप् । 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ॥ असश्चतम् असक्तावयवाम् एवंभूतां धेनुं गाम् आ वह आभिमुख्येन प्रापय । अपि च हे पुरुहूत बहुभिराहूतेन्द्र त्वष्टर्वा पद्याभिः पादगतिभिः आशुं व्यापनशीलं वचसा वाचा च वाजिनं वेगवन्तं त्वां विश्वहा सर्वेष्वहःसु हिनोमि स्तुतिभिः प्रेरयामि ॥ 'हि गतौ वृद्धौ च' ॥

---

१. क-झ-झ१-ण-त-थ-न-म-व–'अस्य' नास्ति । २. क-ज-झ-त-थ-म-व–शत्रुसेनाभ्यः नोऽस्मान्; ख-ग–'शत्रुसेनाभ्यः' नास्ति; झ-१-न– अस्मान्; ण–नोऽस्मान् ।

पत्नीसंयाजेषु गृहपतेः प्राक् राकासिनीवाल्यौ यष्टव्ये । तत्र राकायागस्य 'राकामहम्' इत्यादिके याज्यानुवाक्ये । सूत्रितं च—'राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये' (आश्व. श्रौ. १. १०) इति । तथा आग्निमारुतेऽप्येते धाय्ये । सूत्रितं च—'राकामहमिति द्वे' (आश्व. श्रौ. ५. २०) इति ॥

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ ४ ॥

राकाम् । अहम् । सुऽहवाम् । सुऽस्तुती । हुवे । शृणोतु । नः । सुऽभगा । बोधतु । त्मना ।
सीव्यतु । अपः । सूच्या । अच्छिद्यमानया । ददातु । वीरम् । शतऽदायम् । उक्थ्यम् ॥४॥

संपूर्णचन्द्रा पौर्णमासी राका । तां देवीं ᵛसुहवां स्वाह्वानाम् आह्वानप्रयोजनकारिणीं ᵛसुष्टुती शोभनया स्तुत्या ᵛअहं ᵛहुवे आह्वयामि ॥ सुष्टुतिशब्दात् तृतीयैकवचनस्य 'सुपां सुलुक्०' इति पूर्वसवर्ण ईकारः ॥ सा च ᵛसुभगा शोभनधना ᵛनः अस्माकमाह्वानं ᵛशृणोतु । श्रुत्वा च ᵛत्मना आत्मना स्वयमेव ᵛबोधतु अस्मदभिप्रायं बुध्यताम् । बुद्ध्वा च ᵛअपः कर्म पुत्रोत्पादनलक्षणं ᵛसूच्या सूचीस्थानीयया ᵛअच्छिद्यमानया अविच्छिन्नया अनुग्रहबुद्ध्या ᵛसीव्यतु संतनोतु । यथा वस्त्रादिकं सूच्या स्यूतं चिरं तिष्ठति एवमिदं करोतु । कृत्वा च ᵛवीरं विक्रान्तं ᵛशतदायं बहुधनं बहुप्रदं वा ᵛउक्थ्यं प्रशस्यं पुत्रं ᵛददातु ॥

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ ५ ॥

याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि । दाशुषे । वसूनि ।
ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि । सहस्रऽपोषम् । सुऽभगे । रराणा ॥ ५ ॥

हे ᵛराके देवि ᵛसुपेशसः शोभनरूपाः ᵛते तव ᵛयाः ᵛसुमतयः शोभना[1] बुद्धयः[1] ᵛयाभिः मतिभिः ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛवसूनि धनानि ᵛददासि प्रयच्छसि । ᵛअद्य इदानीं ᵛताभिः मतिभिः सहिता त्वं ᵛसुमनाः शोभनमना भूत्वा ᵛउपागहि उपागच्छ ॥ गमेश्छान्दसः शपो लुक् । 'अनुदात्तोपदेश०' इत्यादिना अनुनासिकलोपः । 'असिद्धवदत्राभात्' इत्यस्यासिद्धत्वात् हेर्लुगभावः ॥ किं कुर्वती । हे ᵛसुभगे शोभनधने ᵛसहस्रपोषं सहस्रसंख्याकस्य धनस्य पुष्टिं ᵛरराणा ददती ॥ 'रा दाने' । व्यत्ययेन शानच् । छान्दसः शपः श्लुः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

सिनीवाल्या यागे 'सिनीवालि' इत्यादिके द्वे याज्यानुवाक्ये । सूत्रं पूर्वमुदाहृतम् । तत्रानुवाक्या ॥

---

१. झ१-थ-शोभनबुद्धयः ।

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ ६ ॥

सिनीवालि । पृथुऽस्तुके । या । देवानाम् । असि । स्वसा ।
जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥ ६ ॥

दृष्टचन्द्रा अमावास्या सिनीवाली । हे ᵛसिनीवालि ᵛपृथुष्टुके पृथुजघने पृथुसंहते वा ᵛया त्वं ᵛदेवानां ᵛस्वसा ᵛअसि स्वयंसारिणी[1] भगिनी वा भवसि सा त्वम् ᵛआहुतम् आभिमुख्येनाग्नौ प्रक्षिप्तं ᵛहव्यम् अस्मदीयं हविः ᵛजुषस्व सेवस्व । किं च हे ᵛदेवि सिनीवालि ᵛनः अस्माकं ᵛप्रजां पुत्रादिकां ᵛदिदिड्ढि उपचिनु अतिसर्जय वा । देहीत्यर्थः ॥ ' दिह उपचये ' । लोटि छान्दसः शपः श्लुः । ' दिश अतिसर्जने ' इत्यस्मात् वा ॥

या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।
तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ ७ ॥

या । सुऽबाहुः । सुऽअङ्गुरिः । सुऽसूमा । बहुऽसूवरी ।
तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ ७ ॥

ᵛया सिनीवाली ᵛसुबाहुः शोभनबाहुः ᵛस्वङ्गुरिः शोभनाङ्गुलिः ᵛसुषूमा सुष्ठु प्रसवित्री ॥ ' षूङ् प्राणिप्रसवे ' । ' अन्येभ्योऽपि दृश्यन्ते ' इति मनिन् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ᵛबहुसूवरी बह्वीनां प्रजानां सवित्री ॥ तेनैव सूत्रेण क्वनिप् । ' वनोर च ' इति ङीब्रेफौ । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ᵛतस्यै ᵛसिनीवाल्यै ᵛविश्पत्न्यै विशां पालयित्र्यै ॥ ' विभाषा सपूर्वस्य ' इति पत्युर्नकारान्तादेशः । अयस्मयादित्वेन भत्वात् विशो जश्त्वाभावः । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । हे ऋत्विग्यजमानाः ᵛहविः ᵛजुहोतन जुहुत ॥ ' तप्तनप्तनथनाश्च ' इति तनबादेशः ॥

या गुङ्गूर्या सिनीवाली या राका या सरस्वती ।
इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥ ८ ॥

या । गुङ्गूः । या । सिनीवाली । या । राका । या । सरस्वती ।
इन्द्राणीम् । अह्वे । ऊतये । वरुणानीम् । स्वस्तये ॥ ८ ॥

अत्र[2] गुङ्गूशब्देन राकासिनीवाल्योः साहचर्यात् कुहूरुच्यते[2] । ᵛया ᵛगुङ्गूः कुहूः[3] ताम् ᵛअह्वे आह्वयामि[4] । एवमुत्तरत्रापि[5] योज्यम्[5] । ᵛइन्द्राणीम् इन्द्रस्य पत्नीम् ᵛऊतये रक्षणार्थमह्वे आह्वयामि ।

---

१. क-ञ-थ-म-स्वयंसंचारिणी । २. ख-ण१-थ-' अत्र... कुहूरुच्यते ' इत्येतन्नास्ति । ३. क-ञ-ञ१-ण-त-न-म-व-' कुहूः ' नास्ति । ४. ख-आह्वयामि । या सिनीवाली या राका या सरस्वती साः (ताः) एताः अह्वे; थ-आह्वयामि । सिनीवाली या राका या सरस्वती ताः एताः अह्वे । ५. ख-थ-' एवमुत्तरत्रापि योज्यम् ' नास्ति ।

तथा वरुणानीं वरुणस्य पत्नीं स्वस्तये अविनाशाय आह्वयामि ॥ 'इन्द्रवरुण°' इत्यादिना ङीष् आनुगागमश्च ॥ ॥ १५ ॥ ॥ ३ ॥

चतुर्थेऽनुवाके एकादश सूक्तानि । तत्र 'आ ते पितः' इति पञ्चदशर्चं प्रथमं सूक्तं गृत्समदस्यार्षं त्रैष्टुभं रौद्रम् । अनुक्रान्तं च—'आ ते पञ्चोना रौद्रम्' इति । शूलगवादिरुद्रयज्ञेषु अनेन सूक्तेन प्रतीची दिगुपस्थेया । सूत्रितं च—'कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम्' (आश्व. गृ. ४. ८. २३) इति । रुद्रदेवत्ये पशौ 'आ ते पितः' इति हविषोऽनुवाक्या । सूत्रितं च—'आ ते पितर्मरुतां सुम्नमेतु प्र बभ्रवे वृषभाय श्वितीच इति तिस्रः' (आश्व. श्रौ. ३. ८) इति । अत्र शौनकः–'चतुर्दशीमुपोष्यैकां[1] कृष्णस्य जुहुयाच्चरुम्[1] । आतेसूक्तेन रौद्रेण प्रत्यृचं वाग्यतः शुचिः ॥ पूर्वमाज्याहुतीर्हुत्वाथोपस्थाय[2] च[2] शंकरम् । हविःशेषेण वर्तेत एकान्तरमतन्द्रितः[3] । पूर्णमासे[4] जयेन्मृत्युं रोगैश्च परिमुच्यते' (ऋग्वि. १. १६८-१७०) इति ॥

**आ ते॑ पितर्मरुतां सु॒म्नमे॑तु॒ मा नः॒ सूर्य॑स्य सं॒दृशो॑ युयोथाः ।**

**अ॒भि नो॑ वी॒रो अर्व॑ति क्षमेत॒ प्र जा॑येमहि रुद्र प्र॒जाभिः॑ ॥ १ ॥**

आ । ते॒ । पि॒त॒रिति॑ । म॒रु॒ता॒म् । सु॒म्नम् । ए॒तु॒ । मा । नः॒ । सूर्य॑स्य । स॒म्ऽदृशः॑ । यु॒यो॒थाः॒ ।

अ॒भि । नः॒ । वी॒रः । अर्व॑ति । क्ष॒मे॒त॒ । प्र । जा॒ये॒म॒हि॒ । रु॒द्र॒ । प्र॒ऽजाभिः॑ ॥ १ ॥

हे मरुतां पितः मरुत्संज्ञानां देवानामुत्पादक रुद्र ॥ 'परमपि छन्दसि' इति षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावात् सर्वानुदात्तत्वम् ॥ ते त्वदीयमस्मभ्यं दातव्यं सुम्नं सुखम् आ एतु आगच्छतु । रुद्रस्य च मरुतां पितृत्वम् 'इदं पित्रे मरुताम्' (ऋ. सं. १. ११४. ६) इत्यत्राख्यायिकामुखेनावादिष्म । तथा त्वं नः अस्मान् सूर्यस्य संदृशः संदर्शनात् मा युयोथाः मा पृथक्कार्षीः ॥ 'यु मिश्रणामिश्रणयोः' । लङि छान्दसः शपः श्लुः । 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन ङित्त्वाभावात् गुणः ॥ अर्वति शत्रौ । 'भ्रातृव्यो वा अर्वा' (तै. सं. ६. ३. ८. ४) इति श्रुतेः । नः अस्माकं वीरः वीर्यवान् पुत्रादिः[5] अभि क्षमेत अभिभवतु । यद्वा वीरस्त्वं नोऽस्मानभिक्षमेथाः अस्मान् कृतापराधानभिक्षमस्व । हे रुद्र प्रजाभिः पुत्रपौत्रादिभिः प्र जायेमहि प्रभूताः स्याम ॥

**त्वाद॑त्तेभी रुद्र॒ शंत॑मेभिः श॒तं हिमा॑ अशीय भेष॒जेभिः॑ ।**

**व्य१॒॑स्मद्द्वेषो॑ वित॒रं व्यंहो॒ व्यमी॑वाश्चातयस्वा॒ विषू॑चीः ॥ २ ॥**

त्वाऽद॑त्तेभिः । रु॒द्र॒ । शम्ऽत॑मेभिः । श॒तम् । हिमाः॑ । अ॒शी॒य॒ । भे॒ष॒जेभिः॑ ।

वि । अ॒स्मत् । द्वेषः॑ । वि॒ऽत॒रम् । वि । अंहः॑ । वि । अमी॑वाः । चा॒त॒य॒स्व॒ । विषू॑चीः ॥ २ ॥

---

१. क-झ-झ१-ण-न–चतुर्दश्यामुपोष्यैकं कृष्णस्य जुहुयाच्छतम्; त–चतुर्दश्यामुपोष्यैकं कृष्ण जुहुयाच्चतम्; थ–चतुर्दश्यामुपोष्यैकं कृष्ण जुहुयाच्चरुम्; म–कृष्णचतुर्दश्यामुपोष्यैकां कृष्णस्य जुहुयाद्घृतम्; व–चतुर्दश्यामुपोष्यैकं कृष्णस्य जुहुयात्सतम् । २. म-°र्हुत्वा अथोपस्थाय । ३. क-त-थ-म–नैकान्तर°; झ–मैकान्तर° ; झ१–नेकान्तर° । ४. झ–पूर्णमासैः; झ१–पौर्णमासे; ण-न–पूर्णमास । ५. ण-त-थ–पुत्रो हि ।

हे ᵛरुद्र ᵛत्वादत्तेभिः त्वया दत्तैः ᵛशंतमेभिः अतिशयेन सुखकरैः ᵛभेषजेभिः भेषजैरौषधैः ᵛशतं ᵛहिमाः शतं हेमन्तान् शतसंवत्सरान्[1] ᵛअशीय व्याप्नुयाम् ॥ अश्नोतेर्लिङि छान्दसो विकरणस्य लुक् ॥ अपि च ᵛअस्मत् अस्मत्तः ᵛद्वेषः द्वेष्टॄन् ᵛवि[2] ᵛचातयस्व विनाशय । तथा ᵛअंहः पापं ᵛवितरम् अत्यन्तं विचातयस्व । ᵛअमीवाः रोगान् ᵛविषूचीः विषु* नाना अञ्चतीः कृत्स्नशरीरव्यापकान् रोगान् विचातयस्व अस्मत्तः पृथक्कृत्य विनाशय[2] ॥

**श्रेष्ठो॑ जा॒तस्य॑ रुद्र श्रि॒यासि॑ त॒वस्त॑मस्त॒वसां॑ वज्रबाहो ।**

**पर्षि॑ णः पा॒रमंह॑सः स्व॒स्ति विश्वा॑ अ॒भीती॒ रप॑सो युयोधि ॥ ३ ॥**

श्रेष्ठः॑ । जा॒तस्य॑ । रु॒द्र॒ । श्रि॒या । अ॒सि॒ । त॒वः॒ऽत॑मः । त॒वसा॑म् । व॒ज्र॒बा॒हो॒ इति॑ वज्रऽबाहो ।

पर्षि॑ । न॒ः । पा॒रम् । अंह॑सः । स्व॒स्ति । विश्वाः॑ । अ॒भिऽई॑तीः । रप॑सः । यु॒यो॒धि॒ ॥ ३ ॥

हे ᵛरुद्र ᵛजातस्य उत्पन्नस्य सर्वस्य जगतो मध्ये ᵛश्रिया ऐश्वर्येण ᵛश्रेष्ठः प्रशस्यतमः ᵛअसि भवसि । तथा हे ᵛवज्रबाहो आयुधहस्त रुद्र ᵛतवसां प्रवृद्धानां मध्ये ᵛतवस्तमः अतिशयेन प्रवृद्धोऽसि । स त्वं ᵛनः अस्मान् ᵛअंहसः पापस्य ᵛपारं तीरं ᵛस्वस्ति क्षेमेण ᵛपर्षि पारय । तथा ᵛरपसः पापस्य ᵛविश्वाः सर्वाः ᵛअभीतीः अभिगमनानि ᵛयुयोधि पृथक्कुरु ॥ यौतेश्छान्दसः शपः श्लुः । 'वा छन्दसि' इति अपित्त्वस्य विकल्पनात् ङित्त्वाभावे 'अङितश्च' इति हेर्धिः ॥

**मा त्वा॑ रुद्र चुक्रुधामा॒ नमो॑भि॒र्मा दुष्टु॑ती वृषभ॒ मा सहू॑ती ।**

**उन्नो॑ वी॒राँ अ॑र्पय भेष॒जेभि॑र्भि॒षक्त॑मं त्वा भि॒षजां॑ शृणोमि ॥ ४ ॥**

मा । त्वा॒ । रु॒द्र॒ । चु॒क्रु॒धा॒म॒ । नमः॑ऽभिः । मा । दुः॒ऽस्तु॑ती । वृ॒ष॒भ॒ । मा । सऽहू॑ती ।

उत् । न॒ः । वी॒रान् । अ॒र्प॒य॒ । भे॒ष॒जेभिः॑ । भि॒षक्ऽत॑मम् । त्वा॒ । भि॒षजा॑म् । शृ॒णो॒मि॒ ॥४॥

हे ᵛरुद्र ᵛत्वा त्वां ᵛनमोभिः अयथाक्रियमाणैर्नमस्कारैर्हविर्भिर्वा ᵛमा ᵛचुक्रुधाम मा क्रोधयाम क्रुद्धं मा कार्ष्म ॥ 'क्रुध कोपे' । अस्माण्ण्यन्तात् लुङि चङि[3] रूपम् ॥ हे ᵛवृषभ कामानां वर्षितः ᵛदुष्टुती दुःस्तुत्या अशोभनया स्तुत्या ᵛमा चुक्रुधामेत्येव । तथा ᵛसहूती सहूत्या विसदृशैरन्यैर्देवैः सहाह्वानेन ᵛमा क्रोधयाम । श्रेष्ठो हि स्वस्मान्न्यूनेन सहाह्वाने क्रुद्धो भवति । स त्वं ᵛनः अस्माकं ᵛवीरान् पुत्रान् ᵛभेषजेभिः त्वदीयैर्भेषजैरौषधैः ᵛउत् ᵛअर्पय उत्कृष्टं संयोजय । हे रुद्र ᵛत्वा त्वां ᵛभिषजां चिकित्साभिज्ञानां मध्ये ᵛभिषक्तमम् अतिशयेन भैषज्यस्य कर्तारं ᵛशृणोमि । 'प्रथमो दैव्यो भिषक्' ( तै. सं. ४. ५. १. २; वा. सं. १६. ५ ) इति च मन्त्रान्तरेऽप्युक्तम् ॥

---

१. क-ञ-शतं संवत्सरान् । २. ञ१-' विचातयस्व पृथक्कुरु । अंहः पापं च वितर दूरतरं कुरु । अमीवाः राक्षसान् विषूचीः नानादिग्गतान् । * ख-ण१-विष्वक् । ३. ण-त-' चङि ' नास्ति ।

हवींमभिर्हवंते यो हविर्भिरव स्तोमेंभी रुद्रं दिंषीय ।

ऋदूदरः सुहवो मा नों अस्यै बभ्रुः सुशिप्रो रीरधन्मनायैं ॥ ५ ॥

हवींमऽभिः । हवंते । यः । हविःऽभिंः । अवं । स्तोमेंभिः । रुद्रम् । दिषीय ।

ऋदूदरः । सुऽहवंः । मा । नः । अस्यै । बभ्रुः । सुऽशिप्रंः । रीरधत् । मनायैं ॥ ५ ॥

ᵛयः रुद्रः ᵛहविर्भिः चरुपुरोडाशादिभिः सहितैः ᵛहवीमभिः आह्वानैः स्तुतिलक्षणैः ᵛहवते आहूयते स्तूयते ॥ व्यत्ययेन कर्मणि कर्तृप्रत्ययः । 'बहुलं छन्दसि' इति ह्वयतेः संप्रसारणम् ॥ तं ᵛरुद्रं ᵛस्तोमेभिः स्तोत्रैः ᵛअव ᵛदिषीय अवखण्डयामि पृथक्करोमि । अपगतक्रोधं करोमीति यावत् ॥ 'दो अवखण्डने'। व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इतीत्वम् ॥ ᵛऋदूदरः । 'ऋदूदरो मृदूदरः' ( निरु. ६. ४ ) इति यास्कः । ᵛसुहवः शोभनाह्वानः ᵛबभ्रुः भर्ता सर्वस्य बभ्रुवर्णो वा । ᵛसुशिप्रः । शिप्रे हनू नासिके वा । शोभनशिप्रः । एवंगुणविशिष्टः स रुद्रः ᵛअस्यै ᵛमनायै । हन्मीति मन्यमाना बुद्धिर्मना । तस्यै ᵛनः अस्मान् ᵛमा ᵛरीरधत् मा वशं नैषीत् ॥ 'रध हिंसासंराद्धयोः'। अस्माण्ण्यन्तात् लुङि चङि रूपम् । 'रध्यतिर्वशगमने' इति यास्कः ॥ १६ ॥

उन्मां ममन्द वृषभो मरुत्वान्त्वक्षींयसा वयंसा नाधंमानम् ।

घृणींव च्छायामरपा अंशीया विंवासेयं रुद्रस्यं सुम्नम् ॥ ६ ॥

उत् । मा । ममन्द । वृषभः । मरुत्वान् । त्वक्षींयसा । वयंसा । नाधंमानम् ।

घृणिंऽइव । छायाम् । अरपाः । अशीय । आ । विवासेयम् । रुद्रस्यं । सुम्नम् ॥ ६ ॥

ᵛवृषभः कामानां वर्षिता ᵛमरुत्वान् मरुद्भिः पुत्रैर्युक्तो रुद्रः ᵛनाधमानं याचमानं ᵛमा मां ᵛत्वक्षीयसा दीप्तेन ᵛवयसा अन्नेन ᵛउत् ᵛममन्द उत्कर्षेण तर्पयतु । अपि चाहं ᵛघृणीव ᵛछायां यथा सूर्यकिरणसंतप्तः छायां प्रविशति एवं ᵛरुद्रस्य ᵛसुम्नं सुखम् ᵛअरपाः अपापः सन् ᵛअशीय व्याप्नुयाम् । तदर्थं तं रुद्रम् ᵛआ ᵛविवासेयं परिचरेयम् । विवासतिः परिचरणकर्मा ॥

क्वं१ स्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः ।

अपभर्ता रपसो दैव्यस्याभी नु मां वृषभ चक्षमीथाः ॥ ७ ॥

क्वं । स्यः । ते । रुद्र । मृळयाकुः । हस्तः । यः । अस्ति । भेषजः । जलाषः ।

अपऽभर्ता । रपसः । दैव्यस्य । अभि । नु । मा । वृषभ । चक्षमीथाः ॥ ७ ॥

हे ᵛरुद्र ᵛते तव ᵛमृळयाकुः सुखयिता ᵛस्यः सः ᵛहस्तः ᵛक्व कुत्र वर्तते । ᵛयः हस्तः ᵛभेषजः भैषज्यकृत् ᵛजलाषः सर्वेषां सुखकरः ᵛअस्ति भवति । स हस्तो विद्यते एव । तेन हस्तेन मां रक्षेति

भावः । अपि च हे ᵛवृषभ कामानां वर्षितः ᵛदैव्यस्य देवकृतस्य ᵛरपसः पापस्य ᵛअपभर्ता अपहर्ता विनाशयिता भूत्वा कृतापराधं ᵛमा[1] मां ᵛनु क्षिप्रम् ᵛअभि ᵛचक्षमीथाः अभिक्षमस्व ॥ 'क्षमूष् सहने'। लङि छान्दसः शपः श्लुः । 'बहुलं छन्दसि' इतीडागमः ॥

रुद्रदेवत्ये पशौ वपापुरोडाशहविषां क्रमेण 'प्र बभ्रवे' इत्याद्यास्तिस्रो याज्याः । 'प्र बभ्रवे वृषभाय श्वितीच इति तिस्र आ पश्चातान्नासत्या पुरस्तात्' ( आश्व. श्रौ. ३. ८ ) इति ॥

प्र ब॒भ्रवे॑ वृष॒भाय॑ श्विती॒चे म॒हो म॒हीं सु॑ष्टु॒तिमी॑रयामि ।
न॒म॒स्या क॑ल्मली॒किनं॒ नमो॑भिर्गृणी॒मसि॑ त्वे॒षं रु॒द्रस्य॒ नाम॑ ॥ ८ ॥

प्र । ब॒भ्रवे॑ । वृ॒ष॒भाय॑ । श्विती॒चे । म॒हः । म॒हीम् । सु॒ऽस्तु॒तिम् । ई॒र॒या॒मि ।
न॒म॒स्य । क॒ल्म॒ली॒किन॑म् । नमः॑ऽभिः । गृ॒णी॒मसि॑ । त्वे॒षम् । रु॒द्रस्य॑ । नाम॑ ॥ ८ ॥

ᵛबभ्रवे विश्वस्य भर्त्रे बभ्रुवर्णाय वा ᵛवृषभाय कामानां वर्षित्रे तद्वत्प्रसह्यकारिणे वा ᵛश्वितीचे श्वैत्यमञ्चते ॥ 'श्विता वर्णे[2]'। औणादिक इन्प्रत्ययः । श्वितिमञ्चतीत्यञ्चतेः 'ऋत्विक्॰' इत्यादिना क्विन् । चतुर्थ्येकवचने 'अचः' इत्यकारलोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण विभक्ते-रुदात्तत्वम् ॥ एवंगुणविशिष्टाय रुद्राय ᵛमहो ᵛमहीं महतोऽपि महतीं ᵛसुष्टुतिं शोभनस्तुतिं ᵛप्र ᵛईरयामि प्रकर्षेणोच्चारयामि । हे स्तोतः ᵛकल्मलीकिनम् । ज्वलतो नामधेयमेतत् ( नि. १. १७ ) । ज्वलन्तम् । कलयति अपगमयति मलमिति कल्मलीकं तेजः । तद्वन्तं रुद्रं ᵛनमोभिः नमस्कारैः हविर्भिर्वा ᵛनमस्य पूजय । वयं च ᵛरुद्रस्य महादेवस्य ᵛत्वेषं दीप्तं ᵛनाम ᵛगृणीमसि गृणीमः संकीर्त-यामः ॥ 'गॄ शब्दे'। क्रैयादिकः । इदन्तो मसिः । 'प्वादीनां ह्रस्वः' ॥

स्थि॒रेभि॒रङ्गैः॑ पुरु॒रूप॑ उ॒ग्रो ब॒भ्रुः शु॒क्रेभिः॑ पिपिशे॒ हिर॑ण्यैः ।
ईशा॑नाद॒स्य भुव॑नस्य॒ भूरे॒र्न वा उ॑ योषद्रु॒द्राद॑सु॒र्य॑म् ॥ ९ ॥

स्थि॒रेभिः॑ । अङ्गैः॑ । पु॒रु॒ऽरूपः॑ । उ॒ग्रः । ब॒भ्रुः । शु॒क्रेभिः॑ । पि॒पि॒शे॒ । हिर॑ण्यैः ।
ईशा॑नात् । अ॒स्य । भुव॑नस्य । भूरेः॑ । न । वै । ऊँ इति॑ । यो॒ष॒त् । रु॒द्रात् । अ॒सु॒र्य॑म् ॥९॥

ᵛस्थिरेभिः स्थिरैः दृढैः ᵛअङ्गैः अवयवैर्युक्तः ᵛपुरुरूपः अष्टमूर्त्यात्मकैर्बहुभी रूपैरुपेतः ᵛउग्रः उद्गूर्णस्तेजस्वी ᵛबभ्रुः भर्ता बभ्रुवर्णो वा रुद्रः ᵛशुक्रेभिः दीप्तैः ᵛहिरण्यैः हिरण्मयैर्हितरमणीयैर्वालंकारैः ᵛपिपिशे दीप्यते ॥ 'पिश अवयवे'। कर्मणि लिट् ॥ ᵛईशानात् ईश्वरात् ᵛअस्य ᵛभुवनस्य भूत-जातस्य ᵛभूरेः भर्तुः ᵛरुद्रात् ᵛअसुर्यम् ॥ 'असु क्षेपणे'। असेरुरन् । असुरः क्षेप्ता । 'तत्र साधुः'॥ असुर्यं बलं ᵛन ᵛवा ᵛउ ᵛयोषत् नैव पृथक् भवति ॥ यौतेर्लेट्यडागमः । 'सिब्बहुलं लेटि' इति सिप् ॥

१. क-ज्ञ-ण-थ-व-'मा' नास्ति । २. क-ज्ञ-ण-त-थ-न-म-वर्णे च; व-वर्णे वर्णे च ।

अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥ १० ॥

अर्हन् । बिभर्षि । सायकानि । धन्व । अर्हन् । निष्कम् । यजतम् । विश्वऽरूपम् ।
अर्हन् । इदम् । दयसे । विश्वम् । अभ्वम् । न । वै । ओजीयः । रुद्र । त्वत् । अस्ति ॥ १० ॥

हे रुद्र त्वम् ᵛअर्हन् अर्हो योग्य एव सन् ᵛसायकानि शरान् ᵛधन्व धनुश्च ᵛबिभर्षि धारयसि । तथा ᵛअर्हन् एव ᵛयजतं यजनीयं पूजनीयं[1] ᵛविश्वरूपं बहुविधरूपयुक्तं ᵛनिष्कं हारं बिभर्षि । तथा ᵛअर्हन् एव ᵛइदं ᵛविश्वं सर्वम् ᵛअभ्वम् । महन्नामैतत् । अतिविस्तृतं जगत् ᵛदयसे रक्षसि । 'देङ् रक्षणे' । हे ᵛरुद्र ᵛत्वत् त्वत्तोऽन्यत् किंचित् ᵛओजीयः ओजस्वितरं बलवत्तरं ᵛन ᵛवै ᵛअस्ति न खलु विद्यते । अतस्त्वमेव उक्तव्यापारेषु योज्य इत्यर्थः ॥ ओजःशब्दात् मत्वर्थीयो विनिः । ततः आतिशायनिकः इष्ठन् । 'विन्मतोर्लुक्' । 'टेः' इति टिलोपः ॥ ॥ १७ ॥

प्रयाणे मृगस्य अमनोज्ञवचः श्रुत्वा 'स्तुहि श्रुतम्' इत्येतां जपेत् । सूत्रितं च—'स्तुहि श्रुतं गर्तसदं युवानमिति मृगस्य' ( आश्व. गृ. ३. १०. १० ) इति ॥

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ ११ ॥

स्तुहि । श्रुतम् । गर्तऽसदम् । युवानम् । मृगम् । न । भीमम् । उपऽहत्नुम् । उग्रम् ।
मृळ । जरित्रे । रुद्र । स्तवानः । अन्यम् । ते । अस्मत् । नि । वपन्तु । सेनाः ॥ ११ ॥

हे स्तोतः ᵛश्रुतं विश्रुतं प्रख्यातं रुद्रं ᵛस्तुहि । कीदृशम् ᵛगर्तसदं गर्तो रथः । तत्र सीदन्तं ᵛयुवानं नित्यतरुणं ᵛमृगं ᵛन ᵛभीमं मृगं सिंहमिव भयंकरम् । ᵛउपहत्नुम् उपहन्तारं शत्रूणाम् ᵛउग्रम् उद्गूर्णं हे ᵛरुद्र त्वं ᵛस्तवानः अस्माभिः स्तूयमानः सन् ᵛजरित्रे स्तोत्रे मह्यं ᵛमृळ सुखय । ᵛते त्वदीयाः ᵛसेनाः ᵛअस्मत् ᵛअन्यम् अस्मद्व्यतिरिक्तं पुरुषं ᵛनि ᵛवपन्तु निघ्नन्तु ॥

कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् ।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥ १२ ॥

कुमारः । चित् । पितरम् । वन्दमानम् । प्रति । ननाम । रुद्र । उपऽयन्तम् ।
भूरेः । दातारम् । सत्ऽपतिम् । गृणीषे । स्तुतः । त्वम् । भेषजा । रासि । अस्मे इति ॥ १२ ॥

---

१. क-ख-झ-ण-ण१-म-व—'पूजनीयं' नास्ति ।

ᵛवन्दमानम् आयुष्मान्भव सौम्य इति स्तुवन्तं ᵛपितरं ᵛकुमारश्चित् यथा कुमारः ॥ चिदित्ये-तदुपमार्थे ॥ हे ᵛरुद्र ᵛउपयन्तम् अस्मत्समीपे गच्छन्तं त्वां ᵛप्रति ᵛननाम प्रतिनतोऽस्मि । अपि च ᵛभूरेः बहुनो धनस्य ᵛदातारं ᵛसत्पतिं सतां पालयितारम् ॥ 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृति-स्वरत्वम् ॥ हे रुद्र एवंभूतं त्वां ᵛगृणीषे स्तौमि ॥ मिपः 'तिङां तिङो भवन्ति' इति सेआदेशः ॥ ᵛस्तुतः च ᵛत्वम् ᵛअस्मे अस्मभ्यं ᵛभेषजा भेषजानि ᵛरासि देहि ॥

या वो॑ भेष॒जा म॑रुत॒ः शुची॑नि॒ या शंत॑मा वृषणो॒ या म॑यो॒भु ।
यानि॒ मनु॒रवृ॑णीता पि॒ता न॒स्ता शं च॒ योश्च॑ रु॒द्रस्य॑ वश्मि ॥ १३ ॥

या । व॒ः । भे॒ष॒जा । म॒रु॒त॒ः । शुची॑नि । या । शम्ऽत॑मा । वृ॒ष॒ण॒ः । या । म॒य॒ःऽभु ।
यानि॑ । मनु॑ः । अवृ॑णीत । पि॒ता । न॒ः । ता । शम् । च॒ । योः । च॒ । रु॒द्रस्य॑ । व॒श्मि॒ ॥ १३ ॥

हे ᵛमरुतः रुद्रपुत्राः ᵛवः युष्माकं ᵛया यानि ᵛभेषजा भेषजान्यस्मदारोग्यहेतुभूतान्यौषधानि ᵛशुचीनि शुद्धानि निर्मलानि सन्ति । हे ᵛवृषणः कामानां वर्षितारो मरुतः ᵛया यानि च युष्मदीयानि भेषजानि ᵛशंतमा अतिशयेन सुखकराणि । ᵛया यानि च भेषजानि ᵛमयोभु मयोभूनि मयसः सुखस्य भावयितॄणि ᵛनः अस्मत्पिता[1] ᵛमनुः ᵛयानि भेषजानि युष्मदीयानि ᵛअवृणीत वृतवान् ᵛता तानि भेषजानि ᵛरुद्रस्य महादेवस्य संबन्धि ᵛशं ᵛच ᵛयोश्च यच्छमनीयानां रोगाणामुपशमनं यावनीयानां भयानां यद्यावनमस्मत्तः पृथक्करणं तदुभयं च ᵛवश्मि कामये ॥ 'वश कान्तौ'। आदादिकः ॥

परि॑ णो हे॒ती रु॒द्रस्य॑ वृज्या॒ः परि॑ त्वे॒षस्य॑ दु॒र्म॒तिर्म॒ही गा॑त् ।
अव॑ स्थि॒रा म॒घव॑द्भ्यस्तनुष्व॒ मीढ्व॑स्तो॒काय॒ तन॑याय मृळ ॥ १४ ॥

परि॑ । न॒ः । हे॒तिः । रु॒द्रस्य॑ । वृ॒ज्या॒ः । परि॑ । त्वे॒षस्य॑ । दु॒ःऽम॒तिः । म॒ही । गा॒त् ।
अव॑ । स्थि॒रा । म॒घव॑त्ऽभ्यः । त॒नु॒ष्व॒ । मीढ्वः॑ । तो॒काय॑ । तन॑याय । मृ॒ळ॒ ॥ १४ ॥

ᵛरुद्रस्य महादेवस्य ᵛहेतिः आयुधं ᵛनः अस्मान् ᵛपरि ᵛवृज्याः परिवर्जयतु । तथा ᵛत्वेषस्य दीप्तस्य रुद्रस्य मही महती ᵛदुर्मतिः दुःखकारिणी बुद्धिश्च ᵛपरि ᵛगात् अस्मान् वर्जयित्वा अन्यत्र गच्छतु ॥ 'अपपरी वर्जने' (पा. सू. १. ४. ८८) ॥ हे ᵛमीढ्वः सेचनसमर्थ रुद्र ᵛस्थिरा स्थिराणि त्वदीयानि धनूंषि ᵛमघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः ᵛअव ᵛतनुष्व अवततज्यानि कुरु । तथा ᵛतोकाय अस्मत्पुत्राय ᵛतनयाय तत्पुत्राय च ᵛमृळ सुखं कुरु ॥

---

१. क-ञ-ञ१-ण-त-थ-न-म-व–अस्मान् पिता ।

एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि ।
हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः ॥ १५ ॥

एव । बभ्रो इति । वृषभ । चेकितान । यथा । देव । न । हृणीषे । न । हंसि ।
हवनऽश्रुत् । नः । रुद्र । इह । बोधि । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १५ ॥

हे ᵛबभ्रो जगतो भर्तर्बभ्रुवर्ण वा ᵛवृषभ कामानां वर्षितः ᵛचेकितान सर्वं जानन् हे ᵛदेव द्योतमान रुद्र ᵛयथा येन प्रकारेण ᵛन ᵛहृणीषे न क्रुध्यसि ᵛन च ᵛहंसि ॥ 'हृणीङ् लज्जायाम्'। अयं क्रुध्यतिकर्मा च ॥ एवं ᵛहवनश्रुत् अस्मदीयमाह्वानं शृण्वन् ᵛनः अस्मान् हे ᵛरुद्र ᵛइह अस्मिन् देशे ᵛबोधि बुध्यस्व । ᵛविदथे यज्ञे गृहे वा ᵛसुवीराः शोभनपुत्राः सन्तः ᵛबृहत् प्रौढं त्वदीयं स्तोत्रं ᵛवदेम उच्चारयाम ॥ ॥ १८ ॥

'धारावराः' इति पञ्चदशर्चं द्वितीयं सूक्तं गार्त्समदं[1] मारुतम्[1] । अन्त्या त्रिष्टुप् शिष्टा जगत्यः[2]। तथा चानुक्रान्तं—'धारावरा मारुतं त्रिष्टुबन्तम्' इति । पृष्ठ्याभिप्लवषडहयोस्तृतीयेऽहन्याग्निमारुतशस्त्रस्य इदं मारुतनिविद्धानम् । सूत्रितं च—'वैश्वानराय धिषणां धारावरा मरुतस्त्वमग्ने प्रथमो अङ्गिरा इत्याग्निमारुतम्' (आश्व. श्रौ. ७. ७) इति ॥

धारावरा मरुतो धृष्ण्वोजसो मृगा न भीमास्तविषीभिरर्चिनः ।
अग्नयो न शुशुचाना ऋजीषिणो भृमिं धमन्तो अप गा अवृण्वत ॥ १ ॥

धाराऽवराः । मरुतः । धृष्णुऽओजसः । मृगाः । न । भीमाः । तविषीभिः । अर्चिनः ।
अग्नयः । न । शुशुचानाः । ऋजीषिणः । भृमिम् । धमन्तः । अप । गाः । अवृण्वत ॥१॥

ᵛधारावराः उदकधारया अन्तरिक्षमावृण्वन्तः । यद्वा धाराणां धृतानां स्थिराणां वृक्षादीनां निवारयितारः चालयितारः। यद्वा सर्वस्य जगतो धारयितारः । ᵛधृष्ण्वोजसः परेषां धर्षकेण बलेन युक्ताः । अत एव ᵛमृगा ᵛन ᵛभीमाः सिंहा इव भयंकराः । ᵛतविषीभिः आत्मीयैर्बलैर्वृष्टिप्रदानादिना ᵛअर्चिनः सर्वं जगत् पूजयन्तः । ᵛअग्नयो ᵛन ᵛशुशुचानाः दीप्ता वह्नय इव दीप्यमानाः ॥ 'शुच दीप्तौ'। लिटः कानच् । ᵛऋजीषिणः । ऋजीषमुदकं तद्वन्तः । यद्वा ऋजीषोऽपगतसारः सोमः । तेन युक्ताः । तृतीयसवने ह्याग्निमारुते मरुतः स्तूयन्ते । तत्र च सवनद्वयेऽभिषुतं गतसारं सोममभिषुण्वन्ति । अतस्तेषां तद्युक्तत्वम् । एवंभूताः ᵛमरुतः ᵛभृमिं भ्राम्यन्तं मेघं ᵛधमन्तः वर्षणार्थमितस्ततः प्रेरयन्तः ᵛगाः[3] तदन्तर्गताः[3] वर्ष्या अपः ᵛअप ᵛअवृण्वत अपावृताः कुर्वन्ति । यथा सर्वैर्दृश्यन्ते तथा प्रवर्षन्तीत्यर्थः । यद्वा भृम्याख्यः[4] वीणाविशेषः । तं धमन्तो वादयन्तो गा वलनाम्नासुरेणापिहिता अपावृण्वत अपगतावरणा अकुर्वन् ॥

---

१. ख-च-ण१-गृत्समदस्यार्षम् । २. ख-च-ण१-जगत्यः । मरुतो देवता। ३. म-गच्छन्तीति गाः । ४. क-ङ१-ण-त-थ-न-म-व-भूमिणाख्या ।

द्यावो न स्तृभिश्चितयन्त खादिनो व्यभ्रिया न द्युतयन्त वृष्टयः ।
रुद्रो यद्वो मरुतो रुक्मवक्षसो वृषाजनि पृश्न्याः शुक्र ऊधनि ॥ २ ॥

द्यावः । न । स्तृऽभिः । चितयन्त । खादिनः । वि । अभ्रियाः । न । द्युतयन्त । वृष्टयः ।
रुद्रः । यत् । वः । मरुतः । रुक्मऽवक्षसः । वृषा । अजनि । पृश्न्याः । शुक्रे । ऊधनि ॥२॥

ᵛस्तृभिः । नक्षत्रनामैतत् । यदाह यास्कः—'ऋक्षाः स्तृभिरिति नक्षत्राणाम्' (निरु. ३.२०) इति । नक्षत्रैः ᵛद्यावो ᵛन यथा द्युलोकाः ᵛचितयन्त चेतयन्ति स्वात्मानं ज्ञापयन्ति ॥ 'चिती संज्ञाने' ॥ प्रकाशन्त इत्यर्थः । तथा ᵛखादिनः शत्रूणां खादका मरुतः स्वकीयैराभरणैर्ज्ञायन्ते । यद्वा खादः कटकम् । तद्युक्ताः सन्तः प्रकाशन्ते । तथा ᵛवृष्टयः वर्षका मरुतः ᵛअभ्रिया ᵛन । अभ्रेषु भवा विद्युत इव ᵛवि ᵛद्युतयन्त सर्वं जगद्विद्योतयन्ति प्रकाशयन्ति ॥ अभ्रशब्दाद्भवार्थे 'समुद्राभ्राद्घः' इति घप्रत्ययः ॥ शेषः प्रत्यक्षकृतः । ᵛरुक्मवक्षसः । रुक्मं रोचमानाभरणं वक्षसि उरसि येषां तादृशा हे ᵛमरुतः ᵛयत् यदा ᵛवः युष्मान् ᵛवृषा सेचनसमर्थः ᵛरुद्रः महादेवः ᵛपृश्न्याः । पृश्निः माध्यमिका[1] वाक् । तस्याः संबन्धिनि ᵛशुक्रे निर्मले ᵛऊधनि उद्धते[2] प्रदेशे ᵛअजनि अजनयत् । तदानीमिति पूर्वत्र[3] संबन्धः । यद्वा पृश्निर्नानावर्णयं भूमिः पुरा गोरूपधरासीत् । तस्यां महेशो वृषो भूत्वा मरुत उत्पादयामासेत्याचक्षते । तदत्रोच्यते । हे मरुतो यद्यस्माद्वो युष्मान् वृषा वृषरूपो रुद्रः पृश्न्या गोः शुक्रे निर्मले ऊधनि ऊधसि पयस उत्पत्तिस्थाने अजनि अजीजनत् तस्माद्यूयमेवं महानुभावा जाता इत्यर्थः । तथा च तैत्तिरीयकं—'पृश्न्यै वै पयसो मरुतो जाताः' (तै. सं. २. २. ११. ४) इति ॥

उक्षन्ते अश्वाँ अत्याँइवाजिषु नदस्य कर्णैस्तुरयन्त आशुभिः ।
हिरण्यशिप्रा मरुतो दविध्वतः पृक्षं याथ पृषतीभिः समन्यवः ॥ ३ ॥

उक्षन्ते । अश्वान् । अत्यान्ऽइव । आजिषु । नदस्य । कर्णैः । तुरयन्ते । आशुऽभिः ।
हिरण्यऽशिप्राः । मरुतः । दविध्वतः । पृक्षम् । याथ । पृषतीभिः । सऽमन्यवः ॥ ३ ॥

मरुतः ᵛअश्वान् व्याप्तान् लोकान् ᵛउक्षन्ते सिञ्चन्ति ॥ 'अशू व्याप्तौ' । औणादिकः क्वन्प्रत्ययः ॥ ᵛआजिषु संग्रामेषु ᵛअत्यानिव सततगामिनस्तुरगान् यथा स्वेदापनोदाय[4] उदकैः सिञ्चन्ति तद्वत् । अपि च ते मरुतः ᵛआशुभिः शीघ्रगमनैरश्वैः ᵛनदस्य शब्दवतो मेघस्य ᵛकर्णैः कृत्तैर्मध्यप्रदेशैः[5] ᵛतुरयन्ते वर्षणार्थं वृष्ट्युत्पादनाय त्वरितं गच्छन्ति ॥ 'तुर त्वरणे' ॥ शेषः प्रत्यक्षकृतः । हे ᵛहिरण्यशिप्राः । शिप्रं शिरस्त्राणम् । सुवर्णमयशिरस्त्राणाः ᵛसमन्यवः समानमनस्काः[6] समानक्रोधा वा हे ᵛमरुतः ᵛदविध्वतः महीरुहादिकं कम्पयन्तो यूयम् ॥ 'धूञ् कम्पने' इत्यस्मात्

---

१. म—माध्यमिकी । २. क-ज्ञ-ण-न—उद्वते । ३. क-ज्ञ-म—सर्वत्र । ४. च-ज-ज्ञ-ज्ञ१-ण-थ-न-म—खेदापनोदाय । ५. ख-ग—कृतैर्मध्य॰; च—कृतेमध्य॰; ज्ञ१-ण-न—कृतैर्मध्यं॰; थ—कृतेर्मध्यैं॰; त-ध—कृतैर्मध्यं॰ ।
६. क-ख-ग-च-ज-ज्ञ-ण-त-फ—समानवयस्काः ।

दाधर्त्यादौ एतद्रूपं निपात्यते ॥ ᵛपृषतीभिः युष्मद्रथे योजिताभिः श्वेतबिन्द्वङ्किताभिः मृगीभिर्वडवाभिर्वा ᵛपृक्षम् । अन्ननामैतत् । हविर्लक्षणान्नवन्तं यजमानम् ॥ अर्शआदित्वादच् ॥ ᵛयाथ गच्छथ ॥

पृक्षे ता विश्वा भुवना ववक्षिरे मित्राय वा सदमा जीरदानवः ।
पृषदश्वासो अनवभ्रराधस ऋजिप्यासो न वयुनेषु धूर्षदः ॥ ४ ॥

पृक्षे । ता । विश्वा । भुवना । ववक्षिरे । मित्राय । वा । सदम् । आ । जीरऽदानवः ।
पृषत्ऽअश्वासः । अनवभ्रऽराधसः । ऋजिप्यासः । न । वयुनेषु । धूःऽसदः ॥ ४ ॥

ᵛपृक्षे पृक्षवते[1] हविर्लक्षणान्नयुक्ताय यजमानाय ᵛता तानि ᵛविश्वा सर्वाणि भुवनानि[2] उदकानि ᵛमित्राय । वाशब्द उपमार्थः । मित्रायेव ᵛसदं सदा ᵛआ ᵛववक्षिरे मरुत आवहन्ति । यद्वा वाशब्दोऽवधारणे । मित्रभूताय यजमानायैव पृक्षेऽन्ने निमित्तभूते सति वृष्ट्युदकान्यावहन्ति । कीदृशा मरुतः । ᵛजीरदानवः क्षिप्रदानाः । ᵛपृषदश्वासः पृषद्भिः श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते तथोक्ताः । ᵛअनवभ्रराधसः ॥ ' भ्रंशु भ्रंशु अधःपतने ' । अवभ्रंशनमवभ्रः । ' डोऽन्यत्रापि दृश्यते ' ( पा. म. ३. २. ४८. ४ ) इति डप्रत्ययः । नास्त्यवभ्रो यस्येति बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । अनवभ्रं भ्रंशनरहितं राधो धनं येषां ते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ᵛऋजिप्यासो ᵛन । ऋजु अकुटिलं प्राप्नुवन्तः[3] गच्छन्तोऽश्वा इव ᵛवयुनेषु गन्तृषु मध्ये ᵛधूर्षदः धुरि मेघस्य वहने सीदन्तो निषण्णा इत्यर्थः ॥

इन्धन्वभिर्धेनुभी रप्शदूधभिरध्वस्माभिः पथिभिर्भ्राजदृष्टयः ।
आ हंसासो न स्वसराणि गन्तन मधोर्मदाय मरुतः समन्यवः ॥ ५ ॥

इन्धन्वऽभिः । धेनुऽभिः । रप्शदूधऽभिः । अध्वस्मऽभिः । पथिऽभिः । भ्राजत्ऽऋष्टयः ।
आ । हंसासः । न । स्वसराणि । गन्तन । मधोः । मदाय । मरुतः । सऽमन्यवः ॥ ५ ॥

ᵛसमन्यवः समानमनस्काः[4] समानक्रोधाः समानतेजसो वा हे ᵛमरुतः ᵛभ्राजदृष्टयः दीप्यमानायुधा यूयम् ᵛइन्धन्वभिः समिन्धनवद्भिः ॥ इन्धनशब्दात् ' छन्दसीवनिपौ॰ ' इति मत्वर्थीयो वनिप् । छान्दसो वर्णलोपः ॥ ᵛधेनुभिः प्रीणयितृभिश्च ᵛरप्शदूधभिः । विरप्शीति महन्नाम । महोधस्कैः । ऊधांसि जलस्रोतोमार्गाः । यद्वा ' रप लप व्यक्तायां वाचि ' । शब्दायमानोच्छ्रितप्रदेशैः ᵛअध्वस्मभिः ध्वंसनरहितैः ᵛपथिभिः । पतन्ति गच्छन्तीति पन्थानो मेघाः । एवंभूतैर्मेघैः सह मार्गैरेव वा ᵛआ ᵛगन्तन आगच्छत । किमर्थम् । ᵛमधोर्मदाय सोमस्य मदार्थम् । तत्र दृष्टान्तः । ᵛहंसासो ᵛन यथा हंसाः ᵛस्वसराणि स्वकीयानि निवासस्थानानि प्राप्नुवन्ति तद्वत् ॥ ॥ १९ ॥

---

१. क-ङ-ण-त-थ-न-म-पृक्षवति; ङ१-व-पृक्षवती । २. च-फ-भुवना भुवनानि । ३. म-पृच्छावन्तः । ४. म-समानवयस्काः ।

आ नो ब्रह्माणि मरुतः समन्यवो नरां न शंसः सवनानि गन्तन ।
अश्वामिव पिप्यत धेनुमूधनि कर्ता धियं जरित्रे वाजपेशसम् ॥ ६ ॥

आ । नः । ब्रह्माणि । मरुतः । सऽमन्यवः । नराम् । न । शंसः । सवनानि । गन्तन ।
अश्वाम्ऽइव । पिप्यत । धेनुम् । ऊधनि । कर्त । धियम् । जरित्रे । वाजऽपेशसम् ॥ ६ ॥

ᵛसमन्यवः समानमनसः समानक्रोधा वा हे ᵛमरुतः ᵛनः अस्माकं ᵛब्रह्माणि । अन्ननामैतत् । अन्नानि ᵛसवनानि अभिषुतसोमलक्षणानि हवींषि ᵛआ ᵛगन्तन आगच्छत ॥ गमेर्लोटि छान्दसः शपो लुक् । 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः । अत एव ङित्त्वाभावादनुनासिकलोपाभावः ॥ तत्र दृष्टान्तः । ᵛनरां ᵛन ᵛशंसः । नरामस्माकं शंसः शंसनीयं स्तोत्रं यथा आगच्छथ तद्वत् ॥ नरशब्दात् षष्ठीबहुवचनस्य 'अनित्यमागमशासनम्' इति नुडभावः । शंसः कर्मणि घञन्त आद्युदात्तः । 'सुपां सुलुक्°' इति अमः सुआदेशः ॥ आगत्य च ᵛधेनुम् उदकदानेन प्रीणयितारम् ᵛअश्वामिव ᵛऊधनि[1] ᵛपिप्यत । यथाश्वाः पीनावयवा भवन्ति तद्वन्मेघं वर्षणसमर्थमाप्यायितं कुरुतेत्यर्थः । अपि च ᵛजरित्रे स्तोत्रे ᵛवाजपेशसं वाजैरन्नैराश्लिष्टम् ॥ 'पिश अवयवे' ॥ ᵛधियं कर्म ᵛकर्त कुरुत ॥ करोतेश्छान्दसः शपो लुक् । पूर्ववत् तशब्दस्य तबादेशः ॥

तं नो दात मरुतो वाजिनं रथ आपानं ब्रह्म चितयद्दिवेदिवे ।
इषं स्तोतृभ्यो वृजनेषु कारवे सनिं मेधामरिष्टं दुष्टरं सहः ॥ ७ ॥

तम् । नः । दात । मरुतः । वाजिनम् । रथे । आपानम् । ब्रह्म । चितयत् । दिवेऽदिवे ।
इषम् । स्तोतृऽभ्यः । वृजनेषु । कारवे । सनिम् । मेधाम् । अरिष्टम् । दुस्तरम् । सहः ॥७॥

हे ᵛमरुतः ᵛतं पुत्रं ᵛनः अस्मभ्यं ᵛदात दत्त प्रयच्छत ॥ छान्दसः शपो लुक् ॥ कीदृशम् । ᵛवाजिनम् अन्नवन्तं बलवन्तं वा । ᵛरथे रंहणे युष्मदीये आगमने निमित्तभूते सति ᵛदिवेदिवे प्रतिदिवसं ᵛचितयत् प्रज्ञापयत् युष्मद्गुणप्रख्यापकं ᵛब्रह्म स्तोत्रम् ᵛआपानम् आप्नुवन्तम् । अपि च ᵛइषम् अन्नं ᵛस्तोतृभ्यः अस्मभ्यं दात प्रयच्छत । तथा ᵛवृजनेषु संग्रामेषु ᵛकारवे स्तोत्रे ॥ वचनव्यत्ययः ॥ ᵛमेधां[2] युद्धप्रज्ञानं* ᵛसनिं धनदातृत्वं च ᵛअरिष्टं[2] शत्रुभिरहिंसितं ᵛदुस्तरं शत्रुभिस्तरीतुमशक्यं ᵛसहः बलं च प्रयच्छत ॥

यद्युञ्जते मरुतो रुक्मवक्षसोऽश्वान्रथेषु भग आ सुदानवः ।
धेनुर्न शिश्वे स्वसरेषु पिन्वते जनाय रातहविषे महीमिषम् ॥ ८ ॥

यत् । युञ्जते । मरुतः । रुक्मऽवक्षसः । अश्वान् । रथेषु । भगे । आ । सुऽदानवः ।
धेनुः । न । शिश्वे । स्वसरेषु । पिन्वते । जनाय । रातऽहविषे । महीम् । इषम् ॥ ८ ॥

---

१. ण-त-थ-म-'ऊधनि' नास्ति । २. ण-त-थ-म-'मेधां...अरिष्टं' नास्ति । * ख-ग-च-फ-युद्धप्रज्ञाम् ।

रुक्मवक्षसः रोचमानाभरणोरस्काः सुदानवः शोभनदानाः मरुतः यत् यदा रथेषु भगे भजनीये स्थाने । धुरीत्यर्थः । अश्वान् आ युञ्जते आभिमुख्येन युक्तान् कुर्वन्ति । तदानीमेव रातहविषे दत्तहविष्काय यजमानाय महीं महतीम् इषम् अन्नं तत्कारणभूतमुदकं वा स्वसरेषु स्वकीयेषु गृहेषु पिन्वते सिञ्चन्ति किरन्ति ॥ ' पिवि सेचने ' ॥ तत्र दृष्टान्तः । धेनुर्न शिश्वे । यथा धेनुः प्रस्नुतस्तनी सती स्वकीयाय वत्साय क्षीरं प्रयच्छति तद्वत् ॥

यो नो॑ मरुतो वृ॒कता॑ति॒ मर्त्यो॑ रि॒पुर्द॒धे व॑सवो॒ रक्ष॑ता रि॒षः ।
व॒र्तय॑त॒ तपु॑षा च॒क्रिया॒भि तमव॑ रुद्रा अ॒शसो॑ हन्तना॒ वधः॑ ॥ ९ ॥

यः । नः॒ । म॒रु॒तः॒ । वृ॒कऽता॑ति । मर्त्यः॑ । रि॒पुः । द॒धे । व॒स॒वः॒ । रक्ष॑त । रि॒षः ।
व॒र्तय॑त । तपु॑षा । च॒क्रिया॑ । अ॒भि । तम् । अव॑ । रु॒द्राः॒ । अ॒शसः॑ । ह॒न्त॒न॒ । व॒धरिति॑ ॥ ९ ॥

हे मरुतः यः मर्त्यः मनुष्यः वृकताति आदाता वृकः ॥ ' वृक आदाने ' । ' वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ' ( पा. सू. ५. ४. ४१ ) इति स्वार्थिकस्तातिल्प्रत्ययः ॥ तादृशः सन् नः अस्माकं रिपुर्दधे रिपुतयात्मानं धारयति । हे वसवः वासयितारो मरुतः रिषः हिंसकादस्मान् रक्षत पालयत । अस्माकं[1] शत्रुभूतं मर्त्यं तपुषा तापयित्र्या चक्रिया ऋष्ट्याख्यया शक्त्या अभि वर्तयत अभितो[2] निवर्तयत[2] । हे रुद्राः रुद्रपुत्राः । यद्वा रोरूयमाणा द्रवन्तः । अशसः भक्षकस्य ॥ ' अश भोजने ' इत्यस्मादौणादिकोऽसिप्रत्ययः ॥ तादृशस्य राक्षसादेः वधः हननसाधनमायुधम् अव हन्तन अवयुत्य अस्मत्तः पृथक्कृत्य नाशयत ॥ हन्तेर्लोटि ' तप्तनप्तनथनाश्च ' इति तनप् ॥

चि॒त्रं तद्वो॑ मरुतो॒ याम॑ चेकिते॒ पृश्न्या॒ यदूध॒रप्याप॑यो दु॒हुः ।
यद्वा॑ नि॒दे नव॑मानस्य रुद्रियास्त्रि॒तं जरा॑य जु॒रता॑मदाभ्याः ॥ १० ॥

चि॒त्रम् । तत् । वः॒ । म॒रु॒तः॒ । याम॑ । चे॒कि॒ते॒ । पृश्न्याः॑ । यत् । ऊधः॑ । अपि॑ । आ॒पयः॑ । दु॒हुः ।
यत् । वा॒ । नि॒दे । नव॑मानस्य । रु॒द्रि॒याः॒ । त्रि॒तम् । जरा॑य । जु॒रता॑म् । अ॒दा॒भ्याः॒ ॥ १० ॥

हे मरुतः वः युष्माकं चित्रं चायनीयं याम प्रापणं चेकिते सर्वैर्ज्ञायते । इदानीं परोक्षवदाह । अपिशब्दः प्रसिद्धौ । यत् यदा खलु पृश्न्याः माध्यमिकाया वाचः संबन्धिनम् ऊधः उद्धतं[3] मेघम् आपयः प्रापयितारो मरुतः दुहुः दुहन्ति ॥ दुहेश्छान्दसो लिट् । ' छन्दसि चेति वक्तव्यम् ' इति द्विर्वचनाभावः ॥ यद्वा यदा च नवमानस्य स्तुवतः त्रितस्य निदे निन्दकाय शत्रवे हिंसां कृतवन्त इति शेषः ॥ ' णिदि कुत्सायाम् ' । ' क्विप् च ' इति क्विप् ॥ तदानीं हे अदाभ्याः अहिंस्याः रुद्रियाः रुद्रस्य पुत्राः मरुतः त्रितम् ऋषिं जुरतां हिंसतां शत्रूणां जराय जरणाय विनाशाय अभूत इति शेषः ॥ ॥ २० ॥

---

१. क-ञ-म—अस्मभ्यम् । २. ण-त-थ—' अभितो निवर्तयत ' नास्ति । ३. क-ञ—उद्धन्तम्; ख-ण १ ऊधनम्; ग-च—उद्धनम्; ज-ण-त-न-व—उद्धतम् ।

तान्वो॑ म॒हो म॒रुत॑ एव॒याव्नो॒ विष्णो॑रे॒षस्य॑ प्रभृ॒थे ह॑वामहे ।
हिर॑ण्यवर्णान्ककु॒हान्य॒तस्रु॑चो ब्रह्म॒ण्यन्तः॒ शंस्यं॒ राध॑ ईमहे ॥ ११ ॥

तान् । वः॒ । म॒हः । म॒रुतः॑ । ए॒व॒ऽयाव्नः॑ । विष्णोः॑ । ए॒षस्य॑ । प्र॒ऽभृ॒थे । ह॒वा॒म॒हे॒ ।
हिर॑ण्यऽवर्णान् । क॒कु॒हान् । य॒तऽस्रु॑चः । ब्र॒ह्म॒ण्यन्तः॑ । शंस्य॑म् । राधः॑ । ई॒म॒हे॒ ॥ ११ ॥

हे ᵛमरुतः ᵛएवयाव्नः एवं गन्तव्यं स्तोत्रं यज्ञं वा गन्तॄन् ᵛमहः महतो महानुभावान् ᵛतान् ᵛवः युष्मान् ᵛविष्णोः व्यापकस्य ग्रहचमसादिषु सर्वत्र व्याप्य वर्तमानस्य ᵛएषस्य एषणीयस्य प्रार्थनीयस्य सोमस्य ᵛप्रभृथे प्रभरणे अभिषवादिभिः प्रकर्षेण संपादने सति ᵛहवामहे आह्वयामहे। आहूय च ᵛहिरण्यवर्णान् हितरमणीयवर्णान् वा ᵛककुहान् श्रेष्ठान् स्तुत्यान् वा एवंभूतांस्तान् ᵛयतस्रुचः यागाय उद्यतस्रुचः ᵛब्रह्मण्यन्तः । ब्रह्म स्तोत्रम् । तदिच्छन्तो वयं ᵛशंस्यं प्रशंसनीयं ᵛराधः धनम् ᵛईमहे याचामहे ॥

ते द॒शग्वाः॑ प्रथ॒मा य॒ज्ञमू॑हिरे॒ ते नो॑ हिन्वन्तू॒षसो॒ व्यु॑ष्टिषु ।
उ॒षा न रा॒मीर॑रु॒णैरपो॑र्णुते म॒हो ज्योति॑षा शु॒च॒ता गोअ॑र्णसा ॥ १२ ॥

ते । द॒शऽग्वाः॑ । प्र॒थ॒माः । य॒ज्ञम् । ऊ॒हि॒रे॒ । ते । नः॒ । हि॒न्व॒न्तु॒ । उ॒षसः॑ । विऽउ॑ष्टिषु ।
उ॒षाः । न । रा॒मीः । अ॒रु॒णैः । अप॑ । ऊ॒र्णु॒ते॒ । म॒हः । ज्योति॑षा । शु॒च॒ता । गोऽअ॑र्णसा ॥१२॥

ᵛते मरुतः ᵛदशग्वाः । ये दशभिर्मासैः सिद्धिं गता अङ्गिरसस्तद्रूपा भूत्वा ᵛप्रथमाः आदित्येभ्यः प्रथमभाविनः सन्तः ᵛयज्ञमूहिरे अवहन् । आदित्यानामङ्गिरसां च स्वर्गगमनं प्रति स्पर्धमानानां मध्ये पूर्वमेवाङ्गिरसो यागाननुष्ठाय स्वर्गं प्राप्ताः । तथा च श्रूयते—'आदित्याश्चैवेहासन्नङ्गिरसश्च तेऽग्नेऽग्निनाग्निमयजन्त ' ( ऐ. ब्रा. १. १६ ) इति । तादृशाः ᵛते ᵛउषसो ᵛव्युष्टिषु विवासेषु प्रभातेषु सत्सु ᵛनः अस्मान् ᵛहिन्वन्तु प्रेरयन्तु । 'हि गतौ वृद्धौ च '। ᵛरामीः कृष्णवर्णा रात्रीः ᵛउषा ᵛन यथोषाः ᵛअरुणैः आरोचमानैः स्वतेजोभिः ᵛअपोर्णुते अपवृणोत्यपसारयति । तथा ᵛमहः महता ᵛशुचता दीप्यमानेन ᵛगोअर्णसा गच्छदुदकेन ᵛज्योतिषा सूर्याख्येन तमो निवारयन्ति। सूर्यमण्डलमावृण्वतो वृत्रादीन् हत्वा सर्वं जगत् प्रकाशयन्तीत्यर्थः ॥

ते क्षो॒णीभि॑ररु॒णेभि॒र्नाञ्जिभी॑ रु॒द्रा ऋ॒तस्य॒ सद॑नेषु वावृधुः ।
नि॒मेघ॑माना॒ अत्ये॑न॒ पाज॑सा सुश्च॒न्द्रं वर्णं॑ दधिरे सु॒पेश॑सम् ॥ १३ ॥

ते । क्षो॒णीभिः॑ । अ॒रु॒णेभिः॑ । न । अ॒ञ्जिऽभिः॑ । रु॒द्राः । ऋ॒तस्य॑ । सद॑नेषु । व॒वृ॒धुः॒ ।
नि॒ऽमेघ॑मानाः । अत्ये॑न । पाज॑सा सु॒ऽच॒न्द्रम् । वर्ण॑म् । द॒धि॒रे॒ । सु॒ऽपेश॑सम् ॥ १३ ॥

˅रुद्राः रुद्रपुत्राः ˅ते मरुतः ˅क्षोणीभिः शब्दकारिभिः[1] वाणाख्यैः[2] वीणाविशेषैः ˅अरुणेभिर्नाञ्जिभिः। नशब्दः समुच्चये। आरोचमानैः अरुणवर्णैः[3] वा रूपाभिव्यञ्जकैरलंकारैश्च समन्विताः सन्तः ˅ऋतस्य उदकस्य ˅सदनेषु निवासभूतेषु मेघेषु ˅वावृधुः वर्धन्ते । अपि च ˅अत्येन सततगामिना शीघ्रं व्याप्नुवता ˅पाजसा आत्मीयेन बलेन ˅निमेघमानाः नितरां मेघादुदकं चिन्तयन्तः[4] ते ˅सुश्चन्द्रं शोभनाह्लादनं ˅सुपेशसम् । पेश इति रूपनाम । शोभनरूपं ˅वर्णं ˅दधिरे कान्तिं धारयन्ति ॥

ताँ इयानो महि वरूथमूतय उप घेदेना नमसा गृणीमसि ।
त्रितो न यान्पञ्च होतॄनभिष्टय आववर्तदवराञ्चक्रियावसे ॥ १४ ॥

तान् । इयानः । महि । वरूथम् । ऊतये । उप । घ । इत् । एना । नमसा । गृणीमसि ।
त्रितः । न । यान् । पञ्च । होतॄन् । अभिष्टये । आऽववर्तत् । अवरान् । चक्रिया । अवसे ॥ १४ ॥

˅तान् मरुतः ˅महि महत् ˅वरूथं वरणीयं प्रशस्तं धनं तत् मरुतः ˅ऊतये रक्षणार्थम् ˅इयानः इयाना याचमाना वयम् ॥ ' सुपां सुलुक्° ' इति जसः सुः ॥ ˅एना अनेन ˅नमसा नमस्कारेण स्तोत्रेण वा ˅उप ˅इत् उपेत्य ˅गृणीमसि स्तुमः ॥ ˅घ इति पादपूरणः[5] । एना इत्यत्र ' सुपां सुलुक्° ' इति तृतीयाया आजादेशः । नशब्दः समुच्चये ॥ ˅त्रितः ऋषिश्च ˅यान् एतान् मरुतः ˅पञ्च ˅होतॄन् अध्यात्मप्राणापानादिपञ्चवृत्त्यात्मना वर्तमानान् अत एव होमनिष्पादकान् ˅अवरान्[6] मुख्यान्[6] ˅अभिष्टये अभिलषितसिद्ध्यर्थं ˅चक्रिया नाभिचक्रेण ˅अवसे अवितुं संगन्तुम् ˅आववर्तत् स्वस्मान्निर्जिगमिषून् प्राणान् स्वात्माभिमुखमावर्तयत् । यद्वा चक्रिया ऋष्ट्याख्येनायुधेन युक्तान् अवसे स्तुत्यादिभिः तर्पयितुम्[7] आवर्तयत् । तान् स्तुम इति पूर्वत्र संबन्धः ॥ ववर्तदिति वृतेर्ण्यन्तात् लुङि चङि रूपम् ॥

यया रध्रं पारयथात्यंहो यया निदो मुञ्चथ वन्दितारम् ।
अर्वाची सा मरुतो या व ऊतिरो षु वाश्रेव सुमतिर्जिगातु ॥ १५ ॥

यया । रध्रम् । पारयथ । अति । अंहः । यया । निदः । मुञ्चथ । वन्दितारम् ।
अर्वाची । सा । मरुतः । या । वः । ऊतिः । ओ इति । सु । वाश्राऽइव । सुऽमतिः । जिगातु ॥ १५ ॥

हे मरुतः ˅यया ऊत्या ˅रध्रम् आराधकं यजमानम् ˅अंहः पापम् ˅अति ˅पारयथ अतिक्रमयथ । ˅यया ऊत्या ˅वन्दितारं स्तोतारं ˅निदः निन्दितुः शत्रोः सकाशात् ˅मुञ्चथ मोचयथ । हे ˅मरुतः ˅वः युष्मदीया ˅या ˅ऊतिः ˅सा ˅अर्वाची अस्मदभिमुखा भवतु । तथा ˅सुमतिः युष्मदीया शोभना मतिः अनुग्रहात्मिका बुद्धिश्च ˅वाश्रेव हम्भारवं कुर्वती धेनुरिव वत्सं ˅सु सुष्ठु ˅ओ ˅जिगातु एव[8] गच्छतु । अस्मान् प्रति सर्वथा आगच्छत्वित्यर्थः ॥ ॥ २१ ॥

---

१. म– शब्दकारिणीभिः । २. क-च-झ-झ१-थ-म-व– वीणाख्यैः; ण१– वारणाख्यैः । ३. क-ख-ग-झ-ण-ण१-थ-न-म-व– आरुणवर्णैः । ४. झ-ण१– चितयन्तः । ५. क-झ-ण-थ-न-म-व– पदपूरणः; झ१– पूरणः । ६. क-झ-झ१-ण-थ-न-म-व–' अवरान् मुख्यान् ' नास्ति; ख-ग-ण१– अवरानमुख्यान् । ७. ख-ग-च-त-थ-फ– पर्पयितुम् । ८. च-झ-म– एवम् ।

'उपेम्' इति पञ्चदशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभम् अपांनपाद्देवताकम्। तथा चानुक्रान्तम्– 'उपेमपोनपात्रीयम्' इति। सूक्तविनियोगो लैङ्गिकः॥

उपे॑मसृक्षि वाज॒युर्व॑च॒स्यां चनो॑ दधीत ना॒द्यो गिरो॑ मे।
अ॒पां नपा॑दाशु॒हेमा॑ कु॒वित्स सु॒पेश॑सस्करति॒ जोषि॑ष॒द्धि॥ १॥

उप॑। ईम्। अ॒सृ॒क्षि॒। वा॒ज॒ऽयुः। व॒च॒स्याम्। चनः॑। द॒धी॒त॒। ना॒द्यः। गिरः॑। मे॒।
अ॒पाम्। नपा॑त्। आ॒शु॒ऽहेमा॑। कु॒वित्। सः। सु॒ऽपेश॑सः। क॒र॒ति॒। जोषि॑षत्। हि॥१॥

ᵛवाजयुः वाजमन्नमात्मन इच्छन्नहम् ᵛईम् एनां ᵛवचस्यां वचसः स्तोत्रस्येच्छाम् ᵛउप ᵛअसृक्षि उपासृजामि उत्पादयामि। अपां नपातं स्तोतुं प्रवृत्तोऽस्मीत्यर्थः॥ सृजेश्छान्दसो लुङ्। 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्त्वाद्गुणाभावः॥ ᵛसः च ᵛनाद्यः नदीनां शब्दकारिणीनां मेघस्थानामपां संबन्धी ᵛआशुहेमा आशु शीघ्रं गन्ता॥ 'हि गतौ' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्॥ एवंभूतः ᵛअपां ᵛनपात् अपां पौत्रस्थानीयः। अद्भ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एषोऽग्निर्जायत इति तत्पौत्रत्वम्। एतत्संज्ञको देवः ᵛगिरः। गृणातीति गीः स्तोता। तस्य ᵛमे मम ᵛकुवित्। बहुनामैतत्। बहुलं ᵛचनः अन्नं ᵛदधीत दधातु विदधातु। प्रयच्छत्वित्यर्थः। अपि चास्मान् ᵛसुपेशसः शोभनरूपान् शोभनालंकारान् वा ᵛकरति करोतु॥ करोतेर्व्यत्ययेन शप्। 'कःकरत्करतिकृधिकृतेष्वनदितेः' (पा. सू. ८. ३. ५०) इति विसर्जनीयस्य सत्वम्॥ ᵛहि यस्मात् अयं देवः ᵛजोषिषत् स्तोत्राणि सेवते तस्मादस्मानेवमनुगृह्णात्वित्यर्थः॥ 'जुषी प्रीतिसेवनयोः'। लेट्यडागमः। विकरणः सिप्। इडागमश्च। 'हि च' इति निघातप्रतिषेधः॥

इ॒मं स्व॑स्मै हृ॒द आ सुत॑ष्टं मन्त्रं॑ वोचेम कु॒विद॑स्य॒ वेद॑त्।
अ॒पां नपा॑दसु॒र्य॑स्य म॒ह्ना विश्वा॑न्य॒र्यो भुव॑ना जजान॥ २॥

इ॒मम्। सु। अ॒स्मै॒। हृ॒दः। आ। सु॒ऽत॑ष्टम्। मन्त्र॑म्। वो॒चे॒म॒। कु॒वित्। अ॒स्य॒। वेद॑त्।
अ॒पाम्। नपा॑त्। अ॒सु॒र्य॑स्य। म॒ह्ना। विश्वा॑नि। अ॒र्यः। भुव॑ना। ज॒जा॒न॒॥ २॥

ᵛअस्मै अपांनपात्संज्ञकाय देवाय ᵛहृदः हृदयात् ᵛसुतष्टं सुष्ठु निर्मितम् ᵛइमं ᵛमन्त्रं सुष्ठु ᵛआ आभिमुख्येन ᵛवोचेम ब्रवाम। ᵛअस्य अस्माभिरुक्तमिमं मन्त्रं ᵛकुवित् ᵛवेदत् बहुलं जानातु॥ वेत्तेर्लेट्यडागमः। 'निपातैर्यद्यदिहन्त॰' इति निघातप्रतिषेधः॥ किं स्तोत्रमिति चेदुच्यते। ᵛअर्यः स्वामी अपांनपात्संज्ञको वैद्युतोऽग्निः ᵛअसुर्यस्य। असुरः शत्रून् क्षेप्ता। तस्य स्वभूतस्य बलस्य ᵛमह्ना महिम्ना महत्त्वेन ᵛविश्वानि[1] सर्वाणि ᵛभुवना भुवनानि वृष्ट्युदकानि वृष्ट्युत्पादनेन भूतजातानि वा ᵛजजान जनयामास॥

---

१. ख-ग-ण-त-थ-म–विश्वा।

अपोनप्त्रीये वसतीवरीसमीपे एकधनासु[1] प्राप्तासु ' समन्या यन्ति ' इत्येषानुवक्तव्या । सूत्रितं च —' समन्या यन्त्युप यन्त्यन्या इति तीर्थदेशे ' ( आश्व. श्रौ. ५. १ ) इति । सारस्वते च शस्त्रे यद्यप्सु शम्या निपतेत्तदानीम् अपोनप्त्रीयश्चरुः कार्यः । तत्रैषैव याज्या । सूत्रितं च —' समन्या यन्त्युपयन्त्यन्या इत्यातः समानं सर्वेषाम् ' ( आश्व. श्रौ. १२. ६ ) इति ॥

समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापः ॥ ३ ॥

सम् । अन्याः । यन्ति । उप । यन्ति । अन्याः । समानम् । ऊर्वम् । नद्यः । पृणन्ति ।
तम् । ऊँ इति । शुचिम् । शुचयः । दीदिऽवांसम् ।
अपाम् । नपातम् । परि । तस्थुः । आपः ॥ ३ ॥

अन्याः[2] वर्ष्याः[2] आपः सं यन्ति भूम्या संगच्छन्ते । अन्याः च पूर्वं तत्रावस्थिताः उप यन्ति उपगच्छन्ति । ताः सर्वा आपः समानं सह नद्यः नदीभूताः ऊर्वं समुद्रमध्ये वर्तमानं वडवानलं पृणन्ति प्रीणयन्ति[3] ॥ ' पृण प्रीणने '। तौदादिकः ॥ तमु तमेव अपां नपातं शुचिं निर्मलं दीदिवांसं दीप्यमानम् ॥ दीदेतिश्छान्दसो दीप्तिकर्मा । लिटः क्वसुः । ' वस्वेकाजाद्धसाम् ' इति नियमादिडभावः । ' छन्दसि वेति वक्तव्यम् ' इति वचनात् द्विर्वचनाभावः ॥ एवंभूतं शुचयः शुद्धाः आपः परि तस्थुः परिवृत्य तिष्ठन्ति । एष हि वैद्युताग्निरूपेण मेघे वर्तमानः अस्मानजीजनदिति बुद्ध्या वडवानलरूपेण वर्तमानं तं पर्युपासते इत्यर्थः । यद्वा अन्या एकधनाख्या आपः संयन्ति चात्वालोत्करयोर्मध्ये वसतीवरीभिः संगच्छन्ते । अन्या वसतीवर्याख्या आपश्चोपयन्ति उपगच्छन्ति । ऐकमत्यं प्राप्ता भवन्ति । एताश्च मिलित्वा यज्ञं साधयन्त्यः तत्साध्यवृष्टिद्वारा[4] नद्यो भूत्वा ऊर्वं पृणन्ति इत्यादि समानम् । एवं हि ' आपो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्यामः ' ( ऐ. ब्रा. २. २० ) इत्यादिकं ब्राह्मणविनियोगश्चानुगृह्यते ॥

तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः ।
स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृतनिर्णिगप्सु ॥ ४ ॥

तम् । अस्मेराः । युवतयः । युवानम् । मर्मृज्यमानाः । परि । यन्ति । आपः ।
सः । शुक्रेभिः । शिक्वऽभिः । रेवत् । अस्मे इति । दीदाय । अनिध्मः । घृतऽनिर्निक् । अप्ऽसु ॥ ४ ॥

तम् अपां नपातमग्निम् अस्मेराः अस्मयमाना दर्परहिताः युवतयो युवानं युवराजमिव मर्मृज्यमानाः अत्यर्थमलंकुर्वाणाः आपः ॥ ' मृजू शौचालंकारयोः ' ॥ परि यन्ति परितो

---

१. ण-थ-म-त्रा धनासु । २. क-झ-म-अन्यवरिष्या; ख-ग-वर्षा; ण-थ-न-व- वरिष्या । ३. ख-ग-च-झ१-ण-ण१-थ-न-' प्रीणयन्ति ' नास्ति । ४.ख-ग-त्वत्साध्य;° च-झ१-ण१-त-थ-स्वसाध्य°;ण-स्वत्साध्य°।

गच्छन्ति प्राप्नुवन्ति । Vघृतनिर्निक्[1] क्षरणशीलोदकनिर्नेजनः । यद्वा निर्निगिति रूपनाम । दीप्तरूपः[2] Vसः अपां नपादग्निः Vअप्सु मेघान्तर्गतासु समुद्रगतासु वा मध्ये Vअनिध्मः इन्धनरहित एव सन् Vअस्मे अस्माकं Vरेवत् धनयुक्तमन्नं यथा भवति तथा Vशुक्रेभिः शुभ्रैः[3] निर्मलैः Vशिक्वभिः तेजोभिः Vदीदाय दीप्यते ॥

अस्मै तिस्रो अव्यथ्याय नारीर्देवाय देवीर्दिधिषन्त्यन्नम् ।
कृताइवोप हि प्रसर्स्रे अप्सु स पीयूषं धयति पूर्वसूनाम् ॥ ५ ॥

अस्मै । तिस्रः । अव्यथ्याय । नारीः । देवाय । देवीः । दिधिषन्ति । अन्नम् ।
कृताःऽइव । उप । हि । प्रऽसर्स्रे । अप्ऽसु । सः । पीयूषम् । धयति । पूर्वऽसूनाम् ॥ ५ ॥

Vनारीः नेत्र्यः Vतिस्रः Vदेवीः देव्यः इळासरस्वतीभारत्याख्याः Vअव्यथ्याय अव्यथनाय Vअस्मै Vदेवाय अपां नपाते Vअन्नं सोमाख्यं Vदिधिषन्ति धारयन्ति ॥ 'धिष शब्दे'। जौहोत्यादिकः। व्यत्ययेनान्तादेशः । धातूनामनेकार्थत्वादत्र धारणार्थः ॥ Vअप्सु उदकेषु Vकृताइव Vउप Vप्रसर्स्रे प्रसरन्ति ॥ 'सृ गतौ'। लिटि 'इरयो रे' इति रेआदेशः । छान्दसो हलादिशेषाभावः ॥ यस्मादेवं तस्मात् Vपूर्वसूनां पूर्वं ब्रह्मणः सकाशादुत्पन्नानामपां Vपीयूषं सारभूतं सोमाख्यममृतं Vसः अपां नपादग्निः Vधयति पिबति । Vहि[4] पूरणः[4] ॥　　॥ २२ ॥

अश्वस्यात्र जनिमास्य च स्वर्द्रुहो रिषः संपृचः पाहि सूरीन् ।
आमासु पूर्षु परो अप्रमृष्यं नारातयो वि नशन्नानृतानि ॥ ६ ॥

अश्वस्य । अत्र । जनिम । अस्य । च । स्वः । द्रुहः । रिषः । सम्ऽपृचः । पाहि । सूरीन् ।
आमासु । पूर्षु । परः । अप्रऽमृष्यम् । न । अरातयः । वि । नशन् । न । अनृतानि ॥६॥

Vअत्र अस्मिन्नपांनपात्संज्ञके देवे Vअश्वस्य Vजनिम जन्म भवति । अपांनप्त्रधिष्ठितात् समुद्रात् उच्चैःश्रवसो जातत्वात् । किं बहुना । Vअस्य Vच Vस्वः सुष्ठ्वरणीयस्य सर्वस्य जगतो जन्म अस्मिन्नेव भवति । अयं हि मेघमध्ये वर्तमानो वृष्टिद्वारेण सर्वं जगज्जनयति । तादृशोऽपांनपात्त्वं Vद्रुहः द्रोग्धुः अपहर्तुः । Vरिषः हिंसकस्य च Vसंपृचः संपर्कात् Vसूरीन् स्तोतॄनस्मान् Vपाहि रक्ष । Vआमासु अपरिपक्वासु Vपूर्षु पूरयितव्यास्वप्सु Vपरः परस्तात् वर्तमानम् Vअप्रमृष्यम् अप्रधृष्यमाणं देवम् Vअरातयः अदातारः पुरुषाः Vन Vवि Vनशन् न प्राप्नुवन्ति ॥ नशतिर्व्याप्तिकर्मा । लेट्यडागमः ॥ Vअनृतानि मायाविनो रक्षांसि च Vन प्राप्नुवन्ति ॥

---

१. क-च-ञ-ञ१-ण-म–घृतनिर्णिक्; ख-ग-ण१–घृतनिर्मिक् । २. क-ख-ग-च-ञ-ण-ण१-थ-न-म-व–दीप्तिरूपः । ३. थ–शुक्रैः । ४. क-ञ-ञ१-ण-थ-न-म-व–'हि पूरणः' नास्ति ।

स्व आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादूर्जयन्नप्स्व१न्तर्वसुदेयाय विधते वि भाति ॥ ७ ॥

स्वे । आ । दमे । सुऽदुघा । यस्य । धेनुः । स्वधाम् । पीपाय । सुऽभु । अन्नम् । अत्ति ।
सः । अपाम् । नपात् । ऊर्जयन् । अप्ऽसु । अन्तः । वसुऽदेयाय । विधते । वि । भाति ॥७॥

यः अपां नपात् स्वे दमे स्वकीये गृहेऽन्तरिक्षलक्षणे आ सीदति । यस्य च धेनुः माध्यमिका वाक् सुदुघा सुखेन दोग्धव्या भवति । स देवः स्वधां वृष्ट्युदकं पीपाय वर्धयति ॥ ‘ प्यायी वृद्धौ ’ । ‘ लिङ्यङोश्च ’ इति पीभावः ॥ सुभु सुष्ठु भूतं वृष्टेः सकाशादुत्पन्नं हविर्लक्षणम् अन्नं च अत्ति भक्षयति । सः अपांनपात्संज्ञको देवः ऊर्जयन् बलं कुर्वन् अप्स्वन्तः मेघस्थास्वप्सु मध्ये विधते परिचरते यजमानाय वसुदेयाय धनदानार्थं वि भाति विशेषेण दीप्यते ॥

यो अप्स्वा शुचिना दैव्येन ऋतावाजस्र उर्विया विभाति ।
वया इदन्या भुवनान्यस्य प्र जायन्ते वीरुधश्च प्रजाभिः ॥ ८ ॥

यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः । उर्विया । विऽभाति ।
वयाः । इत् । अन्याः । भुवनानि । अस्य । प्र । जायन्ते । वीरुधः । च । प्रऽजाभिः ॥८॥

यः अपां नपात् ऋतावा । ऋतमित्युदकनाम । तद्वान् सत्यवान् वा अजस्रः नित्यः एकरूपेण सदा वर्तमानः उर्विया उरुर्विस्तीर्णः अप्सु मेघस्थासु मध्ये शुचिना शोचकेन दैव्येन देवसंबन्धिना तेजसा आ समन्तात् विभाति विशेषेण प्रकाशते । अस्य अपांनपातः अन्या अन्यानि भुवनानि सर्वाणि भूतजातानि वया इत् शाखा एव । वीरुधः ओषधयः प्रजाभिः स्वकीयाभिः[1] पुष्पफलादिभिः सह अस्मादेव प्र जायन्ते । च पूरणः[2] ॥

पूर्वोक्ते[3] सारस्वतसत्रस्यापोनप्त्रीये चरौ ‘ अपां नपादा हि ’ इत्येषानुवाक्या । सूत्रितं च– ‘ अपां नप्त्रे चरुमपां नपादा ह्यस्थादुपस्थम् ’ ( आश्व. श्रौ. १२. ६ ) इति ॥

अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।
तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः ॥ ९ ॥

अपाम् । नपात् । आ । हि । अस्थात् । उपऽस्थम् । जिह्मानाम् । ऊर्ध्वः । विऽद्युतम् । वसानः ।
तस्य । ज्येष्ठम् । महिमानम् । वहन्तीः । हिरण्यऽवर्णाः । परि । यन्ति । यह्वीः ॥ ९ ॥

---

१. ण-थ-‘ स्वकीयाभिः ’ नास्ति; म-स्वकीयादिभिः । २. क-च-झ-झ१-ण-थ-न-म-व-‘ च पूरणः ’ नास्ति । ३. ख़-ग-ण-त-थ-पूर्वोक्त° ।

अपांनपात्संज्ञकोऽग्निः ᵛउपस्थम् अपामुपस्थानमन्तरिक्षम् ᵛआ ᵛह्यस्थात् आस्थितवान् आरूढवान् खलु । किं कुर्वन् । ᵛजिह्मानां कुटिलगतीनामपां मध्ये ᵛऊर्ध्वः स्वयमूर्ध्वं ज्वलन् ᵛविद्युतं विद्योतमानं मेघं ᵛवसानः आच्छादयन् । अन्तरिक्षमास्थाय वर्षणं कृतवान् । ᵛतस्य वर्षितुरपांनपातः ᵛज्येष्ठं प्रशस्यतमं ᵛमहिमानं माहात्म्यं ᵛवहन्तीः वहन्त्यः सर्वत्र प्रापयन्त्यः ᵛयह्वीः यह्व्यः महत्यः ᵛहिरण्यवर्णाः । नदीनामैतत् । हिरण्यवन्निर्मलरूपा नद्यः ᵛपरि ᵛयन्ति परितो गच्छन्ति । अपांनप्त्रा महती वृष्टिरस्माकं प्रवहनायोत्पादिता इति कृतज्ञतया तदीयं माहात्म्यं सर्वत्र प्रकटयन्त्य इव नद्यः प्रवहन्तीत्यर्थः ॥

**हिर॑ण्यरूपः॒ स हिर॑ण्यसंदृग॒पां नपा॒त्सेदु॒ हिर॑ण्यवर्णः ।**
**हि॒र॒ण्यया॒त्परि॒ योने॑र्नि॒षद्या॑ हिरण्य॒दा द॑द॒त्यन्न॑मस्मै ॥ १० ॥**

हिर॑ण्यऽरूपः । सः । हिर॑ण्यऽसंदृक् । अ॒पाम् । नपा॑त् । सः । इत् । ऊँ इति॑ । हिर॑ण्यऽवर्णः ।
हि॒र॒ण्यया॑त् । परि॑ । योनेः॑ । नि॒ऽसद्य॑ । हि॒र॒ण्य॒ऽदाः । द॒द॒ति॒ । अन्न॑म् । अ॒स्मै॒ ॥ १० ॥

ᵛसः ᵛअपां ᵛनपात् ᵛहिरण्यरूपः । रूप्यते इति रूपं शरीरम् । सुवर्णमयशरीरो हितरमणीयशरीरो वा । तथा ᵛहिरण्यसंदृक् । सम्यक् पश्यन्तीति संदृश इन्द्रियाणि । सुवर्णमयेन्द्रियो हितरमणीयेन्द्रियो वा । ᵛसेदु स एवापांनपात् ᵛहिरण्यवर्णः हिरण्यसदृशकान्तियुक्तः । एवंभूतः सन् ᵛहिरण्ययात् सुवर्णमयात् ᵛयोनेः स्थानात् ᵛपरि उपरि ᵛनिषद्य उपविश्य राजते इति शेषः । ᵛअस्मै ईदृग्विधाय अपां नपाते ᵛहिरण्यदाः दक्षिणारूपस्य सुवर्णस्य दातारो यजमानाः ᵛअन्नं हविर्लक्षणं ᵛददति प्रयच्छन्ति ॥    ॥ २३ ॥

**तद॒स्यानी॑कमु॒त चारु॒ नामा॑पी॒च्यं॑ वर्धते॒ नप्तु॑र॒पाम् ।**
**यमि॒न्धते॑ युव॒तयः॒ समि॒त्था हिर॑ण्यवर्णं घृ॒तमन्न॑मस्य ॥ ११ ॥**

तत् । अ॒स्य । अनी॑कम् । उ॒त । चारु॑ । नाम॑ । अ॒पी॒च्य॑म् । व॒र्ध॒ते॒ । नप्तुः॑ । अ॒पाम् ।
यम् । इ॒न्धते॑ । यु॒व॒तयः॑ । सम् । इ॒त्था । हिर॑ण्यऽवर्णम् । घृ॒तम् । अन्न॑म् । अ॒स्य॒ ॥ ११ ॥

ᵛअस्य ᵛअपां ᵛनप्तुः देवस्य ᵛअनीकं रश्मिसमूहरूपं शरीरं ᵛचारु शोभनम् । ᵛउत अपि च अस्य ᵛनाम संज्ञा च चारु शोभनम् । न पातयति न विनाशयतीति नपादिति तद्व्युत्पत्तेः । तदुभयम् ᵛअपीच्यम् । अन्तर्हितनामैतत् । मेघान्तर्हितं सत् ᵛवर्धते । ᵛयुवतयः संगमनस्वभावा आपः ᵛहिरण्यवर्णं हिरण्यसमानतेजसं ᵛयम् अपांनपातम् ᵛइत्था अमुत्रान्तरिक्षे ᵛसम् ᵛइन्धते सम्यक् दीपयन्ति । ᵛअस्य च देवस्य ᵛघृतं क्षरणशीलमुदकम् ᵛअन्नं भक्ष्यम् । अबिन्धनो ह्यसौ वैद्युतोऽग्निः ॥

अस्मै बहूनामवमाय सख्ये यज्ञैर्विधेम नमसा हविर्भिः ।
सं सानु मार्ज्मि दिधिषामि बिल्मैर्दधाम्यन्नैः परि वन्द ऋग्भिः ॥ १२ ॥

अस्मै । बहूनाम् । अवमाय । सख्ये । यज्ञैः । विधेम । नमसा । हविःऽभिः ।
सम् । सानु । मार्ज्मि । दिधिषामि । बिल्मैः । दधामि । अन्नैः । परि । वन्दे । ऋक्ऽभिः ॥ १२ ॥

अस्मै पुरोवर्तिने बहूनां देवानाम् अवमाय आद्याय सख्ये अस्माभिः समानख्यानाय[1] अपां नपाते यज्ञैः यागसाधनैः हविर्भिः चरुपुरोडाशादिभिः नमसा नमस्कारेण च विधेम परिचरेम । अस्यापांनपातः सानु समुच्छ्रितप्रदेशं सं मार्ज्मि सम्यक् शोधयामि अलंकरोमि वा ॥ 'मृजू शौचालंकारयोः' । 'चादिलोपे विभाषा' इत्यस्य निघातप्रतिषेधः ॥ दिधिषामि धारयामि च बिल्मैः भासनैः काष्ठैरेनम् ॥ 'धिष शब्दे' । अयं धारणार्थोऽपि । जुहोत्यादित्वात् शपः श्लुः । मिपो व्यत्ययेनाडागमः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ दधामि धारयामि चैनं गार्हपत्यादिरूपेण स्थितम्[2] अन्नैः हविर्लक्षणैः । तथा ऋग्भिः मन्त्रैः परि वन्दे परितः[3] स्तौमि[3] ॥

स ईं वृषाजनयत्तासु गर्भं स ईं शिशुर्धयति तं रिहन्ति ।
सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष ॥ १३ ॥

सः । ईम् । वृषा । अजनयत् । तासु । गर्भम् । सः । ईम् । शिशुः । धयति । तम् । रिहन्ति ।
सः । अपाम् । नपात् । अनभिम्लातऽवर्णः । अन्यस्यऽइव । इह । तन्वा । विवेष ॥ १३ ॥

स ईं सोऽयमपांनपात्संज्ञको देवः वृषा सेक्ता भूत्वा तासु मेघस्थास्वप्सु गर्भम् अजनयत् स्वात्मानमेव गर्भरूपेण वर्षणार्थं कृतवानित्यर्थः । गर्भो भूत्वा च स ईं सोऽयं माध्यमिकः[4] वैद्युतोऽग्निस्तासां शिशुः पुत्रः सन् धयति मेघस्थास्ताः पिबति । अबिन्धनो ह्यसौ । तं पुत्रस्थानीयमद्भिः आपश्च रिहन्ति लिहन्ति ॥ 'लिह आस्वादने' । कपिलकादित्वाल्लत्वविकल्पः ॥ सः अयम् अपां नपात् वृष्ट्या सह भूमौ निपतितः अनभिम्लातवर्णः अभितो म्लातो म्लानः क्षीणो वर्णो यस्य तद्विपरीतोऽत्यर्थं दीप्यमानः सन् इह अस्मिन् लोके अन्यस्येव । इवशब्दोऽवधारणे । अन्यस्य पार्थिवस्यैवाग्नेः तन्वा शरीरेण काष्ठेन्धनत्वलक्षणेन विवेष व्याप्तो बभूव ॥ 'विष्लृ व्याप्तौ' ॥

अस्मिन्पदे परमे तस्थिवांसमध्वस्मभिर्विश्वहा दीदिवांसम् ।
आपो नप्त्रे घृतमन्नं वहन्तीः स्वयमत्कैः परि दीयन्ति यह्वीः ॥ १४ ॥

अस्मिन् । पदे । परमे । तस्थिऽवांसम् । अध्वस्मऽभिः । विश्वहा । दीदिऽवांसम् ।
आपः । नप्त्रे । घृतम् । अन्नम् । वहन्तीः । स्वयम् । अत्कैः । परि । दीयन्ति । यह्वीः ॥ १४ ॥

---

१. ख-ग-च-ण-ण१-त-थ-न-व—समानाख्यानाय । २. क-ञ-ञ[illegible]-ण-थ-न-म-व—'स्थितं' नास्ति ।
३. ख-ग-च-ञ१-ण-ण१-त-थ-न-व—परिस्तौमि । ४. क-ग-च-ञ-न-म-व—माध्यमकः ।

परमे उत्कृष्टे अस्मिन् पदे अन्तरिक्षलक्षणे स्थाने तस्थिवांसं स्थितवन्तम् अध्वस्मभिः ध्वंसनरहितैस्तेजोभिः विश्वहा सर्वाण्यहानि दीदिवांसं दीप्यमानमपां नपातं यह्वीः यह्वयो महत्यः आपः स्वयम् आत्मनैव अत्कैः अतनशीलैः सततगन्तृभिः स्वकीयैः रूपैः परि दीयन्ति परिगच्छन्ति ॥ दीयतिर्गतिकर्मा । 'दीङ् क्षये'। व्यत्ययेन परस्मैपदम् ॥ किं कुर्वत्यः । नप्त्रे अपां नपाते घृतं क्षरणशीलोदकात्मकम् अन्नं वहन्तीः वहन्त्यः ॥

**अयांसमग्ने सुक्षितिं जनायायांसमु मघवद्भ्यः सुवृक्तिम् ।**
**विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ १५ ॥**

अयांसम् । अग्ने । सुऽक्षितिम् । जनाय । अयांसम् । ऊँ इति । मघवत्ऽभ्यः । सुऽवृक्तिम् ।
विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥१५॥

हे अग्ने सुक्षितिं शोभननिवासं त्वाम् अयांसम् उपागच्छम् । किमर्थम् । जनाय अस्मदीयपुत्रादिजनार्थम्[1] । तथा मघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यश्च सुवृक्तिं शोभनावर्जकं वह्निषयं स्तोत्रम् अयांसम् उपागच्छम् । 'यम उपरमे'। अतः कारणात् यत् भद्रं सर्वे देवाः अवन्ति रक्षन्ति विश्वं सर्वं तत् भद्रम् अस्माकं भवतु । सुवीराः सुपुत्रा वयं विदथे यज्ञे गृहे वा बृहत् प्रौढं स्तोत्रं वदेम उच्चारयाम[2] ॥ ॥ २४ ॥

'तुभ्यम्' इति षडृचं चतुर्थं सूक्तं गार्त्समदं जागतम् । प्रथमाया इन्द्रो मधुश्च देवता । द्वितीयाया मरुतो माधवश्च । तृतीयायास्त्वष्टा शुक्रश्च । चतुर्थ्या अग्निः शुचिश्च । पञ्चम्या इन्द्रो नभश्च । षष्ठ्या मित्रावरुणौ नभस्यश्च । तथा चानुक्रान्तं—'तुभ्यं षडृतव्यं तु जागतं तु' इति । दशरात्रे षष्ठेऽहनि ऋतुयाजेषु ऋक्‌शिरस्कैः प्रैषैः प्रेषितव्यं यष्टव्यं च । तत्राद्यानां षण्णां प्रैषाणामुपरिष्टाद्देवताः षडृचोऽहोरात्रादिभिः क्रमेणावपनीयाः । तथा च सूत्रितम्—'उपरिष्टात्त्वृच ऋतुयाजानाम्' इत्युपक्रम्य 'तुभ्यं हिन्वानो वसिष्ट गा अप इति द्वादश' ( आश्व. श्रौ. ८.१ ) इत्यन्तेन ॥

**तुभ्यं हिन्वानो वसिष्ट गा अपोऽधुक्षन्त्सीमविभिरद्रिभिर्नरः ।**
**पिबेन्द्र स्वाहा प्रहुतं वषट्कृतं होत्रादा सोमं प्रथमो य ईशिषे ॥ १ ॥**

तुभ्यम् । हिन्वानः । वसिष्ट । गाः । अपः । अधुक्षन् । सीम् । अविऽभिः । अद्रिऽभिः । नरः ।
पिब । इन्द्र । स्वाहा । प्रऽहुतम् । वषट्ऽकृतम् ।
होत्रात् । आ । सोमम् । प्रथमः । यः । ईशिषे ॥ १ ॥

हे इन्द्र तुभ्यं त्वदर्थं हिन्वानः प्रेर्यमाणः सोमः गाः गोविकाराणि दधिपयःप्रभृतीनि श्रयणद्रव्याणि वसतीवर्याख्याः अपः च वसिष्ट वस्ते आच्छादयति । तैः संयुज्यत इत्यर्थः । नरः यज्ञस्य नेतारोऽध्वर्यवश्च सीम् एनं सोमम् अविभिः अवेर्वालमयैर्दशापवित्रैः अद्रिभिः ग्रावभिश्च अधुक्षन् अक्षारयन् । ग्रावभिरभिषुत्य दशापवित्रेण पुनन्तीत्यर्थः । हे इन्द्र यः त्वम् ईशिषे सर्वस्य

---

१. च-थ-°जननार्थम् । २. ख-च-फ-उच्चारयाम । उ पूरणः; ग-ण१-उच्चारयाम । पूरणः ।

जगत ईश्वरो भवसि सः[1] त्वं ᵛप्रथमः अन्येभ्यो देवेभ्यः पूर्वभावी सन् ᵛस्वाहा स्वाहाकारेण ᵛप्रहुतं प्रकर्षेणाग्नौ क्षिप्तं ᵛवषट्कृतं वषट्कारेण च त्यक्तं तं ᵛसोमं ᵛहोत्रात् होतुर्यागात् ᵛआ समन्तात् ᵛपिब ॥

यज्ञैः संमिश्लाः पृषतीभिर्ऋष्टिभिर्यामञ्छुभ्रासो अञ्जिषु प्रिया उत ।
आसद्या बर्हिर्भरतस्य सूनवः पोत्रादा सोमं पिबता दिवो नरः ॥ २ ॥

यज्ञैः । सम्ऽमिश्लाः । पृषतीभिः । ऋष्टिऽभिः । यामन् । शुभ्रासः । अञ्जिषु । प्रियाः । उत ।
आऽसद्य । बर्हिः । भरतस्य । सूनवः । पोत्रात् । आ । सोमम् । पिबत । दिवः । नरः ॥२॥

हे मरुतः ᵛयज्ञैः यागैः ᵛसंमिश्लाः संयुक्ताः ᵛपृषतीभिः स्ववाहनभूताभिः पृषद्वतीभिर्वडवाभिर्युक्ते ᵛयामन् यामनि गमनसाधने रथेऽवस्थिताः ᵛऋष्टिभिः स्वकीयैरायुधैः ᵛशुभ्रासः शुभ्राः शोभमानाः । उतशब्दश्चार्थे । ᵛअञ्जिषु आभरणेषु ᵛप्रियाः च हे ᵛभरतस्य ᵛसूनवः सर्वस्य जगतो भर्तुः रुद्रस्य पुत्राः ᵛदिवो ᵛनरः दिवोऽन्तरिक्षस्य नेतारः एवंभूता हे मरुतस्ते यूयं ᵛबर्हिः आस्तीर्णे बर्हिषि ᵛआसद्य उपविश्य ᵛपोत्रात् पोतुर्यागात् ᵛसोमम् ᵛआ ᵛपिबत ॥

तृतीयसवने ' अमेव नः ' इत्येषा नेष्टुः प्रस्थितयाज्या च । तथा च सूत्रितम्—' अमेव नः सुहवा आ हि गन्तनेन्द्राविष्णू पिबतं मध्वो अस्य ' ( आश्व. श्रौ. ५. ५ ) इति ॥

अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।
अथा मन्दस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥ ३ ॥

अमाऽइव । नः । सुऽहवाः । आ । हि । गन्तन । नि । बर्हिषि । सदतन । रणिष्टन ।
अथ । मन्दस्व । जुजुषाणः । अन्धसः । त्वष्टः । देवेभिः । जनिऽभिः । सुमत्ऽगणः ॥३॥

इवशब्दोऽवधारणे । हे ᵛसुहवाः शोभनाह्वानास्त्वष्टृप्रभृतयः ᵛनः अस्मान् ᵛअमेव सहैव ᵛआ ᵛगन्तन आगच्छत ॥ गमेश्छान्दसः शपो लुक् । ' तप्तनप्तनथनाश्च ' इति तनबादेशः । हिशब्दः पूरणः॥ आगत्य च ᵛबर्हिषि वेद्यामास्तीर्णे ᵛनि ᵛसदतन निषण्णा भवत ॥ सदेश्छान्दसः सीदादेशाभावः ॥ उपविश्य च ᵛरणिष्टन रमध्वम् ॥ रण शब्दार्थः । अत्र क्रीडायां वर्तते धातूनामनेकार्थत्वात् । अस्माच्छान्दसो लुङ् । पूर्ववत्तनबादेशः ॥ ᵛअथ अनन्तरं हे ᵛत्वष्टः ᵛदेवेभिः अन्यैर्देवैः ᵛजनिभिः देवपत्नीभिश्च ᵛसुमद्गणः शोभनगणस्त्वम् ᵛअन्धसः सोमलक्षणस्यान्नस्य । द्वितीयार्थे षष्ठी । सोमलक्षणमन्नं ᵛजुजुषाणः सेवमानः ᵛमन्दस्व तृप्तो भव ॥

आ वक्षि देवाँ इह विप्र यक्षि चोशन्होतर्नि षदा योनिषु त्रिषु ।
प्रति वीहि प्रस्थितं सोम्यं मधु पिबाग्नीध्रात्तव भागस्य तृप्णुहि ॥ ४ ॥

आ । वक्षि । देवान् । इह । विप्र । यक्षि । च । उशन् । होतः । नि । सद । योनिषु । त्रिषु ।
प्रति । वीहि । प्रऽस्थितम् । सोम्यम् । मधु । पिब । आग्नीध्रात् । तव । भागस्य । तृप्णुहि ॥४॥

---

१, ख-ग-च-झ१-ण-ण१-थ-न-व–' सः ' नास्ति ।

हे विप्र मेधाविन्नग्ने देवान् यष्टव्यानिन्द्रादीन् आ वक्षि आवह । यक्षि च तान् यज च । हे होतः देवानामाह्वातस्त्वं च उशन् अस्मदीयं कामयमानः सन् त्रिषु योनिषु स्थानेषु गार्हपत्यादिलक्षणेषु नि[1] षद[1] उपविश । उपविश्य च प्रस्थितं होमार्थमुत्तरवेदिं प्रत्यानीतं सोम्यं सोममयं मधु प्रति वीहि प्रतिकामयस्व । कामयित्वा च आग्नीध्रात् अग्नीध्रयागात्[2] सोमं पिब । पीत्वा च तव भागस्य त्वदीयेन भागेन तृप्णुहि तृप्तो भव ॥

एष स्य ते तन्वो नृम्णवर्धनः सह ओजः प्रदिवि बाह्वोर्हितः ।
तुभ्यं सुतो मघवन्तुभ्यमाभृतस्त्वमस्य ब्राह्मणादा तृपत्पिब ॥ ५ ॥

एषः । स्यः । ते । तन्वः । नृम्णऽवर्धनः । सहः । ओजः । प्रऽदिवि । बाह्वोः । हितः ।
तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् । आऽभृतः । त्वम् । अस्य । ब्राह्मणात् । आ । तृपत् । पिब ॥५॥

हे इन्द्र स्यः सः एषः सोमः ते तव तन्वः शरीरस्य नृम्णवर्धनः बलस्य वर्धकः । तुभ्यं सुत इत्युत्तरत्र संबन्धः । येन सोमेन प्रदिवि पुराणे त्वयि बाह्वोः हस्तयोः सहः परेषामभिभवनलक्षणं सामर्थ्यम् ओजः तत्कारणभूतं बलं च हितः निहितं भवति ॥ लिङ्गव्यत्ययः ॥ हे मघवन् धनवन्निन्द्र तुभ्यं त्वदर्थं तादृशः सोमः सुतः अध्वर्युभिरभिषुतः । तुभ्यं होतुम् आभृतः उत्तरवेद्यां प्रत्याहृतश्च । अस्य इमं सोमं ब्राह्मणात् ब्राह्मणाच्छंसिनो यागात् तृपत् तृप्यन् त्वम् आ पिब आभिमुख्येन पिब ॥ ' क्रियाग्रहणं कर्तव्यम् ' इति कर्मणः संप्रदानत्वात् अस्य इति चतुर्थ्यर्थे षष्ठी ॥

जुषेथां यज्ञं बोधतं हवस्य मे सत्तो होता निविदः पूर्व्या अनु ।
अच्छा राजाना नम एत्यावृतं प्रशास्त्रादा पिबतं सोम्यं मधु ॥ ६ ॥

जुषेथाम् । यज्ञम् । बोधतम् । हवस्य । मे । सत्तः । होता । निऽविदः । पूर्व्याः । अनु ।
अच्छ । राजाना । नमः । एति । आऽवृतम् । प्रऽशास्त्रात् । आ । पिबतम् । सोम्यम् । मधु ॥६॥

हे मित्रावरुणौ मदीयमिमं यज्ञं जुषेथां सेवेथाम् । मे मम हवस्य हवमाह्वानम् ॥ पूर्ववत् कर्मणि षष्ठी ॥ बोधतम् अवगच्छतम् । तथा सत्तः निषण्णः अस्मदीयः होता पूर्व्याः चिरंतनीः निविदः । वाङ्नामैतत् । शस्त्रलक्षणा वाचः अनु शंसतीति शेषः । उद्गातृभिः कृतस्य स्तोत्रस्यानुगुण्येनाज्यादीनि शस्त्राणि शंसतीत्यर्थः । अपि च नमः सोमलक्षणमन्नम् आवृतम् ऋत्विग्भिर्वेष्टितं राजाना राजमानौ युवाम् अच्छ आभिमुख्येन एति गच्छति प्राप्नोति । तादृशं सोम्यं सोममयं मधु मादकं हविः प्रशास्त्रात् प्रशास्तुर्यागात् आ पिबतम् आभिमुख्येन पिबतम् ॥　　॥ २५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण[3] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके सप्तमोऽध्यायः समाप्तः ॥

---

१. ख-ग-ण-त-थ-म–निषीद ।　२. क-ज्ञ-म–आग्नीध्रयागात्; ख-ग-ण१-न-व–अग्नीधो यागात् ।
३. क-म–सायणामात्येन; त–सायणार्येण ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ द्वितीयाष्टकस्याष्टमोऽध्याय आरभ्यते । द्वितीयमण्डलस्य चतुर्थानुवाके ‘ मन्दस्व ’ इति षडृचं पञ्चमं सूक्तं गार्त्समदम् । ‘ मन्दस्व ’ इत्यनुक्रान्तम् । पूर्वत्र ‘ ऋतव्यं तु जागतं तु ’ इति तुशब्दप्रयोगादिदमपि जागतमृतव्यम् । तत्राद्याश्चतस्र ऋचो द्रविणोदोदेवताकाः पञ्चम्याश्विनी षष्ठ्याग्नेयी । दशरात्रे षष्ठेऽहनि ऋतुयाजेषु प्रैषानृकूशिरस्कान् कृत्वा तैः प्रैषैः प्रेषितव्यं यष्टव्यं च । तत्र सप्तमादीनां प्रैषाणामुपरिष्टात् ‘ मन्दस्व ’ इत्याद्याः षडृचः क्रमेण प्रक्षेपणीयाः । सूत्रं तु पूर्वमेवोदाहृतम् ॥

मन्दस्व होत्रादनु जोषमन्धसोऽध्वर्यवः स पूर्णां वष्ट्यासिचम् ।
तस्मा एतं भरत तद्वशो ददिर्होत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥ १ ॥

मन्दस्व । होत्रात् । अनु । जोषम् । अन्धसः । अध्वर्यवः । सः । पूर्णाम् । वष्टि । आऽसिचम् ।
तस्मै । एतम् । भरत । तत्ऽवशः । ददिः ।
होत्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥ १ ॥

हे द्रविणोदः द्रविणसो धनस्य दातः एतन्नामक देव अन्धसः देवानामन्नरूपस्य सोमस्य सोमेन होत्रात् होतृकर्तृकाद्यागात् अनु जोषं प्रीतिमनु मन्दस्व । हे अध्वर्यवः सः द्रविणोदाः पूर्णां संपूर्णाम् आसिचं सिच्यमानाहुतिं वष्टि कामयते । अतः तस्मै द्रविणोदसेऽग्नये एतं सोमं भरत प्रापयत । तद्वशः तत्कामो द्रविणोदाः ददिः दाता युष्माकमभीष्टफलस्य दाता भवतीति शेषः । किंच हे द्रविणोदः होत्रात् होतुर्यागात् ऋतुभिः इषमासाभिमानिभिर्ऋतुदेवैः सह सोमं पिब ॥

यमु पूर्वमहुवे तमिदं हुवे सेदु हव्यो ददिर्यो नाम पत्यते ।
अध्वर्युभिः प्रस्थितं सोम्यं मधु पोत्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥ २ ॥

यम् । ऊँ इति । पूर्वम् । अहुवे । तम् । इदम् । हुवे ।
सः । इत् । ऊँ इति । हव्यः । ददिः । यः । नाम । पत्यते ।
अध्वर्युऽभिः । प्रऽस्थितम् । सोम्यम् । मधु ।
पोत्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥ २ ॥

हे द्रविणोदः यमु यं त्वामेव पूर्वं होतृकर्तृके सोमयागे अहुवे आहूतवानस्मि इदं संप्रति तं तमेव पोतृकर्तृके सोमयागे हुवे आह्वयामि । सेत् स एव द्रविणोदाः हव्यः ह्वातव्यः ॥

उ इति पूरणे । ददिः अभीष्टफलस्य दाता यो नाम यः खलु पत्यते देवतात्वेनेष्टे तस्मै द्रविणोदसे सोम्यं सोमात्मकं मधु अध्वर्युभिः प्रस्थितं प्रणीतमासीत् । हे द्रविणोदः पोत्रात् पोतुर्यागात् ऋतुभिः ऊर्जसंज्ञकैः सह सोमं पिब ॥

मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते ।
आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ॥ ३ ॥

मेद्यन्तु । ते । वह्नयः । येभिः । ईयसे । अरिषण्यन् । वीळयस्व । वनस्पते ।
आऽयूय । धृष्णो इति । अभिऽगूर्य । त्वम् । नेष्ट्रात् । सोमम् । द्रविणःऽदः । पिब । ऋतुऽभिः ॥ ३ ॥

हे द्रविणोदः येभिः यैर्वाहैः ईयसे प्राप्नोषि । ते तव 'वह्नयो वोढारः' ( निरु. ८. ३ ) इति यास्केनोक्तत्वात् । ते मेद्यन्तु तृप्यन्तु । हे वनस्पते वनानां पते अरिषण्यन् अहिंसन् वीळयस्व दृढीभव । हे धृष्णो धर्षक त्वम् आयूय आगत्य अभिगूर्य उद्यम्य नेष्ट्रात् नेष्टुर्यागात् ऋतुभिः सहःसंज्ञकैः सह सोमं पिब ॥

अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् ।
तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥ ४ ॥

अपात् । होत्रात् । उत । पोत्रात् । अमत्त । उत । नेष्ट्रात् । अजुषत । प्रयः । हितम् ।
तुरीयम् । पात्रम् । अमृक्तम् । अमर्त्यम् । द्रविणःऽदाः । पिबतु । द्राविणःऽदसः ॥ ४ ॥

अच्छावाकस्येयम् । यो द्रविणोदाः होत्रात् होतुर्यागात् सोमम् अपात पीतवान् । उत किंच पोत्रात् पोतुर्यागात् अमत्त सोमं पीत्वा अमाद्यत् । उत अपि च नेष्ट्रात् नेष्टुर्यागात् हितं दत्तं प्रयः देवानामन्नरूपं सोमम् अजुषत असेविष्ट । सः द्राविणोदसः हवीरूपद्रविणस्य प्रदातृभ्य ऋत्विग्भ्यो हितः ॥ 'ऋत्विजोऽत्र द्रविणोदस उच्यन्ते हविषो दातारस्ते चैनं जनयन्ति[1]' ( निरु. ८. २ ) इति यास्केनोक्तत्वात् ॥ तादृशः द्रविणोदाः अमृक्तं दशापवित्रेण असृष्टम् अमर्त्यम् अमरणसाधनं तुरीयं पात्रं चतुर्थपात्रस्थं सोमं पिबतु ॥

अर्वाञ्चमद्य यय्यं नृवाहणं रथं युञ्जाथामिह वां विमोचनम् ।
पृङ्क्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू ॥ ५ ॥

अर्वाञ्चम् । अद्य । यय्यम् । नृऽवाहनम् । रथम् । युञ्जाथाम् । इह । वाम् । विऽमोचनम् ।
पृङ्क्तम् । हवींषि । मधुना । आ । हि । कम् । गतम् ।
अथ । सोमम् । पिबतम् । वाजिनीवसू इति वाजिनीऽवसू ॥ ५ ॥

---

१. ख-ण-थ-म—जनयन्ति च ।

हे अश्विनौ अद्य अस्मिन्नहनि यय्यं ययिं गन्तारं नृवाहणं नेत्रोर्युवयोर्वोढारम् इह यज्ञे वां युवयोः विमोचनं विमोचयितारं रथम् अर्वाञ्चं यथा अर्वाक् भवति तथा युञ्जाथाम्। किंच मधुना स्वादुरसेन हवींषि पृङ्क्तं संयोजयतम्। अथ च आ गतम् आगच्छतम् ॥ हि कम् इति पूरणे ॥ अथ अनन्तरं हे वाजिनीवसू। वाज एव वाजिनी। अन्नेन वासयितारौ बलवर्धनौ वा सोमं पिबतम् ॥

जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिम्।
विश्वेभिर्विश्वाँ ऋतुना वसो मह उशन्देवाँ उशतः पायया हविः ॥ ६ ॥

जोषि। अग्ने। सम्ऽइधम्। जोषि। आऽहुतिम्। जोषि। ब्रह्म। जन्यम्। जोषि। सुऽस्तुतिम्।
विश्वेभिः। विश्वान्। ऋतुना। वसो इति। महः।
उशन्। देवान्। उशतः। पायय। हविः ॥ ६ ॥

हे अग्ने समिधं जोषि जुषस्व। आहुतिं[1] जोषि जुषस्व। ब्रह्म शस्त्रं जन्यं जनेभ्यो हितं जोषि जुषस्व। सुष्टुतिं शोभनस्तोत्रं जोषि जुषस्व। किंच वसो सर्वेषामावासभूत हे अग्ने उशतः कामयमानान् महः महतः विश्वान् सर्वान् देवान् उशन् कामयमानस्त्वम् ऋतुना तपस्यसंज्ञकेन सह तथा विश्वेभिः सर्वैर्देवैः सह हविः हवीरूपं सोमं पायय ॥ ॥ १ ॥

'उदु ष्यः' इत्येकादशर्चं षष्ठं सूक्तं गार्त्समदं त्रैष्टुभं सवितृदेवताकम्। अत्रानुक्रमणिका— 'उदु ष्य एकादश सावित्रम्' इति। व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे एतत्सूक्तं सावित्रनिविद्धानीयम्। 'व्यूळ्हश्चेत्' इति खण्डे सूत्रितं—'षष्ठस्योदु ष्य देव इति गार्त्समदम्' (आश्व. श्रौ. ८.८) इति।

उदु ष्य देवः सविता सवाय शश्वत्तमं तदपा वह्निरस्थात्।
नूनं देवेभ्यो वि हि धाति रत्नमथाभजद्वीतिहोत्रं स्वस्तौ ॥ १ ॥

उत्। ऊँ इति। स्यः। देवः। सविता। सवाय। शश्वत्ऽतमम्। तत्ऽअपाः। वह्निः। अस्थात्।
नूनम्। देवेभ्यः। वि। हि। धाति। रत्नम्। अथ। आ। अभजत्। वीतिऽहोत्रम्। स्वस्तौ ॥ १ ॥

स्यः सः देवः द्योतमानः सविता सवाय लोकानां प्रसवाय अनुज्ञायै[2] शश्वत्तमं प्रतिदिनम् उत् अस्थात् उत्तिष्ठति। कीदृशः सविता। तदपाः तत्प्रसवकर्मा ॥ 'अपः अप्नः' (नि.२.१.१) इति कर्मनामसु पाठात् ॥ वह्निः वोढा जगताम्। किंच नूनं संप्रति देवेभ्यः स्तोतृभ्यः रत्नं धनं वि हि धाति प्रयच्छति। हि इति पूरणे। अथ अपि च वीतिहोत्रं कान्तयज्ञं यजमानं स्वस्तौ अविनाशे क्षेमे अभजत् भागिनं करोतु। यद्यपि स्वस्तिशब्दः विभक्त्यन्तनिर्दिष्टः[3] शब्दपरः[3] तथापि अपर्यवसानादर्थपरो भवति ॥

---

१. म–आहुतिं पुरोडाशसोमादिकान्। २. ख-ग-च-ण१–अनुज्ञानाय। ३. ख-ग-च-ण-ण१-न-व–°निर्दिष्टशब्दः परः।

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति ।
आपश्चिदस्य व्रत आ निमृग्रा अयं चिद्वातो रमते परिज्मन् ॥ २ ॥

विश्वस्य । हि । श्रुष्टये । देवः । ऊर्ध्वः । प्र । बाहवा । पृथुऽपाणिः । सिसर्ति ।
आपः । चित् । अस्य । व्रते । आ । निऽमृग्राः । अयम् । चित् । वातः । रमते । परिऽज्मन् ॥२॥

देवः द्योतमानः सविता पृथुपाणिः महत्करः[1] विश्वस्य श्रुष्टये जगतः सुखाय ऊर्ध्वः उद्गतः सन् बाहवा बाहू प्र सिसर्ति प्रसारयति । आपश्चित् आपोऽपि अस्य व्रते प्रसवाख्ये कर्मणि सति । 'व्रतं कर्वरम्' ( नि. २. १. ७ ) इति तन्नामसु पाठात् । आ स्यन्दन्त इति शेषः । ताश्च निमृग्राः नितरां शोधयित्र्यो गङ्गादिरूपेण जगत्पावयन्तीत्यर्थः । अयं चिद्वातः अयमपि वायुः परिज्मन् परितो गते व्याप्तेऽन्तरिक्षे रमते[2] ॥

आशुभिश्चिद्यान्वि मुचाति नूनमरीरमदतमानं चिदेतोः ।
अह्यर्षूणां चिन्न्ययाँ अविष्यामनु व्रतं सवितुर्मोक्यागात् ॥ ३ ॥

आशुऽभिः । चित् । यान् । वि । मुचाति । नूनम् । अरीरमत् । अतमानम् । चित् । एतोः ।
अह्यर्षूणाम् । चित् । नि । अयान् । अविष्याम् ।
अनु । व्रतम् । सवितुः । मोकी । आ । अगात् ॥ ३ ॥

यान् गच्छन् सविता आशुभिश्चित् शीघ्रगामिभिरपि रश्मिभिः वि मुचाति विमुच्यते । नूनम् इति पूरणः । अतमानं चित् सततं गच्छन्तमपि जनम् एतोः गमनात् अरीरमत् उपरमयति । किंच अह्यर्षूणाम् । अहिमाहन्तारं शत्रुमर्षन्त्यभिगच्छन्तीत्यह्यर्षवः । तेषामपि अविष्यां गमनेच्छां न्ययान् नियच्छति । सवितुः प्रेरकस्य सूर्यस्य व्रतं कर्म अनु पश्चात् मोकी रात्रिः । 'मोकी शोकी' ( नि. १. ७. १८ ) इति रात्रिनामसु पाठात् । आगात् आगच्छति । सवितुश्चेष्टोपरतौ रात्रिरागच्छतीति यावत् ॥

पुनः समव्यद्वितंतं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः ।
उत्संहायास्थाद्व्यृतूँरदर्धररमतिः सविता देव आगात् ॥ ४ ॥

पुनरिति । सम् । अव्यत् । विऽततम् । वयन्ती । मध्या । कर्तोः । नि । अधात् । शक्म । धीरः ।
उत् । सम्ऽहाय । अस्थात् । वि । ऋतून् । अदर्धः ।
अरमतिः । सविता । देवः । आ । अगात् ॥ ४ ॥

---

१. झ१–बृहत्करः । २. क–झ–झ१–म–रमयते ।

वयन्ती वस्त्रं वयन्ती नारीव रात्रिः विततम् आलोकं पुनः समव्यत् संवेष्टयते[1]। पुनः-शब्दः पूर्वेद्युरप्येवमकार्षीदिति द्योतयति। धीरः प्रज्ञोऽपि सर्वो लोकः कर्तोः क्रियमाणं कर्म ॥ 'कर्तोः कर्तवै' (नि. २. १. १८) इति तन्नामसु पाठात् ॥ शक्म कर्तुं शक्यमपि मध्या मध्ये उपक्रान्तं कर्मापरिसमाप्येत्यर्थः। न्यधात् निहितवान्। सवितर्युपरते इति शेषः। सर्वो लोकः संहाय शय्यां विहाय उत् अस्थात्। अवशिष्टं कर्म कर्तुं पुनरुत्तिष्ठति ॥ संपूर्वो जहातिः शय्यापरित्यागे वर्तते। तथा च श्रूयते–'कलिः शयानो भवति संजिहानस्तु द्वापरः' (ऐ. ब्रा. ७. १५) इति। सविता सर्वस्य प्रसविता सूर्यः अरमतिः अनुपरतिः देवः द्योतमानः आगात् आगच्छति। उदेतीति यावत्। ऋतून् कालविशेषांश्च वि अदर्दः विदारयति ॥

**नानौकांसि दुर्यो विश्वमायुर्वि तिष्ठते प्रभवः शोको अग्नेः।**
**ज्येष्ठं माता सूनवे भागमाधादन्वस्य केतमिषितं सवित्रा ॥ ५ ॥**

नाना। ओकांसि। दुर्यः। विश्वम्। आयुः। वि। तिष्ठते। प्रऽभवः। शोकः। अग्नेः।
ज्येष्ठम्। माता। सूनवे। भागम्। आ। अधात्। अनु। अस्य। केतम्। इषितम्। सवित्रा ॥५॥

प्रभवः प्रभूतः अग्नेः शोकः तेजः दुर्यः गृह्यो गृहे भवः नानौकांसि यजमानानां पृथग्भूतान् गृहान् वि तिष्ठते अधितिष्ठति। विश्वमायुः सर्वमन्नं चाधितिष्ठति ॥ 'आयुः सूनृता' (नि. २. ७. २३) इत्यन्ननामसु पाठात् ॥ माता उषाः सवित्रा अनु इषितं प्रेषितम् अस्य केतं प्रज्ञापकमग्नेः ज्येष्ठं प्रथममग्निहोत्राख्यं भागं सूनवे अग्नये आधात् आदधाति ॥ ॥ २ ॥

**समाववर्ति विष्ठितो जिगीषुर्विश्वेषां कामश्चरताममाभूत्।**
**शश्वाँ अपो विकृतं हित्व्यागादनु व्रतं सवितुर्दैव्यस्य ॥ ६ ॥**

सम्ऽआववर्ति। विऽस्थितः। जिगीषुः। विश्वेषाम्। कामः। चरताम्। अमा। अभूत्।
शश्वान्। अपः। विऽकृतम्। हित्वी। आ। अगात्। अनु। व्रतम्। सवितुः। दैव्यस्य ॥६॥

जिगीषुः विजयेच्छुः[2] योद्धा विष्ठितः युद्धार्थं प्रस्थितः समाववर्ति समावर्तयति। विश्वेषां सर्वेषां चरतां जङ्गमानाम् अमा। 'अमा दमे' (नि. ३. ४. ११) इति गृहनामसु पाठात्। गृहं प्रति कामः अभूत् भवति। शश्वान् नित्यं कर्मरतः अपः कर्म विकृतम् अर्धकृतं हित्वी हित्वा आगात् गृहमागच्छति। एतत्सर्वं दैव्यस्य दिवि भवस्य सवितुः प्रेरकस्य सूर्यस्य व्रतम् अस्तमयाख्यं कर्म अनु जायते इत्यर्थः ॥

---

१. ञ्ज-म–संचेष्टयते। २. म–विजयमिच्छुः।

त्वया हितमप्य॑मप्सु भागं धन्वान्वा मृगयसो वि तस्थुः ।
वनानि विभ्यो नकिरस्य तानि व्रता देवस्य सवितुर्मिनन्ति ॥ ७ ॥

त्वया । हितम् । अप्यम् । अप्ऽसु । भागम् । धन्व । अनु । आ । मृगयसः । वि । तस्थुः ।
वनानि । विऽभ्यः । नकिः । अस्य । तानि । व्रता । देवस्य । सवितुः । मिनन्ति ॥ ७ ॥

हे सवितः ˅त्वया ˅अप्सु अन्तरिक्षे । 'आपः पृथिवी' (नि. १. ३. ८) इत्यन्तरिक्षनामसु पाठात् । जलाधारे[1] वा ˅हितं निहितम् ˅अप्यम् अपां संबन्धिनं ˅भागं ˅धन्वानु निर्जलप्रदेशेष्वरण्येषु ˅मृगयसः मृगयमाणा मृगाः ˅आ समन्तात् ˅वि ˅तस्थुः अधितिष्ठन्ति । किंच ˅वनानि वृक्षाः[2] ˅विभ्यः पक्षिभ्य आवासादिरूपेण त्वया भागो दत्तः । ˅अस्य ˅देवस्य[3] ˅सवितुः[3] ˅तानि तादृशानि ˅व्रता व्रतानि कर्माणि ˅नकिः ˅मिनन्ति केऽपि न हिंसन्ति ॥

याद्राध्यं१ वरुणो योनिमप्यमनिशितं निमिषि जर्भुराणः ।
विश्वो मार्ताण्डो व्रजमा पशुर्गात्स्थशो जन्मानि सविता व्याकः ॥ ८ ॥

यात्ऽराध्यम् । वरुणः । योनिम् । अप्यम् । अनिऽशितम् । निऽमिषि । जर्भुराणः ।
विश्वः । मार्ताण्डः । व्रजम् । आ । पशुः । गात् ।
स्थऽशः । जन्मानि । सविता । वि । आ । अकरित्यकः ॥ ८ ॥

˅वरुणः ˅याद्राध्यं यातां गच्छतां राध्यं संराधनीयम्[4] ˅अप्यम् आप्तुं योग्यम् ˅अनिशितम् अतीक्ष्णम् । सुखकरमिति यावत् । ˅योनिं स्थानं ˅निमिषि निमेषे सवितुरस्तमये सति विश्रमार्थं प्राणिभ्यः प्रयच्छति । वरुणस्य रात्रेर्निर्वाहकत्वात् । ˅जर्भुराणः भृशं गच्छन् ˅विश्वः सर्वः ˅मार्ताण्डः मृताच्छिन्नात् अण्डादुत्पद्यमानः पक्षी ˅आ ˅गात् आगच्छति । विश्वः ˅पशुः अपि ˅व्रजं गोष्ठमागात् ˅सविता प्रेरकः ˅स्थशः स्थाने स्थाने ˅जन्मानि जातानि भूतानि ˅व्याकः पृथगकार्षीत् ॥

न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः ।
नारातयस्तमिदं स्वस्ति हुवे देवं सवितारं नमोभिः ॥ ९ ॥

न । यस्य । इन्द्रः । वरुणः । न । मित्रः । व्रतम् । अर्यमा । न । मिनन्ति । रुद्रः ।
न । अरातयः । तम् । इदम् । स्वस्ति । हुवे । देवम् । सवितारम् । नमःऽभिः ॥ ९ ॥

˅यस्य सवितुर्देवस्य ˅व्रतं प्रसवाख्यं कर्म ˅इन्द्रः ˅न मिनाति न हिनस्ति । ˅वरुणः च ˅न मिनाति । ˅मित्रः च ˅अर्यमा च न मिनाति । ˅रुद्रः च ˅न मिनाति । ˅अरातयः असुराश्च ˅न

१. क-म-व–जलाधारेषु । २. झ१–वृक्षादीन् । ३. क-झ१-ण-त-थ-न-म-व–ईशः ४. ग–राधनीयम् ।

ˇमिनन्ति ॥ मिनातीति श्रुतमाख्यातं यथायोगं विपरिणामेन प्रत्येकमभिसंबध्यते ॥ ˇतं ˇसवितारं सर्वस्य प्रेरकं ˇदेवं द्योतमानम् ˇइदम् इदानीं ˇनमोभिः अन्नरूपैर्हविर्भिः सह । ' नमः आयुः ' ( नि. २. ७. २२ ) इत्यन्ननामसु पाठात् । ˇस्वति क्षेमाय ˇहुवे स्तौमि ॥

भगं धियं वाजयन्तः पुरंधिं नराशंसो ग्नास्पतिर्नो अव्याः ।
आये वामस्य संगथे रयीणां प्रिया देवस्य सवितुः स्याम ॥ १० ॥

भगम् । धियम् । वाजयन्तः । पुरम्ऽधिम् । नराशंसः । ग्नाःपतिः । नः । अव्याः ।
आऽअये । वामस्य । सम्ऽगथे । रयीणाम् । प्रियाः । देवस्य । सवितुः । स्याम ॥ १० ॥

ˇभगं भजनीयं ˇधियं ध्यातव्यं ˇपुरंधिं पुरस्य धारयितारं बहुप्रज्ञं वा सवितारम् ॥ ' पुरंधिर्बहुधीः ' ( निरु. ६.१३ ) इति यास्कः ॥ ˇवाजयन्तः वाजिनं बलिनं कुर्वतः ॥ विभक्तिव्यत्ययः ॥ ˇनः स्तुवतोऽस्मान् ˇनराशंसः नरैः शंसनीयः ˇग्नास्पतिः देवपत्नीनां पतिः छन्दसां पतिर्वा । तथा च श्रूयते–' छन्दांसि वै ग्नाः' इति, ' उत ग्ना व्यन्तु देवपत्नीः ' (ऋ.सं.५.४६.८) इति च । सविता ˇअव्याः अव्यात् । किंच ˇवामस्य धनस्य ˇरयीणां पशूनां च । तथा च श्रूयते– ' पशवो वै रयिः' इति । ˇआये आगमने ˇसंगथे संगमने च निमित्ते ˇदेवस्य द्योतमानस्य ˇसवितुः प्रेरकस्य वयं ˇप्रियाः ˇस्याम भवेम ॥

अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आ गात् ।
शं यत्स्तोतृभ्य आपये भवात्युरुशंसाय सवितर्जरित्रे ॥ ११ ॥

अस्मभ्यम् । तत् । दिवः । अत्ऽभ्यः । पृथिव्याः । त्वया । दत्तम् । काम्यम् । राधः । आ । गात् ।
शम् । यत् । स्तोतृऽभ्यः । आपये । भवाति । उरुऽशंसाय । सवितः । जरित्रे ॥ ११ ॥

हे सवितः ˇअस्मभ्यं ˇत्वया ˇदत्तं ˇतत् प्रसिद्धं ˇकाम्यं कमनीयं ˇराधः धनं ˇदिवः द्युलोकात् ˇअद्भ्यः अन्तरिक्षलोकात् ˇपृथिव्याः भूमेश्च ˇआ ˇगात् आगच्छतु । किंच ˇस्तोतृभ्यः स्तोतृणाम् ˇआपये बन्धवे तद्वंशजाय ˇयत् धनं ˇशं सुखकरं ˇभवाति भवेत् ˇउरुशंसाय बहुस्तुतये ˇजरित्रे स्तोत्रे मह्यम् । ' जरिता कारुः ' ( नि. ३. १६. २ ) इति स्तोतृनामसु पाठात् । हे ˇसवितः तत्प्रयच्छ ॥ ॥ ३ ॥

' ग्रावाणेव ' इत्यष्टर्चं सप्तमं सूक्तं गार्त्समदं त्रैष्टुभमाश्विनं ' ग्रावाणेवाष्टावाश्विनम् ' इत्यनुक्रान्तत्वात् । प्रवर्ग्येऽभिष्टवे पूर्वे पटलेऽस्य विनियोगः । सूत्रितं च–' ग्रावाणेवेळे द्यावापृथिवी ' ( आश्व. श्रौ. ४. ६ ) इति । प्रातरनुवाकाश्विनशस्त्रयोरपीदं सूक्तम् । सूत्रितं च–' ग्रावाणेव नासत्याभ्यामिति त्रीणि ' ( आश्व. श्रौ. ४. १५ ) इति ॥

ग्रावाणेव तदिदर्थं जरेथे गृध्रेव वृक्षं निधिमन्तमच्छ ।
ब्रह्माणेव विदथ उक्थशासा दूतेव हव्या जन्या पुरुत्रा ॥ १ ॥

ग्रावाणाऽइव । तत् । इत् । अर्थम् । जरेथे इति । गृध्राऽइव । वृक्षम् । निधिऽमन्तम् । अच्छ ।
ब्रह्माणाऽइव । विदथे । उक्थऽशसा । दूताऽइव । हव्या । जन्या । पुरुऽत्रा ॥ १ ॥

हे अश्विनौ ग्रावाणेव अरातिं प्रति प्रेषितौ पाषाणाविव तत् अर्थम् । अर्तेर्धातोरर्थशब्दः । 'अर्थोऽर्तेः' (निरु. १. १८) इति यास्कः । तमरातिमित्यर्थः । इत् इति पूरणः । जरेथे जरयेथे अरातिं बाधेथाम् । यद्वा यथा गुरू ग्रावाणौ क्षिप्तौ तदानीमेव शीघ्रं गच्छतस्तथा तत् तमर्थं गन्तारं जरेथे । शीघ्रं गत्वा स्तुतमित्यर्थः । जरतिः स्तुतिकर्मा । किंच गृध्रेव गृध्राविव पक्षिणाविव वृक्षं फलितं वृक्षं निधिमन्तं धनवन्तं यजमानम् अच्छ । आगच्छतमिति शेषः । विदथे यज्ञे । 'विदथः सवनम्' (नि. ३. १७. ५) इति यज्ञनामसु पाठात् । उक्थशासा[1] उक्थशंसितारौ ब्रह्माणेव ब्राह्मणाविव जन्या जनपदेषु दूतेव राज्ञा प्रेषितौ दूताविव पुरुत्रा बहुभिः पुरुषैः हव्या ह्वातव्यौ युवाम् । अत्र उपमेयद्वित्वानुसारेण उपमानद्वित्वम् ॥

प्रातर्यावाणा रथ्येव वीराजेव यमा वरमा सचेथे ।
मेनेइव तन्वा३ शुम्भमाने दम्पतीव क्रतुविदा जनेषु ॥ २ ॥

प्रातःऽयावाना । रथ्याऽइव । वीरा । अजाऽइव । यमा । वरम् । आ । सचेथे इति ।
मेने इवेति मेनेऽइव । तन्वा । शुम्भमाने इति ।
दम्पतीइवेति दम्पतीऽइव । क्रतुऽविदा । जनेषु ॥ २ ॥

हे अश्विनौ प्रातर्यावाणा प्रातरेव यज्ञार्थं गन्तारौ रथ्येव रथिनाविव वीरौ स्वकर्मणि शूरौ । अजेव अजाविव छागाविव यमा यमलौ । मेनेइव नार्याविव तन्वा शरीरेण शुम्भमाने शोभमानौ । दम्पतीव जायापती इव संगतौ जनेषु विषयेषु क्रतुविदा कर्मविदौ युवां वरं संभक्तारम् आ सचेथे आगच्छथः ॥

शृङ्गेव नः प्रथमा गन्तमर्वाक्छफाविव जर्भुराणा तरोभिः ।
चक्रवाकेव प्रति वस्तोरुस्रार्वाञ्चा यातं रथ्येव शक्रा ॥ ३ ॥

शृङ्गाऽइव । नः । प्रथमा । गन्तम् । अर्वाक् । शफौऽइव । जर्भुराणा । तरःऽभिः ।
चक्रवाकाऽइव । प्रति । वस्तोः । उस्रा । अर्वाञ्चा । यातम् । रथ्याऽइव । शक्रा ॥ ३ ॥

---

१. ण-थ-न-व—उक्थशसा ।

हे अश्विनौ शृङ्गेव पशोः शृङ्गे इव प्रथमा देवानां प्रथमौ शफाविव अश्वादेः खुराविव तरोभिः वेगैः जर्भुराणा भृशं गच्छन्तौ युवां नः अस्मान्प्रति अर्वाक् अभिमुखम् आ गन्तम् आगच्छतम्। किंच हे अश्विनौ वस्तोः प्रति अहः प्रति चक्रवाकेव चक्रवाकाविव हे उस्रा शत्रूणामुत्सारकौ गमनशीलौ वा रथ्येव रथिनाविव हे शक्रा स्वकर्मणि शक्तौ अर्वाञ्चा अस्मदभिमुखौ यातं गच्छतम् ॥

नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव ।
श्वानेव नो अरिषण्या तनूनां खृगलेव विस्रसः पातमस्मान् ॥ ४ ॥

नावाऽइव । नः । पारयतम् । युगाऽइव । नभ्याऽइव ।
नः । उपधी इवेत्युपधीऽइव । प्रधी इवेति प्रधीऽइव ।
श्वानाऽइव । नः । अरिषण्या । तनूनाम् । खृगलाऽइव । विऽस्रसः । पातम् । अस्मान् ॥४॥

हे अश्विनौ नावेव नावाविव सिन्धून् नः अस्मान् दुर्गाणि पारयतम्। युगेव यथा रथस्य युगे नभ्येव यथा च रथचक्रनाभिफलके। उपधीइव यथा तत्पार्श्वस्थे फलके प्रधीइव यथा वा चक्रबाह्यवलयौ रथं पारयतः तथा नः अस्मान् दुर्गाणि पारयतम्। किं च श्वानेव श्वानाविव यथा श्वानौ बाधकेभ्यो रक्षन्तौ तनोर्हिंसामपनयतः तथा नः अस्माकं तनूनाम् अङ्गानाम् अरिषण्यौ अहिंसकौ भवतम्। खृगलेव यथा तनुत्राणे तनुहिंसाया रक्षतः तथा विस्रसः जरायाः अस्मान् युवां पातम् ॥

वातेवाजुर्या नद्येव रीतिरक्षीइव चक्षुषा यातमर्वाक् ।
हस्ताविव तन्वे३ शंभविष्ठा पादेव नो नयतं वस्यो अच्छ ॥ ५ ॥

वाताऽइव । अजुर्या । नद्याऽइव । रीतिः । अक्षी इवेत्यक्षी इव । चक्षुषा । आ । यातम् । अर्वाक् ।
हस्तौऽइव । तन्वे । शम्ऽभविष्ठा । पादाऽइव । नः । नयतम् । वस्यः । अच्छ ॥ ५ ॥

हे अश्विनौ वातेव वाताविव अजुर्या जरितुमशक्यौ नद्येव नद्याविव रीतिः ॥ व्यत्ययेनैकवचनम् ॥ शीघ्रं गन्तारौ युवाम्। अक्षीइव अक्षिणी इव चक्षुषा दर्शनेन अर्वाक् अस्मदभिमुखम् आ यातम् आगच्छतम्। किं च हस्तेव हस्ताविव पादेव पादाविव तन्वे शरीराय शंभविष्ठा सुखस्य भावयितृतमौ युवां नः अस्मान् वस्यः वसीयः श्रेष्ठं धनम् अच्छ प्रति नयतं प्रापयतम् ॥ ॥ ४ ॥

ओष्ठाविव मध्वास्ने वदन्ता स्तनाविव पिप्यतं जीवसे नः ।
नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मे ॥ ६ ॥

ओष्ठौऽइव । मधु । आस्ने । वदन्ता । स्तनौऽइव । पिप्यतम् । जीवसे । नः ।
नासाऽइव । नः । तन्वः । रक्षितारा । कर्णौऽइव । सुऽश्रुता । भूतम् । अस्मे इति ॥ ६ ॥

हे अश्विनौ ᵛओष्ठाविव ᵛआस्ने आस्याय मधुररसवद्वचनं[1] वदन्तौ ᵛस्तनाविव ᵛनः अस्मान् ᵛजीवसे जीवनाय ᵛपिप्यतं प्याययतम् । किं च ᵛनासेव नासिके इव ᵛनः अस्माकं ᵛतन्वः तनोः ᵛरक्षितारा रक्षितारौ भूतं भवतम् । अपि च ᵛकर्णाविव ᵛअस्मे अस्माकं ᵛसुश्रुता सुश्रवणे युवां ᵛभूतं भवतम् ॥

हस्तेव शक्तिमभि संददी नः क्षामेव नः समजतं रजांसि ।
इमा गिरो अश्विना युष्मयन्तीः क्ष्णोत्रेणेव स्वधितिं सं शिशीतम् ॥ ७ ॥

हस्ताऽइव । शक्तिम् । अभि । संददी इति सम्ऽददी । नः ।
क्षामऽइव । नः । सम् । अजतम् । रजांसि ।
इमाः । गिरः । अश्विना । युष्मऽयन्तीः । क्ष्णोत्रेणऽइव । स्वऽधितिम् । सम् । शिशीतम् ॥७॥

हे अश्विनौ ᵛहस्तेव हस्ताविव ᵛशक्तिं सामर्थ्यं ᵛनः अस्माकम् ᵛअभि ᵛसंददी आभिमुख्येन सम्यक् प्रयच्छन्तौ भवतम् । किं च ᵛक्षामेव रोदसी इव ᵛरजांसि स्थानान्युदकानि वा । 'उदकं रज उच्यते' ( निरु. ४. १९ ) इति यास्कः । ᵛनः अस्माकं ᵛसमजतं प्रेरयतम् । अपि च ᵛअश्विना हे अश्विनौ ᵛइमा ᵛगिरः अस्माभिः कृताः स्तुतीः ᵛयुष्मयन्तीः युवामिच्छन्तीः ᵛस्वधितिम् असिं ᵛक्ष्णोत्रेणेव तेजनशाणवत् ᵛसं ᵛशिशीतं सम्यक् तीक्ष्णीकुरुतम् ॥

एतानि वामश्विना वर्धनानि ब्रह्म स्तोमं गृत्समदासो अक्रन् ।
तानि नरा जुजुषाणोप यातं बृहद्वदेम विदथे सुवीराः ॥ ८ ॥

एतानि । वाम् । अश्विना । वर्धनानि । ब्रह्म । स्तोमम् । गृत्सऽमदासः । अक्रन् ।
तानि । नरा । जुजुषाणा । उप । यातम् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ८ ॥

ᵛअश्विना हे अश्विनौ ᵛवां युवयोः ᵛएतानि ᵛवर्धनानि वृद्धिसाधनानि ᵛब्रह्म ब्रह्माणि मन्त्रान् ᵛस्तोमं स्तोत्रं च ᵛगृत्समदासः गृत्समदाः ᵛअक्रन् अकुर्वन् । ᵛतानि ब्रह्माणि ᵛनरा नेतारौ ᵛजुजुषाणा भृशं प्रीयमाणौ युवाम् ᵛउप ᵛयातम् उपगच्छतम् । किं च ᵛसुवीराः शोभनपुत्रा वयं ᵛविदथे यज्ञे युवां ᵛबृहद्वदेम प्रभूतं स्तुमः ॥　　॥ ५ ॥

'सोमापूषणा' इति षडृचमष्टमं सूक्तं गार्त्समदं त्रैष्टुभं सोमापूषदेवताकम् । तथा चानुक्रान्तं- 'सोमापूषणा षट् सोमापौष्णमन्त्योऽर्धर्चोऽप्यदितेः' इति । 'अवतु देव्यदितिः' इत्यस्य[2] अन्त्यार्धर्चस्य अदितिर्देवता । सोमापौष्णे पशौ वपापुरोडाशहविषामाद्यास्तिस्रः क्रमेणानुवाक्या उत्तरास्तिस्रो याज्याः । 'अग्नीषोमौ' इति खण्डे सूत्रितं—'सोमापूषणा जनना रयीणाम्' ( आश्व. श्रौ. ३. ८ ) इति ॥

---

१. क-ञ-झ१-ण-ण१-थ-न-म-व-मधुरस० । २, म-इत्येतस्य ।

सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥ १ ॥

सोमापूषणा । जनना । रयीणाम् । जनना । दिवः । जनना । पृथिव्याः ।
जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः । अकृण्वन् । अमृतस्य । नाभिम् ॥ १ ॥

ᐯसोमापूषणा हे सोमापूषणौ युवां ᐯरयीणां धनानां ᐯजनना जनयितारौ ᐯदिवः द्युलोकस्यापि ᐯजनना जनयितारौ ᐯपृथिव्याः प्रथितायाश्च जनयितारौ भवथः । किंच ᐯजातौ जातमात्रावेव युवां ᐯविश्वस्य ᐯभुवनस्य कृत्स्नस्य जगतः ᐯगोपौ गोप्तारौ ᐯदेवाः ᐯअमृतस्य अमरणस्य ᐯनाभिं हेतुम् ᐯअकृण्वन् अकार्षुः ॥

इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा ।
आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु ॥ २ ॥

इमौ । देवौ । जायमानौ । जुषन्त । इमौ । तमांसि । गूहताम् । अजुष्टा ।
आभ्याम् । इन्द्रः । पक्वम् । आमासु । अन्तरिति । सोमापूषऽभ्याम् । जनत् । उस्रियासु ॥२॥

ᐯइमौ सोमापूषणौ ᐯदेवौ द्योतमानौ ᐯजायमानौ उत्पन्नमात्रावेव ᐯजुषन्त सर्वे देवा अजुषन्त । सेवितवन्त इति यावत् । किंच ᐯइमौ सोमापूषणौ ᐯअजुष्टा असेव्यानि ᐯतमांसि सर्वस्य ᐯगूहतां नाशयतः । किंच ᐯआभ्याम् एताभ्यां ᐯसोमापूषभ्यां सह ᐯइन्द्रः ᐯआमासु तरुणीषु ᐯउस्रियासु गोषु ᐯअन्तः मध्ये ऊधःप्रदेशे ᐯपक्वं परिपक्वं पयः ᐯजनत् जनयति ॥

सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वम् ।
विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पञ्चरश्मिम् ॥ ३ ॥

सोमापूषणा । रजसः । विऽमानम् । सप्तऽचक्रम् । रथम् । अविश्वऽमिन्वम् ।
विषुऽवृतम् । मनसा । युज्यमानम् । तम् । जिन्वथः । वृषणा । पञ्चऽरश्मिम् ॥ ३ ॥

ᐯवृषणा वृषणौ कामानां वर्षितारौ ᐯसोमापूषणा हे सोमापूषणौ ᐯरजसः लोकस्य। 'लोका रजांस्युच्यन्ते' (निरु.४.१९) इति यास्कः। ᐯविमानं परिच्छेदकम्। सर्वमानम्[1] इत्यर्थः। ᐯसप्तचक्रं सप्तर्तुचक्रम्। त्रयोदशो मासः सप्तम ऋतुः। 'अस्ति त्रयोदशो मासः' (तै.सं.६.५.३.४) इति श्रुतेः। ᐯअविश्वमिन्वं विश्वस्यापरिच्छेद्यं ᐯविषुवृतं विष्वक् सर्वत्र परिवर्तमानं ᐯपञ्चरश्मिं पञ्चर्तुरश्मिम्। हेमन्तशिशिरयोः

---

१. क-झ-सर्ववम्; झ१-सर्वभूतम्; ण-त-थ-न-व-सर्वमतम्; म-सर्वतम् ।

समासेन ऋतवः पञ्च । तथा च श्रूयते–‘ द्वादश[1] मासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन ’ ( ऐ. ब्रा. १. १ ) इति । मनसा युज्यमानं मनोमात्रेण युज्यमानम् । तं प्रसिद्धं रथं जिन्वथः अस्मान्प्रति प्रेरयथः ॥

दिव्य१॑न्यः सद॑नं च॒क्र उ॒च्चा पृ॑थि॒व्याम॒न्यो अध्य॒न्तरि॑क्षे ।
ताव॒स्मभ्यं॑ पुरु॒वारं॑ पुरु॒क्षुं रा॒यस्पोषं॒ वि ष्य॑तां॒ नाभि॑म॒स्मे ॥ ४ ॥

दि॒वि । अ॒न्यः । सद॑नम् । च॒क्रे । उ॒च्चा । पृ॒थि॒व्याम् । अ॒न्यः । अधि॑ । अ॒न्तरि॑क्षे ।
तौ । अ॒स्मभ्य॑म् । पु॒रु॒ऽवार॑म् । पु॒रु॒ऽक्षुम् ।
रा॒यः । पोष॑म् । वि । स्य॒ता॒म् । नाभि॑म् । अ॒स्मे इति॑ ॥ ४ ॥

अन्यः तयोरेकः पूषा उच्चा उच्चैरुच्छ्रिते दिवि द्युलोके सदनं स्थानं चक्रे चकार । अन्यः अपरः सोमः पृथिव्याम् ओषधिरूपेण अध्यन्तरिक्षे अन्तरिक्षे[2] च चन्द्ररूपेण सदनं चक्रे । तौ[3] सोमापूषणौ युवां पुरुवारं बहुभिर्वरणीयं पुरुक्षुं बहुकीर्तिं रायस्पोषं धनस्य पुष्टिम् । पश्वात्मकं धनमित्यर्थः । तथा च ब्राह्मणं–‘ पशवो वै रायस्पोषः ’ ( तै. सं. ५. ४. ६. २ ) इति । अस्मे अस्माकं नाभिं विश्वस्य भोगस्य[4] हेतुभूतम्[4] अस्मभ्यं वि ष्यताम् विमुञ्चताम् । प्रयच्छतामित्यर्थः ॥

विश्वा॑न्य॒न्यो भुव॑ना ज॒जान॒ विश्व॑म॒न्यो अ॑भि॒चक्षा॑ण एति ।
सोमा॑पूषणा॒वव॑तं॒ धियं॑ मे यु॒वाभ्यां॒ विश्वाः॒ पृत॑ना जयेम ॥ ५ ॥

विश्वा॑नि । अ॒न्यः । भुव॑ना । ज॒जान॑ । विश्व॑म् । अ॒न्यः । अ॒भि॒ऽचक्षा॑णः । ए॒ति॒ ।
सोमा॑पूषणौ । अव॑तम् । धिय॑म् । मे॒ । यु॒वाभ्या॑म् । विश्वाः॑ । पृत॑नाः । ज॒ये॒म॒ ॥ ५ ॥

हे सोमापूषणौ अन्यः युवयोरेकः सोमः विश्वानि भुवना भुवनानि भूतानि जजान अजनयत् । तथा च मन्त्रः–‘ सोमः पवते जनिता मतीनाम् ’ ( ऋ. सं. ९. ९६. ५ ) इति । अन्यः अपरः पूषा आदित्यः विश्वम् अभिचक्षाणः अभिपश्यन् एति गच्छति । तौ युवां सोमापूषणौ मे धियं कर्म । ‘ धीः शची ’ ( नि. २. १. २१ ) इति कर्मनामसु पाठात् ॥ अवतं रक्षतम् । किंच वयं युवाभ्यां हेतुभ्यां विश्वाः पृतनाः सर्वाः शत्रुसेनाः जयेम अभिभवेम ॥

धियं॑ पू॒षा जि॑न्वतु विश्वमि॒न्वो र॒यिं सोमो॑ रयि॒पति॑र्दधातु ।
अव॑तु दे॒व्यदि॑तिरन॒र्वा बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥ ६ ॥

धिय॑म् । पू॒षा । जि॒न्व॒तु॒ । वि॒श्व॒म्ऽइ॒न्वः । र॒यिम् । सोमः॑ । र॒यि॒ऽपतिः॑ । द॒धा॒तु॒ ।
अव॑तु । दे॒वी । अदि॑तिः । अ॒न॒र्वा । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥ ६ ॥

---

१. क-च-झ-ञ१-ण१-त-थ-न-व–द्वादश वै । २. थ-म–‘ अन्तरिक्षे ’ नास्ति । ३. ण-त-थ–‘ तौ ’ नास्ति । ४. म–भोगहेतुम् ।

ᵛपूषा आदित्यः ᵛविश्वमिन्वः विश्वस्य प्रीणयिता ᵛधियम् अस्माकं कर्म ᵛजिन्वतु तर्पयतु। ᵛरयिपतिः धनपतिः ᵛसोमः ᵛरयिं धनं ᵛदधातु अस्मभ्यं ददातु। किंच ᵛदेवी द्योतमाना ᵛअनर्वा अप्रत्यृता केनापि प्रातिकूल्यमप्रापिता ᵛअदितिः ᵛअवतु अस्मान् रक्षतु। अन्यत् सिद्धम् ॥ ॥ ६ ॥

'वायो ये ते' इत्येकविंशत्यृचं नवमं सूक्तं गार्त्समदं गायत्रम्। 'अम्बितमे' इति षष्ठस्य तृचस्य आदितो द्वे अनुष्टुभौ तृतीया बृहती। 'वायो ये ते' इत्यादिके द्वे ऋचौ वायव्यौ। 'शुक्रस्याद्य' इत्येषा ऐन्द्रवायवी। 'अयं वां मित्रावरुणा' इति पञ्चानां तृचानां[1] मित्रावरुणौ अश्विनौ इन्द्रः विश्वे देवाः सरस्वती इति क्रमेण देवताः। 'प्रेतां यज्ञस्य' इत्यन्त्यस्तृचो ब्राह्मणसूत्रयोर्हविर्धानप्रवर्तने द्यावापृथिव्यनिविद्धानत्वेन च विनियुक्तत्वात् द्यावापृथिव्यो हविर्धानदेवत्यो वा। 'अग्निं च हव्यवाहनम्' इति पादोऽग्निदेवत्यो वा। तथा चानुक्रान्तं–'वायो सैका गायत्रमुक्ता देवताः प्रउगेणाद्ये तु तृचेऽन्त्यैन्द्रवायवी द्यावापृथिव्योऽन्त्यस्तृचो हाविर्धानो वा तृतीयः पादो वाग्नेयोऽम्बितमेऽनुष्टुभौ बृहती च' इति। पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि प्रउगेऽन्त्यतृचवर्जमेतत्सूक्तम्। वायव्यतृचस्य 'वायो ये ते सहस्रिणः' इत्याद्ये द्वे ऋचौ ऐन्द्रवायवतृचस्य 'शुक्रस्याद्य' इत्येषा तृतीया। तथा च सूत्रितं–'वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गहीत्येकोभा देवा दिविस्पृशेति द्वे शुक्रस्याद्य गवाशिर इत्येकायं वां मित्रावरुणेति पञ्च तृचाः' (आश्व. श्रौ. ७. ६) इति। चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणशस्त्रे 'अयं वां मित्रावरुणा' इति षळहस्तोत्रियसंज्ञकः। 'चतुर्विंशे होताजनिष्ट' इति खण्डे सूत्रितम्–'अयं वां मित्रावरुणा पुरूरुणा चिद्ध्यस्ति' (आश्व. श्रौ. ७. २) इति। आभिप्लविकेष्वहःसु प्रातःसवने मैत्रावरुणशस्त्रेऽयमेव तृचः पञ्चदशादिस्तोमनिमित्तमावापनीयः। 'अयं वां मित्रावरुणा नो मित्रावरुणेति तृचाः' (आश्व. श्रौ. ७. ५) इति सूत्रितत्वात्। आद्या मैत्रावरुणग्रहस्यानुवाक्या। सूत्रितं च–'मैत्रावरुणस्य अयं वां मित्रावरुणा' (आश्व. श्रौ. ५. ५) इति। प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसि 'गोमदू षु' इति तृचो विनियुक्तः। 'गोमदू षु नासत्येति तृचाः' (आश्व. श्रौ. ४. १५) इति सूत्रितत्वात्। अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे 'इन्द्रो अङ्ग महद्भयम्' इति तृचः। 'अतिरात्रे पर्यायाणाम्' इति खण्डे सूत्रितम्–'इन्द्रो अङ्ग महद्भयमभि न्यू षु वाचम्' (आश्व. श्रौ. ६.४) इति। आग्रयणे वैश्वदेवस्य हविषः 'विश्वे देवासः' इत्यनुवाक्या। 'आग्रयणम्' इति खण्डे सूत्रितं–'विश्वे देवास आ गत ये के च ज्मा महिनो अहिमायाः' (आश्व. श्रौ. २. ९) इति। दशरात्रे प्रथमेऽहनि प्रउगशस्त्रे 'अम्बितमे नदीतमे' इति सारस्वतः सप्तमस्तृचः। 'चतुर्थेऽहनि' इति खण्डे सूत्रितम्—'अम्बितमे नदीतम इत्यानुष्टुभं प्रउगम्' (आश्व. श्रौ. ७. ११) इति। व्यूढे दशरात्रे प्रथमे छन्दोमे वैश्वदेवशस्त्रे 'प्रेतां यज्ञस्य शंभुवा' इति द्यावापृथिव्यनिविद्धानीयस्तृचः। 'अथ छन्दोमाः' इति खण्डे सूत्रितं–'प्रेतां यज्ञस्य शंभुवायं देवाय जन्मन इति तृचाः' (आश्व. श्रौ. ८. ९) इति। हविर्धानप्रवर्तनेऽप्ययं तृचो विनियुक्तः। सूत्रितं च—'प्रेतां यज्ञस्य शंभुवा यमे इव यतमाने यदैतम्' (आश्व. श्रौ. ४. ९; ऐ. ब्रा. १. २९) इति ॥

**वायो॒ ये ते॑ सह॒स्रिणो॒ रथा॑स॒स्तेभि॒रा ग॑हि। नि॒युत्वा॒न्त्सोम॑पीतये ॥ १ ॥**

वायो॒ इति॑। ये। ते॒। स॒ह॒स्रिणः॑। रथा॑सः। तेभिः॑। आ। ग॒हि॒। नि॒युत्वा॑न्। सोम॑ऽपीतये ॥१॥

---

१. ख-ग-च-झ१-ण-ण१-थ-न-'तृचानां' नास्ति; म-ऋचाम्।

हे ᵛवायो ᵛते त्वदीयाः ᵛये ᵛसहस्रिणः सहस्रसंख्याकाः ᵛरथासः रथाः ᵛतेभिः तैः ᵛनियुत्वान् नियुद्भिर्युक्तस्त्वं ᵛसोमपीतये सोमपानार्थम् ᵛआ ᵛगहि आगच्छ। नानारूपत्वाद्वायोः सर्वाभिर्विभूतिभिः सहागमनं प्रार्थ्यत इति भावः ॥

नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते । गन्तासि सुन्वतो गृहम् ॥ २ ॥

नियुत्वान् । वायो इति । आ । गहि । अयम् । शुक्रः । अयामि । ते ।

गन्ता । असि । सुन्वतः । गृहम् ॥ २ ॥

हे ᵛवायो ᵛनियुत्वान् । नियुतो वाहनानि वायोः । तैर्युक्तस्त्वम् ᵛआ ᵛगहि आगच्छ । ᵛअयं ᵛशुक्रः दीप्यमानः सोमः ᵛते तुभ्यम् ᵛअयामि नियतो गृहीत आसीत् ॥ यमेः कर्मणि लुङ् ॥ ᵛसुन्वतः सोमाभिषवं कुर्वतो यजमानस्य ᵛगृहं ᵛगन्तासि याता भवसि ॥

शुक्रस्याद्य गवाशिर इन्द्रवायू नियुत्वतः । आ यातं पिबतं नरा ॥ ३ ॥

शुक्रस्य । अद्य । गोऽआशिरः । इन्द्रवायू इति । नियुत्वतः । आ । यातम् । पिबतम् । नरा ॥३॥

हे ᵛनरा नेतारौ हे ᵛइन्द्रवायू ᵛअद्य अस्मिन्नहनि ᵛनियुत्वतः ॥ विभक्तिव्यत्ययः ॥ नियुत्वन्तौ युवां ᵛगवाशिरः गव्यं पय आशीराश्रयणसाधनं यस्य तस्य ᵛशुक्रस्य दीप्तस्य सोमस्य पानार्थम् ᵛआ ᵛयातम् आगच्छतम् । आगत्य सोमं ᵛपिबतम् ॥

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवम् ॥ ४ ॥

अयम् । वाम् । मित्रावरुणा । सुतः । सोमः । ऋतऽवृधा ।

मम । इत् । इह । श्रुतम् । हवम् ॥ ४ ॥

ᵛमित्रावरुणा हे मित्रावरुणौ ᵛवां युवाभ्याम् ᵛअयं ᵛसोमः ᵛसुतः अभिषुतः । ᵛऋतावृधा हे सत्यस्य यज्ञस्य वा वर्धकौ ᵛममेत् ममैव ᵛहवम् आह्वानम् ᵛइह अस्मिन् यज्ञे ᵛश्रुतं शृणुतम् ॥

राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे । सहस्रस्थूण आसाते ॥ ५ ॥

राजानौ । अनभिऽद्रुहा । ध्रुवे । सदसि । उत्ऽतमे । सहस्रऽस्थूणे । आसाते इति ॥ ५ ॥

ᵛराजानौ ईश्वरौ दीप्यमानौ वा ᵛअनभिद्रुहा अनभिद्रोग्धारौ यौ मित्रावरुणौ ᵛध्रुवे स्थिरे ᵛउत्तमे उत्कृष्टे ᵛसहस्रस्थूणे ᵛसदसि स्थाने ᵛआसाते उपविशतः तावागच्छतमिति शेषः ॥ ॥ ७ ॥

ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम् ॥ ६ ॥

ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । आदित्या । दानुनः । पती इति ।

सचेते इति । अनवऽह्वरम् ॥ ६ ॥

सम्राजौ आज्ञयैव सर्वेषां शास्तारौ ᵛघृतासुती घृतान्नौ । 'तद्वां महित्वं घृतान्नावस्तु' ( ऋ. सं. ६. ६७. ८ ) इति मन्त्रान्तरात् । ᵛआदित्या अदितेः पुत्रौ ᵛदानुनस्पती दानुनो दानस्य देयस्य[1] वा धनस्य पती स्वामिनौ । ᵛता तौ मित्रावरुणौ ᵛअनवह्वरम् अकुटिलं यजमानं ᵛसचेते सेवेते ॥

गोम॑दू षु ना॑सत्याश्वा॑वद्यातमश्विना । व॒र्ती रु॑द्रा नृपाय्य॑म् ॥ ७ ॥

गोऽम॑त् । ऊँ इति॑ । सु । ना॒स॒त्या॒ । अश्व॑ऽवत् । या॒त॒म् । अ॒श्वि॒ना॒ ।

व॒र्तिः । रु॒द्रा॒ । नृ॒ऽपाय्य॑म् ॥ ७ ॥

ᵛअश्विना हे अश्विनौ हे ᵛनासत्या अनृतभाषणरहितौ हे ᵛरुद्रा रोरूयमाणौ द्रवन्तौ युवां ᵛवर्तिः मार्गः । तेन मार्गेण रथेन वा ᵛनृपाय्यं नृभिर्नेतृभिर्देवैः पातव्यं सोमं ᵛगोमत् गोमद्यथा भवति तथा ᵛअश्ववत् अश्ववच्च यथा भवति तथा ᵛयातं गच्छतम् । ᵛऊ ᵛषु इति पूरणौ ॥

न यत्परो॒ नान्त॑र आद॒धर्ष॑द्वृषण्वसू । दु॒ःशंसो॒ मर्त्यो॑ रि॒पुः ॥ ८ ॥

न । यत् । पर॑ः । न । अन्त॑रः । आ॒ऽद॒धर्ष॑त् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।

दुः॒ऽशंस॑ः । मर्त्य॑ः । रि॒पुः ॥ ८ ॥

ᵛवृषण्वसू हे धनस्य वर्षितारौ ᵛयत् धनं ᵛपरः दूरस्थः ᵛदुःशंसः शंसनायोग्यः ᵛमर्त्यो ᵛरिपुः यत् ᵛन ᵛआदधर्षत् तथा[2] उक्तलक्षणेतरः ᵛअन्तरः समीपवर्ती मर्त्यो रिपुरपि यत् ᵛन आदधर्षत् तद्धनम् आवोळ्हमिति शेषः ॥

ता न॒ आ वो॑ळ्हमश्विना र॒यिं पि॒शङ्ग॑संदृशम् । धिष्ण्या॑ वरिवो॒विद॑म् ॥ ९ ॥

ता॒ । न॒ः । आ । वो॒ळ्ह॒म् । अ॒श्वि॒ना॒ । र॒यिम् । पि॒शङ्ग॑ऽसंदृशम् । धिष्ण्या॑ । व॒रि॒वः॒ऽविद॑म् ॥९॥

हे ᵛधिष्ण्या धिषणार्हौ ᵛअश्विना हे अश्विनौ ᵛता तौ युवां ᵛपिशङ्गसंदृशं नानारूपं ᵛवरिवोविदं धनस्य लम्भकं ᵛरयिं पशुं ᵛनः अस्मभ्यम् ᵛआ ᵛवोळहम् आवहतम् ॥

इन्द्रो॑ अ॒ङ्ग म॒हद्भ॒यम॒भी षदप॑ चुच्यवत् । स हि स्थि॒रो विच॑र्षणिः ॥ १० ॥

इन्द्र॑ः । अ॒ङ्ग । म॒हत् । भ॒यम् । अ॒भि । सत् । अप॑ । चु॒च्य॒व॒त् ।

सः । हि । स्थि॒रः । विऽच॑र्षणिः ॥ १० ॥

---

१, ख-ग-च-ण-ण१-न-'देयस्य' नास्ति; झ-थ-म-व-देवस्य । २. झ१-ण-त-थ-न-व-यथा ।

ᵛइन्द्रः ᵛमहत् अधिकम् ᵛअभी ᵛषत् अभिभवत् ᵛभयं[1] भयकारणम् ᵛअप ᵛचुच्यवत् अपच्यावयेत् । ᵛहि यस्मात्कारणात् ᵛसः ᵛस्थिरः केनापि चालयितुमशक्यः ᵛविचर्षणिः विश्वस्य द्रष्टा॥ ॥८॥

इन्द्र॑श्च मृ॒ळया॑ति नो॒ न न॑ः प॒श्चाद॒घं न॑शत् । भ॒द्रं भ॑वाति नः पु॒रः ॥ ११ ॥

इन्द्र॑ः । च॒ । मृ॒ळया॑ति । न॒ः । न । न॒ः । प॒श्चात् । अ॒घम् । न॒शत् ।

भ॒द्रम् । भ॒वा॒ति॒ । न॒ः । पु॒रः ॥ ११ ॥

ᵛइन्द्रश्च परमैश्वर्यवानिन्द्रश्चेत् ᵛनः अस्मान् ᵛमृळयाति सुखयेत् । ᵛपश्चात् पृष्ठतः ᵛनः अस्मान् ᵛअघं दुरितं ᵛन ᵛनशत् न प्राप्नोति । ᵛनः अस्माकं ᵛपुरः पुरस्तात् ᵛभद्रं कल्याणं च ᵛभवाति भवति ॥

इन्द्र॒ आशा॑भ्य॒स्परि॒ सर्वा॑भ्यो॒ अभ॑यं करत् । जेता॒ शत्रू॒न्विच॑र्षणिः ॥ १२ ॥

इन्द्र॑ः । आशा॑भ्यः । परि॑ । सर्वा॑भ्यः । अभ॑यम् । क॒रत् । जेता॑ । शत्रू॑न् । विऽच॑र्षणिः ॥१२॥

ᵛविचर्षणिः विविधस्य द्रष्टा ᵛजेता । ᵛशत्रून् असुरान् जेता ॥ तृन्नन्तत्वात् षष्ठ्यभावः ॥ ᵛइन्द्रः परमैश्वर्यवान् ᵛसर्वाभ्यः ᵛआशाभ्यः दिग्भ्यः अस्माकम् ᵛअभयं ᵛकरत् करोतु ॥ ᵛपरि इति पञ्चमीद्योतकः॥

विश्वे॑ देवास॒ आ ग॑त शृणु॒ता म॑ इ॒मं हव॑म् । एदं ब॒र्हिर्नि षी॑दत ॥ १३ ॥

विश्वे॑ । दे॒वा॒स॒ः । आ । ग॒त॒ । शृ॒णु॒त । मे॒ । इ॒मम् । हव॑म् ।

आ । इ॒दम् । ब॒र्हिः । नि । सी॒द॒त ॥ १३ ॥

ᵛविश्वे ᵛदेवासः हे विश्वे देवाः ᵛआ ᵛगत इहागच्छत । ᵛमे मदीयम् ᵛइमं ᵛहवम् आह्वानं ᵛशृणुत । ᵛइदं ᵛबर्हिः अस्मिन्बर्हिषि ᵛआ ᵛनि ᵛषीदत उपविशत ॥

ती॒व्रो वो॒ मधु॑माँ अ॒यं शु॒नहो॑त्रेषु मत्स॒रः । ए॒तं पि॑बत॒ काम्य॑म् ॥ १४ ॥

ती॒व्रः । व॒ः । मधु॑ऽमान् । अ॒यम् । शु॒नऽहो॑त्रेषु । म॒त्स॒रः । ए॒तम् । पि॒ब॒त । काम्य॑म् ॥१४॥

हे विश्वे देवाः ᵛतीव्रः तीव्रमदः ᵛमधुमान् रसवान् ᵛमत्सरः मदकरः सोमः ᵛअयं ᵛवः[2] युष्मदर्थं ᵛशुनहोत्रेषु गृत्समदेष्वस्मासु स्थितः । ᵛकाम्यं कमनीयम् ᵛएतं सोमं ᵛपिबत ॥

इन्द्र॑ज्येष्ठा॒ मरु॑द्गणा॒ देवा॑सः॒ पूष॑रातयः । विश्वे॒ मम॑ श्रु॒ता हव॑म् ॥ १५ ॥

इन्द्र॑ऽज्येष्ठाः । मरु॑त्ऽगणाः । देवा॑सः । पूष॑ऽरातयः । विश्वे॑ । मम॑ । श्रु॒त । हव॑म् ॥ १५ ॥

---

१. झ–भयं भयंकरम् । २. ख-ग-ण-त-थ-म–'वः' नास्ति ।

हे इन्द्रज्येष्ठाः इन्द्रपुरोगमाः मरुद्गणाः मरुत्समूहरूपाः पूषरातयः पूषाख्यो देवो रातिर्दाता येषां ते पूषरातयः देवासः हे द्योतमाना देवाः विश्वे सर्वे यूयं मम मदीयं हवम् आह्वानं श्रुत शृणुत । इन्द्रज्येष्ठादयः संबोधनान्ताः ( ऋ. सं. १. २३. ८ ) ॥ ॥ ९ ॥

अम्बितमे नदीतमे देवितमे सरस्वति ।
अप्रशस्ताइव स्मसि प्रशस्तिमम्ब नस्कृधि ॥ १६ ॥

अम्बिऽतमे । नदीऽतमे । देविऽतमे । सरस्वति ।
अप्रशस्ताःऽइव । स्मसि । प्रऽशस्तिम् । अम्ब । नः । कृधि ॥ १६ ॥

अम्बितमे मातॄणां श्रेष्ठे नदीतमे नदीनां श्रेष्ठे देवितमे देवीनां श्रेष्ठे हे सरस्वति अप्रशस्ता-इव धनाभावादसमृद्धा इव वयं स्मसि भवामः । अम्ब[1] हे मातः सरस्वति नः अस्मभ्यं प्रशस्तिं धनसमृद्धिं कृधि कुरु । प्रयच्छेत्यर्थः ॥

त्वे विश्वा सरस्वति श्रितायूंषि देव्याम् ।
शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥ १७ ॥

त्वे इति । विश्वा । सरस्वति । श्रिता । आयूंषि । देव्याम् ।
शुनऽहोत्रेषु । मत्स्व । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥ १७ ॥

हे सरस्वति देव्यां द्योतमानायां त्वे त्वयि विश्वा विश्वानि सर्वाणि आयूंषि अन्नानि । ' आयुः सूनृता ' ( नि. २. ७. २३ ) इत्यन्ननामसु पाठात् । श्रिता आश्रितानि । सा त्वं शुन-होत्रेषु गृत्समदेष्वस्मासु विषयेषु मत्स्व सोमपानेन तृप्य । किंच हे देवि सरस्वति नः अस्मभ्यं प्रजां दिदिड्ढि पुत्रान् देहि ॥

इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति ।
या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥ १८ ॥

इमा । ब्रह्म । सरस्वति । जुषस्व । वाजिनीऽवति ।
या । ते । मन्म । गृत्सऽमदाः । ऋतऽवरि । प्रिया । देवेषु । जुह्वति ॥ १८ ॥

वाजिनीवति अन्नवति ऋतावरि उदकवति हे सरस्वति इमा इमानि ब्रह्म ब्रह्माणि हवींषि जुषस्व स्वीकुरु । या[2] यानि मन्म मननीयानि देवेषु प्रिया देवानां मध्ये तुभ्यं प्रियाणि देवेषु प्रियाणि वा ते त्वदर्थं गृत्समदाः जुह्वति ॥

---

१. म–हे अम्ब । २. ण-त-थ-म–' या ' नास्ति ।

प्रेतां युज्ञस्यं शंभुवां युवामिदा वृणीमहे। अग्निं चं हव्यवाहंनम् ॥ १९ ॥

प्र । इताम् । यज्ञस्यं । शम्ऽभुवां । युवाम् । इत् । आ । वृणीमहे ।

अग्निम् । च । हव्यऽवाहंनम् ॥ १९ ॥

ᵛयज्ञस्य यागस्य ᵛशंभुवा सुखसंपादके हविर्धाने अनसी तद्रूपे द्यावापृथिव्यौ वा[1] ᵛप्रेताम् उत्तरवेदेः पश्चिमभागं प्रति प्रगच्छताम्[2] । अथ प्रत्यक्षकृतः । ᵛयुवामित् युवामेव ᵛआ ᵛवृणीमहे प्रार्थयामहे । ᵛहव्यवाहनम् ᵛअग्निं ᵛच आवृणीमहे । अग्निरत्र निपातभागिति ॥

द्यावां नः पृथिवी इमं सिध्रमद्य दिविस्पृशंम्। यज्ञं देवेषु यच्छताम् ॥ २० ॥

द्यावां । नः । पृथिवी इतिं । इमम् । सिध्रम् । अद्य । दिविऽस्पृशंम् ।

यज्ञम् । देवेषु । यच्छताम् ॥ २० ॥

ᵛद्यावा द्यौः ᵛपृथिवी च उभे[3] ᵛसिध्रं स्वर्गादेः साधकं ᵛदिविस्पृशं देवान् गच्छन्तं ᵛनः अस्माकम् ᵛइमं ᵛयज्ञं ᵛदेवेषु ᵛयच्छतां नियच्छताम् ॥

आ वांमुपस्थंमद्रुहा देवाः सींदन्तु यज्ञियाः । इहाद्य सोमंपीतये ॥ २१ ॥

आ । वाम् । उपऽस्थंम् । अद्रुहा । देवाः । सीदन्तु । यज्ञियाः । इह । अद्य । सोमंऽपीतये ॥२१॥

ᵛअद्रुहा द्रोहवर्जिते हे हविर्धाने तद्रूपे द्यावापृथिव्यौ वा ᵛवां युवयोः ᵛउपस्थं समीपं ᵛयज्ञियाः यज्ञार्हाः ᵛदेवाः ᵛइह यज्ञे ᵛअद्य अस्मिन्नहनि ᵛसोमपीतये सोमपानाय ᵛआ ᵛसीदन्तु ॥ ॥ १० ॥

' कनिक्रदत् ' इति तृचं दशमं सूक्तम् । अत्रेवमनुक्रमणिका–' कनिक्रदत्तृचम् ' इति । मण्डलद्रष्टा गृत्समदोऽस्य ऋषिः । त्रिष्टुप् छन्दः । कपिञ्जलरूपीन्द्रो देवता । वयसाममनोज्ञां वाचं श्रुत्वैतत्सूक्तं जपेत् । सूत्रितं च– ' वयसाममनोज्ञां वाचः श्रुत्वा कनिक्रदज्जनुषं प्रब्रुवाण इति सूक्ते जपेत् ' (आश्व. गृ. ३. १०. ९ ) इति ॥

कनिंक्रदज्जनुषं प्रब्रुवाण इयंर्ति वाचंमरितेव नावंम् ।
सुमङ्गलंश्च शकुने भवांसि मा त्वा का चिंदभिभा विश्व्यां विदत् ॥ १ ॥

कनिंक्रदत् । जनुषंम् । प्रऽब्रुवाणः । इयंर्ति । वाचंम् । अरिताऽइंव । नावंम् ।

सुऽमङ्गलंः । च । शकुने । भवांसि । मा । त्वा । का । चित् । अभिऽभा । विश्व्यां । विदत् ॥ १ ॥

---

१. ख-ग-च-ण-ण१-त-थ-न–' वा ' नास्ति । २. ख-ग-च-झ१-ण-ण-१-न-म-व–गच्छताम् । ३. ख-ग-च-ण१–उभे हविर्धाने वा यच्छताम्; फ–उभे हविर्धाने वा यच्छतां नियुच्छताम् ।

कनिक्रदत् पुनःपुनः शब्दायमानः जनुषं जनिष्यमाणमर्थं प्रब्रुवाणः सूचयन् कपिञ्जलः अरितेव कर्णधार इव नावं वाचम् इयर्ति प्रेरयति । अथ प्रत्यक्षकृतः । हे शकुने कपिञ्जल त्वं सुमङ्गलः प्रकृष्टकल्याणः च भवासि भव । किंच का चिदभिभा कोऽप्यभिभवः त्वा त्वां विश्व्या विश्वतः सर्वासु दिक्षु मा विदत् मा प्रापत् । 'शकुनिः शक्नोत्युन्नेतुमात्मानम्'; 'न्यक्रन्दीज्जन्म प्रब्रुवाणो यथास्य शब्दस्तथा नामेरयति वाचमीरयितेव नावम् । सुमङ्गलश्च शकुने भव कल्याणमङ्गलो मङ्गलं गिरतेर्गृणात्यर्थे गिरत्यनर्थानिति वा' ( निरु. ९. ३; ४) इति यास्कः ॥

मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता ।
पित्र्यामनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह ॥ २ ॥

मा । त्वा । श्येनः । उत् । वधीत् । मा । सुऽपर्णः । मा । त्वा । विदत् । इषुऽमान् । वीरः । अस्ता ।
पित्र्याम् । अनु । प्रऽदिशम् । कनिक्रदत् । सुऽमङ्गलः । भद्रऽवादी । वद । इह ॥ २ ॥

हे शकुने त्वा त्वां श्येनः प्रबलः[1] पक्षिविशेषः मा वधीत् मा हिंसीत् । उत[2] अपि च सुपर्णः गरुडः पक्षी मा वधीत्[2] । तथा इषुमान् बाणवान् वीरो अस्ता शराणां क्षेप्ता धन्वी त्वा त्वां मा विदत् मा प्रापत्[3] । किंच पित्र्यां प्रदिशं दक्षिणां दिशम् अनु । दक्षिणस्यां दिशीत्यर्थः । कनिक्रदत् पुनःपुनः शब्दं कुर्वन् सुमङ्गलः कल्याणमङ्गलः भद्रवादी शोभनवादी सन् इह अस्मद्विषये वद मङ्गलं सूचय ॥

अव क्रन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते ।
मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥ ३ ॥

अव । क्रन्द । दक्षिणतः । गृहाणाम् । सुऽमङ्गलः । भद्रऽवादी । शकुन्ते ।
मा । नः । स्तेनः । ईशत । मा । अघऽशंसः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ३ ॥

शकुन्ते हे कपिञ्जल त्वं सुमङ्गलो भद्रवादी च सन् गृहाणां दक्षिणतः दक्षिणस्यां दिशि अव क्रन्द शब्दं कुरु । दक्षिणतः शब्दायमानः शकुन्तो मङ्गलसूचको हि । नः अस्माकं स्तेनः तस्करः मा ईशत मेशिष्ट । अघशंसः अनर्थकानां[4] शंसकोऽपि मा ईशिष्ट । उत्तमः पादो व्याख्यातचरः ॥ ॥ ११ ॥

'प्रदक्षिणित्' इति तृचमेकादशं सूक्तं गार्त्समदं जागतम् । तथा चानुक्रान्तं—'प्रदक्षिणिज्जागतं मध्येऽतिशक्वर्यष्टिर्वा' इति । द्वितीयातिशक्करी अष्टिर्वा । इतरे जगत्यौ । कपिञ्जलरूपीन्द्रो देवता । वयसाममनोज्ञां वाचं श्रुत्वा 'प्रदक्षिणित्' इति सूक्तं जपेत् । सूत्रं प्रागेवोदाहृतम् ॥

---

१. त-थ—प्रबलः मा सुपर्णः । २. क-ज्ञ-ज्ञ१-ण-त-थ-न-म-व—'उत......वधीत्' नास्ति; ख-ग—'उत......वधीत् । ३. ख-ग-च-ण-ण१-थ-न-व—प्रापयत् । ४. म—अनर्थानाम् ।

प्रदक्षिणिदभि गृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः ।

उभे वाचौ वदति सामगाइव गायत्रं च त्रैष्टुभं चानु राजति ॥ १ ॥

प्रऽदक्षिणित् । अभि । गृणन्ति । कारवः । वयः । वदन्तः । ऋतुऽथा । शकुन्तयः ।

उभे इति । वाचौ । वदति । सामगाऽइव । गायत्रम् । च । त्रैस्तुभम् । च । अनु । राजति ॥१॥

शकुन्तयः कपिञ्जलाः ऋतुथा कालेकाले वयः अन्नं वदन्तः सूचयन्तः कारवः स्तोतार इव प्रदक्षिणित् प्रदक्षिणम् अभि गृणन्ति अभिवदन्तु । बहुवचनं पूजार्थम् । किंच उभे वाचौ गानं च श्रौतं च सामगाः गायत्रं त्रैष्टुभं च सामनी इव शकुन्तिः[1] वदति । अनु राजति च । श्रृण्वतोऽनुरक्तान् करोतीत्यर्थः ॥

उद्गातेव शकुने साम गायसि ब्रह्मपुत्रइव सवनेषु शंससि ।

वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद

विश्वतो नः शकुने पुण्यमा वद ॥ २ ॥

उद्गाताऽइव । शकुने । साम । गायसि । ब्रह्मपुत्रःऽइव । सवनेषु । शंससि ।

वृषाऽइव । वाजी । शिशुऽमतीः । अपिऽइत्य । सर्वतः । नः । शकुने ।

भद्रम् । आ । वद । विश्वतः । नः । शकुने । पुण्यम् । आ । वद ॥ २ ॥

शकुने हे कपिञ्जल उद्गातेव साम यथोद्गाता साम गायति तथा त्वं गायसि गानस्वनं[2] करोषि । ब्रह्मपुत्रइव यथा ब्राह्मणाच्छंसी सवनेषु शस्त्राणि शंसति तथा[3] त्वं[3] कालेषु शंससि श्रौतस्वरं करोषि । वृषेव वाजी सेचनसमर्थोऽश्वः शिशुमतीः वडवाः अपीत्य अभिगत्य यथा[4] शब्दं करोति तथा त्वमपि वद । शिष्टं स्पष्टम् ॥

आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः ।

यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥ ३ ॥

आऽवदन् । त्वम् । शकुने । भद्रम् । आ । वद । तूष्णीम् । आसीनः । सुऽमतिम् । चिकिद्धि । नः ।

यत् । उत्ऽपतन् । वदसि । कर्करिः । यथा । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ३ ॥

---

१. थ-म–शकुनिः । २. ण-थ-म–मानस्वनम् । ३. ण-त-थ-म–' तथा त्वं ' नास्ति । ४. ण-त-थ-म–' यथा ' नास्ति ।

ᵛशकुने हे कपिञ्जल ᵛआवदन् शब्दं कुर्बन् ᵛत्वं ᵛभद्रमा ᵛवद मङ्गलं वद। ᵛतूष्णीमासीनः तूष्णीं तिष्ठन्नपि ᵛनः अस्माकं ᵛसुमतिं ᵛचिकिद्धि बुध्यस्व। ᵛयत् यदा ᵛउत्पतन् ᵛवदसि तदा ᵛकर्करिर्यथा कर्करिरिव वदसि। कर्करिर्वाद्यविशेषः। अन्यद्व्याख्यातचरम्॥ ॥ १२ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

द्वितीयाष्टके द्वितीये मण्डले चतुर्थोऽनुवाकः ।

समाप्तं च द्वितीयं मण्डलम् ॥

---

# ॥ अथ तृतीयं मण्डलम् ॥

वैश्वामित्रे तृतीये[1] पञ्चानुवाकाः । तत्र प्रथमेऽनुवाके द्वादश सूक्तानि । तत्र 'सोमस्य मा' इति त्रयोविंशत्यृचं प्रथमं सूक्तम् । तथा चानुक्रान्तं–'सोमस्य त्र्यधिका' इति । अस्य मण्डलद्रष्टा[2] विश्वामित्र ऋषिः । अनुक्तत्वात् त्रिष्टुप् छन्दः । 'मण्डलादिष्वाग्नेयम्' इति परिभाषयाग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि विनियोगः । तथा च सूत्रितं[3]–'सोमस्य मा तवसं प्रत्यग्निरुषस इति त्रीणि' (आश्व. श्रौ. ४. १३) इति ॥

**सोम॑स्य मा त॒वसं॒ वक्ष्य॑ग्ने॒ वह्निं॑ चकर्थ वि॒दथे॒ यज॑ध्यै ।**

**दे॒वाँ अच्छा॒ दीद्य॑द्यु॒ञ्जे अद्रिं॑ शमा॒ये अ॑ग्ने त॒न्वं॑ जुषस्व ॥ १ ॥**

सोम॑स्य । मा॒ । त॒वस॑म् । वक्षि॑ । अ॒ग्ने॒ । वह्नि॑म् । च॒क॒र्थ॒ । वि॒दथे॑ । यज॑ध्यै ।

दे॒वान् । अच्छ॑ । दीद्य॑त् । यु॒ञ्जे । अद्रि॑म् । श॒म्ऽआ॒ये । अ॒ग्ने॒ । त॒न्व॑म् । जु॒ष॒स्व॒ ॥ १ ॥

हे ˅अग्ने त्वं ˅विदथे यज्ञे ˅यजध्यै यष्टुं ˅सोमस्य ˅वह्निं वोढारं यं मां ˅चकर्थ कृतवानसि तं मां ˅तवसं तवस्विनं बलिनं ˅वक्षि कामयस्व । किंच हे अग्ने ˅देवान् ˅अच्छ अभि ˅दीद्यत् दीप्यमानोऽहम् ˅अद्रिं ग्रावाणं ˅युञ्जे अभिषवणाय युनज्मि ˅शमाये शाम्यामि[4] च । तथा च मन्त्रान्तरम्–'ऋतेन देवः सविता शमायते' (ऋ. सं. ८. ८६. ५) इति । यद्वा शमाये स्तौमि । 'शशमानो जरति' इति स्तुतिकर्मसु पाठात् । तथा च मन्त्रान्तरं–'सो अग्न ईजे शशमे च मर्तः' (ऋ. सं. ६. १. ९) इति । किंच हे ˅अग्ने ˅तन्वं शरीरं ˅जुषस्व रक्षायै सेवस्व । यद्वा कर्माणि तन्वन्तं मां सेवस्वेत्यर्थः ॥

**प्राञ्चं॑ य॒ज्ञं च॑कृम॒ वर्ध॑तां॒ गीः स॒मिद्भि॑र॒ग्निं नम॑सा दुवस्यन् ।**

**दि॒वः श॑शासुर्वि॒दथा॑ कवी॒नां गृत्सा॑य चित्त॒वसे॑ गा॒तुमी॑षुः ॥ २ ॥**

प्राञ्च॑म् । य॒ज्ञम् । च॒कृ॒म॒ । वर्ध॑ताम् । गीः । स॒मित्ऽभिः॑ । अ॒ग्निम् । नम॑सा । दु॒व॒स्य॒न् ।

दि॒वः । श॒शा॒सुः॒ । वि॒दथा॑ । क॒वी॒नाम् । गृत्सा॑य । चि॒त् । त॒वसे॑ । गा॒तुम् । ई॒षुः॒ ॥ २ ॥

हे अग्ने वयं ˅यज्ञं ˅प्राञ्चं प्रकर्षेण गच्छन्तं ˅चकृम अकार्ष्म । ˅गीः मदीया स्तुतिः ˅वर्धताम् एधताम् । ˅अग्निं ˅समिद्भिः ˅नमसा हविषा च ˅दुवस्यन् अस्मदीयाः परिचरेयुः । किंच ˅दिवः द्युलोकादागत्य देवाः ˅कवीनां स्तोतॄणां ˅विदथा ज्ञानानि स्तोत्राणि वा ˅शशासुः अन्वशिषन् । अपि च ˅गृत्साय । गृणातेरिदं रूपम् । स्तोतव्यायाग्नये ˅तवसे वृद्धाय ˅गातुं स्तोतुम् ˅ईषुः ˅चित् स्तोतार इच्छन्ति च । चिदिति चार्थे ॥

---

१. झ-म–तृतीये मण्डले । २. च-म–मण्डलस्य द्रष्टा । ३. क-ख-झ१-ण-थ-न-म-व–सूत्रम् ।
४. क-च-झ-झ१-ण-थ-व–शम्यामि ; ख-ण१– शस्यामि ।

मयो दधे मेधिरः पूतदक्षो दिवः सुबन्धुर्जनुषा पृथिव्याः ।
अविन्दन्नु दर्शतमप्स्व१ न्तर्देवासो अग्निमपसि स्वसॄणाम् ॥ ३ ॥

मयः । दधे । मेधिरः । पूतऽदक्षः । दिवः । सुऽबन्धुः । जनुषा । पृथिव्याः ।
अविन्दन् । ऊँ इति । दर्शतम् । अपऽसु । अन्तः । देवासः । अग्निम् । अपसि । स्वसॄणाम् ॥३॥

मेधिरः मेधावान् प्राज्ञः पूतदक्षः शुद्धबलः जनुषा जन्ममात्रेण सुबन्धुः शोभनबन्धुः । स्वत एव बन्धुरिति यावत् । योऽग्निः दिवः द्युलोकस्य पृथिव्याः भूमेश्च मयः सुखं दधे विदधाति । देवानां मनुष्याणां च सुखं करोतीति यावत् । तं दर्शतं दर्शनीयम् अग्निं देवासः देवाः स्वसॄणां सरणशीलानां नदीनाम् अप्स्वन्तः गूढं स्थितम् अपसि यज्ञवहनरूपे[1] कर्मणि निमित्ते । उ इति पूरणः । अविन्दन् लब्धवन्तः ॥

अवर्धयन्त्सुभगं सप्त यह्वीः श्वेतं जज्ञानमरुषं महित्वा ।
शिशुं न जातमभ्यारुरश्वा देवासो अग्निं जनिमन्वपुष्यन् ॥ ४ ॥

अवर्धयन् । सुऽभगम् । सप्त । यह्वीः । श्वेतम् । जज्ञानम् । अरुषम् । महिऽत्वा ।
शिशुम् । न । जातम् । अभि । आरुः । अश्वाः । देवासः । अग्निम् । जनिमन् । वपुष्यन् ॥४॥

सप्त सर्पणशीलाः यह्वीः यह्वयः महत्यो नद्यः सुभगं शोभनधनं श्वेतं शुभ्रं जज्ञानं जातं महित्वा महत्त्वेन अरुषम् आरोचमानमप्सु स्थितमग्निम् अवर्धयन् । स्वकार्यभूताभिरोषधीभिर्वृद्धिं प्रापितवत्यः । यद्वा दिव्यमग्निमापो वर्धयन्त्यबिन्धनत्वात्तस्य । किंच शिशुं न जातं यथा जातं शिशुम् अश्वाः वडवाः अभ्यारुः अभिगच्छन्ति तथा नद्य उत्पन्नमग्निमभ्यारुः अभिजग्मुः । अपि च देवासः देवाः अग्निं जनिमन् जन्मन्युदके वा वपुष्यन् वपुर्दीप्तिमकुर्वन् ॥

शुक्रेभिरङ्गै रज आततन्वान् क्रतुं पुनानः कविभिः पवित्रैः ।
शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ॥ ५ ॥

शुक्रेभिः । अङ्गैः । रजः । आऽततन्वान् । क्रतुम् । पुनानः । कविऽभिः । पवित्रैः ।
शोचिः । वसानः । परि । आयुः । अपाम् । श्रियः । मिमीते । बृहतीः । अनूनाः ॥ ५ ॥

अग्निः शुक्रेभिः शुक्लैः अङ्गैः तेजोभिः रजः अन्तरिक्षम् आततन्वान् आतन्वन् व्याप्नुवन् क्रतुं कर्मणां कर्तारं यजमानं कविभिः क्रान्तप्रज्ञैः स्तोतव्यैर्वा पवित्रैः शोधकैस्तेजोभिः पुनानः

---

1. क-ञ-ण-ण१-न-म–यज्ञवाहनरूपे ।

शोधयन् vशोचिः दीप्तिं वस्त्रस्थानीयं vपरि परितः vवसानः आच्छादयन् vअपाम् अपस्यतां कर्मवताम् vआयुः अन्नं vबृहतीः प्रभूताः vअनूनाः संपूर्णाः vश्रियः संपदश्च vमिमीते करोति ॥ ॥ १३ ॥

वव्राजा सीमनदतीरदब्धा दिवो यह्वीरवसाना अनग्नाः ।
सना अत्र युवतयः सयोनीरेकं गर्भं दधिरे सप्त वाणीः ॥ ६ ॥

वव्राज । सीम् । अनदतीः । अदब्धाः । दिवः । यह्वीः । अवसानाः । अनग्नाः ।
सनाः । अत्र । युवतयः । सऽयोनीः । एकम् । गर्भम् । दधिरे । सप्त । वाणीः ॥ ६ ॥

vअनदतीः अभक्षयन्तीः vअदब्धाः अहिंसिता मातृभूता अपोऽग्निः vसीं सर्वतः vवव्राज व्रजति । अग्निरपां शोषकः तं चापः शमयन्ति तदुभयमिह नास्तीत्युक्तं भवति । कीदृश्यस्ताः । vदिवो vयह्वीः अन्तरिक्षस्यापत्यभूताः vअवसानाः वस्त्रमनाच्छादयन्त्यः । वस्त्रस्थानीयस्य जलस्य विद्यमानत्वात् । अत एव vअनग्नाः । किंच ता अपि vसनाः सनातन्यः vयुवतयः नित्यतरुण्यः । नित्यवृद्धा इत्यर्थः । vसयोनीः समानमन्तरिक्षं स्थानं यासां ताः vसप्त vवाणीः नद्यः vएकम् अग्निं vगर्भं गर्भस्थं vदधिरे दधते ॥

स्तीर्णा अस्य संहतो विश्वरूपा घृतस्य योनौ स्रवथे मधूनाम् ।
अस्थुरत्र धेनवः पिन्वमाना मही दस्मस्य मातरा समीची ॥ ७ ॥

स्तीर्णाः । अस्य । सम्ऽहतः । विश्वऽरूपाः । घृतस्य । योनौ । स्रवथे । मधूनाम् ।
अस्थुः । अत्र । धेनवः । पिन्वमानाः । मही इति । दस्मस्य । मातरा । समीची इति सम्ऽईची ॥७॥

vघृतस्य उदकस्य vयोनौ स्थानेऽन्तरिक्षे vसंहतः पुञ्जीभूताः । हन्तेः क्विप् । vविश्वरूपाः नानारूपाः[1] vस्तीर्णाः सर्वत्र प्रसृताः vअस्य अग्नेः रश्मयः vमधूनाम् उदकानां vस्रवथे स्रवणे सति vअस्थुः तिष्ठन्ति । vपिन्वमानाः पूर्यमाणाः vअत्र अग्नौ आपः vधेनवः सर्वेषां प्रीणयित्र्योऽभवन् । vसमीची समञ्चन्त्यौ[2] शोभमाने vमही महत्यौ द्यावापृथिव्यौ vदस्मस्य दर्शनीयस्य अग्नेः[3] vमातरा मातरौ भवतः ॥

बभ्राणः सूनो सहसो व्यद्यौद्दधानः शुक्रा रभसा वपूंषि ।
श्चोतन्ति धारा मधुनो घृतस्य वृषा यत्र वावृधे काव्येन ॥ ८ ॥

बभ्राणः । सूनो इति । सहसः । वि । अद्यौत् । दधानः । शुक्रा । रभसा । वपूंषि ।
श्चोतन्ति । धाराः । मधुनः । घृतस्य । वृषा । यत्र । ववृधे । काव्येन ॥ ८ ॥

---

१. म-व–नानाविधरूपाः । २. ख-ग-ग-त-थ–समश्नत्यौ । ३. क्ष-त-थ-न-म-व–यस्याग्नेः ।

हे ᵛसहसः ᵛसूनो सहसस्पुत्र ᵛबभ्राणः सर्वैर्धार्यमाणस्त्वं ᵛशुक्रा शुक्राणि भास्वराणि ᵛरभसा वेगवन्ति ᵛवपूंषि अर्चींषि ᵛदधानः धारयंस्त्वं ᵛव्यद्यौत् विद्योतसे। ᵛवृषा अग्निः ᵛयत्र यस्मिन्यजमाने ᵛकाव्येन स्तोत्रेण ᵛववृधे वृद्धिं प्राप्नोति तदानीं ᵛमधुनः अत्यन्तं मधुरस्य ᵛघृतस्य उदकस्य ᵛधाराः ᵛश्चोतन्ति स्रवन्ते। यदा यजमानस्तोत्रेणाग्निस्तुष्टो भवति तदानीं वृष्टिर्भवतीत्यर्थः॥

पितुश्चिदूधर्जनुषा विवेद व्यस्य धारा असृजद्वि धेनाः।
गुहा चरन्तं सखिभिः शिवेभिर्दिवो यह्वीभिर्न गुहा बभूव॥ ९॥

पितुः। चित्। ऊधः। जनुषा। विवेद। वि। अस्य। धाराः। असृजत्। वि। धेनाः।
गुहा। चरन्तम्। सखिऽभिः। शिवेभिः। दिवः। यह्वीभिः। न। गुहा। बभूव॥ ९॥

ᵛपितुः अन्तरिक्षस्य ᵛऊधः ऊधःस्थानीयं जलप्रदेशमयमग्निः ᵛजनुषा स्वयमेव ᵛविवेद जानाति। किंच अयमग्निः ᵛअस्य ऊधसः संबन्धिन्यः ᵛधाराः पयोधाराः ᵛवि ᵛअसृजत्। ᵛधेनाः माध्यमिका वाचश्च विसृजति। ᵛशिवेभिः शिवंकरैः ᵛसखिभिः आत्मनः सखिभूतैर्वायुभिः ᵛदिवः ᵛयह्वीभिः अन्तरिक्षस्यापत्यभूताभिरद्भिश्च सह ᵛगुहा गुहायां ᵛचरन्तं वर्तमानमेनमग्निं ᵛगुहा ᵛचित् गुहायां स्थितः कोऽपि ᵛन ᵛबभूव प्राप्तुं समर्थो नाभवत्॥

पितुश्च गर्भं जनितुश्च बभ्रे पूर्वीरेको अधयत्पीप्यानाः।
वृष्णे सपत्नी शुचये सबन्धू उभे अस्मै मनुष्ये॒ नि पाहि॥ १०॥

पितुः। च। गर्भम्। जनितुः। च। बभ्रे। पूर्वीः। एकः। अधयत्। पीप्यानाः।
वृष्णे। सपत्नी इति सऽपत्नी। शुचये। सबन्धू इति सऽबन्धू।
उभे इति। अस्मै। मनुष्ये॒ इति। नि। पाहि॥ १०॥

अयमग्निः ᵛपितुः ᵛच[1] अन्तरिक्षस्य ᵛगर्भं वृष्टिद्वारा गर्भभूतं ᵛजनितुः सर्वस्य लोकस्य जनयितुः ब्रह्मणः[2] ᵛच[2] लोकमोषध्यादिकं ᵛबभ्रे बिभर्ति। ᵛएकः एवाग्निः[3] ᵛपूर्वीः बह्वीः ᵛपीप्यानाः प्यायमाना वृद्धिं प्राप्ता ओषधीः ᵛअधयत् धयति भक्षयति। ᵛसपत्नी समान एकः सूर्यः पतिर्ययोस्ते ᵛमनुष्ये मनुष्येभ्यो हिते ᵛउभे द्यावापृथिव्यौ ᵛवृष्णे वर्षित्रे ᵛअस्मै ᵛशुचये अग्नये ᵛसबन्धू भवतः। अनयोरग्निरेव बन्धुरित्यर्थः। हे अग्ने त्वं ते द्यावापृथिवी ᵛनि ᵛपाहि नितरां रक्ष॥ ॥ १४॥

---

१. झ-झ१-ण-त-ध-न-म-व-' च ' नास्ति। २. क-झ-ण-त-थ-न-म-ब्राह्मणश्च; ख-ग-च-ण१-च ब्राह्मणस्य; व-ब्राह्मणस्य। ३. ग-ण-एक एवाग्निः।

उरौ महाँ अनिबाधे ववर्धापो अग्निं यशसः सं हि पूर्वीः ।
ऋतस्य योनावशयद्दमूना जामीनामग्निरपसि स्वसॄणाम् ॥ ११ ॥

उरौ । महान् । अनिऽबाधे । ववर्ध । आपः । अग्निम् । यशसः । सम् । हि । पूर्वीः ।
ऋतस्य । योनौ । अशयत् । दमूनाः । जामीनाम् । अग्निः । अपसि । स्वसॄणाम् ॥ ११ ॥

$^{V}$महान् अयमग्निः $^{V}$अनिबाधे असंबाधे $^{V}$उरौ विस्तीर्णेऽन्तरिक्षे $^{V}$ववर्ध वर्धते । अस्य वर्धने कारणमाह । $^{V}$हि यस्मात्कारणात् $^{V}$पूर्वीः बह्वय $^{V}$यशसः । यशोऽन्नम् । तद्वत्यः $^{V}$आपः $^{V}$अ ग्निं $^{V}$सं वर्धयन्ति । एवमद्भिर्वृद्धिं प्राप्तः $^{V}$अग्निः $^{V}$ऋतस्य उदकस्य $^{V}$योनौ स्थानेऽन्तरिक्षे स्थितः $^{V}$स्वसॄणां स्वतः सरन्तीनां $^{V}$जामीनां भगिनीस्थानीयानां हेतुभूते $^{V}$अपसि पयसि $^{V}$दमूनाः दान्तमनाः सन् $^{V}$अशयत् शेते ॥

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।
उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥ १२ ॥

अक्रः । न । बभ्रिः । सम्ऽइथे । महीनाम् । दिदृक्षेयः । सूनवे । भाःऽऋजीकः ।
उत् । उस्रियाः । जनिता । यः । जजान । अपाम् । गर्भः । नृऽतमः । यह्वः । अग्निः ॥ १२ ॥

$^{V}$जनिता सर्वस्य लोकस्य जनयिता $^{V}$अपाम् उदकानां $^{V}$गर्भः गर्भरूपः $^{V}$नृतमः नेतृतमः अतिशयेन मनुष्याणां रक्षिता $^{V}$यह्वः महान् $^{V}$यः $^{V}$अग्निः $^{V}$अक्रः परेषामाक्रमिता परैरनाक्रमणीयो वा । $^{V}$न इति पादपूरणः[1]। $^{V}$समिथे संग्रामे $^{V}$महीनां महतीनां स्वसेनानां $^{V}$बभ्रिः भर्ता $^{V}$दिदृक्षेयः सर्वैर्दर्शनीयः $^{V}$भाऋजीकः स्वदीप्त्या प्रकाशमानः सोऽग्निः $^{V}$सूनवे हविषां प्रदात्रे यजमानाय तदर्थम् $^{V}$उस्रियाः अपः $^{V}$उत् $^{V}$जजान उदजनयत् ॥ सूनवे । 'षू प्रेरणे' इत्यस्माद्धातोरौणादिको नुप्रत्ययः ॥

अपां गर्भं दर्शतमोषधीनां वना जजान सुभगा विरूपम् ।
देवासश्चिन्मनसा सं हि जग्मुः पनिष्ठं जातं तवसं दुवस्यन् ॥ १३ ॥

अपाम् । गर्भम् । दर्शतम् । ओषधीनाम् । वना । जजान । सुऽभगा । विऽरूपम् ।
देवासः । चित् । मनसा । सम् । हि । जग्मुः । पनिष्ठम् । जातम् । तवसम् । दुवस्यन् ॥ १३ ॥

$^{V}$सुभगा सुभाग्या $^{V}$वना सर्वैर्वननीयारणिः $^{V}$दर्शतं दर्शनीयं $^{V}$विरूपं नानाविधरूपम् $^{V}$अपाम् $^{V}$ओषधीनां च $^{V}$गर्भम्[2] अग्निं $^{V}$जजान अजनयत् । $^{V}$देवासश्चित् सर्वे देवा अपि $^{V}$पनिष्ठं स्तुत्यं $^{V}$तवसं वृद्धं $^{V}$जातं जातमात्रं तमग्निं $^{V}$मनसा स्तुत्या $^{V}$सं $^{V}$जग्मुः उपागच्छन् । $^{V}$हि इति पूरणः । त एव $^{V}$दुवस्यन् पर्यचरन् ॥

---

१, झ१-त-थ–पदपूरणः । २, क-ख-ग-च-ज-झ-ण-ण१-त-थ-न-फ-म-व–रूपं च गर्भम् ।

बृहन्त इद्भानवो भाऋजीकमग्निं सचन्त विद्युतो न शुक्राः ।
गुहेव वृद्धं सदसि स्वे अन्तरपार ऊर्वे अमृतं दुहानाः ॥ १४ ॥

बृहन्तः । इत् । भानवः । भाःऽऋजीकम् । अग्निम् । सचन्त । विऽद्युतः । न । शुक्राः ।
गुहाऽइव । वृद्धम् । सदसि । स्वे । अन्तः । अपारे । ऊर्वे । अमृतम् । दुहानाः ॥ १४ ॥

$^{v}$अपारे अगाधे $^{v}$ऊर्वे समुद्रे $^{v}$अन्तः मध्ये $^{v}$अमृतम् उदकं $^{v}$दुहानाः क्षरन्तः $^{v}$बृहन्त $^{v}$इद्भानवः महान्तः[1] सूर्या एव[1] $^{v}$शुक्राः दीप्यमानाः $^{v}$विद्युतो $^{v}$न विद्युत इव $^{v}$स्वे स्वकीये $^{v}$सदसि सदने अन्तरिक्षे $^{v}$गुहेव गुहायामिव $^{v}$वृद्धं प्रवृद्धं $^{v}$भाऋजीकं प्रभया दीप्यमानम् $^{v}$अग्निं $^{v}$सचन्त आश्रयन्ति ॥

ईळे च त्वा यजमानो हविर्भिरीळे सखित्वं सुमतिं निकामः ।
देवैरवो मिमीहि सं जरित्रे रक्षा च नो दम्येभिरनीकैः ॥ १५ ॥

ईळे । च । त्वा । यजमानः । हविःऽभिः । ईळे । सखिऽत्वम् । सुऽमतिम् । निऽकामः ।
देवैः । अवः । मिमीहि । सम् । जरित्रे । रक्ष । च । नः । दम्येभिः । अनीकैः ॥ १५ ॥

$^{v}$यजमानः अहं $^{v}$हविर्भिः साधनैः $^{v}$त्वा त्वाम् $^{v}$ईळे $^{v}$च पश्वादिलक्षणं धनं च याचे । $^{v}$सुमतिं शोभनां मतिं धर्मविषयां बुद्धिं $^{v}$निकामः नितरां कामयमानस्त्वया सह $^{v}$सखित्वम् $^{v}$ईळे याचे । त्वं $^{v}$देवैः सह $^{v}$जरित्रे स्तोत्रे[2] स्तोत्रं कुर्वते मह्यमस्मदर्थम् $^{v}$अवः पश्वादिविषयां रक्षां $^{v}$मिमीहि कुरु । $^{v}$दम्येभिः दमनीयैर्नियन्तव्यैः । प्रयत्ननियन्तव्यतयोच्छृङ्खलतोक्ता । $^{v}$अनीकैः तेजोभिः $^{v}$नः अस्मान् $^{v}$रक्ष $^{v}$च ॥ ॥ १५ ॥

उपक्षेतारस्तव सुप्रणीतेऽग्ने विश्वानि धन्या दधानाः ।
सुरेतसा श्रवसा तुञ्जमाना अभि ष्याम पृतनायूँरदेवान् ॥ १६ ॥

उपऽक्षेतारः । तव । सुऽप्रनीते । अग्ने । विश्वानि । धन्या । दधानाः ।
सुऽरेतसा । श्रवसा । तुञ्जमानाः । अभि । स्याम । पृतनाऽयून् । अदेवान् ॥ १६ ॥

हे $^{v}$सुप्रणीते शोभनप्रणयन हे $^{v}$अग्ने $^{v}$तव $^{v}$उपक्षेतारः उपगन्तारः । अत्र क्षितिर्गत्यर्थे वर्तते । $^{v}$विश्वानि सर्वाणि $^{v}$धन्या धन्यानि[3] पश्वादिधनप्राप्तिहेतुभूतानि कर्माणि $^{v}$दधानाः विदधानाः[4] कुर्वन्तः $^{v}$तुञ्जमानाः हवींषि प्रयच्छन्तो वयं $^{v}$सुरेतसा शोभनवीर्येण $^{v}$श्रवसा स्वत्कृतेनान्नेन

---

१. क-झ-झ१-ण-त-थ-न-म-व–' महान्तः सूर्या एव ' नास्ति । २. ख-ग–' स्तोत्रे ' नास्ति; म–स्तोत्रैः । ३. ख-ग-च-ण-ण१-त-थ-न-व–धनानि । ४. ख-ग-च-झ-झ१-ण-ण१-त-थ-न-व–' विदधानाः ' नास्ति ।

अदेवान् देवेभ्योऽन्यान् । नञिवयुक्तन्यायेन राक्षसा एव गृह्यन्ते । यज्ञविघ्नकारिणस्तान् पृतनायून् च शरीराद्युपद्रवकारिणः शत्रूंश्च अभि ष्याम अभिभवेम । यद्वा देवानपूजयतः शत्रूनिति वा योज्यम् ॥

आ देवानामभवः केतुरग्ने मन्द्रो विश्वानि काव्यानि विद्वान् ।

प्रति मर्ताँ अवासयो दमूना अनु देवान्रथिरो यासि साधन् ॥ १७ ॥

आ । देवानाम् । अभवः । केतुः । अग्ने । मन्द्रः । विश्वानि । काव्यानि । विद्वान् ।

प्रति । मर्तान् । अवासयः । दमूनाः । अनु । देवान् । रथिरः । यासि । साधन् ॥ १७ ॥

हे अग्ने मन्द्रः स्तुत्यः केतुः यज्ञेषु देवानां प्रज्ञापकस्त्वम् आ अभवः आ समन्ताद्भवसि । सर्वव्यापको भवसीत्यर्थः । किंच विश्वानि सर्वाणि काव्यानि यजमानादिभिः कृतानि स्तोत्राणि विद्वान् जानंस्त्वं मर्तान् मर्त्यान् स्तोतॄन् स्वाभिलषितवस्तुसंपादनेन प्रीतान् विधाय गृहेषु प्रति अवासयः प्रतिवासयसि । रथिरः रथी[1] साधन् देवानां हितानि कर्माणि साधयन् देवान् अनु यासि च अनुगच्छसि च ॥

नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन् ।

घृतप्रतीक उर्विया व्यद्यौदग्निर्विश्वानि काव्यानि विद्वान् ॥ १८ ॥

नि । दुरोणे । अमृतः । मर्त्यानाम् । राजा । ससाद । विदथानि । साधन् ।

घृतऽप्रतीकः । उर्विया । वि । अद्यौत् । अग्निः । विश्वानि । काव्यानि । विद्वान् ॥ १८ ॥

अमृतः नित्यः राजा राजमानो योऽग्निः विदथानि यज्ञान् साधन् साधयन् मर्त्यानाम् अग्निहोत्रिणां[2] दुरोणे गृहे नि ससाद निषीदति । विश्वानि काव्यानि विद्वान् जानन् घृतप्रतीकः घृतेन संधुक्षितावयवः उर्विया विस्तीर्णः सः अग्निः व्यद्यौत् विद्योतते ॥

आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः सरण्यन् ।

अस्मे रयिं बहुलं संतरुत्रं सुवाचं भागं यशसं कृधी नः ॥ १९ ॥

आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ।

अस्मे इति । रयिम् । बहुलम् । सम्ऽतरुत्रम् । सुऽवाचम् । भागम् । यशसम् । कृधि । नः ॥ १९ ॥

सरण्यन् सर्वत्र सरणं गमनमिच्छन् महान् त्वं शिवेभिः शिवंकरैः सख्येभिः सख्यैः सखिकर्मभिः महीभिः महतीभिः ऊतिभिः रक्षाभिश्च नः अस्मान्प्रति आ गहि आगच्छ । अस्मे

---

१. क-ख-ग-च-झ-ण१-थ-न-म-व–रथीः । २. क-झ-झ१-ण-त-थ-न-म-व–अग्निहोतॄणाम् ।

अस्मभ्यं ᵛबहुलं विस्तीर्णं ᵛसंतरुत्रं सर्वेषामुपद्रवाणां संतारकं ᵛसुवाचं शोभनवाचं ᵛभागं सर्वैर्भजनीयं ᵛयशसं यशसा कीर्त्या संयुक्तं ᵛरयिं धनं ᵛनः अस्मभ्यं ᵛकृधि देहि । अस्मभ्यमिति पुनर्वचनमादरातिशयार्थम् ॥

एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचम् ।
महान्ति वृष्णे सवना कृतेमा जन्मञ्जन्मन्निहितो जातवेदाः ॥ २० ॥

एता । ते । अग्ने । जनिम । सनानि । प्र । पूर्व्याय । नूतनानि । वोचम् ।
महान्ति । वृष्णे । सवना । कृता । इमा । जन्मन्ऽजन्मन् । निऽहितः । जातऽवेदाः ॥२०॥

हे ᵛअग्ने ᵛपूर्व्याय पुरातनाय ᵛते तुभ्यं ᵛसनानि सनातनानि महद्भिः संभजनीयानि वा ᵛनूतनानि अन्येष्वविद्यमानानि[1] अद्यतनानि वा ᵛएता एतानि ᵛजनिम जन्मानि कर्माणि स्तोत्राणि वा ᵛप्र ᵛवोचम् । ᵛजातवेदाः जातप्रज्ञो जातधनो वा ᵛजन्मन्जन्मन् । जायन्त इति जन्मानः । तेषु सर्वेषु मनुष्येषु ᵛनिहितः यागार्थम् । तस्मै ᵛवृष्णे संपदां वर्षित्रेऽग्नये ᵛइमा इमानि ᵛसवना सवनानि ᵛकृता कृतानि ॥

जन्मञ्जन्मन्निहितो जातवेदा विश्वामित्रेभिरिध्यते अजस्रः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ २१ ॥

जन्मन्ऽजन्मन् । निऽहितः । जातऽवेदाः । विश्वामित्रेभिः । इध्यते । अजस्रः ।
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ २१ ॥

ᵛजन्मन्जन्मन् सर्वेषु मनुष्येषु ᵛनिहितः ᵛजातवेदाः ᵛविश्वामित्रेभिः विश्वामित्रैः । पूजायां बहुवचनम् । महर्षिणा विश्वामित्रेण यो जातवेदाः ᵛअजस्रः अजस्रमनवरतम् ᵛइध्यते दीप्यते । ᵛसुमतौ वर्तमानाः ᵛवयं ᵛतस्य ᵛयज्ञियस्य यज्ञार्हस्य अग्नेः ᵛभद्रे भजनीये ᵛसौमनसे सुमनोभावे अनुग्रहबुद्धौ ᵛअपि ᵛस्याम अपि भवेम । प्रार्थनायां लिङ् ॥

इमं यज्ञं सहसावन्त्वं नो देवत्रा धेहि सुक्रतो रराणः ।
प्र यंसि होतर्बृहतीरिषो नोऽग्ने महि द्रविणमा यजस्व ॥ २२ ॥

इमम् । यज्ञम् । सहसाऽवन् । त्वम् । नः । देवऽत्रा । धेहि । सुक्रतो इति सुऽक्रतो । रराणः ।
प्र । यंसि । होतः । बृहतीः । इषः । नः । अग्ने । महि । द्रविणम् । आ । यजस्व ॥ २२ ॥

---

१. क-ङ-म—अन्येष्वपि विद्यमानानि ।

हे vसहसावन् सहस्वन् बलवन् vसुक्रतो शोभनकर्मन् हे अग्ने vरराणः सर्वदा रममाणः शब्दं कुर्वाणो वा vत्वं vनः अस्मदीयम् vइमं vयज्ञं vदेवत्रा देवेषु vधेहि निधेहि । हे vहोतः देवानामाह्वातः vबृहतीः महतीः[1] vइषः अन्नानि vनः अस्मभ्यं vप्र vयंसि प्रयच्छ । हे vअग्ने vमहि महत् vद्रविणं पश्वादिलक्षणं धनं vआ vयजस्व प्रयच्छ । अत्र यजिर्दानकर्मा ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ २३ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥२३॥

इयं सर्वेषां पशूनां पशुपुरोडाशस्य स्विष्टकृतः पुरोनुवाक्या । सूत्र्यते हि–' इळामग्ने पुरुदंसं सनिं गोर्होता यक्षदग्निं पुरोळाशस्य स्वदस्व हव्या समिषो दिदीहीति पुरोळाशस्विष्टकृतः ' ( आश्व. श्रौ. ३. ५ ) इति ॥

हे vअग्ने vपुरुदंसं बहुकर्माणं vगोः गवां vसनिं प्रदात्रीम् vइळां भूमिं vहवमानाय स्तुवते मह्यं vशश्वत्तमं चिरकालं यथा भवति तथा vसाध साधय । vनः अस्माकं vसूनुः पुत्रः vतनयः संतानस्य विस्तारयिता vविजावा पुत्रपौत्रादिरूपेण स्वयं विजायत इति विजावा स्यात् । हे vअग्ने vसा प्रसिद्धा vते vसुमतिः त्वदीयानुग्रहबुद्धिः vअस्मे अस्मासु vभूतु भवतु ॥ ॥ १६ ॥

' वैश्वानराय ' इति पञ्चदशर्चं द्वितीयं सूक्तम् । तथा चानुक्रान्तं—' वैश्वानराय पञ्चोना वैश्वानरीयं तु जागतं तु ' इति । विश्वामित्र ऋषिः । जगती छन्दः । वैश्वानरोऽग्निर्देवता ॥ पृष्ठ्याभिप्लविकयोस्तृतीयेऽहन्याग्निमारुते ' वैश्वानराय धिषणाम् ' इति वैश्वानरनिविद्धानीयं सूक्तम् । ' तृतीयस्य ' इति खण्डे सूत्रितं–' वैश्वानराय धिषणां धारावरा मरुतः ' ( आश्व. श्रौ. ७. ७ ) इति ॥

वैश्वानराय धिषणामृतावृधे घृतं न पूतमग्नये जनामसि ।
द्विता होतारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति ॥ १ ॥

वैश्वानराय । धिषणाम् । ऋतऽवृधे । घृतम् । न । पूतम् । अग्नये । जनामसि ।
द्विता । होतारम् । मनुषः । च । वाघतः । धिया । रथम् । न । कुलिशः । सम् । ऋण्वति ॥१॥

vऋतावृधे[2] ऋतस्योदकस्य यज्ञस्य वा वर्धयित्रे vवैश्वानराय । वैश्वानरशब्दो यास्केन व्याख्यातः– ' वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वा । अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैषा भवति ' ( निरु. ७. २१ ) इति । तस्मै vअग्नये[3] vपूतं vघृतं vन घृतमिव vधिषणां vस्तुतिं vजनामसि जनयामः । यथा घृतं प्रीतिं जनयति तथा प्रीतिं करोमि

---

१. क-ञ-त-थ-म–' महतीः ' नास्ति । २. ण-त-थ-न-व–ऋतवृधे । ३. क-ञ-ञ१-ण-त-थ-न-म-व– ' अग्नये ' नास्ति ।

इत्यर्थः । ᵛद्विता द्विधा गार्हपत्याहवनीयरूपाभ्यां युक्तं ᵛहोतारं देवानामाह्वातारमग्निं ᵛमनुषः मनुष्याः ᵛवाघतः ᵛच ऋत्विजश्च ᵛधिया कर्मणा ᵛकुलिशः वास्यादिः ᵛरथं ᵛन रथमिव ᵛसमृण्वति संस्कुर्वन्ति ॥

स रोचयज्जनुषा रोदसी उभे स मात्रोरभवत्पुत्र ईड्यः ।

हव्यवाळग्निरजरश्चनोहितो दूळभो विशामतिथिर्विभावसुः ॥ २ ॥

सः । रोचयत् । जनुषा । रोदसी इति । उभे इति । सः । मात्रोः । अभवत् । पुत्रः । ईड्यः ।

हव्यऽवाट् । अग्निः । अजरः । चनःऽहितः । दुःऽदभः । विशाम् । अतिथिः । विभाऽवसुः ॥२॥

ᵛसः अग्निः ᵛजनुषा जन्मना ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛरोचयत् अरोचयत् प्रकाशयति । ᵛस ᵛमात्रोः द्यावापृथिव्योः ᵛईड्यः स्तुत्यः ᵛपुत्रः ᵛअभवत् । ᵛहव्यवाट् हव्यानां वोढा ᵛअग्निः अङ्गनादिगुणयुक्तः ᵛअजरः जरारहितः[1] । चनोऽन्नं हितं यजमाने निहितं येनासौ ᵛचनोहितः ᵛदूळभः हिंसितुमशक्यः । सोऽयं ᵛविभावसुः प्रभाधनः ᵛविशां मनुष्याणाम् ᵛअतिथिः इव पूज्यो भवति ॥

क्रत्वा दक्षस्य तरुषो विधर्मणि देवासो अग्निं जनयन्त चित्तिभिः ।

रुरुचानं भानुना ज्योतिषा महामत्यं न वाजं सनिष्यन्नुप ब्रुवे ॥ ३ ॥

क्रत्वा । दक्षस्य । तरुषः । विऽधर्मणि । देवासः । अग्निम् । जनयन्त । चित्तिऽभिः ।

रुरुचानम् । भानुना । ज्योतिषा । महाम् । अत्यम् । न । वाजम् । सनिष्यन् । उप । ब्रुवे ॥३॥

ᵛचित्तिभिः ज्ञानैरुपलक्षिताः ᵛदेवासः देवाः ᵛतरुषः व्यसनेभ्यस्तारकस्य ᵛदक्षस्य बलस्य ᵛक्रत्वा कर्मणा ᵛविधर्मणि विधारके यज्ञे ᵛअग्निं ᵛजनयन्त अजनयन् । ᵛभानुना भासमानेन ᵛज्योतिषा ᵛरुरुचानं रोचमानं ᵛमहां महान्तमग्निम् ᵛअत्यं ᵛन भारसहमश्वमिव ᵛवाजम् अन्नं ᵛसनिष्यन् लिप्समानोऽहम् ᵛउप ᵛब्रुवे स्तौमि ॥

आ मन्द्रस्य सनिष्यन्तो वरेण्यं वृणीमहे अह्रयं वाजमृग्मियम् ।

रातिं भृगूणामुशिजं कविक्रतुमग्निं राजन्तं दिव्येन शोचिषा ॥ ४ ॥

आ । मन्द्रस्य । सनिष्यन्तः । वरेण्यम् । वृणीमहे । अह्रयम् । वाजम् । ऋग्मियम् ।

रातिम् । भृगूणाम् । उशिजम् । कविऽक्रतुम् । अग्निम् । राजन्तम् । दिव्येन । शोचिषा ॥४॥

ᵛमन्द्रस्य स्तुत्यस्य वैश्वानरस्य संबन्धिनं ᵛवरेण्यं वरणीयम् ᵛअह्रयम् अलज्जावहम् ᵛऋग्मियं प्रशस्यं ᵛवाजम् अन्नं ᵛसनिष्यन्तः लिप्समाना वयं ᵛभृगूणाम् ऋषीणां ᵛरातिम् अभिलषितार्थप्रदातारम्

१. ख-ग-च-झ१-ण-ण१-न-व—जरादिरहितः ।

ᵛउशिजम् अभिलष्यन्तं ᵛकविक्रतुं क्रान्तप्रज्ञं ᵛदिव्येन दिविभवेन ᵛशोचिषा रोचिषा ᵛराजन्तं भ्राजमानम् ᵛअग्निम् ᵛआ ᵛवृणीमहे संभजामहे ॥

**अग्निं सुम्नाय दधिरे पुरो जना वाजश्रवसमिह वृक्तबर्हिषः ।**

**यतस्रुचः सुरुचं विश्वदेव्यं रुद्रं यज्ञानां साधदिष्टिमपसाम् ॥ ५ ॥**

अग्निम् । सुम्नाय । दधिरे । पुरः । जनाः । वाजऽश्रवसम् । इह । वृक्तऽबर्हिषः ।

यतऽस्रुचः । सुऽरुचम् । विश्वऽदेव्यम् । रुद्रम् । यज्ञानाम् । साधत्ऽइष्टिम् । अपसाम् ॥५॥

ᵛवृक्तबर्हिषः स्तीर्णबर्हिषः ᵛयतस्रुचः प्राप्तस्रुच ऋत्विजः ᵛसुम्नाय सुखार्थं ᵛवाजश्रवसं मनुष्येभ्यः प्रेरितान्नं ᵛसुरुचं प्रशस्तदीप्तिमन्तं ᵛविश्वदेव्यं विश्वेभ्यो देवेभ्यो हितं ᵛरुद्रं दुःखानां द्रावकम् ᵛअपसां कर्मवतां ᵛयज्ञानाम् । यजन्तीति यज्ञा यजमानाः । तेषां ᵛसाधदिष्टिं साधितयज्ञम् ᵛअग्निम्[1] ᵛइह यज्ञे[1] ᵛपुरः ᵛदधिरे स्तुवन्ति ॥　　　॥ १७ ॥

**पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो नरः ।**

**अग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यः ॥ ६ ॥**

पावकऽशोचे । तव । हि । क्षयम् । परि । होतः । यज्ञेषु । वृक्तऽबर्हिषः । नरः ।

अग्ने । दुवः । इच्छमानासः । आप्यम् । उप । आसते । द्रविणम् । धेहि । तेभ्यः ॥ ६ ॥

हे ᵛपावकशोचे शोधकदीप्ते हे ᵛहोतः देवानामाह्वातः ᵛयज्ञेषु ᵛपरि परितः ᵛवृक्तबर्हिषः स्तीर्णबर्हिषः ᵛदुवः परिचरणम् ᵛइच्छमानासः इच्छन्तः ᵛनरः नेतारः यजमानाः ᵛआप्यम् आप्तुं योग्यं ᵛतव त्वत्संबन्धिनं ᵛक्षयं निवासं यागगृहम् ᵛउपासते सेवन्ते। ᵛतेभ्यः ᵛद्रविणं धनं ᵛधेहि विधेहि ॥

**आ रोदसी अपृणदा स्वर्महज्जातं यदेनमपसो अधारयन् ।**

**सो अध्वराय परि णीयते कविरत्यो न वाजसातये चनोहितः ॥ ७ ॥**

आ । रोदसी इति । अपृणत् । आ । स्वः । महत् । जातम् । यत् । एनम् । अपसः । अधारयन् ।

सः । अध्वराय । परि । नीयते । कविः । अत्यः । न । वाजऽसातये । चनःऽहितः ॥७॥

ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛअपृणत् आपूरयत् । तथा ᵛमहत् प्रभूतं ᵛस्वः अन्तरिक्षम् ᵛआ अपृणच्च। ᵛअपसः कर्मवन्तो यजमानाः ᵛजातं ᵛयत् यम्[2] ᵛएनम् अग्निम् ᵛअधारयन्। ᵛअत्यो ᵛन

---

१. ण-त-थ-म-' अग्निम् इह यज्ञे ' नास्ति। २. त-थ-' यं ' नास्ति।

अश्व इव कविः क्रान्तः सर्वत्र व्याप्तः चनोहितः निहितान्नः सः अयमग्निः वाजसातये वाजस्य अन्नस्य कीर्तेर्वा सातये लाभाय परि णीयते यज्ञार्थं नीयते ॥

नमस्यत हव्यदातिं स्वध्वरं दुवस्यत दम्यं जातवेदसम् ।
रथीर्ऋतस्य बृहतो विचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥ ८ ॥

नमस्यत । हव्यऽदातिम् । सुऽअध्वरम् । दुवस्यत । दम्यम् । जातऽवेदसम् ।
रथीः । ऋतस्य । बृहतः । विऽचर्षणिः । अग्निः । देवानाम् । अभवत् । पुरःऽहितः ॥८॥

रथीः नेता बृहतः महतः ऋतस्य यज्ञस्य विचर्षणिः द्रष्टा यः अग्निः देवानां पुरोहितः पुरस्तात् द्रष्टव्यतया स्थापितः अभवत् हव्यदातिं देवेभ्यो हविषां दातारं स्वध्वरं शोभनयज्ञं दम्यं दमेभ्यो गृहेभ्यो हितं जातवेदसं जातप्रज्ञं तमग्निं नमस्यत पूजयत दुवस्यत परिचरत ॥

तिस्रो यह्वस्य समिधः परिज्मनोऽग्नेरपुनन्नुशिजो अमृत्यवः ।
तासामेकामदधुर्मर्त्ये भुजमु लोकमु द्वे उप जामिमीयतुः ॥ ९ ॥

तिस्रः । यह्वस्य । सम्ऽइधः । परिऽज्मनः । अग्नेः । अपुनन् । उशिजः । अमृत्यवः ।
तासाम् । एकाम् । अदधुः । मर्त्ये । भुजम् ।
ऊँ इति । लोकम् । ऊँ इति । द्वे इति । उप । जामिम् । ईयतुः ॥ ९ ॥

उशिजः कामयमानाः अमृत्यवः मृत्युरहिता देवाः यह्वस्य महतः परिज्मनः परितो गन्तुः समिधः समिन्धिकाः प्रकाशिकाः तिस्रः पार्थिववैद्युतसूर्यरूपास्तिस्रस्तनूः अपुनन् अशोधयन् । ते देवाः भुजं सर्वेषां पालयित्रीं तासां तनूनां मध्ये एकां पार्थिवीं तनुं मर्त्ये मर्त्यलोके अदधुः न्यदधुः । उ इति पादपूरणः[1] । इतरे द्वे तनू जामिं लोकम् आसन्नमन्तरिक्षम् उप ईयतुः गच्छतः । अथवा तिस्रः समिध आघारसमिधौ द्वे अनूयाजसमिच्चैकेति । तासां समिधामेकामनूयाजसमिधं मर्त्ये इह लोके भोगहेतुमनूयाजपर्यन्तमदधुः धारयन्ति । 'प्रजा वा अनूयाजाः[2]' इति प्रजात्वेनानूयाजानां संस्तवात् तदाश्रयत्वाच्चानूयाजसमिधः । इतरे द्वे समिधावन्तरिक्षे दिव्यभोगहेतू उपेयतुः उपगच्छतः । 'त्रीन्परिधींस्तिस्रः समिधः' इति हि निगमः ॥

विशां कविं विश्पतिं मानुषीरिषः सं सीमकृण्वन्त्स्वधितिं न तेजसे ।
स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु दीधरत् ॥ १० ॥

विशाम् । कविम् । विश्पतिम् । मानुषीः । इषः ।
सम् । सीम् । अकृण्वन् । स्वऽधितिम् । न । तेजसे ।
सः । उत्ऽवतः । निऽवतः । याति । वेविषत् । सः । गर्भम् । एषु । भुवनेषु । दीधरत् ॥१०॥

---

१. झ१-त-थ-न-व-पदपूरणः । २. झ१-ण-त-थ-न-व-अनूयाजः ।

ᵛइषः पश्वादिलक्षणं धनमिच्छन्स्यः ᵛमानुषीः मनुष्यप्रजाः ᵛविशां प्रजानां ᵛविश्पतिं प्रभुं ᵛकविं मेधाविनं ᵛसीम् एनं ᵛस्वधितिं ᵛन असिमिव ᵛतेजसे तैक्ष्ण्यार्थं ᵛसम् ᵛअकृण्वन् समस्कुर्वन्। ᵛसः अग्निः ᵛउद्वतः उच्छ्रायवतः[1] ᵛनिवतः नीचैर्भाववतश्च प्रदेशान् ᵛवेविषत् व्याप्नुवन् ᵛयाति गच्छति। ᵛसः ᵛएषु ᵛभुवनेषु ᵛगर्भम्[2] अरण्याः[2] ᵛदीधरत् अधारयत्॥　　॥ १८ ॥

स जिन्वते जठरेषु प्रजज्ञिवान्वृषा चित्रेषु नानदन्न सिंहः।

वैश्वानरः पृथुपाजा अमर्त्यो वसु रत्ना दयमानो वि दाशुषे ॥ ११ ॥

सः। जिन्वते। जठरेषु। प्रजज्ञिऽवान्। वृषा। चित्रेषु। नानदत्। न। सिंहः।

वैश्वानरः। पृथुऽपाजाः। अमर्त्यः। वसु। रत्ना। दयमानः। वि। दाशुषे ॥ ११ ॥

ᵛप्रजज्ञिवान् जातः ᵛवृषा वर्षकः ᵛसः ᵛवैश्वानरः ᵛचित्रेषु नानाप्रकारेषु ᵛजठरेषु। प्राणिनां भेदाज्जठराणां भेदः। तेषु ᵛजिन्वते वर्धते। चित्रेषु नानाविधेष्वरण्येषु ᵛनानदत् अत्यर्थं शब्दं कुर्वन् ᵛसिंहः ᵛन सिंह इव। किंविधो वैश्वानरः। ᵛपृथुपाजाः पृथुतेजाः। अथवा पृथुवेगः। ᵛअमर्त्यः मरणधर्मरहितः ᵛदाशुषे हविषां प्रदात्रे यजमानाय ᵛरत्ना रमणीयानि ᵛवसु वसूनि धनानि ᵛवि विशेषेण ᵛदयमानः प्रयच्छन्॥

वैश्वानरः प्रत्नथा नाकमारुहद्दिवस्पृष्ठं भन्दमानः सुमन्मभिः।

स पूर्ववज्जनयञ्जन्तवे धनं समानमज्मं पर्येति जागृविः ॥ १२ ॥

वैश्वानरः। प्रत्नऽथा। नाकम्। आ। अरुहत्। दिवः। पृष्ठम्। भन्दमानः। सुमन्मऽभिः।

सः। पूर्वऽवत्। जनयन्। जन्तवे। धनम्। समानम्। अज्मम्। परि। एति। जागृविः॥ १२॥

ᵛसुमन्मभिः स्तोतृभिः ᵛभन्दमानः स्तूयमानः ᵛवैश्वानरः जातमात्र एव ᵛप्रत्नथा प्रत्न इव चिरन्तन इव ᵛनाकम्। कं सुखम् अकं दुःखम्। न विद्यतेऽकं यस्मिन् तन्नाकम्। ᵛदिवः अन्तरिक्षस्य ᵛपृष्ठम् उपरितनप्रदेशं स्वरोहद्भिः ᵛआरुहत् आरोहति। ᵛसः वैश्वानरः ᵛपूर्ववत् पूर्वेभ्यः ऋषिभ्य इव ᵛजन्तवे स्तोत्रे यजमानाय ᵛधनं पश्वादिलक्षणं ᵛजनयन् संपादयन् ᵛजागृविः सदा प्रबुद्धः ᵛसमानं सर्वेषां देवानां साधारणम् ᵛअज्मम् आकाशमार्गं ᵛपर्येति सूर्यरूपेण गच्छति॥

ऋतावानं यज्ञियं विप्रमुक्थ्य१मा यं दधे मातरिश्वा दिवि क्षयम्।

तं चित्रयामं हरिकेशमीमहे सुदीतिमग्निं सुविताय नव्यसे ॥ १३ ॥

ऋतऽवानम्। यज्ञियम्। विप्रम्। उक्थ्यम्। आ। यम्। दधे। मातरिश्वा। दिवि। क्षयम्।

तम्। चित्रऽयामम्। हरिऽकेशम्। ईमहे। सुऽदीतिम्। अग्निम्। सुविताय। नव्यसे॥ १३॥

---

१. ख-ण-ण१-न-व–उछ्रूयवतः; ग-उस्स्रयवतः। २. क-झ-झ१-ण-त-थ-न-म-व–' गर्भम् अरण्याः' नास्ति।

ऋतावानं बलवन्तं यज्ञियं यज्ञार्हं विप्रं मेधाविनम् उक्थ्यं स्तुत्यं दिवि द्युलोके क्षयं निवसन्तं यम् अग्निं मातरिश्वा वायुर्द्युलोकादाहृत्य पृथिव्याम् आ दधे आहितवान् । चित्रयामं नानाविधगमनं हरिकेशं पिङ्गलार्चिषं सुदीतिं शोभनदीप्तिं तम् अग्निं नव्यसे नवतराय सुविताय सुष्टु प्राप्तव्याय धनाय तदर्थम् ईमहे याचामहे ॥

शुचिं न याम॑न्निषि॒रं स्व॒र्दृशं॑ के॒तुं दि॒वो रो॑चन॒स्थामु॑ष॒र्बुधं॑म् ।
अ॒ग्निं मू॒र्धानं॑ दि॒वो अप्र॑तिष्कुतं॒ तमी॑महे॒ नम॑सा वा॒जिनं॑ बृ॒हत् ॥ १४ ॥

शुचि॑म् । न । याम॑न् । इ॒षि॒रम् । स्वः॒ऽदृश॑म् । के॒तुम् । दि॒वः । रो॒च॒न॒ऽस्थाम् । उ॒ष॒ऽबुधं॑म् ।
अ॒ग्निम् । मू॒र्धान॑म् । दि॒वः । अप्र॑तिऽस्कुतम् । तम् । ई॒म॒हे॒ । नम॑सा । वा॒जिन॑म् । बृ॒हत् ॥ १४ ॥

न इति संप्रत्यर्थे । शुचिं दीप्तं यामन् यामनि यज्ञे इषिरम् एषणीयं स्वर्दृशं सर्वद्रष्टारं सर्वपदार्थविज्ञानयुक्तं दिवः द्युलोकस्य केतुं प्रज्ञापकं रोचनस्थां रोचनस्थम् । रोचनः सूर्यः तस्मिन् तिष्ठन्तम् । उषर्बुधम् अग्निहोत्रिकरूपेण[1] उषसि प्रबुध्यमानं दिवः स्वर्गस्य मूर्धानं प्रधानम् अप्रतिष्कुतम् अप्रतिहतशब्दं वाजिनम् अन्नवन्तं बृहत् महान्तं तम् अग्निं नमसा स्तोत्रेण ईमहे याचामहे ॥

म॒न्द्रं होता॑रं॒ शुचि॒मद्व॑यावि॒नं॒ दमू॑नसमु॒क्थ्यं॑ वि॒श्वच॑र्षणिम् ।
रथं॒ न चि॒त्रं वपु॑षाय दर्श॒तं मनु॑र्हितं॒ सद॒मिद्रा॒य ई॑महे ॥ १५ ॥

म॒न्द्रम् । होता॑रम् । शुचि॑म् । अद्व॑याविनम् । दमू॑नसम् । उ॒क्थ्य॑म् । वि॒श्वऽच॑र्षणिम् ।
रथ॑म् । न । चि॒त्रम् । वपु॑षाय । द॒र्श॒तम् । मनु॑ःऽहितम् । सद॑म् । इत् । रा॒यः । ई॒म॒हे॒ ॥ १५ ॥

मन्द्रं स्तुत्यं होतारं देवानामाह्वातारं शुचिं सर्वदा शुद्धम् अद्वयाविनं द्वयहीनम्[2] अकुटिलं दमूनसं दानमनसम् उक्थ्यं श्रेष्ठं विश्वचर्षणिं विश्वस्य द्रष्टारं चित्रं नानाविधवर्णं रथं न रथमिव वपुषाय रूपार्थं दर्शतं दर्शनीयं सदमित् सदैव मनुर्हितं सर्वेभ्यो मनुष्येभ्यो हितं तमग्निं रायः धनानि ईमहे याचामहे । अत्र याच्ञार्थत्वादस्य द्विकर्मकत्वम् ॥ ॥ १९ ॥

'वैश्वानराय' इत्येकादशर्चं तृतीयं सूक्तं वैश्वामित्रम् । अत्रेयमनुक्रमणिका—'वैश्वानरायैकादश' इति । पूर्वसूक्ते 'वैश्वानरीयं तु जागतं तु' इत्युक्तत्वादस्यापि सूक्तस्य जगती छन्दो वैश्वानरोऽग्निर्देवता । अस्य सूक्तस्याग्निष्टोमे आग्निमारुते शस्त्रे विनियोगः । सूत्र्यते[3] हि—'वैश्वानराय पृथुपाजसे शं नः करत्यर्वते' ( आश्व. श्रौ. ५. २० ) इति ॥

---

१. क-ञ–अग्निहोत्रकर्मरूपेण; ञ१–अग्निहोत्रीकरूपेण; म–अग्निहोत्रिकर्मरूपेण । २. ञ१–यद्वयाहिनम्, ण-त-थ–यद्वयहीनम्; न–यद्वहीनम् । ३. ख-ग-च-ण१– सूत्रितम्; ञ१– सूचितम्; ण-न-व– सूत्रिते ।

वैश्वानराय पृथुपाजसे विपो रत्ना विधन्त धरुणेषु गातवे ।
अग्निर्हि देवाँ अमृतो दुवस्यत्यथा धर्माणि सनता न दूदुषत् ॥ १ ॥

वैश्वानराय । पृथुऽपाजसे । विपः । रत्ना । विधन्त । धरुणेषु । गातवे ।
अग्निः । हि । देवान् । अमृतः । दुवस्यति । अथ । धर्माणि । सनता । न । दूदुषत् ॥ १ ॥

विपः मेधाविनः स्तोतारः पृथुपाजसे बहुबलाय बह्वन्नाय वा । पाजःशब्दस्य बलान्ननाम्नोः पाठात् । वैश्वानराय अग्नये धरुणेषु धर्मेषु यज्ञेषु रत्ना रमणीयानि स्तोत्राणि गातवे सन्मार्गलाभाय विधन्त परिचरन्ति कुर्वन्ति । अमृतः मरणरहितः अग्निः देवान् दुवस्यति हविषां प्रदानेन परिचरति । हिः प्रसिद्धौ । अथ अतः कारणात् कोऽपि सनता सनातनानि धर्माणि यज्ञान् न दूदुषत् न दूषयति ॥

अन्तर्दूतो रोदसी दस्म ईयते होता निषत्तो मनुषः पुरोहितः ।
क्षयं बृहन्तं परि भूषति द्युभिर्देवेभिरग्निरिषितो धियावसुः ॥ २ ॥

अन्तः । दूतः । रोदसी इति । दस्मः । ईयते । होता । निऽसत्तः । मनुषः । पुरःऽहितः ।
क्षयम् । बृहन्तम् । परि । भूषति । द्युऽभिः । देवेभिः । अग्निः । इषितः । धियाऽवसुः ॥२॥

दस्मः दर्शनीयः होता अग्निः दूतः देवानां दूतः सन् रोदसी रोदस्योर्द्यावापृथिव्योः अन्तः मध्ये ईयते गच्छति । मनुषः मनोर्जातस्य मनुष्यस्य पुरोहितः आहवनीयादिरूपेण पुरतः स्थापितः निषत्तः निषण्णः सन् अग्निः द्युभिः दीप्तिभिः बृहन्तं महान्तं क्षयं यज्ञगृहं परि भूषति अलंकुरुते । देवेभिः देवैः इषितः प्रेषितः धियावसुः[1] प्रज्ञया[1] व्याप्तः । एते द्वे अग्निविशेषणे ॥

केतुं यज्ञानां विदथस्य साधनं विप्रासो अग्निं महयन्त चित्तिभिः ।
अपांसि यस्मिन्नधि संदधुर्गिरस्तस्मिन्त्सुम्नानि यजमान आ चके ॥ ३ ॥

केतुम् । यज्ञानाम् । विदथस्य । साधनम् । विप्रासः । अग्निम् । महयन्त । चित्तिऽभिः ।
अपांसि । यस्मिन् । अधि । सम्ऽदधुः । गिरः । तस्मिन् । सुम्नानि । यजमानः । आ । चके ॥३॥

यज्ञानां केतुं प्रज्ञापकं विदथस्य यज्ञस्य गृहस्य वा साधनं प्राप्तिसाधनमसाधारणकारणं सन्तम् अग्निं विप्रासः विप्राः चित्तिभिः स्वकर्मभिः महयन्त पूजयन्ति । किंच गिरः स्तोतारः यस्मिन् अग्नौ अपांसि स्वानुष्ठेयानि कर्माणि अधि संदधुः संदधते यजमानः तस्मिन् अग्नौ सुम्नानि सुखानि[2] आ चके कामयते[3] ॥

---

१. क-ञ-ञ१-ण-त-थ-न-व–विभावसुः प्रभया; म–धियावसुः प्रभया । २. क-ख-ग-ञ-म-व–सुखानि प्राप्य; ण-ण१-न–' सुखानि ' नास्ति । ३. क-ञ-म–प्रकाशते । अथ तस्मिन्नग्नौ सुम्नानि सुखानि आचके कामयते ।

पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।
आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः ॥ ४ ॥

पिता । यज्ञानाम् । असुरः । विपःऽचिताम् । विऽमानम् । अग्निः । वयुनम् । च । वाघताम् ।
आ । विवेश । रोदसी इति । भूरिऽवर्पसा । पुरुऽप्रियः । भन्दते । धामऽभिः । कविः ॥४॥

ᵛयज्ञानां ᵛपिता पालयिता ᵛविपश्चितां विदुषां स्तोतॄणाम् ᵛअसुरः बलप्रदः ᵛवाघताम् ऋत्विजां ᵛवयुनं ज्ञानसाधनं[1] ᵛविमानं[2] । विमीयते फलमिति विमानं यज्ञादिकर्मसाधनम् । सः ᵛअग्निः ᵛभूरिवर्पसा पार्थिववैद्युतादिबहुविधरूपेण ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛविवेश प्रविशति । ᵛपुरुप्रियः मनुष्येष्वधिकं प्रियः । अथवा पुरूणां श्रेष्ठानां प्रियः पुरुप्रियः । ᵛधामभिः तेजोभिर्युक्तः ᵛकविः अग्निः ᵛभन्दते यजमानेन स्तूयते ॥

चन्द्रमग्निं चन्द्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥ ५ ॥

चन्द्रम् । अग्निम् । चन्द्रऽरथम् । हरिऽव्रतम् । वैश्वानरम् । अप्सुऽसदम् । स्वःऽविदम् ।
विऽगाहम् । तूर्णिम् । तविषीभिः । आऽवृतम् । भूर्णिम् । देवासः । इह । सुऽश्रियम् । दधुः ॥५॥

ᵛदेवासः देवाः ᵛचन्द्रम् आह्लादकरं ᵛचन्द्ररथम् । चन्द्रः[3] आह्लादको रथो यस्येति तं ᵛहरिव्रतं पिङ्गलवर्णं हरित्वचं वा । हरित्वचमिति शाखान्तरम् । ᵛअप्सुषदम् अप्सु सीदन्तं ᵛस्वर्विदं सर्वज्ञं ᵛविगाहं विगाहमानं सर्वत्र व्याप्तं ᵛतूर्णिं क्षिप्रगामिनं शत्रूणां हिंसितारं वा ᵛतविषीभिः बलैः ᵛआवृतं ᵛभूर्णिं भर्तारं ᵛसुश्रियं शोभनदीप्तिं ᵛवैश्वानरम् ᵛइह इह लोके ᵛदधुः आदधुः ॥ ॥ २० ॥

अग्निर्देवेभिर्मनुषश्च जन्तुभिस्तन्वानो यज्ञं पुरुपेशसं धिया ।
रथीरन्तरीयते साधदिष्टिभिर्जीरो दमूना अभिशस्तिचातनः ॥ ६ ॥

अग्निः । देवेभिः । मनुषः । च । जन्तुऽभिः । तन्वानः । यज्ञम् । पुरुऽपेशसम् । धिया ।
रथीः । अन्तः । ईयते । साधदिष्टिऽभिः । जीरः । दमूनाः । अभिशस्तिऽचातनः ॥ ६ ॥

देवैः[4] ᵛसाधदिष्टिभिः साधितयज्ञैः ᵛजन्तुभिः ऋत्विग्भिः ᵛच ᵛधिया कर्मणा ᵛमनुषः यजमानस्य[4] ᵛपुरुपेशसं बहुरूपम् । पेश इति रूपनाम । पुरोडाशपशुसोमहविर्भेदैरेकाहाहीनसत्रात्मकभेदैः च[5] नानाविधरूपं ᵛयज्ञं ᵛतन्वानः कुर्वन् ᵛरथीः सर्वस्य लोकस्य नेता ᵛजीरः क्षिप्रकारी ᵛदमूनाः

---

१. क-झ-म—प्रज्ञासाधनम् । २. झ१—' विमानं ' नास्ति । ३. क-झ—चन्द्रवत् ; ख-ग-च-झ१-ण-ण१-थ-न-म-व—चन्द्रम् । ४. क-झ-झ१-ण-त-थ-न-म-व—' देवैः...यजमानस्य ' इत्येतन्नास्ति । ५. झ-म—अवान्तरभेदैश्च ।

दान्तमना दानमना वा ˇअभिशस्तिचातनः अभिशस्तीनामरातीनां यज्ञविघ्नकारिणां रक्षसां चातयिता नाशयिता ˇअग्निः ˇअन्तः द्यावापृथिव्योर्मध्ये ˇईयते गच्छति ॥

अग्ने जरस्व स्वपत्य आयुन्यूर्जा पिन्वस्व समिषो दिदीहि नः ।
वयांसि जिन्व बृहतश्च जागृव उशिग्देवानामसि सुक्रतुर्विपाम् ॥ ७ ॥

अग्ने । जरस्व । सुऽअपत्ये । आयुनि । ऊर्जा । पिन्वस्व । सम् । इषः । दिदीहि । नः ।
वयांसि । जिन्व । बृहतः । च । जागृवे । उशिक् । देवानाम् । असि । सुऽक्रतुः । विपाम् ॥ ७ ॥

हे ˇअग्ने ˇस्वपत्ये सुपुत्रे ˇआयुनि आयुषि ॥ निमित्तसप्तम्येषा ॥ आयुषि निमित्ते ˇजरस्व देवान् स्तुहि । होतारमधिष्ठाय ˇऊर्जा रसेनान्नेन वा ˇपिन्वस्व देवान् प्रीणय । ˇनः अस्माकम् ˇइषः सस्यार्थं वृष्टीः ˇसं ˇदिदीहि संदीपय । ˇवयांसि अन्नानि ˇच । 'वयः क्षद्म' ( नि. २. ७. ७ ) इत्यन्ननामसु पाठात् । ˇजिन्व देहि । हे ˇजागृवे सर्वदा जागरणशील ˇबृहतः महतो यजमानस्य जिन्वेति संबन्धः । ˇसुक्रतुः शोभनकर्मा शोभनयज्ञो वा त्वं ˇविपां मेधाविनां ˇदेवानाम् ˇउशिक् कान्तः ˇअसि ॥

विश्पतिं यह्वमतिथिं नरः सदा यन्तारं धीनामुशिजं च वाघताम् ।
अध्वराणां चेतनं जातवेदसं प्र शंसन्ति नमसा जूतिभिर्वृधे ॥ ८ ॥

विश्पतिम् । यह्वम् । अतिथिम् । नरः । सदा । यन्तारम् । धीनाम् । उशिजम् । च । वाघताम् ।
अध्वराणाम् । चेतनम् । जातऽवेदसम् । प्र । शंसन्ति । नमसा । जूतिऽभिः । वृधे ॥ ८ ॥

ˇनरः नेतारः स्तोतारो वा ˇविश्पतिं विशां मनुष्याणां पतिं विश्वस्य पतिमिति वा ˇयह्वं महान्तम् ˇअतिथिं सर्वस्यातिथिभूतं ˇधीनां बुद्धीनां कर्मणां वा ˇयन्तारं नियन्तारं ˇवाघतां ˇच[1] ऋत्विजां च ˇउशिजं कान्तं मनोज्ञम् ˇअध्वराणां यागानां ˇचेतनं प्रज्ञापकं[2] ˇजूतिभिः वेगैर्युक्तं ˇजातवेदसम् अग्निं ˇवृधे वृद्धये समृद्धये ˇनमसा नमस्कारेण स्तुतिभिश्च सदा[3] ˇप्र ˇशंसन्ति प्रशंसां कुर्वन्ति ॥

विभावा देवः सुरणः परि क्षितीरग्निर्बभूव शवसा सुमद्रथः ।
तस्य व्रतानि भूरिपोषिणो वयमुप भूषेम दम आ सुवृक्तिभिः ॥ ९ ॥

विभाऽवा । देवः । सुऽरणः । परि । क्षितीः । अग्निः । बभूव । शवसा । सुमत्ऽरथः ।
तस्य । व्रतानि । भूरिऽपोषिणः । वयम् । उप । भूषेम । दमे । आ । सुवृक्तिऽभिः ॥ ९ ॥

---

१. म–'च' नास्ति । २. क-झ-झ१-ण-त-थ-न-व–प्रज्ञापनम् ; ग-ण१–प्रज्ञायकम् ; म–प्रज्ञातनम् ।
३. क-झ-झ१-ण-थ-न-म-व–'सदा' नास्ति ।

विभावा दीप्तिमान् देवः स्तूयमानः सुरणः । अत्र वर्णलोपश्छान्दसः । शोभनं रमयतीति सुरमणः । सुमद्रथः शोभनरथः अग्निः शवसा बलेन क्षितीः सर्वाः प्रजाः परि बभूव परितो गृह्णाति । अत्र भवतेरुपसर्गवशात् परिग्रहार्थत्वम् । भूरिपोषिणः बहूनां पोषयितुः पालयितुः[1] दमे यज्ञगृहे । दम इति गृहनामसु पाठात् । निवसतः तस्य अग्नेः व्रतानि कर्माणि वयं सुवृक्तिभिः स्तोत्रैः उप भूषेम उपभूषयामः प्रकाशयामः ॥

वैश्वानर तव धामान्या चक्रे येभिः स्वर्विदभवो विचक्षण ।

जात आपृणो भुवनानि रोदसी अग्ने ता विश्वा परिभूरसि त्मना ॥ १० ॥

वैश्वानर । तव । धामानि । आ । चक्रे । येभिः । स्वःऽवित् । अभवः । विऽचक्षण ।

जातः । आ । अपृणः । भुवनानि । रोदसी इति ।

अग्ने । ता । विश्वा । परिऽभूः । असि । त्मना ॥ १० ॥

हे वैश्वानर तव धामानि त्वत्संबन्धीनि तेजांसि आ चक्रे अभिष्टौमि । हे विचक्षण प्राज्ञ त्वं येभिः यैस्तेजोभिः स्वर्वित् सर्ववित्[2] सर्वज्ञः अभवः भवसि । जातमात्रस्त्वं भुवनानि भूतजातानि रोदसी द्यावापृथिव्यौ आपृणः आपूरयः । हे अग्ने विश्वा विश्वानि सर्वाणि ता तानि भूतजातानि त्मना आत्मना परिभूरसि परिग्रहीतासि ॥

वैश्वानरस्य दंसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ।

उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा ॥ ११ ॥

वैश्वानरस्य । दंसनाभ्यः । बृहत् । अरिणात् । एकः । सुऽअपस्यया । कविः ।

उभा । पितरा । महयन् । अजायत । अग्निः । द्यावापृथिवी इति । भूरिऽरेतसा ॥ ११ ॥

वैश्वानरस्य अग्नेः दंसनाभ्यः तोषकारीभ्यः क्रियाभ्यः बृहत् महद्धनं भवतीति यत् तदवितथम् । यतः कारणात् एकः मुख्यः कविः अग्निः स्वपस्यया शोभनयज्ञादिकर्मेच्छया यजमानादिभ्यो धनम् अरिणात् ददाति । सोऽयम् अग्निः भूरिरेतसा बहुरेतस्कौ उभा उभौ पितरा पितरौ मातापितरौ द्यावापृथिव्यौ महयन् पूजयन् अजायत ॥ ॥ २१ ॥

'समित्समित्' इत्येकादशर्चं चतुर्थं सूक्तं वैश्वामित्रं त्रैष्टुभम् । अत्रानुक्रमणिका—'समित्समिदाप्रियः' इति । इध्मादिस्वाहाकृत्यन्ताः पूर्वोक्ताः प्रत्यृचं देवताः । पशौ वैश्वामित्राणामाप्रीसूक्तम्[3] । दर्शपूर्णमासयोः पत्नीसंयाजेषु त्वष्टुर्याज्या 'तन्नः' इत्येषा । सूत्रितं च—'इह त्वष्टारमग्रियं तन्नस्तुरीपमध पोषयित्नु' (आश्व. श्रौ. १. १०) इति । त्वाष्ट्रे पशौ पुरोडाशस्यानुवाक्या । सूत्रितं च—'तन्नस्तुरीपमध पोषयित्नु देवस्त्वष्टा सविता विश्वरूपः' (आश्व. श्रौ. ३. ८) इति ॥

---

१. ख-ग-च-झ१-ण१-त-थ-न—'पालयितुः' नास्ति । २. त-थ-म—'सर्ववित्' नास्ति । ३. क-ख-च-झ-म-व—विश्वामित्राणा° ।

समित्संमित्सुमना बोध्यस्मे शुचाशुचा सुमतिं रासि वस्वः ।
आ देव देवान्यजथाय वक्षि सखा सखीन्त्सुमना यक्ष्यग्ने ॥ १ ॥

समित्ऽसंमित् । सुऽमनाः । बोधि । अस्मे इति । शुचाऽशुचा । सुऽमतिम् । रासि । वस्वः ।
आ । देव । देवान् । यजथाय । वक्षि । सखा । सखीन् । सुऽमनाः । यक्षि । अग्ने ॥ १ ॥

ᵛसमित्समित् अत्यर्थं समिद्धस्त्वं ᵛसुमनाः ᵛबोधि बुध्यस्व । ᵛशुचाशुचा अत्यर्थं प्रसर्पकेण ज्योतिषा युक्तस्त्वं ᵛवस्वः वसुनो धनस्य तद्विषयां ᵛसुमतिं शोभनां बुद्धिम् ᵛअस्मे अस्मभ्यं ᵛरासि देहि । हे ᵛदेव द्योतमान ᵛदेवान् यजनीयान् ᵛयजथाय यज्ञाय तदर्थम् ᵛआ ᵛवक्षि आवहसि । हे ᵛअग्ने ᵛसखा देवानां सखा त्वं ᵛसुमनाः सन् ᵛसखीन् देवान् ᵛयक्षि यजस्व ॥

यं देवासस्त्रिरहन्नायजन्ते दिवेदिवे वरुणो मित्रो अग्निः ।
सेमं यज्ञं मधुमन्तं कृधी नस्तनूनपाद्घृतयोनिं विधन्तम् ॥ २ ॥

यम् । देवासः । त्रिः । अहन् । आऽयजन्ते । दिवेऽदिवे । वरुणः । मित्रः । अग्निः ।
सः । इमम् । यज्ञम् । मधुऽमन्तम् । कृधि । नः । तनूऽनपात् । घृतऽयोनिम् । विधन्तम् ॥२॥

ᵛवरुणः ᵛमित्रः ᵛअग्निः एते त्रयो देवाः[1] ᵛयम् अग्निं ᵛदिवेदिवे प्रतिदिवसम् ᵛअहन् अहनि ᵛत्रिः प्रातर्मध्याह्नसायंतनेषु सवनेषु त्रिवारम् ᵛआयजन्ते हे ᵛतनूनपात् तनूनां शरीराणां न पातयितः ᵛसः त्वं ᵛघृतयोनिं घृतस्योदकस्य कारणं ᵛविधन्तं विधीयमानं क्रियमाणं ᵛनः अस्मदीयम् ᵛइमं ᵛयज्ञं ᵛमधुमन्तम् । मध्वित्युदकनाम । वृष्ट्यादिफलयुक्तं ᵛकृधि कुरु ॥

प्र दीधितिर्विश्ववारा जिगाति होतारमिळः प्रथमं यजध्यै ।
अच्छा नमोभिर्वृषभं वन्दध्यै स देवान्यक्षदिषितो यजीयान् ॥ ३ ॥

प्र । दीधितिः । विश्वऽवारा । जिगाति । होतारम् । इळः । प्रथमम् । यजध्यै ।
अच्छ । नमःऽभिः । वृषभम् । वन्दध्यै । सः । देवान् । यक्षत् । इषितः । यजीयान् ॥ ३ ॥

ᵛविश्ववारा विश्वैर्जनैर्वरणीया ᵛदीधितिः स्तुतिर्दीप्तिर्वा ᵛहोतारं देवानामाह्वातारमग्निं ᵛप्र ᵛजिगाति जिगातु प्रकर्षेण गच्छतु । ᵛप्रथमं मुख्यम् ᵛअच्छ आभिमुख्येन ᵛवृषभं संपदां वर्षितारं ᵛवन्दध्यै वन्दितुं योग्यमिति शेषः । अग्निं ᵛनमोभिः नमस्कारैः सह ᵛइळः इषो हवीरूपाण्यन्नानि ᵛयजध्यै यष्टुं प्रीणयितुं प्रजिगातु[2] । ᵛइषितः अस्माभिः प्रेरितः ᵛयजीयान् यष्टृतमः ᵛसः अग्निः ᵛदेवान् ᵛयक्षत् यजतु ॥

---

१. ख-ण१-देवासः देवाः । २. ख-ग-च-ण१-फ-प्रजिगातु इति ।

ऊर्ध्वो वां गातुरध्वरे अकार्यूर्ध्वा शोचींषि प्रस्थिता रजांसि ।
दिवो वा नाभा न्यसादि होता स्तृणीमहि देवव्यचा वि बर्हिः ॥ ४ ॥

ऊर्ध्वः । वाम् । गातुः । अध्वरे । अकारि । ऊर्ध्वा । शोचींषि । प्रऽस्थिता । रजांसि ।
दिवः । वा । नाभा । नि । असादि । होता । स्तृणीमहि । देवऽव्यचाः । वि । बर्हिः ॥४॥

˅वां युवयोः । अग्निश्च बर्हिश्चोभौ वामित्युच्येते[1] । समिदादिभिः सहितस्यैवाग्नेर्देवतात्वात् । ˅ऊर्ध्वः उन्नतः ˅गातुः यज्ञमार्गः ˅अध्वरे यज्ञे ˅अकारि आश्रयः क्रियते । ˅शोचींषि अर्चिष्मन्ति ˅रजांसि हवींषि ˅ऊर्ध्वा ऊर्ध्वं ˅प्रस्थिता[2] । ˅होता अग्निः ˅दिवः दीप्यमानस्य यागगृहस्य ˅नाभा नाभौ मध्यप्रदेशे[3] ˅न्यसादि निषीदति । ˅देवव्यचाः देवैर्व्याप्तं ˅बर्हिः च । चार्थे वाशब्दः । ˅वि ˅स्तृणीमहि विशेषेण स्तृणीमः ॥

सप्त होत्राणि मनसा वृणाना इन्वन्तो विश्वं प्रति यन्नृतेन ।
नृपेशसो विदथेषु प्र जाता अभीऽमं यज्ञं वि चरन्त पूर्वीः ॥ ५ ॥

सप्त । होत्राणि । मनसा । वृणानाः । इन्वन्तः । विश्वम् । प्रति । यन् । ऋतेन ।
नृऽपेशसः । विदथेषु । प्र । जाताः । अभि । इमम् । यज्ञम् । वि । चरन्त । पूर्वीः ॥ ५ ॥

˅मनसा ˅वृणानाः प्रार्थ्यमानाः ˅ऋतेन उदकेन ˅विश्वम् ˅इन्वन्तः प्रीणयन्तो देवाः ˅सप्त ˅होत्राणि होतॄणां वषट्कर्तॄणां कर्माणि ˅प्रति ˅यन् प्रतिगच्छन्ति । अतः परं द्वारां स्तुतिः । ˅नृपेशसः नररूपाः ˅विदथेषु यागेषु ˅जाताः उत्पन्ना ˅पूर्वीः बह्वयो विग्रहवत्यो यज्ञद्वाराभिमानिदेवताः[4] ˅इमम् अस्मदीयं ˅यज्ञं ˅प्र[5] ˅वि ˅चरन्त प्रविचरन्तु ॥ ॥ २२ ॥

आ भन्दमाने उषसा उपाके उत स्मयेते तन्वाऽ विरूपे ।
यथा नो मित्रो वरुणो जुजोषदिन्द्रो मरुत्वाँ उत वा महोभिः ॥ ६ ॥

आ । भन्दमाने इति । उषसौ । उपाके इति । उत । स्मयेते इति । तन्वा । विरूपे इति विऽरूपे ।
यथा । नः । मित्रः । वरुणः । जुजोषत् । इन्द्रः । मरुत्वान् । उत । वा । महःऽभिः ॥६॥

˅आ[6] ˅भन्दमाने स्तूयमाने ˅उपाके परस्परं संगते ˅उषसा । नक्तापेक्षया द्विवचनम् । नक्तोषसौ[7] रात्र्यहनी आगच्छताम् । ˅उत अपि च ˅विरूपे पृथग्रूपे ˅तन्वा प्रकाशरूपेण शरीरेण ˅स्मयेते

---

१. ख-ग-च-झ-झ१ण-ण१-थ-न-म-व—वामित्युच्यते । २. झ१—प्रस्थितानि । ३. म—मध्ये मध्यप्रदेशे । ४. क-ख-ग-च-झ-ण-थ-म-व—°अभिमानिनी ( : ? ) देवताः; न—°अभिमानिनीर्देवताः । ५. ख-ग-च-ण१-फ—अभि; त-थ—' प्र ' नास्ति । ६. क-झ-म—' आ ' नास्ति । ७. ख-ग-ण-थ—नक्तोषासौ ।

प्रकाशेते । मित्रः वरुणः उत वा अपि च इन्द्रः मरुत्वान् च नः अस्मान् यथा जुजोषत् यथा सेवेत तथा महोभिः तेजोभिर्युक्ते इमे द्यावापृथिव्यौ कुरुताम् ॥

दैव्या होतारा प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति ।
ऋतं शंसन्त ऋतमित्त आहुरनु व्रतं व्रतपा दीध्यानाः ॥ ७ ॥

दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया । मदन्ति ।
ऋतम् । शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु । व्रतम् । व्रतऽपाः । दीध्यानाः ॥७॥

दैव्या दिव्यौ[1] प्रथमा प्रथमौ मुख्यौ होतारा आह्वातारावग्नी न्यृञ्जे प्रसाधयामि । ऋतम् उदकं शंसन्तः आशंसमानाः सप्त पृक्षासः । पृक्षमन्नम् । तद्वन्त ऋत्विजस्तमग्निं स्वधया सोमेन हविषा मदन्ति मादयन्ति । व्रतपाः व्रतानां कर्मणां रक्षितारः दीध्यानाः दीप्यमानाः अथवा स्वकर्मभिरग्निं दीपयन्त ऋत्विजः अनु व्रतं व्रतेषु ऋतमित् अग्निमेव आहुः । अग्निमेव ऋतभूतमाहुरित्यर्थः । एवकारार्थे इच्छब्दः ॥

आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तु ॥ ८ ॥

आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ।
सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु ॥ ८ ॥

भारतीभिः भरतस्य सूर्यस्य संबन्धिनीभिः सजोषाः संगता भारती वाक् आ गच्छतु । देवैः मनुष्येभिः मनुष्यैश्च संगता इळा च भूमिश्चागच्छतु अग्निः च । सारस्वतेभिः सरस्वती-संबन्धिभिर्मध्यमस्थानैः सह सरस्वती माध्यमिका वागागच्छतु । तिस्रः देव्यः वागिळाभारत्य आगच्छन्तु । अर्वाक् आभिमुख्यम् एतत्[2] बर्हिः आ सदन्तु आसीदन्तु ॥

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥ ९ ॥

तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेति स्यस्व ।
यतः । वीरः । कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥ ९ ॥

हे देव त्वष्टः सृष्टिकर्तः रराणः रममाणस्त्वम् अध अनन्तरं नः अस्मान् तुरीपं तारकं पोषयित्नु पोषकं तत् प्रसिद्धं रेतः वि स्यस्व मोचय । यतः विमोचनात् वीरः सत्त्ववान्

---

१. क-ज्ञ-देव्यौ; म-दैव्यौ । २. फ-इदमेतत् ।

कर्मण्यः कर्मसु कुशलः सुदक्षः सुबलः युक्तग्रावा अभिषवार्थग्रावयुक्तः । सोममुद्दिश्येत्यर्थः । देवकामः देवान् कामयमानः पुत्रः जायते जायेत ॥

वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥ १० ॥

वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः । शमिता । सूदयाति ।
सः । इत् । ऊँ इति । होता । सत्यऽतरः । यजाति । यथा । देवानाम् । जनिमानि । वेद ॥ १० ॥

हे वनस्पते देवान् उप अव सृज समीपे कुरु । शमिता पशोः संस्कर्ता अग्निः वनस्पतिश्च हविः सूदयाति देवान् प्रति प्रेरयतु । सत्यतरः । अत्यर्थं सत्यः सत्यतरः । सत्यस्वरूपः सः इत् स एव होता यजाति यजतु । यथा यतः कारणात् स एवाग्निः देवानां जनिमानि जन्मानि वेद वेत्ति अतः स एव यजत्वित्यर्थः ॥

आ याह्यग्ने समिधानो अर्वाङिन्द्रेण देवैः सरथं तुरेभिः ।
बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयन्ताम् ॥ ११ ॥

आ । याहि । अग्ने । सम्ऽइधानः । अर्वाङ् । इन्द्रेण । देवैः । सऽरथम् । तुरेभिः ।
बर्हिः । नः । आस्ताम् । अदितिः । सुऽपुत्रा । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥ ११ ॥

हे अग्ने अर्वाक् अस्मदभिमुखं समिधानः समिध्यमानो ज्वालारूपेण दीप्यमानस्त्वम् आ याहि देवतारूपेणागच्छ । कथमिति उच्यते । नोऽस्माकं यज्ञम् इन्द्रेण देवैः च तुरेभिः त्वरमाणैर्देवैः सरथं समानरथं यथा तथा आयाहि । किंच सुपुत्रा अदितिः अपि नः बर्हिः आस्ताम् अध्यास्ताम् । स्वाहाकारेण युक्ताः अमृताः निरयाः देवाः मादयन्तां[1] तृप्यन्तु॥ ॥२३॥

'प्रत्यग्निरुषसः' इत्येकादशर्चं पञ्चमं सूक्तं वैश्वामित्रं त्रैष्टुभमाग्नेयम् । अत्रानुक्रमणिका– 'प्रत्यग्निः' इति । प्रातरनुवाकाश्विनशस्त्रयोरिदमादिसूक्तत्रयस्य[2] विनियोगः । सूत्रितं च– 'प्रत्यग्निरुषस इति त्रीणि' ( आश्व. श्रौ. ४. १३ ) इति । 'इळामग्ने' इत्यस्योक्तो विनियोगः ॥

प्रत्यग्निरुषसश्चेकितानोऽबोधि विप्रः पदवीः कवीनाम् ।
पृथुपाजा देवयद्भिः समिद्धोऽप द्वारा तमसो वह्निरावः ॥ १ ॥

प्रति । अग्निः । उषसः । चेकितानः । अबोधि । विप्रः । पदऽवीः । कवीनाम् ।
पृथुऽपाजाः । देवयत्ऽभिः । सम्ऽइद्धः । अप । द्वारा । तमसः । वह्निः । आवः ॥ १ ॥

---

१. ण–ससादयन्ताम्; थ–समादयता; म–सह मादयन्ताम् । २. क-ग-च-झ-ण-ण१-त-थ-न-म-व– °सूक्ते यस्य; ख–°सूक्तस्य ।

उषसः चेकितानः जानन् विप्रः मेधावी कवीनां क्रान्तदर्शां पदवीः मार्गान् गच्छन् यः अग्निः प्रति अबोधि प्रतिबुध्यते पृथुपाजाः पृथुतेजाः देवयद्भिः देवकामैः समिद्धः सम्यग्दीप्तः सः वह्निः तमसः अज्ञानस्य द्वारा आगमनद्वाराणि[1] अप आवः अपावृणोति ॥

प्रेद्वग्निर्वावृधे स्तोमेभिर्गीर्भिः स्तोतृणां नमस्य उक्थैः ।
पूर्वीर्ऋतस्य संदृशश्चकानः सं दूतो अद्यौदुषसो विरोके ॥ २ ॥

प्र । इत् । ऊँ इति । अग्निः । ववृधे । स्तोमेभिः । गीःऽभिः । स्तोतृणाम् । नमस्यः । उक्थैः ।
पूर्वीः । ऋतस्य । सम्ऽदृशः । चकानः । सम् । दूतः । अद्यौत् । उषसः । विऽरोके ॥२॥

नमस्यः पूज्यः यः अग्निः स्तोतृणां स्तोत्रैः गीर्भिः वाग्भिः उक्थैः शस्त्रैश्च प्र ववृधे वृद्धिं प्राप्नोति दूतः देवानां दूतः सः पूर्वीः बह्वीः ऋतस्य आदित्यस्य संदृशः दीप्तीः चकानः कामयमानः सन् उषसो विरोके विरोचने प्रातःकाले सम् अद्यौत् द्योतते । इत्[2] उ पूरणौ[2] ॥

अधाय्यग्निर्मानुषीषु विक्ष्वपां गर्भो मित्र ऋतेन साधन् ।
आ हर्यतो यजतः सान्वस्थादभूदु विप्रो हव्यो मतीनाम् ॥ ३ ॥

अधायि । अग्निः । मानुषीषु । विक्षु । अपाम् । गर्भः । मित्रः । ऋतेन । साधन् ।
आ । हर्यतः । यजतः । सानु । अस्थात् । अभूत् । ऊँ इति । विप्रः । हव्यः । मतीनाम् ॥३॥

मित्रः यजमानानां मित्रभूतः ऋतेन सत्येन साधन् कामान् साधयन् अपां गर्भः अग्निः मानुषीषु मनोः संबन्धिनीषु विक्षु प्रजासु अधायि देवैः आहितः । किंच हर्यतः स्पृहणीयः यजतः यष्टव्यः सः सानु उच्छ्रितं धिष्ण्यमुत्तरवेद्याख्यम् आ अस्थात् अध्यतिष्ठत् । विप्रः प्राज्ञोऽग्निः मतीनां मातृणां[3] स्तोतृणां हव्यः स्तुत्यः अभूत् । उ[4] पूरणः[4] ॥

मित्रो अग्निर्भवति यत्समिद्धो मित्रो होता वरुणो जातवेदाः ।
मित्रो अध्वर्युरिषिरो दमूना मित्रः सिन्धूनामुत पर्वतानाम् ॥ ४ ॥

मित्रः । अग्निः । भवति । यत् । सम्ऽइद्धः । मित्रः । होता । वरुणः । जातऽवेदाः ।
मित्रः । अध्वर्युः । इषिरः । दमूनाः । मित्रः । सिन्धूनाम् । उत । पर्वतानाम् ॥ ४ ॥

---

१. म—आगमस्य द्वाराणि । २. क-ज्ञ-ज्ञ१-ण-त-थ-न-म-व—' इत् उ पूरणौ ' नास्ति । ३. म—मन्त्राणाम् । ४. क-ज्ञ-ज्ञ१-ण-थ-न-म-व—' उ पूरणः ' नास्ति ।

इयमृक् अग्निं सर्वात्मकत्वेन स्तौति । यत् यदा समिद्धः अग्निः तदा मित्रः भवति सूर्यो भवति । मित्रः एव सन् होता भवति । वरुणः भवति जातवेदाः जातप्रज्ञः । सः मित्रः अध्वर्युः भवति दमूनाः दानमनाः[1] दान्तमनाः[1] वा । स एव इषिरः प्रेरकः वायुर्भवति । उत अपि च सिन्धूनां नदीनां पर्वतानां च मित्रः सहायो भवति ॥

पाति प्रियं रिपो अग्रं पदं वेः पाति यह्वश्चरणं सूर्यस्य ।
पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥ ५ ॥

पाति । प्रियम् । रिपः । अग्रम् । पदम् । वेः । पाति । यह्वः । चरणम् । सूर्यस्य ।
पाति । नाभा । सप्तऽशीर्षाणम् । अग्निः । पाति । देवानाम् । उपऽमादम् । ऋष्वः ॥ ५ ॥

ऋष्वः दर्शनीयः अग्निः वेः गन्त्याः सर्वव्याप्तायाः रिपः भूम्याः प्रियम् अग्रं प्रथमं पदं स्थानं पाति रक्षति । यह्वः महान् सूर्यस्य चरणम् । चरत्यत्रेति चरणमन्तरिक्षम् । पाति । नाभा नाभावन्तरिक्षस्य मध्ये सप्तशीर्षाणं[2] मरुद्गणं पाति । देवानाम् उपमादम् उपमादकं यज्ञं पाति रक्षति ॥ ॥ २४ ॥

ऋभुश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान् ।
ससस्य चर्म घृतवत्पदं वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥ ६ ॥

ऋभुः । चक्रे । ईड्यम् । चारु । नाम । विश्वानि । देवः । वयुनानि । विद्वान् ।
ससस्य । चर्म । घृतऽवत् । पदम् । वेः । तत् । इत् । अग्निः । रक्षति । अप्रऽयुच्छन् ॥ ६ ॥

ऋभुः महान् विश्वानि सर्वाणि वयुनानि ज्ञातव्यानि पदार्थानि विद्वान् जानन् देवः अग्निः ईड्यं स्तुत्यं चारु मनोज्ञं नाम जलं चक्रे करोति । नाम[3] इत्युदकनामसु पाठात् । वेः व्याप्तस्य ससस्य स्वपतः शान्तज्वालस्याप्यग्नेः चर्म रूपं घृतवत् दीप्तिमद्भवति । सः अग्निः तत् जलम् अप्रयुच्छन् अप्रमाद्यन् रक्षति पालयति । इत् पादपूरणः[4] ॥

आ योनिमग्निर्घृतवन्तमस्थात्पृथुप्रगाणमुशन्तमुशानः ।
दीद्यानः शुचिर्ऋष्वः पावकः पुनःपुनर्मातरा नव्यसी कः ॥ ७ ॥

आ । योनिम् । अग्निः । घृतऽवन्तम् । अस्थात् । पृथुऽप्रगानम् । उशन्तम् । उशानः ।
दीद्यानः । शुचिः । ऋष्वः । पावकः । पुनःऽपुनः । मातरा । नव्यसी इति । कःरिति कः ॥७॥

---

१. म–दममना दानमनाः । २. म–सप्तशीर्षाणं सप्तगणम् । ३. ख-ग-ण१–जलं नाम; च–जलनाम; झ१-व–नामा नाम; ण-न–नामी नाम । ४. क-झ-झ१-ण-थ-न-म-व–' इत् पादपूरणः ' नास्ति ।

उशानः कामयमानः अग्निः घृतवन्तं दीप्तिमन्तं पृथुप्रगाणं पृथुगीतिम् उशन्तं कामयमानं योनिं स्थानमायतनम् आ अस्थात् आतिष्ठति । दीद्यानः द्योतमानः शुचिः दर्शनीयः शुद्धो वा ऋष्वः महान् पावकः अन्येषां शोधयिताग्निः मातरा मातरौ द्यावापृथिव्यौ पुनःपुनः नव्यसी नवतरे कः करोति ॥

**सद्यो जात ओषधीभिर्ववक्षे यदी वर्धन्ति प्रस्वो घृतेन ।**

**आपइव प्रवता शुम्भमाना उरुष्यदग्निः पित्रोरुपस्थे ॥ ८ ॥**

सद्यः । जातः । ओषधीभिः । ववक्षे । यदि । वर्धन्ति । प्रऽस्वः । घृतेन ।

आपःऽइव । प्रऽवता । शुम्भमानाः । उरुष्यत् । अग्निः । पित्रोः । उपऽस्थे ॥ ८ ॥

सद्यो जातः अग्निः यदि यदा ओषधीभिः ववक्षे उह्यते तदा प्रवता प्रवणेन मार्गेण गच्छन्त्यः आपइव शुम्भमानाः शोभमानास्ता ओषध्यः प्रस्वः फलानि प्रसुवानाः घृतेन उदकेन वर्धन्ति वर्धयन्ति । पित्रोः द्यावापृथिव्योः उपस्थे मध्यप्रदेशे वर्धमानः अग्निः उरुष्यत् अस्मान्रक्षतु ॥

**उदु ष्टुतः समिधा यह्वो अद्यौद्वर्ष्मन्दिवो अधि नाभा पृथिव्याः ।**

**मित्रो अग्निरीड्यो मातरिश्वा दूतो वक्षद्यजथाय देवान् ॥ ९ ॥**

उत् । ऊँ इति । स्तुतः । सम्ऽइधा । यह्वः । अद्यौत् । वर्ष्मन् । दिवः । अधि । नाभा । पृथिव्याः ।

मित्रः । अग्निः । ईड्यः । मातरिश्वा । आ । दूतः । वक्षत् । यजथाय । देवान् ॥ ९ ॥

उ इति पादपूरणः[1] । स्तुतः अस्माभिः स्तुतः समिधा समिन्धनेन यह्वः महान् अग्निः पृथिव्याः उत्तरवेद्याः नाभा नाभौ मध्यप्रदेशे स्थितः सन् दिवः अन्तरिक्षस्य वर्ष्मन् वर्ष्मणि रूपे उत् अद्यौत् द्योतते । मित्रः सर्वेषां मित्रभूतः ईड्यः स्तुत्यः मातरिश्वा । मातर्यन्तरिक्षे श्वसिति प्राणिति सूर्यरूपेण चेष्टत इति मातरिश्वा । अथवा मातर्यरण्यां श्वसिति निवसतीति मातरिश्वा । तथाह यास्कः–' मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वा ' ( निरु. ७. २६ ) । दूतः देवानां दूतः सन् यजथाय यज्ञाय देवान् आ वक्षत् आवहतु ॥

**उदस्तम्भीत्समिधा नाकमृष्वो३ग्निर्भवन्नुत्तमो रोचनानाम् ।**

**यदी भृगुभ्यः परि मातरिश्वा गुहा सन्तं हव्यवाहं समीधे ॥ १० ॥**

उत् । अस्तम्भीत् । सम्ऽइधा । नाकम् । ऋष्वः । अग्निः । भवन् । उत्ऽतमः । रोचनानाम् ।

यदि । भृगुऽभ्यः । परि । मातरिश्वा । गुहा । सन्तम् । हव्यऽवाहम् । सम्ऽईधे ॥ १० ॥

---

१. त-थ-न-व-पदपूरणः ।

ऋ. २-२६

ᵛऋष्वः महान् ᵛअग्निः ᵛसमिधा तेजसा ᵛनाकं स्वर्गम् ᵛउदस्तम्भीत् उदस्तभ्नात् । ᵛरोचनानां शोभनानां[1] तेजसां मध्ये ᵛउत्तमः ᵛभवन् उत्कृष्टतमो भवन् ᵛमातरिश्वा वायुः ᵛभृगुभ्यः आदित्यस्य रश्मिभ्यः ᵛगुहा[2] गुहायां[2] ᵛसन्तं ᵛहव्यवाहं हव्यानां वोढारमग्निं ᵛयदि यदा ᵛसमीधे समैन्द्ध तदा नाकमस्तभ्नादिति संबन्धः ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।

स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध ।

स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥

पूर्वं व्याख्याता ॥ ॥ २५ ॥

‘ प्र कारवः ’ इत्येकादशर्चं षष्ठं सूक्तं वैश्वामित्रमाग्नेयं ‘ प्र कारवः ’ इत्यनुक्रान्तत्वात् । प्रातरनुवाकाश्विनशस्त्रयोः सूक्तविनियोगः पूर्वसूक्त एव ‘ प्रत्यग्निरुषसस्त्रीणि ’ इत्यनेनोक्तः । आद्याग्नेये पशौ हविषो याज्या । सूत्रितं च—‘ प्र कारवो मनना वच्यमाना एका चेतत्सरस्वती नदीनाम् ’ ( आश्व. श्रौ. ३. ७ ) इति । ‘ ऐभिरग्ने ’ इति पात्नीवतग्रहस्य याज्या । सूत्रितं च—‘ आग्नीध्रः पात्नीवतस्य यजत्यैभिरग्ने सरथं याह्यर्वाङिति ’ ( आश्व. श्रौ. ५. १९ ) इति ॥

प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः ।

दक्षिणावाड्वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची ॥ १ ॥

प्र । कारवः । मनना । वच्यमानाः । देवद्रीचीम् । नयत । देवऽयन्तः ।

दक्षिणाऽवाट् । वाजिनी । प्राची । एति । हविः । भरन्ती । अग्नये । घृताची ॥ १ ॥

हे ᵛकारवः कर्तारः ᵛदेवयन्तः देवकामा यूयं ᵛमनना मननेन मन्त्रेण ᵛवच्यमानाः प्रेर्यमाणाः सन्तः ᵛदेवद्रीचीं देवानञ्चन्तीं स्रुचं ᵛप्र ᵛनयत प्रकर्षेण नयत प्रापयत । ᵛदक्षिणावाट् आहवनीयस्य दक्षिणत उह्यमाना ᵛवाजिनी अन्नवती ᵛप्राची प्रागग्रा ᵛअग्नये अग्न्यर्थं ᵛहविर्भरन्ती हविर्धारयन्ती ᵛघृताची घृतेनाक्ता स्रुक् ᵛएति गच्छति[3] ॥

---

१. म–शोभमानानाम् । २. क-झ-झ१-न-म–आदित्यगुहायाम्; झ-त-थ-ण-व–आदित्यगुहा गुहायाम् । ३. क–अ ( आ ) गच्छति; झ-म–आगच्छति ।

आ रोदसी अपृणा जायमान उत प्र रिक्था अध नु प्रयज्यो ।
दिवश्चिदग्ने महिना पृथिव्या वच्यन्तां ते वह्नयः सप्तजिह्वाः ॥ २ ॥

आ । रोदसी इति । अपृणाः । जायमानः ।
उत । प्र । रिक्थाः । अध । नु । प्रयज्यो इति प्रऽयज्यो ।
दिवः । चित् । अग्ने । महिना । पृथिव्याः । वच्यन्ताम् । ते । वह्नयः । सप्तऽजिह्वाः ॥२॥

हे ᵛअग्ने ᵛजायमानः त्वं ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛअपृणाः आपूरयः । किंच[1] हे ᵛप्रयज्यो यष्टव्य[2] ᵛदिवश्चित् दिवश्चान्तरिक्षात् ᵛपृथिव्याः च ᵛमहिना महिम्ना ᵛप्र ᵛरिक्थाः अतिरिक्तश्चासि । अनेन वह्नेरतिशय उक्तः । एवंविधस्य[3] ᵛते तव ᵛवह्नयः अग्नयोंऽशभूता वह्नय आहवनीयादयः ᵛवच्यन्ताम् । किंविधास्ते । ᵛसप्तजिह्वाः सप्तजिह्वात्मकाः । ᵛनु[4] पूरणः[4] ॥

द्यौश्च त्वा पृथिवी यज्ञियासो नि होतारं सादयन्ते दमाय ।
यदी विशो मानुषीर्देवयन्तीः प्रयस्वतीरीळते शुक्रमर्चिः ॥ ३ ॥

द्यौः । च । त्वा । पृथिवी । यज्ञियासः । नि । होतारम् । सादयन्ते । दमाय ।
यदि । विशः । मानुषीः । देवऽयन्तीः । प्रयस्वतीः । ईळते । शुक्रम् । अर्चिः ॥ ३ ॥

ᵛद्यौश्च अन्तरिक्षं ᵛपृथिवी च ᵛयज्ञियासः यज्ञार्हा देवाश्च ᵛहोतारं ᵛत्वा त्वां ᵛदमाय । दमो यज्ञः । तस्मा अर्थं ᵛनि ᵛसादयन्ते उपशमयन्ति । ᵛयदि यदा ᵛमानुषीः मनोः संबन्धिन्यः ᵛदेवयन्तीः देवकामाः ᵛप्रयस्वतीः हविष्मत्यः ᵛविशः प्रजा होतारः ᵛशुक्रं दीप्तम् ᵛअर्चिः ᵛईळते स्तुवन्ति ॥

महान्त्सधस्थे ध्रुव आ निषत्तोऽन्तर्द्यावा माहिने हर्यमाणः ।
आस्क्रे सपत्नी अजरे अमृक्ते सबर्दुघे उरुगायस्य धेनू ॥ ४ ॥

महान् । सधऽस्थे । ध्रुवः । आ । निऽसत्तः । अन्तः । द्यावा । माहिने इति । हर्यमाणः ।
आस्क्रे इति । सपत्नी इति सऽपत्नी । अजरे इति । अमृक्ते इति ।
सबर्दुघे इति सबःऽदुघे । उरुऽगायस्य । धेनू इति ॥ ४ ॥

---

१. ख-ग-च-ण१-फ- अध किंच । २. त-प्रयष्टव्य अथ अनन्तरम् । ३. ख-ग-च-उत एवंविधस्य; ण१-अत एवं० । ४. क-झ-झ१-ण-त-थ-न-म-व-‘ नु पूरणः ’ नास्ति ।

ᵛमहान् अधिकः ᵛहर्यमाणः यजमानादिभिः काम्यमानः यद्वा यजमानाय धनं कामयमानोऽग्निः ᵛद्यावा ᵛअन्तः द्युभूम्योर्मध्ये ᵛमाहिने महिम्ना युक्ते ᵛसधस्थे स्वकीये स्थाने ᵛध्रुवः अचलः सन् ᵛआ ᵛनिषत्तः निषण्णो भवति। ᵛआस्क्रे आक्रमणशीले ᵛसपत्नी समान एकः सूर्यः पतिर्ययोस्ते सपत्न्यौ ᵛअजरे जरारहिते ᵛअमृक्ते अन्येनाहिंसिते ᵛसबर्दुघे। सबरित्यमृतमुदकम्। तस्य दोग्ध्र्यौ द्यावापृथिव्यौ ᵛउरुगायस्य पृथुगमनस्याधिकस्तुतेर्वाग्नेः ᵛधेनू प्रीणयित्र्यौ भवतः॥

व्रता ते अग्ने महतो महानि तव क्रत्वा रोदसी आ ततन्थ।
त्वं दूतो अभवो जायमानस्त्वं नेता वृषभ चर्षणीनाम्॥ ५॥

व्रता। ते। अग्ने। महतः। महानि। तव। क्रत्वा। रोदसी इति। आ। ततन्थ।
त्वम्। दूतः। अभवः। जायमानः। त्वम्। नेता। वृषभ। चर्षणीनाम्॥ ५॥

हे ᵛअग्ने ᵛमहतः सर्वोत्कृष्टस्य ᵛते तव ᵛव्रता व्रतानि त्वत्संबन्धीनि कर्माणि ᵛमहानि महान्ति भवन्ति। ᵛतव ᵛक्रत्वा क्रतुना प्रकाशेन ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛततन्थ विस्तृतवानसि[1]। ᵛत्वं ᵛदूतः ᵛअभवः भव। हे ᵛवृषभ वर्षणशील ᵛत्वं ᵛजायमानः सन् ᵛचर्षणीनां यजमानानां ᵛनेता असि फलप्रापकोऽसि॥ ॥ २६॥

ऋतस्य वा केशिना योग्याभिर्घृतस्नुवा रोहिता धुरि धिष्व।
अथा वह देवान्देव विश्वान्त्स्वध्वरा कृणुहि जातवेदः॥ ६॥

ऋतस्य। वा। केशिना। योग्याभिः। घृतऽस्नुवा। रोहिता। धुरि। धिष्व।
अथ। आ। वह। देवान्। देव। विश्वान्। सुऽअध्वरा। कृणुहि। जातऽवेदः॥ ६॥

हे ᵛदेव ᵛकेशिना प्रशस्तकेशवन्तौ ᵛयोग्याभिः योजनसाधनभूताभी रज्जुभिर्युक्तौ[2] ᵛघृतस्नुवा घृतं क्षरन्तौ ᵛरोहिता रोहितावश्वौ ᵛऋतस्य यज्ञस्य॥ वाशब्दश्चार्थे॥ ᵛधुरि च ᵛधिष्व धेहि। योजयेत्यर्थः। ᵛअथ अनन्तरं ᵛविश्वान् सर्वान् ᵛदेवान् रथे समारोप्य ᵛआ ᵛवह। हे ᵛजातवेदः तान् ᵛस्वध्वरा स्वध्वरान् शोभनाध्वरान् ᵛकृणुहि कुरु॥

दिवश्चिदा ते रुचयन्त रोका उषो विभातीरनु भासि पूर्वीः।
अपो यदग्न उशधग्वनेषु होतुर्मन्द्रस्य पनयन्त देवाः॥ ७॥

दिवः। चित्। आ। ते। रुचयन्त। रोकाः। उषः। विऽभातीः। अनु। भासि। पूर्वीः।
अपः। यत्। अग्ने। उशधक्। वनेषु। होतुः। मन्द्रस्य। पनयन्त। देवाः॥ ७॥

---

१. ख-ग–विसूतषानसि; च-झ-ण-ण१-न-व–विसृतवानसि। २. म– रश्मिभिर्युक्तौ।

हे ᵛअग्ने ᵛयत् यदा ᵛवनेषु अरण्येषु ᵛअपः ᵛउशधक् कामयमानो दहंश्च वर्तसे तदा ᵛते ᵛरोकाः च त्वदीया दीप्तयः ᵛदिवश्चित् सूर्यादपि ᵛआ ᵛरुचयन्त आरोचन्ते । ᵛविभातीः विशेषेण भान्तीः प्रकाशमानाः ᵛपूर्वीः पुराणीः ᵛउषः उषसः ᵛअनु ᵛभासि । ᵛमन्द्रस्य स्तुत्यस्य ᵛहोतुः तव रोकान् ᵛदेवाः स्तोतारः ᵛपनयन्त स्तुवन्ति ॥

**उरौ वा ये अन्तरिक्षे मदन्ति दिवो वा ये रोचने सन्ति देवाः ।**

**ऊमा वा ये सुहवासो यजत्रा आयेमिरे रथ्यो अग्ने अश्वाः ॥ ८ ॥**

उरौ । वा । ये । अन्तरिक्षे । मदन्ति । दिवः । वा । ये । रोचने । सन्ति । देवाः ।

ऊमाः । वा । ये । सुऽहवासः । यजत्राः । आऽयेमिरे । रथ्यः । अग्ने । अश्वाः ॥ ८ ॥

ᵛउरौ विस्तीर्णे ᵛअन्तरिक्षे ᵛये ᵛदेवाः ᵛमदन्ति हृष्यन्ति । ᵛदिवः सूर्यस्य ᵛरोचने प्रकाशने आलोके ᵛये देवाः ᵛसन्ति । ᵛऊमाः ऊमसंज्ञकाः पितरः सन्ति । ᵛयजत्राः यष्टव्याः ᵛये देवाः ᵛसुहवासः शोभनाह्वानाः ᵛआयेमिरे आयच्छन्ति । ᵛरथ्यः रथिनस्तव ये ᵛअश्वाः सन्ति हे ᵛअग्ने तैः सर्वैः साधमायाहीति उत्तरयर्चा[1] संबन्धः[2] ॥

**ऐभिरग्ने सरथं याह्यर्वाङ नानारथं वा विभवो ह्यश्वाः ।**

**पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥ ९ ॥**

आ । एभिः । अग्ने । सऽरथम् । याहि । अर्वाङ् । नानाऽरथम् । वा । विऽभवः । हि । अश्वाः ।

पत्नीऽवतः । त्रिंशतम् । त्रीन् । च । देवान् । अनुऽस्वधम् । आ । वह । मादयस्व ॥ ९ ॥

हे ᵛअग्ने ᵛएभिः पूर्वोक्तैर्देवगणैः सार्धं ᵛसरथं समानरथं ᵛनानारथं ᵛवा त्वद्रथं समारोप्य ᵛआ ᵛयाह्यर्वाङ् अस्मदभिमुखमायाहि । यतः कारणात् ते ᵛअश्वाः ᵛविभवः प्रभवः समर्थाः । हिः प्रसिद्धौ । ᵛपत्नीवतः पत्नीभिः सहितान् ᵛत्रिंशतं ᵛत्रींश्च त्रयस्त्रिंशतं ᵛदेवान् च ᵛअनुष्वधं सोममुद्दिश्य[3] ᵛआ ᵛवह । ᵛमादयस्व सोमेनेति शेषः[4] ॥

**स होता यस्य रोदसी चिदुर्वी यज्ञंयज्ञमभि वृधे गृणीतः ।**

**प्राची अध्वरेव तस्थतुः सुमेके ऋतावरी ऋतजातस्य सत्ये ॥ १० ॥**

सः । होता । यस्य । रोदसी इति । चित् । उर्वी इति । यज्ञम्ऽयज्ञम् । अभि । वृधे । गृणीतः ।

प्राची इति । अध्वराऽइव । तस्थतुः । सुमेके इति सुऽमेके ।

ऋतवरी इत्यृतऽवरी । ऋतऽजातस्य । सत्ये इति ॥ १० ॥

---

१. म- उत्तरत्र वा । २. ख-ग-च-ण१-फ- संबन्धः । वा पूरणः । ३. त-थ-व-बलार्थमन्नार्थं वा । ४. ण-त-थ-व-विशेषः ।

ᵛसः एव ᵛहोता भवति ᵛउर्वी विस्तीर्णे ᵛरोदसी ᵛचित् द्यावापृथिव्यौ अपि[1] ᵛयस्य[1] अग्नेः ᵛयज्ञंयज्ञं सर्वं[2] यज्ञं[2] ᵛवृधे समृद्धये ᵛअभि ᵛगृणीतः प्रशंसतः । ᵛऋतजातस्य[3] जातसत्यस्य[3] होतुः ᵛसुमेके सुरूपे ᵛऋतावरी उदकवत्यौ ᵛसत्ये सत्यस्वरूपे ᵛप्राची अनुकूले ᵛतस्थतुः तिष्ठतः । कथमिव । ᵛअध्वरेव अध्वराविव यज्ञाविव ॥

इळांमग्ने पुरुदंसं सनिं गोः शंश्वत्तमं हवंमानाय साध ।

स्यान्नः सूनुस्तनंयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥

इळांम् । अग्ने । पुरुऽदंसंम् । सनिम् । गोः । शश्वत्ऽतमम् । हवंमानाय । साध ।

स्यात् । नः । सूनुः । तनंयः । विजाऽवां । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥

इळामग्न इतीयं पूर्वं व्याख्याता ॥ ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण
विरचिते माधवीये वेदार्थप्रकाशे
ऋक्संहिताभाष्ये द्वितीयाष्टकेऽ-
ष्टमोऽध्यायः समाप्तः ॥

---

१. त-थ- अस्य । २. ख-ग-च-ण१-थ-व-सर्वयज्ञम् ; ण-न-सर्वस्य यज्ञम् । ३. ख-ग-च-ण१-ऋतजातस्य सत्यस्य यज्ञस्य; झ-म-ऋतजातस्य यस्य; झ१-न-ऋतजातस्य सत्यस्य यस्य; ण-ऋतजातस्य जातस्य सत्यस्य; त-व-ऋतजातसत्यस्य ।

ॐ

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥*

' सोमस्य[1] ' इत्यनुवाके द्वादश सूक्तानि । तत्र ' प्र य आरुः ' इत्येकादशर्चं सप्तमं सूक्तम् । मण्डलद्रष्टा विश्वामित्र ऋषिः । अनुक्तत्वात् त्रिष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोः सूक्तत्रयस्य ' प्रत्यग्निरुषसस्त्रीणि[2] ' इति विनियोग उक्तः । तत्रेदं तृतीयं सूक्तम् ॥

**प्र य आरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः ।**
**परिक्षिता पितरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥ १ ॥**

प्र । ये । आरुः । शितिऽपृष्ठस्य । धासेः । आ । मातरा । विविशुः । सप्त । वाणीः ।
परिऽक्षिता । पितरा । सम् । चरेते इति । प्र । सर्स्राते इति । दीर्घम् । आयुः । प्रऽयक्षे ॥ १ ॥

vशितिपृष्ठस्य नीलपृष्ठस्य vधासेः सर्वस्य धारयितुरग्नेः vये रश्मयः vप्र vआरुः प्रकर्षेणोद्गच्छन्ति ते रश्मयः vमातरा मातरौ द्यावापृथिव्यौ vआ vविविशुः सर्वतः प्रविष्टाः । vसप्त सर्पणस्वभावाः[3] vवाणीः वननीया नदीश्चाविविशुः । vपरिक्षिता परितो वर्तमाने vपितरा पितरौ द्यावापृथिव्यौ तेनाग्निना vसं vचरेते सम्यक् व्यवहरतः । तथा vप्रयक्षे प्रकर्षेण[4] यष्टुं vदीर्घमायुः अग्नेश्चिरं जीवनं प्रभूतमन्नं वा vप्र vसर्स्राते प्रसारयतः । संपादयत इत्यर्थः । यद्वा द्यावापृथिव्यौ प्रयक्षे प्रकर्षेण सततं यष्टुं यजमानस्य दीर्घमायुः संपादयतः ॥ प्र । निपातत्वेनाद्युदात्तः । तस्य छन्दसि ' व्यवहिताश्च ' इति आरुरित्यनेन संबन्धः । आरुः । ' ऋ गतौ ' । लिट्युसि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । शितिपृष्ठस्य । पृष्ठशब्दस्थक्प्रत्ययान्तोऽन्तोदात्तः । ' शितेर्नित्याबह्वज्बहुव्रीहावभसत् ' ( पा. सू. ६. २. १३८ ) इत्युत्तरपदप्रकृतिस्वरत्वम् । धासेः । ' डुधाञ् धारणपोषणयोः ' । ' धेट् पाने ' वा । तस्मात् कर्तर्यौणादिकः सिः[5] । प्रत्ययस्वरः । मातरा । ' नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृपितृजामातृदुहितृ ' ( उ. सू. २. १५३ ) इति तृजन्तत्वेन निपातनादन्तोदात्तः । ' ऋतो ङि० ' ( पा. सू. ७. ३. ११० ) इति गुणः । ' सुपां सुलुक्० ' इति सुपो डादेशः । विविशुः । ' विश प्रवेशने ' । लिटि ' असंयोगाल्लिट् कित् ' इति किद्वद्भावाद्गुणाभावः । निघातः । सप्त । ' सृप्लृ गतौ ' । ' सप्यशूभ्यां[6] तुट् च ' ( उ. सू. १. १५५ ) इति सपेर्विधीयमानः कनिन् तुडागमश्च बाहुलकादेतस्यापि भवति ।

---

* च-छ-आद्यं श्लोकद्वयं नास्ति; स-प्रथमः श्लोको नास्ति । १. स-अथ तृतीयाष्टके प्रथमाध्याय आरभ्यते । सोमस्य । २. म-स-प्रत्यग्निरुषस इति त्रीणि । ३. ज-ण-सप्तधास्वभावाः । ४. ल-प्रकर्षेण यक्षे । ५. ल-सिप्रत्ययः । ६. ख-ग-च-ज-ण-भ-स-सृप्यसृभ्याम्; न-सप्तमूभ्याम्; ल- सृपे सौभ्याम् ।

ऋकारस्याकारश्च । निस्वेऽपि[1] व्यत्ययेनान्तोदात्तत्वम्[1] । परिक्षिता । ‘ क्षि निवासगत्योः ’ । ‘ क्विप् च ’ इति क्विप् । पित्त्वात् तुगागमः । प्रादिसमासः । कृदुत्तरपदप्रकृतिस्वरत्वम् । ‘ सुपां सुलुक्° ’ इति सुपो डादेशः । चरेते । ‘ चर गतिभक्षणयोः ’ । संपूर्वाच्चरतेः ‘ समस्तृतीयायुक्तात् ’ ( पा. सू. १. ३. ५४ ) इत्यात्मनेपदम् । निघातः[2] । सस्राते । ‘ सृ गतौ ’ । अयमन्तर्भावितण्यर्थः । रेफश्छान्दसः । ‘ ईदूदेत्° ’ इति प्रगृह्यसंज्ञा । निघातः । आयुः । ‘ इण् गतौ ’ । ‘ उसिन् ’ इत्यनुवृत्तौ ‘ एतेर्णिच्च ’ ( उ. सू. २. २७५ ) इत्युसिन् । णित्त्वाद्वृद्धिः । नित्त्वादाद्युदात्तः । प्रयक्षे । ‘ यज देवपूजासंगतिकरणदानेषु ’ इत्यस्मात् तुमर्थे सेन्प्रत्ययः । प्रादिसमासः । कृदुत्तरपदप्रकृति-स्वरत्वम् । ‘ कृन्मेजन्तः ’ इत्यव्ययसंज्ञायाम् ‘ अव्ययादाप्सुपः ’ इति सुपो लुक् ॥

दिवक्षसो धेनवो वृष्णो अश्वा देवीरा तस्थौ मधुमद्वहन्तीः ।
ऋतस्य त्वा सदसि क्षेमयन्तं पर्येका चरति वर्तनिं गौः ॥ २ ॥

दिवक्षसः । धेनवः । वृष्णः । अश्वाः । देवीः । आ । तस्थौ । मधुऽमत् । वहन्तीः ।
ऋतस्य । त्वा । सदसि । क्षेमऽयन्तम् । परि । एका । चरति । वर्तनिम् । गौः ॥ २ ॥

vवृष्णः कामानां वर्षितुरग्नेः vअश्वाः वाहनरूपा रोहिताः vदिवक्षसः दिवं व्याप्य वर्तमानाः vधेनवः अग्नेः प्रीणयित्र्यो भवन्ति। सोऽयमग्निः vमधुमत् माधुर्योपेतमुदकं vवहन्तीः vदेवीः द्योतनशीला नदीः vआ vतस्थौ आतिष्ठति। प्राप्नोतीत्यर्थः। गोशब्दः[3] माध्यमिकवाग्वाची ‘ माध्यमिकां वाचमिति नैरुक्ताः ’ ( निरु. ११ · २७ ) इत्यभिधानात् । vएका vगौः काचिदुक्तविधा वाक्[3] vऋतस्य उदकस्य vसदसि स्थानेऽन्तरिक्षे vक्षेमयन्तं क्षेममावासमिच्छन्तं vवर्तनिं ज्वालाः प्रवर्तयन्तं vत्वा हे अग्ने त्वां vपरि vचरति सेवते॥ दिवक्षसः। ‘ अक्षू व्याप्तौ ’ । दिवं[4] व्याप्नुवन्तीति दिवक्षसः । ×‘ वक्ष रोषे ’ । रोषार्थोऽप्ययं× धातुरत्र व्याप्तौ[4] वर्तते। दिवं वक्षन्ति व्याप्नुवन्तीति । ‘ असुन् ’ इत्यसुन्प्रत्ययः। ‘ लोपो व्योर्वलि ’ इति वलोपः। कृदुत्तरपदप्रकृतिस्वरत्वम्। धेनवः । ‘ नुः ’ इत्यनुवृत्तौ ‘ धेट इच्च ’ ( उ. सू. ३. ३१४ ) इति नुप्रत्ययः। इकारस्य गुणः। प्रत्ययस्वरः। वृष्णः। ‘ वृष सेचने ’। ‘ कनिन्युवृषितक्षिराजि° ’ इत्यादिना कनिन् । कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तः। अश्वाः। ‘ अशू व्याप्तौ ’। ‘ अशिप्रुषिलटिकणि° ’ इत्यादिना क्वन् । णित्त्वादाद्युदात्तः । तस्थौ । ‘ ष्ठा गतिनिवृत्तौ ’। ‘ छन्दसि लुङ्लङ्लिटः ’ इति वर्तमाने लिट्। ‘ आत औ णलः ’ इत्यौकारः। निघातः। मधुमत्। ‘ नित् ’ इत्यनुवृत्तौ ‘ फलिपाटिनमिमनिजनाम्° ’ इत्यादिना मनेरुप्रत्ययः। तत्सं-नियोगेन नकारस्य धकारः । निस्वादाद्युदात्तः । त्वा। युष्मच्छब्दस्य द्वितीयैकवचनान्तस्य ‘ त्वामौ° ’ इति त्वादेशः[5] अनुदात्तश्च। क्षेमयन्तम्। ‘ क्षि निवासगत्योः ’। ‘ अर्तिस्तुसुहुसृधृक्षि°’ इत्यादिना मन्। क्षेमम् आवासम्[6] आत्मन इच्छन्तम्। ‘ सुप आत्मनः क्यच् ’ इति क्यच् । ‘ क्यचि च ’ इति ईत्वम् ‘ अकृत्सार्वधातुकयोर्दीर्घः ’ इति दीर्घत्वं च ‘ न छन्दस्यपुत्रस्य ’ इति प्रतिषिध्यते । क्यचश्चित्त्वादन्तोदात्तः। तदन्ताच्छतृप्रत्ययः। शप्[7]। शपः पित्त्वादनुदात्तत्वं शतुश्च सार्वधातुकस्वरेण।

---

१. त–प्रत्ययनित्यत्वेऽपि प्रत्ययेनान्तोदात्तत्वम् ; ल–प्रत्ययत्वेऽपि प्रत्ययेनान्तोदात्तत्वम् ; स–नित्यत्वापि व्यत्ययेनान्तोदात्तत्वम् । २. ख-ग-च-ज-ण-न-भ-स–‘ निघातः ’ नास्ति । ३. घ–गौः माध्यमिका वाक् एका काचित् । ४. ख-ग-च-ज-ण-भ–दिवं......व्याप्तौ ’ नास्ति। × त-न-ल-स–वक्ष रोधे। रोधार्थोऽप्ययम् । ५. ख-ग-च-ज-ण-भ-स–त्वामादेशः । ६. ख-ग-च-ज-ण-न-भ–‘ आवासम् ’ नास्ति । ७. ख-ग-च-ज-ण-न-भ–‘ शप् ’ नास्ति ।

तयोः क्यचा सहैकादेशे कृते ' एकादेश उदात्तेनोदात्तः ' इत्येकादेश उदात्तः। अम्। सुप्त्वादनुदात्तः। 'उदात्तादनुदात्तस्य०' इति अमः स्वरितत्वम्। एका। ' इण् गतौ '। ' इण्भीकापा० ' इत्यादिना कन्। तदन्तादाप्। नित्स्वरः। वर्तनिम्। ' वृतु वर्तने '। अन्तर्भावितण्यर्थः। ' वृतेश्च ' (उ. सू. २. २६३) इत्यनिः। गुणः। व्यत्ययेनान्तोदात्तत्वम्। गौः। ' गम्लृ गतौ '। ' गमेर्डोः ' (उ. सू. २.२२५) इति डोप्रत्ययः। डित्त्वाट्टिलोपः। ' गोतो णित् ' इति सुपो णित्त्वात् वृद्धिः। प्रत्ययस्वरः॥

आ सीमरोहत्सुयमा भवन्तीः पतिश्चिकित्वान्रयिविद्रयीणाम्।
प्र नीलपृष्ठो अतसस्य धासेस्ता अवासयत्पुरुधप्रतीकः॥ ३॥

आ। सीम्। अरोहत्। सुऽयमाः। भवन्तीः। पतिः। चिकित्वान्। रयिऽवित्। रयीणाम्।
प्र। नीलऽपृष्ठः। अतसस्य। धासेः। ताः। अवासयत्। पुरुधऽप्रतीकः॥ ३॥

ᐯरयीणां ᐯरयिवित् धनानां मध्ये विशिष्टधनस्य लम्भयिता ᐯचिकित्वान् ज्ञानवान् ᐯपतिः अश्वानां पतिरग्निः ᐯसीं सर्वतः ᐯसुयमाः सुखेन नियन्तुं शक्याः ᐯभवन्तीः या वडवाः ᐯआ ᐯअरोहत् आरोहति[1] स्म ᐯनीलपृष्ठः ᐯपुरुधप्रतीकः बहुधा विक्षिप्ताङ्गः सोऽग्निः[2] ᐯअतसस्य सततगमनस्य ᐯधासेः पोषणार्थं ᐯताः अश्वाः ᐯप्र ᐯअवासयत् प्रकर्षेण वासयति स्म। निवासेन श्रमेऽपनीते सततगमनं पोषयितुं शक्यमित्यर्थः॥ सीम्। ' चादयोऽनुदात्ताः ' (फि. सू. ८४) इत्यनुदात्तः। अरोहत्। ' रुह प्रादुर्भावे '। लङि रूपम्। निघातः। सुयमाः। ' यम उपरमे '। अस्माच्छक्यार्थे 'ईषद्दुःसुषु०' इति खल्। कृदुत्तरपदप्रकृतिस्वरत्वम्। पतिः। ' पा रक्षणे '। ' पातेर्डतिः ' इति डतिः[3]। डित्वाट्टिलोपः। प्रत्ययस्वरः। चिकित्वान्। ' कित[4] ज्ञाने[4] '। क्वसौ रूपम्। रयिवित्। ' विदॢ लाभे '। क्विप्। रयीणाम्। ' नामन्यतरस्याम् ' इति विभक्तेरुदात्तत्वम्। नीलपृष्ठः। नीलशब्दो वृषादित्वादाद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अतसस्य। ' अत सातत्यगमने ' इत्यस्मात् ' अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्यः ' (उ. सू. ३. ३९७) इत्यसच्। चित्स्वरः। अवासयत्। ' वस निवासे '। ' हेतुमति० ' इति णिच्। ' लुङ्लङ्लृङ्क्ष्वडुदात्तः०' इत्यडागमः। ' तिङ्ङतिङः ' इति निघातः। पुरुधप्रतीकः। पुरुशब्द इह संख्यावाची। ' संख्याया विधार्थे धा ' इति धाप्रत्ययः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। ह्रस्वश्छान्दसः॥

महीं त्वाष्ट्रमूर्जयन्तीरजुर्यं स्तभूयमानं वहतो वहन्ति।
व्यङ्गेभिर्दिद्युतानः सधस्थ एकामिव रोदसी आ विवेश॥ ४॥

महि। त्वाष्ट्रम्। ऊर्जयन्तीः। अजुर्यम्। स्तभुऽयमानम्। वहतः। वहन्ति।
वि। अङ्गेभिः। दिद्युतानः। सधऽस्थे। एकाम्ऽइव। रोदसी इति। आ। विवेश॥ ४॥

---

१. ख-ग-च-ज-ण-न-भ-स–आरोहयति। २. त–सोऽग्निरेव। ३. ल–' डतिः ' नास्ति. ४. ख-ल–किति ज्ञाने; त–चित ज्ञाने।

ᵛऊर्जयन्तीः अबलं[1] बलिनं कुर्वत्यः ᵛवहतः वहनपरा नद्यः ᵛमहि महान्तं ᵛत्वाष्ट्रं त्वष्टुः सुतम् ᵛअजुर्यं जरयितुमनर्हं ᵛस्तभूयमानं लोकानां स्तम्भनं धारणमिच्छन्तमग्निं ᵛवहन्ति धारयन्ति। ᵛसधस्थे अपां समीपे[2] ᵛअङ्केभिः अवयवैः ᵛदिद्युतानः दीप्यमानः सन् अग्निः ᵛरोदसी द्यावापृथिव्यौ ᵛवि ᵛआ ᵛविवेश विविधं[3] प्रविष्टवान्। रोदस्योर्दृष्टान्तः[4] । ᵛएकामिव। यथा पुमानेकां स्त्रियं प्रविशति तद्वत्॥ त्वाष्ट्रम्। त्वष्टुरपत्यमित्यर्थे 'तस्यापत्यम्' इत्यण्। प्रत्ययस्वरः। स्तभूयमानम्। स्तभु स्तम्भने[5] तदिच्छन्तम्। 'सुप आत्मनः क्यच्'। 'अकृत्सार्वधातुकयोः°' इति दीर्घः। तदन्तात् व्यत्ययेन शानच्। अकारान्तत्वात् 'आने मुक्'। शानचो लसार्वधातुकस्वरेणानुदात्तत्वे कृते क्यजन्तधातुस्वरः[6] शिष्यते। अङ्केभिः। 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः। 'बहुवचने झल्येत्' इत्येत्वम्। दिद्युतानः। 'द्युत दीप्तौ'। छन्दसि लिट्। तस्य कानजादेशः। द्विर्वचनम्। हलादिशेषे कृते द्यु इत्यस्य[7] अभ्यासस्य 'द्युतिस्वाप्योः संप्रसारणम्' (पा. सू. ७. ४. ६७) इति संप्रसारणम्। 'संप्रसारणाच्च' इति पूर्वरूपत्वम्। चित्त्वादन्तोदात्तत्वम्[8]। एकामिव। 'इवेन विभक्त्यलोपः[9] पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् पूर्वपदप्रकृतिस्वरः। विवेश। 'विश प्रवेशने' इत्यस्मात् लिटि[10] रूपम्। निघातः॥

जा॒नन्ति॒ वृष्णो॑ अरु॒षस्य॒ शेव॑मु॒त ब्र॒ध्नस्य॒ शास॑ने रणन्ति।
दि॒वो॒रुच॑ः सु॒रुचो॒ रोच॑माना॒ इळा॒ येषा॒ं गण्या॒ माहि॑ना॒ गीः॥ ५॥

जा॒नन्ति॑। वृष्ण॑ः। अ॒रु॒षस्य॑। शेव॑म्। उ॒त। ब्र॒ध्नस्य॑। शास॑ने। र॒ण॒न्ति॒।
दि॒वः॒ऽरुच॑ः। सु॒ऽरुच॑ः। रोच॑मानाः। इळा॑। येषा॑म्। गण्या॑। माहि॑ना। गीः॥ ५॥

ᵛवृष्णः कामानां वर्षितुः ᵛअरुषस्य। रुषा हिंसकाः तद्रहितस्य। शत्रुराहित्येन रोचमानस्येत्यर्थः[11]। तथाविधस्याग्नेः ᵛशेवम्[12] आश्रयविषयं सुखं जनाः ᵛजानन्ति। ᵛउत अपि च जानन्तस्ते ᵛब्रध्नस्य महतोऽग्नेः ᵛशासने आज्ञायां सर्वे जनाः ᵛरणन्ति रमन्ते। तथा[13] च मन्त्रः—'अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च मर्ताः' (ऋ. सं. १. ६०. २) इति। अपि च ᵛयेषां मनुष्याणामग्निविषया ᵛमाहिना महती ᵛइळा ᵛगीः स्तुतिरूपा वाक् ᵛगण्या गणनीया पूज्या ते ᵛदिवोरुचः द्युलोकस्य रोचकाः ᵛसुरुचः शोभनदीप्तयः ᵛरोचमानाः देदीप्यमाना भवन्ति॥ जानन्ति। 'ज्ञा अवबोधने'। क्र्यादिः। तस्य 'ज्ञाजनोर्जा' इति जादेशः। प्रत्ययस्वरः। अरुषस्य। रुष रिष हिंसार्थाः। रोषन्तीति रुषा हिंसकाः। 'इगुपधज्ञा°' इति कः। न सन्ति रुषा यस्यासावरुषः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। शेवम्। 'शीङ् स्वप्ने'। 'इण्शीङ्भ्यां वन्' इति वन्। नित्स्वरः। शासने। 'शासु अनुशिष्टौ'। अस्माद्भावे ल्युट्। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। रणन्ति। निघातः। दिवोरुचः। 'रुच दीप्तौ'। अस्मात् क्विप्। 'तत्पुरुषे कृति बहुलम्' इति

---

१. घ-त-प-ल—अग्निम्। २. ख-ग-च-ज-ण—समीपम्। ३. ख-ग-घ-च-ज-ण-न-भ-स—'विविधं' नास्ति। ४. घ—दृष्टान्तः। ५. ल—स्तम्भने। ६. ग-ज-ण-भ—क्यजन्ताधातुस्वरः; च-स—क्यजन्ताद्धातुस्वरः। ७. ल—इत्येतस्य। ८. ख-ग-च-ज-ण-न-भ-स—°दात्तः। ९. ज-ण—समासो विभक्त्यलोपः। १०. ख-ग-च-ज-ण-न-भ—लिट्। ११. त—आरोच° १२. ल—सर्वं शेवम्। १३. ख-ग-च-ज-ण-न-भ—यथा।

षष्ठ्या अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । सुरुचः । बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । इळा । ‘ ईड स्तुतौ ’ । ह्रस्वश्छान्दसः । यथा वाक्शब्दष्टाबन्तस्तद्वत् । पित्त्वादनुदात्तत्वे धातुस्वरः । गण्या । ‘ गण संख्याने ’ । स्वार्थे[1] ण्यन्तात् ‘ अचो यत् ’ । ‘ यतो नावः ’ इत्याद्युदात्तत्वम्[2] । माहिना । ‘ महेरिनण् च ’ इति इनण् । णित्त्वादुपधावृद्धिः । व्यत्ययेनाद्युदात्तः । गीः । ‘ गॄ शब्दे ’ । अस्मात् क्विप् । ‘ ॠत इद्धातोः ’ इतीत्वम् । ‘ र्वोरुपधायाः ’ इति दीर्घः । प्रातिपदिकस्वरः ॥ ॥ १ ॥

उ॒तो पि॒तृभ्यां॑ प्र॒विदानु॒ घोषं॑ म॒हो म॒हद्भ्या॑मनयन्त शू॒षम् ।
उ॒क्षा ह॒ यत्र॒ परि॒ धान॑म॒क्तोरनु॒ स्वं धाम॑ जरि॒तुर्व॒वक्ष॑ ॥ ६ ॥

उ॒तो इति॑ । पि॒तृऽभ्या॑म् । प्र॒ऽविदा॑ । अनु॑ । घोष॑म् । म॒हः । म॒हत्ऽभ्या॑म् । अ॒न॒य॒न्त॒ । शू॒षम् ।
उ॒क्षा । ह॒ । यत्र॑ । परि॑ । धान॑म् । अ॒क्तोः । अनु॑ । स्वम् । धाम॑ । ज॒रि॒तुः । व॒वक्ष॑ ॥ ६ ॥

ᵛउतो अपि च ᵛमहो ᵛमहद्भ्यां महतो महद्भ्यां ᵛपितृभ्यां द्यावापृथिवीभ्यां[3] ᵛप्रविदा प्रवेदनेन ᵛअनु ᵛघोषम् अनुघुष्यमाणं[4] ᵛशूषं सुखम् । ‘ शूषं शुनम् ’ ( नि. ३. ६. १० ) इति सुखनामसु पाठात् । तत्सुखं[5] यजमाना अग्निम् ᵛअनयन्त अग्निं प्रापितवन्तः । सोऽग्निः ᵛयत्र यजमानेषु ᵛउक्षा वृष्ट्युत्पादनेनोदकस्य सेक्ता[6] ᵛअक्तोः । अक्तुशब्दो रात्रिमाचष्टे । ‘ शर्वरी अक्तुः ’ ( नि. १. ७. ४ ) इति तन्नामसु पाठात्; अज्यते सिच्यते नीहारेण जगदस्यामिति व्युत्पत्तेश्च । तस्या रात्रेः ᵛपरि ᵛधानं परितो धारकं[7] ᵛस्वम् आत्मीयं ᵛधाम तेजः ᵛजरितुः स्तोतुः स्तुतिश्रवणार्थम् ᵛअनु ᵛववक्ष ᵛह समीपे वहति खलु । संनिहितं करोतीत्यर्थः ॥ उतो । ‘ ओत् ’ ( पा. सू. १.१.१५ ) इति प्रगृह्यसंज्ञा । एवमादित्वादन्तोदात्तः[8] । घोषम् । ‘ घुषिर्[9] शब्दे ’ । अस्मात्कर्मणि घञ् । लघूपधगुणः । ञित्स्वरः । महः । अकारतकारयोर्लोपश्छान्दसः । ‘ बृहन्महतोरुपसंख्यानम् ’ इति विभक्तेरुदात्तत्वम् । अनयन्त । ‘ णीञ् प्रापणे ’ इत्यस्य लङि रूपम् । निघातः । उक्षा । ‘ उक्ष सेचने ’ । ‘ श्वन्नुक्षन्° ’ इत्यादिना कनिन्प्रत्ययान्तत्वेन उक्षन्शब्दो निपातितः । व्यत्ययेनान्तोदात्तः । ह । चादित्वादनुदात्तः । यत्र । ‘ लिति ’ इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अक्तोः । ‘ अञ्जू व्यक्तिगतिम्रक्षणेषु[10] ’ इत्यस्मात् ‘ व्याज्यर्तिभ्यः[11] क्तुः ’ इति क्तुः । कित्त्वात् ‘ अनिदिताम्° ’ इति नलोपः । प्रत्ययस्वरः । ववक्ष । ‘ वह प्रापणे ’ । ‘ छन्दसि लुङ्लङ्लिटः ’ इति वर्तमाने लिट् । सकारश्छान्दसः । तिपो णलादेशः । ‘ लिति ’ इति प्रत्ययात्पूर्वस्योदात्तत्वम् ॥

---

१. ख-ग-च-ज-ण-न-भ-ल—स्वार्थम् । २. ख-ग-च-ज-ण-न-भ-स—इत्युदात्तत्वम् । ३. घ—द्यावापृथिवीभ्यामुपलक्ष्यमाणमग्निम् । ४. घ—अनुघुष्यमाणं स्तोत्रमनुलक्ष्य । ५. ख-ग-च-ज-ण-भ-ल—सुखम् । ६. ग-च-ज-ण-स—आसेक्ता । ७. घ—धारणीयम् । ८. त—°दन्तोदात्तत्वम् । ९. ख-ग-च-ज-ण-न-भ-घुषि; स—घुष । १०. ख-ग-च—व्यक्तिगतिभक्षजेषु; ज-ण—व्यक्तिम्रक्षणेषु; ल—व्याक्तिक्षेपणेषु । ११ ख-ग-च-ज-भ—व्याञ्जर्तिभ्यः; ल—व्यज्यर्तिभ्यः; न—व्यञ्जार्तिभ्यः ।

अध्वर्युभिः पञ्चभिः सप्त विप्राः प्रियं रक्षन्ते निहितं पदं वेः ।
प्राञ्चो मदन्त्युक्षणो अजुर्या देवा देवानामनु हि व्रता गुः ॥ ७ ॥

अध्वर्युऽभिः । पञ्चऽभिः । सप्त । विप्राः । प्रियम् । रक्षन्ते । निऽहितम् । पदम् । वेरिति वेः ।
प्राञ्चः । मदन्ति । उक्षणः । अजुर्याः । देवाः । देवानाम् । अनु । हि । व्रता । गुरिति गुः ॥७॥

उद्गातृवर्गव्यतिरिक्ताः[1] द्वादशर्त्विजो भवन्ति । तत्र सप्त वषट्कर्तारः । पञ्चान्येऽध्वरं नयन्ति । तैः vपञ्चभिः vअध्वर्युभिः सह vसप्त vविप्राः मेधाविनो होत्रकाः vवेः गमनस्वभावस्याग्नेः vप्रियं vनिहितम् आहवनीयाख्यं vपदं vरक्षन्ते पालयन्ति[2] । vप्राञ्चः सोमपानार्थं प्राङ्मुखा गच्छन्त- vअजुर्याः जरयितुमशक्याः vउक्षणः सोमरसस्य सेक्तारः[3] vदेवाः स्तोतारः vमदन्ति हृष्यन्ति । किंच ते देवाः ऋत्विजः vदेवानां संबन्धीनि[4] vव्रता व्रतानि यज्ञान् vअनु vगुः अन्वगच्छन् । vहि प्रसिद्धौ । अग्नेः प्रसादात् हविर्लक्षणान्नवन्तो देवा यज्ञान् लब्धवन्त इत्यर्थः ॥ रक्षन्ते । 'रक्ष पालने' । व्यत्ययेनात्मनेपदम् । निघातः । निहितम् । 'डुधाञ् धारणपोषणयोः' इत्यस्य कर्मणि निष्ठायां , दधातेर्हिः ' इति हिरादेशः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्[5] । वेः । वी कान्तिगत्यादिषु । अस्माद्विच् । 'सार्वधातुकार्धधातुकयोः' ( पा. सू. ७. ३. ८४ ) इति गुणः । 'ङसिङसोश्च' इति पूर्वरूपत्वम् । प्राञ्चः । 'अनिगन्तोऽञ्चतौ°' इति पूर्वपदप्रकृतिस्वरत्वम् । मदन्ति । 'मदी हर्षे' । निघातः । गुः । 'इण् गतौ' इत्यस्माल्लुङि रूपम् । 'इणो गा लुङि' इति गादेशः । 'आतः' इति झेर्जुसादेशः । 'बहुलं छन्दसि' इत्यडभावः । हिशब्दयोगान्न निहन्यते ॥

दैव्या होतारा प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति ।
ऋतं शंसन्त ऋतमित्त आहुरनु व्रतं व्रतपा दीध्यानाः ॥ ८ ॥

दैव्या । होतारा । प्रथमा । नि । ऋञ्जे । सप्त । पृक्षासः । स्वधया । मदन्ति ।
ऋतम् । शंसन्तः । ऋतम् । इत् । ते । आहुः । अनु । व्रतम् । व्रतऽपाः । दीध्यानाः ॥८॥

vदैव्या दैव्यौ[6] देवतारूपौ vहोतारा होतारौ होमनिष्पादकौ vप्रथमा प्रथमौ मुख्याविमं चामुं चाग्नी vन्यृञ्जे । 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः । मन्त्रद्रष्टा[7] विश्वामित्रोऽहं[7] प्रसाधयामि । vसप्त vपृक्षासः[8] सप्त होत्रकाः vस्वधया सोमेन vमदन्ति हृष्यन्ति । vऋतं स्तोत्रं vशंसन्तः vव्रतपाः व्रतस्य यज्ञकर्मणो रक्षितारः vदीध्यानाः दीप्यमानाः vते होत्रकाः vअनु vव्रतं यज्ञे कर्मणि vऋतमित् सत्यमेवाग्निम् vआहुः वदन्ति ॥ ऋञ्जे । 'ऋजि भृजी भर्जने' । निपूर्वोऽयं धातुः प्रसाधने वर्तते । निघातः । स्वधया । स्वं लोकं यजमानस्य दधाति विदधातीति[9]

---

१. ल–उद्गातृव्यतिरिक्ताः । २. त–पालयन्ते । ३. घ-ण–आसेक्तारः । ४. ख-ग-च-ज-ण-न-भ–'संबन्धीनि' नास्ति । ५. त–पूर्वपदप्रकृति° । ६. त-ल–'दैव्यौ' नास्ति । ७. ख-ग-च-ज-ण-न-भ–मन्त्रद्रष्टाह । विश्वामित्रोऽहम्; घ–'मन्त्र...अहं' नास्ति । ८. घ–पृक्षासः हविर्लक्षणान्नवन्तः । ९. ख-ग-च-ज-ण-न-भ–विदधाति ।

स्वधा सोमः । ' आतोऽनुपसर्गे कः ' इति कः[1] । कृदुत्तरपदप्रकृतिस्वरत्वम् । आहुः । ' ब्रूञ् व्यक्तायां वाचि ' इत्यस्य लटि ' ब्रुवः पञ्चानामादित आहो ब्रुवः ' इति झेरुसादेशो ब्रुवश्च आहादेशः । निघातः । दीध्यानाः । ' दीधीङ् दीप्तिदेवनयोः ' इत्यस्मात् शानच् । तस्य चित्त्वादन्तोदात्तत्वे प्राप्ते ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् ॥

वृ॒षा॒यन्ते॑ म॒हे अत्या॑य पू॒र्वीर्वृष्णे॑ चि॒त्राय॑ र॒श्मयः॑ सुया॒माः ।
देव॑ होत॒र्मन्द्रत॑रश्चिकि॒त्वान्म॒हो दे॒वान्रोद॑सी॒ एह व॑क्षि ॥ ९ ॥

वृ॒ष॒ऽयन्ते॑ । म॒हे । अत्या॑य । पू॒र्वीः । वृष्णे॑ । चि॒त्राय॑ । र॒श्मयः॑ । सु॒ऽया॒माः ।
देव॑ । हो॒त॒रिति॑ । म॒न्द्रऽत॑रः । चि॒कि॒त्वान् । म॒हः । दे॒वान् । रोद॑सी॒ इति॑ । आ । इ॒ह । व॒क्षि ॥९॥

देव देदीप्यमान होतः देवानामाह्वातः हे अग्ने महे महते अत्याय सर्वानप्यतिक्रम्य वर्तमानाय चित्राय नानाविधवर्णाय । यद्वा चित्राय देवैश्चायनीयाय पूज्याय । वृष्णे कामानां वर्षित्रे तुभ्यं त्वदर्थं पूर्वीः प्रभूताः सुयामाः अतिशयेन विस्तृताः रश्मयः सर्वतो व्याप्ता ज्वालाः वृषायन्ते वृषेवाचरन्ति । सेचकाः[2] इव भवन्ति । होतारो ज्वालाभिः समिद्धमग्निं दृष्ट्वा सोमाज्यपयःप्रभृतीनि हवींषि तत्र प्रक्षिपन्तीति ज्वालानां वृषत्वम् । यद्वा षष्ठ्यर्थे चतुर्थी । तथा च महतोऽत्यस्य चित्रस्य वृष्णोऽग्नेर्बहवो रश्मयो वृषेवाचरन्ति । वृष्ट्युत्पादनद्वारा पर्जन्यवदाचरन्तीत्यर्थः । अपि च मन्द्रतरः यजमानस्य मादयितृतमः चिकित्वान् ज्ञानोपेतः स त्वं महः महतः पूज्यान् यष्टव्यान् देवान् रोदसी द्यावापृथिव्यौ च इह वैदिकेऽस्मिन् कर्मणि आ वक्षि आवह ॥ वृषायन्ते । ' उपमानात् ' इत्यनुवृत्तौ ' कर्तुः क्यङ् सलोपश्च ' इति क्यङ् । ' अकृत्सार्वधातुकयोः॰ ' इति दीर्घः । पादादित्वादनिघातः । धातुस्वरः । महे । अकारतकारयोर्लोपश्छान्दसः । ' बृहन्महतोः॰ ' इति विभक्तेरुदात्तत्वम् । पूर्वीः । ' पॄ पालनपूरणयोः ' इत्यस्मात् ' कुः ' इत्यनुवृत्तौ ' पॄभिदिव्यधिगृधि॰ ' इत्यादिना कुप्रत्ययः । कित्त्वाद्गुणप्रतिषेधे ' उदोष्ठ्यपूर्वस्य ' इत्युत्वम् । ' उरण् रपरः ' । तस्मात् ' वोतो गुणवचनात् ' इति ङीष् । यणादेशे कृते ' हलि च ' इति दीर्घः । ' वा[3] छन्दसि ' इति सवर्णदीर्घः[3] । रश्मयः । ' अशू व्याप्तौ ' । अश्नुवते सर्वं जगदिति ' मिः ' इत्यनुवृत्तौ ' अश्नोते रश्च[4] ' ( उ. सू. ४ · ४८६ ) इति मिप्रत्ययो रशादेशश्च । प्रत्ययस्वरः । सुयामाः । यमनं यामः । भावे घञ् । बहुव्रीहौ ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । देव । ' ॰अपादादौ ' इति पर्युदासात् षाष्ठिकमाद्युदात्तत्वम् । होतः । ह्वयतेस्ताच्छीलिकस्तृन् । ' बहुलं छन्दसि ' इति संप्रसारणम् । अपादादावामन्त्रितत्वान्निघातः । मन्द्रतरः । मदि स्तुत्यादिषु । ' स्फायितञ्चिवञ्चि॰ ' इत्यादिना रक् । इदित्त्वान्नुम् । तरपः पित्त्वादनुदात्तत्वे रक्प्रत्ययस्वरः । वक्षि । ' वह प्रापणे ' इत्यस्य ' बहुलं छन्दसि ' इति शपो लुक् । ढत्वकत्वषत्वानि । निघातः ॥

---

१. त–कः प्रत्ययः; ल–कप्रत्ययः । २. ख-त-भ-ल–सेवकाः । ३. ख-ग-च-ज-ण–' वा...... ॰दीर्घः ' नास्ति । ४. ख-ग-च-ज-ण-न-भ–' अशेरश च ' ।

पृक्षप्रयजो द्रविणः सुवाचः सुकेतव उषसो रेवदूषुः ।
उतो चिदग्ने महिना पृथिव्याः कृतं चिदेनः सं महे दशस्य ॥ १० ॥

पृक्षऽप्रयजः । द्रविणः । सुऽवाचः । सुऽकेतवः । उषसः । रेवत् । ऊषुः ।
उतो इति । चित् । अग्ने । महिना । पृथिव्याः । कृतम् । चित् । एनः । सम् । महे । दशस्य ॥ १० ॥

ᵛद्रविणः । द्रवति सततं गच्छतीति द्रविणःशब्देन[1] अग्निरभिधीयते । द्रविणः सततगमनस्वभाव हे अग्ने ᵛपृक्षप्रयजः । पृक्षाणि हविर्लक्षणान्यन्नानि प्रकर्षेण यष्टुं प्रक्रम्यते[2] यासूषःसु ताः पृक्षप्रयजः । ᵛसुवाचः प्रातरनुवाकादिशोभना वाचो यासां[3] ताः। ᵛसुकेतवः वयसां मनुष्याणां च शब्दैः सुप्रज्ञानाः । एवंविधाः ᵛउषसः ᵛरेवत् अस्माकं धनयुक्तं यथा भवति तथा ᵛऊषुः व्युच्छन्ति । ᵛउतो ᵛचित् अपि च हे ᵛअग्ने ᵛपृथिव्याः विस्तीर्णाया[4] ज्वालायाः[4] ᵛमहिना महत्त्वेन ᵛकृतं संपादितं ᵛचित् यत्किंचित् ᵛएनः प्राप्युपघातादिलक्षणं पापं ᵛमहे महते यजमानाय मह्यं मदर्थं ᵛसं ᵛदशस्य संक्षपय ॥ पृक्षप्रयजः । 'अन्येभ्योऽपि दृश्यन्ते' इति कर्मणि विच् दृशिग्रहणादधिकृतो भवतीत्युक्तम् । बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् । द्रविणः । 'द्रु गतौ' इत्यस्मात् 'द्रुदक्षिभ्यामिनन्' इतीनन्प्रत्ययः । गुणावादेशौ । संबुद्धौ सोर्लोपाभावश्छान्दसः । आमन्त्रितत्वान्निघातः । सुवाचः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । रेवत्[5] । रयिर्धनमस्मिन् विद्यत इति मतुप् । 'ह्रस्वनुड्भ्याम्°' इति मतुबुदात्तः । 'छन्दसीरः' इति वत्वम्[5] । 'रयेर्मतौ बहुलं छन्दसि' इति संप्रसारणम् । परपूर्वत्वे गुणः । ऊषुः । 'उष दाहे' । दाहार्थोऽप्ययं धातुरत्र प्रकाशने वर्तते । 'छन्दसि लुङ्°' इति वर्तमाने लिट् । उषि रूपम् । निघातः । पृथिव्याः । 'प्रथ प्रख्याने' इत्यस्मात् 'प्रथेः षिवन् संप्रसारणं च' इति षिवन्प्रत्ययः । तत्संनियोगेन धातोः संप्रसारणम् । 'षिद्गौरादिभ्यश्च' इति ङीष् । प्रत्ययस्वरेणान्तोदात्तः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । दशस्य । निघातः ॥

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ११ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध ।
स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥

हे ᵛअग्ने ᵛपुरुदंसम् । 'अप्नः दंसः वेषः' (नि. २. १. ३) इति कर्मनामसु पठितत्वात् दंसःशब्दः कर्मवाची । पुरूणि बहूनि दंसांसि[6] कर्माणि यस्याः सा । तां बहुकर्माणं[7] ᵛगोः ᵛसनिं गवादिपशून्[8] संपादयित्रीम्[9] ᵛइळाम् एतन्नामिकां गोरूपां देवतां ᵛशश्वत्तमं निरन्तरं ᵛहवमानाय यजमानाय

---

१. ज-ण-ल-द्रविणशब्देन । २. ख-घ-प्रक्रम्यन्ते । ३. ज-ण-यासु । ४. च-ज-ण-भ-विस्तीर्णज्वालायाः; ख-ग-विस्तीर्णाज्वालायाः । ५. ख-ग-च-ज-ण- 'रेवत्... ...वत्वम्' नास्ति । ६. ख-ग-घ-च-ज-ण-न-भ- 'दंसांसि' नास्ति । ७. घ-प- 'बहुकर्माणं' नास्ति । ८. घ-त-प-ल-°पशूनाम् । ९. त-प्रदात्रीम्; ल-प्रदायित्रीम् ।

मह्यं ᵛसाध साधय। किंच ᵛनः अस्माकं ᵛसूनुः पुत्रः ᵛतनयः पौत्रः ᵛस्यात् भवतु इति हे ᵛअग्ने ᵛते तव या ᵛसुमतिः शोभना बुद्धिः ᵛसा ᵛविजावा अवन्ध्या सती ᵛअस्मे अस्माकं ᵛभूतु भवतु॥ शश्वत्तमम्। उञ्छादिषु पाठादन्तोदात्तत्वम्। साध। 'राध साध संसिद्धौ'। अन्तर्भावितण्यर्थोऽयम्। लोटि व्यत्ययेन शप्। 'सेह्यपिच्च' इति हिरादेशः। तस्य 'अतो हेः' इति लुक्। निघातः। विजावा। 'जनी प्रादुर्भावे'। अस्मात् 'अन्येभ्योऽपि दृश्यन्ते'[1] इति वनिप्। 'विड्वनोरनुनासिकस्यात्' इत्यात्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। लिङ्गव्यत्ययः। भूतु। 'भू सत्तायाम्'। 'बहुलं छन्दसि' इति शपो लुक्। 'भूसुवोस्तिङि' इति गुणप्रतिषेधः॥ ॥ २॥

'अञ्जन्ति' इत्यष्टमं वैश्वामित्रमेकादशर्चं सूक्तम्। अत्रानुक्रमणिका—'अञ्जन्ति यूपस्तुतिः षष्ठयाद्याभिर्बहवोऽन्त्यायाश्चिन्यष्टमी वैश्वदेवी वा तृतीयासप्तम्यावनुष्टुभौ' इति। 'उच्छ्रयस्व वनस्पते' 'ये वृक्णासः' इत्येते तृतीयासप्तम्यावनुष्टुभौ शिष्टास्त्रिष्टुभः। कृत्स्नस्य सूक्तस्य यूपो देवता। 'वनस्पते शतवल्शः' इत्यस्याश्छिन्नयूपस्य मूलभूतः स्थाणुर्देवता। 'आदित्या रुद्रा वसवः' इत्यष्टमी वैश्वदेवी यौपी[2] वा। अत्र षष्ठ्यादीनां बहवो यूपा देवता बहूनां स्तूयमानत्वात्। शिष्टा एकयूपदेवत्याः। यूपाञ्जने 'अञ्जन्ति त्वाम्' इत्येषा। 'प्रेषितो यूपायाज्यमानायाञ्जन्ति त्वामध्वरे देवयन्तः' (आश्व. श्रौ. ३. १) इति। यूपोच्छ्रयणे 'समिद्धस्य' इति द्वे ऋचौ। 'उच्छ्रयस्व वनस्पते समिद्धस्य श्रयमाणः पुरस्तात्' (आश्व. श्रौ. ३. १) इति सूत्रितत्वात्। यूपपरिव्ययणे[3] 'युवा सुवासाः परिवीत आगादिति परिदध्यात्' (आश्व. श्रौ. ३. १) इति सूत्रितत्वात्। यूपोच्छ्रयणे 'जातो जायते सुदिनत्वे अह्नामित्यर्धर्चं आरभेत्' (आश्व. श्रौ. ३. १) इति सूत्रितम्। यूपैकादशिन्यामन्यत्रापि[4] बहुयूपयुक्ते कर्मणि 'यान्वो नरः' इत्यादिभिः षड्भिः पञ्चभिर्वा संस्तुयात्[5]। 'संस्तुयादनभिहिंकृत्य यान्वो नरो देवयन्तो नि मिम्युरिति षड्भिः पञ्चभिर्वा' (आश्व. श्रौ. ३. १) इति॥

अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्तो॒ वन॑स्पते॒ मधु॑ना॒ दैव्ये॑न।

यदू॒र्ध्वस्तिष्ठा॒ द्रवि॑णे॒ह ध॑त्ता॒द्यद्वा॒ क्षयो॑ मा॒तुर॒स्या उ॒पस्थे॑॥ १॥

अ॒ञ्जन्ति॑। त्वाम्। अ॒ध्व॒रे। दे॒व॒ऽयन्तः॑। वन॑स्पते। मधु॑ना। दैव्ये॑न।

यत्। ऊ॒र्ध्वः। तिष्ठाः॑। द्रवि॑णा। इ॒ह। ध॒त्ता॒त्। यत्। वा॒। क्षयः॑। मा॒तुः। अ॒स्याः। उ॒पऽस्थे॑॥१॥

ᵛवनस्पते खदिरपलाशादिलक्षण हे यूप ᵛअध्वरे यज्ञे ᵛदेवयन्तः देवान् कामयमाना अध्वर्य्वादयः ᵛदैव्येन ᵛमधुना घृतेन। 'एतद्वै मधु[6] दैव्यं[6] यदाज्यम्' (ऐ. ब्रा. २. २) इत्याम्नानात्। तेन घृतेन ᵛत्वाम् ᵛअञ्जन्ति त्वयि घृतं सिञ्चन्तीत्यर्थः। ᵛयत् यदि त्वम् ᵛऊर्ध्वस्तिष्ठाः उन्नतस्तिष्ठसि। ᵛयद्वा यदि वा ᵛमातुरस्याः मातृभूतायाः पृथिव्याः ᵛउपस्थे उत्सङ्गे ते ᵛक्षयः निवासः। यदूर्ध्वस्तिष्ठसि[7] यदि वा भूमौ शयानो वर्तसे उभयथापि त्वम् ᵛइह अस्मासु ᵛद्रविणा धनानि[8] ᵛधत्तात् धेहि। ब्राह्मणेनेयमृग्व्याख्याता—'अञ्जन्ति त्वामध्वरे देवयन्त इत्यन्वाहाध्वरे

१. ख-ग-च-ज-ण-भ—दृश्यते। २. ख-ग-च-ज-ण-भ—यूपी। ३. ख-ग-च-ज-ण-भ—°व्ययमाणे। ४. ग-च-ज-ण—यश्चैका°; ख-न-भ—पश्चैका° ५. न—संस्तुयात्। तथा च सूत्रम्। ६. ख-घ-च-ज-ण-त-न-भ-ल—दैव्यं मधु। ७. ख—यदूर्ध्वस्तिष्ठसि; ग-घ-त-न-भ-ल—यद्यूर्ध्वं तिष्ठसि। ८. घ—द्रविणानि।

ह्येनं देवयन्तोऽञ्जन्ति वनस्पते मधुना दैव्येनेत्येतद्वै मधु दैव्यं यदाज्यं यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थ इति यदि च तिष्ठासि यदि च शयासै द्रविणमेवास्मासु धत्तादित्येव तदाह' (ऐ. ब्रा. २. २) इति। तथा च निरुक्तमपि—'अञ्जन्ति त्वामध्वरे देवान् कामयमाना वनस्पते मधुना दैव्येन च घृतेन च यदूर्ध्वः स्थास्यसि द्रविणानि च नो दास्यसि यद्वा ते कृतः क्षयो मातुरस्या उपस्थ उपस्थाने' (निरु. ८. १८) इति॥ अञ्जन्ति। 'अञ्जू व्यक्तिकान्तिगतिम्रक्षणेषु'। रुधादित्वात् श्नम्। तस्य लटि झेर्ङित्त्वात् 'अनिदिताम्०' इत्युपधालोपः। 'श्नसोरल्लोपः' इत्यल्लोपः। प्रत्ययस्वरेण मध्योदात्तः। त्वाम्। अमि युष्मच्छब्दस्य 'त्वमावेकवचने' इति त्वादेशः। 'द्वितीयायां च' इत्याकारः। 'एकादेश उदात्तेनोदात्तः' इत्येकादेशस्योदात्तत्वम्। अध्वरे। न विद्यते ध्वरो हिंसा यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। देवयन्तः[1] देवानात्मन इच्छन्तः। 'सुप आत्मनः०' इति क्यच्। 'क्यचि च' इतीत्वम्[1] 'अकृत्सार्वधातुकयोः०' इति दीर्घत्वं च 'न छन्दस्यपुत्रस्य' इत्यनेन प्रतिषिध्यते। तदन्ताच्छतृप्रत्ययः। शपः पित्त्वाल्लसार्वधातुकस्वरेण चानुदात्तत्वे कृते तयोः 'एकादेश उदात्तेनोदात्तः' इति क्यच एव स्वरः। वनस्पते। 'आमन्त्रितस्य च[2]' इत्याद्युदात्तत्वम्। मधुना। 'फलिपाटिनमिमनि०' इत्यादिना उप्रत्ययः। 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम्। दैव्येन। 'देवाद्यञञौ' इति यञ्। ञित्वात्[3] वृद्धिः[3]। 'यस्य' इति लोपः। ञित्वादाद्युदात्तः। तिष्ठाः। 'ष्ठा गतिनिवृत्तौ'। लेटि सिप्। 'इतश्च लोपः' इतीकारलोपः। शपः शित्त्वात् 'पाघ्रा०' इत्यादिना तिष्ठादेशः। 'लेटोऽडाटौ' इत्याडागमः। यच्छब्दयोगान्निघाताभावः। तिष्ठादेशस्याद्युदात्तत्वेन निपातितत्वादाद्युदात्तः। द्रविणा। 'द्रुदक्षिभ्यामिनन्' इतीनन्प्रत्ययः। 'सुपां सुलुक्०' इति सुपो डादेशः। नित्वादाद्युदात्तः। इह। इदंशब्दात् सप्तम्यर्थे 'इदमो हः' इति हः। 'इदम इश्' इतीशादेशः। शित्वात् सर्वादेशः। प्रत्ययस्वरः। धत्तात्। 'डुधाञ् धारणपोषणयोः' इत्यस्य प्रार्थने लोट्। सिप्। तस्य 'सेर्ह्यपिच्च' इति हिरादेशः। 'तुह्योः०' (पा. सू. ७. १. ३५) इति तातङादेशः। 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। 'दधस्तथोश्च' (पा. सू. ८. २. ३८) इति भष्भावः। जश्त्वचर्त्वे। निघातः। वा। चादित्वादनुदात्तः। क्षयः। क्षियन्ति निवसन्ति। अधिकरणे घः। 'क्षयो निवासे' इत्याद्युदात्तत्वम्। मातुः। 'नप्तृनेष्टृ०' इत्यादिना तृजन्तत्वेन निपातनादन्तोदात्तः। 'ऋत उत्' इति ङसः पूर्वपरयोरुकारः। अस्याः। 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम्। उपस्थे। 'ष्ठा गतिनिवृत्तौ'। 'आतश्चोपसर्गे' इति कः। 'तत्पुरुषे तुल्यार्थ०' इति मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम्॥

समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरम्।
आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगाय॥ २॥

सम्ऽइद्धस्य। श्रयमाणः। पुरस्तात्। ब्रह्म। वन्वानः। अजरम्। सुऽवीरम्।
आरे। अस्मत्। अमतिम्। बाधमानः। उत्। श्रयस्व। महते। सौभगाय॥ २॥

हे यूप ᵛसमिद्धस्य दीप्यमानस्याहवनीयाख्यस्याग्नेः ᵛपुरस्तात् प्राच्यां दिशि ᵛश्रयमाणः तत्र वर्तमानः ᵛब्रह्म अन्नम्। 'ब्रह्म वर्चः' (नि. २. ७. २५) इत्यन्ननामसु पाठात्। ᵛअजरं जरारहितं

---

१. ख-ग-च-ज-ण-भ-'देवयन्तः......इतीत्वम्' नास्ति। २. ख-ग-च-ज-ण-न-भ-'च' नास्ति। ३. त-ल-ञित्वादादिवृद्धिः।

समृद्धं ᵛसुवीरं शोभनापत्ययुक्तं ब्रह्म अन्नं ᵛवन्वानः प्रयच्छन् ᵛअस्मदमतिम् अस्माकं शत्रुभूतामशनायाम्। 'अशनाया वै पाप्मामतिः' ( ऐ. ब्रा. २. २ ) इति श्रवणात्। तादृशं शत्रुम् ᵛआरे[1] दूरे ᵛबाधमानः अपनुदंस्त्वं[1] ᵛमहते ᵛसौभगाय धनादिसंपत्त्यर्थम् ᵛउच्छ्रयस्व उच्छ्रितो भव। उक्तार्थे[2] ब्राह्मणं —'समिद्धस्य श्रयमाणः पुरस्तादिति समिद्धस्य ह्येष एतत्पुरस्ताच्छ्रयते ब्रह्म वन्वानो अजरं सुवीरमित्याशिषमेवाशास्त आरे अस्मदमतिं बाधमान इत्यशनाया वै पाप्मामतिस्तामेव तदाराह्नुदते यज्ञाच्च यजमानाच्चोच्छ्रयस्व महते सौभगायेत्याशिषमेवाशास्ते' ( ऐ. ब्रा. २. २ ) इति। समिद्धस्य। 'ञिइन्धी दीप्तौ'। कर्मणि निष्ठायां 'श्वीदितो निष्ठायाम्' इति इट्प्रतिषेधः। सम्यगिद्ध इति। 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम्। श्रयमाणः। 'श्रिञ् सेवायाम्' इत्यस्य लटः शानच्। तस्य लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः शिष्यते। पुरस्तात्। पूर्वशब्दस्य 'दिक्शब्देभ्यः सप्तमीपञ्चमी°' ( पा. सू. ५. ३. २७ ) इत्यादिना अस्तातिप्रत्ययः। 'अस्ताति च' ( पा. सू. ५. ३. ४० ) इति पूर्वस्य पुरादेशः। प्रत्ययस्वरः। ब्रह्म। 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः। वन्वानः। 'वनु याचने'। अत्रायं धातुर्दानार्थे वर्तते। लटः शानच्प्रत्ययः। चित्त्वादन्तोदात्तः। अजरम्। 'नञो जरमरमित्रमृताः°' इत्युत्तरपदाद्युदात्तत्वम्। सुवीरम्। 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम्। आरे। एवमादित्वादन्तोदात्तः। अस्मत्। 'युष्मसिभ्यामदिक्' इति मदिक्प्रत्ययः। 'सुपां सुलुक्°' इति सुपो लुक्। मदिक्प्रत्ययस्वरः। अमतिम्। 'तत्पुरुषे°' इति पूर्वपदप्रकृतिस्वरत्वम्। उत्। निपातत्वेनाद्युदात्तः। श्रयस्व। 'श्रिञ् सेवायाम्' इत्यस्य लोण्मध्यमैकवचने थास्। थासः से इत्यादेशः। 'सवाभ्यां वामौ' इत्येकारस्य वकारः। निघातः। महते। वर्तमाने 'पृषद्बृहन्महत्°' इति निपातनादन्तोदात्तः। 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम्। सौभगाय। 'प्राणभृज्जातिवयोवचन°[3]' इत्यञ्। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति वृद्धिः। सर्वविधीनां छन्दसि विकल्पितत्वात् इत्युत्तरपदस्य वृद्धिर्न भवति। ञित्स्वरः॥

उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि।
सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥ ३ ॥

उत्। श्रयस्व। वनस्पते। वर्ष्मन्। पृथिव्याः। अधि।
सुऽमिती। मीयमानः। वर्चः। धाः। यज्ञऽवाहसे ॥ ३ ॥

हे ᵛवनस्पते यूप ᵛपृथिव्या ᵛअधि पृथिव्यां ᵛवर्ष्मन् उत्कृष्टे देवयजनाख्ये देशे ᵛउच्छ्रयस्व उच्छ्रितो भव। ᵛसुमिती शोभमानया बुद्ध्या अथवा शोभनेन परिमाणेन ᵛमीयमानः इयत्तया परिच्छिद्यमानस्त्वं ᵛयज्ञवाहसे यज्ञनिर्वाहकाय यजमानाय ᵛवर्चो ᵛधाः अन्नं धेहि। अयमेवार्थो ब्राह्मणेन दर्शितः–'उच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणायाभिरूपा यद्यज्ञेऽभिरूपं तत्समृद्धम्। वर्ष्मन्पृथिव्या अधीत्येतद्वै वर्ष्म पृथिव्यै यत्र यूपमुन्मिन्वन्ति सुमिती मीयमानो वर्चो धा यज्ञवाहस इत्याशिषमाशास्ते' ( ऐ. ब्रा. २. २ ) ॥ वनस्पते। अपादादित्वादाष्टमिकमनुदात्तत्वम्। पृथिव्याः। 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम्। सुमिती। 'माङ् माने' इत्यस्य क्तिनि 'द्यति-

---

१. त–आरे बाधमानः दूरे अपनुदंस्त्वम्। २, ख-ग-च-ज-ण-भ–उक्तार्थेयम्; न–उक्तार्थेऽपि। ३. त-ल–°वचनोद्गात्रादिभ्यः।

स्यतिमास्था°' इतीकारादेशः। शोभना मितिः। 'तादौ च निति कृत्यतौ' इति गतेः[1] प्रकृतिस्वरत्वम्[1]। 'सुपां सुलुक्°' इति सवर्णदीर्घः। मीयमानः। 'माङ् माने' इत्यस्य कर्मणि यक्। 'घुमास्था°[2] इतीत्वम्[2]। प्रत्ययस्वरः। धाः। धाञो लोडर्थे 'छन्दसि लुङ्लङ्°' इति लुङ्। 'इतश्च°' इति सिप इकारलोपः। 'गातिस्था°' इति सिचो लोपः। 'बहुलं छन्दसि' इत्यडभावः[3]। निघातः। यज्ञवाहसे। यज्ञं वहति प्राप्नोति। 'वह प्रापणे' इत्यस्य 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन्। 'णित्' इत्यनुवृत्तेरुपधावृद्धिः। 'गतिकारकयोः' इति पूर्वपदप्रकृतिस्वरत्वं च इति पूर्वपदप्रकृतिस्वरः[4] (उ. सू. ४·६६६)॥

युवा॑ सु॒वासाः॒ परि॑वीत॒ आगा॒त्स उ॒ श्रेया॑न्भवति॒ जाय॑मानः।
तं धीरा॑सः क॒वय॒ उन्न॑यन्ति स्वा॒ध्यो॒३॒॑ मन॑सा दे॒वयन्तः॑ ॥ ४ ॥

युवा॑। सु॒ऽवासाः॑। परि॑ऽवीतः। आ। अ॒गा॒त्। सः। ऊँ इति॑। श्रेया॑न्। भ॒व॒ति॒। जाय॑मानः।
तम्। धीरा॑सः। क॒वयः॑। उत्। न॒य॒न्ति॒। सु॒ऽआ॒ध्यः॑। मन॑सा। दे॒व॒ऽयन्तः॑ ॥ ४ ॥

युवा दृढाङ्गः अष्टाश्र्यादिलक्षणलक्षितः[5] इत्यर्थः। सुवासाः शोभनेन वाससा रशनया युक्तः। परिवीतः तयापि वेष्टितः। एवंविधो यूपः आगात् आगच्छति। स उ स एव यूपः श्रेयान् जायमानः सर्वेभ्यो वनस्पतिभ्य उत्कृष्टतया संपद्यमानः भवति। तम् एवंविधं यूपं धीरासः प्राज्ञाः मनसा देवयन्तः देवान् कामयमानाः स्वाध्यः सुष्ठु सर्वतो ध्यानयुक्ताः कवयः क्रान्तदर्शिनोऽध्वर्य्वादयः उन्नयन्ति उन्नतं कुर्वन्ति। एतस्मिन्नर्थे ब्राह्मणं–'युवा सुवासाः परिवीत आगादित्युत्तमया परिदधाति प्राणो वै युवा सुवासाः सोऽयं शरीरैः परिवृतः स उ श्रेयान्भवति जायमान इति श्रेयाञ्छ्रेयान्ह्येष एतद्भवति जायमानस्तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति ये वा अनूचानास्ते कवयस्त एवैनं तदुन्नयन्ति' (ऐ. ब्रा. २. २) इति॥ युवा। यौतेः 'कनिन्युवृषितक्षि°' इत्यादिना कनिन्प्रत्ययः। कित्त्वाद्गुणाभावः। उवङादेशः। नित्वादाद्युदात्तत्वम्। सुवासाः। 'वस आच्छादने'। 'असुन्' इत्यनुवृत्तौ 'वसेर्णित्' इत्यसुन्प्रत्ययः। णित्त्वादुपधावृद्धिः। 'सोर्मनसी°' इत्युत्तरपदाद्युदात्तत्वम्। परिवीतः। 'व्येञ् संवरणे'। कर्मणि क्तः। यजादित्वात् संप्रसारणम्। 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम्। अगात्। 'इण् गतौ' इत्यस्य लुङि 'इणो गा लुङि' इति गादेशः। 'गातिस्था°' इति सिचो लोपः। अडागमः। श्रेयान्। 'प्रशस्यस्य द्विवचनविभज्योपपदे' इतीयसुन्प्रत्ययः। तस्मिन् 'प्रशस्यस्य श्रः' इति श्रादेशः। गुणः। नित्त्वादाद्युदात्तत्वम्। एकादेश आद्युदात्तः। स्वाध्यः। 'ध्यै चिन्तायाम्'। स्वाङोरुपसर्गयोः प्राक्प्रयोगः। 'अन्येभ्योऽपि दृश्यते' इति क्विप्। दृशिग्रहणात् संप्रसारणम्। 'संप्रसारणाच्च' इति पूर्वरूपत्वम्। 'हलः' इति दीर्घः। जसि 'एरनेकाचः°' इति यणादेशः। कृदुत्तरपदप्रकृतिस्वरत्वम्। 'उदात्तस्वरितयोर्यणः' इति जसः स्वरितत्वम्। देवयन्तः। 'सुप आत्मनः क्यच्' इति क्यचि चित्त्वादन्तोदात्तः॥

---

१. ख-ग-ज-ण-न-भ–गतिप्रकृति°। २. ख-ग-च-ज-ण-न-भ–'घुमास्था° इतीत्वम्' नास्ति। ३. ख-ग-च-ज-ण-न-भ–अडभावः। ४. त-ल–पूर्वपदस्वरः। ५. ल–अष्टास्रादिलक्षितः।

जातो जायते सुदिनत्वे अह्नां समर्य आ विदथे वर्धमानः ।
पुनन्ति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचम् ॥ ५ ॥

जातः । जायते । सुदिनऽत्वे । अह्नाम् । सऽमर्ये । आ । विदथे । वर्धमानः ।
पुनन्ति । धीराः । अपसः । मनीषा । देवऽयाः । विप्रः । उत् । इयर्ति । वाचम् ॥ ५ ॥

ᵛजातः पृथिव्यां प्रथममुत्पन्नो यूपः ᵛसमर्ये । मर्यः[1] इति मनुष्यनाम । तैः सहिते ᵛविदथे ᵛवर्धमानः । विदथ इति यज्ञनाम 'विदथः सवनम्' (नि. ३. १७. ५) इति यज्ञनामसु पाठात् । तस्मिन् यज्ञे ᵛआ वर्धमानो घृताञ्जनरशनापरिव्ययणादिना सर्वतः शोभमानः सन् ᵛअह्नां ᵛसुदिनत्वे ᵛजायते । पशुनियोजनादिद्वारेण यज्ञनिर्वाहकतया अहानि सुदिनानि करोतीत्यर्थः । ᵛअपसः कर्मवन्तः ᵛधीराः सुप्रज्ञाः[2] अध्वर्य्वादयः ᵛमनीषा बुद्ध्या तं यूपं ᵛपुनन्ति प्रक्षालनादिभिः शोधयन्ति । ᵛदेवयाः देवानां यष्टा देवानां हवींषि प्रापयिता वा ᵛविप्रः मेधावी होता च ᵛवाचं यूपविषयां स्तुतिलक्षणां वाचम् ᵛउदियर्ति प्रेरयति । उच्चारयतीत्यर्थः । उक्तार्थे ब्राह्मणं —'जातो जायते सुदिनत्वे अह्नामिति जातो ह्येष एतज्जायते समर्य आ विदथे वर्धमान इति वर्धयन्त्येवैनं तत्पुनन्ति धीरा अपसो मनीषेति पुनन्त्येवैनं तद्देवया विप्र उदियर्ति वाचमिति देवेभ्य एवैनं तन्निवेदयति' (ऐ. ब्रा. २. २) ॥ सुदिनत्वे । सुदिनानां भाव इति 'तस्य भावस्त्वतलौ' इति त्वः । प्रत्ययस्वरः । समर्ये । 'मृङ् प्राणत्यागे' इत्यस्मात् 'छन्दसि निष्टर्क्य॰' इति क्यप्रत्ययान्तत्वेन निपातनाद्गुणः । 'समासस्य' इत्यन्तोदात्तत्वम् । पुनन्ति । 'पूञ् पवने' । क्र्यादित्वात् श्ना । प्वादित्वात् ह्रस्वः । प्रत्ययस्वरः । देवयाः । 'या प्रापणे' । 'आतो मनिन्॰' इति विच्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । इयर्ति । 'ऋ गतौ' । जुहोत्यादिः । अभ्यासस्य 'अर्तिपिपर्त्योश्च' इतीत्वे 'अभ्यासस्यासवर्णे' इतीयङादेशः । निघातः[3] ॥　　॥ ३ ॥

यान्वो नरो देवयन्तो निमिम्युर्वनस्पते स्वधितिर्वा ततक्ष ।
ते देवासः स्वरवस्तस्थिवांसः प्रजावदस्मे दिधिषन्तु रत्नम् ॥ ६ ॥

यान् । वः । नरः । देवऽयन्तः । निऽमिम्युः । वनस्पते । स्वऽधितिः । वा । ततक्ष ।
ते । देवासः । स्वरवः । तस्थिऽवांसः । प्रजाऽवत् । अस्मे इति । दिधिषन्तु । रत्नम् ॥ ६ ॥

हे यूपाः ᵛदेवयन्तः देवान् कामयमानाः ᵛनरः कर्मणां नेतारोऽध्वर्य्वादयः ᵛयान्वः यान् युष्मान् ᵛनिमिम्युः अवटेषु[4] प्रचिक्षिपुः । ᵛवा अपि च हे ᵛवनस्पते ᵛस्वधितिः परशुस्त्वदीयान् यूपान् ᵛततक्ष चिच्छेद । ᵛदेवासः दीप्यमानाः ᵛस्वरवः । स्वरुशब्दः स्वशकलवाची[5] । तद्वन्तः । लुप्तमत्वर्थीयः । ᵛतस्थिवांसः तिष्ठन्तः ᵛते तादृशा यूपाः ᵛअस्मे अस्मै यजमानाय ᵛप्रजावत् अपत्यसहितं ᵛरत्नम्

---

१. त–मर्याः । २. त–प्रज्ञानवन्तः । ३. ख-ग-च-ज-ण–निपातितः । ४. ख–अनदेषु; ग–अनन्देषु; च–आनन्देषु. ५. त-ल– सवनवाची; न–शकलवाची ।

उत्तमं धनं दिधिषन्तु धारयन्तु। प्रयच्छन्त्वित्यर्थः ॥ निमिम्युः। 'डुमिञ् प्रक्षेपणे' इत्यस्य लिटयुसि 'असंयोगाल्लिट् कित्' इति किद्धद्भावाद्गुणाभावः। यद्वृत्तयोगादनिघातः। 'सति शिष्टः स्वरो बलीयान्' इति वचनात् प्रत्ययस्वरः। स्वधितिः। स्वशब्दोपपदात् 'धि धारणे' इत्यस्मात् क्तिन्। स्वा स्वकीया निशितधारा धीयते प्रक्षिप्यतेऽनेनेति स्वधितिः खङ्गः। ततक्ष। 'तक्षू त्वक्षू तनूकरणे' इत्यस्माल्लिटि णलि रूपादनिघातः। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। स्वरवः। 'स्वृ शब्दोपतापयोः' इत्यस्मात् 'नित्' इत्यनुवृत्तौ 'शृस्वृस्निहित्रपि°' इत्यादिना उप्रत्ययः। नित्त्वादाद्युदात्तः। तस्थिवांसः। 'ष्ठा गतिनिवृत्तौ' इत्यस्मात् छन्दसि लिट्। तस्य क्वसुः। 'वस्वेकाजाद्घसाम्' इतीडागमः। प्रत्ययस्वरः। प्रजावत्। 'जनी प्रादुर्भावे' इत्यस्मात् 'उपसर्गे च संज्ञायाम्' इति डः। ततष्टाप्। 'तदस्यास्ति' इति मतुप्। तस्य पित्त्वादनुदात्तत्वम्। एकादेशस्वरः[1]। अस्मे। अस्मच्छब्दस्य 'सुपां सुलुक्°' इति शेआदेशः[2]। दिधिषन्तु। 'धिष[3] धारणे'। जुहोत्यादिः। निघातः ॥

ये वृक्णासो अधि क्षमि निमितासो यतस्रुचः।
ते नो व्यन्तु वार्यं देवत्रा क्षेत्रसाधसः ॥ ७ ॥

ये। वृक्णासः। अधि। क्षमि। निऽमितासः। यतऽस्रुचः।
ते। नः। व्यन्तु। वार्यम्। देवऽत्रा। क्षेत्रऽसाधसः ॥ ७ ॥

अधि क्षमि क्षमायां भूमौ वृक्णासः परशुना छिन्नाः ये यूपाः। यतस्रुचः इति ऋत्विग्वाची 'यतस्रुचः मरुतः' ( नि. ३. १८. ५ ) इति ऋत्विङ्नामसु पठितत्वात्। यताः स्रुचो यैस्ते यतस्रुचः। तैर्ऋत्विग्भिः निमितासः अवटेषु नितरां प्रक्षिप्ताः क्षेत्रसाधसः क्षेत्रस्य यज्ञस्य साधकाः। यथा क्षेत्रं सस्यादिद्वारा फलं प्रयच्छति तथा यज्ञोऽप्यपूर्वद्वारा स्वर्गादिफलं ददातीति क्षेत्रम्। एवंविधाः ते यूपाः नः अस्मदीयं वार्यं वरणीयं संभजनीयं हविः देवत्रा देवेषु व्यन्तु गमयन्तु[4]। अस्मदीयं हविर्देवाधीनं कुर्वन्त्वित्यर्थः॥ वृक्णासः। 'ओव्रश्चू छेदने' इत्यस्य निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः। कित्वात् 'ग्रहिज्यावयि°' इत्यादिना संप्रसारणम्। 'ओदितश्च' इति निष्ठानत्वम्। क्षमि। 'आतो धातोः' इत्यत्र 'आतः' इति योगविभागात् आकारलोपः। निमितासः। 'डुमिञ् प्रक्षेपणे'। कर्मणि क्तः। 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम्। यतस्रुचः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः[5]। व्यन्तु। 'इण् गतौ' इत्यस्य लोटि रूपम्। इकारलोपश्छान्दसः। अयमन्तर्भावितण्यर्थः। वार्यम्। 'वृङ् संभक्तौ' इत्यस्मात् 'ऋहलोर्ण्यत्' इति कर्मणि ण्यत्। 'ईडवन्दवृशंसदुहं°' इत्यादिना आद्युदात्तत्वम्[6]। देवत्रा। 'त्रा' इत्यनुवृत्तौ 'देवमनुष्यपुरुषपुरुमर्त्येभ्यः°' इत्यादिना अधिकरणे त्राप्रत्ययः। क्षेत्रसाधसः। 'राध साध संसिद्धौ' इत्यस्मात् औणादिकोऽसुन्। कृदुत्तरपदप्रकृतिस्वरः ॥

---

१. ख-ग-च-ज-ण-न-भ—एकादेशः स्वरः। २. त—शे इत्यादेशः। ३. ख-भ—धिषु। ४. ल—'गमयन्तु' नास्ति। ५. ख-ग-च-ज-ण-न-भ—पूर्वपदस्वरः; ल—प्रकृतिस्वरः। ६. ख-ग-च-ज-ण-न-भ—उदात्तत्वम्।

आदित्या रुद्रा वसवः सुनीथा द्यावाक्षामा पृथिवी अन्तरिक्षम् ।
सजोषसो यज्ञमवन्तु देवा ऊर्ध्वं कृण्वन्त्वध्वरस्य केतुम् ॥ ८ ॥

आदित्याः । रुद्राः । वसवः । सुऽनीथाः । द्यावाक्षामा । पृथिवी । अन्तरिक्षम् ।

सऽजोषसः । यज्ञम् । अवन्तु । देवाः । ऊर्ध्वम् । कृण्वन्तु । अध्वरस्य । केतुम् ॥ ८ ॥

vसुनीथाः यज्ञस्य सुष्टु नेतारः vआदित्याः द्वादशादित्याः vरुद्राः एकादश रुद्राः vवसवः अष्टौ वसवः । यद्वा सुष्टुनीथाः सुष्टुतयः । ‘ स्तुतशस्त्राणि नीथानि चोक्थामदानि च ’ (ऐ. ब्रा.२. ३८) इति हि श्रूयते । vद्यावाक्षामा द्यावापृथिव्यौ । vपृथिवी । सुब्व्यत्ययः । पृथु विस्तीर्णम् vअन्तरिक्षं च । vसजोषसः एते सर्वे vदेवाः ऐकमत्येन परस्परं संगताः[1] भूत्वेममस्मदीयं vयज्ञमवन्तु रक्षन्तु। किंच vअध्वरस्य यज्ञस्य vकेतुं ध्वजभूतं प्रज्ञापकं वा इमं यूपम् vऊर्ध्वं vकृण्वन्तु उच्छ्रितं कुर्वन्तु ॥ आदित्याः । अदितेरपत्यानि । ‘ दित्यदित्यादित्यपत्युत्तरपदात्° ’ इति ण्यः । णित्त्वादादिवृद्धिः । प्रत्ययस्वरः । रुद्राः । रोदयन्ति सर्वानन्तकाले । ‘ रोदेर्णिलुक् च ’ इति रक्प्रत्ययः । तत्संनियोगे[2] णिलोपः। प्रत्ययस्वरः। जसः सुप्त्वादनुदात्तत्वे ‘एकादेश उदात्तेनोदात्तः’ इत्येकादेशस्याप्युदात्तत्वम् । वसवः । ‘ वस निवासे ’ । ‘ नित् ’ इत्यनुवृत्तौ ‘ शृस्वृस्निहित्रप्यसिवसि°’ इत्यादिना उप्रत्ययः । नित्त्वादाद्युदात्तः । सुनीथाः । ‘ णीञ् प्रापणे ’ । ‘ हनिकुषिनीरमिकाशिभ्यः° ’ इति क्थन् । कित्त्वादगुणः । ‘ थाथघञ्क्त°’ इत्युत्तरपदान्तोदात्तत्वम् । द्यावाक्षामा । द्यौश्च क्षामा[3] च । ‘ दिवो द्यावा ’ इति द्यावादेशः । ‘ देवताद्वन्द्वे च ’ इत्युभयपदप्रकृतिस्वरत्वम् । पृथिवी । ‘ प्रथ प्रख्याने ’ । ‘ प्रथेः षिवन् संप्रसारणं च ’ इति षिवन् संप्रसारणं च । ‘ षिद्गौरादिभ्यश्च ’ इति ङीष् । प्रत्ययस्वरेणान्तोदात्तः । अवन्तु । ‘ अव रक्षणे ’ । निघातः । कृण्वन्तु । ‘ कृवि हिंसाकरणयोः ’ इत्यस्माल्लोटि ‘ धिन्विकृण्व्योर च ’ इत्युप्रत्ययः । अकारश्चान्तादेशः । निघातः ॥

हंसाइव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न आगुः ।
उन्नीयमानाः कविभिः पुरस्ताद्देवा देवानामपि यन्ति पाथः ॥ ९ ॥

हंसाःऽइव । श्रेणिऽशः । यतानाः । शुक्रा । वसानाः । स्वरवः । नः । आ । अगुः ।

उत्ऽनीयमानाः । कविऽभिः । पुरस्तात् । देवाः । देवानाम् । अपि । यन्ति । पाथः ॥ ९ ॥

vशुक्रा शुक्राणि दीप्तानि रशनाख्यानि[4] वासांसि vवसानाः आच्छादयन्तः vस्वरवः स्वरुमन्तः vश्रेणिशः पङ्क्तिशः vयतानाः प्रवर्तमानाः । अत्र दृष्टान्तः । vहंसाइव इति । यथा नभसि पङ्क्तिशः पतन्तो हंसाः शोभन्ते तद्वत् शोभमानास्ते यूपाः vनः अस्मान् vआगुः प्रापुः । अपि च vकविभिः मेधाविभिरध्वर्य्वादिभिः vपुरस्तात् आहवनीयपूर्वभागे[5] vउन्नीयमानाः उच्छ्रीयमाणाः vदेवाः दीप्यमानास्ते यूपाः vदेवानां vपाथः देवानां स्थानमन्तरिक्षम् । ‘ पाथोऽन्तरिक्षं पथा व्याख्यातम् ’

---

१. ख-ग-घ-च-ज-न-प-भ–संमताः ।  २. च–तत्संनियोगेन ।  ३. ग-च-भ-ल–क्षमा ।  ४. न-ल– ‘ रशनाख्यानि ’ नास्ति ।  ५. ल–आहवनीयस्य पूर्वभागे ।

( निरु. ६. ७ ) इति यास्कः । ‘ पाथोनदीभ्यां ड्यण् ’ ( पा. सू. ४. ४. १११ ) इति सूत्रे ‘ पाथोऽन्तरिक्षम् ’ इति वृत्तिकारोऽप्यवादीत् । तादृशमन्तरिक्षम् ᵛअपि ᵛयन्ति प्राप्नुवन्ति । अध्वर्य्वादिभिः उच्छ्रीयमाणा यूपा अतिदैर्घ्यादन्तरिक्षं व्याप्य वर्तन्त इत्यर्थः ॥ हंसाइव । ‘ इवेन विभक्त्यलोपः ’ इति वचनात् पूर्वपदस्वरः । श्रेणिशः । ‘ बह्वल्पार्थात्० ’ इति शस् । प्रत्ययस्वरः । शुक्राः । ‘ शुच दीप्तौ ’ इत्यस्मात् ‘ ऋज्रेन्द्राग्र० ’ इत्यादिना रन्प्रत्ययान्तत्वेन निपातनादन्तोदात्तः । अगुः । ‘ इण् गतौ ’ । अस्माल्लुङि रूपम् । निघातः ॥

शृङ्गा॑णी॒वेच्छृ॒ङ्गिणा॒ं सं द॑दृश्रे च॒षाल॑वन्तः॒ स्वर॑वः पृथि॒व्याम् ।
वा॒घद्भि॑र्वा विह॒वे श्रोष॑माणा अ॒स्माँ अ॑वन्तु पृत॒नाज्ये॑षु ॥ १० ॥

शृङ्गा॑णिऽइव । इत् । शृ॒ङ्गिणा॑म् । सम् । द॒दृ॒श्रे॒ । च॒षाल॑ऽवन्तः । स्वर॑वः । पृ॒थि॒व्याम् ।
वा॒घत्ऽभिः॑ । वा॒ । वि॒ऽह॒वे । श्रोष॑माणाः । अ॒स्मान् । अ॒व॒न्तु॒ । पृ॒त॒नाज्ये॑षु ॥ १० ॥

ᵛस्वरवः स्वरुमन्तः ᵛचषालवन्तः प्रतिमुक्तकटकाः[1] । एवंविधा यूपाः ᵛपृथिव्यां ᵛशृङ्गिणां महिषादीनां ᵛशृङ्गाणीवेत् विषाणानीव ᵛसं ᵛददृश्रे सम्यक् दृश्यन्ते एव । ᵛवा अपि च ᵛविहवे । विविधं हूयन्ते हवींष्यत्रेति विहवो यज्ञः । तस्मिन् यज्ञे ᵛवाघद्भिः ऋत्विग्भिः । ‘ वाघतः वृक्तबर्हिषः ’ ( नि. ३. १८. ३ ) इति ऋत्विङ्नामसु पाठात् । ᵛश्रोषमाणाः तैः क्रियमाणं स्तुतिलक्षणं शब्दं शृण्वन्तः । तादृशा यूपाः ᵛपृतनाज्येषु । पृतनाज्यशब्दः संग्रामवाची । ‘ आजौ पृतनाज्यम् ’ ( नि. २. १७. ९ ) इति संग्रामनामसु पठितत्वात् । पृतनाज्येषु संग्रामेषु । वधस्थलेष्विति यावत् । ᵛअस्मान् यजमानान् ᵛअवन्तु रक्षन्तु ॥ शृङ्गाणि । ‘ शॄ हिंसायाम् ’ इत्यस्मात् ‘ शृणातेर्ह्रस्वश्च ’ ( उ. सू. १. १२३ ) इति गन् नुडागमो धातोर्ह्रस्वश्च । निस्स्वरः । ददृश्रे । ‘ छन्दसि लुङ्लङ्लिटः ’ इति लडर्थे[2] लिट् । ‘ इरयो रे ’ इतीरेचो रे इत्यादेशः । निघातः[3] ॥

वन॑स्पते श॒तव॑ल्शो॒ वि रो॑ह स॒हस्र॑वल्शा॒ वि व॒यं रु॑हेम ।
यं त्वाम॒यं स्व॒धिति॒स्तेज॑मानः प्रणि॒नाय॑ मह॒ते सौभ॑गाय ॥ ११ ॥

वन॑स्पते । श॒तऽव॑ल्शः । वि । रो॒ह॒ । स॒हस्र॑ऽवल्शाः । वि । व॒यम् । रु॒हे॒म॒ ।
यम् । त्वाम् । अ॒यम् । स्व॒ऽधिति॑ः । तेज॑मानः । प्र॒ऽनि॒नाय॑ । म॒ह॒ते । सौभ॑गाय ॥ ११ ॥

हे ᵛवनस्पते छिन्नमूल[4] स्थाणो ᵛशतवल्शः शतशाखः सन् ᵛवि ᵛरोह विशेषेण प्रादुर्भूतो भव । ᵛवयम् अपि ᵛसहस्रवल्शाः पुत्रपौत्रादिसंतानपरंपरया[5] सहस्रशाखाः सन्तः ᵛवि ᵛरुहेम विशेषेण प्रादुर्भूता भवेम । ᵛतेजमानः निशितधारः ᵛअयं ᵛस्वधितिः परशुः हे स्थाणो ᵛयं ᵛत्वां ᵛमहते

---

१. ख-ग-च-ज-फ–°कटाः; ण–°कण्टकाः; न–प्रमुक्तकण्टकाः । २. ख-ग-ज-ण-न-भ–लडर्थे; च–लुडर्थे; ल–लिडर्थे । ३. ख-ग-व-ज-ण-न-भ–‘ निघातः ’ नास्ति । ४. घ-प–छिन्नयूपमूल । ५. ख-ग-घ-च-ज-ण-फ-भ–‘ पुत्र...परंपरया ’ नास्ति ।

ᵛसौभगाय महत्सौभाग्यं बहुशाखत्वलक्षणं ᵛप्रणिनाय प्रकर्षेण प्रापयामास ॥ सहस्रवल्शाः । सहस्र-शब्दः कर्दमादित्वान्मध्योदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः[1] । रुहेम । 'रुह प्रादुर्भावे' इत्यस्मात् आशीर्लिङि 'किदाशिषि' इति यासुडागमः । 'स्कोः संयोगाद्योः०[2]' इति[2] सलोपः । 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः । 'अतो येयः' इति इयादेशः । 'लोपो व्योर्वलि' इति यलोपः । गुणः[3] । प्रणिनाय । 'णीञ् प्रापणे' इत्यस्माल्लिटि णलि रूपम् । पादादित्वादनिघातः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् ॥ ॥ ४ ॥

'सखायस्त्वा' इति नवर्चं नवमं सूक्तं वैश्वामित्रम्[4] । अत्रेयमनुक्रमणिका—'सखायो नव बार्हतं त्रिष्टुबन्तम्' इति । अन्त्या त्रिष्टुप् । शिष्टा अष्टौ बृहत्यः । प्रातरनुवाकाश्विनशस्त्रयोर्बार्हते छन्दस्यस्य सूक्तस्य विनियोगः । 'अथैतस्याः' इति खण्डे सूत्रितं—'सखायस्त्वायमग्निरग्न आ याहि' ( आश्व. श्रौ. ४. १३ ) इति ॥

सखा॑यस्त्वा ववृमहे दे॒वं मर्ता॑स ऊ॒तये॑ ।

अ॒पां नपा॑तं सु॒भगं॑ सु॒दीदि॑तिं सु॒प्रतू॑र्तिमने॒हस॑म् ॥ १ ॥

सखा॑यः । त्वा॒ । व॒वृ॒म॒हे॒ । दे॒वम् । मर्ता॑सः । ऊ॒तये॑ ।

अ॒पाम् । नपा॑तम् । सु॒ऽभग॑म् । सु॒ऽदीदि॑तिम् । सु॒ऽप्रतू॑र्तिम् । अ॒ने॒हस॑म् ॥ १ ॥

विश्वामित्रः[5] स्तौति[5] । हे अग्ने ᵛसखायः सोमाज्यादिहविष्प्रदानेनोपकारकत्वान्मित्राणि ᵛमर्तासः मनुष्या ऋत्विजो वयम् ᵛअपां ᵛनपातम् अपां नप्तारं ᵛसुभगं शोभनधनयुक्तं ᵛसुदीदितिं शोभनदीप्तिं ᵛसुप्रतूर्तिं शोभनप्रतरणं कर्मानुष्ठातृभिः सुखेन गन्तव्यम् ᵛअनेहसम् उपद्रवरहितम् एतादृशं ᵛदेवं ᵛत्वा[6] त्वाम् ᵛऊतये रक्षणाय ᵛववृमहे वृणीमहे ॥ सखायः । 'ख्या प्रकथने' । 'समाने ख्यश्चोदात्तः' इति समान उपपदे 'डित्' इत्यनुवृत्तौ ख्यातेरिण् । तस्य डित्त्वाट्टिलोपः । तत्संनियोगेन यलोपः । 'समानस्य छन्दस्यमूर्ध०' इति सभावः । उपपदस्योदात्तत्वम् । 'णित्' इत्यनुवृत्तौ 'सख्युरसंबुद्धौ' ( पा. सू. ७. १. ९२ ) इति णिद्वद्भावः । वृद्ध्यायादेशौ । आद्युदात्तः । ववृमहे । 'वृङ् संभक्तौ' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । क्रादित्वादिडभावः । निघातः । ऊतये । 'अव रक्षणे' इत्यस्य 'उदात्त०' इत्यनुवृत्तौ 'ऊतियूति०' इत्यादिना क्तिन्नन्तत्वेन निपातनादन्तोदात्तः । अपाम् । 'ऊडिदम्०' इति विभक्तेरुदात्तत्वम् । सुभगम् । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । सुप्रतूर्तिम् । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् ॥

काय॑मानो व॒ना त्वं यन्मा॒तॄरज॑गन्न॒पः ।

न तत्ते॑ अग्ने प्र॒मृषे॑ नि॒वर्त॑नं॒ यद्दू॒रे सन्नि॒हाभ॑वः ॥ २ ॥

काय॑मानः । व॒ना । त्वम् । यत् । मा॒तॄः । अज॑गन् । अ॒पः ।

न । तत् । ते॒ । अ॒ग्ने॒ । प्र॒ऽमृषे॑ । नि॒ऽवर्त॑नम् । यत् । दू॒रे । सन् । इ॒ह । अभ॑वः ॥ २ ॥

---

१. त-°स्वरत्वम् । २. ल-'संयोगेति°' । ३. त-'गुणः' नास्ति । ४. स-वैश्वामित्रस्यार्षम् । ५. घ-प-'विश्वामित्रः स्तौति' नास्ति । ६. ग-च-न-ल-स-'त्वा' नास्ति ।

हे vअग्ने vवना काननानि[1] vकायमानः कामयमानः vत्वं vयत् यस्मात्कारणात् तानि विहाय vमातृः vअपः मातृभूता अपः vअजगन् अगमः गतवानसि । अप्सु प्रविष्टत्वाच्छान्तो वर्तसे । vतत् तस्मात् vते तव vनिवर्तनं नितरां तत्रैव वर्तनम् । तेन च विनाशो लक्ष्यते । स विनाशः vन vप्रमृषे न प्रमृष्यते न सह्यते । कुत इत्यत आह । vयत् यस्मात्कारणात् vदूरे vसन् अदृश्यतया वर्तमानस्त्वम् vइह अस्मत्संबन्धिषु अरणिरूपेषु काष्ठेषु vअभवः । मन्थनात् क्षणमात्रेणास्माकं समीपे भवसि । तस्मात्तव दूरतो वर्तनम्[2] अस्मभ्यं[3] न रोचते । अस्मिन्नर्थे यास्कः–'कायमानश्चायमानः कामयमान इति वा । वनानि त्वं यन्मातृरपोऽगम उपशाम्यन् । न तत्ते अग्ने प्रमृष्यते निवर्तनं दूरे यत्सन्निह भवसि जायमानः' ( निरु. ४. १४ ) इति ॥ कायमानः । 'कमु कान्तौ' । कर्मणिङ् । लटः शानच् । मकारलोपश्छान्दसः । अजगन् । 'गम्लृ गतौ' इत्यस्य लङि 'बहुलं छन्दसि' इति शपः श्लुः । हल्ङ्यादिना सिलोपः । 'मो नो धातोः' इति नकारः । यच्छब्दयोगादनिघातः । अडागमस्वरः । प्रमृषे । 'मृष तितिक्षायाम्' । व्यत्ययेन कर्मणि तप्रत्ययः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । धातुस्वरः । अभवः । 'छन्दसि लुङ्लङ्लिटः' इति लडर्थे लङ् । यद्योगादनिघातः ॥

अति तृष्टं ववक्षिथाथैव सुमना असि ।
प्रप्रान्ये यन्ति पर्यन्य आसते येषां सख्ये असि श्रितः ॥ ३ ॥

अति । तृष्टम् । ववक्षिथ । अथ । एव । सुऽमनाः । असि ।
प्रऽप्र । अन्ये । यन्ति । परि । अन्ये । आसते । येषाम् । सख्ये । असि । श्रितः ॥ ३ ॥

हे अग्ने vतृष्टं स्तोतुस्तृष्णाभिलापं तदुचितफलप्रदानेन[4] सफलं कर्तुम् vअति vववक्षिथ अतिशयेन वोढुमिच्छसि । vअथैव अथापि त्वं vसुमना vअसि संतुष्टमनस्को वर्तसे । किंच त्वं vयेषां षोडशानामृत्विजां vसख्ये मित्रत्वे[5] vश्रितः vअसि वर्तसे तेषां मध्ये vअन्ये अध्वर्युप्रभृतयो द्वादशर्त्विजः vप्र[6] vयन्ति प्रकर्षेण होतुं गच्छन्ति । vअन्ये उद्गातृप्रभृतयश्चत्वारः vपरि vआसते परित आसीना वर्तन्ते ॥ ववक्षिथ । 'वह प्रापणे' इत्यस्य सनि रूपम् । अभ्यासस्य 'सन्यतः' इतीत्वाभावश्छान्दसः । तदन्ताद्वर्तमाने लिट् । थलः 'आर्धधातुकस्येड्वलादेः' इतीट् । 'कास्प्रत्ययादाम्°' इत्याम् न भवति मन्त्रत्वात् । निघातः । प्रप्र । 'प्रसमुपोद°' इति द्विर्वचनम् । यन्ति । 'इण् गतौ' इत्यस्य लटि रूपम् । 'एकान्याभ्यां समर्थाभ्याम्' इत्यन्यशब्दयोगात् पूर्वस्य निघाताभावः । आसते । 'आस उपवेशने' । उत्तरत्वान्निघातः । असि । 'अस भुवि' । 'तासस्त्योर्लोपः' इति सकारलोपः । यद्वृत्तयोगान्न निहन्यते ॥

ईयिवांसमति स्रिधः शश्वतीरति सश्चतः ।
अन्वीमविन्दन्निचिरासो अद्रुहोऽप्सु सिंहमिव श्रितम् ॥ ४ ॥

ईयिऽवांसम् । अति । स्रिधः । शश्वतीः । अति । सश्चतः ।
अनु । ईम् । अविन्दन् । निऽचिरासः । अद्रुहः । अप्ऽसु । सिंहम्ऽइव । श्रितम् ॥ ४ ॥

---

१. घ-ज-ण-त-प-ल-काननानि रक्षितुम्; न-काननानि रक्षन्तुम् । २. ण-त-स–वर्तमानम् । ३. ल–मह्यम् । ४. त–उचित° । ५. घ–मैत्र्ये; स–मैत्रे । ६. घ-प–प्रप्र ।

हे अग्ने ᵛअद्रुहः अद्रोग्धारः ᵛनिचिरासः नितरां[1] चिरासः चिरंतनाः विश्वे देवाः ᵛस्रिधः शोषकाञ्छत्रून् बलेनातिक्रम्य[2] ᵛईयिवांसं गच्छन्तं ᵛशश्वतीः बह्वीः ᵛसश्चतः संगतिकारिणीः सेनाश्च ᵛअति अतिक्रम्य गच्छन्तम् ᵛअप्सु ᵛश्रितं तिरोहितम् अत एव ᵛसिंहमिव गुहाप्रविष्टं सिंहमिव भीमम् ᵛईम् एनं त्वाम् ᵛअनु ᵛअविन्दन् अनुगम्यालभन्त ॥ ईयिवांसम् । 'इण् गतौ' इत्यस्य क्वसौ 'उपेयिवाननाश्वाननूचानश्च' (पा. सू. ३. २. १०९) इति निपातितः। प्रत्ययस्वरः । स्रिधः । स्रिधेः क्षयार्थस्य शोषणार्थस्य वा 'क्विप् च' इति क्विप् । धातुस्वरः । सश्चतः । 'षस्ज गतौ' । जकारस्य व्यत्ययेन चकारः । लटः शत्रादेशः । प्रत्ययस्वरः । अविन्दन् । 'विद्लृ लाभे' इत्यस्य लङि रूपम् । निचिरासः । नितरां चिराः । 'आज्जसेरसुक्' इत्यसुक् । समासस्वरः । अद्रुहः । 'द्रुह जिघांसायाम्' । संपदादित्वाद्भावे क्विप् । बहुव्रीहौ 'नञ्सुभ्याम्°' इत्युत्तरपदान्तोदात्तत्वम् । श्रितम् । 'श्रिञ् सेवायाम्' इत्यस्य 'श्र्युकः किति' इतीट्प्रतिषेधः । प्रत्ययस्वरः[3] ॥

**स॒सृ॒वांस॑मिव॒ त्मना॒ग्निमि॒त्था ति॒रोहि॑तम् ।**

**ऐनं॑ नयन्मात॒रिश्वा॑ परा॒वतो॑ दे॒वेभ्यो॑ मथि॒तं परि॑ ॥ ५ ॥**

स॒सृ॒वांस॑म्ऽइव । त्मना॑ । अ॒ग्निम् । इ॒त्था । ति॒रःऽहि॑तम् ।

आ । ए॒न॒म् । न॒य॒त् । मा॒त॒रिश्वा॑ । प॒रा॒ऽव॒तः॑ । दे॒वेभ्यः॑ । म॒थि॒तम् । परि॑ ॥ ५ ॥

ᵛमातरिश्वा वायुः ᵛइत्था इत्थं ᵛत्मना स्वेच्छयाप्सु प्रवेशेन ᵛतिरोहितं निलीनं ᵛपरि परितः ᵛमथितं मन्थनेन[4] निष्पादितम् ᵛएनम् ᵛअग्निं ᵛदेवेभ्यः । तादर्थ्ये चतुर्थी । देवार्थं ᵛपरावतः दूरदेशात् ᵛआᵛ नयत् आनीतवान् । तत्र दृष्टान्तः । ᵛससृवांसमिव । यथा स्वाच्छन्द्येन[5] ससृवांसं सरन्तं गच्छन्तं पुत्रं पिता बलादानयति तद्वत् ॥ ससृवांसमिव । 'सृ गतौ' इत्यस्माल्लिट् । तस्य क्वसुः । 'इवेन विभक्त्यलोपः' इत्युक्तत्वात्प्रत्ययस्वरः । त्मना । आत्मन्शब्दस्य 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः । इत्था । 'था हेतौ च छन्दसि' इति व्यत्ययेन थाप्रत्ययः । प्रत्ययस्वरः । एनम् । अन्वादेशे 'द्वितीयाटौःस्वेनः' इत्येनादेशः । अनुदात्तश्च । नयत् । 'णीञ् प्रापणे' इत्यस्य लङि रूपम् । अडभावश्छान्दसः । मातरिश्वा । मातर्यन्तरिक्षे श्वसिति इति[6] 'श्वन्नुक्षन्°' इत्यादिना निपातितः ॥ ॥५॥

**तं त्वा॒ मर्ता॑ अगृभ्णत दे॒वेभ्यो॑ हव्यवाहन ।**

**विश्वा॒न्यद्य॒ज्ञाँ अ॑भि॒पासि॑ मानुष॒ तव॒ क्रत्वा॑ यविष्ठ्य ॥ ६ ॥**

तम् । त्वा॒ । मर्ताः॑ । अ॒गृ॒भ्ण॒त॒ । दे॒वेभ्यः॑ । ह॒व्य॒ऽवा॒ह॒न॒ ।

विश्वा॑न् । यत् । य॒ज्ञान् । अ॒भि॒ऽपासि॑ । मा॒नु॒ष॒ । तव॑ । क्रत्वा॑ । य॒वि॒ष्ठ्य॒ ॥ ६ ॥

---

१. प-निरन्तरम् ।　२. ल-अति बलेनाभिक्रम्य ।　३. ख-ग-च-ज-ण-'प्रत्ययस्वरः' नास्ति ।
४. घ-मथनेन ।　५. घ-स्वच्छन्देन ।　६ त-'इति' नास्ति ।

हे[1] ^v^हव्यवाहन हव्यानां वोढर्हे अग्ने ^v^मर्ताः मनुष्या अध्वर्युप्रभृतयः ^v^तं तादृशमप्सु तिरोहितं ^v^त्वा त्वां ^v^देवेभ्यः यष्टव्यदेवतार्थम् ^v^अगृभ्णत अगृह्णत । ^v^मानुष मनुष्याणां हितकारिन् ^v^यविष्ठ्य युवतम[2] हे अग्ने ^v^तव ^v^क्रत्वा तव कर्मणा माहात्म्येन ^v^विश्वान् सर्वानस्माभिः क्रियमाणान् ^v^यज्ञान् ^v^यत् यस्मात्कारणात् ^v^अभिपासि सर्वतः पालयसि तस्मात्त्वामगृभ्णत इति पूर्वत्रान्वयः[3] ॥ अगृभ्णत । ' ग्रह उपादाने ' । क्रयादित्वात् श्ना । ' ग्रहिज्यावयि° ' इति संप्रसारणम् । ' हृग्रहोर्भश्छन्दसि ' इति हकारस्य भकारः । ' तिङ्ङतिङः ' इति निघातः । हव्यवाहन । ' वह प्रापणे ' इति धातोः ' ञ्युट् ' इत्यनुवृत्तौ ' हव्येऽनन्तःपादम् ' इति ञ्युट् । उपधावृद्धिः । योरनादेशः । अपादादित्वादाष्टमिकमनुदात्तत्वम् । विश्वान् । ' विश प्रवेशने ' इत्यस्मात् ' अशिप्रुषिलटिरणिकणिखटिविशिभ्यः क्वन् ' इति क्वन् । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तत्वम् । अभिपासि । ' पा रक्षणे ' अस्य धातोः रक्षणार्थत्वान्न पिबादेशः । यच्छब्दयोगान्न निघातः । धातुस्वरः । क्रत्वा । टा[4] । ' जसादयश्छन्दसि विकल्प्यन्ते ' इति अत्र नादेशाभावः । यणादेशः । प्रत्ययस्वरः । यविष्ठ्य । युवशब्दात् ' अतिशायने तमबिष्ठनौ ' इतीष्ठन् । ' स्थूलदूरयुव° ' इति यणादि परं लुप्यते पूर्वस्य च गुणः । वस्वादित्वात्[5] स्वार्थिको यप्रत्ययः ॥

तद्भ॒द्रं तव॑ दं॒सना॒ पाका॑य चिच्छदयति ।
त्वां यद॑ग्ने प॒शव॑ः स॒मास॑ते॒ समि॑द्धमपिशर्व॒रे ॥ ७ ॥

तत् । भ॒द्रम् । तव॑ । दं॒सना॑ । पाका॑य । चि॒त् । छ॒द॒य॒ति॒ ।
त्वाम् । यत् । अ॒ग्ने॒ । प॒शव॑ः । स॒म्ऽआस॑ते । सम्ऽइ॑द्धम् । अ॒पि॒ऽश॒र्व॒रे ॥ ७ ॥

हे ^v^अग्ने ^v^तव संबन्धि ^v^तत् इदं ^v^भद्रं शोभनं ^v^दंसना अग्निहोत्रादिकं कर्म ^v^पाकाय ^v^चित् । चिच्छब्दोऽप्यर्थे । पाकायेति कर्मणि चतुर्थी । पाकोऽर्भकः । तद्वदज्ञमपि यजमानं ^v^छदयति[6] स्वफलप्रदानेन पूजयति । पशुपुत्रादिभिः परिवृतं करोतीत्यर्थः । छदयतिशब्दः अर्चतिकर्मा[7] ' छन्दयति छदयति ' इति तन्नामसु पाठात् । यद्वा । पाकशब्दः प्रशस्यं[8] वक्ति[8] ' पाकः वामः ' ( नि. ३·८·८ ) इति प्रशस्यनामसु पठितत्वात् । तद्भद्रं[9] प्रशस्यं यजमानमभिमतफलप्रदानेन[10] पूजयतीत्यर्थः[11] । ^v^यत्[12] यस्मात्कारणात् ^v^अपिशर्वरे शर्वरीमुखेऽग्निविहरणकाल एव ^v^समिद्धं[13] दीप्यमानं ^v^त्वां ^v^पशवः द्विपदाश्चतुष्पदाश्चोभये पशवः ^v^समासते सम्यगासते[14] पर्युपासते इत्यर्थः। तदिदं पश्वादिलक्षणं फलं यजमानाय प्रयच्छतीत्यर्थः॥ भद्रम् । ' भदि कल्याणे ' इत्यस्माद्धातोः उपरि[15] रक्प्रत्ययेन[15] निपातनादन्तोदात्तत्वम् । पाकाय । ' पा रक्षणे ' इत्यस्मात् ' इणूभीकापाशलि° ' इत्यादिना कन् । पायते रक्ष्यते राजादिना[16] इति पाकः । नित्त्वादाद्युदात्तः । छदयति । ' छद अपवारणे ' । स्वार्थे णिच् । अदन्तत्वात् वृद्ध्यभावः । निघातः । समासते । ' आस उपवेशने ' ।

---

१. त–' हे ' नास्ति । २. च–युवत्तम ; ल–युवन् । ३. ल–पूर्वेणान्वयः । ४. त–' टा ' नास्ति । ५. ख-ग-च-ज-ण-न-भ–शाखादित्वात् । ६. ख-ग-च-ज-ण-त–छन्दयति । ७. ख-ग-च-ज-ण–अर्चयतिकर्मा । ८. ल–प्रशस्यवाच (?) क्रियावाचकः । ९. ल–तद्भद्रं कर्म । १०. ल–°फलदानेन । ११. ख-ग-च-ज-ण-फ-भ–पूजयति पशुपुत्रादिभिः परिवृतं करोतीत्यर्थः । १२. ख-ग-च-ज-ण-त-न-भ–' यत् ' नास्ति । १३. ख-ग-च-ज-ण-भ–यत् यं समिद्धम् । १४. ख-ग-च-ज-ण-भ–' सम्यगासते ' नास्ति । १५. ख-ग-च-ज-ण-न-भ–रक्प्रत्यये । १६. ख-ग-च-ज-ण–राजादिभिः ।

अदादित्वाच्छपो लुक्। अनकारान्तत्वात् झस्यादादेशः। यद्योगादनिघातः। 'तिङि चोदात्तवति' इति गतेर्निघातः। धातुस्वरः॥

आ जु॑होता स्वध्व॒रं शी॒रं पा॑व॒कशो॑चिषम्।
आ॒शुं दू॒तम॑जि॒रं प्र॒त्नमीड्यं॑ श्रु॒ष्टी दे॒वं स॑पर्यत ॥ ८ ॥

आ। जु॒हो॒त। सु॒ऽअ॒ध्व॒रम्। शी॒रम्। पा॒व॒कऽशो॑चिषम्।
आ॒शुम्। दू॒तम्। अ॒जि॒रम्। प्र॒त्नम्। ईड्य॑म्। श्रु॒ष्टी। दे॒वम्। स॒प॒र्य॒त ॥ ८ ॥

ऋत्विजो यजमानः प्रेरयति। हे ऋत्विजः ᵛपावकशोचिषं शोधकदीप्तिं ᵛशीरं काष्ठेष्वोषधीषु चानुशायिनं ᵛस्वध्वरं शोभनयज्ञोपेतमिमममग्निम् ᵛआ ᵛजुहोत आहुतिभिः आ समन्तात्तर्पयत। अपि च ᵛआशुं कर्मणि व्याप्तं ᵛदूतम् आह्वानकारित्वेन देवानां दूतम् ᵛअजिरं क्षिप्रं गन्तारं ᵛप्रत्नं पुरातनम् ᵛईड्यं स्तोतव्यं ᵛदेवं द्योतमानमिमममग्निं ᵛश्रुष्टी ᵛसपर्यत। 'श्रुष्टीति क्षिप्रनाम' इति यास्कः। क्षिप्रं पूजयत॥ जुहोत। 'हु दानादनयोः'। अस्माद्धातोर्लोट्। 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लुः। 'श्लौ' इति द्विर्वचनम्। 'लोटो लङ्वत्' इति लङ्वद्भावे 'तस्थस्थमिपाम्°' इति थस्य तादेशः। 'छन्दसि' इत्यनुवृत्तौ तस्य 'तप्तनप्तनथनाश्च' इति तबादेशः। पित्त्वाद्गुणः। निघातः। स्वध्वरम्। बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। शीरम्। 'शीङ् स्वप्ने'। अस्माद्धातोः 'स्फायितञ्चिवञ्चि°' इत्यादिना रक्प्रत्ययः। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। पावकशोचिषमित्यत्र पवनं पावः शुद्धिः। तं कायतीति पावकः। 'आतोऽनुपसर्गे कः'। प्रत्ययस्वरः। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरत्वम्। आशुम्। 'अशू व्याप्तौ' अस्माद्धातोः 'कृवापाजिमि°' इत्यादिना उण्। उपधावृद्धिः। प्रत्ययस्वरः। अजिरम्। 'अज गतिक्षेपणयोः' इत्यस्माद्धातोः 'अजिरशिशिरशिथिल°' इति किरच्प्रत्ययान्तत्वेन निपातनादन्तोदात्तत्वम्। प्रत्नम्। 'प्रगस्य छन्दसि गलोपश्च' (का. ४. ३. २३. २) इति गलोपः। चकारात् त्नप्रत्ययः[1]। प्रत्ययस्वरः। ईड्यम्। 'ईड स्तुतौ'। अस्माण्ण्यत्[2]। 'ईडवन्द°' इत्यादिनाद्युदात्तत्वम्। सपर्यत। सपरशब्दात् 'कण्ड्वादिभ्यो यक्' पूजायां वर्तते। लोण्मध्यमपुरुषबहुवचनम्। शप्। 'अतो गुणे' इति पूर्वरूपत्वम्। निघातः॥

त्रीणि॑ श॒ता त्री स॒हस्रा॑ण्य॒ग्निं त्रिं॒शच्च॑ दे॒वा नव॑ चासपर्यन्।
औक्ष॑न्घृ॒तैरस्तृ॑णन्ब॒र्हिर॑स्मा॒ आदिद्धोता॑रं॒ न्य॑सादयन्त ॥ ९ ॥

त्रीणि॑। श॒ता। त्री। स॒हस्रा॑णि। अ॒ग्निम्। त्रिं॒शत्। च॒। दे॒वाः। नव॑। च॒। अ॒स॒प॒र्य॒न्।
औक्ष॑न्। घृ॒तैः। अस्तृ॑णन्। ब॒र्हिः। अ॒स्मै॒। आत्। इत्। होता॑रम्। नि। अ॒सा॒द॒य॒न्त॒ ॥ ९ ॥

१. ख-ग-च-ज-ण-न-भ—अञ्प्रत्ययः। २. ख-ग-च-ज-ण-न-भ—'अस्माण्ण्यत्' नास्ति।

ᵛत्रीणि ᵛशता त्रीणि शतानि ᵛत्री ᵛसहस्राणि त्रीणि सहस्राणि ᵛत्रिंशच्च ᵛनव ᵛच एकोनचत्वारिंशदधिकशतत्रयोपेतत्रिसहस्रसंख्याकाः ᵛदेवाः इमम् ᵛअग्निम् ᵛअसपर्यन् अपूजयन्। किंच ते देवाः ᵛघृतैः इममग्निम् ᵛऔक्षन् असिञ्चन्। तथा ᵛअस्मै अग्नये तदर्थं ᵛबर्हिः ᵛअस्तृणन्। बर्हिषास्तरणं वेद्याच्छादनमकुर्वन्। ᵛआदित् अनन्तरमेव ते देवास्तस्मिन्बर्हिषि एनमग्निं ᵛहोतारं कृत्वा ᵛन्यसादयन्त उपावेशयन्। देवैः पूज्यमिममग्निं सपर्यतेति पूर्वेणान्वयः। देवसंख्या च बृहदारण्यकेऽभिहिता– 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिंशदष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशौ' (बृ. आ. ३.९) इति॥ शता। दशानां दशतां शभावस्तश्च प्रत्ययः। दश दशतः परिमाणमेषां शतानि। 'सुपां सुलुक्°' इत्यादिना सुपो डादेशः। प्रत्ययस्वरः। त्री। 'सुपां सुलुक्°' इति पूर्वसवर्णदीर्घः। फिट्स्वरः। सहस्राणि। कर्दमादित्वान्मध्योदात्तः। त्रिंशत्। त्रयाणां दशतां त्रिन्भावः शच्च प्रत्ययः। त्रयो दशतः परिमाणमस्य त्रिंशत्[1]। प्रत्ययस्वरः। नव। 'कनिन्' इत्यनुवृत्तौ 'णु स्तुतौ' इत्यस्माद्धातोः 'णुदंशोर्नुदश्च' इति कनिन्। गुणश्च। नित्त्वादाद्युदात्तः। असपर्यन्। लङि रूपम्। निघातः। औक्षन्। 'उक्ष सेचने'। लङि 'आडजादीनाम्' इत्याडागमः। वृद्धिः। पादादित्वान्न निहन्यते। आगमस्वरः। अस्तृणन्। 'स्तृञ् आच्छादने'। लङि[2] बहुवचने श्नयादित्वाच्छ्ना। झेरन्तादेशः। 'नित्यं ङितः' इतीकारलोपः। संयोगान्तलोपः। 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। 'लुङ्लङ्लृङ्क्ष्वड्°' इत्यडागमः। स चोदात्तः। आगमस्वरः। भिन्नवाक्यत्वान्निघाताभावः। बर्हिः। 'इसिः' इत्यनुवृत्तौ 'बृंहेर्नलोपश्च' इतीसिः। तत्संनियोगेन नलोपः। प्रत्ययस्वरः। असादयन्त। 'षद्लृ विशरणगत्यवसादनेषु'। अस्मात् 'हेतुमति च' इति णिच्। उपधावृद्धिः। 'णिचश्च' इत्यात्मनेपदम्। लङि बहुवचने रूपम्। निघातः॥ ॥ ६॥

'त्वामग्ने' इति नवर्चं दशमं सूक्तं वैश्वामित्रमौष्णिहमाग्नेयम्। 'त्वामग्न औष्णिहम्' इत्यनुक्रान्तत्वात्। प्रातरनुवाकाश्विनशस्त्रयोरौष्णिहे छन्दस्यस्य सूक्तस्य विनियोगः। 'अथैतस्याः' इति खण्डे सूत्रितं–'पुरु त्वा त्वामग्ने' (आश्व. श्रौ. ४. १३) इति॥

**त्वाम॑ग्ने मनी॒षिण॑ः स॒म्राजं॑ चर्षणी॒नाम्। दे॒वं मर्ता॑स इन्धते॒ सम॑ध्व॒रे॥ १॥**

त्वाम्। अ॒ग्ने॒। म॒नी॒षिण॑ः। स॒म्ऽराज॑म्। च॒र्ष॒णी॒नाम्।

दे॒वम्। मर्ता॑सः। इ॒न्ध॒ते॒। सम्। अ॒ध्व॒रे॥ १॥

हे ᵛअग्ने ᵛमनीषिणः धीमन्तोऽध्वर्युप्रभृतयः ᵛमर्तासः मनुष्याः ᵛचर्षणीनां प्रजानां ᵛसम्राजम् अधिपतिं ᵛदेवं द्योतमानं ᵛत्वाम् ᵛअध्वरे यज्ञे ᵛसम् ᵛइन्धते सोमाज्यपयःप्रभृतिभिराहुतिभिः सम्यक् दीपयन्ति॥ मनीषिणः। मनीषैषामस्तीति 'व्रीह्यादिभ्यश्च' इति इनिः। 'यस्येति च' इत्यवर्णलोपः। प्रत्ययस्वरः। सम्राजम्। 'राजृ दीप्तौ'। संपूर्वादस्माद्धातोः 'सत्सूद्विष°' इति क्विप्। क्विलोपः। समो मकारस्य 'मोऽनुस्वारः' इत्यनुस्वारे प्राप्ते 'मो राजि समः क्वौ' इति समो मकारः। कृदुत्तरपदप्रकृतिस्वरत्वम्। चर्षणीनाम्। 'नामन्यतरस्याम्' इति विभक्तेरुदात्तत्वम्। इन्धते। 'ञिइन्धी दीप्तौ'। अस्माद्धातोः 'हेतुमति च' इति णिच्। लटि झस्य 'आत्मने-

---

1. त–तात्रिंशत्। २. च–'लङि' नास्ति; न–लङि रूपम्।

पदेष्वनतः ' इत्यदादेशः । ' छन्दस्युभयथा ' इति झस्यार्धधातुकत्वात् ' णेरनिटि ' इति णिलोपः । निघातः ॥

त्वां यज्ञेष्वृत्विजमग्ने होतारमीळते । गोपा ऋतस्य दीदिहि स्वे दमे ॥ २ ॥

त्वाम् । यज्ञेषु । ऋत्विजम् । अग्ने । होतारम् । ईळते ।

गोपाः । ऋतस्य । दीदिहि । स्वे । दमे ॥ २ ॥

हे ᵛअग्ने अध्वर्य्वादयः ᵛयज्ञेषु अग्निष्टोमादिषु ᵛत्वां ᵛहोतारम् ᵛऋत्विजं होतृनामकमृत्विजम् ᵛईळते स्तुवन्ति । तादृशस्त्वम् ᵛऋतस्य सत्यस्य यज्ञस्य ᵛगोपाः गोपायिता सन् ᵛस्वे ᵛदमे स्वकीये गृहे यज्ञशालायां ᵛदीदिहि दीप्यस्व ॥ दीदिहि । दिवु क्रीडादौ । यङ्लुक् । लोट् । तुजादित्वादभ्यासदीर्घत्वम् । ' संज्ञापूर्वको विधिरनित्यः ' ( परिभा. ९३ ) इत्यभ्यासस्य गुणाभावे[1] ' लोपो व्योर्वलि ' इति वलोपः ॥

स घा यस्ते ददाशति समिधा जातवेदसे । सो अग्ने धत्ते सुवीर्यं स पुष्यति ॥ ३ ॥

सः । घ । यः । ते । ददाशति । सम्ऽइधा । जातवेदसे ।

सः । अग्ने । धत्ते । सुऽवीर्यम् । सः । पुष्यति ॥ ३ ॥

हे ᵛअग्ने ᵛयः यजमानः ᵛजातवेदसे जातप्रज्ञाय ᵛते तुभ्यं ᵛसमिधा समिन्धनकारिण्याज्यपुरोडाशादिहवींषि ᵛददाशति ददाति ᵛस ᵛघ स खलु ᵛसुवीर्यं शोभनसामर्थ्योपेतं पुत्रं ᵛधत्ते धारयति । अपि च ᵛसः स एव ᵛपुष्यति पशुपुत्रादिभिः समृद्धो भवति ॥ घ । ' चादयोऽनुदात्ताः ' इत्यनुदात्तः । ददाशति । ' दाशृ दाने ' इत्यस्माद्धातोः कर्तरि शप् । तिप्[2] । द्विर्वचनं छान्दसम् । यद्वृत्तयोगादनिघातः । ' अभ्यस्तानामादिः ' इत्युदात्तः । समिधा । ' ञिइन्धी दीप्तौ ' । अस्मात् ' क्विप् च ' इति क्विप् । उपधालोपः । ' सुपां सुलुक् ' इति शसो डादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । जातवेदसे । ' बहुव्रीहौ प्रकृत्या पूर्वपदम् ' इति प्रकृतिस्वरत्वम् । सुवीर्यम् । ' वीरवीर्यौ च ' इत्युत्तरपदाद्युदात्तत्वम् । पुष्यति । ' पुष पुष्टौ ' । अस्मात् श्यन् । ङित्वाद्गुणाभावः । निघातः ॥

स केतुरध्वराणामग्निर्देवेभिरा गमत् । अञ्जानः सप्त होतृभिर्हविष्मते ॥ ४ ॥

सः । केतुः । अध्वराणाम् । अग्निः । देवेभिः । आ । गमत् ।

अञ्जानः । सप्त । होतृऽभिः । हविष्मते ॥ ४ ॥

ᵛअध्वराणां यज्ञानां ᵛकेतुः प्रज्ञापकः ᵛसः ᵛअग्निः ᵛसप्त सप्तभिः ᵛहोतृभिः वषट्कर्तृभिः ᵛअञ्जानः सोमाज्याहुतिभिरज्यमानः सन् ᵛहविष्मते यजमानार्थं[3] ᵛदेवेभिः यष्टव्यदेवैः सह ᵛआ

---

१. ज-ल-गुणाभावः । २. ख-ग-च-ज-ण-न-भ-स-' तिप् ' नास्ति । ३. ख-ग-च-ज-ण-यजमानार्थे ।

ᵛगमत् आगच्छतु ॥ गमत् । लोडर्थे 'छन्दसि लुङ्लङ्लिटः' इति लुङ् । लृदित्वादङ् । 'बहुलं छन्दस्यमाङ्योगे°' इत्यडभावः । निघातः । अञ्जानः । 'अञ्जू व्यक्तिम्रक्षणगतिषु[1]' । व्यत्ययेन कर्मणि शानच् । चित्वादन्तोदात्तत्वम् । हविष्मते । जुहोतेः 'अर्चिशुचि°' इत्यादिना इसिप्रत्ययान्तो हविःशब्दोऽन्तोदात्तः । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषानाश्रयणान्मतुप उदात्तत्वाभावः। इसिप्रत्ययस्वरः ॥

प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् । विपां ज्योतींषि बिभ्रते न वेधसे ॥५॥

प्र । होत्रे । पूर्व्यम् । वचः । अग्नये । भरत । बृहत् ।
विपाम् । ज्योतींषि । बिभ्रते । न । वेधसे ॥ ५ ॥

यजमानो होत्रादीन्प्रति ब्रूते । हे होत्रादयः ᵛविपां विप्राणां मेधाविनामध्वर्य्वादीनां ᵛज्योतींषि सत्कर्मानुष्ठानसंराद्यानि तेजांसि ᵛबिभ्रते निमित्ततया कुर्वाणाय ᵛवेधसे जगतो विधात्रे ᵛहोत्रे देवानामाह्वात्रे ᵛअग्नये ᵛबृहत् महत् ᵛपूर्व्यं पूर्वैः कृतं पुरातनं ᵛवचः स्तोत्रशस्त्रादिकं वाक्यं ᵛप्र ᵛभरत संपादयत। ᵛन[2] इत्ययं पादपूरणः[2] अन्वयाभावात् । यद्वा वेधसे न । यथा वेधा जगद्विधाता परमेश्वरः आदित्यादीनि ज्योतींषि करोति तद्वदिति॥ प्रशब्दस्य छन्दसि 'व्यवहिताश्च' इति भरतेत्यनेन संबन्धः । पूर्व्यं पूर्वैः कृतमित्यर्थः[3] । 'पूर्वैः कृतमिनयौ च' इति यप्रत्ययः । भसंज्ञकत्वादवर्णलोपः । प्रत्ययस्वरः । भरत। 'भृञ् भरणे' भौवादिकः। निघातः। बृहत्। 'वर्तमाने पृषद्बृहत्°' इति निपातनादन्तोदात्तः। बिभ्रते। 'भृञ् भरणे'। 'जुहोत्यादिभ्यः[4] श्लुः'। 'भृञामित्' इतीत्वम्[4]। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ ॥ ७ ॥

अग्निं वर्धन्तु नो गिरो यतो जायत उक्थ्यः । महे वाजाय द्रविणाय दर्शतः ॥ ६ ॥

अग्निम् । वर्धन्तु । नः । गिरः । यतः । जायते । उक्थ्यः ।
महे । वाजाय । द्रविणाय । दर्शतः ॥ ६ ॥

योऽयमग्निः ᵛयतः याभिः स्तुतिरूपाभिर्गीर्भिः ᵛउक्थ्यः ᵛजायते । उक्थ्यशब्दः प्रशस्यवाची[5]। 'अनभिशस्त्यः उक्थ्यः' ( नि. ३·८·६ ) इति तन्नामसु पाठात् । अतिशयेन स्तुत्यो भवतीत्यर्थः । यश्चायमग्निः ᵛमहे महते ᵛवाजाय अन्नाय ᵛद्रविणाय धनाय च ᵛदर्शतः दर्शनीयो भवति तमिमम् ᵛअग्निं ᵛनो ᵛगिरः अस्माकं स्तुतिरूपाः ताः[6] वाचः ᵛवर्धन्तु वर्धयन्तु। पूजयन्त्वित्यर्थः ॥ वर्धन्तु । 'वृधु वर्धने' । अस्माण्णिच् । लघूपधगुणः । 'छन्दस्युभयथा' इत्यार्धधातुकत्वाण्णिलोपः । झेरन्तादेशः। 'एरुः' (पा. सू. ३. ४. ८६) इत्युकारः। निघातः। उक्थ्यः। 'वच परिभाषणे'। अस्मात् 'पातॄतुदिवचिरिचि°' इत्यादिना थक् । कित्त्वात् 'वचिस्वपि°' इत्यादिना संप्रसारणम्। उक्थं शस्त्रम्। तेन स्तुत्यत्वेन तत्र भव उक्थ्यः। 'भवे छन्दसि' इति यत्। 'यस्य°'

---

१. त–व्यक्तिगतिम्रक्षणेषु । २. घ-प–न पूरणः । ३. त–कृतमित्यर्थे । ४. त–जुहोत्यादिः । भृञामित्यभ्यासस्येत्वे । ५. ल–प्रशस्यवाची अनभिशस्त्यवाची । ६. ख-ग-च-ज-ण-ल–' ताः ' नास्ति।

इति लोपः । 'तित्स्वरितम्' इति स्वरितः । दर्शतः । 'भृमृदृशियजि°' इति अतच्प्रत्ययः । चित्त्वादन्तोदात्तः ॥

अग्ने यजिष्ठो अध्वरे देवान्देवयते यज । होता मन्द्रो वि राजस्यति स्रिधः ॥७॥

अग्ने । यजिष्ठः । अध्वरे । देवान् । देवऽयते । यज ।

होता । मन्द्रः । वि । राजसि । अति । स्रिधः ॥ ७ ॥

हे अग्ने यजिष्ठः यष्टृतमस्त्वम् अध्वरे यज्ञे देवयते देवानात्मन इच्छते यजमानाय देवान् यज तदर्थं यष्टव्यानिन्द्रादीन् पूजय[1] । किंच होता देवानामाह्वाता मन्द्रः यजमानस्य मदयिता स त्वं स्रिधः क्षपयितॄञ्छत्रून् अति अतिक्रम्य वि राजसि विशेषेण शोभसे ॥ यजिष्ठः । 'तुश्छन्दसि' इतीष्ठन् । 'तुरिष्ठेमेयःसु' इति तृचो लोपः । नित्त्वादाद्युदात्तः । देवयते । क्यचश्चित्त्वादन्तोदात्तत्वम् । शपः पित्त्वादनुदात्तत्वं शतुश्च लसार्वधातुकस्वरेण । तयोः क्यचा सहैकादेशे 'एकादेश उदात्तेनोदात्तः' इत्यन्तोदात्तो देवयच्छब्दः । ततः 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम् । यज । 'यज देवपूजासंगतिकरणदानेषु' । अस्माल्लोट् । सिप् । सिपो हिरादेशः । 'अतो हेः' इति हेर्लुक् । निघातः । राजसि । 'राजृ दीप्तौ' । निघातः ॥

स नः पावक दीदिहि द्युमदस्मे सुवीर्यम् । भवा स्तोतृभ्यो अन्तमः स्वस्तये ॥८॥

सः । नः । पावक । दीदिहि । द्युऽमत् । अस्मे इति । सुऽवीर्यम् ।

भव । स्तोतृऽभ्यः । अन्तमः । स्वस्तये ॥ ८ ॥

नः पावक अस्मत्संबन्धिनः पापस्य शोधक हे अग्ने सः पूर्वमन्त्रे प्रतिपादितस्त्वं द्युमत् कान्तियुक्तं सुवीर्यं शोभनसामर्थ्योपेतं दानभोगार्हं धनम् अस्मे अस्मभ्यं दीदिहि । यद्वा द्युमत्तेजोयुक्तं सुवीर्यं शोभनवीर्योपेतं च यथा भवति तथास्मे अस्मदर्थं त्वं दीदिहि दीप्यस्व । किंच स्तोतृभ्यः । षष्ठ्यर्थे चतुर्थी । त्वद्विषयस्तुतिकारिणां होत्रादीनां स्वस्तये अविनाशनाय क्षेमाय अन्तमः अन्तिकतमः तेषामतिशयेन समीपवर्ती[2] भव[2] ॥ पावक । 'पूञ् पवने' । अस्माद्धातोर्ण्वुल् । णित्त्वाद्वृद्धिः । वोरकादेशः[3] । आमन्त्रितत्वादाष्टमिकमनुदात्तत्वम् । दीदिहि । दिवु क्रीडादौ । अस्माद्यङ् । 'तुजादीनाम्°' इत्यभ्यासदीर्घत्वम् । 'संज्ञापूर्वको विधिरनित्यः' इत्यभ्यासस्य गुणाभावः । 'बहुलं छन्दसि' इति यङो लुक् । लोटि सिप् । 'चर्करीतं[4] परस्मैपदमदादिवच्च' इति वचनाच्छपो लुक् । सिपो हिरादेशः । 'लोपो व्योर्वलि' इति वलोपः । हेरपित्त्वात् अगुणः[5] । निघातः । द्युमत् । 'दिव उत्' इत्युकारः । 'ह्रस्वनुड्भ्याम्°' इति मतुप उदात्तत्वम् । सुवीर्यम् । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । अन्तमः । अन्तोऽस्यास्तीत्यन्तिकः । 'अत इनिठनौ' इति ठन् । अतिशयेनान्तिक इति 'अतिशायने तमप्°' इति तमप् । 'तमे तादेश्च' इति तादिलोपः । नित्त्वादाद्युदात्तः । स्वस्तये । प्रातिपदिकस्वरः ॥

---

१. ल– देवान् पूजय । २. ख-ग-च-ज-ण-न-भ-स–समीपे वर्तसि (न-वर्तसे; ज-ण–वर्तस्व) । ३. त–वोरकादेशः । आवादेशः । ४. ख-ग-च-ज-ण–चर्करीतं च । ५. त-ल–गुणाभावः ।

तं त्वा विप्रा विपन्यवो जागृवांसः समिन्धते। हव्यवाहममर्त्यं सहोवृधम्॥९॥

तम्। त्वा। विप्राः। विपन्यवः। जागृऽवांसः। सम्। इन्धते।
हव्यऽवाहम्। अमर्त्यम्। सहःऽवृधम्॥ ९॥

हे अग्ने विप्राः स्तुतीनां प्रेरकाः जागृवांसः अग्निहोत्रादिकर्मण्यप्रमत्ततया प्रबुद्धाः विपन्यवः। विपन्युशब्दो मेधाविनामाचष्टे। 'विपश्चित् विपन्युः' (नि. ३·१५·१७) इति तन्नामसु पाठात्। विपन्यवो मेधाविनः स्तोतारः हव्यवाहं हव्यानां वोढारम् अमर्त्यं मरणधर्मरहितं सहोवृधं सहसा मथनरूपेण बलेन वर्धमानं तादृशं त्वा त्वां समिन्धते सोमाज्याद्याहुतिभिः सम्यग्दीपयन्ति॥ विप्राः। 'टुवप् बीजसंताने[1]'। अस्माद्धातोः 'ऋज्रेन्द्राग्रवज्रविप्र°' इति रन्प्रत्यये इत्वम्। नित्वादाद्युदात्तत्वम्। विपन्यवः। विविधं पनं पननं स्तुतिं यातीति विपन्युः। 'मृगय्वादयश्च' इति कुः। अकारलोपश्छान्दसः। प्रत्ययस्वरः। जागृवांसः। 'जागृ निद्राक्षये'। अस्माल्लिट्। तस्य क्वसुः। 'उगिदचाम्°' इति नुम्। द्विर्वचनाभावश्छान्दसः। 'वस्वेकाजाद्घसाम्' इति नियमात्[2] इडभावः। 'जाग्रोऽविचिण्णल्ङित्सु' (पा. सू. ७. ३. ८५) इति गुणो न भवति तत्र विरित्यत्र क्वसोरपि गृहीतत्वात्। प्रत्ययस्वरः। इन्धते। 'ञिइन्धी दीप्तौ'। अन्तर्भावितण्यर्थोऽयम्। निघातः। हव्यवाहम्। 'वह प्रापणे'। 'वहश्च' इति ण्विः। उपधावृद्धिः। कृदुत्तरपदप्रकृतिस्वरत्वम्। सहोवृधम्। 'वृधु वर्धने'। 'क्विप् च' इति क्विप्॥ ॥ ८॥

'अग्निर्होता' इति नवर्चमेकादशं सूक्तं वैश्वामित्रं गायत्रमाग्नेयम्। 'अग्निर्होता गायत्रम्' इत्यनुक्रान्तत्वात्। प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दसीदं सूक्तम्। सूत्रितं हि–'अग्निर्होताग्न इळेति चतस्रः'(आश्व. श्रौ. ४. १३) इति। आधाने प्रथमायां पवमानेष्टौ[3] स्विष्टकृतो याज्या 'अग्निर्होता' इत्येषा 'स हव्यवाळमर्त्यः' इति पुरोनुवाक्या। द्वितीयपवमानेष्टौ स्विष्टकृतोऽनुवाक्या 'साह्वान्' इति। सूत्रितं च–'साह्वान्विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये' (आश्व. श्रौ. २. १) इति। आभिप्लविकेषूक्थ्येषु तृतीयसवने मैत्रावरुणशस्त्रे 'अभि प्रयांसि' इति वैकल्पिकोऽनुरूपस्तृचः। अत्र सूत्रं–'प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा' (आश्व. श्रौ. ७. ८) इति॥

अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः। स वेद यज्ञमानुषक्॥ १॥

अग्निः। होता। पुरःऽहितः। अध्वरस्य। विऽचर्षणिः। सः। वेद। यज्ञम्। आनुषक्॥ १॥

विश्वामित्रः स्तौति। होता देवानामाह्वाता पुरोहितः पुरत एवाभिमतफलसंपादकत्वेन हितकारी। यद्वा पुरः पूर्वभागे आहवनीयरूपेण हितो निहित इति पुरोहितः। अध्वरस्य यज्ञस्य विचर्षणिः विशेषेण द्रष्टा 'विचर्षणिः विश्वचर्षणिः' इति तन्नामसु पाठात्। सः तथाविधः अग्निः आनुषक् आनुपूर्व्येण सक्तं यज्ञम् अग्निष्टोमादिकं वेद जानाति॥ वेद। 'विद ज्ञाने'। 'विदो लटो वा' इति तिपो णलादेशः। लघूपधगुणः। निघातः। आनुषक्। आसमन्तात् अनुषजतीत्यानुषक्। 'षञ्ज संगे'। धातुषकारस्य सकारः। 'क्विप् च' इति क्विप्। 'अनिदिताम्°' इति उपधालोपः। 'उपसर्गात्सुनोति°' इति षत्वम्॥

१. स–बीजतन्तुसंताने। २. ल–'नियमात्' नास्ति। ३. स–पावमानेष्टौ।

स हव्यवाळमर्त्य उशिग्दूतश्चनोहितः । अग्निर्धिया समृण्वति ॥ २ ॥

सः । हव्यऽवाट् । अमर्त्यः । उशिक् । दूतः । चनःऽहितः ।

अग्निः । धिया । सम । ऋण्वति ॥ २ ॥

ᵛहव्यवाट् हविषः[1] वोढा ᵛअमर्त्यः मरणधर्मरहितः ᵛउशिक् हविः कामयमानः ᵛदूतः देवानां दूतः चनसे[2] हविर्लक्षणायान्नाय हितो निहितः । यद्वा चनोहितः । चनोऽन्नं हविर्लक्षणं हितमस्येति चनोहितः । ᵛसः तथाविधः ᵛअग्निः ᵛधिया प्रज्ञया ᵛसमृण्वति संगच्छते । कर्मविषयप्रज्ञान्वितोऽग्निरस्मानपि तादृक्प्रज्ञान्वितान्करोत्वित्याशास्ते ॥ हव्यवाट् । 'वह प्रापणे' । 'वहश्च' इति ण्विः । ढत्वजश्त्वचर्त्वानि । कृदुत्तरपदप्रकृतिस्वरत्वम् । उशिक् । 'वश कान्तौ' । 'इजिः' इत्यनुवृत्तौ 'वशेः[3] किच्च' इति इजिप्रत्ययः । तस्य कित्वात् 'ग्रहिज्या°' इति संप्रसारणम् । प्रत्ययस्वरः । चनोहितः । चनः 'चायतेरन्ने ह्रस्वश्च' इत्यसुनन्तः । चकारान्नुडागमः । तस्मिन्यलोपः । नित्वादाद्युदात्तः । 'पुनश्चनसोश्छन्दसि गतिसंज्ञा वक्तव्या' ( पा. सू. १. ४. ६०. २ ) इति गतिसंज्ञायां 'गतिरनन्तरः' इति प्रकृतिस्वरत्वम्[4] । बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरत्वम् । धिया । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । ऋण्वति । 'ऋणु गतौ' । लेटि तनादित्वादुप्रत्ययः । 'लेटोऽडाटौ' इत्यडागमः ॥

अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः । अर्थं ह्यस्य तरणि ॥ ३ ॥

अग्निः । धिया । सः । चेतति । केतुः । यज्ञस्य । पूर्व्यः । अर्थम् । हि । अस्य । तरणि ॥ ३ ॥

ᵛयज्ञस्य अग्निष्टोमादेः ᵛकेतुः प्रज्ञापकः ᵛपूर्व्यः पूर्वे भवश्चिरंतनः ᵛसः तथाविधः ᵛअग्निः ᵛधिया प्रज्ञया ᵛचेतति सर्वं जानीते[5] । अस्य एतादृशस्याग्नेः ᵛअर्थं गमनस्वभावं तेजः ᵛअस्य आकाशे दृश्यमानस्य तमसः ᵛतरणि ᵛहि[6] तारकं[7] खलु । निवर्तकमिति यावत् ॥ चेतति । 'चिती संज्ञाने' । निघातः । अर्थम् । 'ऋ गतौ' । 'उषिकुषिगार्तिभ्यस्थन्' इति थन् । गुणः । नित्वादाद्युदात्तः । तरणि । 'तॄ प्लवनतरणयोः' । 'अर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः' इत्यादिना अनिप्रत्ययः । गुणः । प्रत्ययस्वरः ॥

अग्निं सूनुं सनश्रुतं सहसो जातवेदसम् । वह्निं देवा अकृण्वत ॥ ४ ॥

अग्निम् । सूनुम् । सनऽश्रुतम् । सहसः । जातऽवेदसम् । वह्निम् । देवाः । अकृण्वत ॥ ४ ॥

ᵛसहसः ᵛसूनुं बलस्य पुत्रं मथनरूपेण बलेन निष्पाद्यमानत्वात्[8] ᵛसनश्रुतं सनातनत्वेन[9] प्रसिद्धं ᵛजातवेदसं जातप्रज्ञं तमिमम् ᵛअग्निं ᵛदेवाः हविर्भुजो देवाः ᵛवह्निं हविषां वोढारम् ᵛअकृण्वत

---

१. घ-त-प-स-हविषाम् । २. ज-ण-चनोहितः चनसे । ३. ख-ज-ण-न-भ-वशः । ४. ल-गतेः प्रकृतिस्वरत्वम् । ५. ख-ग-च-ज-ण-जानाति । ६. त-ल-'हि' इत्यस्यानन्तरम्-माकारौ तरणस्वभावं सर्वत्र प्रसरणस्वभावमित्यर्थः । यद्वा गमनस्वभावं तेजः अस्याकाशदृश्यमानस्य तमसस्तरणि तावद्दृश्यतु ( त-हि रेकं खलु ) । ७. घ-प-निवर्तकम् । ८. त-निष्पद्यमानत्वात् । ९. त-सनातनत्वे ।

अकुर्वत ॥ सनश्रुतम् । ‘ श्रु श्रवणे ’ । कर्मणि क्तः । ‘ तृतीया कर्मणि ’ इति पूर्वपदप्रकृतिस्वरत्वम् । वह्निम् । ‘ वह प्रापणे ’ । ‘ निः ’ इत्यनुवृत्तौ ‘ वहिश्रि० ’ इत्यादिना निप्रत्ययः[1] । अकृण्वत । ‘ कृवि हिंसाकरणयोः ’ । इदित्वान्नुम् । ‘ धिन्विकृण्व्योरच्च ’ इत्युप्रत्ययः । अकारश्चान्तादेशः । लङि व्यत्ययेनात्मनेपदम् । निघातः ॥

अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् । तूर्णी रथः सदा नवः ॥ ५ ॥

अदाभ्यः । पुरःऽएता । विशाम् । अग्निः । मानुषीणाम् । तूर्णिः । रथः । सदा । नवः ॥ ५ ॥

मानुषीणां मनोर्जातानां विशां[2] प्रजानां[2] पुरएता सन्मार्गप्रदर्शनेनाग्रतो गन्ता[3] अतएव तूर्णिः[4] ताः प्रजा वैदिककर्मप्रवर्तकत्वेनानुग्रहीतुं त्वरायुक्तः[5] आलस्यरहितः रथः हविषां वहनाद्रथसदृशः सदा सर्वदा तत्कर्मणि[6] नवः नूतनः पुनर्मथनादभिनवः एवंविधः अग्निः अदाभ्यः अहिंस्यः । न केनापि तिरस्कार्य इत्यर्थः ॥ अदाभ्यः । ‘ दम्भु दम्भने ’ । ‘ दभेश्चेति[7] वक्तव्यम् ’ इति कर्मणि ण्यत् । उपधावृद्धिः । न दाभ्योऽदाभ्यः । नञ्समासे[8] ‘ तत्पुरुषे तुल्यार्थ° ’ इति पूर्वपदप्रकृतिस्वरत्वम् । पुरएता । ‘ इण् गतौ ’ । ‘ ण्वुल्तृचौ ’ इति तृच् । गुणः । चित्त्वादन्तोदात्तः । मानुषीणाम् । ‘ मनोर्जातावञ्यतौ षुक् च ’ इत्यञ् । ‘ टिड्ढाणञ्° ’ इति ङीप् । ञित्त्वादाद्युदात्तः । तूर्णिः । ‘ ञित्वरा संभ्रमे ’ इति धातोः ‘ निः ’ इत्यनुवृत्तौ ‘ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ’ इति निप्रत्ययः । ‘ ज्वरत्वर° ’ इत्यादिना ऊठ् । तस्य नित्त्वादाद्युदात्तः । संहितायां ‘ ढ्रलोपे पूर्वस्य° ’ इति दीर्घः । रथः । ‘ हनिकुषिनीरमिकाशिभ्यः° ’ इति क्थन्प्रत्ययः । कित्त्वात् ‘ अनुदात्तोपदेश° ’ इत्यादिना अनुनासिकलोपः । नित्वादाद्युदात्तः । सदा । स्वरादिषु आद्युदात्तत्वेन पठितत्वादाद्युदात्तः ॥ ॥ ९ ॥

साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः । अग्निस्तुविश्रवस्तमः ॥ ६ ॥

सह्वान् । विश्वाः । अभिऽयुजः । क्रतुः । देवानाम् । अमृक्तः । अग्निः । तुविश्रवःऽतमः ॥ ६ ॥

अभियुजः अभियोक्त्रीः विश्वाः सर्वाः सेनाः साह्वान् सहमानः स्वबलेन तिरस्कुर्वाणः अत[9] एव[9] अमृक्तः शत्रुभिरहिंसितः देवानां क्रतुः कर्ता हविष्प्रदानेन पोषकः एवंभूतः अग्निः तुविश्रवस्तमः । तुविशब्दो बहुवाची । ‘ तुवि पुरु ’ ( नि. ३. १. २ ) इति तन्नामसु पाठात् । श्रवःशब्दोऽन्नवाची । ‘ श्रव इत्यन्ननाम श्रूयते ’ ( निरु. १०. ३ ) इति निरुक्तेऽभिधानात् । अतिशयेन बहुविधान्नोपेतो वर्तते । यस्मादेवं तस्मादस्मानपि बहुविधान्नोपेतान्करोत्विति भावः ॥ साह्वान् । ‘ षह मर्षणे ’ इत्यस्य क्वसौ ‘ दाश्वान्साह्वान्मीढ्वांश्च ’ इति निपातनात् द्विर्वचनमिडागमश्च न भवति परस्मैपदं च भवति । क्वसुस्वरः । क्रतुः । कृञः कतुः । कित्त्वाद्गुणाभावः । प्रत्ययस्वरः । तुविश्रवस्तमः । ‘ तु वृत्तिहिंसापूर्तिषु ’ । अस्मादौणादिकः किप्रत्ययः । कित्त्वाद्गुणाभावः ।

---

१. ल–निप्रत्ययः । नित्त्वादाद्युदात्तः । २. त–‘ विशां प्रजानाम् ’ नास्ति । ३. ख-ग-च-न-भ-स–यन्ता । ४. घ-ज-ण-प–तूर्णिस्त्वरावान् । ५. घ-प–‘ त्वरायुक्तः ’ नास्ति । ६. ल–तत्तत्कर्मणि । ७. ख-ग-ज-ण-न-भ-स–दंभेश्चेति; न-स–दंभश्चेति । ८. त–नञा समासे । ९. त–‘ अत एव ’ नास्ति ।

उवङादेशः । अन्तोदात्तः । श्रवः । 'श्रु श्रवणे' । श्रूयतेऽन्नमिति कर्मण्यसुन्प्रत्ययः । अतिशयेन तुविश्रवा इति 'अतिशायने तमप्°' इति तमप् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्[1] ॥

अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः । क्षयं पावकशोचिषः ॥ ७ ॥

अभि । प्रयांसि । वाहसा । दाश्वान् । अश्नोति । मर्त्यः । क्षयम् । पावकऽशोचिषः ॥ ७ ॥

ᵛदाश्वान् हविषां दाता ᵛमर्त्यः मनुष्यो यजमानः ᵛवाहसा हविषां वाहकेन अग्निना[2] ᵛप्रयांसि अन्नानि ᵛअभि ᵛअश्नोति अभितः सर्वतः प्राप्नोति । किंच ᵛपावकशोचिषः शोधकदीप्तेरग्नेः सकाशात् ᵛक्षयं गृहं चाभ्यश्नोति ॥ प्रयांसि । 'प्रीञ् तर्पणे' । अस्माद्धातोरन्तर्भावितण्यर्थादसुन्प्रत्ययः । प्रीणयन्ति भोक्तॄनिति प्रयांस्यन्नानि । नित्त्वादाद्युदात्तः । वाहसा । 'णित्' इत्यनुवृत्तौ 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । णित्वादुपधावृद्धिः । नित्स्वरः । दाश्वान् । 'दाश्ट दाने' इत्यस्य क्वसौ 'दाश्वान्साह्वान्°' इति निपातनादिडागमो द्विर्वचनं च न भवति । क्वसुन्प्रत्ययस्वरः । अश्नोति । 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् । निघातः ॥

परि विश्वानि सुधिताग्नेरश्याम मन्मभिः । विप्रासो जातवेदसः ॥ ८ ॥

परि । विश्वानि । सुऽधिता । अग्नेः । अश्याम । मन्मऽभिः । विप्रासः । जातऽवेदसः ॥ ८ ॥

ᵛजातवेदसः जातप्रज्ञाः ᵛविप्रासः[3] मेधाविनो होत्रादयो वयम् ᵛअग्नेः तव संबन्धिभिः ᵛमन्मभिः मननीयैः स्तोमैः[4] ᵛविश्वानि सर्वाणि ᵛसुधिता सुहितानि सुष्ठु हितान्यभिलषितानि वसूनि ᵛपरि ᵛअश्याम सर्वतः प्राप्नुयाम । जातवेदस इत्यग्नेर्वा विशेषणम् । जातानि सर्वाणि वेत्तीति जातवेदाः सर्वज्ञ इत्यर्थः । एतादृशं जातवेदस्त्वमग्नेरेवोचितमिति तद्विशेषणत्वं युक्तम् ॥ सुधिता । 'डुधाञ् धारणपोषणयोः' इत्यस्माद्धातोर्निष्ठायां 'छन्दसि' इत्यनुवृत्तौ 'सुधितवसुधित°' इत्यादिना निपातितः । 'शेश्छन्दसि बहुलम्' इति शेर्लुक् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अश्याम । 'अशू व्याप्तौ' । 'बहुलं छन्दसि' इति श्नुप्रत्ययस्य लुक् । व्यत्ययेन परस्मैपदम् । 'यासुट् परस्मैपदेषूदात्तः°' इति यासुट् । 'लिङः सलोपः°' इति सलोपः । अदन्तत्वाभावादियादेशो न भवति । मसः सकारस्य 'नित्यं ङितः' इति लोपः । निघातः । मन्मभिः । 'मनु अवबोधने' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । नित्स्वरः ॥

अग्ने विश्वानि वार्या वाजेषु सनिषामहे । त्वे देवास एरिरे ॥ ९ ॥

अग्ने । विश्वानि । वार्या । वाजेषु । सनिषामहे । त्वे इति । देवासः । आ । ईरिरे ॥ ९ ॥

हे ᵛअग्ने ᵛवार्या वरणीयानि संभजनीयानि ᵛविश्वानि सर्वाणि धनानि ᵛवाजेषु युद्धेषु[5] ᵛसनिषामहे वयं संभजामहे । यतः कारणात् ᵛदेवासः पूर्वमस्माभिरिष्टा देवा अस्मदभिमतफलप्रदानाय

---

१. ख-ग-च-ज-ण-भ–पूर्वपदस्वरत्वम् । २. ख-ग-च-ज-ण–'अग्निना' नास्ति । ३. त–विप्राः । ४. ल–स्तोत्रैः । ५. त-ल–यज्ञेषु ।

^v^त्वे त्वयि ^v^एरिरे आ समन्तादगमन् । त्वयि प्रविष्टा इत्यर्थः । सर्वथापि त्वत्सकाशात्[१] फलं लभेमहि इति भावः ॥ वार्या । 'वृङ् संभक्तौ' । 'ऋहलोर्ण्यत्' इति ण्यत् । 'शेश्छन्दसि बहुलम्' इति शेर्लुक् । 'ईडवन्द°' इत्यादिनाद्युदात्तः । वाजेषु । वृषादित्वादाद्युदात्तः । सनिषामहे । 'वन षण संभक्तौ'। 'धात्वादेः षः सः' । लेटि 'सिब्बहुलम्°' इति सिप् । सिप आर्धधातुकत्वादिडागमः । 'लेटोऽडाटौ' इत्यडागमः । व्यत्ययेनात्मनेपदम् । निघातः । त्वे । युष्मच्छब्दस्य सप्तम्यां त्वादेशः । 'सुपां सुलुक्°' इति शेआदेशः[२] । 'शे' ( पा. सू. १. १. १३ ) इति प्रगृह्यसंज्ञा । ईरिरे[३] । 'ईर गतौ' इत्यस्मात्परस्य लिटो झस्य इरेजादेशः । 'इजादेश्च गुरुमतः°' इत्याम्न भवति मन्त्रत्वात् । निघातः ॥ ॥ १० ॥

'इन्द्राग्नी' इति नवर्चं द्वादशं सूक्तं वैश्वामित्रमैन्द्राग्नम् । तथा चानुक्रम्यते–'इन्द्राग्नी ऐन्द्राग्नम्' इति । 'गायत्रं तु' इति तु शब्दादिदमपि सूक्तं गायत्रम् । इन्द्राग्नी देवता । आभिप्लविकेष्वहःसु प्रातःसवनेऽच्छावाकशस्त्रे आवापार्थमिदं सूक्तम् । 'अभिप्लवपृष्ठ्याहानि' इति खण्डे सूत्रितम्– 'इन्द्राग्नी आ गतं ता हुवे ययोरिदम्' ( आश्व. श्रौ. ७. ५ ) इति । अग्निष्टोमेऽच्छावाकशस्त्रे 'इन्द्राग्नी आ गतम्' इति स्तोत्रियस्तृचः । तस्यैवाच्छावाकस्याद्या शस्त्रयाज्या । 'इन्द्राग्नी आ गतं सुतमिति याज्या' ( आश्व. श्रौ. ५. १० ) इति सूत्रितत्वात् । चतुर्विंशेऽहनि प्रातःसवनेऽच्छावाकशस्त्रे 'इन्द्राग्नी आ गतं सुतम्' इति षळहस्तोत्रियः । 'इन्द्राग्नी आ गतं सुतमिन्द्रे अग्ना नमो बृहत्' ( आश्व. श्रौ. ७. २ ) इति सूत्रितम् । अग्निष्टोमाच्छावाकशस्त्रे 'तोशा वृत्रहणा हुवे' इत्याद्यास्तिस्रः । सूत्रितं च—'तोशा वृत्रहणा हुव इति तिस्रः' ( आश्व. श्रौ. ५. १० ) इति । अग्निष्टोमेऽच्छावाकशस्त्रे 'इन्द्राग्नी अपसस्परि' इत्यनुरूपः । सूत्रितं च—'इन्द्राग्नी आ गतं सुतमिन्द्राग्नी अपसस्परि' ( आश्व. श्रौ. ५. १० ) इति ॥

**इन्द्रा॑ग्नी॒ आ ग॑तं सु॒तं गी॒र्भिर्नभो॒ वरे॑ण्यम् । अ॒स्य पा॑तं धि॒येषि॒ता ॥ १ ॥**

इन्द्रा॑ग्नी॒ इति॑ । आ । ग॒तम् । सु॒तम् । गी॒ःऽभिः॑ । नभः॑ । वरे॑ण्यम् ।

अ॒स्य । पा॒तम् । धि॒या । इ॒षि॒ता ॥ १ ॥

इन्द्रश्चाग्निश्च ^v^इन्द्राग्नी हे देवौ ^v^सुतम् अभिषवादिसंस्कारैः संस्कृतमत एव ^v^वरेण्यं वरणीयं संभजनीयम्[४] इमं सोमं प्रति ^v^गीर्भिः अस्मदीयाभिः स्तुतिरूपाभिर्वाग्भिराहूतौ सन्तौ ^v^नभः नभसः स्वर्गस्थानात् ^v^आ ^v^गतम् आगच्छतम् । आगत्य च ^v^धिया अस्माभिः क्रियमाणे[५] कर्मणि[५] ^v^इषिता प्रेरितौ युवाम् ^v^अस्य ^v^पातम् इमं सोमं पिबतम् । यद्वा[६] धिया अस्मदीयया बुद्ध्या इषितौ प्राप्तौ अस्मद्भक्त्या प्रेरितौ युवामिमं सोमं पिबतम्[६] ॥ इन्द्राग्नी । इन्द्रश्चाग्निश्च 'द्वन्द्वे घि' ( पा. सू. २. २. ३२ ) इत्यग्निशब्दस्य पूर्वनिपाते प्राप्ते 'अजाद्यदन्तम्' ( पा. सू. २. २. ३३ ) इतीन्द्रशब्दस्य पूर्वनिपातः । पादादित्वान्निघातप्रतिषेधः । षाष्ठिकस्वरः । गतम् । 'गम्लृ सृप्लृ[७] गतौ' । 'बहुलं छन्दसि' इति शपो लुकि सति 'अनुदात्तोपदेश°' इत्यादिना मकारलोपः । निघातः । वरेण्यम् । 'वृङ् संभक्तौ' । 'वृङ एण्यः' । वृषादित्वादाद्युदात्तः । पातम् । 'पा पाने' । 'सर्वे

१. त–त्वतः सकाशात् । २. त–शे इत्यादेशः । ३. ज-ण-स–एरिरे । ४. त–भजनीयम् । ५. ल–क्रियमाणेन कर्मणा । ६. ख-ग-च-ज-ण-प-फ-भ–'यद्वा.....पिबतम्' नास्ति । ७. त–'सृप्लृ' नास्ति ।

विधयश्छन्दसि विकल्प्यन्ते ' इति न पिबादेशः । इषिता । ' इष गतौ ' इत्यस्माद्धातोर्निष्ठायां ' तीषसह° ' इतीडागमः । ' आगमा अनुदात्ताः ' इतीटोऽनुदात्तत्वात् क्तस्वरः शिष्यते ॥

**इन्द्रा॑ग्नी जरि॒तुः सचा॑ य॒ज्ञो जि॑गाति॒ चेत॑नः । अ॒या पा॑तमि॒मं सु॒तम् ॥ २ ॥**

इन्द्रा॑ग्नी॒ इति॑ । ज॒रि॒तुः । सचा॑ । य॒ज्ञः । जि॒गा॒ति॒ । चेत॑नः । अ॒या । पा॒त॒म् । इ॒मम् । सु॒तम् ॥२॥

हे ᵛइन्द्राग्नी ᵛजरितुः स्तोतुः ᵛसचा स्वर्गादिलक्षणफलप्राप्तौ सहायभूतः ᵛयज्ञः ज्योतिष्टोमादियज्ञसाधनभूतः ᵛचेतनः इन्द्रियाणां चेतयितात्प्यायनकारी सन् असौ सोमः ᵛजिगाति युवाम् अभिगच्छति[1] । ᵛअया अस्मदीयस्तुतिलक्षणयानया वाचाहूतौ सन्तौ ᵛसुतम् अभिषवादिसंस्कारोपेतम् ᵛइमं सोमं ᵛपातं पिबतम् ॥ जिगाति । ' गा स्तुतौ ' इत्ययं धातुरत्र गमने वर्तते । छन्दसि जुहोत्यादिः । ' बहुलं छन्दसि ' इत्यभ्यासस्येत्वम् । निघातः । चेतनः । ' चिती संज्ञाने ' । कर्तरि बहुलवचनाल्ल्युट् । ' लिति ' इत्याद्युदात्तत्वम् । अया । इदंशब्दस्य तृतीयायाः ' सुपां सुलुक्° ' इति याजादेशः । अनादेशप्राप्तौ हलि लोपः । पातम् । ' पा पाने ' । निघातः ॥

**इन्द्र॑म॒ग्निं क॑वि॒च्छदा॑ य॒ज्ञस्य॑ जू॒त्या वृ॑णे । ता सोम॑स्ये॒ह तृ॑म्पताम् ॥ ३ ॥**

इन्द्र॑म् । अ॒ग्निम् । क॒वि॒ऽछदा॑ । य॒ज्ञस्य॑ । जू॒त्या । वृ॒णे॒ । ता । सोम॑स्य । इ॒ह । तृ॒म्प॒ता॒म् ॥३॥

ᵛयज्ञस्य[2] यज्ञसाधनभूतस्य[3] सोमस्य ᵛजूत्या । जूतिः प्रेरणम् सोमस्तावत्[4] यजमानं प्रेरयति । साधनमुपलभ्य तत्साध्यक्रतौ[5] यजमानः प्रवर्तत इति हि तस्य प्रेरकत्वम् । तया प्रेरणरूपया[6] जूत्या प्रेरितोऽहं ᵛकविच्छदा कवीनां स्तोतॄणामुचितफलप्रदानेनोपच्छन्दकौ[7] ᵛइन्द्रमग्निं च युवां ᵛवृणे सोमपानार्थमिह कर्मण्यागच्छतमिति संभजे । ᵛता आगतौ च ताविन्द्राग्नी ᵛइह कर्मणि ᵛसोमस्य सोमपानेन ᵛतृम्पतां तृप्यताम् ॥ इन्द्रम् । ' इदि परमैश्वर्ये ' इत्यस्माद्धातोः ' ऋज्रेन्द्राग्र° ' इति रन्प्रत्ययान्तत्वेन निपातनादाद्युदात्तत्वम् । कविच्छदा । ' छदि अपवारणे ' । अस्मात् क्विप् । ' सुपां सुलुक्°[8] ' इति[8] सुपो डादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । जूत्या । ' जू ' इति सौत्रो धातुः । अस्मात् ' °उदात्तः ' इत्यनुवृत्तौ ' ऊतियूतिजूति° ' इत्यादिना निपातनादन्तोदात्तत्वम् । ' उदात्तयणो हल्पूर्वात् ' इति विभक्तेरुदात्तत्वम् । वृणे । ' वृङ् संभक्तौ ' । श्नाप्रत्ययः । ' टित आत्मनेपदानाम्° ' इति ' टेरेत्वम्[9] ' । निघातः । ता । ' सुपां सुलुक्° ' इति डादेशः । सोमस्य । ' षुञ् अभिषवे ' । अस्मात् ' अर्तिस्तुसुहुसृधृक्षि° ' इत्यादिना मन्प्रत्ययः । नित्स्वरः । तृम्पताम् । ' तृप प्रीणने ' । लोटि मुचादित्वान्नुमागमः । निघातः ॥

**तो॒शा वृ॑त्र॒हणा॑ हुवे स॒जित्वा॒नाप॑राजिता । इ॒न्द्रा॒ग्नी वा॑ज॒सात॑मा ॥ ४ ॥**

तो॒शा । वृ॒त्र॒ऽहना॑ । हु॒वे॒ । स॒ऽजित्वा॑ना । अप॑राऽजिता । इ॒न्द्रा॒ग्नी इति॑ । वा॒ज॒ऽसात॑मा ॥४॥

---

१. ग-च-फ—अधिगच्छति । २. ख-ग-च-ज-ण-फ-भ—तस्य यज्ञस्य; स—अस्य यज्ञस्य । ३. ख-ग-च-फ-भ-स—धनभूतस्य; ज-ण—साधनभूतस्य । ४. ख-ग-च-ज-ण-न-फ-भ—सोमस्तवे । ५. त—तत्साध्ये क्रतौ । ६. ख-ग-च-ज-ण-भ—प्रेरणया । ७. ख-फ—°प्रदानेन पापच्छेदकौ; ग-च-ज-ण-प-भ-स—°प्रदाने पापच्छेदकौ । ८. ख-ग-च-ज-ण—' सुलुक्° इति ' नास्ति । ९. त—ट एवं पररूपत्वम् ।

<sup>v</sup>तोशा शत्रूणां बाधकौ <sup>v</sup>वृत्रहणा वृत्रस्य पापस्य हन्तारौ <sup>v</sup>सजित्वाना समानजेतारौ[1] <sup>v</sup>अपराजिता अपराजितौ केनाप्यतिरस्कृतौ <sup>v</sup>वाजसातमा अन्नस्यातिशयेन दातारौ <sup>v</sup>इन्द्राग्नी युवां[2] <sup>v</sup>हुवे इह कर्मणि सोमपानार्थमहमाह्वयामि ॥ वृत्रहणा । 'हन हिंसागत्योः'। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप् । 'एकाजुत्तरपदे णः' ( पा. सू. ८. ४. १२ ) इति णत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । हुवे । ह्वयतेः 'बहुलं छन्दसि' इति लुकि सति 'ह्वः संप्रसारणम्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति संप्रसारणम् । उवङादेशः । व्यत्ययेनात्मनेपदम् । निघातः । सजित्वाना । 'जि जये'। 'शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः०' ( उ. सू. ४. ५५३ ) इति क्वनिप् । कित्त्वाद्गुणाभावः । पित्त्वात्तुगागमः । 'समानस्य छन्दस्यमूर्ध०' इति समानस्य सभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अपराजिता । नञ्समासे[3] 'तत्पुरुषे तुल्यार्थ०' इति पूर्वपदप्रकृतिस्वरत्वम् । इन्द्राग्नी । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वे प्राप्ते 'नोत्तरपदेऽनुदात्तादौ०' इति प्रतिषेधात्समासस्वरः । वाजसातमा । 'षणु दाने'। अस्मात् 'जनसनखनक्रमगमः०' इति विट् । 'विड्वनोरनुनासिकस्यात्' इत्याकारः । 'अतिशायने तमप्०' इति तमप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

## प्र वा॑मर्चन्त्यु॒क्थिनो॑ नीथा॒विदो॑ जरि॒तारः॑ । इन्द्रा॑ग्नी॒ इष॒ आ वृ॑णे ॥ ५ ॥

प्र । वा॒म् । अ॒र्च॒न्ति॒ । उ॒क्थिनः॑ । नी॒थ॒ऽविदः॑ । ज॒रि॒तारः॑ । इन्द्रा॑ग्नी॒ इति॑ । इषः॑ । आ । वृ॒णे॒ ॥५॥

हे <sup>v</sup>इन्द्राग्नी <sup>v</sup>उक्थिनः । उक्थं[4] शस्त्रम् । तद्वन्तः शस्त्रिणो होत्रादयः[4] <sup>v</sup>वां युवां <sup>v</sup>प्र <sup>v</sup>अर्चन्ति इह कर्मणि स्तुतिरूपाभिर्वाग्भिः पूजयन्ति । तथा <sup>v</sup>नीथाविदः स्तोत्राभिज्ञाः सामगानकुशलाः <sup>v</sup>जरितारः स्तोतार उद्गात्रादयोऽभिलषितफलावाप्तये युवामर्चन्ति । अहमपि <sup>v</sup>इषः अन्नस्य लाभार्थमिन्द्राग्नी युवाम् <sup>v</sup>आ <sup>v</sup>वृणे सर्वतः संभजे । पूजयामीत्यर्थः । वाम् । युष्मच्छब्दस्य द्वितीयायां पदात्परत्वात् 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीया०' इत्यादिना वामित्यादेशोऽनुदात्तश्च । अर्चन्ति । 'अर्च पूजायाम्'। निघातः । उक्थिनः । 'वच परिभाषणे'। 'पातृतुदिवचिरिचि०' इति कर्मणि थक् । 'वचिस्वपि०' इत्यादिना संप्रसारणम् । उक्थं शस्त्रम् । उक्थं येषां ते । 'अत इनिठनौ' इतीनिः । 'यस्य०' इति लोपः । प्रत्ययस्वरः । नीथाविदः । 'णीञ् प्रापणे'। 'हनिकुषिनीरमि०' इत्यादिना क्थन् । कित्त्वाद्गुणाभावः । 'विद[5] ज्ञाने'। 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । इन्द्राग्नी । आमन्त्रितत्वादाद्युदात्तत्वम्[5] । वृणे । 'वृङ् संभक्तौ'। निघातः ॥ ॥ ११ ॥

## इन्द्रा॑ग्नी नव॒तिं पुरो॑ दा॒सप॑त्नीरधूनुतम् । सा॒कमेके॑न॒ कर्म॑णा ॥ ६ ॥

इन्द्रा॑ग्नी॒ इति॑ । न॒व॒तिम् । पुरः॑ । दा॒सऽप॑त्नीः । अ॒धू॒नु॒त॒म् । सा॒कम् । एके॑न । कर्म॑णा ॥६॥

हे <sup>v</sup>इन्द्राग्नी <sup>v</sup>दासपत्नीः । दासयन्ति उपक्षपयन्ति[6] इति दासा उपक्षपयितारः शत्रवः । ते पतयः पालका यासां ता दासपत्नीः । <sup>v</sup>नवतिं नवतिसंख्याकाः <sup>v</sup>पुरः एवंविधाः शत्रूणां पुरीः <sup>v</sup>एकेन <sup>v</sup>कर्मणा

---

१. न–समानजेतारौ परस्य वाजनशीलौ; ल–परस्परापेक्षया जयशीलौ । २. ख-ग-च-प-भ–वां युवाम् । ३. ख-ग-च-ज-ण-फ-भ–नञा सह । ४. घ-प–शस्त्रवन्तः । ५. ख-ग-च-फ-भ–'विद ज्ञाने... द्युदात्तत्वम्' नास्ति । ६. ख-ग-च-ज-ण-न-भ-स–'उपक्षपयन्ति' नास्ति ।

एकेनैवोद्योगेन युवां ᵛसाकं सह युगपत् ᵛअधूनुतम् अकम्पयतम् । ताविन्द्राग्नी आह्वयामीति शेषः ॥ नवतिम् । नवानां दशतां नवभावः तिश्च प्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः । दासपत्नीः । 'दसु उपक्षये' । दासयतीति दासः । पचाद्यजन्तः । चित्त्वादन्तोदात्तः । ते पतयो यासां नित्यं सपत्न्यादिषु दासाच्च (पा. सू. ४. १. ३५. ग.) इत्युक्तत्वात् 'विभाषा सपूर्वस्य' इति ङीप् । इकारस्य नकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अधूनुतम् । 'धूञ् कम्पने' । लङि स्वादिभ्यः श्नुः । निघातः । एकेन । 'इण् गतौ' । 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति कन् । नित्त्वादाद्युदात्तः ॥

इन्द्रा॑ग्नी अप॑सस्परि॒ुप॒ प्र य॑न्ति धी॒तय॑ः । ऋ॒तस्य॑ प॒थ्या॒३॑ अनु॑ ॥ ७ ॥

इन्द्रा॑ग्नी॒ इति॑ । अप॑सः । परि॑ । उप॑ । प्र । य॒न्ति॒ । धी॒तय॑ः । ऋ॒तस्य॑ । प॒थ्याः॑ । अनु॑ ॥७॥

हे ᵛइन्द्राग्नी ᵛधीतयः सोमस्य धातारः पातारो होत्रादयः ᵛऋतस्य कर्मफलस्य ᵛपथ्याः पथो मार्गान् ᵛअनु लक्षीकृत्य ᵛअपसः अस्माभिः क्रियमाणस्य कर्मणः ᵛपरि सर्वतः ᵛउप ᵛप्र ᵛयन्ति समीपे प्रकर्षेण वर्तन्ते । अतः सोमपानार्थं युवामागच्छतमिति भावः । यद्वा । धीतयः स्तुतयः ऋतस्य यज्ञस्य मार्गान्[1] लक्षीकृत्य कर्मणः परितः प्रवर्तन्ते । अतः स्तोतव्यतया युवामागतमिति ॥ यन्ति । 'इण् गतौ' । यणादेशः । निघातः । धीतयः । 'धेट् पाने' इत्यस्मात् कर्तरि 'क्तिच्क्तौ[2] च संज्ञायाम्[2]' इति क्तिच् । 'घुमास्था°' इतीत्वम् । चित्त्वादन्तोदात्तः ॥

इन्द्रा॑ग्नी तवि॒षाणि॑ वां स॒धस्था॑नि॒ प्रयां॑सि च । यु॒वोर॒प्तूर्यं॑ हि॒तम् ॥ ८ ॥

इन्द्रा॑ग्नी॒ इति॑ । त॒वि॒षाणि॑ । वा॒म् । स॒धऽस्था॑नि । प्रयां॑सि । च॒ । यु॒वोः । अ॒प्ऽतूर्य॑म् । हि॒तम् ॥८॥

हे ᵛइन्द्राग्नी ᵛवां युवयोः ᵛतविषाणि बलानि ᵛप्रयांसि अन्नानि ᵛच ᵛसधस्थानि परस्परम-वियुज्य वर्तन्ते । तथा ᵛअप्तूर्यं वृष्टिद्वारा[3] प्रेरकत्वं ᵛयुवोः युवयोरेव ᵛहितं निहितं वर्तते । तस्मात्सोमपानप्रभृतिषु सर्वकर्मसु इन्द्राग्न्योः सहैव वर्तमानत्वमिति भावः ॥ वाम् । षष्ठीद्विवचने वामित्यादेशः । सधस्थानि । 'ष्ठा गतिनिवृत्तौ' । 'आतोऽनुपसर्गे कः' । 'सध मादस्थयोश्छन्दसि' इति सहस्य सधादेशः ॥

इन्द्रा॑ग्नी रोच॒ना दि॒वः परि॒ वाजे॑षु भूषथः । तद्वां॑ चेति॒ प्र वी॒र्यम् ॥ ९ ॥

इन्द्रा॑ग्नी॒ इति॑ । रो॒च॒ना । दि॒वः । परि॑ । वाजे॑षु । भू॒ष॒थः॒ । तत् । वा॒म् । चे॒ति॒ । प्र । वी॒र्य॑म् ॥९॥

हे ᵛइन्द्राग्नी ᵛदिवः ᵛरोचना स्वर्गस्य रोचकौ प्रकाशकौ युवां ᵛवाजेषु संग्रामेषु ᵛपरि ᵛभूषथः परितः सर्वतोऽलंकृतौ भवथः । शत्रून्पराजित्य सर्वतो विजयमानौ वर्तेथे । ᵛवां युवयोः ᵛवीर्यं सामर्थ्यमेव ᵛतत् तादृशं संग्रामविजयं ᵛप्र ᵛचेति प्रकर्षेण ज्ञापयति । यद्वा युवां वाजेषु

---

१. ज-ण-मार्गम् । २. ख-ग-च-ज-ण-न-भ-'क्तिच्क्तौ च संज्ञायाम्' नास्ति । ३. घ-प-वृष्टिद्वारा अया (अपाम्) ।

संग्रामेषु परिभूषथः शत्रून्परिभवथः। शेषं पूर्ववत् ॥ रोचना। 'रुच दीप्तौ' इत्यस्य 'अनुदात्तेतश्च हलादेः' इति युच्। चित्त्वादन्तोदात्तः। भूषथः। 'भूष भूषणे'। निघातः। चेति। 'चिती संज्ञाने'। अयमन्तर्भावितण्यर्थः। 'बहुलं छन्दसि' इति शपो लुक्। तकारलोपः[1] छान्दसः ॥ ॥ १२ ॥ ॥ १ ॥

द्वितीयेऽनुवाके सप्तदश सूक्तानि। तत्र 'प्र वो देवाय' इति सप्तर्चं प्रथमं[2] सूक्तं वैश्वामित्र-ऋषभस्यार्षमग्निदेवताकमानुष्टुभम्। तथा[3] चानुक्रान्तं[3]—'प्र वः सप्त ऋषभस्त्वानुष्टुभम्' इति। विश्वामित्रपुत्र[4] ऋषभ ऋषिः। मण्डलादिपरिभाषयाग्निर्देवता। अग्निष्टोमे इदं सूक्तमाज्यशस्त्रम्। 'पराङ्ध्वर्यावावृत्ते' इति खण्डे सूत्रितम्—'प्र वो देवायेत्याज्यमुपसंतनुयात्' (आश्व. श्रौ. ५. ९) इति। इदमेव सूक्तं प्रातरनुवाक आश्विनशस्त्रे च विनियुक्तम्। सूत्रं च—'प्र वो देवायाग्ने कदा त इति पञ्च' (आश्व. श्रौ. ४. १३) इति। अभ्युदयेष्टौ 'स यन्ता' इत्यग्नेः प्रदातुः* याज्या। सूत्रितं च—'स यन्ता विप्र एषां दीर्घस्ते अस्त्वङ्कुशः' (आश्व. श्रौ. ३. १३) इति[4] ॥

प्र वो॑ दे॒वाया॒ग्नये॒ बर्हि॑ष्ठमर्चास्मै। गम॑द्दे॒वेभि॒रा स नो॒ यजि॑ष्ठो ब॒र्हिरा स॑दत् ॥१॥

प्र। व॒ः। दे॒वाय॑। अ॒ग्नये॑। बर्हि॑ष्ठम्। अ॒र्च॒। अ॒स्मै॒।
गम॑त्। दे॒वेभिः॑। आ। सः। नः॒। यजि॑ष्ठः। ब॒र्हिः। आ। स॒द॒त् ॥ १ ॥

यजमानो होत्रादीन्प्रति ब्रूते। हे होत्रादयः ᵛवः युष्मत्संबन्धिने ᵛदेवाय द्योतमानाय ᵛअस्मै अस्मिन्कर्मणि स्तुत्याय ᵛअग्नये ᵛबर्हिष्ठं वृद्धतमं प्रभूतमिदं[5] स्तुतिरूपं[6] स्तोत्रशस्त्रादि वोक्थ्यजातं[6] ᵛप्र ᵛअर्च उच्चारयत। एवं स्तुतः ᵛसः अग्निः ᵛदेवेभिः यष्टव्यदेवैः सहितः सन् ᵛनः अस्मान्प्रति ᵛआ ᵛगमत् आगच्छतु। आगत्य च ᵛयजिष्ठः यष्टृतमः सोऽग्निः ᵛबर्हिः अस्माभिर्वेद्यां स्तीर्णे बर्हिषि ᵛआ ᵛसदत् आसीदतु उपविशतु ॥ बर्हिष्ठम्। बर्हिंतृशब्दात् 'तुश्छन्दसि' इत्यतिशायने इष्ठन्। अर्च। 'अर्च पूजायाम्'। भौवादिकः। बहुवचनस्यैकवचनम्। निघातः। गमत्। 'गम्लृ गतौ'। अस्य[7] 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङ्। लृदित्वात् च्लेरङ्। 'नित्यं ङितः' इतीकारलोपः। पादादित्वान्न निघातः। यजिष्ठः। यष्टृशब्दात् 'तुश्छन्दसि' इतीष्ठन्। 'तुरिष्ठेमेयःसु' इति तृचो लोपः। नित्स्वरः। सदत्। पूर्ववल्लोडर्थे लुङ्। 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य लृदित्वा-दङ्। निघातः ॥

ऋ॒तावा॒ यस्य॒ रोद॑सी॒ दक्षं॒ सच॑न्त ऊ॒तयः॑।
ह॒विष्म॑न्त॒स्तमी॑ळते॒ तं स॑नि॒ष्यन्तोऽव॑से ॥ २ ॥

ऋ॒तऽवा॑। यस्य॑। रोद॑सी॒ इति॑। दक्ष॑म्। सच॑न्ते। ऊ॒तयः॑।
ह॒विष्म॑न्तः। तम्। ई॒ळ॒ते॒। तम्। स॒नि॒ष्यन्तः॑। अव॑से ॥ २ ॥

---

१. ख-ग-च-ज-ण-भ—तलोपः। २. न-ल-स—आद्यम्। ३. न-ल-स—अत्रानुक्रमणिका। ४. ख-ग-च-ज-ण-प-फ-भ—'विश्वामित्रपुत्र ...... इति' नास्ति। * त—दातुः। ५. ख-ग-च-ज-ण-भ—इदं प्रभूतम्। ६. ख-ग-च-ज-ण-भ—'स्तुतिरूपं ... वोक्थ्यजातम्' नास्ति। ७. ल—इत्यस्य।

ᵛयस्य पूर्वमन्त्रे प्रतिपादितस्याग्नेः ᵛरोदसी इमे द्यावापृथिव्यौ वशे भवतः । अग्नेः प्रकाशकत्वेन तदधीनप्रकाशके भवत इत्यर्थः । किंच ᵛऊतयः यजमानस्य फलप्रदानेन रक्षितारो देवाः ᵛदक्षं यस्याग्नेर्बलं ᵛसचन्ते सेवन्ते । 'सचन्ते सेवन्ते' (निरु. ७. २३) इति यास्कः । अग्नेर्यजमानदत्तहविष्प्रदत्वेन[1] तदधीना इत्यर्थः । एवंभूतः सोऽग्निः ᵛऋतावा सत्यकर्मा । सत्यसंकल्प इत्यर्थः । किंच ᵛहविष्मन्तः संभृतहविष्का यजमाना हविर्वहनार्थं ᵛतम् एवाग्निम् ᵛईळते स्तुतिरूपाभिर्वाग्भिः पूजयन्ति । किंच ᵛसनिष्यन्तः धनादिलाभमिच्छन्तः ᵛतम् ᵛअवसे रक्षणाय तमेवाग्निमाश्रयन्ते ॥ ऋतावा । ऋतशब्दात् 'तदस्यास्ति' इति 'छन्दसीवनिपौ वक्तव्यौ' इति वनिप् । 'अन्येषामपि दृश्यते' इति दीर्घः । वनिपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः । सचन्ते । 'षच समवाये' । व्यत्ययेन आत्मनेपदम् । यद्वृत्तयोगादनिघातः । सनिष्यन्तः । सनिर्लाभः । तमिच्छन्तः । 'सुप आत्मनः क्यच्' । 'सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः' इति क्यचि परतः सुगागमः । क्यचः[2] स्वरः[2] ॥

स यन्ता विप्र एषां स यज्ञानामथा हि षः ।
अग्निं तं वो दुवस्यत दाता यो वनिता मघम् ॥ ३ ॥

सः । यन्ता । विप्रः । एषाम् । सः । यज्ञानाम् । अथ । हि । सः ।
अग्निम् । तम् । वः । दुवस्यत । दाता । यः । वनिता । मघम् ॥ ३ ॥

ᵛविप्रः मेधावी कर्माभिज्ञः ᵛसः अग्निः ᵛएषां कालापराधेन[3] हविर्निर्वापं कृतवतां यजमानानां यथोक्तकर्मप्रदर्शनेन[4] तत्र प्रवर्तकः । ᵛअथ किंच ᵛयज्ञानां ज्योतिष्टोमादीनां ᵛसः अग्निः नियन्ता फलप्रदानेन नियामकः । ᵛहि प्रसिद्धौ । अत एव[5] सर्वस्य नियन्ता खलु । किंच ᵛसः अग्निः ᵛदाता ज्योतिष्टोमादिकर्मफलदाता ᵛमघं मंहनीयं[6] धनम् । 'मघं रेक्णः.' (नि. २. १०. १) इति तन्नामसु पाठात् । तद्धनं ᵛवनिता प्रयच्छंश्च भवति । ᵛवः युष्मत्संबन्धिनं ᵛतं तादृशम् ᵛअग्निं हे ऋत्विजः यूयं ᵛदुवस्यत आहुतिप्रदानेन परिचरत । दुवस्यतिः परिचरणकर्मा 'नमस्यति दुवस्यति' (नि. ३. ५. ५) इति तन्नामसु पाठात् ॥ यन्ता । 'यम उपरमे' इत्यस्य तृचि रूपम् । 'ऋदुशनस°' इत्यादिना अनङादेशः । चित्स्वरः । अथा हि[7] । 'निपातस्य°' इति दीर्घः । दुवस्यत । दुवः परिचरणम् । तदिच्छन्तः । सुपः क्यच् । तदन्तस्य धातोर्लोटि रूपम् । दाता । 'डुदाञ् दाने' । ताच्छीलिकस्तृन् । नित्त्वादाद्युदात्तः ॥

स नः शर्माणि वीतयेऽग्निर्यच्छतु शंतमा ।
यतो नः प्रुष्णवद्वसु दिवि क्षितिभ्यो अप्स्वा ॥ ४ ॥

सः । नः । शर्माणि । वीतये । अग्निः । यच्छतु । शम्ऽतमा ।
यतः । नः । प्रुष्णवत् । वसु । दिवि । क्षितिऽभ्यः । अप्सु । आ ॥ ४ ॥

१. न–°हविष्प्रदातृत्वेन; ल–°हविषां प्रदातृत्वेन । २. च-स–क्यच् स्वरः । ३. ख-ग-च-ज ण–कालोपरोधेन । ४. घ–°कर्मदर्शनेन । ५. प–एव स अग्निः । ६. च-ल–महनीयम् । ७. च–'हि' नास्ति ।

ᵛसः ᵛअग्निः हविष्प्रदातृभ्य ᵛनः[१] अस्मभ्यं ᵛशंतमा पशुपुत्रादिसमृद्ध्या अतिशयेन सुखकराणि । शर्मशब्दो गृहवाची 'छाया शर्म वर्म' (नि. ३. ४. २१) इति तन्नामसु पाठात् । तथाविधानि गृहाणि ᵛवीतये संभजनाय अग्निहोत्रादिकर्मप्राप्त्यर्थं ᵛयच्छतु ददातु । ᵛयतः यस्मादग्नेः सकाशात् ᵛप्रुष्णवत् समृद्धिमत्[२] दानभोगादिना व्यये सत्यपि अतिशयेन वर्धमानं ᵛदिवि द्युलोके ᵛक्षितिभ्यः भूलोकात् ᵛअप्सु अन्तरिक्षे च समुत्पन्नं ᵛवसु तत्तल्लोके असाधारण्येन वर्तमानं धनम् ᵛआ समन्तात् उपनमति । यतोऽग्नेः प्रसादात् त्रिषु लोकेषु विद्यमानं धनमस्मानागच्छति[३] सोऽग्निरिति पूर्वेणान्वयः ॥ वीतये । वी गतिकान्त्यादिषु[४] । 'मन्त्रे वृषेषपच°' इत्यादिना क्तिन् । उदात्तत्वेन निपातनादुदात्तः । यच्छतु । 'यम उपरमे' । 'इषुगमियमां छः' इति मकारस्य छः[५] । प्रुष्णवत् । 'प्रुष स्नेहनसेचनपूरणेषु' । अस्मादौणादिको नक्प्रत्ययः । 'तदस्यास्ति' इति मतुप् । तस्योदात्तताभावश्छान्दसः ॥

दी॒दि॒वांस॒मपू॑र्व्यं॒ वस्वी॑भिरस्य धी॒तिभि॑ः ।

ऋ॒क्वा॑णो अ॒ग्निमि॑न्धते॒ होता॑रं वि॒श्पतिं॑ वि॒शाम् ॥ ५ ॥

दी॒दि॒ऽवांस॑म् । अपू॑र्व्यम् । वस्वी॑भिः । अ॒स्य॒ । धी॒तिऽभि॑ः ।

ऋ॒क्वा॑णः । अ॒ग्निम् । इ॒न्ध॒ते॒ । होता॑रम् । वि॒श्पति॑म् । वि॒शाम् ॥ ५ ॥

ᵛऋक्वाणः स्तुतिं कुर्वाणाः शस्त्रिणो होत्रादयः ᵛदीदिवांसं दीप्यमानम् ᵛअपूर्व्यं तेजस्वितया प्रतिक्षणमभिनवं[६] ᵛहोतारं देवानामाह्वातारं ᵛविशां ᵛविश्पतिं प्रजानामतिशयेन पालयितारं तम् ᵛअग्निं ᵛवस्वीभिः प्रशस्ताभिः ᵛअस्य ᵛधीतिभिः अग्निविषयस्तुतिलक्षणाभिर्वाग्भिः । यद्वा वस्वीभिर्वसुमद्भिरस्य धीतिभिरेतदुद्देशेन क्रियमाणैः कर्मभिः । ᵛइन्धते दीपयन्ति । स्तोत्रकरणहविष्प्रदानादिव्यापारेण समृद्धिं कुर्वन्ति ॥ दीदिवांसम् । दिवु क्रीडादावित्यस्य क्वसौ रूपम् । 'तुजादीनाम्°' इत्यभ्यासस्य दीर्घः । 'लोपो व्योर्वलि[७]' इति वलोपः । वस्वीभिः । वसुशब्दात् व्यत्ययेन ङीन् । निःस्वरः । धीतिभिः । 'धेट् पाने' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । कित्त्वात् 'घुमास्था°' इतीत्वम् । चित्स्वरः । ऋक्वाणः । ऋच्शब्दान्मतुबर्थे वनिप् । अयस्मयादित्वाद्भसंज्ञात्वात् कुत्वम् । पदसंज्ञाभावाज्जश्त्वाभावः । इन्धते । 'ञिइन्धी दीप्तौ' । विश्पतिम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । विशाम् । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् ॥

उ॒त नो॒ ब्रह्म॑न्नविष उ॒क्थेषु॑ देव॒हूत॑मः ।

शं नः॑ शोचा म॒रुद्वृ॑धो॒ऽग्ने॑ सहस्र॒सात॑मः ॥ ६ ॥

उ॒त । नः॒ । ब्रह्म॑न् । अ॒वि॒षः॒ । उ॒क्थेषु॑ । दे॒व॒ऽहूत॑मः ।

शम् । नः॒ । शो॒च॒ । म॒रु॒त्ऽवृ॑धः । अग्ने॑ । स॒ह॒स्र॒ऽसात॑मः ॥ ६ ॥

---

१. त–नः प्रदातृभ्यः; न–नो हविष्प्रदातृभ्यः २. त–वृद्धिमत् । ३. ख-ग-च-ज-ण-भ–नोऽस्मानागच्छति; त-न-स–धनमस्माकमागच्छति । ४. त–गत्यादिषु । ५. त–छकारः । ६. त–प्रतिक्षणाभिनवम् । ७. त–व्योः° ।

उत अपि च हे अग्ने नः यज्ञकारिणोऽस्मान् ब्रह्मन् ब्रह्मणि अस्माभिः क्रियमाणे स्तोत्रे अविषः स्तोत्रविषयन्यूनातिरेकदोषो यथा न भवति तथा पालय । किंच देवहूतमः देवानामाह्वातृतमस्त्वम् उक्थेषु अस्माभिः क्रियमाणेष्वाज्यप्रउगादिशस्त्रेषु अविषः गोपाय । किंच मरुद्वृधः मरुद्भिर्वर्धमानः सहस्रसातमः सहस्रसंख्याकस्य धनस्यातिशयेन दाता त्वं नः अस्माकं शम् ऐहिकमामुष्मिकं[1] च[1] सुखं शोच दीपय । वर्धयेत्यर्थः ॥ अविषः । अव रक्षणादिषु इत्यस्माल्लेटि 'सिब्बहुलम्०[2]' इति सिप् । अस्य[3] आर्धधातुकत्वादिट् । ' इतश्च लोपः० ' इति सिप इकारलोपः । ' लेटोऽडाटौ ' इत्यडागमः । निघातः । उक्थेषु । ' वच परिभाषणे ' । अस्मात्[4] कर्मणि ' पातॄतुदिवचिरिचि० ' इत्यादिना थक् । कित्त्वात्संप्रसारणम् । प्रत्ययस्वरः । देवहूतमः । ह्वयतेः क्विप् । ' बहुलं छन्दसि ' इति संप्रसारणपररूपत्वे । ' हलः ' इति दीर्घः । कृदुत्तरपदप्रकृतिस्वरत्वम् । शोच । ' शुच दीप्तौ ' । अयमन्तर्भावितण्यर्थः । निघातः । मरुद्वृधः । ' वृधु वर्धने ' । इगुपधलक्षणः कः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । सहस्रसातमः । ' षणु दाने ' । अस्य[5] ' जनसनखनक्रमगमो विट् ' इति विट् । ' विड्वनोरनुनासिकस्य० ' इत्याकारः । कृदुत्तरपदप्रकृतिस्वरः ॥

नू नो॑ रास्व स॒हस्र॑वत्तो॒कव॑त्पुष्टि॒मद्वसु॑ । द्यु॒मद॑ग्ने सु॒वीर्यं॒ वर्षि॑ष्ठ॒मनु॑पक्षितम् ॥७॥

नु । नः॒ । रा॒स्व॒ । स॒ह॒स्र॑ऽवत् । तो॒कऽव॑त् । पु॒ष्टि॒ऽमत् । वसु॑ ।

द्यु॒ऽमत् । अ॒ग्ने॒ । सु॒ऽवीर्य॑म् । वर्षि॑ष्ठम् । अनु॑पऽक्षितम् ॥ ७ ॥

अस्मिन्[6] सूक्ते[6] स्तूयमान[6] हे अग्ने सहस्रवत् सहस्रसंख्योपेतं तोकवत् पुत्रपौत्रादिसहितं पुष्टिमत् पोषकृत्[7] । अनेन शरीरस्य[8] क्षीरादिद्वारा बलारोग्यप्रदं गवादिकम्[8] उपलक्ष्यते । द्युमत् दीप्तिमत् । अनेन रत्नकनकादिकं परिगृह्यते । सुवीर्यं शोभनसामर्थ्योपेतं तत्तत्कार्येषु व्यवहारयोग्यं वर्षिष्ठम् अतिशयेन वृद्धं प्रभूतमत एव अनुपक्षितं व्यये क्रियमाणेऽप्यनुपक्षीणम् । एवंभूतं वसु रत्नकनकपश्वादिलक्षणं धनं नः अस्मभ्यं नु क्षिप्रमविलम्बेन रास्व दत्स्व ॥ नू नः । ' ऋचि तुनुघमक्षु० ' इति दीर्घः । रास्व । ' रा दाने ' अस्य[9] लोटि रूपम् । व्यत्ययेनात्मनेपदम् । अदादित्वाच्छपो लुक् । निघातः । सहस्रवत् । ' मादुपधायाः० ' इति मतुपो वत्वम् । कर्दमादित्वान्मध्योदात्तः सहस्रशब्दः । पुष्टिमत् । ' पुष पुष्टौ ' । अस्मात् क्तिच् । प्रत्ययस्वरेणान्तोदात्तः । ' ह्रस्वनुड्भ्याम्० ' इति मतुप उदात्तत्वम् । वर्षिष्ठम् । ' प्रियस्थिर०' इत्यादिना वृद्धस्य[10] वर्षि इत्यादेशः । नित्स्वरः । अनुपक्षितम् । ' क्षि क्षये ' इत्यस्य दीर्घाभावान्निष्ठानत्वं न भवति । तत्पुरुषत्वादव्ययपूर्वपदप्रकृतिस्वरः ॥ ॥ १३ ॥

' आ होता ' इति सप्तर्चं द्वितीयं सूक्तम् । ' आ होता ' इत्यनुक्रमणिका । ' ऋषभस्तु ' इति तुशब्दप्रयोगादस्यापि सूक्तस्य ऋषभ ऋषिः । अनुक्तत्वात् त्रिष्टुप् । अग्निर्देवता । एतदादीनि दश[11] सूक्तानि तृतीयाष्टमवर्जितानि प्रातरनुवाके आश्विनशस्त्रे त्रैष्टुभे छन्दसि विनियुक्तानि ।

---

१. फ–' ऐहिकमामुष्मिकं च ' नास्ति। २. ख–' सिब्बहुलं लेटि '। ३. त–तस्य। ४. ल–इत्यस्मात्। ५. त-ल–इत्यस्य। ६. ख-ग-च-ज-ण–' अस्मिन् सूक्ते स्तूयमान ' नास्ति। ७. त-ल–पोषणकृत्। ८. ख-ग-च-ज-ण–शरीरस्य क्षीरादिधाराबलीरोपादव्यंगत्वादिकम्; त–शरीरे क्षीरादिद्वारा बलारोग्यप्रदं गवादिकम्। ९. त-ल-इत्यस्य। १०. ख-ग-च-ज-ण-न-भ-स–' वृद्धस्य ' नास्ति। ११. ख-ग-च-ज-ण-फ-भ-स–' दश ' नास्ति।

‘ अथैतस्याः ’ इति खण्डे सूत्रितम्—‘ आ होतेति दशानां तृतीयाष्टमे उद्धरेदिति त्रैष्टुभम् ’ ( आश्व. श्रौ. ४. १३ ) इति ॥

आ होता मन्द्रो विदथान्यस्थात्सत्यो यज्वा कवितमः स वेधाः ॥
विद्युद्रथः सहसस्पुत्रो अग्निः शोचिष्केशः पृथिव्यां पाजो अश्रेत् ॥ १ ॥

आ । होता । मन्द्रः । विदथानि । अस्थात् । सत्यः । यज्वा । कविऽतमः । सः । वेधाः ।
विद्युत्ऽरथः । सहसः । पुत्रः । अग्निः । शोचिःऽकेशः । पृथिव्याम् । पाजः । अश्रेत् ॥ १ ॥

ऋषभोऽग्निं स्तौति । होता देवानामाह्वाता मन्द्रः स्तोतुः मादयिता[1] सत्यः सत्यकर्मा कवितमः अतिशयेन मेधावी यज्वा देवानां यष्टा वेधाः सर्वस्य जगतो विधाता । एवंविधमहिमोपेतः सः अग्निः विदथानि अस्माभिः क्रियमाणान् यज्ञान् आ अस्थात् आतिष्ठति प्राप्नोति । किंच विद्युद्रथः विद्योतमानयानोपेतः[2] शोचिष्केशः । शोचींषि ज्वालाः केशा यस्य सः । ज्वालामयकेशोपेतः सहसस्पुत्रः बलस्य सूनुः एवंभूतः सः अग्निः पृथिव्यां विस्तीर्णेऽन्तरिक्षे पाजः तेजः स्वकीयां प्रभाम् अश्रेत् श्रयते प्रापयति । यद्वा पृथिव्यां भूमौ वर्तमानः पाजो बलं सेवते ॥ मन्द्रः । ‘ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु ’। अस्मात् ‘ स्फायितञ्चि° ’ इत्यादिना रक् । इदित्वात् नुम् । अस्थात् । ‘ ष्ठा गतिनिवृत्तौ ’। ‘ छन्दसि लुङ्लङ्लिटः ’ इति वर्तमाने लुङ् । ‘ गातिस्था° ’ इति सिचो लोपः । निघातः । यज्वा । ‘ यज देवपूजासंगतिकरणदानेषु ’ । ‘ सुयजोर्ङ्वनिप् ’ इति ङ्वनिप् । तस्य पित्त्वादनुदात्तस्वरे[3] धातुस्वरः[3] । कवितमः । ‘ कु शब्दे ’। कौति कूयते वा । ‘ अच इः[4] ’ इति कर्तरि भावे वा इप्रत्ययः । तमपः पित्त्वादनुदात्तत्वे प्रत्ययस्वरः । शोचिष्केशः । ‘ शुच दीप्तौ ’। ‘ अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः ’ इति इसिः । प्रत्ययस्वरेणान्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । अश्रेत् । ‘ श्रिञ् सेवायाम् ’ इत्यस्य छन्दसि वर्तमाने लङ् । ‘ बहुलं छन्दसि ’ इति शपो लुक् । सार्वधातुकगुणः । निघातः ॥

अयामि ते नमउक्तिं जुषस्व ऋतावस्तुभ्यं चेतते सहस्वः ।
विद्वाँ आ वक्षि विदुषो नि षत्सि मध्य आ बर्हिरूतये यजत्र ॥ २ ॥

अयामि । ते । नमःऽउक्तिम् । जुषस्व । ऋतऽवः । तुभ्यम् । चेतते । सहस्वः ।
विद्वान् । आ । वक्षि । विदुषः । नि । सत्सि । मध्ये । आ । बर्हिः । ऊतये । यजत्र ॥ २ ॥

ऋतावः । ऋतं सत्यभूतो यज्ञः । तद्वन् हे अग्ने ते त्वद्विषयां नमउक्तिं नमस्कारवाक्यम् अहम्[5] अयामि प्रेरयामि उच्चारयामि । हे सहस्वः । सहो बलम् । तद्वन्नग्ने चेतते चेतयित्रे कर्मणः प्रज्ञापकाय तुभ्यं नमउक्तिः क्रियते । तां जुषस्व । अस्माभिः क्रियमाणां नमस्कारोक्तिं सेवस्व ।

---

१. घ—मदयिता । २. ख-ग-च-ज-ण-न-स—द्योतमान° । ३. च-स-पित्त्वादनुदात्तत्वे प्रत्ययस्वरः ।
४. ख-ग-च-ज-ण-न-भ-ल—‘ इः ’ नास्ति । ५. ख-ग-च-ज-ण-भ-ल—‘ अहं ’ नास्ति ।

किंच विद्वान् आनुपूर्व्येण देवाह्वानाभिज्ञः विदुषः कर्माभिज्ञान् आ वक्षि आवह । किंच यजत्र[1] यष्टव्य हे अग्ने ऊतये अस्माकं रक्षणाय मध्ये बर्हिः स्तीर्णस्य बर्हिषो मध्ये आ नि षत्सि आ समन्तान्निषीद ॥ अयामि । 'इण्[2] गतौ' भौवादिकः । पादादित्वादनिघातः । जुषस्व । 'जुषी प्रीतिसेवनयोः' । तुदादिः । लोटि रूपम् । निघातः । चेतते । 'चिती संज्ञाने' । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे ततः[3] अन्तोदात्तताभावात् 'शतुरनुमः°' इति विभक्तेरुदात्तताभावः । धातुस्वरः । सहस्वः । सहोऽस्त्यस्येति मतुप् । सकारस्य 'तसौ मत्वर्थे' इति भसंज्ञकत्वात् रुर्न भवति । 'मादुपधायाः°' इति मतुपो वत्वम् । 'उगिदचाम्°' इति नुम् । हल्ङ्यादिलोपे नकारस्य 'मतुवसो रुः°' इति रुत्वम् । आमन्त्रितनिघातः । विदुषः । 'विद ज्ञाने' इत्येतस्मात्[4] उत्तरस्य शतुः 'विदेः शतुर्वसुः' इति वस्वादेशः । भसंज्ञायां वसोः संप्रसारणम् । प्रत्ययस्वरः । सत्सि । षद्लृ विशरणादिषु । लटि 'बहुलं छन्दसि' इति शपो लुक् । शित्प्रत्ययपरत्वाभावात् सीदादेशाभावः । 'सदिरप्रतेः[5]' इति षत्वम् । यजत्र । यज देवपूजादिषु । 'अमिनक्षियजि°' इत्यादिना अत्रन्प्रत्ययः । आमन्त्रितनिघातः ॥

द्रवतां त उषसा वाजयन्ती अग्ने वातस्य पथ्याभिरच्छ ।
यत्सीमञ्जन्ति पूर्व्यं हविर्भिरा वन्धुरेव तस्थतुर्दुरोणे ॥ ३ ॥

द्रवताम् । ते । उषसा । वाजयन्ती इति । अग्ने । वातस्य । पथ्याभिः । अच्छ ।
यत् । सीम् । अञ्जन्ति । पूर्व्यम् । हविःऽभिः । आ । वन्धुराऽइव । तस्थतुः । दुरोणे ॥३॥

हे अग्ने वाजयन्ती वाजमन्नं कुर्वाणे उषसा[6] उषासानक्ते[7] अहोरात्रौ[8] ते त्वां द्रवताम् अभिगच्छताम् । त्वमपि वातस्य वायोः पथ्याभिः मार्गैः अच्छ तावहोरात्रौ शीघ्रमभिगच्छ । यत यस्मात्कारणात् अहोरात्राख्ययोः[9] परस्पराभिगमनेनान्योन्यसंबन्धस्तस्मादहोरात्रयोः सायंप्रातःकालयोः पूर्व्यं पुरातनं त्वामृत्विजः हविर्भिः आज्यादिभिः सीं सर्वतः अञ्जन्ति सिञ्चन्ति । किंच वन्धुरेव । यथा कूवरस्थानं परस्परसंसक्तेषाद्वयोपेतं तद्वत्संसक्तौ तावहोरात्रौ दुरोणे अस्माकं गृहे अग्निहोत्रादिकर्मसिद्ध्यर्थम् आ आवृत्य पुनः पुनरावर्तमानौ सन्तौ तस्थतुः तिष्ठताम् ॥ द्रवताम् । 'द्रु गतौ' इत्यस्य लोटि रूपम् । पथ्याभिः । पथिषु साधव इत्यर्थे 'तत्र साधुः' (पा. सू. ४. ४. ९८) इति यत् । 'नस्तद्धिते' इति टिलोपः । 'तित्स्वरितः' इति स्वरितः । तस्थतुः । तिष्ठतेर्लिट्यतुसि रूपम् । निघातः ॥

मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन् ।
यच्छोचिषा सहसस्पुत्र तिष्ठा अभि क्षितीः प्रथयन्त्सूर्यो नॄन् ॥ ४ ॥

मित्रः । च । तुभ्यम् । वरुणः । सहस्वः । अग्ने । विश्वे । मरुतः । सुम्नम् । अर्चन् ।
यत् । शोचिषा । सहसः । पुत्र । तिष्ठाः । अभि । क्षितीः । प्रथयन् । सूर्यः । नॄन् ॥ ४ ॥

---

१. ख-ग-च-ज-ण–हे यजत्र । २. त–अय । ३. त-कृतो; ल–कृते । ४. च-ल–इत्यस्मात् । ५. ल-स–सदेरप्रतेः । ६. त–'उषसा' नास्ति । ७. च-त–उषसानक्ते । ८. त–अहोरात्रे । ९. त–अहोरात्रयोः ।

ᵛसहस्वः बलवन् हे ᵛअग्ने ᵛमित्रश्च[1] ᵛवरुणः च मित्रावरुणौ ᵛविश्वे ᵛमरुतः सर्वे देवाश्च ᵛतुभ्यं त्वदर्थं ᵛसुम्नं स्तोत्रम् ᵛअर्चन् वहन्ति । यद्वा सर्वे देवास्तुभ्यं त्वां सुम्नं सुखेनार्चन् पूजयन्ति । ᵛयत् यस्मात् कारणात् ᵛसहसस्पुत्र हे अग्ने ᵛसूर्यः । सुष्ठु अर्यः स्वामी । यद्वा सर्वान्तर्यामितया सुष्ठु प्रेरकः । यद्वा सूर्यः शोभनवीर्यः । ᵛअभि ᵛक्षितीः । क्षितिशब्दो मनुष्यवाची ' विशः क्षितयः ' (नि. २.३.६) इति तन्नामसु पाठात् । मनुष्यानभिलक्ष्य ᵛनॄन् मार्गप्रदर्शकत्वेन नेतॄन् आत्मनो रश्मीन् ᵛप्रथयन् सर्वतो विस्तारयंस्त्वं ᵛशोचिषा दीप्त्या समानः सन् ᵛतिष्ठाः तिष्ठसि । तस्मादेते[2] देवाः पूजयन्तीति ॥ अर्चन् । ' अर्च पूजायाम् ' इत्यस्य लङि रूपम् । अडभावश्छान्दसः । तिष्ठाः । ' ष्ठा गतिनिवृत्तौ ' इत्यस्य लेटि रूपम् । यद्योगात्[3] अनिघातः । ' पाघ्रा° ' इत्यादिना तिष्ठादेशस्याद्युदात्तत्वेन निपातनादाद्युदात्तः । सूर्यः । ' राजसूयसूर्य° ' इति क्यबन्तत्वेन निपातनात् सर्वार्थाः[4] सिद्धा भवन्ति ॥

वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।
यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥ ५ ॥

वयम् । ते । अद्य । ररिम । हि । कामम् । उत्तानऽहस्ताः । नमसा । उपऽसद्य ।
यजिष्ठेन । मनसा । यक्षि । देवान् । अस्रेधता । मन्मना । विप्रः । अग्ने ॥ ५ ॥

हे ᵛअग्ने ᵛउत्तानहस्ताः हविःस्वीकरणादुत्तानपाणयः ᵛवयं ᵛकामं कमनीयं पुरोडाशादिहविः ᵛते तुभ्यम् ᵛअद्य इदानीमस्मिन् कर्मणि ᵛररिम दद्मः । ᵛनमसा नमस्कारेण ᵛउपसद्य प्रसन्नो भूत्वा ᵛयजिष्ठेन यष्टृतमेन यागेच्छावता ᵛमनसा अन्तःकरणेन ᵛदेवान् ᵛयक्षि यजनीयान्[5] देवान्[5] यज[6] पूजय । किंच ᵛविप्रः मेधावी कर्माभिज्ञः त्वम् ᵛअस्रेधता अक्षीणेन प्रभूतेन ᵛमन्मना मन्तव्येन स्तोत्रेण देवान् पूजय[7] ॥ अद्य । ' सद्यः परुत्परार्यैषमः°' इत्यादिना निपातितः । अन्तोदात्तश्च । ररिम । ' रा दाने ' इत्यस्य वर्तमाने लिटि ' परस्मैपदानां णलतुः ' ( पा. सू. ३. ४. ८२ ) इत्यादिना मसो मादेशः । क्रादिनियमादिडागमः । ' आतो लोप इटि च ' इत्याकारलोपः । हियोगादनिघातः । ' आगमा अनुदात्ताः ' इतीटोऽनुदात्तत्वात् प्रत्ययस्वरः । उपसद्य । ' षद्लृ विशरणगत्यवसादनेषु ' । अस्य[8] क्त्वा । ' समासेऽनञ्पूर्वे क्त्वो ल्यप् ' इति ल्यप्[9] । लित्स्वरः । यक्षि । ' यज देवपूजासंगतिकरणदानेषु ' । लोटि ' बहुलं छन्दसि ' इति शपो लुक् । षत्वकत्वे । सिपो ह्यादेशाभावश्छान्दसः । अस्रेधता । स्रिधिः क्षयार्थः । ' तत्पुरुषे° ' इति नञ्स्वरः ॥

त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यन्त्यूतयो वि वाजाः ।
त्वं देहि सहस्रिणं रयिं नोऽद्रोघेण वचसा सत्यमग्ने ॥ ६ ॥

त्वत् । हि । पुत्र । सहसः । वि । पूर्वीः । देवस्य । यन्ति । ऊतयः । वि । वाजाः ।
त्वम् । देहि । सहस्रिणम् । रयिम् । नः । अद्रोघेण । वचसा । सत्यम् । अग्ने ॥ ६ ॥

---

१. त–मित्रः । २. त-ल-स–तस्मात्ते । ३. ल–यद्वृत्तयोगात् । ४. त-ल-स–सर्वेऽर्थाः । ५. च–यजनीयान्; त-न–' यजनीयान् देवान् ' नास्ति । ६. ख-ग-च-ज-ण–' यज ' नास्ति । ७. ख-ग-च-ज-ण-भ–पूजय हि । ८. त–इत्यस्य । ९. त–ल्यपि ।

सहसः पुत्र बलस्य पुत्र हे अग्ने देवस्य देवनशीलस्य कर्मकरणप्रवृत्तस्य[1] यजमानस्य त्वत् त्वत्तः सकाशात् पूर्वीः प्रभूताः ऊतयः विघ्नपरिहारेण कर्मपरिपालनादिरूपाः[2] रक्षाः वि यन्ति हि[3] विविधं गच्छन्ति खलु। तमिमं यजमानं प्राप्नुवन्ति। तथा वाजाः अन्नानि वि यन्ति। एनं यजमानं प्राप्नुवन्ति। किंच हे अग्ने त्वं सहस्रिणं सहस्रसंख्याकं रयिं धनं नः अस्मभ्यं देहि। तथा अद्रोघेण द्रोहरहितेन पापशून्येन वचसा वाक्येन युक्तं सत्यं सत्यशीलं सन्मार्गे प्रवर्तमानं पुत्रं च देहि प्रयच्छ[4] ॥ त्वत्। युष्मच्छब्दस्य[5] पञ्चम्येकवचने[5] त्वादेशः। ङसेः 'एकवचनस्य च' (पा. सू. ७. १. ३२) इत्यदादेशः। एकादेशस्वरः। पुत्र सहसः। 'परमपि छन्दसि' इति पराङ्गवद्भावात् द्वयोः सर्वानुदात्तत्वम्। देहि। 'डुदाञ् दाने' इत्यस्य लोटि 'घ्वसोरेद्धौ°' इति धातोरेत्वम् अभ्यासलोपश्च। निघातः। अद्रोघेण। 'द्रुह जिघांसायाम्'। घञ्। द्रोघः। घकारश्छान्दसः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

तुभ्यं॑ दक्ष कविक्रतो॒ यानी॒मा देव॒ मर्ता॑सो अध्व॒रे अक॑र्म।

त्वं विश्व॑स्य सु॒रथ॑स्य बोधि॒ सर्वं॒ तद॑ग्ने अमृत स्वदे॒ह ॥ ७ ॥

तुभ्य॑म्। द॒क्ष। क॒वि॒क्र॒तो॒ इति॑ कविऽक्रतो। यानि॑। इ॒मा। देव॑। मर्ता॑सः। अ॒ध्व॒रे। अक॑र्म।

त्वम्। विश्व॑स्य। सु॒ऽरथ॑स्य। बो॒धि॒। सर्व॑म्। तत्। अ॒ग्ने॒। अ॒मृ॒त॒। स्व॒द॒। इ॒ह ॥ ७ ॥

दक्ष समृद्धतया[6] सामर्थ्योपेत कविक्रतो अतीन्द्रियविषयप्रज्ञोपेत सर्वज्ञ देव[7] दीप्यमान[7] हे अग्ने मर्तासः यजमाना वयं तुभ्यं त्वदर्थं यानीमा यानि इमा[8] इमानि हवींषि अध्वरे यज्ञे अकर्म हविस्त्यागमकार्ष्म। त्वं च सुरथस्य शोभनयानोपेतस्य विश्वस्य सर्वस्य यजमानस्य बोधि गोपायिता भवामीति बुध्यस्व। हे अमृत[9] मरणधर्मरहित अग्ने इह अस्मिन्कर्मणि अस्माभिः दत्तं तत्[10] सर्वं हविः स्वद आस्वादय ॥ अकर्म[11]। 'डुकृञ् करणे' इत्यस्य लङि 'छन्दस्युभयथा' इति मस आर्धधातुकत्वेन ङित्त्वाभावाद्गुणः। यद्वृत्तयोगादनिघातः। बोधि। 'बुध अवगमने'। 'छन्दसि लुङ्°' इति लोडर्थे लुङ्। 'तिङां तिङो भवन्ति' इति सिपस्तादेशः। 'दीपजनबुध°' इत्यादिना कर्तरि चिण्। 'चिणो लुक्' इति तप्रत्ययस्य लोपः। अडभावश्छान्दसः। स्वद। 'स्वद आस्वादने'। अन्तर्भावितण्यर्थः। लोटि रूपम्। निघातः[11] ॥　　　　॥ १४ ॥

'वि पाजसा पृथुना' इति सप्तर्चं तृतीयं सूक्तं कतगोत्रोत्पन्नोत्कीलस्यार्षं[12] त्रैष्टुभमाग्नेयम्। अत्र[13] इयमनुक्रमणिका–'वि पाजसा कात्य उत्कीलस्तु' इति। कतगोत्रोत्पन्न उत्कीलो नाम ऋषिः। प्रातरनुवाकाश्विनशस्त्रयोः 'आहोता' इत्यादिसूक्तदशकं विनियुक्तं तत्रेदं च द्वितीयं सूक्तम्[13] ॥

---

१. त-ल–कर्मकरणे प्रवृत्तस्य। २. ख-ग-च–कर्मपरिपालनरूपाः। ३. ख-ग-च-ज-ण-न-प-फ-भ-स–'हि' नास्ति। ४. ख-ग-च-ज-ण-प-भ–प्रयच्छ हि। ५. ख-ग-च-ज-ण-भ-स–एकवचने। ६. त-न-ल–अतिसमृद्धतया। ७. प–'देव दीप्यमान' नास्ति। ८. त–'इमा' नास्ति। ९. ख-ग-च-ज-ण-फ–देव द्योतमान अमृतं। १०. त–'तत्' नास्ति। ११. ख-ग-च-ज-ण-न-फ–'अकर्म......निघातः' नास्ति। १२. त–'कतगोत्रोत्पन्नोत्कीलस्यार्षम्' नास्ति। १३. ख-ग-चज-ण-फ–'अत्र......सूक्तम्' नास्ति।

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥ १ ॥

वि । पाजसा । पृथुना । शोशुचानः । बाधस्व । द्विषः । रक्षसः । अमीवाः ।
सुऽशर्मणः । बृहतः । शर्मणि । स्याम् । अग्नेः । अहम् । सुऽहवस्य । प्रऽनीतौ ॥ १ ॥

उत्कीलः स्तौति। हे अग्ने पृथुना विस्तीर्णेन पाजसा तेजसा शोशुचानः अत्यर्थं दीप्यमानस्त्वं द्विषः कर्मानुष्ठानविघ्नकारिणः शत्रून्[1] वि बाधस्व विशेषेण नाशय। तथा अमीवाः रोगराहित्येन सामर्थ्योपेतानि रक्षसः । उभयत्र सुब्व्यत्ययः । तानि रक्षांसि बाधस्व । कर्मविघ्नकारीणि तान्यपनुदस्व । यद्वा अमीवाः आभिमुख्येनागमनपरागमनपराः पिशाचिकाश्च बाधस्व। सुशर्मणः स्वर्गादिलक्षणशोभनसुखहेतोः बृहतः महतः शत्रुविजयेन प्राप्तमहिम्नः सुहवस्य सुष्ठ्वाह्वानोपेतस्य अग्नेः शर्मणि अस्माकं सुखहेतौ प्रणीतौ उत्तरवेद्यादिस्थानेषु प्रणयने। प्रकर्षेण नयनं तत्र तत्रानीय प्रक्षेपः । एवंभूते तव प्रणयने[2] अहं स्याम् अग्निप्रणयनपूर्वके ऋत्वनुष्ठाने भवेयम् ॥ पाजसा । ' पा रक्षणे '। ' असुन् ' इत्यनुवृत्तौ ' पातेर्बले जुट् च ' इत्यसुन्। जुडागमः। नित्त्वादाद्युदात्तः । पृथुना। ' प्रथ प्रख्याने '। ' उत् ' इत्यनुवृत्तौ ' प्रथिम्रदिभ्रस्जां संप्रसारणम् ' इत्युप्रत्ययः । तत्संनियोगेन संप्रसारणम्। प्रत्ययस्वरः। शोशुचानः। ' शुच दीप्तौ ' इत्यस्य यङ्लुकि ' गुणो यङ्लुकोः ' इत्यभ्यासस्य गुणः । व्यत्ययेन शानच्। चर्करीतस्य अदादिवद्भावात् शपो लुक्। चित्वादन्तोदात्तत्वे प्राप्ते ' अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। बाधस्व। ' बाधृ लोडने[3] ' इत्यस्य लोटि रूपम् । पादादित्वात् निघाताभावः। सुशर्मणः। ' शॄ हिंसायाम् '। दुःखं शृणातीत्यौणादिको मनिन्। ' सोर्मनसी° ' इति उत्तरपदाद्युदात्तत्वम्। स्याम्। ' अस भुवि ' इत्यस्य लिङि ' यासुट् परस्मैपदेषु° ' इत्यादिना यासुट्। ' लिङः सलोपः° ' इति सलोपः। यासुटो ङित्त्वात् श्नसोरल्लोपः। निघातः ॥

त्वं नो अस्या उषसो व्युष्टौ त्वं सूर उदिते बोधि गोपाः ।
जन्मेव नित्यं तनयं जुषस्व स्तोमं मे अग्ने तन्वा सुजात ॥ २ ॥

त्वम् । नः । अस्याः । उषसः । विऽउष्टौ । त्वम् । सूरे । उत्ऽइते । बोधि । गोपाः ।
जन्मऽइव । नित्यम् । तनयम् । जुषस्व । स्तोमम् । मे । अग्ने । तन्वा । सुऽजात ॥२॥

हे अग्ने त्वम् अस्याः अद्य वर्तमानायाः उषसो व्युष्टौ व्युच्छने प्रकाशने सूरे सूर्ये उदिते च सति नः अग्निहोत्रादिकर्मणि प्रवृत्तानामस्माकं गोपाः गोपायिता भवामीति बोधि बुध्यस्व। केचित्सूर्योदयात्प्रागग्निहोत्रं जुह्वति केचित् उदिते तस्मिञ्जुह्वति। तेषामुभयेषां पालयिता भवेत्यर्थः। तन्वा सुजात ज्वालापरिवृतेन शरीरेण सुष्ठु जात देदीप्यमान। अथवा तन्वा सुजातः आत्मनैव सुजातः स्वयंभूरित्यर्थः। तादृशस्त्वं मे मदीयं स्तोमं त्रिवृत्पञ्चदशादिलक्षणं स्तोत्रं

---

१. ख-ग-ज-ण—तान् शत्रून्। २. ज-ण—प्रणयनम्। ३. त—विलोडने।

नित्यं जुषस्व । तत्र दृष्टान्तः । जन्मेव इति । यथा जन्म जनकः पिता औरसं तनयं पुत्रं परिष्वङ्गादिभिः सेवते तद्वदस्माभिः क्रियमाणमिमं सेवस्व ॥ व्युष्टौ । ' उछी विवासे '। तमो विवास्यते अनया इति करणे क्तिन् । व्रश्चादिना षत्वम् । ' तादौ च निति कृत्यतौ ' इति गतेः प्रकृतिस्वरत्वम् । गोपाः । ' गुपू रक्षणे ' । ' गुपूधूपविच्छिपणिपनिभ्यः° ' इत्यायप्रत्ययः । तदन्ताद्धातोः क्विप् । ' अतो लोपः ' इत्यकारलोपः । ' लोपो व्योः° ' इति यलोपः । धातुस्वरः । जुषस्व । ' जुषी प्रीतिसेवनयोः ' इत्यस्य लोटि रूपम् । निघातः ॥

त्वं नृचक्षा वृषभानु पूर्वीः कृष्णास्वग्ने अरुषो वि भाहि ।
वसो नेषि च पर्षि चात्यंहः कृधी नो राय उशिजो यविष्ठ ॥ ३ ॥

त्वम् । नृऽचक्षाः । वृषभ । अनु । पूर्वीः । कृष्णासु । अग्ने । अरुषः । वि । भाहि ।
वसो इति । नेषि । च । पर्षि । च । अति । अंहः । कृधि । नः । राये । उशिजः । यविष्ठ ॥३॥

वृषभ कामानां वर्षितर्हे अग्ने नृचक्षाः नृणां मनुष्याणां शुभाशुभकर्मणोर्द्रष्टा कृष्णासु रात्रिषु अरुषः आरोचमानः त्वम् अनु अनुक्रमेण पूर्वीः बह्वीर्ज्वालाः वि भाहि विशेषेण प्रकाशय । वसो सर्वस्य प्रकाशप्रदानेन स्वस्वस्थानेषु वासयितरग्ने त्वं नः अस्मान् नेषि कर्मानुरूपफलानि[1] च प्रापय । अंहः अस्माकं दारिद्र्यलक्षणं पापम् अति पर्षि च अतिपारय । निवारय इति यावत् । किंच यविष्ठ युवतम हे अग्ने नः अस्मान् राये धनाय उशिजः कामयमानान् कृधि कुरु । अभिलषितफलप्रदानेन[2] प्राप्तकामान्कुर्वित्यर्थः ॥ नृचक्षाः । ' चक्षिङ् व्यक्तायां वाचि '। अयमत्र दर्शने वर्तते । ' असुन् ' इत्यनुवृत्तौ ' चक्षेर्बहुलं शिच ' इत्यसुन् । शिद्भावात् ख्याञादेशाभावः । कृदुत्तरपदप्रकृतिस्वरः । वृषभ । ' वृषु सेचने '। ' अभच् ' इत्यनुवृत्तौ ' ऋषिवृषिभ्यां कित् ' इत्यभच् । कित्त्वाद्गुणाभावः । अपादादित्वान्निघातः । पूर्वीः । पुरुशब्दस्य ' वोतो गुणवचनात् ' इति ङीप् । आद्यस्योकारस्य दीर्घश्छान्दसः । प्रत्ययस्वरेणान्तोदात्तः । भाहि । ' भा[3] दीप्तौ[3] ' । अन्तर्भावितण्यर्थः । लोटि रूपम् । वसौ । ' वस निवासे '। ' उः ' इत्यनुवृत्तौ ' शॄस्वृस्निहित्रप्यसिवसि° ' इत्यादिना उप्रत्ययः । पादादित्वान्न निघातः । षाष्ठिकमाद्युदात्तत्वम् । नेषि । ' णीञ् प्रापणे '। छन्दसि लोडर्थे लट् । ' बहुलं छन्दसि ' इति शपो लुक् । ' आमन्त्रितं पूर्वमविद्यमानवत् ' इत्यामन्त्रितस्याविद्यमानवत्त्वेन पादादित्वान्न निघातः । पर्षि । ' पॄ पालनपूरणयोः '। ' चादिषु च ' इति न निघातः । कृधि । ' डुकृञ् करणे ' इत्यस्य लोटि ' सेर्ह्यपिच्च ' इति हिरादेशः । तस्य ' श्रुशृणुपॄकृवृभ्यश्छन्दसि ' इति धिरादेशः । ' बहुलं छन्दसि ' इति उप्रत्ययस्य लुक् । पादादित्वान्न निघातः । राये । ' रा[4] दाने[4] ' । ' रातेर्डैः ' इति डैप्रत्ययः । ' ऊडिदम्° ' इत्यादिना विभक्तेरुदात्तत्वम् । उशिजः । ' वश कान्तौ ' । ' वशेः किच्च ' इतीजिप्रत्ययः । कित्त्वात्संप्रसारणम् । प्रत्ययस्वरः । यविष्ठ । युवशब्दादतिशायने इष्ठन्प्रत्ययः । ' स्थूलदूरयुव° ' इत्यादिना यणादेः[5] परस्य[5] लोपः पूर्वस्य च गुणः । आमन्त्रितत्वान्निघातः ॥

---

१. ज-ण-प–कर्मफलानि । २. घ–अभिमतफलप्रदानेन । ३. ख-ग-च-ज-ण-न-भ–' भा दीप्तौ ' नास्ति ।
४. ख-ग-च-ज-ण-न-भ–' रा दाने ' नास्ति । ५. त–यणादिपरस्य ।

अषाळ्हो अग्ने वृषभो दिदीहि पुरो विश्वाः सौभगा संजिगीवान् ।
यज्ञस्य नेता प्रथमस्य पायोर्जातवेदो बृहतः सुप्रणीते ॥ ४ ॥

अषाळ्हः । अग्ने । वृषभः । दिदीहि । पुरः । विश्वाः । सौभगा । सम्ऽजिगीवान् ।
यज्ञस्य । नेता । प्रथमस्य । पायोः । जातऽवेदः । बृहतः । सुऽप्रनीते ॥ ४ ॥

हे अग्ने अषाळ्हः शत्रुभिरसोढोऽपराजितः । स्वयं शत्रूञ्जयतीत्यर्थः । वृषभः कामानां वर्षयिता एवंभूतस्त्वं विश्वाः सर्वाः पुरः शत्रूणां पुरीः सौभगा तत्रस्थानि शोभनान्युत्तमानि धनानि च संजिगीवान् सम्यक् जयन् दिदीहि सर्वतो ज्वालाभिर्दीप्यस्व । सुप्रणीते शोभनप्रणयने जातवेदः जातप्रज्ञ हे अग्ने बृहतः उपदिष्टातिदिष्टद्विविधेतिकर्तव्यताकलापेन[1] महतः पायोः तत्फलप्रदानेन रक्षकस्य प्रथमस्य मुख्यतया प्रथमं क्रियमाणस्य । 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति श्रुतेः । तादृशस्य ज्योतिष्टोमाख्यस्य[2] यज्ञस्य[2] नेता हविर्वहनदेवताह्वानादिक्रियाया निर्वाहको भव ॥ अषाळ्हः । 'षह मर्षणे' अस्य निष्ठायां 'हो ढः' इति ढकारः । 'झषस्तथोर्धोऽधः' इति क्तस्य धकारः[3] । ष्टुत्वेन ढः । ढलोपे कृते 'ढ्रलोपे पूर्वस्य दीर्घः°' इति दीर्घः । ओत्वाभावश्छान्दसः । 'सहेः साडः सः' इति सकारस्य मूर्धन्यादेशः । अव्ययपूर्वपदप्रकृतिस्वरे नञ्स्वरः । वृषभः । 'वृष सेचने' । 'ऋषिवृषिभ्यां कित्' इत्यभच् । चित्स्वरः । दिदीहि । दिवु क्रीडादौ इत्यस्य यङ्लुकि लोटो[4] मध्यमैकवचने[4] 'संज्ञापूर्वको विधिरनित्यः' इत्यभ्यासस्य गुणाभावः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'पूर्वत्रासिद्धम्' इत्यस्याप्रवृत्तौ परत्वात् 'हलि च' इति दीर्घत्वम् । पश्चात् वलोपः । सौभगा । 'सुभगान्मन्त्रे[5]' इत्युद्गात्रादिषु पाठाद्भावार्थेऽञ् । 'हृद्भगसिन्ध्वन्ते°' इति पूर्वपदस्य वृद्धिः । उत्तरपदस्य[6] वृद्धिर्न भवति सर्वविधीनां छन्दसि विकल्पितत्वात् । 'सुपां सुलुक्°' इति सुपो डादेशः । तेन च सौभाग्येन धनान्युपलक्ष्यन्ते । ञित्त्वादाद्युदात्तः । संजिगीवान् । 'जि जये' । छन्दसि लिट् । तस्य क्वसुः । 'सन्लिटोर्जेः' इति कवर्गादेशः । प्रत्ययस्वरः । दीर्घश्छान्दसः । पायोः । 'पा रक्षणे' । 'कृवापाजिमि°' इत्यादिना उण्प्रत्ययः । 'आतो युक् चिण्कृतोः' इति युगागमः । प्रत्ययस्वरः ॥

अच्छिद्रा शर्म जरितः पुरूणि देवाँ अच्छा दीद्यानः सुमेधाः ।
रथो न सस्निरभि वक्षि वाजमग्ने त्वं रोदसी नः सुमेके ॥ ५ ॥

अच्छिद्रा । शर्म । जरितरिति । पुरूणि । देवान् । अच्छ । दीद्यानः । सुऽमेधाः ।
रथः । न । सस्निः । अभि । वक्षि । वाजम् ।
अग्ने । त्वम् । रोदसी इति । नः । सुमेके इति सुऽमेके ॥ ५ ॥

---

१. ख-ग-च-ज-ण-°कर्तव्यकलापेन । २. ख-ग-च-ज-ण-न-भ-ज्योतिष्टोमस्य । ३. त-धः । ४. त-लोण्मध्यमैकवचने । ५. त-न-भ-सुभगमन्त्रे । ६. ख-ग-च-ज-ण-फ-उत्तरपदस्य च ।

जरितः सर्वस्य जगतोऽन्तकाले जरयितर्हे अग्ने सुमेधाः शोभनप्रज्ञोपेतः दीद्यानः स्वतेजसा प्रकाशमानस्त्वं देवान् यष्टव्यान् देवान् अच्छ अभिलक्ष्य तदुद्देशेन क्रियमाणानि पुरूणि शर्म स्वर्गादिसुखसाधनभूतानि अग्निहोत्रादीनि कर्माणि अच्छिद्रा अच्छिद्राणि कुरु । कर्तृकर्मसाधनवैकल्यराहित्येन संपूर्णानि कुरु । किंच हे अग्ने त्वं सस्निः[1] संनिरुद्धः स्वकीयं सततगमनं संनिरुध्य हविष्प्रक्षेपपर्यन्तमत्र वर्तमानस्त्वं वाजं नः अस्माभिर्दीयमानं हविर्लक्षणमन्नम् अभि देवानभिलक्ष्य वक्षि वह प्रापय । तत्र दृष्टान्तः । रथो न रथ इव । यथा रथो धान्यादिकमूढ्वा[2] तत्स्वामिनं प्रापयति तद्वत् । किंच त्वम् अग्ने[3] रोदसी द्यावापृथिव्यौ सुमेके शोभनरूपोपेते स्वकीयप्रभाभिः प्रकाशयुक्ते कुरु ॥ दीद्यानः । दीदेतिर्दीप्तिकर्मा । तस्मात् शानच् । ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । सुमेधाः । ‘ नित्यमसिच् प्रजामेधयोः ’ इत्यसिच्प्रत्ययः । बहुव्रीहौ ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तत्वम् । सस्निः[4] । ‘ षस[5] स्वप्ने[5] ’ । अस्मादौणादिको निन् । नित्त्वादाद्युदात्तत्वम्[6] । वक्षि । ‘ वह प्रापणे ’ अस्य लोटः सिपि ‘ बहुलं छन्दसि ’ इति शपो लुक् । ढत्वकत्वे । हिरादेशश्छान्दसत्वान्न भवति । निघातः[7]॥

प्र पीपय वृषभ जिन्व वाजानग्ने त्वं रोदसी नः सुदोघे ।
देवेभिर्देव सुरुचा रुचानो मा नो मर्तस्य दुर्मतिः परि ष्ठात् ॥ ६ ॥

प्र । पीपय । वृषभ । जिन्व । वाजान् । अग्ने । त्वम् । रोदसी इति । नः । सुदोघे इति सुऽदोघे ।
देवेभिः । देव । सुऽरुचा । रुचानः । मा । नः । मर्तस्य । दुःऽमतिः । परि । स्थात् ॥६॥

वृषभ कामानां वर्षितर्हे अग्ने त्वं नः अस्माकं प्र पीपय अभिलषितफलानि वर्धय[8] । वाजान् अन्नानि च जिन्व प्रयच्छ । किंच देव दीप्यमान हे अग्ने सुरुचा शोभनदीप्त्या रुचानः शोभमानस्त्वं देवेभिः यजनीयदेवैः सहितोऽस्माकं रोदसी इमे द्यावापृथिव्यौ सुदोघे वृष्टिद्वाराभिमतफलप्रदानेन सुष्ठु दोग्ध्र्यौ कुरु । तथा मर्तस्य शत्रोः[9] दुर्मतिः दुष्टबुद्धिप्रयुक्तोऽभिभवः नः अस्मान् मा परि ष्ठात् परितो मा गच्छतु ॥ पीपय । ‘ पा पाने ’ इत्येतस्य ण्यन्तस्य लुङि चङि द्विर्वचनाभ्यासदीर्घौ । सिपो लोपश्छान्दसः । जिन्व । ‘ इवि जिवि धिवि प्रीणनार्थाः ’ । एतस्य लोटि इदित्त्वान्नुम् । शप् । ‘अतो हेः’ इति हेर्लुक् । आमन्त्रितस्याविद्यमानवत्त्वेन अतिङ उत्तरत्वाभावात्[10] न निघातः । सुदोघे । दोहनं दोघः । भावे घञ् । कुत्वं छान्दसम् । ‘ आद्युदात्तं द्व्यच् छन्दसि ’ इत्युत्तरपदाद्युदात्तत्वम् । दुर्मतिः । ‘मनु अवबोधने ’ । मन्यते इति मतिर्बुद्धिः । कर्तरि क्तिच् । दुष्टा बुद्धिः । अव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

---

१. त–सस्निः संभक्ता संतर्जनीयो वा । यद्वा सास्निः संस्नातस्त्वम् । २. त–गन्त्र्यादिकः धनादिकमूढ्वा । ३. त–इमे । ४. त–सस्निः । सनतेः स्नातेर्वा किन् । लिड्वद्भावाद्द्विवचनम् । ५. स–षच समवाये । ६. त–नित्त्वादाद्युदात्तः । ७. ख-ग-च-ज-ण-न-भ-स–‘ निघातः ’ नास्ति । ८. त–प्रवर्धय । ९. त–मनुष्यस्यास्य । १०. ख-ग-च-ज-ण–उत्तरत्वाभावेन ।

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।

स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ७ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् । हवमानाय । साध ।

स्यात् । नः । सूनुः । तनयः । विजाऽवा । अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥७॥

'उतो पितृभ्याम्' इत्यस्मिन् वर्गे व्याख्यातेयम् ऋक् ॥ ॥ १५ ॥

'अयमग्निः' इति चतुर्थं षडृचं सूक्तमाग्नेयम् । अत्रानुक्रमणिका[1]—'अयमग्निः षट् प्रागाथम्' इति । 'उत्कीलस्तु' इति तुशब्दप्रयोगात् अस्यापि सूक्तस्य स एव ऋषिः । अत्र विषमसंख्यानामृचां बृहती छन्दस्तृतीयपादस्य द्वादशाक्षरत्वात् । समसंख्यानां तु सतोबृहती प्रथमतृतीयपादयोर्द्वादशाक्षरत्वात् । उक्तं च—'अयुजौ जागतौ सतोबृहती' ( अनु. ८. ४ ) इति ॥

अयमग्निः सुवीर्यस्येशे महः सौभगस्य ।

राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ १ ॥

अयम् । अग्निः । सुऽवीर्यस्य । ईशे । महः । सौभगस्य ।

रायः । ईशे । सुऽअपत्यस्य । गोऽमतः । ईशे । वृत्रऽहथानाम् ॥ १ ॥

उत्कीलः स्तौति । ᵛअयं यजनीयत्वेन[2] अङ्गुल्या निर्दिश्यमानः ᵛअग्निः ᵛसुवीर्यस्य शोभनसामर्थ्योपेतस्य ᵛमहः महतः ᵛसौभगस्य सौभाग्यस्य ᵛईशे ईष्टे । ईश्वरो भवति । सर्वस्य बलारोग्यहेतुतया सौभाग्यकारित्वात् । तथा ᵛगोमतः गवादिपशुयुक्तस्य ᵛस्वपत्यस्य शोभनापत्यस्य ᵛरायः धनस्य ᵛईशे ईष्टे । पुत्रपश्वाद्युद्देशेन क्रियमाणकर्मफलसंपादकत्वेन तत्स्वामित्वात्[3] । तथैवंभूतोऽग्निः ᵛवृत्रहथानाम् । हननं हथः । शत्रुभूतपापविनाशनानामपि[4] ᵛईशे ईष्टे । त्वयि समर्पितकर्मणामस्माकं त्वत्प्रसादात् पापक्षयो भवतीति तस्यापि[5] स्वामी[5] ॥ ईशे । 'ईश ऐश्वर्ये' । अदादित्वाच्छपो लुक् । 'लोपस्त आत्मनेपदेषु' इति तलोपः । पादादित्वादनिघातः । सौभगस्य । सुभगस्य भावः सौभगम् । उद्गात्रादित्वादञ् । सर्वविधीनां छन्दसि विकल्पितत्वात् अत्र 'हृद्भग°' इत्यादिना प्राप्ताया उत्तरपदवृद्धेरभावः । रायः । 'ऊडिदम्°' इत्यादिना विभक्तेरुदात्तत्वम् । ईशे । निघातः । स्वपत्यस्य । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । वृत्रहथानाम् । 'वृतु वर्तने' । अस्मात् 'स्फायितञ्चिवञ्चि°[6]' इत्यादिना रक्प्रत्ययः । कित्त्वादगुणः । 'हन हिंसागत्योः' इत्यस्मात् 'हनिकुषिनीरमिकाशिभ्यः°' इति क्थन् । कित्त्वादनुनासिकलोपः । कृदुत्तरपदप्रकृतिस्वरः[7] ॥

---

१. ल—तत्रानुक्रमणिका । २. च—यजमानेन । ३. ख-ग-च-ज-ण-न-भ—'तत्स्वामित्वात्' नास्ति । ४. घ-त-न-प-भ-ल-स—°विनाशानामपि । ५. ख-ग-च-ज-णं—तत्स्वामी । ६. ख-ग-च-ज-ण-स—'स्फायितञ्चि°' । ७. त—कृदुत्तरपदप्रकृतिस्वरः । सुवीर्येत्यादिना अधीगर्थे(र्थे)त्यादिना कर्मणि षष्ठी ।

इमं नरो मरुतः सश्चता वृधं यस्मिन्रायः शेवृधासः ।
अभि ये सन्ति पृतनासु दूढ्यो विश्वाहा शत्रुमादभुः ॥ २ ॥

इमम् । नरः । मरुतः । सश्चत । वृधम् । यस्मिन् । रायः । शेऽवृधासः ।
अभि । ये । सन्ति । पृतनासु । दुःऽध्यः । विश्वाहा । शत्रुम् । आऽदभुः ॥ २ ॥

हे नरः कर्मणां नेतारो हे मरुतः देवा यूयं वृधं पशुपुत्रादिवर्धकम् इमम् अस्माभिः स्तूयमानम् इमम्[1] अग्निं सश्चत हविरानयनार्थं सेवध्वम्। कीदृशोऽग्निः[2] इत्याकाङ्क्षायामाह । यस्मिन् देवे रायः धनानि शेवृधासः दानभोगाद्युपयोगेन सुखस्य वर्धकानि अभि[3] अभितः[3] सन्ति । ये[4] च देवाः पृतनासु सेनासु तदुपलक्षितेषु संग्रामेषु दूढ्यः दुष्टध्यानोपेतानात्मनो हिंसकाञ्छत्रून् अभि सन्ति अभिभवन्ति। ये च विश्वाहा विश्वान्यहानि यस्मिन्नखण्डे काले तस्मिन् सर्वदा शत्रुम् आत्मनो द्वेष्टारम्[4] आदभुः आदभ्नुवन्ति हिंसन्ति । एवंभूतास्ते सर्वे मरुतो यूयं तमिममग्निं सेवध्वमिति पूर्वेणान्वयः॥ सश्चत । 'षस्ज संगे' इत्यस्मात् लोटि रूपम्। जकारस्य व्यत्ययेन चकारः । निघातः । शेवृधासः । वर्णव्यत्ययः । शं सुखं वर्धयतीति[5] । 'असुन्' इत्यसुन् । गुणाभावश्छान्दसः। 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इत्यौणादिकसूत्रात् पूर्वपदप्रकृतिस्वरः । सन्ति । 'अस भुवि' । दूढ्यः । 'ध्यै चिन्तायाम्' । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । दृशिग्रहणात्संप्रसारणम्। 'दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेः ष्टुत्वं च' इति उत्वढत्वे । 'छन्दस्युभयथा' इति शलीयङादेशं बाधित्वा यणादेशः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । शसः सुप्त्वात् अनुदात्तत्वे कृते 'उदात्तस्वरितयोर्यणः०' इति शसः स्वरितत्वम् । आदभुः । 'दम्भु दम्भे' । अस्माल्लिट्युसि रूपम् । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनामुपसंख्यानम्' इति किद्वद्भावादनुनासिकलोपः। 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (का. ६. १. ८) इति द्विर्वचनाभावः । यद्वृत्तयोगादनिघातः । 'सतिशिष्टस्वरो बलीयान्' इति प्रत्ययस्वरः ॥

स त्वं नो रायः शिशीहि मीढ्वो अग्ने सुवीर्यस्य ।
तुविद्युम्न वर्षिष्ठस्य प्रजावतोऽनमीवस्य शुष्मिणः ॥ ३ ॥

सः । त्वम् । नः । रायः । शिशीहि । मीढ्वः । अग्ने । सुऽवीर्यस्य ।
तुविऽद्युम्न । वर्षिष्ठस्य । प्रजाऽवतः । अनमीवस्य । शुष्मिणः ॥ ३ ॥

हे अग्ने सः तथाविधः त्वं नः अस्मान् रायः । तृतीयार्थे षष्ठी । धनेन शिशीहि तीक्ष्णान् कुरु । अस्मान् धनसमृद्धान् कुरु । किंच तुविद्युम्न बहुधनोपेत अत एव मीढ्वः मीढ्वन् कामानां

---

१. त-प-ल-'इमम्' नास्ति । २. त-कीदृशोऽग्निः कीदृशास्ते मरुतः । ३. न-ल-'अभि अभितः' नास्ति । ४. ख-ग-घ-च-ज-ण-प-भ-किंच विश्वाः सर्वेष्वहःसु शत्रुं नाशयतीति शेषः। कीदृशास्ते मरुतः सन्ति (ज-ण-'सन्ति' नास्ति) ये च देवाः (घ-प-'च देवाः' नास्ति) पृतनासु सेनासु तद्रक्षितेषु (घ-तदुपक्षितेषु; प-तदुक्षितेषु) संग्रामेषु दूढ्यः दुष्टध्यानोपेतान् आत्मनो द्वेष्टॄन् (घ-प-हिंसकान्)। ५. त-वर्धयन्तीति ।

सेक्तः हे अग्ने त्वं vवर्षिष्ठस्य वृद्धतमस्य प्रभूतस्य vप्रजावतः अपत्ययुक्तस्य vअनमीवस्य आरोग्यहेतोः[१] अत एव vशुष्मिणः बलहेतोः vसुवीर्यस्य शोभनसामर्थ्ययुक्तस्य अन्नस्य[२] संबन्धिनोऽस्मान् कुरु । यद्वा । एतत्सर्वं रैविशेषणतया[३] योजनीयम् । एताः षष्ठ्यस्तृतीयार्थे । एतदुक्तं भवति । धनेन अपत्यारोग्यशरीरबलोपेतेन अन्नेन[४] च[५] अस्मान् समृद्धान् कुर्विति ॥ शिशीहि । ' शिञ् निशाने ' इत्यस्य लोटि ' बहुलं छन्दसि ' इति विकरणस्य श्लुः। ' वा छन्दसि ' इति विकल्पेन ङित्त्वात् ' अङितश्च' इति हेर्धिरादेशो न भवति । दीर्घश्छान्दसः । निघातः । मीढ्वः । ' मिह सेचने ' इत्यस्य क्वसौ ' दाश्वान्साह्वान्मीढ्वांश्च ' इति निपातनात् ढत्वम्[६] उपधादीर्घश्च । संबुद्धौ नुमि कृते हल्ङ्यादिलोपे संयोगान्तलोपे च कृते ' मतुवसो रुः संबुद्धौ छन्दसि ' इति रुः । पादादित्वादाद्युदात्तः ॥

चाक्रिर्यो विश्वा भुवनाभि सासहिश्चाक्रिर्देवेष्वा दुवः ।
आ देवेषु यतत आ सुवीर्य आ शंस उत नृणाम् ॥ ४ ॥

चक्रिः । यः । विश्वा । भुवना । अभि । ससहिः । चक्रिः । देवेषु । आ । दुवः ।
आ । देवेषु । यतते । आ । सुऽवीर्ये । आ । शंसे । उत । नृणाम् ॥ ४ ॥

vयः अयमग्निः vचक्रिः सर्वस्य जगतः कर्ता स च vविश्वा vभुवना विश्वानि भुवनानि vअभि अभिविशति । ' तत्सृष्ट्वा तदेवानुप्राविशत् ' ( तै. उ. २. ६ ) इति श्रुतेः । vचक्रिः कर्ता सोऽग्निः vसासहिः पुरोडाशादिहविर्भारसहनशीलः[७] सन् vदुवः अस्माभिर्दत्तं हविः vदेवेषु यजनीयदेवेषु vआ आनयति । स चाग्निः vदेवेषु देवनशीलेषु स्तोतृषु vआ vयतते आभिमुख्येन गच्छति । यद्वा[८] विश्वानि भुवनानि चक्रिः अभिसासहिरभिभवनशीलः । आकारश्चार्थे । देवेषु च दुवः परिचरणं चक्रिः कर्ता । यः एवंभूतः स आयतते इत्यादि पूर्ववत्[९] । vउत[९] अपि च vनृणां यज्ञस्य नेतृणां शस्त्रिणां[१०] vशंसे । शंसनं शंसः शस्त्रम् । तस्मिन् सोऽग्निः vआ आगच्छति । तथा नृणां मनुष्याणां vसुवीर्ये शोभनवीर्योपेतयुद्धे[११] तद्रक्षणार्थम् vआ आगच्छति । अनेनाग्नेः सर्वव्यापकता प्रतिपादिता भवति ॥ चक्रिः । ' डुकृञ् करणे ' । ' आदृगमहनजनः किकिनौ लिट् च ' इति किन्प्रत्ययः । लिड्वद्भावात् द्विर्वचनम् । कित्त्वात् गुणाभावः । नित्स्वरः । सासहिः । ' षह मर्षणे ' इत्यस्मात् यङन्तात् ' सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ ' ( पा. म. ३.२.१७१.४ ) इति किः । प्रत्ययस्वरः । यतते । ' यती प्रयत्ने ' । यद्वृत्तयोगादनिघातः । शंसे । भावे घञ् । ञित्स्वरः । नृणाम् । ' नृ च ' इति विकल्पेन दीर्घाभावः । ' नामन्यतरस्याम् ' इति विभक्तेरुदात्तत्वम् । विश्वेत्यादिषु[१२] ' न लोकाव्यय० ' इति षष्ठीप्रतिषेधः[१२] ॥

---

१. ख-ग-च-ज-ण—अरोगस्य हेतोः; ल—आरोग्यस्य हेतोः । २. घ-त—अन्नयुक्तस्य । ३. ल—विशेषणतया; स—रायः विशेषणतया । ४. त—' अन्नेन ' नास्ति । ५. च—वा; ल—' च ' नास्ति । ६. ख-ग-ज-ण-न-भ—अढ्तिवम् । ७. त—°हविर्भागस्य सहनशीलः । ८. ख-ग-च-ज-ण-न-प-फ-भ-स—' यद्वा ...... पूर्ववत् ' नास्ति ९. त—स चाग्निर्देवेषु देवनशीलेषु स्तोतृष्वायतते । उत । १०. त—'शस्त्रिणाम् ' नास्ति । ११. त—शोभनवीर्योपेते युद्धे । १२. ख-ग-च-ज-ण-न-फ-भ-ल-स—' विश्वेत्यादिषु...षष्ठीप्रतिषेधः ' नास्ति ।

मा नो अग्नेऽमतये मावीरतायै रीरधः ।
मागोतायै सहसस्पुत्र मा निदेऽप द्वेषांस्या कृधि ॥ ५ ॥

मा । नः । अग्ने । अमतये । मा । अवीरतायै । रीरधः ।
मा । अगोतायै । सहसः । पुत्र । मा । निदे । अप । द्वेषांसि । आ । कृधि ॥ ५ ॥

सहसस्पुत्र बलस्य पुत्र हे अग्ने त्वं नः अस्मान् अमतये शत्रुभूताय[1] दारिद्र्याय मा रीरधः संसिद्धान् विषयभूतान् मा कुरु । तथा अवीरतायै अपुत्रतायै । *वीरशब्देन[2] तद्वान् लक्ष्यते । वीरस्य भावो वीरता । न वीरता अवीरता । तस्यै । +अस्मान् अपुत्रताया विषयभूतान्[2] मा कुरु । तथा त्वमस्मान्+ अगोतायै गवादिपशुसंपत्त्यभावस्य विषयभूतान् मा कुरु । किंच अस्मान् निदे निन्दाया विषयभूतान् मा[3] कुरु[3] मा विधेहि । तथा त्वं द्वेषांसि कर्मापराधनिमित्तान्[4] द्वेषांश्च[5] अप आ कृधि अपाकुरु निवारय ॥ अवीरतायै । वीरा अस्य सन्तीति वीरः । अर्शआदित्वादच् । तस्य भावो वीरता । 'तस्य[6] भावस्त्वतलौ' इति तल्[6] । न वीरता अवीरता । नञः स्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' इति नञुत्तरस्य[7] आदेरुदात्तता । रीरधः । 'राध साध संसिद्धौ' । अस्माण्ण्यन्ताच्छान्दसे लुङि 'णिश्रिद्रुस्रुभ्यः°' इति च्लेश्चङादेशः । 'णेरनिटि' इति णिलोपः । 'णौ चङ्युपधायाः°' इत्युपधाह्रस्वः । 'चङि' इति द्विर्वचनम् । 'सन्वल्लघुनि चङ्परे' इति सन्वद्भावः । 'सन्यतः' इत्यभ्यासस्येत्वम् । तस्य 'दीर्घो लघोः' इति दीर्घः । 'न माङ्योगे' इत्यडभावः । निघातः । अगोतायै । गोशब्देन गोमान् लक्ष्यते । न गौरगौः । अगोर्भावोऽगोता । 'तस्य भावः°' इति तल् । लित्स्वरः । सहसस्पुत्र । 'सुबामन्त्रिते पराङ्गवत्स्वरे[8]' इति पराङ्गवद्भावात् सहसस्पुत्र इत्येतयोः सर्वानुदात्तत्वम् । निदे । 'णिदि कुत्सायाम्' । अस्मात्संपदादित्वाद्भावे क्विप् । 'अनित्यमागमशासनम्' इति नुमभावः । 'सावेकाचः°' इति विभक्तेरुदात्तता ॥

शग्धि वाजस्य सुभग प्रजावतोऽग्ने बृहतो अध्वरे ।
सं राया भूयसा सृज मयोभुना तुविद्युम्न यशस्वता ॥ ६ ॥

शग्धि । वाजस्य । सुऽभग । प्रजाऽवतः । अग्ने । बृहतः । अध्वरे ।
सम् । राया । भूयसा । सृज । मयःऽभुना । तुविऽद्युम्न । यशस्वता ॥ ६ ॥

सुभग शोभनधनोपेत हे अग्ने त्वम् अध्वरे अस्माभिः क्रियमाणेऽस्मिन् अग्निष्टोमादिकर्मणि बृहतः महतः प्रभूतस्य प्रजावतः अपत्योपेतस्य वाजस्य अन्नस्य शग्धि ईशिषे । तादृशमन्नमस्मिन्

---

१. ग-च-ज-ण-न-ल–शत्रूभूताय । *ख-ग-च-ज-ण-भ-स–अवीरशब्देन । २. ख-ग-च-ज-ण-प-फ-भ–'वीरशब्देन...विषयभूतान्' नास्ति । +त-ल–'अस्मान्......अस्मान्' नास्ति । ३. त–'मा कुरु' नास्ति । ४. ख-ग-च-ज-ण-भ-स–कर्मापरोधनिमित्तान् । ५. ख-ग-घ-च-ज-ण-भ–द्वेष्यान् च; त-न–द्वेषान् । ६. ख-ग-च-ज-ण-भ–तस्य भावे तल् । ७. ख-ग-त-न-भ–नञ उत्तरस्य । ८. ख-ग-च-ज-ण-न-भ-स–'पराङ्गवत्स्वरे' नास्ति ।

अध्वरेऽस्मभ्यं देहि। किंच ᵛतुविद्युम्न बहुधनयुक्त हे अग्ने ᵛमयोभुना। मय इति सुखनाम 'शेवृधं मयः' (नि. ३. ६. ७) इति तन्नामसु पाठात्। तद्दानाद्युपयोगहेतुतया[1] सुखस्य भावकेन अत एव ᵛयशस्वता कीर्तिमता ᵛभूयसा अतिप्रभूतेन ᵛराया एवंविधेन धनेनास्मान् ᵛसं ᵛसृज संयोजय ॥ शग्धि। 'शक्लृ शक्तौ' इत्यस्य लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'हुझल्भ्यो हेर्धिः' इति धिरादेशः। हेरपित्त्वादुदात्तता। राया। 'ऊडिदम्॰' इति विभक्तेरुदात्तत्वम्। भूयसा। बहुशब्दात् 'द्विवचनविभज्योपपदे॰' इतीयसुन्। 'बहोर्लोपो भू च बहोः' इतीयसुनः सर्वस्य लोपे प्राप्ते 'आदेः परस्य' (पा. सू. १.१.५४) इति प्रत्ययस्यादेर्लोपो बहोः भूरादेशश्च[2]। नित्स्वरः। सृज। 'सृज विसर्गे'। तुदादिः। लोटि रूपम्। निघातः। मयोभुना। 'भू[3] सत्तायाम्' इत्यस्मात्[3] औणादिको डुप्रत्ययः। तुविद्युम्न। पादादित्वादनिघातः॥ ॥ १६ ॥

'समिध्यमानः' इति पञ्चर्चं पञ्चमं सूक्तमाग्नेयं त्रैष्टुभं वैश्वामित्रस्य कतस्यार्षम्। तदुक्तं— 'समिध्यमानः पञ्च कतो वैश्वामित्रस्तु' इति। 'आ होता' इत्यादिसूक्तदशकस्य विनियोग उक्तः प्रातरनुवाकाश्विनशस्त्रयोः इति। तत्रेदं चतुर्थम्। वाजपेये बार्हस्पत्ये चरौ 'अग्निं सुदीतिम्' इति स्विष्टकृतो याज्या। 'वाजपेयेन' इत्यादिखण्डे सूत्रितम्—'अग्निं सुदीतिं सुदृशं गृणन्त इति संयाज्ये' (आश्व. श्रौ. ९. ९) इति॥

**स॒मि॒ध्यमा॑नः प्रथ॒मानु॒ धर्मा॒ सम॒क्तुभि॑रज्यते वि॒श्ववा॑रः।**

**शो॒चिष्के॑शो घृ॒तनि॑र्णिक्पाव॒कः सु॑य॒ज्ञो अ॒ग्निर्य॒जथा॑य दे॒वान् ॥ १ ॥**

स॒म्ऽइ॒ध्यमा॑नः। प्र॒थ॒मा। अनु॑। धर्म॑। सम्। अ॒क्तुऽभिः॑। अ॒ज्य॒ते॒। वि॒श्वऽवा॑रः।

शो॒चिः॒ऽके॑शः। घृ॒तऽनि॑र्निक्। पा॒व॒कः। सु॒ऽय॒ज्ञः। अ॒ग्निः। य॒जथा॑य। दे॒वान्॥ १॥

कतः स्तौति। ᵛधर्म धारणात् धर्म। अग्नेः[4] यज्ञनिर्वाहकतया तद्धारकत्वाद्धर्माग्निः। तथा च मन्त्रः—'धर्माणमग्निं विदथस्य साधनम्' (ऋ. सं. १०. ९२. २) इति। तादृशोऽग्निः ᵛप्रथमा प्रथमं[5] यज्ञोपक्रमे ᵛअनु अध्यायतनेष्वनुक्रमेण ᵛसमिध्यमानः सम्यक् प्रज्वाल्यमानः। यद्वा। अनु धर्म धर्मसाधनभूतेषु यज्ञेषु प्रथमं समिध्यमानः। ᵛविश्ववारः विश्वैः सर्वैर्यजमानैर्यष्टव्यतया वरणीयः ᵛशोचिष्केशः शोचींषि ज्वालाः केशा यस्य स तथोक्तः। ᵛघृतनिर्णिक् घृतस्य तापनद्वारा विलापनेन[6] शोधकः। ᵛपावकः अस्मदीयपापशोधकः। ᵛसुयज्ञः शोभनयज्ञोपेतः। एवंभूतः ᵛअग्निः ᵛदेवान् अस्माभिर्यजनीयान् देवान् ᵛयजथाय यष्टुम् ᵛअक्तुभिः अञ्जनसाधनैर्घृतादिभिः ᵛसम् ᵛअज्यते सम्यक् सिच्यते॥ प्रथमा। 'सुपां सुलुक्॰' इति सुपो डादेशः। धर्म। 'धृञ् धारणे' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। ह्रस्वत्वं छान्दसम्। नित्स्वरः। अक्तुभिः। 'अञ्जू व्यक्तिगतिम्रक्षणेषु'। अज्यत एभिरिति बाहुलकत्वात्[7] क्तुः करणे। कित्त्वादुपधालोपः। प्रत्ययस्वरः। अज्यते। स एव धातुः। कर्मणि यक्। 'अनिदिताम्॰' इत्युपधालोपः। विश्ववारः। विश्वैर्यजमानैर्होतृद्वारा वारो वारणं यस्येत्यत्र 'वृञ् वरणे' इत्यस्य ण्यन्तस्य रूपं वारः। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। घृतनिर्णिक्। 'णिजिर् शौचपोषणयोः'। क्विप्। घृतं नेनेक्तीति द्वितीयातत्पुरुषत्वात

---

१. त–दानाद्युपयोग॰ २. त–भू इत्यादेशश्च। ३. त–भवतेः। ४. त–अग्निः। ५. ख-ग-च-ज-ण–प्रथमा। ६. स–विलयनेन। ७. त–बाहुलकात्।

पूर्वपदस्वरः । यजथाय । 'यज देवपूजासंगतिकरणदानेषु' । अस्मादौणादिकः अथप्रत्ययः । तादर्थ्ये चतुर्थी । प्रत्ययस्वरः ॥

यथाय॑जो हो॒त्रम॑ग्ने पृथि॒व्या यथा॑ दि॒वो जा॑तवेदश्चिकि॒त्वान् ।
ए॒वानेन॑ ह॒विषा॑ यक्षि दे॒वान्म॑नु॒ष्वद्य॒ज्ञं प्र ति॑रे॒मम॒द्य ॥ २ ॥

यथा॑ । अय॑जः । हो॒त्रम् । अ॒ग्ने॒ । पृ॒थि॒व्याः । यथा॑ । दि॒वः । जा॒त॒ऽवे॒दः॒ । चि॒कि॒त्वान् ।
ए॒व । अ॒नेन॑ । ह॒विषा॑ । य॒क्षि॒ । दे॒वान् । म॒नु॒ष्वत् । य॒ज्ञम् । प्र । ति॒र॒ । इ॒मम् । अ॒द्य ॥२॥

हे ᐯअग्ने त्वं[1] ᐯयथा[2] ᐯपृथिव्याः यजमानभूतायाः पृथिवीदेवतायाः पूर्वं होता सन् ᐯहोत्रं होमसाधनं हविः ᐯअयजः अयाजीः ᐯजातवेदः जातप्रज्ञ हे अग्ने ᐯचिकित्वान् कर्मविषयज्ञानवान् त्वं[3] ᐯयथा च[3] ᐯदिवः[4] यजमानभूताया द्युदेवताया होता भूत्वा हविरयजः । ᐯएव एवं त्वमस्मिन् कर्मणि होता सन् ᐯअनेन अस्माभिर्दीयमानेन ᐯहविषा ᐯदेवान्[4] ᐯयक्षि यज । किंच त्वम् ᐯअद्य इदानीम् अस्माभिः क्रियमाणम् ᐯइमं ᐯयज्ञं ᐯप्र ᐯतिर अनुष्ठानसंपूर्त्या पारं गमय । तत्र दृष्टान्तः ᐯमनुष्वत् इति । यथा मनोः यज्ञमनुष्ठानसंपूर्त्या[5] पारमनैषीस्तद्वदिमं यज्ञं पारं नयेत्यर्थः ॥ यथा । 'प्रकारवचने थाल्' इति थाल् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अयजः । यजेर्लङि रूपम् । यच्छब्दयोगादनिघातः । होत्रम् । 'हु दानादनयोः' । 'हुयामाश्रुभसिभ्यस्त्रन्' इति त्रन्प्रत्ययेनान्तोदात्तः । दिवः । 'ऊडिदम्०' इति विभक्तेरुदात्तत्वम् । चिकित्वान् । 'कित ज्ञाने' इत्यस्य क्वसौ रूपम् । प्रत्ययस्वरः । अनेन । इदंशब्दस्य तृतीयैकवचने 'अनाप्यकः' (पा. सू. ७. २. ११२) इत्यनादेशः । यक्षि । यजेर्लेटि रूपम् । मनुष्वत् । 'तत्र तस्येव' इति वतिः । 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति भसंज्ञात्वात् रुत्वाभावः । प्रत्ययस्वरः । तिर । तरतेर्लोटि व्यत्ययेन शः । 'ऋत इद्धातोः' इति इत्वम् । निघातः ॥

त्रीण्यायूं॑षि॒ तव॑ जातवेदस्ति॒स्र आ॒जानी॑रु॒षस॑स्ते अग्ने ।
ताभि॑र्दे॒वाना॒मवो॑ यक्षि वि॒द्वानथा॑ भव॒ यज॑माना॒य शं योः ॥ ३ ॥

त्रीणि॑ । आयूं॑षि । तव॑ । जा॒त॒ऽवे॒दः॒ । ति॒स्रः । आ॒ऽजानीः॑ । उ॒षसः॑ । ते॒ । अ॒ग्ने॒ ।
ताभिः॑ । दे॒वाना॑म् । अवः॑ । य॒क्षि॒ । वि॒द्वान् । अथ॑ । भ॒व॒ । यज॑मानाय । शम् । योः ॥३॥

हे ᐯजातवेदः जातप्रज्ञ[6] ᐯतव ᐯत्रीण्यायूंषि त्रिविधानि आज्यौषधिसोमात्मकान्यन्नान्याहारतया कल्पितानि हे ᐯअग्ने ᐯतिस्रः ᐯउषसः एकाहाहीनसत्रगता उषसः[7] उषोऽभिमानिन्यस्तिस्रो देवताः ᐯते तव ᐯआजानीः जनयित्र्यो मातरः । यद्वा[8] उषोऽभिमानिन्यो देवतास्तवाजानीस्त्वामनुजातास्तिस्रः[8]

---

१. त-'त्वं' नास्ति । २. ख-ग-च-ज-ण-फ-'यथा' नास्ति । ३. ग-च-त-न-'त्वं यथा च' नास्ति । ४. ग-च-न-'दिवः...देवान्' नास्ति । ५. ख-स-यज्ञानुष्ठानं संपूर्त्या । ६. ख-ग-घ-च-ज-ण-प-फ-जातप्रज्ञ अग्ने । ७. त-'उषसः' नास्ति । ८. ख-ग-च-ज-ण-'यद्वा...तिस्रः' नास्ति ।

स्वसारः[1]। तथा च स्वसृः प्रकृत्य मन्त्रः—'प्रजामेका रक्षत्यूर्जमेका राष्ट्रमेका रक्षति' इति'। ᵛताभिः उषोऽभिमानिनीभिर्देवताभिः सहितस्त्वम् ᵛअवः अस्माभिर्दीयमानं हविर्लक्षणमन्नं ᵛदेवानां ᵛयक्षि यष्टव्यदेवानां प्रयच्छ। ᵛअथ अनन्तरं ᵛविद्वान् जानंस्त्वं[2] ᵛयजमानाय ᵛशं ᵛभव सुखहेतुर्भव। ᵛयोः च सुखस्य मिश्रयिता च[3] भव ॥ तव। 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तः[4]। तिस्रः। त्रिशब्दस्य स्त्र्यर्थे 'त्रिचतुरोः स्त्रियाम्°' इति तिसृ इत्यादेशः। 'अचि र ऋतः' इति रेफादेशः। 'तिसृभ्यो जसः' इति विभक्तेरुदात्तत्वम्। आजानीः। 'जन जनने'। 'जनिघसिभ्यामिण्' इति कर्तरि इण्। णित्वादुपधावृद्धिः। 'वा छन्दसि' इति सवर्णदीर्घः[5]। कृदुत्तरपदप्रकृतिस्वरः[6]। अवः। 'अव रक्षणे'। 'असुन्' इत्यसुन्। नित्स्वरः। यक्षि। यजेर्दानार्थस्य लेटि रूपम्। यजमानाय। 'पूङ्यजोः शानन्' (पा. सू. ३. २. १२८) इति यजेः शानन्। नित्स्वरः। योः। 'यु मिश्रणे' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। आर्धधातुकलक्षणो गुणः। कृदुत्तरपदप्रकृतिस्वरः ॥

अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिम् ॥ ४ ॥

अग्निम्। सुऽदीतिम्। सुऽदृशम्। गृणन्तः। नमस्यामः। त्वा। ईड्यम्। जातऽवेदः।
त्वाम्। दूतम्। अरतिम्। हव्यऽवाहम्। देवाः। अकृण्वन्। अमृतस्य। नाभिम् ॥४॥

ᵛजातवेदः जातस्य सर्वस्य वेदितर्हे अग्ने ᵛगृणन्तः त्वद्विषयां स्तुतिं कुर्वाणा वयम् ᵛअग्निम् अङ्गनादिगुणोपेतं ᵛसुदीतिं शोभनदीप्तिम् अत एव ᵛसुदृशं सर्वैः सुदर्शनम् ᵛईड्यं स्तुत्यम् एवंविधं ᵛत्वा त्वां ᵛनमस्यामः हविर्भिः पूजयामः। किंच ᵛदेवाः अस्माभिर्यजनीया इन्द्रादयो देवाः ᵛअरतिम्। न विद्यते विषयेषु[7] रतिः[7] प्रीतिर्यस्यासावरतिः। विषयेष्वसक्तम् अत एव ᵛअमृतस्य देवान्नभूतायाः सुधायाः ᵛनाभिं नाभिस्थानं ᵛत्वां तादृशं ᵛहव्यवाहं ᵛदूतम् ᵛअकृण्वन्। हविषां वोढारं दूतमकुर्वन्। दूतो हि द्विविधो वार्ताहारी[8] कार्यकारी चेति। तत्र त्वां कार्यकारिणं दूतमकार्षुरिति भावः ॥ सुदीतिम्। 'दीङ् क्षये'। दीयते विनाश्यते आभिस्तम इति करणे क्तिन्। दीतयो दीप्तयः। बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। सुदृशम्। 'दृशिर् प्रेक्षणे'। तस्माच्छक्यार्थे खल्। 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावः। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। गृणन्तः। गृणातिरर्चतिकर्मा। नमस्यामः। नमसः पूजायां 'नमो वरिवश्चित्रङः क्यच्' इति क्यच्। तदन्ताल्लटि रूपम्। पादादित्वान्न निघातः। दूतम्। 'टुदु उपतापे'। 'दुतनिभ्यां दीर्घश्च' (उ. सू. ३. ३७०) इति क्तः। तत्संनियोगेन धातोर्दीर्घः। दूतः इतस्ततः संचारीत्यर्थः। प्रत्ययस्वरः। अरतिम्। 'रमु क्रीडायाम्'। भावे क्तिन्। अकृण्वन्। 'कृवि हिंसाकरणयोः' इत्यस्य लङि 'धिन्विकृण्व्योरच' इत्युप्रत्ययोऽकारश्चान्तादेशः। निघातः ॥

---

१. ख-ग-च-ज-ण–'स्वसारः ......इति' नास्ति। २. ख-त-प–जानानस्त्वम्। ३. ख-ग-च-ज-ण–'च' नास्ति। ४. ल–इत्याद्युदात्तत्वम्। ५. ख-ग-ज-ण-भ–वर्णदीर्घः। ६. त–°प्रकृतिस्वरत्वम्। ७. त–रतिः विषयेषु। ८. ख-ग-ज-ण-फ-भ–वान्नकारी; च–अन्नकारी; स–वशकारी।

यस्त्वद्धोता पूर्वो अग्ने यजीयान्द्विता च सत्ता स्वधया च शंभुः ।
तस्यानु धर्म प्र यजा चिकित्वोऽथा नो धा अध्वरं देववीतौ ॥ ५ ॥

यः । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । द्विता । च । सत्ता । स्वधया । च । शम्ऽभुः ।
तस्य । अनु । धर्म । प्र । यज । चिकित्वः । अथ । नः । धाः । अध्वरम् । देवऽवीतौ ॥ ५ ॥

हे अग्ने त्वत् त्वत्तोऽपि पूर्वः प्रथमभावी यजीयान् अतिशयेन यष्टा यः यः कश्चित् होता होमनिष्पादकः[1] द्विता द्वैधं मध्यमे चोत्तमे च स्थाने स्वधया सोमाख्येनान्नेन सह सत्ता निषण्णः सन् शंभुः यष्टॄणां सुखभूः अभूत् । द्वितीयपादमेवं यास्को व्याचख्यौ—' द्विता च सत्ता स्वधया च शंभुः । द्वैधं सत्ता मध्यमे च स्थान उत्तमे च । शंभुः सुखभूः ' ( निरु. ५. ३ ) इति । चिकित्वः धर्मविषयचेतनावन् हे अग्ने तस्य यस्त्वत्तोऽपि पूर्वभावी होता निरूपितस्तस्य होतुः अनु धर्म धर्माननु तेनानुष्ठितधर्माननुपलक्ष्य[2] प्र यज प्रकर्षेण देवान् पूजय । अथ अनन्तरं हे अग्ने त्वं नः अस्माकं संबन्धिनम् अध्वरम् इमं यज्ञं देववीतौ देवानां प्रीत्यर्थं धाः विधेहि ॥ यजीयान् । यष्टृशब्दस्य ' तुश्छन्दसि ' इतीयसुन् । तस्मिन् ' तुरिष्ठेमेयःसु ' इति तृचो लोपः । नित्त्वादाद्युदात्तः । द्विता । द्विशब्दात् ' संख्याया विधार्थे धा ' इति धाप्रत्ययः । धकारस्य तकारश्छान्दसः । प्रत्ययस्वरः । सत्ता । ' षद्लृ विशरणगत्यवसादनेषु '। अस्य[3] ताच्छीलिकस्तृन् । नित्स्वरः । स्वधया । स्वर्गं[4] लोकं[4] दधाति यजमानस्येति स्वधा । ' आतोऽनुपसर्गे कः ' इति कप्रत्ययः[5] । कृदुत्तरपदप्रकृतिस्वरत्वम् । शंभुः । शं सुखमस्माद्भवतीति । ' भू सत्तायाम् ' । ' विप्रसंभ्यो ड्वसंज्ञायाम् ' इत्यत्र मितद्र्वादेरुपसंख्यानात् डुप्रत्ययः । डित्वाट्टिलोपः । यज । यजेर्लोटि रूपम् । चिकित्वः । ' कित ज्ञाने ' इत्यस्य क्वसौ रूपम् । ' मतुवसो रुः संबुद्धौ छन्दसि ' इति नकारस्य रुः । अथा नः । ' निपातस्य० ' इति दीर्घः । धाः । ' डुधाञ् धारणपोषणयोः ' इत्यस्य छान्दसे लुङि रूपम् । अडभावश्छान्दसः । देववीतौ । देवानां वीतिः अशनं यत्र प्रीतौ सा प्रीतिः देववीतिः । वी कान्त्यादिषु इत्यस्मात् भावे क्तिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः[6] ॥ ॥ १७ ॥

' भवा नो अग्ने ' इति पञ्चर्चं षष्ठं सूक्तम् । ' भवा नः ' इत्यनुक्रमणिका । 'कतो वैश्वामित्रस्तु' इति तुशब्दप्रयोगात् अस्यापि वैश्वामित्रः कत ऋषिः । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः[7] । प्रवर्ग्येऽभिष्टवे ' भवा नो अग्ने ' इति द्वृचो विनियुक्तः । सूत्रितं च—' भवा नो अग्ने सुमना उपेताविति द्वृचाः ' ( आश्व. श्रौ. ४. ६ ) इति ॥

भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः ।
पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥ १ ॥

भव । नः । अग्ने । सुऽमनाः । उपऽइतौ । सखाऽइव । सख्ये । पितराऽइव । साधुः ।
पुरुऽद्रुहः । हि । क्षितयः । जनानाम् । प्रति । प्रतीचीः । दहतात् । अरातीः ॥ १ ॥

---

१. त–होमनिष्पादकः अग्निः । २. त–°कर्मानुलक्ष्य । ३. त-ल–इत्यस्य । ४. ख-ग-च-ज-ण-फ-भ–स्वर्गे लोके; त-ल–स्वर्लोकम् । ५. ल–कः । ६. त–पूर्वपदस्वरः । ७. त–विनियोगः ।

हे ᵛअग्ने त्वम् ᵛउपेतौ अस्माभिः क्रियमाणस्य[1] प्रवर्ग्याख्यकर्मणः[1] आभिमुख्येनागमने ᵛसुमनाः तत्कर्मसिद्ध्यर्थमनुकूलमनस्को भूत्वा ᵛनः ᵛसाधुः ᵛभव अस्मत्संबन्धिकर्मसाधको भव । तत्र दृष्टान्तद्वयम् । ᵛसखेव ᵛसख्ये ᵛपितरेव इति । यथा सखा सुहृत् सख्ये मित्राय हितोपदेशेन साधुर्भवति यथा च ᵛपितरा मातापितरौ पुत्राय सन्मार्गोपदेशेन[2] साधकौ भवतः तद्वत् । किंच ᵛजनानां मनुष्याणां ᵛक्षितयः मनुष्याः ᵛपुरुद्रुहो ᵛहि नानाविधद्रोहयुक्ताः । हिशब्दः कारणपरः । यस्माल्लोके परस्परमात्सर्यादिनान्योन्यमसहमाना जना वर्तन्ते तस्मात्त्वं ᵛप्रतीचीः प्रतीचः प्रतिकूलतयास्मदाभिमुख्येन आगच्छतः ᵛअरातीः अरातीन् शत्रून् ᵛप्रति ᵛदहतात् त्वं प्रतिकूलः सन् भस्मसात्कुरु ॥ सखा नः । ' द्व्यचोऽतस्तिङः ' इति संहितायां दीर्घः । उपेतौ । ' इण् गतौ ' । अयनमिति[3] भावे क्तिन् । प्रादिसमासः । ' तादौ च निति कृत्यतौ ' इति गतेः प्रकृतिस्वरत्वम् । सख्ये । ' समाने ख्यश्चोदात्तः ' इति इण् । डित्त्वाट्टिलोपः । तत्संनियोगेन यलोपः । ' समानस्य छन्दसि° ' इत्यादिना सभावः । ' उदात्तः ' इत्युक्तत्वात् उपपदस्योदात्तता । साधुः । ' राध साध संसिद्धौ ' । ' कृवापाजि° ' इत्यादिना उण्प्रत्ययः । प्रत्ययस्वरः । प्रतीचीः । ' अञ्चु गतिपूजनयोः ' । ' ऋत्विग्दधृक्° ' इत्यादिना क्विन् । स्त्रियाम् ' उगितश्च ' इति ङीपि प्राप्ते पुनः ' धातोरुगितः प्रतिषेधः[4] ' ( पा. सू. ४. १. ६. १ ) इति[4] प्रतिषिद्धे ' अञ्चतेश्चोपसंख्यानम् ' इति प्रतिप्रसवात् ङीप् । तस्मिन् भसंज्ञायाम् ' अचः ' इत्यकारलोपः । ' चौ ' इति दीर्घः । दहतात् । ' दह भस्मीकरणे ' इत्यस्य लोण्मध्यमैकवचने हेः ' तुह्योस्तातङ्ङाशिषि° ' इति तातङादेशः । निघातः । अरातीः प्रतीचीः । उभयत्र लिङ्गव्यत्ययः ॥

**तपो॒ ष्व॑ग्ने॒ अन्त॑राँ अ॒मित्रा॒न् तपा॒ शंस॒मर॑रुषः॒ पर॑स्य ।**

**तपो॑ वसो चिकिता॒नो अ॒चित्ता॒न्वि ते॑ तिष्ठन्ताम॒जरा॑ अ॒यासः॑ ॥ २ ॥**

तपो॒ इति॑ । सु । अ॒ग्ने॒ । अन्त॑रान् । अ॒मित्रा॑न् । तप॑ । शंस॑म् । अर॑रुषः । पर॑स्य ।

तपो॒ इति॑ । व॒सो॒ इति॑ । चि॒कि॒ता॒नः । अ॒चित्ता॑न् । वि । ते॒ । ति॒ष्ठ॒न्ता॒म् । अ॒जरा॑ः । अ॒यास॑ः ॥२॥

हे ᵛअग्ने ᵛअन्तरान् अभिभावकान्[5] ᵛअमित्रान् शत्रून् ᵛसु[6] सुष्ठु यथा भवति तथा ᵛतपो तपैव बाधस्व । किंच । ᵛअररुषः तुभ्यं हविरप्रयच्छतः अत एव ᵛपरस्य शत्रुभूतस्य त्वं ᵛशंसम् अभिलाषं ᵛतप क्षपय । ᵛवसो सर्वस्य वासयितर्हे अग्ने ᵛचिकितानः कर्माभिज्ञस्त्वम् ᵛअचित्तान् सत्कर्मण्यनासक्तमनस्कान् पुरुषान् ᵛतपो संतप । यस्मादेवं[7] तस्मात्[7] ᵛते तव रश्मयः ᵛअजराः जरारहिताः प्रतिबन्धरहिता अत एव ᵛअयासः सर्वत्रगमनस्वभावाः सन्तः ᵛवि ᵛतिष्ठन्तां विशेषेण तिष्ठन्तु ॥ तपो । तप उ । गुणः । उञमवलम्ब्य ' उञः ' इति प्रगृह्यसंज्ञा । पादादित्वादनिघातः । तपा । ' तप संतापे ' इत्यस्य लोटि रूपम् । ' द्व्यचोऽतस्तिङः ' इति संहितायां दीर्घः । अररुषः । ' रा दाने ' इत्यस्य क्वसौ ' वस्वेकाच्° ' इति प्राप्तस्य इटः ' संप्रसारणं संप्रसारणाश्रयं च बलीयः ' इति संप्रसारणबलीयस्त्वान्निवृत्तिः । ' वसोः संप्रसारणम् ' इति संप्रसारणम् । समासे नञ्स्वरः । चिकितानः । ' कित ज्ञाने ' इत्यस्य छन्दसि लिट् । तस्य ' लिटः कानज्वा ' इति कानजादेशः ।

---

१. ख-ग-च-ज-ण-न-भ—क्रियमाणप्रवर्गाख्यस्य कर्मणः । २. त—सन्मार्गोपदेशादिना । ३. न—उपेतमिति । ४. ख-ग-च-ज-ण-न-भ—' प्रतिषेध इति ' नास्ति । ५. त—अभि समीपवर्तिनः भावकान् । ६. त—' सु ' नास्ति । ७. ख—यस्मात् ।

द्विर्वचनम् । किरवाद्गुणाभावः । चित्त्वादन्तोदात्तः । तिष्ठन्ताम् । 'ष्ठा गतिनिवृत्तौ '। विपूर्वात्तिष्ठतेः 'समवप्रविभ्यः स्थः ' इत्यात्मनेपदम् । निघातः । अयासः । 'अय गतौ '। पचाद्यच् । चित्स्वरः ॥

**इ॒ध्मेना॑ग्न इ॒च्छमा॑नो घृ॒तेन॑ जुहो॒मि॑ ह॒व्यं तर॑से॒ बला॑य ।**

**याव॒दीशे॒ ब्रह्म॑णा॒ वन्द॑मान इ॒मां धियं॑ शत॒सेया॑य दे॒वीम् ॥ ३ ॥**

इ॒ध्मेन॑ । अ॒ग्ने॒ । इ॒च्छमा॑नः । घृ॒तेन॑ । जु॒हो॒मि॒ । ह॒व्यम् । तर॑से । बला॑य ।

याव॑त् । ईशे॑ । ब्रह्म॑णा । वन्द॑मानः । इ॒माम् । धिय॑म् । श॒त॒ऽसेया॑य । दे॒वीम् ॥ ३ ॥

हे ᵛअग्ने ᵛइच्छमानः धनं कामयमानोऽहं यजमानः ᵛइध्मेन समिन्धनकारिसमित्समूहेन ᵛघृतेन आज्येन सह ᵛहव्यं हवनयोग्यं हविः पुरोडाशादिकं ᵛजुहोमि । किमर्थम् । ᵛतरसे वेगाय तव सततगमनसिद्ध्यर्थं ᵛबलाय सामर्थ्याय । पुरोडाशादिहविर्भारवहनसिद्ध्यर्थं त्वयि हविः प्रक्षिपामि । किंच ᵛब्रह्मणा स्तोत्रेण ᵛवन्दमानः त्वां[1] स्तुवन्[2] अहं ᵛयावदीशे यावद्धनं[3] वोढुं शक्नोमि तावद्देहि । त्वं च ᵛइमाम् अस्माभिः क्रियमाणां ᵛधियं त्वद्विषयां स्तुतिं ᵛशतसेयाय अपरिमितधनपर्यवसानाय ᵛदेवीं दीप्ताम् अतिप्रभूतां कुरु ॥ इध्मेन । 'ञिइन्धी दीप्तौ '। इध्यतेऽनेनाग्निरितीध्मः काष्ठविशेषः । 'इषि-युधीन्धिदसिश्याधूसूभ्यो मक् ' इति करणे मक् । किरवादनुनासिकलोपः । प्रत्ययस्वरः । इच्छमानः । 'इषु इच्छायाम् '। व्यत्ययेन शानच् । 'इषुगमियमां छः' इति छकारः । जुहोमि । 'हु दानादनयोः' इत्यस्य[4] लटि रूपम् । पादादित्वादनिघातः । हव्यम् । हवनम्[5] अर्हतीति 'छन्दसि च ' इति यप्रत्ययः । भसंज्ञायां 'यस्य॰' इति लोपः । प्रत्ययस्वरः । यावत् । यच्छब्दात् 'यत्तदेतेभ्यः परिमाणे वतुप् ' इति वतुप् । 'आ सर्वनाम्नः ' इत्याकारः । आद्युदात्तः । ईशे । 'ईश ऐश्वर्ये ' इत्यस्य लडुत्तमैक-वचने इटष्टेरेत्वम् । अदादित्वाच्छपो लुक् । शतसेयाय । 'षो अन्तकर्मणि '। 'आदेच उपदेशेऽशिति[6] ' इत्यात्वम् । 'अचो यत् ' इति भावे यत् । 'ईद्यति ' इतीत्वम् । आर्धधातुकलक्षणो गुणः । कृदुत्तरपदप्रकृतिस्वरः ॥

**उच्छो॒चिषा॑ सहसस्पुत्र स्तु॒तो बृ॒हद्वयः॑ शशमा॒नेषु॑ धेहि ।**

**रे॒वद॑ग्ने वि॒श्वामि॑त्रेषु॒ शं योर्म॑र्मृज्मा ते त॒न्वं॑१ भूरि॒ कृत्वः॑ ॥ ४ ॥**

उत् । शो॒चिषा॑ । स॒ह॒सः॒ । पु॒त्र॒ । स्तु॒तः । बृ॒हत् । वयः॑ । श॒श॒मा॒नेषु॑ । धे॒हि॒ ।

रे॒वत् । अ॒ग्ने॒ । वि॒श्वामि॑त्रेषु । शम् । योः । म॒र्मृ॒ज्म॒ । ते॒ । त॒न्व॑म् । भूरि॑ । कृत्वः॑ ॥ ४ ॥

ᵛसहसस्पुत्र हे ᵛअग्ने ᵛशोचिषा स्वकीयया दीप्त्या ᵛउत् उद्दीप्यस्व । ᵛस्तुतः स्तोत्रशस्त्रसाधन-भूतैर्मन्त्रैः स्तुतस्त्वं ᵛशशमानेषु । 'शशमानः शंसमानः '( निरु. ६. ८ ) इति यास्कः । त्वद्विषय-शंसनं कुर्वाणेषु ᵛविश्वामित्रेषु विश्वामित्रगोत्रोत्पन्नेषु[7] । विश्वं मित्रमस्येति विश्वामित्र एकः[8] ।

---

१. फ–'त्वाम् ' नास्ति । २. ख-ग-ज-ण-भ–वन्दमानः; फ–'स्तुवन् ' नास्ति । ३. ख-ग-च-ज-ण-न-भ-स–यावद्धन्दनम् । ४. त–अस्य । ५. ल–हवम् । ६. त–उपदेशे । ७. ख-ग-च-ज-ण-न-भ-ल–'विश्वा-मित्रगोत्रोत्पन्नेषु ' नास्ति; घ-प–सर्वमित्रेषु । ८. त–'एकः ' नास्ति ।

एकस्मिन्बहुवचनं पूजार्थम् । तथाविधेष्वस्मासु ᵛरेवत् धनयुक्तं ᵛबृहत् प्रभूतं ᵛवयः । वयःशब्दः अन्नवाची । ‘ अर्कः वयः क्षद्म ’ इत्यन्ननामसु पठितत्वात्[1] । तादृशं प्रभूतमन्नं ᵛधेहि विधेहि[2] । किंच ᵛशं रोगाणां उपशमनं[3] चास्मासु[4] धेहि । ᵛयोः भयानां यावनम्[5] अमिश्रणं च धेहि[6] । ‘ शमनं च रोगाणां यावनं च भयानाम् ( निरु. ४. २१ ) इति यास्कः । ᵛकृत्वः अस्माभिः क्रियमाणस्य कर्मणः प्रयोजकत्वेन कर्तर्हे अग्ने ᵛते तव ᵛतन्वं तनुं ᵛभूरि बहुवारं ᵛमर्मृज्म पुनः पुनः सोमाज्यपयःप्रभृतिभिः[7] वयं सिञ्चामः ॥ शशमानेषु । ‘ शश प्लुतगतौ ’ इत्ययं धातुरत्र स्तुत्यर्थः । ‘ ताच्छील्यवयोवचनशक्तिषु° ’ इति चानश् । ‘ चितः[8] ’ इत्यन्तोदात्तत्वम्[8] । धेहि । ‘ डुधाञ् धारण-पोषणयोः ’ इत्यस्य लोटि रूपम् । रेवत् । रयिरस्यास्तीति मतुप् । ‘ ह्रस्वनुड्भ्यां मतुप् ’ इति मतुप उदात्तत्वम् । ‘ छन्दसीरः ’ इति तस्य वत्वम् । ‘ रयेर्मतौ बहुलं छन्दसि ’ इति संप्रसारणम् । परपूर्वत्वम् । गुणः । विश्वामित्रेषु । ‘ मित्रे चर्षौ ’ ( पा. सू. ६.३.१३० ) इति पूर्वपदस्य दीर्घत्वम् । ‘ बहुव्रीहौ विश्वं संज्ञायाम् ’ इति पूर्वपदान्तोदात्तत्वम् । मर्मृज्म । ‘ मृजूष्[9] शुद्धौ ’ इत्यस्य वर्तमाने लिटि[10] उत्तमबहुवचने मसो मादेशः । ‘ अनित्यमागमशासनम् ’ इतीडभावः । रेफश्छान्दसः । पादा-दित्वादनिघातः । प्रत्ययस्वरः । भूरि । ‘ भू सत्तायाम् ’ । ‘ अदिशदिभूशुभिभ्यः क्रिन् ’ इति क्रिन् । क्रित्वाद्गुणाभावः । निस्स्वरः । कृत्वः । ‘ डुकृञ् करणे ’ । संपदादित्वाद्भावे क्विप् । ‘ तदस्यास्ति° ’ इति मतुप् । ‘ झयः ’ इति तस्य वत्वम् । ‘ तसौ मत्वर्थे ’ इति भसंज्ञायां तकारस्य जश्त्वाभावः । मतुवसो रुः° ’ इति तकारस्य रुत्वम् ॥

कृधि रत्नं सुसनितर्धनानां स घेदग्ने भवसि यत्समिद्धः ।
स्तोतुर्दुरोणे सुभगस्य रेवत्सृप्रा करस्ना दधिषे वपूंषि ॥ ५ ॥

कृधि । रत्नम् । सुऽसनितः । धनानाम् । सः । घ । इत् । अग्ने । भवसि । यत् । सम्ऽइद्धः ।
स्तोतुः । दुरोणे । सुऽभगस्य । रेवत् । सृप्रा । करस्ना । दधिषे । वपूंषि ॥ ५ ॥

ᵛसुसनितः अभिलषितधनानां सुष्ठु दातर्हे ᵛअग्ने ᵛधनानां कनकपश्वादीनां[11] मध्ये ᵛरत्नम् उत्तमं धनं[12] ᵛकृधि विधेहि । मह्यं दत्स्व । ᵛयत् यदा त्वं ᵛसमिद्धः सोमाज्यादिभिः सम्यगिद्धो दीप्तो वर्तसे तदा ᵛस ᵛघेत् स तादृशः[13] एव त्वं धनस्य दाता खलु ᵛभवसि[14] । किंच ᵛसुभगस्य त्वद्विषयस्तुत्या शोभन-धनयुक्तस्य ᵛस्तोतुः यजमानस्य ᵛदुरोणे गृहे ᵛसृप्रा सर्पणशीलौ[15] कर्मकरणार्थं प्रसृतौ ᵛकरस्ना कर्मणां प्रस्नातारौ बाहू । ‘ करस्नौ[16] बाहू कर्मणां प्रस्नातारौ ’ ( निरु. ६. १७ ) इति यास्कः[16] । ᵛवपूंषि रूपाणि । ‘ वर्पः वपुः ’ ( नि. ३. ७. ४ ) इति रूपनामसु पठितत्वात् । तादृशौ बाहू भास्वराणि ज्योतींषि च ᵛरेवत् धनयुक्तं यथा भवति तथा ᵛदधिषे धारयसि ॥ सुसनितः । ‘ षणु दाने ’

---

१. त–पाठात् । २. ख-ग-घ-च-ज-ण-त-न-फ-भ-ल–‘ विधेहि ’ नास्ति । ३. न-ल–शमनम् । ४. त–अस्मासु । ५. ख-ग-च-ज-ण-न-प-फ-भ–‘ यावनं ’ नास्ति । ६. त-ल–धेहि विधेहि । ७. त-ल–°प्रभृतिभिः आहुतिभिः । ८. त–चित्वादन्तोदात्तः; ल–चित्वादन्तोदात्तत्वम् । ९. ल–मृजू । १०. ख-ग-ज-ण-भ–लेटि । ११. त–कनकाश्वादिनाम् । १२. ख-ग-च-न-फ-भ–‘ धनं ’ नास्ति । १३. त–एतादृशः । १४. ख-ग-च-ज-ण-न-फ-भ-ल–‘ भवसि ’ नास्ति । १५. न-ल–प्रसर्पणशीलौ । १६. ख-ग-च-ज-ण-भ–‘ करस्नौ......यास्कः ’ नास्ति ।

इत्यस्य तृचि रूपम् । आमन्त्रितनिघातः । सृप्रा । 'सृप्लृ गतौ' । अस्मात् 'स्फायितञ्चिवञ्चि°' इत्यादिना रक् । कित्त्वादगुणः । प्रत्ययस्वरः । करस्ना । करोति फलमिति करः[1] कर्म । पचाद्यजन्तः[2] । कर्मणि स्ना शोधनं ययोस्तौ । यद्वा कर्मणां शोधनं याभ्यामिति । बहुव्रीहौ पूर्वपदस्वरः । दधिषे । 'डुधाञ् धारणपोषणयोः' इत्यस्य लटि 'छन्दस्युभयथा' इति थास आर्धधातुकत्वादिट् । आतो लोपः । निघातः ॥  ॥ १८ ॥

'अग्निं होतारम्' इति पञ्चर्चं सप्तमं सूक्तं त्रैष्टुभमाग्नेयं गाथिन आर्षम् । तथा चानुक्रान्तम्– 'अग्निं होतारं गाथी ह' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

**अग्निं होतारं प्र वृणे मियेधे गृत्सं कविं विश्वविदममूरम् ।**
**स नो यक्षद्देवताता यजीयान्राये वाजाय वनते मघानि ॥ १ ॥**

अग्निम् । होतारम् । प्र । वृणे । मियेधे । गृत्सम् । कविम् । विश्वऽविदम् । अमूरम् ।
सः । नः । यक्षत् । देवऽताता । यजीयान् । राये । वाजाय । वनते । मघानि ॥ १ ॥

गाथी स्तौति । हे अग्ने 'गृत्सं[3] गृणन्तं देवानां स्तुतिं कुर्वन्तं 'कविं मेधाविनं 'विश्वविदं सर्वविषयज्ञानोपेतम् 'अमूरम्[4] अमूढम् 'अग्निम् अङ्गनादिगुणोपेतं त्वां 'मियेधे अस्माभिः क्रियमाणेऽस्मिन् यज्ञे 'होतारं होमनिष्पादकं देवानामाह्वातारं वा अहं 'प्र 'वृणे प्रकर्षेण संभजे । 'सः तथाविधोऽग्निः 'यजीयान् यष्टृतमः सन् 'नः अस्माकं 'देवताता यष्टव्यतया संबन्धिनो देवान् 'यक्षत् यजतु । किंच सोऽग्निः 'राये धनाय 'वाजाय अन्नाय च 'मघानि मंहनीयान्यस्माभिर्दीयमानानि हवींषि 'वनते संभजताम् ॥ वृणे । 'वृङ् संभक्तौ' । निघातः । मियेधे । सकारैकारयोर्मध्ये इयागमः छान्दसः । गृत्सम् । 'गृधु अभिकाङ्क्षायाम्' । 'गृधिपण्योर्दकौ च' ( उ. सू. २. ३४९ ) इति सप्रत्ययः । अन्त्यस्य दकारः । व्यत्ययेनाद्युदात्तत्वम् । अमूरम् । 'मुह वैचित्त्ये' इत्यस्य निष्ठायां रूपम् । रेफश्छान्दसः । नञा[5] समासे नञ्स्वरः[5] । यक्षत् । यजेर्लेटि 'सिब्बहुलं लेटि' इति सिप् । 'लेटोऽडाटौ' इत्यडागमः । 'इतश्च लोपः°' इतीकारलोपः । देवताता । देवशब्दात्स्वार्थे 'सर्वदेवात्तातिल्' इति तातिल् । 'सुपां सुलुक्°' इति सुपो डादेशः । लित्स्वरः । वनते । 'वन षण संभक्तौ' इत्यस्य लटि व्यत्ययेनात्मनेपदम् । निघातः ॥

**प्र ते अग्ने हविष्मतीमियर्म्यच्छा सुद्युम्नां रातिनीं घृताचीम् ।**
**प्रदक्षिणिद्देवतातिमुराणः सं रातिभिर्वसुभिर्यज्ञमश्रेत् ॥ २ ॥**

प्र । ते । अग्ने । हविष्मतीम् । इयर्मि । अच्छ । सुऽद्युम्नाम् । रातिनीम् । घृताचीम् ।
प्रऽदक्षिणित् । देवऽतातिम् । उराणः । सम् । रातिऽभिः । वसुऽभिः । यज्ञम् । अश्रेत् ॥२॥

---

१. ख-ग-च-ज-ण-भ–करम् । २. ज-ण–पचाद्यच् । ३. त–गृत्सं गर्द्धैः काम्यमानं वा । ४. त-ल– अत एव अमूरम् । ५. त-ल-स–नञ्समासे तस्य स्वरः ।

हे अग्ने सुद्युम्नां सुतेजसं हविष्मतीं पुरोडाशादिहविर्युक्तां रातिनीं हविर्दात्रीं घृताचीं घृतान्वितां जुहूम् उपभृतं[1] वा[1] ते तव अच्छ त्वदाभिमुख्येन प्र इयर्मि प्रेरयामि । देवतातिं देवान् उराणः उरु बहु कुर्वाणः । ' उराण उरु कुर्वाणः ' (निरु. ६.१७) इति यास्कः । तादृशो भवान् रातिभिः वसुभिः[2] अस्मभ्यं देयतया प्राप्तैः[3] धनैः[4] प्रदक्षिणित् प्रादक्षिण्येन सम् अश्रेत् तमिमं यज्ञं सम्यक् सेवताम् ॥ हविष्मतीम् । हविरस्यास्तीति मतुप् । ' तसौ मत्वर्थे ' इति भसंज्ञायां सकारस्य रुर्न भवति । ' उगितश्च ' इति ङीप् । ' स्वरविधौ व्यञ्जनमविद्यमानवत् ' इति परिभाषा-नाश्रयणान्मतुप उदात्तताभावः । इयर्मि । ' ऋ गतौ ' । जुहोत्यादिः । ' अर्तिपिपर्त्योश्च ' इत्यभ्या-सस्येत्वम् । ' अभ्यासस्यासवर्णे ' इतीयङादेशः । मिपः पित्त्वाद्गुणः । निघातः । अच्छ । ' निपा-तस्य° ' इति संहितायां दीर्घः । रातिनीम् । ' रा दाने ' इत्यस्य नपुंसके भावे क्तः । रातमस्यास्तीति ' अत इनिठनौ ' इतीनिः । प्रत्ययस्वरः । घृताचीम् । घृतपूर्वादञ्चतेः ' ऋत्विग्दधृक्° ' इत्यादिना क्विन् । ' अञ्चतेश्चोपसंख्यानम् ' इति ङीप् । भसंज्ञायाम् ' अचः ' इत्यकारलोपः । ' चौ ' इति दीर्घः । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वे प्राप्ते ' चौ ' इति पूर्वपदान्तोदात्तः । प्रदक्षिणित् । प्रदक्षिणं करोतीति ' तत्करोति° ' इति णिजुत्पद्यमानो दक्षिणशब्दात् भवति । संग्रामयतेरेव सोपसर्गात् णिजुत्पत्तिर्नान्यस्मात् इति तदन्तात् क्विप् । ' ह्रस्वस्य पिति° ' (पा. सू. ६.१.७१) इति तुक् । णिचो लोपाभावश्छान्दसः । णिच्स्वरः । देवतातिम् । देवशब्दात् ' सर्वदेवात्तातिल् ' इति तातिल् । ' लिति ' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । उराणः । उरु करोतीति ' तत्करोति° ' इति णिच् । तदन्ताच्छन्दसि लिट् । मन्त्रत्वादाम् न भवति । तस्य कानच् । ' णेरनिटि ' इति णिलोपः । उरादेशाभावश्छान्दसः । चित्त्वादन्तोदात्तः । अश्रेत् । ' श्रिञ् सेवायाम् ' इत्यस्य छान्दसे लङि ' बहुलं छन्दसि ' इति शपो लुक् । निघातः ॥

स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।

अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ॥ ३ ॥

सः । तेजीयसा । मनसा । त्वाऽऊतः । उत । शिक्ष । सुऽअपत्यस्य । शिक्षोः ।

अग्ने । रायः । नृऽतमस्य । प्रऽभूतौ । भूयाम । ते । सुऽस्तुतयः । च । वस्वः ॥ ३ ॥

हे अग्ने त्वोतः यः[5] त्वया रक्ष्यमाणः स तेजीयसा अतिशयेन तीक्ष्णेन सत्कर्मविषयतीक्ष्णबुद्धि-युक्तेन[6] मनसा अन्तःकरणेन युक्तो भवति । उत अपि च तस्मै स्वपत्यस्य । द्वितीयार्थे षष्ठी । शोभनापत्योपेतं धनं[7] शिक्ष प्रयच्छ । शिक्षतिर्दानकर्मा दात्यादिषु दानकर्मसु पठितत्वात् । हे अग्ने शिक्षोः अभिमतफलप्रदाने[8] शक्तिुमिच्छोः रायो नृतमस्य धनस्यातिशयेन नेतुर्दातुः ते तव प्रभूतौ प्रभावे महिम्नि[9] वयं स्याम । किंच सुष्टुतयः त्वद्विषयशोभनस्तुतिमन्तो वयं वस्वः वसुनो भाजनं भूयाम भूयास्म[10] ॥ तेजीयसा । तेजितृशब्दादतिशायने ईयसुन् । ' तुरिष्ठेमेयःसु ' इति

---

१. प–' उपभृतं वा ' नास्ति । २. ख-ग-च-ज-ण-फ-भ-स–' वसुभिः ' नास्ति । ३. ज-ण-प–प्राप्तैः वसुभिः । ४. न–धनैः सः वसन् ; ल-स–धनैः सन् । ५. ख-ग-च-फ–' यः ' नास्ति; भ-स–सः । ६. त–°बुद्धिप्रयुक्तेन । ७. त–शिक्ष्यते दीयते इति शिक्षुः । धनम् । ८. ख-ग-च-ज-ण–अभिमतत्वात् फलप्रदान ( ने ) । ९. त–महिम्नि ऐश्वर्ये । १०. घ-प–भूयास्म । च पूरणः ।

तृचो लोपः। निस्स्वरः। त्वोतः। अव रक्षणादिषु। निष्ठायां 'ज्वरत्वरस्रिव्यविमवामुपधायाः°' इत्यूठ्[1]। पूर्वलोपः[1]। त्वया ऊतः। 'तृतीया' इति योगविभागात्समासः। टेर्लोपश्छान्दसः। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः। शिक्ष। 'शिक्ष विद्योपादाने' इत्ययमत्र दानार्थः। अस्माल्लोटि व्यत्ययेन परस्मैपदम्। शिक्षोः। 'शक्लृ शक्तौ' इत्यस्य सनि 'एकाच उपदेशे°' इति इट्प्रतिषेधः। 'सनि मीमाघुरभलभशकपतपदामच इस्' इति धातोरच इसादेशः। 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः। 'सनाशंसभिक्ष उः' इत्युप्रत्ययः। प्रत्ययस्वरः। प्रभूतौ। 'भू सत्तायाम्' इत्यस्य भावे क्तिन्। 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम्। भूयाम। 'भू सत्तायाम्' इत्यस्याशीर्लिङि 'किदाशिषि' इति यासुट्। 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वात्सलोपः। आगमस्वरः। यद्वा तस्मात्प्रार्थनायां लिङि यासुट्। 'बहुलं छन्दसि' इति शपो लुक्। अनदन्तत्वादियादेशो न भवति। सुष्टुतयः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। वस्वः। आगमानुशासनस्यानित्यत्वात् नुमभावः। संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः। यणादेशः॥

भूरीणि हि त्वे दधिरे अनीकाग्ने देवस्य यज्यवो जनासः।
स आ वह देवतातिं यविष्ठ शर्धो यदद्य दिव्यं यजासि ॥ ४ ॥

भूरीणि। हि। त्वे इति। दधिरे। अनीका। अग्ने। देवस्य। यज्यवः। जनासः।
सः। आ। वह। देवऽतातिम्। यविष्ठ। शर्धः। यत्। अद्य। दिव्यम्। यजासि ॥ ४ ॥

हे ᵛअग्ने ᵛदेवस्य द्योतमानस्य तव संबन्धिनः ᵛयज्यवः यष्टारोऽध्वर्युप्रभृतयः ᵛजनासः जनाः ᵛभूरीणि बहूनि ᵛअनीका अनीकानि सेनारूपतया सर्वत्र प्रसृतानि ज्वालारूपाणि तेजांस्याहुतिप्रक्षेपेण ᵛत्वे त्वयि ᵛदधिरे ᵛहि विदधिरे खलु। चक्रुरिति यावत्। ᵛसः तादृशस्त्वं ᵛदेवतातिं यष्टव्यदेवान्[2] इह कर्मणि ᵛआ ᵛवह आह्वय। हे ᵛयविष्ठ युवतम ᵛयत् यस्मात्कारणात् ᵛअद्य अस्मिन्कर्मणि ᵛदिव्यं दिवि[3] भवं[3] देवसंबन्धि ᵛशर्धः तेजः त्वं ᵛयजासि यजसि तस्माद्देवानाह्वयेति शेषः॥ दधिरे। दधातेर्लिटि रूपम्। हियोगादनिघातः। चित्त्वादन्तोदात्तः। यज्यवः। यज देवपूजादिषु। 'यजिमनिशुन्धिदसिजनिभ्यो युच्' इति युच्। व्यत्ययेनाद्युदात्तत्वम्। देवतातिम्। देवशब्दात् स्वार्थे 'सर्वदेवात्तातिल्' इति तातिल्। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। यजासि। यजेर्लेट्याडागमः। यद्योगादनिघातः॥

यत्त्वा होतारमनजन्मियेधे निषादयन्तो यजथाय देवाः।
स त्वं नो अग्नेऽवितेह बोध्यधि श्रवांसि धेहि नस्तनूषु ॥ ५ ॥

यत्। त्वा। होतारम्। अनजन्। मियेधे। निऽसादयन्तः। यजथाय। देवाः।
सः। त्वम्। नः। अग्ने। अविता। इह। बोधि। अधि। श्रवांसि। धेहि। नः। तनूषु ॥५॥

---

१. ख-ग-भ-इत्पूर्वलोपः; न-इत्यूट्। लोपः; ल-इत्युपधालोपः; स-इत्यूढलोपः। २. ख-घ-त-प-फ-यष्टव्यदेवम्। ३. ख-प-'दिवि भवं' नास्ति।

हे ᵛअग्ने ᵛयजथाय यजनार्थं ᵛनिषादयन्तः निवसन्तः ᵛदेवाः दीप्यमाना ऋत्विजः ᵛमियेधे मेधे यज्ञे ᵛहोतारं देवानामाह्वातारं ᵛत्वा त्वां ᵛयत् यस्मात् ᵛअनजन् घृताहुतिभिरौक्षन् । यद्वा निषादयन्तो होतारं होमनिष्पादकं त्वां बर्हिष्युपवेशयन्त ऋत्विजो घृतैरसिञ्चन् तस्मात् ᵛसः तथाविधः ᵛत्वम् ᵛइह अस्मिन् कर्मणि ᵛनः अस्माकम् ᵛअविता पालयिता भवामीति ᵛबोधि बुध्यस्व । किंच ᵛनस्तनूषु अस्माकं तनुजेष्वपत्येषु ᵛश्रवांसि अन्नानि ᵛअधि ᵛधेहि अधिकं निधेहि ॥ अनजन् । ‘ अञ्जू व्यक्तिगतिम्रक्षणेषु ’। अस्माल्लङि रुधादित्वात् श्नम् । छान्दसत्वादल्लोपाभावः। अनिदिताम्° ’ इत्युपधालोपः । निषादयन्तः ॥ ‘ षद्लृ विशरणगत्यवसादनेषु ’ । चुरादिः । ‘ सदिरप्रतेः[1] ’ इति षत्वम् । यद्वा । हेतुमति णिच् । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते णिच्स्वरः । बोधि । ‘ बुध अवगमने ’ । लोटि ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ सेर्ह्यपिच्च ’ इति सिपो हिरादेशः । ‘ वा छन्दसि ’ इति विकल्पेन पित्त्वाद्गुणः । ‘ हुझल्भ्यो हेर्धिः ’ इति हेर्धिरादेशः । धकारलोपश्छान्दसः । निघातः । धेहि । दधातेर्लोटि रूपम् ॥ ॥ १९ ॥

‘ अग्निमुषसम् ’ इति पञ्चर्चमष्टमं सूक्तं त्रैष्टुभम् । अत्रेयमनुक्रमणिका—‘ अग्निमुषसमाद्यान्त्ये[2] वैश्वदेव्यौ ’ इति । ‘ गाथी ह ’ इति हशब्दप्रयोगादस्यापि सूक्तस्य गाथी ऋषिः । प्रथमापञ्चम्यौ विश्वेदेवदेवताके[3] शिष्टास्तिस्र आग्नेय्यः । अस्य सूक्तस्योक्तो विनियोगः । मरुत्वतीयशस्त्रे ‘ अग्निर्नेता ’ इत्येषा धाय्या । सूत्रितं च—‘ अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः । ( आश्व. श्रौ. ५.१४ ) इति ॥

**अ॒ग्निमु॒षस॑म॒श्विना॑ द॒धि॒क्रां व्यु॑ष्टिषु हवते॒ वह्नि॑रु॒क्थैः ।**

**सु॒ज्योति॑षो नः शृण्वन्तु दे॒वाः स॒जोष॑सो अध्व॒रं वा॑वशा॒नाः ॥ १ ॥**

अ॒ग्निम् । उ॒षस॑म् । अ॒श्विना॑ । द॒धि॒ऽक्राम् । विऽउ॑ष्टिषु । ह॒व॒ते॒ । वह्नि॑ः । उ॒क्थैः ।

सु॒ऽज्योति॑षः । नः॒ । शृ॒ण्व॒न्तु॒ । दे॒वाः । स॒ऽजोष॑सः । अ॒ध्व॒रम् । वा॒व॒शा॒नाः ॥ १ ॥

गाथी ब्रूते । ᵛवह्निः[4] हविषां प्रापयिताग्निः ᵛव्युष्टिषु उषसां व्युच्छनेषु[5] ᵛअग्निं यजनीयं देवम् ᵛउषसम् उषोऽभिमानिनीं देवताम् ᵛअश्विना अश्विनौ देवौ ᵛदधिक्राम् । दधिक्रावा नाम कश्चिद्देवः तं दधिक्रावाणम् । एतान् देवान्[6] ᵛउक्थैः शस्त्रैः शंसनसाधनैरप्रगीतमन्त्रात्मकैः सूक्तैः ᵛहवते आह्वयति । ᵛसुज्योतिषः सुष्ठु द्योतमानाः ᵛनः ᵛअध्वरम् अस्मत्संबन्धिनमिमं यज्ञं ᵛवावशानाः कामयमानाः ᵛसजोषसः परस्परं[7] संगताः[7] भूत्वा सर्वे ᵛदेवाः तदाह्वानं ᵛशृण्वन्तु ॥ दधिक्राम् । ‘ क्रमु पादविक्षेपे ’ । दधीत्युपपदे ‘ जनसनखनक्रमगमः° ’ इति विट् । ‘ विड्वनोरनुनासिकस्यात् ’ इत्याकारः । कृदुत्तरपदप्रकृतिस्वरः । व्युष्टिषु । ‘ उछी विवासे[8] ’ । भावे क्तिन् । व्रश्चादिना षत्वम् । ‘ तादौ च निति कृत्यतौ ’ इति गतेः प्रकृतिस्वरत्वम् । हवते । ह्वयतेः ‘ बहुलं छन्दसि ’ इति संप्रसारणम् । सुज्योतिषः । सुष्ठु द्योतमाना इति विग्रहे ‘ द्युत दीप्तौ ’ इत्यस्य ‘ द्युतेरिसिन्नादेश्च जः ’ ( उ. सू. २. २६७ ) इतीसिन्प्रत्ययो दकारस्य जकारः । कृदुत्तरपदप्रकृतिस्वरत्वम्[9] । बहुव्रीहिपक्षे तु ‘ नञ्सुभ्याम् ’ इत्युत्तरपदान्तोदात्तता स्यात् । यथा ‘सुज्योतिषो अक्तवस्ताँ अभि ष्युः ’

---

१. ल–सदेरप्रतेः । २. च-न-ल–°माद्यान्ते । ३. ख-ग-ज-ण-म–वैश्वदेवदेवताके; च-ल–वैश्वदेवताके । ४. त–वह्निः स्तुतीनां वोढा; ल–वह्निः स्तुतीनां वोढा होता । ५. त–व्युच्छितेषु । ६. त–‘देवान् ’ नास्ति । ७. त–सहप्रीयमाणा परस्परसंमिलिताः । ८. ख-ग-च-न-भ-स–विवासने । ९. ख-त-फ–°प्रकृतिस्वरः ।

(ऋ. सं. १०. ८९. १५) इत्यत्रान्तोदात्तता । तस्मादत्र नायं समासः किंतु तत्पुरुष एव । शृण्वन्तु । ' श्रु श्रवणे ' इत्यस्मात् ' श्रुवः शृ च ' इति श्नुः तत्संनियोगेन धातोः शृ इत्यादेशः । निघातः । वावशानाः । ' वश कान्तौ ' इत्यस्य यङ्लुकि रूपम् । अभ्यासस्य ' दीर्घोऽकितः ' इति दीर्घः । व्यत्ययेन शानच् । चित्स्वरः ॥

अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः ।
तिस्र उं ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥ २ ॥

अग्ने । त्री । ते । वाजिना । त्री । सधऽस्था । तिस्रः । ते । जिह्वाः । ऋतऽजात । पूर्वीः ।
तिस्रः । ऊँ इति । ते । तन्वः । देवऽवाताः । ताभिः । नः । पाहि । गिरः । अप्रऽयुच्छन् ॥२॥

हे अग्ने ते तव त्री वाजिना आज्यौषधिसोमात्मकानि त्रीण्यन्नानि त्री षधस्था त्रीणि आग्नीध्रीयादीनि धिष्ण्यानि स्थानानि । यद्वा एकाहाहीनसत्राख्यानि त्रीणि स्थानानि । यद्वा त्रयो लोकाः । ऋतजात ऋतेषु सत्यभूतेषु यज्ञेषु समुत्पन्न हे अग्ने ते तव पूर्वीः[1] देवानामुदरपूरयित्र्यः तिस्रः गार्हपत्याद्याः जिह्वाः[2] । हे अग्ने ते तव देववाताः देवैरभिलषिताः तिस्रः तन्वः पवमानपावकशुच्यात्मकानि त्रीणि शरीराणि । एवंभूतस्त्वम् अप्रयुच्छन् अप्रमाद्यन् सावधानो भूत्वा ताभिः तनूभिः नः अस्माकं स्तोतॄणां गिरः स्तोत्रशस्त्रादीनि वाक्यानि पाहि पालय[3] ॥ तिस्रः । ' तिसृभ्यो जसः ' इति जस उदात्तत्वम् । जिह्वाः । ' लिह आस्वादने ' । लिहन्त्याभी रसानिति ' शेवायह्वाजिह्वाग्रीवाप्वामीवाः ' इति निपातनात् वन् । लकारस्य जकारः । गुणाभावः । व्यत्ययेन अन्तोदात्तत्वम् । देववाताः । ' वा गतिगन्धनयोः ' । अस्मात्कर्मणि क्तः । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरत्वम् । पाहि । ' पा रक्षणे ' इत्यस्य लोटि रूपम् । निघातः । अप्रयुच्छन् । ' युच्छ प्रमादे ' । नञ्स्वरः ॥

अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य नाम ।
याश्च माया मायिनां विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो ॥ ३ ॥

अग्ने । भूरीणि । तव । जातऽवेदः । देव । स्वधाऽवः । अमृतस्य । नाम ।
याः । च । मायाः । मायिनाम् । विश्वम्ऽइन्व ।
त्वे इति । पूर्वीः । सम्ऽदधुः । पृष्टबन्धो इति पृष्टऽबन्धो ॥ ३ ॥

---

१. त-पूर्वीः देवानां जिह्वाः सात्विकादिभेदेन त्रिप्रकाराः । यद्वा त्रयो वा अग्नेयोहनो (अग्नयो हव्यवाहनो) वै देवानां कव्यवाहनः पितॄणां सह रक्षा असुराणामिति श्रुतेरग्नेस्त्रैविध्यात् जिह्वात्रैविध्ये (ध्यम्) । यद्वा । २. ख-ग-च-फ-भ-जिह्वाः स्वाहिकादिभेदेन त्रिप्रकाराः जिह्वाः; घ-प-जिह्वास्तिस्रो जिह्वाः सत्त्वादिभेदेन (घ-सत्त्विकादि°) त्रिप्रकाराः जिह्वाः; ज-ण-न-जिह्वाः सात्त्विकादिभेदेन त्रिप्रकाराः जिह्वाः ।
३. घ-प-पालय । उ पूरणः ।

देव[1] द्योतमान जातवेदः जातप्रज्ञ[2] स्वधावः अन्नवन् हे अग्ने अमृतस्य मरणधर्मरहितस्य तव संबन्धिनो देवाः भूरीणि बहूनि नाम नामानि तेजांसि त्वे त्वयि संदधुः संदधिरे । किंच । विश्वमिन्व विश्वस्य संतर्पक पृष्टबन्धो अपेक्षितफलप्रश्नविषयाणां स्तोतॄणां बन्धो हे अग्ने मायिनाम् असुराणां पूर्वीः भूयसीः याः मायाः देवास्त्वयि संदधुः संप्रयुयुजिरे तास्त्वयि सन्ति । तस्माद्यज्ञविघ्नकारिणां मायिनां मायाः परिहृत्य अस्मदीयं यज्ञं पालयेति भावः । च पूरणः ॥ स्वधावः । स्वधास्यास्तीति मतुप् । 'मतुवसो रुः०' इति नकारस्य रुः । अमृतस्य । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । नाम । 'णम[3] प्रह्वत्वे' । 'नामन्सीमन्व्योमन्०' इत्यादिना मनिन्प्रत्ययान्तत्वेन निपातनात् मकारलोपो दीर्घश्च । नमयन्ति सर्वानपि स्वाश्रयभूतान्पुरुषानिति नामानि तेजांसि । 'सुपां सुलुक्०' इति सुपो लुक् । नित्त्वादाद्युदात्तः । मायिनाम् । माया एषां सन्तीति व्रीह्यादित्वादिनिः । 'यस्य०' इति लोपः । प्रत्ययस्वरः । विश्वमिन्व । 'इवि व्याप्तिप्रीणनयोः' इत्यस्मात् विश्वशब्दे उपपदे 'कर्मण्यण्' इत्यण्प्रत्ययः । धातूपदेशावस्थायाम् 'इदितो नुम्०' इति नुमि प्राप्ते लघूपधगुणो न भवति । विश्वमिन्वति प्रीणयतीति विश्वमिन्वः । 'तत्पुरुषे कृति बहुलम्' इति द्वितीयाया अलुक् । आमन्त्रितत्वान्निघातः । संदधुः । 'डुधाञ् धारणपोषणयोः' इत्यस्य लिटयुसि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । पृष्टबन्धो । 'प्रच्छ ज्ञीप्सायाम्' इत्यस्य कर्मणि निष्ठायां 'ग्रहिज्यावयि०' इत्यादिना संप्रसारणम् । व्रश्चादिना षत्वम् । 'बन्ध बन्धने' इत्यस्मात् 'शृस्वृस्निहि०' इत्यादिना उप्रत्ययः । षष्ठीसमासः । आमन्त्रितत्वान्निघातः ॥

**अ॒ग्निर्ने॒ता भग॑इव क्षि॒ती॒नां दैवी॑नां दे॒व ऋ॑तु॒पा ऋ॒तावा॑ ।**

**स वृ॒त्र॒हा स॒नयो॑ वि॒श्ववे॑दाः पर्ष॒द्विश्वाति॑ दु॒रि॒ता गृ॒णन्त॑म् ॥ ४ ॥**

अ॒ग्निः । ने॒ता । भगः॑ऽइव । क्षि॒तीना॑म् । दैवी॑नाम् । दे॒वः । ऋ॒तु॒ऽपाः । ऋ॒तऽवा॑ ।

सः । वृ॒त्र॒ऽहा । स॒नयः॑ । वि॒श्वऽवे॑दाः । पर्ष॑त् । विश्वा॑ । अति॑ । दुः॒ऽइ॒ता । गृ॒णन्त॑म् ॥ ४ ॥

योऽयम् अग्निः क्षितीनां मनुष्याणां दैवीनां देवसंबन्धिनीनां विशां नेता अन्तर्यामितया नियामकः । तत्र दृष्टान्तः । ऋतुपाः भगइव । यथा वसन्ताद्यृतूनां पालकः सूर्यः सर्वस्य स्वप्रकाशप्रदानेन प्रवर्तकः तद्वत् । यश्चाग्निः ऋतावा सत्यकर्मा वृत्रहा वृत्रस्य[4] हन्ता सनयः[5] सनातनः पुराणः विश्ववेदाः सर्वविषयज्ञानवान् सर्वज्ञः देवः द्योतमानः सः तथाविधोऽग्निः गृणन्तं तद्विषयां स्तुतिं कुर्वन्तं स्तोतारं विश्वा दुरिता सर्वाणि दुरितानि अति अतिक्रम्य पर्षत् पारं[6] नयतु ॥ नेता । 'णीञ् प्रापणे' इत्यस्य तृचि रूपम् । चित्स्वरः । क्षितीनाम् । 'क्षि निवासगत्योः' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'नामन्यतरस्याम्' इत्यन्तोदात्तत्वम् । दैवीनाम् । देवशब्दात् संबन्धार्थे 'देवाद्यञञौ' इत्यञ् । अजि[7] 'टिड्ढाणञ्०' इति ङीप् । ञित्वादाद्युदात्तः । ऋतुपाः । 'पा रक्षणे' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । ऋतून् पातीति 'उपपदमतिङ्' (पा. सू. २. २. १९) इति समासः । कृदुत्तरपदप्रकृतिस्वरः । वृत्रहा ।

---

१. त–हे देव । २. च–जातप्रज्ञान । ३. ख-ग-च-त-भ-स–णमु । ४. त–वृत्रस्य पापस्य । ५. ख-ग-च-न-फ-भ-स–सन् यः; त–' सनयः ' नास्ति; । ६. घ–परिनयतु; त–पारं नयेत् । ७. ख-ग-च-ज-ण-न-भ-ल-स–ञित्वात् ।

'हन हिंसागत्योः'। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति[1] क्विप्। विश्ववेदाः। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम्। पर्षत्। 'पृ पालनपूरणयोः' इत्यस्य लेटि 'सिब्बहुलम्०' इति सिप्। अडागमः। 'इतश्च लोपः०' इतीकारलोपः। पादादित्वादनिघातः। गृणन्तम्। 'गॄ शब्दे'। लटः शतृ। क्र्यादित्वात् श्ना। शत्रन्तत्वात्[2] 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। शतृप्रत्ययस्वरः[2]॥

दधिक्रामग्निमुषसं च देवीं बृहस्पतिं सवितारं च देवम्।
अश्विना मित्रावरुणा भगं च वसून्रुद्राँ आदित्याँ इह हुवे ॥ ५ ॥

दधिऽक्राम्। अग्निम्। उषसम्। च। देवीम्। बृहस्पतिम्। सवितारम्। च। देवम्।
अश्विना। मित्रावरुणा। भगम्। च। वसून्। रुद्रान्। आदित्यान्। इह। हुवे ॥ ५ ॥

हे दधिक्रावादयः सर्वे देवा होताहं ᵛदधिक्रां दधिक्रावाणम् ᵛअग्निमुषसं ᵛच[3] ᵛदेवीम्[3] उषोऽभिमानिनीं देवतां च[4] ᵛबृहस्पतिं ᵛदेवं द्योतमानं ᵛसवितारं सर्वस्य जगतः प्रेरकं देवं ᵛच ᵛअश्विना अश्विनौ देवौ मित्रावरुणौ ᵛभगं सूर्यं ᵛच ᵛवसून् अष्टौ वसून् ᵛरुद्रान् एकादश रुद्रान् ᵛआदित्यान् द्वादशादित्यान् एतान्सर्वान् हविर्भुजो युष्मान् ᵛइह अस्मदीये कर्मणि ᵛहुवे हविःस्वीकरणार्थमाह्वयामि ॥ दधिक्राम्। दधातीति दधिः। 'आदृगमहन०' इत्यादिना किप्रत्ययः। दधीत्युपपदे क्रमेः 'जनसन०' इत्यादिना विट्। 'विड्वनोः०' इत्यात्त्वम्। देवीम्। देवस्य पत्नी देवी। 'पुंयोगादाख्यायाम्' इति ङीष्। 'यस्य०' इति लोपः। प्रत्ययस्वरेणान्तोदात्तः। बृहस्पतिम्। 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति पतिशब्दे परतो बृहच्छब्दस्य तलोपः[5] सुडागमश्च। 'उभे वनस्पत्यादिषु युगपत्' इत्युभयपदाद्युदात्तत्वम्। सवितारम्। 'षू प्रेरणे' इत्यस्य तृचि 'आर्धधातुकस्येड्वलादेः' इतीडागमः। चित्त्वादन्तोदात्तत्वम्। रुद्राँ आदित्याँ इत्यत्र संहितायां शसो नकारस्य 'दीर्घादटि समानपादे' इति रुत्वम्। ततः पूर्वस्यावर्णस्य[6] 'आतोऽटि नित्यम्' इत्यनुनासिकत्वम्। 'भो भगो अघो अपूर्वस्य योऽशि' इति रोः यादेशः[7]। 'लोपः शाकल्यस्य' इति तस्य लोपः। यलोपस्यासिद्धत्वात् स्वरसन्धिर्न भवति। अतः[8] रुद्राँ आदित्याँ इति भवति। एवमेकस्मिन्पादे आकारादटि परतो नकारस्य रुत्वयत्वपूर्वसवर्णानुनासिकादेशाः[9] उन्नेयाः। हुवे। ह्वयतेर्लेटि 'बहुलं छन्दसि' इति संप्रसारणम्[10]। इटः 'टित आत्मनेपदानाम्०' इत्येत्वम्[10]। उवङादेशः। निघातः ॥ ॥ २० ॥

'इमं नः' इति पञ्चर्चं नवमं सूक्तम्। अत्रेयमनुक्रमणिका—'इमं न उपाद्ये अनुष्टुभौ विराड्रूपा सतोबृहती चान्त्या' इति। द्वितीयातृतीये अनुष्टुभौ पञ्चमी विराड्रूपा सतोबृहती च। अनुक्तत्वात्प्रथमाचतुर्थ्यौ त्रिष्टुभौ। अस्यापि गाथी ऋषिः। पशौ स्तोकानुवचने इदं सूक्तम्। सूत्रितं च—'जुषस्व सप्रथस्तममिमं नो यज्ञम्' (आश्व. श्रौ. ३. ४) इति ॥

---

१. ख-ग-च-ज-ण-न-भ-ल-स-'क्विप् इति' नास्ति। २. त-क्र्या( प्वा )दित्वात् ह्रस्वः। नुमि श्नाभ्यस्तयोरातः इत्याकारलोपः। शतृप्रत्ययः। ३. ख-ग-ज-ण-भ-देवीं च; न-ल-स-देवीम्। ४. ख-ग-च-ज-ण-न-भ-'च' नास्ति। ५. त-तकारलोपः। ६. ख-ग-च-ज-ण-न-भ-पूर्वसवर्णस्य; ल-पूर्वस्य सवर्णस्य। ७. त-ल-यकारादेशः। ८. त-ततः। ९. ख-ग-च-ज-ण-न-भ-स-°नुनासिकाः। १०. त-संप्रसारणे इटः टित आत्मनेपदानामिति एत्वे।

इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व ।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्य ॥ १ ॥

इमम् । नः । यज्ञम् । अमृतेषु । धेहि । इमा । हव्या । जातऽवेदः । जुषस्व ।
स्तोकानाम् । अग्ने । मेदसः । घृतस्य । होतरिति । प्र । अशान । प्रथमः । निऽसद्य ॥ १ ॥

गाथी प्रार्थयते । हे जातवेदः जातप्रज्ञ अग्ने नः अस्माकं संबन्धिनम् इमं यज्ञं पशुयागम् अमृतेषु मरणधर्मरहितेषु यष्टव्यदेवेषु धेहि तदधीनतया समर्पय । त्वं च इमा इमान्यस्माभिर्दीयमानानि हव्या हव्यानि हवींषि जुषस्व सेवस्व । किंच होतः देवानामाह्वातः । 'अग्निर्वै देवानां होता' (ऐ. ब्रा. ३. १४) इत्याम्नानात् । तादृश हे अग्ने निषद्य वेद्यामुपविश्य प्रथमः सर्वेषामृत्विजामादिमः सन् मेदसः वपाख्यस्य हविषः घृतस्य आज्यस्य च स्तोकानाम् । द्वितीयार्थे षष्ठी । मेदोघृतयोर्ये स्तोका बिन्दवो विद्यन्ते तान्प्रकर्षेण अशान भक्षय । पिबेत्यर्थः ॥ धेहि । दधातेर्लोटि रूपम् । जुषस्व । 'जुषी प्रीतिसेवनयोः' इत्यस्य लोटि आत्मनेपदिनो रूपम् । अशान । 'अश भोजने' इत्यस्य लोटि 'हलः श्नः शानज्झौ' (पा. सू. ३. १. ८३) इति शानजादेशः । पश्चात् 'अतो हेः' इति हेर्लुक् । निघातः । प्रथमः । 'प्रथ प्रख्याने' । प्रथमः प्रथन्तेऽस्मात् द्वितीयादयः इति । 'प्रथेरमच्' (उ. सू. ५. ७४६) इत्यमच् । चित्त्वादन्तोदात्तः । निषद्य । 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य ल्यपि रूपम् । 'सदिरप्रतेः[1]' इति षत्वम् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् ॥

घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदसः ।
स्वधर्मन्देववीतये श्रेष्ठं नो धेहि वार्यम् ॥ २ ॥

घृतऽवन्तः । पावक । ते । स्तोकाः । श्चोतन्ति । मेदसः ।
स्वऽधर्मन् । देवऽवीतये । श्रेष्ठम् । नः । धेहि । वार्यम् ॥ २ ॥

पावक पापशोधक हे अग्ने स्वधर्मन् स्वायत्तधर्मके[2] साङ्गेऽस्मिन् यज्ञे ते तव भक्षणार्थं देववीतये यजनीयदेवानां भक्षणार्थं च घृतवन्तः घृतोपेताः मेदसः[3] मेदोरूपस्य[4] हविषः स्तोकाः बिन्दवः श्चोतन्ति क्षरन्ति । अथवा देववीतये देवस्य तव वीतये इति योजनीयम् । तस्मात् वार्यं वरणीयं संभजनीयं[5] श्रेष्ठम् उत्तमं धनं नः अस्मभ्यं धेहि प्रयच्छ ॥ श्चोतन्ति । 'श्चुतिर् क्षरणे' इत्यस्य लटि रूपम् । स्वधर्मन् । स्वेऽङ्गभूताः[6] धर्माणो यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । 'सुपां सुलुक्' इति सप्तम्या लुक् । देववीतये । देवानां वीतिः प्रीतिर्यस्यां भक्षणक्रियायां सा देववीतिः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । श्रेष्ठम् । प्रशस्यशब्दादतिशायने इष्ठन् । 'प्रशस्यस्य श्रः' इति श्रादेशः ।

---

१. न-भ-ल–सदेरप्रतेः । २. त–'स्वायत्तधर्मके' नास्ति । ३. ख-फ-भ–मेदसः मेदोपेताः । ४. त–वपारूपस्य । ५. ख-ग-ज-ण-न-फ-भ-स–भजनीयम् । ६. त–स्वे स्वीया अङ्गभूताः ।

गुणः । एकादेशस्वरः । धेहि । दधातेर्लोट् । वार्यम् । 'वृङ् संभक्तौ' । 'ऋहलोर्ण्यत्' इति ण्यत् । 'ईडवन्द°' इत्यादिनाद्युदात्तत्वम् । 'एतिस्तुशास्°' इत्यादिना क्यप् वृणोतेरेव न वृङः ॥

तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य ।

ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भव ॥ ३ ॥

तुभ्यम् । स्तोकाः । घृतऽश्चुतः । अग्ने । विप्राय । सन्त्य ।

ऋषिः । श्रेष्ठः । सम् । इध्यसे । यज्ञस्य । प्रऽअविता । भव ॥ ३ ॥

हे सन्त्य यष्टृभिः[1] संभजनीय यद्वा यष्टृभ्यः फलप्रद हे अग्ने विप्राय मेधाविने तुभ्यं त्वदर्थं घृतश्चुतः घृतक्षरणयुक्ताः स्तोकाः सन्ति । ऋषिः अतीन्द्रियार्थदर्शी अत एव श्रेष्ठः सर्वातिशायी[2] त्वं समिध्यसे घृतयुक्तमेदोबिन्दुभिः सम्यक् प्रज्वाल्यसे । स त्वं यज्ञस्य अस्माभिः क्रियमाणस्य पशुयागस्य प्राविता प्रकर्षेण पालकः भव ॥ तुभ्यम् । युष्मच्छब्दस्य ङयि 'तुभ्यमह्यौ ङयि' (पा. सू. ७. २. ९५) इति तुभ्यादेशः । 'ङेप्रथमयोरम्' इति ङेरमादेशः । 'ङयि च' इति आद्युदात्तत्वम् । सन्त्य । 'षण संभक्तौ'; 'षणु दाने' वा । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'न क्तिचि दीर्घश्च' इति दीर्घनलोपाभावः । सन्तौ भवः 'भवे छन्दसि' इति 'तत्र साधुः' इति वा यत्प्रत्ययः । यस्येति लोपः । आमन्त्रितत्वान्निघातः । इध्यसे । 'ञिइन्धी दीप्तौ' । कर्मणि यक् । क्त्वा-दनुनासिकलोपः । निघातः । प्राविता । अव रक्षणादिषु । तृचि रूपम् । समासस्वरः । भव । निघातः ॥

तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।

कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर ॥ ४ ॥

तुभ्यम् । श्चोतन्ति । अध्रिगो इत्यध्रिऽगो । शचीऽवः । स्तोकासः । अग्ने । मेदसः । घृतस्य ।

कविऽशस्तः । बृहता । भानुना । आ । अगाः । हव्या । जुषस्व । मेधिर ॥ ४ ॥

हे अध्रिगो अधृतगमन सततगमनस्वभाव । अत एव शचीवः शक्तिमन् हे अग्ने तुभ्यं त्वदर्थं मेदसः मेदोरूपस्य हविषः घृतस्य स्तोकासः बिन्दवः श्चोतन्ति स्रवन्ति । तस्मात्[3] कविशस्तः कविभिः कर्माभिज्ञैर्होत्रादिभिः स्तुतस्त्वं बृहता प्रभूतेन भानुना तेजसा सहितः सन् आगाः अस्मदीयं पशुयागमभ्यागच्छ । आगत्य च मेधिर प्रज्ञावन्नग्ने हव्या अस्माभिर्दीयमानानि वपादीनि हवींषि जुषस्व सेवस्व ॥ अध्रिगो । गमनं गौरिति 'गम्लृ सृप्लृ[4] गतौ' इत्यस्य भावे 'गमेर्डोः' इति डोः । अधृता गौर्येन इत्यत्र 'गोस्त्रियोरुपसर्जनस्य' इति गोशब्दस्य ह्रस्वत्वम् । धृतशब्दस्य[5] पृषोदरादित्वात् ध्रिभावः[6] । संबोधने 'संबुद्धौ च' (पा. सू. ७. ३. १०६) इति गुणः ।

---

१. ख-घ-चं-ज-ण-न-फ-भ-ल–यष्टृभ्यः । २. ख-ग-घ-च-ज-ण-प-फ-भ–'सर्वातिशायी' नास्ति । ३. ख-ग-च-ज-ण-फ-भ-स–अस्मात्, ल–अस्माकम् । ४. त–'सृप्लृ' नास्ति । ५. त–अधृतशब्दस्य । ६. त–अध्रिभावः ।

अपादादित्वान्निघातः । शचीवः । मतुपः 'मतुवसो रुः०' इति रुत्वम् । कविशस्तः । 'शंसु स्तुतौ' इत्यस्य निष्ठायामनुनासिकलोपः । 'यस्य विभाषा' इतीट्प्रतिषेधः । 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तत्वम् । भानुना । 'भा दीप्तौ' । 'दाभाभ्यां नुः' इति कर्तरि[1] नुः । प्रत्ययस्वरः । अगाः । 'इण् गतौ' इत्यस्य छान्दसे लुङि 'इणो गा०' इति गादेशः । 'गातिस्था०' इति सिचो लोपः । निघातः । मेधिर । 'मेधारथाभ्यामिरनिरचौ वक्तव्यौ' इतीरन् । आमन्त्रितत्वान्निघातः ॥

ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।

श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान्देवशो विहि ॥ ५ ॥

ओजिष्ठम् । ते । मध्यतः । मेदः । उत्ऽभृतम् । प्र । ते । वयम् । ददामहे ।

श्चोतन्ति । ते । वसोऽइति । स्तोकाः । अधि । त्वचि । प्रति । तान् । देवऽशः । विहि ॥ ५ ॥

हे अग्ने[2] ओजिष्ठम् अतिशयेन सारयुक्तं मेदः वपाख्यं हविः मध्यतः पशोर्मध्यभागात् ते त्वदर्थम् उद्भृतम् उद्धृतम् अध्वर्य्वादयः वयम् अस्मिन् पशौ ते तुभ्यं प्र ददामहे उद्धृतं तद्वपाख्यं हविः प्रयच्छामः । वसो सर्वस्य जगतो वासयितर्हे अग्ने त्वचि अधि वपायामुपरि ये स्तोकाः घृतमिश्रा बिन्दवस्ते ते त्वदर्थं श्चोतन्ति स्रवन्ति । यद्वा[3] ते तव त्वच्यधि ज्वालाख्यशरीरस्योपरि श्चोतन्ति[3] । तान् स्तोकान् देवशः देवेषु प्रति विहि प्रत्येकं विभजस्व ॥ मध्यतः । मध्यशब्दात् 'पञ्चम्यास्तसिः' ( पा. सू. ५.४.४४ ) इति तसिः । प्रत्ययस्वरः । उद्भृतम् । 'हृञ् हरणे' । कर्मणि क्तः । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । ददामहे । 'दद दाने' इत्यस्य लटि ङित्त्वादात्मनेपदम् । 'अतो दीर्घो यञि' इति दीर्घः । निघातः । श्चोतन्ति । 'श्चुतिर् क्षरणे' । पादादित्वादनिघातः । अन्तर्लसार्वधातुकस्वरेण अनुदात्तत्वे कृते धातुस्वरः । त्वचि । 'तनु विस्तारे' । 'तनोतेरनश्च वः' ( उ. सू. २. २२१ ) इति कर्तरि कर्मणि वा चिक् । अकारनकारयोर्वकारादेशः । तनोति तायते[4] वा त्वक् । 'सावेकाचः०' इति विभक्तेरुदात्तत्वम् । विहि । वी कान्तिगत्यादिष्वित्यस्य लोटि अदादित्वाच्छपो लुक् । ह्रस्वश्छान्दसः । निघातः[5] । खिलम्[6] ॥ ॥ २१ ॥

'अयं सः' इति पञ्चर्चं दशमं सूक्तम् । अत्रेयमनुक्रमणिका—'अयं स उपान्त्यानुष्टुप् पुरीष्येभ्योऽग्निभ्यः' इति । ऋषिः कौशिको गाथी[7] । पञ्चचितिरूपा अग्नयो देवता[8] । चतुर्थ्यनुष्टुप् शिष्टाः त्रिष्टुभः । प्रातरनुवाकाश्विनशस्त्रयोरुक्तः सूक्तविनियोगः । अग्निचयने इष्टकाप्रणयने 'पुरीष्यासः' इत्येषानुवचनीया । 'प्रेषितः पुरीष्यचितयेऽन्वाह' इत्युपक्रम्य 'पुरीष्यासो अग्नय इति त्रिरुपांशु सप्रणवम्' ( आश्व. श्रौ. ४. ८ ) इति सूत्रितम् ॥

---

१. त–'कर्तरि' नास्ति । २. ख-ग-च-ज-ण-प-भ–अग्ने त्वम् । ३. ख-ग-च-ज-ण-फ-भ-ल–'यद्वा... ...श्चोतन्ति' नास्ति । ४. ख-ग-च-ज-ण–तन्यते । ५. ख-च-ज-ण-फ-भ–'निघातः' नास्ति । ६. न-ल–खिलम् । ब्राह्मणानुसहितमिदं सूक्तम् । तत्र ब्राह्मणं पदव्याख्यानात्मकं न भवतीति नात्र लिखितम् । ७. त–गाथी पुरीष्यास इत्यस्याः । ८. त–देवताः शिष्टाः केवलाग्नेय्यः ।

अयं सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रिणं वाजमत्यं न सप्तिं ससवान्त्सन्त्स्तूयसे जातवेदः ॥ १ ॥

अयम् । सः । अग्निः । यस्मिन् । सोमम् । इन्द्रः । सुतम् । दधे । जठरे । वावशानः ।
सहस्रिणम् । वाजम् । अत्यम् । न । सप्तिम् । ससऽवान् । सन् । स्तूयसे । जातऽवेदः ॥ १ ॥

गाथी ब्रूते । अयम् उत्तरवेद्यामाहुत्यधिकरणभूताहवनीयरूपतया दृश्यमानः अग्निः सः तथाविधः खलु वावशानः सोमं कामयमानः इन्द्रः यस्मिन् अग्नौ सुतम् अभिषवादिसंस्कारोपेतं सोमं जठरे स्वोदरे दधे दधार[1] । तस्मात् तादृशमहिमोपेतः सोऽग्निरिति पूर्वेणान्वयः[2] । किंच हे जातवेदः सहस्रिणम् । सहस्रं नानारूपतां युद्धे यो भजति स सहस्री । तम्[3] अत्यं वेगवशात् अतनशीलं सप्तिं न अश्वमिव[4] वाजम् आज्यौषधिसोमाद्यनेकप्रकारं[5] हविर्लक्षणमन्नं ससवान् भेजिवान् सन् त्वं स्तूयसे स्तोतृभिरस्माभिः स्तूयमानो वर्तसे ॥ दधे । दधातेर्लिटि ‘ लिटस्तझयोरेशिरेच् ’ इति तप्रत्ययस्य एश् इत्यादेशः । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । वावशानः । ‘ वश कान्तौ ’ इत्यस्य यङ्लुकि ‘ दीर्घोऽकितः ’ इत्यभ्यासस्य दीर्घः । व्यत्ययेन शानच् । चित्स्वरः । ससवान् । ‘ षण संभक्तौ ’ । क्वसाविडभावः । नलोपः । प्रत्ययस्वरः । स्तूयसे । ‘ ष्टुञ् स्तुतौ ’ । कर्मणि यक् । ‘ अकृत्सार्वधातुकयोः° ’ इति दीर्घः । निघातः ॥

अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥ २ ॥

अग्ने । यत् । ते । दिवि । वर्चः । पृथिव्याम् । यत् । ओषधीषु । अप्ऽसु । आ । यजत्र ।
येन । अन्तरिक्षम् । उरु । आऽततन्थ । त्वेषः । सः । भानुः । अर्णवः । नृऽचक्षाः ॥ २ ॥

यजत्र यजनीय हे अग्ने दिवि द्युलोके यत् वर्चः आदित्याख्यं यज्ज्योतिस्तत् ते तवैव ज्योतिः । पृथिव्याम् आहवनीयादिरूपतया वर्तमानं[6] यत्तेजस्तत्त्वदीयमेव । प्रसिद्धं तेजोऽभिधाय गूढं ज्योतिरभिधत्ते । यदोषधीष्वप्सु[7] इति । ओषधीषु अरणिप्रभृतिषु काष्ठेषु यत् तेजः । यद्वा ओषधीषु वनस्पत्यादिषु सोमाख्यं यत्तेजः अप्सु जलेषु यदौर्वाख्यं तेजस्तत्सर्वम् आ सर्वत्र वर्तमानं तेजः तावकमेव[8] । किंच[9] येन वायुरूपेण तेजसा अन्तरिक्षम् आकाशम् उरु आततन्थ आतेनिथ[10] विस्तीर्णं कृतवानसि[11] । त्वेषः दीप्तिमान् अत एव भानुः भासमानः नृचक्षाः नृणां साक्षितया द्रष्टा अर्णवः समुद्रवन्महान् । सः तादृशस्त्वमन्तरिक्षमातेनिथेति पूर्वेणान्वयः । उक्तार्थं वाजसनेयकम्—

---

१. घ-ल–दधाति; त–धारयति । २. त–पूर्वेणान्वयः । अथ प्रत्यक्षकृतः । ३. ज-ण–तं सहस्रिणम् । ४. त–अश्वमिव । यद्वा सह( ? )सहस्रिणमिति वाजविशेषणं सहस्रसंख्याकम् । ५. च–आज्यौषधिसोमाद्यनेकरूपम्; त–आज्यौषधसोमाद्यनेकप्रकारम् । ६. त–दाहपाकादिकर्तृतया वर्तमानम् । ७. ज-ण-न-प–यदोषधीषु । ८. त–तावकमेव तत् । ९. त–किंच त्वम् । १०. प–उरु । ११. ख-च-ज-ण-फ-भ-ल–‘ कृतवानसि ’ नास्ति; प–आततम् ।

'अग्ने यत्ते दिवि वर्च इत्यादित्यो वा अस्य[1]. दिवि वर्चः पृथिव्यामित्ययमग्निः पृथिव्यां[2] यदोषधीष्वप्स्वा[2] यजत्रेति य एवौषधिषु चाप्सु चाग्निस्तमेतदाह[3] येनान्तरिक्षमुर्वाततन्थेति वायुः स त्वेषः स भानुरर्णवो नृचक्षा इति महान्त्स भानुरर्णवो नृचक्षा इत्येतत्' (श. ब्रा. ७. १. २३) इति ॥ पृथिव्याम्। 'उदात्तयणो हल्पूर्वात्' इति विभक्तेः उदात्तत्वम्[4]। ओषधीषु। 'ओषधेश्च विभक्तावप्रथमायाम्' इति दीर्घत्वम्। अप्सु। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। आततन्थ। 'तनु विस्तारे' इत्यस्य लिटि थलि 'बभूथाततन्थ जगृभ्म ववर्थ°' इति निपातनात् इडेत्वाभ्यासलोपाः न भवन्ति। 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। यद्वृत्तयोगादनिघातः। अर्णवः। अर्णांस्यस्मिन् सन्तीति मतुबर्थे 'वप्रकरणे अन्येभ्योऽपि दृश्यते' (का. ५. २. १०९. १) इति वप्रत्ययः। 'अर्णसः सलोपश्च' इति सलोपः। प्रत्ययस्वरः। नृचक्षाः। 'चक्षिङ् व्यक्तायां वाचि'। अभिव्यक्तवाग्वाच्ययं धातुरत्र अभिव्यक्तिमात्रे वर्तते। 'चक्षेर्बहुलं शिच्च' इत्यसुन्। कृदुत्तरपदप्रकृतिस्वरः ॥

अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये।
या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥ ३ ॥

अग्ने। दिवः। अर्णम्। अच्छ। जिगासि। अच्छ। देवान्। ऊचिषे। धिष्ण्याः। ये।
याः। रोचने। परस्तात्। सूर्यस्य। याः। च। अवस्तात्। उपऽतिष्ठन्ते। आपः ॥ ३ ॥

हे अग्ने त्वं दिवो अर्णं द्युलोके वर्तमानमर्णोऽम्भः अच्छ अभिलक्ष्य जिगासि धूमद्वारा प्राप्नोषि। किंच धिष्ण्याः। धियं बुद्ध्युपहितं देहमुष्णन्त्युष्णीकुर्वन्ति इति धिष्ण्याः[5] प्राणाभिमानिनो[6] देवाः[6]। तान्प्राणाख्यान् देवान् अच्छ अनुक्रमेण ऊचिषे समवेतान्करोषि। समवेता भवतेत्युक्तवान् असीत्यर्थः। सूर्यस्य[7] सूर्यलोकस्य परस्तात् उपरि रोचने। रोचनो नामायं लोको यत्राग्नेयं ज्योतिः तपति। तस्मिन्भासमाने रोचनाख्ये लोके याः आपो विद्यन्ते अवस्तात् सूर्यलोकात्[8] अधस्तात् अन्तरिक्षलोके याश्च आपः उपतिष्ठन्ते वर्तन्ते ता उभयीरपस्त्वं प्रेरयसि। उक्तार्थो वाजसनेयिभिः स्पष्टमभिहितः—'आपो वा अस्य दिवोऽर्णस्ता एष धूमेनाच्छैत्यच्छा देवाँ ऊचिषे धिष्ण्या य इति प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्ति[9] या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आप इति[9] रोचनो ह नामैष लोको यत्रैष एतत्तपति तद्याश्चैतं परेणापो याश्चावरेण ता एतदाह' (श. ब्रा. ७. १. २४) इति। ता उभयीरपस्त्वं प्रेरयसीति ॥ अर्णम्। 'ऋ गतौ' इत्यस्मात् 'उदके नुट् च' इत्यसुन्नुडागमश्च। अर्यते[10] प्रार्थ्यते तत्पिपासुभिरित्यर्णः। सकारलोपश्छान्दसः। नित्वादाद्युदात्तः। जिगासि। 'गा स्तुतौ च छन्दसि' इत्ययं धातुश्चकाराद्गमने वर्तमानः[11] जुहोत्यादिः। 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम्। निघातः। ऊचिषे। 'ब्रूञ् व्यक्तायां वाचि' इत्येतस्य लिट आर्धधातुकत्वात् 'ब्रुवो वचिः' (पा. सू. २. ४. ५३) इति वच्यादेशः। 'असंयोगाल्लिट् कित्'

---

१. त–अस्याम्। २. त–'पृथिव्यां......°ष्वप्स्वा' नास्ति। ३. ख-च-ज-ण-फ-भ–चाग्निस्तमेव तदाह; त-ल–चाग्निस्तमेतमाह। ४. ख-च-ज-ण-न-फ-भ-स–आद्युदात्तत्वम्। ५. न–धिष्ण्याः प्राणाः। यद्वा धिषणा स्तुतिस्तदर्हाः। प्राणा ये(वै)धिष्ण्याः; ल–प्राणा यै(वै) धिष्ण्याः। ६. त–प्राणाः। ७. त-ल–किंच सूर्यस्य। ८. च–सूर्यलोकस्य। ९. त–उदमन्ति तानेष सचते या रोचन इति। १०. त–अर्थ्यते। ११. त-ल–वर्तते।

इति किद्वद्भावात् ‘ वचिस्वपि° ’ इत्यादिना संप्रसारणम् । अभ्यासस्य ‘ लिट्यभ्यासस्योभयेषाम् ’ इति संप्रसारणम् । आर्धधातुक इट् । निघातः । धिष्ण्याः । ‘ उप प्लुष दाहे ’ । धिय उष्णन्तीति ‘ सानसिधर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ’ इति निपातनात् यत्नुडागम-धात्वादिलोपोपपदह्रस्वत्वादयः सर्वे सिद्धा भवन्ति[1] । नित्त्वादाद्युदात्तः । अवस्तात् । अवरशब्दात् ‘ दिक्छब्देभ्यः सप्तमीपञ्चमी° ’ इत्यादिना अस्तातिः । तस्मिन् ‘ विभाषावरस्य ’ (पा.सू.५.३.४१) इत्यवादेशः । प्रत्ययस्वरः । उपतिष्ठन्ते[2] । ‘ ष्ठा गतिनिवृत्तौ ’ । उपपूर्वात्तिष्ठतेः ‘ अकर्मकाच्च ’ (पा. सू. १. ३. २६ ) इत्यात्मनेपदम् । यद्वृत्तयोगादनिघातः[2] ॥

पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः ।

जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥ ४ ॥

पुरीष्यासः । अग्नयः । प्रवणेभिः । सऽजोषसः ।

जुषन्ताम् । यज्ञम् । अद्रुहः । अनमीवाः । इषः । महीः ॥ ४ ॥

ᵛपुरीष्यासः[3] सिकतासंमिश्राः ᵛअग्नयः चित्या[4] अग्नयः[4] ᵛप्रवणेभिः मृत्खननसाधनभूतैरभ्र्यादिभिः सहिताः ᵛसजोषसः परस्परसंगताः सन्तः ᵛयज्ञम् अस्माभिः क्रियमाणमग्निचयनपूर्वकमिमं सोमयागं ᵛजुषन्तां सेवन्ताम् । किंच ᵛअद्रुहः अद्रोग्धारो यूयम् ᵛअनमीवाः रोगादिवर्जिताः ᵛमहीः महत्यः ᵛइषः ऊर्जाः रोगादिरहितान्यन्नान्यस्मभ्यं प्रयच्छताम् ॥ पुरीष्यासः । ‘ पॄ पालनपूरणयोः ’ । ‘ ईषन् ’ इत्यनुवृत्तौ ‘ शॄपॄभ्यां कित् ’ ( उ. सू. ४. ४६७ ) इति ईषन्प्रत्ययः किच्च[5] । कित्त्वाद्गुणे प्रति-षिद्धे ‘ उदोष्ठ्यपूर्वस्य ’ इत्युत्वम् । रपरः । पृणाति पूर्यते वेति[6] पुरीषम्[7] । ‘ पुरीषं पृणातेः पूरयतेर्वा ’ (निरु. २.२२) इति यास्कः[8] । तदर्हन्तीति पुरीष्याः । ‘ छन्दसि च ’ इति यप्रत्ययः । ‘ यचि भम् ’ इति भसंज्ञायां यस्येति लोपः । प्रत्ययस्वरः । प्रावणेभिः[9] । ‘ वन षण संभक्तौ ’ इत्यस्मात् ‘ पुंसि संज्ञायां घः प्रायेण ’ इति करणे घप्रत्ययः[10] । प्रकर्षेण वन्यते संभज्यते संश्लिष्यते मृदेभिरिति प्रावणानि[11] खनित्राणि । ‘ प्रनिरन्तः° ’ ( पा. सू. ८. ४. ५ ) इत्यादिना णत्वम् । ‘ वनं समासे ’ (पा. सू. ६. २. १७८) इत्यन्तोदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम्[12] । यद्वा । ‘ प्रुङ् गतौ ’ । प्रवन्ते गच्छन्ति मृत्खननं प्रति इति ‘ चलनशब्दार्थादकर्मकाद्युच् ’ ( पा. सू ३. २. १४८ ) इति युच् । चित्स्वरः । पूर्वस्मिन्पक्षेऽवग्रहाभावश्छान्दसः इति वक्तव्यम् । जुषन्ताम् । ‘ जुषी प्रीतिसेवनयोः ’ इत्यस्य लोटि रूपम् । पादादित्वादनिघातः । महीः । महच्छब्दात् ‘ उगितश्च ’ इति ङीप् । तकारलोपः छान्दसः । प्रत्ययस्वरेणान्तोदात्तः ॥

---

१. ख-च-ज-ण-फ—न भवन्ति । २. ख-च-ज-ण-भ—‘ उपतिष्ठन्ते......... °निघातः ’ नास्ति । ३. त—पुरीष्यासः । पुरीषमर्हन्तीति पुरीषे भवा वा पुरीष्याः ; ल—पुरीष्यासः । पुरीषमर्हति पुरीष्यासः । ४. त—चित्याग्नयः । ५. ल—कित्त्वं च । ६. ख-फ—वैभिरिति; भ—त्वेभिरिति । ७. त—‘ पुरीषं ’ नास्ति । ८. त—यास्कः । तस्माद्भवे छन्दसि इति यत् । तित्स्वरितः । ९. च-त-फ-ल—प्रवणेभिः । १०. ख-ज-ण—घप्रत्ययस्वरः; च—घः प्रत्ययः स्वरः । ११. त—प्रवणानि । १२. ख-च-ज-ण-न-भ—°पदस्वरः ।

इळा॑मग्ने पुरु॒दंसं॑ स॒निं गोः श॑श्वत्त॒मं हव॑मानाय साध ।
स्यान्नः॑ सू॒नुस्तन॑यो वि॒जावाग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥ ५ ॥

इळा॑म् । अ॒ग्ने॒ । पु॒रु॒ऽदंस॑म् । स॒निम् । गोः । श॒श्व॒त्ऽत॒मम् । हव॑मानाय । सा॒ध॒ ।
स्यात् । नः॒ । सू॒नुः । तन॑यः । वि॒जाऽवा॑ । अग्ने॑ । सा । ते॒ । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ॥ ५ ॥

एषा ऋक् पूर्वमेव व्याख्याता[1] ॥ ॥ २२ ॥

'निर्मथितः सुधितः' इति पञ्चर्चमेकादशं सूक्तम् । अत्र[2] अनुक्रमणिका—'निर्मथितौ देवश्रवा देववातश्च भारतौ तृतीया सतोबृहती' इति । भरतस्य पुत्रौ देवश्रवा देववातश्चेत्युभावस्य ऋषी । तृतीया सतोबृहती । शिष्टास्त्रिष्टुभः । अग्निर्देवता । 'आ होता' इत्यादिसूक्तदशकस्योक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः । 'इळामग्ने' इत्यस्या विनियोगोऽसकृदुक्तः ॥

निर्म॑थितः॒ सुधि॑त॒ आ स॒धस्थे॒ युवा॑ क॒विर॑ध्व॒रस्य॑ प्रणे॒ता ।
जूर्य॑त्स्व॒ग्निर॒जरो॒ वने॒ष्वत्रा॑ दधे अ॒मृतं॑ जा॒तवे॑दाः ॥ १ ॥

निः॒ऽम॑थितः । सु॒ऽधि॑तः । आ । स॒ध॒ऽस्थे॑ । युवा॑ । क॒विः । अ॒ध्व॒रस्य॑ । प्र॒ऽने॒ता ।
जूर्य॑त्ऽसु । अ॒ग्निः । अ॒जरः॑ । वने॑षु । अत्र॑ । द॒धे॒ । अ॒मृत॑म् । जा॒त॒ऽवे॑दाः ॥ १ ॥

भारतावृषी स्तोत्रं कुर्वाते । योऽग्निः निर्मथितः अग्निष्टोमादिकर्मस्वरण्योर्नितरां मथितः सन् सधस्थे यजमानगृहे सुधितः गार्हपत्यादिषु त्रिषु कुण्डेषु सुष्ठु निहितः निधाय च काष्ठप्रक्षेपेण प्रज्वाल्यमानः युवा[3] प्रबुद्धः अत एव अध्वरस्य ज्योतिष्टोमादेः प्रणेता प्रकर्षेण नेता निर्वाहकः नेतृत्वादेव कविः क्रान्तदर्शी । तथाविधः जातवेदाः सर्वविषयाभिज्ञानवान् सः अग्निः वनेषु महारण्येषु जूर्यत्सु दावाग्निसंबन्धात् जूर्यमाणेषु जरां नाशं प्राप्नुवत्स्वपि स्वयम् अजरः जरारहितः प्रत्युत दीप्यमानः सन् अत्र[4] एवं[4] स्तुतिं कुर्वाणेषु यजमानेषु अमृतं क्षयरहितं प्रभूतमन्नम् आ दधे निदधाति ॥ सुधितः । दधातेः कर्मणि निष्ठायां 'सुधितवसुधितनेमधित०' इत्यादिना निपातनात् धि इत्यादेशः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । जूर्यत्सु । 'जूरी घूरी हिंसावयोहान्योः' । व्यत्ययेन शतृप्रत्ययः । दिवादित्वात् श्यन् । नित्त्वादाद्युदात्तः । अजरः । 'जॄ[5] वयोहानौ' इत्यस्मात् भावे[6] 'ऋदोरप्' इत्यप्प्रत्ययः । गुणः । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । दधे । दधातेः वर्तमाने लिटि रूपम् । जातवेदाः । 'जनी प्रादुर्भावे' इत्यस्य क्ते 'जनसनखनां सञ्झलोः' इत्याकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्[7] ॥

---

१. त–व्याख्यायि । २. त–अथ । ३. त–युवा नित्यतरुणः । ४. फ–अत एव । ५. त–जॄष् । ६. त–भावे षिद्भिदादिभ्योऽङ् । ७. त–°स्वरः ।

अम॑न्थिष्टां भार॑ता रे॒वद॒ग्निं दे॒वश्र॑वा दे॒ववा॑तः सु॒दक्ष॑म् ।
अग्ने॒ वि प॑श्य बृह॒ताभि रा॒येषां नो॑ ने॒ता भ॑वता॒दनु॒ द्यून् ॥ २ ॥

अम॑न्थिष्टाम् । भार॑ता । रे॒वत् । अ॒ग्निम् । दे॒वऽश्र॑वाः । दे॒वऽवा॑तः । सु॒ऽदक्ष॑म् ।

अग्ने॑ । वि । प॒श्य॒ । बृ॒ह॒ता । अ॒भि । रा॒या । इ॒षाम् । नः॒ । ने॒ता । भ॒व॒ता॒त् । अनु॑ । द्यून् ॥२॥

हे ᵛअग्ने ᵛभारता भारतौ भरतस्य पुत्रौ ᵛदेवश्रवाः ᵛदेववातः चेत्युभौ ᵛसुदक्षं शोभनसामर्थ्योपेतं ᵛरेवत् रयिमन्तम् ᵛअग्निम् अङ्गनादिगुणोपेतं त्वाम्[1] ᵛअमन्थिष्टाम् अग्निष्टोमादिकर्मप्राप्त्यर्थमलुलुडताम् । मथनेन त्वामुत्पादितवन्तावित्यर्थः । तादृशस्त्वं ᵛबृहता[2] प्रभूतेन ᵛराया धनेन सहितः सन् ᵛअभि अभिमुखो भूत्वा ᵛवि ᵛपश्य अस्मान्विशेषेणानुग्रहदृष्ट्या वीक्षस्व । किंच ᵛअनु ᵛद्यून् । द्युशब्दः अहर्वाची ' वस्तोः द्युः ' ( नि. १.९.२ ) इति तन्नामसु पाठात् । द्यूननु सर्वेषु दिवसेषु ᵛनः अस्माकम् ᵛइषाम् अन्नानां ᵛनेता आनेता ᵛभवतात् भव ॥ अमन्थिष्टाम् । ' मन्थ विलोडने ' इत्यस्माल्लुङि सिच् । ' वदव्रजहलन्तस्याचः ' ( पा. सू. ७. २. ३ ) इति वृद्धौ प्राप्तायां ' नेटि ' इति प्रतिषेधः । ' तस्थस्थमिपाम्° ' इत्यादिना तसस्तामादेशः । पादादित्वादनिघातः । अट्स्वरः । भारता । भरतस्यापत्यमित्यर्थे उत्सादित्वादञ् । ' तद्धितेष्वचामादेः ' इत्यादिवृद्धिः[3] । ञित्स्वरः । रेवत् । रयिशब्दान्मतुप् । वत्वोदात्तत्वसंप्रसारणपरपूर्वत्वगुणसुब्लोपाः । देवश्रवाः । ' श्रु श्रवणे ' । ' असुन् ' इति कर्मण्यसुन् । देवैः श्रूयते प्रख्याप्यतेऽसाविति देवश्रवा ऋषिः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते ' गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ' इत्यौणादिकसूत्रात्पूर्वपदस्वरः । देववातः । ' वा गतिगन्धनयोः ' । अस्मात्कर्मणि क्तः । देवैरिष्यमाणतया प्राप्तो देववातः ऋषिः । ' तृतीया कर्मणि ' इति पूर्वपदस्वरः । द्यून् । ' द्यु अभिगमने ' ' द्युत दीप्तौ ' वा । ' ङिच्च ' इत्यनुवृत्तौ ' द्युयुभ्यां च ' इति भोजसूत्रेण डुप्रत्ययो ङिच्च । द्युतेः ' अश्वादयश्च ' ( उ. सू. ५.७०७ ) इति डुन्प्रत्ययः । अभिगच्छन्त्यस्मिन् स्वं स्वमभिमतं[4] देशं प्राणिनः इति ; द्योतते किरणसंबन्धादिति वा द्युर्दिवसः । ' प्रथमयोः° ' इति सवर्णदीर्घः । ' तस्माच्छसो नः पुंसि ' ( पा. सू. ६. १. १०३ ) इति सकारस्य नकारः । एकादेशस्वरः[5] ॥

दश॒ क्षिप॑ः पू॒र्व्यं सी॑मजीजन॒न्त्सुजा॑तं मा॒तृषु॑ प्रि॒यम् ।
अ॒ग्निं स्तु॑हि दैव॒वा॒तं दे॑वश्र॒वो यो जना॑ना॒मस॑द्व॒शी ॥ ३ ॥

दश॑ । क्षिप॑ः । पू॒र्व्यम् । सी॒म् । अ॒जी॒ज॒न॒न् । सु॒ऽजा॑तम् । मा॒तृषु॑ । प्रि॒यम् ।

अ॒ग्निम् । स्तु॒हि॒ । दै॒व॒ऽवा॒तम् । दे॒व॒ऽश्र॒वः॒ । यः । जना॑नाम् । अस॑त् । व॒शी ॥ ३ ॥

हे अग्ने देववातस्य ᵛक्षिपः । क्षिप्यन्ते कर्मकरणार्थमिति क्षिपोऽङ्गुलयः ताश्च ᵛदश । बाहुद्वयस्य मथनसाधनत्वेन[6] तत्रत्या अङ्गुलयो दशसंख्याकाः । तादृश्योऽङ्गुलयः ᵛपूर्व्यं पुरातनं ᵛसीम्

---

१. ख-ग-च-ज-ण-ण-फं-भ-' त्वां ' नास्ति ।　२. त-बृहता महता ।　३. ख-ग-च-ज-ण-भ-इत्यादिना वृद्धिः ।　४. ख-ग-च-ज-ण-न-फ-भ-स्वम् एतम् ; स-स्वम् ।　५. ख-ग-च-ज-ण-न-फ-भ-' एकादेशस्वरः ' नास्ति ।　६. त-मन्थन° ।

एनं त्वाम् ᵛअजीजनन् उदपीपदन्[1]। हे ᵛदेवश्रवः ᵛमातृषु मातृभूतारण्योः ᵛसुजातं सुष्ठूत्पन्नम् अत एव ᵛप्रियं[2] कमनीयं ᵛदैववातं[3] देववातेन[3] मथितमेनम् ᵛअग्निं ᵛस्तुहि। ᵛयः अग्निः ᵛजनानां स्तोतॄणां यजमानानां ᵛवशी वशवर्ती[4] कर्मणां स्वातन्त्र्येण प्रवर्तकः ᵛअसत् भवति तं स्तुहीति पूर्वेणान्वयः॥ दश। 'दंश दशने'। 'कनिन्' इत्यनुवृत्तौ 'नुदशोर्गुणश्च' इति कनिन्। नित्स्वरः। क्षिपः। 'क्षिप प्रेरणे[5]'। औणादिकः कर्मणि क्विप्। क्षिप्यन्ते प्रेर्यन्ते कर्मस्विति क्षिपोऽङ्गुलयः। धातुस्वरः। अजीजनन्। 'जनी प्रादुर्भावे'। हेतुमण्ण्यन्तस्य लुङि चङ्द्विर्वचन-सन्वद्भावाभ्यासेत्वदीर्घाः। निघातः। स्तुहि। 'ष्टुञ् स्तुतौ' इत्यस्य लोटि रूपम्। अदादित्वात् शपो लुक्। निघातः। दैववातम्। देववातेन निर्वृत्तमित्यर्थे 'तेन निर्वृत्तम्' (पा. सू. ४. २. ६८) इत्यण्। प्रत्ययस्वरः। असत्। 'अस भुवि'। अस्य लेटयडागमः। यद्वृत्तयोगादनिघातः॥

नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नाम्।

दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि॥ ४॥

नि। त्वा। दधे। वरे। आ। पृथिव्याः। इळायाः। पदे। सुदिनऽत्वे। अह्नाम्।

दृषत्ऽवत्याम्। मानुषे। आपयायाम्। सरस्वत्याम्। रेवत्। अग्ने। दिदीहि॥ ४॥

हे ᵛअग्ने ᵛइळायाः गोरूपधारिण्याः ᵛपृथिव्याः भूमेः ᵛवरे वरिष्ठे[6] ᵛपदे[7] उत्तरवेद्याम् ᵛअह्नां ᵛसुदिनत्वे यजनीयदिवसानां शोभनदिनत्वार्थम्। येषु दिनेषु इन्द्रादयो वरीयांसो देवा इज्यन्ते तानि सुदिनानि। तदर्थं ᵛत्वा त्वाम् ᵛआ ᵛनि ᵛदधे आ[8] समन्तान्निदधामि। उत्तमानि स्थानानि दर्शयति। ᵛदृषद्वत्याम्। दृषद्वती नाम काचिन्नदी तस्याम्। ᵛमानुषे मनुष्यसंचरणविषये[9] तीरे। ᵛआपयायाम्। आपया नाम काचिन्नदी तस्याम्। ᵛसरस्वत्यां नद्याम्। एतेषु उत्तमेषु[10] स्थानेषु[10] त्वं ᵛरेवत् धनयुक्तं यथा भवति तथा ᵛदिदीहि[11] दीप्यस्व। महर्षयः सरस्वतीतीरे खलु यज्ञादिकर्माण्य-कार्षुः। तथा च ब्राह्मणम्—'ऋषयो वै सरस्वत्यां सत्रमासत' (ऐ. ब्रा. २. १९) इति॥ दधे। दधातेः लिट्युत्तमैकवचने रूपम्। वरे। 'वृञ् वरणे'। 'ग्रहवृदृनिश्चिगमश्च' इत्यप्। पित्त्वादनुदात्तत्वे धातुस्वरः। दृषद्वत्याम्। 'दॄ विदारणे'। 'दृणातेः पुग्घ्रस्वश्च' (उ. सू. १. १२८) इत्यादिना पुगागमो धातोर्ह्रस्वश्च। दृषदः उपलाः यस्यां सन्तीति मतुप्। 'झयः' इति तस्य वत्वम्। 'स्वर-विधौ व्यञ्जनमविद्यमानवत्' इत्यस्याः परिभाषाया अत्राश्रयणाभावात्[12] मतुप उदात्तताभावः। अदिप्रत्ययस्वरः। सरस्वत्याम्। सरःशब्दोऽसुनन्तत्वादाद्युदात्तः। तदस्यास्तीति मतुप्। अदुपध-त्वान्मस्य वत्वम्। उगित्त्वात् ङीप्। दिदीहि[13]। दिवु क्रीडादौ इत्यस्य यङ्लुकि रूपम्॥

---

१. ख-ग-घ-च-ज-ण-प-फ-भ-ल—उदपादयन्। २. ल—प्रियं तम्। ३. त—दैवव्रातेन मम भ्रात्रा। ४. ख-च-ज-ण-न-प-फ—वशकर्ता; ग-भ—वशवर्ता। ५. त—क्षेपणे। ६. त—वरिष्ठे श्रेष्ठे। ७. त—पदे नाभिस्थाने। ८. त—'आ' नास्ति। ९. ख-न-फ-भ-स—मनुष्यसंचरणे°; ग-च—मनुष्यसंचारणे°; ज-ण—मनुष्यसंचारण°; ल—मनुष्यसंचार°। १०. ल—उत्तमस्थानेषु। ११. ख-ग-घ-च-ज-ण-न-प-फ-भ-ल—दीदिहि। १२. त—अनाश्रयणात्। १३. ख-ग-च-न-भ-ल—दीदिहि।

इळा॑मग्ने पुरु॒दंसं॑ स॒निं गोः श॑श्वत्त॒मं हव॑मानाय साध ।
स्यान्नः॑ सू॒नुस्तन॑यो वि॒जावाग्ने॒ सा ते॑ सुम॒तिर्भू॑त्व॒स्मे ॥ ५ ॥

इळा॑म् । अ॒ग्ने॒ । पु॒रु॒ऽदंस॑म् । स॒निम् । गोः । श॒श्व॒त्ऽत॒मम् । हव॑मानाय । सा॒ध॒ ।
स्यात् । नः॒ । सू॒नुः । तन॑यः । वि॒जाऽवा॑ । अग्ने॑ । सा । ते॒ । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ॥५॥

व्याख्यातेयमित्युपेक्षिता ॥ ॥ २३ ॥

'अग्ने सहस्व' इति पञ्चर्चं द्वादशं सूक्तम् । अत्रानुक्रमणिका—'अग्ने सहस्व गायत्रमाद्यानुष्टुप्' इति । ऋषिर्गाथिनो विश्वामित्रः । अग्निर्देवता । आद्यानुष्टुप् शिष्टा गायत्र्यः । सूक्तविनियोगो लैङ्गिकः । प्रातरनुवाके आश्विनशस्त्रे च प्रथमावर्जितस्य सूक्तस्य विनियोगः । 'अथैतस्याः' इति खण्डे सूत्रितम्[1]–'अग्न इळेति चतस्रः' ( आश्व. श्रौ. ४. १३ ) इति । अभ्युदयेष्टावग्नेर्दातुरनुवाक्या 'अग्ने दा दाशुषे' इत्येषा । 'अथाग्नेय्यः' इति खण्डे सूत्रितम्–'अग्ने दा दाशुषे रयिं स यन्ता विप्र एषाम्' ( आश्व. श्रौ. ३. १३ ) इति ॥

अग्ने॒ सह॑स्व॒ पृत॑ना अ॒भिमा॑ती॒रपा॑स्य । दु॒ष्टर॒स्तर॒न्नरा॑ती॒र्वर्चो॑ धा य॒ज्ञवा॑हसे ॥ १ ॥

अग्ने॑ । सह॑स्व । पृत॑नाः । अ॒भिऽमा॑तीः । अप॑ । अ॒स्य॒ ।
दु॒स्तरः॑ । तर॑न् । अरा॑तीः । वर्चः॑ । धाः॒ । य॒ज्ञऽवा॑हसे ॥ १ ॥

विश्वामित्रः स्तौति । हे ᵛअग्ने ᵛपृतनाः अभियोक्त्रीः सेनाः ᵛसहस्व अभिभव[2] । ᵛअभिमातीः अभिमानिनः कर्मविघ्नकारिणः शत्रून् ᵛअपास्य[3] अपनुद । किंच ᵛदुष्टरः दुस्तरः[4] न केनापि तरितुं[5] शक्यः अत एव ᵛअरातीः अरातीन् शत्रून् ᵛतरन् स्वतेजसा तिरस्कुर्वंस्त्वं ᵛयज्ञवाहसे यज्ञनिर्वाहकाय यजमानाय ᵛवर्चो ᵛधाः अन्नं धेहि । कुरु ॥ सहस्व । 'षह मर्षणे' इत्यस्य लोटि रूपम् । आमन्त्रितस्य अविद्यमानत्वेन पादादित्वाद्धनिघातः । अभिमातीः । 'माङ् माने'। मानं मातिः । भावे क्तिन् । अस्य[6] लुग्विकरणत्वात्[6] ईस्त्वे[7] न भवतः । अभितो मानं येषां ते इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अस्य । 'असु क्षेपणे' । दिवादेः[8] लोटि रूपम् । दुष्टरः । 'तॄ प्लवनतरणयोः' । अस्मात् कृच्छ्रार्थे[9] खल् । सुषामादित्वात्[10] विसर्जनीयस्य सकारस्य षत्वम् । लित्स्वरः । तरन् । तरतेः शतरि रूपम् । अदुपदेशाल्लसार्वधातुकस्वरेण शतुरनुदात्तत्वे कृते धातुस्वरः । धाः । दधातेश्छन्दसि लुङि रूपम् । निघातः ॥

अग्न॑ इ॒ळा समि॑ध्यसे वी॒तिहो॑त्रो॒ अम॑र्त्यः । जु॒षस्व॒ सू नो॑ अध्व॒रम् ॥ २ ॥

अग्ने॑ । इ॒ळा । सम् । इ॒ध्य॒से॒ । वी॒तिऽहो॑त्रः । अम॑र्त्यः । जु॒षस्व॑ । सु । नः॒ । अ॒ध्व॒रम् ॥ २ ॥

१. ख-ग-ज-ण-फ-भ–सूत्रितः । २. ल–अभिभवसि । ३. त–'अपास्य' नास्ति । ४. च-ल–'दुस्तरः' नास्ति । ५. त–तरीतुम् । ६. ख-ग-ज-ण-फ–अस्यालुग्विकरणत्वात् । ७. ख-ग-ज-ण-भ-ल-स–त्वे । ८. ल–दिवादिः । ९. ख-ग-च-ज-ण-त-न-भ-स–अकृच्छ्रार्थे । १०. ख-ग-च-ज-ण-भ-स–चात् ।

हे ᵛअग्ने ᵛवीतिहोत्रः । वीतिः प्रीतिविषयं होत्रम् अग्निहोत्रादिकं यस्यासौ वीतिहोत्रः । यज्ञेषु प्रीतिमानित्यर्थः । ᵛअमर्त्यः मरणधर्मरहितस्त्वम् ᵛइळा इळायामीडयायाम्[1] उत्तरवेद्यां ᵛसमिध्यसे आज्याहुतिप्रक्षेपेण[2] सम्यक् प्रज्वाल्यसे । तादृशस्त्वं ᵛनः अस्माकम् ᵛअध्वरम् इमं यज्ञं ᵛसु सुष्ठु ᵛजुषस्व आहुतिस्वीकरणेन सेवस्व ॥ वीतिहोत्रः । वी कान्त्यादिषु । अस्मात्कर्मणि 'मन्त्रे वृषेषपच°' इत्यादिना क्तिन्नुदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः[3] । जुषस्व । जुषतेर्लोटि रूपम् । शस्वरः । सु । 'निपातस्य च' इति संहितायां दीर्घः ॥

अग्ने॑ द्यु॒म्नेन॑ जागृवे॒ सह॑सः सूनवाहुत । एदं ब॒र्हिः स॑दो॒ मम॑ ॥ ३ ॥

अग्ने॑ । द्यु॒म्नेन॑ । जा॒गृ॒वे॒ । सह॑सः । सू॒नो॒ इति॑ । आ॒ऽहु॒त॒ ।

आ । इ॒दम् । ब॒र्हिः । स॒दः॒ । मम॑ ॥ ३ ॥

ᵛद्युम्नेन स्वतेजसा सह ᵛजागृवे । जागर्तीति जागृविः । तस्य संबुद्धिः । लोकरक्षार्थं स्वतेजसा सह सर्वदा जागरणोपेत ᵛआहुत देवताह्वानार्थम्[4] अस्माभिः आहुत[5] ᵛसहसः ᵛसूनो बलस्य पुत्र हे ᵛअग्ने[6] ᵛमम मत्संबन्धिन्यस्मिन्[7] यज्ञे यद्वेद्यामास्तीर्णम् ᵛइदं ᵛबर्हिः तत्र ᵛआ ᵛसदः आसीद ॥ जागृवे । 'जागृ निद्राक्षये' । 'जॄशॄस्तॄजागृभ्यः क्विन्' इति क्विन् । किंत्वादगुणः । जागर्तीति जागृविः । 'जागृविर्जागरणात्' ( निरु. ९. ८ ) इति यास्कः । 'संबुद्धौ च' इति गुणः । 'एङ्ह्रस्वात्°[8]' ( पा. सू. ६. १. ६९ ) इति सोर्लोपः । निघातः । सहसः सूनो । सुप आमन्त्रिते पराङ्गवद्भावादनुदात्तत्वे पादादित्वादनिघातः । सदः । 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्य छान्दसे लुङि लृदित्त्वादङ् । निघातः । मम । अस्मच्छब्दस्य षष्ठ्येकवचने[9] ममादेशः । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् ॥

अग्ने॒ विश्वे॑भिर॒ग्निभि॑र्दे॒वेभि॑र्महया॒ गिरः॑ । य॒ज्ञेषु॒ य उ॑ चा॒यवः॑ ॥ ४ ॥

अग्ने॑ । विश्वे॑भिः । अ॒ग्निऽभि॑ः । दे॒वेभि॑ः । म॒ह॒य॒ । गिरः॑ । य॒ज्ञेषु॑ । ये । ऊँ इति॑ । चा॒यवः॑ ॥ ४ ॥

हे ᵛअग्ने ᵛदेवेभिः द्योतमानैः ᵛविश्वेभिः सर्वैः ᵛअग्निभिः यष्टव्यतया स्थितैरग्निभिः सहितस्त्वं ᵛचायवः त्वद्विषयस्तुतिरूपाभिः[10] वाग्भिरनन्यमनस्कतया पूजकाः ᵛये विद्यन्ते तेषां ᵛयज्ञेषु ज्योतिष्टोमादिषु ᵛगिरः स्तोत्रशस्त्रादिलक्षणानि वाक्यानि ᵛमहय पूजय ॥ महय । 'मह पूजायाम्' । चुरादिः । अदन्तत्वादुपधावृद्ध्यभावः । निघातः । चायवः । 'चायृ पूजानिशामनयोः' । 'मृगय्वादयश्च' इति कुप्रत्ययः । प्रत्ययस्वरः ॥

अग्ने॒ दा दा॒शुषे॑ र॒यिं वी॒रव॑न्तं॒ परी॑णसम् । शि॒शी॒हि नः॑ सूनु॒मतः॑ ॥ ५ ॥

अग्ने॑ । दाः । दा॒शुषे॑ । र॒यिम् । वी॒रऽव॑न्तम् । परी॑णसम् । शि॒शी॒हि । न॒ः । सू॒नु॒ऽमतः॑ ॥ ५ ॥

---

१. ख-ग-च-ज-ण-भ–ईडायाम् ; न-ल-स–ईड्यायाम् । २. त–आज्यायाहुति° । ३. ख-ग-च-ज-ण–°प्रकृतिस्वरत्वम् । ४. ख-ग-च–देवताधानार्थम् । ५. त-प–आहूत । ६. त-ल–अग्ने त्वम् । ७. ख-ग-च-ज-ग-न-भ–मत्संबन्ध्यास्मिन् । ८. ख-ग-च-ज-ण-न-भ–ह्रस्वात्° । ९. त–षष्ठ्येकवचनस्य । १०. ख-ग-च-ज-ण-न-प-फ-भ-स–उक्तविषय°; त–उ त्वद्विषय° ।

हे ᵛअग्ने ᵛदाशुषे तुभ्यं[1] हविर्दत्तवते यजमानाय ᵛवीरवन्तं[2] पुत्रयुक्तं ᵛपरीणसं प्रभूतं ᵛरयिं धनं ᵛदाः देहि । ᵛसूनुमतः पुत्रपौत्रादिसहितान् ᵛनः अस्मान् ᵛशिशीहि धनप्रदानेन तीक्ष्णीकुरु ॥ दाः । ' डुदाञ् दाने ' इत्यस्य छान्दसे लुङि रूपम् । आमन्त्रितस्याविद्यमानत्वेन पादादित्वात् अनिघातः । दाशुषे । ' दाश्ट दाने ' इत्यस्य क्वसौ ' दाश्वान्साह्वान्मीढ्वांश्च ' इति निपातनात् द्विर्वचनाभावः इडभावश्च । भसंज्ञायां संप्रसारणम् । प्रत्ययस्वरः । परीणसम् । परिपूर्वात् नसतेर्व्याप्त्यर्थात् क्विप् । ' अन्येषामपि दृश्यते ' इति दीर्घः । शिशीहि । ' शिञ् निशाने ' । व्यत्ययेन श्लुः । दीर्घः छान्दसः । हेरपित्त्वादन्तोदात्तत्वम् ॥ ॥ २४ ॥

' अग्ने दिवः ' इति पञ्चर्चं त्रयोदशं सूक्तं वैश्वामित्रम् । अत्रेयमनुक्रमणिका—' अग्ने दिवो वैराजमुपान्त्याग्नेन्द्री ' इति । विराट् छन्दः । ' अग्न इन्द्रश्च ' इत्येषा इन्द्राग्नीदेवताका । शिष्टाः आग्नेय्यः । अग्निष्टोमे आज्यशस्त्रे ' अग्न इन्द्रश्च ' इति याज्या । ' अग्न इन्द्रश्च दाशुषो दुरोण इति याज्या ' ( आश्व. श्रौ. ५. ९ ) इति सूत्रितत्वात् ॥

अग्ने॑ दि॒वः सू॒नुर॑सि॒ प्रचे॑ता॒स्तना॑ पृथि॒व्या उ॒त वि॒श्ववे॑दाः ।

ऋध॑ग्दे॒वाँ इ॒ह य॑जा चिकित्वः ॥ १ ॥

अग्ने॑ । दि॒वः । सू॒नुः । अ॒सि॒ । प्रऽचे॑ताः । तना॑ । पृ॒थि॒व्याः । उ॒त । वि॒श्वऽवे॑दाः ।

ऋध॑क् । दे॒वान् । इ॒ह । य॒ज॒ । चि॒कि॒त्वः ॥ १ ॥

विश्वामित्रः स्तौति । हे ᵛअग्ने ᵛविश्ववेदाः सर्वविषयज्ञानवान् ᵛप्रचेताः कर्मविषयज्ञानवांस्त्वं ᵛदिवः द्युलोकाभिमानिदेवतायाः ᵛसूनुरसि पुत्रो भवसि । ᵛउत अपि च ᵛपृथिव्याः पृथिव्यभिमानिदेवतायाः ᵛतना[3] तनयोऽसि । किंच ᵛचिकित्वः चेतनावन् हे अग्ने ᵛइह अस्माभिः क्रियमाणेऽस्मिन् कर्मणि[4] ᵛदेवान् यजनीयानिन्द्रादिदेवान् ᵛऋधक् पृथक् क्रमेण ᵛयज हविष्प्रदानेन पूजय ॥ असि । ' अस भुवि ' इत्यस्य लटि ' तासस्त्योर्लोपः ' इति सलोपः । निघातः । विश्ववेदाः । ' बहुव्रीहौ विश्वं संज्ञायाम् ' इति विश्वस्यान्तोदात्तत्वम् ॥

अ॒ग्निः स॑नोति वी॒र्या॑णि वि॒द्वान्त्स॒नोति॒ वाज॑म॒मृता॑य॒ भूष॑न् ।

स नो॑ दे॒वाँ एह व॑हा पुरुक्षो ॥ २ ॥

अ॒ग्निः । स॒नो॒ति॒ । वी॒र्या॑णि । वि॒द्वान् । स॒नोति॑ । वाज॑म् । अ॒मृता॑य । भूष॑न् ।

सः । न॒ः । दे॒वान् । आ । इ॒ह । व॒ह॒ । पु॒रु॒क्षो॒ इति॑ पुरुऽक्षो ॥ २ ॥

ᵛविद्वान् कर्माभिज्ञो यः ᵛअग्निः ᵛवीर्याणि पशुपुत्रादिसंपद्रूपाणि सामर्थ्यानि[5] ᵛसनोति यजमानाय ददाति । यश्चाग्निः ᵛभूषन् स्वतेजसा सर्वं जगत् भूषयन् अलंकुर्वन् ᵛअमृताय मरणधर्म-

---

१. त–' तुभ्यं ' नास्ति । २. त–वीरवन्तं पुत्रवन्तम् । ३. त–' तना ' नास्ति । ४. ख-ग-च-ज-ण-न-भ-ल–' कर्मणि ' नास्ति । ५. ख-ग-च-ज-ण-भ-ल–समर्थानि ।

रहितायेन्द्रादिदेवाय ᵛवाजं हविर्लक्षणमन्नं ᵛसनोति प्रयच्छति ᵛपुरुक्षो पुरोडाशादिबहुविधान्नोपेत हे अग्ने ᵛसः तादृशस्त्वं ᵛनः अस्माकं संबन्धिनि ᵛइह अस्मिन्यज्ञे ᵛदेवान् यजनीयान्देवान् ᵛआ ᵛवह आह्वय ॥ सनोति । ' षणु दाने ' । तनादित्वादुप्रत्ययः । प्रत्ययस्वरः । पादादित्वादनिघातः । भूषन् । ' भूष अलंकारे ' । अन्तर्भावितण्यर्थः । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः शिष्यते । वह । वहेर्लोटि रूपम् । पुरुक्षो । पुरवः क्षुधोऽन्नानि यस्येति पुरुक्षुः । अन्त्यलोपश्छान्दसः । ' संबुद्धौ च ' इति गुणः ॥

अ॒ग्निर्द्यावा॑पृथि॒वी वि॒श्वज॑न्ये॒ आ भा॑ति दे॒वी अ॒मृते॒ अमू॑रः ।
क्षय॒न्वाजैः॑ पुरुश्च॒न्द्रो नमो॑भिः ॥ ३ ॥

अ॒ग्निः । द्यावा॑पृथि॒वी इति॑ । वि॒श्वज॑न्ये॒ इति॑ वि॒श्वऽज॑न्ये । आ । भा॒ति॒ । दे॒वी इति॑ ।
अ॒मृते॒ इति॑ । अमू॑रः ॥ क्षय॑न् । वाजैः॑ । पु॒रु॒ऽच॒न्द्रः । नम॑ःऽभिः ॥ ३ ॥

ᵛअमूरः अमूढः सर्वज्ञः ᵛक्षयन् ईशानः सर्वस्य जगतः अत एव ᵛपुरुश्चन्द्रः पुरुचन्द्रो बहुहिरण्योपेतः । यद्वा बहुदीप्तिस्वरूपः । ᵛवाजैः बलैः ᵛनमोभिः अन्नैश्च सहितः सः ᵛअग्निः ᵛविश्वजन्ये विश्वस्य जनयित्र्यौ । यद्वा विश्वं जन्यमुत्पाद्यं याभ्यां ते । ᵛदेवी द्योतमाने ᵛअमृते मरणधर्मरहिते ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛआ ᵛभाति आ समन्तात् प्रकाशयति ॥ द्यावापृथिवी । दिवःशब्दस्य ' दिवो द्यावा ' इति द्यावादेश आद्युदात्तः । पृथिवीशब्दो ङीषन्तत्वेनान्तोदात्तः । ' देवताद्वन्द्वे च ' इत्युभयोः प्रकृतिस्वरत्वम् । विश्वजन्ये । ' बहुव्रीहौ विश्वं संज्ञायाम् ' इति पूर्वपदान्तोदात्तः । तत्पुरुषे[1] तु[1] स्वरश्चिन्तनीयः । आ भाति । ' भा दीप्तौ ' । अन्तर्भावितण्यर्थः । क्षयन् । ' क्षि ऐश्वर्ये ' । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः । पुरुश्चन्द्रः । ' ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ' इति सुडागमः । श्चुत्वेन शकारः । उत्तरपदान्तोदात्तप्रकरणे[2] ' त्रिचक्रादीनां छन्दस्युपसंख्यानम् ' इति उत्तरपदान्तोदात्तत्वम् । यद्वा ' समासस्य ' इत्यन्तोदात्तत्वम्[2] ॥

अग्न॒ इन्द्र॑श्च दा॒शुषो॑ दुरो॒णे सु॒ताव॑तो य॒ज्ञमि॒होप॑ यातम् ।
अम॑र्धन्ता सोम॒पेया॑य देवा ॥ ४ ॥

अग्ने॑ । इन्द्रः॑ । च॒ । दा॒शुषः॑ । दु॒रो॒णे । सु॒तऽव॑तः । य॒ज्ञम् । इ॒ह । उप॑ । या॒त॒म् ।
अम॑र्धन्ता । सो॒म॒ऽपेया॑य । दे॒वा॒ ॥ ४ ॥

हे ᵛअग्ने त्वम् ᵛइन्द्रश्च उभौ ᵛदेवा देवौ युवाम् ᵛअमर्धन्ता अनागमनेन यज्ञहिंसामकुर्वन्तौ सन्तौ ᵛसुतवतः सोमाभिषवं कुर्वतः ᵛदाशुषः हविर्दत्तवतो यजमानस्य ᵛइह ᵛदुरोणे गृहे क्रियमाणमिमं ᵛयज्ञम् अभिलक्ष्य ᵛसोमपेयाय सोमपानार्थम् ᵛउप ᵛयातम् उप समीपम्[3] आगच्छतम् ॥ यातम्[4] ।

---

१. ख-त-न-भ-स–तत्पुरुषे; ग–तत्पुरुषेषु; ज-ण-ल–तत्पुरुष° । २. ख-ग-च-ज-ण-न-फ-भ–उत्तरपदान्तोदात्तत्वम् । ३. न-ल–समीपे । ४. ख-ग-च-ज-ण-फ-म–' यातं ' नास्ति ।

'या प्रापणे' इत्यस्य लोटि रूपम् । निघातः । अमर्धन्ता । 'मृधु हिंसायाम्' इत्यस्य शतरि रूपम् । नञा समासः । सुपो डादेशः । तत्पुरुषे नञ्स्वरः । सोमपेयाय । 'पा पाने' । 'अचो यत्' इति यत् । 'ईद्यति' इतीकारादेशः । आर्धधातुकलक्षणो गुणः । कृदुत्तरपदप्रकृतिस्वरः ॥

अग्ने॑ अ॒पां समि॑ध्यसे दुरो॒णे नित्यः॑ सूनो सहसो जातवेदः ।
स॒धस्था॑नि म॒हय॑मान ऊ॒ती ॥ ५ ॥

अग्ने॑ । अ॒पाम् । सम् । इ॒ध्य॒से॒ । दु॒रो॒णे । नित्यः॑ । सू॒नो॒ इति॑ । स॒ह॒सः॒ । जा॒त॒ऽवे॒दः॒ ।
स॒धऽस्था॑नि । म॒हय॑मानः । ऊ॒ती ॥ ५ ॥

सहसः सूनो बलस्य पुत्र जातवेदः जातप्रज्ञ हे अग्ने नित्यः अविनाशी ऊती ऊत्या रक्षणेन सधस्थानि प्राणिनां निवासभूतान् लोकान् महयमानः परिचरंस्त्वम् अपां दुरोणे अपां स्थानेऽन्तरिक्षे समिध्यसे सम्यक् दीप्यसे ॥ दुरोणे । 'अव रक्षणे' इत्यस्मादौणादिको नक्प्रत्ययः । 'ज्वरत्वर॰' इत्यादिना ऊठ् । गुणः । 'दुरोण इति गृहनाम, दुरवा भवन्ति' (निरु. ४. ५) इति यास्कः । प्रत्ययस्वरः । महयमानः । 'मह पूजायाम्' । व्यत्ययेन शानच् । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे णिच्स्वरः[1] । ऊती । अव रक्षणादिषु । 'ऊतियूतिजूति॰' इत्यादिना निपातनादन्तोदात्तः । 'सुपां सुलुक्॰' इति तृतीयायाः सवर्णदीर्घः ॥　　॥ २५ ॥

'वैश्वानरं मनसा' इति नवर्चं चतुर्दशं सूक्तम् । तत्रानुक्रमणिका—'वैश्वानरं नव तृचौ वैश्वानरीयमारुतौ जागतौ द्वृच आत्मस्तुतिर्वा पूर्वात्मगीतान्त्योपाध्यायस्तुतिः' इति । 'वैश्वानरं मनसा' इत्याद्यौ तृचौ जागतौ । प्रथमस्य वैश्वानरोऽग्निर्देवता द्वितीयस्य[2] मरुतः[2] । सप्तम्याद्यास्तिस्रस्त्रिष्टुभः । 'अग्निरस्मि' इति द्वृचस्याग्निः परं ब्रह्म वा देवता । नवम्यास्तु विश्वामित्रोपाध्यायस्य[3] स्तुत्यत्वात्[3] स एव देवता । सप्तमीवर्जितस्य सूक्तस्य विश्वामित्र ऋषिः । सप्तम्या ब्रह्मवाक्यत्वात् 'यस्य वाक्यं स ऋषिः' इति न्यायेन ब्रह्म ऋषिः । 'वैश्वानरं मनसा' इत्याद्यस्तृच आभिप्लविके चतुर्थेऽहनि आग्निमारुते वैश्वानरीयनिविद्धाने विनियुक्तः[4] । 'तृतीयस्य' इति खण्डे सूत्रितं—'वैश्वानरं मनसेति तिस्रः' (आश्व. श्रौ. ७. ७) इति । अयमेव तृचो बृहस्पतिसवेऽप्याग्निमारुते वैश्वानरीयनिविद्धानीयः । 'प्र यन्तु वाजाः' इति द्वितीयतृचो बृहस्पतिसवे मारुतनिविद्धानीयः । उभयमपि 'उशनसस्तोमेन' इति खण्डे सूत्रितं—'वैश्वानरं मनसाग्निं निचाय्य प्र यन्तु वाजास्तविषीभिरग्नयः' (आश्व. श्रौ. ९. ५) इति । अग्निचयने संचिताग्न्यनुशंसने 'अग्निरस्मि' इत्येषा । 'अथाग्निं संचितमनुगीतमनुशंसेत्' इत्युपक्रम्य सूत्रितम्—'अग्निरस्मि जन्मना जातवेदा इति त्रिर्मध्यमया वाचा' (आश्व. श्रौ. ४. ८) इति ॥

---

१. त–णिचः स्वरः । २. ख-ग-च-ज-ण-भ-ल–'द्वितीयस्य मरुतः' नास्ति । ३. ख-ग-च-ज-ण-न-स–॰पाध्यायस्तुतित्वात्; ल–॰पाध्यायस्तुत्यत्वात् । ४. ख-ग-च-ज-ण-भ-स–नियुक्तः ।

वैश्वानरं मनसाग्निं निचाय्या हविष्मन्तो अनुषत्यं स्वर्विदम् ।
सुदानुं देवं रथिरं वसूयवो गीर्भी रण्वं कुशिकासो हवामहे ॥ १ ॥

वैश्वानरम् । मनसा । अग्निम् । निऽचाय्य । हविष्मन्तः । अनुऽसत्यम् । स्वः॒ऽविदम् ।
सुऽदानुम् । देवम् । रथिरम् । वसुऽयवः । गीःऽभिः । रण्वम् । कुशिकासः । हवामहे ॥ १ ॥

विश्वामित्रः स्तौति । हे अग्ने ᵛहविष्मन्तः संभृतहविष्काः ᵛवसूयवः धनमात्मन इच्छन्तः ᵛकुशिकासः[1] कुशिकगोत्रोत्पन्ना वयं ᵛवैश्वानरम् । विश्वे नरा अग्निप्रणयनादिक्रियाया नेतारो यस्येति विश्वानरः अग्निः[2] । तस्य संबन्धी वैश्वानरः । अपत्यमिति यावत् । यद्वा[3] विश्वानर एव वैश्वानरः । तद्धितोऽनन्यार्थो राक्षसवायसादिवत् । तम् ᵛअनुषत्यं सत्येनानुगतं कर्मानुरूपफलप्रदाने[4] सत्यप्रतिज्ञं ᵛस्वर्विदं स्वर्गादिलक्षणफलस्य ज्ञातारम् अत एव ᵛसुदानुं सुष्ठु फलस्य दातारं ᵛरथिरं रथवन्तम् अत एव ᵛरण्वं यज्ञान् गच्छन्तं ᵛदेवं द्योतमानं तमिमम् ᵛअग्निं ᵛमनसा ᵛनिचाय्य अन्तःकरणेन एवंविधगुणविशिष्टस्त्वमिति ज्ञात्वा ᵛगीर्भिः स्तुतिलक्षणाभिर्वाग्भिः ᵛहवामहे इह कर्मणि त्वामाह्वयामः ॥ वैश्वानरम् । ' नरे संज्ञायाम् ' इति पूर्वपदस्य दीर्घत्वम् । विश्वानरस्येदमित्यर्थे ' तस्येदम् ' इत्यण् । प्रत्ययस्वरः । निचाय्य । ' चायृ पूजानिशामनयोः ' इत्यस्य ल्यपि रूपम् । लित्स्वरः । अनुषत्यम् । अनुगतं सत्येन । ' अवादयः क्रुष्टाद्यर्थे तृतीयया ' इति समासः । सुषामादित्वात् षत्वम् । निरुदकादित्वादन्तोदात्तत्वम् । सुदानुम् । ' डुदाञ् दाने ' । ' दाभाभ्यां नुः ' इति कर्तरि नुप्रत्ययः । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । रथिरम् । रथशब्दान्मतुबर्थे ' मेधारथाभ्यामिरन्निरचौ वक्तव्यौ ' इति इरच् । चित्स्वरः । वसूयवः । वसु आत्मन इच्छन्त इति ' सुप आत्मनः क्यच् ' । ' अकृत्सार्वधातुकयोः° ' इति दीर्घः । ' क्याच्छन्दसि ' इत्युप्रत्ययः । अतो लोपः । प्रत्ययस्वरः । रण्वम् । रविर्गत्यर्थः । रण्वति यज्ञान्[5] गच्छतीति[6] रण्वः । पचाद्यजन्तः । चित्स्वरः । कुशिकासः । कुशिकशब्दात् ' गोत्रम् ' इत्यर्थे विदादित्वादञ् । तस्य बहुषु ' यञञोश्च ' ( पा. सू. २. ४. ६४ ) इति लुक् । हवामहे । ह्वयतेः ' बहुलं छन्दसि ' इति संप्रसारणम् । निघातः ॥

तं शुभ्रमग्निमवसे हवामहे वैश्वानरं मातरिश्वानमुक्थ्यम् ।
बृहस्पतिं मनुषो देवतातये विप्रं श्रोतारमतिथिं रघुष्यदम् ॥ २ ॥

तम् । शुभ्रम् । अग्निम् । अवसे । हवामहे । वैश्वानरम् । मातरिश्वानम् । उक्थ्यम् ।
बृहस्पतिम् । मनुषः । देवऽतातये । विप्रम् । श्रोतारम् । अतिथिम् । रघुऽस्यदम् ॥ २ ॥

योऽग्निः पूर्वमन्त्रे प्रतिपादितः ᵛतं ᵛशुभ्रं द्योतमानं ᵛवैश्वानरं विश्वानरसंबन्धिनं ᵛमातरिश्वानम् । मातरि अन्तरिक्षे श्वसिति विद्युदादिरूपतया चेष्टते इति मातरिश्वा अग्निः । तम् ᵛउक्थ्यम् उक्थैः

---

१. ख-ग-च-ज-ण-न-भ–कुशिकाः; प–कुशिकासः कुशिकाः । २. ख-ग-च-ज-ण-न-भ-ल-स–कश्चित् ; फ–अग्निः कश्चित् । ३. ख-ग-च-ण-ण-भ-ल–यदा । ४. प-फ–कर्मफलप्रदाने । ५. ख-ग-च-ज-ण–यज्ञम् । ६ त–आगच्छतीति ।

शस्त्रैः शंसनीयं ᵛबृहस्पतिं बृहतो यज्ञस्य पतिं पालकतया स्वामिनं ᵛविप्रं मेधाविनं ᵛश्रोतारं स्तोत्रशस्त्रादिमन्त्रवाक्यं शृण्वन्तम् ᵛअतिथिम् आतिथेयपूजार्हतया यदृच्छया प्राप्तं ᵛरघुष्यदम्। रघुर्लघुः स्यदो वेगो यस्येति क्षिप्रगन्तारम्। यद्वा स्यदशब्देन[1] अध्वा[2] लक्ष्यते। रघुस्यदः क्षिप्रगन्ता इत्यर्थः। तम् एवंविधगुणयुक्तम्[3] ᵛअग्निम् ᵛअवसे अस्माकं रक्षणाय ᵛहवामहे कुशिकगोत्रजा वयम् आह्वयामः। किंच ᵛमनुषः मनुष्यस्य ᵛदेवतातये यज्ञार्थं त्वामाह्वयामः॥ शुभ्रम्। 'शुभ दीप्तौ'। अस्मात्[4] 'स्फायितञ्चि°' इत्यादिना कर्तरि रक्। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। मातरिश्वानम्। निर्माणहेतुत्वात् माता अन्तरिक्षम्। तत्र श्वसिति प्राणितीति मातरिश्वा अग्निः। 'श्वन्नुक्षन्°' इत्यादिना मातरिश्वञ्छब्दस्य[5] कन्प्रत्ययान्तत्वेन निपातनात्पूर्वपदान्तोदात्तत्वम्। उक्थ्यम्। उक्थेन स्तोत्रेण स्तुत्यः। तत्र भवः इत्यर्थे 'भवे छन्दसि' इति यत्। 'तित्स्वरितम्[6]' इति स्वरितः। देवतातये। देव एव देवतातिः। स्वार्थिकस्तातिल्। देवतातिशब्देन यज्ञो लक्ष्यते तत्संप्रदानकत्वाद्यज्ञस्य। लित्स्वरः। रघुस्यदम्। 'स्यन्दू प्रस्रवणे' इत्यस्मात् घञन्तः स्यदशब्दः। 'स्यदो जवे' इति निपातनादनुनासिकलोपः। कृदुत्तरपदप्रकृतिस्वरत्वम्॥

अश्वो॒ न क्रन्द॒ञ्जनि॑भि॒ः समि॑ध्यते वैश्वान॒रः कु॑शि॒केभि॑र्यु॒गेयु॑गे।
स नो॑ अ॒ग्निः सु॒वीर्यं॒ स्वश्व्यं॒ दधा॑तु॒ रत्न॑म॒मृते॑षु॒ जागृ॑विः॥ ३॥

अश्वः॑। न। क्रन्द॑न्। जनि॑ऽभिः। सम्। इ॒ध्य॒ते॒। वै॒श्वा॒न॒रः। कु॒शि॒केभिः॑। यु॒गेऽयु॑गे।
सः। न॒ः। अ॒ग्निः। सु॒ऽवीर्य॑म्। सु॒ऽअश्व्य॑म्। दधा॑तु। रत्न॑म्। अ॒मृते॑षु। जागृ॑विः॥३॥

यः ᵛवैश्वानरः अग्निः ᵛकुशिकेभिः स्तोत्रं कुर्वाणैर्होत्रादिभिः ᵛयुगेयुगे प्रतिदिनं ᵛसमिध्यते आज्याहुतिप्रक्षेपेण[7] सम्यक् दीप्यते। तत्र दृष्टान्तः। ᵛअश्वो ᵛन इति। यथा जातोऽश्वः[8] ᵛक्रन्दन् हेषारवं कुर्वन् ᵛजनिभिः जनयित्रीभिः वडवाभिः स्तन्यप्रदानेन प्रतिदिनं सम्यक् पोष्यते तद्वत्। ᵛअमृतेषु मरणधर्मरहितेषु देवेषु मध्ये ᵛजागृविः ज्वालया जाग्रत् दीप्यमानः ᵛसः ᵛअग्निः ᵛसुवीर्यं शोभनापत्ययुक्तं ᵛस्वश्व्यं शोभनाश्वादिपशुयुक्तं ᵛरत्नम् उत्तमं धनं ᵛनः अस्माकं ᵛदधातु विदधातु प्रयच्छतु॥ युगेयुगे। 'नित्यवीप्सयोः' इति द्विर्वचनम्। परस्याम्रेडितत्वात् अनुदात्तत्वे पूर्वपद-प्रकृतिस्वरः। स्वश्व्यम्। अश्वशब्दः क्वन्प्रत्ययान्तः आद्युदात्तः। बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। यकारोपजनश्छान्दसः। यद्वा। अश्वेषु साधवोऽश्व्याः। 'तत्र साधुः' इति यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्। बहुव्रीहौ पूर्वोक्तस्वरः। दधातु। दधातेर्लोटि रूपम्। रत्नम्। 'रमु क्रीडायाम्'। 'रमेस्त च' इत्यधिकरणे नप्रत्ययस्तकारश्चान्तादेशः। रमन्तेऽस्मिन्निति रत्नम्। 'नित्' इत्यनुवृत्तौ आद्युदात्तः। जागृविः। क्विन्प्रत्ययान्तः। नित्त्वादाद्युदात्तः॥

---

१. ख-ग-च-ज-ण-भ—स्यदःशब्देन। २. त—तद्वान्। ३. ख-ग-च-ज-ण-न-फ-भ—एवंविधं युक्तम्। ४. त—इत्यस्मात्। ५. ख-ग-ज-ण-भ-स—मातरिश्वञ्छब्दात् न-ल—मातरिश्वञ्छब्दः। ६. ख-ग-ज-ण-न-भ-स—तित्स्वरितः। ७. त—आज्याद्याहुति°। ८. प—जात्यश्वः।

प्र यन्तु वाजास्तविषीभिरग्नयः शुभे संमिश्लाः पृषतीरयुक्षत ।
बृहदुक्षो मरुतो विश्ववेदसः प्र वेपयन्ति पर्वताँ अदाभ्याः ॥ ४ ॥

प्र । यन्तु । वाजाः । तविषीभिः । अग्नयः । शुभे । सम्ऽमिश्लाः । पृषतीः । अयुक्षत ।
बृहत्ऽउक्षः । मरुतः । विश्वऽवेदसः । प्र । वेपयन्ति । पर्वतान् । अदाभ्याः ॥ ४ ॥

ᵛवाजाः वेगवन्तः ᵛअग्नयः ᵛप्र ᵛयन्तु जलमभिलक्ष्य[1] गच्छन्तु । गताश्च तेऽग्नयः ᵛतविषीभिः बलयुक्तैः[2] मरुद्भिः[3] ᵛशुभे जले ᵛसंमिश्लाः परस्परं[4] संगताः सन्तः ᵛपृषतीः बिन्दून् ᵛअयुक्षत अयुञ्जन् । जले बिन्दूनकुर्वन् । यद्वा वाजाः वेगवन्तोऽग्नयस्तविषीभिर्बलयुक्तैर्मरुद्भिर्जलमनुलक्ष्य प्रयन्तु गच्छन्तु । ते च मरुतः शुभे जले संमिश्ला अग्निभिः संगताः सन्तः पृषतीश्चित्रवर्णा वाहनरूपा वडवा अयुक्षत । रथे मेघभेदनार्थं[5] ता अयौक्षुः । रथारूढास्ते ᵛविश्ववेदसः प्राणिकृतकर्माभिज्ञानयुक्ताः ᵛअदाभ्याः केनाप्यतिरस्कार्याः ᵛमरुतः एवंविधा वायवः ᵛबृहदुक्षः प्रभूतसेक्तॄन्[6] ᵛपर्वतान् मेघान् ᵛप्र ᵛवेपयन्ति । यथा प्रभूता वृष्टिर्भवति तथा मेघान् चालयन्ति ॥ तविषीभिः । ' तव गतौ ' इति सौत्रो धातुः । अस्मात् ' तवेर्णिद्वा ' इति टिषच् निच्च । तवन्ति संचरन्त्याकाशे इति तविषा वायवः । ' टिड्ढाणञ्° ' इति ङीप् । लिङ्गव्यत्ययः[7] । नित्वादाद्युदात्तः । पृषतीः । ' पृषु[8] सेचने[8] ' ' पॄ पालनपूरणयोः ' इति वा । अस्मात्[9] वर्तमाने ' पृषद्बृहन्महत्° ' इति निपातनादतिप्रत्ययः शतृवद्भवति । ' उगितश्च ' इति ङीप् । पर्षन्तीति पृषत्यः शीकराः । पृणन्ति पालयन्तीति पृषत्यो वडवाः । अयुक्षत । ' युजिर् योगे ' इत्यस्य लुङि सिचि रूपम् । निघातः । बृहदुक्षः । ' उक्ष सेचने ' इत्यस्मात्क्विप् । कृदुत्तरपदप्रकृतिस्वरः । वेपयन्ति । ' टुवेपृ कम्पने ' । निघातः । पर्वतान् । ' पर्व पूरणे ' इत्यस्मात् ' भृमृदृशि° ' इत्यादिना अतच् । पर्वति पूरयति भूमिमुदकेन इति पर्वतो मेघः । व्यत्ययेनाद्युदात्तः ॥

अग्निश्रियो मरुतो विश्वकृष्टय आ त्वेषमुग्रमव ईमहे वयम् ।
ते स्वानिनो रुद्रिया वर्षनिर्णिजः सिंहा न हेषक्रतवः सुदानवः ॥ ५ ॥

अग्निऽश्रियः । मरुतः । विश्वऽकृष्टयः । आ । त्वेषम् । उग्रम् । अवः । ईमहे । वयम् ।
ते । स्वानिनः । रुद्रियाः । वर्षऽनिर्निजः । सिंहाः । न । हेषऽक्रतवः । सुऽदानवः ॥५॥

ᵛअग्निश्रियः वैद्युतमग्निं श्रयन्तः ᵛविश्वकृष्टयः । विश्वस्य वृक्षादेः कृष्टिराकर्षणं नमनोन्नमनादिलक्षणं कर्म येभ्यो भवति ते विश्वकृष्टयः । एवंविधा ये ᵛमरुतः विद्यन्ते तेषां च मरुतां ᵛत्वेषं दीप्तम् ᵛउग्रम् उद्गूर्णम् ᵛअवः रक्षणम् ᵛआ ᵛईमहे कुशिका ᵛवयम् आ समन्तात् याचामहे । ᵛते मरुतः

---

१. त–बलमभिलक्ष्य । २. ख-ग-च-ज-ण-भ–' बलयुक्तैः ' नास्ति । ३. ख-प-फ-भ–' मरुद्भिः ' नास्ति । ४. ख-प-फ-भ–' परस्परं ' नास्ति । ५. त–मेघभेदनार्थम् । ६. त–प्रभूतं सेक्तॄन् । ७. त-क–अत्र लिङ्गव्यत्ययः । ८. ख-ग-च-ज-ण-फ-भ–पृष सन्धाने; न–पृष संदधाने । ९. त–इत्यस्मात् ।

ᵛरुद्रियाः रुद्रपुत्राः[1] ᵛवर्षनिर्णिजः । निर्णिक्शब्दो रूपवाची 'निर्णिक् वव्रिः' इति तन्नामसु पाठात् । वर्षणं रूपं स्वभावो येषां ते[2] वर्षनिर्णिजो वर्षकाः । ᵛहेषक्रतवः । हेषारवस्य क्रतुः करणं येषां ते कृतहेषारवाः ᵛसिंहा ᵛन सिंहा इव ᵛस्वानिनः शब्दवन्तः एवंविधास्ते मरुतः ᵛसुदानवः सुष्ठु जलस्य[3] दातारो भवन्ति ॥ अग्निश्रियः । 'श्रिञ् सेवायाम्' । 'वचिप्रच्छि०[4]' इत्यादिना क्विप् संप्रसारणाभावो धातोर्दीर्घश्च । जसि इयङादेशः । कृत्स्वरः । उग्रम् । गम्लृ गतौ' । उत्पूर्वः । 'ऋज्रेन्द्राग्र०' इति निपातनात् रप्रत्ययो मकारलोप उपसर्गस्यान्तलोपश्च । उद्गच्छतीत्युग्रः । प्रत्ययस्वरः । ईमहे । ई कान्तिगत्यादिषु[5] । व्यत्ययेनात्मनेपदम् । अदादित्वाच्छपो लुक् । निघातः । स्वानिनः । स्वानो घञन्तः । तद्वन्तः । 'अत इनिठनौ' इतीनिः । प्रत्ययस्वरः[6]। रुद्रियाः । रुद्रशब्दाच्छान्दसो घः । तस्येयादेशः । प्रत्ययस्वरः ॥　　॥ २६ ॥

व्रातंव्रातं गणंगणं सुशस्तिभिरग्नेर्भामं मरुतामोज ईमहे ।
पृषदश्वासो अनवभ्रराधसो गन्तारो यज्ञं विदथेषु धीराः ॥ ६ ॥

व्रातम्ऽव्रातम् । गणम्ऽगणम् । सुशस्तिऽभिः । अग्नेः । भामम् । मरुताम् । ओजः । ईमहे । पृषत्ऽअश्वासः । अनवभ्रऽराधसः । गन्तारः । यज्ञम् । विदथेषु । धीराः ॥ ६ ॥

कुशिका वयम् ᵛअग्नेर्भामं भासकं ᵛमरुतामोजः तेजः ᵛव्रातंव्रातं व्राते व्राते प्रतिसमूहं ᵛगणंगणं गणे गणे महति समूहे[7] क्रियमाणाभिः ᵛसुशस्तिभिः । शोभनाः शस्तयः स्तुतयो यैर्मन्त्रैः क्रियन्ते ते सुशस्तयः । तैर्मन्त्रैः ᵛईमहे तादृशं मारुतं तेजो याचामहे । ᵛपृषदश्वासः । पृषत्यश्चित्रवर्णा अश्वा येषां ते तादृशाः । ᵛअनवभ्रराधसः । न विद्यतेऽवभ्रंशो यस्य तदनवभ्रम् । अनवभ्रं राधो धनं येषां तेऽनवभ्रधनाः । संपूर्णधना इति यावत् । ᵛधीराः कर्माभिज्ञास्ते मरुतः ᵛविदथेषु यज्ञेषु ᵛयज्ञं यजनीयं[8] हविः[8] अभिलक्ष्य ᵛगन्तारः गमनशीला भवन्ति ॥ गणंगणम् । 'गण संख्याने' । पचाद्यच् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः । सुशस्तिभिः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । भामम् । 'भा दीप्तौ[9]' । 'अर्तिस्तुसु०' इत्यादिना मन् । निस्वरः । ओजः । 'उब्ज आर्जवे' । 'उब्जेर्बले बलोपश्च' ( उ. सू. ४. ६३१ ) इत्यसुन् । तत्संनियोगेन बकारलोपः । आर्धधातुकलक्षणो गुणः । निस्स्वरः । ईमहे । ई कान्त्यादिषु । निघातः । अनवभ्रराधसः । अनवभ्रम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । बहुव्रीहौ[10] पूर्वपदस्वरः । गन्तारः । ताच्छीलिकस्तृन् । विदथेषु । 'विद ज्ञाने' । 'रुदिविदिभ्यां कित्' इत्यथप्रत्ययः । कित्वादगुणः । विदन्त्यस्मिन्कर्मजातमध्वर्य्वादय इति विदथो यज्ञः । प्रत्ययस्वरः ॥

---

१. ख-ग-च-ज-ण न-भ-स-रुद्रपुत्राः मरुतः । २. प-ते हेषक्रतवः । ३. ल-जनस्य । ४. त-क्विब्वचिप्रच्छि० । ५. त-गत्यादिषु । ६. ख-ग-च-न-ण-न-फ-भ-स-'प्रत्ययस्वरः' नास्ति । ७. त-प-समूहे समूहे । ८. ग-च-ज-ण-यजनीयहविः । ९. त-दीप्तौ इत्यस्मात् । १०. ख-ग-च-जण-भ-ल-स-उत्तरबहुव्रीहौ ।

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ ७ ॥

अग्निः । अस्मि । जन्मना । जातऽवेदाः । घृतम् । मे । चक्षुः । अमृतम् । मे । आसन् ।
अर्कः । त्रिऽधातुः । रजसः । विऽमानः । अजस्रः । घर्मः । हविः । अस्मि । नाम ॥ ७ ॥

[1]साक्षात्कृतपरतत्त्वरूपः* अग्निर्द्वृचेन स्वात्मनः सर्वात्मकत्वानुभवमाविष्करोति[1] । हे कुशिकाः । भोक्तृभोग्यभावेन द्विविधं हीदं सर्वं जगत् । ' एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः ' ( बृ. उ. १. ४. ६ ) इति श्रुतेः । तत्र सकलभोक्तृवर्गरूपेणान्नादोऽग्निः । स च अग्निवाय्वादित्यभेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्षद्युलोकानधितिष्ठति । तदुक्तं वाजसनेयके–' स त्रेधात्मानं व्यभजत । आदित्यं तृतीयं वायुं तृतीयम् ' ( बृ. उ. १. २. ३ ) इति[2] । तत्र[3] सः [v]अग्निः अहं [v]जन्मना एव [v]जातवेदाः [v]अस्मि । श्रवणमननादिसाधननिरपेक्षेण[4] स्वभावत एव साक्षात्कृतपरतत्त्वस्वरूपोऽस्मि । [v]घृतं [v]मे [v]चक्षुः । यदेतत्[5] विश्वस्य विभासकं[6] मम स्वभावभूतप्रकाशात्मकं चक्षुस्तद्धृतम् । इदानीमत्यन्तं दीप्तम् । यदेतत् [v]अमृतं कर्मफलं दिव्यादिव्यविविधविषयोपभोगात्मकं[7] तत् [v]मे मम [v]आसन् आस्ये वर्तते । सकलभोक्तृवर्गात्मना स्वयमेवावस्थानात् । एवं स्वात्मनः पृथिव्यधिष्ठातृरूपताम् अभिधाय[8] वाय्वात्मनान्तरिक्षाधिष्ठातृतामाह[8] । [v]अर्कः जगत्स्रष्टा[9] प्राणः । ' सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम् ' ( श. ब्रा. १०. ६. ५ ) इति श्रुतेः । स प्राणोऽहं [v]त्रिधातुः । त्रेधात्मानं विभज्य तत्र वाय्वात्मना[10] [v]रजसः अन्तरिक्षस्य [v]विमानः विमाता अधिष्ठाता अस्मि । तथादित्यरूपेण द्युलोकाधिष्ठातृतामाह[11] । [v]अजस्रो [v]घर्मः इति । अजस्रोऽनुपक्षीणो घर्मः प्रकाशात्मा[11] द्युलोकाधिष्ठाता आदित्योऽहमस्मि[12] । एवं भोक्तृरूपमात्मनोऽनुसंधाय भोग्यरूपतामपि[13] अनुसंधत्ते । यत् [v]हविः भोग्यं प्रसिद्धमस्ति तदप्यहमेव [v]अस्मि । यद्वा । अहमग्निरस्मि । देवानां हविष्प्रापणात् अङ्गनादिगुणयुक्तोऽस्मि । किंच जन्मना उत्पत्त्या जातवेदा जातप्रज्ञोऽस्मि[14] । उत्पत्तिक्षणे एव सर्वज्ञोऽहमस्मि । अथवा जातं सर्वं स्वात्मरूपतया वेत्तीति जातवेदाः । सर्वात्मक इत्यर्थः । तत्कथमित्युच्यते । घृतं मे चक्षुः । यदेतद्धृतं प्रसिद्धमस्ति तन्मे चक्षुःस्थानीयम् । यथा लोके चक्षुर्भासकं एवं घृतं मयि प्रक्षिप्तं ज्वालामुत्पादयन्मम भासकम् । अमृतं प्रभारूपं यदमृतमविनाशि ज्योतिर्मे ममासन् आस्ये वर्तते । त्रिधातुः प्राणापानव्यानात्मना त्रिधा वर्तमानोऽर्कोऽर्चनीयो यः[15] प्राणोऽस्ति सोऽपि अहमेवास्मि[16] । तथा च रजसोऽन्तरिक्षस्य विमानो विशेषेण माता परिच्छेत्ता वायुश्चाहमस्मि । किंच अजस्रो घर्मो नैरन्तर्येण संतापकारी सूर्यश्चाहमस्मि । किं बहुना आज्यपुरोडाशादिरूपं यदेतद्धविरस्ति तदुपलक्षितं सर्वमप्यहमस्मि । ' सर्वं खल्विदं ब्रह्म '

---

१. प–द्वृचेन साक्षात्कृतस्वात्मस्वरूपम् आविष्करोति । * त–°तत्त्वस्वरूपः । २. न–इति च । ३. त–' तत्र ' नास्ति । ४. त–°साधननैरपेक्षेण; ल–°साधननैरपेक्ष्येण । ५. ख-ग-च-ज-ण-फ-भ–चक्षुःपदेन । ६. त–अवभासकम् । ७. ख-ग-च-ज-ण-प-फ-भ–°भोगात्मकं चक्षुः । ८. ख-ग-च-ज-ण-प-फ-भ-स–' अभिधाय ......ष्ठातृतामाह ' नास्ति । ९. त–जगतः स्रष्टा । १०. ख-प-फ-भ-स–वा स्वात्मना; ग-च-ज-ण–वास्थात्मना । ११. ख-ग-च-ज-ण-प-फ-भ-स–' द्युलोकाधि° ......प्रकाशात्मा ' नास्ति । १२. त-ल–आदित्योऽप्यहमास्मि । १३. त–भोग्यरूपताम् । १४. त–जातज्ञानोऽस्मि । १५. ख-ग-च-ज-ण-न-भ-ल-स–' यः ' नास्ति । १६. त–अहमस्मि ।

(छा. उ. ३. १४. १) इति श्रुतेः। नामशब्दः प्रसिद्धौ । तदनेनाग्नेः सर्वात्मकत्वप्रतिपादनेन परब्रह्मत्वमुक्तं भवति ॥ चक्षुः । 'चक्षिङ् व्यक्तायां वाचि'। 'उसिन्' इत्यनुवृत्तौ 'चक्षेः शिच्च' इत्युसिन्। शिद्भावात् ख्याञादेशाभावः । निस्स्वरः । आसन् । आस्यशब्दस्य 'पद्दन्नोमास्°' इत्यादिना आसनादेशः । 'सुपां सुलुक्°' इति सप्तम्या लुक् । विमानः । 'माङ् माने'। 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । लित्स्वरः । अजस्रः । 'जसु मोक्षणे' । नञ्पूर्वः । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (पा. सू. ३. २. १६७) इति ताच्छीलिको रप्रत्ययः । नञ्पूर्वो जसिर्नैरन्तर्ये वर्तते । नञ्स्वरः। 'जस[1] उपक्षये' वा ॥

त्रिभिः पवित्रैरपुपोद्ध्यर्कं हृदा मतिं ज्योतिरनु प्रजानन् ।
वर्षिष्ठं रत्नमकृत स्वधाभिरादिद्द्यावापृथिवी पर्यपश्यत् ॥ ८ ॥

त्रिऽभिः । पवित्रैः । अपुपोत् । हि । अर्कम् । हृदा । मतिम् । ज्योतिः । अनु । प्रऽजानन् । वर्षिष्ठम् । रत्नम् । अकृत । स्वधाभिः । आत् । इत् । द्यावापृथिवी इति । परि । अपश्यत् ॥८॥

सर्वात्मकः अग्निः[2] vहृदा अन्तःकरणवृत्त्या vमतिं मननीयं vज्योतिः स्वप्रकाशरूपं परब्रह्माख्यं तेजः vअनु vप्रजानन् श्रवणमननादिक्रमेण[3] प्रकर्षेण संशयविपर्यासभावनाबुद्धिनिरासेन स्वात्मरूपतया जानानः सन् vपवित्रैः पावनैः vत्रिभिः अग्निवायुसूर्यैः vअर्कम् अर्चनीयं[4] स्वात्मानम् vअपुपोद्धि तेभ्योऽपि निर्मलतया पावनं परिचिच्छेद खलु । यथा दशापवित्रेण सोमं पावयति तद्वत् । एवं जानानोऽग्निः vवर्षिष्ठं स्वात्मानमुत्तमं[5] vस्वधाभिः। स्वेन लोकान् दधातीति[6] स्वधा[6]। तैरग्निवायुसूर्यैः vरत्नं रमणीयम् vअकृत अकार्षीत् । vआदित् अनन्तरमेवमात्मनि ज्ञाते[7] सति vद्यावापृथिवी तत्र परिकल्पिते द्यावापृथिव्यौ तदुपलक्षितं सर्वं[8] जगत्[9] vपर्यपश्यत् । परितः सर्वतः स्वात्मतया[10] अदर्शत्। 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इति श्रुतेः ॥ पवित्रैः । 'पूञ् पवने'। अस्मात्[11] 'कर्तरि चर्षिदेवतयोः' (पा. सू. ३. २. १८६) इति देवतायामभिधेयायां कर्तरि इत्रप्रत्ययः । पुनन्तीति पवित्रा अग्निवायुसूर्याः । प्रत्ययस्वरः । अपुपोत् । 'पूञ् पवने' इत्यस्य यङ्लुगन्तस्य[12] रूपम् । संज्ञापूर्वकस्य विधेरनित्यत्वात् अभ्यासस्य गुणाभावः । 'यद्धितुपरं छन्दसि' (पा. सू. ८. १. ५६) इति न निघातः । अर्कम् । 'अर्च पूजायाम्'। 'कृदाधारार्चिकलिभ्यः कः' इति कप्रत्ययः । हृदा । हृदयशब्दस्य 'पद्दन्नोमास्°' इत्यादिना हृदादेशः । मतिम् । 'मन ज्ञाने[13]'। 'मन्त्रे वृषेषपच°' इत्यादिना कर्मणि क्तिन् उदात्तः[14] । अकृत । करोतेर्लुङि सिच् । तस्य 'ह्रस्वादङ्गात्' इति लोपः । द्यावापृथिवी । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरः ॥

---

१. त-ल-जस् । २. त-अग्निः हिरण्यगर्भः । ३. स-°मननादिकर्मणा । ४. त-अर्चनीयं निरतिशयानन्दलक्षणंम् । ५. त-उत्तमं स्वात्मानम् । ६. त-दधतीति स्वधाः । ७. त-विज्ञाते । ८. ख-ग-च-ज-ण-भ-'सर्वं' नास्ति । ९. न-जगच्च । १०. ख-ग-च-ज-ण-फ-भ-प्राप्ततया । ११. त-इत्यस्मात् । १२. त-यङ्लुकि लङि । १३. त-ज्ञाने इत्यस्मात । १४. त-उदात्त इत्युक्तत्वात् ।

शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् ।
मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम् ॥ ९ ॥

शतऽधारम् । उत्सम् । अक्षीयमाणम् । विपःऽचितम् । पितरम् । वक्त्वानाम् ।
मेळिम् । मदन्तम् । पित्रोः । उपऽस्थे । तम् । रोदसी इति । पिपृतम् । सत्यऽवाचम् ॥ ९ ॥

यस्मादुपाध्यायाद्विश्वामित्रो वैश्वानराख्यं परं ब्रह्माज्ञासीत्तमिममुपाध्यायमनयर्चा स्तौति । हे रोदसी द्यावापृथिव्यौ शतधारम् अपरिमितजलधारायुक्तम् अक्षीयमाणं न कदापि[1] विच्छिन्नप्रवाहम् उत्सम् । लुप्तोपममेतत्[2] । उत्समिव सततप्रवाहोपेतं[3] स्रोत इवाविच्छिन्नवावसरणीसमेतं विपश्चितं मेधाविनं सकलशास्त्राभिज्ञं पितरं शिष्याणां विद्योपदेशेन पालकं वक्त्वानां वक्तव्यानां वेदवाक्यानां मेळिं मेलकं नानाशाखागतानां वाक्यानामेकस्मिन्नर्थे संकलय्य वक्तारं पित्रोः द्यावापृथिव्योः उपस्थे समीपे मदन्तं ज्ञानातिशयेन हृष्यन्तम् अत एव सत्यवाचम् अज्ञातार्थाभावात्परप्रतारणे च कारणाभावात् सत्यवादिनम् । तम् इममुपाध्यायं पिपृतम् अपेक्षितफलप्रदानेन संपूर्णं कुरुतम् । यद्वा पालयतम् ॥ उत्सम् । 'उन्दी क्लेदने' । अस्मात् 'उन्द्यमिगुधिकुषिभ्यः कित्' ( उ.सू. ३. ३४८ ) इति सप्रत्ययः । कित्वान्नकारलोपः । उनत्तीत्युत्सः । व्यत्ययेनाद्युदात्तः । विपश्चितम् । विशेषेण पातीति विपा वाक् । विपो वाचश्चिनोतीति क्विप् । 'ह्रस्वस्य पिति०' इति तुक् । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् द्वितीयाया अप्यलुक्[4] । कृदुत्तरपदस्वरः । वक्त्वानाम् । 'वच परिभाषणे' । अस्मात् 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति त्वन्प्रत्ययः । 'चोः कुः' इति कुत्वम् । निस्स्वरः । मेळिम् । मिलिः[5] संपर्कार्थो धातुः । अस्मादौणादिक इप्रत्ययः । रोदसी । आमन्त्रितत्वान्निघातः । पिपृतम् । 'पृ पालनपूरणयोः' । छान्दसो जुहोत्यादिः । 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम् । निघातः ॥ ॥ २७ ॥

'प्र वो वाजाः' इति पञ्चदशर्चं पञ्चदशं सूक्तम् । अत्रानुक्रमणिका—'प्र वः पञ्चोना गायत्रं त्वृतव्या वाद्या' इति । विश्वामित्र ऋषिः । गायत्री छन्दः । अग्निर्देवता । आद्या ऋतुदेवत्या वा । प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दस्यस्य सूक्तस्य विनियोगः । 'प्र वो वाजा उपसद्याय' ( आश्व. श्रौ. ४.१३ ) इति । आभिप्लविकेषूक्थ्येषु 'प्र वो वाजाः' इति वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च—'प्र वो वाजा अभिद्यवोऽभि प्रयांसि वाहसा' ( आश्व. श्रौ. ७. ८ ) इति । सूक्तस्याद्या सामिधेनी । सूत्रितं च—'प्र वो वाजा अभिद्यवोग्न आ याहि वीतये' ( आश्व. श्रौ. १. २ ) इति । सामिधेनीषु 'समिध्यमानः' इत्येका । सूत्रितं च—'समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे' ( आश्व. श्रौ. १. २) इति । आधाने तृतीयायामिष्टौ सामिधेनीष्विध्यमानेद्धवत्योर्मध्ये 'पृथुपाजाः' इति द्वे धाय्ये । सूत्रितं च—'प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे' (आश्व. श्रौ. २. १) इति । एवमन्यत्रापि यत्र यत्र सप्तदश[6] सामिधेन्यस्तत्र तत्रैते धाय्ये इति द्रष्टव्यम् । विषुवत्येकविंशतिः सामिधेन्यः । तत्र 'पृथुपाजा अमर्त्यः' इति षडृचो धाय्याः । 'पृथुपाजा अमर्त्य इति षट् धाय्याः सामिधेनीनाम्' ( आश्व. श्रौ. ८. ६ ) इति सूत्रितम् । महाव्रतेऽपि पञ्चविंशतिसंख्याकाः

---

१. ख-ग-च-ज-ण-फ-भ—क्वापि । २. ख-ग-च-ज-ण-न-प-फ-भ-ल-स—'लुप्तोपममेतत्' नास्ति । ३. ख-ग-च-ज-ण-न-भ-ल-स—शतप्रवाहोपेतम् । ४. त—अलुक् । ५ ख-गच-ज-ण-फ-भ—मिलः । ६. ख-ग-ज-ण-फ-भ—सप्तदशधा ।

सामिधेन्यः । तत्राप्येताः षडृचो द्रष्टव्याः । अग्नीषोमप्रणयने ‘ होता देवो अमर्त्यः ’ इति तृचः । सूत्रितं च—‘ होता देवो अमर्त्यः पुरस्तादुप त्वाग्ने दिवेदिवे ’ ( आश्व. श्रौ. ४. १० ) इति । ‘ ईळेन्यो नमस्यस्तिरः ’ इति तिस्रः सामिधेन्यः । सूत्रितं च—‘ ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे ’ ( आश्व. श्रौ. १. २ ) इति ॥

प्र वो॒ वाजा॑ अ॒भिद्य॑वो ह॒विष्म॑न्तो घृ॒ताच्या॑ । दे॒वाञ्जि॑गाति सुम्न॒युः ॥ १ ॥

प्र । व॒ः । वाजा॑ः । अ॒भिऽद्य॑वः । ह॒विष्म॑न्तः । घृ॒ताच्या॑ । दे॒वान् । जि॒गा॒ति॒ । सु॒म्न॒युः ॥१॥

हे ऋतवः ^वाजाः । वजन्ति[1] गच्छन्तीति वाजा मासाः । ^अभिद्यवः । अभितो द्यवो दिवसा येष्वित्यभिद्यवोऽर्धमासाश्च । ^हविष्मन्तः हविर्भाजो देवाः । ^घृताच्या । घृतमञ्चतीति[2] घृताची गौः । तथा च तैत्तिरीयकं—‘ देवा हविष्मन्तो गौर्घृताची ’ (तै. सं. २. ५. ७. ४) इति । यद्वा हविष्मन्तो हविषः क्षीरादेः प्रदातारः पशवो घृताच्या । घृतमञ्चति प्राप्नोतीति घृताची स्रुक् । तथा च वाजसनेयकं—‘ पशवो हविष्मन्तः स्रुग्घृताची ’ इति । तया घृताच्या सहिता हविष्मन्तो देवाः पशवश्च मासाश्चार्धमासाश्चेति सर्वे ^वः युष्माकं यजनार्थं प्रभवन्ति । तेषु वाजादिषु प्रभवत्सु सत्सु ^सुम्नयुः सुखमात्मन इच्छन् यजमानः ^देवाञ्जिगाति यज्ञद्वारा देवान् प्राप्नोति । उक्तार्थे तैत्तिरीय-ब्राह्मणं—‘ प्र वो वाजा इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची यज्ञो देवाञ्जिगाति यजमानः सुम्नयुः ’ ( तै. सं. २. ५. ७. ४ ) इति ॥ अभिद्यवः । बहुव्रीहौ पूर्वपद-प्रकृतिस्वरः । घृताच्या । ‘ घृ क्षरणदीप्त्योः ’ । अस्मात्[3] ‘ अञ्जिघृषिभ्यः क्तः ’ (उ. सू. ३. ३६९) इति कर्मणि क्तः । घृतमाज्यमञ्चतीति ‘ ऋत्विग्दधृक्° ’ इत्यादिना क्विन् । ‘अनिदिताम्°’ इत्युपधा-लोपः । ‘ अञ्चतेश्चोपसंख्यानम् ’ इति ङीप् । ‘ चौ ’ इति पूर्वपदान्तोदात्तत्वम् । जिगाति[4] । गातिः गत्यर्थः[4] । छान्दसो जुहोत्यादिः । निघातः । सुम्नयुः । सुम्नं सुखमात्मन इच्छन्निति[5] ‘ सुप आत्मनः क्यच् ’ । ‘ क्याच्छन्दसि ’ इत्युः[6] । प्रत्ययस्वरः ॥

ई॒ळे अ॒ग्निं वि॑प॒श्चितं॒ गि॒रा य॒ज्ञस्य॒ साध॑नम् । श्रु॒ष्टी॒वानं॑ धि॒ताव॑नम् ॥ २ ॥

ई॒ळे । अ॒ग्निम् । वि॒पः॒ऽचित॑म् । गि॒रा । य॒ज्ञस्य॑ । साध॑नम् । श्रु॒ष्टी॒ऽवान॑म् । धि॒तऽवा॑नम् ॥२॥

^विपश्चितं मेधाविनं ^यज्ञस्य ^साधनं यज्ञस्य निर्वाहकं ^श्रुष्टीवानं सुखवन्तं यद्वा वेगवन्तं ^धितावानम् । वानं[7] वननीयं धनं धितं निहितं यस्य तं निहितधनम् । तमिमम् ^अग्निं ^गिरा स्तुतिलक्षणया वाचा ^ईळे विश्वामित्रोऽहं स्तौमि ॥ ईळे । ‘ ईड स्तुतौ ’ । श्रुष्टीवानम् । ‘ वन षण[8] संभक्तौ ’ इत्यस्माद्विच् । श्रुष्टी वनतीति श्रुष्टीवा । कृदुत्तरपदस्वरः । धितावानम् । दधातेः निष्ठायां धिरादेशश्छान्दसः । ‘ वन संभक्तौ ’ । कर्मणि घञ् । बहुव्रीहौ ‘ निष्ठा ’ इति धितशब्दस्य पूर्वनिपातः । पूर्वपदप्रकृतिस्वरः ॥

---

१. न-प-भ—व्रजन्ति । २. त-न-ल—घृतमञ्चति जा(क्षा)रयतीति । ३. त—इत्यस्मात । ४. ख-ग-च-ज-ण-फ-भ—जिगातिर्गत्यर्थः । ५. ख-ग-च-ज-ण-भ-ल—इच्छन्तीति । ६. त—इत्युप्रत्ययः । ७. ख-ग-च-ज-ण-भ-स—‘ वानं ’ नास्ति । ८. त—‘ षण ’ नास्ति ।

अग्ने॑ श॒केम॑ ते व॒यं यमं॑ दे॒वस्य॑ वा॒जिनः॑ । अति॑ द्वेषां॑सि तरेम ॥ ३ ॥

अग्ने॑ । श॒केम॑ । ते॒ । व॒यम् । यम॑म् । दे॒वस्य॑ । वा॒जिनः॑ । अति॑ । द्वेषां॑सि । त॒रे॒म ॥ ३ ॥

हे ᵛअग्ने ᵛवाजिनः संभृतहविष्काः ᵛवयं ᵛदेवस्य द्योतमानस्य[1] ᵛते तव ᵛयमं यमनम् आ यज्ञसमाप्तेः अत्रावस्थानं कर्तुं ᵛशकेम शक्यास्म[2] । वाजिनो वेगवतो देवस्य इति वा योजनीयम् । ततः कारणात् ᵛद्वेषांसि अस्मदीयानि पापानि ᵛअति ᵛतरेम पापेभ्य उत्तीर्णा भवेम ॥ शकेम । ' शक्लृ शक्तौ ' इत्यस्य[3] आशीर्लिङि ' लिङ्याशिष्यङ् ' इत्यङ्प्रत्ययः । ' किदाशिषि ' इति यासुट् । सलोपेयादेशयलोपगुणसलोपाः । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । उदात्तनिवृत्तिस्वरः । यमम् । ' यम उपरमे ' इत्यस्माद्भावे घञ् । ' यम उपरमे ' इति निपातनात् वृद्ध्यभावः[4] । ञित्स्वरः । तरेम । ' तॄ प्लवनतरणयोः ' । प्रार्थने लिङि रूपम् । निघातः ॥

स॒मि॒ध्यमा॑नो अध्व॒रे॒३॑ग्निः पा॑व॒क ईड्यः॑ । शो॒चिष्के॑श॒स्तमी॑महे ॥ ४ ॥

स॒म्ऽइ॒ध्यमा॑नः । अ॒ध्व॒रे । अ॒ग्निः । पा॒व॒कः । ईड्यः॑ । शो॒चिः॒ऽके॑शः । तम् । ई॒म॒हे॒ ॥४॥

यः ᵛअग्निः ᵛअध्वरे यज्ञे ᵛसमिध्यमानः घृताज्याहुतिभिः सम्यक् प्रज्वाल्यमानः अत एव ᵛशोचिष्केशः[5] ज्वालाकेशः ᵛपावकः शोधकः ᵛईड्यः स्तोतृभिः प्रशस्यो भवति ᵛतम् इममभिमतफलार्थम् ᵛईमहे वयं याचामहे ॥ ईड्यः । ' ईड स्तुतौ ' इत्यस्माण्ण्यत् । अस्य[6] ' तित्स्वरितम्[7] ' इति स्वरितत्वे प्राप्ते ' ईडवन्द° ' इत्यादिना आद्युदात्तत्वम् । ईमहे । ई कान्त्यादिषु । अयं[8] धातुरत्र याच्ञार्थः । निघातः ॥

पृ॒थु॒पाजा॒ अम॑र्त्यो घृ॒तनि॑र्णि॒क्स्वा॑हुतः । अ॒ग्निर्य॒ज्ञस्य॑ ह॒व्य॒वाट् ॥ ५ ॥

पृ॒थु॒ऽपाजाः॑ । अम॑र्त्यः । घृ॒तऽनि॑र्निक् । सुऽआ॑हुतः । अ॒ग्निः । य॒ज्ञस्य॑ । ह॒व्य॒ऽवाट् ॥ ५॥

ᵛपृथुपाजाः प्रभूततेजोरूपः ᵛअमर्त्यः मरणधर्मरहितः ᵛघृतनिर्णिक् । घृतस्य विलयनद्वारा शोधनं येनेति घृतनिर्णिक् । ᵛस्वाहुतः सुष्ठु होत्रादिभिः सम्यगिष्टः । एवंभूतः ᵛअग्निर्यज्ञस्य ज्योतिष्टोमादेः ᵛहव्यवाट् हव्यानां वोढा भवति ॥ पृथुपाजाः । कुदुत्तरपदस्वरः । स्वाहुतः । जुहोतेः कर्मणि क्तः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । हव्यवाट् । ' वहश्च ' इति ण्विः ॥ ॥ २८ ॥

तं स॒बाधो॑ य॒तस्रु॑च इ॒त्था धि॒या य॒ज्ञव॑न्तः । आ च॑क्रुर॒ग्निमू॒तये॑ ॥ ६ ॥

तम् । स॒ऽबाधः॑ । य॒तऽस्रु॑चः । इ॒त्था । धि॒या । य॒ज्ञऽव॑न्तः । आ । च॒क्रुः॒ । अ॒ग्निम् । ऊ॒तये॑ ॥६॥

---

१. त–' द्योतमानस्य ' नास्ति । २. ख-ग-च-ज-ण-फ-भ–शक्तास्म । ३. त–इत्यस्मात् । ४. ल–ह्रस्वभावः । ५. ख-ग-च-ज-ण-प-फ-भ–दीप्तज्वालः । ६. त–तस्य । ७. ख-ग-ज-ण-त-भ-स–तित्स्वरितः । ८. त–इत्ययम् ।

सबाधः । रक्षोघ्नमन्त्रोच्चारणेन तद्विषयबाधा सह वर्तन्ते इति सबाधः । यज्ञवन्तः यजनीयहविर्युक्ताः यतस्रुचः । यताः संयताः स्रुचो जुह्वाद्याः यैस्ते यतस्रुचः ऋत्विजः । इत्था इत्थमनेन प्रकारेण क्रियमाणया धिया स्तुत्या तम् एवंभूतम् अग्निमूतये राक्षसबाधात्[1] रक्षणाय आ अभिमुखं चक्रुः कुर्वन्ति ॥ सबाधः । ' बाधृ विलोडने ' इत्यस्मात् क्विप् । कृदुत्तरपदस्वरः । इत्था । इदंशब्दात् प्रकारार्थे इदमस्थमुः । तस्य ' सुपां सुलुक्° ' इति डादेशः । उदात्तनिवृत्तिस्वरेणान्तोदात्तः । चक्रुः । ' डुकृञ् करणे ' इत्यस्य लिट्युसि यणादेशे कृते तस्य ' द्विर्वचनेऽचि ' इति स्थानिवद्भावात् द्विर्वचनम् । निघातः ॥

होता देवो अमर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयन् ॥ ७ ॥

होता । देवः । अमर्त्यः । पुरस्तात् । एति । मायया । विदथानि । प्रऽचोदयन् ॥ ७ ॥

होता होमनिष्पादकः अमर्त्यः मरणधर्मरहितः देवो द्योतमानः विदथानि वेदितव्यानि कर्माणि प्रचोदयन् प्रकर्षेण प्रेरयन् सोऽग्निः मायया कर्मविषयाभिज्ञानेन[2] युक्तः सन् पुरस्तात् कर्मप्रारंभकाले एव एति अस्मानागच्छति[3] ॥ मायया । ' माङ् माने शब्दे च ' इत्यस्मात् ' माच्छाससिसूभ्यो यः ' इति कर्तरि कर्मणि वा यप्रत्ययः । मिमीते जानीते कर्म मीयतेऽनयेति वा माया कर्मविषयज्ञानम् । प्रत्ययस्वरः । विदथानि । ' विद ज्ञाने ' इत्यस्मात् ' रुदिविदिभ्यां कित् ' ( उ. सू. ३. ३९५ ) इति कर्मणि अथप्रत्ययः । कित्त्वादगुणः । प्रत्ययस्वरः ॥

वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते । विप्रो यज्ञस्य साधनः ॥ ८ ॥

वाजी । वाजेषु । धीयते । अध्वरेषु । प्र । नीयते । विप्रः । यज्ञस्य । साधनः ॥ ८ ॥

वाजी बलवानग्निः वाजेषु युद्धेषु धीयते देवैः शत्रुहननार्थं[4] निधीयते । किंच अध्वरेषु अग्निहोत्रादिषु प्र णीयते अध्वर्य्वादिभिः प्रकर्षेण आहवनीयादिस्थानेषु प्रक्षिप्यते । अत एव विप्रः मेधावी सन्नग्निः यज्ञस्य अग्निहोत्रादेः साधनः साधको भवति ॥ धीयते । दधातेः[5] कर्मणि यक् । ' घुमास्थागापा° ' इत्यादिना ईत्वम् । निघातः । नीयते[6] । ' णीञ् प्रापणे ' इत्यस्य[6] कर्मणि यकि रूपम् । उपसर्गादसमासेऽपि णोपदेशस्य ' इति णत्वम् । साधनः । ' साध संसिद्धौ ' । नन्द्यादित्वात्कर्तरि ल्युः । लित्स्वरः ॥

धिया चक्रे वरेण्यो भूतानां गर्भमा दधे । दक्षस्य पितरं तना ॥ ९ ॥

धिया । चक्रे । वरेण्यः । भूतानाम् । गर्भम् । आ । दधे । दक्षस्य । पितरम् । तना ॥ ९ ॥

योऽग्निः धिया आधानपवमानेष्टिरूपेण कर्मणा चक्रे आहवनीयरूपतया कृतोऽभूत् अत एव वरेण्यः सर्वैर्यजमानैः कर्माङ्गत्वेन वरणीयः यश्चाग्निः भूतानां स्थावरजङ्गमात्मकानां भूतजातानामन्तः

---

१. त-ल-राक्षसवधात् । २. ख-प-फ-भ-विषयाभिज्ञानेन । ३. त-अस्मानागच्छति । एति । इण् गतौ । ४. त-ल-शत्रुहननार्थे । ५. त-ल-डुधाञ् धारणपोषणयोः इत्यस्मात् । ६. ख-ग-च-न-भ-स-' नीयते ......इत्यस्य ' नास्ति; ज-ण-नीयते । णीञ् प्रापणे ।

गर्भं स्वात्मानमेव गर्भरूपतया आ दधे सर्वत्र दधार पितरं सर्वस्य जगतः पालकं तमिममग्निं दक्षस्य दक्षप्रजापतेः तना तनया वेदिरूपा भूमिर्दर्शपूर्णमासाग्निहोत्रादिकर्मसिद्ध्यर्थं धारयति । भूमेर्दक्षदुहितृत्वे[1] मन्त्रवर्णः—' अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव ' ( ऋ. सं. १०. ७२. ५ ) इति ॥ चक्रे । करोतेः कर्मणि लिटि रूपम् । गर्भम् । ' गॄ निगरणे ' इत्यस्मात् ' अर्तिगृभ्यां भन् ' इति भन् । गिरति गीर्यते वा गर्भः । नित्त्वादाद्युदात्तः । दधे । दधातेर्लिटि रूपम् । पितरम् । ' पा रक्षणे ' । ' नप्तृनेष्टृ° ' इत्यादिना तृजन्तत्वेन निपातनादिरवम् । पाति पालयतीति पिता पालकः । चित्स्वरः । तना । यलोपश्छान्दसः ॥

नि त्वा दधे वरेण्यं दक्षस्येळा सहस्कृत । अग्ने सुदीतिमुशिजम् ॥ १० ॥

नि । त्वा । दधे । वरेण्यम् । दक्षस्य । इळा । सहःऽकृत । अग्ने । सुऽदीतिम् । उशिजम् ॥ १० ॥

उक्तार्थः[2] अनयर्चा विव्रियते । सहस्कृत मथनाख्येन बलेन निष्पन्न हे अग्ने सुदीतिं शोभनदीप्तियुक्तम् उशिजं पुरोडाशादिहविः कामयमानम् । यद्वा कर्मार्थिभिः काम्यमानम् । अत एव वरेण्यं तैर्वरणीयं त्वा एवंविधं त्वां दक्षस्य दुहिता इळा वेद्यादिलक्षणा भूमिः नि दधे अग्निहोत्रादिकर्मसमृद्ध्यर्थं[3] नितरां दधार ॥ इळा । ' ईड स्तुतौ ' । ' पुंसि संज्ञायाम्° ' इत्यत्र प्रायिकवचनात् स्व्यर्थेऽपि[4] घप्रत्ययः । ह्रस्वश्छान्दसः । संज्ञापूर्वकस्य विधेरनित्यत्वात् अगुणः[5] । ईड्यन्ते स्तूयन्तेऽस्यां यजमानैर्देवा इतीळा भूमिः । उदात्तनिवृत्तिस्वरेणान्तोदात्तः । प्रत्ययस्वरः । उशिजम् । ' वश कान्तौ ' इत्यस्मात् ' वशः[6] किच्च ' इतीजिप्रत्ययः । कित्त्वात्संप्रसारणम् । वष्टि हविः कामयते उश्यते काम्यते कर्मार्थिभिः इति वा उशिक् अग्निः । प्रत्ययस्वरः ॥ ॥ २९ ॥

अग्निं यन्तुरमप्तुरमृतस्य योगे वनुषः । विप्रा वाजैः समिन्धते ॥ ११ ॥

अग्निम् । यन्तुरम् । अप्ऽतुरम् । ऋतस्य । योगे । वनुषः । विप्राः । वाजैः । सम् । इन्धते ॥ ११ ॥

वनुषः कर्मसिद्ध्यर्थं संभजमानाः विप्राः मेधाविनोऽध्वर्य्वादयः यन्तुरं सर्वस्य नियन्तारम् । यद्वा क्षिप्रं गन्तारम् । अप्तुरम् अपां प्रेरकं तमिमम् अग्निम् ऋतस्य सत्यभूतस्य ज्योतिष्टोमादेः योगे प्रयोगार्थं वाजैः हविर्लक्षणैरन्नैः समिन्धते सम्यग्दीपयन्ति ॥ यन्तुरम् । वर्णव्यत्ययः । यन्तारमित्यर्थः । अप्तुरम् । ' तुर त्वरणे ' । अपस्तुतोर्ति त्वरयतीति क्विप् । कृदुत्तरपदस्वरः । योगे । ' युजिर् योगे ' । भावे घञ् । ' चजोः कु घिण्ण्यतोः ' इति कुत्वम् । ञित्स्वरः । वनुषः । ' वन षण संभक्तौ ' । ' जनेरुसिः ' इत्यधिकारे बहुलवचनादस्मादपि उसिः[7] । प्रत्ययस्वरः । इन्धते । ' ञिइन्धी दीप्तौ ' । निघातः ॥

ऊर्जो नपातमध्वरे दीदिवांसमुप द्यवि । अग्निमीळे कविक्रतुम् ॥ १२ ॥

ऊर्जः । नपातम् । अध्वरे । दीदिऽवांसम् । उप । द्यवि । अग्निम् । ईळे । कविऽक्रतुम् ॥ १२ ॥

---

१ ख-ग-च-ज-ण-न-भ-स–°दुहितृत्वेन । २. त–उक्तोऽर्थः । ३. त-प-फ–°सिद्ध्यर्थम् । ४. ख-ग-च-ज-ण-न-भ–स्वार्थेऽपि । ५. त–अगुणः । यद्वा घञर्थे कविधानमिति अधिकरणे कः । ६. ख-ग-च-ज-ण-भ–वशेः । ७. त–उसिप्रत्ययः ।

[v]ऊर्जो [v]नपातं हविर्लक्षणैः अन्नैः[1] समिध्यमानत्वेनान्नस्य पुत्रम्। यद्वान्नस्य चतुर्थम्। यथान्नात्[2] आहुतिराहुतेरादित्य आदित्यादग्निरिति। [v]उप [v]द्यवि अन्तरिक्षस्य समीपे [v]दीदिवांसम् अतिशयेन दीप्यमानं [v]कविक्रतुम्। कवयो मेधाविनोऽध्वर्य्वादयो मथनेन क्रतवः कर्तारो यस्येति। अध्वर्य्वादिभिः निष्पाद्यमानं तमिमम् [v]अग्निम् [v]अध्वरे अस्मिन्यज्ञे [v]ईळे स्तुतिलक्षणाभिर्गीर्भिरहं स्तौमि॥ ऊर्जः। 'ऊर्ज बले' इत्यस्मात् 'भ्राजभास°' इत्यादिना ताच्छीलिकः क्विप्[3]। ऊर्जयति शरीरमित्यूर्क् अन्नम्। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। द्यवि। 'द्युत दीप्तौ' इत्यस्मात् औणादिको डुन्प्रत्ययः[4]। द्योतते किरणसंबन्धादिति द्युः अन्तरिक्षम्। नित्स्वरः[5]। ईळे[6]। लटि रूपम्॥

ई॒ळेन्यो॑ नम॒स्यस्ति॒रस्तमां॑सि द॒र्श॒तः। सम॒ग्निरि॑ध्यते॒ वृषा॑ ॥ १३ ॥

ई॒ळेन्यः॑। न॒म॒स्यः॑। ति॒रः। तमां॑सि। द॒र्श॒तः। सम्। अ॒ग्निः। इ॒ध्य॒ते॒। वृषा॑ ॥ १३ ॥

[v]ईळेन्यः स्तोतृभिरीड्यः अत एव [v]नमस्यः सर्वैर्नमस्कार्यः [v]तमांसि [v]तिरः ध्वान्तानि स्वप्रभाभिस्तिरस्कुर्वन् [v]दर्शतः कमनीयतया सर्वैर्दर्शनीयः। तादृशः [v]अग्निः [v]वृषा यजमानस्य कामानां वर्षिता [v]सम् [v]इध्यते आहुतिप्रक्षेपेण[7] प्रज्वाल्यते। उक्तार्थे वाजसनेयकम्—'ईडेन्यो ह्येष नमस्यो ह्येष तिरस्तमांसि ददृशे समिद्धः' इति॥ ईळेन्यः। 'ईड स्तुतौ'। 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति केन्यः[8]। प्रत्ययस्वरः। नमस्यः। नमस्यतेः 'अचो यत्' इति यत्। अतोलोपयलोपौ। 'तित्स्वरितः[9]' इति स्वरितः। दर्शतः। 'दृशिर् प्रेक्षणे'। अस्मात्[10] 'भृमृदृशि°' इत्यादिना कर्मणि अतच्प्रत्ययः। चित्स्वरः। वृषा। 'वृषु[11] सेचने' इत्यस्मात् 'कनिन्युवृषि°' इत्यादिना कनिन्। कित्त्वादगुणः। नित्त्वादाद्युदात्तः॥

वृषो॑ अ॒ग्निः समि॑ध्य॒तेऽश्वो॒ न दे॑व॒वाह॑नः। तं ह॒विष्म॑न्त ईळते ॥ १४ ॥

वृषो॒ इति॑। अ॒ग्निः। सम्। इ॒ध्य॒ते॒। अश्वः॑। न। दे॒व॒ऽवाह॑नः। तम्। ह॒विष्म॑न्तः। ई॒ळ॒ते॒ ॥ १४ ॥

[v]वृषो वृषेव[12] कामानां वर्षिता [v]देववाहनः[13]। देवान् हवींषि वाहयति प्रापयतीति देववाहनः*। तत्र दृष्टान्तः। [v]अश्वो [v]न इति। यथाश्वो राजानं वाहयति स्वपुरं प्रापयतीति। वाहनमश्वः। तद्वत्[13] वाहनभूतो यः [v]अग्निः [v]समिध्यते आज्याहुतिप्रदानेन[14] सम्यक् दीप्यते [v]तं तादृशमग्निं [v]हविष्मन्तः

---

१. ख-ग-च-जण-न-भ–'अन्नैः' नास्ति। २. च-न-फ–यदन्नात्; ज-ण–अन्नात्। ३. त–क्विप्प्रत्ययः। ४. ख-ग-ज-ण-न-भ-स–डुन्प्रत्ययः; च–डुप्रत्ययः। ५. ख-ग-च-ज-ण-न-भ-स–नित्स्वरः। ६. त-ल–ईळे। ईड स्तुतौ इत्यस्य। ७. ज-ण-आज्याहुति°। ८. त–केन्यप्रत्ययः। ९. ग-च-न-भ-स–तित्स्वरः। १०. त–इत्यस्मात्। ११. ख-ग-च-ज-ण-न-भ–वृषी; ल–वृष; स–वृषा। १२. ख-ग-च-ज-ण-भ–'वृषेव' नास्ति। १३. ख-ग-च-ज-ण-फ–अश्वो न अश्व इव देववाहनः देववान् (ज-ण–देवानां) हवींषि वाहनमत्वः (ज-ण–वाहनः) तद्वतो; भ–देववाहनः देवानां हवींषि वाहनमत्वः तद्वतो; स–देववाहनः देववान् मत्वः तद्वतो। * ल–लब्ध्वा वहनमिवाश्वः तद्वत् यद्वद्वाहनभूतो योऽग्निः समिध्येत आहुतिप्रदानेन सम्यग्दीप्यते तेन। १४. त-न-ल-स–आहुति°।

संभृतहविष्का यजमानाः ᵛईळते कर्मसिद्ध्यर्थं स्तुवन्ति ॥ वृषा उ । गुणः । उञमवलम्ब्य प्रगृह्यसंज्ञा । देववाहनः । 'वह प्रापणे' इत्यस्माण्ण्यन्तात्कर्तरि ल्युः । लित्स्वरः । समासे कृदुत्तरपदस्वरः[1] ॥

वृषणं त्वा वयं वृषन्वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥ १५ ॥

वृषणम् । त्वा । वयम् । वृषन् । वृषणः । सम् । इधीमहि । अग्ने । दीद्यतम् । बृहत् ॥१५॥

ᵛवृषन् कामानां वर्षितर्हे ᵛअग्ने ᵛवृषणः वृषाणः[2] घृताज्याहुतीनां[3] सेक्तारः ᵛवयं ᵛवृषणम् आहुतिद्वारा[4] उदकस्य सेक्तारम् । तथा[5] च[5] स्मृतिः–'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (मनु. ३. ७६)इति । ᵛदीद्यतं दीप्यमानं ᵛबृहत् अत एव महान्तं ᵛत्वा[6] त्वाम्[6] अग्निं ᵛसमिधीमहि सम्यग्दीपयामः ॥ इधीमहि । 'ञिइन्धी दीप्तौ' इत्यस्य प्रार्थने लिङि नकारलोपश्छान्दसः । निघातः । दीद्यतम् । दीदेतिः[7] दीप्तिकर्मा । तस्य शतरि रूपम् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ ॥ ३० ॥

'अग्ने जुषस्व' इति षड्टचं षोडशं सूक्तं वैश्वामित्रमाग्नेयम् । अत्रानुक्रमणिका—'अग्ने जुषस्व षट् तृतीयाद्युष्णिक्त्रिष्टुब्जगत्यः' इति । पूर्वसूक्ते 'गायत्रं तु' इत्युक्तत्वादेतदपि गायत्रम् । तृतीया तूष्णिक् चतुर्थी त्रिष्टुप् पञ्चमी जगती । 'अग्ने जुषस्व' इति सवनीयपुरोडाशे स्विष्टकृतः प्रातःसवनीयानुवाक्या । सूत्रितं च—'अथ स्विष्टकृतोऽग्ने जुषस्व नो हविः' (आश्व. श्रौ. ५. ४) इति । अतिरात्रे आश्विनशस्त्रे परिहिते सति चमसगणैः सहाश्विनोर्द्विकपालः पुरोडाशः सर्वहुतो होतव्यः । यदि पुरोडाशमवशेष्य स्विष्टकृतं कुर्युस्तस्य स्विष्टकृतः 'पुरोळा अग्ने' इत्येषा याज्या । 'यद्येतस्य पुरोडाशस्य स्विष्टकृता चरेयुः पुरोळा अग्ने पचतः' (आश्व. श्रौ. ६. ५) इति सूत्रितम् । माध्यंदिने सवने सवनीयपुरोडाशे स्विष्टकृतोऽनुवाक्या 'माध्यंदिने सवने' इत्येषा । सूत्रितं च—'अग्ने जुषस्व नो हविर्माध्यंदिने सवने जातवेदः' (आश्व. श्रौ. ५. ४) इति । तृतीयसवने सवनीयपुरोडाशस्य स्विष्टकृतोऽनुवाक्या 'अग्ने तृतीये सवने' इत्येषा । सूत्रितं च—'अग्ने तृतीये सवने हि कानिष इत्यनुसवनमनुवाक्याः' (आश्व. श्रौ. ५. ४) इति । आश्विनपुरोडाशस्य स्विष्टकृतो याज्या 'अग्ने वृधानः' इत्येषा । सूत्रितं च—'अग्ने वृधान आहुतिमिति संयाज्ये' (आश्व. श्रौ. ६. ५) इति ॥

अग्ने जुषस्व नो हविः पुरोळाशं जातवेदः । प्रातःसावे धियावसो ॥ १ ॥

अग्ने । जुषस्व । नः । हविः । पुरोळाशम् । जातऽवेदः ।

प्रातःऽसावे । धियावसो इति धियाऽवसो ॥ १ ॥

विश्वामित्रः स्तौति । ᵛजातवेदः जातप्रज्ञ ᵛधियावसो । धिया स्तोत्रेण वसु धनं यस्माद्भवति सोऽयं धियावसुः । तस्य संबुद्धिः । कर्मानुरूपधनप्रद हे ᵛअग्ने ᵛप्रातःसावे अग्निष्टोमे प्रातःसवने

---

१. त-ल–॰पदस्वरः । ईळते । ईड स्तुतौ । २. ख-ग-च-ज-ण-त-भ-ल–'वृषाणः' नास्ति । ३. त–घृताद्याहुतीनाम् । ४, च-फ–वृष्टिद्वारा । ५, त–तदाह । ६, त-न-स–इमम् ; ल–तमिमम् । ७. च-फ–दीद्यतिः ।

नः[1] अस्मत्संबन्धि पुरोडाशं पुरोडाशाख्यं हविः जुषस्व सेवस्व ॥ जुषस्व । ' जुषी प्रीतिसेवनयोः ' इत्यस्मात्[2] लोटि रूपम् । आमन्त्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः । प्रातःसावे । ' षुञ् अभिषवे ' । सवनं सावः । भावे घञ् । ' थाथघञ्क्ताजबित्रकाणाम् ' इत्यन्तोदात्तत्वम् । धियावसो । विभक्त्यलोपश्छान्दसः । आमन्त्रितत्वान्निघातः[3] ॥

पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः । तं जुषस्व यविष्ठ्य ॥ २ ॥

पुरोळाः । अग्ने । पचतः । तुभ्यम् । वा । घ । परिऽकृतः । तम् । जुषस्व । यविष्ठ्य ॥ २ ॥

यविष्ठ्य युवतम हे अग्ने यः पुरोळाः । पुरोडाशन्तेऽध्वर्य्वादयः[4] एनमिति[5] पुरोडाः[5] पुरोडाशः । पचतः कपालयोः पक्वोऽस्ति । स च तुभ्यं[6] त्वदर्थं[6] परिष्कृतः वा[7] घ[7] पर्यग्निकरणादिभिरलंकृतः खलु । तम् इमं पुरोडाशं जुषस्व सेवस्व ॥ पुरोळाः । ' दाश्ट दाने ' इत्यस्मात् पुरस्पूर्वात् ' मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ' ( पा. सू. ३. २. ७१ ) इति कर्मणि ण्विनि कृते ' श्वेतवहादीनां डस्पदस्य ' ( पा. सू. ३. २. ७१. १ ) इति डस्प्रत्यये च कृते ' अवयाः श्वेतवाः पुरोडाश्च ' ( पा. सू. ८. २. ६७ ) इति निपातनाद्दकारस्य डत्वम् । पुरोडाशन्त एनमिति पुरोडाः पुरोडाशः । डकारस्य ळकारो बह्वृचसांप्रदायिकः । कृदुत्तरपदस्वरः[8] । पचतः । ' डुपचष् पाके ' इत्यस्मात् ' भृमृदृशि° ' इत्यादिना कर्मणि अतच्प्रत्ययः । पच्यतेऽसाविति पचतः पक्वः । चित्स्वरः । घा । ' ऋचि तुनुघ° ' इत्यादिना संहितायां दीर्घः । परिष्कृतः । ' संपर्युपेभ्यः करोतौ भूषणे ' ( पा. सू. ६. १. १३७ ) इति करोतेः सुडागमः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । यविष्ठ्य । यविष्ठ एव यविष्ठ्यः । ' पादार्घाभ्यां च ' इत्यत्र चकारेण वस्वादीनां स्वार्थे यत्प्रत्ययस्योपादानात् यविष्ठेत्यत्र स्वार्थिको यत्प्रत्ययः ( का. ५. ४. २५ ) । आमन्त्रितत्वान्निघातः ॥

अग्ने वीहि पुरोळाशमाहुतं तिरोअह्न्यम् । सहसः सूनुरस्यध्वरे हितः ॥ ३ ॥

अग्ने । वीहि । पुरोळाशम् । आऽहुतम् । तिरःऽअह्न्यम् ।

सहसः । सूनुः । असि । अध्वरे । हितः ॥ ३ ॥

हे अग्ने तिरोअह्न्यम् अह्नि तिरोहिते सति आहुतम् आ समन्तात् हुतं पुरोडाशं पुरोडाशाख्यं हविः वीहि भक्षय । अध्वरे अस्मिन्यज्ञे सहसः सूनुः बलस्य पुत्रस्त्वं हितः असि आहवनीयादिस्थानेष्वस्माभिर्निहितोऽसि । तस्माद्वीहीति शेषः ॥ वीहि । वी कान्तिगत्यादिषु । लोटि रूपम् । हेरपित्वादन्तोदात्तत्वम् । आहुतम् । जुहोतेः कर्मणि क्त ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । तिरोअह्न्यम् । अह्नि भवमह्न्यम् । ' भवे छन्दसि ' इति यत् । तिरोभूतमह्न्यं यस्मिन् काले स तिरोअह्न्यः । रात्रिकाल इत्यर्थः । ' कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया । ' प्रकृत्यान्तःपादम्° ' इत्येङः प्रकृतिभावः । बहुव्रीहौ पूर्वपदस्वरः ॥

---

१. त-' नः ' नास्ति । २. त-इत्यस्य । ३. ख-ग-च-ज-ण-न-भ-स-' आमन्त्रितत्वान्निघातः ' नास्ति । ४. ख-ग-च-ज-ण-न-भ-स-' पुरोडाशन्तेऽध्वर्य्वादयः ' नास्ति । ५. न-भ-स-' एनमिति पुरोडाः ' नास्ति । ६. त-तुभ्यं वा घ त्वदर्थमेव खलु । ७. त-' वा घ ' नास्ति । ८. °पदप्रकृतिस्वरः ।

माध्यंदिने सवने जातवेदः पुरोळाशमिह कवे जुषस्व ।
अग्ने यह्वस्य तव भागधेयं न प्र मिनन्ति विदथेषु धीराः ॥ ४ ॥

माध्यंदिने । सवने । जातऽवेदः । पुरोळाशम् । इह । कवे । जुषस्व ।
अग्ने । यह्वस्य । तव । भागऽधेयम् । न । प्र । मिनन्ति । विदथेषु । धीराः ॥ ४ ॥

vकवे[1] मेधाविन् हे vजातवेदः vइह अस्मिन्[1] अग्निष्टोमाख्ये कर्मणि तत्र[2] च vमाध्यंदिने मध्यंदिनसंबन्धिनि vसवने vपुरोडाशं माध्यंदिनसवनीयपुरोडाशं vजुषस्व सेवस्व । हे vअग्ने vविदथेषु यज्ञेषु vधीराः कर्मकुशला अध्वर्य्वादयः vयह्वस्य । यान्ति प्राप्नुवन्ति[3] देवा हवींष्यनेनेति यह्वो महानग्निः । यह्वस्य महतः vतव vभागधेयं भागतया परिकल्पितमिमं पुरोडाशं vन vप्र vमिनन्ति न हिंसन्ति । किंतु तुभ्यं प्रयच्छन्ति । तं जुषस्वेति शेषः ॥ माध्यंदिने । मध्यंदिनस्येदमित्यर्थे उत्सादित्वादञ् । ञित्वादादिवृद्धिः । ञित्त्वादेवाद्युदात्तत्वम् । यह्वस्य । 'या प्रापणे' इत्यस्मात् 'शेवयह्वजिह्व°' इति निपातनात्करणे वन्प्रत्ययः । हुगागमधातुह्रस्वौ । यान्त्यनेनेति यह्वोऽग्निः । व्यत्ययेनान्तोदात्तः । भागधेयम् । भागशब्दात्स्वार्थे 'भागरूपनामभ्यो धेयप्रत्ययो वक्तव्यः' (पा. सू. ५. ४. ३६. २) इति धेयः[4] । प्रत्ययस्वरः । मिनन्ति । 'मिञ् हिंसायाम्' इत्यस्य क्र्यादित्वात् श्ना । तस्मिन् 'मीनातेर्निगमे' इति ह्रस्वत्वम् । 'हिनु मीना' (पा. सू. ८. ४.१५) इति णत्वं न भवति सर्वविधीनां छन्दसि विकल्पितत्वादिति ॥

अग्ने तृतीये सवने हि कानिषः पुरोळाशं सहसः सूनवाहुतम् ।
अथा देवेष्वध्वरं विपन्यया धा रत्नवन्तममृतेषु जागृविम् ॥ ५ ॥

अग्ने । तृतीये । सवने । हि । कानिषः । पुरोळाशम् । सहसः । सूनो इति । आऽहुतम् ।
अथ । देवेषु । अध्वरम् । विपन्यया । धाः । रत्नऽवन्तम् । अमृतेषु । जागृविम् ॥ ५ ॥

vसहसः vसूनो बलस्य पुत्र हे vअग्ने त्वं vतृतीये vसवने vआहुतं हूयमानं vपुरोडाशं vकानिषः कामयसे । vअथ अनन्तरम् vअध्वरम् अविनाशिनं vरत्नवन्तम् । रत्नशब्देन स्वर्गादिलक्षणमुत्तमं फलमभिधीयते । तद्वन्तं फलप्रदं[5] vजागृविं जागरणकारिणम् । प्रातः सोमो जागृविर्भवति स्वप्ननिवारक इति । तमिमं सोमं vविपन्यया स्तुतिलक्षणया वाचा स्तुतस्त्वम् vअमृतेषु मरणधर्मरहितेषु vदेवेषु इन्द्रादिषु vधाः धेहि । vहि पूरणः । तृतीये । त्रिशब्दात्पूरणार्थे 'त्रेः संप्रसारणम्°' (पा. सू. ५. २. ५५) इति तीयप्रत्ययः । तत्संनियोगेन संप्रसारणम् । 'हलः' इति दीर्घो न भवति । अणिति( ? अणः इति; पा. सू. ६. ३. १११ ) तत्रानुवर्तनात् प्रत्ययस्वरः । कानिषः । कनी कान्त्यादिषु । लेटि[6] 'सिब्बहुलम्°' इति सिप् । तस्यार्धधातुकत्वादिडागमः । कान्तिरभिलाषः ।

---

१. प–कवे मेधाविन् जातवेदः जातप्रज्ञ हे अग्ने इहास्मिन् । २. फ–अत्र । ३. ख-ग-च-ज-ण-फ-भ–'प्राप्नुवन्ति' नास्ति । ४. त–धेयप्रत्ययः । ५. त–तत्फलप्रदम् । ६. त–इत्यस्य लेटि ।

अकारस्य आकारो व्यत्ययेन । हियोगादनिघातः । धातुस्वरः । विपन्यया । 'पन स्तुतौ' । भावे क्विप् । विपनं यातीति कप्रत्ययः । प्रत्ययस्वरः । धाः । दधातेः धातोः[1] छान्दसे लुङि रूपम् । पादादित्वादनिघातः । जागृविम् । क्विन्प्रत्ययान्तो जागृविशब्दः । नित्स्वरः ॥

अग्ने॑ वृधा॒न आहु॑तिं पुरो॒ळाशं॑ जातवेदः । जु॒षस्व॑ ति॒रोअ॑ह्न्यम् ॥ ६ ॥

अग्ने॑ । वृ॒धा॒नः । आऽहु॑तिम् । पु॒रो॒ळाश॑म् । जा॒त॒ऽवे॒दः॒ । जु॒षस्व॑ । ति॒रःऽअ॑ह्न्यम् ॥ ६ ॥

हे जातवेदः जातप्रज्ञ हे अग्ने वृधानः आहुतिभिर्वर्धमानस्त्वं तिरोअह्न्यम् । अह्निभवमह्न्यं दिवसकृत्यम् । तिरोभूतमह्न्यं यस्मिन्काले स तिरोअह्न्यो रात्रिकालः । तस्मिन्काले आहुतिं[2] पुरोडाशाख्यं हविः जुषस्व सेवस्व ॥ आहुतिम् । जुहोतेः कर्मणि क्तिन् । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम्[3] ॥　　॥ ३१ ॥

'अस्तीदम्' इति षोडशर्चं सप्तदशं सूक्तं वैश्वामित्रम् । अत्रानुक्रमणिका—'अस्तीदं षोळशाद्याचतुर्थीदशमीद्वादश्योऽनुष्टुभः षष्ठ्येकादश्युपान्त्ये च जगत्यः पञ्चम्यृत्विग्भ्यो वा' इति । आद्याचतुर्थीदशमीद्वादश्योऽनुष्टुभः षष्ठ्येकादश्युपान्त्ये च जगत्यः षष्ठ्येकादशी चतुर्दशी पञ्चदशी च जगत्यः। शिष्टा अष्टौ त्रिष्टुभः । पञ्चमी 'मन्थता नरः' इत्येषा ऋत्विग्देवताकाग्निदेवताका वा । शिष्टा अग्निदेवताकाः । सूक्तविनियोगो लैङ्गिकः । वरुणप्रघासेषु अग्निप्रणयने 'इळायास्त्वा पदे' इत्येषा । सूत्रितं च—'इळायास्त्वा पदे वयमग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्च आरमेत्' (आश्व. श्रौ. २. १७) इति । तत्रैव अग्निप्रणयने[4] उत्तरवेद्यामग्नौ स्थापिते सति 'सीद होतः' इत्येषा । 'निहितेऽग्नौ सीद होतः स्व उ लोके चिकित्वान्' (आश्व. श्रौ. २. १७) इति सूत्रितम्[5] । अरण्यामग्निसमारोपणे 'अयं ते योनिः' इत्येषा । सूत्रितं च—'अयं ते योनिर्ऋत्विय इत्यरणी गार्हपत्ये प्रतितपेत्पाणी वा' (आश्व. श्रौ. ३. १०) इति ॥

अस्ती॒दम॑धि॒मन्थ॑न॒मस्ति॑ प्र॒जन॑नं कृ॒तम् ।
ए॒तां वि॒श्पत्नी॒मा भ॑रा॒ग्निं म॑न्थाम पू॒र्वथा॑ ॥ १ ॥

अस्ति॑ । इ॒दम् । अ॒धि॒ऽमन्थ॑नम् । अस्ति॑ । प्र॒ऽजन॑नम् । कृ॒तम् ।
ए॒ताम् । वि॒श्पत्नी॑म् । आ । भ॒र॒ । अ॒ग्निम् । म॒न्था॒म॒ । पू॒र्वऽथा॑ ॥ १ ॥

यजमानोऽध्वर्य्वादीन्प्रति ब्रूते । इदम् अग्र्यर्थं यूपशकलम् अस्ति । अधिमन्थनम् । अरण्याः उपरि निधेयं मन्थनसाधनभूतं[6] दण्डरज्ज्वादिकम् अस्ति । प्रजननम् अग्निजननसाधनभूतं[7] दर्भपिञ्जूलं कृतं संपादितमस्ति । यद्वा प्रजननं मन्थनदण्डस्य विन्यासविशेषः । यस्मादेतानि यूपशकलादीन्यग्निमन्थनसाधनान्याहृतानि सन्ति तस्मात् विश्पत्नीं विशां प्रजानामग्निसाध्याग्निहोत्रद्वारा स्वर्गादिफलसंपादनेन पालयित्रीम् एताम् अरणीम् आ भर हे अध्वर्यो आहर ।

१. त-'धातोः' नास्ति । २. त-आहुतिमाहुतं पुरोडाशम् । ३. त-°स्वरत्वम् । जुषस्व । जुषी प्रीतिसेवनयोरित्यस्य लोटि रूपम् । ४. ख-ग-च-ज-ण-फ-भ-अग्निप्रणयनेन । ५. त-सूत्रितं च । ६, ख-ग-च-मथनसाधनभूतम् । ७. ख-फ-भ-अग्निज्वलन० ।

तस्यामाहृतायां ᵛपूर्वथा यथा वयमाधानकालेऽग्निममन्थीम यथा वा पूर्वे महर्षयोऽग्निममन्थिषुः तद्वद्वयमेनम् ᵛअग्निम् अस्मिन्कर्मणि ᵛमन्थाम । मन्थनेन निष्पन्नं करवाम ॥ अस्तीति[1] पदद्वयस्य पादादित्वादनिघातः । विश्पत्नीम् । पतिशब्दस्य ' विभाषा सपूर्वस्य ' इति ङीप् नकारश्चान्तादेशः । ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् । भर । ' हृञ् हरणे ' इत्यस्य लोटि ' हृग्रहोर्भश्छन्दसि ' इति भकारः । मन्थाम । ' मन्थ विलोडने ' । लोटि[2] रूपम् । निघातः । पूर्वथा । पूर्वशब्दात् इवार्थे ' प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ' इति थाल्प्रत्ययः । ' लिति ' इति प्रत्ययात्पूर्वस्योदात्तत्वम् ॥

अरण्योर्निहितो जातवेदा गर्भइव सुधितो गर्भिणीषु ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ २ ॥

अरण्योः । निऽहितः । जातऽवेदाः । गर्भःऽइव । सुऽधितः । गर्भिणीषु ।
दिवेऽदिवे । ईड्यः । जागृवत्ऽभिः । हविष्मत्ऽभिः । मनुष्येभिः । अग्निः ॥ २ ॥

ᵛजातवेदाः सर्वविषयज्ञानवानयमग्निः ᵛअरण्योर्निहितः । देवैर्यज्ञार्थं नितरां स्थापितोऽस्ति । अत्र[3] दृष्टान्तः । ᵛगर्भइव इति । यथा गर्भः ᵛगर्भिणीषु स्त्रीषु ᵛसुधितः सुष्ठु निहितो वर्तते तद्वत् । स तादृशः ᵛअग्निः ᵛहविष्मद्भिः संभृतहविष्कैरत एव ᵛजागृवद्भिः कर्मणि जागरूकैः ᵛमनुष्येभिः मनुष्यैरस्माभिः ᵛदिवेदिवे प्रत्यहमुत्पत्त्यर्थम् ᵛईड्यः स्तुतिरूपाभिर्गीर्भिः स्तोतव्यः ॥ अरण्योः । ' ऋ गतौ ' । ' अर्तिसृधृधम्यि° ' इत्यादिना अनिः[4] । प्रत्ययस्वरः । निहितः । दधातेः कर्मणि निष्ठायां ' दधातेर्हिः ' इति हिरादेशः । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । सुधितः । दधातेः कर्मणि निष्ठा । तस्मिन् ' सुधित वसुधित° ' इत्यादिना निपातनात् धिरादेशः[5] । दिवेदिवे । दिवु क्रीडादौ । इगुपधलक्षणः कः । ' नित्यवीप्सयोः ' इति द्विर्वचनम् । तस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः । जागृवद्भिः । ' जागृ निद्राक्षये ' इत्यस्य क्वसौ रूपम् । ' द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् ' इति विकल्पितत्वात् द्विर्वचनाभावः । ' वसुस्रंसुध्वंस्वनडुहां दः ' (पा. सू. ८. २. ७२) इति वसोः सकारस्य दत्वम् । प्रत्ययस्वरः ॥

उत्तानायामव भरा चिकित्वान्त्सद्यः प्रवीता वृषणं जजान ।
अरुषस्तूपो रुशदस्य पाज इळायास्पुत्रो वयुनेऽजनिष्ट ॥ ३ ॥

उत्तानायाम् । अव । भर । चिकित्वान् । सद्यः । प्रऽवीता । वृषणम् । जजान ।
अरुषऽस्तूपः । रुशत् । अस्य । पाजः । इळायाः । पुत्रः । वयुने । अजनिष्ट ॥ ३ ॥

ᵛचिकित्वान् ज्ञानवानध्वर्युस्त्वम् ᵛउत्तानायाम् अधरारण्यामुत्तानशयायाम् उत्तरारणिम् ᵛअव ᵛभर अधोमुखां धारय । अनन्तरं सा अधरारणिः ᵛसद्यः ᵛप्रवीता तदानीमेव निषिक्तरेतस्का सती ᵛवृषणं कामानां वर्षकमग्निं ᵛजजान जनयतु । अथ ᵛअस्य अग्नेः ᵛरुशत् तमो विनाशयत् ᵛपाजः

---

१. ख-ग-च-ज-ण-फ-भ—अस्तीदमिति । २. त—इत्यस्य लोटि । ३. ल-स—तत्र । ४. त—अनिप्रत्ययः । ५, त—धि इत्यादेशः ।

तेजोमात्रं[1] तत्राभूत्[1]। अनन्तरम् ᵛअरुषस्तूपः आरोचमानतेजःसंघोपेतः ᵛइळायास्पुत्रः उत्तरवेद्याः[2] उत्पन्नः[2] अग्निः ᵛवयुने अरण्यां योनिस्थाने ᵛअजनिष्ट अजनि ॥ जजान। 'जन जनने'। लोडर्थे[3] लिटि 'बहुलमन्यत्रापि संज्ञाछन्दसोः' इति णिलोपः। प्रत्ययान्तत्वाभावादाम्न भवति। निघातः। अरुषस्तूपः। न विद्यते रुषः क्रोधो यस्येत्यरुषः। क्रोधराहित्येन रोचमान इत्यर्थः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम्। 'ष्टुञ् स्तुतौ'। 'स्तौतेर्दीर्घश्च' (उ. सू. ३. ३०५) इति पप्रत्ययः किच्च धातोर्दीर्घश्च। स्तूयते इति स्तूपस्तेजःसंघः। अरुषः आरोचमानस्तेजःसंघो यस्येति बहुव्रीहौ पूर्वपदस्वरः[4]। रुशत्। 'रुश हिंसायाम्'। शतरि रूपम्। वयुने। 'अज गतिक्षेपणयोः[5]'। 'अजियमिशीङ्भ्यश्च' इत्युनन् चित्संज्ञकः। अजति वीयते वा वयुनमङ्गम्। प्रत्ययस्य व्यत्ययेनाद्युदात्तत्वम्। अजनिष्ट। 'जनी प्रादुर्भावे'। लुङि सिचि रूपम्। निघातः॥

**इळायास्त्वा पदे वयं नाभा पृथिव्या अधि।**

**जातवेदो नि धीमह्यग्ने हव्याय वोळ्हवे ॥ ४ ॥**

इळायाः। त्वा। पदे। वयम्। नाभा। पृथिव्याः। अधि।

जातऽवेदः। नि। धीमहि। अग्ने। हव्याय। वोळ्हवे ॥ ४ ॥

ᵛजातवेदः जातप्रज्ञ हे ᵛअग्ने अध्वर्य्वादयः ᵛवयं ᵛपृथिव्याः ᵛअधि भूमेरुपरि उत्तरवेद्यां ᵛनाभा नाभौ तस्या नाभिस्थाने मध्यप्रदेशे। तदेव स्थानं विशेष्यते। ᵛइळायाः ᵛपदे मानव्या इडाया गोः पदे इडापदरूपे उत्तरवेद्यात्मके स्थाने ᵛत्वा त्वां ᵛहव्याय ᵛवोळ्हवे पुरोडाशादिलक्षणं हविर्वोढुं ᵛनि ᵛधीमहि निदधीमहि। उक्तार्थे ब्राह्मणम्—'इळायास्त्वा पदे वयं नाभा पृथिव्या अधीत्येतद्वा इळायास्पदं यदुत्तरवेदीनाभिर्जातवेदो नि धीमहीति निधास्यन्तो ह्येनं भवन्त्यग्ने हव्याय वोळ्हव इति हव्यं हि वक्ष्यन्भवति' (ऐ. ब्रा. १. २८) इति॥ नाभा। 'णह बन्धने'। 'इञ्' इत्यनुवृत्तौ 'नहो भश्च' इति इञ् भकारश्चान्तादेशः। ञित्वादुपधावृद्धिः। नह्यतीति नाभिर्मध्यस्थानम्। 'सुपां सुलुक्°' इति सप्तम्या डादेशः। ञित्स्वरः। धीमहि। दधातेर्लिङि रूपम्। 'लिङः सीयुट्' (पा. सू. ३. ४. १०२) इति सीयुट्। द्विर्वचनाभावश्छान्दसः। निघातः। वोळ्हवे। 'वह प्रापणे'। तुमर्थे[6] तवेन्। 'सहिवहोरोदवर्णस्य' इति धात्वकारस्यौत्वम्। ढत्वधत्वष्टुत्वढलोपाः। नित्वादाद्युदात्तः॥

**मन्थता नरः कविमद्वयन्तं प्रचेतसममृतं सुप्रतीकम्।**

**यज्ञस्य केतुं प्रथमं पुरस्तादग्निं नरो जनयता सुशेवम् ॥ ५ ॥**

मन्थत। नरः। कविम्। अद्वयन्तम्। प्रऽचेतसम्। अमृतम्। सुऽप्रतीकम्।

यज्ञस्य। केतुम्। प्रथमम्। पुरस्तात्। अग्निम्। नरः। जनयत। सुऽशेवम् ॥ ५ ॥

---

१. फ–तेजो मन्त्रतन्त्रात्मकमभूत्। २. त–'उत्तरवेद्याः उत्पन्नः' नास्ति। ३. ख-ग-च-ज-ण-न-भ–लडर्थे; त–इत्यस्य लोडर्थे। ४. त–पूर्वपदप्रकृतिस्वरः। ५. त–गतिक्षेपणयोः इत्यस्मात्। ६. त-ल–इत्यस्मात्तुमर्थे।

vनरः कर्मणां[1] नेतारो हे अध्वर्य्वादयः vकविं क्रान्तदर्शिनम् vअद्वयन्तं द्वयमनाचरन्तमद्वैतं कुर्वाणं मनसा वाचा च एकविधमेव कर्म कुर्वाणमत एव vप्रचेतसं प्रकृष्टज्ञानोपेतम् vअमृतं मरणधर्मरहितं vसुप्रतीकं शोभनैरङ्गैर्ज्वालाभिः समेतं तमिमम् vअग्निं vमन्थत मन्थनेन[2] निष्पादयत। किंच। हे vनरः कर्मणां[3] नेतारः अध्वर्य्वादयः[4] यूयं vयज्ञस्य ज्योतिष्टोमादेः vकेतुं प्रज्ञापकं vप्रथमं मुख्याङ्गभूतम्। अग्निपूर्वकत्वात् सर्वेषामुत्तरक्रतूनाम्। vसुशेवं शोभनसुखोपेतं तादृशमग्निं vपुरस्तात् कर्मणः प्रारंभे vजनयत। तमिममग्निमेवंविधगुणयुक्तं कुरुतेति भावः। मन्थत। ‘मन्थ विलोडने[5]’। लोटि रूपम्। पादादित्वादनिघातः। नरः। ‘णीञ् प्रापणे[6]’। ‘नयतेर्डिच्च’ (उ. सू. २. २५७) इति ऋप्रत्ययः। डित्वाट्टिलोपः। नयन्ति कर्माणि नीयन्ते कर्माण्येभिरिति वा नरः। आमन्त्रितत्वात् निघातः। अद्वयन्तम्। द्वयमिवाचरतीत्यर्थे ‘सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः’ इत्याचारार्थे क्विप्। द्वयति। तस्य शतरि रूपं द्वयन्निति। न द्वयन्नद्वयन्। तम्। तत्पुरुषे नञ्स्वरः। सुप्रतीकम्। बहुव्रीहौ ‘क्त्वादयश्च’ इत्युत्तरपदाद्युदात्तत्वम्। जनयत। ‘जनी प्रादुर्भावे[7]’। णिच्। ‘अत उपधायाः’ इति वृद्धौ प्राप्तायां ‘जनीजॄष्क्नसुरञ्जोऽमन्ताश्च’ इति मित्त्वाभावात्[8] ‘मितां ह्रस्वः’ इति ह्रस्वः। निघातः। सुशेवम्। शेवशब्दो वन्प्रत्ययान्त आद्युदात्तः। बहुव्रीहौ ‘आद्युदात्तं द्व्यच्छन्दसि’ इत्युत्तरपदाद्युदात्तत्वम्॥ ॥ ३२ ॥

**यदी मन्थन्ति बाहुभिर्वि रोचतेऽश्वो न वाज्यरुषो वनेष्वा।**

**चित्रो न यामन्नश्विनोरनिवृतः परि वृणक्त्यश्मनस्तृणा दहन्॥ ६॥**

यदि। मन्थन्ति। बाहुऽभिः। वि। रोचते। अश्वः। न। वाजी। अरुषः। वनेषु। आ।

चित्रः। न। यामन्। अश्विनोः। अनिऽवृतः। परि। वृणक्ति। अश्मनः। तृणा। दहन्॥६॥

vयदि अध्वर्य्वादयः vबाहुभिः स्वकीयैर्हस्तैरग्निं vमन्थन्ति मथ्नन्ति ततः[9] स जातोऽग्निः vवनेषु काष्ठेषु vवाजी शीघ्रगमनवान् vअरुषः आरोचमानः सर्वेषां प्रीतिकरः सन् vआ vवि vरोचते आ समन्ताद्विशेषेण दीप्यते। तत्र दृष्टान्तः। vअश्वो vन इति[10]। यथाश्वो वनेषु वननीयेषु वाह्यालीस्थानेषु वेगवानारोचमानो वर्तते तद्वत्। तत्रैव दृष्टान्तान्तरम्। vचित्रो vन इति[11]। यथा vयामन् यामनि[12] वेगगमने[12] vअश्विनोः देवभिषजोः[13] चित्रो नानाविधवर्णः[14] रथः आरोचमानो वर्तते तद्वत्। vअनिवृतः केनाप्यप्रतिबद्धगमनः[15] सोऽयमग्निः vअश्मनः उपलान् vतृणा तृणानि[16] च[16] vदहन् भस्मसात्कुर्वन् vपरि vवृणक्ति दग्धस्थानानि[17] परितो वर्जयति। तादृशोऽग्निरारोचते इति पूर्वेणान्वयः॥ मन्थन्ति। ‘मन्थ विलोडने[18]’। लटि रूपम्। यदियोगादनिघातः। रोचते। ‘रुच दीप्तौ’। भौवादिकः।

---

१. ख-ग-च-ज-ण-न-फ-भ-स–कर्मणः। २. ख-ग-च-ज-ण-त-भ–मथनेन। ३. ख-ग-च-ज-ण-न-फ-भ-स–कर्मणः। ४. त–हे अध्वर्य्वादयः। ५. त–विलोडने इत्यस्य। ६. त–प्रापणे इत्यस्मात्। ७. त-ल–प्रादुर्भावे इत्यस्य। ८. ज-ण–मित्त्वात्; न-भ-ल-स–मिद्भावात्। ९. च–तदा। १०. ख-ग-च-ज-ण-भ-न–‘इति’ नास्ति। ११. ख-ग-च-ज-ण-भ–‘इति’ नास्ति। १२. च–याने विशेषवेगगमने। १३. ख-ग-च-ज-ण-प-फ-भ–‘देवभिषजोः’ नास्ति। १४. ख-ग-च-ज-ण-भ–नानावर्णः। १५. ख-ग-च-ज-ण-प-फ-स–°गमनः इत्यर्थः। १६. ख-ग-च-ज-ण-प-फ–तृणानीव; भ-स–तृणानिव। १७. ख-ग-ज-ण-प-भ-ल-स–तदश्वस्थानानि, च-फ–तदन्तश्चेस्थानानि। १८. त–विलोडने। अस्य।

लटि रूपम् । निघातः । यामन् । 'या प्रापणे' । 'आतो मनिन्क्वनिब्वनिपश्च' इति मनिन् । 'सुपां सुलुक्०' इत्यादिना सप्तम्या लुक् । नित्स्वरः । अनिवृतः । 'वृञ् वरणे'[1] । निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः । निपूर्वो वृणोतिर्निवारणे वर्तते । न निवृतोऽनिवृतः । नञ्स्वरः[2] । वृणक्ति । 'वृजी वर्जने' । रुधादिः । 'चोः कुः' इति कुत्वम् । निघातः । तृणा । 'तृहू[3] हिंसायाम्' । 'तृहेः क्नो हलोपश्च' (उ. सू. ५. ६८६) इति क्नः । क्नित्त्वादगुणः हलोपश्च । तृह्यते तद्भवादिभिरिति तृणम् । नित्स्वरः ॥

जातो अग्नी रोचते चेकितानो वाजी विप्रः कविशस्तः सुदानुः ।
यं देवास ईड्यं विश्वविदं हव्यवाहमदधुरध्वरेषु ॥ ७ ॥

जातः । अग्निः । रोचते । चेकितानः । वाजी । विप्रः । कविऽशस्तः । सुऽदानुः ।
यम् । देवासः । ईड्यम् । विश्वऽविदम् । हव्यऽवाहम् । अदधुः । अध्वरेषु ॥ ७ ॥

ᵛजातः मन्थनानन्तरमुत्पन्नः स च ᵛचेकितानः सर्वं[4] जानानः सन् ᵛवाजी सततगमनस्वभावः ᵛविप्रः कर्माभिज्ञः अत एव ᵛकविशस्तः कविभिर्मेधाविभिर्होतृभिः स्तुतः ᵛसुदानुः सुष्ठु कर्मफलस्य दाता एवंविधः ᵛअग्निः ᵛरोचते दीप्यते । ᵛदेवासः देवाः इन्द्रादयः ᵛईड्यं होत्रादिभिः[5] स्तुत्यं ᵛविश्वविदं सर्वस्य जगतो वेदितारं ᵛयम् अग्निम् ᵛअध्वरेषु ज्योतिष्टोमादियज्ञेषु ᵛहव्यवाहं हव्यानां वोढारम् ᵛअदधुः व्यदधुः सोऽग्निर्दीप्यते इति पूर्वेणान्वयः ॥ चेकितानः । 'कित ज्ञाने' इत्यस्य यङ्लुकि 'गुणो यङ्लुकोः' इति अभ्यासस्य गुणः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । कविशस्तः । 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तत्वम् । अदधुः । दधातेर्लङि झेः 'सिजभ्यस्त-विदिभ्यश्च' इति जुस् । यद्वृत्तयोगादनिघातः । अडागमस्वरः ॥

सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञं सुकृतस्य योनौ ।
देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥ ८ ॥

सीद । होतरिति । स्वे । ऊँ इति । लोके । चिकित्वान् । सादय । यज्ञम् । सुऽकृतस्य । योनौ ।
देवऽअवीः । देवान् । हविषा । यजासि । अग्ने । बृहत् । यजमाने । वयः । धाः ॥ ८ ॥

यजमानो ब्रूते । ᵛहोतः होमनिष्पादक हे ᵛअग्ने ᵛस्वे स्वकीये ᵛलोके उत्तरवेद्याः[6] नाभौ ᵛसीद ᵛउ त्वं होमनिमित्तम् उपविशैव । तथा ᵛचिकित्वान् ज्ञानवांस्त्वं ᵛसुकृतस्य सुकृतजन्योपभोगस्य ᵛयोनौ स्थाने उत्तमलोके ᵛयज्ञं यज्ञस्य कर्तारं यजमानं ᵛसादय स्थापय । किंच ᵛदेवावीः । देवान् हविष्प्रदानेन अवतीति देवावीः । तादृशस्त्वं ᵛहविषा पुरोडाशादिलक्षणेन हव्येन ᵛदेवान् ᵛयजासि

---

१. त–व्ररणे इत्यस्य । २. त–'नञ्स्वरः' नास्ति । ३. ख-ग-तृ; ज-ण-तृहु; त-ल-तृह हिंसि; स-तृण । ४. ख-ग-च-ज-ण-प-फ-भ–'सर्वं' नास्ति । ५. ख-ग-च-ज-ण-प-फ-भ–स्तोत्रादिभिः । ६. ज-ण-न-भ-स–उत्तरवेद्याम् ।

यज । अथ त्वं ᵛयजमाने यागं कुर्वाणे मयि ᵛबृहत् प्रभूतं पशुपुत्रादिसमेतं ᵛवयः अन्नं ᵛधाः विधेहि ॥ सीद । सदेर्लोटि रूपम् । सादय । सदेर्ण्यन्तस्य लोटि रूपम् । णिच्स्वरः । देवावीः । अव रक्षणादिषु । 'अवितॄस्तृतन्त्रिभ्य ईः' इति ईप्रत्ययः । कृदुत्तरपदस्वरः[1] । यजासि । यजेर्लेटि आडागमः । धाः । दधातेः छान्दसे[2] लुङि रूपम्[3] ॥

कृणोत॑ धूमं वृष॑णं सखायोऽस्रे॑धन्त इतन॒ वाज॒मच्छ॑ ।

अ॒यम॒ग्निः पृ॑तना॒षाट् सु॒वीरो॒ येन॑ दे॒वासो॒ अस॑हन्त॒ दस्यू॑न् ॥ ९ ॥

कृ॒णोत॑ । धू॒मम् । वृष॑णम् । स॒खा॒यः॒ । अस्रे॑धन्तः । इ॒त॒न॒ । वाज॑म् । अच्छ॑ ।

अ॒यम् । अ॒ग्निः । पृ॒त॒ना॒षाट् । सु॒ऽवीरः॑ । येन॑ । दे॒वासः॑ । अस॑हन्त । दस्यू॑न् ॥ ९ ॥

यजमानोऽध्वर्य्वादीन्प्रति ब्रूते । हे ᵛसखायः कर्मसहकारिणः[4] यूयं ᵛवृषणं कामानां वर्षितारं ᵛधूमम् । धुनोति[5] कम्पयतीति धूमोऽग्निः। एवंविधम्[5] अग्निं ᵛकृणोत कुरुत । मथनेन[6] उत्पादयत । यद्यग्निर्न जायते[7] तदानीमाह । ᵛअस्रेधन्तः अक्षीणा अनुपरतसामर्थ्याः सन्तो यूयं ᵛवाजं मथनलक्षणं युद्धम् ᵛअच्छ अभ्याभिमुख्येन ᵛइतन प्राप्नुत । ᵛसुवीरः शोभनसामर्थ्योपेतः ᵛअयमग्निः ᵛपृतनाषाट् पृतनोपलक्षितं युद्धं सहमानो भवति । ᵛयेन युद्धं सहमानेनाग्निना ᵛदेवासः देवाः ᵛदस्यून् उपक्षपयितॄनसुरान् ᵛअसहन्त अभ्यभवन् । तस्मादक्षीणबला यूयं मथनं[8] कुरुतेति भावः ॥ कृणोत । 'कृवि हिंसाकरणयोः' । लोटि[9] तप्रत्ययस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । पित्त्वाद्गुणः । पादादित्वादनिघातः । उप्रत्ययस्वरः । धूमम् । 'धूञ् कम्पने[10]' । 'इषियुधीन्धिदसि॰' इत्यादिना मक् । कित्त्वाद्गुणाभावः । धुनोति कम्पयति दाह्यानीति धूमोऽग्निः । प्रत्ययस्वरः । इतन । 'इण् गतौ' इत्यस्य लोटि तप्रत्ययस्य तनादेशः । निघातः । पृतनाषाट् । 'षह मर्षणे[11]' । 'छन्दसि सहः' इति ण्विः । णित्त्वादुपधावृद्धिः । 'सहेः साडः सः' इति षत्वम् । कृदुत्तरपदस्वरः । असहन्त । 'षह मर्षणे' इत्यस्य लङि रूपम् । यद्योगादनिघातः । दस्यून् । 'दसु उपक्षये' । 'यजिमनिशुन्धिदसिजनिभ्यो युच्' इति युच् । दस्यन्तीति दस्यवः शत्रवः । व्यत्ययेनाद्युदात्तत्वम् ॥

अ॒यं ते॒ योनि॑र्ऋ॒त्वियो॒ यतो॑ जा॒तो अरो॑चथाः ।

तं जा॒नन्न॑ग्न॒ आ सी॒दाथा॑ नो वर्धया॒ गिरः॑ ॥ १० ॥

अ॒यम् । ते॒ । योनिः॑ । ऋ॒त्वियः॑ । यतः॑ । जा॒तः । अरो॑चथाः ।

तम् । जा॒नन् । अ॒ग्ने॒ । आ । सी॒द॒ । अथ॑ । नः॒ । व॒र्ध॒य॒ । गिरः॑ ॥ १० ॥

---

१. न–ᵒपदप्रकृतिस्वरः । २. ख-ग-च-ज-ण-न-भ-स–छान्दसम् । ३. ख-ग-च-ज-ण-भ–रूपम् । उ पूरणः । ४. त–कर्मसहकारिणः अध्वर्य्वादयः । ५. ख-ग-च-ज-ण-प-फ-भ-स–'धुनोति...एवंविधं' नास्ति । ६. न–मन्थनेन । ७. त–जायेत । ८. च-न-भ-स–मन्थनम् । ९. त–इत्यस्य लोटि । १०. त–कम्पने इत्यस्मात् ।११. त–मर्षणे इत्यस्मात् ।

हे vअग्ने vऋत्वियः वसन्ताद्यृतौ भवः vअयम् अङ्गुल्या निर्दिश्यमानः पलाशाश्वत्थादिरूपः[1] काष्ठविशेषोऽरणिः vते तव vयोनिः उत्पत्तिस्थानं vयतः अरणेः vजातः त्वम् vअरोचथाः अशोभथाः। vजानन्[2] त्वं vतम् अरणिरूपं[3] काष्ठविशेषम्[3] vआ vसीद। तस्यामरण्यामारोपितः सन् नैरन्तर्येण तिष्ठ। vअथ अनन्तरं vनः अस्माकं vगिरः स्तुतिलक्षणा वाचः vवर्धय। यद्वा[4] गीःशब्देन तद्वन्तो लक्ष्यन्ते। तथा स्तोतॄनस्मान् वर्धय। पशुपुत्रादिभिः समृद्धान् कुरु॥ योनिः। 'यु मिश्रणे'। 'वहिश्रि०' इत्यादिना निप्रत्ययः। 'नित्' इत्युक्तत्वादाद्युदात्तः। ऋत्वियः। 'छन्दसि घस्' (पा. सू. ५. १. १०६) इति ऋतुशब्दात् प्राप्तार्थे[5] घस्प्रत्ययः। घस्य इयादेशः। 'सिति०' इति पदसंज्ञायाम् 'ओर्गुणः' (पा. सू. ६. ४. १४६) इति भसंज्ञाधीनो गुणो न भवति। प्रत्ययस्वरः। अरोचथाः। 'रुच दीप्तौ' इत्यस्य लङि रूपम्। यद्वृत्तयोगादनिघातः। सीद[6]। सदेर्लोटि 'पाघ्रा०' इत्यादिना सीदादेशः। निघातः। अथा[7]। 'निपातस्य च' इति सांहितिको दीर्घः। वर्धय। 'वृधु वर्धने'। हेतुमति णिच्। निघातः॥　　॥ ३३ ॥

तनूनपादुच्यते गर्भ आसुरो नराशंसो भवति यद्विजायते।
मातरिश्वा यदमिमीत मातरि वातस्य सर्गो अभवत्सरीमणि॥ ११॥

तनूऽनपात्। उच्यते। गर्भः। आसुरः। नराशंसः। भवति। यत्। विऽजायते।
मातरिश्वा। यत्। अमिमीत। मातरि। वातस्य। सर्गः। अभवत्। सरीमणि॥ ११॥

योऽग्निर्यदा vगर्भः अरणीषु गर्भरूपतया वर्तते तदा सोऽग्निः vतनूनपादुच्यते। यष्टॄणां तनूः शरीराणि न पातयति न दहतीति व्युत्पत्तेः। यद्वा तनूशब्देनापोऽभिधीयन्ते नपाच्छब्देनै-कान्तरिताः प्रजाः। तथा च अपां नप्ता। कथमेतत्[8]। आपस्तता अन्तरिक्षे। ताभ्य ओषधिवनस्पतयो जायन्ते। तेभ्यो ह्येष इति। vयत् यदा vविजायते विशेषेण प्रत्यक्षतया जायते तदा vआसुरः कर्मविघ्नकारिणामसुराणां हन्ता अत एव vनराशंसः नरैः कर्मणां नेतृभिरध्वर्य्वादिभिः शंसनीयो vभवति। vयत् यदा vमातरि अन्तरिक्षे स्वं[9] तेजः vअमिमीत निर्मिमीते तदा vमातरिश्वा भवति। मातरि अन्तरिक्षे श्वसिति चेष्टते इति व्युत्पत्तेः[10]। एवंविधस्याग्नेः vसरीमणि सरणे शीघ्रगमने vवातस्य वायोः vसर्गः सृष्टिः vअभवत् भवति[11]। यदाग्निररणीषु गर्भरूपतया वर्तते तदा तनूनपान्नामको भवति। यदा जायते तदा नराशंसनामको भवति। यदान्तरिक्षे विद्योतते तदा मातरिश्वनामको भवतीति॥ तनूनपात्। 'तनु विस्तारे[12]'। 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इति ऊप्रत्ययः। व्यत्ययेनाद्युदात्तः। नपात्। 'पा रक्षणे' 'पत्लृ[13] गतौ' वा ण्यन्तः[13]। क्विप्। न पाति न पातयतीति वा नपात्। 'नभ्राण्नपान्नवेदा०' इत्यादिना निपातनात्[14] नञः प्रकृतिभावः। नञ्स्वरः। तनूनं पातीति तनूनपात्। कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'उभे वनस्पत्यादिषु युगपत्' इति उभयपदप्रकृतिस्वरत्वम्। आसुरः। असुरस्यायमासुरः। अहितकारित्वेन संबन्धी। 'तस्येदम्' इत्यण्। प्रत्ययस्वरः। नराशंसः।

---

१. ख-फ-भ–पालाशा०। २. त–जातस्त्वम्। ३. ख-प-फ-भ-अरणिविशेषकाष्ठम्। ४. त–यद्वा गॄ शब्दे। गृणन्तीति गिरस्तोतारः। ५. त–भवार्थे। ६. त-सीद। षद्लृ विशरणादिषु। ७. त–अथ। ८. त–कथमेतावत्। ९. ख-ग-च-ज-ण-भ–'स्वं' नास्ति। १०. ख-फ–व्युत्पत्तौ मातरिश्वा। ११. त–भवति। एतदुक्तं भवति। १२. त–विस्तारे इत्यस्मात्। १३. ख-ग-च-ज-ण-न-भ-स–पद गतौ। पातेः। १४. त–'निपातनात्' नास्ति।

' नॄ नये[१] '। ' ऋदोरप् ' इत्यप्[२]। प्रत्ययस्य पित्त्वान्नरशब्द आद्युदात्तः। ' शंसु स्तुतौ ' इत्यस्मात् घञन्त आद्युदात्तः। नरशब्दस्य ' अन्येषामपि दृश्यते ' इति दीर्घः। वनस्पत्यादित्वादुभयोः प्रकृतिस्वरत्वम्। विजायते। ' जनी प्रादुर्भावे '। दिवादित्वात् श्यन्। धातुस्वरः। अमिमीत। ' माङ् माने शब्दे च '। जुहोत्यादिः। ' भृञामित् ' इत्यभ्यासस्येत्वम्। यद्योगादनिघातः। सरीमणि। ' सृ गतौ '। हृभृसृस्तृसूभ्यः° ' ( उ. सू. ४. ५८७ ) इति ईमनिन्प्रत्ययः। नित्स्वरः[३] ॥

सुनिर्मथा निर्मथितः सुनिधा निहितः कविः।
अग्ने स्वध्वरा कृणु देवान्देवयते यज ॥ १२ ॥

सुनिःऽमथा। निःऽमथितः। सुऽनिधा। निऽहितः। कविः।
अग्ने। सुऽअध्वरा। कृणु। देवान्। देवऽयते। यज ॥ १२ ॥

हे अग्ने कविः मेधावी सुनिर्मथा शोभनेन मन्थनेन निर्मथितः नितरां मथितोऽसि। तथा सुनिधा शोभनेन निधानेन[४] निहितः असि। उत्तरवेद्यादिस्थानेषु नितरां प्रक्षिप्तोऽसि। किंच स्वध्वरा अस्माभिः क्रियमाणानि कर्माणि सुष्ठु हिंसारहितानि[५] कृणु कुरु। तथा देवयते देवान्कामयमानाय यजमानाय देवान् यजनीयानिन्द्रादीन् यज पूजय ॥ सुनिर्मथा। ' मथे विलोडने '। अस्मात् संपदादिलक्षणो भावे क्विप्। प्रादिसमासः। कृदुत्तरपदस्वरः। निर्मथितः। ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम्। सुनिधा। निपूर्वस्य[६] दधातेर्भावे ' आतश्चोपसर्गे ' इत्यङ्। ' सुपां सुलुक्° ' इति तृतीयाया लुक्। कृदुत्तरपदस्वरः। कृणु। ' कृवि हिंसाकरणयोः ' इत्यस्य लोटि ' धिन्विकृण्व्योः° ' इत्युप्रत्ययः। ' उतश्च प्रत्ययात्° ' इति हेर्लुक्। निघातः ॥

अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीळुजम्भम्।
दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभि सं रभन्ते ॥ १३ ॥

अजीजनन्। अमृतम्। मर्त्यासः। अस्रेमाणम्। तरणिम्। वीळुऽजम्भम्।
दश। स्वसारः। अग्रुवः। सम्ऽईचीः। पुमांसम्। जातम्। अभि। सम्। रभन्ते ॥ १३ ॥

मर्त्यासः मर्त्याः ऋत्विजः[७] अमृतं मरणधर्मरहितम् अत एव अस्रेमाणं क्षयरहितं वीळुजम्भं हविर्भक्षणार्थं दृढदन्तं तरणिम्। तरन्ति यजमानाः पापमनेनेति[८] तरणिरग्निः। तम् अजीजनन् मन्थनेनोदपीपदन्[९]। अथ जातं तमग्निमभिलक्ष्य स्वसारः सरन्त्यः दश दशसंख्याकाः अग्रुवः कर्मकरणार्थमग्रमञ्चन्तीति[१०] अग्रुवोऽङ्गुलयः। तादृशाः[१०] अङ्गुलयः समीचीः परस्परं सङ्गताः सत्यः सं

---

१. त—नये इत्यस्मात्। २. त—इत्यप्प्रत्ययः। ३. ख-ग-च-ज-ण-न-फ-भ—' नित्स्वरः ' नास्ति। ४. त—विमानेन। ५. त—हिंसारहितानि प्रभूतानि। ६. फ—निपूर्वपदात्। ७. ख-प-फ-भ—' ऋत्विजः ' नास्ति। ८. ख-प-फ-भ—अनेनेति। ९. ख-ग-च-प-फ-भ—मथनेनोदपादयन्; ज-ण—मन्थनेनोदपादयन्; ल-मथनेनोत्पादयन्। १०. ख-प-फ-भ—' कर्मकरणार्थं... तादृशाः ' नास्ति।

ᐯरभन्ते शब्दं कुर्वते । जातमग्निं दृष्ट्वाध्वर्य्वादयो हर्षाद्धस्तद्वयसंपुटेन[1] शब्दं कुर्वन्ति[1] इत्यर्थः । तत्र दृष्टान्तः । ᐯपुमांसम् इति । यथा जातं पुत्रमुपलभ्य तत्रत्याः पित्रादयो हर्षादुद्धोषन्ति[2] तद्वत् ॥ अजीजनन् । 'जनी प्रादुर्भावे' इत्यस्य ण्यन्तस्य लुङि चङि रूपम् । अस्रेमाणम् । 'स्रिवु गतिशोषणयोः'। भावे[3] 'मनिन्' इति मनिन्प्रत्ययः । लघूपधगुणः । 'लोपो व्योर्वलि' इति वलोपः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तरणिम् । 'तॄ प्लवनतरणयोः[4]' । 'अर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः' इत्यनिप्रत्ययः । गुणः । प्रत्ययस्वरः । स्वसारः । 'असु क्षेपणे' इत्यस्मात् 'सुञ्यसेर्ऋन्' इति ऋन्प्रत्ययः । सुष्ठु अस्यन्ति कर्मसु पदार्थानिति स्वसारः । 'न षट्स्वस्रादिभ्यः' इति ङीपः प्रतिषेधः । नित्त्वादाद्युदात्तः । अग्रुवः । 'अगि गतौ' । जत्वादयश्च' ( उ.सू. ४.५४२ ) इति रुप्रत्ययः । निपातनान्नलोपः । जसि तन्वादित्वादुवङादेशः । प्रत्ययस्वरः । समीचीः । 'इण् गतौ' इत्यस्मात् 'समीणः' ( उ. सू. ४. ५.२ ) इति चट्प्रत्ययो धातोर्दीर्घश्च । टित्त्वात् 'टिड्ढाणञ्०' इत्यादिना ङीप् । संयन्तीति समीच्यः । यद्वा संपूर्वस्याञ्चतेः क्विप् । 'समः समि' इति समि इत्यादेशः । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । एकादेशस्वरः । पुमांसम् । 'पा रक्षणे' इत्यस्मात् 'पातेर्डुम्सुन्' ( उ. सू. ४. ६१७ ) इति डुम्सुन्प्रत्ययः । 'पुंसोऽसुङ्' ( पा. सू. ७. १. ८९ ) इत्यसुङादेशः । पाति कुलमिति पुमान् । नित्स्वरः । रभन्ते । 'रभ शब्दे' इत्यस्य लटि रूपम् । निघातः ॥

**प्र सप्तहोता सनकादरोचत मातुरुपस्थे यदशोचदूधनि ।**
**न नि मिषति सुरणो दिवेदिवे यदसुरस्य जठरादजायत ॥ १४ ॥**

प्र । सप्तऽहोता । सनकात् । अरोचत । मातुः । उपऽस्थे । यत् । अशोचत् । ऊधनि ।
न । नि । मिषति । सुऽरणः । दिवेऽदिवे । यत् । असुरस्य । जठरात् । अजायत ॥ १४॥

ᐯसनकात् सनातनोऽग्निः ᐯसप्तहोता । सप्त होतारो होत्रका यस्यासौ सप्तहोता सन् ᐯप्र ᐯअरोचत गार्हपत्यस्थानेऽदीप्यत । ᐯयत् यदा ᐯमातुः पृथिव्याः ᐯउपस्थे उत्सङ्गे तत्रापि ᐯऊधनि ऊधःस्थाने उत्तरवेद्याम् ᐯअशोचत् अशोभत तदा सोऽग्निः ᐯसुरणः । सुष्ठु रणयति शब्दयतीति सुरणः । सर्वैः कमनीयतया दृश्यमानः सन् ᐯदिवेदिवे प्रतिदिनं ᐯन ᐯनि ᐯमिषति न निद्राति । किंतु सर्वदा यज्ञार्थं जागर्त्येव । ᐯयत् यस्मात् ᐯअसुरस्य अग्नेः प्रेरकस्यारणीरूपस्य काष्ठस्य ᐯजठरात् उदरात् ᐯअजायत कर्मार्थमुदपद्यत तस्मान्न निमिषतीति पूर्वेणान्वयः ॥ अरोचत । 'रुच दीप्तौ' इत्यस्य लङि रूपम् । निघातः । अशोचत् । 'शुच दीप्तौ' । ऊधनि । सकारस्य नकारश्छान्दसः । मिषति । 'मिषु सेचने' इत्यस्य लटि रूपम् । सुरणः । 'रण शब्दे' । 'तत्करोति०' इति णिच् । तस्मात् अकृच्छ्रार्थे खल् । लित्स्वरः । असुरस्य । 'असु क्षेपणे' इत्यस्मात् 'असेरुरन्' इत्युरन्प्रत्ययः । अस्यतीत्यसुरः । नित्स्वरः । जठरात् । 'जनी प्रादुर्भावे' इत्यस्मात् 'जनेररष्ठ च' ( उ. सू. ५. ७१६ ) इत्यरप्रत्ययः ठकारश्चान्तादेशः । प्रत्ययस्वरः । अजायत । 'जनी प्रादुर्भावे' इत्यस्य लङि श्यनि 'ज्ञाजनोर्जा' इति धातोर्जादेशः । यद्योगादनिघातः ॥

---

१. ख-फ-हविशब्दं कुर्वन्ति; प-भ-हर्षशब्दं कुर्वन्ति । २. ख-फ-भ-हर्षन्ते घोषन्ति; प-हर्षन्ते । ३. त-इत्यस्मात् भावे । ४. त-प्लवनतरणयोः इत्यस्मात् ।

अमित्रायुधो मरुतामिव प्रयाः प्रथमजा ब्रह्मणो विश्वमिद्विदुः ।

द्युम्नवद्ब्रह्म कुशिकास एरिर एकएको दमे अग्निं समीधिरे ॥ १५ ॥

अमित्रऽयुधः । मरुताम्ऽइव । प्रऽयाः । प्रथमऽजाः । ब्रह्मणः । विश्वम् । इत् । विदुः ।

द्युम्नऽवत् । ब्रह्म । कुशिकासः । आ । ईरिरे । एकःऽएकः । दमे । अग्निम् । सम् । ईधिरे ॥ १५ ॥

अमित्रायुधः अमित्रैः कर्मविघ्नकारिभिरसुरैः सह योद्धारः । यद्वा अमित्राणि पापानि । तैः सह योद्धारः । तत्र दृष्टान्तः । मरुतामिव प्रयाः इति । यथा मरुतां देवानां प्रयाः प्रकर्षेण शत्रूनभियान्तीति प्रया बलानि शत्रूणां हन्तॄणि तद्वत्कर्मविघ्नकारिणां पापानां च हन्तारः ब्रह्मणः सर्वस्य जगतः स्रष्टुः प्रथमजाः प्रथममुत्पन्नाः कुशिकासः कुशिकगोत्रोत्पन्ना ऋषयः विश्वं स्थावरजङ्गमात्मकं सर्वं जगत् विदुः इत् जानन्त्येव । तेऽमी[1] कुशिकाः द्युम्नवत् हविर्युक्तं ब्रह्म स्तोत्रम् एरिरे । अग्नये आ समन्तात्प्रेरयन्ति । ते च दमे स्वे स्वे गृहे एकएकः एकैकः[2] भूत्वा अग्निं समीधिरे आज्याद्याहुतिभिः सम्यग्दीपयन्ति ॥ अमित्रायुधः । 'युध संप्रहारे' । क्विप् । कृदुत्तरपदस्वरः[3] । संहितायां पूर्वपदस्य दीर्घश्छान्दसः । प्रयाः । 'या प्रापणे' । 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । प्रथमजाः । 'जनी प्रादुर्भावे' । 'जनसन०' इत्यादिना विट् । 'विड्वनोः०' इत्यात्वम् । विदुः । विदेर्लटि 'विदो लटो वा' इति झेः उसादेशः । ईरिरे । 'ईर गतौ' इत्यस्य लिटि रूपम् । मन्त्रत्वादाम्न भवति । दमे । 'दमु उपशमने' । करणे घञ् । 'नोदात्तोपदेशस्य०' इति वृद्धिप्रतिषेधः । ञित्स्वरः । ईधिरे । 'ञिइन्धी दीप्तौ' इत्यस्य लिटि 'इन्धिभवतिभ्यां च' इति किद्भावान्नकारलोपः । निघातः ॥

यदद्य त्वा प्रयति यज्ञे अस्मिन्होतश्चिकित्वोऽवृणीमहीह ।

ध्रुवमया ध्रुवमुताशमिष्ठाः प्रजानन्विद्वाँ उप याहि सोमम् ॥ १६ ॥

यत् । अद्य । त्वा । प्रऽयति । यज्ञे । अस्मिन् । होतरिति । चिकित्वः । अवृणीमहि । इह ।

ध्रुवम् । अयाः । ध्रुवम् । उत । अशमिष्ठाः । प्रऽजानन् । विद्वान् । उप । याहि । सोमम् ॥ १६ ॥

होतः होमनिष्पादक चिकित्वः कर्मविषयज्ञानवन् हे अग्ने अद्य इदानीं प्रयति प्रवर्तमाने[4] अस्मिन् ज्योतिष्टोमादौ यज्ञे त्वा त्वां यत् यस्मात् कारणात् अवृणीमहि त्वद्विषयं वरणमकुर्म तस्मात्तादृशस्त्वम् इह कर्मणि देवान् ध्रुवमयाः ध्रुवं यथा भवति तथास्माभिर्दत्तानि हवींषि प्रापय[5] । उत अपि च अशमिष्ठाः हविःस्वीकरणात्तृप्तैर्देवैः शान्तस्त्वमकारिष्ठाः । अथ[6] प्रजानन् इमं यज्ञं सम्यक् जानन् विद्वान् यत्किञ्चित्सर्वं जानानस्त्वं सोमम् अस्माभिः क्रियमाण-

---

१. त-अमी । २. ख-फ-भ-एकः । ३. त-०पदप्रकृतिस्वरः । ४. त-वर्तमाने । ५. ख-ग-ज-ण-भ-स-प्रापयः । ६. ख-ग-च-ज-ण-प-फ-भ-उत अथ ।

मिममभिषुतं सोममभिलक्ष्य ᵛउप ᵛयाहि समीपे आगच्छ ॥ प्रयति । 'इण् गतौ' इत्यस्य शतरि रूपम् । 'शतुरनुमः॰' इति विभक्तेरुदात्तत्वम् । अवृणीमहि । 'वृञ् वरणे'। क्र्यादित्वात् श्ना । लङि उत्तमबहुवचने 'ई हल्यघोः' इति ईत्वम् । आमन्त्रितस्याविद्यमानवत्त्वेन पादादित्वात् अनिघातः । अयाः । 'या प्रापणे' इत्यस्य लङि सिपि रूपम् । निघातः । अशमिष्ठाः । 'शमु उपशमने' इत्यस्य ण्यन्तस्य कर्मणि[1] लुङि 'स्यसिचूसीयुट्॰' (पा. सू. ६. ४. ६२) इति विकल्पेन इडागमः । तस्यासिद्धत्वात् 'णेरनिटि' इति णिलोपः । निघातः । प्रजानन्[2] । 'ज्ञा अवबोधने' । शतरि रूपम् । याहि । यातेर्लोटि रूपम्[2] ॥ ॥ ३४ ॥ ॥ २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-
धुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिता-
भाष्ये तृतीयाष्टके प्रथमोऽध्यायः समाप्तः ॥

---

१. ख-ग-च-ज-ण-न-भ-स–'कर्मणि' नास्ति । २. ख-ग-च-ज-ण-न-भ-स–'प्रजानन्...रूपं' नास्ति ।

॥ श्रीगणेशाय नमः ॥

यस्य[1] निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्[1] ॥

तृतीयेऽनुवाके नव सूक्तानि । तत्र ‘ इच्छन्ति त्वा ’ इति द्वाविंशत्यृचं प्रथमं सूक्तम् । तत्रेयमनुक्रमणिका—‘ इच्छन्ति द्व्यधिकैन्द्रम् ’ इति । मण्डलद्रष्टा विश्वामित्र ऋषिः । इन्द्रो देवता । अनुक्तत्वात् त्रिष्टुप् छन्दः । आभिप्लविके प्रथमेऽहनि दशरात्रे प्रथमेऽहनि च माध्यंदिने सवनेऽच्छावाकशस्त्रे अहीनसूक्तस्थाने[2] द्वितीयमिदं संपातसूक्तम् । ‘ अभिप्लवपृष्ठ्याहानि ’ इति खण्डे सूत्रितम्—‘ इमामू ष्विच्छन्ति त्वा शासद्वह्निरिति संपाताः ’ ( आश्व. श्रौ. ७. ५. ) इति । इन्द्रस्य वृत्रघ्नः संबन्धिनि पशौ ‘ सहदानुम् ’ इति वपायाः[3] याज्या[3] । ‘ सहदानुं पुरुहूत क्षियन्तं स्तुत इन्द्रो मघवा यद्ध वृत्रा ’ ( आश्व. श्रौ. ३. ८. ) इति सूत्रितम् । ‘ स्वस्तये वाजिभिश्च ’ इत्येषैन्द्रे पशौ हविषो याज्या । सूत्रितं च—‘ स्वस्तये वाजिभिश्च प्रणेतः शुची वो हव्या मरुतः शुचीनाम् ’ ( आश्व. श्रौ. ३. ७. ) इति । शुनासीरीये वैकल्पिकस्येन्द्रस्य शुनस्य ‘ शुनं हुवेम ’ इत्यनुवाक्या । सूत्रितं च—‘ शुनं हुवेम मघवानमिन्द्रमश्वायन्तो गव्यन्तो वाजयन्तः ’ ( आश्व. श्रौ. २. २० ) इति ॥

**इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयांसि ।**
**तितिक्षन्ते अभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥ १ ॥**

इच्छन्ति । त्वा । सोम्यासः । सखायः । सुन्वन्ति । सोमम् । दधति । प्रयांसि ।
तितिक्षन्ते । अभिऽशस्तिम् । जनानाम् । इन्द्र । त्वत् । आ । कः । चन । हि । प्रऽकेतः ॥१॥

विश्वामित्रः स्तौति । हे इन्द्र सोम्यासः सोमार्हा ब्राह्मणाः त्वा त्वां शंसितुम् इच्छन्ति अत एव सखायः ते ब्राह्मणास्त्वदर्थं सोमं सुन्वन्ति अभिषुण्वन्ति । प्रयांसि इतराण्यपि हवींषि दधति त्वदर्थं धारयन्ति । त्वया प्रेरिताः सन्तः जनानां सपत्नानाम् अभिशस्तिं तत्कृतां हिंसां तितिक्षन्ते सहन्ते । एवमनुग्राहकः त्वत् त्वत्तोऽन्यः कश्चन हि को नाम पुरुषः खलु आ प्रकेतः सर्वतो जगति । प्रकेत्यते ज्ञाप्यत इति प्रकेतः । प्रज्ञापितः[4] विद्यते ॥ सोम्यासः । सोममर्हतीत्यर्थे ‘ सोममर्हति यः ’ इति यः । प्रत्ययस्वरः । सुन्वन्ति । ‘ षुञ् अभिषवे ’ । स्वादित्वात् श्नुः[5] । ‘ सति शिष्टस्वरो[6] बलीयान् ’ इति झिप्रत्ययस्वरः[7] । दधति । दधातेर्लटि रूपम् । ‘ समानवाक्ये[8] युष्मदस्मदादेशनिघाताः ’ ( पा. सू. ८. १. १८. ५. ) इति सोमपदस्य इतरवाक्येन[9] अन्वयान्न निघातः । ‘ अभ्यस्तानामादिः ’ इत्याद्युदात्तत्वम् । तितिक्षन्ते । ‘ तिज निशाने ’ इत्यस्य क्षमायां ‘ गुप्तिज्किद्भ्यः सन् ’ इति सन् । अभ्यस्तस्वरः । अभिशस्तिम् । ‘ शसु हिंसायाम् ’ इत्यस्मात् भावे क्तिन् । ‘ तादौ च निति कृत्यतौ ’ इति गतेः प्रकृतिस्वरत्वम् । प्रकेतः । ‘ कित ज्ञाने ’ । कर्मणि घञ्[10] । ‘ थाथघञ्क्त° ’ इत्यन्तोदात्तत्वम् ॥

---

१. ख-ग-घ-च-ज-ण-भ–‘ यस्य...°महेश्वरं ’ नास्ति । २. ख–अहीनसूक्तस्यान्ते । ३. त-स–वपायाज्या । ४. प–आज्ञापितः । ५. त–श्नुप्रत्ययः । ६. ख-ग-घ-च-ज-ण-न-फ-भ-स–शिष्टो । ७. ख-त–प्रत्ययस्वरः । ८. ख-ग-च-ज-ण–समानवाक्येषु । ९. त-ल-स–उत्तरवाक्येन । १०. त-ल–घञन्तः ।

न ते दूरे परमा चिद्रजांस्या तु प्र याहि हरिवो हरिभ्याम् ।
स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने अग्नौ ॥ २ ॥

न । ते । दूरे । परमा । चित् । रजांसि । आ । तु । प्र । याहि । हरिऽवः । हरिऽभ्याम् ।
स्थिराय । वृष्णे । सवना । कृता । इमा । युक्ताः । ग्रावाणः । समऽइधाने । अग्नौ ॥ २ ॥

हे हरिवः[1] हरिद्वर्णौ[2] अश्वौ यस्य सोऽयं हरिवानिन्द्रः । हे हरिवः परमा चित् परमाणि दूरे वर्तमानान्यपि रजांसि स्थानानि ते तव दूरे न भवन्ति । तस्मात् हरिभ्याम्[3] उपेतस्त्वं तु[4] क्षिप्रम्[4] आ प्र याहि । अस्मदीयं यज्ञमभिलक्ष्यागच्छ । स्थिराय फलप्रदाने दृढचित्ताय अत एव वृष्णे कामानां वर्षित्रे तुभ्यम् इमा[5] इमानि सवना सवनानि[5] प्रातरादीनि कृता कृतानि । किंच । अग्नौ आहवनीये समिधाने आहुत्यधिकरणतया सम्यग्दीप्यमाने सति ग्रावाणः उपलाः युक्ताः सोमाभिषवार्थमुद्युक्ताः । अतस्त्वं क्षिप्रमागच्छेति भावः ॥ याहि । ' या प्रापणे ' इत्यस्य लोटि रूपम् । हरिवः । हरी अस्य स्त इति मतुप् । ' छन्दसीरः ' इति तस्य वत्वम् । आमन्त्रितत्वान्निघातः । स्थिराय । ' ष्ठा गतिनिवृत्तौ ' इत्यस्मात् ' अजिरशिशिर॰ ' इत्यादिना किरच्प्रत्ययान्तत्वेन निपातनादाकारलोपः । चित्स्वरः[6] । सवना । ' षुञ् अभिषवे ' इत्यस्मात् अधिकरणे ' ल्युट् च ' इति ल्युट् । सूयते सोमो यत्रेति सवनानि प्रातरादीनि । लित्स्वरः । समिधाने । ' ञिइन्धी दीप्तौ ' इत्यस्य कानचि रूपम् । कित्त्वान्नकारलोपः । चित्स्वरः ॥

इन्द्रः सुशिप्रो मघवा तरुत्रो महाव्रातस्तुविकूर्मिर्ऋघावान् ।
यदुग्रो धा बाधितो मर्त्येषु क्व१ त्या ते वृषभ वीर्याणि ॥ ३ ॥

इन्द्रः । सुऽशिप्रः । मघऽवा । तरुत्रः । महाऽव्रातः । तुविऽकूर्मिः । ऋघावान् ।
यत् । उग्रः । धाः । बाधितः । मर्त्येषु । क्व । त्या । ते । वृषभ । वीर्याणि ॥ ३ ॥

हे वृषभ कामानां वर्षक हे इन्द्र यस्त्वम् इन्द्रः परमैश्वर्यसंपन्नः सुशिप्रः । शिप्रशब्देन शिरस्त्राणमभिधीयते । शोभनशिरस्त्राणोपेतः । यद्वा शोभनहनुमान् । ' शिप्रे हनू नासिके वा ' ( निरु. ६ः १७ ) इति यास्कः । मघवा धनवान् तरुत्रः । तरन्त्यनेन शत्रूंन्देवा इति तरुत्रः इन्द्रः । महाव्रातः मरुद्भिर्महान् व्रातः समूहो यस्येति[7] स तथोक्तः । तुविकूर्मिः संग्रामे नानाविधकर्मणां कर्ता ऋघावान् शत्रुविषयहिंसावान् अत एव उग्रः शत्रूणां भयंकरः स तादृशस्त्वं बाधितः असुरैः संग्रामे बाधितः सन् मर्त्येषु मारयितृषु[8] असुरेषु[8] यत् यानि वीर्याणि[9] धाः

---

१. त-स-हे हरिवः । २. ख-घ-न-भ-हरिवर्णौ; ण-स-हरितवर्णौ । ३. क-ण-त-ल-हरिभ्यामश्वाभ्याम् । ४. ख-ग-च-ज-ण-भ-स-' तु क्षिप्रं ' नास्ति; त-ल-क्षिप्रम् । ५. ख-ग-घ-च-ज-ण-न-भ-स-इमानि सवनानि; ल-इमा इमानि सवनानि । ६. ल-' चित्स्वरः ' नास्ति । ७. त-यस्य । ८. त-तेष्वसुरेषु । ९. ख-ग-च-ज-ण-भ-स-वीर्याणि च ।

व्यथा इदानीं Vते तव Vत्या तानि Vवीर्याणि Vक्व क्वासते वद ॥ सुशिप्रः । ‘ सृप्लृ गतौ ’ । औणादिको रन्प्रत्ययः । बाहुलकात् सृ इत्यस्य शि इत्यादेशः । बहुव्रीहौ ‘ आद्युदात्तं द्व्यच्छन्दसि ’ इत्युत्तरपदाद्युदात्तत्वम् । तरुत्रः । तरतेः ‘ अशित्रादिभ्य इत्रोत्रौ ’ इत्युत्रप्रत्ययः । व्यत्ययेनाद्युदात्तत्वम् । महाव्रातः । ‘ आन्महतः०’ इत्याकारादेशो महतस्तकारस्य । तुविकूर्मिः । करोतेरौणादिको मिप्रत्ययः । गुणे कृते करोतेरकारस्योत्वं छान्दसम् । ‘ हलि च ’ इति दीर्घः । ऋघावान् । ऋन् ( नॄन् ) हन्तीत्यृघाः । ‘ अन्येभ्योऽपि दृश्यन्ते ’ इति विच् । दृशिग्रहणान्नलोपो हकारस्य घत्वम् । तदस्यास्तीति मतुबर्थे[1] ‘ छन्दसीवनिपौ ’ इति वनिप् । व्यत्ययेनाद्युदात्तः । क्व । किंशब्दस्य सप्तम्यर्थे ‘ किमोऽत् ’ इत्यत्प्रत्ययः । तस्मिन् ‘ क्वाति ’ इति क्वादेशः । तित्स्वरः[2] ॥

त्वं हि ष्मा च्यावयन्नच्युतान्येको वृत्रा चरसि जिघ्नमानः ।

तव द्यावापृथिवी पर्वतासोऽनु व्रताय निमितेव तस्थुः ॥ ४ ॥

त्वम् । हि । स्म । च्यवयन् । अच्युतानि । एकः । वृत्रा । चरसि । जिघ्नमानः ।

तव । द्यावापृथिवी इति । पर्वतासः । अनु । व्रताय । निमिताऽइव । तस्थुः ॥ ४ ॥

हे इन्द्र Vत्वम् Vएकः असहाय एव Vअच्युतानि च्युतिरहितानि[3] दृढमूलान्यपि तव प्रतिपक्षभूतानि रक्षांसि V च्यावयन् स्वस्वस्थानात् पातयन् तथा Vवृत्रा वृत्राणि पापानि Vजिघ्नमानः हिंसन् Vचरसि Vहि Vस्म वर्तसे खलु । किंच एवंविधसामर्थ्योपेतस्य Vतव Vव्रताय कर्मणे आज्ञायै द्यावापृथिव्यौ Vपर्वतासः[4] पर्वताश्च[4] Vनिमितेव निखाता निश्चला इव Vअनु Vतस्थुः अनुकूलास्तिष्ठन्ति ॥ स्म । चादित्वादनुदात्तः । च्यावयन् । ‘ च्युङ् गतौ ’ इत्यस्य ण्यन्तस्य शतरि रूपम् । णिच्स्वरः[5] । चरसि । ‘ चर गतिभक्षणयोः ’ । हियोगादनिघातः । जिघ्नमानः । ‘ हन हिंसागत्योः ’ इत्यस्य ‘ घञर्थे कविधानम् ’ इति कः[6] । तस्य ‘ छन्दस्युभयथा ’ इति सार्वधातुकत्वाच्छप् । तस्य श्लुः । ‘ बहुलं छन्दसि ’ इत्यभ्यासस्येत्वम् । हन्तीति[7] जिघ्नः । आचारार्थे क्विप् । अस्मात्ताच्छील्यार्थे चानश् । शप् । व्यत्ययेनाद्युदात्तत्वम् । द्यावापृथिवी । ‘ देवताद्वन्द्वे च ’ इत्युभयपदप्रकृतिस्वरत्वम् । निमितेव । ‘ डुमिञ् प्रक्षेपणे ’ इत्यस्य कर्मणि निष्ठा । ‘ गतिरनन्तरः ’ इति गतेः प्रकृतिस्वरत्वम् । ‘ सुपां सुलुक्०’[1] इति सुपो डादेशः । ‘ इवेन[8] विभक्त्यलोपः० ’ इत्युक्तत्वात् पूर्वपदस्वरः । तस्थुः । ‘ ष्ठा गतिनिवृत्तौ ’ इत्यस्य लिटयुसि आतो लोपे कृते तस्य[9] ‘ द्विर्वचनेऽचि ’ इति स्थानिवद्भावात् द्विर्वचनम् । निघातः ॥

---

१. त–मत्वर्थे । २. त–तित्स्वरितः । ३. ख-ग-च-ज-ण-फ-भ–च्यवनरहितानि । ४. ख-ग-व-प-फ-भ-स–पर्वतासश्च । ५. ख-फ-भ–चित्स्वरः । ६. त-ठ–कप्रत्ययः । ७. ख-ग-ज-ण-न-भ-ल-स–जिघ्नतीति । ८. फ–इवेन समासः । ९. ज-ण–लोपस्य ।

उताभये पुरुहूत श्रवोभिरेको दृळ्हमवदो वृत्रहा सन् ।

इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते ॥ ५ ॥

उत । अभये । पुरुऽहूत । श्रवःऽभिः । एकः । दृळ्हम् । अवदः । वृत्रऽहा । सन् ।

इमे इति । चित् । इन्द्र । रोदसी इति । अपारे इति ।

यत् । सम्ऽगृभ्णाः । मघऽवन् । काशिः । इत् । ते ॥ ५ ॥

ᵛउत इत्यामन्त्रणे । हे ᵛइन्द्र ᵛपुरुहूत पुरुभिर्बहुभिर्यज्वभिराहूत । यद्वा देवैरसुरेभ्यो रक्षार्थं बहुवारमाहूत । ᵛश्रवोभिः वीर्यैरुपेतः[1] ᵛएकः असहायस्त्वं ᵛवृत्रहा वृत्रशत्रोर्हन्ता ᵛसन् ᵛअभये असुरेभ्यः सकाशान्मा बिभीतेति देवान् प्रति यद्वाक्यम् ᵛअवदः अवोचस्तद्वाक्यं ᵛदृढं सत्यमेव। किंच ᵛमघवन् इन्द्र त्वम् ᵛअपारे ᵛचित् दूरपारेऽपि ᵛइमे ᵛरोदसी द्यावापृथिव्यौ ᵛयत् यस्मात् कारणात् ᵛसंगृभ्णाः संगृह्णासि परस्परमधरोत्तरभावेन संयोजिते[2] करोषीति यावत् । एषः ᵛते तव महिमा ᵛकाशिरित् प्रकाशो लोके प्रसिद्धः एव[3]। यद्वा यत् येन ते रोदसी संगृह्णासि ते तव काशिर्मुष्टिः महान् । 'काशिर्मुष्टिः' ( निरु. ६. १ ) इति यास्कः ॥ अभये । 'जिभी भये' इत्यस्मात् भावे 'एरच्' इत्यच्प्रत्ययः । नञा समासे तस्य स्वरः । अवदः । 'वद व्यक्तायां वाचि'। लङि रूपम् । निघातः । अपारे । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । संगृभ्णाः । 'ग्रह उपादाने'। क्र्यादित्वात् श्ना । 'ग्रहिज्यावयि°' इत्यादिना संप्रसारणम् । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः। 'इतश्च' इति सिप इकारलोपः। 'बहुलं छन्दसि' इत्यडभावः। समासस्वरः। काशिः । 'काशृ दीप्तौ'। औणादिक इप्रत्ययः। प्रत्ययस्वरः ॥ ॥१॥

प्र सू त इन्द्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृणन्नेतु शत्रून् ।

जहि प्रतीचो अनूचः पराचो विश्वं सत्यं कृणुहि विष्टमस्तु ॥ ६ ॥

प्र । सु । ते । इन्द्र । प्रऽवता । हरिऽभ्याम् । प्र । ते । वज्रः । प्रऽमृणन् । एतु । शत्रून् ।

जहि । प्रतीचः । अनूचः । पराचः । विश्वम् । सत्यम् । कृणुहि । विष्टम् । अस्तु ॥ ६ ॥

हे ᵛइन्द्र ᵛते तव ᵛहरिभ्याम् अश्वाभ्यां युक्तो रथः शत्रूनभिलक्ष्य[4] ᵛप्रवता प्रवणेन मार्गेण ᵛसु सुष्ठु ᵛप्र ᵛएतु शीघ्रं गच्छतु । तथा ᵛते ᵛवज्रः अशनिः ᵛशत्रून् असुरान् ᵛप्रमृणन् हिंसन्[5] ᵛप्र एतु। त्वं च ᵛप्रतीचः त्वदाभिमुख्येनागच्छतः शत्रून् ᵛजहि मारय । तथा ᵛअनूचः अनुगच्छतः पार्ष्णिग्राहानसुरान् ᵛपराचः पलायनपरांश्च जहि । एवं शत्रुषु बाधितेषु सत्सु ᵛविश्वं जगत् ᵛसत्यं ᵛकृणुहि सत्यभूताग्निहोत्रादिकर्मपरं कुरु । एवंविधं सामर्थ्यं त्वयि ᵛविष्टं निविष्टम् ᵛअस्तु ॥ प्रवता । प्रशब्दात् 'उप-

---

१. ख-फ-धैर्यैरुपेतः । २. ख-ग-च-ज-ण-भ-योजिते । ३. ख-ग-च-ज-ण-न-प-फ-भ-स-प्रभावः । ४. ख-ग-च-फ-भ-अस्मानभिलक्ष्य । ५. ख-ग-च-ज-ण-भ-स-'हिंसन्' नास्ति ।

सर्गाच्छन्दसि धात्वर्थे ' इति वतिः[1] । प्रत्ययस्वरः । प्रमृणन् । ' मृण हिंसायाम् ' । जहि । ' हन हिंसागत्योः ' इत्यस्य लोटि सिपो हिरादेशः । तस्मिन् ' हन्तेर्जः ' इति जादेशः । ' अतो हेः ' इति लुकि प्राप्ते आभाच्छास्त्रस्यासिद्धत्वान्निवृत्तिः । हेर्ङित्त्वादन्तोदात्तः । प्रतीचः । ' अञ्चु गतिपूजनयोः ' । ' अञ्चेश्छन्दस्यसर्वनामस्थानम् ' इति विभक्तेरुदात्तत्वम् । पराचः । ' अनिगन्तोऽञ्चतौ वप्रत्यये ' इति गतेः प्रकृतिस्वरत्वम् । कृणुहि । ' कृवि हिंसाकरणयोः ' । अस्तु । ' अस भुवि ' ॥

यस्मै धायुरदधा मर्त्यायाभक्तं चिद्भजते गेह्यं१ सः ।

भद्रा त इन्द्र सुमतिर्घृताची सहस्रदाना पुरुहूत रातिः ॥ ७ ॥

यस्मै । धायुः । अदधाः । मर्त्याय । अभक्तम् । चित् । भजते । गेह्यम् । सः ।

भद्रा । ते । इन्द्र । सुऽमतिः । घृताची । सहस्रऽदाना । पुरुऽहूत । रातिः ॥ ७ ॥

हे ᵛइन्द्र ᵛधायुः निरन्तरमैश्वर्यं दधानस्त्वं ᵛयस्मै[2] ᵛमर्त्याय मनुष्याय ᵛअदधाः यद्वीर्यं दधासि[3] ᵛसः मर्त्यः ᵛअभक्तं ᵛचित् पूर्वमप्राप्तमपि ᵛगेह्यं गृहेषु भवं कनकपश्वादिकं[4] ᵛभजते प्राप्नोति । किंच । हे ᵛपुरुहूत बहुभिराहूतेन्द्र ᵛघृताची । घृतशब्दो हविर्मात्रमुपलक्षयति । तथा[5] च सोमाज्य-पुरोडाशादिलक्षणं हविरञ्चति प्राप्नोतीति घृताची । ᵛते तव ᵛसुमतिः शोभना बुद्धिः ᵛभद्रा कल्याणकरी । तथा तव ᵛरातिः दानशक्तिः[6] ᵛसहस्रदाना अपरिमितधनदानसमेता । इन्द्रस्य बहुदातृत्वे मन्त्रवर्णः—' भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर ' ( ऋ. सं. ४. ३२. २० ) इति ॥ धायुः । दधातेरौणादिक उण्प्रत्ययः । अदधाः । दधातेर्लङि रूपम् । यद्वृत्तयोगादनिघातः । मर्त्याय । मर्त एव मर्त्यः । वस्वादिषु पाठात् स्वार्थिको यत् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । गेह्यम् । गेहशब्दात् ' तत्र भवः ' इत्यर्थे ' भवे छन्दसि ' इति यत् । तित्स्वरितः । सुमतिः । ' मन्त्रे वृष° ' इत्यादिना मतिशब्दोऽन्तोदात्तः । समासे कृदुत्तरपदस्वरः । रातिः । ' रा दाने ' । ' मन्त्रे वृष° ' इत्यादिना क्तिन्नुदात्तः ॥

सहदानुं पुरुहूत क्षियन्तमहस्तमिन्द्र सं पिणक्कुणारुम् ।

अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥ ८ ॥

सहऽदानुम् । पुरुऽहूत । क्षियन्तम् । अहस्तम् । इन्द्र । सम् । पिणक् । कुणारुम् ।

अभि । वृत्रम् । वर्धमानम् । पियारुम् । अपादम् । इन्द्र । तवसा । जघन्थ ॥ ८ ॥

हे ᵛपुरुहूत ᵛइन्द्र त्वं ᵛसहदानुम् । दानुः[7] दानवी वृत्रमाता तया सह वर्तमानम् । तथा च मन्त्रवर्णः–' दानुः शये सहवत्सा ' ( ऋ. सं. १. ३२. ९ ) इति । यद्वा सहदानुं दानुभिर्दानवैः

१. त-ल–वतिप्रत्ययः । २. ख-ग-च-ज-ण-प-फ-भ-स–परस्मै । ३. त–निदधासि । ४. ख-ग-घ-च-ज-ण-भ-स–कनकमश्वादिकम् । ५. ख-ग-च-ज-ण–' तथा ' नास्ति । ६. ख-ग-च–धनशक्तिः । ७. ख-ग-घ-च-ज-ण-न-भ–' दानुः ' नास्ति ।

सह वर्तत इति सहदानुः। तं ᵛक्षियन्तं बाधमानं ᵛकुणारुं क्वणनशीलं कंचिदसुरम् ᵛअहस्तं हस्तहीनं कृत्वा ᵛसं ᵛपिणक् सम्यक् चूर्णीकुरु। किंच हे ᵛइन्द्र ᵛवर्धमानं सर्वत इषुमात्रं वर्धमानम्। 'स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत' (तै. सं. २. ४. १२. २) इति श्रुतेः। ᵛपियारुं हिंस्रं ᵛवृत्रं वृत्रासुरम् ᵛअपादं पादहीनं कृत्वा ᵛतवसा बलेन ᵛअभि ᵛजघन्थ हतवानसि। यद्वा सहदानुमुदकदानोपेतं क्षियन्तमाकाशे निवसन्तं कुणारुं गर्जन्तं वृत्रम्। वृणोत्याच्छादयति नभ इति वृत्रो मेघः। तमिमं वर्धमानं मेघं हस्तपादशून्यं कृत्वा संपिगक् संपिण्ढि। तथा च यास्कः—'अहस्तमिन्द्र कृत्वा संपिण्ढि परिक्वणनं मेघम्' (निरु. ६. १) इति॥ सहदानुम्। 'दो अवखण्डने'। 'दाभाभ्यां नुः' इति नुप्रत्ययः। द्यतीति दानुर्दानवः। यद्वा दानुर्दानम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। क्षियन्तम्। 'क्षि निवासगत्योः'। तुदादित्वाच्छः। प्रत्ययस्वरः। पिणक्। 'पिष्लृ संचूर्णने'। रुधादित्वात् श्नम्। हल्ङ्यादिलोपः... हेर्लुक्। षकारस्य ककारश्छान्दसः। कुणारुम्। 'कुण शब्दने'। बाहुलकाद्रूपसिद्धिः। आद्युदात्तः। जघन्थ। 'हन हिंसागत्योः' इत्यस्य लिटि थलि रूपम्। 'अभ्यासाच्च' इति धातुहकारस्य घत्वम्। निघातः। 'उपदेशेऽत्वतः' इतीट्प्रतिषेधः॥

नि सा॒म॒नामि॑षि॒रामि॑न्द्र॒ भूमिं॑ म॒हीम॑पा॒रां सद॑ने ससत्थ।
अस्त॑भ्नाद्द्यां वृ॑ष॒भो अ॒न्तरि॑क्ष॒मर्ष॒न्त्वाप॒स्त्वये॒ह प्रसू॑ताः॥ ९॥

नि। सा॒म॒नाम्। इ॒षि॒राम्। इ॒न्द्र॒। भूमि॑म्। म॒हीम्। अ॒पा॒राम्। सद॑ने। स॒स॒त्थ॒।
अस्त॑भ्नात्। द्याम्। वृ॒ष॒भः। अ॒न्तरि॑क्षम्। अर्ष॑न्तु। आप॑ः। त्वया॑। इ॒ह। प्रऽसू॑ताः॥९॥

हे ᵛइन्द्र ᵛमहीं महतीमत एव ᵛअपाराम्[2] ᵛइषिरां स्थानाभावेन चलन्तीम् एवंविधां ᵛभूमिं ᵛसामनां[3] समानाम्[4]। तथा च मन्त्रवर्णः—'गावौ ते सामनावितः' (ऋ. सं. १०. ८५. ११) इति। यद्वा सम एव साम। तथा च शतपथे श्रूयते—'यदेव समः प्लुषिणा समो मशकेन समो नागेन सम एतैस्त्रिभिर्लोकैस्तस्मादेव साम' (श. ब्रा. १४. ४. १) इति। तदस्यास्तीति सामनः[5]। तां साम्यवतीं कृत्वा ᵛसदने स्वे[6] स्थाने ᵛनि ᵛससत्थ निवेशयामासिथ[7]। तथा ᵛवृषभः अभिमतफलानां वर्षक इन्द्रः ᵛद्यां द्युलोकम् ᵛअस्तभ्नात् यथा न पतति तथा धारयत्। तथा ᵛअन्तरिक्षम्। एवं द्यावापृथिव्योरवस्थितौ सत्यां ᵛत्वया ᵛप्रसूताः मेघभेदनेन प्रेरिताः ᵛआपः ᵛइह भूमौ ᵛअर्षन्तु आगच्छन्तु। तथा च मन्त्रवर्णः—'यः पृथिवीं व्यथमानामदृंहत्' (ऋ. सं. २. १२. २) इति॥ सामनाम्। सम एव साम। 'तदस्यास्ति°' इति मतुबर्थे पामादित्वान्नप्रत्ययः। प्रत्ययस्वरः। इषिराम्। 'इष गतौ'। 'इषिमदि°' (उ. सू. १. ५१) इत्यादिना किरच्प्रत्ययः। कित्त्वादगुणः। चित्स्वरः। ससत्थ। 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्यान्तर्भावितण्यर्थस्य लिटि थलि 'उपदेशेऽत्वतः' इतीट्प्रतिषेधः। निघातः। अस्तभ्नात्। 'स्तम्भु स्तम्भने' इति सौत्रो धातुः। 'स्तम्भुस्तुम्भु°' इत्यादिना श्नाप्रत्ययः। 'श्नान्नलोपः[8]' इति धातुनकारलोपः[9]। अडागमस्वरः।

---

१. त–शब्दे। २. त-ल–अपारां पुरुपाराम्। ३. ज-ण–सामनां साम्यवतीं कृत्वा। ४. ख-ग-च-ज-ण-भ-स–'समानां' नास्ति। ५. त–सामना। ६. ख-ग-घ-च-ज-ण-न-भ-स–'स्वे' नास्ति। ७. ख-ग-च-ज-ण-भ–निवेदयामास; घ-प-स–निवेशयामास। ८. ख-ग-च-ज-ण-स–श्नसोरल्लोप इत्यादिना श्नातुनकारस्य लोपः।

अर्षन्तु । ' ऋषी गतौ ' । व्यत्ययेन शप्प्रत्ययः । गुणः । पादादित्वादनिघातः । आपः । ' आप्लृ व्याप्तौ ' । क्विप् धातोर्ह्रस्वश्च । जसि ' अप्तृन्तृच्° ' इत्यादिना दीर्घः । जसः सुप्त्वादनुदात्तत्वे धातुस्वरः । प्रसूताः । ' षू प्रेरणे ' इत्यस्य कर्मणि निष्ठा । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् ॥

अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार ।

सुगान्पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमन्तीः ॥ १० ॥

अलातृणः । वलः । इन्द्र । व्रजः । गोः । पुरा । हन्तोः । भयमानः । वि । आर ।

सुऽगान् । पथः । अकृणोत् । निःऽअजे । गाः ।

प्र । आवन् । वाणीः । पुरुऽहूतम् । धमन्तीः ॥ १० ॥

हे इन्द्र अलातृणः । बहूदकतया अलमत्यर्थमातृद्यते हिंस्यत इत्यलातृणः । गोः माध्यमिकायाः वाचः व्रजः गोष्ठभूतः वलः । वृणोत्याकाशमिति वलो मेघः । पुरा हन्तोः तव वज्रप्रहारात् प्राक् भयमानः बिभ्यत् व्यार विश्लिष्टो बभूव । अनन्तरं स इन्द्रः गाः अपः निरजे निर्गमयितुं सुगान् सुगमान् पथः मार्गान् अकृणोत् अकरोत् । अतः वाणीः वननीयाः धमन्तीः शब्दायमानास्ता आपः पुरुहूतं बहुभिराहूतं पार्थिवमुदकं प्रति प्रावन् अभ्यागच्छन् । एतामृचं यास्क एवं व्याख्यत्— ' अलातृणो वल इन्द्र व्रजो गोः । अलातृणोऽलमातर्दनो मेघो वलो वृणोतेर्व्रजो व्रजत्यन्तरिक्षे गोरेतस्या माध्यमिकाया वाचः पुरा हननाद्भयमानो व्यार सुगान्पथो अकृणोन्निरजे गाः । सुगमनान्पथोऽकरोन्निर्गमनाय गवाम् । प्रावन्वाणीः पुरुहूतं धमन्तीः । आपो वा वहनाद्वाचो वा वदनाद्बहुभिराहूतमुदकं भवति । धमतिर्गतिकर्मा ' ( निरु. ६. २. ) ॥ अलातृणः । ' तृहि हिंसायाम् ' । अलंपूर्वात् तृहेः ' घञर्थे कविधानम् ' इति कर्मणि कप्रत्ययः । अलमो मकारस्याकारः । समासस्वरः[1] । वलः । ' वल संवरणे ' । वल्यत आच्छाद्यते नभोऽनेनेति[2] वलो मेघः । ' पुंसि संज्ञायाम् ' इति घः । प्रत्ययस्वरः । व्रजः । ' व्रज गतौ ' । ' गोचरसंचर° ' ( पा° सू. ३.३.११९ ) इत्यादिना घप्रत्ययान्तत्वेन निपातनात् कुत्वाभावः । व्रजत्यन्तरिक्ष इति । प्रत्ययस्वरः । भयमानः । ' ञिभी भये ' । व्यत्ययेन शप् । आर । ' ऋ गतौ ' इत्यस्य लिटि णलि रूपम् । निघातः । सुगान् । ' गम्लृ गतौ ' इत्यस्मादधिकरणे ' सुदुरोरधिकरणे ' इति डप्रत्ययः । डित्वाट्टिलोपः । कृत्स्वरः[3] । निरजे । ' अज गतिक्षेपणयोः ' इत्यस्मात् संपदादिलक्षणो भावे क्विप् । कृदुत्तरस्वरः । आवन् । अव रक्षणगत्यादिषु इत्यस्य लङि रूपम् । पुरुहूतम् । ह्वयतेर्निष्ठायां यजादित्वात् संप्रसारणम् । ' हलः ' इति दीर्घः । थाथादिस्वरः । धमन्तीः । ' ध्मा शब्दे ' । शपि ' पाघ्रा° ' इत्यादिना धमादेशः । ' वा छन्दसि ' इति जसः सवर्णदीर्घः । शतुर्लसार्वधातुकस्वरे कृते धातुस्वरः ॥ ॥ २ ॥

१. त-' समासस्वरः ' नास्ति । २. ख-ग-च-ज-ण-फ-स-तमोऽनेनेति । ३. त-कृत्स्वरः । अकृणोत् । कृवि हिंसाकरणयोः इत्यस्य लटि ( लङि ) रूपम् ।

एको द्वे वसुमती समीची इन्द्र आ पप्रौ पृथिवीमुत द्याम् ।
उतान्तरिक्षादभि नः समीक इषो रथीः सयुजः शूर वाजान् ॥ ११ ॥

एकः । द्वे इति । वसुमती इति वसुऽमती । समीची इति सम्ऽईची ।
इन्द्रः । आ । पप्रौ । पृथिवीम् । उत । द्याम् ।
उत । अन्तरिक्षात् । अभि । नः । सम्ऽईके । इषः । रथीः । सऽयुजः । शूर । वाजान् ॥ ११ ॥

योऽयम् इन्द्रः एकः असहाय एव सन् पृथिवीम् उत अपि च द्यां द्वे एते द्यावापृथिव्यौ समीची परस्परं[1] संगते वसुमती धनयुक्ते सत्यौ आ पप्रौ समन्तात् पूरयामास । उत अपि च हे शूर सामर्थ्योपेत तादृशस्त्वं रथीः रथवान् सः[2] नः अस्माकं समीके समीपे इषः स्थातुमिच्छन् सयुजः संगतान् वाजान् । वजन्ति[3] गच्छन्तीति वाजा अश्वाः । तानश्वान्[4] अन्तरिक्षात् अन्तरिक्षसकाशात् अभि प्रेरय । रथारूढस्त्वम् अस्मत्समीपं[5] शीघ्रमागच्छेति भावः ॥ वसुमती । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः[6] । पप्रौ । 'प्रा पूरणे' इत्यस्य लिटि णलि 'आत औ णलः' इत्यौकारः । निघातः । इषः । 'इषु इच्छायाम्' । अस्मादिगुपधलक्षणः कः । कित्त्वादगुणः । प्रत्ययस्वरः । रथीः । रथोऽस्यास्तीति[7] मतुबर्थे[8] 'छन्दसीवनिपौ' इति ईप्रत्ययः । प्रत्ययस्वरः ॥

दिशः सूर्यो न मिनाति प्रदिष्टा दिवेदिवे हर्यश्वप्रसूताः ।
सं यदानळध्वन आदिदश्वैर्विमोचनं कृणुते तत्त्वस्य ॥ १२ ॥

दिशः । सूर्यः । न । मिनाति । प्रऽदिष्टाः । दिवेऽदिवे । हर्यश्वऽप्रसूताः ।
सम् । यत् । आनट् । अध्वनः । आत् । इत् ।
अश्वैः । विऽमोचनम् । कृणुते । तत् । तु । अस्य ॥ १२ ॥

हर्यश्वप्रसूताः । हरी अश्वौ यस्यासाविति हर्यश्व इन्द्रः । तेन प्रेरिताः दिशः प्रागादयः[9] दिवेदिवे प्रतिदिवसं प्रदिष्टाः सूर्यस्य गमनार्थं दत्ता या दिशो विद्यन्ते ताः सूर्यो न मिनाति न हिनस्ति । किंतु ताभिरेव व्रजति । यत् यदा सूर्यः अध्वनः गन्तव्यान् प्रदेशान् अश्वैः गमनसाधनभूतैः सम् आनट् सम्यगश्नुते । आदित् अनन्तरमेव विमोचनं कृणुते । अश्वानां विमोचनं कुरुते । तत् एतत्सर्वं[10] कर्म[10] अस्य तवैव खलु । तु प्रसिद्धौ ॥ सूर्यः । 'षू प्रेरणे' इत्यस्मात् 'सुसूधागृधिभ्यः क्रन्' इति क्रन्प्रत्ययः । सुवति प्रेरयतीति सूर आदित्यः । सूर एव सूर्यः । वस्वादित्वात् स्वार्थिको यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । मिनाति । 'मीञ् हिंसायाम्' ।

---

१. ख-ग-च-ज-ण–परस्परे । २. त–सन् । ३. न-ल-स–व्रजन्ति । ४. ख-ग-च-ज-ण-भ–तान् । ५. ग-च-स–°समीपे । ६. त–सवर्ण° । ७. रथोऽस्यास्तीति रथीः । ८. त–मत्वर्थे । ९. ख-ग-घ-च-त-न-फ-भ-सं–'प्रागादयः' नास्ति । १०. ख-ग-च-ज-णं-ल–एतत्सर्वंकर्म ।

'मीनातेर्निगमे' इति ह्रस्वः। हर्यश्वप्रसूताः। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। आनट्। 'अशू व्याप्तौ' इत्यस्य 'बहुलं छन्दसि' इति लङः श्लुः। 'अश्नोतेश्च' इति नुडागमः। व्रश्चादिना षत्वम्। यद्योगादनिघातः॥

दिदृक्षन्त उषसो यामन्नक्तोर्विवस्वत्या महि चित्रमनीकम्।

विश्वे जानन्ति महिना यदागादिन्द्रस्य कर्म सुकृता पुरूणि॥ १३॥

दिदृक्षन्ते। उषसः। यामन्। अक्तोः। विवस्वत्याः। महि। चित्रम्। अनीकम्।

विश्वे। जानन्ति। महिना। यत्। आ। अगात्। इन्द्रस्य। कर्म। सुऽकृता। पुरूणि॥१३॥

विश्वे सर्वे जनाः विवस्वत्याः विवासनवत्या निर्गमनपरायाः अक्तोः रात्रेः संबन्धिनः उषसो यामन् यामनि निर्गमने सति महि महत् चित्रं चायनीयम् अनीकं सौरं तेजः दिदृक्षन्ते द्रष्टुमिच्छन्ति। यत् यदा आगात् उषःकालः[1] समन्तादागतः[1] व्यपैति तदा तेजो दिदृक्षमाणाः सर्वे जनाः महिना महनीयान्यग्निहोत्रादीनि कर्माणि जानन्ति कर्तव्यतया बुध्यन्ते[2]। हे इन्द्र पुरूणि बहूनि सुकृता सुष्ठु कृतानि कर्म कर्माणि[3] इन्द्रस्य तवैव॥ दिदृक्षन्ते। 'दृशिर् प्रेक्षणे' इत्यस्य सनि 'ज्ञाश्रुस्मृदृशां सनः' (पा. सू. १. ३. ५७) इत्यात्मनेपदम्। अभ्यस्तस्वरः। विवस्वत्याः। विवासतेः[4] संपदादिलक्षणः क्विप्। व्यत्ययेनोपधाह्रस्वत्वम्। तस्मात् 'तदस्यास्ति॰' इति मतुप्। 'मादुपधायाः॰' इति तस्य वत्वम्। मतुपः पित्त्वादनुदात्तत्वे धातुस्वरः। जानन्ति। 'ज्ञा अवबोधने'। 'ज्ञाजनोर्जा' इति जादेशः। निघातः। अगात्। 'इण् गतौ' इत्यस्य लुङि रूपम्। यद्योगादनिघातः। सुकृता। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्॥

महि ज्योतिर्निहितं वक्षणास्वामा पक्वं चरति बिभ्रती गौः।

विश्वं स्वाद्म संभृतमुस्रियायां यत्सीमिन्द्रो अदधाद्भोजनाय॥ १४॥

महि। ज्योतिः। निऽहितम्। वक्षणासु। आमा। पक्वम्। चरति। बिभ्रती। गौः।

विश्वम्। स्वाद्म। सम्ऽभृतम्। उस्रियायाम्। यत्। सीम्। इन्द्रः। अदधात्। भोजनाय॥१४॥

वक्षणासु। वक्ष्यन्ते यासूदकानीति वक्षणा नद्यः। तासु महि महत् ज्योतिः ज्योतिष्मदुदकं निहितम् इन्द्रेण आमा नवसूतिका गौः पक्वं क्षीरादिकं बिभ्रती दधाना सती चरति सर्वत्र वर्तते। यत् यस्मादुदकात् स्वाद्म स्वादुतरं संभृतं स्वेन संपादितं दधिघृतक्षीरादिकं सीम् एतत् विश्वं सर्वम् उस्रियायां गवि भोजनाय इन्द्रः अदधात्। तस्मात् क्षीरादिकं बिभ्रती गौश्चरतीति पूर्वेणान्वयः॥ वक्षणासु। 'वक्ष रोषे'। अस्मात् 'करणाधिकरणयोश्च' इति

---

१. ख-ग-च-ज-ण-प-फ-भ-ल-स—उषःकाले समन्तादागात्। २. ख-ग-च-न-भ-स—कर्तव्यतया च बुध्यन्ते। ३. ल—एतानि कर्माणि। ४. च-फ—विवासयतेः।

करणे ल्युट् । लित्स्वरः । पक्वम् । पचतेर्निष्ठातकारस्य 'पचो वः' इति वत्वम् । प्रत्ययस्वरः । चरति । चरतिर्गत्यर्थः । बिभ्रती । 'डुभृञ् धारणपोषणयोः' । जुहोत्यादिः । शतुरुगित्वात् 'उगितश्च' इति ङीप् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । उस्रियायाम् । 'वस निवासे' । 'स्फायितञ्चि॰' इत्यादिनाधिकरणे रक्प्रत्ययः । यजादित्वात् संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वाभावश्छान्दसः । स्वार्थिको घप्रत्ययः । प्रत्ययस्वरः ॥

इन्द्र दृह्य यामकोशा अभूवन्यज्ञाय शिक्ष गृणते सखिभ्यः ।
दुर्मायवो दुरेवा मर्त्यासो निषङ्गिणो रिपवो हन्त्वासः ॥ १५ ॥

इन्द्र । दृह्य । यामऽकोशाः । अभूवन् । यज्ञाय । शिक्ष । गृणते । सखिऽभ्यः ।
दुःऽमायवः । दुःऽएवाः । मर्त्यासः । निषङ्गिणः । रिपवः । हन्त्वासः ॥ १५ ॥

हे ᵛइन्द्र ᵛदृह्य दृढो भव । यतः ᵛयामकोशाः । यान्त्यस्मिन्निति यामो मार्गः । तस्य कोशाः कोशवदाच्छादकाः[1] मार्गप्रतिबन्धका राक्षसाः ᵛअभूवन् । त्वं ᵛयज्ञाय यज्ञकर्त्रे ᵛगृणते स्तोत्रं कुर्वते यजमानाय ᵛसखिभ्यः पुत्रादिभ्यश्च[2] ᵛशिक्ष अपेक्षितं फलं दत्स्व । ᵛदुर्मायवः । दुष्टमायुधानि मिन्वन्ति प्रक्षिपन्तीति दुर्मायवः । ᵛदुरेवाः दुष्टं गच्छन्तः ᵛमर्त्यासः मारयितारः ᵛनिषङ्गिणः । निषङ्गशब्देन इषुधिरभिधीयते । तद्वन्तः । एवंविधसामर्थ्योपेताः ᵛरिपवः शत्रवो राक्षसाः ᵛहन्त्वासः त्वया हननीयाः ॥ दृह्य । 'दृह दृहि बृह बृहि वृद्धौ' । व्यत्ययेन श्यन् । लोटि रूपम् । निघातः । अभूवन् । 'भू सत्तायाम्' । अस्य लुङि रूपम् । 'गातिस्था॰' इति सिचो लुक् । 'भूसुवोस्तिङि' इति गुणे प्रतिषिद्धे 'भुवो वुग्लुङ्लिटोः' इति वुगागमः । निघातः । शिक्ष । 'शिक्ष विद्योपादाने' । अयं[3] धातुरत्र दाने[4] वर्तते । व्यत्ययेन परस्मैपदम् । निघातः । दुर्मायवः । मिनोतेः 'कृवापाजिमि॰' इत्यादिना उण्प्रत्ययः । कृदुत्तरपदस्वरः । दुरेवाः । 'इण् गतौ' । 'इण्शीङ्भ्यां वन्' इति कर्तरि वन्प्रत्ययः । रिपवः । 'रपेरिच्चोपधायाः' इत्युप्रत्ययः । उपधाया इत्वम् । प्रत्ययस्वरः । हन्त्वासः । 'हन हिंसागत्योः' । 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति त्वन् । नित्वादाद्युदात्तः ॥　॥ ३ ॥

सं घोषः शृण्वेऽवमैरमित्रैर्जही न्येष्वशनिं तपिष्ठाम् ।
वृश्चेमधस्ताद्वि रुजा सहस्व जहि रक्षो मघवन्रन्धयस्व ॥ १६ ॥

सम् । घोषः । शृण्वे । अवमैः । अमित्रैः । जहि । नि । एषु । अशनिम् । तपिष्ठाम् ।
वृश्च । ईम् । अधस्तात् । वि । रुज । सहस्व । जहि । रक्षः । मघऽवन् । रन्धयस्व ॥ १६ ॥

हे इन्द्र ᵛअवमैः समीपे वर्तमानैः ᵛअमित्रैः शत्रुभिरसुरैरुत्सृष्टो योऽशनिः ᵛघोषः घुष्यमाणः ᵛसं ᵛशृण्वे सम्यगस्माभिः श्रूयते ᵛतपिष्ठाम् अतिशयेन तापिकां ताम् ᵛअशनिम् ᵛएषु शत्रुष्वेव[5]

---

१. ख-ग-च-ज-ण-प-फ-भ–आच्छादकाः । २. ख-ग-च-ज-ण-न-स–पुत्रादिभ्यस्त्वम् । ३. ल–इत्ययम् । ४. ख-ग-च-ज-ण-फ-भ–आदाने । ५. ख-ग-घ-च-ज-ण-त-न-फ-भ-स–शत्रुषु अव ।

निधाय ˅जहि मारय । तैः प्रयुक्तामशनिं[1] तानेव प्रापयेति भावः । ˅ईम् एनान् शत्रून् ˅अधस्तात् मूलतः ˅वृश्च[2] छिन्धि । किंच ˅वि ˅रुज तान् विशेषेण बाधस्व ˅सहस्व[3] अभिभव च । हे ˅मघवन् इन्द्र ˅रक्षः कर्मविघ्नकारीणि रक्षांसि ˅जहि मारय । अनन्तरमिमं यज्ञं ˅रन्धयस्व पारं नय[4] ॥ शृण्वे । निघातः । जहि । ‘ हन हिंसागत्योः ’। अस्य लोटि रूपम् । अशनिम् । ‘ अशू व्याप्तौ ’। ‘ °अश्यवितृभ्यो-ऽनिः ’ इत्यनिप्रत्ययः । प्रत्ययस्वरः । तपिष्ठाम् । तप्तृशब्दादिष्ठन्प्रत्ययः । निरस्वरः । वृश्च । ‘ओव्रश्चू छेदने’ । तुदादिः । ग्रहिज्यादिना संप्रसारणम् । सहस्व । वाक्यभेदादनिघातः । रन्धयस्व । ‘ रध हिंसा-संराद्ध्योः ’ इत्यस्य ण्यन्तस्य लोटि ‘ रधिजभोरचि ’ इति नुमागमः । वाक्यभेदादनिघातः ॥

उद्वृह रक्षः सहमूलमिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि ।
आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य ॥ १७ ॥

उत् । वृह । रक्षः । सहऽमूलम् । इन्द्र । वृश्च । मध्यम् । प्रति । अग्रम् । शृणीहि ।
आ । कीवतः । सललूकम् । चकर्थ । ब्रह्मऽद्विषे । तपुषिम् । हेतिम् । अस्य ॥ १७ ॥

हे ˅इन्द्र ˅रक्षः कर्मविघ्नकारि रक्षःकुलं ˅सहमूलं मूलसहितं यथा भवति तथा ˅उद्वृह उद्धर । किंच ˅मध्यं तस्य मध्यभागं[6] ˅वृश्च छिन्धि । ˅प्रत्यग्रम् अग्रं[7] प्रत्यागतं तत् ˅शृणीहि जहि । तस्य रक्षःकुलस्य मध्ये ˅सललूकं सरणशीलं रक्षः ˅आ ˅कीवतः । ‘ आङ् मर्यादायाम् ’ । कियतः अनिर्ज्ञायमानपरिमाणात्[8] अतिदूराद्देशात् ˅चकर्थ कुरु । कृत्वा च ˅ब्रह्मद्विषे ब्राह्मणद्वेषकारिणे तस्मै रक्षसे ˅तपुषिं तापकं ˅हेतिं घातकमायुधं ˅अस्य क्षिप । उक्तमर्थं यास्कोऽब्रवीत्—‘उद्धर रक्षः सहमूलमिन्द्र । मूलं मोचनाद्वा मोषणाद्वा मोहनाद्वा । वृश्च मध्यं प्रति शृणीह्यग्रम् । अग्रमागतं भवति । आ कियतो देशात्सललूकं संलुब्धं भवति पापकमिति नैरुक्ताः सररूकं वा स्यात्सर्तेरभ्यस्तात् । तपुषिस्तपतेर्हेतिर्हन्तेः ’ ( निरु. ६. ३ ) इति ॥ वृह । ‘ वृहू[9] उद्यमने ’ इत्यस्य लोटि रूपम् । शृणीहि । ‘ शॄ हिंसायाम् ’। अस्य लोटि हौ ‘ ई हल्यघोः ’ इतीत्वम् । निघातः । कीवतः । किंशब्दात् किं परिमाणमस्येत्यर्थे ‘ किमिदंभ्यां वो घः ’ इति किंशब्दात् वतुबस्तीति ज्ञापितत्वात् वतुप् । घादेशाभावश्छान्दसः । ‘ इदंकिमोरीश्की ’ इति की इत्यादेशः । सललूकम् । ‘ सृ गतौ ’ । छान्दसी रूपसिद्धिः । चकर्थ । ‘ डुकृञ् करणे ’ इत्यस्य लिटि थलि रूपम् । क्रादित्वादिडभावः । निघातः । तपुषिम् । ‘ तप संतापे ’ इत्यस्मात् ‘ अर्तिपृवपियजितनिधनितपिभ्यो नित् ’ इत्युसिप्रत्ययो नित्त्वं च । अकारस्य इकारश्छान्दसः । निरस्वरः । हेतिम् । ‘ हन हिंसागत्योः ’ । ‘ ऊतियूतिजूतिसाति° ’ इत्यादिना निपातनादन्तोदात्तः । अस्य । ‘ असु क्षेपणे ’। लोटि रूपम् ॥

---

१. त-न-ल-स—प्रयुक्तमशनिम् । २. घ-ज-ण—निवृश्च । ३. त-स—‘ सहस्व ’ नास्ति । ४. ख-ग-च-ज-ण-फ—नयस्व । ५. ज-न—व्रश्चू । ६. ख-ग-च-ज-ण-त—मध्यं भागम्; न—मध्यं मध्यम्; स—मध्यम् । ७. त—अग्रमग्रम् ८. ख-ग-च-ज-फ-भ—अभिज्ञायमान° । ९. ख-ग-ज-ण-न-भ-स—वृह ।

स्वस्तये वाजिभिश्च प्रणेतः सं यन्महीरिष आसत्सि पूर्वीः ।
रायो वन्तारो बृहतः स्यामास्मे अस्तु भर्ग इन्द्र प्रजावान् ॥ १८ ॥

स्वस्तये । वाजिऽभिः । च । प्रनेतरिति प्रऽनेतः । सम् । यत् । महीः । इषः । आऽसत्सि । पूर्वीः ।
रायः । वन्तारः । बृहतः । स्याम । अस्मे इति । अस्तु । भर्गः । इन्द्र । प्रजाऽवान् ॥१८॥

प्रणेतः प्रकर्षेण जगतो निर्वाहक हे इन्द्र अस्मान् वाजिभिः अश्वैः सहितान् कुरु स्वस्तये च अविनाशाय कुरु । यत्[1] यदा त्वं सम् आसत्सि अस्माकं समीपे यज्ञनिर्वाहार्थमासीदसि तदा वयं महीः महान्ति इषः अन्नानि पूर्वीः प्रभूतानि रायः धनानि वन्तारः तेषां संभक्तारः सन्तः बृहतः महान्तः स्याम भवेम । किंच प्रजावान् अपत्योपेतं भर्गः धनम् अस्मे अस्मासु अस्तु भवतु ॥ आसत्सि । षद्लृ विशरणादिषु । 'बहुलं छन्दसि' इति शपो लुक् । यद्योगादनिघातः । इषो राय इति च द्वे षष्ठ्यर्थे द्वितीये । वन्तारः। 'वन षण संभक्तौ' इत्यस्य तृचि आगमानुशासनस्य अनित्यत्वादिडभावः । चित्स्वरः । स्याम। 'अस भुवि' इत्यस्य लिङि रूपम् । अस्मे। अस्मच्छब्दस्य सप्तम्याः 'सुपां सुलुक्°' इति शे इत्यादेशः ॥

आ नो भर भर्गमिन्द्र द्युमन्तं नि ते देष्णस्य धीमहि प्ररेके ।
ऊर्वइव पप्रथे कामो अस्मे तमा पृण वसुपते वसूनाम् ॥ १९ ॥

आ । नः । भर । भर्गम् । इन्द्र । द्युऽमन्तम् । नि । ते । देष्णस्य । धीमहि । प्रऽरेके ।
ऊर्वःऽइव । पप्रथे । कामः । अस्मे इति । तम् । आ । पृण । वसुऽपते । वसूनाम् ॥ १९ ॥

हे इन्द्र नः अस्मदर्थं द्युमन्तं दीप्तियुक्तं भर्गं धनम् आ भर आ समन्तात् संभर । देष्णस्य दानशीलस्य ते तव संबन्धिनो धनस्य प्ररेके प्ररेचने[2] दाने नि धीमहि धनदानस्य वयं पात्रभूताः स्म इत्यर्थः । कुत इत्यत आह । अस्मे अस्माकं कामः अभिलाषः ऊर्वइव अनवाप्तकामो वडवानल इव पप्रथे प्रभूतो वर्तते । वसूनां वसुपते धनानां मध्ये उत्तमधनानामधिपते हे इन्द्र तं महान्तं कामम् आ पृण बहुधनप्रदानेनापूरय ॥ भर । 'भृञ् भरणे' इत्यस्य लोटि रूपम् । देष्णस्य । 'डुदाञ् दाने'। 'गादाभ्यामिष्णुच्' इतीष्णुच्प्रत्ययः । अत्यर्थं ददातीति देष्णः । चित्स्वरः । धीमहि । दधातेर्लिङि 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति महिङः सार्वधातुकत्वात् सीयुटः[3] सलोपः[3] । आर्धधातुकत्वात् आतो लोपः । निघातः । ऊर्वइव । पूर्वपदस्वरः । पप्रथे । 'प्रथ प्रख्याने' इत्यस्य लिटि रूपम्। पृण। 'पृण प्रीणने' इत्यस्य लोटि सेर्हिः। तुदादिः । 'अतो हेः' इति हेर्लुक् । वसूनाम् । नित्त्वादाद्युदात्तः ॥

---

१. न-ल-स-'यत्' नास्ति । २. ख-ग-च-फ-भ-रेचने । ३. ख-ग-घ-ज-ण-न-भ-ल-स-सीयुट् ।

इमं कामं मन्दया गोभिरश्वैश्चन्द्रवता राधसा पप्रथश्च ।
स्वर्यवो मतिभिस्तुभ्यं विप्रा इन्द्राय वाहः कुशिकासो अक्रन् ॥ २० ॥

इमम् । कामम् । मन्दय । गोभिः । अश्वैः । चन्द्रऽवता । राधसा । पप्रथः । च ।
स्वःऽयवः । मतिऽभिः । तुभ्यम् । विप्राः । इन्द्राय । वाहः । कुशिकासः । अक्रन् ॥ २० ॥

हे इन्द्र इमं धनादिविषयं कामम् अस्मदीयमभिलाषं गोभिः अग्निहोत्रादिकर्मसाधनभूतैर्गवादिभिर्वाहनसाधनभूतैः अश्वैः च[1] चन्द्रवता दीप्तियुक्तेन राधसा धनेन च मन्दय । एतानि दत्त्वा इममभिलाषं पूरय । किंच । एतैरस्मान् पप्रथः प्रथितांश्च कुरु । पश्चात् स्वर्यवः स्वर्गादिसुखमात्मन इच्छन्तः विप्राः कर्मकुशलाः कुशिकासः कुशिकाः मतिभिः मननीयैर्मन्त्रैः वाहः स्तोत्रम् इन्द्राय तुभ्यम् अक्रन् अकार्षुः ॥ मन्दय । मदि स्तुत्यादिष्वित्यस्य लोटि रूपम् । गोभिः । 'सावेकाचः°' इति विभक्तेरुदात्तत्वे प्राप्ते 'न गोश्वन्साववर्ण°' इत्यादिना प्रतिषेधः । प्रकृतिस्वरः । पप्रथः । 'प्रथ प्रख्याने' । क्विप् । 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वात् शप् । तस्य 'बहुलं छन्दसि' इति श्लुः । धातुस्वरः । अक्रन् । करोतेर्लुङि 'मन्त्रे घसह्वर°' इत्यादिना लुक् । निघातः ॥

आ नो गोत्रा दर्दृहि गोपते गाः समस्मभ्यं सनयो यन्तु वाजाः ।
दिवक्षा असि वृषभ सत्यशुष्मोऽस्मभ्यं सु मघवन्बोधि गोदाः ॥ २१ ॥

आ । नः । गोत्रा । दर्दृहि । गोऽपते । गाः । सम् । अस्मभ्यम् । सनयः । यन्तु । वाजाः ।
दिवक्षाः । असि । वृषभ । सत्यऽशुष्मः । अस्मभ्यम् । सु । मघऽवन् । बोधि । गोऽदाः ॥ २१ ॥

गोपते[2] स्वर्गाधिपते हे इन्द्र नः अस्मदर्थं गोत्रा गोत्राण्यभ्राणि गाः अपः प्रति आ दर्दृहि आद्रियस्व । अभ्राणि विदीर्य[3] जलानि प्रापयेत्यर्थः । ततः सनयः संभजनीयानि वाजाः अन्नानि अस्मभ्यम् अस्मदर्थं सं यन्तु समागच्छन्तु । वृषभ कामानां वर्षितर्हे[4] इन्द्र त्वं दिवक्षाः असि दिवं व्याप्य वर्तमानत्वेन महानसि[5] । अत एव सत्यशुष्मः सत्यसामर्थ्यः मघवन् धनवन् हे इन्द्र अस्मभ्यं गोदाः गवां प्रदाता भवामीति सु बोधि सुष्ठु बुध्यस्व ॥ दर्दृहि । 'दृङ् आदरे' । यङ्लुकि लोटि रूपम् । 'ऋतश्च' ( पा. सू. ७. ४. ९२ ) इत्यभ्यासस्य रुगागमः । निघातः । गाः । 'औतोऽम्शसोः' ( पा. सू. ६. १. ९३ ) इत्योकारस्याकारः । एकादेशस्वरः । अस्मभ्यम् । 'भ्यसो भ्यम्' इति चतुर्थीबहुवचनस्य भ्यमादेशः । यन्तु । 'इण् गतौ' । लोटि रूपम् । दिवक्षाः । 'अक्षू व्याप्तौ' । असुन् । दिवं व्याप्नोतीति दिवक्षाः । कृदुत्तरपदस्वरः । गोदाः । 'डुदाञ् दाने' । अस्मात्[6] विच् । कृदुत्तरपदस्वरः[7] ॥

---

१. ख-ग-च-त-'च' नास्ति । २. त-गोपते गवां पते । ३. ख-ग-च-ज-ण-प-फ-भ-ल-स-विदार्य । ४, फ-वर्षक हे । ५. ज-ण-भ-भवसि । ६. ल-इत्यस्मात् । ७. त-कृदुत्तरपदप्रकृतिस्वरः ।

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ २२ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ २२ ॥

हे इन्द्र वाजसातौ । वाजस्यान्नस्य सातिः लाभः[1] यस्मिन् सोऽयं वाजसातिः तस्मिन् । भरे । बिभ्रति जयलक्ष्मीमनेन योद्धार इति भरः संग्रामः । तस्मिन्[2] संग्रामे शुनं शूनम्[3] उत्साहेन प्रवृद्धम् । यद्वा[4] शुनमिति सुखनाम । सुखकरं[4] मघवानं धनवन्तम् अत एव इन्द्रं निरतिशयैश्वर्यसंपन्नं नृतमं सर्वस्य जगतोऽतिशयेन नेतारं त्वां हुवेम कुशिका वयं यज्ञार्थमाह्वयेम । तथा शृण्वन्तम् अस्माभिः क्रियमाणां स्तुतिं शृण्वन्तम् उग्रं शत्रूणां भयंकरं समत्सु संग्रामेषु वृत्राणि वृत्रोपलक्षितानि सर्वाणि रक्षांसि घ्नन्तं हिंसन्तं धनानां शत्रुसंबन्धिनां संजितं सम्यग्जेतारं त्वाम् ऊतये रक्षणाय वयमाह्वयेम ॥ शुनम् । 'टुओश्वि गतिवृद्ध्योः' इत्यस्य निष्ठायां 'यस्य विभाषा' इतीट्प्रतिषेधः । यजादित्वात् संप्रसारणम् । दीर्घाभावश्छान्दसः । प्रत्ययस्वरः । हुवेम । ह्वयतेः 'बहुलं छन्दसि' इति संप्रसारणे कृते शपो लुकि कृते च लिङि रूपम् । निघातः । भरे । 'भृञ् भरणे' । करणे घः । वृषादित्वात् आद्युदात्तः । वाजसातौ । 'षणु दाने' । भावे क्तिन् । 'जनसन०' इत्यादिना अनुनासिकस्यात्वम् । बहुव्रीहौ पूर्वपदस्वरः । समत्सु । 'अद भक्षणे' । संपूर्वात् क्विप् । संभक्षयन्ति योद्धृणामायूंषीति समदः संग्रामाः । कृदुत्तरपदस्वरः । घ्नन्तम् । 'हन हिंसागत्योः' इत्यस्य शतरि 'गमहन०' इत्यादिना उपधालोपः । 'हो हन्तेः०' इति कुत्वम्[5] । संजितम् । 'जि जये' । क्विप् तुक्[6] ॥　॥ ४ ॥

'शासद्वह्निः' इति द्वाविंशत्यृचं द्वितीयं सूक्तम् । अत्रानुक्रमणिका—'शासत् कुशिको विश्वामित्र एव वा श्रुतेः' इति । इषीरथस्य पुत्रः कुशिको विश्वामित्र एव वा ऋषिः । इन्द्रो देवता । त्रिष्टुप्छन्दः । चातुर्विंशिकेऽहनि माध्यंदिने[7] सवने[7] अच्छावाकशस्त्र आरम्भणीयाया ऊर्ध्वमहीनसूक्तसंज्ञकमेतत्सूक्तं शंसनीयम् । सूत्रितं च —'अस्मा इदु प्रतवसे शासद्वह्निरितीतरावहीनसूक्ते' ( आश्व. श्रौ. ७. ४ ) इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्रेऽहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि । तत्रेदं तृतीयं संपातसूक्तम् । 'इमामू ष्विच्छन्ति त्वा शासद्वह्निरिति संपाताः' ( आश्व. श्रौ. ७.५ ) इति ॥

शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् ।
पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे ॥ १ ॥

शासत् । वह्निः । दुहितुः । नप्त्यम् । गात् । विद्वान् । ऋतस्य । दीधितिम् । सपर्यन् ।
पिता । यत्र । दुहितुः । सेकम् । ऋञ्जन् । सम् । शग्म्येन । मनसा । दधन्वे ॥ १ ॥

---

१. च-फ—संभजनम् । २. घ-ज-ण—अस्मिन् । ३. ख-ग-च-ज-ण-भ—'शूनं' नास्ति । ४. ख-ग-च-ज-ण-त-न-भ-ल-स—'यद्वा......सुखकरं' नास्ति । ५. ल—घत्वम् । ६. ल—'तुक्' नास्ति । ७. ख-ग-ज-ण-त-भ-स—माध्यंदिनसवने ।

कुशिकः[1] प्रसङ्गात् कंचित् शास्त्रार्थं ब्रूते[1]–‘ अपुत्रस्य[2] पितुः पुत्री दायादा पुत्रिका सती । यतः संतानकृत्तस्याः पुत्र इत्यनयोच्यते ’ इति[2] । अपुत्रो[3] यः पिता कन्यामन्यकुलं प्रापयति स [v]वह्निः इत्युच्यते[3] । स पिता [v]शासत् । ‘ अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ’ ( वासिष्ठ. १७. १७ ) स्मृत्युक्तम्[4] अनुशासनं कुर्वन् [v]दुहितुः पुत्रिकायाः [v]नप्त्यं नप्तृभवं पिण्डदानादिकं कर्तव्यतया [v]गात् गच्छति । किं कुर्वन् । [v]विद्वान् अस्यां दुहितरि जातः पुत्रो मम स्वधाकरो भविष्यतीति जानन् [v]ऋतस्य[5] सत्यस्य पुत्रोत्पादनसमर्थस्य[5] रेतसः [v]दीधितिं धर्तारं जामातरं[6] तत्पतिं[6] [v]सपर्यन् वस्त्रालंकारादिना पूजयन् [v]पिता नप्तृभवं[7] गच्छति । [v]यत्र यस्याः [v]दुहितुः पिता पालकः पतिर्जामाता [v]सेकं तस्यां रेतःसेकम् [v]ऋञ्जन् प्रसाधयन् यः [v]शग्म्येन केवलं सुखनिमित्तेन मनसा तया[8] स्वशरीरं[8] [v]सं [v]दधन्वे संधत्ते । न तु पुत्रनिमित्तेन मनसा । एतमर्थं यास्कोऽप्याह–‘ प्रशास्ति वोढा सन्तानकर्मणे दुहितुः पुत्रभावम् । दुहिता दुर्हिता दूरे हिता दोग्धेर्वा । नप्तारमुपागमद्दौहित्रं पौत्रमिति । विद्वान्प्रजननयज्ञस्य रेतसो वाङ्गादङ्गात्संभूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य विधानं पूजयन् ’ ( निरु. ३. ४ ) इत्यादिना ॥ शासत् । शासेः शतरि अभ्यस्तत्वान्नुमभावः । दुहितुः । ‘ दुह प्रपूरणे ’ । ‘ नप्तृनेष्टृ° ’ इत्यादिना तृचि निपातनादिडागमः । चित्स्वरः । नप्त्यम् । नप्तरि भवम् । ‘ भवे छन्दसि ’ इति यत् । ‘ रीङृतः ’ इति रीङादेशः । ‘ यस्य° ’ इति लोपः । रेफलोपश्छान्दसः । गात् । ‘ इण् गतौ ’ इत्यस्य छान्दसे लुङि रूपम् । ऋञ्जन्[9] । ऋञ्जतिः प्रसाधनकर्मा । शग्म्येन । शं सुखं गच्छन्तीति गमेरौणादिकः कप्रत्ययः । कित्त्वात् ‘ गमहन° ’ इत्यादिनोपधालोपः । शग्मे साधुः इति ‘ तत्र साधुः ’ इति यत्प्रत्ययः । ‘ यीरवीर्यौ च ’ इत्यत्र ‘ यतोऽनावः ’ इत्यस्य अनित्यत्वज्ञापितत्वादत्र[10] तित्स्वरः । दधन्वे । धवि सौत्रो धातुः । लिटि रूपम् । प्रत्ययस्वरः । यद्योगादनिघातः ॥

न जामये तान्वो रिक्थमारैक्चकार गर्भं सनितुर्निधानम् ।
यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन् ॥ २ ॥

न । जामये । तान्वः । रिक्थम् । अरैक् । चकार । गर्भम् । सनितुः । निऽधानम् ।
यदि । मातरः । जनयन्त । वह्निम् । अन्यः । कर्ता । सुऽकृतोः । अन्यः । ऋन्धन् ॥ २ ॥

अभ्रातृकाया दुहितुः पुत्रिकाकरणात् सा रिक्थभाक् इत्युक्तम्[11] । भ्रातृमत्यास्तस्या रिक्थभाक्त्वं नास्तीति ब्रूते । [v]तान्वः तनूज औरसः पुत्रः [v]जामये भगिन्यै [v]रिक्थं पित्र्यं धनं [v]न [v]अरैक् न प्ररेचयति[12] न प्रददाति । किं तर्हि । [v]सनितुः एनां संभजमानस्य[13] भर्तुः [v]गर्भम् । षष्ठ्यर्थे द्वितीया । गर्भस्य [v]निधानं रेतःसेकनिधानीमेनां[14] [v]चकार । पाणिग्रहणेन संस्कृताम्[15] एनां करोति । न तु तस्यै रिक्थं

---

१. ख-ग-च-ज-ण–‘ कुशिकः......ब्रूते ’ नास्ति । २. ख-ग-घ-च-ज-ण-त-न-भ-ल-स–‘ अपुत्रस्य ......इति ’ नास्ति । ३. ख-ग-च-ज–शासद्वह्निरित्युच्यते । ४. ख-फ–स्मृत्युक्तेः । ५. ख-ग-च-ज-ण-न-ल-स–ऋतस्य पुत्रोत्पादनेन सत्यस्य समर्थस्य । ६. ख-ग-घ-च-ज-ण-प-फ-भ–विट्पतिम्; त-न-ल-स–‘ जामातरं तत्पतिं ’ नास्ति । ७. ख-ग-च-ज-ण-फ-भ-स–नप्तृभावम् । ८. ख-ग-घ-च-ज-ण-प-फ-भ-स–तस्यां स्ववीर्यम् । ९. ख-ग-च-ज-ण-न-भ-ल-स–‘ ऋञ्जन् ’ नास्ति । १०. न–अनित्यत्वस्य ज्ञापितत्वादत्र । ११. त-ल–इत्युक्त्वा । १२. ख-ग-घ-च-ज-ण-फ-भ-स–प्रेरयति । १३. त-ल-स–भजमानस्य । १४. ख-ग-च-ज-ण-फ-भ–रेतःसेकनिधानं निधानेन । १५. ज-ण–संस्कारिताम् ।

ददातीत्यभिप्रायः । ‘ असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः । भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम् ’ ( याज्ञ. २. १२४ ) इति याज्ञवल्क्यस्मरणात् । स्त्रीपुंसलक्षणस्यापत्यस्यैकोत्पाद्यत्वाविशेषात् पुमपत्यस्य को विशेष इत्याशङ्क्य विशेषं दर्शयति। ᵛयदि यद्यपि ᵛमातरः मातापितरौ ᵛवह्निम् । अवह्निः स्त्री वह्निः पुमान् स्वभार्याया वोढृत्वात्[१] । अवह्निश्च वह्निश्च[२] । तादृशं स्त्रीपुंसलक्षणमपत्यं ᵛजनयन्त । तथापि तयोर्मध्ये ᵛअन्यः पुंलक्षणः ᵛसुकृतोः शोभनस्य पिण्डदानादेः कर्मणः ᵛकर्ता भवति । ᵛअन्यः स्त्रीलक्षणः ᵛऋन्धन् वस्त्रालंकारादिना ऋध्यमान एव भवति । पिण्डदानादिकर्तृत्वात् पुत्रो दायार्हः दुहितुस्तथात्वं[३] नेति[३] न दायार्हा सा तु केवलं परस्मै दीयते। तथा च निरुक्तं– ‘ न जामये भगिन्यै । जामिरन्येऽस्यां जनयन्ति जामपत्यं जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया भवति । तान्व आत्मजः पुत्रो रिक्थं प्रारिचत्प्रादाच्चकारैनां गर्भनिधानीं सनितुर्हस्तग्राहस्य यदिह मातरोऽजनयन्त वह्निं पुत्रमवह्निं च स्त्रियमन्यतरः संतानकर्ता भवति पुमान्दायादोऽन्यतरोऽर्धयित्वा जामिः प्रदीयते परस्मै ’ ( निरु. ३. ६ ) इति ॥ तान्वः[४] । तन्वाः प्राणाधिष्ठितत्वात्तनूः प्राणवती । तद्विकार इत्यर्थे ‘ प्राणिरजतादिभ्योऽञ् ’ इत्यञ् । संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः । रिक्थम् । ‘ रिचिर् विरेचने ’ । ‘ पातृतुदिवचिरिचिसिचिभ्यस्थक् ’ । प्रत्ययस्वरः । अरैक् । ‘ रिचिर् विरेचने ’ इत्यस्य लुङि सिचि ‘ वदव्रज॰ ’ इत्यादिना वृद्धिः । ‘ बहुलं छन्दसि ’ इतीडभावः । हल्ङ्यादिसंयोगान्तलोपौ । निधातः । सनितुः । ‘ षण संभक्तौ ’ इत्यस्य तृचि रूपम् । निधानम् । दधातेर्ल्युटि रूपम् । लित्स्वरः । मातरः । ‘ पिता मात्रा ’ इति पितुः शेषे प्राप्ते मातुः शेषश्छान्दसः । द्विवचनस्य बहुवचनं पूजार्थम् । जनयन्त । जनेर्णिचि रूपम् । वह्निम् । ‘ पुमान् स्त्रिया ’ ( पा. सू. १. २. ६७ ) इति वह्नेः शेषः । सुकृतोः । करोतेरौणादिकः कुप्रत्ययः[५] । ऋन्धन् । ‘ ऋधु वृद्धौ ’ । व्यत्ययेन श्नम् ॥

अ॒ग्निर्ज॑ज्ञे जु॒ह्वा॒३॒ रेज॑मानो म॒हस्पु॒त्राँ अ॑रु॒षस्य॑ प्र॒यक्षे॑ ।

म॒हान्गर्भो॒ मह्या जा॒तमे॑षां म॒ही प्र॒वृद्धर्य॑श्वस्य य॒ज्ञैः ॥ ३ ॥

अ॒ग्निः । ज॒ज्ञे॒ । जु॒ह्वा॑ । रेज॑मानः । म॒हः । पु॒त्रान् । अ॒रु॒षस्य॑ । प्र॒ऽयक्षे॑ ।

म॒हान् । गर्भः॑ । महि॑ । आ । जा॒तम् । ए॒षा॒म् । म॒ही । प्र॒ऽवृत् । हरि॑ऽअश्वस्य । य॒ज्ञैः ॥३॥

हे इन्द्र ᵛअरुषस्य रोचमानस्य[६] तव ᵛप्रयक्षे यज्ञार्थं ᵛजुह्वा ज्वालाभिः ᵛरेजमानः कम्पमानः ᵛअग्निः ᵛमहः प्रभूतान् ᵛपुत्रान् रश्मीन् ᵛजज्ञे उत्पादयामास । ᵛएषां रश्मीनां ᵛगर्भः जलात्मना[७] क्रोडीकारः ᵛमहान् आसीत् । किंच एषां रश्मीनां मेलनम् ᵛआ ᵛजातं सर्वत ओषध्यात्मना जातं ᵛमहि महद्भूत् । किंच एषां रश्मीनां ᵛप्रवृत् अनेन प्रकारेण प्रवृत्तिः ᵛहर्यश्वस्य इन्द्रस्य ᵛयज्ञैः[८] यजनार्हैः[८] सोमाज्याहुतिभिः[९] ᵛमही महती भवति ॥ जज्ञे । ‘ जनी प्रादुर्भावे ’ इत्यस्य लिटि रूपम् । अन्तर्भावितण्यर्थः । जुह्वा । ‘ जुहोतेर्द्वे दीर्घश्च ’ इति क्विप् द्विर्वचनं दीर्घश्च धातोः । ‘ उदात्तस्वरितयोः॰ ’ इति स्वरितत्वम् । हर्यश्वस्य । हरी अश्वौ यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

---

१. च-फ–उदर्यत्वात् । २. ख-ग-च-फ–‘ वह्निश्च ’ नास्ति; ल-स–वह्निः । ३. त-न–दुहितुस्तथात्वेऽपि । ४. ख-ग-च-ज-ण-त-न-भ-स–‘ तान्वः ’ नास्ति । ५. ख-ग-ज-ण-त-न-ल-स–क्नुप्रत्ययः । ६. ल–आरोचमानस्य । ७. च-फ–बलात्मना । ८. ख-ग-फ–यजनार्हैः; त-स–यज्ञैर्यजमानार्हैः । ९. स–सोमाज्यादिभिः प्रभृतिभिः ।

अभि जैत्रीरसचन्त स्पृधानं महि ज्योतिस्तमसो निरजानन् ।

तं जानतीः प्रत्युदायन्नुषासः पतिर्गवामभवदेक इन्द्रः ॥ ४ ॥

अभि । जैत्रीः । असचन्त । स्पृधानम् । महि । ज्योतिः । तमसः । निः । अजानन् ।

तम् । जानतीः । प्रति । उत् । आयन् । उषसः । पतिः । गवाम् । अभवत् । एकः । इन्द्रः ॥४॥

vजैत्रीः जित्वर्यो विशो मरुतः vस्पृधानं वृत्रेण सह[1] स्पर्धमानमिन्द्रम् vअभि vअसचन्त सर्वतः समगच्छन्[2] । ते च मरुतः vमहि महत् vज्योतिः सूर्याख्यं तेजः vतमसः तमोरूपात् वृत्रात् vनिरजानन् निर्गतमज्ञासिषुः । उदितं सूर्यं vजानतीः जानानाः vउषसः vतं vप्रति vउत् अभिलक्ष्यैव vआयन् प्राप्नुवन् । अथ तत्रोद्भूतानां[3] vगवां रश्मीनाम् vएकः अद्वितीय एव vइन्द्रः vपतिः vअभवत् ॥ जैत्रीः[4] । जयतेः तृनि* रूपम् । गुणस्य स्थाने व्यत्ययेन वृद्धिः[4] । नित्स्वरः । असचन्त । 'षच समवाये' इत्यस्य लङि रूपम् । स्पृधानम् । 'स्पर्ध संघर्षे' । छन्दसि कानजादेशः । छन्दसि द्विर्वचनस्य विकल्पितत्वात् द्विर्वचनाभावः । चित्स्वरः । अजानन् । 'ज्ञा अवबोधने' इत्यस्य लङि रूपम् । निघातः । आयन् । 'अय गतौ' इत्यस्य लङि रूपम् ॥

वीळौ सतीरभि धीरा अतृन्दन्प्राचाहिन्वन्मनसा सप्त विप्राः ।

विश्वामविन्दन्पथ्यामृतस्य प्रजानन्नित्ता नमसा विवेश ॥ ५ ॥

वीळौ । सतीः । अभि । धीराः । अतृन्दन् । प्राचा । अहिन्वन् । मनसा । सप्त । विप्राः ।

विश्वाम् । अविन्दन् । पथ्याम् । ऋतस्य । प्रऽजानन् । इत् । ता । नमसा । आ । विवेश ॥५॥

पुरा किलाङ्गिरसां गावः पणिनामकैरसुरैरपहृत्य निगूढे कस्मिंश्चित्पर्वते स्थापिताः । ते चाङ्गिरसस्तत्प्राप्त्यर्थमिन्द्रं तुष्टुवुः । स्तुतश्च सः[5] इन्द्रो गवान्वेषणाय[6] देवशुनीं प्राहिणोत् । सा च गवां[7] गवेषणपरा सती तत्स्थानमलभत । तया विज्ञापित इन्द्रस्ता गाः[8] आनीयाङ्गिरोभ्यः प्रादादित्यैतिहासिकी कथा । तथा चास्या ऋचोऽयमर्थः । vधीराः धीमन्तः vसप्त vविप्राः मेधाविनः सप्तसंख्याका अङ्गिरसः vवीळौ दृढे पर्वते vसतीः निगूढाः[9] सतीर्गाः vअभि अभिलक्ष्य vअतृन्दन् उपेक्षामकुर्वन् । ततस्तेऽङ्गिरसः पर्वतबिले गावः सन्तीति vमनसा निश्चित्य vप्राचा येन मार्गेण प्रविष्टास्तेनैव प्राचीनेन मार्गेण ता गाः vअहिन्वन्[10] निरगमयन् । यद्वा प्राचा । प्रकर्षेणेन्द्रमञ्चति

---

१. ख-ग-घ-च-ज-ण-त-न-प-फ-भ—'सह' नास्ति । २. ख-ग-घ-च-ज-ण-न-फ-भ-स—अगच्छन्; त—आगच्छन् । ३ न—वा; ल—ततो । ४. ख-ग-च-ज-ण-भ—'जैत्री......वृद्धिः' नास्ति । *. न-ल-स—तृचि । ५. ख-ग-च-ज-ण-त-न-भ-ल-स—'सः' नास्ति । ६. ख-ग-घ-च-ज-ण-भ—गवामन्वेषणाय । ७. ख-ग-च-ज-ण-त-न-फ-भ-स—'गवां' नास्ति । ८. त—'गाः' नास्ति । ९. ग-च-फ—निरूढाः; त-स—निगूळ्हाः; ल—निरुद्धाः । १०. ख-ग-च-ज-ण-फ-भ—अविन्दन् अलभन्त ।

प्राप्नोतीति प्राक् । तेनेन्द्रविषयेण मनसा । मन्यत इति मनः स्तोत्रम् । तेन स्तोत्रेणाहिन्वन् अवर्धयन् इन्द्रं[1] तुष्टमकुर्वन्[1] । स्तुत्वा च ᵛऋतस्य ᵛपथ्यां यज्ञस्य[2] मार्गे साधुभूतां[2] ᵛविश्वां सर्वामपहृतां गाम् ᵛअविन्दन् अलभन्त । ततः स इन्द्रः ᵛता तान्यङ्गिरसां कर्माणि ᵛप्रजानन् ᵛइत प्रकर्षेण जानन्निन्द्रो ᵛनमसा नमस्कारेणाङ्गिरसः संभावयन् तैरधिष्ठितं पर्वतम् ᵛआ ᵛविवेश ॥ अतृन्दन् । ' उतृदिर्[3] हिंसानादरयोः ' इत्यस्य लङि रुधादित्वात् श्नम् । तस्य ' श्नसोः° ' इत्यल्लोपः । निघातः । प्राचा । ' अञ्चेश्छन्दस्यसर्वनामस्थानम् ' इति विभक्तेरुदात्तत्वम् । अहिन्वन् । ' हि गतिवर्धनयोः ' इत्यस्य लङि रूपम् । अविन्दन् । ' विदॢ लाभे ' इत्यस्य लङि मुचादित्वान्नुम् । निघातः । पथ्याम् । पथि साधुरित्यर्थे ' तत्र साधुः ' इति यत्प्रत्ययः । ' यचि भम् ' इति भसंज्ञायां ' नस्तद्धिते ' इति टिलोपः । ' यतोऽनावः ' इत्यस्यानित्यत्वात् ' तित्स्वरितः ' इति स्वरितः । विवेश । ' विश प्रवेशने ' इत्यस्य लिटि रूपम् ॥ ॥ ५ ॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥ ६ ॥

विदत् । यदि । सरमा । रुग्णम् । अद्रेः । महि । पाथः । पूर्व्यम् । सध्र्यक् । करिति कः ।
अग्रम् । नयत् । सुऽपदी । अक्षराणाम् । अच्छ । रवम् । प्रथमा । जानती । गात् ॥ ६ ॥

ᵛयदि यदा ᵛसरमा इन्द्रेण गवान्वेषणार्थं प्रेषिता सरमा नाम देवशुनी ᵛअद्रेः ᵛरुग्णं भग्नं द्वारं ᵛविदत् अलभत तदानीमिन्द्रः ᵛमहि महत् ᵛपूर्व्यं पूर्वं प्रेषणकालेऽन्नादिनीं ते प्रजां करिष्यामि इति प्रतिज्ञातं ᵛसध्र्यक् इतरैरपि भोज्यैः सध्रीचीनं ᵛपाथः गव्यादिलक्षणमन्नं ᵛकः अकार्षीत् तस्यै दत्तवान् । ततः ᵛसुपदी शोभनपादयुक्ता सा सरमा ᵛअक्षराणां क्षयरहितानां गवाम् ᵛअग्रं प्रान्तं ᵛनयत् प्राप्नोत्[4] । कुत इत्यत आह । यतः ᵛरवं तेषां हम्भारवं ᵛप्रथमा[5] प्रथमं ᵛजानती सती ᵛअच्छ शब्दाभिमुख्येन[6] ᵛगात् जगाम ॥ विदत् । ' विदॢ लाभे ' इत्यस्य लुङि लृदित्वात् च्लेरङादेशः । तस्य स्वरः । सरमा । ' सृ गतौ ' । औणादिकोऽमप्रत्ययः । सरतीति सरमा[7] । ' सरमा सरणात्[8] ' ( निरु. ११. २४ ) इति यास्कः । प्रत्ययस्वरः । रुग्णम् । ' रुजो भङ्गे ' इत्यस्य निष्ठायाम् ' ओदितश्च ' इति नत्वम् । प्रत्ययस्वरः । पाथः । ' पा रक्षणे ' । ' अन्ने च ' ( उ. सू. ४. ६४४ ) इत्यसुन्प्रत्ययः । थुडागमः । पातीति पाथोऽन्नम् । नित्स्वरः । सध्र्यक् । ' अञ्चु गतिपूजनयोः ' । ' ऋत्विक्° ' इत्यादिना क्विन् । सहाञ्चतीति । ' सहस्य सध्रिः ' इति सध्र्यादेशः । क्विन्प्रत्ययस्य कुत्वम् । ' अद्रिसध्र्योः अन्तोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थम् ' ( पा. सू. ६. ३. ९५. १ ) इति सध्रि इत्यादेशोऽन्तोदात्तः । यणादेशे कृते ' उदात्तस्वरितयोर्यणः स्वरितः ' इति यणः स्वरितत्वम् । कः । करोतेर्लुङि सिपि च्लेः ' मन्त्रे घसह्वर° ' इत्यादिना लुक् । गुणे कृते हल्ङ्यादिना सिपो लोपः । विसर्जनीयः । निघातः । नयत् । नयतेर्लङि रूपम् । सुपदी । ' पादोऽन्यतरस्याम् ' ( पा. सू. ४. १. ८ ) इति ङीप् । गात् । इणो लुङि रूपम् ॥

---

१. च-फ-इन्द्रस्तुतिमकुर्वन् । २. ख-ग-घ-च-ज-ण-त-न-प-फ-भ-यज्ञमार्गे संभूताम्; स-यज्ञमार्गेण संभूताम् । ३. ख-ग-ज-ण-न-भ-ल-स-तृदिः । ४. ख-ग-च-फ-भ-स-प्राप्नोति । ५. ख-ग-च-ज-ण-' प्रथमा ' नास्ति । ६. च-आभिमुख्येन । ७. ल-' सरमा ' नास्ति । ८. ख-ग-च-ज-ण-न-भ-ल-स-सरणिः ।

अग॑च्छदु॒ विप्र॑तमः सखी॒यन्नसू॑दयत्सु॒कृते॒ गर्भ॒मद्रिः॑ ।

स॒सान॒ मर्यो॒ युव॑भिर्मख॒स्यन्नथा॑भव॒दङ्गि॑राः स॒द्यो अर्च॑न् ॥ ७ ॥

अग॑च्छत् । ऊँ इति॑ । विप्र॑ऽतमः । स॒खि॒ऽयन् । असू॑दयत् । सु॒ऽकृते॑ । गर्भ॑म् । अद्रिः॑ ।

स॒सान॑ । मर्यः॑ । युव॑ऽभिः । म॒ख॒स्यन् । अथ॑ । अ॒भ॒व॒त् । अङ्गि॑राः । स॒द्यः । अर्च॑न् ॥७॥

vविप्रतमः अतिशयेन मेधावी vसखीयन् अङ्गिरोभिः साकमात्मनः सखित्वमिच्छन् इन्द्रः vअगच्छत् vउ । गोभिरधिष्ठितं पर्वतमगमदेव । सः vअद्रिः सखित्वमिच्छन् vसुकृते सुष्ठु युद्धकर्त्रे इन्द्राय vगर्भं गवात्मकं गर्भम् vअसूदयत् निरगमयत् । vयुवभिः नित्यतरुणैर्मरुद्भिः सह vमखस्यन् गोधनमङ्गिरसामिच्छन् vमर्यः असुराणां मारयितेन्द्रः vससान असुरैरपहृताः ताः[१] गाः भेजे । vअथ अनन्तरम् vअङ्गिराः सप्तानामङ्गिरसां मध्ये वरिष्ठोऽङ्गिरा ऋषिः इन्द्रात् ता गा लब्ध्वा vसद्यः तदानीमेव vअर्चन् इन्द्रं पूजयन् vअभवत् ॥ अगच्छत् । गमेर्लङि रूपम् । सखीयन् । सुप आत्मनः क्यच् । असूदयत् । 'षूद[२] निरासे[२]' इत्यस्य ण्यन्तस्य लङि रूपम् । ससान । 'षण[३] संभक्तौ' इत्यस्य लिटि णलि रूपम् । लित्स्वरः[४] । मखस्यन् । 'छन्दसि परेच्छायाम्[५]' इति[५] परेच्छायामपि क्यच् । सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः इति सुगागमः । एकादेशस्वरः । अङ्गिराः । 'ऋ गतौ' । अङ्गारशब्द उपपदे सर्तेर्धातोरसुन्प्रत्ययः । उपपदे गकारात् परस्याकारस्येत्वम्[६] अन्त्यलोपश्च धातोर्लोपश्च 'अङ्गिराः' इति सूत्रेण निपात्यते । भूतकालेऽङ्गारेभ्यः सृत इति अङ्गिरा ऋषिः । 'अङ्गारेष्वङ्गिराः' ( निरु. ३. १७ ) इति यास्कः । नित्स्वरः ॥

स॒तःस॑तः प्रति॒मानं॑ पुरो॒भूर्विश्वा॑ वेद॒ जनि॑मा॒ हन्ति॒ शुष्ण॑म् ।

प्र णो॑ दि॒वः प॑द॒वीर्ग॒व्युरर्च॒न्त्सखा॒ सखीँ॑रमुञ्च॒न्निर॑व॒द्यात् ॥ ८ ॥

स॒तःऽस॑तः । प्र॒ति॒ऽमान॑म् । पु॒रः॒ऽभूः । विश्वा॑ । वे॒द॒ । जनि॑म । हन्ति॑ । शुष्ण॑म् ।

प्र । नः॒ । दि॒वः । प॒द॒ऽवीः । ग॒व्युः । अर्च॑न् । सखा॑ । सखी॑न् । अ॒मु॒ञ्च॒त् । निः । अ॒व॒द्यात् ॥८॥

योऽयमिन्द्रः vसतसतः उत्तमस्य वसुनः[७] vप्रतिमानम् । प्रतिमीयत उपमीयतेऽनेन सर्वमिति प्रतिमानं प्रतिनिधिः[८] । यद्वा[९] सतःसतो जातस्य सर्वस्य प्रतिमानं स्वस्य महत्त्वेन प्रतिमातीयत्तया सर्वं परिच्छिनत्तीत्यर्थः[९] । vपुरोभूः युद्धे[१०] पुरतः शत्रूनवाप्नोतीति पुरोभूश्च vविश्वा vजनिम सर्वाणि जातानि vवेद जानाति । vशुष्णं शुष्णनामानम्[११] असुरं[१२] vहन्ति । vपदवीः कवितमः vगव्युः गोधनम्

१. ख-ग-घ-च-ज-ण-न-भ-स-'ताः' नास्ति । २. ख-ग-घ-ज-ण- सुद क्षरणे; स- षूद प्रेरणे । ३. ल-स-वन षण । ४. ख-ग-च-ज-ण-त-भ-स-'लित्स्वरः' नास्ति । ५. ख-ग-च-ज-ण-न-भ-स- 'परेच्छायामिति' नास्ति । ६. ल-परस्येत्वम् । ७. ल-वस्तुनः । ८. ख-ग-घ-च-ज-ण-त-न-भ-ल-स- 'प्रतिनिधिः' नास्ति । ९. ख-ग-घ-च-ज-ण-भ-'यद्वा......°छिनत्तीत्यर्थः' नास्ति । १०. ख-ग-च-ज-ण- युद्धेषु । ११. च-तन्नामानम् । १२. घ-त-स-असुरं च ।

अङ्गिरसामिच्छन् अस्माकं ᵛसखा इन्द्रः ᵛसखीन् ᵛनः अस्मान् ᵛदिवः द्युलोकादागत्य ᵛप्र ᵛअर्चन् प्रकर्षेण पूजयन् ᵛअवद्यात् वृत्रबाधरूपात्[1] दोषात्[1] ᵛनिः ᵛअमुञ्चत् नितरां मुञ्चतु ॥ प्रतिमानम्। मातीति मानम्। औणादिको नन्प्रत्ययः[2]। यद्वा करणे ल्युट्। पुरोभूः। 'भू प्राप्तौ'। क्विप्। वेद। वेत्तेर्लटि रूपम्। जनिम। 'जनी प्रादुर्भावे'। 'जनिहृभ्यामिमनिन्' इति इमनिन्प्रत्ययः। भूतकाले जातानीति जनिम। 'सुपां सुलुक्°' इति सुपो लुक्। निःस्वरः। हन्ति। हन्तेर्लटि रूपम्। वाक्यभेदादनिघातः। शुष्णम्। शोषयतीति[3] शुष्णः। प्र णः। 'उपसर्गाद्बहुलम्' इति संहितायां णत्वम्। पदवीः। वी कान्त्यादिषु। क्विप्। पदानि वेत्ति परस्परसंगतानि करोतीति पदवीः कविः। गव्युः। गोशब्दात् 'परेच्छायां छन्दसि' इति क्यच्। 'वान्तो यि प्रत्यये' इति वान्तादेशः। 'क्याच्छन्दसि' इत्युप्रत्ययः। प्रत्ययस्वरः। अर्चन्। अर्चतेः शतरि रूपम्। सखीन्। संहितायां नकारस्य 'दीर्घादटि°' इति रुः। पूर्वस्य वर्णस्य 'अत्रानुनासिकः°' इत्यनुनासिकादेशः। अमुञ्चत्। 'मुच्लृ मोक्षणे' इत्यस्य लङि 'शे मुचादीनाम्' इति नुमागमः। निघातः। अवद्यात्। 'वद व्यक्तायां वाचि' इत्यस्य नञ्पूर्वस्य गर्ह्यार्थे 'अवद्यपण्यवर्याः°' (पा. सू. ३. १. १०१) इति निपातनात् यत्प्रत्ययः॥

नि ग॒व्यता॒ मन॑सा सेदुर॒र्कैः कृ॒ण्वा॒नासो॑ अमृत॒त्वाय॑ गा॒तुम्।
इ॒दं चि॒न्नु सद॑नं॒ भूर्ये॑षां॒ येन॒ मासाँ॒ असि॑षासन्नृ॒तेन॑ ॥ ९ ॥

नि। ग॒व्यता। मन॑सा। से॒दुः। अ॒र्कैः। कृ॒ण्वा॒नासः॑। अ॒मृ॒त॒ऽत्वाय॑। गा॒तुम्।
इ॒दम्। चि॒त्। नु। सद॑नम्। भूरि॑। ए॒षा॒म्। येन॑। मासा॑न्। असि॑सासन्। ऋ॒तेन॑ ॥९॥

ᵛगव्यता गा इच्छता ᵛमनसा युक्ताः ᵛअर्कैः अर्चनीयैः स्तोत्रैः ᵛअमृतत्वाय देवत्वप्राप्त्यर्थं ᵛगातुम्। गच्छन्त्यनेनेति[4] गातुर्मार्गः। अमृतत्वप्राप्त्युपायभूतं मार्गं ᵛकृण्वानासः कुर्वाणास्तेऽङ्गिरसः ᵛनि ᵛसेदुः सत्राख्ये कर्मणि[5] आसीदन्। ᵛएषाम् अङ्गिरसाम् ᵛइदं ᵛचित् ᵛसदनम् इदमेव सत्राख्ये कर्मणि आसदनं[6] ᵛभूरि ᵛनु प्रभूतम्। अमृतत्वप्राप्त्यर्थं महानुपायः खलु। कुत इत्यत आह। ᵛऋतेन सत्यभूतेन ᵛयेन सत्रकर्मणा तेऽङ्गिरसः ᵛमासान् अभिप्लवपृष्ठ्यषडहैः कल्पितान् मासान् ᵛअसिसासन् संभक्तुमैच्छन्॥ गव्यता। गोशब्दात् क्यचि रूपम्। 'वान्तो यि प्रत्यये' इति वान्तादेशः। एकादेशस्वरः। सेदुः। सदेर्लिटि 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वाभ्यासलोपौ। निघातः। कृण्वानासः। 'कृवि हिंसाकरणयोः' इत्यस्य ताच्छीलिकश्चानश्। 'धिन्विकृण्व्योरच' इत्युप्रत्ययः। चित्स्वरः। गातुम्। 'गाङ् गतौ'। 'कमिमनिजनिगाभापायाहिभ्यः' इति करणे तुप्रत्ययः। प्रत्ययस्वरः। असिषासन्। 'षण संभक्तौ' इत्यस्य सनि 'जनसनखनां सञ्झलोः' इत्यात्वम्। अभ्यासस्य 'सन्यतः' इतीत्वम्। 'सनोतेरनः' इति संहितायां षत्वम्। तदन्ताल्लङि रूपम्। यद्वृत्तयोगादनिघातः॥

---

१. ख-ग-ण-फ-भ—वृत्रबाधारूपात् दोषात्; ल—शत्रुबाधरूपात् दोषात्; स—वृत्रवधरूपदोषात्। २. ख-ग-ज-ण-न-भ—नप्रत्ययः। ३. ख-ग-च-ज-ण-फ-भ-स—शोषयतीति। ४. ख-ग-च-ज-ण-भ—गच्छत्यनेनेति। ५. त-न—वर्मनि। ६. ख-ग-घ-ज-ण-भ—आसनम्।

संपश्यमाना अमदन्नभि स्वं पयः प्रत्नस्य रेतसो दुघानाः ।
वि रोदसी अतपद्घोष एषां जाते निःष्ठामदधुर्गोषु वीरान् ॥ १० ॥

सम्ऽपश्यमानाः । अमदन् । अभि । स्वम् । पयः । प्रत्नस्य । रेतसः । दुघानाः ।
वि । रोदसी इति । अतपत् । घोषः । एषाम् । जाते । निःऽस्थाम् । अदधुः । गोषु । वीरान् ॥ १० ॥

ᵛस्वं स्वकीयं गोधनम् ᵛअभि अभिलक्ष्य ᵛसंपश्यमानाः मदीया एता गाव इत्यात्मीयतया जानानाः[1] तेऽङ्गिरसः ᵛप्रत्नस्य पुरा[2] जातस्य ᵛरेतसः तदुपलक्षितस्य पुत्रस्य धारणार्थं ᵛपयः ᵛदुघानाः ता गाः पयो दुहन्तः सन्तः ᵛअमदन् हृष्टा अभूवन् । ᵛएषाम् अङ्गिरसां ᵛघोषः हर्षादुत्पन्नो महाध्वनिः स्तुतिजातः[3] वा ᵛरोदसी द्यावापृथिव्यौ ᵛवि ᵛअतपत् ते व्याप्य अतपिष्ट[4] । ततस्तेऽङ्गिरसः ᵛजाते आत्मीयतया संपन्ने चराचरात्मके वस्तुनि ᵛनिःष्ठां पूर्वं यथा स्थितिमकार्षुः । तथा ᵛगोषु आहृतासु ᵛवीरान् रक्षाकर्मण्यतिशूरान् पुरुषान् ᵛअदधुः स्थापयामासुः ॥ संपश्यमानाः । संपूर्वस्य दृशेः ' ' दृशेश्चेति वक्तव्यम् ' इत्यात्मनेपदम् । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः । अमदन् । ' मदी हर्षे ' इत्यस्य लुङि सिच्यङि रूपम् । निघातः । दुघानाः । ' दुह प्रपूरणे ' इत्यस्मात् शानच् । अदादित्वाच्छपो लुक् । घत्वं छान्दसम् । वृषादित्वादाद्युदात्तः । अतपत् । विपूर्वस्य तपतेरत्र सकर्मकत्वादात्मनेपदाभावः । लङि रूपम् । घोषः । ' घुष[5] संशब्दने[5] ' । घञन्तः । ञित्स्वरः । निःष्ठाम् । ' ष्ठा गतिनिवृत्तौ ' । ' स्थः क च ' ( पा. सू. ३. २. ७७ ) इति क्विप् । कृदुत्तरस्वरः[6] । अदधुः । दधातेर्लङि झेः ' सिजभ्यस्त° ' इति जुसादेशः । वाक्यभेदान्निघाताभावः । गोषु । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वे प्राप्ते ' न गोश्वन्° ' इति प्रतिषिद्धत्वात् प्रातिपदिकस्वरः ॥ ॥६॥

स जातेभिर्वृत्रहा सेदु हव्यैरुदुस्रिया असृजदिन्द्रो अर्कैः ।
उरूच्यस्मै घृतवद्भरन्ती मधु स्वाद्म दुदुहे जेन्या गौः ॥ ११ ॥

सः । जातेभिः । वृत्रऽहा । सः । इत् । ऊँ इति । हव्यैः ।
उत् । उस्रियाः । असृजत् । इन्द्रः । अर्कैः ।
उरूची । अस्मै । घृतऽवत् । भरन्ती । मधु । स्वाद्म । दुदुहे । जेन्या । गौः ॥ ११ ॥

ᵛसः ᵛइन्द्रः ᵛजातेभिः सहायतया संपन्नैर्मरुद्भिः सहितः सन् ᵛवृत्रहा वृत्रस्यासुरस्य हन्ता भवति । ᵛसेदु स एव इन्द्रः ᵛअर्कैः अर्चनीयैः अत एव ᵛहव्यैः होतव्यैर्मरुद्भिः सहितः सन् ᵛउस्रियाः । ऊर्ध्वं वसत्यासु क्षीरादिरूपं हविरित्युस्रिया गावः । यद्वा ऊर्ध्वं क्षीरदधिनवनीतादि क्रमेणासु वसतीति । ' उस्रियेति गोनामोत्स्राविणोऽस्यां भोगाः ' ( निरु. ४. १९ ) इति यास्कः । ता गाः ᵛउत् ᵛअसृजत् यज्ञार्थं सम्यक् ससर्ज । यस्मादेवं तस्मात् ᵛघृतवत् घृतोपेतं क्षीरादिकं[7] हविः ᵛभरन्ती

१. च-फ-पश्यमानाः । २. ख-ग-च-ज-ण-प-फ-भ-स-पुरः । ३. ख-ग-घ-च-फ-श्रुतिजातः । ४. ख-ग-च-न-भ-ल-स-आवर्तिताः ; ज-ण-अवर्तत । ५. च-फ-घुषिरविशब्दने । ६. ल-कृदुत्तरपदस्वरः। ७. ख-ग-च-ज-ण-भ-क्षीरादि ।

बिभ्राणा अत एव ᵛउरूची । उरु प्रभूतमग्निहोत्रादिकर्म अञ्चति हविः प्रदातुं प्राप्नोतीत्युरूची। ᵛजेन्या जेतव्या प्रशस्ता ᵛगौः ᵛअस्मै यजमानाय ᵛस्वाद्म स्वादुतरं क्षीरादि ᵛदुदुहे दुह्यते स्म ॥ उस्रियाः । 'वस निवासे' इत्यस्मात् 'स्फायितञ्चि°' इत्यादिना रक्प्रत्ययः । उस्रशब्दात् स्वार्थे पृषोदरादित्वात् घप्रत्ययः । प्रत्ययस्वरः । यद्वा । 'सृ गतौ' । उत्पूर्वस्य सरतेः[1] कप्रत्ययः । पूर्वपदस्यान्त्यलोपश्छान्दसः। अत्रापि स्वार्थिको घप्रत्ययः । असृजत् । 'सृज विसर्गे' इत्यस्य लङि रूपम् । उरूची । उरु अञ्चतीति क्विन् । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । उदात्तनिवृत्तिस्वरेणान्तोदात्तः । दुदुहे । 'दुह प्रपूरणे' इत्यस्य लिटि रूपम् । जेन्या । जयतेः कृत्यार्थे केन्यप्रत्ययः । इकारलोपश्छान्दसः । प्रत्ययस्वरः ॥

पि॒त्रे चि॑च्चक्रुः॒ सद॑नं॒ सम॑स्मै॒ महि॑ त्वि॒षीम॑त्सु॒कृतो॒ वि हि ख्यन् ।
वि॒ष्क॒भ्नन्त॒ः स्कम्भ॑नेना॒ जनि॑त्री॒ आसी॑ना ऊ॒र्ध्वं र॑भ॒सं वि मि॑न्वन् ॥१२॥

पि॒त्रे । चि॒त् । च॒क्रुः॒ । सद॑नम् । सम् । अ॒स्मै॒ । महि॑ । त्वि॒षिऽम॑त् । सु॒ऽकृत॑ः । वि । हि । ख्यन् ।
वि॒ऽस्क॒भ्नन्त॑ः । स्कम्भ॑नेन । जनि॑त्री॒ इति॑ । आसी॑नाः । ऊ॒र्ध्वम् । र॒भ॒सम् । वि । मि॒न्व॒न् ॥१२॥

सत्रमनुतिष्ठन्तोऽङ्गिरसः ᵛपित्रे ᵛचित् पालकाय ᵛअस्मै इन्द्राय ᵛमहि महत् ᵛत्विषीमत् दीप्तिमत् ᵛसदनम् उन्नतं[2] स्थानं ᵛसं ᵛचक्रुः। कथमिति तदुच्यते। यतः ᵛसुकृतः समुपार्जितसुकृतकर्माणः[3] तेऽङ्गिरसस्तादृशमिन्द्रस्य उचितं स्थानं ᵛवि ᵛहि ᵛख्यन् विशेषेणादर्शयन् खलु । कुत इत्यत आह । ᵛआसीनाः सत्रम् उपतिष्ठन्तः[4] तेऽङ्गिरसः[5] ᵛजनित्री सर्वस्य जगतो जनयित्र्यौ द्यावापृथिव्यौ ᵛस्कम्भनेन स्तम्भनसाधनेन[6] अन्तरिक्षेण ᵛविष्कभ्नन्तः यथा ते रोदस्यौ[7] अधो न पततस्तथा विष्टब्धे कुर्वन्तः सन्तः ᵛरभसं वेगवन्तं तमिन्द्रम् ᵛऊर्ध्वं द्युलोके[8] ᵛवि ᵛमिन्वन् हविःस्वीकरणार्थं विशेषेणास्थापयन् ॥ चक्रुः । करोतेर्लिटि उसि रूपम् । निघातः । ख्यन् । 'ख्या प्रकथने' । अस्य लुङि च्लेः 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङादेशः । 'आतो लोप इटि°' इत्याकारलोपः । हियोगादनिघातः । विष्कभ्नन्तः । 'स्कम्भु रोधने' । सौत्रो धातुः । तस्मात् शतरि रूपम् । 'वेः स्कभ्नातेर्नित्यम्' (पा. सू. ८. ३. ७७) इति षत्वम् । शतृप्रत्ययस्वरः । जनित्री । ऋन्नेभ्यो ङीप् । 'जनिता मन्त्रे' इति निपातनात् णिलोपः । 'वा छन्दसि' इति सवर्णदीर्घः । आसीनाः । 'आस उपवेशने' इत्यस्मात् शानच् । 'ईदासः' (पा. सू. ७. २. ८३) इतीकारः । शानचो लसार्वधातुकस्वरे कृते धातुस्वरः । मिन्वन् । 'डुमिञ् प्रक्षेपणे' इत्यस्य लङि रूपम् । निघातः ॥

म॒ही यदि॑ धि॒षणा॑ शि॒श्नथे॒ धात्स॑द्यो॒वृधं॑ वि॒भ्वं१॒॑ रोद॑स्योः ।
गिरो॒ यस्मि॑न्ननव॒द्याः स॒मीची॒र्विश्वा॒ इन्द्रा॑य॒ तवि॑षी॒रनु॑त्ताः ॥ १३ ॥

म॒ही । यदि॑ । धि॒षणा॑ । शि॒श्नथे॑ । धात् । स॒द्यः॒ऽवृध॑म् । वि॒ऽभ्व॑म् । रोद॑स्योः ।
गिर॑ः । यस्मि॑न् । अ॒न॒व॒द्याः । स॒म्ऽई॒ची॒ः । विश्वा॑ः । इन्द्रा॑य । तवि॑षीः । अनु॑त्ताः ॥१३॥

---

१. ख-ग-च-ज-त-भ-ल-स-स्रवतेः । २. ल-उत्तमम् । ३. ख-ग-च-न-भ-स-समुपार्जितकर्माणः । ४. ख-ग-घ-ज-ण-अनुतिष्ठन्तः। ५. ख-ग-घ-च-ज-ण-न-भ-अङ्गिरसः । ६. ख-ग-च-ज-ण-न-फ-भ-स्तम्भः साधनेन । ७. ख-ग-च-ज-ण-रोदसी । ८. त-ऊर्ध्वलोके ।

मही महती धिषणा अस्माभिः क्रियमाणेन्द्रविषया स्तुतिः रोदस्योः शिश्नथे द्यावापृथिव्योरन्योन्यविश्लेषाय सद्योवृधं तदानीमेव वर्धमानं विभ्वं विभुं तयोर्धारणसमर्थं साधनं यदि धात् अकरोत् ततस्तत्र वर्तमाने यस्मिन् इन्द्रे अनवद्याः दोषरहिताः गिरः स्तुतिलक्षणा वाचः समीचीः संगता भवन्ति । इन्द्राय इति विभक्तिव्यत्ययः । तादृशस्येन्द्रस्य विश्वाः तविषीः सर्वाणि बलानि अनुत्ताः अपरप्रेषितानि स्वभावसिद्धान्येव ॥ धिषणा । 'ञिधृषा प्रागल्भ्ये'। धृषेः 'धिष च संज्ञायाम्' इति क्युप्रत्ययः । धातोर्धिषादेशः । धृष्णोत्यनयेति धिषणा स्तुतिः । प्रत्ययस्वरः । शिश्नथे । श्नथ हिंसार्थः । अस्मात् क्विप् । 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वात् शप् । तस्य 'बहुलं छन्दसि' इति श्लुः । 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । धातुस्वरः । धात् । दधातेश्छान्दसे लुङि रूपम् । यद्वियोगादनिघातः । विभ्वम् । भवतेः क्विप् । 'छन्दस्युभयथा' इति यणादेशः । 'उदात्तस्वरितयोर्यणः°' इति स्वरितत्वम् । अनुत्ताः । 'णुद प्रेरणे' इत्यस्य नञ्पूर्वस्य[1] निष्ठायां 'नसत्तनिषत्तानुत्त°' इत्यादिना निपातनान्निष्ठातकारस्य नत्वाभावः[1] । नञः[2] स्वरः[2] ॥

मह्या ते सख्यं वश्मि शक्तीरा वृत्रघ्ने नियुतो यन्ति पूर्वीः ।
महि स्तोत्रमव आगन्म सूरेरस्माकं सु मघवन्बोधि गोपाः ॥ १४ ॥

महि । आ । ते । सख्यम् । वश्मि । शक्तीः । आ । वृत्रऽघ्ने । निऽयुतः । यन्ति । पूर्वीः ॥
महि । स्तोत्रम् । अवः । आ । अगन्म । सूरेः । अस्माकम् । सु । मघऽवन् । बोधि । गोपाः ॥ १४ ॥

हे इन्द्र ते तव महि महत् सख्यम् आ वश्मि आकामये । शक्तीः त्वत्संबन्धीनि दानानि चाकामये । वृत्रघ्ने वृत्रासुरस्य हन्त्रे तुभ्यं पूर्वीः बह्व्यः[3] नियुतः वडवाः आ यन्ति वहनार्थमागच्छन्ति । सूरेः विदुषस्तव महि महत् स्तोत्रम् अवः हविर्लक्षणमन्नं च आ अगन्म प्रापयामः[4] । हे[4] मघवन् इन्द्र तादृशस्त्वं अस्माकं सु[5] सुष्ठु गोपाः पालयिता भवामीति बोधि बुध्यस्व ॥ सख्यम् । 'सख्युर्यः' इति भावार्थे यप्रत्ययः । प्रत्ययस्वरः । वश्मि । 'वश कान्तौ'। लटि रूपम् । नियुतः । 'यु मिश्रणे'। क्विप् । नितरां युवन्ति मिश्रयन्त्यात्मानं रथेष्विति नियुतो वडवाः । अगन्म । गमेर्लङ्युत्तमबहुवचने 'बहुलं छन्दसि' इति शपो लुक् । 'म्वोश्च' इति मकारस्य नकारः । निघातः । बोधि । बुधेर्लोटि हेर्धौ रूपम् । निघातः । गोपाः । 'गुपू रक्षणे'। 'गुपूधूप°' इत्यादिना आयप्रत्ययः । तदन्तात् क्विप् । अतोलोपयलोपौ । प्रत्ययस्वरः ॥

महि क्षेत्रं पुरु श्चन्द्रं विविद्वानादित्सखिभ्यश्चरथं समैरत् ।
इन्द्रो नृभिरजनद्दीद्यानः साकं सूर्यमुषसं गातुमग्निम् ॥ १५ ॥

महि । क्षेत्रम् । पुरु । चन्द्रम् । विविद्वान् । आत् । इत् । सखिऽभ्यः । चरथम् । सम् । ऐरत् ।
इन्द्रः । नृऽभिः । अजनत् । दीद्यानः । साकम् । सूर्यम् । उषसम् । गातुम् । अग्निम् ॥ १५ ॥

---

१. च-फ-नञ्पूर्वस्य नुट्विदेति विकल्पनात् निष्ठातकारस्य नत्वाभावः। २. च-ण-न-भ-ल-स-नञ्स्वरः। ३. ख-ग-च-ज-ण-ब्रह्वयोऽपि । ४. ख-ग-च-ज-ण-न-फ-भ-याचामहे । ५. ख-ग-च-ज-ण-भ-'सु' नास्ति ।

योऽयम्[1] इन्द्रः ᵛमहि महत् ᵛक्षेत्रं केदारादि ᵛपुरु प्रभूत ᵛचन्द्रं हिरण्यं च[2] ᵛविविद्वान् अर्थिभ्यः ᵛसखिभ्यः अस्मभ्यं लम्भयन् । ᵛआदित् अनन्तरं ᵛचरथं चरात्मकं गवादिकं च ᵛसमैरत् सम्यक् प्रैरयत् । दत्तवानित्यर्थः । ᵛदीद्यानः दीप्यमानः सोऽयम् ᵛइन्द्रः ᵛनृभिः नेतृभिः कर्मसहायभूतैर्मरुद्भिः ᵛसाकं सहितः सन् ᵛसूर्यं कालस्य निर्वाहकम्[3] आदित्यम् ᵛउषसम् उषःकालं ᵛगातुम् । गायन्ति स्तुवन्त्यस्यामिन्द्रादिदेवानिति गातुः पृथिवी । ताम् । ᵛअग्निम् अग्निहोत्रादिकर्मसाधनभूतम् आहवनीयादिलक्षणमग्निं च ᵛअजनत् अजनयत् ॥ पुरु चन्द्रम् । संहितायां 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुडागमः । तस्य श्चुत्वेन शकारः । पदकाले नास्ति सुडागमः । पुरु । कुप्रत्ययस्वरः । चन्द्रम् । रक् । प्रत्ययस्वरः । चरथम् । चर गत्यर्थः । अस्मादौणादिकोऽथप्रत्ययः । प्रत्ययस्वरः । ऐरत् । 'ईर गतौ' इत्यस्य लङि 'आडजादीनाम्' इत्याडागमः । निघातः । अजनत् । जनेर्ण्यन्तस्य लङि रूपम् । 'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति णिलुक् । गातुम् । 'गै शब्दे' । 'गापायाहिभ्यः' इति तुप्रत्ययः । प्रत्ययस्वरः ॥ ॥ ७ ॥

अपश्चिदेष विभ्वो३ दमूनाः प्र सध्रीचीरसृजद्विश्वश्चन्द्राः ।
मध्वः पुनानाः कविभिः पवित्रैर्द्युभिर्हिन्वन्त्यक्तुभिर्धनुत्रीः ॥ १६ ॥

अपः । चित् । एषः । विऽभ्वः । दमूनाः । प्र । सध्रीचीः । असृजत् । विश्वऽचन्द्राः ।
मध्वः । पुनानाः । कविऽभिः । पवित्रैः । द्युऽभिः । हिन्वन्ति । अक्तुऽभिः । धनुत्रीः ॥१६॥

ᵛदमूनाः । दान्तं मनो यस्यासौ दमूनाः दान्तमनाः[4] । यद्वा दाम्यतीति दमूनाः । उपरत इत्यर्थः । स ᵛएषः एवेन्द्रः[5] ᵛविभ्वः व्याप्तः ᵛसध्रीचीः परस्परसंगताः[6] ᵛविश्वश्चन्द्राः विश्वस्याह्लादयित्रीः । विश्वस्याह्लादो याभ्यस्ता इति वा । एवंभूताः ᵛअपः ᵛप्र ᵛअसृजत् सृष्टवान् । सृष्टाश्च ता आपः ᵛमध्वः माधुर्योपेतान् सोमान्[7] ᵛकविभिः ᵛपवित्रैः अग्निवायुसूर्यैः ᵛपुनानाः शोधयित्र्यः ᵛधनुत्रीः सर्वस्य जगतः प्रीणयित्र्यः सत्यः[8] ᵛद्युभिः दिवसैः ᵛअक्तुभिः[9] ᵛचित् रात्रिभिः च[9] ᵛहिन्वन्ति । रात्रिंदिवं[10] सर्वं जगत् स्वस्वव्यापारप्रवणं कुर्वन्तीत्यर्थः ॥ दमूनाः । 'दमु उपशमे' । 'दमेरूनसिः' इत्यूनसिप्रत्ययः । दाम्यतीति दमूनाः । यद्वा दान्तशब्दस्य दभावो मनसो मकारात् परस्याकारस्य ऊकारश्छान्दसः । असृजत् । 'सृज विसर्गे' । हिन्वन्ति । 'हि गतौ' । निघातः । धनुत्रीः । 'धन धान्ये' इत्यस्मात् अशित्रादित्वात् उत्रप्रत्ययः । शार्ङ्गरवादिषु ङीन् द्रष्टव्यः । निस्स्वरः ॥

---

१. ख-ग-च-ज-फ–सोऽयम्; त–अयम् । २. ख-ग-घ-च-ज-ण-न-फ-भ-स–'च' नास्ति । ३. ख-ग-च-फ-भ–निवासम् । ४. ख-ग-च-ज-ण-फ-भ–'दान्तमनाः' नास्ति । ५. ख-ग-च-ज-ण-न-भ-स–देवेन्द्रः । ६. ख-ग-च-ज-ण-त-न-भ–परस्परं संगताः । ७. च-त–'सोमान्' नास्ति । ८. त-न-स–'सत्यः' नास्ति । ९. न-ल-स–अक्तुभी रात्रिभिः । १०. ग-स–रात्रिदिवम्; च-न-ल–रात्रिदिवसम् ।

अनु कृष्णे वसुधिती जिहाते उभे सूर्यस्य मंहना यजत्रे ।
परि यत्ते महिमानं वृजध्यै सखाय इन्द्र काम्या ऋजिप्याः ॥ १७ ॥

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । जिहाते इति ।
उभे इति । सूर्यस्य । मंहना । यजत्रे इति ।
परि । यत् । ते । महिमानम् । वृजध्यै । सखायः । इन्द्र । काम्याः । ऋजिप्याः ॥ १७ ॥

हे इन्द्र सूर्यस्य सुष्ठु जगतः प्रेरकस्य तव मंहना महत्त्वेन सामर्थ्येन वसुधिती वस्तव्यपदार्थधारणोपेते यजत्रे यजनार्हे ते उभे कृष्णे अहोरात्रे अनु जिहाते पुनःपुनरावृत्य वर्तेते । किंच । ऋजिप्याः ऋजुगतयः सखायः ते मित्रभूताः काम्याः कमनीया मरुतः वृजध्यै कर्मविघ्नकारिणामसुराणां वर्जनाय परिभवाय । यत् यस्य ते तव महिमानं सामर्थ्यमनुसृत्य परि परितः प्रभवन्ति ॥ जिहाते । ‘ ओहाङ् गतौ ’ । जुहोत्यादिः । ‘ भृञामित् ’ इत्यभ्यासस्येत्वम् । निघातः । मंहना । ‘ महि वृद्धौ ’ । ल्युट् । लित्स्वरः । वृजध्यै । ‘ वृजी वर्जने ’ । तुमर्थे कध्यैप्रत्ययः । कित्वाद्गुणाभावः । प्रत्ययस्वरः । काम्याः । कमेर्ण्यन्तस्य ‘ अचो यत् ’ इति यत्प्रत्ययः । ‘ यतोऽनावः ’ इत्याद्युदात्तत्वम् । ऋजिप्याः । ‘ ओप्यायी वृद्धौ ’ । क्विप् । ‘ लोपो व्योर्वलि ’ इति यलोपः । पूर्वपदस्योकारस्येकारो व्यत्ययेन । बहुवचनस्यैकवचनं छान्दसम् । कृदुत्तरपदप्रकृतिस्वरः ॥

पतिर्भव वृत्रहन्त्सूनृतानां गिरां विश्वायुर्वृषभो वयोधाः ।
आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः सरण्यन् ॥ १८ ॥

पतिः । भव । वृत्रऽहन् । सूनृतानाम् । गिराम् । विश्वऽआयुः । वृषभः । वयःऽधाः ।
आ । नः । गहि । सख्येभिः । शिवेभिः । महान् । महीभिः । ऊतिऽभिः । सरण्यन् ॥ १८ ॥

हे वृत्रहन् इन्द्र विश्वायुः । विश्वं संपूर्णमायुर्यस्यासौ विश्वायुः । अविनाशी वृषभः कामानां वर्षिता वयोधाः अन्नस्य दाता तादृशस्त्वं सूनृतानां गिराम् अस्माभिः क्रियमाणानां प्रियतमानां वाचां पतिः स्वामी भव । सरण्यन् सरणं यज्ञार्थं[1] गमनमिच्छन् महान् महीभिः महतीभिः ऊतिभिः रक्षाभिः शिवेभिः कल्याणैः सख्येभिः फलप्रदानरूपोपकारलक्षणैः सख्यैश्च सहितस्त्वं नः अस्मान् प्रति आ गहि यज्ञार्थमागच्छ ॥ सूनृतानाम् । ‘ ऊन परिहाणे ’ । सुतरामूनयत्यप्रियमिति सूनिति प्रियमुच्यते । तच्च तदृतं[2] सत्यं चेति सूनृतम् । ‘ परादिश्छन्दसि बहुलम् ’ इत्युत्तरपदाद्युदात्तत्वम्[3] । वयोधाः । वयस्युपपदे दधातेर्विच् । गहि । गमेर्लोटि ‘ बहुलं छन्दसि ’ इति शपो लुक् । सेर्हिरादेशः । अपिच्च । तस्य ङित्त्वात् ‘ अनुदात्तोपदेश० ’ इत्यादिना मलोपः । तस्यासिद्धत्वात् ‘ अतो हेः ’ इति हेर्लुक् न भवति । निघातः । सरण्यन् । सरणशब्दात् क्यच् । एकादेशस्वरः ॥

---

१. त–यज्ञार्हम् । २. ख-ग-च-ज-ण-त-न-भ-स–तदृतं च । ३. ख-ग-च-ज-ण-न-भ–इत्युत्तरपदोदात्तत्वम् ।

तमङ्गिरस्वन्नमसा सपर्यन्नव्यं कृणोमि सन्यसे पुराजाम् ।
द्रुहो वि याहि बहुला अदेवीः स्वश्च नो मघवन्त्सातये धाः ॥ १९ ॥

तम् । अङ्गिरस्वत् । नमसा । सपर्यन् । नव्यम् । कृणोमि । सन्यसे । पुराऽजाम् ।
द्रुहः । वि । याहि । बहुलाः । अदेवीः ।
स्वरिति स्वः । च । नः । मघऽवन् । सातये । धाः ॥ १९ ॥

हे इन्द्र अङ्गिरस्वत् अङ्गिरस इव नमसा स्तोत्रेण सपर्यन् पूजयन् विश्वामित्रोऽहं तं तादृशमहिमोपेतं पुराजां पुरातनं त्वां सन्यसे संभजनाय नव्यं कृणोमि। स्तोतव्यतयाभिनवं करोमि। अदेवीः तमोरूपत्वेनाद्योतमानान् बहुलाः बहून् द्रुहः द्रोग्धॄन् शत्रुभूतान् राक्षसान् वि याहि विशेषेण मृतिं प्रापय । हे मघवन् इन्द्र नः अस्मभ्यं स्वः स्वं[1] धनं[1] च सातये संभजनार्थं धाः धेहि ॥ अङ्गिरस्वत् । अङ्गिरस इव । 'तेन तुल्यम्' इति वतिप्रत्ययः । 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति भसंज्ञायां सकारस्य रुत्वाभावः। सपर्यन् । सपरशब्दः[2] कण्ड्वादिः। नव्यम् । 'णु स्तुतौ' इत्यस्मात् 'अचो यत्' इति यत्प्रत्ययः । 'धातोस्तन्निमित्तस्य' इति वान्तादेशः। 'यतोऽनावः' इत्याद्युदात्तत्वम् । कृणोमि । कृवेर्लटि रूपम् । सन्यसे । सनतेर्भावे क्विप् । 'यसु प्रयत्ने'। अस्मात् क्विप् । सनः संभजनस्य यसे यत्नाय । संभजनार्थमित्यर्थः। पुराजाम्। जनेर्विटि आत्वे रूपम्। याहि । यातेर्लोटि रूपम् । स्वः । 'स्वरादिनिपातमव्ययम्' इत्यव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इति सुपो लुक् । सातये । 'षण[3] संभक्तौ'। भावे क्तिन् । 'जनसन०' इत्यादिना आत्वम् । 'ऊतियूति०' इत्यादिना निपातनादुदात्तः ॥

मिहः पावकाः प्रतता अभूवन्त्स्वस्ति नः पिपृहि पारमासाम् ।
इन्द्र त्वं रथिरः पाहि नो रिषो मक्षूमक्षू कृणुहि गोजितो नः ॥ २० ॥

मिहः । पावकाः । प्रऽतताः । अभुवन् । स्वस्ति । नः । पिपृहि । पारम् । आसाम् ।
इन्द्र । त्वम् । रथिरः । पाहि । नः । रिषः । मक्षुऽमक्षु । कृणुहि । गोऽजितः । नः ॥२०॥

हे इन्द्र ते पावकाः पापानां शोधयित्र्यः मिहः सेचनसाधनान्यापः प्रतताः लोके प्रकर्षेण विस्तृताः अभूवन् । आसाम् अपां स्वस्ति विनाशरहितं पारं तीरं नः अस्मदर्थं पिपृहि जलैः संपूर्णं कुरु । जलमवारपारीणं कुर्वित्यर्थः । रथिरः रथवान् त्वं रिषः हिंसकात् शत्रोः सकाशात् नः अस्मान् पाहि पालय । अनन्तरं नः अस्मान् मक्षुमक्षु[4] अतिशीघ्रं[4] गोजितः गवादिपशूनां जेतॄन् कृणुहि कुरु। वृष्टिप्रदानेन तटाकादिजलाशयान् संपूर्णान् कृत्वा गवादिधनयुक्तान् कुर्विति भावः ॥ अभूवन् । 'भू सत्तायाम्' इत्यस्य लुङि रूपम्। निघातः । पिपृहि । 'पॄ पालनपूरणयोः'।

१. ख-ग-च-ज-ण-न-भ-स–स्वधनम् । २. ख-ग-ज-ण-न-भ-स–सपरः; च–सपर पूजायाम् । ३. स–वन षण । ४. ख-ग-च-न-स–मक्षु शीघ्रम्; भ–मक्षुमक्षु शीघ्रम् ।

जुहोत्यादिः । ‘ अर्तिपिपर्त्योश्च ’ इत्यभ्यासस्येत्वम् । हेङित्त्वादगुणः । निघातः । रथिरः । मत्वर्थे ‘ मेधारथाभ्यामिरन्निरचौ ’ इतीरच्प्रत्ययः । रिषः । ‘ रिष हिंसायाम् ’ । क्विप् । ‘ सावेकाचः° ’ इति विभक्तेरुदात्तत्वम् । मक्षूमक्षू । ‘ नित्यवीप्सयोः’ इति द्विर्वचनम् । संहितायाम् ‘ ऋचि तुनुघमक्षुतङ्° ’ इति दीर्घः ॥

अदेदिष्ट वृत्रहा गोपतिर्गा अन्तः कृष्णाँ अरुषैर्धामभिर्गात् ।
प्र सूनृता दिशमान ऋतेन दुरश्च विश्वा अवृणोदप स्वाः ॥ २१ ॥

अदेदिष्ट । वृत्रऽहा । गोऽपतिः । गाः । अन्तरिति । कृष्णान् । अरुषैः । धामऽभिः । गात् ।
प्र । सूनृताः । दिशमानः । ऋतेन । दुरः । च । विश्वाः । अवृणोत् । अप । स्वाः ॥२१॥

vवृत्रहा वृत्रस्य हन्ता vगोपतिः गवां स्वामी सन्निन्द्रः vगाः vअदेदिष्ट अस्मभ्यं दिशतु । तथा vकृष्णान् कर्मविघ्नकारिणोऽसुरान् vअरुषैः आरोचमानैः[1] vधामभिः तेजोभिः vअन्तर् अन्तर्धानं विनाशं vगात् गमयतु । तथा vसूनृताः प्रियतमा गाः vऋतेन प्रतारणवर्जितेन[2] सत्येन वाक्येन vप्र vदिशमानः अङ्गिरोभ्यः प्रदिशन्निन्द्रः vविश्वाः सर्वाणि vदुरः गवां स्वेच्छया निर्गमनद्वाराणि vस्वाः स्वकीया गाः vच vअप vअवृणोत् । व्रजे गाः स्थापयित्वा तानि द्वाराण्याच्छादितवानित्यर्थः ॥ अदेदिष्ट । ‘ दिश अतिसर्जने ’ इत्यस्मात् यङ्लुकि लङि व्यत्ययेनात्मनेपदम् । अडागमस्वरः । गोपतिः । ‘ पत्यावैश्वर्ये ’ इति पूर्वपदप्रकृतिस्वरः । गात् । ‘ इण् गतौ ’ । अन्तर्भावितण्यर्थः । दिशमानः । दिशेः व्यत्ययेन शानच् । तस्य लसार्वधातुकस्वरेणानुदात्तत्वे शस्वरः । अवृणोत् । ‘ वृञ् वरणे ’ इत्यस्य लङि रूपम् ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ २२ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥२२॥

व्याख्यातेयमृक् ॥ ॥ ८ ॥

‘ इन्द्र सोमं सोमपते ’ इति सप्तदशर्चं तृतीयं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । अनुक्रान्तं च— ‘ इन्द्र सोमं व्यूना ’ इति । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि मरुत्वतीये ‘ इन्द्र सोमम् ’ इतीदं सूक्तं निविद्धानीयम्[3] । ‘ द्वितीयस्य ’ इति खण्डे सूत्रितम्[4]— ‘ इन्द्र सोमं या त ऊतिरवमेति मध्यंदिनः ’ ( आश्व. श्रौ. ७. ६ ) इति । गोसवविवधयोरपि मरुत्वतीयशस्त्र एतत्सूक्तम् । सूत्रितं च— ‘ इन्द्र

---

१. ख-ग-घ-च-ज-ण-त-न-प-फ-भ-स—आरोचनैः । २. ख-ग-च-ण-भ—प्रतारणावर्जितेन । ३. ख-न-च-ज-ण-त-न-भ-स—निविद्धानम् । ४. ख-ग-च-ज-ण-न-भ—सूत्रितं च ।

सोममेतायामेति मध्यंदिनः’ ( आश्व. श्रौ. ९. ८ ) इति । उक्थ्यिद्वलभिदोरपि मरुत्वतीय एतत्सूक्तम् । सूत्रितं च—‘ इन्द्र सोममिन्द्रः पूर्भिदिति मध्यंदिनः ’ ( आश्व. श्रौ. ९. ८ ) इति ॥

**इन्द्र सोमं सोमपते पिबेमं माध्यंदिनं सवनं चारु यत्ते ।**

**प्रप्रुथ्या शिप्रे मघवन्नृजीषिन्विमुच्या हरी इह मादयस्व ॥ १ ॥**

इन्द्र । सोमम् । सोमऽपते । पिब । इमम् । माध्यंदिनम् । सवनम् । चारु । यत् । ते ।

प्रऽप्रुथ्य । शिप्रे इति । मघऽवन् । ऋजीषिन् । विऽमुच्य । हरी इति । इह । मादयस्व ॥१॥

विश्वामित्रो ब्रूते । ˇसोमपते सोमस्याधिपते हे ˇइन्द्र ˇइमम् अस्माभिर्माध्यंदिने सवने क्रियमाणं ˇसोमं सोमरसं ˇपिब । ˇयत् यस्मात् ˇते त्वदर्थं क्रियमाणं ˇमाध्यंदिनं मध्यंदिनसंबन्धि ˇसवनं निष्केवल्याख्यं शस्त्रं ˇचारु रमणीयं वर्तते । ˇमघवन् धनवन् ˇऋजीषिन् । ऋजीषशब्देन गतसारं सोमद्रव्यमुच्यते । तद्वन् हे इन्द्र ˇहरी रथे योजितावश्वौ रथात् ˇविमुच्य ˇशिप्रे हनू ˇप्रप्रुथ्य अन्नत्येन ग्रासेन पूरयित्वा ˇइह देवयजनदेशे ˇमादयस्व तावश्वौ हर्षय ॥ प्रप्रुथ्य । ‘ प्रोथृ पर्याप्तौ ’ इत्यस्य ल्यपि रूपम् । ह्रस्वश्छान्दसः । लित्स्वरः । ऋजीषिन् । ‘ अर्ज षर्ज अर्जने ’ इत्यस्मात् ‘ अर्जेश्च ऋजि च ’ ( उ. सू. ४. ४६८ ) इतीषन्प्रत्ययः ऋजि इत्यादेशश्च धातोः । अर्ज्यत इत्यृजीषम् । तदस्यास्ति इति इनिप्रत्ययः । आमन्त्रितत्वान्निघातः । मादयस्व । मदि स्तुत्यादिषु । हेतुमण्णिच्[1] । निघातः ॥

**गवाशिरं मन्थिनमिन्द्र शुक्रं पिबा सोमं ररिमा ते मदाय ।**

**ब्रह्मकृता मारुतेना गणेन सजोषा रुद्रैस्तृपदा वृषस्व ॥ २ ॥**

गोऽआशिरम् । मन्थिनम् । इन्द्र । शुक्रम् । पिब । सोमम् । ररिम । ते । मदाय ।

ब्रह्मऽकृता । मारुतेन । गणेन । सऽजोषाः । रुद्रैः । तृपत् । आ । वृषस्व ॥ २ ॥

हे ˇइन्द्र ˇगवाशिरं गव्यस्य पयस आशीर्मिश्रणं यस्मिन् तं ˇसोमम् । अपि च ˇमन्थिनं मन्थसंयुक्तं ˇशुक्रम् अभिनवं यद्वा शुक्रामन्थिग्रहे वर्तमानम् । एवं त्रिषु सवनेषु वर्तमानमिमं सोमं ˇपिब । ˇते तव ˇमदाय हर्षाय ˇररिम तं सोमं वयं प्रयच्छामः । ˇमारुतेन । मरुतां गणो मारुतः । स च ब्रह्मकृत् । ब्रह्म स्तोत्रं करोतीति ब्रह्मकृत्[2] । इन्द्रस्तोत्रं कुर्वाणेन मारुतेन ˇगणेन ˇरुद्रैः एकादशसंख्याकैः रुद्रैश्च ˇसजोषाः संगतस्त्वं ˇतृपत् सोमपानेन तृप्यन् ˇआ ˇवृषस्व । तमिमं सर्वतो जठरे सिञ्च धारय ॥ गवाशिरं । श्रीणातेः[3] आङ्पूर्वात् क्विपि ‘ अपस्पृधेथामानृचुः° ’ इत्यादिना निपातनात् आशिरादेशः[4] । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । पिबा[5] । ‘ द्व्यचोऽतस्तिङः ’ इति संहितायां दीर्घः ।

---

१. ल-स—हेतुमति णिच् । २. ख-ग-च-ज-ण-न-भ-स—ब्रह्मकृता । ३. ख-ग-च-ज-ण-न-भ—श्रणातेः । ४. ल—शिरादेशः । ५. ख-ग-च-ज-ण-त-न-भ-स—पिब ।

ररिम। रातेः छान्दसे[1] वर्तमाने लिटि रूपम्। असमानवाक्यत्वान्निघाताभावः। 'आगमा अनुदात्ताः' इति इटोऽनुदात्तत्वात् प्रत्ययस्वरः। तृपत्। 'तृप प्रीणने'। तुदादिः। आगमानुशासनस्यानित्यत्वात् नुमभावः। वृषस्व। 'वृषु सेचने'। व्यत्ययेन शः॥

ये ते शुष्मं ये तविषीमवर्धन्नर्चन्त इन्द्र मरुतस्त ओजः।

माध्यंदिने सवने वज्रहस्त पिबा रुद्रेभिः सगणः सुशिप्र ॥ ३ ॥

ये। ते। शुष्मम्। ये। तविषीम्। अवर्धन्। अर्चन्तः। इन्द्र। मरुतः। ते। ओजः।

माध्यंदिने। सवने। वज्रऽहस्त। पिब। रुद्रेभिः। सऽगणः। सुऽशिप्र ॥ ३ ॥

हे इन्द्र ये मरुतः ते तव शुष्मं शत्रूणां[2] शोषकं[2] तेजः ये च मरुतः तविषीं बलं च अवर्धन्[3] युद्धसहकारितयावर्धयन् ते मरुतः अर्चन्तः त्वां स्तुवन्तः सन्तः ते तव ओजः युद्धसामर्थ्यम्[4] अवर्धयन्। वज्रहस्त वज्रयुक्तः[5] हस्तः[5] यस्येति तादृश सुशिप्र शोभनहनो। 'शिप्रे हनू नासिके वा' इति यास्कः। हे इन्द्र रुद्रेभिः। रोदयन्ति शत्रूनिति रुद्राः मरुतः। तैः सगणः त्वं माध्यंदिने सवने सोमं पिब॥ अवर्धन्। 'वृधु वर्धने'। अन्तर्भावितण्यर्थः। यद्वृत्तयोगादनिघातः। माध्यंदिने। उत्सादित्वादञ्। ञित्त्वादाद्युदात्तः॥

त इन्न्वस्य मधुमद्विविप्र इन्द्रस्य शर्धो मरुतो य आसन्।

येभिर्वृत्रस्येषितो विवेदामर्मणो मन्यमानस्य मर्म ॥ ४ ॥

ते। इत्। नु। अस्य। मधुऽमत्। विविप्रे। इन्द्रस्य। शर्धः। मरुतः। ये। आसन्।

येभिः। वृत्रस्य। इषितः। विवेद। अमर्मणः। मन्यमानस्य। मर्म ॥ ४ ॥

ये मरुतः इन्द्रस्य शर्धः बलभूताः आसन् ते इत् त एव मरुतः अस्य। द्वितीयार्थे षष्ठी। इममिन्द्रं मधुमत्। तव सहाया वयमास्महे त्वं युद्धमभिगच्छेति माधुर्योपेतं वाक्यं यथा भवति तथा विविप्रे नु क्षिप्रं प्रैरयन्[6]। येभिः यैर्युद्धसहायैर्मरुद्भिः इषितः प्रेरित इन्द्रः अमर्मणः परैः अविदितमर्मस्थानस्य अत एव मन्यमानस्य न कोऽपि मम हन्तेत्यभिमन्यमानस्य वृत्रस्य असुरस्य मर्म यस्मिन् स्थाने प्रहृतौ सत्यां स मरिष्यति तादृशं स्थानं विवेद अज्ञासीत्[7]॥ विविप्रे। 'विप क्षेपणे' इत्यस्य लिटि व्यत्ययेनात्मनेपदम्। इरेचः 'इरयो रे' इति रे इत्यादेशः। निघातः। आसन्। 'अस भुवि' इत्यस्य लङि रूपम्। यद्वृत्तयोगान्निघाताभावः। विवेद। 'विद ज्ञाने' इत्यस्य लिटि रूपम्। लित्स्वरः। मर्म। 'मृङ् प्राणत्यागे' इत्यस्मादौणादिको मनिन्। नित्स्वरः॥

---

१. च-ज-ण-भ—छन्दसि। २. ख-ग-घ-च-ज-ण-न-प-फ-भ-स—'शत्रूणां शोषकं' नास्ति। ३. ख-ग-घ-च-ज-ण-फ-भ—अवर्धन् अवर्धयन्। ४. च-फ—विविधसामर्थ्यम्। ५. स—वज्रयुक्तौ हस्तौ। ६. च—अभिप्रैरयन्। ७. फ—ज्ञातवान्।

मनुष्वदिन्द्र सवनं जुषाणः पिबा सोमं शश्वते वीर्याय ।
स आ ववृत्स्व हर्यश्व यज्ञैः सरण्युभिरपो अर्णा सिसर्षि ॥ ५ ॥

मनुष्वत् । इन्द्र । सवनम् । जुषाणः । पिब । सोमम् । शश्वते । वीर्याय ।
सः । आ । ववृत्स्व । हरिऽअश्व । यज्ञैः । सरण्युऽभिः । अपः । अर्णा । सिसर्षि ॥ ५ ॥

हे इन्द्र मनुष्वत् मनोर्यज्ञमिव ममेदं सवनं यज्ञं जुषाणः सेवमानस्त्वं शश्वते शाश्वताय वीर्याय परपरिभवलक्षणाय सामर्थ्यायेमं सोमं पिब । हे हर्यश्व हरितवर्णाश्वोपेत[1] सः तादृशस्त्वं यज्ञैः यजनीयैः मरुद्भिः साकम् आ ववृत्स्व आगच्छ । किंच सरण्युभिः एकश्रुतिमन्मन्त्रानात्मन इच्छद्भिः यद्वा सरण्युभिः सरणशीलैर्मरुद्भिः सहितस्त्वम् अपः अन्तरिक्षस्थितान्युदकानि अर्णा पार्थिवान्युदकानि सिसर्षि प्रापय । यद्वा अपः । पञ्चम्यन्तमेतत्पदम् । अपो व्याप्तादन्तरिक्षात् सकाशात् अर्णांसि प्रापय[2] ॥ ववृत्स्व । ' वृतु वर्तने ' । व्यत्ययेन शपः श्लुः । लोटि रूपम् । सरण्युभिः । रण शब्दार्थः । क्विप् । समानो रणो ध्वनिर्येषां ते सरणा मन्त्राः । तानिच्छन्तः । सुपः क्यच् । ' क्यात्° ' इति उप्रत्ययः । यद्वा ' सृ गतौ ' । ' सृयुवचिभ्योऽन्युजागूजक्नुचः ' ( उ. सू. ३. ३६१ ) इत्यन्युच्प्रत्ययः । ' रषाभ्याम्° ' ( पा. सू. ८. ४. १ ) इति णत्वम् । चित्त्वादन्तोदात्तः । अपः । ' आप्लृ व्याप्तौ ' । ' आप्नोतेः क्विप् ह्रस्वश्च ' इति क्विप् धातोर्ह्रस्वश्च । ' सावेकाचः° ' इति विभक्तेरुदात्तत्वम् । सिसर्षि । ' सृ गतौ ' । छान्दसो जुहोत्यादिः । ' बहुलं छन्दसि ' इत्यभ्यासस्येत्वम् ॥　　॥ ९ ॥

त्वमपो यद्ध वृत्रं जघन्वाँ अत्याँइव प्रासृजः सर्तवाजौ ।
शयानमिन्द्र चरता वधेन वव्रिवांसं परि देवीरदेवम् ॥ ६ ॥

त्वम् । अपः । यत् । ह । वृत्रम् । जघन्वान् । अत्यान्ऽइव । प्र । असृजः । सर्तवै । आजौ ।
शयानम् । इन्द्र । चरता । वधेन । वव्रिऽवांसम् । परि । देवीः । अदेवम् ॥ ६ ॥

हे इन्द्र त्वं देवीः देवनशीलाः अपः परि वव्रिवांसं परित आवृत्य वर्तमानमत एव अदेवं बहूदकतयास्वच्छत्वेनाप्रतिभासमानं शयानम् एकत्र निश्चलतया वर्तमानं वृत्रं मेघं यत् यदा चरता तमुद्दिश्य वर्तमानेन वधेन युद्धेन जघन्वान् हतवानसि तदा त्वम् आजौ युद्धे सर्तवै अतिवेगगमनाय अत्यानिव यथाश्वान्[3] प्रेरयसि तथा त्वमपः उदकान्यन्तरिक्षादाकाशात् प्रासृजः ह प्रकर्षेण मेघभेदनं कृत्वासृजः खलु । तं यजाम इत्युत्तरेणान्वयः ॥ जघन्वान् । ' हन हिंसागत्योः ' इत्यस्य क्वसौ ' विभाषा गमहनविदविशाम् ' इतीटो विकल्पितत्वादत्र इडभावः । ' अभ्यासाच्च ' इति हकारस्य घत्वम् । प्रत्ययस्वरः । असृजः । ' सृज विसर्गे ' । शविकरणी[4] । यद्योगादनिघातः । सर्तवै । ' सृ गतौ ' । तुमर्थे तवैप्रत्ययः । ' अन्तश्च तवै युगपत् ' इति धातोः प्रत्ययस्य चोदात्तत्वम् ।

---

१. न-ल-स-' हरितवर्णाश्वोपेत ' नास्ति ।　२. ख-ग-ज-ण-भ-स-प्रापय च ।　३. ख-प-फ-भ-यथा त्वमश्वान् ।　४. च-फ-शविकरणः ।

आजौ । ‘ अज गतिक्षेपणयोः ’ । ‘ अज्यतिभ्यां च ’ ( उ. सू. ४. ५७० ) इति इण्प्रत्ययः । णित्त्वादुपधावृद्धिः । अजन्ति गच्छन्त्यस्मिन्नित्याजिर्युद्धम् । प्रत्ययस्वरः । सतंवाजावित्यत्र संहितायाम् आयादेशे कृते तस्य ‘ लोपः शाकल्यस्य ’ इति यकारलोपः । सर्वविधीनां छन्दसि विकल्पितत्वात् सवर्णदीर्घत्वे कर्तव्ये यलोपो नासिद्धो भवति । सवर्णदीर्घः । शयानम् । ‘ शीङ् स्वप्ने ’ । शानच् । अदादित्वाच्छपो लुक् । ङित्त्वाल्लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः । वधेन । हन्तेर्भावे ‘ हनश्च वधः ’ इत्यप्प्रत्ययो वधादेशश्च धातोरन्तोदात्तश्च । वव्रिवांसम् । ‘ वृञ् वरणे ’ इत्यस्य क्वसौ इडागमश्छान्दसः । प्रत्ययस्वरः ॥

यजाम इन्नमसा वृद्धमिन्द्रं बृहन्तमृष्वमजरं युवानम् ।
यस्य प्रिये ममतुर्यज्ञियस्य न रोदसी महिमानं ममाते ॥ ७ ॥

यजामः । इत् । नमसा । वृद्धम् । इन्द्रम् । बृहन्तम् । ऋष्वम् । अजरम् । युवानम् ।
यस्य । प्रिये इति । ममतुः । यज्ञियस्य । न । रोदसी इति । महिमानम् । ममाते इति ॥ ७ ॥

vनमसा हविर्लक्षणेनान्नेन vवृद्धं प्रवृद्धम् अत एव vबृहन्तं महान्तम् vऋष्वम् । ऋष्यते गम्यते स्तुतिलक्षणैर्मन्त्रैरिति ऋष्वं स्तोतव्यम् । vअजरं जरारहितम् अत एव vयुवानं नित्यतरुणम् एवंविधम् vइन्द्रं vयजाम vइत् । कुशिका वयं यज्ञसिद्ध्यर्थं स्तुतिवाक्यैः पूजयामः । vप्रिये प्रियतमे अपरिमिते vरोदसी द्यावापृथिव्यौ vयज्ञियस्य यज्ञार्हस्य vयस्य इन्द्रस्य तव vमहिमानं वैभवं vन vममतुः न परिच्छेत्तुं शक्नुतः । न vममाते इति द्वितीयं क्रियापदमादरार्थम् ॥ यजामः । यजेर्लटि रूपम् । ऋष्वम् । ‘ ऋषी गतौ ’ । ‘ सर्वनिघृष्वऋष्व° ’ इत्यादिना वप्रत्ययान्तो निपातितः । प्रत्ययस्वरः[1] । प्रिये । ‘ ईदूदेत्° ’ इति प्रगृह्यसंज्ञा । ममतुः । ‘ मा माने ’ इत्यस्य लिट्यतुसि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । महिमानम् । महिशब्दात् तस्य भावः इत्यर्थे पृथ्वादित्वादिमनिच् । चित्स्वरः । ममाते । ‘ माङ् माने शब्दे च ’ इत्यस्य लिट्यातामि रूपम् ॥

इन्द्रस्य कर्म सुकृता पुरूणि व्रतानि देवा न मिनन्ति विश्वे ।
दाधार यः पृथिवीं द्यामुतेमां जजान सूर्यमुषसं सुदंसाः ॥ ८ ॥

इन्द्रस्य । कर्म । सुऽकृता । पुरूणि । व्रतानि । देवाः । न । मिनन्ति । विश्वे ।
दाधार । यः । पृथिवीम् । द्याम् । उत । इमाम् । जजान । सूर्यम् । उषसम् । सुऽदंसाः ॥ ८ ॥

vविश्वे सर्वे vदेवाः vइन्द्रस्य तव vकर्म कर्माणि vसुकृता सुकृतानि सुष्ठु निर्मितानि पृथिव्यादीनि vपुरूणि बहूनि vव्रतानि यज्ञादीनि च vन vमिनन्ति । एतानि[2] सर्वाणि तव[2] कर्माणि न हिंसन्ति । किंत्वाद्रियन्ते । किंच vयः अयमिन्द्रः vपृथिवीं भूलोकं vद्यां द्युलोकम् vउत अपि च

---

१. ल–प्रत्ययस्वरः । यज्ञियस्य । यज्ञशब्दादर्हत्यर्थे ‘ यज्ञर्त्विग्भ्यां घखञौ ’ इति घप्रत्ययः । घस्य इयादेशः । प्रत्ययस्वरः । २. ख-ग-घ-च-ज-ण-न-भ–सर्वाणि ।

ˇइमाम् इममन्तरिक्षलोकं च एतांस्त्रीन् लोकान् ˇदाधार। ˇसुदंसाः सुकर्मा शोभनकर्मा सन्निन्द्रः ˇसूर्यं लोकप्रकाशकमादित्यम् ˇउषसम् अग्निहोत्रादिकर्मनिर्वाहकमुषःकालं ˇजजान उत्पादयामास। 'इन्द्रस्य कर्म सुकृता पुरूणि' इत्येतत्पदकदम्बकम् 'एको द्वे वसुमती' इत्यस्मिन् वर्गे पठितम् (ऋ. सं. ३.३०.१३)। अत्रापि तदेव[1] पठ्यते[1] किमिति[2] पदकाले नोत्सृज्यत इति चेन्न। वाक्यभेदात्। तत्र 'इन्द्रस्य कर्म सुकृता पुरूणि' इत्येकं वाक्यम्। अत्र तु 'कर्म सुकृता' इत्येकं वाक्यं 'पुरूणि व्रतानि' इत्यपरम्। किंच तत्रत्यं पदकदम्बकं प्रथमान्तम् अत्रत्यं द्वितीयान्तम्। अतो वाक्यभेदात् विभक्तिभेदाच्च[3] पदकाले नोत्सृज्यते ॥ मिनन्ति। 'मीञ् हिंसायाम्' इत्यस्य लटि रूपम्। निघातः। दाधार। 'धृञ् धारणे' इत्यस्य लिटि रूपम्। तुजादित्वात् अभ्यासस्य[4] दीर्घः[4]। लित्स्वरः। जजान। 'जन जनने' इत्यस्यान्तर्भावितण्यर्थस्य लिटि रूपम्। लित्स्वरः। सुदंसाः। 'सोर्मनसी०' इत्युत्तरपदाद्युदात्तत्वम् ॥

अद्रोघ सत्यं तव तन्महित्वं सद्यो यज्जातो अपिबो ह सोमम्।
न द्याव इन्द्र तवसस्त ओजो नाहा न मासाः शरदो वरन्त ॥ ९ ॥

अद्रोघ। सत्यम्। तव। तत्। महिऽत्वम्। सद्यः। यत्। जातः। अपिबः। ह। सोमम्।
न। द्यावः। इन्द्र। तवसः। ते। ओजः। न। अहा। न। मासाः। शरदः। वरन्त ॥९॥

ˇअद्रोघ द्रोहवर्जित हे इन्द्र ˇतव[5] ˇतन्महित्वं तादृशं माहात्म्यं ˇसत्यं यथार्थम्। ˇयत् यस्मात् ˇजातः उत्पन्नः ˇसद्यः तदानीमेव ˇसोमम् अस्माभिर्दीयमानं सोमरसम् ˇअपिबः। ˇह प्रसिद्धौ। किंच ˇतवसः बलवतः ˇते तव ˇओजः सामर्थ्यं ˇद्यावः दिवः[6] दिवोपलक्षिताः सर्वे लोकाः ˇन ˇवरन्त न वारयन्ति। किंच ˇअहा प्रतिपदादीन्यहानि न वारयन्ति। तथा ˇमासाः चैत्राद्याः ˇशरदः संवत्सराश्च तव सामर्थ्यं न वारयन्ति[7]। किंतु[8] तव सामर्थ्यमनुसृत्य सर्वे वर्तन्त इति भावः ॥ अद्रोघ। 'आमन्त्रितस्य च' इति षाष्ठिकमाद्युदात्तत्वम्। अपिबः। यद्योगादनिघातः। मासाः। 'मसी परिमाणे'। मस्यते परिमीयते त्रिंशता दिनैरिति मासः। कर्मणि घञ्। ञित्त्वादाद्युदात्तः। शरदः। 'शॄ हिंसायाम्' इत्यस्मात् 'शॄदृभसोऽदिः' इत्यधिकरणेऽदिप्रत्ययः। शीर्यन्तेऽस्यां तृणगुल्मवनस्पतीनां[9] तेजांसीति शरत्। प्रत्ययस्वरः। वरन्त। 'वृञ् वरणे'। अन्तर्भावितण्यर्थोऽत्र निवारणे वर्तते। भौवादिकः। छान्दसे लङि रूपम्। निघातः ॥

सद्यस्क्रीनाम्न्यकाहे निष्केवल्यशस्त्रे 'त्वं सद्यो अपिबः' इति सूक्तमुखीया। सूत्रितं च—'त्वं सद्यो अपिबो जात इन्द्रानु त्वाहिन्ने अध देव देवाः' (आश्व. श्रौ. ९. ५) इति ॥

---

१. ख-ग-ज-ण-भ—तदेवमुच्यते; च-न-फ-स—तदेव उच्यते। २. ख-ग-च-ज-ण-न-फ-भ-स—'किमिति' नास्ति। ३. ख-च-फ-भ—'विभक्तिभेदाच्च' नास्ति। ४. त—अभ्यासदीर्घः। ५. ख-ग-त-न-ल-स—ते तव। ६. घ-न-ल-स—'दिवः' नास्ति। ७. त—निवारयन्ति। ८. त—'किंतु' नास्ति। ९. ख-ग-च-ज-ण-न-भ-स—गुल्मवनस्पतीनाम्।

त्वं स॒द्यो अ॑पिबो जा॒त इ॑न्द्र॒ मदा॑य॒ सोमं॑ पर॒मे व्यो॑मन् ।
यद्ध॒ द्यावा॑पृथि॒वी आवि॑वे॒शीरथा॑भवः पू॒र्व्यः का॑रु॒धाया॑ः ॥ १० ॥

त्वम् । स॒द्यः । अ॒पि॒बः॒ । जा॒तः । इ॒न्द्र॒ । मदा॑य । सोम॑म् । प॒र॒मे । वि॒ऽओ॑मन् ।
यत् । ह॒ । द्यावा॑पृथि॒वी इति॑ । आ । अवि॑वेशीः । अथ॑ । अ॒भ॒वः॒ । पू॒र्व्यः । का॒रु॒ऽधाया॑ः ॥ १० ॥

हे ^v^इन्द्र ^v^सद्यः तदानीमेव ^v^जातः ^v^परमे ^v^व्योमन् उत्तमे स्थाने स्थितः ^v^त्वं ^v^मदाय हर्षाय ^v^सोमम् ^v^अपिबः । ^v^यत् यदा त्वं ^v^द्यावापृथिवी द्यावापृथिव्यौ ^v^आविवेशीः ^v^ह आ समन्तात् भृशं प्रविष्टोऽसि खलु । ^v^अथ अनन्तरं ^v^पूर्व्यः पुरातनः सन् ^v^कारुधायाः कर्मणां विधाता ^v^अभवः खलु ॥ व्योमन् । अव रक्षणगत्यादिषु । विपूर्वस्यावतेः ' नामन् सीमन्° ' इत्यादिना मनिन् । ' ज्वरत्वर° ' इत्यादिना ऊठ् । विशेषेणौम व्याप्तिर्यस्य तत् । ' सुपां सुलुक्° ' इत्यादिना सुपो लुक् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । आविवेशीः । ' विश प्रवेशने ' इत्यस्य यङ्लुकि लङि सिपि ' यङो वा ' इतीडागमः । ' इतश्च ' इति सिप इकारलोपः । यद्योगादनिघातः । कारुधायाः । कारुः । करोतेः कृवापाजिमिस्वदिसाध्यशूभ्य उण्प्रत्ययः । णित्त्वात् वृद्धिः । दधातेः ' वहिहाधाञ्भ्य-श्छन्दसि ' इत्यसुन् । ' णित् ' इत्यनुवृत्तेः ' आतो युक् चिण्कृतोः ' इति युगागमः । समासे[1] ' गति-कारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ' इति सूत्रात् पूर्वपदप्रकृतिस्वरः[1] ॥ ॥ १० ॥

अह॒न्नहिं॑ परि॒शया॑न॒मर्ण॑ ओजा॒यमा॑नं तुविजात॒ तव्या॑न् ।
न ते॑ महि॒त्वमनु॑ भू॒दध॒ द्यौर्यद॒न्यया॑ स्फि॒ग्या॒३॒॑ क्षामव॑स्थाः ॥ ११ ॥

अह॑न् । अहि॑म् । प॒रि॒ऽशया॑नम् । अर्णः॑ । ओ॒जा॒यमा॑नम् । तु॒वि॒ऽजा॒त॒ । तव्या॑न् ।
न । ते॒ । म॒हि॒ऽत्वम् । अनु॑ । भू॒त् । अध॑ । द्यौः ।
यत् । अ॒न्यया॑ । स्फि॒ग्या॑ । क्षाम् । अव॑स्थाः ॥ ११ ॥

^v^तुविजात । बहूनि जातानि पृथिव्यादीनि यस्मात् सोऽयं तुविजातः । हे तुविजात इन्द्र ^v^तव्यान् अतिशयेन प्रवृद्धस्त्वम् ^v^अर्णः ^v^परिशयानम् उदकं परितः शयानमुदकमन्तः कृत्वा परितो वर्तमानमत एव ^v^ओजायमानं बलमाचरन्तम् ^v^अहिम् । आ समन्ताद्धन्ति अपहरत्युदकमित्यहिर्मेघः । तमिमं मेघम् ^v^अहन् उदकप्रेरणाय हतवानसि । ^v^अध अथ ^v^ते ^v^महित्वं महिमानं ^v^द्यौः ^v^न ^v^अनु ^v^भूत् नानुभवति न जानाति । ^v^यत् यस्मात् त्वम् ^v^अन्यया एकतरया ^v^स्फिग्या कट्या ^v^क्षां भूमिम् ^v^अवस्थाः अवच्छाद्य तिष्ठसि ॥ अहन् । हन्तेः लङि[2] सिब्लोपे[3] रूपम्[3] । अहिम् । ' हन हिंसागत्योः ' । आङि ' आङि श्रिहनिभ्यां ह्रस्वश्च ' इति इणप्रत्ययः डिच्च पूर्वपदस्य[4] ह्रस्वश्च[4] । वृषादित्वात् आद्युदात्तत्वम्[5] ।

१. ख-फ-भ-' समासे...... °प्रकृतिस्वरः ' नास्ति ; ग-च-ज-ण-नित्स्वरः । २. ख-ग-च-ज-ण-लङ् । ३. ख-ग-च-ज-ण-भ-सिलोपः; त-सिलोपे रूपं; न-सिपि रूपम् । ४. च-पूर्वपदह्रस्वश्च । ५. ख-त-आद्युदात्तः ।

ओजायमानम् । ओजःशब्दादाचारार्थे 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्प्रत्ययः सलोपश्च । ङित्त्वादात्मनेपदम् । प्रत्ययस्वरः । तव्यान् । तु इति सौत्रो धातुः । अस्मात् तृजन्तात् 'तुश्छन्दसि' इतीयसुन् । 'तुरिष्ठेमेयःसु' इति तृचो लोपः । भसंज्ञायामोर्गुणः । इकारलोपश्छान्दसः । निस्स्वरः । भूत् । भवतेर्लुङि रूपम् । स्फिग्या । 'यचि भम्' इति भसंज्ञायाः[1] बाधितत्वात्[1] 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां जश्त्वम् । तृतीयायाः पूर्वसवर्णः । क्षाम् । 'क्षि निवासगत्योः' । 'अन्येभ्योऽपि दृश्यते' इति निरुपपदादपि डप्रत्ययः । ततष्टाप् । क्षियन्ति निवसन्त्यस्यां प्राणिन इति क्षा भूमिः । उदात्तनिवृत्तिस्वरेणान्तोदात्तः । अवस्थाः । 'वस आच्छादने[2]' इत्यस्य लङि अनुदात्तत्वात् आत्मनेपदम् । थासि अदादित्वाच्छपो लुक् । यद्योगादनिघातः । अडागमस्वरः ॥

यज्ञो हि त इन्द्र वर्धनो भूदुत प्रियः सुतसोमो मियेधः ।
यज्ञेन यज्ञमव यज्ञियः सन्यज्ञस्ते वज्रमहिहत्य आवत् ॥ १२ ॥

यज्ञः । हि । ते । इन्द्र । वर्धनः । भूत् । उत । प्रियः । सुतऽसोमः । मियेधः ।
यज्ञेन । यज्ञम् । अव । यज्ञियः । सन् । यज्ञः । ते । वज्रम् । अहिऽहत्ये । आवत् ॥१२॥

हे ᵛइन्द्र अस्मदीयोऽयं ᵛयज्ञः ᵛते तव ᵛवर्धनः हविष्प्रदानेन वर्धयिता ᵛभूत् ᵛहि भवति खलु । ᵛउत अपि च ᵛसुतसोमः अभिषुतसोमवान् ᵛमियेधः सारभूतोऽयं यज्ञः तव[3] ᵛप्रियः । स त्वं ᵛयज्ञियः यज्ञार्हः ᵛसन् ᵛयज्ञं यज्ञस्य कर्तारं यजमानं ᵛयज्ञेन अनुष्ठीयमानेनानेन ᵛअव फलप्रदानेन रक्ष । किंचायं ᵛयज्ञः ᵛते तव ᵛवज्रमहिहत्ये वृत्रहनने कर्मणि ᵛआवत् रक्षतु ॥ वर्धनः । 'वृधु वर्धने' इत्यस्य ण्यन्तस्य[4] नन्द्यादित्वात् ल्युप्रत्ययः । लित्स्वरः । भूत् । हियोगादनिघातः । अव । अवतेर्लोटि रूपम् । निघातः । सन् । असेः[5] शतरि रूपम् । प्रत्ययस्वरः । अहिहत्ये । 'हन हिंसागत्योः' इत्यस्य भावे 'हनस्त च' इति क्यप् तकारश्चान्तादेशः । कृदुत्तरपदस्वरः । आवत् । अवतेश्छान्दसे लङि रूपम् । निघातः ॥

यज्ञेनेन्द्रमवसा चक्रे अर्वागैनं सुम्नाय नव्यसे ववृत्याम् ।
यः स्तोमेभिर्वावृधे पूर्व्येभिर्यो मध्यमेभिरुत नूतनेभिः ॥ १३ ॥

यज्ञेन । इन्द्रम् । अवसा । आ । चक्रे । अर्वाक् । आ । एनम् । सुम्नाय । नव्यसे । ववृत्याम् ।
यः । स्तोमेभिः । ववृधे । पूर्व्येभिः । यः । मध्यमेभिः । उत । नूतनेभिः ॥ १३ ॥

हे इन्द्र सर्वो यजमानः ᵛअवसा स्वरक्षकेण ᵛयज्ञेन ᵛइन्द्रं त्वाम् ᵛअर्वाक् ᵛआ ᵛचक्रे हविष्प्रदानेनाभिमुखं करोति[6] । तथाहं ᵛनव्यसे नवतराय ᵛसुम्नाय धनाय ᵛएनं त्वाम् ᵛआ ᵛववृत्याम्

१. ल—भसंज्ञां बाधित्वा । २. ख-ग-च-ज-ण-त-न-भ-स—निवासे । ३. ख-ज़-ण-प-भ-ते तव । ४. ख-ग-च-ण-भ—'ण्यन्तस्य' नास्ति । ५. त—अस्तेः । ६. त—कुर्यात् ।

यज्ञेनावृत्तं मदभिमुखं कुर्याम् । कीदृशस्त्वम् । ^य: ^पूर्व्येभिः पुरातनैः ^स्तोमेभिः स्तोत्रैः[1] ^ववृधे । तथा ^यः इन्द्रः ^मध्यमेभिः मध्ये भवैः स्तोत्रैः ^उत अपि च ^नूतनेभिः अस्माभिः क्रियमाणैः अधुनातनैः स्तोत्रैर्वर्धते ॥ चक्रे । करोतेर्लिटि रूपम् । नव्यसे । नवशब्दादीयसुनि भसंज्ञायामकारलोपे ईकारलोपश्छान्दसः । नित्त्वादाद्युदात्तः । ववृत्याम् । 'वृतु वर्तने' । लिङि 'बहुलं छन्दसि' इति शपः श्लुः । व्यत्ययेन परस्मैपदम् । निघातः । ववृधे । 'वृधु वर्धने' इत्यस्य लिटि रूपम् । प्रत्ययस्वरः । मध्यमेभिः । मध्यशब्दात् शैषिकार्थे 'मध्यान्मः' ( पा. सू. ४. ३. ८ ) इति मप्रत्ययः । प्रत्ययस्वरः । नूतनेभिः । नवशब्दस्य 'त्नप्तनन्खाश्च प्रत्यया वक्तव्या नू इत्यादेशश्च' ( पा. म. ५. ४. ३०. ६ ) इति तनप्प्रत्ययो नू इत्यादेशश्च ॥

विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।

अंहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥ १४ ॥

विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् । इन्द्रम् । अह्नः ।

अंहसः । यत्र । पीपरत् । यथा । नः । नावाऽइव । यान्तम् । उभये । हवन्ते ॥ १४ ॥

^यत् यदा ^धिषणा इन्द्रं स्तवानीति मदीया बुद्धिर्मा ^विवेष व्याप्नोत् तदाहं स्तोत्रं ^जजान करोमि । बुद्धेः स्वरूपं दर्शयति । अहं ^पार्यात् पारे भवादतिदूरवर्तिनः विघ्नकारिणः ^अह्नः ^पुरा पूर्वं[2] ^स्तवै स्तवानि । ^यत्र यस्यां धिषणायामेव जातायां सत्यां स इन्द्रः ^नः अस्मान् ^अंहसः पापरूपाद्दारिद्र्यात् ^यथा ^पीपरत् यथा पारं नयेत् तथास्मदुभयपार्श्ववर्तिधनार्थिनो जनाः ^हवन्ते आह्वयन्ति[3] । तत्र दृष्टान्तः[4] । ^नावेव ^यान्तम् । यथा[6] नद्यादिषु नौकया यान्तं गच्छन्तं पुरुषम् ^उभये उभयकूलवर्तिनः[5] जना हवन्ते आह्वयन्ति तद्वत् ॥ विवेष । 'विष्लृ व्याप्तौ' इत्यस्य लिटि णलि रूपम् । लित्स्वरः । जजान । 'जन जनने' इत्यस्य लिट्युत्तमे णलि रूपम् । वाक्यभेदात् अनिघातः । अंहसः । अम गत्यादिषु । 'अमेर्हुक् च' ( उ. सू. ४. ६५२ ) इत्यसुन्प्रत्ययो हुगागमश्च । नित्स्वरः । पीपरत् । 'पॄ पालनपूरणयोः' इत्यस्य लुङि चङि ह्रस्वाभ्यासेत्वदीर्घ-गुणाः । यथायोगादनिघातः । लित्स्वरः । नावेव । 'णुद प्रेरणे' इत्यस्मात् 'ग्लानुदिभ्यां डौः' ( उ. सू. २. २२२ ) इति डौप्रत्ययः । नुद्यत इति नौः प्लवः । 'सावेकाचः०' इति तृतीयाया उदात्तत्वम् । 'इवेन नित्यसमासः[6] विभक्त्यलोपः०' इत्यादि । उभये । उभशब्दात्[7] परस्य[6] तयपः 'उभादुदात्तो नित्यम्' ( पा. सू. ५. २. ४४ ) इत्ययजादेशः । वचनसामर्थ्यादादेः उदात्तत्वम् । हवन्ते । ह्वयतेर्लटि रूपम् ॥

माध्यंदिने सवन आग्नीध्रीयस्य 'आपूर्णो अस्य' इति प्रस्थितयाज्या । सूत्रितं च—'आपूर्णो अस्य कलशः स्वाहेति माध्यंदिन्यः' ( आश्व. श्रौ. ५. ५ ) इति ॥

---

१. ख-ग-घ-च-ज-ण-त-न-फ-भ-स–'स्तोत्रैः' नास्ति । २. त–इन्द्रम् । ३. ख-ग-घ-च-ज-ण-भ-ल–'आह्वयन्ति' नास्ति । ४. त-न–दृष्टान्तमाह । ५. त–यथा प्लवेन नद्यादौ गच्छन्तं नद्यादेरस्मदुभयपार्श्ववर्तिनः धनार्थिनः । ६. ख-ग-घ-ज-ण-न-भ-ल–'नित्यसमासः' नास्ति । ७. ख-ग-ज-ण-भ-ल-स–उभयशब्दात् परस्य ।

आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै ।
समु प्रिया आववृत्रन्मदाय प्रदक्षिणिदभि सोमास इन्द्रम् ॥ १५ ॥

आऽपूर्णः । अस्य । कलशः । स्वाहा । सेक्ताऽइव । कोशम् । सिसिचे । पिबध्यै ।
सम् । ऊँ इति । प्रियाः । आ । अववृत्रन् । मदाय ।
प्रऽदक्षिणित् । अभि । सोमासः । इन्द्रम् ॥ १५ ॥

हे इन्द्र ^अस्य तव पानार्थं ^कलशः द्रोणकलशः सोमेन ^आपूर्णः । ^स्वाहा[1] स्वाहाकृतो दत्तश्च सोमसहितः कलशः ^पिबध्यै तव पानार्थं ^सिसिचे। तं[2] सोमं[2] चोदिताधारे[3] सिञ्चामि। तत्र दृष्टान्तः। ^कोशं ^सेक्तेव । यथा सेक्ता सेचकः जलपूर्णात् कोशात् दृतेः सकाशात् जलं पात्रान्तरे सिञ्चति तद्वत्। ^प्रियाः स्वादुतमाः ^सोमासः दत्तास्ते सोमाः ^इन्द्रं त्वाम् ^अभि अभिलक्ष्यैव ^मदाय तव हर्षार्थं ^प्रदक्षिणित् प्रादक्षिण्येन ^सम् ^आववृत्रन् सम्यगावृत्य वर्तन्ताम् ॥ आपूर्णः। 'पॄ पालनपूरणयोः' इत्यस्य कर्मणि निष्ठा । 'रदाभ्याम्°' इति तस्य नत्वम् । 'गतिरनन्तरः' इति गतिस्वरः[4] । स्वाहा । निपातत्वादाद्युदात्तः । सेक्तेव कोशम्। 'न लोकाव्यय°' इति षष्ठीप्रतिषेधः । सिसिचे । 'षिच[5] क्षरणे' इत्यस्य लिटि रूपम्। पिबध्यै । 'पा पाने' इत्यस्य तुमर्थे शध्यैन्प्रत्ययः। शित्त्वात् पिबादेशः । नित्त्वादाद्युदात्तः। आववृत्रन्[6] । 'वृतु वर्तने' इत्यस्य लङि शप् । 'बहुलं छन्दसि' इति तस्य शपः श्लुः । व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति झे रुडागमः ॥

न त्वा गभीरः पुरुहूत सिन्धुर्नाद्रयः परि षन्तो वरन्त ।
इत्था सखिभ्य इषितो यदिन्द्रा दृळ्हं चिदरुजो गव्यमूर्वम् ॥ १६ ॥

न । त्वा । गभीरः । पुरुऽहूत । सिन्धुः । न । अद्रयः । परि । सन्तः । वरन्त ।
इत्था । सखिऽभ्यः । इषितः । यत् । इन्द्र ।
आ । दृळ्हम् । चित् । अरुजः । गव्यम् । ऊर्वम् ॥ १६ ॥

हे ^पुरुहूत ^इन्द्र ^गभीरः ^सिन्धुः समुद्रः ^त्वा त्वां ^न वारयति। ततः[7] ^परि परितः[7] वर्तमानाः ^सन्तः ^अद्रयः शैलास्त्वां ^न ^वरन्त न वारयन्ति । किंतु त्वामनुसृत्य वर्तन्ते । ^यत् यस्मात् ^इत्था इत्थमनेन प्रकारेण ^सखिभ्यः सखिभिर्देवैः ^इषितः प्रार्थितः त्वं ^दृळ्हं ^चित् अतिप्रबलमपि ^गव्यं गवि भवम् अवटे[8] वर्तमानम् ^ऊर्वम् ऊर्वानलम् ^आ ^अरुजः सम्यगभाङ्क्षीः ॥ गभीरः ।

---

१. ण-त-न-स–'स्वाहा' नास्ति । २. ख-ग-त-न-फ-भ-स–'तं सोमं' नास्ति । ३. ख–चोदिताः; ग-फ–चोदिताधाराः; च-भ–चोदिताधारः; ज-ण–सिञ्चामि चोदिताधाराः । ४. ख-ग-ज-ण-न-फ-भ–स्वरः; च-ल–गतेः स्वरः । ५. ख-ग-ज-ण-न-भ-स–सिच । ६. ल–अववृत्रन् । ७. ख-ग-ज-ण–ततः परितः; घ-ल–तथा परि परितः । ८. ख-ग-च-त-फ-भ-ल–अवते; न–मध्ये ।

'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च'। अस्मात् ईरच्प्रत्ययः[1]। धकारस्य भकारः आकारस्य ह्रस्वश्च 'गभीरगम्भीरौ' (उ. सू. ४. ४७५) इत्यनेन निपात्यते। चित्स्वरः। सिन्धुः। 'स्यन्दू प्रस्रवणे'। 'स्यन्देः संप्रसारणं धश्च' इत्युप्रत्ययः संप्रसारणं दकारस्य धकारः। 'नित्' इत्यनुवृत्तेराद्युदात्तः। परिषन्तः। सन्तः। अस्तेः शतरि रूपम्। 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम्। केचित् परेः[2] क्रियान्वयम्[2] इच्छन्ति। तदा षत्वमनुपपन्नम्। परि। निपातस्वरः। सन्तः। प्रत्ययस्वरः। वरन्त। 'वृञ्[3] वरणे'। भौवादिकः। लङि रूपम्। निघातः। अरुजः। 'रुजो भङ्गे' इत्यस्य लङि रूपम्। गव्यम्। गोर्विकार इत्यर्थे 'गोपयसोर्यत्' इति यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ।

शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम्॥ १७॥

शुनम्। हुवेम। मघऽवानम्। इन्द्रम्। अस्मिन्। भरे। नृऽतमम्। वाजऽसातौ।

शृण्वन्तम्। उग्रम्। ऊतये। समत्ऽसु। घ्नन्तम्। वृत्राणि। सम्ऽजितम्। धनानाम्॥१७॥

एषा ऋक् पूर्वमेव व्याख्याता॥ ॥ ११॥

'प्र पर्वतानाम्' इति त्रयोदशर्चं चतुर्थं सूक्तम्। अत्रेयमनुक्रमणिका—'प्र पर्वतानां सप्तोना संवादो नदीभिर्विश्वामित्रस्योत्तितीर्षोस्तत्र नदीवाक्यं चतुर्थीषष्ठ्यष्टमीदशम्यः षष्ठीसप्तम्योस्त्विन्द्रस्तुतिरन्त्यानुष्टुप्' इति। अत्र[4] चतुर्थीषष्ठ्यष्टमीदशमीनां नदीवाक्यत्वान्नद्य एव ऋषयः शिष्टानां विश्वामित्रवाक्यत्वात्स[5] एव ऋषिः[5]। अन्त्यानुष्टुप् शिष्टास्त्रिष्टुभः। इन्द्रो देवता। यद्यपि षष्ठ्यां सप्तम्यां च विश्वामित्रो नद्यश्च स्तूयन्ते तथापीन्द्र एव[6] देवता। सूक्तविनियोगो लैङ्गिकः॥ पुरा किल विश्वामित्रः पैजवनस्य सुदासो राज्ञः पुरोहितो बभूव। स च पौरोहित्येन लब्धधनः सर्वं धनमादाय विपाट्छुतुद्र्योः संभेदमाययौ[7] अनुययुरितरे। अथोत्तितीर्षुर्विश्वामित्रः[7] अगाधजले ते नद्यौ दृष्ट्वा उत्तरणार्थम् आद्याभिः[8] तिसृभिस्तुष्टाव॥

प्र पर्वतानामुशती उपस्थादश्वेइव विषिते हासमाने।

गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते॥ १॥

प्र। पर्वतानाम्। उशती इति। उपऽस्थात्।

अश्वे इवेत्यश्वेऽइव। विसिते इति विऽसिते। हासमाने इति।

गावाऽइव। शुभ्रे इति। मातरा। रिहाणे इति। विऽपाट्। शुतुद्री। पयसा। जवेते इति॥१॥

---

१. ख-ग-त–ईरट्प्रत्ययः; ण–कीरच्प्रत्ययः; स–इरट्प्रत्ययः। २. न–परक्रियान्वयम्। ३. ख-ग-च-ज-ण-भ–वृङ्। ४. ख-ग-च-ज-ण-भ–तत्र। ५. ख-ग-च-ज-ण-त-न-भ–विश्वामित्रः, घ–विश्वामित्र ऋषिः। ६. ख-ग-च-ज-ण-न-भ-ल-स–'एव' नास्ति। ७. ख-ग-च-ज-ण-न-फ-भ–संभेदमागत्योत्तितीर्षुर्विश्वामित्रः। ८. ख-फ–प्राद्याभिः।

पर्वतानां गिरीणां[1] शैलानाम् उपस्थात् उत्सङ्गान्निर्गत्य उशती[2] समुद्रगमनं कामयमाने। गमने दृष्टान्तः। अश्वेइव। यथा विषिते मन्दुरातो विमुक्ते हासमाने अन्योन्यजवेन[3] स्पर्धमाने। यद्वा हृष्यन्त्यावश्वे इव वडवेइव त्वरया गच्छन्त्यौ परस्परं हृष्यन्त्यौ[4]। तथा गावेव शुभ्रे। यथा द्वौ गावौ शोभमानौ वर्तेते तद्वच्छुभ्रे शोभमाने। किंच मातरा। यथा मातरौ धेनू रिहाणे। अन्तर्णीतसन्नर्थो लिहिः। वत्सं जिह्वया लेढुमिच्छन्त्यौ शीघ्रं गच्छतस्तद्वत् समुद्रं गन्तुं[5] जवात् गच्छन्त्यौ पयसा संयुक्ते विपाट्। कूलविपाटनात् विपाशनाद्वा विमोचनाद्वा विपाट्। शुतुद्री। शु क्षिप्रं तु[6] तुन्ना[6] तुन्नेव द्रवति गच्छतीति शुतुद्री। एतन्नामके[7] नद्यौ प्र जवेते समुद्रं[8] प्रति[8] शीघ्रं गच्छतः। अत्र निरुक्तं—'पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धायां हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते' (निरु. ९. ३९) इति ॥ उशती। 'वश कान्तौ'। अस्य[9] शतुर्ङित्त्वात् 'ग्रहिज्यावयि°' इत्यादिना संप्रसारणम्। विषिते। 'षिञ् बन्धने' इत्यस्य कर्मणि निष्ठा। संहितायां 'परिनिविभ्यः सेवसितसयसिवुसह°' इत्यादिना षत्वम्। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरः[10]। हासमाने। हासतिः स्पर्धाकर्मा हसे हसने वा। शानच्। तस्य लसार्वधातुकस्वरे कृते धातुस्वरः। रिहाणे। 'लिह आस्वादने'। स्वरितेत्त्वादुभयपदी। शानच्। अदादित्वाच्छपो लुक्। लकारस्य रेफश्छान्दसः। रेफमवलम्ब्य णत्वम्। चित्त्वादन्तोदात्तः। विपाट्। 'पट गतौ' 'पश[11] बाधनस्पर्शनयोः' इति वा ण्यन्तावेतौ विपूर्वौ। शकारस्य व्रश्चादिना षत्वम्। शुतुद्री। छान्दसी रूपसिद्धिः। जवेते। 'जुङ् गतौ'। भौवादिः। ङित्त्वादात्मनेपदम्। 'आतो ङितः' इति इयादेशः। निघातः ॥

**इन्द्रे॑षिते प्रस॒वं भिक्ष॑माणे॒ अच्छा॑ समु॒द्रं र॒थ्ये॑व याथः।**

**स॒मा॒रा॒णे ऊ॒र्मिभि॒ः पिन्व॑माने अ॒न्या वा॑म॒न्याम॒प्ये॑ति शुभ्रे ॥ २ ॥**

इन्द्रे॑षिते॒ इतीन्द्र॑ऽइषिते। प्र॒ऽस॒वम्। भिक्ष॑माणे॒ इति॑। अच्छ॑। स॒मु॒द्रम्। र॒थ्या॑ऽइव। या॒थः।

स॒मा॒रा॒णे इति॑ स॒म्ऽआ॒रा॒णे। ऊ॒र्मिऽभिः॑। पिन्व॑मा॒ने॒ इति॑।

अ॒न्या। वा॒म्। अ॒न्याम्। अपि॑। ए॒ति॒। शु॒भ्रे॒ इति॑ ॥ २ ॥

हे नद्यौ इन्द्रेषिते इन्द्रेण प्रेषिते प्रसवं तस्येन्द्रस्यानुज्ञां भिक्षमाणे प्रार्थयमाने युवां समुद्रम् अच्छ आभिमुख्येन याथः गच्छथः। तत्र दृष्टान्तः। रथ्येव इति[12]। यथा रथिनौ लक्ष्यं देशमभिगच्छतस्तद्वत्। किं कुर्वत्यौ। समाराणे परस्परं संगच्छन्त्यौ ऊर्मिभिः तरङ्गैः पिन्वमाने परिसरप्रदेशं संतर्पयन्त्यौ शुभ्रे शोभमाने। युवां समुद्रं गच्छथ इति पूर्वेणान्वयः। तथा वां युवयोर्मध्ये अन्या एका अन्याम् अपरां नदीम् अप्येति अपिगच्छति। परस्परमैक्यमापद्यत इत्यर्थः ॥ इन्द्रेषिते। 'इष गतौ' इत्यस्य कर्मणि निष्ठायाः[13] 'तीषसह°' इत्यादिना इडागमः।

---

१. त-ल-'गिरीणां' नास्ति। २. ख-ग-च-प-फ-भ-उशती विपाट्छुतुद्री; घ-ज-ण-विपाट्छुतुद्री उशती। ३. त-अन्योन्यं जवेन। ४. ज-ण-'हृष्यन्त्यौ' नास्ति। ५. ख-ग-घ-च-ज-ण-प-फ-भ-गन्तुं प्रजवेते। ६. ख-ग-च-ज-ण-भ-शु; त-तुन्ना। ७. त-एतन्नामिके। ८. ज-ण-समुद्रप्रान्तम्। ९. ल-इत्यस्य। १०. त-°स्वरत्वम्। ११. ख-ग-ज-ण-स्पश। १२. ख-ग-च-ज-ण-भ-'इति' नास्ति। १३. त-निष्ठायाम्।

‘ तृतीया कर्मणि ’ इति पूर्वपदस्वरः । प्रसवम् । ‘ षू प्रेरणे ’ इत्यस्य अप् । थाथादिस्वरः । भिक्षमाणे । ‘ भिक्ष याच्ञायाम् ’ । आत्मनेपदी । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः । रथ्येव । रथस्येमौ । तस्येदम् इत्यर्थे ‘ रथाद्यत् ’ इति यत्प्रत्ययः । तित्स्वरितः । इवेन विभक्त्यलोपः इत्यादि[1] । याथः । यातेर्लटि रूपम् । समाराणे । ‘ ऋ गतौ ’ इत्यस्य लिट् । संपूर्वस्यार्तेः ‘ समो गमि॰ ’ इत्यादिना आत्मनेपदत्वात्[2] तस्य[3] कानजादेशः । ‘ ऋच्छत्यॄताम् ’ इति गुणः । पिन्वमाने । ‘ पिवि सेचने ’ । भ्वादिः । लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः[3] ॥

अच्छा सिन्धुं मातृतमामयासं विपाशमुर्वीं सुभगामगन्म ।
वत्समिव मातरा संरिहाणे समानं योनिमनु संचरन्ती ॥ ३ ॥

अच्छ । सिन्धुम् । मातृऽतमाम् । अयासम् । विऽपाशम् । उर्वीम् । सुऽभगाम् । अगन्म ।
वत्सम्ऽइव । मातरा । संरिहाणे इति सम्ऽरिहाणे ।
समानम् । योनिम् । अनु । संचरन्ती इति सम्ऽचरन्ती ॥ ३ ॥

हे नद्यौ ᵛमातृतमाम् अतिशयेन मातरं ᵛसिन्धुं स्रवन्तीं शुतुद्रीं त्वाम् ᵛअच्छ आभिमुख्येन ᵛअयासं विश्वामित्रोऽहं प्राप्तोऽभूवम् । ᵛउर्वीं महतीं ᵛसुभगां सौभाग्यवतीं ᵛविपाशं त्वाम् ᵛअगन्म वयं प्राप्ताः स्मः । किं कुर्वत्यौ । ᵛमातरा मातरौ द्वे धेनू ᵛवत्समिव ᵛसंरिहाणे । अन्तर्णीतसन्नर्थो लिहिः । जिह्वया लेढुमिच्छन्त्यौ यथा वत्समनुगच्छतस्तद्वत् ᵛसमानम् एकं ᵛयोनिं स्थानं समुद्रम् ᵛअनु अभिलक्ष्य ᵛसंचरन्ती सम्यक् चरन्त्यौ । युवामयासिषमिति पूर्वेणान्वयः ॥ अयासम् । ‘ या प्रापणे ’ इत्यस्य रूपम् । इडभावश्छान्दसः । अगन्म । गमेर्लङि ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ म्वोश्च ’ इति मकारस्य नकारः । निघातः । संचरन्ती । चरतिर्गत्यर्थः । तृतीयायुक्तत्वाभावात्[4] आत्मनेपदाभावः । शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वरः ॥

एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः ।
न वर्तवे प्रसवः सर्गतक्तः किंयुर्विप्रो नद्यो जोहवीति ॥ ४ ॥

एना । वयम् । पयसा । पिन्वमानाः । अनु । योनिम् । देवऽकृतम् । चरन्तीः ।
न । वर्तवे । प्रऽसवः । सर्गऽतक्तः । किम्ऽयुः । विप्रः । नद्यः । जोहवीति ॥ ४ ॥

एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः । ᵛएना एनेन ᵛपयसा ᵛपिन्वमानाः संतर्पयन्त्यः ᵛदेवकृतं देवेनेन्द्रेण[5] कृतं संदिष्टं ᵛयोनिं स्थानं समुद्रम् ᵛअनु लक्षीकृत्य ᵛचरन्तीः गच्छन्त्यः ᵛवयम् आस्महे ।

---

१. ख-ग-ज-ण-भ—इत्यर्थादि; च—‘ इत्यादि ’ नास्ति । २. ख-ग-च-ज-ण-न-भ-स—आत्मनेपदम्; त—आत्मनेपदत्वम् । ३. ख-ग-च-ज-ण-त-न-फ-भ-स—‘ तस्य......धातुस्वरः ’ नास्ति । ४. च-फ—तृतीयायोगाभावात् । ५. ख-ग-च-ज-ण-फ-भ—देवेन्द्रेण ।

द्वयोर्बहुवचनं पूजार्थम् । तासामस्माकं ᵛसर्गतक्तः सर्गे गमने प्रवृत्तः ᵛप्रसवः उद्योगः ᵛन ᵛवर्तवे निवर्तनाय[1] न भवति । ᵛकिंयुः किमिच्छन् असौ ᵛविप्रः ब्राह्मणः ᵛनद्यः नदीः अस्मान् ᵛजोहवीति भृशमाह्वयति ॥ एना । एतच्छब्दस्य[2] तृतीयाया एनादेशः । 'सुपां सुलुक्॰' इति तृतीयाया आजादेशः । 'ऊडिदम्॰' इति विभक्तेरुदात्तत्वम् । पिन्वमानाः । 'पिवि सेचने[3]' । देवकृतम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः । वर्तवे । 'वृतु वर्तने' । तुमर्थे तवेन्प्रत्ययः । निस्स्वरः । सर्गतक्तः । 'क्ते च' इति पूर्वपदप्रकृतिस्वरः । किंयुः । किमिच्छन् । 'क्यचि मान्ताव्ययप्रतिषेधः' (पा. सू. ३. १. ८. १) इति छान्दसत्वादत्र प्रतिषेधो न भवतीति क्यच् । 'क्याच्छन्दसि' इत्युप्रत्ययः । प्रत्ययस्वरः । नद्यः । छान्दसो यणादेशः । जोहवीति । ह्वेञः[4] यङ्लुकि 'अभ्यस्तस्य च' इति संप्रसारणे कृते 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । 'यङो वा' इति इडागमः । गुणः । निघातः ॥

रम॑ध्वं मे॒ वच॑से सो॒म्याय॒ ऋता॑वरी॒रुप॑ मुहू॒र्तमेवैः॑ ।
प्र सिन्धु॒मच्छा॑ बृह॒ती म॑नी॒षाव॒स्युर॑ह्वे कुशि॒कस्य॑ सू॒नुः ॥ ५ ॥

रम॑ध्वम् । मे॒ । वच॑से । सो॒म्याय॑ । ऋत॑ऽवरीः । उप॑ । मु॒हू॒र्तम् । एवैः॑ ।
प्र । सिन्धु॑म् । अच्छ॑ । बृ॒ह॒ती । म॒नी॒षा । अ॒व॒स्युः । अ॒ह्वे॒ । कु॒शि॒कस्य॑ । सू॒नुः ॥ ५ ॥

विश्वामित्रो नदीः प्रति ब्रूते । ᵛऋतावरीः । ऋतमुदकम् । तद्वत्यो हे नद्यो यूयं ᵛमे विश्वामित्रस्य मम ᵛसोम्याय । उत्तीर्याहं सोमं संपादयामीत्येवं सोमसंपादिने ᵛवचसे तदर्थम् ᵛएवैः। पञ्चम्यर्थे तृतीया। शीघ्रगमनेभ्यः ᵛमुहूर्तं मुहूर्तमात्रम् ᵛउप ᵛरमध्वम् । उपपूर्वो रमिरुपसंहारे वर्तते । क्षणमात्रं शीघ्रगमनादुपरता भवत । सामान्येन[5] नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते । ᵛकुशिकस्य राजर्षेः ᵛसूनुः विश्वामित्रोऽहं ᵛबृहती महत्या ᵛमनीषा मनीषया स्तुत्या ᵛअवस्युः आत्मनो रक्षणमिच्छन् सन् ᵛसिन्धुं शुतुद्रीं त्वाम् ᵛअच्छ आभिमुख्येन ᵛप्र ᵛअह्वे प्रकर्षेणाह्वयामि । अत्र निरुक्तम्—'उपरमध्वं मे वचसे सोम्याय सोमसंपादिन ऋतावरीर्ऋतवत्य ऋतमित्युदकनाम प्रत्यृतं भवति मुहूर्तमेवैरयनैरवनैर्वा । प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वावनाय कुशिकस्य सूनुः । कुशिको राजा बभूव' (निरु. २. २५) इति ॥ रमध्वम् । 'रमु उपरमे' । उपपूर्वाद्रमतेः 'विभाषाकर्मकात्' (पा. सू. १. ३. ८५) इत्यात्मनेपदम् । ऋतावरीः । ऋतशब्दान्मत्वर्थे 'छन्दसीवनिपौ' इति वनिप् । 'वनो र च' इति ङीप् रेफश्चान्तादेशः । 'वा छन्दसि' इति सवर्णदीर्घः । आमन्त्रितस्य पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् । एवैः । 'इण् गतौ' । 'इण्शीङ्भ्यां वन्' । आर्धधातुकलक्षणो गुणः । निस्स्वरः । बृहती मनीषा । उभयत्र तृतीयायाः पूर्वसवर्णदीर्घः । अवस्युः । अवो रक्षणमिच्छन् । सुप आत्मनः क्यच् । 'नः क्ये' इति नकारान्तस्य पदसंज्ञाया नियमितत्वादत्र सकारस्य रुर्न भवति । 'क्याच्छन्दसि' इत्युप्रत्ययः । अह्वे । ह्वयतेर्लुङि सिचः 'आत्मनेपदेष्वन्यतरस्याम्' इत्यङादेशः । गुणः । निघातः ॥　　॥ १२ ॥

---

१. ख-ग-घ-च-ज-प-फ-भ-वर्तनाय; ण-वर्तमानाय; न-निवर्तनायः; स-निवर्तमानाय । २. ब-इदंशब्दस्य । ३. ग-च-न-भ-सेवने; ज-ण-प्रीणने । ४. ल-ह्वयः । ५. त-सामान्येन च ।

इन्द्रो अस्माँ अरदद्वज्रबाहुरपाहन्वृत्रं परिधिं नदीनाम् ।
देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः ॥ ६ ॥

इन्द्रः । अस्मान् । अरदत् । वज्रऽबाहुः । अप । अहन् । वृत्रम् । परिऽधिम् । नदीनाम् ।
देवः । अनयत् । सविता । सुऽपाणिः । तस्य । वयम् । प्रऽसवे । यामः । उर्वीः ॥ ६ ॥

नद्यः प्रत्यूचुः । हे विश्वामित्र vवज्रबाहुः । वज्रयुक्तो बाहुर्यस्यासौ वज्रबाहुः । तादृशो बलवान् vइन्द्रः नदीः vअस्मान् vअरदत् । रदतिः खनतिकर्मा । अखनत् । कथमखनत् । उच्यते । vनदीनां शब्दकारिणीनामपां vपरिधिं परितो निहितमुदकमन्तः कृत्वा परितो वर्तमानमित्यर्थः । तादृशं vवृत्रम् । वृणोत्याकाशमिति वृत्रो मेघः । तं मेघम् vअपाहन् जघान । तस्मिन् हते आपः पतिताः । ताभिर्गच्छन्तीभिर्वयं खाताः । एवं मेघहननद्वारेणाखनत् । न केवलमखनत् किं तर्हि vसविता सर्वस्य जगतः प्रेरकः vसुपाणिः शोभनहस्तः उत्पत्तिस्थितिकर्तृत्वात्तादृशः vदेवः द्योतमानः इन्द्रः अस्मान् vअनयत् । मेघभेदनं कृत्वोदकप्रेरणेन समुद्रमपूरयत् । vतस्य तादृशसामर्थ्योपेतस्य इन्द्रस्य vप्रसवे अभ्यनुज्ञायां वर्तमानाः vउर्वीः उदकैः प्रभूताः vवयं vयामः गच्छामः । न तव वचनादुपरमामहे । उक्तार्थे[1] यास्को ब्रवीति—'इन्द्रो अस्मानरदद्वज्रबाहू रदतिः खनतिकर्मापाहन्वृत्रं परिधिं नदीनामिति व्याख्यातम् । देवोऽनयत्सविता सुपाणिः कल्याणपाणिः । पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान् पूजयन्ति । तस्य वयं प्रसवे याम उर्वीरुर्व्यः' ( निरु. २. २६ ) इति ॥ अरदत् । रदतेर्लङि रूपम् । वज्रबाहुः । बहुव्रीहौ पूर्वपदस्वरः । अहन् । हन्तेर्लङि रूपम् । निघातः । परिधिम् । 'डुधाञ् धारणपोषणयोः' इत्यस्मात् कर्मण्युपसर्गे 'घोः किः' इति किप्रत्ययः। आतो लोपः । कृदुत्तरपदस्वरः । अनयत् । नयतेर्लङि रूपम् । सुपाणिः । 'पण व्यवहारे स्तुतौ च' । 'अशिपणाय्यो रुडायलुकौ च' ( उ. सू. ४. ५७२ ) इतीण् । आयलुक् । बहुव्रीहौ 'नञ्सुभ्याम्' इति स्वरः । प्रसवे । 'षू प्रेरणे' । 'ऋदोरप्' इति भावेऽप्प्रत्ययः । 'थाथघञ्क्ता०' इत्युत्तर-पदान्तोदात्तत्वम्[2] । यामः । 'या प्रापणे' इत्यस्य लटि रूपम् । निघातः । उर्वीः । उरुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । 'वा छन्दसि' इति सवर्णदीर्घः । प्रत्ययस्वरः ॥

प्रवाच्यं शश्वधा वीर्यं१ तदिन्द्रस्य कर्म यदहिं विवृश्चत् ।
वि वज्रेण परिषदो जघानायन्नापोऽयनमिच्छमानाः ॥ ७ ॥

प्रऽवाच्यम् । शश्वधा । वीर्यम् । तत् । इन्द्रस्य । कर्म । यत् । अहिम् । विऽवृश्चत् ।
वि । वज्रेण । परिऽसदः । जघान । आयन् । आपः । अयनम् । इच्छमानाः ॥ ७ ॥

योऽयमिन्द्रः vअहिं मेघं vविवृश्चत् उदकप्रेरणार्थं जघानेति vयत् vकर्म छेदनरूपं vतत् इदं तस्य vइन्द्रस्य vवीर्यं सामर्थ्यं vशश्वधा सर्वदा vप्रवाच्यं प्रकर्षेण वचनीयम्[3] । तथा स इन्द्रः vपरिषदः परितः[4] सीदत आसीनान्[4] प्रतिबन्धकारिणोऽसुरान् vवज्रेण vवि vजघान । अथ vअयनं स्थानम्

---

१. ख-ग-च-ज-ण-त-न-भ—उक्तार्थे । २. ल—इत्युत्तरपदान्तोदात्तत्वम् । एकादेशस्वरः । ३. ख-ग-च-ज-ण-फ-भ—वाचनीयम् । ४. ल—परितः सीदन्तीति परिषदः । परित आसीनान् ।

ᵛइच्छमानाः इच्छन्त्यः ᵛआपः ᵛआयन् यान्ति ॥ प्रवाच्यम् । 'वच परिभाषणे' इत्यस्मात् 'ऋहलोर्ण्यत्' इति ण्यत् । णित्वादुपधावृद्धिः । 'वचोऽशब्दसंज्ञायाम्' (पा. सू. ७. ३. ६७) इति कुत्वाभावः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा वाचयतेः 'अचो यत्' । 'यतोऽनावः' इति स्वरः । शश्वधा । शश्वच्छब्दात् स्वार्थे धाप्रत्ययस्तकारलोपश्च द्रष्टव्यः । विवृश्चत् । 'ओव्रश्चू छेदने' । तुदादिः । लङि 'ग्रहिज्यावयि॰' इत्यादिना संप्रसारणम् । 'सह सुपा' इत्यत्र सहेति योगविभागात् समासः । समासस्वरः । परिषदः । क्विप् । संहितायां 'सदिरप्रतेः[1]' इति षत्वम् । जघान । हन्तेर्लिटि णलि रूपम् । निघातः । आयन् । 'अय गतौ' इत्यस्य लङि रूपम् । पादादित्वादनिघातः । इच्छमानाः । 'इषु इच्छायाम्' इत्यस्मात् व्यत्ययेन शानच् । तस्य लसार्वधातुकस्वरे कृते प्रत्ययस्वरः ॥

एतद्वचो॑ जरित॒र्मापि॑ मृष्ठा॒ आ यत्ते॒ घोषा॒नुत्त॑रा यु॒गानि॑ ।
उ॒क्थेषु॑ कारो॒ प्रति॑ नो जुषस्व॒ मा नो॒ नि कः॑ पुरुष॒त्रा नम॑स्ते ॥ ८ ॥

एतत् । वचः॑ । ज॒रि॒तः॒ । मा । अपि॑ । मृ॒ष्ठाः॒ । आ । यत् । ते॒ । घोषा॑न् । उत्ऽत॑रा । यु॒गानि॑ ।
उ॒क्थेषु॑ । का॒रो॒ इति॑ । प्रति॑ । न॒ः । जु॒षस्व॒ ।
मा । न॒ः । नि । क॒रि॒ति॒ कः॑ । पु॒रु॒ष॒ऽत्रा । नमः॑ । ते॒ ॥ ८ ॥

नद्यः प्रसङ्गादिन्द्रस्तोत्रं[2] कृत्वा[3] विश्वामित्रं प्रत्यूचुः । ᵛजरितः स्तोतर्हे विश्वामित्र ᵛते त्वदीयं ᵛयत् संवादात्मकं ᵛवचः त्वं[3] ᵛनः अभीत्या ᵛघोषान् उद्घोषयन्[3] वर्तसे तद्वचः ᵛमापि ᵛमृष्ठाः मा विस्मार्षीः । किं कारणम् । ᵛउत्तरा ᵛयुगानि उत्तरेषु याज्ञिकेषु[4] युगेषु[5] अहःसु ᵛउक्थेषु ᵛकारो शस्त्राणां[6] कर्तस्त्वं ᵛनः अस्मान् ᵛप्रति ᵛजुषस्व संवादात्मकेन तेन वाक्येन प्रतिसेवस्व । इदानीं ᵛनः अस्मान् ᵛपुरुषत्रा पुरुषेषु ᵛमा ᵛनि ᵛकः । उक्तिप्रत्युक्तिरूपसंवादवाक्याध्यापनेन नितरां पुंवत् प्रागल्भ्यं मा कार्षीः । ᵛते तुभ्यं ᵛनमः ॥ मृष्ठाः । 'मृजूष्[7] शुद्धौ' इत्यस्य लङि व्यत्ययेन आत्मनेपदम् । अदादित्वाच्छपो लुक् । व्रश्चादिना षत्वम् । निघातः । घोषान् । 'घुषिर्[8] संशब्दने[9]' इत्यस्य शतरि सर्वविधीनां छन्दसि विकल्पितत्वात् 'अतो गुणे' इति पररूपत्वाभावः । सवर्णदीर्घः । शतुर्लसार्वधातुकस्वरे कृते धातुस्वरः । युगानि । 'युजिर् योगे' । उञ्छादिषु घञन्तत्वेन निपातनादगुणत्वम् । विशिष्टविषयं[10] च निपातनमिष्यते । 'कालविशेषे रथाद्युपकरणे च' इति तत्र पाठादेवान्तोदात्तत्वम् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । कारो । करोतेः 'कृवापाजिमि॰' इत्यादिना उण्प्रत्ययः । आमन्त्रितत्वान्निघातः । कः । करोतेर्लुङि च्लेः[11] 'मन्त्रे घस॰' इत्यादिना लुक् । हल्ङ्यादिना सिचो लोपः । 'न माङ्योगे' इत्यडभावः । पुरुषत्रा । 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति सप्तम्यर्थे त्राप्रत्ययः । प्रत्ययस्वरः ॥

---

१. न-ल-स–सदेरप्रतेः । २. प–'प्रसङ्गादिन्द्रस्तोत्रं कृत्वा' नास्ति । ३. ख-ग-च-ज-ण-प-फ-भ–त्वं मनीषा इत्यादिघोषान् (प–इत्याघोषान्) उद्घोषयन् । ४. ख-ग-च-फ–कुशिकेषु; ज-ण–'याज्ञिकेषु' नास्ति । ५. न–यागेषु; स– योगेषु । ६. ख-ग-च-ज-ण–शास्त्राणाम् । ७. ख-फ-भ–मृजू । ८. ख-ग-ज-ण-न-भ-ल-स–घुष् । ९. च–विशब्दने । १०. ख-ग-ज-ण-न-भ-ल-स–विश्लिष्टविषयम् । ११. ख-ग-च-ज-ण-न-भ-स–'च्लेः' नास्ति ।

ओ षु स्वसारः कारवे शृणोत ययौ वो दूरादनसा रथेन ।
नि षू नमध्वं भवता सुपारा अधोअक्षाः सिन्धवः स्रोत्याभिः ॥ ९ ॥

ओ इति । सु । स्वसारः । कारवे । शृणोत । ययौ । वः । दूरात् । अनसा । रथेन ।
नि । सु । नमध्वम् । भवत । सुऽपाराः । अधःऽअक्षाः । सिन्धवः । स्रोत्याभिः ॥ ९ ॥

विश्वामित्रो नदीः प्रत्युवाच । ˇस्वसारः भगिन्यः ˇसिन्धवः हे नद्यः ˇकारवे स्तोत्रं कुर्वाणस्य मम वचनं ˇसु[1] सुष्ठु ˇओ ˇशृणोत शृणुतैव[1] । ˇअनसा शकटेन ˇरथेन च सह ˇदूरात् विप्रकृष्टाद्देशात् ˇवः युष्मान् ˇययौ प्राप्तोऽस्मि । यूयं ˇसु सुष्ठु ˇनि ˇनमध्वम् आत्मना स्वयं प्रह्वाः[2] ˇभवत[2] । तथा ˇसुपाराः । रथादीनां तीरात् सुखेनावरोहणारोहणे यथा स्यातां तथा शोभनरोधसश्च भवत । किंच यूयं ˇस्रोत्याभिः स्रवणशीलाभिरद्भिः ˇअधोअक्षाः रथाङ्गस्याक्षस्याधस्ताद्भवत । यदापोऽक्षस्याधस्ताद्भवन्ति तदा रथादीनि नेतुं शक्यन्ते। तस्मात् तत्परिमाणोदकाः[3] भवतेति अर्थाभिप्रायः[4] ॥ ओ इति प्रगृह्यसंज्ञा। शृणोत । ‘ श्रु श्रवणे ’ इत्यस्य लोटि तप्रत्ययस्य ‘ तप्तनप्तनथनाश्च ’ इति तबादेशः । पित्त्वाद्गुणः । निघातः । ययौ । ‘ या प्रापणे ’ इत्यस्य भूतमात्रे लिट्युत्तमे णलि ‘ आत औ णलः ’ इत्यौकारः । एकादेशस्वरः । वः । युष्मच्छब्दस्य द्वितीयायाः ‘ बहुवचनस्य वस्नसौ ’ इति वसादेशः । षू[5] । ‘ निपातस्य० ’ इति संहितायां दीर्घः । नमध्वम् । ‘ णमु प्रह्वत्वे शब्दे च ’ इत्यस्य कर्मकर्तरि ‘ न दुहस्नुनमां यक्चिणौ ’ इति प्रतिषेधात् यगभावः । अधोअक्षाः । अधरशब्दस्य ‘ पूर्वाधरावराणामसि पुरधवश्चैषाम् ’ इत्यसिप्रत्ययोऽधादेशश्च । अक्षशब्दः ‘ अशू व्याप्तौ ’ इत्यस्मात् ‘ अशेर्देवने ’ ( उ. सू. ३. ३४५ ) इति सप्रत्ययान्तः । कृदुत्तरपदप्रकृतिस्वरः । सिन्धवः । आमन्त्रितत्वान्निघातः । स्रोत्याभिः। स्रोतःशब्दात् ‘ स्रोतसो विभाषा ड्यड्ड्यौ ’ ( पा. सू. ४. ४. ११३ ) इति ड्यप्रत्ययः । डित्वात् टिलोपः । प्रत्ययस्वरः ॥

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन ।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥ १० ॥

आ । ते । कारो इति । शृणवाम । वचांसि । ययाथ । दूरात् । अनसा । रथेन ।
नि । ते । नंसै । पीप्यानाऽइव । योषा । मर्यायऽइव । कन्या । शश्वचै । त इति ते ॥ १० ॥

नद्यः पूर्वं विश्वामित्रं[6] प्रत्याख्यायानयर्चा तस्य वाक्यमाशुश्रुवुः । ˇकारो स्तोत्रं कुर्वाण हे विश्वामित्र ˇते तव[7] ˇवचांसि इमानि वाक्यानि ˇआ ˇशृणवाम शृणुमः[8] । तव समीहितं प्रयोजनं कुर्म इत्यर्थः । ˇअनसा शकटेन ˇरथेन च सह ˇययाथ । यतो ˇदूरात् आगतोऽसि । वयं च ˇते त्वदर्थं ˇनि ˇनंसै नीचैर्नमाम । प्रत्येकविवक्षया[9] अत्रैकवचनम् । रथेन गन्तुं गाधोदका भवामेत्यर्थः ।

---

१. ख-ग-च-ज-ण-न-फ-भ-स–शृणोत सु सुष्ठु ओशृणोतैव । २. ज-ण–प्रह्वीभवत । ३. ख-ग-च-ज-ण-न-ल–परिमाणोदकाः । ४. घ-ल–अभिप्रायः । ५. त–सु । ६. ल-स–विश्वामित्रवाक्यम् । ७. ख-ग-घ-ज-ण-भ-ल–‘ तव ’ नास्ति । ८. ख-ग-च-भ–आशृणुमः; ज-ण–आशृणुम । ९. ज-ण-ल–प्रत्येकं विवक्षया ।

तत्र दृष्टान्तः । पीप्यानेव योषा । पीप्याना पुत्रं स्तनं पाययन्ती योषा माता यथा प्रह्वीभवति । दृष्टान्तान्तरम् । यथा कन्या युवतिः मर्यायेव मनुष्याय पित्रे भ्रात्रे वा[1] शश्वचै परिष्वजनाय नम्रीभवति तद्वत्[2] ते[2] त्वदर्थं प्रह्वीभवामः[3] । ते[4] इति पुनरुक्तिरादरार्थम् । एतामृचं यास्क एवं व्याचष्टे– ' आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्रं मर्यायेव कन्या परिष्वजनाय निनमा इति वा ' ( निरु. २.२७ ) इति[4] ॥ कारो । ' संबुद्धौ शाकल्यस्येतौ° ' (पा. सू. १. १. १६ ) इति प्रगृह्यसंज्ञा । शृणवाम । ' श्रु श्रवणे ' इत्यस्य लोटि ' आडुत्तमस्य पिच्च ' इत्याडागमः । पित्त्वात् गुणः । निघातः । ययाथ । ' या प्रापणे ' इत्यस्य भूतमात्रे लिटि थलि ' एकाच उपदेशेऽनुदात्तात् ' इतीट्प्रतिषेधः । लित्स्वरः । अनसा । सहार्थे तृतीया । नंसै । ' णमु प्रह्वत्वे ' इत्यस्य लेटयुत्तमे लेटि सिब्बहुलमिति सिप् । ' वैतोऽन्यत्र ' इत्यैकारादेशः । निघातः । पीप्यानेव । ' पीङ् पाने ' इत्यस्यान्तर्भावितण्यर्थस्य लिटि कानचि रूपम् । चित्स्वरः । योषा । ' यु मिश्रणे ' । ' वृतॄवदिहनि°[5] ' (उ. सू. ३. ३४२) इत्यादिना सप्रत्ययः । यौतीति योषा । वृषादित्वादाद्युदात्तः । शश्वचै । ' ष्वञ्ज परिष्वङ्गे ' इत्यस्मात् संपदादिलक्षणो भावे क्विप् । पृषोदरादित्वादिष्टरूपसिद्धिरन्तोदात्तश्च ॥ ॥ १३ ॥

यदङ्ग त्वा भरताः संतरेयुर्गव्यन्ग्राम इषित इन्द्रजूतः ।
अर्षादह प्रसवः सर्गतक्त आ वो वृणे सुमतिं यज्ञियानाम् ॥ ११ ॥

यत् । अङ्ग । त्वा । भरताः । सम्ऽतरेयुः । गव्यन् । ग्रामः । इषितः । इन्द्रऽजूतः ।
अर्षात् । अह । प्रऽसवः । सर्गऽतक्तः । आ । वः । वृणे । सुऽमतिम् । यज्ञियानाम् ॥ ११ ॥

विश्वामित्रो नदीः प्रत्युवाच । अङ्ग इत्यामन्त्रणे । हे नद्यः यत् यस्मात् युष्माभिरुत्तितीर्षोः ममोत्तरणमभ्यनुज्ञातं तस्मात् भरताः भरतकुलजा मदीयाः सर्वे त्वा परस्परमेकतामापन्नां नदीं त्वां संतरेयुः सम्यगुत्तीर्णा भवेयुः । तदेव विशिनष्टि । गव्यन् गा उदकानि तरीतुमिच्छन् इषितः त्वयाभ्यनुज्ञातः इन्द्रजूतः युष्माकं प्रवर्तकेनेन्द्रेण च प्रेरितः ग्रामः भरतानां संघः अर्षात् संतरेत् । यतः सर्गतक्तः गमनाय प्रवृत्तः प्रसवः तेषामुद्योगः अह पूर्वं युष्माभिरनुज्ञातः । अहं तु यज्ञियानां यज्ञार्हाणां वः युष्माकं सुमतिं शोभनां स्तुतिम् आ वृणे सर्वतः संभजे[6] ॥ भरताः । भरतशब्दादुत्सादित्वादञ् । तस्य ' यञञोश्च ' इति लुक् । अतच्प्रत्ययस्वरः[7] । संतरेयुः । तरतेर्लिङि जुसि रूपम् । झेर्लसार्वधातुकस्वरे धातुस्वरः । ' तिङि चोदात्तवति ' इति गतेर्निघातः । गव्यन् । गा आत्मन इच्छन् । सुपः क्यच् । एकादेशस्वरः । ग्रामः । ' ग्रसतेरा च ' (उ. सू. १.१४०) इति मन्प्रत्यय आकारादेशश्च । नित्स्वरः । इन्द्रजूतः । जू इति सौत्रो धातुर्गत्यर्थः । ' श्र्युकः किति ' इति निष्ठायामिट्प्रतिषेधः । ' तृतीया कर्मणि ' इति पूर्वपदप्रकृतिस्वरः । अर्षात् । ' ऋ गतौ ' इत्यस्य लेटि तिपि ' सिब्बहुलम्° ' इति सिप् । लेट आडागमः[8] । ' एकाचः° ' इतीट्प्रतिषेधः । गुणः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । वृणे । ' वृङ् संभक्तौ ' इत्यस्य लटि रूपम् । यज्ञियानाम् । ' यज्ञर्त्विग्भ्यां घखञौ ' इति घप्रत्ययः । प्रत्ययस्वरः ॥

---

१. ख-ग-च-ज-ण-न-भ-स–' वा ' नास्ति । २. ख-ग–' तद्वत् ते ' नास्ति; च-ज-ण–ते; ल–तद्वत् । ३. ख-ग-च–प्रह्वीभवामि । ४. ख-ग-च-ज-न-फ-भ–' ते....इति ' नास्ति । ५. न–वृतॄवदिहनि° । ६. त–समाभजे । ७. ख-ग-च-ज-ण-त-न-भ-स–अत्र च प्रत्ययस्वरः । ८. ल–लेटोऽडाटावित्याडागमः ।

अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम् ।
प्र पिन्वध्वमिषयन्तीः सुराधा आ वक्षणाः पृणध्वं यात शीभम् ॥ १२ ॥

अतारिषुः । भरताः । गव्यवः । सम् । अभक्त । विप्रः । सुऽमतिम् । नदीनाम् ।
प्र । पिन्वध्वम् । इषयन्तीः । सुऽराधाः । आ । वक्षणाः । पृणध्वम् । यात । शीभम् ॥ १२ ॥

ᵛगव्यवः गा आत्मन इच्छन्तः ᵛभरताः भरतकुलजाः सर्वे ᵛअतारिषुः तां नदीं समतरन् । ᵛविप्रः मेधावी विश्वामित्रः ᵛनदीनां ᵛसुमतिं शोभनां स्तुतिं ᵛसमभक्त समभजत । यूयं तु यथापूर्वम् ᵛइषयन्तीः कुल्यादिद्वारा अन्नं[1] कुर्वाणा अत एव ᵛसुराधाः शोभनधनोपेता यूयं ᵛवक्षणाः कृत्रिमसरितः कुल्याः ᵛप्र ᵛपिन्वध्वं प्रकर्षेण तर्पयत । ᵛआ ᵛपृणध्वं ताः सर्वतः पूरयत च । ᵛशीभं शीघ्रं ᵛयात गच्छत च ॥ अतारिषुः । 'तॄ प्लवनतरणयोः' इत्यस्य लुङि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः । अडागमस्वरः । गव्यवः । सुपः क्यच् । 'क्याच्छन्दसि' इत्युप्रत्ययः । तस्य स्वरः । अभक्त । 'भज सेवायाम्' इत्यस्य लुङि सिचः[2] 'झलो झलि' इति लोपः[2] । पादादित्वादनिघातः । पिन्वध्वम् । 'पिवि सेचने' इत्यस्य लोटि रूपम् । निघातः । इषयन्तीः । इषं कुर्वत्यः । 'तत्करोति°' इति णिच् । 'णाविष्ठवत्प्रातिपदिकस्य' इति इष्ठवद्भावात् 'टेः' इति टिलोपः । 'वा छन्दसि' इति सवर्णदीर्घः । प्रत्ययस्वरः । पृणध्वम् । 'पृण प्रीणने' । लोटि रूपम् । व्यत्ययेनात्मनेपदम् । वाक्यभेदादनिघातः । यात । 'या प्रापणे' इत्यस्य लोटि रूपम् । अत्रापि न निघातः । शीभम् । 'शीभृ कत्थने' । श्लाघ्यतेऽनेन तद्वानिति करणे घञ् । जित्स्वरः ॥

उद्व ऊर्मिः शम्या हन्त्वापो योक्त्राणि मुञ्चत ।
मादुष्कृतौ व्येनसाघ्न्यौ शूनमारताम् ॥ १३ ॥

उत् । वः । ऊर्मिः । शम्याः । हन्तु । आपः । योक्त्राणि । मुञ्चत ।
मा । अदुःऽकृतौ । विऽएनसा । अघ्न्यौ । शूनम् । आ । अरताम् ॥ १३ ॥

पूर्वमुत्तितीर्षुर्विश्वामित्रो नदीस्तुत्वा अधुना उत्तितीर्षुः[3] पुनराह । हे नद्यः ᵛवः युष्माकम् ᵛऊर्मिः तरङ्गः ᵛशम्याः युग्यकण्ठपार्श्वादिसंलग्ना रज्जवः ᵛउत् ऊर्ध्वं यथा भवन्ति[4] तथा ᵛहन्तु गच्छतु । स तरङ्गो रज्जूनामधो गच्छत्वित्यभिप्रायः । तथा हे ᵛआपः यूयं ᵛयोक्त्राणि ता रज्जूः ᵛमुञ्चत । यथा न स्पृशन्ति तथा यान्त्वित्यभिप्रायः । ᵛव्येनसा विगतपापे अत एव ᵛअदुष्कृतौ कल्याणकर्मकारिण्यौ ᵛअघ्न्यौ अघ्न्ये[5] न केनापि तिरस्करणीये विपाट्छुतुद्र्यौ ᵛशूनं समृद्धिं ᵛमा ᵛआरताम् आगच्छताम् । एवं विश्वामित्रो नदीः स्तुत्वा ताभिरनुज्ञातोऽतरदिति ॥ ऊर्मिः । 'ऋ गतौ' । 'अर्तेरूच्[6]' इति मिप्रत्ययः । 'ऊः' इत्ययमादेशो धातोः । ऋच्छतीत्यूर्मिः । प्रत्ययस्वरः । शम्याः । 'शमु उपशमे' । 'पोरदुपधात्' इति यत्प्रत्ययः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । हन्तु । 'हन हिंसा-

१. ल–गमनम् । २. ख-ग-च-ज-ण–सिलोपः । ३. ल–उत्तीर्णः ४. ख-ग-घ-ज-ण-त-न-प-भ-स–भवति । ५. ख-ग-च-ज-ण-त-न-भ-स–'अघ्न्ये' नास्ति । ६. त–अर्तेरूच ।

गत्योः ' इत्यस्य लोटि रूपम् । निघातः । योक्त्राणि । ' युजिर् योगे ' । करणे ' दाम्नीशसयुयुज° ' इत्यादिना ष्ट्रन्प्रत्ययः । नित्स्वरः । मुञ्चत । ' मुच्लृ मोक्षणे ' । निघातः । अदुष्कृतौ । ' इसुसोः सामर्थ्ये ' इति विसर्जनीयस्य षत्वम् । व्येनसा । बहुव्रीहौ पूर्वपदस्वरः । सुपो डादेशः । अघ्न्यौ । ' हन हिंसागत्योः ' इत्यस्य नञ्पूर्वस्य ' अघ्न्यादयश्च ' इति निपातनात् यक्[1] । किच्चा-दुपधालोपः । ' हो हन्तेः° ' इति घत्वम्[2] । सर्वविधीनां छन्दसि विकल्पितत्वादत्र औङः[3] शीभावा-भावः[3] । एकादेशस्वरः । शूनम् । श्वयतेः ' नपुंसके भावे क्तः ' इति क्तः । यजादित्वात् संप्रसारणम् । ' हलः ' इति दीर्घत्वम् । ' ओदितश्च ' इति निष्ठानत्वम् । ' निष्ठा च द्व्यजनात् ' इत्याद्युदात्तः । अरताम् । ' ऋ गतौ ' इत्यस्य लुङि च्लेः ' सर्तिशास्त्यर्तिभ्यश्च ' इत्यङादेशः । ' ऋदृशोऽङि गुणः ' । ' न माङ्योगे ' इत्यडभावः । निघातः ॥　　॥ १४ ॥

' इन्द्रः पूर्भित् ' इत्येकादशर्चं पञ्चमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । अत्रानुक्रमणिका—' इन्द्रः पूर्भिदेकादश ' इति । अग्निष्टोमे माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे ' इन्द्रः पूर्भित् ' इति सूक्तम् । ' होत्रकाणाम् ' इति खण्डे सूत्रितम्—' इन्द्रः पूर्भिदुदु ब्रह्माणि ' ( आश्व. श्रौ. ५. १६ ) इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे चातुर्विंशिकातिदिष्टस्य अहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि । तत्रेदं प्रथमम् । ' इन्द्रः पूर्भिद्य एक इद्यस्तिग्मशृङ्गः ' ( आश्व. श्रौ. ७. ५ ) इति । उद्भिद्वलभिदोर्निष्केवल्ये एतत्सूक्तं निविद्धानीयम् । सूत्रितं च—' इन्द्र सोममिन्द्रः पूर्भिदिति मध्यंदिनः[4] ' ( आश्व. श्रौ. ९. ८ ) इति ॥

**इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो वि शत्रून् ।**
**ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे ॥ १ ॥**

इन्द्रः । पूःऽभित् । आ । अतिरत् । दासम् । अर्कैः । विदत्ऽवसुः । दयमानः । वि । शत्रून् ।
ब्रह्मऽजूतः । तन्वा । ववृधानः । भूरिऽदात्रः । आ । अपृणत् । रोदसी इति । उभे इति ॥१॥

विश्वामित्रः स्तौति । vपूर्भित् असुरपुरां[5] भेत्ता[5] अत एव vविदद्वसुः वेदयद्भिः स्वमहिमप्रख्या-पकैर्वसुभिर्युक्तः vशत्रून् असुरान् vवि vदयमानः विशेषेण हिंसन् । तथा च यास्कः—' विदद्वसुर्दयमानो वि शत्रून् इति हिंसाकर्मा ' ( निरु. ४. १७ ) इति । तादृशः vइन्द्रः vदासम् । दस्यतेऽनेन तम इति दासो वासरः । तम् vअर्कैः अर्चनीयैः स्वतेजोभिः vआतिरत् समन्तात्[6] अवर्ध-यत् इन्द्रस्य सूर्यात्मकत्वात् । तथा च स्मृतिः—' चैत्रमासे[7] तपेदिन्द्रः ' इति । किंच । vब्रह्मजूतः ब्रह्मणा जूतः[8] स्तोत्रेणाकृष्टः । यद्वा ब्रह्मणा जगत्स्रष्ट्रा[9] प्रेरितः vतन्वा[10] स्वशरीरेण vवावृधानः वर्धमानः vभूरिदात्रः । दायते लूयतेऽनेन शत्रुशिर इति दात्रमायुधम् । बहुविधायुधोपेतः । तादृश इन्द्रः vउभे vरोदसी[10] द्यावापृथिव्यौ vआपृणत् सर्वतोऽतर्पयत् ॥ पूर्भित् । ' भिदिर् विदारणे ' । क्विप् । अतिरत् ।

---

१. ख-ग-च-ज-ण-त-न–यत् । २. च-न-फ–कुत्वम् । ३. ख-फ-भ–औङः न शीभावः; त-न–औङः शीभावः । ४. ख-ग-च-ज-ण-त-न-भ-ल-स–माध्यंदिनः । ५. च-फ–असुरपुरीभेत्ता; ६. ख-ग-घ-च-ज-ण-फ-भ–आ समन्तात् । ७. न–चैत्रे मासे; ल–ज्येष्ठमासे । ८. न-स–' जूतः ' नास्ति । ९. फ–जगत्स्रष्ट्रैव; स–जगत्स्रष्टा । १०. च-फ–तन्वा ववृधानः शरीरेण वर्धनशीलः भूरिदात्रः बहुच्छेदन-साधनयुक्तः उभे रोदसी ।

तरतेर्व्यत्ययेन शः । ‘ ऋत इद्धातोः ’ इतीत्वम् । निघातः । दासम् । करणे घञ् । ञित्स्वरः । विदद्वसुः । विदेरन्तर्भावितण्यर्थस्य शतरि अदादित्वाच्छपो लुकि सति प्रत्ययस्वरेण शतुरुदात्तत्वम् । बहुव्रीहौ पूर्वपदस्वरः । दयमानः । ‘ दय दानगतिरक्षणहिंसादानेषु[1] ’ । आत्मनेपदी । लटः शानच् । ‘ न लोकाव्यय° ’ इति षष्ठीप्रतिषेधः । ववृधानः[2] । ‘ वृधु वर्धने ’ । कानचि रूपम् । संहितायाम् अभ्यासस्य तुजादित्वाद्दीर्घः । भूरिदात्रः । ‘ दाप् लवने ’ । करणे ‘ दाम्नी° ’ इत्यादिना ष्ट्रन्प्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । अपृणत् । ‘ पृण प्रीणने[3] ’ इत्यस्य लङि तुदादित्वाच्छः । निघातः । रोदसी । रुदेरसुनि रूपम् । निस्स्वरः ॥

मखस्य ते तविषस्य प्र जूतिमियर्मि वाचममृताय भूषन् ।
इन्द्र क्षितीनामसि मानुषीणां विशां दैवीनामुत पूर्वयावा ॥ २ ॥

मखस्य । ते । तविषस्य । प्र । जूतिम् । इयर्मि । वाचम् । अमृताय । भूषन् ।
इन्द्र । क्षितीनाम् । असि । मानुषीणाम् । विशाम् । दैवीनाम् । उत । पूर्वऽयावा ॥ २ ॥

हे इन्द्र भूषन् त्वामलंकुर्वन्नहं मखस्य महनीयस्य[4] स्तुत्यस्य तविषस्य बलवतः ते तव जूतिं मनसा प्रेरितां वाचं स्तुतिलक्षणाम् अमृताय[5] अन्नार्थं[5] प्र इयर्मि प्रकर्षेणोच्चारयामि । मानुषीणां क्षितीनां मनोर्जातानां मनुष्याणाम् उत अपि च दैवीनां देवसंबन्धिनीनां विशां प्रजानां पूर्वयावा अग्रतो गन्ता त्वम् असि ॥ मखस्य । ‘ मह पूजायाम् ’ । ‘ नहेर्हलोपश्च ’ ( उ. सू. ५. ७०१ ) इति ‘ हलोपः ’ इत्यनुवृत्तौ ‘ महेश्च ’ इति खप्रत्ययो हलोपश्च । मह्यते पूज्यते सर्वैरिति मखः । ‘ खान्तस्याश्मादेः ’ इत्यन्तोदात्तत्वम् । यद्यपि मकारादिर्भवति[6] तथापि वचनसामर्थ्याद्भवति । तविषस्य । तवतेः टिषच्प्रत्ययः[7] । चित्स्वरः । जूतिम् । ‘ ऊतियूति° ’ इत्यादिना क्तिनः[8] उदात्तत्वम् । इयर्मि । अर्तिर्जुहोत्यादिः । ‘ अर्तिपिपर्त्योश्च ’ इत्यभ्यासस्येत्वम् । ‘ अभ्यासस्य° ’ इतीयङादेशः । पादादित्वान्न निघातः । अभ्यस्तस्वरः । भूषन् । ‘ भूष अलंकारे ’ इत्यस्य शतरि रूपम् । शतुर्लसार्वधातुकस्वरे[9] धातुस्वरः । असि । अस्तेर्लटि रूपम् । निघातः । मानुषीणाम् । ‘ मनोर्जातौ° ’ इत्यञ् । षुगागमः । ‘ टिड्ढाणञ्° ’ इति ङीप् । ञित्स्वरः । दैवीनाम् । ‘ देवाद्यञञौ ’ इत्यञ् । अत्रापि पूर्ववत् ङीप् । ञित्स्वरः । पूर्वयावा । ‘ या प्रापणे ’ इत्यस्मात्[10] ‘ आतो मनिन् क्वनिब्वनिपश्च ’ इति वनिप् । कृदुत्तरपदस्वरः ॥

इन्द्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः ।
अहन्व्यंसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ॥ ३ ॥

इन्द्रः । वृत्रम् । अवृणोत् । शर्धऽनीतिः । प्र । मायिनाम् । अमिनात् । वर्पऽनीतिः ।
अहन् । विऽअंसम् । उशधक् । वनेषु । आविः । धेनाः । अकृणोत् । राम्याणाम् ॥ ३ ॥

---

१. ख-ग-ज-त-न-भ-ल-स–°हिंसाग्रहणेषु । २. ज-ण–वावृधानः । ३. भ-स–प्राणने । ४. प–मंहनीयस्य । ५. च-फ-स–अमृताय पानार्थम्; ल–अमृतपानार्थम् । ६. न–मकारादेर्न भवति । ७. च-फ–इषच्प्रत्ययः । ८. ज-ण-ल–क्तिन् । ९. त–°स्वरेण । १०. ल–इत्यस्य ।

Vशर्धनीतिः । नयनं नीतिः कर्म । शर्धं प्रवृद्धं[1] नीतिः कर्म यस्य स तथोक्तः । सः Vइन्द्रः Vवृत्रम् असुरम् Vअवृणोत् बलेनारुधत् । तथा Vवर्पणीतिः युद्धे परप्रहाराणां निवारककर्मा इन्द्रः Vमायिनाम् । द्वितीयार्थे षष्ठी । मायिनोऽसुरान् Vप्र Vअमिनात् प्रकर्षेणावधीत् । Vउशधक् शत्रुवधं कामयमानः इन्द्रः Vवनेषु गूढचारिणमसुरं Vव्यंसं विगतांसं यथा भवति तथा Vअहन् जघान । अथ तस्मिन् रात्रिचरे गवामपहर्तरि हते सति Vराम्याणाम् । रमणं स्त्रीभिः सह क्रीडा रामः । तमर्हन्तीति राम्याः रात्रयः । तासां रात्रीणामन्तःस्थिताः Vधेनाः गाः Vआविः Vअकृणोत् प्रकटा अकरोत् । रात्रीणाम् असुराक्रान्तत्वे तैत्तिरीयकम्—'अहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह रात्रिं प्राविशन्निति ये दिवा स्तोतारो राम्यास्तेषां वाचो धेनाः' इति ॥ अवृणोत् । 'वृञ् वरणे' इत्यस्य लङि रूपम् । निघातः । शर्धनीतिः । शर्धतिरुत्साहार्थः । अस्मात् कर्मणि घञ् । बहुव्रीहौ पूर्वपदस्वरः । अमिनात् । 'मीञ् हिंसायाम्' इत्यस्य लङि 'मीनातेर्निगमे' इति ह्रस्वः । निघातः । अहन् । हन्तेर्लङि रूपम् । उशधक् । 'वश कान्तौ' । पृषोदरादित्वात् रूपसिद्धिः । आविः । स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः । धेनाः । 'धेट् पाने' । 'धेट इच्च' ( उ. सू. ३. २९१ ) इति नप्रत्यय ईकारश्चान्तादेशः । गुणः । धयन्ति तामिति धेना वाक् । 'धेना जिगाति' (ऋ. सं. १. २. ३) इत्यत्र प्रत्ययस्वरेणान्तोदात्तः । अत्र[2] व्यत्ययेनाद्युदात्तत्वम् । अकृणोत् । 'कृवि हिंसाकरणयोः' । निघातः । राम्याणाम् । 'रमु क्रीडायाम्' । राममर्हन्तीत्यर्थे 'छन्दसि च' इति यप्रत्ययः । तस्य स्वरः । यद्वा रमेः अन्तर्णीतण्यर्थात्[3] 'अघ्न्यादयश्च' इति यक्प्रत्ययः । 'प्ररमयति भूतानि नक्तंचारीण्युपरमयतीतराणि' ( निरु. २. १८ ) इति यास्कः । वर्णव्यत्ययः ॥

**इन्द्रः स्वर्षा जनयन्नहानि जिगायोशिग्भिः पृतना अभिष्टिः ।**
**प्रारोचयन्मनवे केतुमह्नामविन्दज्ज्योतिर्बृहते रणाय ॥ ४ ॥**

इन्द्रः । स्वःऽसाः । जनयन् । अहानि । जिगाय । उशिक्ऽभिः । पृतनाः । अभिष्टिः ।
प्र । अरोचयत् । मनवे । केतुम् । अह्नाम् । अविन्दत् । ज्योतिः । बृहते । रणाय ॥ ४ ॥

Vस्वर्षाः स्वर्गप्रदः Vइन्द्रः Vअहानि स्वतेजोभिः Vजनयन् Vउशिग्भिः युद्धं कामयमानैरङ्गिरोभिः सह Vपृतनाः परकीयाः सेनाः Vअभिष्टिः अभिभावुकः सन् Vजिगाय शत्रूनजैषीत् । शत्रुवधानन्तरं Vमनवे मनुष्याय कर्मकर्त्रे यजमानाय Vअह्नां Vकेतुं प्रज्ञापकं सूर्यं Vप्रारोचयत् तथा च तमोरूपासुरवधात् प्रकर्षेणादीपयत् । ततः Vबृहते महते[4] Vरणाय युद्धप्रकाशनाय Vज्योतिः प्रकाशम् Vअविन्दत् अलभत ॥ स्वर्षाः । 'षणु दाने' । क्विप् । 'जनसनखनां सञ्झलोः' इत्यात्वम् । 'सनोतेरनः' इति षत्वम् । 'अहरादीनां पत्यादिषूपसंख्यानम्' इति विसर्जनीयस्य रुत्वम् । जिगाय । 'जि जये' इत्यस्य लिटि 'सन्लिटोर्जेः' इत्यभ्यासादुत्तरस्य कवर्गादेशः । लित्स्वरः[5] । पृतनाः । 'पृङ् व्यायामे[6]' । 'कृपृभ्यां कित्' इति तनन्प्रत्ययः । व्याप्रियन्तेऽत्र योद्धार इति पृतनाः सेनाः । नित्त्वादाद्युदात्तः । अभिष्टिः । अभिगन्ता । 'इष[7] गतौ' । 'मन्त्रे वृष°' इत्यादिना क्तिन्नुदात्तः । स[8] हि भावपरोऽपि भवितारं लक्षयति[8] ।

---

१. च-ज-ण–वृद्धम् ।　२. ल–अत्र तु ।　३. ख-ग-न-भ-स–अन्तर्णीतस्यार्थात् ; ज-ण–अन्तर्भावितण्यर्थात् ।　४. ल-स–'महते' नास्ति ।　५. ख-ग-च-ज-ण-त-न-फ-भ-स–'लित्स्वरः' नास्ति ।　६. ख-ग-च-ज-ण-त-न-भ-स–आयामे ।　७. न-ल-स–इषु ।　८. ख-ग-च-ज-ण-न-भ-ल-स–'स हि... लक्षयति' नास्ति ।

'तितुत्रतथ°' इत्यादिना इट्प्रतिषेधः । शकन्ध्वादित्वात् पररूपत्वम् । कृदुत्तरस्वरः । अरोचयत् । 'रुच दीप्तौ' इत्यस्य लङि रूपम् । मनवे । 'मन ज्ञाने' । 'शॄस्वृस्निहि°' इत्यादिना उप्रत्ययः । निदनुवृत्तेराद्युदात्तः । अविन्दत् । 'विद्लृ लाभे' इत्यस्य 'शे मुचादीनाम्' इति नुम् । पादादित्वादनिघातः । रणाय । 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानसंज्ञा । रणतिः शब्दार्थः । 'वशिरण्योरुपसंख्यानम्' (पा. सू. ३. ३. ५८. ३) इत्यप्प्रत्ययः । रणन्ति शब्दं कुर्वन्ति परस्परं योद्धारोऽत्रेति रणः संग्रामः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः ॥

इन्द्र॑स्तु॒जो ब॒र्हणा॒ आ वि॑वेश नृ॒वद्दधा॑नो॒ नर्या॑ पु॒रूणि॑ ।
अचे॑तय॒द्धिय॑ इ॒मा ज॑रि॒त्रे प्रेमं वर्ण॑मतिरच्छु॒क्रमा॑साम् ॥ ५ ॥

इन्द्रः॑ । तु॒जः॑ । ब॒र्हणाः॑ । आ । वि॒वे॒श॒ । नृ॒ऽवत् । दधा॑नः । नर्या॑ । पु॒रूणि॑ ।
अचे॑तयत् । धियः॑ । इ॒माः । ज॒रि॒त्रे । प्र । इ॒मम् । वर्ण॑म् । अ॒ति॒र॒त् । शु॒क्रम् । आ॒सा॒म् ॥५॥

स तादृशः इन्द्रः तुजः बाधिकाः बर्हणाः युद्धोत्साहेन वर्धमानाः परकीयाः सेनाः नृवत् मनुष्यवत् आ विवेश प्रकाशं लब्ध्वा प्राविशत् । किं कुर्वन् । पुरूणि बहूनि नर्या युद्धनयनकारिणां योग्यानि धनानि दधानः प्रयच्छन् आविवेश । स इन्द्रः जरित्रे स्तोत्रे इमाः दृश्यमानाः धियः उषसः । ध्यायन्त्यासु मनुष्या इति । ता धियः अचेतयत् अज्ञापयत् । अथ आसाम् उषसाम् इमं शुक्रं वर्णं प्रकाशेन युक्तं[1] प्र अतिरत् स्वतेजसा प्रकर्षेण वर्धयति । धीशब्दस्योषःपरत्वे मन्त्रवर्णः— 'शुक्रवर्णामुदु नो यंसते धियम्' (ऋ. सं. १. १४३. ७) इति ॥ तुजः । 'तुज हिंसायाम्' । क्विप् । धातुस्वरः । बर्हणाः । 'वृहि वृद्धौ' । अस्मात् 'युच्[2] बहुलम्' इति[3] कर्तरि युच् । व्यत्ययेनाद्युदात्तत्वम् । विवेश । विशतेर्लिटि[4] रूपम् । निघातः । नृवत् । नृशब्दात् 'तेन तुल्यम्°' इति वतिप्रत्ययः । तस्य स्वरः । दधानः । दधातेः शानचि रूपम् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । नर्या । नरेषु[5] साधूनि[5] इत्यर्थे 'तत्र साधुः' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । अचेतयत् । 'चिती संज्ञाने' इत्यस्य ण्यन्तस्य लङि रूपम् । अडागमस्वरः । धियः । 'ध्यै चिन्तायाम्' । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । दृशिग्रहणात् संप्रसारणम् । धातुस्वरः । इमाः । 'दश्च' (पा. सू. ७. २. १०९) इति दकारस्य मकारः । एकादेशस्वरः । अतिरत् । तरतेर्व्यत्ययेन शः । निघातः । आसाम् । 'इदमोऽन्वादेशेऽश्°' इत्यशादेशोऽनुदात्तश्च । प्रत्ययः सुप्त्वादनुदात्तः । अतः सर्वानुदात्तः ॥ ॥ १५ ॥

म॒हो म॒हानि॑ पनयन्त्य॒स्येन्द्र॑स्य॒ कर्म॒ सुकृ॑ता पु॒रूणि॑ ।
वृ॒जने॑न वृजि॒नान्त्सं पि॑पेष मा॒याभि॒र्दस्यूँ॑र॒भिभू॑त्योजाः ॥ ६ ॥

म॒हः । म॒हानि॑ । प॒न॒य॒न्ति॒ । अ॒स्य॒ । इन्द्र॑स्य । कर्म॑ । सुऽकृ॑ता । पु॒रूणि॑ ।
वृ॒जने॑न । वृ॒जि॒नान् । सम् । पि॒पे॒ष॒ । मा॒याभिः॑ । दस्यू॑न् । अ॒भिभू॑तिऽओजाः ॥ ६ ॥

---

१. त–'प्रकाशेन युक्तम्' नास्ति । २. ल–'युच्' नास्ति । ३. च–इति वचनात् । ४. च–विशेर्लिटि । ५. ज-ण–नृषु साधुः ।

ᵛमहः महतः ᵛअस्य एतादृशसामर्थ्यस्य ᵛइन्द्रस्य ᵛमहानि महनीयानि ᵛपुरूणि बहूनि ᵛसुकृता[1] सुष्ठु कृतानि[1] ᵛकर्म वृत्रहननादीनि कर्माणि ᵛपनयन्ति स्तुवन्ति। 'इन्द्रस्य कर्म सुकृता पुरूणि' इत्येतत्पदकदम्बकम् अत्रार्थभेदात् पदकाले नोत्सृज्यते। तादृश इन्द्रः ᵛवृजनेन। वर्ज्यन्ते शत्रवोऽनेनेति वृजनं बलम्। तेन बलेन ᵛवृजिनान् पापरूपानसुरान् ᵛसं ᵛपिपेष सम्यक् चूर्णीचकार। तथा ᵛअभिभूत्योजाः। अभिभूतिः शत्रुविषयोऽभिभवः। तत्रौजो बलमस्येत्यभिभूत्योजाः शत्रूणां पराभवे समर्थः। तादृश इन्द्रः ᵛदस्यून् उपक्षपयितॄनसुरान् ᵛमायाभिः कपटैः सं पिपेष ॥ पनयन्ति। पनतेः स्तुत्यर्थस्य 'गुपूधूपविच्छिपणिपनिभ्यः०' इत्यायप्रत्ययः। ह्रस्वश्छान्दसः। निघातः। वृजनेन। 'वृजी वर्जने'। 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः' इति क्युप्रत्ययः। कित्त्वादगुणः। प्रत्ययस्वरः। वृजिनान्। 'वृजी वर्जने'। 'वृजेः किच्च' (उ. सू. २. २०५) इतीनच्प्रत्ययः। वृजिनं पापम्। तद्वतः। अर्शआदित्वादच्। एकादेशस्वरः। पिपेष। 'पिष्लृ संचूर्णने[2]' इत्यस्य लिटि णलि रूपम्। निघातः। अभिभूत्योजाः। भूतिर्भवनम्। भावे क्तिन्। 'तादौ च निति०' इत्यभेः प्रकृतिस्वरत्वम्। अभिभूतावोजो यस्येति 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिः' इति समासः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः॥

**युधेन्द्रो॑ म॒ह्ना वरि॑वश्चकार दे॒वेभ्य॒ः सत्प॑तिश्चर्षणि॒प्राः।**

**वि॒वस्व॑त॒ः सद॑ने अस्य॒ तानि॒ विप्रा॑ उ॒क्थेभि॑ः क॒वयो॑ गृणन्ति ॥ ७ ॥**

यु॒धा। इन्द्र॑ः। म॒ह्ना। वरि॑वः। च॒का॒र॒। दे॒वेभ्य॑ः। सत्ऽप॑तिः। च॒र्ष॒णि॒ऽप्राः।

वि॒वस्व॑तः। सद॑ने। अ॒स्य॒। तानि॑। विप्रा॑ः। उ॒क्थेभि॑ः। क॒वय॑ः। गृ॒ण॒न्ति॒ ॥ ७ ॥

ᵛसत्पतिः सतां देवानां पतिः ᵛचर्षणिप्राः चर्षणीनां मनुष्याणामपेक्षितफलप्रदानेन कामपूरकः सः ᵛइन्द्रः ᵛमह्ना महता ᵛयुधा युद्धेन ᵛवरिवः। भृशं व्रियतेऽर्थिभिरिति वरिवो धनम्। तादृशं धनं युद्धेन लब्ध्वा ᵛदेवेभ्यः देवनशीलेभ्यः स्तोतृभ्यः ᵛचकार दत्तवान्। ᵛविप्राः मेधाविनः ᵛकवयः स्तोतारः ᵛविवस्वतः विशेषेणाग्निहोत्रादिकर्मार्थे वसतो यजमानस्य ᵛसदने गृहे ᵛअस्य इन्द्रस्य ᵛतानि वृत्रहननबहुप्रदानादीनि कर्माणि ᵛउक्थेभिः स्तोत्रैः ᵛगृणन्ति स्तुवन्ति॥ युधा। 'युध संप्रहारे'। भावे संपदादिलक्षणः क्विप्। 'सावेकाचः०' इति विभक्तेरुदात्तता। वरिवः। 'वृञ् वरणे' इत्यस्य यङ्लुकि 'ऋतश्च' इत्यभ्यासस्य रिगागमः। तदन्तादसुन्। बाहुलकाट्टिलोपः। नित्स्वरः। चकार। करोतेर्लिटि रूपम्। निघातः। सत्पतिः। अस्तेः शतरि रूपं सदिति। 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम्। चर्षणिप्राः। 'प्रा पूरणे'। विच्। विवस्वतः। विपूर्वात् 'वस निवासे' इत्यस्मात्[3] संपदादिलक्षणो भावे क्विप्। 'तदस्यास्त्यस्मिन्०' इति मतुप्। 'मादुपधायाः०' इति तस्य वत्वम्। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। गृणन्ति। 'गॄ शब्दे' इत्यस्य[4] लटि रूपम्। निघातः॥

---

१. ख-ग-ज-ण-न-भ-स-सुकृतानि; च-सुकृता। २. ख-ग-च-ज-ण-न-भ-चूर्णने। ३. ख-ग-च-ज-ण-त-इत्येतस्मात्। ४. ख-ग-च-ज-ण-त-न-फ-भ-स-इत्यस्मात्।

स॒त्रा॒साहं॒ वरे॑ण्यं सहो॒दां स॑स॒वांसं॒ स्व॑र॒पश्च॑ दे॒वीः ।
स॒सा॒न॒ यः पृ॑थि॒वीं द्यामु॒तेमामिन्द्रं॑ मद॒न्त्यनु॒ धीर॑णासः ॥ ८ ॥

स॒त्रा॒ऽसहं॑म् । वरे॑ण्यम् । स॒ह॒ऽदाम् । स॒स॒ऽवांसं॑म् । स्वः॑ । अ॒पः । च॒ । दे॒वीः ।
स॒सानं॑ । यः । पृ॒थि॒वीम् । द्याम् । उ॒त । इ॒माम् । इन्द्र॑म् । म॒द॒न्ति॒ । अनु॑ । धीऽर॑णासः ॥८॥

ᵛधीरणासः धिया स्तुत्या रणयन्तः[१] स्तोतारः ᵛसत्रासाहं महतो वृत्रादेरभिभवितारम् अत एव ᵛवरेण्यं सर्वैर्वरणीयं ᵛसहोदां दुर्बलस्यार्थिनो बलप्रदं ᵛदेवीः देवनशीलाः ᵛअपः ᵛस्वः ᵛच स्वर्लोकं च ᵛससवांसं संभजमानम्[२] ᵛइन्द्रम् ᵛअनु ᵛमदन्ति हृष्यन्ति । हर्षमनु स्वयं हृष्यन्तीत्यर्थः । ᵛयः इन्द्रः ᵛपृथिवीम् ᵛउत अपि च ᵛद्यां द्युलोकम् ᵛइमाम् इममन्तरिक्षलोकं चैतान् त्रीन् लोकान् ᵛससान तत्तल्लोकवासिभ्यः[३] ददौ । तमनुमदन्तीत्यन्वयः ॥ सत्रासाहम्[४] । 'षह मर्षणे' । 'छन्दसि सहः' इति ण्विः । णित्त्वादुपधावृद्धिः । ससवांसम् । 'षण संभक्तौ' इत्यस्य क्वसाविडभावे नकारलोपे रूपम् । प्रत्ययस्वरः । ससान । 'षणु दाने' इत्यस्य लिटि रूपम् । लित्स्वरः[५] । मदन्ति । मदि स्तुत्यादिषु इत्यस्य व्यत्ययेन परस्मैपदम् । निघातः । धीरणासः । रणतीति रणा वाक् । धिया स्तुत्या रणा येषां ते धीरणाः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

स॒सा॒नात्याँ॑ उ॒त सूर्यं॑ ससा॒नेन्द्रः॑ ससान पु॒रु॒भोज॑सं॒ गाम् ।
हि॒र॒ण्यय॑मु॒त भोगं॑ ससान ह॒त्वी दस्यू॒न्प्रार्यं॒ वर्ण॑मावत् ॥ ९ ॥

स॒सानं॑ । अत्या॑न् । उ॒त । सूर्य॑म् । स॒सा॒न॒ । इन्द्रः॑ । स॒सा॒न॒ । पु॒रु॒ऽभोजं॑सम् । गाम् ।
हि॒र॒ण्यय॑म् । उ॒त । भोग॑म् । स॒सा॒न॒ । ह॒त्वी । दस्यू॑न् । प्र । आर्य॑म् । वर्ण॑म् । आ॒व॒त् ॥९॥

पूर्वमन्त्रे प्रतिपादितः सः ᵛइन्द्रः ᵛअत्यान् अश्वान् ᵛससान युद्धार्थं मरुद्भ्यो ददौ । ᵛउत अपि च ᵛसूर्यं जगत्प्रकाशकमादित्यं ᵛससान । प्राणिनां व्यवहारनिर्वाहाय तेभ्यो ददौ । तथा ᵛपुरुभोजसं पुरुभिः सर्वैर्जनैः क्षीरादिद्वारेणोपभुज्यत इति पुरुभोजाः । क्षीरादिरूपबहुविधान्नोपेतां ᵛगाम् अग्निहोत्रादिसिद्ध्यर्थं ᵛससान तेभ्यः[६] ददौ । ᵛउत अपि च ᵛहिरण्ययं सुवर्णमयं ᵛभोगं धनम् । भुज्यतेऽस्मिन्निति भोगो गृहं वा । ᵛससान अर्थिभ्यो ददौ । ततः ᵛदस्यून् बाधकानसुरान् ᵛहत्वी हत्वा ᵛआर्यम् उत्तमं ᵛवर्णं त्रैवर्णिकं ᵛप्र ᵛआवत् । यथा कर्मविघ्नो न भवेत्तथापालयत् ॥ ससान । 'षणु दाने' इत्यस्य लिटि णलि रूपम् । लित्स्वरः[७] । हिरण्ययम् । हिरण्यशब्दात् विकारार्थे 'मयड्वैतयोः०' ( पा. सू. ४.३.१४३ ) इति विहितस्य छन्दसि विषये 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' इति निपातनात् मयटो मकारलोपः । प्रत्ययस्वरः । हत्वी । हन्तेः क्त्वार्थे 'स्नात्व्यादयश्च' इति निपातितः । प्रत्ययस्वरः । आवत् । अवतेर्लङि रूपम् ॥

---

१. ख-ग-घ-ज-ण-त-न-भ-ल-स-रमयन्तः । २. ख-न-स-भजमानम् । ३. फ-भ-तल्लोक० । ४. ग-ज-ण-सत्रासहम् । ५. ख-ग-ज-ण-न-फ-भ-ल-स-नित्स्वरः । ६. घ-ज-ण-भ-तेभ्यः प्राणिभ्यः । ७. ख-ग-घ-च-ज-ण-फ-भ-ल-स-नित्स्वरः ।

इन्द्र ओषधीरसनोदहानि वनस्पतींरसनोदन्तरिक्षम् ।
बिभेद वलं नुनुदे विवाचोऽथाभवद्दमिताभिक्रतूनाम् ॥ १० ॥

इन्द्रः । ओषधीः । असनोत् । अहानि । वनस्पतीन् । असनोत् । अन्तरिक्षम् ।
बिभेद । वलम् । नुनुदे । विऽवाचः । अथ । अभवत् । दमिता । अभिऽक्रतूनाम् ॥ १० ॥

तादृशः ᵛइन्द्रः ᵛओषधीः पक्कफलसंयुक्तास्तृणगुल्मादिकाः ᵛअसनोत् प्राणिनामुपभोगार्थं प्रादात् । तथा ᵛअहानि दिवसांश्च आयुष्परिक्लृप्त्यर्थं प्रायच्छत् । किंच ᵛवनस्पतीन् यज्ञार्थं खदिरपलाशादिलक्षणान्[1] वृक्षान् ᵛअसनोत् । तथा ᵛअन्तरिक्षं संचारार्थं प्रादात् । तथा ᵛवलम् । संव्रियतेऽनेन आकाशमिति वलो मेघः । तं मेघं ᵛबिभेद उदकप्रेरणार्थमभिदत् । ᵛविवाचः विरुद्धवाचः प्रतिकूलानसुरान् ᵛनुनुदे प्राणिनां रक्षार्थं तान् बबाधे । ᵛअथ अनन्तरम् ᵛअभिक्रतूनाम् । क्रतुः कर्म । अभि आभिमुख्येन युद्धार्थं कर्म येषां तेऽभिक्रतवः बलीयांसः शत्रवः । तेषामपि ᵛदमिता उपशमयिता ᵛअभवत् अभूत्[2] । एवं हितकरणाहितपरिहाराभ्यां सर्वाः प्रजाः पालयति स्मेति भावः ॥ असनोत् । 'षणु दाने' इत्यस्य लङि रूपम् । वनस्पतीन् । पारस्करप्रभृतित्वात् सुडागमः । वनशब्दः 'नब्विषयस्य°' इत्याद्युदात्तः । पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः । 'उभे वनस्पत्यादिषु युगपत्' इत्युभयपदप्रकृतिस्वरत्वम् । बिभेद । 'भिदिर् विदारणे' इत्यस्य लिटि रूपम् । लित्स्वरः । नुनुदे । 'णुद प्रेरणे' इत्यस्य लिटि रूपम् । वाक्यभेदादनिघातः । प्रत्ययस्वरः । दमिता । 'दमु उपशमे' इत्यस्य तृचि रूपम् । चित्स्वरः । अभिक्रतूनाम् । बहुव्रीहौ पूर्वपदस्वरः ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

एषा ऋक्पूर्वमेव व्याख्याता ॥ ॥ १६ ॥

'तिष्ठा हरी' इत्येकादशर्चं षष्ठं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । 'तिष्ठा हरी' इत्यनुक्रमणिका । अग्निष्टुति मरुत्वतीयशस्त्रे निविद्धानं सूक्तम् । सूत्रितं च—'तिष्ठा हरी यो जात एवेति मध्यंदिनः' (आश्व. श्रौ. ९. ७) इति । इन्द्राग्न्योः कुलायनाम्न्येकाहेऽप्येतन्मरुत्वतीयनिविद्धानम् । सूत्रितं च—'तिष्ठा हरी तमु ष्टुहीति मध्यंदिनः' (आश्व. श्रौ. ९. ७) इति । समूढे दशरात्रे तृतीये छन्दोमे मरुत्वतीयशस्त्रे एतत्सूक्तम् । सूत्रितं च—'तिष्ठा हरी प्र मन्दिन इमा उ त्वेति मरुत्वतीयम्' (आश्व. श्रौ. ८. ७) इति । अतिरात्रे तृतीये पर्याये होतुः शस्त्रे परिहिते सति आद्या 'तिष्ठा हरी' इत्येषा शस्त्रयाज्या । सूत्रितं च–'विश्वजिते तिष्ठा हरी रथ आ युज्यमानेति याज्या' (आश्व. श्रौ. ६. ४) इति ॥

---

१. ख-ग-घ-च-ज-ण-°पालाशादि° । २. ल-स-'अभूत्' नास्ति ।

तिष्ठा हरी रथ आ युज्यमाना याहि वायुर्न नियुतो नो अच्छ ।
पिबास्यन्धो अभिसृष्टो अस्मे इन्द्र स्वाहा ररिमा ते मदाय ॥ १ ॥

तिष्ठ । हरी इति । रथे । आ । युज्यमाना । याहि । वायुः । न । निऽयुतः । नः । अच्छ ।
पिबासि । अन्धः । अभिऽसृष्टः । अस्मे इति । इन्द्र । स्वाहा । ररिम । ते । मदाय ॥ १ ॥

विश्वामित्रः स्तौति । हे इन्द्र रथे स्यन्दने युज्यमाना संयुज्यमानौ हरी अश्वौ अभिलक्ष्य[1] कंचित्कालम् आ तिष्ठ । तत्र दृष्टान्तः वायुर्न इति[2] । यथा वायू रथे नियुज्यमानाः नियुतः वडवा अभिलक्ष्य कंचित्कालं तिष्ठति तद्वत् । अथ रथारूढस्त्वं नः अस्मान् अच्छ[3] अभिलक्ष्य आ याहि शीघ्रमागच्छ । आगत्य च[4] अस्मे अस्माभिः अभिसृष्टः अनुज्ञातस्त्वम् अन्धः सोमलक्षणमन्नं पिबासि पिब । स्वाहा । दत्तश्चायं सोमः । वयं ते तव मदाय हर्षाय स्वाहाकृतमिमं सोमं[5] ररिम ददाम । अत्र ' याहि वायुर्न नियुतो नो अच्छ ' इत्यत्र रथेन आ याहीत्यर्थः । ' आपश्चित्पिप्युः स्तर्यो न गावः ' ( ऋ. सं. ७. २३. ४ ) इत्यत्र[6] तन्न तथेति[6] पदकाले नोत्सृज्यते ॥ तिष्ठ । तिष्ठतेर्लोटि रूपम् । तिष्ठादेशस्याद्युदात्तः[7] । याहि । यातेर्लोटि रूपम् । हेर्ङित्त्वादन्तोदात्तः । वायुः । ' वा गतिगन्धनयोः ' इत्यस्मात् ' कृवापा° ' इत्यादिना उण् । आतो युक् । प्रत्ययस्वरः । पिबासि । पातेर्लेटयाडागमः । आगमस्यानुदात्तत्वात्[8] धातुस्वरः । अन्धः । ' अद भक्षणे ' । ' अदेर्नुम् धश्च ' इत्यसुन्नुमागमो धकारश्चान्तादेशः । अद्यते प्राणिभिः तद्वा[9] स्वयमत्तीति । तथा च श्रुतिः—' अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते ' ( तै. उ. २. २ ) इति । निस्स्वरः । अस्मे । ' सुपां सुलुक्° ' इति तृतीयायाः शे इत्यादेशः । ररिम । रातेर्लिटि रूपम् । वाक्यभेदादनिघातः । प्रत्ययस्वरः ॥

उपाजिरा पुरुहूताय सप्ती हरी रथस्य धूर्ष्वा युनज्मि ।
द्रवद्यथा संभृतं विश्वतश्चिदुपेमं यज्ञमा वहात इन्द्रम् ॥ २ ॥

उप । अजिरा । पुरुऽहूताय । सप्ती इति । हरी इति । रथस्य । धूःऽसु । आ । युनज्मि ।
द्रवत् । यथा । सम्ऽभृतम् । विश्वतः । चित् । उप । इमम् । यज्ञम् । आ । वहातः । इन्द्रम् ॥ २ ॥

हे इन्द्र पुरुहूताय पुरुभिर्बहुभिर्यजमानैर्यज्ञार्थमाहूताय तुभ्यम् अजिरा शीघ्रगमनशीलौ[10] सप्ती सर्पणशीलौ हरी हरिनामकावश्वौ रथस्य धूर्षु युगप्रान्तेषु उप आ युनज्मि अहं तथा योजयामि । द्रवत् स रथः यथा गच्छेत्तथेति शेषः । विश्वतश्चित् सर्वतः संभृतम् अग्निर्यजुर्भिः सविता स्तोमैः

---

१. घ-ज—अच्छ अभिलक्ष्य । २. ख-ग-घ-च-ज-ण-भ—' इति ' नास्ति । ३. ख-ग-च-ज-ण-भ-ल—' अच्छ ' नास्ति । ४. ख-ग-च-न-फ-भ—' च ' नास्ति । ५. ख-ग-घ-च-ज-ण-फ-भ-ल—सोमं च । ६. ख-ग-च-त-फ-भ-स—इत्येतन्न रथेति; ज-ण—इत्येतत् भिन्नार्थमिति; न—इत्यत्र अरथे इतीति । ७. च-फ—तिष्ठादेश आद्युदात्तः; ल—तिष्ठादेशस्याद्युदात्तत्वात् तत्राद्युदात्तत्वम् । ८. ज-ण—आगमस्यानुदात्तत्वापेक्षया; त-स—आगमानुदात्तत्वात्; ल—आगमस्यानुदात्तत्वम् । ९. न-ल-स—तन्वा । १०. त-न—शीघ्रं° ।

इत्यादियज्ञसंभारैः संपूर्णम् vइमं vयज्ञं प्रति vइन्द्रं त्वाम् vउप vआ vवहातः तावश्वौ सम्यक् वहताम्॥ धूर्षु। धुर्वी हिंसार्थः । क्विप्। 'राल्लोपः' इति वकारलोपः। 'र्वोरुपधायाः°' इति दीर्घः। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। युनज्मि। 'युजिर् योगे'। रुधादिः। लटि रूपम्। निघातः। द्रवत्। 'द्रु गतौ' इत्यस्य छान्दसे[1] लङि रूपम्। व्यत्ययेनान्तोदात्तत्वम्। वहातः। वहेर्लेट्याडागमे रूपम्॥

उपो॑ नयस्व॒ वृष॑णा तपु॒ष्पोतेम॑व॒ त्वं वृ॑षभ स्वधावः ।
ग्रसे॑ताम॒श्वा वि मु॑चे॒ह शोणा॑ दि॒वेदि॑वे स॒दृशी॑रद्धि धा॒नाः ॥ ३ ॥

उपो॒ इति॑। न॒यस्व॒। वृष॑णा। त॒पुः॒ऽपा। उ॒त। ई॒म्। अ॒व॒। त्वम्। वृ॒ष॒भ॒। स्व॒धा॒ऽव॒ः।
ग्रसे॑ताम्। अश्वा॑। वि। मु॒च॒। इ॒ह। शोणा॑। दि॒वेऽदि॑वे। स॒ऽदृशी॑ः। अ॒द्धि॒। धा॒नाः ॥३॥

vवृषभ कामानां वर्षक vस्वधावः अन्नवन् हे इन्द्र vवृषणा सेचनसमर्थौ vतपुष्पा तापकेभ्यः शत्रुभ्यो रक्षकावश्वौ vउपो vनयस्व अस्मत्समीपं प्रापय। vउत अपि च vत्वम् vईम् एनं यजमानम् vअव पालय। vशोणा शोणवर्णौ तावश्वौ vइह अस्मिन् देवयजने vवि vमुच विमुञ्च[2]। विमुक्तौ[2] तावश्वौ vग्रसेतां विघसं[3] भक्षयताम्। त्वं तु vसदृशीः एकरूपान् vधानाः भृष्टयवान् vदिवेदिवे प्रतिदिवसम् vअद्धि भक्षय॥ नयस्व। नयतेर्लोटि रूपम्। तपुष्पा। 'पा रक्षणे'। 'आतोऽनुपसर्गे कः'। 'सुपां सुलुक्°' इति डादेशः। 'इसुसोः सामर्थ्ये' इति संहितायां विसर्जनीयस्य षत्वम्। कृदुत्तरपदप्रकृतिस्वरः। अव। अवतेर्लोटि रूपम्। स्वधावः। 'मतुवसोः°' इति नकारस्य रुत्वम्। निघातः। ग्रसेताम्। 'ग्रसु अदने' इत्यस्य लोटि आतामि रूपम्। पादादित्वादनिघातः। आतामो लसार्वधातुकस्वरे धातुस्वरः। मुच। मुञ्चतेः लोटि[4] रूपम्[4]। आगमानुशासनस्यानित्यत्वान्नुमभावः। सदृशीः। समानशब्द उपपदे 'दृशिर् प्रेक्षणे' इत्यस्मात् 'समानान्ययोश्च°' इति कञ्प्रत्ययः। समानस्य 'दृग्दृशवतुषु' इति सभावः। 'टिड्ढाणञ्°' इत्यादिना ङीप्। तस्य पित्त्वादनुदात्तत्वे धातुस्वरः। अद्धि। 'अद भक्षणे' इत्यस्य लोटि अदादित्वाच्छपो लुक्। 'हुझल्भ्यो हेर्धिः' इति ध्यादेशः। निघातः। धानाः। 'डुधाञ् धारणपोषणयोः'। 'धापॄवस्यज्यतिभ्यो नः' इति नप्रत्ययः। प्रत्ययस्वरः॥

चातुर्विंशिकेऽहनि[5] माध्यंदिने सवने ब्राह्मणाच्छंसिशस्त्रे 'ब्रह्मणा ते' इत्यारम्भणीया। सूत्रितं च—'ब्रह्मणा ते ब्रह्मयुजा युनज्म्युरुं नो लोकमनुनेषि विद्वान्' (आश्व. श्रौ. ७. ४) इति॥

---

१. ख-ग-ज-ण-न-भ-ल—छान्दसम्। २. ख-ग-च-ज—'विमुञ्च' नास्ति; ल-स—मुक्तौ। ३. ख-ग-च-ज-ण—यवसम्। ४. ख-ग-च-ज-ण-त-न-भ-स—'लोटि रूपम्' नास्ति। ५. ख-ग-च-ज-ण-भ—चतुर्विंशेऽहनि।

ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू ।
स्थिरं रथं सुखमिन्द्राधितिष्ठन्प्रजानन्विद्वाँ उप याहि सोमम् ॥ ४ ॥

ब्रह्मणा । ते । ब्रह्मऽयुजा । युनज्मि । हरी इति । सखाया । सधऽमादे । आशू इति ।
स्थिरम् । रथम् । सुऽखम् । इन्द्र । अधिऽतिष्ठन् ।
प्रऽजानन् । विद्वान् । उप । याहि । सोमम् ॥ ४ ॥

हे ᵛइन्द्र ᵛब्रह्मयुजा ब्रह्मणा मन्त्रेण योक्तव्यौ ᵛसधमादे । माद्यन्ति योद्धारोऽत्रेति मादो युद्धम्। सहमादः सधमादः । तस्मिन् युद्धे ᵛसखाया समानप्रसिद्धी अत एव ᵛआशू क्षिप्रगमनावेतौ[1] ᵛते तव ᵛहरी अश्वौ ᵛब्रह्मणा स्तोत्रेण ᵛयुनज्मि रथे संयोजयामि । ᵛस्थिरं सुदृढं[2] ᵛसुखं सुष्टुद्वारं तादृशं ᵛरथम् ᵛअधितिष्ठन् आरूढस्त्वं सोमपानार्थमायाहि । ᵛप्रजानन् इत्याद्यगमत् ॥ ब्रह्मयुजा । युजेरौणादिकः कर्मणि क्विप् । युनज्मि । युजेः[3] लटि रूपम् । निघातः[4] । सधमादे । ‘ मदी हर्षे ’ । अधिकरणे घञ् । ‘ सधमादस्थयोश्छन्दसि ’ इति सहस्य सधादेशः । कृदुत्तरपदप्रकृतिस्वरः । रथम् । ‘ अधिशीङ्स्थासां कर्म ’ इति कर्मसंज्ञा । सुखम् । ‘ खनु विदारणे ’ । ‘ अन्येभ्योऽपि दृश्यते ’ इति डः । कृदुत्तरस्वरः ॥

मा ते हरी वृषणा वीतपृष्ठा नि रीरमन्यजमानासो अन्ये ।
अत्यायाहि शश्वतो वयं तेऽरं सुतेभिः कृणवाम सोमैः ॥ ५ ॥

मा । ते । हरी इति । वृषणा । वीतऽपृष्ठा । नि । रीरमन् । यजमानासः । अन्ये ।
अतिऽआयाहि । शश्वतः । वयम् । ते । अरम् । सुतेभिः । कृणवाम । सोमैः ॥ ५ ॥

हे इन्द्र ᵛवृषणा कामानां सेचकौ ᵛवीतपृष्ठा कमनीयपृष्ठभागौ ᵛते तव ᵛहरी अश्वौ[5] ᵛअन्ये अस्मदन्ये[6] ᵛयजमानासः यजमानाः ᵛमा ᵛनि ᵛरीरमन् मा हर्षयन् । ᵛवयं तु ᵛसुतेभिः अभिषुतैः ᵛसोमैः ᵛते तव ᵛअरं पर्याप्तं ᵛकृणवाम । यथा तव तृप्तिर्भवति तथा कुर्म इत्यर्थः । त्वं तु ᵛअत्यायाहि ᵛशश्वतः बहूनन्यानतिक्रम्य सोमपानार्थं शीघ्रमागच्छ ॥ वीतपृष्ठा । वी कान्त्यादिषु । अस्मात् क्तप्रत्ययः[7] । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । रीरमन् । ‘ रमु क्रीडायाम् ’ इत्यस्य[8] ण्यन्तस्य[8] लुङि चङि रूपम् । ‘ न माङ्योगे ’ इत्यडभावः । निघातः । अत्यायाहि । यातेर्लोटि रूपम् । ‘ गतिर्गतौ ’ इति पूर्वस्य निघातः । कृणवाम । कृणोतेर्लोटि रूपम् । निघातः[9] ॥ ॥ १७ ॥

‘ तवायं सोमः ’ इति माध्यंदिने सवने नेष्टुः प्रस्थितयाज्या । सूत्रितं च—‘ तवायं सोमस्त्वमेह्यर्वाङिन्द्राय सोमाः प्रदिवः ’ ( आश्व. श्रौ. ५. ५ ) इति ॥

---

१. च-फ–क्षिप्रगमनवन्तौ । २. ख-ग-च-ज-ण–दृढम् । ३. ख-ग-च-ज-ण-न-भ–‘ युजेः ’ नास्ति । ४. ख-ग-च-ज-ण-न-भ–‘ निघातः ’ नास्ति । ५. न-ल-स–‘ अश्वौ ’ नास्ति । ६. ख-ग-च-ज-ण-न-फ-भ-स–‘ अस्मदन्ये ’ नास्ति । ७. ल–तप्रत्ययः । ८. ल–इत्यस्मात् । ९. ख-ग-च-ज-ण-भ–‘निघातः’ नास्ति ।

तवायं सोमस्त्वमेह्यर्वाङ् शश्वत्तमं सुमना अस्य पाहि ।
अस्मिन्यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इन्दुमिन्द्र ॥ ६ ॥

तव । अयम् । सोमः । त्वम् । आ । इहि । अर्वाङ् । शश्वत्ऽतमम् । सुऽमनाः । अस्य । पाहि ।
अस्मिन् । यज्ञे । बर्हिषि । आ । निऽसद्य । दधिष्व । इमम् । जठरे । इन्दुम् । इन्द्र ॥ ६ ॥

हे इन्द्र अयं सोमः[1] तव त्वदर्थमभिषुतः । त्वम् अर्वाङ् सोमाभिमुख्येन आ इहि आयाहि । आगत्य च सुमनाः शोभनमनस्को भूत्वा अस्य इमं सोमं शश्वत्तमं बहुतमं पाहि पिब । बर्हिषि प्रवृद्धे अस्मिन् यज्ञे निषद्य उपविश्य इन्दुं क्लेदनशीलम् इमं सोमं जठरे आ दधिष्व धारय । यथा नाभेरधस्तान्न गच्छति तथा धारय । 'अङ्गिरोभिरा गहि यज्ञियेभिः' (ऋ. सं. १०. १४. ५) इत्यत्र न[2] यज्ञविशेषणं बर्हिः भिन्नरूपं[3] वा तत् इत्यतो नोत्सृज्यते ॥ इहि । 'इण् गतौ'। अस्य लोटि रूपम् । निघातः । शश्वत्तमम् । उञ्छादित्वादन्तोदात्तत्वम् । पाहि । 'पा पाने' इत्यस्य लोटि रूपम् । 'बहुलं छन्दसि' इति शपो लुक् । निघातः । निषद्य । सदेर्ल्यपि 'सदिरप्रतेः[4]' इति षत्वम् । लित्स्वरः । दधिष्व । दधातेर्लोटि 'छन्दस्युभयथा' इति थास आर्धधातुकत्वादिडागमः । प्रत्ययस्वरः । इन्दुम् । 'उन्दी क्लेदने'। 'उन्देरिच्चादेः' इत्युप्रत्ययः । धातोरादेः इकारादेशः । 'नित्' इत्यनुवृत्तेराद्युदात्तः ॥

स्तीर्णं ते बर्हिः सुत इन्द्र सोमः कृता धाना अत्तवे ते हरिभ्याम् ।
तदोकसे पुरुशाकाय वृष्णे मरुत्वते तुभ्यं राता हवींषि ॥ ७ ॥

स्तीर्णम् । ते । बर्हिः । सुतः । इन्द्र । सोमः । कृताः । धानाः । अत्तवे । ते । हरिऽभ्याम् ।
तत्ऽओकसे । पुरुऽशाकाय । वृष्णे । मरुत्वते । तुभ्यम् । राता । हवींषि ॥ ७ ॥

हे इन्द्र ते तवोपवेशनार्थं बर्हिः स्तीर्णं विस्तृतम् । तथा सोमः च त्वदर्थं सुतः अभिषुतः । ते तव हरिभ्याम् अत्तवे भक्षणार्थं धानाः भृष्टयवाः कृताः संपादिताः । तदोकसे तत् बर्हिः ओको निलयो यस्य तस्मै पुरुशाकाय बहुभिः स्तुत्याय यद्वा बहुसहायाय वृष्णे कामानां[5] वर्षित्रे मरुत्वते । मरुतो देवविशः । तद्वते । एवंभूताय तुभ्यं हवींषि सोमाज्यादीनि राता अस्माभिर्दत्तानि । तानि सेवस्वेति भावः॥ स्तीर्णम् । 'स्तृञ् आच्छादने' इत्यस्य[6] 'ॠत इद्धातोः' इतीत्वम् । 'रदाभ्याम्॰' इति निष्ठानत्वम् । प्रत्ययस्वरः। अत्तवे । 'अद भक्षणे' इत्यस्मात् तुमर्थे तवेन्प्रत्ययः । नित्स्वरः । तदोकसे । बहुव्रीहौ पूर्वपदस्वरः । पुरुशाकाय । 'शच व्यक्तायां वाचि' इत्यस्मात् कर्मणि घञ् । 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । कृदुत्तरपदस्वरः । मरुत्वते । 'तसौ मत्वर्थे' इति भसंज्ञायां तकारस्य जश्त्वाभावः । प्रत्ययस्य पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः । राता । 'रा दाने' इत्यस्मात् कर्मणि क्तः । प्रत्ययस्वरः ॥

---

१. ख-स सोमः । २. ख-ग-च-ज-ण-फ-तु । ३. ख-ग-च-ज-ण-न-भ-स-रूपम् । ४. न-भ-ल-सदेरप्रतेः । ५. ख-ग-च-ज-ण-प-भ-'कामानां' नास्ति । ६. ल-इत्यस्य निष्ठायाम् ।

इमं नरः पर्वतास्तुभ्यमापः समिन्द्र गोभिर्मधुमन्तमक्रन् ।
तस्यागत्या सुमना ऋष्व पाहि प्रजानन्विद्वान्पथ्या ३ अनु स्वाः ॥ ८ ॥

इमम् । नरः । पर्वताः । तुभ्यम् । आपः । सम् । इन्द्र । गोभिः । मधुऽमन्तम् । अक्रन् ।
तस्य । आऽगत्य । सुऽमनाः । ऋष्व । पाहि । प्रऽजानन् । विद्वान् । पथ्याः । अनु । स्वाः ॥८॥

हे ᵛइन्द्र ᵛनरः कर्मणां नेतारोऽध्वर्य्वादयः ᵛपर्वताः ग्रावाणः ᵛआपः चैते सर्वे संभूय ᵛतुभ्यं त्वदर्थम् ᵛइमं सोमं ᵛगोभिः पयोभिः[1] ᵛमधुमन्तं माधुर्योपेतं ᵛसम् ᵛअक्रन् सम्यगकार्षुः । ᵛऋष्व दर्शनीय हे इन्द्र ᵛसुमनाः शोभनमनस्कः ᵛविद्वान् कर्माभिज्ञः ᵛस्वाः स्वकीयाः ᵛपथ्याः वैदिके पथि कर्मणि साधुभूताः स्तुतीः ᵛअनु ᵛप्रजानन् त्वम् ᵛआगत्य ᵛतस्य ᵛपाहि इममभिषुतं सोमं पिब ॥ अक्रन् । करोतेर्लुङि रूपम् । निघातः । आगत्य । गमेर्ल्यपि रूपम् । लित्स्वरः । पाहि । पातेर्लोटि रूपम् ॥

याँ आभजो मरुत इन्द्र सोमे ये त्वामवर्धन्नभवन्गणस्ते ।
तेभिरेतं सजोषा वावशानो३ऽग्नेः पिब जिह्वया सोममिन्द्र ॥ ९ ॥

यान् । आ । अभजः । मरुतः । इन्द्र । सोमे । ये । त्वाम् । अवर्धन् । अभवन् । गणः । ते ।
तेभिः । एतम् । सऽजोषाः । वावशानः । अग्नेः । पिब । जिह्वया । सोमम् । इन्द्र ॥ ९ ॥

हे ᵛइन्द्र ᵛयान् ᵛमरुतः ᵛसोमे सोमपानविषये ᵛआभजः समभावयः ᵛये[2] च[2] मरुतः ᵛत्वाम् ᵛअवर्धन् युद्धे प्रोत्साहोत्पादनेनावर्धयन् ये च मरुतः ᵛते तव ᵛगणः[3] ᵛअभवन् सहाया अभूवन्नित्यर्थः। हे ᵛइन्द्र एवंविधैः ᵛतेभिः तैर्मरुद्भिः ᵛसजोषाः संगतः सन् ᵛएतम् अभिषुतं ᵛसोमं ᵛवावशानः कामयमानस्त्वम् ᵛअग्नेः आहुत्यधिकरणभूतस्याहवनीयस्य ज्वालारूपया ᵛजिह्वया इमं ᵛपिब ॥ अभजः । 'भज सेवायाम्' इत्यस्य लङि रूपम् । यद्वृत्तयोगादनिघातः । अवर्धन् । 'वृधु वर्धने' इत्यस्य ण्यन्तस्य लङि रूपम् । 'छन्दस्युभयथा' इति ञेरार्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । अत्रापि यद्योगादनिघातः । अभवन् । वाक्यभेदादनिघातः । वावशानः । 'वश कान्तौ' इत्यस्य यङ्लुकि चानशि रूपम् । चित्स्वरः । पिब । 'पा पाने' । निघातः ॥

इन्द्र पिब स्वधया चित्सुतस्याग्नेर्वा पाहि जिह्वया यजत्र ।
अध्वर्योर्वा प्रयतं शक्र हस्ताद्धोतुर्वा यज्ञं हविषो जुषस्व ॥ १० ॥

इन्द्र । पिब । स्वधया । चित् । सुतस्य । अग्नेः । वा । पाहि । जिह्वया । यजत्र ।
अध्वर्योः । वा । प्रऽयतम् । शक्र । हस्तात् । होतुः । वा । यज्ञम् । हविषः । जुषस्व ॥१०॥

---

१. ख-ग-च-ज-ण-फ-भ-'पयोभिः' नास्ति । २. ख-ग-न-भ-स-वा; च-फ-एते । ३. ख-ग-घ-च-ज-ण-भ-गणः; गणाः ।

हे <sup>v</sup>इन्द्र <sup>v</sup>स्वधया । स्वमात्मानं दधाति पोषयतीति स्वधा बलम् । तेन । बलादपहृत्य <sup>v</sup>सुतस्य सुतमभिषुतं हुतं वा <sup>v</sup>पिब । <sup>v</sup>यजत्र यष्टव्य इन्द्र <sup>v</sup>अग्नेः ज्वालारूपया <sup>v</sup>जिह्वया <sup>v</sup>वा[1] आहुतं सोमं <sup>v</sup>पाहि पिब । हे <sup>v</sup>शक्र समर्थेन्द्र <sup>v</sup>अध्वर्योः <sup>v</sup>हस्तात् <sup>v</sup>वा <sup>v</sup>प्रयतं दातुमुपक्रान्तं सोमं पिब । अथवा <sup>v</sup>होतुः <sup>v</sup>यज्ञं यजनीयं[2] वषट्कारोपेतं <sup>v</sup>हविषः भागं <sup>v</sup>जुषस्व सेवस्व । सर्वथापि त्वमत्रागत्यास्माभिर्दीयमानं सोमं पिबेति भावः ॥ पिब । आमन्त्रितस्याविद्यमानत्वेन पादादित्वात् अनिघातः । अध्वर्योः । अध्वरं कामयतीति क्यच् । 'कव्यध्वर°' इत्यकारलोपः । प्रत्ययस्वरः । ततः एकादेशस्वरः । प्रयतम् । 'यम उपरमे' इत्यस्य कर्मणि निष्ठा । शक्र । 'शक्लृ शक्तौ' । 'स्फायितञ्चि°' इत्यादिना रक् । हस्तात् । 'असिहसि°' इत्यादिना तन् । निस्स्वरः । होतुः । जुहोतेः ताच्छीलिकस्तृन् । निस्स्वरः । जुषस्व । 'जुषी प्रीतिसेवनयोः' इत्यस्य लोटि रूपम् । निघातः ॥

**शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।**

**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ११ ॥**

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।

शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ ११ ॥

पूर्वं[3] व्याख्याता[3] ॥    ॥ १८ ॥

'इमामू षु' इत्येकादशर्चं सप्तमं सूक्तं त्रैष्टुभमैन्द्रम् । अत्रानुक्रमणिका—'इमामू षूपान्त्यां घोरोऽपश्यत् सा निर्दहेच्छस्यमानेति श्रूयते' इति । दशम्या आङ्गिरसो घोर ऋषिः शिष्टानां विश्वामित्रः । अग्निष्टोमे माध्यंदिनसवनेऽच्छावाकशस्त्रे दशमीवर्जितम् 'इमामू षु' इति सूक्तम् । सूत्रितं च[4]—'इमामू ष्वित्युपोत्तमामुद्धरेत्सर्वत्र' (आश्व. श्रौ. ५. १६) इति । पृष्ठ्याभिप्लवषडहयोः माध्यंदिनसवने[5] अच्छावाकशस्त्रे चातुर्विंशिकातिदिष्टस्याहीनसूक्तस्य स्थाने त्रीणि संपातसूक्तानि । तत्रोपोत्तमावर्जमेतत्प्रथमं सूक्तम् । सूत्रितं च—'इमामू ष्विच्छन्ति त्वा' (आश्व. श्रौ. ७. ५) इति ॥

**इमामू षु प्रभृतिं सातये धाः शश्वच्छश्वदूतिभिर्यादमानः ।**

**सुतेसुते वावृधे वर्धनेभिर्यः कर्मभिर्महद्भिः सुश्रुतो भूत् ॥ १ ॥**

इमाम् । ऊँ इति । सु । प्रऽभृतिम् । सातये । धाः । शश्वत्ऽशश्वत् । ऊतिऽभिः । यादमानः ।

सुतेऽसुते । ववृधे । वर्धनेभिः । यः । कर्मऽभिः । महत्ऽभिः । सुऽश्रुतः । भूत् ॥ १ ॥

विश्वामित्र इन्द्रं स्तौति । हे इन्द्र <sup>v</sup>ऊतिभिः । अवन्ति रक्षन्ति सर्वमित्यूतयो मरुतः । तैः <sup>v</sup>शश्वच्छश्वत् सर्वदा <sup>v</sup>यादमानः संगतिं याचमानस्त्वं <sup>v</sup>प्रभृतिम् । प्रकर्षेण भ्रियते धार्यते[6] यज्ञार्थमिति

---

१. त–तु । २. ख-ग-च-ज-ण-प-फ-भ–यजनीयं चित् । ३. त–व्याख्यातेयमृक् । ४. ख-ग-च-ज-ण-भ-ल-स–'च' नास्ति । ५. च–माध्यंदिने सवने । ६. त–'धार्यते' नास्ति ।

प्रभृतिः सोमः स्तुतिर्वा[1]। ᵛइमाम् इमं सोमम् इमां[2] स्तुतिं वा[3] ᵛसातये अस्माकं धनलाभार्थं ᵛसु ᵛधाः सुष्ठु संपादय । तथा स इन्द्रः ᵛसुतेसुते सोमे अभिषुते सति ᵛवर्धनेभिः वर्धनकारिभिः सोमाज्यादिभिः हविर्भिः ᵛवावृधे[3] वर्धते। ᵛयः इन्द्रः ᵛमहद्भिः ᵛकर्मभिः असुरवधमेघभेदनादिलक्षणैर्व्यापारैः ᵛसुश्रुतः लोके प्रसिद्धः ᵛभूत्। स इन्द्र इति पूर्वेणान्वयः[4] ॥ प्रभृतिम् । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् । धाः । दधातेश्छान्दसे लुङि रूपम् । निघातः । शश्वच्छश्वत् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । यादमानः । 'टुयाचृ याच्ञायाम्'। शानचि रूपम् । चकारस्य दकारश्छान्दसः । वावृधे । 'वृधु वर्धने' इत्यस्मात् लिटि रूपम् । तुजादित्वादभ्यासस्य दीर्घः संहितायाम् । निघातः। वर्धनेभिः । वर्धतेर्ण्यन्तस्य नन्द्यादित्वात् ल्युट् । लित्स्वरः । सुश्रुतः । 'श्रु श्रवणे' इत्यस्मात् कर्मणि क्तः । 'गतिरनन्तरः' इति गतिस्वरः । भूत् । भवतेर्लुङि रूपम् ॥

माध्यंदिने सवनेऽच्छावाकस्य प्रस्थितयाज्या 'इन्द्राय सोमाः प्रदिवः' इत्येषा । सूत्रितं च— 'इन्द्राय सोमाः प्रदिवो विदाना आपूर्णो अस्य' ( आश्व. श्रौ. ५. ५ ) इति ॥

इन्द्रा॑य॒ सोमाः॑ प्र॒दिवो॒ विदा॑ना ऋ॒भुर्येभि॒र्वृष॑पर्वा॒ विहा॑याः ।
प्र॒य॒म्यमा॑ना॒न्प्रति॒ षू गृ॑भा॒येन्द्र॒ पिब॒ वृष॑धूतस्य॒ वृष्णः॑ ॥ २ ॥

इन्द्रा॑य । सोमाः॑ । प्र॒ऽदिवः॑ । विदा॑नाः । ऋ॒भुः । येभिः॑ । वृष॑ऽपर्वा । विऽहा॑याः ।
प्र॒ऽय॒म्यमा॑नान् । प्रति॑ । सु । गृ॒भा॒य॒ । इन्द्र॑ । पिब॑ । वृष॑ऽधूतस्य । वृष्णः॑ ॥ २ ॥

हे इन्द्र ᵛइन्द्राय तुभ्यं ᵛसोमाः ᵛप्रदिवः प्रगतेषु पूर्वेष्वहःसु ᵛविदानाः अस्माभिर्लम्भिताः । ᵛवृषपर्वा । वृषाणः[5] फलस्य वर्षकाः पर्वाणि कालावयवा वर्षाद्या यस्य स तथोक्तः । कालात्मक इत्यर्थः। अत एव ᵛविहायाः । विजहात्युत्सृजत्यर्थानर्थिभ्य इति[6] विहाया महान् । तादृश इन्द्रः ᵛयेभिः यैर्दत्तैः सोमैः ᵛऋभुः दीप्तो वर्तते । हे ᵛइन्द्र त्वं ᵛप्रयम्यमानान् प्रकर्षेण[7] मन्त्रैरुपयम्यमानानिमान् सोमान् ᵛसु सुष्ठु ᵛप्रति ᵛगृभाय प्रतिगृहाण । गृहीत्वा च ᵛवृषधूतस्य वृषभिर्ग्रावभिः अभिषुतं[8] ᵛवृष्णः स्वर्गादिफल-वर्षकमिमं सोमं ᵛपिब ॥ प्रदिवः । दिवु क्रीडादौ । क्विप् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । दिव्शब्दो दिवसवाची । कृदुत्तरपदस्वरः । विदानाः । 'विद्लृ लाभे' इत्यस्य व्यत्ययेन शानच् । 'बहुलं छन्दसि' इति विकरणस्य लुक् । विहायाः । 'ओहाक् त्यागे' । 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । 'णित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युगागमः । 'गतिकारकयोः°' इति पूर्वपदप्रकृति-स्वरत्वम् । गृभाय । 'ग्रह उपादाने' इत्यस्य लोटि हौ श्नाप्रत्ययस्य 'छन्दसि शायजपि' इति शायजादेशः । 'हृग्रहोर्भः°' इति भत्वम् । 'अतो हेः' इति हेर्लुक् । निघातः ॥

माध्यंदिने सवनेऽच्छावाकशस्त्रे याज्या 'पिबा वर्धस्व' इत्येषा । सूत्रितं च[9]–'पिबा वर्धस्व तव घा सुतास इति याज्या' ( आश्व. श्रौ. ५. १६ ) इति ॥

---

१. च–स्तुतिर्वा ताम् । २. ख-ग-च-ज-ण-भ–'इमां स्तुतिं वा' नास्ति । ३. ख-ग-घ-च–वव्रृधे । ४. ज-ण–पूर्वेणान्वयः । उ पूरणः । ५. ख-ग-च-फ-भ–वृषणाः । ६. ख-ग-ज-ण-त-न-भ-स–इति वा । ७. त–प्रक्षेपेण । ८. ख-ग-च-ज-ण-न-फ-भ–अभिषुतस्य । ९. त–'च' नास्ति ।

पिब॑ा वर्ध॑स्व॒ तव॑ घा सु॒तास॒ इन्द्र॒ सोमा॑सः प्रथ॒मा उ॒तेमे ।

यथापि॑बः पू॒र्व्याँ इन्द्र॒ सोमाँ॑ ए॒वा पा॑हि॒ पन्यो॑ अ॒द्या नवी॑यान् ॥ ३ ॥

पिब॑ । वर्ध॑स्व । तव॑ । घ॒ । सु॒तासः॑ । इन्द्र॑ । सोमा॑सः । प्र॒थ॒माः । उ॒त । इ॒मे ।

यथा॑ । अपि॑बः । पू॒र्व्यान् । इन्द्र॒ । सोमा॑न् । ए॒व । पा॒हि॒ । पन्यः॑ । अ॒द्य । नवी॑यान् ॥ ३॥

हे ᵛइन्द्र इमं सोमं ᵛपिब । ततः ᵛवर्धस्व शरीरेण पुष्टो भव । ᵛतव त्वदर्थं[1] ᵛप्रथमाः पुरातनाः ᵛउत अपि च ᵛइमे अभिनवाः उभयविधाः सोमासः[2] सोमाः ᵛसुतासः ᵛघ[2] ग्रावभिरभिषुताः खलु । हे ᵛइन्द्र ᵛपूर्व्यान् पुरातनान् ᵛसोमान् ᵛयथा त्वम् ᵛअपिबः ᵛएव एवम् ᵛअद्य अधुना ᵛपन्यः स्तुत्योऽत एव ᵛनवीयान् अतिशयेनाभिनवस्त्वम् इमानभिनवान् सोमान् ᵛपाहि पिब ॥ पिब । पातेर्लोटि रूपम् । वर्धस्व । तिङ उत्तरत्वान्निघाताभावः । अपिबः । यथायोगादनिघातः । पाहि । पातेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । निघातः । पन्यः । पनतेः स्तुत्यर्थस्य अघ्न्यादित्वात् यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । नवीयान् । नवशब्दादीयसुनि रूपम् । नित्स्वरः ॥

म॒हाँ अम॑त्रो वृ॒जने॑ विर॒प्श्यु१॒॑ग्रं शव॑ः पत्यते धृ॒ष्ण्वोजः॑ ।

नाह॑ विव्याच पृ॒थि॒वी च॒नैनं॒ यत्सोमा॑सो॒ हर्य॑श्व॒ममं॑न्दन् ॥ ४ ॥

म॒हान् । अम॑त्रः । वृ॒जने॑ । वि॒ऽर॒प्शी । उ॒ग्रम् । शव॑ः । प॒त्य॒ते॒ । धृ॒ष्णु । ओजः॑ ।

न । अह॑ । वि॒व्या॒च॒ । पृ॒थि॒वी । च॒न । ए॒न॒म् । यत् । सोमा॑सः । हरि॑ऽअश्वम् । अम॑न्दन् ॥ ४॥

योऽयमिन्द्रः ᵛमहान् अतिशयितसामर्थ्यवान् ᵛवृजने बलोपलक्षिते युद्धे ᵛअमत्रः शत्रूणामभिभविता अत एव ᵛविरप्शी विरपणशीलो भुजास्फालनेन युद्धार्थं शत्रूणामाह्वानकारी । यद्वा विविधं रपणं स्तुतिलक्षणं यस्येति । सर्वैः[3] स्तुत्य इत्यर्थः । तादृशस्येन्द्रस्य ᵛउग्रम् उद्गूर्णं ᵛशवः बलं ᵛधृष्णु धर्षणशीलम् ᵛओजः पराक्रमलक्षणं तेजः ᵛपत्यते सर्वत्र प्रसरति । ᵛएनम् एतादृशमहिमोपेतमिन्द्रं ᵛपृथिवी विस्तीर्णा भूमिः ᵛन ᵛविव्याच न व्याप्नोति । अहशब्द एवार्थे । ᵛचन इत्यप्यर्थे । द्यौरपि न व्याप्नोतीत्यर्थः । ᵛयत् यदा ᵛसोमासः स्वाहाकृताः सोमाः ᵛहर्यश्वम् इन्द्रम् ᵛअमन्दन् अमादयन् । तदा तमेनं द्यावापृथिव्यौ व्याप्तुं न शक्नुत इत्यर्थः ॥ अमत्रः । अम गत्यादिषु । 'अमिनक्षियजि°' इत्यादिना अत्रन्प्रत्ययः । नित्स्वरः । विरप्शी । 'रप लप व्यक्तायां वाचि' । औणादिकः शप्रत्ययः । विविधं रपन्तीति विरप्शाः स्तोतारः । तेऽस्य सन्तीत्यत इनिः । यद्वा विविधं रपणं विरप्शम् । तदस्यास्तीति । प्रत्ययस्वरः । पत्यते । व्यत्ययेन कर्तरि यक् । निघातः । धृष्णु । 'ञिधृषा प्रागल्भ्ये' । त्रसिगृधिधृषिक्षिपेः क्नुप्रत्ययः । 'रषाभ्याम्°' इति णत्वम् । प्रत्ययस्वरः । विव्याच । व्यचेर्लिटि णलि 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य संप्रसारणम् । निघातः । चनेति निपातसमुदायश्चार्थे वर्तते । एवमादित्वादन्तोदात्तः । अमन्दन् । मदि स्तुत्यादिषु इत्यस्य लङि रूपम् । यद्योगादनिघातः ॥

---

१. न-त्वदर्थे । २. ख-ग-च-ज-ण-त-म-भ-स-सोमाः सुतासः; घ-सोमासः सुतासः घ; ल-सोमासः सुतासः । ३. न-' सर्वैः ' नास्ति ; ल- स सर्वैः ।

महाँ उग्रो वावृधे वीर्याय समाचक्रे वृषभः काव्येन ।
इन्द्रो भगो वाजदा अस्य गावः प्र जायन्ते दक्षिणा अस्य पूर्वीः ॥ ५ ॥

महान् । उग्रः । ववृधे । वीर्याय । सम्ऽआचक्रे । वृषभः । काव्येन ।
इन्द्रः । भगः । वाजऽदाः । अस्य । गावः । प्र । जायन्ते । दक्षिणाः । अस्य । पूर्वीः ॥५॥

महान् युद्धकर्मणि बलवान् उग्रः शत्रूणां भयंकरः इन्द्रः वीर्याय वीर्यकरणाय वावृधे वर्धते[1] । वृषभः फलस्याभिवर्षकः भगः सर्वैर्भजनीयः सः इन्द्रः काव्येन । कवयः स्तोतारः । तत्कर्म स्तोत्रम् । तेन स्तोत्रेण समाचक्रे संगच्छते । तादृशस्य अस्य[2] इन्द्रस्य गावः वाजदाः क्षीरादिलक्षणान्नप्रदाः प्र जायन्ते । तथा अस्य पूर्वीः बह्वयस्ता गावः दक्षिणाः प्रजायन्ते ॥ वावृधे[3] । वर्धतेर्लिटि रूपम् । निघातः । वीर्याय । वीरे भवं वीर्यम् । ' भवे छन्दसि ' इति यत् । ' वीरवीर्यौ च ' इत्यत्र ' यतोऽनावः ' इत्यस्यानित्यत्वस्य ज्ञापितत्वात् तित्स्वरितः । समाचक्रे । करोतेर्लिटि रूपम् । ' गतिर्गतौ ' इति पूर्वपदस्य[4] गतेर्निघातः । काव्येन । कवेः कर्म काव्यम् । ब्राह्मणादित्वात् ष्यञ् । ञित्त्वादुपधावृद्धिः । ञित्स्वरः । वाजदाः । ददातेः ' आतोऽनुपसर्गे कः ' । जायन्ते । ' जनी प्रादुर्भावे ' इत्यस्य लटि रूपम् । दक्षिणाः । ' दक्ष वृद्धौ ' इत्यस्मात् ' द्रुदक्षिभ्यामिनन् ' इतीनन्प्रत्ययः । नित्त्वादाद्युदात्तः ॥ ॥ १९ ॥

प्र यत्सिन्धवः प्रसवं यथायन्नापः समुद्रं रथ्येव जग्मुः ।
अतश्चिदिन्द्रः सदसो वरीयान्यदीं सोमः पृणति दुग्धो अंशुः ॥ ६ ॥

प्र । यत् । सिन्धवः । प्रऽसवम् । यथा । आयन् । आपः । समुद्रम् । रथ्याऽइव । जग्मुः ।
अतः । चित् । इन्द्रः । सदसः । वरीयान् । यत् । ईम् । सोमः । पृणति । दुग्धः । अंशुः ॥६॥

सिन्धवः नद्यः यथा प्रसवम् । प्रकर्षेण सूयते इति प्रसवः कामः । तमनुसृत्य यत् यदा प्र आयन् प्रकृष्टमतिदूरं समुद्रं गच्छन्ति तदा आपः महान्तं समुद्रं रथ्येव रथिन इव जग्मुः प्रीणनार्थं[5] गच्छन्ति । तद्वत् अतश्चित् सदसः अस्मादप्यन्तरिक्षादसौ इन्द्रः वरीयान् उरुतरः[6] खलु । यदीं यमेनमिन्द्रं दुग्धः अभिषुतः अंशुः लताखण्डरूपोऽल्पः[7] सोमः पृणति प्रीणयति । यथाल्पा नद्योऽल्पीयांसि च जलानि महान्तं समुद्रं प्रीणयन्ति तद्वदल्पतरोंऽशुभूतः सोमः वरीयांसमिन्द्रं प्रीणयति ॥ प्रसवम् । सवतेः[8] कर्मण्यप् । थाथादिस्वरः । आयन् । अयतेर्लङि[9] रूपम् । यद्योगात् अनिघातः । रथ्येव । रथस्येमे रथ्याः । ' रथाद्यत् ' इति यत् । ' सुपां सुलुक्°[10] ' इति सुपो डादेशः । तित्स्वरितः[11] । इवेन विभक्त्यलोपः[12] पूर्वपदप्रकृतिस्वरः । जग्मुः । गमेर्लिटि रूपम् । ' गमहन°[13] '

---

१. ख-ग-घ-च-ज-ण-भ—अवर्धत । २. ख-ग-च-न-प-फ-भ-स—' अस्य ' नास्ति । ३. ज-ण—ववृधे । ४. ल—पूर्वस्य । ५. त-स—प्राणनार्थम् । ६. प-भ—पुरुतरः । ७. ख-ग-घ-च-ज-ण-प-फ-भ—लताखण्डजः । ८. ख-ग-च-ज-ण—सुवतेः । ९. फ—एतेर्लङि । १०. ख-ग-च-ज-ण-न-भ-स—' सुलुक्° ' नास्ति । ११. ख-ग-च-ज-ण-न-भ—नित्स्वरः । १२. ख-ग-च-ज-ण-त-न-भ-स—विभक्तेरलोपः । १३. ल—गमहनजन° ।

इत्यादिनोपधालोपः । निघातः । वरीयान् । उरुशब्दादीयसुनि ' प्रियस्थिर° ' इत्यादिना वरादेशः । नित्त्वादाद्युदात्तः । पृणति । ' पृण प्रीणने ' । तुदादिः । यद्योगादनिघातः । दुग्धः । दुहेः क्तः । ' एकाचः° ' इतीट्प्रतिषेधः । ' दादेर्धातोर्घः ' इति हकारस्य घत्वम् । ' झषस्तथोर्धोऽधः ' । प्रत्ययस्वरः ॥

समुद्रेण सिन्धवो यादमाना इन्द्राय सोमं सुषुतं भरन्तः ।

अंशुं दुहन्ति हस्तिनो भरित्रैर्मध्वः पुनन्ति धारया पवित्रैः ॥ ७ ॥

समुद्रेण । सिन्धवः । यादमानाः । इन्द्राय । सोमम् । सुऽसुतम् । भरन्तः ।

अंशुम् । दुहन्ति । हस्तिनः । भरित्रैः । मध्वः । पुनन्ति । धारया । पवित्रैः ॥ ७ ॥

ᵛसमुद्रेण । सहिता नद्यादिरूपेणापोऽभिद्रवन्त्येनमिति समुद्रः । तेन ᵛयादमानाः तेन सह संगतिं याचमानाः ᵛसिन्धवः नद्यो यथा तं पूरयन्ति तद्वत् ᵛहस्तिनः हस्तवन्तोऽध्वर्य्वादयः ᵛइन्द्राय तुभ्यं ᵛसुषुतं सुष्ठुभिषुतं[1] ᵛसोमं ᵛभरन्तः संपादयन्तः ᵛअंशुं ᵛदुहन्ति लताखण्डमभिषुण्वन्ति । तथा तेऽध्वर्य्वादयः[2] स्रवतो रसस्य ᵛधारया ᵛपवित्रैः पावनैः[3] ᵛभरित्रैः[4] । कर्मकरणार्थं पदार्थान् बिभ्रतीति भरित्रा बाहवः । तैः ᵛमध्वः माधुर्योपेतान् सोमान् ᵛपुनन्ति शोधयन्ति ॥ समुद्रेण । समुत्पूर्वात् द्रवतेः ' अन्येभ्योऽपि दृश्यते ' इति डः । डित्त्वाट्टिलोपः । यद्वा । ' उन्दी क्लेदने ' । संपूर्वस्य ' स्फायितञ्चि° ' इत्यादिना रक् । कित्त्वादुपधालोपः । उभयत्र प्रत्ययस्वरः । सुपा सहैकादेशे कृत एकादेश उदात्त एव । यादमानाः । ' टुयाचृ याच्ञायाम् ' । शानच् । व्यत्ययेन चकारस्य दकारः । शानचो लसार्वधातुकस्वरे धातुस्वरः । दुहन्ति । ' दुह प्रपूरणे ' इत्यस्य लटि रूपम्[4] । भरित्रैः । ' डुभृञ् धारणपोषणयोः ' इत्यस्मात् ' अशित्रादिभ्य इत्रोत्रौ ' इतीत्रप्रत्ययः । प्रत्ययस्वरः । पुनन्ति । ' पूञ् पवने ' इत्यस्य लटि रूपम् ॥

ह्रदाइव कुक्षयः सोमधानाः समीं विव्याच सवना पुरूणि ।

अन्ना यदिन्द्रः प्रथमा व्याश वृत्रं जघन्वाँ अवृणीत सोमम् ॥ ८ ॥

ह्रदाःऽइव । कुक्षयः । सोमऽधानाः । सम् । ईमिति । विव्याच । सवना । पुरूणि ।

अन्ना । यत् । इन्द्रः । प्रथमा । वि । आश । वृत्रम् । जघन्वान् । अवृणीत । सोमम् ॥८॥

इन्द्रस्य ᵛकुक्षयः उदराणि ᵛसोमधानाः । सोमो निधीयते येष्विति सोमधानाः । तत्र दृष्टान्तः । ᵛह्रदाइव । यथा ह्रदा जलाधारा भवन्ति तद्वत् । ᵛईं सोऽयमिन्द्रः ᵛपुरूणि ᵛसवना त्रीणि सवनानि ᵛसं ᵛविव्याच सम्यक् व्याप्नोति । ᵛइन्द्रः ᵛप्रथमा प्रथमानि ᵛअन्ना भक्षणीयानि सोमादीन्यन्नानि ᵛयत् यस्मात् ᵛव्याश विशेषेण जघास ततः ᵛवृत्रं ᵛजघन्वान् वृत्रस्य हन्तेन्द्रः ᵛसोमं माध्यंदिने[5] सवने[5] देवेभ्यः

---

१. ख-ग-च-फ–अभिषुतम् । २. ख-ग-च-ज-ण–अध्वर्य्वादयः । ३. ख-ग-च-फ–पावमानैः । ४. ख-ग-घ-च-ज-ण-प-फ–भरित्रैः बाहुभिः मध्वः माधुर्योपेतान् सोमान् पुनन्ति शोधयन्ति । ५. ख-ग-च-ज-ण-फ-ल–' माध्यंदिनं सवने ' नास्ति ।

ᵛअवृणीत समभजत ॥ कुक्षयः[1] । ' कुष निष्कर्षे ' । ' प्लुषिकुषिशुषिभ्यः क्सिः ' ( उ. सू. ३. ४३५ ) । कुष्यत इति कुक्षिः । प्रत्ययस्वरः । सोमधानाः । दधातेरधिकरणे ल्युट् । लित्स्वरः । विव्याच । व्यचेर्लिटि रूपम् । अन्ना । ' अद भक्षणे ' । अद्यत इत्यन्नम् । आश । ' अश भोजने ' इत्यस्य लिटि णलि रूपम् । ' अत आदेः ' इत्यभ्यासस्य दीर्घः । यद्योगादनिघातः । लित्स्वरः । वृत्रम् । ' न लोकाव्यय° ' इति षष्ठीप्रतिषेधः । जघन्वान् । हन्तेः क्वसाविडभावे रूपम् । प्रत्ययस्वरः । अवृणीत । ' वृङ् संभक्तौ ' इत्यस्य लङि रूपम्[1] ॥

**आ तू भ॑र॒ माकि॑रे॒तत्परि॑ ष्ठाद्वि॒द्मा हि त्वा॒ वसु॑पतिं॒ वसू॑नाम् ।**

**इन्द्र॒ यत्ते॒ माहि॑नं॒ दत्र॒मस्त्य॒स्मभ्यं॒ तद्ध॑र्यश्व॒ प्र य॑न्धि ॥ ९ ॥**

आ । तु । भ॒र॒ । माकिः॑ । ए॒तत् । परि॑ । स्था॒त् । वि॒द्म । हि । त्वा॒ । वसु॑ऽपतिम् । वसू॑नाम् ।

इन्द्र॑ । यत् । ते॒ । माहि॑नम् । दत्र॑म् । अस्ति॑ । अ॒स्मभ्य॑म् । तत् । ह॒रि॒ऽअ॒श्व॒ । प्र । य॒न्धि॒ ॥९॥

हे ᵛइन्द्र ᵛतु क्षिप्रं धनम् ᵛआ ᵛभर । ᵛएतत् त्वया दीयमानं धनं ᵛमाकिः को वा ᵛपरि ᵛष्ठात् प्रतिबध्य तिष्ठेत् । ᵛत्वा त्वां ᵛवसूनां धनानां ᵛवसुपतिम् उत्तमस्य धनस्य स्वामिनं ᵛविद्म ᵛहि जानीमः खलु । ᵛते तव ᵛमाहिनं ᵛमंहनीयं[2] ᵛयत् ᵛदत्रं धनम् ᵛअस्ति हे ᵛहर्यश्व इन्द्र[3] ᵛतत् धनम् ᵛअस्मभ्यं ᵛप्र ᵛयन्धि प्रयच्छ ॥ तु । ' ऋचि तुनुघ° ' इत्यादिना संहितायां दीर्घः । भर । भरतेः लोटि रूपम् । माकिः । निपातः । स्थात् । तिष्ठतेश्छान्दसे लुङि रूपम् । ' उपसर्गात् सुनोति° ' इत्यादिना संहितायां षत्वम् । निघातः । विद्म । वेत्तेर्लटि ' विदो लटो वा ' इति मसो मादेशः । प्रत्यय-स्वरः । संहितायां ' द्व्यचोऽतस्तिङः ' इति दीर्घः । वसुपतिम् । ' पत्यावैश्वर्ये ' इति पूर्वपदप्रकृति-स्वरः । माहिनम् । ' महेरिनण् च ' इतीनण्प्रत्ययः । णित्त्वादुपधावृद्धिः । ग्रामादित्वादाद्युदात्तः। यन्धि । ' यमु उपरमे ' । लोटि ' बहुलं छन्दसि ' इति शपो लुक् । सेर्हिः । तस्य ' वा छन्दसि ' इति पित्त्वस्य विकल्पितत्वात् अत्राङित्त्वात् ' अङितश्च ' इति हेर्ध्यादेशः । निघातः ॥

जातकर्मण्यंसाभिमर्शने ' अस्मे प्र यन्धि ' ( आश्व. गृ. १. १५ ) इत्येषा । यद्यपि ' सा निर्दहेत् ' इति वचनेन शंसने निषिद्धा तथाप्यभिमर्शनस्य शंसने चोदितत्वात् नोक्तदोषः[4] ॥

**अ॒स्मे प्र य॑न्धि मघवन्नृजीषि॒न्निन्द्र॑ रा॒यो वि॒श्ववा॑रस्य॒ भूरेः॑ ।**

**अ॒स्मे श॒तं श॒रदो॑ जी॒वसे॑ धा अ॒स्मे वी॒राञ्छश्व॑त इन्द्र शिप्रिन् ॥ १० ॥**

अ॒स्मे इति॑ । प्र । य॒न्धि॒ । म॒घ॒ऽव॒न् । ऋ॒जी॒षि॒न् । इन्द्र॑ । रा॒यः । वि॒श्वऽवा॑रस्य । भूरेः॑ ।

अ॒स्मे इति॑ । श॒तम् । श॒रदः॑ । जी॒वसे॑ । धाः॒ । अ॒स्मे इति॑ । वी॒रान् । शश्व॑तः । इ॒न्द्र॒ । शि॒प्रि॒न् ॥१०॥

---

१. ख-ग-च-ज-ण–' कुक्षयः ... रूपम् ' नास्ति । २. फ–महनीयम् । ३. न-ल–' इन्द्र ' नास्ति ।
४. न–नोक्तदोषः । तथा च सूत्रितम्–इन्द्र श्रेष्ठानि द्रविणानि धेह्यस्मे प्रयोधि (प्रयन्धि) मघवन्नृजीषिन्निति चेति ।

ᵛमघवन् धनवन् ᵛऋजीषिन् गतसारसोमवन् हे ᵛइन्द्र ᵛविश्ववारस्य[1]। विश्वैः सर्वैः संभजनीयतया वरणं यस्य तत्। ᵛभूरेः भूरि बहु ᵛरायः धनम्। द्वितीयार्थे षष्ठी[1]। ᵛअस्मे अस्मभ्यं ᵛप्र ᵛयन्धि प्रयच्छ। किंच ᵛअस्मे अस्माकं ᵛजीवसे जीवनाय ᵛशतं ᵛशरदः संवत्सरान् ᵛधाः देहि। ᵛशिप्रिन् शोभनहनो हे ᵛइन्द्र ᵛअस्मे अस्माकं ᵛशश्वतः। शश्वदिति बहुनाम। बहून् ᵛवीरान् पुत्रान् देहि॥ जीवसे। 'जीव प्राणधारणे' इत्यस्य तुमर्थेऽसेप्रत्ययः। प्रत्ययस्वरः। शश्वतः। 'टुओश्वि गतिवृद्ध्योः'। अस्मात् 'संश्वद्वेहत्°' इत्यादिना अतिप्रत्ययान्तत्वेन निपातनादिष्टरूपसिद्धिः॥

**शुनं॑ हुवेम म॒घवा॑नमिन्द्र॑म॒स्मिन्भरे॑ नृत॑मं॒ वाज॑सातौ।**

**शृ॒ण्वन्त॑मु॒ग्रमू॒तये॑ स॒मत्सु॒ घ्नन्तं॑ वृ॒त्राणि॑ सं॒जितं॒ धना॑नाम्॥ ११॥**

शुन॑म्। हु॒वे॒म॒। म॒घऽवा॑नम्। इन्द्र॑म्। अ॒स्मिन्। भरे॑। नृऽत॑मम्। वाज॑ऽसातौ।

शृ॒ण्वन्त॑म्। उ॒ग्रम्। ऊ॒तये॑। स॒मत्ऽसु॑। घ्नन्त॑म्। वृ॒त्राणि॑। स॒म्ऽजित॑म्। धना॑नाम्॥ ११॥

शुनं[2] हुवेमेति व्याख्याता[2]॥ ॥ २०॥

'वार्त्रहत्याय' इत्येकादशर्चमष्टमं सूक्तम्। एकादश्यनुष्टुप् शिष्टा गायत्र्यः। तथा चानुक्रान्तं— 'वार्त्रहत्याय गायत्रमन्त्यानुष्टुप्' इति। अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिशस्त्रे 'वार्त्रहत्याय' इति उत्तमावर्जं[3] सूक्तं[3] शंसनीयम्। तथा[4] च सूत्रितं[4]—'वार्त्रहत्यायेत्युत्तमामुद्धरेत्' (आश्व. श्रौ. ६.४) इति। महाव्रते गायत्रीतृचाशीतावुत्तमावर्जमिदं सूक्तम्। पञ्चमारण्यके सूत्रितं—'वार्त्रहत्याय शवस इत्युत्तमामुद्धरति' (ऐ. आ. ५. २. ५) इति॥

**वार्त्र॑हत्याय॒ शव॑से पृतना॒षाह्या॑य च। इन्द्र॒ त्वा व॑र्तयामसि॥ १॥**

वार्त्र॑ऽहत्याय। शव॑से। पृ॒त॒ना॒ऽसह्या॑य। च॒। इन्द्र॑। त्वा॒। आ। व॒र्त॒या॒म॒सि॒॥ १॥

विश्वामित्रः स्तौति। हे ᵛइन्द्र ᵛवार्त्रहत्याय वृत्रहननिमित्ताय ᵛशवसे बलाय अपि ᵛच ᵛपृतनाषाह्याय[5] परकीयसेनाभिभवाय त्वाम् ᵛआ सर्वतः ᵛवर्तयामसि प्रवर्तयामः॥ वार्त्रहत्याय। वृत्रघ्नः कर्म इत्यर्थे ब्राह्मणादित्वात् ष्यञ्। 'हनस्तोऽचिण्णलोः' (पा. सू. ७. ३. ३२) इति तकारः। ञित्वादाद्युदात्तः। पृतनाषाह्याय। 'षह मर्षणे' इत्यस्माद्भावे 'शकिसहोश्च' इति यत्। संहितायां 'सहेः पृतनर्ताभ्यां च' (पा. सू. ८. ३. १०९) इति षत्वम्। दीर्घश्छान्दसः। वर्तयामसि। 'वृतु वर्तने' इत्यस्य ण्यन्तस्य मसः 'इदन्तो मसिः' इति मसि इत्यादेशः। निघातः॥

---

१. ख-ग-च-ज-ण-प-फ-विश्ववारस्य सर्वैर्वरणीयस्य ते भूरेः बहु रायः धनानि अस्मे। २. ज-ण-पूर्ववत् व्याखयाता; ल-शुनं हुवेमेति गतम्। ३. ग-ज-ण-स-उत्तमावर्जसूक्तम्। ४, ख-ग-च-ज-ण-त-न-भ-स-'तथा च सूत्रितं' नास्ति। ५. ख-ग-च-ज-ण-न-भ-पृतनासाह्याय।

अर्वाचीनं सु ते मनं उत चक्षुः शतक्रतो । इन्द्रं कृण्वन्तु वाघतः ॥ २ ॥

अर्वाचीनम् । सु । ते । मनः । उत । चक्षुः । शतक्रतो इति शतऽक्रतो ।

इन्द्रं । कृण्वन्तु । वाघतः ॥ २ ॥

हे शतक्रतो । शतं क्रतवो यस्यासौ शतक्रतुः । हे इन्द्र वाघतः । वहन्ति यज्ञियां धुरमिति वाघतः स्तोतारः । ते तव सु अस्मदभिमतफलसंपादनेन शोभनं मनः अर्वाचीनम् अस्मदभिमुखं कृण्वन्तु कुर्वन्तु । उत अपि च चक्षुः त्वदीयं दर्शनम् अस्मास्वनुग्रहदृष्टिं[1] कुर्वन्तु ॥ अर्वाचीनम् । ' विभाषाञ्चेरदिक्स्त्रियाम् ' इति खप्रत्ययः । खस्येनादेशः[2] । चक्षुः । ' चक्षेः शिच्च ' इत्युसिप्रत्ययः । शिद्भावात् ख्याञादेशाभावः । ' नित् ' इत्यनुवृत्तेः आद्युदात्तत्वं[3] । कृण्वन्तु । ' कृवि हिंसाकरणयोः ' इत्यस्य लोटि रूपम् । आमन्त्रितस्य अविद्यमानवत्त्वेन[4] पादादित्वादनिघातः । प्रत्ययस्वरः । वाघतः । ' वह प्रापणे ' । ' संश्चद्वेहत्° ' इत्यादिना अतिप्रत्ययान्तत्वेन निपातनादुपधावृद्धिः । हकारस्य घत्वम् । प्रत्ययस्वरः ॥

नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे । इन्द्राभिमातिषाह्ये ॥ ३ ॥

नामानि । ते । शतक्रतो इति शतऽक्रतो । विश्वाभिः । गीःऽभिः । ईमहे ।

इन्द्रं । अभिमातिऽसह्ये ॥ ३ ॥

शतक्रतो हे इन्द्र अभिमातिषाह्ये । मातिर्मानो गर्वः । अभितो मानो येषां तेऽभिमातयः शत्रवः । तेषां सहनमेव सह्यम्[5] । तस्मिन् युद्धे अस्माकमुपस्थिते सति ते तव नामानि शक्रवज्रहस्तादीनि[6] नामधेयानि यद्वा तदुपलक्षितानि बलानि[6] विश्वाभिर्गीर्भिः सर्वाभिः स्तुतिलक्षणाभिर्वाग्भिः ईमहे वयं याचामहे ॥ ईमहे । ई कान्त्यादिषु । व्यत्ययेनात्मनेपदम् । अदादित्वाच्छपो लुक् । निघातः ॥

पुरुष्टुतस्य धामभिः शतेन महयामसि । इन्द्रस्य चर्षणीधृतः ॥ ४ ॥

पुरुऽस्तुतस्य । धामऽभिः । शतेन । महयामसि । इन्द्रस्य । चर्षणिऽधृतः ॥ ४ ॥

हे इन्द्र पुरुष्टुतस्य पुरुभिः बहुभिः स्तोतृभिः स्तुतस्य शतेन अपरिमितसंख्याकैः धामभिः तेजोभिः युक्तस्य चर्षणीधृतः चर्षणीनां मनुष्याणां कर्मानुष्ठातॄणामभिमतफलसंपादनेन धारकस्य इन्द्रस्य । यद्वा । आकृषन्ति[7] सर्वमनेन इति चर्षणि बलम् । तद्धारकस्य तव महयामसि महयामः[8] स्तोत्रं कुर्मः ॥ पुरुष्टुतस्य । ' ष्टुञ् स्तुतौ ' । कर्मणि क्तः । थाथादिस्वरः । संहितायां ' स्तुतस्तोमयोश्छन्दसि ' इति षत्वम् । महयामसि । ' मह पूजायाम् ' इत्यस्य लटि इदन्तो मसिः । निघातः ।

---

१. च-न-फ–अस्मदनुग्रहदृष्टिम् । २. ख-ग-च-ज-ण-न-भ-स–' खस्येनादेशः ' नास्ति । ३. ल-स–आद्युदात्तः । ४. ण-ल-स–अविद्यमानत्वेन । ५. ख-ग-च-ज-ण-न-फ–साह्यम् । ६. ख-ग-च-ज-ण-प-फ-भ–शक्रादिनामानि । ७. त–आकृषति । ८. न-ल-स–' महयामः ' नास्ति ।

चर्षणीधृतः । 'कृष आकर्षणे'। 'कृषेरादेश्च चः' (उ. सू. २. २६१) इत्यनिप्रत्ययः। ककारस्य चकारादेशः । यद्वा 'कृष विलेखने'। कर्षन्तीति चर्षणयो मनुष्याः । 'धृ धारणे'। क्विप्। कृदुत्तरपदस्वरः ॥

इन्द्रं॑ वृ॒त्राय॒ हन्त॑वे पुरुहू॒तमुप॑ ब्रुवे । भरे॑षु॒ वाज॑सातये ॥ ५ ॥

इन्द्र॑म् । वृ॒त्राय॑ । हन्त॑वे । पु॒रु॒ऽहू॒तम् । उप॑ । ब्रु॒वे । भरे॑षु । वाज॑ऽसातये ॥ ५ ॥

हे इन्द्र [v]वृत्राय [v]हन्तवे वृत्रनामकमसुरं हन्तुं [v]भरेषु युद्धेषु [v]वाजसातये अन्नोपलक्षितधनलाभाय च [v]पुरुहूतं पुरुभिराहूतम् [v]इन्द्रं बलवन्तं त्वाम् [v]उप [v]ब्रुवे सोमपानार्थं विश्वामित्रोऽहमाह्वयामि॥ वृत्राय । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानम् । हन्तवे । हन्तेस्तुमर्थे तवेन्प्रत्ययः । निस्स्वरः । ब्रुवे । 'ब्रूञ् व्यक्तायां वाचि' इत्यस्य लट्युत्तम इटि रूपम् । निघातः । वाजसातये । सननं सातिः । वाजस्य सातिर्वाजसातिः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरः ॥ ॥ २१ ॥

वाजे॑षु सास॒हिर्भ॑व॒ त्वामी॑महे शतक्रतो । इन्द्र॑ वृ॒त्राय॒ हन्त॑वे ॥ ६ ॥

वाजे॑षु । स॒स॒हिः । भ॒व॒ । त्वाम् । ई॒म॒हे॒ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।

इन्द्र॑ । वृ॒त्राय॑ । हन्त॑वे ॥ ६ ॥

[v]शतक्रतो हे [v]इन्द्र [v]वाजेषु संग्रामेषु [v]सासहिः शत्रूणामभिभविता [v]भव । [v]वृत्राय [v]हन्तवे वृत्रं हन्तुं [v]त्वामीमहे प्रार्थयामहे ॥ सासहिः । 'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ' इति किप्रत्ययः । तस्य स्वरः । वृत्राय । कर्मणः संप्रदानम् । हन्तवे । तुमर्थे तवेन्प्रत्ययः ॥

द्यु॒म्नेषु॑ पृत॒नाज्ये॑ पृत्सु॒तूर्षु॒ श्रवः॑सु च । इन्द्र॒ साक्ष्वा॒भिमा॑तिषु ॥ ७ ॥

द्यु॒म्नेषु॑ । पृ॒त॒नाज्ये॑ । पृ॒त्सु॒तूर्षु॑ । श्रवः॑ऽसु । च॒ । इन्द्र॑ । साक्ष्व॑ । अ॒भिऽमा॑तिषु ॥ ७ ॥

[v]द्युम्नेषु[1] द्योतमानेषु धनेषु प्राप्तव्येष्वभिमानिनो ये सपत्नाः [v]पृतनाज्ये । पृतनानामजनं गमनं यस्मिन्निति पृतनाज्यं संग्रामः । तस्मिन् संग्रामे च [v]पृत्सुतूर्षु पृतनासु[2] तरणशीलेषु[2] शूरेषु [v]श्रवःसु बलेषु [v]च येऽभिमानिनः सपत्नाः सन्ति तान् हे[3] [v]इन्द्र[3] [v]साक्ष्व अभिभव । तथा [v]अभिमातिषु सर्वतो गर्वयुक्तेषु शत्रुषु पुरुषेषु ये सपत्नाः तांश्चाभिभव ॥ पृतनाज्ये । 'अज गतिक्षेपणयोः' इत्यस्य ण्यन्तस्य 'अचो यत्' । पृतनानामाज्यं पृतनाज्यम् । एकादेशस्वरः । पृत्सुतूर्षु । पृतनाशब्दस्य सौ परतः 'मांसपृतनासानू-नामुपसंख्यानम्' इति पृदादेशः । 'ञित्वरा संभ्रमे' । ताच्छीलिकः क्विप् । 'ज्वरत्वर°' इत्यादिना ऊठ् । 'तत्पुरुषे कृति बहुलम्' इति पूर्वपदस्य सप्तम्या अलुक् । कृदुत्तरपदस्वरः । साक्ष्व । 'षह[4] मर्षणे' इत्यस्य लोटि 'बहुलं छन्दसि' इति शपो लुक् । ढत्वकत्वे । दीर्घश्छान्दसः ॥

---

१. ल–हे इन्द्र द्युम्नेषु । २. ख-ग-ज-ण-भ-ल–पृतनातरणशीलेषु ; न-स–तरणशीलेषु । ३. न-ल-स– 'हे इन्द्र' नास्ति । ४. न-भ–सह ।

चातुर्विंशिकेऽहनि माध्यंदिने सवने ब्राह्मणाच्छंसिशस्त्रे 'शुष्मिन्तमं न ऊतये' इति तृचो वैकल्पिकोऽनुरूपः । सूत्रितं च—'शुष्मिन्तमं न ऊतये आयन्त इव सूर्यम्' (आश्व. श्रौ. ७.४) इति ॥

**शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविम् । इन्द्र सोमं शतक्रतो ॥ ८ ॥**

शुष्मिन्ऽतमम् । नः । ऊतये । द्युम्निनम् । पाहि । जागृविम् ।

इन्द्र । सोमम् । शतक्रतो इति शतऽक्रतो ॥ ८ ॥

हे शतक्रतो हे इन्द्र शुष्मिन्तमं बलवतां मध्येऽतिशयेन बलवन्तं द्युम्निनं दीप्तिमन्तम् । यद्वा शुष्मिन्तमं शत्रूणां शोषकतमं द्युम्निनं यशस्विनम् । जागृविं जागरणशीलम् । पीतः सोमो जागृविः स्वप्ननिवारक इति । तादृशं नः अस्माकं संबन्धिनं सोमम् ऊतये अस्माकं रक्षणाय पाहि अत्रागत्य पिब ॥ शुष्मिन्तमम् । तमपः पित्त्वादनुदात्तत्वे प्रत्ययस्वरः । पाहि । पातेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । निघातः । जागृविः । क्विन्प्रत्ययान्तः । नित्त्वादाद्युदात्तः ॥

**इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आ वृणे ॥ ९ ॥**

इन्द्रियाणि । शतक्रतो इति शतऽक्रतो । या । ते । जनेषु । पञ्चऽसु ।

इन्द्र । तानि । ते । आ । वृणे ॥ ९ ॥

हे शतक्रतो हे इन्द्र ते तव संबन्धिषु पञ्चसु जनेषु गन्धर्वाः पितरो देवा असुरा रक्षांसि इत्येषु या यानि इन्द्रियाणि रूपग्रहणादिसामर्थ्यानि स्थितानि ते त्वदीयानि तानि इन्द्रियाण्यहम् आ वृणे संभजे[1] । यद्वा पञ्चजनेषु निषादपञ्चमेषु चतुर्षु जनेषु यानीन्द्रियाणि सामर्थ्यानि तानि त्वदीयान्यहमावृणे ॥ इन्द्रियाणि । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' इति घच्प्रत्ययान्तत्वेन निपातनादन्तोदात्तः । वृणे । 'वृङ् संभक्तौ' इत्यस्य लटि रूपम् । निघातः ॥

**अगन्निन्द्र श्रवो बृहद्द्युम्नं दधिष्व दुष्टरम् । उत्ते शुष्मं तिरामसि ॥ १० ॥**

अगन् । इन्द्र । श्रवः । बृहत् । द्युम्नम् । दधिष्व । दुस्तरम् ।

उत् । ते । शुष्मम् । तिरामसि ॥ १० ॥

हे इन्द्र वृत्रहन्[2] बृहत् महत् श्रवः सोमलक्षणमस्माभिर्दीयमानमन्नम् अगन् त्वां गच्छतु । त्वं दुष्टरं दुस्तरं शत्रुभिः तरितुम्[3] अशक्यं द्युम्नं धनं दधिष्व अस्मभ्यं प्रयच्छ । वयं तु ते त्वदीयं शुष्मं बलम् उत्कृष्टं तिरामसि सोमाज्यादिभिर्वर्धयामः ॥ अगन् । गमेर्लङि 'बहुलं छन्दसि' इति शपो लुक् । हल्ङ्यादिना तिलोपः । 'मो नो धातोः' । अडागमस्वरः । दधिष्व । दधातेर्लोटि

---

१. ख-ग-च-फ-भ-'संभजे' नास्ति । २. घ-ल-'वृत्रहन्' नास्ति । ३. न-ल-स-तरीतुम् ।

' छन्दस्युभयथा ' इति थास आर्धधातुकत्वादिडागमः । निघातः । दुस्तरम् । तरतेः कृच्छ्रार्थे खल् । सुषामादित्वात् संहितायां षत्वम् । लित्स्वरः । तिरामसि । इदन्तो[1] मसिः[1] । निघातः ॥

**अर्वावतो न आ गह्यथो शक्र परावतः ।**
**उ लोको यस्ते अद्रिव इन्द्रेह तत आ गहि ॥ ११ ॥**

अर्वाऽवतः । नः । आ । गहि । अथो इति । शक्र । पराऽवतः ।
ऊँ इति । लोकः । यः । ते । अद्रिऽवः । इन्द्र । इह । ततः । आ । गहि ॥ ११ ॥

ᵛशक्र बलवन् हे इन्द्र ᵛअर्वावतः अर्वाचीनात् समीपादेशात्[2] ᵛअथो अपि च ᵛपरावतः अतिदूरादेशात्[3] ᵛनः अस्मानभिलक्ष्य ᵛआ ᵛगहि आगच्छ । ᵛअद्रिवः । अत्ति भक्षयति शत्रूनिति अद्रिर्वज्रः । तद्वन् हे ᵛइन्द्र ᵛते तव ᵛयः ᵛउ ᵛलोकः उत्तमो लोकोऽस्ति ᵛततः तस्मादपि लोकात् ᵛइह अस्मिन् देवयजने देशे सोमपानार्थम् ᵛआ ᵛगहि आगच्छ ॥ गहि । गमेर्लोटि रूपम् । परावतः । ' उपसर्गाच्छन्दसि धात्वर्थे ' इति वतिः । प्रत्ययस्वरः । अद्रिवः । ' मतुवसो रुः० ' इति रुः । ततः । ' पञ्चम्यास्तसिल् ' इति तसिल् । लित्स्वरः ॥　　॥ २२ ॥

' अभि तष्टेव ' इति दशर्चं नवमं सूक्तम् । अत्रानुक्रमणिका—' अभि तष्टेव दश प्रजापतिः स वैश्वामित्रो वाच्यो वा द्वौ वा तौ न वैकोऽपि ' इति । विश्वामित्रगोत्रः प्रजापतिर्वाचः पुत्रः प्रजापतिर्वा ऋषिः । तावुभावपि समुच्चितावस्य सूक्तस्य ऋषी[4] इति द्वितीयः पक्षः । अथवा नोभावपि किंतु विश्वामित्र एवेति तृतीयः पक्षः । त्रिष्टुप् छन्दः । इन्द्रो देवता ॥

चातुर्विंशिकेऽहनि माध्यंदिने सवनेऽच्छावाकशस्त्रे ' अभि तष्टेव ' इत्यहरहःशस्यनामकं सूक्तम् । सूत्रितं च—' उदु ब्रह्माण्यभि तष्टेवेतीतरावहरहःशस्ये ' ( आश्व. श्रौ. ७. ४ ) इति । एवं सर्वत्राहर्गणेषु द्वितीयादिष्वहःसु माध्यंदिने सवनेऽच्छावाकशस्त्र एतत्सूक्तम् ॥

**अभि तष्टेव दीधया मनीषामत्यो न वाजी सुधुरो जिहानः ।**
**अभि प्रियाणि मर्मृशत्पराणि कवीँरिच्छामि संदृशे सुमेधाः ॥ १ ॥**

अभि । तष्टाऽइव । दीधय । मनीषाम् । अत्यः । न । वाजी । सुऽधुरः । जिहानः ।
अभि । प्रियाणि । मर्मृशत् । पराणि । कवीन् । इच्छामि । सम्ऽदृशे । सुऽमेधाः ॥ १ ॥

यजमानः स्तोतारं प्रति ब्रूते । हे स्तोतः ᵛमनीषाम् इन्द्रविषयां स्तुतिम् ᵛअभि ᵛदीधय सर्वतो दीप्तां कुरु । तत्र दृष्टान्तः । ᵛतष्टेव । यथा तष्टा तक्षणेन काष्ठं संस्करोति तद्वत् । ᵛसुधुरः

---

१. ख-ग-घ-च-ज-ण-न-भ-स–' इदन्तो मसिः ' नास्ति । २. ख-ग-घ-च-ज-ण–समीपदेशात् । ३. त–अतिदूरदेशात् । ४. त–ऋषिः ।

शोभनया धुरान्वितः ᵛवाजी वेगवान् ᵛअत्यो ᵛन अश्व इव ᵛजिहानः कर्मणि प्रवर्तमानः ᵛपराणि उत्तमानि ᵛप्रियाणि इन्द्रस्य प्रियतमानि । यद्वा[1] । पराणि[1] उत्तरेष्वहःसु क्रियमाणानि कर्माणि ᵛअभि ᵛमर्मृशत् अत्यर्थमभिमृशन् ᵛसुमेधाः शोभनमेधावानहं ᵛकवीन् । ये पूर्वम् अनुष्ठितयज्ञाः[2]देवभूयमगमन्[2] ते कवयः । तान् ᵛसंदृशे संद्रष्टुम् ᵛइच्छामि । उक्तार्थे[3] ब्राह्मणम्—' अभि तष्टेव दीधया मनीषामित्यच्छावाकोऽहरहः शंसत्यभिवत्तत्यै रूपमभि प्रियाणि मर्मृशत्पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव तदभिमर्मृशतो यन्त्यभ्यारभमाणाः परो वा अस्माल्लोकात्स्वर्गो लोकस्तमेव तदभिवदति कवीँरिच्छामि संदृशे सुमेधा इति ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति ' ( ऐ. ब्रा. ६. २० ) इति । तष्टेव । ' तक्षू त्वक्षू तनूकरणे ' इत्यस्य तृनि रूपम् । निस्स्वरः । दीधय । ' दीधीङ् दीप्तिदेवनयोः ' इत्यस्यान्तर्भावितण्यर्थस्य लोटि शपो ' बहुलं छन्दसि ' इति लुगभावः । व्यत्ययेन परस्मैपदम् । सुधुरः । ' आद्युदात्तं द्व्यच्छन्दसि ' इत्युत्तरपदाद्युदात्तत्वम् । जिहानः । ' ओहाङ् गतौ ' इत्यस्य शानचि ' भृञामित् ' इत्यभ्यासस्येत्वम् । चित्त्वादन्तोदात्तत्वे प्राप्ते ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् । मर्मृशत् । ' मृश आमर्शने ' इत्यस्य यङ्लुकि ' रुग्रिकौ च लुकि ' इत्यभ्यासस्य रुगागमः । तदन्ताच्छतरि रूपम् । ' नाभ्यस्ताच्छतुः ' इति नुमभावः । अभ्यस्तस्वरः । संदृशे । ' दृशिर् प्रेक्षणे ' इत्यस्मात् तुमर्थे ' दृशे विख्ये च ' इति केन्प्रत्ययान्तत्वेन निपातनादाद्युदात्तः । समासे कृदुत्तरपदस्वरः । सुमेधाः । ' नित्यमसिच् प्रजामेधयोः' इत्यसिच्प्रत्ययः । चित्स्वरः ॥

**इ॒नोत पृ॑च्छ॒ जनि॑मा क॒वी॒नां म॑नो॒धृत॑ः सु॒कृत॑स्तक्षत॒ द्याम् ।**

**इ॒मा उ॑ ते प्र॒ण्यो॒३॑ वर्ध॑माना॒ मनो॑वाता॒ अध॒ नु धर्म॑णि ग्मन् ॥ २ ॥**

इ॒ना । उ॒त । पृ॒च्छ॒ । जनि॑म । क॒वी॒नाम् । म॒नः॒ऽधृत॑ः । सु॒ऽकृत॑ः । त॒क्ष॒त॒ । द्याम् ।

इ॒माः । ऊँ॒ इति॑ । ते॒ । प्र॒ऽन्य॑ः । वर्ध॑मानाः । मन॑ःऽवाताः । अध॑ । नु । धर्म॑णि । ग्म॒न् ॥२॥

ᵛउत इत्यामन्त्रणे । हे इन्द्र ᵛकवीनां सुकृतकर्मणां देवभूयं[4] गतानां[4] ᵛजनिम जन्म । केन कर्मणा दिवं गताः कुतो वा तेषामुत्पत्तिः इत्येतमर्थम्[5] ᵛइना ईश्वरान् गुरून् ᵛपृच्छ । ते कवयः ᵛमनोधृतः संयतमनस्का अतः एव[6] ᵛसुकृतः शोभनकर्माणः सन्तः ᵛद्यां दिवं ᵛतक्षत अकुर्वन् । ᵛअध अथेदानीं ᵛधर्मणि अस्मिन् यज्ञे ᵛते त्वदर्थं ᵛप्रण्यः प्रणीयमानाः ᵛमनोवाताः मनोवेगाः ᵛवर्धमानाः त्वां[7] वर्धयन्त्यः ᵛइमाः अस्माभिः क्रियमाणाः स्तुतयः ᵛनु क्षिप्रं ᵛग्मन् त्वां गच्छन्तु । ᵛउ सर्वत्र प्रसिद्ध्यर्थः ॥ पृच्छ । ' प्रच्छ ज्ञीप्सायाम् ' इत्यस्य लोटि तुदादित्वात् शः । तस्य ङित्त्वात् ग्रहिज्यादिना[8] संप्रसारणम् । निघातः । प्रण्यः । ' णीञ् प्रापणे ' इत्यस्मात् औणादिकः कर्मणि क्विप् । सर्वविधीनां छन्दसि विकल्पितत्वादियङादेशं बाधित्वा यणादेशः । ' उदात्तस्वरितयोः° ' इति स्वरितत्वम् । ग्मन् । गमेर्लङि ' बहुलं छन्दसि ' इति शपो लुक् । ङित्त्वात् ' गमहन° ' इत्यादिना उपधालोपः । निघातः ॥

---

१. ख-ग-च-ज-ण-न-भ-स–' यद्वा पराणि ' नास्ति; त-ल–उपराणि । २. च-भ–अनुष्ठितयज्ञादेवभूय° । ३. ख-ग-च-ज-ण-फ-भ–अस्मिन्नर्थे । ४. ख-ग-च-भ-स–देवभूयगतानाम्; ल–देवरूपं गतानाम् । ५. ख-ग–एतमर्थम्; न–एवमर्थम् । ६. ख-ग-च-ज-ण–' एव ' नास्ति । ७. ख-ग-च-न-भ-स–' त्वां ' नास्ति । ८. ख-ग-च-ज-ण–ग्रहिज्येत्यादिना ।

नि षीमिदत्र गुह्या दधाना उत क्षत्राय रोदसी समञ्जन् ।
सं मात्राभिर्ममिरे येमुरुर्वी अन्तर्मही समृते धायसे धुः ॥ ३ ॥

नि । सीम् । इत् । अत्र । गुह्या । दधानाः । उत । क्षत्राय । रोदसी इति । सम् । अञ्जन् ।
सम् । मात्राभिः । ममिरे । येमुः । उर्वी इति ।
अन्तः । मही इति । समृते इति सम्ऽऋते । धायसे । धुरिति धुः ॥ ३ ॥

ᵛअत्र भूलोके ᵛगुह्या गुह्यानि[1] कर्माणि ᵛसीमित् सर्वत एव ᵛनि ᵛदधानाः कुर्वाणा एते कवयः ᵛउत अपि च ᵛक्षत्राय बलाय धनाय वा ᵛरोदसी द्यावापृथिव्यौ ᵛसमञ्जन् । ओषधीभिः पृथिवीं देवैश्च दिवं संगतामकार्षुः। किंच ते ᵛमात्राभिः। मीयन्ते मान्तीति वा मात्राः शिलोच्चयाः। ताभिर्मात्राभिः ᵛसं ᵛममिरे । ते रोदस्यावियत्तया परिच्छिन्ने चक्रुश्च । ᵛसमृते परस्परं संगते ᵛउर्वी विस्तीर्णे ᵛमही महत्यौ ते द्यावापृथिव्यौ ᵛयेमुः नियमितवन्तः । विष्टम्भकेनान्तरिक्षेण ᵛअन्तः उदयच्छन् । तथा ᵛधायसे तयोर्धारणार्थमन्तरिक्षं ᵛधुः व्यधुः ॥ इदवधारणार्थे । गुह्या । गुहायां भवानि । भवार्थे यत् । 'यतोऽनावः' इत्याद्युदात्तः[2] । दधानाः । दधातेः शानचि रूपम् । अभ्यस्तस्वरः । अञ्जन् । 'अञ्जू व्यक्तिम्रक्षणगतिषु' इत्यस्य लङि श्नसोरल्लोपः । निघातः । मात्राभिः । 'मा माने' 'माङ् माने' वा । 'हुयाम°' इत्यादिना त्रन्प्रत्ययः । निस्स्वरः । ममिरे । 'माङ् माने' इत्यस्य लिटि रूपम् । 'चादिलोपे विभाषा' इति न निघातः। येमुः । 'यम उपरमे' इत्यस्य लिट्युसि रूपम् । तिङुत्तरत्वादनिघातः । धायसे । 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । निस्स्वरः । धुः । दधातेः लुङि रूपम् ॥

आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः ।
महत्तद्वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ ॥ ४ ॥

आऽतिष्ठन्तम् । परि । विश्वे । अभूषन् । श्रियः । वसानः । चरति । स्वऽरोचिः ।
महत् । तत् । वृष्णः । असुरस्य । नाम । आ । विश्वऽरूपः । अमृतानि । तस्थौ ॥ ४ ॥

ᵛविश्वे सर्वे कवयो रथम् ᵛआतिष्ठन्तम् इन्द्रं ᵛपरि ᵛअभूषन् । परितोऽलमकुर्वन् । ᵛस्वरोचिः। स्वमेव रोचिर्यस्यासौ स्वरोचिः । स्वप्रभयैव दीप्यमान इत्यर्थः । अत एव ᵛश्रियः दीप्तीः ᵛवसानः आच्छादयन् सोऽयमिन्द्रः ᵛचरति सर्वत्र वर्तते । ᵛवृष्णः कामानां वर्षितुः ᵛअसुरस्य । अस्यति प्रेरयति सर्वानन्तर्यामितयेत्यसुरः । तस्येन्द्रस्य ᵛतत् तादृशमनुभूतपूर्वं ᵛनाम। नमयति सर्वान् अनेन शत्रूनिति नाम कर्म। यद्वा नम्यते सर्वैर्नमस्क्रियते इति नाम इन्द्रस्य शरीरं[3] कर्म वा[4]। ᵛमहत् आश्चर्योपेतं वर्तते । तथा ᵛविश्वरूपः नानाविधरूपतां भजमानः स इन्द्रो वरुणात्मना ᵛअमृतानि जलानि

---

१. घ-न-ल-स–गूढानि । २. त–इत्याद्युदात्तत्वम् । ३. ख-ग-च-ज-ण-न-फ-भ-स–'शरीरं' नास्ति ।
४. च–'वा' नास्ति ।

आ तस्थौ अधितिष्ठति ॥ विश्वे । जसः शी । अभूषन् । ‘ भूष अलंकारे[1] ’ इत्यस्य लङि रूपम् । वसानः । ‘ वस आच्छादने ’ इत्यस्य शानचि रूपम् । तस्य लसार्वधातुकस्वरे[2] धातुस्वरः[3] । नाम । ‘ णमु प्रह्वत्वे ’ इत्यस्मात् ‘ नामन्सीमन्° ’ इत्यादिना मनिन्प्रत्ययान्तत्वेन निपातनादाद्युदात्तः । विश्वरूप इति तस्य संज्ञा । ‘ बहुव्रीहौ विश्वं संज्ञायाम् ’ इति पूर्वपदान्तोदात्तत्वम् । अमृतानि । ‘ कालाध्वनोरत्यन्तसंयोगे ’ इति द्वितीया । तस्थौ । तिष्ठतेर्लिटि णलि रूपम् ॥

**असूत पूर्वो वृषभो ज्यायानिमा अस्य शुरुधः सन्ति पूर्वीः ।**

**दिवो नपाता विदथस्य धीभिः क्षत्रं राजाना प्रदिवो दधाथे ॥ ५ ॥**

असूत । पूर्वः । वृषभः । ज्यायान् । इमाः । अस्य । शुरुधः । सन्ति । पूर्वीः ।

दिवः । नपाता । विदथस्य । धीभिः । क्षत्रम् । राजाना । प्रऽदिवः । दधाथे इति ॥ ५ ॥

वृषभः[3] कामानां वर्षकः पूर्वः चिरन्तनोऽत एव ज्यायान् इन्द्रः असूत । अपः ससर्ज । पूर्वीः बह्वयः इमाः अनेन सृष्टा आपः अस्य शुरुधः । शुचः पिपासाया रोधयित्र्यः सन्ति भवन्ति । दिवो नपाता दिवो न पातयितारौ हे राजानौ इन्द्रावरुणौ प्रदिवः प्रकर्षेण द्योतमानस्य विदथस्य यज्ञकारिणः स्तोतुः धीभिः स्तुतिभिः क्षत्रं धनं दधाथे अस्मभ्यं दातुं धारयेथे ॥ असूत । ‘ षूङ् प्राणिगर्भविमोचने ’ इत्यस्य लङि रूपम् । अडागमस्वरः । ज्यायान् । प्रशस्यशब्दात् ईयसुनि ‘ ज्य च ’ ( पा. सू. ५. ३. ६१ ) इति ज्यादेशः । ‘ ज्यादादीयसः ’ ( पा. सू. ६. ४. १६० ) इति[4] ईयसः[4] आदेः ईकारस्य[5] आकारादेशः । नित्त्वादाद्युदात्तः । शुरुधः । पृषोदरादिः । नपाता । ‘ नभ्राण्नपात्° ’ इति निपातनात् नञः प्रकृतिभावः । आमन्त्रितत्वात् निघातः । धीभिः । ‘ सावेकाचः° ’ इति विभक्तेरुदात्तत्वम् । राजाना । आमन्त्रितत्वात् निघातः । दधाथे । दधातेर्लेटि रूपम् । निघातः ॥　　॥ २३ ॥

**त्रीणि राजाना विदथे पुरूणि परि विश्वानि भूषथः सदांसि ।**

**अपश्यमत्र मनसा जगन्वान्व्रते गन्धर्वाँ अपि वायुकेशान् ॥ ६ ॥**

त्रीणि । राजाना । विदथे । पुरूणि । परि । विश्वानि । भूषथः । सदांसि ।

अपश्यम् । अत्र । मनसा । जगन्वान् । व्रते । गन्धर्वान् । अपि । वायुऽकेशान् ॥ ६ ॥

हे राजानौ इन्द्रावरुणौ विदथे अस्मिन् यज्ञे विश्वानि व्याप्तानि पुरूणि यजनीयैः सोमादिभिः पूर्णानि त्रीणि सदांसि सवनानि परि भूषथः सर्वतोऽलंकुरुथः । हे इन्द्र त्वं जगन्वान् यज्ञं प्रति गतवानसि । अपि[6] संभावनायाम् । यतोऽहम् अत्र व्रते यज्ञे वायुकेशान् वायुवत् चञ्चलरश्मीन्[7] गन्धर्वान् सोमरक्षकान् स्वानभ्राजादीन् मनसा अपश्यम् । ते[8] च[8] स्वानभ्राजादयः

---

१. च-फ—अलंकरणे । २. ख-ग-च-ज-ण-न-भ—लसार्वधातुकस्वरः । ३. ख-ग-च-त-न-फ-भ-ल-स—तयोः पूर्वः वृषभः । ४. ख-ग-च-ज-ण-न-भ-स— ‘ इति ईयसः ’ नास्ति । ५. ल-स—‘ ईकारस्य ’ नास्ति । ६. ख-ग-च-ण-भ-स—अपिः । ७. ख-ग-च-ज-ण-फ—चलनशीलान् रश्मीन्; भ-ल—चलनरश्मीन् । ८. ख-ग-च-ज-ण-फ-भ—तत्र ।

तैत्तिरीयके स्पष्टमभिहिताः–' स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान् रक्षध्वं मा वो दभन् ' ( तै. सं. १. २. ७ ) इति ॥ भूपथः । ' भूष अलंकारे ' इत्यस्य लटि रूपम् । अपश्यम् । ' दृशिर् प्रेक्षणे ' इत्यस्य लङि रूपम् । पादादित्वादनिघातः । जगन्वान् । गमेः क्वसौ ' विभाषा गमहनविदविशाम् ' इति इटो विकल्पितत्वादत्र इडभावः । ' मो नो धातोः ' ' म्वोश्च ' इति मकारस्य नकारः । प्रत्ययस्वरः[1] । गन्धर्वान् । ' धृञ् धारणे ' इत्यस्य गोशब्दे उपपदे ' गवि गन् धृञो वः ' इति वप्रत्ययः । तत्संनियोगेन गोशब्दस्य[2] गनादेशः । प्रत्ययस्वरः ॥

तदिन्न्व॑स्य वृ॒ष॒भस्य॑ धे॒नोरा नाम॑भिर्ममिरे॒ सक्म्यं॒ गोः ।

अ॒न्यद॑न्यदसु॒र्यं१॒ वसा॑ना॒ नि मा॒यिनो॑ ममिरे रू॒पम॑स्मिन् ॥ ७ ॥

तत् । इत् । नु । अ॒स्य॒ । वृ॒ष॒भस्य॑ । धे॒नोः । आ । नाम॑ऽभिः । म॒मि॒रे॒ । सक्म्य॑म् । गोः ।

अ॒न्यत्ऽअ॑न्यत् । अ॒सु॒र्य॑म् । वसा॑नाः । नि । मा॒यिनः॑ । म॒मि॒रे॒ । रू॒पम् । अ॒स्मि॒न् ॥ ७ ॥

ये यजमानाः ᐯवृषभस्य अभिमतफलप्रदस्य ᐯअस्य इन्द्रस्यार्थं ᐯधेनोः ᐯगोः ᐯनामभिः विश्वायुर्विश्वव्यचा इत्यादिभिरुपलक्षितां गां ᐯसक्म्यं संभजनार्हं तत्क्षीरादिकं हविः ᐯनु क्षिप्रम् ᐯआ ᐯममिरे आदुहन्ति । धातूनामनेकार्थत्वात् । तेन च हविषा यज्ञमनुष्ठाय देवभूयं प्राप्तास्ते कवयः ᐯअन्यदन्यत् नूतनम् ᐯअसुर्यम् असुराणां बलं ᐯवसानाः आच्छादयन्तः अत एव ᐯमायिनः मायया स्वीकृतकामरूपाः[3] । यद्वा[4] मायिनः प्रज्ञावन्तः[4] सन्तः ᐯअस्मिन् इन्द्रे ᐯरूपं स्वं[5] स्वं रूपं[5] ᐯनि ᐯममिरे इयत्तया परिच्छिद्य निदधुः ॥ इत् पूरणः[6] । ममिरे । ' माङ् माने ' । लिटि रूपम् । निघातः । सक्म्यम् । ' युजिरुचितिजां कुश्च ' ( उ. सू. १. १४३ ) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् सचतेः मक्प्रत्ययः कुत्वं च । सचनं सक्मः । तत्र भवः इत्यर्थे ' भवे छन्दसि ' इति यत् । ' यतोऽनावः ' इत्याद्युदात्तः । गोः । एकादेशस्वरः । असुर्यम् । असुरस्य स्वमित्यर्थे ' असुरस्य स्वम् ' ( पा. सू. ४. ४. १२३ ) इति यत् । तित्स्वरितः । रूपम् । ' रूप रूपक्रियायाम् ' । ण्यन्तः । ' खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ' ( उ. सू.३. ३०८ ) इति पप्रत्ययान्तत्वेन निपातनात् पकारलोपोऽगुणत्वं च । रूपयति रूप्यते वेति रूपम् । प्रत्ययस्वरः ॥

तदिन्न्व॑स्य सवि॒तुर्नकि॑र्मे हि॒रण्ययी॑म॒मतिं॒ याम॑शिश्रेत् ।

आ सु॑ष्टु॒ती रोद॑सी विश्वमि॒न्वे अपी॑व॒ योषा॒ जनि॑मानि वव्रे ॥ ८ ॥

तत् । इत् । नु । अ॒स्य॒ । स॒वि॒तुः । नकिः॑ । मे॒ । हि॒रण्ययी॑म् । अ॒मति॑म् । याम् । अशि॑श्रेत् ।

आ । सु॒ऽस्तु॒ती । रोद॑सी॒ इति॑ । वि॒श्व॒मि॒न्वे इति॑ वि॒श्व॒म्ऽइ॒न्वे ।

अपि॑ऽइव । योषा॑ । जनि॑मानि । व॒व्रे ॥ ८ ॥

---

१. ख-ग-च-ज-ण-त-न-भ-स–' प्रत्ययस्वरः ' नास्ति । २. त-न-भ-स–गोशब्दस्य च । ३. ख-ग-ज-ण-प-फ-भ–स्वीकृतकामरूपाः सन्तः । ४. घ-च–' यद्वा......प्रज्ञावन्तः' नास्ति । ५. त–स्वरूपम् । ६. ख-ग-च-ण-ल–पूरणम् ।

ᵛतत् तस्मात् ᵛसवितुः सर्वस्य जगतोऽन्तर्यामितया प्रेरयितुः[1] ᵛअस्य इन्द्रस्य ᵛमे मम ᵛहिरण्ययीं सुवर्णमयीम् ᵛअमतिं दीप्तिं ᵛनकिः को वा परिच्छिनत्ति खलु । ᵛयां मदीयां दीप्तिम् ᵛअशिश्रेत् य आश्रयति सः ᵛसुष्टुती शोभनया स्तुत्या स्तुतः सन् ᵛविश्वमिन्वे सर्वस्य संतर्पयित्र्यौ ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛवव्रे स्वकीयतया सर्वतो वृणुते । तत्र दृष्टान्तः । ᵛअपीव ᵛयोषा ᵛजनिमानि । यथा योषा स्त्री जनिमानि जातानि[2] अपत्यानि वृणोति तद्वत् । नुः[3] पूरणः[3] ॥ नकिः । निपातः । हिरण्ययीम् । हिरण्यस्य विकारार्थे 'मयड्वैतयोः°' (पा. सू. ४. ३. १४३) इति मयट् । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' इति निपातनात् मयटो मकारलोपः । टित्त्वात् 'टिड्ढाणञ्°' इति ङीप् । प्रत्ययस्वरः । अमतिम् । अम गत्यादिषु । अमेरतिः[4] इति अतिप्रत्ययः[4] । प्रत्ययस्वरः । अशिश्रेत् । श्रयतेर्लङि 'बहुलं छन्दसि' इति शपः श्लुः । यद्वृत्तयोगादनिघातः । सुष्टुती । 'सुपां सुलुक्°' इति तृतीयायाः सवर्णदीर्घः । विश्वमिन्वे । 'इवि व्याप्तिप्रीणनयोः' इत्यस्मात् कर्मणि अण् । इदित्त्वात् नुम् । 'तत्पुरुषे कृति बहुलम्' इति द्वितीयाया अलुक् । कृदुत्तरपदस्वरः । योषा । यौतेर्मिश्रीभावकर्मणः 'वृतॄवदिहनिकमिकषियुमुचिभ्यः सः' इति सप्रत्ययः । ग्रासादित्वात् आद्युदात्तः । जनिमानि । 'जनी प्रादुर्भावे' । 'हृजनिभ्यामिमनिन्' इति इमनिन्प्रत्ययो भूतकाले । नित्त्वादाद्युदात्तः । वव्रे । 'वृञ् वरणे' इत्यस्य लिटि रूपम् ॥

**यु॒वं प्र॒त्नस्य॑ साधथो म॒हो यद्दैवी॑ स्व॒स्तिः परि॑ णः स्यातम् ।**
**गो॒पाजि॑ह्वस्य त॒स्थुषो॒ विरू॑पा॒ विश्वे॑ पश्यन्ति मा॒यिनः॑ कृ॒तानि॑ ॥ ९ ॥**

यु॒वम् । प्र॒त्नस्य॑ । सा॒ध॒थः॒ । म॒हः । यत् । दैवी॑ । स्व॒स्तिः । परि॑ । नः॒ । स्या॒त॒म् ।
गो॒पाजि॑ह्वस्य । त॒स्थुषः॑ । विऽरू॑पा । विश्वे॑ । प॒श्य॒न्ति॒ । मा॒यिनः॑ । कृ॒तानि॑ ॥ ९ ॥

हे इन्द्रावरुणौ ᵛयुवं युवां ᵛप्रत्नस्य स्तोतुः ᵛमहः तादृशं श्रेयः ᵛसाधथः साधयथः । कीदृशं तदित्यत आह । ᵛयद्दैवी ᵛस्वस्तिः यदिदं देवसंबन्धि श्रेयः स्वाराज्यलक्षणम्[5] । किंच युवां ᵛनः अस्मान् ᵛपरि परितः ᵛस्यातं रक्षकौ भवेतम् । ᵛविश्वे सर्वे ᵛमायिनः देवाः ᵛगोपाजिह्वस्य । गोप्त्री जिह्वा मा बिभीतेत्येतादृशी वाग्यस्य स तथोक्तः । ᵛतस्थुषः स्थिरतरस्येन्द्रस्य ᵛविरूपा नानाविधानि वृत्रहननादीनि ᵛकृतानि कर्माणि ᵛपश्यन्ति । एवमिन्द्रस्य विश्वरूपत्वमुक्तम् ॥ युवम् । युष्मच्छब्दस्य द्विवचने 'युवावौ द्विवचने' (पा. सू. ७. २. ९२) इति युवादेशः । 'ङेप्रथमयोरम्' (पा. सू. ७. १. २८) इति सुपः अमादेशः । साधथः । 'साध संसिद्धौ' इत्यस्य ण्यन्तस्य लटि रूपम् । 'बहुलमन्यत्रापि°' इति णेर्लुक् । निघातः । दैवी । 'देवाद्यञञौ' इति अञ्प्रत्ययः । ञित्स्वरः । स्यातम् । अस्तेर्लिङि रूपम् । गोपाजिह्वस्य । 'गुपू रक्षणे' इत्यस्य आयप्रत्ययान्तस्य क्विपि अतोलोपयलोपयोः कृतयो रूपं गोपा इति । बहुव्रीहौ पूर्वपदस्वरः । तस्थुषः । 'ष्ठा गतिनिवृत्तौ' इत्यस्य क्वसौ 'वस्वेकाजाद्घसाम्' इति प्राप्तस्य इटः 'संप्रसारणं संप्रसारणाश्रयं च बलीयः' इति संप्रसारणस्य बलीयस्त्वान्निवृत्तिः । 'वसोः संप्रसारणम्' । प्रत्ययस्वरः । पश्यन्ति । 'दृशिर् प्रेक्षणे' । निघातः ॥

---

१. त–प्रसवितुः । २. त–जनितानि । ३. ख-घ-प–नु पूरणः; न-ल-स–'नुः पूरणः' नास्ति ।
४. च-फ–अमेरतिप्रत्ययः । ५. ख-ग-च-न–स्वराज्यलक्षणम् ।

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ १० ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥ १० ॥

व्याख्यातेयम्[1] ॥ ॥ २४ ॥ ॥ ३ ॥

अथ चतुर्थेऽनुवाके पञ्चदश सूक्तानि । तत्र 'इन्द्रं मतिः' इति नवर्चं प्रथमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । 'इन्द्रं मतिर्नव' इत्यनुक्रान्तम् । सूक्तविनियोगो लिङ्गादवगन्तव्यः ॥

इन्द्रं मतिर्हृद आ वच्यमानाच्छा पतिं स्तोमतष्टा जिगाति ।
या जागृविर्विदथे शस्यमानेन्द्र यत्ते जायते विद्धि तस्य ॥ १ ॥

इन्द्रम् । मतिः । हृदः । आ । वच्यमाना । अच्छ । पतिम् । स्तोमऽतष्टा । जिगाति ।
या । जागृविः । विदथे । शस्यमाना । इन्द्र । यत् । ते । जायते । विद्धि । तस्य ॥ १ ॥

विश्वामित्रः स्तौति । हे इन्द्र <sup>v</sup>हृदः हृदयात् <sup>v</sup>वच्यमाना उच्यमाना <sup>v</sup>स्तोमतष्टा स्तोमकारिभिः कृता <sup>v</sup>मतिः स्तुतिः <sup>v</sup>पतिं[2] सर्वस्य जगतः स्वामिनं त्वाम् <sup>v</sup>अच्छ अभिलक्ष्य <sup>v</sup>आ <sup>v</sup>जिगाति समन्तात् गच्छतु[3] । <sup>v</sup>या मदीया स्तुतिः <sup>v</sup>जागृविः स्तुत्यस्य तव जागरणं कुर्वाणा <sup>v</sup>विदथे यज्ञे <sup>v</sup>शस्यमाना भवति । हे <sup>v</sup>इन्द्र <sup>v</sup>ते त्वदर्थं <sup>v</sup>यत् स्तोत्रं मत्तः <sup>v</sup>जायते तत् <sup>v</sup>विद्धि जानीहि । <sup>v</sup>तस्य इति द्वितीयार्थे षष्ठी ॥ मतिः । 'मन्त्रे वृष°' इत्यादिना क्तिन्नुदात्तः । हृदः । हृदयशब्दस्य 'पद्दन्नोमास्°' (पा. सू. ६. १. ६३) इत्यादिना हृदादेशः । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् । वच्यमाना । 'वच परिभाषणे' इत्यस्य कर्मणि यक् । संप्रसारणाभावश्छान्दसः । प्रत्ययस्वरः । स्तोमतष्टा । 'तक्षू त्वक्षू तनूकरणे' इत्यस्य कर्मणि निष्ठा । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । जिगाति । 'गा स्तुतौ छन्दसि' इति जुहोत्यादिः । 'बहुलं छन्दसि' इत्यभ्यासस्य इत्वम् । निघातः । जायते । 'जनी प्रादुर्भावे' इत्यस्य लटि रूपम् । यद्वृत्तयोगादनिघातः । विद्धि । 'विद ज्ञाने' इत्यस्य लोटि हेः 'हुझल्भ्यो हेर्धिः' इति ध्यादेशः । वाक्यभेदादनिघातः ॥

दिवश्चिदा पूर्व्या जायमाना वि जागृविर्विदथे शस्यमाना ।
भद्रा वस्त्राण्यर्जुना वसाना सेयमस्मे सनजा पित्र्या धीः ॥ २ ॥

दिवः । चित् । आ । पूर्व्या । जायमाना । वि । जागृविः । विदथे । शस्यमाना ।
भद्रा । वस्त्राणि । अर्जुना । वसाना । सा । इयम् । अस्मे इति । सनऽजा । पित्र्या । धीः ॥ २ ॥

---

१. ज-ण-पूर्ववत् व्याख्याता; न-व्याख्याता । २. ख-ग-घ-च-ज-ण-प-फ-भ-तस्य पतिम् । ३. च-फ-गच्छति ।

हे इन्द्र vदिवश्चित् द्योतमानात् सूर्यादपि vपूर्व्या पूर्वे भवा उषःकालसंबन्धिनी vआ vजायमाना या स्तुतिलक्षणा वाक् विभवति vसेयं वाक् vविदथे यज्ञे vशस्यमाना vजागृविः स्तुत्यस्य तव जागरणं कुर्वाणा vभद्रा कल्याणानि[1] vअर्जुना शुक्लवर्णानि vवस्त्राणि योग्यतया तेजांसि vवसाना vअस्मे अस्माकं vपित्र्या पितृक्रमागता[2] अत एव vसनजा पुरातनी सती vधीः तव स्तुतिर्भवति ॥ दिवः । दिवेः क्विप् । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् । अर्जुना । 'अर्जेर्णिलुक्च' (उ. सू. ३. ३३८) इति उनन् । नित्स्वरः । सनजा । जनेः 'अन्येभ्योऽपि दृश्यते' इति डः । प्रत्ययस्वरः । पित्र्या । पितृशब्दात्तत आगत इत्यर्थे 'पितुर्यच्च' इति यत्प्रत्ययः । 'रीङृतः' (पा. सू. ७. ४. २७) इति रीङादेशः । 'यस्य°' इति लोपः । 'यतोऽनावः' इत्याद्युदात्तत्वम् ॥

यमा चिदत्र यमसूरसूत जिह्वाया अग्रं पतदा ह्यस्थात् ।
वपूंषि जाता मिथुना सचेते तमोहना तपुषो बुध्न एता ॥ ३ ॥

यमा । चित् । अत्र । यमऽसूः । असूत । जिह्वायाः । अग्रम् । पतत् । आ । हि । अस्थात् ।
वपूंषि । जाता । मिथुना । सचेते इति । तमःऽहना । तपुषः । बुध्ने । आऽईता ॥ ३ ॥

प्रसंगादुषःकालं प्रशंसति । vयमसूः । यमौ यमलौ सूत इति यमसूरुषोभिमानिनी देवता । सा vयमा यमलावश्विनौ vअत्र उषःकाले vअसूत । अश्विनोस्तत्र शस्यमानत्वात्तावश्विनौ स्तोतुं मम vजिह्वायाः vअग्रं vपतत् चञ्चलम् vआ vअस्थात् vहि तिष्ठति खलु । vतमोहना[3] तमसो हन्तारौ vतपुषः । तपत्यस्मिन् सूर्य इति तपुः दिवसः[4] । तस्य vबुध्ने मूले vएता एतावागतौ vमिथुना परस्परं[5] संगतौ[5] तावश्विनौ vजाता उत्पन्नानि vवपूंषि । उप्यन्ते निधीयन्ते इति वपूंषि उषःकाले क्रियमाणानि शस्त्रादीनि कर्माणि । vसचेते संगच्छतः ॥ यमसूः । 'षूङ् प्राणिगर्भविमोचने' इत्यस्य[6] क्विप् । कृदुत्तरपदस्वरः । असूत । तस्यैव धातोर्लङि अदादित्वाच्छपो लुक् । निघातः । पतत् । 'पत्लृ गतौ' । शतुर्लसार्वधातुकस्वरे धातुस्वरः । अस्थात् । 'ष्ठा गतिनिवृत्तौ' । लुङि रूपम् । हियोगादनिघातः । वपूंषि । 'डुवप् बीजसंताने' । 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' इति उसिप्रत्ययः । 'निच्च' इत्युक्तत्वादाद्युदात्तः । सचेते । 'षच समवाये' इत्यस्य लटि रूपम् । तपुषः । 'तप संतापे' । 'अर्तिपृवपि°' इत्यादिना उसिः । बुध्ने । 'बन्ध बन्धने' । 'बन्धेर्ब्रधिबुधी च' (उ. सू. ३. २८५) इति नक्प्रत्ययः । ब्रधिबुधी एतावादेशौ धातोः । प्रत्ययस्वरः । एता । 'इण् गतौ' इत्यस्य कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः स्वरः ॥

नकिरेषां निन्दिता मर्त्येषु ये अस्माकं पितरो गोषु योधाः ।
इन्द्र एषां दृंहिता माहिनावानुद्गोत्राणि ससृजे दंसनावान् ॥ ४ ॥

नकिः । एषाम् । निन्दिता । मर्त्येषु । ये । अस्माकम् । पितरः । गोषु । योधाः ।
इन्द्रः । एषाम् । दृंहिता । माहिनऽवान् । उत् । गोत्राणि । ससृजे । दंसनाऽवान् ॥ ४ ॥

---

१. ख-ग-च-ज-ण-न-फ-भ-ल-कल्याणा । २. घ-ज-ण-पितृक्रमादागता । ३. ल-तमोहना नाम । ४. त-देशः । ५. न-ल-परस्परसंगतौ । ६. ल-इत्यस्मात् ।

हे इन्द्र सत्रे प्रवृत्तानाम् vअस्माकं vये vपितरः अङ्गिरसः vगोषु पणिभिरपहृतेषु तन्निमित्तं vयोधाः योद्धारो वर्तन्ते तेषाम् vएषां vमर्त्येषु vनिन्दिता दूषकः vनकिः न कश्चिदस्ति। कुत इत्यत आह। vमाहिनावान् महिमोपेतः vदंसनावान् वृत्रहननादिकर्मवान् vइन्द्रः vएषाम् अङ्गिरसां vदृंहिता[1] दृंहितानि समृद्धानि[2] vगोत्राणि गवां वृन्दानि vउत् vससृजे तेभ्योऽङ्गिरोभ्यो ददौ[3]॥ निन्दिता। ‘ निदि कुत्सायाम् ’ इत्यस्य तृचि रूपम्। मर्त्येषु। वस्वादित्वात् स्वार्थिको यत्। ‘ यतोऽनावः ’ इत्याद्युदात्तत्वम्। योधाः। ‘ युध संप्रहारे ’ इत्यस्य पचाद्यचि रूपम्। दृंहिता। ‘ दृह दृहि वृद्धौ ’ इत्यस्य निष्ठायां रूपम्। माहिनावान्। ‘ महेरिनण्च ’ (उ. सू. २. २१४) इति इनण्प्रत्ययः। ‘तदस्यास्ति०’ इति मतुप्। माहिनावानिति तस्य संज्ञा। ‘ मतौ बह्वचोऽनजिरादीनाम् ’ (पा. सू. ६. ३. ११९) इति संहितायां दीर्घः। गोत्राणि। गवां समूह इत्यर्थे ‘ खलगोरथात् ’ इत्यनुवृत्तौ ‘ इनित्रकठ्यचश्च ’ (पा. सू. ४. २. ५१) इति गोशब्दात् त्रप्रत्ययः। प्रत्ययस्वरः। ससृजे। ‘ सृज विसर्गे ’ इत्यस्य लिटि रूपम्॥

दशपेये निष्केवल्ये निविद्धानीयस्य पुरस्तात् ‘ सखा ह यत्र ’ इत्येषा। सूत्रितं च—‘ सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानीययोराद्ये ’ (आश्व. श्रौ. ९. ३) इति॥

**सखा ह यत्र सखिभिर्नवग्वैरभिज्ञ्वा सत्वभिर्गा अनुग्मन्।**

**सत्यं तदिन्द्रो दशभिर्दशग्वैः सूर्यं विवेद तमसि क्षियन्तम्॥ ५॥**

सखा। ह। यत्र। सखिऽभिः। नवऽग्वैः। अभिऽज्ञु। आ। सत्वऽभिः। गाः। अनुऽग्मन्।

सत्यम्। तत्। इन्द्रः। दशऽभिः। दशऽग्वैः। सूर्यम्। विवेद। तमसि। क्षियन्तम्॥ ५॥

vसखिभिः समानख्यानैः vसत्वभिः इन्द्रमभितः सीदद्भिः vनवग्वैः। मेधातिथिप्रभृतयोऽङ्गिरसः केचिन्नव मासान् सत्रमनुष्ठाय फलं लेभिरे केचिद्दश मासाननुष्ठायेति। तत्र ये नव मासान् सत्रमनुष्ठाय लब्धफला उदतिष्ठन् ते नवग्वाः। तैः सत्वभिः अङ्गिरोभिः vसखा समानख्यानः[4] इन्द्रः vयत्र यस्मिन् बिले पणिभिर्निरुद्धाः vगाः अभिलक्ष्य vअभिज्ञु अभिगतजानुकं यथा भवति तथा vअनुग्मन् अनुगच्छन् vइन्द्रः vतत् तत्र बिले vदशग्वैः। ये दश मासान् सत्रमनुष्ठाय लब्धफला उदतिष्ठन् ते दशग्वाः। vदशभिः दशसंख्याकैरङ्गिरोभिः सहितः सन् vतमसि बिलवर्तिन्यन्धकारे vक्षियन्तं निवसन्तं vसत्यं यथार्थप्रकाशं vसूर्यं vविवेद लेभे। ततो लब्धप्रकाशः स इन्द्रस्ता गा आनीयाङ्गिरोभ्यः प्रादादिति भावः। आहौ[5] पूरणौ[5]॥ सखा। ‘ ख्या प्रकथने ’। ‘ समाने ख्यश्चोदात्तः ’ इति इण्प्रत्ययः। डिच्च[6]। ‘समानस्य छन्दसि०’ इति समानस्य सभावः। ‘उदात्तः०’ इत्युक्तत्वेन[7] सामर्थ्यादुपपदस्य इति गम्यते। आद्युदात्तः। नवग्वैः। गमेरौणादिको ड्वप्रत्ययः। बहुव्रीहौ पूर्वपदस्वरः। अभिज्ञु। ‘ प्रसंभ्यां जानुनोर्ज्ञुः ’ इति विधीयमानो ज्ञुः अभेरुत्तरस्य व्यत्ययेन भवति। सत्वभिः। ‘ षद्लृ विशरणगत्यवसादनेषु ’ इत्यस्मात् ‘ प्र ईरसद्योस्तुट् च ’ इति क्वनिप्प्रत्ययः। तुडागमः। नित्स्वादाद्युदात्तः। अनुग्मन्। गमेः शतरि ‘ बहुलं छन्दसि ’ इति

१. न-ल-स-‘ दृंहिता ’ नास्ति। २. च-संभृतानि। ३. ख-ग-च-ज-ण-प-फ-भ-ददौ। उत् पूरणः। ४. ख-ग-च-ज-ण-फ-समानस्थानः। ५. न-ल-स-‘ आहौ पूरणौ ’ नास्ति। ६. ख-ग-त-न-डित्त्वम्। ७. ज-ण-ल-इत्युक्तेन।

शपो लुकि कृते 'गमहन०' इत्यादिना[1] उपधालोपः । प्रादिसमासः । शतृस्वरः । विवेद । 'विद ज्ञाने' इत्यस्मात् लिटि णलि रूपम् । क्षियन्तम्[2] । 'क्षि निवासगत्योः' इत्यस्य शतरि रूपम्[2] ॥ ॥२५॥

इन्द्रो मधु संभृतमुस्रियायां पद्वद्विवेद शफवन्नमे गोः ।
गुहा हितं गुह्यं गूळ्हमप्सु हस्ते दधे दक्षिणे दक्षिणावान् ॥ ६ ॥

इन्द्रः । मधु । सम्ऽभृतम् । उस्रियायाम् । पत्ऽवत् । विवेद । शफऽवत् । नमे । गोः ।
गुहा । हितम् । गुह्यम् । गूळ्हम् । अपऽसु । हस्ते । दधे । दक्षिणे । दक्षिणऽवान् ॥ ६ ॥

ᵛइन्द्रः ᵛउस्रियायां क्षीरदध्यादिक्रमेणोत्स्राविण्यां[3] भोगवत्यां[4] गवि ᵛसंभृतं संपादितं ᵛमधु क्षीरादि ᵛविवेद अज्ञासीत् । ततस्तदर्थं ᵛपद्वत् पादयुक्तं ᵛशफवत् खुरोपेतं गोधनं विवेद लेभे । कथं लब्धवानिति तदुच्यते । ᵛनमे ᵛगोः । गोरिति द्वितीयार्थे षष्ठी । पणिनामकैरसुरैरपहृतां गां नमे आनीतामकरोत् । तथा ᵛदक्षिणावान् औदार्यवान् समर्थः स इन्द्रः ᵛगुहा गुहायां ᵛहितं ᵛगुह्यं प्रच्छन्नम् अत एव ᵛअप्सु अन्तरिक्षे ᵛगूळ्हं[5] गूढचारिणं मायिनमसुरं ᵛदक्षिणे ᵛहस्ते ᵛदधे दधार अग्रहीत् इत्यर्थः । द्वितीयाष्टके 'श्रुधी हवम्' इत्यस्मिन् वर्गे 'गुहा हितम्' इत्येतत् सम्यगभ्यधायि (ऋ. सं. २. ११. ५) ॥ उस्रियायाम् । प्रक्रिया सम्यक् पूर्वमेवावादि । विवेद । 'विद ज्ञाने' 'विद्लृ लाभे' । एतयोर्लिटि रूपम् । शफवत् । शफोऽस्यास्तीति मतुप् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । नमे । 'णमु प्रह्वत्वे' इत्यस्य लिटि रूपम् । द्विर्वचनस्य छन्दसि विकल्पितत्वादत्र द्विर्वचनाभावः । वाक्यभेदादनिघातः । गुह्यम् । 'गुहू संवरणे' इत्यस्मात् 'शंसिगुहिदुहिभ्यो वेति वक्तव्यम्' इति क्यप् । कित्त्वादगुणः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । दधे । दधातेर्लिटि रूपम् । दक्षिणावान् । 'दक्ष वृद्धौ' । 'द्रुदक्षिभ्यामिनन्' इति इनन्प्रत्ययः । तदस्यास्तीति मतुप् । संहितायाम् 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । निस्स्वरः ॥

ज्योतिर्वृणीत तमसो विजानन्नारे स्याम दुरितादभीके ।
इमा गिरः सोमपाः सोमवृद्ध जुषस्वेन्द्र पुरुतमस्य कारोः ॥ ७ ॥

ज्योतिः । वृणीत । तमसः । विऽजानन् । आरे । स्याम । दुःऽइतात् । अभीके ।
इमाः । गिरः । सोमऽपाः । सोमऽवृद्ध । जुषस्व । इन्द्र । पुरुऽतमस्य । कारोः ॥ ७ ॥

ᵛतमसः रात्रेः सकाशात् ᵛविजानन्[6] विशेषेण जानन्[7] प्रादुर्भवन् सूर्यात्मक इन्द्रः ᵛज्योतिर्वृणीत । जगद्व्यवहारनिर्वाहकं प्रकाशं समभक्त । यद्वा तमसस्तमोरूपात् वृत्रादेः विजानन् प्रादुर्भवन् ।

---

१. ख-ग-च-ज-ण-त-न-भ-स–इति । २. ख-ग-च-ज-ण-न-भ-स–'क्षियन्तं... ... रूपम्' नास्ति । ३. ख-ग-घ-च-ज-ण-त-न-फ-भ-स–०क्रमेणोर्ध्वस्राविण्याम् । ४. ख-ग-घ-च-ज-ण-न-भ-स–'भोगवत्यां' नास्ति । ५. ख-ग-ज-ण-न-भ-ल-स–'गूळ्हं' नास्ति । ६. ख-ग-च-ज-ण-न-भ-स–'विजानन्' नास्ति । ७. ल–'जानन्' नास्ति ।

वृत्रं हत्वा प्रकाशमवृणीत । वयं ˅दुरितात् पापात् ˅आरे दूरे पापवर्जिताः सन्तः ˅अभीके भयरहिते स्थाने ˅स्याम भवेम । ˅सोमपाः सोमस्य पातः अत एव ˅सोमवृद्ध सोमपानेषु वृद्ध हे ˅इन्द्र ˅पुरुतमस्य । पुरून् बहून्[1] शत्रून् तामयति ग्लापयतीति पुरुतमः । तादृशस्य तव ˅कारोः स्तोत्रं कुर्वाणस्य ऋत्विजः ˅इमाः स्तुतिलक्षणाः ˅गिरः वाचः ˅जुषस्व सेवस्व[2] ॥ वृणीत । 'वृङ् संभक्तौ ' इत्यस्य लङि रूपम् । विजानन् । ' ज्ञा अवबोधने ' । विशेषेण ज्ञानं प्रकाशः । प्रत्ययस्वरः । अभीके । न विद्यते भीर्यस्मिन् । ततः ' शेषाद्विभाषा ' (पा. सू. ५. ४. १५४) इति कप्प्रत्ययः । ' नञ्सुभ्याम् ' इत्यन्तोदात्तत्वे प्राप्ते ' कपि पूर्वम् ' ( पा. सू. ६. २. १७३ ) इति पूर्वस्यान्तोदात्तत्वम् । पुरुतमस्य । ' तमु ग्लाने ' इत्यस्मात् ण्यन्तात् पचाद्यचि ' परादिश्छन्दसि बहुलम् ' इत्युत्तरपदाद्युदात्तत्वम् ॥

ज्योति॑र्य॒ज्ञाय॒ रोद॑सी॒ अनु॑ ष्यादा॒रे स्या॑म दुरि॒तस्य॒ भूरेः॑ ।
भूरि॑ चि॒द्धि तु॒ज॒तो मर्त्य॑स्य सुपा॒रासो॑ वसवो॒ बर्ह॑णावत् ॥ ८ ॥

ज्योतिः॑ । य॒ज्ञाय॑ । रोद॑सी॒ इति॑ । अनु॑ । स्या॒त् । आ॒रे । स्या॒म॒ । दुः॒ऽइ॒तस्य॑ । भूरेः॑ ।
भूरि॑ । चि॒त् । हि । तु॒ज॒तः । मर्त्य॑स्य । सु॒ऽपा॒रासः॑ । व॒स॒वः॒ । बर्ह॑णाऽवत् ॥ ८ ॥

हे इन्द्र ˅ज्योतिः जगत्प्रकाशकः सूर्यः ˅यज्ञाय अग्निहोत्रादिकर्मकरणाय ˅रोदसी द्यावापृथिव्यौ ˅अनु ˅ष्यात् अनुभवतु प्रकाशयतु । वयं ˅भूरेः प्रभूतस्य ˅दुरितस्य पापस्य ˅आरे दूरे[3] ˅स्याम भवेम । हे ˅वसवः सर्वस्य वासयितार इन्द्रादयः ˅सुपारासः सुपाराः शोभनपाराः स्तुत्याभिमुखीकर्तुं शक्या यूयं ˅भूरि ˅चित् अतिप्रभूतं ˅बर्हणावत् समृद्धियुक्तं धनं ˅तुजतः भूरिप्रदस्य ˅मर्त्यस्य प्रयच्छथ[4] । अत्र योग्यक्रियाध्याहारः ॥ स्यात् । अस्तेर्लिङि रूपम् । संहितायाम् अनोरुत्तरस्यास्तेः ' उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ' ( पा. सू. ८. ३. ८७ ) इति षत्वम् । निघातः । तुजतः । ' तुजि पिजि लजि हिंसादाननिकेतनेषु ' । ' शतुरनुमः° ' इति विभक्तेरुदात्तत्वम् । बर्हणावत् । ' बृहि वृद्धौ ' इत्यस्य भावे औणादिको युप्रत्ययः । प्रत्ययस्वरः ॥

शु॒नं हु॑वेम म॒घवा॑न॒मिन्द्र॑म॒स्मिन्भरे॒ नृत॑मं॒ वाज॑सातौ ।
शृ॒ण्वन्त॑मु॒ग्रमू॒तये॑ स॒मत्सु॒ घ्नन्तं॑ वृ॒त्राणि॑ सं॒जितं॒ धना॑नाम् ॥ ९ ॥

शु॒नम् । हु॒वे॒म॒ । म॒घऽवा॑नम् । इन्द्र॑म् । अ॒स्मिन् । भरे॑ । नृऽत॑मम् । वाज॑ऽसातौ ।
शृ॒ण्वन्त॑म् । उ॒ग्रम् । ऊ॒तये॑ । स॒मत्ऽसु॑ । घ्नन्त॑म् । वृ॒त्राणि॑ । स॒म्ऽजित॑म् । धना॑नाम् ॥९॥

व्याख्यातेयम्[5] ॥ ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके द्वितीयोऽध्यायः समाप्तः ॥

---

१. ख-ग-च-ज-ण-न-भ-स-' बहून् ' नास्ति । २. ख-ग-च-ज-ण-न-' सेवस्व ' नास्ति । ३. ख-ग-च-ज-ण-स-' दूरे ' नास्ति । ४. घ-प्रयच्छथ । हि पूरणः । ५. ख-इत्येवं पूर्वमेव व्याख्याता; ज-ण-इति पूर्ववत्; न-व्याख्याता ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ[1] तृतीयाष्टकस्य तृतीयाध्याय आरभ्यते[1]। 'इन्द्र त्वा' इति नवर्चं द्वितीयं सूक्तं वैश्वामित्रं गायत्रमैन्द्रम्। तथा चानुक्रान्तम्—'इन्द्र त्वा गायत्रं हि' इति। अग्निष्टोमे प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे इदं सूक्तम्। सूत्रितं च—'इन्द्र त्वा वृषभमुद्धेदभीति तिस्रः' (आश्व. श्रौ. ५. १०) इति। आद्या[2] प्रातःसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या। सूत्रितं च—'इन्द्र त्वा वृषभं मरुतो यस्य' (आश्व. श्रौ. ५. ५) इति ॥

इन्द्र॑ त्वा वृष॒भं व॒यं सु॒ते सोमे॑ हवामहे । स पा॑हि॒ मध्वो॒ अन्ध॑सः ॥१॥

इन्द्र॑ । त्वा॒ । वृ॒ष॒भम् । व॒यम् । सु॒ते । सोमे॑ । ह॒वा॒म॒हे॒ । सः । पा॒हि॒ । मध्व॑ः । अन्ध॑सः ॥१॥

इन्दौ स्रवति सोमरसे रमते क्रीडतीति इन्द्रः। यद्वा इदं सर्वं जगत् साक्षाद्दर्शयतीतीन्द्रः। तस्य संबुद्धिः। हे इन्द्र वृषभं कामानां वर्षकं त्वा त्वां सुते ग्रावभिरभिषुते सोमे वयं हवामहे सोमपानार्थमाह्वयामः। सः त्वं मध्वः मदकरम् अन्धसः अन्नलक्षणं सोमं[3] पाहि पिब। इन्द्रशब्दं यास्को बहुधा निर्विवेच—'इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयतीति वेरां धारयतीति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वा। तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वम्' (निरु. १०. ८) इति। यत्र यत्र योऽर्थोऽनुगुणस्तत्र सोऽर्थः स्वीकार्यः। 'इदंदर्शनादित्यौपमन्यवः' (निरु. १०. ८)। इदं ब्रह्म साक्षात्पश्यतीतीन्द्रः। तथा चारण्यके श्रूयते—'स एतमेव पुरुषं ब्रह्मततममपश्यदिदमदर्शमितीं३। तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः[4]' (ऐ. आ. २. ४. ३) इति ॥ इन्द्र। 'इदि परमैश्वर्ये' इति धातुः। स्वमायया जगद्रूपत्वं परमैश्वर्यम्। अनेनाभिप्रायेण श्रूयते—'इन्द्रो मायाभिः पुरुरूप ईयते' (ऋ. सं. ६. ४७. १८) इति। इन्दुशब्दे उपपदे रमतेः 'अन्येभ्योऽपि दृश्यते' इति डः। पूर्वपदस्योकारलोपः। 'इदि परमैश्वर्ये' इत्यस्मात् 'ऋज्रेन्द्राग्र°' इत्यादिना रन्प्रत्ययान्तत्वेन निपातितः। एवमेतानि निर्वचनानि द्रष्टव्यानि। आमन्त्रिताद्युदात्तत्वम्[5]। हवामहे। ह्वयतेः 'बहुलं छन्दसि' इति संप्रसारणे लटि रूपम्। मध्वः। मधुशब्दः 'फलिपाटि°' इत्यादिना उन्प्रत्ययान्तः। आगमानुशासनस्यानित्यत्वान्नुमभावः। संज्ञापूर्वकस्य विधेरनित्यत्वात् गुणाभावः। यणादेशः। अन्धसः। 'अदेर्नुम् धश्च' इत्यसुन्। नित्स्वरः ॥

ब्राह्मणाच्छंसिनः प्रातःसवने 'इन्द्र क्रतुविदम्' इति शस्त्रयाज्या। सूत्रितं च—'इन्द्र क्रतुविदं सुतमिति याज्या' (आश्व. श्रौ. ५. १०) इति ॥

---

१. त-न- अथ (न-तृतीयाष्टके) तृतीयाध्याय आरभ्यते। २. ख-ग-च-ज-ण-फ-अथ। ३. त-सोमरसम्। ४. ख-ग-च-ज-भ-देवाः परोक्षप्रिया इव हि देवाः। ५. ख-ग-च-ज-ण-आमन्त्रितत्वाद्युदात्तत्वम्।

इन्द्र क्रतुविदं सुतं सोमं हर्य पुरुष्टुत । पिबा वृषस्व तातृपिम् ॥ २ ॥

इन्द्र । क्रतुऽविदम् । सुतम् । सोमम् । हर्य । पुरुऽस्तुत । पिब । आ । वृषस्व । ततृपिम् ॥२॥

हे इन्द्र क्रतुविदं क्रतोः प्रज्ञाया लम्भकं सुतम् अभिषुतमिमं सोमं हर्य पातुं कामयस्व । हे पुरुष्टुत पुरुभिर्बहुभिः स्तुतेन्द्र तातृपिं तर्पकमाप्यायनकारिणमिमं सोमं पिब । पीतमिमं सोमम् आ वृषस्व जठरे सिञ्च । यथा नाभेरधो न पतति तथा धारयेति भावः ॥ हर्य । 'हर्य गतिकान्त्योः' इत्यस्य लोटि रूपम् । निघातः । पुरुष्टुत । 'स्तुतस्तोमयोश्छन्दसि' इति संहितायां षत्वम् । वृषस्व । 'वृष सेचने' इत्यस्य लोटि रूपम् । आङ[1] उत्तरत्वात्[1] निघातः । तातृपिम् । 'तृप प्रीणने' इत्यस्मात् 'छन्दसि सदादिभ्यो दर्शनात्' (पा. सू. ३. २. १७१. २) इति किन् । तस्य लिड्वद्भावात् द्विर्वचनादि । संहितायाम् 'अन्येषामपि॰' इत्यभ्यासस्य दीर्घः । नित्त्वादाद्युदात्तः ॥

इन्द्र प्र णो धितावानं यज्ञं विश्वेभिर्देवेभि । तिर स्तवान विश्पते ॥३॥

इन्द्र । प्र । नः । धितऽवानम् । यज्ञम् । विश्वेभिः । देवेभिः । तिर । स्तवान । विश्पते ॥ ३ ॥

हे स्तवान स्तोतृभिः स्तूयमान विश्पते विशां मरुतां पते हे इन्द्र विश्वेभिर्देवेभिः सर्वैः यजनीयैर्देवैः[2] सहितस्त्वं धितावानम् । वन्यते संभज्यते इति वानं हविः । धितं निहितं हविर्यस्य तम् । संभृतहविष्कमित्यर्थः । अस्मदीयमिमं यज्ञं प्र तिर प्रकर्षेण वर्धय । हविःस्वीकरणेन संपूर्णं कुरु इति भावः ॥ नः । 'उपसर्गाद्बहुलम्' इति संहितायां णत्वम् । धितावानम् । 'डुधाञ् धारणपोषणयोः' इत्यस्मान्निष्ठा । बहुव्रीहौ पूर्वपदस्वरः । तिर । तरतेर्व्यत्ययेन शः । प्रत्ययस्वरः । स्तवान । 'ष्टुञ् स्तुतौ' । 'सम्यानच् स्तुवः' इत्युपपदाभावेऽपि कर्मण्यानच्प्रत्ययः । आमन्त्रितत्वात् निघातः ॥

इन्द्र सोमाः सुता इमे तव प्र यन्ति सत्पते । क्षयं चन्द्रास इन्दवः ॥४॥

इन्द्र । सोमाः । सुताः । इमे । तव । प्र । यन्ति । सत्ऽपते । क्षयम् । चन्द्रासः । इन्दवः ॥४॥

हे सत्पते इन्द्र चन्द्रासः आह्लादयितारः इन्दवः दीप्ताः सुताः अभिषुताः इमे अस्माभिर्दत्ताः सोमाः तव[3] क्षयम् । क्षियन्ति निवसन्त्यन्नादीनि अत्रेति क्षयो जठरम् । प्र यन्ति प्रकर्षेण गच्छन्ति । तान् धारयेति भावः ॥ क्षयम् । 'क्षि निवासगत्योः' इत्यस्मादधिकरणे घप्रत्ययः । प्रत्ययस्वरेण अन्तोदात्तत्वे[4] प्राप्ते 'क्षयो निवासे' इत्याद्युदात्तत्वम् । चन्द्रासः । 'चदि आह्लादने दीप्तौ[5] च[5]' । अस्मात् 'स्फायितञ्चि॰' इत्यादिना रक्प्रत्ययः । 'आज्जसेरसुक्' इत्यसुक्[6] । प्रत्ययस्वरः । इन्दवः । 'उन्देरिच्चादेः' (उ. सू. १. १२) इति उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तः ॥

---

१. ख-ग-च-ज-ण-भ—आदुत्तरत्वात् । २. ज-ण—यजनीयदेवैः । ३. ख-ग-च-न-भ-ल-स—'तव' नास्ति । ४. ख-ग-ज-ण-न-भ-स—अन्तोदात्ते । ५. ख-ग-च-न-भ-ल-स—दीप्तौ; ज-ण—'दीप्तौ च' नास्ति । ६. ल—इत्यसुगागमः ।

**दधिष्वा जठरे सुतं सोममिन्द्र वरेण्यम् । तव द्युक्षास इन्दवः ॥ ५ ॥**

दधिष्व । जठरे । सुतम् । सोमम् । इन्द्र । वरेण्यम् । तव । द्युक्षासः । इन्दवः ॥ ५ ॥

हे इन्द्र वरेण्यं सर्वैर्वरणीयं सुतम् अभिषुतं सोमं जठरे दधिष्व धारय । इन्दवः दीप्ता इमे सोमाः तव द्युक्षासः । दिवि क्षियन्ति निवसन्तीति द्युक्षासः । अतस्त्वं स्वभूतान्[1] तान् धारयेति भावः ॥ दधिष्व । दधातेर्लोटि रूपम् । ‘ आगमा अनुदात्ताः ’ इतीटोऽनुदात्तत्वात् प्रत्ययस्वरः । वरेण्यम् । ‘ वृङ् संभक्तौ ’ । ‘ वृङ एण्यः[2] ’ इति[2] एण्यप्रत्ययः । वृषादित्वादाद्युदात्तः । द्युक्षासः । क्षियतेः[3] ‘ अन्येभ्योऽपि दृश्यते ’ इति डप्रत्ययः । कृदुत्तरपदस्वरः ॥ ॥१॥

**गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इन्द्र त्वादातमिद्यशः ॥६॥**

गिर्वणः । पाहि । नः । सुतम् । मधोः । धाराभिः । अज्यसे ।

इन्द्र । त्वाऽदातम् । इत् । यशः ॥ ६ ॥

गिर्वणः गीर्भिर्वननीय । तथा च यास्कः—‘ गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति ’ ( निरु. ६. १४ ) इति । तादृशेन्द्र नः अस्मदीयं सुतम् अभिषुतमिमं सोमं पाहि पिब । यतः[4] मधोः मदकरस्य सोमस्य धाराभिः अज्यसे सिच्यसे हे इन्द्र त्वादातमित् त्वया शोधितं विशदीकृतमेव यशः अन्नमस्मासु भवति ॥ गिर्वणः । ‘ वन संभक्तौ ’ इत्यस्मादसुन् । गिर उपधाया दीर्घाभावश्छान्दसः । ‘आमन्त्रितस्य॰’ इति षाष्ठिकमाद्युदात्तत्वम् । पाहि । ‘ पा पाने ’ इत्यस्माल्लोटि रूपम् । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । प्रत्ययस्वरः । त्वादातम् । ‘दैप् शोधने’ । सत्यपि पकारे ‘ नानुबन्धकृतमनेजन्तत्वम् ’ ( परिभा. ७ ) इत्येजन्त एवायम् । ततः ‘ आदेचः॰ ’ इत्यात्वम् । अस्मात् कर्मणि क्तः । ‘ दाधा घ्वदाप् ’ इत्यत्र अदाप् इति प्रतिषेधेन घुसंज्ञाया अभावात् ‘ दो दद्घोः ’ इति ददादेशो न भवति । त्वेति युष्मच्छब्दस्य तृतीया । ‘ कर्तृकरणे कृता बहुलम् ’ इति समासः । ‘तृतीया कर्मणि ’ इति पूर्वपदप्रकृतिस्वरः । यशः । ‘अशू व्याप्तौ ’ । ‘ अशेर्युट् च ’ इत्यसुन् । तत्संनियोगेन धातोः[5] युडागमः । नित्त्वादाद्युदात्तः ॥

**अभि द्युम्नानि वनिन इन्द्रं सचन्ते अक्षिता । पीत्वी सोमस्य वावृधे ॥७॥**

अभि । द्युम्नानि । वनिनः । इन्द्रम् । सचन्ते । अक्षिता । पीत्वी । सोमस्य । ववृधे ॥ ७ ॥

वनिनः । वनं देवताविषयं संभजनमस्यास्तीति वनी[6] । तस्य देवान् संभजमानस्य यजमानस्य द्युम्नानि द्योतमानानि अक्षिता क्षयरहितानि संपूर्णानि सोमादीनि हवींषि इन्द्रम् अभि अभितः सचन्ते समवयन्ति । तेषु मध्ये सोमस्य पीत्वी सोमं पीत्वा वावृधे स इन्द्रो वर्धते ॥ वनिनः ।

---

१. ख-ग-च-ण-न-भ-स–‘ स्वभूतान् ’ नास्ति । २. ख-ग-च-ज-ण-न-भ-स–‘ एण्यः इति ’ नास्ति । ३. फ–क्षेः । ४. त–अतः । ५. ज–धातोः देवनेऽर्थे । ६. ख-ग-च-त-न-फ-भ–‘ वनी ’ नास्ति ।

'अत इनिठनौ' इतीनिप्रत्ययः। तस्य स्वरः। सचन्ते। 'षच समवाये' इत्यस्य[1] लटि रूपम्। अक्षिता। 'क्षि क्षये' इत्यस्य निष्ठा। अत्र ण्यदर्थः[2] इति दीर्घाभावः। तस्मादेव 'क्षियो दीर्घात्' इति निष्ठानत्वाभावः[3]। नञा समासे तस्य स्वरः। पीत्वी। 'पा पाने' इत्यस्मात् क्त्वाप्रत्ययस्य 'स्नात्व्यादयश्च' इति निपातनात् त्वी इत्यादेशः। प्रत्ययस्वरः। 'घुमास्थागापा°' इत्यादिना ईत्वम्॥

अर्वावतो न आ गहि परावतश्च वृत्रहन्। इमा जुषस्व नो गिरः ॥८॥

अर्वाऽवतः। नः। आ। गहि। पराऽवतः। च। वृत्रऽहन्। इमाः। जुषस्व। नः। गिरः ॥८॥

हे वृत्रहन् इन्द्र अर्वावतः अर्वाचीनात् समीपाद्देशात्[4] परावतः अतिदूराद्देशात्[5] वा नः अस्मानभिलक्ष्य आ गहि आगच्छ। आगाय च नः अस्मदीयाः इमाः स्तुतिलक्षणाः गिरः वाचः जुषस्व सेवस्व॥ परावतः। 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः। प्रत्ययस्वरः॥

यदन्तरा परावतमर्वावतं च हूयसे। इन्द्रेह तत आ गहि ॥९॥

यत्। अन्तरा। पराऽवतम्। अर्वाऽवतम्। च। हूयसे। इन्द्र। इह। ततः। आ। गहि ॥९॥

हे इन्द्र यत् यस्मिन् परावतम् अतिविप्रकृष्टस्य देशस्य अर्वावतं अतिसंनिकृष्टस्य[6] देशस्य च अन्तरा तयोर्मध्यदेशे हूयसे सम्यगिज्यसे ततः तस्माद्देशात् इह अस्मिन् यज्ञे आ गहि सोमपानार्थमागच्छ॥ परावतम् अर्वावतम्। 'अन्तरान्तरेण युक्ते' (पा. सू. २. ३. ४) इति द्वितीया। ततः। पञ्चम्यास्तसिल्। लित्स्वरः॥　　॥ २ ॥

'आ तू न इन्द्र' इति नवर्चं तृतीयं सूक्तं वैश्वामित्रं गायत्रमैन्द्रम्। 'आ तू नः' इत्यनुक्रान्तम्। अतिरात्रे द्वितीये पर्याये ब्राह्मणाच्छंसिशस्त्रे एतदादिके द्वे सूक्ते। सूत्रितं च—'आ तू न इन्द्र मद्र्यगिति सूक्ते' (आश्व. श्रौ. ६. ४) इति॥

आ तू न इन्द्र मद्र्यग्घुवानः सोमपीतये। हरिभ्यां याह्यद्रिवः ॥ १ ॥

आ। तु। नः। इन्द्र। मद्र्यक्। हुवानः। सोमऽपीतये। हरिऽभ्याम्। याहि। अद्रिऽवः ॥१॥

अद्रिवः[7] वज्रिन्[7] हे इन्द्र हुवानः होतृभिराहूयमानस्त्वं मद्र्यक् मदभिमुखः सन् नः अस्मदीये यज्ञे सोमपीतये सोमपानार्थं हरिभ्याम् अश्वाभ्यां सह तु क्षिप्रम् आ याहि॥ तु। 'ऋचि तुनुघ°' इत्यादिना संहितायां दीर्घः। मद्र्यक्। मामञ्चतीति 'ऋत्विग्दधृक्°' इत्यादिना क्विन्। 'प्रत्ययोत्तरपदयोश्च' इत्यस्मच्छब्दस्यैकवचने मपर्यन्तस्य मादेशः। 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति टेः अद्रि इत्यादेशः। 'अद्रिसध्र्योरन्तोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थम्'

---

१. ज-ण—इत्यस्मात्। २. ख-ग—अण्यदर्थे। ३. ज-ण—निष्ठातस्य नत्वाभावः। ४. ख-ग-च-ज-ण-प-फ-भ-स—समीपदेशात्। ५. घ-ज-ण-स—अतिदूरदेशात। ६. च-न-स—संनिकृष्टस्य। ७. ख-ग-च-न-फ-भ-ल-स—हे अद्रिवः हे वज्रिन्।

इति वचनात् अयादेशः अन्तोदात्तः । यणादेशे कृते ' उदात्तस्वरितयोर्यणः॰' इति यणः स्वरितत्वम् । ' क्विन्प्रत्ययस्य कुः' इति कुत्वम् । सोमपीतये । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । अद्रिवः । ' मतुवसोः॰ ' इति रुत्वम् । आमन्त्रितत्वान्निघातः ॥

सत्तो होता न ऋत्वियस्तिस्तिरे बर्हिरानुषक् । अयुञ्जन्प्रातरद्रयः ॥ २ ॥

सत्तः । होता । नः । ऋत्वियः । तिस्तिरे । बर्हिः । आनुषक् । अयुञ्जन् । प्रातः । अद्रयः ॥२॥

हे इन्द्र ᵛनः अस्मदीये यज्ञे ᵛहोता ऋत्विक् तवाह्वानार्थम् ᵛऋत्वियः प्राप्तकालः सन् ᵛसत्तः निषण्णो वर्तते । तथा ᵛबर्हिरानुषक् अनुषक्तं परस्परसंबद्धं[1] यथा भवति तथा ᵛतिस्तिरे हविःष्वासन्नेषु[2] स्तीर्णमभूत्[2] । तथा ᵛप्रातः प्रातःसवने सोमाभिषवार्थम् ᵛअद्रयः ग्रावाणः ᵛअयुञ्जन् परस्परं संगता अभूवन् । तस्मात् सोमपानार्थं त्वमागच्छेति भावः ॥ सत्तः । षद्लृ विशरणादिषु[3] इत्यस्मात् ' गत्यर्थाकर्मकश्लिष॰ ' ( पा. सू. ३. ४. ७२ ) इत्यादिना कर्तरि क्तः । सर्वविधीनां छन्दसि विकल्पितत्वादत्र निष्ठातकारस्य नत्वाभावः । ऋत्वियः । ऋतुशब्दात् ' छन्दसि घस् ' इति घस्प्रत्ययः । घस्येयादेशः । ' सिति॰ ' इति पदसंज्ञायाम् ' ओर्गुणः ' इति भसंज्ञाधीनो गुणो न भवति । यणादेशः । प्रत्ययस्वरः । तिस्तिरे । ' स्तृञ् आच्छादने ' इत्यस्य कर्मणि लिटि ' ऋत इद्धातोः ' इतीत्वम् । द्विर्वचने ' शर्पूर्वाः खयः ' इति तकारस्य शेषः । ' लिटस्तझयोरेशिरेच् ' इति तप्रत्ययस्य एश् इत्यादेशः । पादादित्वादनिघातः । प्रत्ययस्वरः । आनुषक् । ' षञ्ज संगे ' । क्विप् । ' अनिदिताम्॰ ' इति नलोपः । आङन्वोरुपसर्गयोः प्राक् प्रयोगः । गतिसमासः । कृदुत्तरपदस्वरः । अयुञ्जन् । ' युजिर् योगे ' इत्यस्य लुङि च्लेः ' इरितो वा ' इत्यङादेशः । ' बहुलं छन्दसि ' इति रुडागमः । पादादित्वादनिघातः । अडागमस्वरः ॥

इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद । वीहि शूर पुरोळाशम् ॥ ३ ॥

इमा । ब्रह्म । ब्रह्मऽवाहः । क्रियन्ते । आ । बर्हिः । सीद । वीहि । शूर । पुरोळाशम् ॥३॥

ᵛब्रह्मवाहः[4] ब्रह्माणि[4] स्तोत्राणि स्तुत्यतया वहतीति ब्रह्मवाहा ब्रह्मणा स्तोत्रेण प्राप्यते इति वा । हे स्तुत्य[5] इन्द्र तुभ्यम् ᵛइमा इमानि ᵛब्रह्म ब्रह्माणि स्तोत्राणि अस्माभिः ᵛक्रियन्ते । अतः ᵛबर्हिः ᵛआ ᵛसीद स्तुत्यतया बर्हिषि यज्ञे उपविश । हे ᵛशूर समर्थेन्द्र अस्माभिर्दीयमानमिमं ᵛपुरोडाशं पुरोडाशाख्यं हविः ᵛवीहि भक्षय ॥ ब्रह्मवाहः । ' वह प्रापणे ' इत्यस्मात् ' वहिहाधाञ्भ्यश्छन्दसि ' इत्यसुन् । ' णित् ' इत्यनुवृत्तेरुपधावृद्धिः । आमन्त्रितत्वान्निघातः । क्रियन्ते । करोतेः कर्मणि यक् । ' रिङ् शयग्लिङ्क्षु ' इति रिङादेशः । प्रत्ययस्वरः । पादादित्वादनिघातः । बर्हिः । कालाध्वनोरत्यन्तसंयोगे द्वितीया । वीहि । वी कान्त्यादिषु । लोटि रूपम् । हेर्ङित्वादुदात्तः । पुरोळाशम् । ' दाशृ दाने ' इत्यस्मात् पुरस्पूर्वात् ' मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ' ( पा. सू. ३. २. ७१ ) । पुरो दाशन्त एनमिति । निपातनाद्दकारस्य ळकारः । कृदुत्तरपदस्वरः ॥

---

१. ग–परस्परे संबद्धम्; ज-ण–परस्परं संबद्धम् । २. ख-ग-च-ज-ण-न-भ–सत्रेषु स्तीर्णम् । ३. ज-ण–विशरणे । ४. न-ल-स–ब्रह्माणि; फ-भ–ब्रह्मवाहा ब्रह्माणि । ५. ख-ग-च-न-फ-भ–स्तुत्य; ल–ब्रह्मवाह इन्द्र !

रारन्धि सवनेषु ण एषु स्तोमेषु वृत्रहन् । उक्थेष्विन्द्र गिर्वणः ॥ ४ ॥

ररन्धि । सवनेषु । नः । एषु । स्तोमेषु । वृत्रऽहन् । उक्थेषु । इन्द्र । गिर्वणः ॥ ४ ॥

हे गिर्वणः गीर्भिः स्तुतिभिर्वननीय वृत्रहन् वृत्रस्य हन्तर्हे इन्द्र नः अस्माकं संबन्धिषु त्रिषु[1] सवनेषु एषु क्रियमाणेषु स्तोमेषु स्तोत्रेषु उक्थेषु शस्त्रेषु[2] च रारन्धि रमस्व ॥ रारन्धि[3] । रमतेर्लोटि 'बहुलं छन्दसि' इति शपः श्लुः । 'छन्दस्युभयथा' इति हेरार्धधातुकत्वेना ङित्वात् 'अङितश्च' इति हेर्धिः । सवनेषु । सूयते सोमो येष्विति अधिकरणे सुनोतेर्ल्युट् । लित्स्वरः । णः । नसो नकारस्य 'नश्च धातुस्थोरुषुभ्यः' इति संहितायां णत्वम् ॥

मतयः सोमपामुरुं रिहन्ति शवसस्पतिम् । इन्द्रं वत्सं न मातरः ॥ ५ ॥

मतयः । सोमऽपाम् । उरुम् । रिहन्ति । शवसः । पतिम् । इन्द्रम् । वत्सम् । न । मातरः ॥५॥

हे इन्द्र मतयः अस्माभिः क्रियमाणाः स्तुतयः उरुं महान्तं सोमपां सोमस्य पातारं शवसः बलस्य पतिम् इन्द्रं त्वां रिहन्ति लिहन्ति । तत्र दृष्टान्तः । वत्सं न । यथा वत्सं मातरः धेनवो लिहन्ति तद्वत् ॥ मतयः । 'मन ज्ञाने' इत्यस्मात् कर्मणि 'मन्त्रे वृष°' इत्यादिना क्तिन्नुदात्तः । उरुम् । 'ऊर्णुञ् आच्छादने' इत्यस्मात् महत्यर्थे गम्यमाने 'महति ह्रस्वश्च' ( उ. सू. १. ३२ ) इति कुप्रत्ययो धातोर्ह्रस्वश्च । प्रत्ययस्वरः । रिहन्ति । 'लिह आस्वादने' इत्यस्य लटि रूपम् । रलयोरभेदः । प्रत्ययस्वरः । शवसस्पतिमिति संहितायां 'षष्ठ्याः पतिपुत्रपृष्ठ°' इत्यादिना 'विसर्जनीयस्य सत्वम् । वत्सम् । 'वद व्यक्तायां वाचि' । अस्मात् 'वृतॄवदिहनि°' इत्यादिना सप्रत्ययः । वदत्यभीक्ष्णं मातरमिति वत्सो गोबालः । प्रत्ययस्वरः ॥ ॥ ३ ॥

स मन्दस्वा ह्यन्धसो राधसे तन्वा महे । न स्तोतारं निदे करः ॥ ६ ॥

सः । मन्दस्व । हि । अन्धसः । राधसे । तन्वा । महे । न । स्तोतारम् । निदे । करः ॥६॥

हे इन्द्र सः तथाविधस्त्वं महे महते राधसे धनाय अन्धसः अस्माभिर्दीयमानस्य सोमस्य पानेन तन्वा शरीरेण सह मन्दस्व हृष्टो भव । हिः अत्र समुच्चयार्थः । किंच त्वं स्तोतारं मां निदे निन्दायै विषयभूतं न करः मा कार्षीः ॥ मन्दस्व । मदि स्तुत्यादिषु इत्यस्य लोटि रूपम् । 'हि च' इति निघातप्रतिषेधेन भवितव्यमिति चेन्न[4] । तत्र 'अप्रातिलोम्ये' इति वर्तते । अत्र हेः समुच्चयार्थत्वान्निघातः । तन्वा । 'उदात्तस्वरितयोः°' इति स्वरितत्वम् । महे । तकारलोपश्छान्दसः । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् । निदे । 'णिदि कुत्सायाम्' इत्यस्मात् संपदादिलक्षणो भावे क्विप् । आगमानुशासनस्यानित्यत्वान्नुमभावः । 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । करः । करोतेर्लुङि च्लेः 'कृमृदृरुहिभ्यश्छन्दसि' इत्यङादेशः । निघातः ॥

---

१. ख-ग-च-न-भ-स-'त्रिषु' नास्ति । २. ख-ग-च-न-भ-स-'शस्त्रेषु' नास्ति । ३. ख-ग-च-त-भ-स-ररन्धि । ४. ख-ग-ज-ण-त-न-चेत् ।

वयमिन्द्र त्वायवो हविष्मन्तो जरामहे । उत त्वमस्मयुर्वसो ॥ ७ ॥

वयम् । इन्द्र । त्वाऽयवः । हविष्मन्तः । जरामहे । उत । त्वम् । अस्मऽयुः । वसो इति ॥७॥

हे ᵛइन्द्र ᵛत्वायवः यज्ञार्थं त्वामात्मन इच्छन्तस्त्वत्कामाः सन्तः ᵛहविष्मन्तः संभृतहविष्काः ᵛवयं ᵛजरामहे त्वां स्तुमः । हे ᵛवसो सर्वस्य वासक इन्द्र ᵛउत ᵛत्वम् अपि ᵛअस्मयुः हविःस्वीकरणार्थम् अस्मानात्मन इच्छन् भव ॥ त्वायवः । त्वामिच्छन्तीत्यर्थे ' सुप आत्मनः क्यच् ' । ' प्रत्ययोत्तरपदयोश्च ' इति मपर्यन्तस्य त्वादेशः । ' क्याच्छन्दसि ' इत्युप्रत्ययः । त्वयव इति प्राप्तौ ' युष्मदस्मदोरनादेशे ' इत्यविभक्तावपि हलादौ व्यत्ययेनात्वम् । प्रत्ययस्वरः । हविष्मन्तः । ' तसौ मत्वर्थे ' इति भसंज्ञायां सकारस्य रुत्वाभावः । ' स्वरविधौ व्यञ्जनमविद्यमानवत् ' इति परिभाषानाश्रयणात् मतुप उदात्तताभावः । इसिप्रत्ययस्वरः । जरामहे । ' जरतिः स्तुतिकर्मा ' इति यास्कः । अस्मयुः । अस्मानिच्छतीत्यर्थे सुपः क्यच् । तस्मादुप्रत्ययः । पूर्वपदान्तलोपश्छान्दसः । प्रत्ययस्वरः ॥

मारे अस्मद्वि मुमुचो हरिप्रियार्वाङ् याहि । इन्द्र स्वधावो मत्स्वेह ॥ ८ ॥

मा । आरे । अस्मत् । वि । मुमुचः । हरिऽप्रिय । अर्वाङ् । याहि ।

इन्द्र । स्वधाऽवः । मत्स्व । इह ॥ ८ ॥

हे ᵛहरिप्रिय हरी अश्वौ प्रियौ यस्य तादृश हे इन्द्र ᵛअस्मत् अस्मत्तः ᵛआरे दूरे रथे योजितावश्वौ ᵛमा ᵛवि ᵛमुमुचः मा विमोचय । ताभ्यामुपेत एव ᵛअर्वाङ् अस्मदाभिमुख्येन ᵛयाहि आगच्छ[1]। हे ᵛस्वधावः सोमलक्षणान्नवन्* ᵛइन्द्र ᵛइह अस्मिन् देवयजने ᵛमत्स्व सोमं पीत्वा हृष्टो भव[1] ॥ अस्मत् । अस्मच्छब्दस्य पञ्चमीबहुवचनस्य ' पञ्चम्या अत् ' ( पा. सू. ७. १. ३१ ) इत्यदादेशः । मुमुचः । ' मुच्लृ मोक्षणे ' इत्यस्य ण्यन्तस्य छान्दसे लुङि चङि रूपम् । अभ्यासस्य दीर्घाभावश्छान्दसः । ' न माङ्योगे ' इत्यडभावः । निघातः । हरिप्रिय । आमन्त्रितस्य पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् । मत्स्व । मदि स्तुत्यादिषु इत्यस्य लोटि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः ॥

अर्वाञ्चं त्वा सुखे रथे वहतामिन्द्र केशिना । घृतस्नू बर्हिरासदे ॥ ९ ॥

अर्वाञ्चम् । त्वा । सुऽखे । रथे । वहताम् । इन्द्र । केशिना ।

घृतस्नू इति घृतऽस्नू । बर्हिः । आऽसदे ॥ ९ ॥

---

१. च-फ-आगच्छ । आगत्य इह अस्मिन् यज्ञे स्वधावः हे स्वधावन् इन्द्र मत्स्व मन्दस्व ।
*. ज-सवनीयपुरोडाशादिरूपमन्नं तद्वन् ।

हे ᵛइन्द्र ᵛघृतस्नू श्रमजनितजलप्रस्रवणयुक्तौ ᵛकेशिना केशिनौ स्कन्धप्रदेशे लम्बमानकेशयुक्तौ हरी ᵛआसदे आसदनीयं[1] ᵛबर्हिः अभिलक्ष्य ᵛसुखे सुखकरे ᵛरथे ᵛअर्वाञ्चम् अस्मदभिमुखं ᵛत्वा त्वां ᵛवहताम् ॥ अर्वाञ्चम् । अञ्चतेः क्विनि ' उगिदचाम्° ' इति नुम् । वहताम् । वहेर्लोटि रूपम् । तसो लसार्वधातुकस्वरे कृते धातुस्वरः । आसदे । सदेः कृत्यार्थे केन्प्रत्ययः । नित्स्वरः । कृदुत्तरपदप्रकृतिस्वरः ॥　॥ ४ ॥

' उप नः सुतम् ' इति नवर्चं चतुर्थं सूक्तं वैश्वामित्रं गायत्रमैन्द्रम् । ' उप नः ' इत्यनुक्रमणिका । पूर्वसूक्तेन सहोक्तो विनियोगः ॥

**उप॑ नः सु॒तमा ग॑हि॒ सोम॑मिन्द्र॒ गवा॑शिरम् । हरि॑भ्यां॒ यस्ते॑ अस्म॒युः ॥१॥**

उप॑ । नः॒ । सु॒तम् । आ । ग॒हि॒ । सोम॑म् । इ॒न्द्र॒ । गोऽआ॑शिरम् ।

हरि॑ऽभ्याम् । यः । ते॒ । अ॒स्म॒ऽयुः ॥ १ ॥

हे ᵛइन्द्र ᵛनः अस्मदीयं ᵛसुतम् अभिषुतं ᵛगवाशिरं पयसा मिश्रितं ᵛसोमं प्रति ᵛउप ᵛआ ᵛगहि समीप आगच्छ । यतः ᵛहरिभ्याम् अश्वाभ्यां युक्तः ᵛते[2] तव[2] रथः ᵛअस्मयुः अस्मान् कामयमानो वर्तते ॥ गवाशिरम् । आङ्पूर्वस्य श्रीणातेः क्विपि ' अपस्पृधेथामानृचुः° ' ( पा. सू. ६. १. ३६ ) इत्यादिनाशिर इत्यादेशः । बहुव्रीहौ पूर्वपदस्वरः ॥

**तमि॑न्द्र॒ मद॒मा ग॑हि ब॒र्हिः॒ष्ठां ग्राव॑भिः सु॒तम् । कु॒विन्न्व॑स्य तृ॒प्णव॑ः ॥ २ ॥**

तम् । इ॒न्द्र॒ । मद॑म् । आ । ग॒हि॒ । ब॒र्हिः॒ऽस्थाम् । ग्राव॑ऽभिः । सु॒तम् ।

कु॒वित् । नु॒ । अ॒स्य॒ । तृ॒प्णव॑ः ॥ २ ॥

हे ᵛइन्द्र ᵛग्रावभिः ᵛसुतम् अभिषुतं ᵛबर्हिःष्ठां बर्हिषि स्थितं ᵛमदम् । माद्यते[3] अनेनेति मदः सोमः । ᵛतम् इमं[4] सोमम्[4] ᵛआ ᵛगहि आगच्छ । ᵛकुवित् प्रभूतं यथा भवति तथा ᵛअस्य सोमस्य पानेन[5] ᵛनु क्षिप्रं ᵛतृप्णवः तृप्तो भव ॥ मदम् । ' मदी हर्षे ' । ' मदोऽनुपसर्गे ' इत्यप्प्रत्ययः । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः । बर्हिःष्ठाम् । ' ष्ठा गतिनिवृत्तौ ' । क्विप् । संहितायां पूर्वपदसकारस्य ' आदेशप्रत्यययोः ' इति षत्वम् । ष्टुत्वम् । कृदुत्तरपदस्वरः । तृप्णवः । ' तृप प्रीणने ' इत्यस्य लेट्यडागमः । कुवियोगादनिघातः । क्षुभ्नादिषु[6] ' नृनमन तृप्नोति°' इति पठितम् । तथापि सर्वविधीनां छन्दसि विकल्पितत्वादत्र णत्वप्रतिषेधो न भवति । प्रत्ययस्वरः ॥

**इन्द्र॑मि॒त्था गिरो॒ ममाच्छा॑गुरिषि॒ता इ॒तः । आ॒वृते॒ सोम॑पीतये ॥ ३ ॥**

इन्द्र॑म् । इ॒त्था । गिर॑ः । मम॑ । अच्छ॑ । अ॒गु॒ः । इ॒षि॒ताः । इ॒तः ।

आ॒ऽवृते॑ । सोम॑ऽपीतये ॥ ३ ॥

---

१. ल–आसादनीयम् । २. न-ल-स–तव; प–यः ते तव । ३. न-ल-स–मद्यते । ४. ख-ग-ज-ण-भ–सोममिमम्; घ–तं मदं सोमम्; ल-स–सोममिमं सोमम् । ५. न-स–पाने । ६. च–यद्यपि क्षुभ्नादिषु ।

हे इन्द्र ᐯइषिताः त्वदर्थं प्रेरिताः ᐯइत्था इत्थमनेन प्रकारेण उच्यमानाः ᐯमम ᐯगिरः स्तुतिलक्षणा वाचः ᐯइन्द्रं त्वाम् ᐯइतः अस्माद्देवयजनदेशात् ᐯअच्छागुः आभिमुख्येन गच्छन्तु । किमर्थम् । ᐯसोमपीतये सोमपानार्थम् ᐯआवृते त्वामावर्तयितुम् ॥ इत्था । इदंशब्दात् ' था हेतौ च छन्दसि ' इति व्यत्ययेन थाप्रत्ययः । इदमः ' एतेतौ रथोः ' इति इदित्यादेशः । प्रत्ययस्वरः । अच्छ । ' अच्छ गत्यर्थवदेषु ' इति गतिसंज्ञा । अगुः । ' इण् गतौ ' इत्यस्य लुङि रूपम् । निघातः ॥

**इन्द्रं॒ सोम॑स्य पी॒तये॒ स्तोमै॑रि॒ह ह॑वामहे । उ॒क्थेभिः॑ कु॒विदा॒गम॑त् ॥ ४ ॥**

इन्द्र॑म् । सोम॑स्य । पी॒तये॑ । स्तोमैः॑ । इ॒ह । ह॒वा॒म॒हे॒ । उ॒क्थेभिः॑ । कु॒वित् । आ॒ऽगम॑त् ॥४॥

ᐯस्तोमैः त्रिवृत्पञ्चदशादिस्तोमसाध्यैः स्तोत्रैः ᐯउक्थेभिः उक्थैः शस्त्रैश्च ᐯइह कर्मणि ᐯसोमस्य ᐯपीतये सोमपानार्थम् ᐯइन्द्रं[1] ᐯहवामहे वयमाह्वयामः । ᐯकुवित् बहुवारमाहूतः स इन्द्रः ᐯआगमत् यज्ञं प्रत्यागच्छतु ॥ आगमत् । गमेर्लेट्यडागमः । ' आगमा अनुदात्ताः ' इत्यटोऽनुदात्तत्वात् धातुस्वरः । ' तिङि चोदात्तवति ' इति गतेर्निघातः । कुवियोगादनिघातः ॥

**इन्द्र॒ सोमाः॑ सु॒ता इ॒मे तान्द॑धिष्व शतक्रतो । ज॒ठरे॑ वाजिनीवसो ॥ ५ ॥**

इन्द्र॑ । सोमाः॑ । सु॒ताः । इ॒मे । तान् । द॒धि॒ष्व॒ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।

ज॒ठरे॑ । वा॒जि॒नी॒व॒सो॒ इति॑ वाजिनीऽवसो ॥ ५ ॥

हे ᐯशतक्रतो ᐯइन्द्र ᐯइमे ᐯसोमाः ᐯसुताः ग्रावभिस्त्वदर्थमभिषुताः। हे ᐯवाजिनीवसो अन्नधन[2] । यद्वा । वाजोऽन्नमासु फलत्वेनास्तीति वाजिन्यः क्रियाः । तासां[3] वासक हे इन्द्र ᐯतान् सोमरसान् ᐯजठरे ᐯदधिष्व धारय ॥ वाजिनीवसो । वाजशब्दात् मत्वर्थे ' अत इनिठनौ ' इति इनिप्रत्ययः । ' ऋन्नेभ्यो ङीप् ' इति ङीप् । तासां वसो । ' संबुद्धौ च ' इति गुणः । आमन्त्रितत्वादाष्टमिकमनुदात्तत्वम् ॥ ॥ ५ ॥

**वि॒द्मा हि त्वा॑ धनंज॒यं वाजे॑षु दधृ॒षं क॑वे । अधा॑ ते सु॒म्नमी॑महे ॥ ६ ॥**

वि॒द्म । हि । त्वा॒ । ध॒न॒म्ऽज॒यम् । वाजे॑षु । द॒धृ॒षम् । क॒वे॒ । अध॑ । ते॒ । सु॒म्नम् । ई॒म॒हे॒ ॥६॥

हे ᐯकवे क्रान्तदर्शिन्निन्द्र ᐯवाजेषु युद्धेषु ᐯदधृषं शत्रूणामभिभवितारम् अत एव ᐯधनंजयम् । धनं जयतीति धनंजयः । तादृशं ᐯत्वा त्वां ᐯविद्म ᐯहि जानीमः खलु । ᐯअध अनन्तरं ᐯते तव ᐯसुम्नं धनम् ᐯईमहे याचामहे ॥ विद्म । विदेर्लटि ' विदो लटो वा ' इति मसो मादेशः । पादादित्वात् अनिघातः[4]। धनंजयम् । ' जि जये ' इत्यस्मात् धने[5] उपपदे ' संज्ञायां भृतृवृजिधारिसहितपिदमः '

---

१. ख-ग-च-ज-ण-फ-भ—इन्द्रं त्वाम् । २. च—सेनाधन । ३. ख-ग-च-ज-ण—वसो । ४. ज—अनिघातः । द्व्यचोऽतस्तिङः इति दीर्घः । ५. ज-ण—धनशब्दे ।

इति खच्प्रत्ययः । ‘ अरुर्द्विषदजन्तस्य मुम् ’ इति पूर्वपदस्य मुमागमः । चित्त्वादन्तोदात्तः । दधृषम् । ‘ जिधृषा प्रागल्भ्ये ’ इत्यस्य यङ्लुकि अभ्यासस्य रीगभावश्छान्दसः । तदन्तात् पचाद्यचि ‘ यङोऽचि च ’ इति यङो लुक् । लघूपधगुणे प्राप्ते ‘ न धातुलोपे° ’ इति तस्य प्रतिषेधः । चित्त्वादन्तोदात्तः ॥

इमिन्द्र गवाशिरं यवाशिरं च नः पिब । आगत्या वृषभिः सुतम् ॥ ७ ॥

इमम् । इन्द्र । गोऽआशिरम् । यवऽआशिरम् । च । नः । पिब ।

आऽगत्य । वृषऽभिः । सुतम् ॥ ७ ॥

हे इन्द्र गवाशिरं गव्यमिश्रणोपेतं[1] तथा यवाशिरं[2] यवमिश्रणोपेतं वृषभिः ग्रावभिः सुतम् अभिषुतं नः अस्मदीयम् इमं सोमं देवयजनम् आगत्य पिब ॥ गवाशिरं यवाशिरमित्यत्र आङ्पूर्वस्य श्रीणातेः क्विपि ‘ अपस्पृधेथामानृचुः° ’ इत्यादिनाशिर इत्यादेशः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

तुभ्येदिन्द्र स्व ओक्ये३ सोमं चोदामि पीतये । एष रारन्तु ते हृदि ॥ ८ ॥

तुभ्य । इत् । इन्द्र । स्वे । ओक्ये । सोमम् । चोदामि । पीतये ।

एषः । ररन्तु । ते । हृदि ॥ ८ ॥

हे इन्द्र तुभ्येत् तुभ्यमेव पीतये पानार्थं स्वे स्वकीये ओक्ये स्थाने जठरेऽभिषुतमिमं सोमं चोदामि प्रेरयामि । एषः पीतः सोमः ते तव हृदि हृदये ररन्तु[3] अत्यर्थं रमताम् ॥ तुभ्य । युष्मच्छब्दस्य चतुर्थ्येकवचने ‘ तुभ्यमह्यौ° ’ इति तुभ्यादेशः । ‘ सुपां सुलुक्° ’ इति सुपो लुक् । ‘ ङयि च ’ इत्याद्युदात्तः । ओक्ये । वस्वादित्वात् स्वार्थिको यत्प्रत्ययः । तित्स्वरितः । चोदामि । ‘ चुद प्रेरणे ’ । ण्यन्तस्य लटि रूपम् । ‘ बहुलमन्यत्रापि ’ इति णेर्लुक् । निघातः । ररन्तु[4]। ‘ रमु क्रीडायाम् ’ इत्यस्य यङ्लुकि लोटि सर्वविधीनां छन्दसि विकल्पितत्वात् अत्राभ्यासस्य नुमभावः । संहितायाम् ‘ अन्येषामपि° ’ इत्यभ्यासस्य दीर्घः । निघातः । हृदि । हृदयशब्दस्य ‘ पद्न्नोमास्हृत्° ’ इत्यादिना हृदादेशः । ‘ ऊडिदम्° ’ इति विभक्तेरुदात्तत्वम् ॥

त्वां सुतस्य पीतये प्रत्नमिन्द्र हवामहे । कुशिकासो अवस्यवः ॥ ९ ॥

त्वाम् । सुतस्य । पीतये । प्रत्नम् । इन्द्र । हवामहे । कुशिकासः । अवस्यवः ॥ ९ ॥

हे इन्द्र अवस्यवः त्वत्तो रक्षणमिच्छन्तः कुशिकासः कुशिकगोत्रोत्पन्ना वयं सुतस्य ग्रावभिरभिषुतस्य सोमस्य पीतये पानार्थं प्रत्नं पुरातनं त्वां हवामहे स्तुतिलक्षणाभिर्गीर्भिः

---

१. घ-ल–गव्यमिश्रणोपेतं सोमम् । २. ख-ग-च-ज-ण-न-भ-स–‘ यवाशिरं ’ नास्ति । ३. ज-ण–रारन्तु । ४. ज-ण–रारन्तु ।

आह्वयामः ॥ पीतये । ‘ स्थागापापचो भावे ’ इति क्तिन् । ‘ हिष्ठवत्सरतिशत्थान्तानाम् ’ ( फि. सू. ७ ) इत्यन्तोदात्तत्वम् । हवामहे । ह्वयतेर्लटि ‘ बहुलं छन्दसि ’ इति संप्रसारणे रूपम् । अवस्यवः । अत्र इच्छन्तीत्यर्थे सुपः क्यच् । ‘ क्याच्छन्दसि ’ इत्युप्रत्ययः । कुशिकासो अवस्यवः इत्यत्र संहितायाम् ‘ अव्यादवद्यात्° ’ (पा. सू. ६. १. ११६) इत्यादिना एङः प्रकृतिभावः ॥ ॥ ६ ॥

‘ आ याह्यर्वाङ् ’ इत्यष्टर्चं पञ्चमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । ‘ आ याह्यष्टौ ’ इत्यनुक्रमणिका । दशरात्रे चतुर्थेऽहनि स्तोमवृद्धौ माध्यंदिने सवनेऽच्छावाकशस्त्रे स्तोमाभिशंसनार्थमिदं सूक्तम् । सूत्रितं च—‘ आ याह्यर्वाङित्यष्टर्चान्यावपेरन् ’ ( आश्व. श्रौ. ७. १२ ) इति । महाव्रतेऽपि आवपनीयम्[१] ॥

**आ याह्यर्वाङुप वन्धुरेष्ठास्तवेदनु प्रदिवः सोमपेयम् ।**

**प्रिया सखाया वि मुचोप बर्हिस्त्वामिमे हव्यवाहो हवन्ते ॥ १ ॥**

आ । याहि । अर्वाङ् । उप । वन्धुरेऽस्थाः । तव । इत् । अनु । प्रऽदिवः । सोमऽपेयम् ।

प्रिया । सखाया । वि । मुच । उप । बर्हिः । त्वाम् । इमे । हव्यऽवाहः । हवन्ते ॥ १ ॥

हे इन्द्र ᵛवन्धुरेष्ठाः । वन्धुरशब्देन ईषाद्वयसंबन्धस्थानम्[२] अभिधीयते । तेन तद्विशिष्टो रथो लक्ष्यते । तस्मिन् रथे तिष्ठंस्त्वम् ᵛअर्वाङ् अस्मदभिमुखः सन् ᵛआ[३] अभिलक्ष्य[३] ᵛउप[४] ᵛयाहि[४] समीप आगच्छ । ᵛप्रदिवः प्रत्नं पूर्वक्रमागतं ᵛतवेत् तवैव संबन्धि ᵛसोमपेयं सोमपानं त्वम् ᵛअनु उद्दिश्य ᵛप्रिया तव प्रियतमौ ᵛसखाया समानख्यानावश्वौ ᵛबर्हिः ᵛउप बर्हिषः समीपे ᵛवि ᵛमुच विमुञ्च । ᵛहव्यवाहः । हव्यं वहन्तीति[५] हव्यवाहः । ᵛइमे ऋत्विजः ᵛत्वां ᵛहवन्ते सोमपानार्थमाह्वयन्ति । तस्मात् आगच्छेति भावः ॥ वन्धुरेष्ठाः । तिष्ठतेर्विच् । ‘ तत्पुरुषे कृति बहुलम् ’ इति सप्तम्या अलुक् । प्रदिवः । सकारान्तमव्ययम् । सोमपेयम् । ‘ पा पाने ’ इत्यस्य भावे ‘ अचो यत् ’ इति यत्प्रत्ययः । ‘ ईद्यति ’ इतीत्वम् । आर्धधातुकलक्षणो गुणः । ‘ यतोऽनावः ’ इत्याद्युदात्तत्वम् । समासे कृदुत्तरपदस्वरः । मुच । मुञ्चतेर्लोटि आगमानुशासनस्यानित्यत्वान्नुमभावः ॥

**आ याहि पूर्वीरति चर्षणीराँ अर्य आशिष उप नो हरिभ्याम् ।**

**इमा हि त्वा मतयः स्तोमतष्टा इन्द्र हवन्ते सख्यं जुषाणाः ॥ २ ॥**

आ । याहि । पूर्वीः । अति । चर्षणीः । आ । अर्यः । आऽशिषः । उप । नः । हरिऽभ्याम् ।

इमाः । हि । त्वा । मतयः । स्तोमऽतष्टाः । इन्द्र । हवन्ते । सख्यम् । जुषाणाः ॥ २ ॥

---

१. न–आवपनीयमिदम् । तथा पञ्चमारण्यके सूत्रं ते अन्तरेणायाह्यर्वाङ् उपवन्धुरेष्ठा इति । २. च-फ-भ–ईषाद्वयसंबद्धस्थानम् । ३. ख-ग-घ-ज-ण-त-न-प-भ-ल-स–अनु अभिलक्ष्य; च-फ–प्रदिवः द्युलोकात् । ४. घ-च-ज-ण-न–उपायाहि । ५. च-फ–वाहयन्तीति ।

हे ᵛइन्द्र ᵛपूर्वीः सर्वाः ᵛचर्षणीः प्रजाः ᵛअति ᵛआ ᵛयाहि अतिक्रम्यागच्छ । द्वितीय[1] आङ् पूरणः[1] । ᵛअर्यः अस्माकं स्वामी त्वं ᵛनः ᵛआशिषः त्वमत्रागत्य सोमं पिबेत्येवमादिका अस्माकं प्रार्थनाः ᵛहरिभ्याम् अश्वाभ्यां युक्तः सन् ᵛउप आगच्छ । किंच ते तव ᵛसख्यं ᵛजुषाणाः सेवमानाः ᵛस्तोमतष्टाः स्तोमकारिभिः स्तोतृभिः कृताः ᵛइमाः ᵛमतयः स्तुतयः ᵛहवन्ते सोमपानार्थं ᵛत्वा[2] त्वामाह्वयन्ति । ᵛहि प्रसिद्धौ । करणे कर्तृव्यापारः । काष्ठानि पचन्तीतिवत्*॥ आ । संहितायाम् 'आङोऽनुनासिकश्छन्दसि' इत्यनुनासिकः । अर्यः । 'ऋ गतौ' । 'अर्यः स्वामिवैश्ययोः' इति निपातनात् यत्प्रत्ययः । 'यतोऽनावः' इत्याद्युदात्तत्वे प्राप्ते 'अर्यस्य स्वाम्याख्या चेत्' ( फि. सू. १७ ) इत्यन्तोदात्तत्वम् । आशिषः । क्विपि 'शास इदङ्हलोः' इत्युपधाया इत्वम् । 'शासिवसिघसीनां च' इति षत्वम् । स्तोमतष्टाः । 'तक्षू त्वक्षू तनूकरणे' इत्यस्मात् कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः॥

आ नो॑ य॒ज्ञं न॑मो॒वृधं॑ स॒जोषा॒ इन्द्र॑ देव॒ हरि॑भिर्याहि॒ तूय॑म् ।

अ॒हं हि त्वा॑ म॒तिभि॒र्जोह॑वीमि घृ॒तप्र॑याः सध॒मादे॒ मधू॑नाम् ॥ ३ ॥

आ । न॒ः । य॒ज्ञम् । न॒म॒ःऽवृध॑म् । स॒ऽजोषा॑ः । इन्द्र॑ । दे॒व॒ । हरि॑ऽभिः । या॒हि॒ । तूय॑म् ।

अ॒हम् । हि । त्वा॒ । म॒तिऽभि॑ः । जोह॑वीमि । घृ॒तऽप्र॑याः । स॒ध॒ऽमादे॑ । मधू॑नाम् ॥ ३ ॥

ᵛदेव द्योतमान हे ᵛइन्द्र ᵛनः अस्माकं ᵛनमोवृधं नमसोऽन्नस्य वर्धकमिमं ᵛयज्ञं ᵛहरिभिः अश्वैः ᵛसजोषाः सहप्रीतिः[3] त्वं ᵛतूयं क्षिप्रम् ᵛआ ᵛयाहि । ᵛघृतप्रयाः । घृतसहितानि प्रयांस्यन्नरूपाणि हवींषि यस्य स तथोक्तः । तादृशः ᵛअहं ᵛमधूनां सोमानां ᵛसधमादे । सह माद्यन्ति यत्र सोमे इति सधमादः । तस्मिन् स्थाने ᵛमतिभिः स्तुतिभिः ᵛत्वा त्वां ᵛजोहवीमि ᵛहि भृशमाह्वयामि खलु ॥ जोहवीमि । यङ्लुकि 'अभ्यस्तस्य च' इति संप्रसारणम् । 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । 'यङो वा' इतीडागमः । हियोगादनिघातः । 'अभ्यस्तानामादिः' इत्याद्युदात्तः । घृतप्रयाः । 'घृ क्षरणदीप्त्योः' इत्यस्मात् 'अञ्जिघृसिभ्यः क्तः' इति क्तप्रत्ययः । बहुव्रीहौ पूर्वपदस्वरः ॥

आ च॒ त्वामे॒ता वृष॑णा॒ वहा॑तो॒ हरी॒ सखा॑या सु॒धुरा॒ स्वङ्गा॑ ।

धा॒नाव॒दिन्द्र॒ः सव॑नं जु॒षा॒णः सखा॒ सख्यु॑ः शृणव॒द्वन्द॑नानि ॥ ४ ॥

आ । च॒ । त्वाम् । ए॒ता । वृष॑णा । वहा॑तः । हरी॒ इति॑ । सखा॑या । सु॒ऽधुरा॑ । सु॒ऽअङ्गा॑ ।

धा॒नाऽव॑त् । इन्द्र॑ः । सव॑नम् । जु॒षा॒णः । सखा॑ । सख्यु॑ः । श्रृ॒ण॒व॒त् । वन्द॑नानि ॥ ४ ॥

---

१. ख-ग-च-ज-ण-त-न-भ-ल-स-'द्वितीय आङ् पूरणः' नास्ति । २. न-ल-'त्वां' नास्ति ।
* 'आह्वानकर्तृत्वं पुरुषेष्वेव न तु व्यापारभूतस्तुतौ । यथा पाककर्तृत्वं पुरुष एव न काष्ठेषु तथात्रेति' इत्ययं पाठः ज-पुस्तके टिप्पणीरूपेण दत्तः । ३. न-सहप्रीतः ।

हे इन्द्र वृषणा सेचनसमर्थौ सुधुरा शोभनया धुरान्वितौ स्वङ्गा शोभनावयवोपेतौ सखाया शोभनख्यानौ एता एतौ हरी त्वाम् आ[1] वहातः[1] यज्ञं प्रत्यागमनाय रथे त्वामावहतः। अथ[2] धानावत् भृष्टयवोपेतं सवनं जुषाणः सेवमानः सखा सखिभूतः सः इन्द्रः सख्युः स्तोतुर्मम वन्दनानि स्तोत्राणि शृणवत् च[3] शृणुयात् ॥ वहातः। वहेर्लेटयाडागमे रूपम्। 'चवायोगे प्रथमा' इति न निघातः। शृणवत्। 'श्रु श्रवणे' इत्यस्य लेटयडागमे रूपम्। निघातः॥

**कुविन्मा गोपां करसे जनस्य कुविद्राजानं मघवन्नृजीषिन् ।**
**कुविन्म ऋषिं पपिवांसं सुतस्य कुविन्मे वस्वो अमृतस्य शिक्षाः ॥ ५ ॥**

कुवित्। मा। गोपाम्। करसे। जनस्य। कुवित्। राजानम्। मघऽवन्। ऋजीषिन्।
कुवित्। मा। ऋषिम्। पपिऽवांसम्। सुतस्य। कुवित्। मे। वस्वः। अमृतस्य। शिक्षाः ॥५॥

हे इन्द्र कुवित् अपि च मा मां जनस्य गोपां गोप्तारं करसे कुरु। तथा हे मघवन् धनवन् ऋजीषिन् सोमवन् हे इन्द्र मां[4] राजानं सर्वस्य स्वामिनं कुरु। कुवित् च मा माम् ऋषिम् अतीन्द्रियार्थस्य द्रष्टारं कुरु। 'ऋषिर्दर्शनात्' (निरु. २. ११) इति यास्कः। तथा सुतस्य अभिषुतस्य सोमस्य पपिवांसं पातारं कुरु[5]। अपि च मे मह्यम् अमृतस्य क्षयरहितं वस्वः वसु शिक्षाः प्रयच्छ ॥ करसे। 'कृञ् करणे'। लेटयडागमे रूपम्। कुविद्योगादनिघातः। म ऋषिम् इत्यत्र संहितायाम् 'ऋत्यकः' इति प्रकृतिभावो ह्रस्वश्च। पपिवांसम्। 'पा पाने' इत्यस्य क्वसौ 'वस्वेकाजाद्धसाम्' इतीडागमः। प्रत्ययस्वरः। शिक्षाः। शिक्षतिर्दानकर्मा। अस्मात् लेटयाडागमे रूपम्। कुविद्योगादनिघातः। 'आगमा अनुदात्ताः' इत्याटोऽनुदात्तत्वे धातुस्वरः॥

**आ त्वा बृहन्तो हरयो युजाना अर्वागिन्द्र सधमादो वहन्तु ।**
**प्र ये द्विता दिव ऋञ्जन्त्याताः सुसंमृष्टासो वृषभस्य मूराः ॥ ६ ॥**

आ। त्वा। बृहन्तः। हरयः। युजानाः। अर्वाक्। इन्द्र। सधऽमादः। वहन्तु।
प्र। ये। द्विता। दिवः। ऋञ्जन्ति। आताः। सुऽसंमृष्टासः। वृषभस्य। मूराः ॥ ६ ॥

हे इन्द्र त्वा त्वां बृहन्तः महान्तः युजानाः रथे युज्यमानाः हरयः अश्वाः सधमादः सह मादयन्तः सन्तः अर्वाक् अस्मदभिमुखम् आ वहन्तु। वृषभस्य कामानां वर्षितुरिन्द्रस्य मूराः शत्रूणां मारकाः सुसंमृष्टासः इन्द्रस्य हस्ताभ्यां पृष्ठभागे सुष्ठु संस्पृष्टाः दिवः नभसः सकाशादागच्छन्तः ये अश्वाः आताः। आभिमुख्येन गम्यन्ते प्राणिभिस्तत्तत्कार्यं प्रति इत्याताः दिशः[6]। सर्वा दिशः द्विता। द्विधा[7] यथा भवति तथा प्र ऋञ्जन्ति प्रकर्षेण साधयन्ति॥ युजानाः। 'युजिर् योगे'। 'युजिबुधिदृशः किच्च' (उ. सू. २. २४७) इत्यानच्[8]।

---

१. ल–आवहातश्च। २. त–अथ परोक्षस्तु। ३. ख-ग-च-न-फ-भ-ल–'च' नास्ति। ४. ज–कुवित् माम्। ५. घ-ज-ण–कुवित् कुरु। ६. ख-ग-च-ज-ण-न-भ-स–'दिशः' नास्ति। ७. घ-ल–द्वैधम्; स–द्विधम्। ८. ख-ग-ज-ण-त-भ-स–इति किच्वादानच्; च–किच्वम् आनचः; न–इति।

चित्त्वादन्तोदात्तः । सधमादः । 'मदी हर्षे' इत्यस्माण्ण्यन्तात् क्विप् । कृदुत्तरपदस्वरः । द्विता । द्विशब्दात् 'संख्याया विधार्थे धा' इति धाप्रत्ययः । धकारस्य तकारश्छान्दसः । प्रत्ययस्वरः । दिवः । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् । आताः । 'अत सातत्यगमने' इत्यस्मात् कर्मणि घञ् । व्यत्ययेनाद्युदात्तः ॥

इन्द्र पिब वृषधूतस्य वृष्ण आ यं ते श्येन उशते जभार ।
यस्य मदे च्यावयसि प्र कृष्टीर्यस्य मदे अप गोत्रा ववर्थ ॥ ७ ॥

इन्द्र । पिब । वृषऽधूतस्य । वृष्णः । आ । यम् । ते । श्येनः । उशते । जभार ।
यस्य । मदे । च्यवयसि । प्र । कृष्टीः । यस्य । मदे । अप । गोत्रा । ववर्थ ॥ ७ ॥

हे "इन्द्र "वृषधूतस्य ग्रावभिरभिषुतं "वृष्णः अभिमतफलसेचकं सोमं "पिब । "श्येनः शंसनीयगतिः[1] छन्दोरूपः सुपर्णः "उशते सोमं कामयमानाय "ते तुभ्यं "यं सोमम् "आ "जभार आजहार । "यस्य सोमस्य "मदे हर्षे संजाते[2] सति "कृष्टीः । आकर्षन्ति वशीकुर्वन्ति कर्मणा[3] सर्वान्[3] इति कृष्टयो मनुष्याः । तान् सपत्नभूतान्[4] मनुष्यान् "प्र "च्यावयसि प्रकर्षेण पातयसि । "यस्य सोमस्य "मदे संजाते सति "गोत्रा । गामुदकं रश्मिभिरावृतं वर्षास्वृतुषु[5] त्रायन्ते पालयन्तीति गोत्रा मेघाः । तान् "अप "ववर्थ अपावृणोषि ॥ वृषधूतस्य । 'धूञ् कम्पने' इत्यस्य निष्ठायां 'यस्य विभाषा' इतीट्-प्रतिषेधः । 'तृतीया कर्मणि' इति पूर्वपदस्वरः । श्येनः । 'श्यैङ् गतौ' । 'शास्त्याहृञविभ्य इनच्' (उ. सू. २. २०४) इतीनच्प्रत्ययः । श्यायते इति श्येनः । चित्त्वादन्तोदात्तः । जभार । हरतेर्लिटि णलि रूपम् । 'हृग्रहोर्भश्छन्दसि' इति भकारः । यद्वृत्तयोगादनिघातः । लित्स्वरः । मदे । 'मदी हर्षे' । 'मदोऽनुपसर्गे' इत्यप्प्रत्ययः । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः । गोत्रा । 'त्रैङ् पालने' इत्यस्य 'आतोऽनुपसर्गे कः' इति कः । सुपो डादेशः । एकादेशस्वरः । ववर्थ । 'वृञ् वरणे' इत्यस्य लिटि थलि 'ऋतो भारद्वाजस्य' इतीट्प्रतिषेधः । गुणः । लित्स्वरः ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ८ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥८॥

'शुनं हुवेम' इत्येषा[6] व्याख्याता[6] ॥ ॥ ७ ॥

'अयं ते अस्तु' इति पञ्चर्चं षष्ठं सूक्तं वैश्वामित्रं बार्हतमैन्द्रम् । अत्रानुक्रमणिका— 'अयं ते पञ्च बार्हतं तु' इति । महाव्रते बार्हत्यां तृचाशीताविदं सूक्तम् (ऐ. आ. ५. २. ४) । षोडशिशस्त्रे

---

१. ख-ग-च-ण-भ—शंसनीयं गच्छतीति । २. ख-ग-च-भ—संज्ञाते । ३. ख-ग-च-ज-ण—कर्माणि सर्वाणि । ४. त-न-स—संपन्नभूतान् । ५. ख-ग-च-ज-ण-न-फ-भ—वर्षासु; त—वर्षाव्यतिरिक्तेष्वृतुषु । ६. ज-ण—इति पूर्ववत्; स—इति गतम् ।

' अयं ते अस्तु हर्यतः ' इत्याद्यस्तृचो विनियुक्तः । सूत्रितं च—' अयं ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ ' ( आश्व. श्रौ. ६. २ ) इति ॥

अयं ते अस्तु हर्यतः सोम आ हरिभिः सुतः ।
जुषाण इन्द्र हरिभिर्न आ गह्या तिष्ठ हरितं रथम् ॥ १ ॥

अयम् । ते । अस्तु । हर्यतः । सोमः । आ । हरिऽभिः । सुतः ।
जुषाणः । इन्द्र । हरिऽभिः । नः । आ । गहि । आ । तिष्ठ । हरितम् । रथम् ॥ १ ॥

हे इन्द्र हरिभिः[1] । हरन्ति सोमरसानेभिः इति हरयो ग्रावाणः । तैः आ सुतः सर्वतोऽभिषुतः हर्यतः कमनीयः जुषाणः प्रीतिविषयः अयं सोमः ते तुभ्यम् अस्तु । त्वं हरिभिः अश्वैर्युक्तं हरितं हरिद्वर्णं रथम् आ तिष्ठ अधितिष्ठ । ततः नः अस्मानभिलक्ष्य आ गहि आगच्छ । हर्यतः । ' हर्य गतिकान्त्योः ' इत्यस्मात् ' भृमृदृशि° ' इत्यादिना अतच्प्रत्ययः । चित्त्वादन्तोदात्तः । हरितम् । ' हृञ् हरणे ' । ' हृश्याभ्यामितन् ' ( उ. सू. ३. ३७३ ) इतीतन्प्रत्ययः । नित्त्वादाद्युदात्तः । रथम् । ' रमु क्रीडायाम् ' । ' हनिकुषिनी° ' इत्यादिना क्थन्प्रत्ययः । कित्त्वादनुनासिकलोपः । नित्स्वरः ॥

हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः ।
विद्वांश्चिकित्वान्हर्यश्व वर्धस इन्द्र विश्वा अभि श्रियः ॥ २ ॥

हर्यन् । उषसम् । अर्चयः । सूर्यम् । हर्यन् । अरोचयः ।
विद्वान् । चिकित्वान् । हरिऽअश्व । वर्धसे । इन्द्र । विश्वाः । अभि । श्रियः ॥ २ ॥

हे इन्द्र हर्यन् सोमं कामयमानस्त्वम् उषसम् उषःकालम् अर्चयः पूजयसि । तथा हर्यन् उदिते सूर्ये सोमं कामयमानस्त्वं सूर्यम् अरोचयः दीपयसि । हे हर्यश्व इन्द्र विद्वान् एतत्सर्वं जानानः चिकित्वान् अस्मदभिलषितफलविषयज्ञानवांस्त्वं विश्वाः सर्वाः श्रियः नः संपदः अभि वर्धसे अभिमतफलप्रदानेनाभितो वर्धयसि ॥ चिकित्वान् । ' कित ज्ञाने ' इत्यस्य क्वसौ रूपम् । प्रत्ययस्वरः । वर्धसे । ' वृधु वर्धने ' इत्यस्य अन्तर्भावितण्यर्थस्य लटि रूपम् । निघातः ॥

द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम् ।
अधारयद्धरितोर्भूरि भोजनं ययोरन्तर्हरिश्चरत् ॥ ३ ॥

द्याम् । इन्द्रः । हरिऽधायसम् । पृथिवीम् । हरिऽवर्पसम् ।
अधारयत् । हरितोः । भूरि । भोजनम् । ययोः । अन्तः । हरिः । चरत् ॥ ३ ॥

---

१. प–हरिभिः ग्रावभिः ।

सोऽयम् vइन्द्रो vहरिधायसम् । हरितो हरितवर्णा धायसो धारका रश्मयो यस्याः सा । तां vद्याम् vअधारयत् । तथा vहरिवर्पसम् ओषधिभिर्हरितवर्णां vपृथिवीम् अधारयत् । vहरितोः हरिद्वर्णयोः[1] vययोः[2] द्यावापृथिव्योर्मध्ये स्वकीययोरश्वयोः vभूरि प्रभूतं vभोजनम् । भुज्यत इति भोजनं यवसादि । लभ्यते[3] । ययोश्च[4] द्यावापृथिव्योः vअन्तः मध्ये vहरिः इन्द्रः vचरत् चरति । ते द्यावापृथिव्याविन्द्रः अधारयत्[5] इत्यर्थः ॥ हरिधायसम् । 'डुधाञ् धारणपोषणयोः' इत्यस्मात् 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । 'णित्' इत्यनुवृत्तेः आतो युक् । बहुव्रीहौ पूर्वपदस्वरः । पृथिवीम् । 'प्रथेः षिवन् संप्रसारणं च' इति षिवन्प्रत्ययः । 'षिद्गौरादिभ्यश्च' इति ङीष् । प्रत्ययस्वरेणान्तोदात्तः । हरिवर्पसम् । 'वृङ् संभक्तौ' । 'वृङ्शीङ्भ्यां रूपस्वाङ्गयोः°' इत्यसुन्प्रत्ययः पुगागमश्च । संभज्यते तदिति[6] वर्पो रूपम्[6] । बहुव्रीहौ पूर्वपदस्वरः । हरितोः । 'हृञ् हरणे' इत्यस्मात् 'हृसृरुहियुषिभ्य इतिः' ( उ. सू. १. ९७ ) इति इतिप्रत्ययः । प्रत्ययस्वरः । भोजनम् । 'भुज पालनाभ्यवहारयोः' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । लित्स्वरः । अन्तः । स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः । चरत् । चरतिर्गत्यर्थः । लेटि रूपम् । यद्वृत्तयोगादनिघातः ॥

**जज्ञानो हरितो वृषा विश्वमा भाति रोचनम् ।**
**हर्यश्वो हरितं धत्त आयुधमा वज्रं बाह्वोर्हरिम् ॥ ४ ॥**

जज्ञानः । हरितः । वृषा । विश्वम् । आ । भाति । रोचनम् ।
हरिऽअश्वः । हरितम् । धत्ते । आयुधम् । आ । वज्रम् । बाह्वोः । हरिम् ॥ ४ ॥

vवृषा कामानां वर्षकः vहरितः हरिद्वर्णोपेतः vजज्ञानः जात इन्द्रः vविश्वं सर्वं vरोचनं दीप्यमानं लोकम् vआ vभाति सर्वतः प्रकाशयति । तथा vहर्यश्वः इन्द्रः vहरितं हरिद्वर्णोपेतम् vआयुधं vधत्ते बाह्वोर्धत्ते । तथा vहरिं शत्रूणां प्राणापहारकं[7] vवज्रं vबाह्वोः[8] vआ धत्ते ॥ जज्ञानः । 'जनी प्रादुर्भावे' इत्यस्य लिटः कानच् । 'गमहन°' इत्यादिना उपधालोपः । चित्त्वादन्तोदात्तः । भाति । 'भा दीप्तौ' इत्यस्य अन्तर्भावितण्यर्थस्य लटि रूपम् । रोचनम् । 'रुच दीप्तौ' इत्यस्मात् 'अनुदात्तेतश्च हलादेः' इति युच् । चित्त्वादन्तोदात्तः । बाह्वोः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥

**इन्द्रो हर्यन्तमर्जुनं वज्रं शुक्रैरभीवृतम् ।**
**अपावृणोद्धरिभिरद्रिभिः सुतमुद्गा हरिभिराजत ॥ ५ ॥**

इन्द्रः । हर्यन्तम् । अर्जुनम् । वज्रम् । शुक्रैः । अभिऽवृतम् ।
अप । अवृणोत् । हरिऽभिः । अद्रिऽभिः । सुतम् । उत् । गाः । हरिऽभिः । आजत ॥५॥

---

१. च-न-भ-स—हरितवर्णयोः । २. ख-ग-च-ज-ण-न-भ-स—'ययोः' नास्ति । ३. न—लक्ष्यते । ४. ख-ग-त-न-भ-स—तयोश्च । ५. ख-भ—धारयति । ६. ज—हरितं वर्पो रूपं ययोरिति । ७. न-स—प्रहारकम्; ल—प्राणहारकम् । ८. ख-ग-घ-त-न-भ-ल-स—वा ।

सोऽयम् इन्द्रः हर्यन्तं कमनीयम् अर्जुनं शुभ्रम्। शुभ्रत्वमुपपादयति। शुक्रैः शुभ्रैः क्षीरादिभिः[1] अभिवृतं व्याप्तं वज्रं वेगवन्तं हरिभिः। हरन्त्येभिः सोमरसान् इति हरयः। तैः अद्रिभिः ग्रावभिः सुतम् अभिषुतं सोमम्[2] अपावृणोत् आवरणरहितमकरोत्। तथा च मन्त्रवर्णः— ' पूषा राजानमाघृणिरपगूळ्हं गुहा हितम्। अविन्दत् ' ( ऋ. सं. १. २३. १४ ) इति। तथा गाः पणिभिरपहृता गाः हरिभिः अश्वैरुपेतः स इन्द्रः उत् आजत बिलात्[3] निरगमयत्॥ अर्जुनम्। ' अर्ज षर्ज अर्जने ' इत्यस्मात् ' अर्जेर्णिलुक् च ' इत्युनन्। नित्स्वरः। अभिवृतम्। ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम्। आजत। ' अज गतिक्षेपणयोः '। लङि व्यत्ययेनात्मनेपदम्। निघातः॥ ॥ ८ ॥

' आ मन्द्रैः ' इति पञ्चर्चं सप्तमं सूक्तं वैश्वामित्रं बार्हतमैन्द्रम्। ' आ मन्द्रैः ' इत्यनुक्रमणिका। पूर्वसूक्ते ' बार्हतं तु ' इत्युक्तत्वादस्यापि बार्हतत्वम्। ' विशेषविनियोगस्तु यत्र श्रुत्या न सूत्रितः। स्मार्तं[4] तत्र विजानीयाद्दृग्विधानादिशास्त्रतः[5] '॥

**आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।**
**मा त्वा के चिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ इहि॥ १॥**

आ। मन्द्रैः। इन्द्र। हरिऽभिः। याहि। मयूररोमऽभिः।
मा। त्वा। के। चित्। नि। यमन्। विम्। न। पाशिनः। अति। धन्वऽइव। तान्। इहि॥ १॥

हे इन्द्र मन्द्रैः मादयितृभिः मयूररोमभिः मयूररोमसदृशरोमयुक्तैः हरिभिः अश्वैरुपेतस्त्वम् आ याहि यज्ञं प्रत्यागच्छ। के चित् अपि जनाः त्वा त्वां मा नि यमन् मा नियच्छन्तु। गमनप्रतिबन्धं मा कुर्वन्तु इत्यभिप्रायः। प्रतिबन्धे दृष्टान्तः। विं न। यथा पाशिनः पाशहस्ता व्याधाः विं गच्छन्तं पक्षिणं नियच्छन्ति तद्वत् मा नियच्छन्तु। किंच[6] धन्वेव। यथा पान्था धन्व मरुदेशं शीघ्रम् अति गच्छन्ति तद्वद्गमनप्रतिबन्धकानतीत्य शीघ्रम् इहि आगच्छ॥ मन्द्रैः। मदि स्तुत्यादिषु इत्यस्य ' स्फायितञ्चि॰ ' इत्यादिना रक्प्रत्ययः। इदित्त्वान्नुम्। प्रत्ययस्वरः। मयूररोमभिः। मयूररोमवद्रोमाणि येषामिति ' सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च ' (पा. सू. २. २. २४. १२ ) इति समासः उत्तरपदलोपश्च[7]। मयूरशब्दः ' मीनातेरूरन् ' (उ. सू. १. ६७) इत्यूरन्प्रत्ययान्तः। मीनाति सर्पानिति मयूरो बर्ही। नित्त्वादाद्युदात्तत्वे प्राप्ते ' मादीनाम्॰ ' ( फि. सू. ५३ ) इति सूत्रेण मध्योदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। यमन्। ' यम उपरमे ' इत्यस्य लेट्यडागमे रूपम्। इहि। ' इण् गतौ ' इत्यस्य लोटि रूपम्॥

---

१. त–दीपादिभिः। २. ख-ग-घ-च-ज-ण-न-भ-स–' सोमं ' नास्ति। ३. ख-ग-च-ज-ण-न-फ-भ-स–बलात्। ४. ख-ग-च-ज-ण-न-फ-भ–शास्त्रम्। ५. न–॰शास्त्रतः। गुरुणा प्रस्तक्ष्यमाणः स्नातकः आ मन्द्रैः इत्युपांशु ब्रूयात्। तथा गुरवे प्रस्त्रक्ष्यमाण इति खण्डे सूत्रितम्–उपांश्वा मन्द्रैरिन्द्र हरिभिरिति चेति। ६. ख-ग-च-न-भ-स–यद्वा। ७. ख-ग-न-भ-स–वा उत्तरपदलोपश्च।

वृत्रखादो वलंरुजः पुरां दर्मो अपामजः ।
स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृळ्हा चिदारुजः ॥ २ ॥

वृत्रऽखादः । वलम्ऽरुजः । पुराम् । दर्मः । अपाम् । अजः ।
स्थाता । रथस्य । हर्योः । अभिऽस्वरे । इन्द्रः । दृळ्हा । चित् । आऽरुजः ॥ २ ॥

सोयम् ᵛइन्द्रः ᵛवृत्रखादः । वृत्रं खादति हिनस्तीति वृत्रखादः । ᵛवलंरुजः । वृणोत्याकाशम् इति वलो मेघः । तस्य भञ्जकः । तथा च मन्त्रवर्णः—‘ बिभेद वलम् ’ ( ऋ. सं. ३. ३४. १० ) इति । ततः ᵛअपामजः मेघभेदनद्वारा अपां प्रेरकः ᵛपुरां शत्रुसंबन्धिनां[1] पुराणां[2] ᵛदर्मः दारकः । तथा ᵛहर्योः अश्वयोः ᵛअभिस्वरे अस्मदाभिमुख्येन प्रेरणे निमित्तभूते सति ᵛरथस्य ᵛस्थाता रथमधिष्ठाता । तथा ᵛदृळ्हा ᵛचित् दृढानामतिबलवतां शत्रूणामपि ᵛआरुजः समन्ताद्भञ्जको भवति॥ वृत्रखादः । ‘ खाद् भक्षणे ’ इत्यस्मात् कर्मण्यण् । कृदुत्तरपदस्वरः । वलंरुजः । ‘ रुजो भङ्गे ’। कर्मण्युपपदे मूलविभुजादित्वात् कप्रत्ययः । ‘ तत्पुरुषे कृति बहुलम् ’ इति द्वितीयाया अलुक् । थाथादिस्वरः । आरुजः । ‘ रुजो भङ्गे ’ इत्यस्मादिगुपधलक्षणः कः । समासे थाथादिस्वरः ॥

गम्भीराँ उदधीँरिव क्रतुं पुष्यसि गा इव ।
प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्याइवाशत ॥ ३ ॥

गम्भीरान् । उदधीन्ऽइव । क्रतुम् । पुष्यसि । गाःऽइव ।
प्र । सुऽगोपाः । यवसम् । धेनवः । यथा । ह्रदम् । कुल्याःऽइव । आशत ॥ ३ ॥

हे इन्द्र त्वं ᵛगम्भीरान् महावकाशान् ᵛउदधीन्[3] समुद्रान्[4] उदकैर्यथा पोषयसि तद्वत् ᵛक्रतुं यज्ञस्य कर्तारमिमं यजमानमभिमतफलप्रदानेन ᵛपुष्यसि पोषयसि । अत्र दृष्टान्तः। यथा ᵛसुगोपाः समीचीनो गोपालः यवसेन ᵛगाः पोषयति तद्वत् । ᵛयथा ᵛधेनवः ᵛयवसं तृणादिकं प्राप्नुवन्ति तद्वत् त्वं सोमान् प्राप्नोषि । ते च सोमाः ᵛकुल्याइव कृत्रिमसरितः ᵛह्रदं महाजलाशयं यथा प्राप्नुवन्ति तद्वत् त्वाम् ᵛप्र[5] ᵛआशत व्याप्नुवन्ति ॥ गम्भीरान् । ‘गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च ’ इत्यस्मात् ‘ गभीरगम्भीरौ ’ (उ. सू. ४. ४७५ ) इत्यनेन सूत्रेण इरच्प्रत्ययः । नुमागमोपधाह्रस्वभकाराः सर्वे निपात्यन्ते । चित्त्वादन्तोदात्तः । उदधीनिव। उदकशब्दे उपपदे दधातेरधिकरणेऽर्थे ‘ कर्मण्यधिकरणे च ’ इति किप्रत्ययः । उदकशब्दस्य ‘ पेषंवासवाहनधिषु च ’ (पा. सू. ६.३.५८) इत्युदभावः । कृत्स्वरः । इवेन विभक्त्यलोपः । पुष्यसि । ‘ पुष पुष्टौ ’ इत्यस्यान्तर्णीतण्यर्थस्य लटि रूपम् । निघातः । सुगोपाः । गोपायतेः क्विपि रूपम् । यथा । ‘ यथेति पादान्ते ’ (फि. सू. ८५ ) इति निघातः । आशत । ‘ अशू व्याप्तौ ’ इत्यस्माल्लुङि ‘ बहुलं छन्दसि ’ इति विकरणस्य लुक् । निघातः ॥

---

१. ख-ग-च-ज-ण-न-भ-स–शत्रुसंबन्धिनीनाम् । २. ख-ग-च-ज-ण-न-भ-स–‘ पुराणां ’ नास्ति । ३. घ–उदधीनिव । ४. ज-ण–समुद्रानिव । ५. न-ल-स–‘ प्र ’ नास्ति ।

आ नस्तुजं रयिं भरांशं न प्रतिजानते ।
वृक्षं पक्वं फलमङ्कीव धूनुहीन्द्र संपारणं वसु ॥ ४ ॥

आ । नः । तुजम् । रयिम् । भर । अंशम् । न । प्रतिऽजानते ।
वृक्षम् । पक्वम् । फलम् । अङ्कीऽइव । धूनुहि । इन्द्र । समऽपारणम् । वसु ॥ ४ ॥

हे इन्द्र नः अस्माकं तुजं शत्रूणां बाधकं रयिं धनेनोपलक्षितं पुत्रम् आ भर संपादय । तत्र दृष्टान्तः अंशं न । यथा पिता प्रतिजानते व्यवहारज्ञाय पुत्राय स्वकीयस्य धनस्य भागं ददाति तद्वत् । किंच पक्वं फलं प्रति वृक्षम् अङ्कीव अङ्कुशी यथा धूनोति तथा त्वं संपारणम् अस्मदिच्छायाः सम्यक् पूरकं वसु धनं धूनुहि चालय । प्रयच्छेत्यर्थः ॥ प्रतिजानते । 'ज्ञा अवबोधने' इत्यस्य शतरि रूपम् । प्रादिसमासः । 'शतुरनुमः॰' इति विभक्तेरुदात्तत्वम् । धूनुहि । 'धूञ् कम्पने' इत्यस्य लोटि रूपम् । संपारणम् । 'पॄ पालनपूरणयोः' इत्यस्य ण्यन्तस्य करणे ल्युट् । समासे कृत्स्वरः ॥

स्वयुरिन्द्र स्वराळसि स्मद्दिष्टिः स्वयशस्तरः ।
स वावृधान ओजसा पुरुष्टुत भवा नः सुश्रवस्तमः ॥ ५ ॥

स्वऽयुः । इन्द्र । स्वऽराट् । असि । स्मत्ऽदिष्टिः । स्वयशःऽतरः ।
सः । ववृधानः । ओजसा । पुरुऽस्तुत । भव । नः । सुश्रवःऽतमः ॥ ५ ॥

हे इन्द्र स्वयुः धनवानसि । तथा स्वराट् स्वर्गस्य राजा असि । स्मद्दिष्टिः भद्रवाक्यः स्वयशस्तरः अतिशयेन प्रभूतकीर्तिरसि[1] । हे पुरुष्टुत बहुभिराहूतेन्द्र सः त्वम् ओजसा बलेन वावृधानः वर्धमानः सन् नः अस्मदर्थं[1] सुश्रवस्तमः अतिशयेन शोभनान्नोपेतः[2] भव ॥ स्वयुः । स्वशब्दात् मत्वर्थीयो युः । स्वराट् । 'राजृ दीप्तौ' । क्विप् । व्रश्चादिना षत्वम् । स्मद्दिष्टिः । स्मत् सुमदित्यर्थे । उकारलोपश्छान्दसः । बहुव्रीहौ पूर्वपदस्वरः । पुरुष्टुत । संहितायां 'स्तुतस्तोमयोश्छन्दसि' इति षत्वम् । भव । भवतेर्लोटि रूपम् । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । सुश्रवस्तमः । श्रवःशब्दोऽसुन्नन्तः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छंदसि' इत्युत्तरपदाद्युदात्तत्वम् । तदन्तादतिशायने तमप् । तस्य पित्वादनुदात्तत्वे बहुव्रीहिस्वरः ॥ ॥ ९ ॥

'युध्मस्य ते' इति पञ्चर्चमष्टमं सूक्तं वैश्वामित्रमैन्द्रम् । 'युध्मस्य' इत्यनुक्रमणिका । दशरात्रे चतुर्थेऽहनि निष्केवल्ये 'युध्मस्य ते' इति सूक्तं निविद्धानम् । सूत्रितं च—'कुह श्रुत इन्द्रो युध्मस्य त इति निष्केवल्यम्' ( आश्व. श्रौ. ७.११ ) इति । ऋषभनाम्नि[3] एकाहेऽपि निष्केवल्य इदं सूक्तं निविद्धानम् । सूत्रितं च—'युध्मस्य त इति मध्यंदिनः' ( आश्व. श्रौ. ९. ७ ) इति ॥

---

१. च-फ-धनरूपयशस्वान् स पूर्वोक्तः ओजसा बलेन वावृधानः पुनःपुनर्वर्धनशीलः पुरुष्टुत बहुभिः स्तुत नोऽस्माकम् । २. च-शोभनान्नप्रदाता । ३. ख-ग-च-ज-ण-स-ऋषभस्य ।

**युध्मस्य ते वृषभस्य स्वराज उग्रस्य यूनः स्थविरस्य घृष्वेः ।**
**अजूर्यतो वज्रिणो वीर्याणीन्द्र श्रुतस्य महतो महानि ॥ १ ॥**

युध्मस्य । ते । वृषभस्य । स्वऽराजः । उग्रस्य । यूनः । स्थविरस्य । घृष्वेः ।
अजूर्यतः । वज्रिणः । वीर्याणि । इन्द्र । श्रुतस्य । महतः । महानि ॥ १ ॥

हे इन्द्र युध्मस्य योधनशीलस्य वृषभस्य अभिमतफलसेचकस्य स्वराजः धनाधिपतेः उग्रस्य समर्थस्य यूनः नित्यतरुणस्य स्थविरस्य चिरंतनस्य घृष्वेः शत्रूणां संघर्षकस्य अजर्यतः जरारहितस्य वज्रिणः श्रुतस्य त्रिषु लोकेषु प्रसिद्धस्य अत एव महतः ते तव वीर्याणि महानि महान्ति खलु ॥ युध्मस्य । 'युध संप्रहारे'। 'इषुयुधीन्धिदसि°' इत्यादिना मक्प्रत्ययः । यूनः । यौतेः 'कनिन्युवृषि°' इत्यादिना कनिन् । 'श्वयुवमघोनामतद्धिते' इति संप्रसारणम् । नित्स्वरः । स्थविरस्य । 'अजिरशिशिरशिथिल°' इत्यादिना किरन्प्रत्ययान्तो निपातितः । घृष्वेः । 'घृषु संघर्षे'। 'कृविघृष्विच्छवि°' इत्यादिना क्विन्प्रत्ययान्तो निपात्यते । नित्त्वादाद्युदात्तः ॥

**महाँ असि महिष वृष्ण्येभिर्धनस्पृदुग्र सहमानो अन्यान् ।**
**एको विश्वस्य भुवनस्य राजा स योधया च क्षयया च जनान् ॥ २ ॥**

महान् । असि । महिष । वृष्ण्येभिः । धनऽस्पृत् । उग्र । सहमानः । अन्यान् ।
एकः । विश्वस्य । भुवनस्य । राजा । सः । योधय । च । क्षयय । च । जनान् ॥ २ ॥

हे महिष महनीय[1] उग्र इन्द्र त्वं महानसि । धनस्पृत् धनानि दानभोगत्यागैः पारं नयंस्त्वं वृष्ण्येभिः वीर्यैः अन्यान् शत्रून् सहमानः अभिभवन् वर्तसे । तथा विश्वस्य सर्वस्य भुवनस्य एकः असहायः राजा सः त्वं योधय च सपत्नान् प्रहर । जनान् क्षयय च निवासय । बाधकान् हत्वा साधुजनान् स्वस्थाने स्थापयेत्यभिप्रायः ॥ महिष । 'मह पूजायाम्'। 'अविमह्योष्टिषच्' (उ. सू. १. ४५) इति टिषच्प्रत्ययः । आमन्त्रितत्वान्निघातः । वृष्ण्येभिः । वृष्णि भवानि । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तः । योधय । 'युध संप्रहारे' इत्यस्य ण्यन्तस्य लोटि रूपम् । 'चादिषु च' इति न[2] निघातः[2] । णिस्स्वरः । क्षयय । 'क्षि निवासगत्योः' इत्यस्य ण्यन्तस्य लोटि रूपम् । अत्रापि पूर्ववदनिघातः ॥

**प्र मात्राभी रिरिचे रोचमानः प्र देवेभिर्विश्वतो अप्रतीतः ।**
**प्र मज्मना दिव इन्द्रः पृथिव्याः प्रोरोर्महो अन्तरिक्षादृजीषी ॥ ३ ॥**

प्र । मात्राभिः । रिरिचे । रोचमानः । प्र । देवेभिः । विश्वतः । अप्रतिऽइतः ।
प्र । मज्मना । दिवः । इन्द्रः । पृथिव्याः । प्र । उरोः । महः । अन्तरिक्षात् । ऋजीषी ॥ ३ ॥

---

१. ज-ण—मंहनीय ।　२. ज-ण—अनिघातः; न-स—त्वनिघातः ।

ᵛरोचमानः दीप्यमानः ᵛविश्वतः सर्वैः[1] ᵛअप्रतीतः एतावदस्य सामर्थ्यमित्यपरिच्छिद्यमानः ᵛऋजीषी सोमवान् ᵛइन्द्रः ᵛमात्राभिः। मीयन्ते परिच्छिद्यन्ते इति मात्राः शिलोच्चयाः। तेभ्योऽपि ᵛप्र ᵛरिरिचे प्रकर्षेण महत्तयातिरिक्तोऽभूत्। तथा ᵛदेवेभिः देवेभ्योऽपि ᵛमज्मना। मज्जयति शत्रून् दुःखसागरे इति मज्म बलम्। तेन बलेन ᵛप्र रिरिचे। तथा ᵛदिवः ᵛपृथिव्याः द्यावापृथिवीभ्यां च[2] ᵛप्र रिरिचे। तथा ᵛउरोः विस्तीर्णात् ᵛमहः महतः ᵛअन्तरिक्षात् अपि ᵛप्र रिरिचे॥ मात्राभिः। 'माङ् माने शब्दे च' इत्यस्मात् 'हुयामाश्रुभसिभ्यस्त्रन्' इति त्रन्प्रत्ययः। नित्त्वादाद्युदात्तः। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति संहितायां दीर्घः। रोचमानः। 'रुच दीप्तौ' इत्यस्मात् शानचि रूपम्। तस्य लसार्वधातुकस्वरे धातुस्वरः। अप्रतीतः। 'इण् गतौ'। कर्मणि क्तः। प्रादिसमासः। नञा समासे तस्य स्वरः। मज्मना। 'टुमस्जो शुद्धौ'। औणादिको मनिच्प्रत्ययः। 'झलां जश् झशि' इति जश्त्वम्। चित्त्वादन्तोदात्तः। पृथिव्याः। 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम्॥

उरुं गभीरं जनुषाभ्युग्रं विश्वव्यचसमवतं मतीनाम्।
इन्द्रं सोमासः प्रदिवि सुतासः समुद्रं न स्रवत आ विशन्ति ॥ ४ ॥
उरुम्। गभीरम्। जनुषा। अभि। उग्रम्। विश्वऽव्यचसम्। अवतम्। मतीनाम्।
इन्द्रम्। सोमासः। प्रऽदिवि। सुतासः। समुद्रम्। न। स्रवतः। आ। विशन्ति ॥ ४ ॥

ᵛउरुं महान्तम् अत एव ᵛगभीरं महावकाशं ᵛजनुषा जन्मना स्वभावत एव ᵛउग्रं शत्रूणां भयंकरम्। गभीरत्वमेवोच्यते। ᵛविश्वव्यचसं विश्वव्याप्तं ᵛमतीनां स्तुतीनां[3] स्तोतॄणां वा[3] ᵛअवतं रक्षकं तादृशम् ᵛइन्द्रं ᵛप्रदिवि पूर्वेष्वहःसु ᵛसुतासः ग्रावभिरभिषुताः ᵛसोमासः सोमाः ᵛअभि आभिमुख्येन ᵛआ ᵛविशन्ति। तत्र दृष्टान्तः ᵛसमुद्रं ᵛन। यथा ᵛस्रवतः स्रवन्त्यो नद्यः समुद्रम् आविशन्ति तद्वत्॥ जनुषा। 'जनी प्रादुर्भावे' इत्यस्मात् 'जनेरुसिः' इत्युसिप्रत्ययः। विश्वव्यचसम्। 'व्यच व्याजीकरणे' इत्यस्मादसुन्। 'व्यचेः कुटादित्वमनसीति वक्तव्यम्' इत्यत्र 'अनसि' इति पर्युदासात् ङित्त्वाभावः। विश्वव्यचा इतीन्द्रस्य नाम। 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदस्यान्तोदात्तत्वम्। अवतम्। अव रक्षणादिषु। औणादिकोऽतच्प्रत्ययः। चित्त्वादन्तोदात्तः॥

यं सोममिन्द्र पृथिवीद्यावा गर्भं न माता बिभृतस्त्वाया।
तं ते हिन्वन्ति तमु ते मृजन्त्यध्वर्यवो वृषभ पातवा उ ॥ ५ ॥
यम्। सोमम्। इन्द्र। पृथिवीद्यावा। गर्भम्। न। माता। बिभृतः। त्वाऽया।
तम्। ते। हिन्वन्ति। तम्। ऊँ इति। ते। मृजन्ति। अध्वर्यवः। वृषभ। पातवै। ऊँ इति ॥५॥

हे[4] ᵛइन्द्र ᵛपृथिवीद्यावा द्यावापृथिव्यौ ᵛत्वाया त्वत्कामनया ᵛयं ᵛसोमं ᵛबिभृतः अन्तर्धारयतः। अत्र दृष्टान्तः ᵛगर्भं ᵛन। यथा ᵛमाता गर्भं बिभर्ति तद्वत्। हे ᵛवृषभ कामानां

१. त–सर्वैः देवैः। २. ख-ग-च–च यः; न-स–यः। ३. ख-ग-ज-ण-न-स–स्तोतॄणां वा; घ-प–स्तोत्राणाम्; च-फ–स्तोतॄणाम्। ४. ज-ण–'हे' नास्ति।

वर्षक हे इन्द्र ^अध्वर्यवः अध्वरं यजमानायेच्छन्तः ^ते त्वदर्थं ^तं सोमं ^हिन्वन्ति प्रेरयन्ति । किंच ^ते तव ^पातवै पानाय ^तं सोमं ^मृजन्ति शोधयन्ति । ^उ प्रसिद्धौ ॥ पृथिवीद्यावा । 'दिवो द्यावा' इति द्यावादेशः । आद्युदात्तः । 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु' इत्यत्र पर्युदासात् 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरः । कृतसमासस्य विपर्यासश्छान्दसः । बिभृतः । 'डुभृञ् धारणपोषणयोः' इत्यस्माल्लटि 'भृञामित्' इत्यभ्यासस्येत्वम् । यद्वृत्तयोगादनिघातः । अजादिप्रत्ययपरत्वाभावादत्र 'अभ्यस्तानामादिः' इति स्वरो न भवति । प्रत्ययस्वरः । त्वाया । त्वामिच्छतीत्यर्थे 'सुप आत्मनः क्यच्' । पूर्वपददकारस्याकारश्छान्दसः । 'अ प्रत्ययात्' इति भावेऽप्रत्ययः । 'सुपां सुलुक्' इति तृतीयायाः सवर्णदीर्घः । एकादेशस्वरः । अध्वर्यवः । अध्वरमिच्छन्तः । सुपः क्यच् । 'कव्यध्वरपृतनस्यर्चि लोपः' इत्यकारलोपः । 'क्याच्छन्दसि' इत्युप्रत्ययः । प्रत्ययस्वरः । पातवै । 'पा पाने' । तुमर्थे[1] तवैप्रत्ययः । 'अन्तश्च तवै युगपत्' इति धात्वन्तस्य प्रत्ययस्य चोदात्तत्वम् । 'उञः' इति प्रगृह्यसंज्ञा ॥ ॥ १० ॥

'मरुत्वान्' इति पञ्चर्चं नवमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । 'मरुत्वान्' इत्यनुक्रमणिका[2] । दशरात्रे चतुर्थेऽहनि मरुत्वतीयशस्त्रे[3] एतत् सूक्तं[4] निविद्धानीयम्[5] । सूत्रितं च—'श्रुधी हवमिन्द्र मरुत्वाँ इन्द्रेति मरुत्वतीयम्' (आश्व. श्रौ. ७. ११) इति । ऋषभनाम्न्येकाहेऽपि मरुत्वतीयशस्त्रे एतन्निविद्धानम् । सूत्रितं च—'मरुत्वाँ इन्द्र युध्मस्य त इति मध्यंदिनः' (आश्व. श्रौ. ९. ७) इति ॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥ १ ॥

मरुत्वान् । इन्द्र । वृषभः । रणाय । पिब । सोमम् । अनुऽस्वधम् । मदाय ।
आ । सिञ्चस्व । जठरे । मध्वः । ऊर्मिम् । त्वम् । राजा । असि । प्रऽदिवः । सुतानाम् ॥ १ ॥

हे ^इन्द्र यः ^वृषभः अपां वर्षिता ^मरुत्वान् । मरुतो देवविशः तद्वान्[6] । स त्वम् ^अनुष्वधं स्वधया सवनीयपुरोडाशादिरूपेण[7] अन्नेनानुगतं ^सोमं ^रणाय रमणीयसंग्रामार्थं[8] ^मदाय तं सोमं ^पिब । किंच ^मध्वः मदकरस्य सोमस्य ^ऊर्मिं संघातं बहुरसं ^जठरे । जग्धमन्नमस्मिंस्तिष्ठतीति जठरमुदरम् । तस्मिन्नुदरे ^आ ^सिञ्चस्व सर्वतः क्षारय । यतः ^त्वं ^प्रदिवः पूर्वेष्वहःसु ^सुतानाम् अभिषुतानां सोमानां ^राजासि ईशितासि । न केवलमधुनातनानामिति भावः । उक्तमर्थं यास्को ब्रवीति—'मरुत्वानिन्द्र मरुद्भिस्तद्वान् वृषभो वर्षितापां रणाय रमणीयाय संग्रामाय पिब सोममनुष्वधमन्वन्नं मदाय मदनीयाय जैत्रायासिञ्चस्व जठरे मधुन ऊर्मिम् । मधु सोममित्यौपमिकं

---

१. त–इत्यस्मात्तुमर्थे । २. न–इत्यनुक्रमणिका । दशमेऽहनि मरुत्वतीयशस्त्रे इदं सूक्तम् । तथा च 'दशमेऽहनि' इति खण्डे सूत्रं–मरुत्वानिन्द्रेति मरुत्वतीयमिति । महामते मरुत्वतीयशस्त्रे एतत्सूक्तम् । पञ्चमारण्यके कया शुभा सवयसः सनीळा मरुत्वानिन्द्र वृषभो रणायेति सूत्रितत्वात् । ३. ग-च–मरुत्वतीयस्य तृतीयशस्त्रे; ज-ण–मरुत्वतीयाख्यतृतीयशस्त्रे । ४. ख-ग-च-ज-ण-स–'सूक्तं' नास्ति । ५. ख-ग-च-ज-ण-त-स–निविद्धानम् । ६. ख-ग–तद्वन् । ७. त–हवनीय° । ८. ख-ग-च-फ-स–रमणीयाय संग्रामार्थम्; ज-ण–रमणीयाय संग्रामाय संग्रामार्थम् ।

माद्यते । इदमपीतरन्मध्वेतस्मादेव । त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम् ’ ( निरु. ४. ८ ) इति ॥ अनुस्वधम् । स्वन्नमनुगम्य वर्तमानम् । ‘ अत्यादयः क्रान्ताद्यर्थे द्वितीयया ’ इति समासः । संहितायां ‘ पूर्वपदात् ’ (पा. सू. ८. ३. १०६ ) इति षत्वम् । निरुदकादित्वादन्तोदात्तत्वम् । ऊर्मिम् । ‘ अर्तेरूच[1] ’ इति मिप्रत्ययः । धातोः ऊ इत्यादेशो रपरः । प्रत्ययस्वरः ॥

‘ सजोषा इन्द्र ’ इति मरुत्वतीयग्रहस्य याज्या । सूत्रितं च— ‘ सजोषा इन्द्र सगणो मरुद्भिरिति भक्षयित्वैतत्पात्रम् ’ ( आश्व. श्रौ. ५. १४ ) इति ॥

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ।
जहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ २ ॥

सऽजोषाः । इन्द्र । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् ।
जहि । शत्रून् । अप । मृधः । नुदस्व । अथ । अभयम् । कृणुहि । विश्वतः । नः ॥ २ ॥

हे शूर बलवन् हे इन्द्र सजोषाः संगतो देवैः मरुद्भिः सगणः मरुद्भिरेव[2] वृत्रहा वृत्रस्य हन्ता विद्वान् कर्मविषयाभिज्ञस्त्वं सोमं पिब । ततो नः शत्रून् जहि । मृधः हिंसकान् शत्रून् अप नुदस्व । यद्वा मृधः । हिंस्यन्तेऽत्र प्राणिन इति मृधः संग्रामाः[3] । तत्र वर्तमानान् शत्रूनपनुदस्व । अथ अनन्तरं नः अस्माकं विश्वतः सर्वतः अभयं कृणुहि कुरु । सर्वतो भयरहितानस्मान् कुर्वित्यर्थः ॥ वृत्रहा । हन्तेः ‘ ब्रह्मभ्रूणवृत्रेषु क्विप् ’ । अभयम् । ‘ ञिभी भये ’ इत्यस्मात् एरच् । नञा[4] समासे[4] तस्य स्वरः । विश्वतः । पञ्चम्यास्तसिल् । लित्स्वरः ॥

उत ऋतुभिर्ऋतुपाः पाहि सोममिन्द्र देवेभिः सखिभिः सुतं नः ।
याँ आभजो मरुतो ये त्वान्वहन्वृत्रमदधुस्तुभ्यमोजः ॥ ३ ॥

उत । ऋतुऽभिः । ऋतुऽपाः । पाहि । सोमम् । इन्द्र । देवेभिः । सखिऽभिः । सुतम् । नः ।
यान् । आ । अभजः । मरुतः । ये । त्वा । अनु । अहन् । वृत्रम् । अदधुः । तुभ्यम् । ओजः ॥ ३ ॥

उत अपि च हे ऋतुपाः कालनिर्वाहकतया ऋतूनां पातः । ऋतुषु सोमं पिबतीति वा ऋतुपाः । यद्वा ऋतुभिः[5] मरुद्भिः सह सोमं पिबतीति ऋतुपाः । तादृश हे इन्द्र सखिभिः समानख्यानैः ऋतुभिः मरुद्भिः देवेभिः देवैः सहितस्त्वं नः संबन्धिनं[6] सुतम् अभिषुतं सोमं पाहि पिब । किंच[7] यान् मरुतः आभजः युद्धसहायार्थमसेवथाः ये च मरुतः त्वा त्वां युद्धे[8] स्वामिनम् अनु अभजन्त । ततस्त्वं वृत्रम् अहन् हतवानसि । ते मरुतः तुभ्यं त्वदर्थम् ओजः युद्धे शत्रु-

---

१. ख-न-ल-स–अर्तेरू च । २. ख-ग-घ-च-ज-ण-न-प-फ-ल-स–‘ मरुद्भिरेव ’ नास्ति । ३. ख-ग-च-ज-ण-न-स–संग्रामः । ४. ख-ग-च-ज-ण-न-स–नञ्समासे । ५. घ-ज-ण–ऋतुभिः निर्वाहकैः । ६. ज–सवने । ७. घ-ज-ण–किंच त्वम् । ८. ख-ग-ज-ण-त-न–युधि ।

हननादिरूपं पराक्रमम् ^अदधुः अकुर्वन् ॥ अभजः । ' भज सेवायाम् ' इत्यस्य लङि रूपम् । यद्वृत्त-योगादनिघातः । अहन् । ' हन हिंसागत्योः ' इत्यस्य लङि सिपो हल्ङ्यादिना लोपः । पादादित्वात् अनिघातः । अदधुः । दधातेर्लङि झेः ' सिजभ्यस्त° ' इति जुस् । वाक्यभेदादनिघातः ॥

मरुत्वतीयशस्त्रे याज्या ' ये त्वाहिहत्ये ' इत्येषा । सूत्रितं च—' ये त्वाहिहत्ये मघवन्नवर्धन्निति याज्या ' ( आश्व. श्रौ. ५. १४ ) इति ॥

ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये गविष्टौ ।

ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिः ॥ ४ ॥

ये । त्वा । अहिऽहत्ये । मघऽवन् । अवर्धन् । ये । शाम्बरे । हरिऽवः । ये । गोऽइष्टौ ।

ये । त्वा । नूनम् । अनुऽमदन्ति । विप्राः । पिब । इन्द्र । सोमम् । सऽगणः । मरुत्ऽभिः ॥४॥

हे ^मघवन् धनवन् ^इन्द्र ^ये मरुतः ^अहिहत्ये वृत्रहननरूपे कर्मणि ^त्वा त्वाम् ^अवर्धन्[1] । ' प्रहर भगवो जहि वीरयस्व ' इति बलदानेनावीवृधन् । हे ^हरिवः अश्ववन्निन्द्र ^ये च ^शाम्बरे शम्बरवधसंबन्धिनि युद्धे त्वामवीवृधन् । इन्द्रः शम्बरमवधीदित्यस्मिन्नर्थे मन्त्रवर्णः—' यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् । ओजायमानं यो अहिं जघान ' ( ऋ. सं. २. १२. ११ ) इति । तथा ^ये मरुतः ^गविष्टौ पणिनामकैरसुरैः सह गवार्थे युद्धे च त्वामवीवृधन् । ^विप्राः मेधाविनः ^ये च मरुतः ^नूनम् इदानीं त्वाम् ^अनुमदन्ति मादयन्ति तादृशैस्तैः ^मरुद्भिः ^सगणः सन् इमं ^सोमं ^पिब ॥ अहिहत्ये । हन्तेर्भावे ' हनस्तच ' इति क्यप् । कृदुत्तरपदस्वरः । अवर्धन् । ' वृधु वृद्धौ ' इत्यस्य ण्यन्तस्य लङि रूपम् । ' छन्दस्युभयथा ' इति झेरार्धधातुकत्वात् णेर्लोपः । यद्वृत्तयोगादनिघातः । शाम्बरे । शम्बरस्येदमित्यर्थे ' तस्येदम् ' इत्यण्प्रत्ययः । गविष्टौ । ' इषु इच्छायाम् ' । भावे क्तिन् । बहुव्रीहौ पूर्वपदस्वरः । अनुमदन्ति । मदि स्तुत्यादिषु इत्यस्य लटि व्यत्ययेन परस्मैपदम् । आगमानुशासनस्यानित्यत्वान्नुमभावः । झेर्लसार्वधातुकस्वरे कृते धातुस्वरः । ' तिङि चोदात्तवति ' इति गतेर्निघातः ॥

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।

विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥ ५ ॥

मरुत्वन्तम् । वृषभम् । ववृधानम् । अकवऽअरिम् । दिव्यम् । शासम् । इन्द्रम् ।

विश्वऽसहम् । अवसे । नूतनाय । उग्रम् । सहःऽदाम् । इह । तम् । हुवेम ॥ ५ ॥

हे इन्द्र ^मरुत्वन्तं मरुद्भिस्तद्वन्तं ^वृषभं मेघभेदनद्वारा अपां वर्षकं ^ववृधानं वृत्रहननादिकर्मसु उत्साहेन वर्धमानम् ^अकवारिं प्रभूतशत्रुकं[2] यद्वा अकुत्सितारिम् । तथा च मन्त्रः—' स्वरिरमत्रो

---

१. घ-त-ल–अवर्धयन्; न–अवर्धन् अवर्धयन् । २. ख-ग-घ-च-ज-ण-प-फ-भ-ल–प्रभूतशब्दम् ।

ववक्षे रणाय' (ऋ. सं. १. ६१. ९) इति। ᵛदिव्यं दिवि स्वर्गलोके वर्तमानम्। ᵛशासं हितोपदेशाहितपरिहाराभ्यां शासितारं ᵛविश्वासाहं विश्वस्य प्रतिपक्षस्य सर्वस्याभिभवितारम् ᵛउग्रं शत्रुषु[1] उद्गूर्णं ᵛसहोदां युद्धसहकारिणां मरुतां बलप्रदं ᵛतं तादृशसामर्थ्योपेतम् ᵛइन्द्रं ᵛनूतनाय नवतराय ᵛअवसे रक्षणाय ᵛइह कर्मणि ᵛहुवेम त्वामाह्वयेम ॥ नूतनाय। नवशब्दस्य नू इत्यादेशः। तप्तनखाश्च प्रत्यया वक्तव्याः इति तनप्प्रत्ययः ॥ ॥ ११ ॥

'सद्यो ह' इति पञ्चर्चं दशमं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम्। 'सद्यो ह' इत्यनुक्रमणिका। अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्रे 'सद्यो ह जातः' इत्येतत्सूक्तम्। सूत्रितं च—'सद्यो ह जात एवा त्वामिन्द्रः' (आश्व. श्रौ. ५. १६) इति। चातुर्विंशिकेऽप्यहनि मैत्रावरुणशस्त्रेऽहरहः-शस्यसंज्ञकमेतत्सूक्तम्। सूत्रितं च—'सद्यो ह जात इत्यहरहःशस्यं मैत्रावरुणः' (आश्व. श्रौ. ७. ४) इति। अहर्गणे द्वितीयादिष्वहःसु माध्यंदिनसवनेऽस्मिन् शस्त्रे एतत्सूक्तम्। 'अहरहःशस्यानीति होत्रका द्वितीयादिष्वेव' (आश्व. श्रौ. ७. १) इति सूत्रितम्। साद्यस्क्रे एकाहे मरुत्वतीये शस्त्रे 'सद्यो ह जातः' इत्याद्या सूक्तमुखीया। सूत्रितं च—'सद्यो ह जातो वृषभः कनीनस्त्वं सद्यो अपिबो जात इन्द्र' (आश्व. श्रौ. ९. ५) इति ॥

सद्यो ह जातो वृषभः कनीनः प्रभर्तुमावदन्धसः सुतस्य।
साधोः पिब प्रतिकामं यथा ते रसाशिरः प्रथमं सोम्यस्य ॥ १ ॥

सद्यः। ह। जातः। वृषभः। कनीनः। प्रऽभर्तुम्। आवत्। अन्धसः। सुतस्य।
साधोः। पिब। प्रतिऽकामम्। यथा। ते। रसऽआशिरः। प्रथमम्। सोम्यस्य ॥ १ ॥

ᵛवृषभः वृष्टिद्वारा अपां वर्षिता ᵛसद्यः तदानीमेव ᵛजातः उत्पन्नः ᵛकनीनः कमनीयः इन्द्रः ᵛसुतस्य अभिषुतस्य ᵛअन्धसः हविर्लक्षणस्य अन्नस्य[2] सोमस्य ᵛप्रभर्तुं प्रकर्षेण भर्तारं[3] संग्रहीतारं यजमानम् ᵛआवत् रक्षतु[4]। ᵛह प्रसिद्धौ। किंच तादृशस्त्वं ᵛप्रतिकामं कामे कामे सोमपानेच्छायां[5] सत्यां ᵛते तव ᵛयथा कामस्य पूर्तिर्भवति तथा ᵛसाधोः रसात्मना संसिद्धं ᵛरसाशिरः गोपयोमिश्रणोपेतं ᵛसोम्यस्य सोममयं रसं ᵛप्रथमं सर्वेभ्यो देवेभ्यः पुरस्तात् ᵛपिब ॥ प्रतिकामम्। कामं कामं प्रति[6]। वीप्सायामव्ययीभावः। समासस्वरः। यथा। अपादान्तत्वादेव लित्स्वरः। रसाशिरः। आङ्-पूर्वात् श्रीणातेः क्विपि 'अपस्पृधेथाम्°' इत्यादिना आशिर[7] इत्यादेशः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। सोम्यस्य। सोमशब्दात् मयडर्थे 'मये च' इति यप्रत्ययः ॥

---

१. ज-ण—शत्रुपक्षेषु। २. ख-ग-घ-च-ज-ण-न-फ-भ-स—'अन्नस्य' नास्ति। ३. ख-ग-ज-ण-त-भ-स—भर्तारं तम्। ४. च—अरक्षत्। ५. ख-ग-च-त-न-फ-भ-स—सोमपाने त्वरायाम्। ६. च-ज-ण—प्रति इति। ७. ल—आशिर्।

यज्जायथास्तदहरस्य कामेंऽशोः पीयूषमपिबो गिरिष्ठाम् ।
तं ते माता परि योषा जनित्री महः पितुर्दम आसिञ्चदग्रे ॥ २ ॥

यत् । जायथाः । तत् । अहः । अस्य । कामे । अंशोः । पीयूषम् । अपिबः । गिरिऽस्थाम् ।
तम् । ते । माता । परि । योषा । जनित्री । महः । पितुः । दमे । आ । असिञ्चत् । अग्रे ॥ २ ॥

हे इन्द्र त्वं यत् यस्मिन्नहनि जायथाः अजायथाः तदहः[1] तस्मिन्नेवाहनि अस्य सोमस्य कामे पिपासायां सत्यां गिरिष्ठां गिरिस्थां पर्वतस्य[2] उच्चस्थाने[3] वर्तमानम् अंशोः सोमलताखण्डविशिष्टस्य ऋजीषस्य पीयूषम् अभिनवं[4] रसम् अपिबः पीतवानसि । उत्पत्तिक्षणे एव सोमपाने कारणं दर्शयति । ते तव जनित्री माता योषा युवतिरदितिः महः महतः पितुः जनकस्य कश्यपस्य दमे सूतिकागृहे अग्रे स्तन्यदानात् प्राक् तं तादृशं सोमं परि आसिञ्चत् तवास्ये परितोऽक्षारयत् ॥ जायथाः । ‘ जनी प्रादुर्भावे ’ इत्यस्य लङि[5] ‘ बहुलं छन्दसि ’ इत्यडभावः । यद्वृत्तयोगादनिघातः । जनित्री । ‘ जनिता मन्त्रे ’ इति निपातनात् णेर्लोपः ॥

उपस्थाय मातरमन्नमैट्ट तिग्ममपश्यदभि सोममूधः ।
प्रयावयन्नचरद्गृत्सो अन्यान्महानि चक्रे पुरुधप्रतीकः ॥ ३ ॥

उपऽस्थाय । मातरम् । अन्नम् । ऐट्ट । तिग्मम् । अपश्यत् । अभि । सोमम् । ऊधः ।
प्रऽयवयन् । अचरत् । गृत्सः । अन्यान् । महानि । चक्रे । पुरुधऽप्रतीकः ॥ ३ ॥

स इन्द्रः मातरम् उपस्थाय प्रार्थयित्वा अन्नमैट्ट तामन्नमयाचत । ‘ ईळिरध्येषणाकर्मा ’ ( निरु. ७. १५ ) इति यास्कः । ततस्तस्याः ऊधः ऊधसि क्षीररूपेण स्थितं तिग्मं दीप्तं सोमम् अभि अपश्यत् सर्वतोऽदर्शत्[6] । गृत्सः । अभिकाङ्क्ष्यते सर्वैर्देवैः शत्रुहननार्थमिति गृत्स इन्द्रः । अन्यान् सपत्नान् प्रयवयन्[7] स्वस्वस्थानात् प्रकर्षेणोच्चालयन् अचरत् सर्वत्र चरति । किंच पुरुधप्रतीकः तेजोयोगात् बहुधा विक्षिप्ताङ्गः सन्[8] महानि महान्ति वृत्रहननादीनि कर्माणि चक्रे ॥ उपस्थाय । तिष्ठतेर्ल्यपि ‘ घुमास्था° ’ इतीत्वे प्राप्ते ‘ न ल्यपि ’ इति प्रतिषेधः । लित्स्वरः । ऐट्ट । ईळिर्याच्ञार्थः । तस्माल्लङि रूपम् । ‘ आडजादीनाम् ’ इत्याडागमः । ष्टुत्वम् । निघातः । तिग्मम् । ‘ तिज निशाने ’ अस्मात्[9] ‘ युजिरुचितिजां कुश्च ’ इति मक्प्रत्ययः कवर्गादेशश्च[10] । प्रयवयन्[11] । ‘ यु मिश्रणामिश्रणयोः ’ इत्यस्य ण्यन्तस्य शतरि रूपम् । लित्स्वरः । गृत्सः । ‘ गृधु अभिकाङ्क्षायाम् ’ । ‘ गृधिपण्योर्दकौ च ’ इति सप्रत्ययो दकारश्चान्तादेशः । वृषादित्वात्

---

१. ख-ग-ज-ण-न-भ-स–ततः; च–तत् । २. ख-ग-घ-च-ज-ण-त-न-ल-स–‘ पर्वतस्य ’ नास्ति । ३. घ-ल–उच्चैःस्थाने । ४. ज-ण–अभिषुतम् । ५. त–लङि रूपम् । ६. ख-ग-च-भ-स–सर्वतोऽदर्शयत्; घ-ज-ण–सर्वतो ददर्श; न–सर्वानदर्शयत् । ७ ज-ण–प्रयावयन् । ८. ख-ग-च-न-भ-स–‘ सन् ’ नास्ति ९. ल–इत्यस्मात् । १०. ज-ण–कवर्गान्तादेशश्च । ११. ज-ण-न-स–प्रयावयन् ।

आद्युदात्तः । पुरुधप्रतीकः । पुरुशब्दः[1] इह संख्यावाची[1] । ‘संख्याया विधार्थे धा’ इति धाप्रत्ययः । ह्रस्वश्छान्दसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

उग्रस्तुराषाळभिभूत्योजा यथावशं तन्वं चक्र एषः ।

त्वष्टारमिन्द्रो जनुषाभिभूयामुष्या सोममपिबच्चमूषु ॥ ४ ॥

उग्रः । तुराषाट् । अभिभूतिऽओजाः । यथाऽवशम् । तन्वम् । चक्रे । एषः ।

त्वष्टारम् । इन्द्रः । जनुषा । अभिऽभूय । आऽमुष्य । सोमम् । अपिबत् । चमूषु ॥ ४ ॥

यः ᵛएषः इन्द्रः ᵛउग्रः शत्रूणां भयंकरः ᵛतुराषाट् त्वरया[2] शत्रूणामभिभविता अत एव[2] ᵛअभिभूत्योजाः[3] शत्रूणामभिभवनपराक्रमोपेतः सन् ᵛतन्वम् आत्मीयं शरीरं ᵛयथावशं ᵛयथाकामं नानाविधरूपोपेतं ᵛचक्रे । तथा च मन्त्रवर्णः–‘रूपंरूपं मघवा बोभवीति’ ( ऋ. सं. ३. ५३. ८ ) इति । सः ᵛइन्द्रः ᵛजनुषा जन्मना सामर्थ्येन ᵛत्वष्टारं त्वष्टृनामकमसुरम् ᵛअभिभूय ᵛचमूषु चमसेषु स्थितम् ᵛआमुष्य चोरयित्वा ᵛसोममपिबत् । ‘त्वष्टा हतपुत्रो वीन्द्रम्’ इत्यादि ‘प्रासहा सोममपिबत्’ ( तै. सं. २. ४. १२. १ ) इति तैत्तिरीयकम् ॥ तुराषाट् । ‘ञित्वरा संभ्रमे’ । क्विप् । ‘ज्वरत्वर°’ इत्यादिना ऊठ् । सहेः ‘छन्दसि सहः’ इति ण्विः । ‘कर्तृकरणे कृता बहुलम्’ इति समासः । ‘तत्पुरुषे कृति बहुलम्’ इति तृतीयायाः[4] अलुक् । ‘सहेः साडः सः’ इति षत्वम् । कृदुत्तरपदस्वरः । यथावशम् । वशं काममनतिक्रम्य इत्यव्ययीभावसमासः । समासस्वरः । आमुष्य । ‘मुष स्तेये’ । ल्यप् । चमूषु । ‘चमु अदने’ । ‘कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः’ इत्यूप्रत्ययः । प्रत्ययस्वरः ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।

शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ५ ॥

सुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।

शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥५॥

सिद्धैषा[5] ॥ ॥ १२ ॥

‘शंसा महाम्’ इति पञ्चर्चमेकादशं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम् । ‘शंसा महाम्’ इत्यनुक्रमणिका । समूळ्हे दशरात्रेऽष्टमेऽहनि मरुत्वतीयशस्त्रे एतत्सूक्तम् । सूत्रितं च—‘शंसा महां महश्चित्त्वमिन्द्र’ ( आश्व. श्रौ. ८. ७ ) इति ॥

---

१. च–पुरुशब्दात् । २. घ-ज-ण–त्वरया शत्रूणां हन्ता; च–वेगसहनशीलः । ३. ख-ग-न-भ-ल-स–‘अभिभूत्योजाः’ नास्ति । ४. ल–तृतीयाया अपि । ५. ख–पूर्वमेव व्याख्याता; ज-ण–सिद्धैषा पूर्ववत् ।

शंसा महामिन्द्रं यस्मिन्विश्वा आ कृष्टयः सोमपाः काममव्यन् ।
यं सुक्रतुं धिषणे विभ्वतष्टं घनं वृत्राणां जनयन्त देवाः ॥ १ ॥

शंस । महाम् । इन्द्रम् । यस्मिन् । विश्वाः । आ । कृष्टयः । सोमऽपाः । कामम् । अव्यन् ।
यम् । सुऽक्रतुम् । धिषणे इति । विभ्वऽतष्टम् । घनम् । वृत्राणाम् । जनयन्त । देवाः ॥१॥

हे होतः महां महान्तम् इन्द्रं शंस शस्त्रैः स्तुहि । यस्मिन् इन्द्रे रक्षितरि सति विश्वाः कृष्टयः सर्वे मनुष्याः सोमपाः यज्ञमनुष्ठाय सोमपाः सन्तः कामम् । काम्यते इति कामः स्वर्गादिः । तम् आ अव्यन् सर्वतः प्राप्नुवन्ति । धिषणे देवमनुष्यादीनां धारयित्र्यौ । यद्वा । प्रगल्भे समर्थे स्वाश्रितान् रक्षितुमिति धिषणे द्यावापृथिव्यौ । देवाः च सुक्रतुम् । क्रतुः[1] कर्म जगत्पालनादि । शोभनः क्रतुर्यस्यासौ सुक्रतुः । तादृशं[1] विभ्वतष्टं विभुना ब्रह्मणा तष्टं[2] जगदाधिपत्ये स्थापितं महान्तं वृत्राणां पापरूपाणां घनं हन्तारं यम् इन्द्रं जनयन्त अजनयन् ॥ शंस । 'शन्सु स्तुतौ' इत्यस्य लोटि रूपम् । पादादित्वादनिघातः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । अव्यन् । वी[3] कान्तिगत्यादिषु[3] । लङि रूपम् । यद्वृत्तयोगादनिघातः । अदुपदेशात्स्वरः । सुक्रतुम् । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तः । धिषणे । 'ञिधृषा प्रागल्भ्ये' इत्यस्मात् 'धृषेर्धिष च संज्ञायाम्' इति क्युप्रत्ययः । धिष इत्यादेशः । प्रत्ययस्वरः । घनम् । हन्तेः 'पुंसि संज्ञायाम्°' इति घः । 'हो हन्तेः°' इति कुत्वम् । प्रत्ययस्वरः । जनयन्त । जनेर्ण्यन्तस्य लङि रूपम् । यद्वृत्तयोगादनिघातः ॥

यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम् ।
इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः ॥ २ ॥

यम् । नु । नकिः । पृतनासु । स्वऽराजम् । द्विता । तरति । नृऽतमम् । हरिऽस्थाम् ।
इनऽतमः । सत्वऽभिः । यः । ह । शूषैः । पृथुऽज्रयाः । अमिनात् । आयुः । दस्योः ॥२॥

पृतनासु । व्याप्रियन्तेऽत्र योद्धार इति पृतनाः संग्रामाः । तेषु स्वराजं हरिष्ठां हरिस्थां हरियुक्ते[4] रथे[4] वर्तमानं नृतमं बलस्य युद्धे नेतृतमं द्विता युद्धमासाद्य सेनां द्विधा कृत्वा वर्तमानं यम् इन्द्रं नकिः न कश्चिदपि तरति उत्तीर्य गच्छति । न कोऽप्यभ्यस्ति[5] इत्यर्थः । नु प्रसिद्धौ । स इन्द्रः इनतमः अतिशयेन सेनास्वामी सत्वभिः परितः सीदद्भिर्मरुद्भिः सह[6] यः यान् गच्छन् शूषैः । शोषयन्ति परबलानीति शूषाणि बलानि । तैः पृथुज्रयाः युद्धं प्रति तीव्रवेगः सन् दस्योः शत्रोः आयुः अन्नं प्राणं वा अमिनात्[7] संग्रामेषु मिनाति हिनस्ति[7] । ह प्रसिद्धौ । अत्र निरुक्तं—

---

१. ख-ग-घ-च-ज-ण-फ-भ—शोभनक्रतुम् । २. न-स—' तष्टं ' नास्ति । ३. ख-ग-च-ज-ण-न-भ-स—' वी कान्तिगत्यादिषु ' नास्ति । ४. ख-ग-च-ज-ण—हरियुक्तरथे । ५. ख-ग-च-ज-ण-त-न-फ-भ-ल-स—कोऽप्यस्ति; घ-प—कोऽपि । ६. ख-ग-घ-च-ज-ण-न-भ-ल-स—' सह ' नास्ति । ७. ख-ग-न-भ-स—मिनाति हिनस्ति; घ—अमिनात् संग्रामेषु हिनस्ति; च-ल—अमिनात् हिनस्ति ।

' पृथुज्रयाः पृथुजवः । पृथुज्रया अमिनादायुर्दस्योः । प्रामापयदायुर्दस्योः ' ( निरु. ५. ९ ) इति ॥ तरति । ' तृ प्लवनतरणयोः ' इत्यस्य लटि रूपम् । यद्वृत्तयोगादनिघातः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यः । ' या प्रापणे ' । औणादिकः कप्रत्ययः । आतो लोपः । प्रत्ययस्वरः ॥

सहावा पृत्सु तरणिर्नार्वा व्यानशी रोदसी मेहनावान् ।
भगो न कारे हव्यो मतीनां पितेव चारुः सुहवो वयोधाः ॥ ३ ॥

सहऽवा । पृत्ऽसु । तरणिः । न । अर्वा । विऽआनशिः । रोदसी इति । मेहनाऽवान् ।
भर्गः । न । कारे । हव्यः । मतीनाम् । पिताऽइव । चारुः । सुऽहवः । वयःऽधाः ॥ ३ ॥

य इन्द्रः ᵛसहावा[1] बलवान् ᵛपृत्सु संग्रामेषु ᵛतरणिः । शत्रूनुत्तीर्य वर्तते इति तरणिः । तत्र दृष्टान्तः ᵛअर्वा ᵛन । यथार्वा बलवानश्वः शत्रुबलं तरति तथा ᵛरोदसी द्यावापृथिव्यौ ᵛव्यानशिः व्याप्नुवन् ᵛमेहनावान् । मिह्यते सिच्यते दीयतेऽर्थिभ्य इति मेहनं धनम् । तद्वान्भवति । तादृश इन्द्रः ᵛकारे । क्रियते इति कारो यज्ञादिः । तस्मिन् यज्ञे ᵛभगो ᵛन पूषा देव इव ᵛहव्यः हवनीयः ᵛमतीनां स्तोतॄणां स्तुतीनां वा ᵛपितेव पालयिता ᵛचारुः कमनीयः ᵛसुहवः सुष्ठ्वाह्वानोपेतः ᵛवयोधाः अन्नस्य[2] दाता[2] भवति ॥ सहावा । सहोऽस्यास्तीति मतुबर्थे ' छन्दसीवनिपौ ' इति वनिप् । ' अन्येषामपि दृश्यते ' इति संहितायां दीर्घः । पृत्सु । पृतनाशब्दस्य सौ परतः ' मांस्पृत्स्नूनामुपसंख्यानम् ' इति पृदादेशः । ' सावेकाचः०' इति विभक्तेरुदात्तत्वम् । व्यानशिः । ' अशू व्याप्तौ ' इत्यस्मात् छन्दसि सदादित्वात् किप्रत्ययः । तस्य लिड्वद्भावः । ' अत आदेः ' इत्यभ्यासस्य दीर्घे कृते ' अश्नोतेश्च ' इति नुडागमः । प्रादिसमासः । कारे । करोतेः कर्मणि घञ् । ' कर्षात्वतो घञोऽन्त उदात्तः ' इत्यन्तोदात्तत्वम् । हव्यः । जुहोतेः ' अचो यत् ' । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । सुहवः । ह्वयतेः ' भावेऽनुपसर्गस्य ' (पा. सू. ३. ३.७५ ) इत्यप्प्रत्ययः । संप्रसारणम् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । ' आद्युदात्तं द्व्यच्छन्दसि ' इति बहुव्रीहौ उत्तरपदाद्युदात्तत्वम् ॥

धर्ता दिवो रजसस्पृष्ट ऊर्ध्वो रथो न वायुर्वसुभिर्नियुत्वान् ।
क्षपां वस्ता जनिता सूर्यस्य विभक्ता भागं धिषणेव वाजम् ॥ ४ ॥

धर्ता । दिवः । रजसः । पृष्टः । ऊर्ध्वः । रथः । न । वायुः । वसुऽभिः । नियुत्वान् ।
क्षपाम् । वस्ता । जनिता । सूर्यस्य । विऽभक्ता । भागम् । धिषणाऽइव । वाजम् ॥ ४ ॥

स इन्द्रः ᵛदिवः द्युलोकस्य ᵛरजसः अन्तरिक्षस्य च ᵛधर्ता धारकः ᵛपृष्टः[3] सर्वत्र वर्तमानः ᵛरथो ᵛन तदीयो रथ इव ᵛऊर्ध्वः ᵛवायुः ऊर्ध्वगन्ता ᵛवसुभिः सहायतया निवसद्भिः मरुद्भिः[4]

---

१. ख-ग-च-ण-फ-भ—सहावा सहायवान्; घ-ज-प—सहावा सहावान् । २. ख-ग-च-ज-ण—अन्नदाता । ३. त—पृष्टः व्याप्तः । ४. ख-ग-घ-च-ज-ण-न-भ-ल-स—' मरुद्भिः ' नास्ति ।

ᐯनियुत्वान् सहायवान्। यद्वा नेत्ययमुत्तरेणापि संबध्यते। यथा वायुर्नियुत्वान् नियुन्नामकवडवाभिः तद्वान् एवमिन्द्रो वसुभिर्मरुद्भिः सहायवान्। तथा ᐯक्षपां ᐯवस्ता रात्रिमाच्छादयन् ᐯसूर्यस्य जगत्प्रकाशकस्यादित्यस्य ᐯजनिता जनयिता ᐯभागं भजनीयं ᐯवाजं कर्मफलरूपमन्नं ᐯविभक्ता साधु विभागकर्ता भवति। तत्र दृष्टान्तः। ᐯधिषणेव। यथा आढ्यानां वाक् अस्येदमिति विभागं करोति तद्वत्॥ रजसः। 'रञ्ज रागे' इत्यस्मात् 'भूरञ्जिभ्यां कित्' (उ. सू. ४. ६५६) इत्यसुन्। कित्त्वान्नलोपः। रज्यते प्रकाशेनेति रजोऽन्तरिक्षम्। नित्त्वादाद्युदात्तः। वस्ता। 'वस आच्छादने' इत्यस्य तृचि रूपम्। जनिता। जनयतेस्तृचि 'जनिता मन्त्रे' इति निपातनात् णिलोपः। चित्त्वादन्तोदात्तः। विभक्ता। 'भज सेवायाम्' इत्यस्य साधुकारिण्यर्थे तृन्। 'एकाच उपदेशे°' इतीट्प्रतिषेधः। 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम्॥

**शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ।**
**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम्॥ ५॥**

शुनम्। हुवेम। मघऽवानम्। इन्द्रम्। अस्मिन्। भरे। नृऽतमम्। वाजऽसातौ।
शृण्वन्तम्। उग्रम्। ऊतये। समत्ऽसु। घ्नन्तम्। वृत्राणि। सम्ऽजितम्। धनानाम्॥५॥

'शुनं हुवेम' इति पूर्ववत्[1]॥ ॥ १३॥

'इन्द्रः स्वाहा' इति पञ्चर्चं द्वादशं सूक्तं वैश्वामित्रं त्रैष्टुभमैन्द्रम्। दशरात्रे नवमेऽहनि मरुत्वतीयशस्त्रे इदं सूक्तम्। सूत्रितं च–'तृतीयस्येन्द्रः स्वाहा गायत्साम' (आश्व. श्रौ. ८. ७) इति॥

**इन्द्रः स्वाहा पिबतु यस्य सोम आगत्या तुम्रो वृषभो मरुत्वान्।**
**ओरुव्यचाः पृणतामेभिरन्नैरास्य हविस्तन्वः काममृध्याः॥ १॥**

इन्द्रः। स्वाहा। पिबतु। यस्य। सोमः। आऽगत्य। तुम्रः। वृषभः। मरुत्वान्।
आ। उरुऽव्यचाः। पृणताम्। एभिः। अन्नैः। आ। अस्य। हविः। तन्वः। कामम्। ऋध्याः॥१॥

अयम् ᐯइन्द्रः ᐯस्वाहा स्वाहाकृतमिमं सोमं ᐯपिबतु। ᐯयस्य इन्द्रस्यायं ᐯसोमः स इन्द्रो यज्ञं प्रति ᐯआगत्य ᐯतुम्रः कर्मविघ्नकारिणां हिंसकः ᐯवृषभः यष्टृणामभिमतफलवर्षकः ᐯमरुत्वान् मरुद्भिस्तद्वान् ᐯउरुव्यचाः प्रभूतव्याप्तिः सन् ᐯएभिः अस्माभिर्दत्तैः ᐯअन्नैः सोमादिलक्षणैर्हविर्भिः ᐯआ ᐯपृणतां समन्तात् परयतु। ततः ᐯअस्य इन्द्रस्य संबन्धिनः ᐯतन्वः शरीरस्य ᐯकामं पुष्ट्यादिलक्षणविषयमभिलाषं ᐯहविः अस्माभिर्दत्तम् ᐯआ ᐯऋध्याः सर्वतः पूरयतु॥ तुम्रः। तुमिराहननार्थः। उरुव्यचाः। व्यचेरसुन्। 'व्यचेः कुटादित्वमनसीति वक्तव्यम्' इत्यत्र 'अनसि' इति पर्युदासात् ङित्त्वाभावः। कृदुत्तरस्वरः। ऋध्याः। ऋध्नोतेः आशीर्लिङि रूपम्॥

---

१. ख–एवं पूर्वं व्याख्याता; स–सिद्धम्।

ऋ. २–५,३

आ ते सपर्यू जवसे युनज्मि ययोरनु प्रदिवः श्रुष्टिमावः ।
इह त्वा धेयुर्हरयः सुशिप्र पिबा त्व१स्य सुषुतस्य चारोः ॥ २ ॥

आ । ते । सपर्यू इति । जवसे । युनज्मि । ययोः । अनु । प्रऽदिवः । श्रुष्टिम् । आवः ।
इह । त्वा । धेयुः । हरयः । सुऽशिप्र । पिब । तु । अस्य । सुऽसुतस्य । चारोः ॥ २ ॥

हे इन्द्र ते तव जवसे यज्ञं प्रत्यागमनाय सपर्यू परिचारकौ[1] हरी आ युनज्मि रथे योजयामि । प्रदिवः पुरातनस्त्वं ययोः अश्वयोः श्रुष्टिं वेगम् । 'श्रुष्टीति क्षिप्रनाम' इति यास्कः । तम् अनु आवः अनुगच्छसि । हे सुशिप्र शोभनहनो इन्द्र हरयः रथे योजितास्तेऽश्वाः इह कर्मणि त्वा त्वां धेयुः यज्ञं प्रति धारयन्तु । तत आगतस्त्वं सुषुतस्य सुष्ठ्वभिषुतं चारोः कमनीयम् अस्य इमं सोमं तु क्षिप्रं पिब ॥ सपर्यू । सपरशब्दः कण्ड्वादिः । तदन्तात्[2] औणादिकः कुप्रत्ययः । आवः । अव रक्षणादिषु । छान्दसे लङि रूपम् । यद्वृत्तयोगात् अनिघातः । धेयुः । दधातेराशीर्लिङि 'किदाशिषि' इति यासुट् । 'एर्लिङि' (पा. सू. ६. ४. ६७) इत्येकारादेशः । निघातः । पिब । पादादित्वादनिघातः । सुषुतस्य[3] । 'षुञ् अभिषवे' । कर्मणि क्तः । 'गतिरनन्तरः' इति गतिस्वरः । 'उपसर्गात्सुनोति°' इत्यादिना संहितायां षत्वम् ॥

गोभिर्मिमिक्षुं दधिरे सुपारमिन्द्रं ज्यैष्ठ्याय धायसे गृणानाः ।
मन्दानः सोमं पपिवाँ ऋजीषिन्त्समस्मभ्यं पुरुधा गा इषण्य ॥ ३ ॥

गोभिः । मिमिक्षुम् । दधिरे । सुऽपारम् । इन्द्रम् । ज्यैष्ठ्याय । धायसे । गृणानाः ।
मन्दानः । सोमम् । पपिऽवान् । ऋजीषिन् । सम् । अस्मभ्यम् । पुरुधा । गाः । इषण्य ॥ ३ ॥

गृणानाः स्तोत्रं कुर्वाणा ऋत्विजः मिमिक्षुं स्तोतृणामभिमतफलं वर्षितुमिच्छन्तं सुपारं शोभनपारम् । स्तुतिभिरभिमुखीकर्तुं शक्यमित्यर्थः । तादृशम् इन्द्रं ज्यैष्ठ्याय धनादिसंपत्त्या श्रेष्ठत्वाय धायसे चिरकालमायुर्धारणाय च गोभिः गोमिश्रितैः सोमैः दधिरे धारयन्ति । शेषः प्रत्यक्षः । हे ऋजीषिन् सोमवन्निन्द्र स त्वं मन्दानः मोदमानः सोमं पपिवान् सोमस्य पाता सन् स्तोतृभ्यः अस्मभ्यं पुरुधा बहुधा गाः अग्निहोत्रादिकर्मसिद्ध्यर्थं धेनूः सम् इषण्य सम्यक् प्रेरय ॥ गोभिः । 'सावेकाचः°' इति विभक्तेरुदात्तत्वे प्राप्ते 'न गोश्वन्साववर्ण°' इति प्रतिषेधः । मिमिक्षुम् । 'मिह सेचने' इत्यस्य सनि 'एकाचः°' (पा. सू. ७. २. १०) इतीट्प्रतिषेधे 'हलन्ताच्च' इति किद्वद्भावः । 'सनाशंसभिक्ष उः' । प्रत्ययस्वरः । ज्यैष्ठ्याय । ज्येष्ठस्य भाव इत्यर्थे ब्राह्मणादित्वात् ष्यञ् । ञित्वादाद्युदात्तः । गृणानाः । 'गॄ शब्दे' । क्र्यादित्वात् श्ना । चित्वादन्तोदात्तः । मन्दानः । मदि स्तुत्यादिषु इत्यस्य शानचि 'बहुलं छन्दसि' इति शपो लुक् । पुरुधा । पुरुशब्दः

---

१. ख-ग-च-फ–सपरिवारकौ; ज-ण-सपरिचारकौ; न-ल-स–परिवारकौ । २. च-फ–ततः । ३. त–सुसुतस्य ।

इह संख्यावाची । 'संख्याया विधार्थे धा' इति धाप्रत्ययः । इषण्य । 'इष[1] गतौ' । इषणमिच्छतीति छन्दसि परेच्छायां क्यच् । तदन्तादन्तर्भावितण्यर्थाल्लोटि रूपम् ॥

इमं कामं मन्दया गोभिरश्वैश्चन्द्रवता राधसा पप्रथश्च ।
स्वर्यवो मतिभिस्तुभ्यं विप्रा इन्द्राय वाहः कुशिकासो अक्रन् ॥ ४ ॥

इमम् । कामम् । मन्दय । गोभिः । अश्वैः । चन्द्रऽवता । राधसा । पप्रथः । च ।
स्वःऽयवः । मतिऽभिः । तुभ्यम् । विप्राः । इन्द्राय । वाहः । कुशिकासः । अक्रन् ॥ ४ ॥

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ५ ॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ ।
शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानाम् ॥५॥

एते व्याख्याते ॥  ॥ १४ ॥

'चर्षणीधृतम्' इति द्वादशर्चं त्रयोदशं सूक्तं वैश्वामित्रमैन्द्रम् । अत्रानुक्रमणिका—'चर्षणीधृतं द्वादशाद्यान्त्यौ तृचौ जागतगायत्रौ' इति । आद्यस्तृचो जागतोऽन्त्यस्तृचो गायत्रः । शिष्टा ऋचस्त्रिष्टुभः । सूक्तविनियोगो लैङ्गिकः । उक्थे क्रतौ मैत्रावरुणशस्त्रेऽनुरूपतृचानन्तरमाद्यस्तृचः शंसनीयः । सूत्रितं च—'चर्षणीधृतमस्तभ्नाद्द्यामसुर इति तृचौ' (आश्व. श्रौ. ६. १) इति । विषुवति निष्केवल्ये 'नृणामु त्वा' इति तृचः । 'विषुवान्' इति खण्डे सूत्रितं—'नृणामु त्वा नृतमं गीर्भिरुक्थैरिति तिस्रः' (आश्व. श्रौ. ८. ६) इति । बृहस्पतिसवे अप्ययं[2] तृचो निष्केवल्ये निविद्धानीयः । सूत्रितं च—'नृणामु त्वेति मध्यंदिनः[3]' (आश्व. श्रौ. ९. ५) इति । महाव्रतेऽपि निष्केवल्येऽयं तृचः । दशरात्रे चतुर्थेऽहनि मरुत्वतीये 'इन्द्र मरुत्वः' इति तिस्रः । षष्ठेऽहनि 'षष्ठस्य' इति खण्डे सूत्रितम्—'इन्द्र मरुत्व इति तिस्र इति मरुत्वतीयम्' (आश्व. श्रौ. ८. १) इति । बृहस्पतिसवेऽपि मरुत्वतीयशस्त्रे[4] अयं तृचो निविद्धानीयः । सूत्रितं च—'इन्द्र मरुत्व इह नृणामु त्वेति मध्यंदिनः[5]' (आश्व. श्रौ. ९. ५) इति । आद्या मरुत्वतीयग्रहस्यानुवाक्या । सूत्रितं च—'मरुत्वतीयेन ग्रहेण चरन्तीन्द्र मरुत्व इह पाहि सोमम्' (आश्व. श्रौ. ५. १४) इति । तृतीये पर्याये होतुः शस्त्रे 'इदं ह्यन्वोजसा' इति स्तोत्रियस्तृचः । सूत्रितं च—'इदं ह्यन्वोजसा महाँ इन्द्रो य ओजसा' (आश्व. श्रौ. ६. ४) इति ॥

---

१. ख-ग-ज-ण-त-न-भ-ल-स-इषु । २. ख-ग-ज-एवायम्; च-चायम् । ३. ख-ग-च-ज-ण-न-भ-स-माध्यंदिनः । ४. ग-च-ज-ण-मरुत्वतीयगृहस्य शस्त्रे । ५. ख-ग-च-ज-न-भ-स-माध्यंदिनः ।

चर्षणीधृतं मघवानमुक्थ्यमिन्द्रं गिरो बृहतीरभ्यनूषत ।
वावृधानं पुरुहूतं सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ॥ १ ॥

चर्षणिऽधृतम् । मघऽवानम् । उक्थ्यम् । इन्द्रम् । गिरः । बृहतीः । अभि । अनूषत ।
ववृधानम् । पुरुऽहूतम् । सुवृक्तिऽभिः । अमर्त्यम् । जरमाणम् । दिवेऽदिवे ॥ १ ॥

<sup>v</sup>बृहतीः प्रभूताः <sup>v</sup>गिरः अस्मदीयाः स्तुतिलक्षणा वाचः <sup>v</sup>चर्षणीधृतं चर्षणीनां मनुष्याणामभिमतफलप्रदानेन धारकं पोषकम् । यद्वा । आकृषन्त्यनेन सर्वमिति चर्षणि बलं तद्धारकम् । <sup>v</sup>मघवानं धनवन्तम् <sup>v</sup>उक्थ्यम् उक्थैः शस्त्रैः शंसनीयं <sup>v</sup>वावृधानं बलधनादिसंपत्त्या प्रतिक्षणं वर्धमानं <sup>v</sup>पुरुहूतं स्तोतृभिर्बहुवारमाहूतम् <sup>v</sup>अमर्त्यं मरणधर्मरहितं <sup>v</sup>सुवृक्तिभिः शोभनस्तुतिवाक्यैः <sup>v</sup>दिवेदिवे प्रत्यहं <sup>v</sup>जरमाणं स्तूयमानं तमिमम् <sup>v</sup>इन्द्रम् <sup>v</sup>अभ्यनूषत अभितः सर्वतः स्तुवन्तु ॥ बृहतीः । ' वा छन्दसि ' इति सवर्णदीर्घः । अनूषत । ' णू स्तवने ' । अस्माल्लुङि सिच् । धातोः कुटादित्वात् सिचो ङित्त्वेन गुणाभावः । सुवृक्तिभिः । ' नञ्सुभ्याम् ' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा । सुवृक्तय इति स्तुतिकरणभूताः[1] ऋचो वृक्तिशब्देनोच्यन्ते । ' क्तिच्क्तौ च० ' इति क्तिच् । कृत्स्वरेणान्तोदात्तः । दिवेदिवे । ' नित्यवीप्सयोः ' इति द्विर्वचनम् । परस्याम्रेडितत्वादनुदात्तत्वे पूर्वपदस्वरः ॥

शतक्रतुमर्णवं शाकिनं नरं गिरो म इन्द्रमुप यन्ति विश्वतः ।
वाजसनिं पूर्भिदं तूर्णिमप्तुरं धामसाचमभिषाचं स्वर्विदम् ॥ २ ॥

शतऽक्रतुम् । अर्णवम् । शाकिनम् । नरम् । गिरः । मे । इन्द्रम् । उप । यन्ति । विश्वतः ।
वाजऽसनिम् । पूःऽभिदम् । तूर्णिम् । अप्ऽतुरम् ।
धामऽसाचम् । अभिऽसाचम् । स्वःऽविदम् ॥ २ ॥

<sup>v</sup>मे मदीयाः <sup>v</sup>गिरः स्तुतिलक्षणा वाचः <sup>v</sup>शतक्रतुम् । शतं क्रतवो यज्ञा यस्य तम् । <sup>v</sup>अर्णवं पर्जन्यात्मना उदकवन्तं <sup>v</sup>शाकिनम् । शक्नोत्येभिरिन्द्र इति शाकाः सहायभूता मरुतः । तद्वन्तं <sup>v</sup>नरं सर्वस्य जगतो नेतारं <sup>v</sup>वाजसनिं वाजस्यान्नस्य दातारं <sup>v</sup>पूर्भिदं शत्रुपुरां[2] भेत्तारं <sup>v</sup>तूर्णिं युद्धं प्रति शीघ्रं गन्तारम् <sup>v</sup>अप्तुरं मेघभेदनद्वारा अपां प्रेरकं <sup>v</sup>धामसाचं तेजो भजमानम् । यद्वा धनं धाम । तदर्थिभिः[3] सह योजयितारम् । <sup>v</sup>अभिषाचं शत्रूणामभिभवितारं <sup>v</sup>स्वर्विदं स्वर्गस्य लम्भकं तमिमम्[4] <sup>v</sup>इन्द्रं <sup>v</sup>विश्वतः सर्वतः[5] <sup>v</sup>उप <sup>v</sup>यन्ति उपगच्छन्तु ॥ अर्णवम् । अर्णोऽस्यास्तीति मत्वर्थे ' अर्णसः सलोपश्च ' इति वप्रत्ययः सकारलोपश्च । प्रत्ययस्वरः । नरम् । ' नयतेर्डिच ' इति ऋप्रत्ययः । अमः सुप्त्वादनुदात्तत्वे प्रत्ययस्वरः । यन्ति । ' इण् गतौ ' इत्यस्य लटि ' इणो यण् '

---

१. ख-ग-च-ज-ण-न-भ—करणभूताः । २. ख-ग-ज-ण—शत्रुपुरः । ३. ख-ग-च-भ—तदेभिः; ज-ण—तदेभिः । ४. ख-ग-च-ज-ण-त-न-भ-स—तम् । ५. ख-ग-च-ज-ण-ल—' सर्वतः ' नास्ति ।

इति यण् । निघातः । वाजसनिम् । 'षणु दाने' । 'खनिकष्यज्यसिवसि°' इत्यादिना इप्रत्ययः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । तूर्णिम् । 'ञित्वरा संभ्रमे' । 'वहिश्रि°' इत्यादिना निप्रत्ययः । 'ज्वरत्वर°' इत्यादिना ऊठ् । 'नित्' इत्यतिदेशादाद्युदात्तः । अप्तुरम् । 'तुर त्वरणे' । क्विप् । कृदुत्तरपदस्वरः । अभिषाचम् । 'षच समवाये' । ण्यन्तस्य[1] क्विप् ॥

**आ॒क॒रे वसो॑र्जरि॒ता प॑नस्यतेऽने॒हसः॑ स्तु॒भ इन्द्रो॑ दुवस्यति ।**
**वि॒वस्व॑तः॒ सद॑न॒ आ हि पि॑प्रि॒ये स॑त्रा॒साह॑मभिमाति॒हनं॑ स्तुहि ॥ ३ ॥**

आ॒ऽक॒रे । वसोः॑ । ज॒रि॒ता । प॒न॒स्य॒ते॒ । अ॒ने॒हसः॑ । स्तु॒भः॑ । इन्द्रः॑ । दु॒व॒स्य॒ति॒ ।
वि॒वस्व॑तः । सद॑ने । आ । हि । पि॒प्रि॒ये । स॒त्रा॒ऽसह॑म् । अ॒भि॒मा॒ति॒ऽहन॑म् । स्तु॒हि॒ ॥ ३ ॥

vजरिता शत्रूणां जरयिता[2] vइन्द्रः vआकरे । आकीर्यते युद्धार्थं धनमत्रेत्याकरो युद्धम् । तस्मिन् vवसोः धनस्य स्थानभूते युद्धे vपनस्यते सर्वैः स्तूयते । यद्वा वसोः । वसत्याभिमुख्येन तिष्ठतीति वसुः शत्रुः तस्य जरयितेति योजनीयम् । स इन्द्रः vअनेहसः अपापाः vस्तुभः स्तुतीः vदुवस्यति परिचरति । तासां फलं प्रयच्छन् पूजयतीत्यर्थः । किंच स इन्द्रः vविवस्वतः विशेषेण अग्निहोत्रार्थं वसतो हविष्मतो वा यजमानस्य vसदने गृहे vआ vपिप्रिये vहि सोमपानादिना अत्यन्तं[3] प्रीतो भवति खलु । vसत्रासाहं[4] शत्रूणामेव हन्तारं यद्वा मरुद्भिः सह शत्रूणामभिभवितारम् अत एव vअभिमातिहनं शत्रूणां हन्तारमिन्द्रं vस्तुहि हे विश्वामित्रेति ॥ आकरे । 'कॄ विक्षेपे' । अधिकरणे 'ऋदोरप्' इत्यप् । थाथादिस्वरेणान्तोदात्तः । जरिता । 'जॄष् वयोहानौ' इत्यस्यान्तर्भावितण्यर्थस्य तृचि रूपम् । चित्त्वादन्तोदात्तः । पनस्यते । पनस्यतिः स्तुतिकर्मा । तस्य कर्मणि लटि रूपम् । निघातः । अनेहसः । हन्तेर्नञि उपपदे 'नञि हन एह च' (उ. सू. ४. ६६३) इत्यसिप्रत्ययः एह इत्ययं चादेशो धातोः । 'नञ्सुभ्याम्' इति स्वरेणान्तोदात्तः । स्तुभः । स्तोभतिः अर्चतिकर्मा[5] । क्विप् । दुवस्यति । दुवः परिचरणमात्मन इच्छतीत्यर्थे क्यच् । निघातः । पिप्रिये । 'प्रीङ् तर्पणे' । लिटि रूपम् । हियोगादनिघातः ॥

**नृ॒णामु॑ त्वा॒ नृत॑मं गी॒र्भिरु॒क्थैर॒भि प्र वी॒रम॑र्चता स॒बाधः॑ ।**
**सं सह॑से पुरु॒मायो॒ जिही॑ते॒ नमो॑ अस्य प्र॒दिव॒ एक॑ ईशे ॥ ४ ॥**

नृ॒णाम् । ऊँ इति॑ । त्वा॒ । नृऽत॑मम् । गीः॒ऽभिः । उ॒क्थैः । अ॒भि । प्र । वी॒रम् । अ॒र्च॒त॒ । स॒ऽबाधः॑ ।
सम् । सह॑से । पु॒रु॒ऽमा॒यः । जि॒ही॒ते॒ । नमः॑ । अ॒स्य॒ । प्र॒ऽदिवः॑ । एकः॑ । ई॒शे॒ ॥ ४ ॥

हे इन्द्र vसबाधः । रक्षोघ्नमन्त्रोच्चारणेन तद्विषयबाधया सह वर्तन्त इति सबाधः ऋत्विजः । vनृणां vनृतमं मनुष्याणामतिशयेन स्वस्वकर्मणि[6] नेतारं vवीरं सामर्थ्योपेतं vत्वा[7] त्वां vगीर्भिः

---

१. ज–ण्यन्तात् । २. ज-ण–जरिता जरयिता । ३. ख-ग-च-ज-ण-फ-भ–आसमन्तम् । ४. त–सत्रासाहं सत्यमेव । ५. ज-ण–स्तुतिकर्मा । ६. ख-ग-च-ज-ण-न-फ-भ-स–स्वकर्मणि । ७. ख-ग-च-न-फ-भ-ल-स–'त्वा' नास्ति ।

स्तुतिसाधनभूतैर्वाक्यैः ᵛउक्थैः शस्त्रैश्च ᵛअभि आभिमुख्येन ᵛप्र ᵛअर्चत प्रकर्षेणार्चन्ति । ᵛपुरुमायः वृत्रहननादिबहुकर्मा स इन्द्रः ᵛसहसे बलाय ᵛसं ᵛजिहीते गमनोद्यमं करोति । किंच ᵛप्रदिवः पुरातनः ᵛएकः असहायः स इन्द्रः ᵛनमः नमसः ᵛअस्य हविर्लक्षणस्यान्नस्य ᵛईशे इष्टे । यद्वा अस्य सर्वस्य जगत ईष्टे । तस्मै[1] इन्द्राय नमः ॥ नृणाम् । ' नामन्यतरस्याम् ' इति विभक्तेरुदात्तत्वम् । अर्चत । अर्चतेर्लेटि झेस्तादेशः ' तिङां तिङो भवन्ति ' इति वचनात् । सबाधः । ' बाधृ विलोडने ' । क्विप् । ' वोपसर्जनस्य ' इति सहस्य सत्वम् । कृदुत्तरपदस्वरः । पुरुमायः । ' अन्तोदात्तप्रकरणे त्रिचक्रादीनामुपसंख्यानम् ' इत्यन्तोदात्तत्वम् । ईशे । ' ईश ऐश्वर्ये ' इत्यस्य लटि ' लोपस्त आत्मनेपदेषु ' इति तलोपः । निघातः ॥

पूर्वीरस्य निष्षिधो मर्त्येषु पुरू वसूनि पृथिवी बिभर्ति ।
इन्द्राय द्याव ओषधीरुतापो रयिं रक्षन्ति जीरयो वनानि ॥ ५ ॥

पूर्वीः । अस्य । निःऽसिधः । मर्त्येषु । पुरु । वसूनि । पृथिवी । बिभर्ति ।
इन्द्राय । द्यावः । ओषधीः । उत । आपः । रयिम् । रक्षन्ति । जीरयः । वनानि ॥ ५ ॥

ᵛमर्त्येषु मनुष्येषु ᵛअस्य इन्द्रस्य[2] ᵛनिष्षिधः अनुशासनानि ᵛपूर्वीः हितोपदेशादिभिः प्रभूतानि नानाप्रकाराणि भवन्ति । इन्द्रस्य शासितृत्वे मन्त्रः—' उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे ' ( ऋ. सं. १. १०. ५ ) इति । तथा शासकाय तस्मै ᵛइन्द्राय ᵛपृथिवी ᵛपुरु पुरूणि बहूनि ᵛवसूनि धनानि ᵛबिभर्ति अन्तर्धारयति । किंच ᵛद्यावः द्युलोकाः ᵛओषधीः ओषधयः ᵛउत अपि च ᵛआपः जलानि ᵛजीरयः । जीर्यन्त इति जीरयो मनुष्याः । ᵛवनानि वृक्षाश्च एते सर्वे इन्द्रस्याज्ञया तदुपभोगयोग्यं ᵛरयिं धनं ᵛरक्षन्ति ॥ निष्षिधः । ' षिधु गत्याम् ' । क्विप् । संहितायां निसः सकारेण इणो व्यवधानं[3] छान्दसत्वात् अनादृत्य[4] ' उपसर्गात्सुनोति° ' इत्यादिना षत्वम्* । निसः सकारस्य ' ष्टुना ष्टुः ' इति षत्वम् ॥ ॥ १५ ॥

तुभ्यं ब्रह्माणि गिर इन्द्र तुभ्यं सत्रा दधिरे हरिवो जुषस्व ।
बोध्यापिरवसो नूतनस्य सखे वसो जरितृभ्यो वयो धाः ॥ ६ ॥

तुभ्यम् । ब्रह्माणि । गिरः । इन्द्र । तुभ्यम् । सत्रा । दधिरे । हरिऽवः । जुषस्व ।
बोधि । आपिः । अवसः । नूतनस्य । सखे । वसो इति । जरितृऽभ्यः । वयः । धाः ॥ ६ ॥

हे ᵛहरिवः अश्ववन् ᵛइन्द्र ᵛतुभ्यं त्वदर्थं ᵛब्रह्माणि स्तोत्राणि तथा ᵛतुभ्यं ᵛगिरः शस्त्राणि च ᵛसत्रा सत्यमेव ᵛदधिरे ऋत्विजो धारयन्ति । तानि ᵛजुषस्व सेवस्व । हे ᵛवसो सर्वस्य वासयितः

---

१. त-तस्मात् । २. ख-ग-च-त-फ-भ-इन्द्रस्य पूर्वीः । ३. ज-ण—व्यवधानेऽपि । ४. ज-ण—' अनादृत्य ' नास्ति । *' विप्रतिषिद्धं चानधिकरणवाचीति सूत्रे दर्शनात् उपसर्गादिति सूत्रे गुणरक्षितस्यापि ग्रहणं कदाचिदिति ' इत्ययं पाठः ज-पुस्तके टिप्पणीरूपेण निविष्टः ।

ᵛसखे सखिभूत हे इन्द्र ᵛआपिः व्याप्तस्त्वं ᵛनूतनस्य[1] नवतरम्[2] ᵛअवसः अन्नलक्षणं हविः ᵛबोधि त्वदर्थं दीयमानं जानीहि । अतस्त्वं ᵛजरितृभ्यः स्तोतृभ्योऽस्मभ्यं ᵛवयः अन्नं ᵛधाः देहि ॥ तुभ्यम् । 'ङयि च' इत्याद्युदात्तत्वम् । जुषस्व । 'जुषी प्रीतिसेवनयोः' इत्यस्य लोटि रूपम् । वाक्यभेदात् अनिघातः । बोधि । 'बुध अवगमने' इत्यस्य लोटि 'वा छन्दसि' इति हेर्विकल्पेन ङित्त्वादत्र पित्त्वात् गुणः[3] । 'हुझल्भ्यो हेर्धिः' इति धयादेशः । ङित्त्वादन्तोदात्तः ॥

**इन्द्र॑ मरुत्व इ॒ह पा॑हि॒ सोमं॒ यथा॑ शार्या॒ते अपि॑बः सु॒तस्य॑ ।**

**तव॒ प्रणी॑ती॒ तव॑ शूर॒ शर्म॒न्ना वि॑वासन्ति क॒वयः॑ सु॒य॒ज्ञाः ॥ ७ ॥**

इन्द्र॑ । म॒रुत्व॒ः । इ॒ह । पा॒हि॒ । सोम॑म् । यथा॑ । शा॒र्या॒ते । अपि॑बः । सु॒तस्य॑ ।

तव॑ । प्रऽनी॑ती । तव॑ । शू॒र॒ । शर्म॑न् । आ । वि॒वा॒स॒न्ति॒ । क॒वयः॑ । सु॒ऽय॒ज्ञाः ॥ ७ ॥

हे ᵛमरुत्वः मरुद्भिस्तद्वन् हे ᵛइन्द्र त्वम् ᵛइह अस्मदीये यज्ञे आगत्य ᵛसोमं ᵛपाहि पिब । ᵛयथा त्वं पूर्वं ᵛशार्याते शर्यातेः पुत्रे तस्मिन् राजनि यज्ञं कुर्वाणे ᵛसुतस्य अभिषुतं सोमम् ᵛअपिबः तथा अत्रापि[4] पिबेत्यर्थः । इन्द्रः शार्यातस्य यज्ञे सोमरसानपिबदित्येषोऽर्थः कौषीतके स्पष्टमुक्तः । तथा मन्त्रवर्णश्च—'आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे' (ऋ. सं. १. ५१. १२) इति । हे ᵛशूर इन्द्र ᵛतव संबन्धिनि ᵛशर्मन् शर्मणि निर्बाधस्थाने स्थिताः ᵛसुयज्ञाः सुष्ठुकृतयज्ञाः ᵛकवयः मेधाविनो यजमानाः ᵛप्रणीती तव हविषां प्रणयनेन प्रापणेन ᵛआ समन्तात् ᵛविवासन्ति त्वामेव परिचरन्ति । विवासतिः परिचरणकर्मा ॥ शार्याते । शर्यातेरयमित्यर्थे 'तस्येदम्' इत्यण्प्रत्ययः । अपिबः । यथायोगादनिघातः । अडागमस्वरः । प्रणीती । नयतेर्भावे क्तिन् । 'तादौ च निति कृति°' इति गतेः प्रकृतिस्वरत्वम्[5] । 'सुपां सुलुक्°' इति तृतीयायाः सवर्णदीर्घः । 'उपसर्गादसमासेऽपि°[6]' इति[6] णत्वम् ॥

**स वा॑वशा॒न इ॒ह पा॑हि॒ सोमं॑ म॒रुद्भि॑रिन्द्र॒ सखि॑भिः सु॒तं नः॑ ।**

**जा॒तं यत्त्वा॒ परि॑ दे॒वा अभू॑षन्म॒हे भरा॑य पुरुहू॒त विश्वे॑ ॥ ८ ॥**

सः । वा॒व॒शा॒नः । इ॒ह । पा॒हि॒ । सोम॑म् । म॒रुत्ऽभिः॑ । इ॒न्द्र॒ । सखि॑ऽभिः । सु॒तम् । न॒ः ।

जा॒तम् । यत् । त्वा॒ । परि॑ । दे॒वाः । अभू॑षन् । म॒हे । भरा॑य । पु॒रु॒ऽहू॒त॒ । विश्वे॑ ॥ ८ ॥

हे ᵛइन्द्र ᵛवावशानः सोमं कामयमानः ᵛसः तादृशस्त्वं ᵛसखिभिः समानख्यानैः ᵛमरुद्भिः सह ᵛनः अस्मत्संबन्धिनि ᵛइह अस्मिन् यज्ञे ᵛसुतम् अभिषुतं ᵛसोमं ᵛपाहि पिब । हे ᵛपुरुहूत पुरुभिः बहुभिः[7] आहूतेन्द्र ᵛजातं सोमपानेन[8] प्रबलं संपन्नं ᵛयत् यं त्वां ᵛविश्वे सर्वे ᵛदेवाः ᵛमहे महते

---

१. ज—नूतनम् । २. ख-ग-च-ण-फ-भ-स—नवतरस्य । ३. ख-ग-च-भ—गुणः कृतः । ४. ख-ग-घ-च-ज-ण-न-फ-भ-ल-स—अत्र । ५. ख-ग-च-ज-ण-भ—प्रकृतिः । ६. ख-ग-च-न-फ-भ—असमासेऽपि; त-ल-स—असमासेति । ७. ख-ग-च-न-फ-भ-स—'बहुभिः' नास्ति । ८. न-ल-स—पानेन ।

ᵛभराय । ह्रियन्ते योधानामायूंष्यत्रेति भरः संग्रामः । तस्मै संग्रामाय ᵛपरि ᵛअभूषन् सर्वतोऽलमकुर्वन्॥ वावशानः । वशेर्यङ्लुकि चानशि रूपम् । चित्त्वादन्तोदात्तः । अभूषन् । ‘ भूष अलंकारे ’ । भूवादिः । लङि रूपम् । यद्योगादनिघातः । भराय । ‘ हृञ् हरणे ’ । अधिकरणे घः । ‘ हृग्रहोर्भश्छन्दसि ’ इति हकारस्य भकारः । वृषादित्वादाद्युदात्तः ॥

अप्तूर्ये मरुत आपिरेषोऽमन्दन्निन्द्रमनु दातिवाराः ।

तेभिः साकं पिबतु वृत्रखादः सुतं सोमं दाशुषः स्वे सधस्थे ॥ ९ ॥

अप्ऽतूर्ये । मरुतः । आपिः । एषः । अमन्दन् । इन्द्रम् । अनु । दातिऽवाराः ।

तेभिः । साकम् । पिबतु । वृत्रऽखादः । सुतम् । सोमम् । दाशुषः । स्वे । सधऽस्थे ॥९॥

हे ᵛमरुतः यः ᵛएषः इन्द्रः ᵛअप्तूर्ये अपां प्रेरणे ᵛआपिः युष्माकं सखा सन् वर्तते ᵛदातिवाराः । वारो वरणीयं बलं धनं वा । दत्तबला दत्तधना वा । ते मरुतस्तम् ᵛइन्द्रमनु ᵛअमन्दन् अहृष्यन् । ᵛवृत्रखादः वृत्रस्य हिंसकः स इन्द्रः ᵛतेभिः तैर्मरुद्भिः ᵛसाकं ᵛदाशुषः हविर्दत्तवतो यजमानस्य ᵛस्वे स्वकीये ᵛसधस्थे । सह तिष्ठन्त्यस्मिन्निति सधस्थं गृहम् । तस्मिन् ᵛसुतम् अभिषुतं ᵛसोमं ᵛपिबतु ॥ अप्तूर्ये । ‘ तूरी त्वराहिंसयोः ’ इत्यस्मात् ‘ अघ्न्यादयश्च ’ इति यत्प्रत्ययः[1] । ‘ यतोऽनावः ’ इत्याद्युदात्तः । समासे कृदुत्तरपदस्वरः । अमन्दन् । मदि स्तुत्यादिषु । परस्मैपदी । पादादित्वादनिघातः । वृत्रखादः । ‘ खाद भक्षणे ’ । कर्मण्यण् । दाशुषः । ‘ दाशृ दाने ’ इत्यस्य क्वसौ ‘ दाश्वान्साह्वान्मीढ्वांश्च ’ इति द्विर्वचनाद्यभावः । वसोः संप्रसारणम् । प्रत्ययस्वरः । सधस्थे । ‘ सध मादस्थयोश्छन्दसि ’ इति सहस्य सधादेशः ॥

इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्वस्य गिर्वणः ॥ १० ॥

इदम् । हि । अनु । ओजसा । सुतम् । राधानाम् । पते । पिब । तु । अस्य । गिर्वणः ॥१०॥

हे ᵛराधानां ᵛपते धनानां स्वामिन् ᵛगिर्वणः गीर्भिः स्तुतिभिर्वननीय हे इन्द्र ᵛइदम् ᵛअनु अनेनानुक्रमेण । उद्देशानुक्रमेणेत्यर्थः । ᵛओजसा बलेन ग्रावभिः ᵛसुतम् अभिषुतम् ᵛअस्य[2] इमं[2] सोमं ᵛतु क्षिप्रं ᵛपिब ᵛहि ॥

यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम् । स त्वा ममत्तु सोम्यम् ॥ ११ ॥

यः । ते । अनु । स्वधाम् । असत् । सुते । नि । यच्छ । तन्वम् ।

सः । त्वा । ममत्तु । सोम्यम् ॥ ११ ॥

---

१. ज-ण-यक्प्रत्ययः । २. ख-ग-च-न-फ-भ-ल-स-‘ अस्य इमं ’ नास्ति ।

हे इन्द्र ˇते[1] त्वदर्थं ˇयः सोमः ˇस्वधाम् अन्नम् ˇअनु अनुसृत्य ग्रावभिरभिषुतः ˇअसत् ˇसुते तस्मिन् सोमे ˇतन्वं स्वकीयं शरीरं ˇनि ˇयच्छ प्रेरय । ˇसः सोमः ˇसोम्यं सोमार्हं ˇत्वा त्वां ˇममत्तु मादयतु ॥ असत् । अस्तेर्लेट्यडागमे रूपम् । यद्वृत्तयोगादनिघातः । आगमस्यानुदात्तत्वे[2] धातुस्वरः ॥

**प्र तें अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः । प्र बाहू शूर राधसे ॥ १२ ॥**

प्र । ते । अश्नोतु । कुक्ष्योः । प्र । इन्द्र । ब्रह्मणा । शिरः । प्र । बाहू इति । शूर । राधसे ॥१२॥

हे ˇइन्द्र स सोमः ˇते तव ˇकुक्ष्योः कुक्षेरुभयोः पार्श्वयोः उभौ[3] पार्श्वौ[3] ˇप्र ˇअश्नोतु प्रकर्षेण व्याप्नोतु । तथा ˇब्रह्मणा स्तोत्रेण सहितः स सोमः ˇशिरः शरीरम् । अवयवादिनावयवी लक्ष्यते । त्वच्छरीरं ˇप्र अश्नोतु । हे ˇशूर इन्द्र ˇराधसे धनाय तव[4] ˇबाहू अपि ˇप्र अश्नोतु ॥ अश्नोतु । 'अशू व्याप्तौ' इत्यस्य लोटि व्यत्ययेन परस्मैपदम् । निघातः । कुक्ष्योः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ॥　　॥ १६ ॥

'धानावन्तम्' इत्यष्टर्चं चतुर्दशं सूक्तं वैश्वामित्रमैन्द्रम् । अत्रेयमनुक्रमणिका—'धानावन्तमष्टौ पूर्वार्धं गायत्रं षष्ठी जगती' इति । आदितश्चतस्रो गायत्र्यः 'तृतीये धानाः' इति षष्ठी जगती शिष्टास्त्रिष्टुभः । सूक्तविनियोगो लिङ्गादवगन्तव्यः । प्रातःसवनीयपुरोडाशस्यानुवाक्या 'धानावन्तम्' इत्याद्या । सूत्रितं च—'धानावन्तं करम्भिणमिति प्रातःसवनेऽनुवाक्या' (आश्व. श्रौ. ५.४) इति॥

**धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः ॥ १ ॥**

धानाऽवन्तम् । करम्भिणम् । अपूपऽवन्तम् । उक्थिनम् । इन्द्र । प्रातः । जुषस्व । नः ॥१॥

हे ˇइन्द्र ˇधानावन्तम् । धाना भृष्टयवाः । तद्वन्तं ˇकरम्भिणम् । करम्भो दधिमिश्राः सक्तवः । तद्वन्तम् ˇअपूपवन्तं सवनीयपुरोडाशोपेतम् ˇउक्थिनं शस्त्रिणं ˇनः अस्मदीयमिमं सोमं ˇप्रातः प्रातःसवने ˇजुषस्व सेवस्व ॥ प्रातः । स्वरादिषु[5] अन्तोदात्तत्वेन पठितत्वादन्तोदात्तः ॥

**पुरोळाशं पचत्यं जुषस्वेन्द्रा गुरस्व च । तुभ्यं हव्यानि सिस्रते ॥ २ ॥**

पुरोळाशम् । पचत्यम् । जुषस्व । इन्द्र । आ । गुरस्व । च । तुभ्यम् । हव्यानि । सिस्रते ॥२॥

हे ˇइन्द्र ˇपचत्यं पचने साधुं ˇपुरोडाशम्[6] । पुरो दाशन्त एनमिति पुरोडाशो हविः । ˇजुषस्व । किंच ˇआ ˇगुरस्व । पुरोडाशभक्षणार्थमुद्यमं कुरु । ˇहव्यानि हवनयोग्यानि पुरोडाशादीनि हवींषि ˇतुभ्यं त्वदर्थं ˇसिस्रते आहवनीयं गच्छन्ति । तानि सेवस्वेति भावः ॥ पचत्यम् । पचतशब्दात् 'तत्र साधुः' इति यत्प्रत्ययान्तस्य पदस्य द्व्यच्त्वाभावात्[7] अत्र 'यतोऽनावः' इत्यस्य प्राप्तिर्नास्ति। तित्स्वरितः । गुरस्व । 'गुरी उद्यमने' । शविकरणी । निघातः । सिस्रते । 'सृ गतौ' । छन्दसि जुहोत्यादिः । व्यत्ययेनात्मनेपदम् ॥

---

१. ख-ग-च-न-फ-भ-ल-स-'ते' नास्ति ।　२. च—आगमानुदात्तत्वे ।　३. ख-ग-च-ज-ण-त-न-भ-ल-स—'उभौ पार्श्वौ' नास्ति ।　४. ख-ग-च-ज-ण-न-भ-ते ।　५. ज-ण—घृतादिषु ।　६. त—पुरोळाशम् ।　७. च—द्व्यच्कत्वाभावात् ।

पुरोळाशं च नो घसो जोषयासे गिरश्च नः। वधूयुरिव योषणाम् ॥३॥

पुरोळाशम्। च। नः। घसः। जोषयासे। गिरः। च। नः। वधूयुःऽइव। योषणाम् ॥३॥

हे इन्द्र ᵛनः अस्मत्संबन्धिनं ᵛपुरोडाशं ᵛघसः भक्षय ᵛच। ᵛनः अस्मदीयाः स्तुतिलक्षणाः ᵛगिरश्च[1] ᵛजोषयासे सेवस्व[1]। तत्र दृष्टान्तः। ᵛवधूयुरिव ᵛयोषणाम्। यथा वधूयुः स्त्रीकामो योषणां भजनीयां युवतिं सेवते तद्वत्॥ घसः। 'घस्लृ अदने' इत्यस्य लेट्यडागमे रूपम्। 'चवायोगे प्रथमा' इति न निघातः। जोषयासे। 'जुषी प्रीतिसेवनयोः' इत्यस्य ण्यन्तस्य लेट्याडागमे रूपम्। आगमस्यानुदात्तत्वे णिच्स्वरः। पादादित्वादनिघातः। वधूयुरिव। 'सुप आत्मनः क्यच्'। 'क्याच्छन्दसि' इत्युप्रत्ययः। प्रत्ययस्वरः। योषणाम्। 'युष भजने' इति सौत्रो धातुः। 'कृत्यल्युटो बहुलम्' इति ल्युट्। लित्स्वरः॥

पुरोळाशं सनश्रुत प्रातःसावे जुषस्व नः। इन्द्र क्रतुर्हि ते बृहन् ॥ ४ ॥

पुरोळाशम्। सनऽश्रुत। प्रातःऽसावे। जुषस्व। नः। इन्द्र। क्रतुः। हि। ते। बृहन् ॥४॥

हे ᵛसनश्रुत पुराणतया प्रसिद्ध हे ᵛइन्द्र ᵛनः अस्मत्संबन्धिनमिमं ᵛपुरोडाशं ᵛप्रातःसावे। सूयतेऽत्र सोम इति सावः। तस्मिन् प्रातःसवने ᵛजुषस्व। यतः ᵛते तव ᵛक्रतुः कर्म ᵛबृहन् महत् ᵛहि॥ प्रातःसावे। 'षुञ् अभिषवे'। कर्मणि घञ्। प्रादिसमासः। थाथादिस्वरेणान्तोदात्तः॥

माध्यंदिनसवने सवनीयपुरोडाशस्य[2] 'माध्यंदिनस्य सवनस्य धानाः' इत्यनुवाक्या। सूत्रितं च—'माध्यंदिनस्य सवनस्य धाना इति माध्यंदिने' (आश्व. श्रौ. ५. ४) इति॥

माध्यंदिनस्य सवनस्य धानाः पुरोळाशमिन्द्र कृष्वेह चारुम्।
प्र यत्स्तोता जरिता तूर्ण्यर्थो वृषायमाण उप गीर्भिरीट्टे ॥ ५ ॥

माध्यंदिनस्य। सवनस्य। धानाः। पुरोळाशम्। इन्द्र। कृष्व। इह। चारुम्।
प्र। यत्। स्तोता। जरिता। तूर्णिऽअर्थः। वृषऽयमाणः। उप। गीःऽभिः। ईट्टे ॥ ५॥

हे ᵛइन्द्र ᵛमाध्यंदिनस्य मध्यंदिने भवस्य ᵛसवनस्य संबन्धिनीः ᵛधानाः भृष्टयवान् ᵛचारुं कमनीयं ᵛपुरोडाशं च ᵛइह कर्मणि आगत्य ᵛकृष्व भक्षणेन संस्कुरु। ᵛयत् यदा ᵛजरिता भवत्परिचरणं[3] कुर्वाणः ᵛतूर्ण्यर्थः त्वां स्तोतुमितस्ततस्त्वरितगमनः अत एव ᵛवृषायमाणः वृषेवाचरन् ᵛस्तोता ᵛगीर्भिः स्तुतिलक्षणाभिर्वाग्भिः ᵛउप समीपे ᵛप्र ᵛईट्टे प्रकर्षेण स्तौति। तदा पुरोडाशादिहवींषि भक्षयेति भावः॥ माध्यंदिनस्य। मध्यंदिनशब्दात् तत्र भवार्थे उत्सादित्वादञ्। ञित्वादाद्युदात्तः। चारुम्। 'चर गतिभक्षणयोः'। 'दृसनिजनिचरिचटिरहिभ्यो ञुण्' इति ञुण्। णित्त्वादुपधावृद्धिः।

---

१. ल–गिरो जोषयासे सेवस्व च। २. ख-ग-च-ज-ण-फ-भ–सवनीयपुरोडाशे। ३. प–तव परिचरणम्।

जित्त्वादाद्युदात्तः । तूर्ण्यर्थः । तूर्णिः । 'जित्वरा संभ्रमे' इत्यस्मात् 'वहिश्रि°' इत्यादिना निप्रत्ययो निच्च । अर्थः । 'ऋ गतौ' । 'उषिकुषिगार्तिभ्यस्थन्' इति थन् । बहुव्रीहौ पूर्वपदस्वरः । वृषायमाणः । वृषेवाचरतीत्यर्थे 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । 'अकृत्सार्वधातुकयोर्दीर्घः' । ङित्त्वात् 'अनुदात्तङितः°' इत्यात्मनेपदम् । लट् । शानच् । तस्य लसार्वधातुकस्वरे धातुस्वरः । ईट्टे । 'ईड स्तुतौ' इत्यस्य लटि रूपम् । यद्योगादनिघातः ॥ ॥ १७ ॥

तृतीयसवने सवनीयपुरोडाशस्य 'तृतीये धानाः' इत्यनुवाक्या । सूत्रितं च—'तृतीये धानाः सवने पुरुष्टुतेति तृतीयसवने' ( आश्व. श्रौ. ५. ४ ) इति ॥

तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः ।
ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उप शिक्षेम धीतिभिः ॥ ६ ॥

तृतीये । धानाः । सवने । पुरुऽस्तुत । पुरोळाशम् । आऽहुतम् । ममहस्व । नः ।
ऋभुऽमन्तम् । वाजऽवन्तम् । त्वा । कवे । प्रयस्वन्तः । उप । शिक्षेम । धीतिऽभिः ॥ ६ ॥

हे ᵛपुरुष्टुत पुरुभिर्बहुभिः स्तोतृभिः स्तुत हे इन्द्र ᵛतृतीये ᵛसवने ᵛनः अस्मदीयान्[1] ᵛधानाः हुतान् भृष्टयवान् ᵛआहुतं ᵛपुरोळाशं च ᵛमामहस्व भक्षणेन महय[2] संभावय[2] । हे ᵛकवे इन्द्र ᵛप्रयस्वन्तः संभृतहविष्का वयम् ᵛऋभुमन्तम् । ऋभवो ये केचन देवास्तद्वन्तं ᵛवाजवन्तम् । वाजो नाम सुधन्वनः पुत्रस्तद्वन्तं ᵛत्वा[3] त्वां[3] ᵛधीतिभिः स्तुतिभिः ᵛउप ᵛशिक्षेम समीपे परिचरेम ॥ आहुतम् । जुहोतेः कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः स्वरः । मामहस्व । 'मह पूजायाम्' इत्यस्य यङ्लुगन्तस्य लोटि व्यत्ययेनात्मनेपदम् । शपो लुगभावश्छान्दसः[4] । शिक्षेम । शिक्षतेः आशीर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्ययः । निघातः । धीतिभिः । 'हिष्टवत्सरतिशत्थान्तानाम्' इत्यन्तोदात्तत्वम् ॥

पूषण्वते ते चकृमा करम्भं हरिवते हर्यश्वाय धानाः ।
अपूपमद्धि सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ॥ ७ ॥

पूषण्ऽवते । ते । चकृम । करम्भम् । हरिऽवते । हरिऽअश्वाय । धानाः ।
अपूपम् । अद्धि । सऽगणः । मरुत्ऽभिः । सोमम् । पिब । वृत्रऽहा । शूर । विद्वान् ॥ ७ ॥

हे इन्द्र ᵛपूषण्वते । पूषा नाम कश्चिद्देवोऽदन्तकः[5] । तद्वते ᵛते तुभ्यं ᵛकरम्भं दधिमिश्रं सक्तुं ᵛचकृम भक्षणार्थं कुर्मः । तथा च श्रुतिः—'पूषा प्रपिष्टभागोऽदन्तको हि' ( तै. सं. २. ६. ८. ५ ) इति । ᵛहरिवते । हरिनामकावश्वौ तद्वते ᵛहर्यश्वाय हरितवर्णाश्वयुक्तायेन्द्राय तुभ्यं धानाः चकृम[6] भक्षणार्थं

---

१. ख-ग-घ-च-ज-ण-प-भ-ल—अस्मदीयाः । २. ख-ग-च-भ—महयस्व; घ-ज-ण—महय; न-स—महस्व । ३. ख-ग-च-ल—त्वा; न-भ-स—त्वाम् । ४. त—°छान्दसः । निघातः । ५. प—कश्चन देवः । ६. न-ल-स—'चकृम' नास्ति ।

कुर्मः। तथा च मन्त्रवर्णः–'प्रसेतामश्वा वि मुचेह शोणा दिवेदिवे सदृशीरद्धि धानाः' (ऋ. सं. ३.३५.३) इति । ᵛमरुद्भिः ᵛसगणः त्वम् ᵛअपूपं पुरोडाशम् ᵛअद्धि भक्षय । हे ᵛशूर असहाय हे इन्द्र ᵛवृत्रहा वृत्रस्य हन्ता ᵛविद्वान् सर्वं जानानस्त्वं ᵛसोमं ᵛपिब ॥ पूषण्वते । पूषशब्दस्य[1] मतुप् । 'अनो नुट्' इति नुडागमः । 'रषाभ्याम्°' इति णत्वम् । चकृम । करोतेश्छान्दसे वर्तमाने लिटि क्रादित्वात्[2] इडभावः । निघातः । हरिवते । 'छन्दसीरः' इति मतुपो वत्वम् ॥

प्रति॑ धा॒ना भ॑रत॒ तूय॑मस्मै पु॒रो॒ळाशं॑ वी॒रत॑माय नृ॒णाम् ।
दि॒वेदि॑वे स॒दृशी॑रिन्द्र॒ तुभ्यं॒ वर्ध॑न्तु त्वा सोम॒पेया॑य धृष्णो ॥ ८ ॥

प्रति॑ । धा॒नाः । भ॒र॒त॒ । तूय॑म् । अ॒स्मै॒ । पु॒रो॒ळाश॑म् । वी॒रऽत॑माय । नृ॒णाम् ।
दि॒वेऽदि॑वे । स॒ऽदृशीः॑ । इ॒न्द्र॒ । तुभ्य॑म् । वर्ध॑न्तु । त्वा॒ । सो॒म॒ऽपेया॑य । धृ॒ष्णो॒ इति॑ ॥ ८ ॥

यजमानोऽध्वर्य्वादीन् प्रति ब्रूते । हे अध्वर्य्वादयः ᵛअस्मै इन्द्राय ᵛधानाः ᵛतूयं क्षिप्रं ᵛप्रति[3] ᵛभरत संपादयत । ᵛनृणां ᵛवीरतमाय अस्मै इन्द्राय ᵛपुरोडाशं च संपादयत । अथ प्रत्यक्षकृतः। हे ᵛधृष्णो शत्रूणामभिभवनशील हे ᵛइन्द्र ᵛसदृशीः एकविधाः स्तुतयः ᵛतुभ्यं त्वदर्थं ᵛदिवेदिवे प्रतिदिवसम् अस्माभिः क्रियन्ते। ताः स्तुतयः ᵛसोमपेयाय सोमपानार्थं ᵛत्वा[4] त्वां[4] ᵛवर्धन्तु उत्साहेन प्रवृद्धं कुर्वन्तु ॥ सदृशीः । 'समानान्ययोश्च' इति कञ्प्रत्ययः । 'टिड्ढाणञ्°' इत्यादिना ङीप् । '°दृग्दृशवतुषु' इति समानस्य सभावः ॥ ॥ १८ ॥

'इन्द्रापर्वता' इति चतुर्विंशत्यृचं पञ्चदशं सूक्तम् । अत्रेयमनुक्रमणिका—'इन्द्रापर्वता चतुर्विंशतिराद्यैन्द्रापार्वती पञ्चदश्यादिद्वे वाचे ससर्पर्यै चतस्रो रथाङ्गस्तुतयोऽन्त्या अभिशापास्ता वसिष्ठद्वेषिण्यो न वसिष्ठाः शृण्वन्ति । दशमीषोडश्यौ जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्योऽनुष्टुभोऽष्टादशी बृहती' इति । विश्वामित्र ऋषिः । दशमी षोडशी च द्वे जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्यस्तिस्रोऽनुष्टुभोऽष्टादशी बृहती शिष्टास्त्रिष्टुभः । आद्येन्द्रापर्वतदेवताका पञ्चदशीषोडश्यौ वाग्देवत्ये तदुत्तराश्चतस्रो रथाङ्गदेवताकाः शिष्टा ऐन्द्र्यः ॥

इन्द्रा॑पर्वता बृह॒ता रथे॑न वा॒मीरिष॒ आ व॑हतं सु॒वीराः॑ ।
वी॒तं ह॒व्यान्य॑ध्व॒रेषु॑ देवा॒ वर्धे॑थां गी॒र्भिरिळ॑या॒ मद॑न्ता ॥ १ ॥

इन्द्रा॑पर्वता । बृ॒ह॒ता । रथे॑न । वा॒मीः । इषः॑ । आ । व॒ह॒त॒म् । सु॒ऽवीराः॑ ।
वी॒तम् । ह॒व्यानि॑ । अ॒ध्व॒रेषु॑ । दे॒वा॒ । वर्धे॑थाम् । गी॒ःऽभिः । इळ॑या । मद॑न्ता ॥ १ ॥

ᵛइन्द्रापर्वता इन्द्रश्च पर्वतश्च । हे इन्द्रापर्वतौ ᵛबृहता ᵛरथेन आगत्य ᵛवामीः वननीयाः ᵛसुवीराः शोभनपुत्रोपेताः ᵛइषः अन्नानि ᵛआ ᵛवहतम् अस्मदर्थं धारयतम् । प्रयच्छतमित्यर्थः ।

---

१. च-ज–पूषशब्दात् । २. ज-ण–क्रादिनियमात् । ३. ख-ग-च-ज-ण-न-भ-स–'प्रति' नास्ति ।
४. ख-ग-न-भ-स–त्वाम्; च-ल–त्वा ।

किंच हे देवौ द्योतमानौ ᵛअध्वरेषु अस्मत्संबन्धिषु यज्ञेषु ᵛहव्यानि हवनयोग्यानि पुरोडाशादीनि हवींषि ᵛवीतं भक्षयतम् । तथा ᵛइळया अस्माभिर्दत्तेन हविषा ᵛमदन्ता हृष्यन्तौ युवां ᵛगीर्भिः स्तुतिलक्षणाभिः[1] अस्मदीयाभिर्वाग्भिः ᵛवर्धेथां समृद्धौ भवतम् ॥ इन्द्रापर्वता । आमन्त्रितस्य पादादित्वात् पाष्ठिकमाद्युदात्तत्वम् । सुवीराः । बहुव्रीहौ ' वीरवीर्यौ च ' इत्युत्तरपदाद्युदात्तत्वम् । वीतम् । वी कान्त्यादिषु इत्यस्य लोटि अदादित्वाच्छपो लुक् । प्रत्ययस्वरः । वर्धेथाम् । ' वृधु वृद्धौ ' इत्यस्य लोटि आथामो लसार्वधातुकस्वरे धातुस्वरः ॥

अहर्गणेष्वन्त्यवर्जितेष्वहःसु हारियोजनस्य[2] ' तिष्ठा सु कम् ' इत्यनुवाक्या । सूत्रितं च—' तिष्ठा सु कं मघवन्मा परागा अयं यज्ञो देवया अयं मियेधः ' ( आश्व. श्रौ. ६. ११ ) इति ॥

तिष्ठा सु कं मघवन्मा परा गाः सोमस्य नु त्वा सुषुतस्य यक्षि ।
पितुर्न पुत्रः सिचमा रभे त इन्द्र स्वादिष्ठया गिरा शचीवः ॥ २ ॥

तिष्ठ । सु । कम् । मघऽवन् । मा । परा । गाः । सोमस्य । नु । त्वा । सुऽसुतस्य । यक्षि ।
पितुः । न । पुत्रः । सिचम् । आ । रभे । ते । इन्द्र । स्वादिष्ठया । गिरा । शचीऽवः ॥ २ ॥

हे ᵛमघवन् धनवन्निन्द्र ᵛकं सुखेनास्मिन् यज्ञे ᵛसु ᵛतिष्ठ सुष्ठु कंचित्कालमत्र तिष्ठ । ᵛमा ᵛपरा ᵛगाः अस्मदीयाद्यज्ञान्मा गच्छ । तत्र कारणमाह । ᵛसुषुतस्य सुष्ठभिषुतेन ᵛसोमस्य सोमेन ᵛनु क्षिप्रं ᵛत्वा[3] त्वां[3] ᵛयक्षि यजे । हे ᵛशचीवः शक्तिमन् ᵛइन्द्र ᵛते तव ᵛसिचं वस्त्रप्रान्तं ᵛस्वादिष्ठया स्वादुतरया स्तुतिलक्षणया ᵛगिरा ᵛआ ᵛरभे आलभे । गृह्णामीत्यर्थः । तत्र दृष्टान्तः । ᵛपितुर्न । यथा ᵛपुत्रः मधुरया वाचा पितुर्जनकस्य चेलाञ्चलं[4] गृह्णाति तद्वत् ॥ सु कमिति निपातद्वयम् । प्रथमस्य ' निपाता आद्युदात्ताः ' इत्याद्युदात्तत्वम् । द्वितीयस्य ' चादयोऽनुदात्ताः ' इत्यनुदात्तत्वम् । सोमस्य यक्षि । ' यज देवपूजासंगतिकरणदानेषु ' । ' स्वरितञितः॰' इत्यात्मनेपदम् । तस्य लुङि सिचि ' एकाचः॰' इतीट्प्रतिषेधः । व्रश्चादिना षत्वम् । ' षढोः कः सि ' इति कत्वम् । सिचः सकारस्य षत्वम् । निघातः । रभे । ' डुलभष् प्राप्तौ ' । लट्युत्तम इटि रूपम् । रलयोरभेदः । निघातः । स्वादिष्ठया । स्वादुशब्दादिष्ठनि रूपम् । नित्स्वादाद्युदात्तः ॥

शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।
एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम् ॥ ३ ॥

शंसाव । अध्वर्यो इति । प्रति । मे । गृणीहि । इन्द्राय । वाहः । कृणवाव । जुष्टम् ।
आ । इदम् । बर्हिः । यजमानस्य । सीद । अथ । च । भूत् । उक्थम् । इन्द्राय । शस्तम् ॥ ३ ॥

---

१. ख-ग-च-फ-भ-स–श्रुतिलक्षणाभिः । २. ख-ग-च-ज-ण-न-भ-स–' हारियोजनस्य ' नास्ति ।
३. ख-ग-न-भ–त्वाम्; च-ल–त्वा । ४. च-ज-ण–चैलाञ्चलम्; स–वस्त्राञ्चलम् ।

शंसिष्यन् होताध्वर्युं ब्रूते । हे अध्वर्यो आवां शंसाव । होतस्त्वमेव शंससि । कथमहं शंसानि । अत आह । प्रति मे गृणीहि इति । त्वं मे प्रतिगृणीहि । 'ओथामोदैव' इत्यादिकः[1] होतुरुत्साहजननः प्रतिगरः ( आश्व. श्रौ. ७. ११ ) । तं दस्व[2] । तथा इन्द्राय जुष्टं प्रीतियुक्तं वाहः स्तोत्रं कृणवाव करवाव[3] । त्वं यजमानस्य इदं बर्हिः अस्मिन् बर्हिषि आ सीद उपविश । अथ च अनन्तरम् इन्द्राय इन्द्रार्थमावाभ्यां क्रियमाणम् उक्थं शस्त्रं शस्तं[4] प्रशस्तं भूत् भवतु ॥ शंसाव । 'शंसु स्तुतौ' इत्यस्य लोटयुत्तमद्विवचने रूपम् । 'आडुत्तमस्य॰' इत्याडागमः । उत्तमस्य पिद्वद्भावादनुदात्तत्वे धातुस्वरः । मे । 'अनुप्रतिगृणश्च' ( पा॰ सू॰ १. ४. ४१ ) इति संप्रदानसंज्ञा । जुष्टम् । 'नित्यं मन्त्रे' इत्याद्युदात्तत्वम् ॥

जायेदस्तं मघवन्त्सेदु योनिस्तदित्त्वा युक्ता हरयो वहन्तु ।
यदा कदा च सुनवाम सोममग्निष्ट्वा दूतो धन्वात्यच्छ ॥ ४ ॥

जाया । इत् । अस्तम् । मघऽवन् । सा । इत् । ऊँ इति । योनिः ।
तत् । इत् । त्वा । युक्ताः । हरयः । वहन्तु ।
यदा । कदा । च । सुनवाम । सोमम् । अग्निः । त्वा । दूतः । धन्वाति । अच्छ ॥ ४ ॥

हे[5] मघवन् धनवन्निन्द्र[5] अस्तम् । अस्यन्ते क्षिप्यन्ते पदार्था अत्रेत्यस्तं गृहम् । जायेत् जायैव गृहं भवति । 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति स्मृतेः । तथा सेत् सा जायैव योनिः पुरुषस्य मिश्रणस्थानम् । उ प्रसिद्ध्यर्थः । तस्मात् तदित् तत्र गृहे एव[6] युक्ताः रथे योजिताः हरयः अश्वाः त्वा त्वां वहन्तु । वयं तु यदा कदा च त्वदर्थं सोमं सुनवाम अभिषुतं करवाम तदास्माभिः प्रहितः दूतः अग्निः त्वा त्वाम् अच्छ आभिमुख्येन धन्वाति गच्छेत् ॥ अस्तम् । 'असु क्षेपणे' । 'असिहसिमृग्रिण्वामि॰' इत्यादिना तन्प्रत्ययः । नित्त्वात् आद्युदात्तः । सुनवाम । 'षुञ् अभिषवे' इत्यस्य लोटि रूपम् । यद्वृत्तयोगादनिघातः । त्वा । 'युष्मत्तत्ततक्षुष्वन्तःपादम्' इति संहितायां षत्वम् । धन्वाति । धवि गत्यर्थः । लेटयाडागमे रूपम् । निघातः ॥

अहर्गणेऽन्त्यवर्जितेष्वहःसु हारियोजनस्य वैकल्पिकी 'परा याहि' इत्यनुवाक्या । 'परा याहि मघवन्ना च याहीति वानुवाक्या' ( आश्व. श्रौ. ६. ११ ) इति सूत्रितम् ॥

परा याहि मघवन्ना च याहीन्द्र भ्रातरुभयत्रा ते अर्थम् ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो रासभस्य ॥ ५ ॥

परा । याहि । मघऽवन् । आ । च । याहि । इन्द्र । भ्रातः । उभयत्र । ते । अर्थम् ।
यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । रासभस्य ॥ ५ ॥

---

१. ख-ग-च-फ-इत्याकारकः । २. ख-ग-च-ज-ण-वदस्व । ३. ख-ग-न-भ-स-'करवाव' नास्ति । ४. ख-ग-ज-ण-भ-स-'शस्तं' नास्ति । ५. ख-ग-च-ज-ण-न-भ-स-मघवन् धनवन् । ६. ल-एव यत्र ते जाया तिष्ठति ।

हे मघवन् धनवन् इन्द्र त्वं परा याहि अस्माद्देवयजनात् पराङ्मुखो गृहं प्रति गच्छ । अथवा देवयजनं प्रति आ याहि । हे भ्रातः पोषक उभयत्र अपि ते तव अर्थम् । अर्यते प्राप्यत इत्यर्थः प्रयोजनम् । अस्ति तत्र जाया अत्र सोमः । प्रयोजनान्तरमाह । यत्र गृहं प्रति गमने बृहतः महतः रथस्य उपरि निधानम् अवस्थानं प्रयोजनम् । अत्र स्थितौ रासभस्य हेषारवं कुर्वतः वाजिनः अश्वस्य रथात् विमोचनं प्रयोजनम् ॥ अर्थम् । 'ऋ गतौ' । 'उषिकुषिगार्तिभ्यस्थन्' इति थन् । नित्स्वरः । निधानम् । दधातेर्भावे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । रासभस्य । 'रासृ शब्दे' । 'रासिवल्लिभ्यां च' ( उ. सू. ३. ४०५ ) इति कर्तरि अभच्प्रत्ययः । ग्रामादित्वादाद्युदात्तः ॥ ॥ १९ ॥

अन्त्येष्वहःसु हारियोजनस्य 'अपाः सोमम्' इत्यनुवाक्या । सूत्रितं च— 'हारियोजनोऽपाः सोमभस्तमिन्द्र प्र याहि' ( आश्व. श्रौ. ६. ११ ) इति ॥

**अपाः सोमुमस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते ।**
**यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ ६ ॥**

अपाः । सोमम् । अस्तम् । इन्द्र । प्र । याहि । कल्याणीः । जाया । सुऽरणम् । गृहे । ते ।
यत्र । रथस्य । बृहतः । निऽधानम् । विऽमोचनम् । वाजिनः । दक्षिणाऽवत् ॥ ६ ॥

हे इन्द्र सोमम् अपाः । अत्रैव स्थित्वा सोमं पिब । पीत्वा अस्तं गृहं प्र याहि प्रकर्षेण गच्छ । ते तव गृहे कल्याणीः मङ्गलकारिणी जाया शची विद्यते । सुरणं शोभनगीतादिध्वनिश्चास्ति । यद्वा[1] । सुरणं सुरमणीयं यथा भवति तथा गृहे जाया तिष्ठति[1] । यत्र इत्यादि गतम् । दक्षिणावत् । अत्र स्थितौ सत्यां रथे योजितानां वाजिनां विमोचनं खादनपानादिना दक्षिणावत् प्रयोजनवद्भवति । विमुक्तेभ्यो वाजिभ्यः खादनं पानं चोपहरन्ति ॥ अपाः । 'पा पाने' । लुङि 'गातिस्था°' इति सिचो लुक् । अडागमस्वरः । कल्याणीः । कल्याणमस्यास्तीति मत्वर्थे 'छन्दसीवनिपौ°' इति ईप्रत्ययः । प्रत्ययस्वरः । सुरणम् । रण शब्दार्थः । अस्मादकृच्छ्रार्थे खल् । लित्स्वरः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । समासे कृदुत्तरपदस्वरः ॥

**इमे भोजा अङ्गिरसो विरूपा दिवस्पुत्रासो असुरस्य वीराः ।**
**विश्वामित्राय ददतो मघानि सहस्रसावे प्र तिरन्त आयुः ॥ ७ ॥**

इमे । भोजाः । अङ्गिरसः । विऽरूपाः । दिवः । पुत्रासः । असुरस्य । वीराः ।
विश्वामित्राय । ददतः । मघानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ॥ ७ ॥

हे इन्द्र इमे यागं कुर्वाणाः भोजाः सौदासाः क्षत्रियास्तेषां याजकाः विरूपाः नानारूपाः मेधातिथिप्रभृतयः अङ्गिरसः च दिवः असुरस्य देवेभ्योऽपि बलवतो रुद्रस्य पुत्रासः पुत्राः वीराः

---

१. ख-ग-च-ज-ण-न-भ-स-'यद्वा...तिष्ठति' नास्ति ।

बलवन्तो मरुतः ते सर्वे ᵛविश्वामित्राय मह्यं ᵛसहस्रसावे । सहस्रं सूयतेऽत्रेति सहस्रसावोऽश्वमेधः । तस्मिन्नश्वमेधे ᵛमघानि मंहनीयानि[1] धनानि ᵛददतः प्रयच्छन्तः सन्तः ᵛआयुः जीवनमन्नं वा ᵛप्र ᵛतिरन्ते प्रकर्षेण वर्धयन्ति ॥ दिवस्पुत्रास इति संहितायां ' षष्ठ्याः पतिपुत्र° ' इति विसर्जनीयस्य सत्वम् । ददतः । ' डुदाञ् दाने ' इत्यस्य शतरि रूपम् । ' अभ्यस्तानामादिः ' इत्याद्युदात्तत्वम् । तिरन्ते । तरतेर्व्यत्ययेन शः ॥

**रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं१ परि स्वाम् ।**
**त्रिर्यद्दिवः परि मुहूर्तमागात्स्वैर्मन्त्रैरनृतुपा ऋतावा ॥ ८ ॥**

रूपम्ऽरूपम् । मघऽवा । बोभवीति । मायाः । कृण्वानः । तन्वम् । परि । स्वाम् ।

त्रिः । यत् । दिवः । परि । मुहूर्तम् । आ । अगात् । स्वैः । मन्त्रैः । अनृतुऽपाः । ऋतऽवा ॥८॥

ᵛमघवा धनवानिन्द्रः ᵛरूपंरूपं यद्यद्रूपं कामयते तत्तद्रूपं ᵛबोभवीति भृशं[2] प्राप्नोति[2] । तत्तद्रूपात्मको भवति । तत्र कारणमुच्यते । ᵛमायाः अनेकरूपग्रहणसामर्थ्योपेताः ᵛकृण्वानः कुर्वाणः ᵛस्वां ᵛतन्वं स्वकीयां तनूम् । ᵛपरि पञ्चम्यर्थे । स्वस्माच्छरीरान्नानाविधानि शरीराणि निर्मिमीते । यद्वा स्वां तनूं नानाविधरूपोपेतां करोति । तथा च मन्त्रवर्णः–' इन्द्रो मायाभिः पुरुरूपः ' ( ऋ. सं. ६.४७.१८ ) इति । ᵛयत् यस्मात् ᵛस्वैर्मन्त्रैः स्वकीयैः स्तुतिलक्षणैर्वाक्यैराहूतः ᵛअनृतुपाः । न केवलमृतुष्वेव पिबति किंतु अनृतुष्वपि । बहुशः सोमं पिबन्नित्यर्थः । ᵛऋतावा सत्यवान् तादृश इन्द्रः ᵛदिवः स्वर्गलोकात् ᵛपरि ᵛमुहूर्तम् एकस्मिन्नेव मुहूर्ते नानादेशवर्तिषु यज्ञेषु तत्रापि ᵛत्रिः त्रिषु सवनेषु ᵛआगात् आगच्छति ॥ बोभवीति । भवतेर्यङ्लुकि तिपि ' यङो वा ' इतीडागमः । निघातः । अगात् । इणो लुङि रूपम् । यद्वृत्तयोगादनिघातः ॥

**महाँ ऋषिर्देवजा देवजूतोऽस्तभ्नात्सिन्धुमर्णवं नृचक्षाः ।**
**विश्वामित्रो यदवहत्सुदासमप्रियायत कुशिकेभिरिन्द्रः ॥ ९ ॥**

महान् । ऋषिः । देवऽजाः । देवऽजूतः । अस्तभ्नात् । सिन्धुम् । अर्णवम् । नृऽचक्षाः ।

विश्वामित्रः । यत् । अवहत् । सुऽदासम् । अप्रियायत । कुशिकेभिः । इन्द्रः ॥ ९ ॥

ᵛमहान् तपसा अतिशयितसामर्थ्यवान् ᵛऋषिः अतीन्द्रियार्थद्रष्टा ᵛदेवजाः द्योतमानानां तेजसां जनयिता ᵛदेवजूतः तैस्तेजोभिराकृष्टः ᵛनृचक्षाः नृणां कर्मनेतृणामध्वर्य्वादीनामुपद्रष्टा सः ᵛविश्वामित्रः ᵛअर्णवम् उदकवन्तं ᵛसिन्धुं विपाट्छुतुद्र्योः संभेदम्[3] ᵛअस्तभ्नात् निरुद्धवेगमकरोत् । किंच स विश्वामित्रः ᵛसुदासं पैजवनं राजानं ᵛयत् यदा ᵛअवहत् अयाजयत् तदानीम् ᵛइन्द्रः ᵛकुशिकेभिः कुशिकगोत्रोत्पन्नैर्ऋषिभिः सह ᵛअप्रियायत प्रिय इवाचरत् ॥ अवहत् । ' वह प्रापणे ' इत्यस्य लङि

१. ल–महनीयानि । २. ख-ग-घ-च-ज-ण-न-भ-स–' भृशं प्राप्नोति ' नास्ति । ३. ख-ग-घ-च-ज-ण-न-प-फ-भ-स– संभेदनम् ।

रूपम् । यद्योगादनिघातः । अप्रियायत । प्रिय इवाचरतीत्यर्थे 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । तदन्ताल्लङि रूपम् । पादादित्वादनिघातः ॥

हंसाइंव कृणुथ श्लोकमद्रिभिर्मदन्तो गीर्भिरध्वरे सुते सचा ।
देवेभिर्विप्रा ऋषयो नृचक्षसो वि पिबध्वं कुशिकाः सोम्यं मधु ॥ १० ॥

हंसाःऽइंव । कृणुथ । श्लोकम् । अद्रिऽभिः । मदन्तः । गीःऽभिः । अध्वरे । सुते । सचा ।
देवेभिः । विप्राः । ऋषयः । नृऽचक्षसः । वि । पिबध्वम् । कुशिकाः । सोम्यम् । मधु ॥ १० ॥

हे विप्राः मेधाविनो हे ऋषयः अतीन्द्रियार्थस्य द्रष्टारो हे नृचक्षसः नृणां कर्मनेतॄणां विशेषेण द्रष्टारो हे कुशिकाः कुशिकगोत्रोत्पन्ना हे पुत्राः अध्वरे यज्ञे अद्रिभिः ग्रावभिः सोमे सुते अभिषुते सति गीर्भिः मदन्तः स्तुतिभिर्देवान् मादयन्तो यूयं श्लोकम् । श्लोक्यते शस्यतेऽनेनेति श्लोकः शस्त्रम् । कृणुथ सम्यगुच्चारयत । तत्र दृष्टान्तः । हंसाइव । यथा हंसाः सम्यक् शब्दं कुर्वन्ति तद्वत् । किंच देवेभिः सचा यष्टव्यदेवैः सहिता यूयं सोम्यं सोममयं मधु मधुकरं रसं वि पिबध्वं परस्परव्यतिहारेण पिबत ॥ श्लोकम् । 'श्लोकृ शब्दे' । करणे घञ् । ञित्त्वादाद्युदात्तः । मदन्तः । 'मदी हर्षे' इत्यस्यान्तर्भावितण्यर्थस्य व्यत्ययेन शप् । पिबध्वम् । 'पा पाने' । 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम् । सोम्यम् । सोमशब्दात् 'मये च' इति यप्रत्ययः ॥ ॥ २० ॥

उप प्रेत कुशिकाश्चेतयध्वमश्वं राये प्र मुञ्चता सुदासः ।
राजा वृत्रं जङ्घनत्प्रागपागुदगथा यजाते वर आ पृथिव्याः ॥ ११ ॥

उप । प्र । इत । कुशिकाः । चेतयध्वम् । अश्वम् । राये । प्र । मुञ्चत । सुऽदासः ।
राजा । वृत्रम् । जङ्घनत् । प्राक् । अपाक् । उदक् । अथ । यजाते । वरे । आ । पृथिव्याः ॥ ११ ॥

हे कुशिकाः कुशिकगोत्रोत्पन्ना हे पुत्राः उप प्रेत अश्वस्य समीपे प्रकर्षेण गच्छत । तत्र गत्वा चेतयध्वं सावधाना भवत । यद्वा । अश्वरक्षिणः सावधानान् कुरुत । सुदासः पैजवनस्य राज्ञः अश्वं राये तस्य दिग्विजयेन धनलाभाय प्र मुञ्चत । राजा देवानां स्वामीन्द्रः वृत्रं कर्मविघ्नकारिणमसुरं प्रागपागुदक् पूर्वपश्चिमोत्तरेषु देशेषु जङ्घनत् भृशं हतवान् । तस्मादश्वं विमुञ्चतेति भावः । अथ अनन्तरं पृथिव्याः[1] वरे उत्तमे देवयजनदेशे यजाते स राजा यजेत ॥ चेतयध्वम् । 'चिती संज्ञाने' इत्यस्य ण्यन्तस्य लोटि रूपम् । आमन्त्रितस्याविद्यमानवत्त्वेन तिङ उत्तरत्वान्न निघातः । जङ्घनत् । 'हन हिंसागत्योः' इत्यस्य यङ्लुकि 'नुगतोऽनुनासिकान्तस्य' इत्यभ्यासस्य नुगागमः[2] । तदन्ताल्लेट्यडागमः । प्राक् । अञ्चतेः क्विनि रूपम् । 'अनिगन्तोऽञ्चतौ वप्रत्यये' इति गतेः स्वरः । यजाते । यजतेर्लेट्याडागमः । निघातः । वरे । 'वृञ् वरणे' इत्यस्मात् 'ग्रहवृदृनिश्चिगमश्च' इत्यप्प्रत्ययः । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः ॥

---

१. ष-ज-ण-आ पृथिव्याः । २. ज-नुगागमः । अभ्यासाच्च इति कुत्वम् ।

य इमे रोदसी उभे अहमिन्द्रमतुष्टवम् ।
विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ॥ १२ ॥

यः । इमे इति । रोदसी इति । उभे इति । अहम् । इन्द्रम् । अतुस्तवम् ।
विश्वामित्रस्य । रक्षति । ब्रह्म । इदम् । भारतम् । जनम् ॥ १२ ॥

हे कुशिकाः कुशिकपुत्राः यः अहं विश्वामित्रः उभे इमे रोदसी द्यावापृथिव्यौ इन्द्रमतुष्टवं स्तावयामि[1] । द्यावापृथिवीभ्यामिन्द्रस्य स्तोत्रं मया कारितमित्यर्थः । यद्वा । उभयो रोदस्योः अन्तरवस्थितम्[2] इन्द्रं स्तौमि । स्तोत्रं कुर्वाणस्य विश्वामित्रस्य मम इदम् इन्द्रविषयं ब्रह्म स्तोत्रं भारतं भरतकुलं[3] जनं[3] रक्षति पालयति ॥ अतुष्टवम् । 'ष्टुञ् स्तुतौ' । ण्यन्तस्य लुङि चङि रूपम् । यद्वृत्तयोगादनिघातः । भारतम् । भरतशब्द उत्सादिः । ञित्त्वादाद्युदात्तः ॥

विश्वामित्रा अरासत ब्रह्मेन्द्राय वज्रिणे । करदिन्नः सुराधसः ॥ १३ ॥

विश्वामित्राः । अरासत । ब्रह्म । इन्द्राय । वज्रिणे । करत् । इत् । नः । सुऽराधसः ॥ १३ ॥

विश्वामित्राः वज्रिणे वज्रहस्ताय इन्द्राय ब्रह्म स्तोत्रम् अरासत अकुर्वन् । स्तुतः स इन्द्रः नः अस्मान् सुराधसः शोभनधनोपेतान् करदित् करोत्वेव ॥ अरासत । 'रासृ शब्दे' इत्यस्य लङि 'बहुलं छन्दसि' इति शपो लुक् । निघातः । करत् । करोतेर्लुङि च्लेः 'कृमृदृरुहिभ्यश्छन्दसि' इत्यङादेशः । सुराधसः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ॥ १४ ॥

किम् । ते । कृण्वन्ति । कीकटेषु । गावः । न । आऽशिरम् । दुह्रे । न । तपन्ति । घर्मम् ।
आ । नः । भर । प्रऽमगन्दस्य । वेदः । नैचाऽशाखम् । मघऽवन् । रन्धय । नः ॥ १४ ॥

हे इन्द्र कीकटेषु अनार्यनिवासेषु जनपदेषु । यद्वा । क्रियाभिर्यागदानहोमलक्षणाभिः किं फलिष्यतीत्यश्रद्दधानाः प्रत्युत पिबत खादतायमेव लोको न पर इति वदन्तो नास्तिकाः कीकटाः तेषु । गावः ते तव किं कृण्वन्ति किं कुर्वन्ति । न क्वचित्तवोपयोगं कुर्वन्तीत्यर्थः । अनुपयोगं दर्शयति । आशिरं सोममिश्रणयोग्यं पयः न दुह्रे न दुहन्ति । किंच घर्मं प्रवर्ग्याख्यकर्मोपयुक्तं महावीरपात्रं स्वपयःप्रदानद्वारेण न तपन्ति न दीपयन्ति । एतेन सांनाय्याद्यर्थमपि नोपयुज्यन्ते इत्यपि सूचितं भवति । एवं क्वचिदपि वैदिके कर्मण्यनुपयुक्तास्ता गाः नः अस्मभ्यम् आ भर

---

१. ख-ग-च-ज-ण-न-भ—स्तौमि; घ—स्तवामि । २. ख-ग-च-ज-ण-न-भ-स—अन्तरस्थितम् ।
३. ख-ग-च-त-न-भ-ल-स—भरतकुलजनम् ।

आहर । न केवलं ता एव । किं तर्हि ^प्रमगन्दस्य । द्वैगुण्यादिलक्षणपरिमाणं गतोऽर्थो मामेव गमिष्यतीति बुद्ध्या परेषां ददातीति मगन्दो वार्धुषिकः । तस्यापत्यं पुत्रादिः प्रमगन्दः । प्रस्कण्वादिवदपत्यार्थः प्रशब्देन द्योत्यते । तस्यात्यन्तकुसीदिकुलस्य[1] ^वेदः धनमाहर । किंच हे ^मघवन् धनवन्निन्द्र ^नैचाशाखम् । नीचासु शूद्रयोनिषु उत्पादिता[2] शाखा[2] पुत्रपौत्रादिपरंपरा येन स नीचाशाखः । 'शूद्रापत्यैश्च[3] केवलैः' 'शूद्रावेदी* पतत्यधः' इति च पातकहेतुत्वेन स्मरणात् । पतितस्य संबन्धि धनं नैचाशाखम् । तद्धनं ^नः अस्मभ्यं ^रन्धय साधय । एतेषां तद्धनं[4] तव नोपयुज्यते अस्मदायत्तं तु तद्धनं यागादिद्वारा तवोपयुज्यते । तस्मात्तदस्मभ्यं प्रयच्छेति भावः ॥ एतमर्थं यास्कोऽप्याह—'किं ते कुर्वन्ति कीकटेषु गावः । कीकटा नाम देशोऽनार्यनिवासः । कीकटाः किंकृताः किं क्रियाभिः इतिप्रेप्सा:[5] वा । नैव चाशिरं दुह्रे न तपन्ति घर्मं घरणम्[6] । आ हर नः प्रमगन्दस्य धनानि । मगन्दः कुसीदी मांगदो मामागमिष्यतीति च ददाति । तदपत्यं प्रमगन्दः अत्यन्तकुसीदिकुलीनः[7] । प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः । पण्डको वा पण्डकः पण्डगः[8] प्रार्दको वा प्रार्दयत्याण्डौ । आण्डावाणी इव व्रीडयति । तत्स्थं नैचाशाखम् । नीचाशाखो नीचैःशाखः । शाखाः शक्नोतेः । आणिररणात् । तन्नो मघवन् रन्धय[9] इति रध्यतिर्वशगमने' (निरु. ६. ३२) इति॥ आशिरम् । आङ्पूर्वात् श्रीणातेः क्विपि 'अपस्पृधेथाम्°' इत्यादिना आशिर इत्यादेशः । दुह्रे । दुहेर्लिटि 'इरयो रे' इति रेआदेशः । द्विर्वचनस्य विकल्पितत्वात् द्विर्वचनाभावः । 'चादिलोपे विभाषा' इति न निघातः । नैचाशाखम् । 'तस्येदम्' इत्यण् । प्रत्ययस्वरः । रन्धय । रधेर्ण्यन्तस्य 'रधिजभोरचि' इति नुमागमः ॥

'ससर्परीदृचे[10] प्राहुरितिहासं पुराविदः । सौदासनृपयज्ञे वै वसिष्ठात्मजशक्तिना । विश्वामित्रस्याभिभूतं बलं वाक् च समन्ततः । वासिष्ठेनाभिभूतः स ह्यवासीदथ गाधिजः । तस्मै ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम् । सूर्यवेश्मन आहृत्य ददुर्वै जमदग्नयः । कुशिकानां मतिः सा वागमतिं तामपानुदत्[10]' (अनु. भा. ३. ५३) ॥

ससर्परीरमतिं बाधमाना बृहन्मिमाय जमदग्निदत्ता ।

आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्यम् ॥ १५ ॥

ससर्परीः । अमतिम् । बाधमाना । बृहत् । मिमाय । जमदग्निऽदत्ता ।

आ । सूर्यस्य । दुहिता । ततान । श्रवः । देवेषु । अमृतम् । अजुर्यम् ॥ १५ ॥

---

१. ख-ग-च-ज-ण-त-न-भ-स—तस्यापत्यं तत्कुसीदकुलस्य । २. त—उत्पादिताः शाखाः । ३. ख-ग-च-ज-ण-त-न-फ-भ-स—शूद्रवित्तैश्च; 'शूद्रो वित्तैस्तु शूद्रसंबन्धिकेवलवित्तसंग्रहे शूद्रत्वं प्राप्नोति' इति ज-पुस्तके टिप्पणीरूपेण लिखितम् । *'तत्स्त्रीगमने शूद्रत्वमधःपतति पतितश्च भवति इति भावः' इति ज—पुस्तके टिप्पणीरूपेण समावेशितम् । ४. त-फ-भ—यद्धनम् । ५. न—इतिप्रेप्सवः । ६. ख-ग-च-ण-हरणम्; ज-स—हर्म्यम्; त—घर्णम् । ७. ख-ग-च-ज-ण-न-भ-ल-अत्यन्तकुसीदकुलीनः । ८. ख-ग-च-त-पन्नगः । ९. ख-ग-च-ण-न-भ-ल—रन्धयस्व । १०. ख-ग-च-ज-ण-न-भ-स—'ससर्परी°........ तामपानुदत्' नास्ति; त—...अपानुदत् । उप प्रेतेति कुशिको विश्वामित्रोऽन्वयोजयत् । लब्ध्वा वाचं स हृष्टात्मा जमदग्नीनपूजयत् । ससर्परीरिति द्वाभ्यामृग्भ्यां वाचं स्तुवन्स्वयम् ॥

ᵛजमदग्निदत्ता जमदग्निभिः प्रज्वलिताग्निभिर्ऋषिभिरस्मभ्यं दत्ता ᵛअमतिम् अज्ञानं ᵛबाधमाना ᵛससर्परीः सर्वत्र शब्दरूपतया सर्पणशीला वाक् ᵛबृहत् प्रभूतं यथा भवति तथा ᵛमिमाय नभसि शब्दं करोति। सैषा ᵛसूर्यस्य ᵛदुहिता वाग्देवता ᵛदेवेषु इन्द्रादिषु ᵛअजुर्यं क्षयरहितम् ᵛअमृतम् अमृतलक्षणं ᵛश्रवः अन्नम् ᵛआ ᵛततान समन्तात् स्वाहाकारवाचा[1] तनोति॥ जमदग्निदत्ता । 'दाण् दाने' इत्यस्य निष्ठायां 'दो दद्घोः' इति ददादेशः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः । अजुर्यम् । 'जॄ वयोहानौ' । 'ऋहलोर्ण्यत्' । 'बहुलं छन्दसि' इत्युत्वम् । 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम् ॥२१॥

**स॒स॒र्परी॑रभर॒त्तूय॑मे॒भ्योऽधि॒ श्रव॒: पाञ्च॑जन्यासु कृ॒ष्टिषु॑ ।**

**सा प॒क्ष्या॒३॒॑ नव्य॒मायु॒र्दधा॑ना॒ यां मे॑ पलस्तिजमद॒ग्नयो॑ द॒दुः ॥ १६ ॥**

स॒स॒र्परी॑ः । अ॒भ॒र॒त् । तूय॑म् । ए॒भ्यः॒ । अधि॑ । श्रव॑ः । पाञ्च॑ऽजन्यासु । कृ॒ष्टिषु॑ ।

सा । प॒क्ष्या॑ । नव्य॑म् । आयु॑ः । दधा॑ना । याम् । मे॒ । प॒ल॒स्ति॒ऽज॒म॒द॒ग्नय॑ः । द॒दुः ॥१६॥

ᵛससर्परीः सर्वत्र गद्यपद्यात्मकत्वेन सर्पणशीला वाग्देवता ᵛपाञ्चजन्यासु ᵛकृष्टिषु । निषाद-पञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । तत्संबन्धिनीषु प्रजासु यत् ᵛश्रवः अन्नं विद्यते तन्नोऽस्मभ्यम् ᵛअधि अधिकं यथा भवति तथा ᵛतूयं क्षिप्रम् ᵛअभरत् भरतु संपादयतु । ᵛपलस्तिजमदग्नयः पलस्तयः पलिता दीर्घायुषो जमदग्नयो मुनयः ᵛयां वाचं सूर्यादाहृत्य ᵛमे मह्यं ᵛददुः अददुः[2] ᵛपक्ष्या पक्षस्य पक्षादिनिर्वाहकस्य सूर्यस्य दुहिता ᵛसा वाक् ᵛनव्यं नवतरम् ᵛआयुः अन्नं जीवनं वा ᵛदधाना मम कुर्वाणा भवतु ॥ पाञ्चजन्यासु । 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' इति ञ्यप्रत्ययः । ञित्वादाद्यु-दात्तः । पक्ष्या । पक्षे भवा । दिगादित्वाद्यत् । तित्स्वरितः । नव्यम् । नवशब्दात् वस्वादित्वात् स्वार्थिको यत् । पलस्तिजमदग्नयः पलस्तयो जमदग्नयः । कर्मधारयसमासः । समासस्वरः ॥

**स्थि॒रौ गावौ॑ भवतां वी॒ळुरक्षो॒ मेषा वि व॑र्हि॒ मा यु॒गं वि शा॑रि ।**

**इन्द्र॑ः पात॒ल्ये॑ ददतां॒ शरी॑तो॒ररि॑ष्टनेमे अ॒भि न॑ः सचस्व ॥ १७ ॥**

स्थि॒रौ । गावौ॑ । भ॒व॒ता॒म् । वी॒ळुः । अक्ष॑ः । मा । ईषा॑ । वि । व॒र्हि॒ । मा । यु॒गम् । वि । शा॒रि॒ ।

इन्द्र॑ः । पा॒त॒ल्ये॒३॒॑ इति॑ । द॒द॒ता॒म् । शरी॑तोः । अरि॑ष्टऽनेमे । अ॒भि । न॒ः । स॒च॒स्व॒ ॥ १७॥

राज्ञः सुदासो यज्ञेऽवभृथं कृत्वा यज्ञशालातो निर्गन्तुमिच्छन् रथे अश्वादिकं[3] युञ्जानो विश्वामित्रो रथाङ्गानि स्तौति । ᵛगावौ । गच्छत इति गावावश्वौ । ᵛस्थिरौ[4] ᵛभवताम् । ᵛअक्षः च ᵛवीळुः दृढो भवतु । ᵛईषा दण्डश्च ᵛमा ᵛवि ᵛवर्हि विनष्टो मा भवतु । ᵛयुगं च ᵛमा ᵛवि ᵛशारि विशीर्णं मा भवतु । ᵛइन्द्रः ᵛपातल्ये पतनशीले कीलके ᵛशरीतोः विशरणात् प्राक् ᵛददतां धारयतु । हे[5] ᵛअरिष्टनेमे अहिंसितप्रधिविशिष्ट हे[6] रथ ᵛनः अस्मान् ᵛअभि आभिमुख्येन ᵛसचस्व संगतो भव ॥

---

१. ल-स–स्वाहाकारवाचम् । २. ख-ग-न-भ-स–अदुः । ३. ख-ग-च-न-भ-स–अश्वादि । ४. च–स्थिरौ स्थितौ । ५. ख-ग-च-ज-ण–हे इन्द्र । ६. ख-ण-घ-च-ज-ण-भ-स–'हे' नास्ति ।

वि वर्हि । ‘ वृहि वृद्धौ ’ । विपूर्वो वृहिर्विनाशे वर्तते । अस्मात् कर्मकर्तरि लुङि ‘ चिण् भावकर्मणोः ’ इति चिण् । ‘ चिणो लुक् ’ इति तप्रत्ययस्य लुक् । निवातः । युगम् । युगशब्दे[1] उञ्छादिषु रथाद्युपकरणेऽर्थे घञन्तत्वेन निपातनादगुणत्वम् । तत्र पाठादन्तोदात्तत्वम् । शारि । ‘ शॄ हिंसायाम् ’ इत्यस्य लुङि रूपम् । अरिष्टनेमे । पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् ॥

बलं॑ धेहि त॒नूषु॑ नो॒ बल॑मिन्द्रान॒ळुत्सु॑ नः ।

बलं॑ तो॒काय॒ तन॑याय जी॒वसे॒ त्वं हि ब॑ल॒दा असि॑ ॥ १८ ॥

बल॑म् । धे॒हि॒ । त॒नूषु॑ । नः॒ । बल॑म् । इ॒न्द्र॒ । अ॒न॒ळुत्ऽसु॑ । नः॒ ।

बल॑म् । तो॒काय॑ । तन॑याय । जी॒वसे॑ । त्वम् । हि । ब॒ल॒ऽदाः । असि॑ ॥ १८ ॥

हे ^v^इन्द्र ^v^नः अस्माकं ^v^तनूषु शरीरेषु ^v^बलं ^v^धेहि । ^v^नः अस्मत्संबन्धिरथवाहेषु ^v^अनळुत्सु[2] अनडुत्सु[2] ^v^बलं धेहि । ^v^तोकाय पुत्राय ^v^तनयाय पौत्राय च ^v^जीवसे चिरं जीवनाय ^v^बलम् आयुर्विधेहि । एतादृशं दातृत्वं कुत इत्यत आह । ^v^त्वं ^v^बलदाः । बलं ददातीति बलदाः । ^v^असि ^v^हि सर्वेषु लोकेषु प्रसिद्धोऽसि खलु ॥ अनळुत्सु । ‘ वह प्रापणे ’ । ‘ अनसि वहेः क्विबनसो डश्च ’ इति क्विप् । अनसः सकारस्य डत्वम् । वहेर्यजादित्वात् संप्रसारणम् । ‘ वसुस्रंसुध्वंस्वनडुहां दः ’ इति हकारस्य दत्वम् । कृदुत्तरस्वरः[3] । असि । हियोगादनिघातः । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः ॥

अ॒भि व्य॑यस्व खदि॒रस्य॑ सार॒मोजो॑ धेहि स्पन्द॒ने शिं॒शपा॑याम् ।

अक्ष॑ वीळो वीळित वी॒ळय॑स्व॒ मा यामा॑द॒स्मादव॑ जीहिपो नः ॥ १९ ॥

अ॒भि । व्य॒य॒स्व॒ । ख॒दि॒रस्य॑ । सार॑म् । ओजः॑ । धे॒हि॒ । स्प॒न्द॒ने । शिं॒शपा॑याम् ।

अक्ष॑ । वी॒ळो॒ इति॑ । वी॒ळि॒त॒ । वी॒ळय॑स्व । मा । यामा॑त् । अ॒स्मात् । अव॑ । जी॒हि॒पः॒ । नः॒ ॥ १९ ॥

हे इन्द्र ^v^खदिरस्य ^v^सारम् । सारेण हि आणिः क्रियते । तं खदिरस्य सारभूतमाणिम् ^v^अभि ^v^व्ययस्व अभितस्तत्तत्स्थानेषु दार्ढ्यार्थं निधेहि । ^v^स्पन्दने रथस्य गमने सति ^v^शिंशपायां शिंशपाख्यदारुनिर्मिते रथस्य फलके ^v^ओजो ^v^धेहि दार्ढ्यं कुरु । हे ^v^वीळो दृढ[4] ^v^वीळित अस्माभिर्दृढीकृत हे ^v^अक्ष ^v^वीळयस्व त्वं दृढो भव । यद्वा अस्मान् दृढीकुरु । ^v^यामात् गच्छतः अस्माद्रथात्[5] ^v^नः अस्मान् ^v^मा ^v^अव ^v^जीहिपः मा पीपतः ॥ खदिरस्य । ‘ अजिरशिशिर॰ ’ इत्यादिना किरच्प्रत्ययान्तत्वेन निपातनादन्तोदात्तः । वीळित । वीळयतेर्ण्यन्तस्य निष्ठायामिडागमः । ‘ निष्ठायां सेटि ’ ( पा. सू. ६.४.५२ ) इति णेर्लुक् । वीळयस्व । आमन्त्रितस्याविद्यमानत्वेन पादादित्वादनिघातः । यामात् । ‘ या प्रापणे ’ इत्यस्मात् ‘ अर्तिस्तुसुहुसृ॰ ’ इत्यादिना मन्प्रत्ययः । नित्त्वादाद्युदात्तः । जीहिपः । ‘ ओहाक् त्यागे ’ । ण्यन्तस्य लुङि चङि रूपम् । अकारस्येकारश्छान्दसः ॥

---

१. ज-ण-युगशब्दस्य । २. न-ल-अनडुत्सु; स-अनळुत्सु । ३. ज-ण-कृदुत्तरपदस्वरः । ४. ख-ग-च-भ-स-‘ दृढ ’ नास्ति । ५. घ-ज-ण-भ-रथादस्मात् ।

अयमस्मान्वनस्पतिर्मा च हा मा च रीरिषत् ।

स्वस्त्या गृहेभ्य आवसा आ विमोचनात् ॥ २० ॥

अयम् । अस्मान् । वनस्पतिः । मा । च । हाः । मा । च । रिरिषत् ।

स्वस्ति । आ । गृहेभ्यः । आ । अवऽसै । आ । विऽमोचनात् ॥ २० ॥

यजमान आत्मनः श्रेय आशास्ते । वनस्पतिः वनस्पतिनिर्मितः अयं रथो रथारूढान् अस्मान् मा च हाः मा त्याक्षीत् । किंच मा रीरिषत् अस्मान् मा विनाशयतु । किंच आ गृहेभ्यः यावद्गृहान् प्राप्नुयाम तावदस्मभ्यं स्वस्ति भवतु । तथा आ अवसै । पञ्चम्यर्थे चतुर्थी । यावद्रथवेगावसानं तावत् । आ विमोचनात् यावद्रथयोजिताश्वविमोचनं तावत् स्वस्ति भवतु ॥ हाः । 'ओहाक् त्यागे' । लुङि 'मन्त्रे घस॰' इत्यादिना सिचो लुक् । पुरुषव्यत्ययः । 'चवायोगे प्रथमा' इति न निघातः । रीरिषत् । 'रिष हिंसायाम्' इत्यस्य ण्यन्तस्य लुङि चङि रूपम् । द्वितीयत्वान्निघातः । गृहेभ्यः । ग्रहेः 'गेहे कः' इति कः । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । अवसै । 'षोऽन्तकर्मणि' । क्विप् । चतुर्थ्येकवचने आतो लोपाभावश्छान्दसः । वृद्धिः । एकादेशस्वरः ॥ ॥ २२ ॥

'इन्द्रोतिभिः' इत्याद्याश्चतस्रो वसिष्ठद्वेषिण्यः । पुरा[1] खलु[1] विश्वामित्रशिष्यः सुदा नाम राजर्षिरासीत् । स च केनचित् कारणेन वसिष्ठद्वेष्योऽभूत् । विश्वामित्रस्तु शिष्यस्य रक्षार्थमाभिर्ऋग्भिः वसिष्ठमशपत् । इमा अभिशापरूपाः । ता ऋचो वसिष्ठा न श्रृण्वन्ति ॥

इन्द्रोतिभिर्बहुलाभिर्नो अद्य याच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व ।

यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥ २१ ॥

इन्द्र । ऊतिऽभिः । बहुलाभिः । नः । अद्य । यात्ऽश्रेष्ठाभिः । मघऽवन् । शूर । जिन्व ।

यः । नः । द्वेष्टि । अधरः । सः । पदीष्ट ।

यम् । ऊँ इति । द्विष्मः । तम् । ऊँ इति । प्राणः । जहातु ॥ २१ ॥

परस्य शापं करिष्यन् आदावात्मनो रक्षां कुरुते प्रथमेनार्धर्चेन । हे शूर शौर्यवन् पराभिभवशक्त हे मघवन् धनवन् इन्द्र अद्य अस्मिन्काले यात् । यातयतिर्वधकर्मा । यातयतीति यात् । 'सुपां सुलुक्॰' इति शसो लुक् । यातः शत्रून् हिंसतः नः अस्मान् ऊतिभिः त्वदीयाभी रक्षाभिः जिन्व प्रीणय । कीदृशीभिः । बहुलाभिः बह्वीभिः श्रेष्ठाभिः प्रशस्यतराभिः । अथ शपति । नः अस्मान् यः शत्रुर्द्वेष्यः द्वेष्टि[2] अस्मद्विषयामप्रीतिं करोति सः अधरः निकृष्टः सन् पदीष्ट पततु । वयं च यमु द्विष्मस्तमु तं द्वेष्यं प्राणः देहमध्ये वर्तमानः पञ्चवृत्तिर्वायुः जहातु परित्यजतु । उशब्दौ पूरकौ ॥

---

१. ख-ग-च-ज-ण-भ-स-'पुरा खलु' नास्ति । २. त-'द्वेष्टि' नास्ति ।

परशुं चिद्वि तपति शिम्बलं चिद्वि वृश्चति ।
उखा चिदिन्द्र येषन्ती प्रयस्ता फेनमस्यति ॥ २२ ॥

परशुम् । चित् । वि । तपति । शिम्बलम् । चित् । वि । वृश्चति ।
उखा । चित् । इन्द्र । येषन्ती । प्रऽयस्ता । फेनम् । अस्यति ॥ २२ ॥

हे[1] vइन्द्र vपरशुं vचित् यथा कुठारं[1] प्राप्य वृक्षः vवि vतपति विशिष्टतापयुक्तो भवति। एवं मदीयो द्वेष्टा वितपतु । vशिम्बलं vचित् शलमलीकुसुमं यथा अनायासेन वृन्तात् विच्छिद्यते । एवं मद्द्वेष्टा[2] vवि vवृश्चति विच्छिन्नावयवः[3] भवतु । vप्रयस्ता प्रहता[4] vयेषन्ती स्रवन्ती vउखा vचित् स्थालीव स द्वेष्टा मदीयमन्त्रसामर्थ्येन प्रहतः सन् vफेनमस्यति फेनं मुखादुद्गिरतु ॥

न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः ।
नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान्नयन्ति ॥ २३ ॥

न । सायकस्य । चिकिते । जनासः । लोधम् । नयन्ति । पशु । मन्यमानाः ।
न । अवाजिनम् । वाजिना । हासयन्ति । न । गर्दभम् । पुरः । अश्वात् । नयन्ति ॥ २३ ॥

पुरा[5] खलु[5] तपसः क्षयो मा प्रापदिति शापान्निवृत्तं मौनिनं[6] विश्वामित्रं वसिष्ठपुरुषा बद्ध्वा आनीतवन्तः । तान् प्रति विश्वामित्रो ब्रूते । हे vजनासः जनाः vसायकस्य अवसानकारिणो विश्वामित्रस्य मन्त्रगणसामर्थ्यं[7] vन vचिकिते भवद्भिर्न ज्ञायते । अत एव vलोधं लुब्धं तपसः क्षयो मा भूदिति लोभेन तूष्णीं स्थितमृषिं vपशु[8] vमन्यमानाः । पशु इति निपातः पशुशब्दसमानार्थः । पशुवन्मन्यमानाः[8] एते vनयन्ति बद्ध्वा स्वकीयं देशं प्रापयन्ति । एवं[9] स्वसामर्थ्यं प्रदर्श्य विसदृशो वसिष्ठो मया सह स्पर्धितुं नार्हतीति धिक्करोति । vनावाजिनम् इति[9] । अवाजिनम् । वाचामिनो[10] वाजिनः सर्वज्ञः । तद्विलक्षणं मूर्खजनं vवाजिना वागीशाः न vहासयन्ति हास्यास्पदं न कुर्वन्ति । तेन सह न स्पर्धन्त इत्यर्थः । तथा vगर्दभं रासभम् vअश्वात् vपुरः पुरस्तात् vन vनयन्ति[10] । एवमेव विसदृशो वसिष्ठो न मया स्पर्धितुमीष्ट इत्यर्थः ॥

---

१. न-ल-परशुं चित् । चिच्छब्द उपमार्थः । यथा परशुं कुठारम् । २. ग-च-स द्वेष्टा । ३. त-वृक्तः विच्छिन्नावयवः । ४. घ-प-भ-अपहृता; ख-ग-च-ज-ण-आपहृता । ५. ख-ग-च-ज-ण-भ-' पुरा खलु ' नास्ति । ६. ख-ग-च-ज-ण-भ-' मौनिनं ' नास्ति । ७. ख-ग-च-ज-ण-भ-मन्त्रसामर्थ्यम् । ८. ख-ग-ग-च-ज-ण-भ-पशुवत् मन्यमानाः । ९. ख-ग-घ-च-ज-ण-भ-वसिष्ठं धिक्करोति । १०. ख-ग-घ-च-ज-ण-भ-मूर्खं वाजिनाः वागीशाः न नयन्ति ।

इम इन्द्र भरतस्य पुत्रा अपपित्वं चिकितुर्न प्रपित्वम् ।
हिन्वन्त्यश्वमरणं न नित्यं ज्यावाजं परि णयन्त्याजौ ॥ २४ ॥

इमे । इन्द्र । भरतस्य । पुत्राः । अपऽपित्वम् । चिकितुः । न । प्रऽपित्वम् ।
हिन्वन्ति । अश्वम् । अरणम् । न । नित्यम् । ज्याऽवाजम् । परि । नयन्ति । आजौ ॥२४॥

हे ᵛइन्द्र ᵛभरतस्य ᵛपुत्राः भरतवंश्याः ᵛइमे विश्वामित्राः ᵛअपपित्वम् अपगमनं वसिष्ठेभ्यः[1] ᵛचिकितुः जानन्ति । ᵛप्रपित्वं प्रगमनं ᵛन जानन्ति । श्लिष्टैः सह तेषां संगतिर्नास्ति । ब्राह्मणाः[2] एव त इत्यर्थः । अपि च ᵛआजौ संग्रामे ᵛनित्यं सहजम् ᵛअरणं ᵛन अरिमिव वसिष्ठान् प्रति ᵛअश्वं ᵛहिन्वन्ति प्रेरयन्ति । ततश्च ᵛज्यावाजं बलं धनुः ᵛपरि ᵛणयन्ति । वसिष्ठान् हन्तुं शरसंधानेन चरन्ति[3] ॥ ॥ २३ ॥ ॥ ४ ॥

पञ्चमेऽनुवाके नव सूक्तानि । तत्र 'इमं महे' इति द्वाविंशत्यृचं प्रथमं सूक्तं त्रैष्टुभं वैश्वदेवं विश्वामित्रपुत्रस्य वाक्पुत्रस्य वा प्रजापतेरार्षम् । अत्रेयमनुक्रमणिका—'इमं महे द्व्यधिकोक्तगोत्रः प्रजापतिर्हि वैश्वदेवं ह' इति । अस्मिन् सूक्ते आद्याग्नेयी ततः[4] पराः[4] सप्तर्चो द्यावापृथिव्यास्ततः परा द्युदेवताका । दशमी द्यावापृथिव्यैकादशी सावित्री ततः परं 'सुकृत' इति त्वाष्ट्री आर्भवी च 'विद्युद्रथाः' इति मारुती सारस्वती च ततः परं तिस्रो विष्ण्विन्द्राग्निदेवताकाः 'स्वदस्व' इत्याग्नेयीति । एवं वैश्वदेवं[5] सूक्तम्[5] । सूक्तविनियोगो लैङ्गिकः । अग्निप्रणयने राजन्यस्य 'इमं महे' इति प्रतिपत् । 'पञ्चम्यां पौर्णमास्याम्' इत्यत्र सूत्रितम्—'इमं महे विदथ्याय शूषम्' (आश्व. श्रौ. २. १७) इति ॥

इमं महे विदथ्याय शूषं शश्वत्कृत्व ईड्याय प्र जभ्रुः ।
शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्रः ॥ १ ॥

इमम् । महे । विदथ्याय । शूषम् । शश्वत् । कृत्वः । ईड्याय । प्र । जभ्रुः ।
शृणोतु । नः । दम्येभिः । अनीकैः । शृणोतु । अग्निः । दिव्यैः । अजस्रः ॥ १ ॥

ᵛमहे महते ᵛविदथ्याय विदथे यज्ञे मन्थनेन[6] निष्पाद्यमानाय ᵛईड्याय सर्वैः स्तुत्यायाग्नये ᵛशूषं सुखकरम् ᵛइमं स्तोमं ᵛशश्वत्कृत्वः भूयो भूयः ᵛप्र ᵛजभ्रुः प्रभरन्ति प्रकर्षेण धारयन्ति । उच्चारयन्तीत्यर्थः । सः ᵛअग्निः ᵛदम्येभिः परेषां दमनकुशलैः दमे[7] गृहे विद्यमानैर्वा[7] ᵛअनीकैः[8] तेजोभिः युक्तः सन् ᵛनः अस्मदीयमिमं स्तोमं[9] ᵛशृणोतु । ᵛदिव्यैः दिवि भवैस्तेजोभिः ᵛअजस्रः निरन्तरं

१. ख-ग-च-ज-ण-त-भ-ल—वासिष्ठेभ्यः । २. त-ल—ब्राह्मणाः । ३. ख-ग-ज-ण—वारन्ति; घ-भ—वारयन्ति; त-न—व्यापयन्ति; ल—आवयन्ति । ४. ल—ततः परम् । ५. ख-ग-ज-ण-त-न-भ—वैश्वदेवसूक्तम् । ६. ख-घ-ज-ण-न-भ—मथनेन । ७. ख-ग-च-ज-ण-न-भ-स—'दमे गृहे विद्यमानैर्वा' नास्ति । ८. च—अनीकैः अनैकैः । ९. ख-ग-च-त-फ-भ-ल-स—स्तोत्रम् ।

युक्तोऽग्निरिमं स्तोमं ᵛशृणोतु । 'शश्वत्कृत्व ईड्याय प्र जभ्रुरिति स्वानामेवैनं तच्छ्रैष्ठ्यं गमयति' (ऐ. ब्रा. १. २८) इति ब्राह्मणानुसारेण महदादिगुणविशिष्टाय[1] यजमानाय[1] इममग्निं प्रजभ्रुः प्रहरन्त्यृत्विज इति वा व्याख्येयम् । उत्तरोऽर्धर्चः[2] समान एव ॥ विदथ्याय । तत्र भव इत्यर्थे 'भवे छन्दसि' इति यत् । तित्स्वरितः[3] । ईड्याय । 'ईडवन्द॰' इत्यादिना उदात्तत्वम् । दम्येभिः । 'तत्र साधुः' इति यत् । 'यतो नावः' इत्याद्युदात्तत्वम्[4] । दिव्यैः । दिवमर्हतीत्यर्थे 'छन्दसि च' इति यप्रत्ययः । अजस्रः । 'जसु मोक्षणे' । नञ्पूर्वः । 'नमिकम्पि॰' इत्यादिना ताच्छीलिको रप्रत्ययः । नञा समासे तस्य स्वरः ॥

मर्हि मुहे दिवे अर्चा पृथिव्यै कामो म इच्छञ्चरति प्रजानन् ।
ययोर्हु स्तोमे विदथेषु देवाः संपर्यवो मादयन्ते सचायोः ॥ २ ॥

मर्हि । मुहे । दिवे । अर्च । पृथिव्यै । कामः । मे । इच्छन् । चरति । प्रऽजानन् ।
ययोः । ह । स्तोमे । विदथेषु । देवाः । सपर्यवः । मादयन्ते । सचा । आयोः ॥ २ ॥

हे स्तोतः ᵛमहे महत्यै ᵛदिवे द्युलोकदेवतायै महत्यै ᵛपृथिव्यै च ᵛमहि महत् त्वं ᵛप्रजानन् स्तोत्रम् ᵛअर्च कुरु । ᵛमे मम ᵛकामः मनोरथः सर्वान् भोगान् ᵛइच्छन् ᵛचरति सर्वत्र वर्तते । ᵛआयोः मनुष्यस्य ᵛविदथेषु यज्ञेषु ᵛययोः द्यावापृथिव्योः ᵛस्तोमे स्तोत्रे ᵛसपर्यवः पूजाकामाः ᵛदेवाः स्तोतारो वा[5] ᵛसचा ᵛमादयन्ते ᵛह सह माद्यन्ति खलु ॥ पृथिव्यै । 'उदात्तयणः॰' इति विभक्तेरुदात्तत्वम् । सपर्यवः । सपर्यामिच्छतीत्यर्थे सुपः क्यच् ॥

युवोर्ऋतं रोदसी सुत्यमस्तु मुहे षु णः सुविताय प्र भूतम् ।
इदं दिवे नमो अग्ने पृथिव्यै संपर्यामि प्रयसा यामि रत्नम् ॥ ३ ॥

युवोः । ऋतम् । रोदसी इति । सत्यम् । अस्तु । मुहे । सु । नः । सुविताय । प्र । भूतम् ।
इदम् । दिवे । नमः । अग्ने । पृथिव्यै । सपर्यामि । प्रयसा । यामि । रत्नम् ॥ ३ ॥

हे ᵛरोदसी द्यावापृथिव्यौ ᵛयुवोः युवयोः ᵛऋतम् आनृशंस्यं ᵛसत्यं यथार्थम् ᵛअस्तु । युवां ᵛनः अस्माकं ᵛमहे महते ᵛसुविताय अभ्युदयाय यज्ञसमाप्त्यर्थं ᵛसु सुष्ठु ᵛप्र ᵛभूतं प्रभवतम् । हे ᵛअग्ने ᵛदिवे ᵛपृथिव्यै च ᵛइदं ᵛनमः अस्तु । ᵛप्रयसा हविर्लक्षणेनान्नेन ᵛसपर्यामि परिचरामि । ᵛरत्नम् उत्तमं धनं ᵛयामि याचे । यातिर्याच्ञाकर्मा ईमह इत्यादिषु पठितत्वात् ॥ सु । संहितायां 'सुञः' (पा. सू. ८. ३. १०७) इति षत्वम् । नः । संहितायां 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । सुविताय । 'इण् गतौ' । अधिकरणे क्तः । शोभनं गम्यतेऽस्मिन्निति तत् सुवितम् । उवङादेशः

---

१. ख-ग-च-ज-ण-न-भ-स-॰विशिष्टयजमानाय । २. ख-ल-उत्तरार्धर्चः । ३. ख-ग-च-ज-ण-त-न-भ-स-तित्स्वरः । ४. ख-ग-च-ज-ण-न-फ-भ-ल-स-'इत्याद्युदात्तत्वं' नास्ति । ५. ख-ग-च-ज-ण-त-भ-स-'वा' नास्ति ।

छान्दसः। भूतम्। भवतेर्लोटि ' बहुलं छन्दसि ' इति शपो लुकि रूपम् । यद्वा । छान्दसे लुङि सिचः ' गातिस्था° ' इति लुक् । निघातः । दिवे पृथिव्यै । ' नमःस्वस्ति° ' ( पा. सू. २. ३. १६ ) इत्यादिना चतुर्थी । सपर्यामि । कण्ड्वादिः परिचरणे वर्तते। प्रत्ययस्वरः। यामि। यातेर्लटि रूपम्। वाक्यभेदादनिघातः ॥

उतो हि वां पूर्व्या आविविद्र ऋतावरी रोदसी सत्यवाचः ।

नरश्चिद्वां समिथे शूरसातौ ववन्दिरे पृथिवि वेविदानाः ॥ ४ ॥

उतो इति । हि । वाम् । पूर्व्याः । आऽविविद्रे ।

ऋतवरी इत्यृतऽवरी । रोदसी इति । सत्यऽवाचः ।

नरः । चित् । वाम् । समऽइथे । शूरऽसातौ । ववन्दिरे । पृथिवि । वेविदानाः ॥ ४ ॥

"उतो अपि च हे[1] "ऋतावरी । ऋतं सत्यम् । तद्वत्यौ हे "रोदसी द्यावापृथिव्यौ "पूर्व्याः पूर्वे भवाः पुरातनाः "सत्यवाचः महर्षयः "वां युवाभ्याम् "आविविद्रे "हि तं तमपेक्षितमर्थं लेभिरे खलु[2] । तथा[2] हे "पृथिवि "शूरसातौ शूराणां सातिर्लाभो[3] यस्मिन् तस्मिन् "समिथे संगमननिमित्ते[3] युद्धे "नरश्चित् अद्यतनाः[4] मनुष्याश्च "वां युवयोर्माहात्म्यं "वेविदानाः जानन्तः अतः[5] द्यावापृथिव्यौ "ववन्दिरे स्तुवन्ति ॥ आविविद्रे । ' विद्लृ लाभे ' इत्ययमुभयपदी । लिटि ' इरयो रे ' इति रे इत्यादेशः । ' सह सुपा ' इत्यत्र ' सह ' इति योगविभागादाङा सह समासः । समिथे । ' इण् गतौ ' । ' समीणः ' ( उ. सू. २. १६८ ) इति थक्प्रत्ययः । प्रत्ययस्वरः ॥

को अद्धा वेद क इह प्र वोचद्देवाँ अच्छा पथ्या३ का समेति ।

ददृश्र एषामवमा सदांसि परेषु या गुह्येषु व्रतेषु ॥ ५ ॥

कः । अद्धा । वेद । कः । इह । प्र । वोचत् । देवान् । अच्छ । पथ्या । का । सम् । एति ।

ददृश्रे । एषाम् । अवमा । सदांसि । परेषु । या । गुह्येषु । व्रतेषु ॥ ५ ॥

"कः वा[6] "अद्धा सत्यभूतं तादृशमर्थं "वेद वेत्ति । "कः वा "इह अस्मिन् प्रज्ञातमर्थं "प्र "वोचत् प्र ब्रवीति । किं तत्तदुच्यते । "देवान् "अच्छ अभिलक्ष्य "का "पथ्या पथि साधुः समीचीनः को वा मार्गः "समेति सम्यक् प्राप्नोतीति । इममर्थं न कश्चिज्जानाति । न कोऽपि ब्रवीति । किं ते देवा विद्यन्ते । बाढमित्याह । "एषां दिवि स्थितानां नक्षत्ररूपाणां देवानाम् "अवमा अधोमुखानि

१. ख-ग-च-' हे ' नास्ति । २. ख-ग-च-ज-ण-न-भ-' खलु । तथा ' नास्ति । ३. ख-ग-च-ज-ण-न-भ-स-समिथे । ४. ख-ग-घ-च-ज-ण-न-भ-अन्यतराः । ५. घ-ज-ण-सन्तः; त-' अतः ' नास्ति । ६. ख-ग-च-ज-ण-त-न-प-फ-भ-स-' वा ' नास्ति ।

ᵛसदांसि स्थानानि ᵛददृश्रे दृश्यन्ते । तथापि ᵛपरेषु उत्तमेषु ᵛगुह्येषु दुर्ज्ञानेषु[1] ᵛव्रतेषु कर्मसु अनुष्ठितेषु[2] ᵛया[3] यानि दिवि[3] देवस्थानानि लभ्यन्ते तत्रागन्तुं को मार्ग इति वेदमन्तरेण न कश्चिज्जानातीत्यभिप्रायः ॥ अद्धा । स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः । वोचत् । 'ब्रूञ् व्यक्तायां वाचि'। लुङि 'ब्रुवो वचिः' इति वच्यादेशः । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः । 'वच उम्' इत्युमागमः । निघातः ॥　　　　॥ २४ ॥

**क॒विर्नृ॒चक्षा॑ अ॒भि षी॑मचष्ट ऋ॒तस्य॒ योना॒ विघृ॑ते॒ मद॑न्ती ।**
**नाना॑ चक्राते॒ सद॑नं॒ यथा॒ वेः स॑मा॒नेन॒ क्रतु॑ना संविदा॒ने ॥ ६ ॥**

क॒विः । नृ॒ऽचक्षाः॑ । अ॒भि । सी॒म् । अ॒च॒ष्ट॒ ।
ऋ॒तस्य॑ । योना॑ । विघृ॑ते॒ इति॒ विऽघृ॑ते । मद॑न्ती॒ इति॑ ।
नाना॑ । च॒क्रा॒ते॒ इति॑ । सद॑नम् । यथा॑ । वेः । स॒मा॒नेन॑ । क्रतु॑ना । सं॒वि॒दा॒ने इति॑ स॒म्ऽवि॒दा॒ने ॥६॥

ᵛकविः क्रान्तदर्शी ᵛनृचक्षाः नृणां द्रष्टा सूर्यः ᵛसीम् एते द्यावापृथिव्यौ ᵛअभि ᵛअचष्ट सर्वतः पश्यति । ᵛऋतस्य ᵛयोना जलस्य स्थानेऽन्तरिक्षे ᵛमदन्ती हृष्यन्त्यौ ᵛविघृते । घृतमस्या ओषधयो जलमस्मुष्या इति । एवंविधरसोपेते ᵛसमानेन । 'समानमेतदुदकमुच्चैत्यव चाहभिः । भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः' ( ऋ. सं. १. १६४. ५१ ) इति परस्परप्रीणनाख्येनैकेन ᵛक्रतुना कर्मणा ᵛसंविदाने परस्परमैकमत्यं प्राप्ते ते द्यावापृथिव्यौ ᵛनाना पृथग्भूतं ᵛसदनं स्थानं ᵛचक्राते । तथा च श्रुतिः—'इमौ वै लोकौ सहास्तां तौ व्यैताम्' ( ऐ. ब्रा. ४. २७ ) इति । तत्र दृष्टान्तः । ᵛयथा ᵛवेः कुलायं नाना भवति तद्वत् ॥ अचष्ट । 'चक्षिङ् व्यक्तायां वाचि' इत्यस्य लङि 'स्कोः संयोगाद्योः°' इति ककारलोपः । निघातः । संविदाने । 'विद ज्ञाने' इत्यस्य 'समो गमि°' इत्यादिनात्मनेपदे शानच् । चित्त्वादन्तोदात्तः ।

**स॒मा॒न्या वियु॑ते दू॒रेअ॑न्ते ध्रु॒वे प॒दे त॑स्थतु॒र्जाग॒रूके॑ ।**
**उ॒त स्वसा॑रा यु॒वती॒ भव॑न्ती॒ आदु॑ ब्रुवाते मिथु॒नानि॒ नाम॑ ॥ ७ ॥**

स॒मा॒न्या । वियु॑ते॒ इति॒ विऽयु॑ते । दू॒रेअ॑न्ते॒ इति॑ दू॒रेऽअ॑न्ते ।
ध्रु॒वे । प॒दे । त॒स्थ॒तुः॒ । जा॒ग॒रूके॒ इति॑ ।
उ॒त । स्वसा॑रा । यु॒वती॒ इति॑ । भव॑न्ती॒ इति॑ । आत् । ऊँ॒ इति॑ । ब्रु॒वा॒ते॒ इति॑ । मि॒थु॒नानि॑ । नाम॑ ॥७॥

ᵛसमान्या समाने परस्परप्रीणनाख्येन[4] कर्मणा ऐकमत्यं गते ᵛवियुते वियुज्य[5] वर्तमाने[5] ᵛदूरेअन्ते । दूरेऽन्तोऽवसानं ययोस्ते दूरेअन्ते अविनाशिन्यौ ते द्यावापृथिव्यौ ᵛजागरूके जागरणशीले सत्यौ ᵛध्रुवे

१. ख-ग-च-ज-ण-त-न-फ-भ-स–स्थानेषु; घ–ज्ञानेषु । २. ख-ग-च-ज-भ-त-न-फ-स–अनुष्ठितेषु च । ३. ख-स–यानि; ग-च–या दिवि; घ-ज-ण-त-न-भ-ल–या यानि । ४. ख-ग-च-ज-ण-फ-भ–परस्परप्रेरणाख्येन । ५. ख-ग-च-फ-भ–वियुज्यमाने ।

अविनाशिनि ᵛपदे अन्तरिक्षे ᵛतस्थतुः तिष्ठतः[१]। ᵛउत अपि च ᵛयुवती नित्यतरुणे ᵛस्वसारा भगिन्यौ एकस्मादात्मनो जाते इति ᵛभवन्ती भवन्त्यौ[२] तस्थतुरित्यन्वयः। ᵛआदु[३] अनन्तरं ᵛमिथुनानि द्वन्द्वानि ᵛनाम उर्वी, पृथ्वी, बहुले, दूरेअन्ते, रोदसी, पुरोहिते इत्यादीनि नामानि ᵛब्रुवाते ते परस्परं ब्रूतः। उर्व्यादिभिर्द्वन्द्वनामभिर्द्यावापृथिव्यावुच्येते इत्यर्थः॥ समान्या। 'सुपां सुलुक्°' इति विभक्तेर्डादेशः। दूरेअन्ते। 'इण् गतौ'। 'दुरीणो लोपश्च' (उ. सू. २. १७७) इति रक्प्रत्ययो धातोर्लोपश्च। 'रो रि' (पा. सू. ८. ३.१४) इति रेफलोपः। 'ढ्रलोपे°' इति दीर्घः। अन्तशब्दः अमेः 'असिहसि°' इत्यादिना तन्प्रत्ययान्तः। 'सप्तम्युपमान°' इति बहुव्रीहिः। 'हलदन्तात्°' इति सप्तम्या अलुक्। पूर्वपदस्वरः। जागरूके। 'जागृ निद्राक्षये' इत्यस्मात् ताच्छील्यार्थे[४] 'जागुरूकः' (पा. सू. ३.२.१६५) इत्यूकप्रत्ययः। प्रत्ययस्वरः। स्वसारा। 'न षट्स्वस्रादिभ्यः' इति ङीपः[५] प्रतिषेधः[५]॥

**विश्वेदेते जनिमा सं विविक्तो महो देवान्बिभ्रती न व्यथेते।**

**एजद्ध्रुवं पत्यते विश्वमेकं चरत्पतत्रि विषुणं वि जातम्॥ ८॥**

विश्वा। इत्। एते इति। जनिम। सम्। विविक्तः। महः।

देवान्। बिभ्रती इति। न। व्यथेते इति।

एजत्। ध्रुवम्। पत्यते। विश्वम्। एकम्। चरत्। पतत्रि। विषुणम्। वि। जातम्॥८॥

ᵛएते द्यावापृथिव्यौ ᵛविश्वेत् ᵛजनिम सर्वाण्यपि भूतजातानि ᵛसं ᵛविविक्तः अवकाशप्रदानेन संविभज्य[६] कुरुतः। किंच ᵛमहः महतः ᵛदेवान् इन्द्रसूर्यादीन् सरित्समुद्रपर्वतादींश्च ᵛबिभ्रती बिभ्राणे अपि ते[७] ᵛन ᵛव्यथेते न खिद्येते। किंच ᵛएजत् जङ्गमात्मकं ᵛध्रुवं स्थावरात्मकं च ᵛविश्वं जगत् ᵛएकं स्थानं पृथिवीमेव ᵛपत्यते अभिगच्छति। तथा ᵛचरत् चञ्चलं पशुजातं ᵛपतत्रि पक्षिजातं च ᵛविषुणं विष्वक्[८] नानारूपमनयोर्मध्ये ᵛवि तिष्ठते। योग्यक्रियाध्याहारः॥ विविक्तः। 'विचिर् पृथग्भावे'। जुहोत्यादिः। निघातः। बिभ्रती। 'डुभृञ् धारणपोषणयोः' इत्यस्य शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः। अभ्यस्तस्वरः। एजत्। 'एजृ कम्पने'। शतरि रूपम्। पत्यते। 'पद गतौ'। दिवादिरात्मनेपदी। दकारस्य तकारो व्यत्ययेन। निघातः॥

**सना पुराणमध्येम्यारान्महः पितुर्जनितुर्जामि तन्नः।**

**देवासो यत्र पनितार एवैरुरौ पथि व्युते तस्थुरन्तः॥ ९॥**

सना। पुराणम्। अधि। एमि। आरात्। महः। पितुः। जनितुः। जामि। तत्। नः।

देवासः। यत्र। पनितारः। एवैः। उरौ। पथि। विऽउते। तस्थुः। अन्तरिति॥ ९॥

---

१. च-फ-आसतुः। २. ख-ग-च-न-भ-ल-स-'भवन्त्यौ' नास्ति। ३. ख-ग-च-न-भ-ल-स-आत्। ४. त-ताच्छील्येऽर्थे। ५. च-त-ङीप्प्रतिषेधः। ६. ख-ग-च-भ-संभज्य। ७. ल-'ते' नास्ति। ८. घ-ज-ण-विष्वक् विजातम्।

हे द्यौः ᵛमहः महत्याः ᵛपितुः सर्वस्य पालयित्र्याः ᵛजनितुः जनयित्र्यास्तव ᵛसना सनातनं ᵛपुराणं पूर्वक्रमागतं ᵛनः अस्माकं ᵛतत् ᵛजामि जामित्वम् । सर्वमेकस्मात्[1] जातमिति द्यौर्भगिनी भवति । तादृशं भगिनीत्वं तत् ᵛआरात् अधुना ᵛअध्येमि स्मरामि । दिवः पितृत्वे जनयितृत्वे च मन्त्रवर्णः—' द्यौर्मे पिता जनिता नाभिरत्र ' ( ऋ. सं. १·१६४·३३ ) इति । ᵛयत्र यस्यां दिवि ᵛअन्तः मध्ये ᵛउरौ विस्तीर्णे ᵛव्युते विविक्ते ᵛपथि नभसि[2] ᵛपनितारः त्वां स्तुवन्तः ᵛदेवासः देवाः ᵛएवैः गमनसाधनैः स्वैः स्वैर्वाहनैः सहिताः सन्तः ᵛतस्थुः । तत्र स्थिता देवा मदीयं[2] स्तोत्रं शृण्वन्त्विति भावः ॥ पुराणम् । पुराशब्दात् शैषिकार्थे ' सायंचिरम्° ' इति ट्युप्रत्ययः । ' पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ' ( पा. सू. ४. ३. १०५ ) इति निपातनात्तुडभावः । निपातनादेवान्तोदात्तत्वम् । एमि । ' इक् स्मरणे ' । अदादिः । लटि रूपम् । निघातः । व्युते । ' वेञ् तन्तुसंताने ' । कर्मणि क्तः । यजादित्वात् संप्रसारणम् । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरः । तस्थुः । तिष्ठतेर्लिटि रूपम् । यत्रयोगादनिघातः ॥

इ॒मं स्तोमं॑ रोद॒सी प्र ब्र॑वीम्यृदू॒दराः॑ शृणवन्न॒ग्निजि॒ह्वाः ।
मि॒त्रः स॒म्राजो॒ वरु॑णो॒ युवा॑न आ॒दि॒त्यासः॑ क॒वयः॑ पप्र॒थानाः॑ ॥ १० ॥

इ॒मम् । स्तोम॑म् । रो॒द॒सी॒ इति॑ । प्र । ब्र॒वी॒मि॒ । ऋ॒दू॒दराः॑ । शृ॒ण॒व॒न् । अ॒ग्नि॒ऽजि॒ह्वाः ।
मि॒त्रः । स॒म्ऽराजः॑ । वरु॑णः । युवा॑नः । आ॒दि॒त्यासः॑ । क॒वयः॑ । प॒प्र॒था॒नाः ॥ १० ॥

हे ᵛरोदसी द्यावापृथिव्यौ ᵛइमं युष्मदीयं ᵛस्तोमं[3] स्तोत्रं ᵛप्र ᵛब्रवीमि प्रकर्षेण वदामि । ᵛऋदूदराः । ऋदु मृदु उदरं येषां ते ऋदूदराः । यद्वा । मृदुरुदरे सोमो येषां ते ऋदूदराः । ᵛअग्निजिह्वाः । अग्निर्जिह्वास्थानीयो येषां ते तथोक्ताः । ᵛसम्राजः सम्यग्दीप्यमानाः ᵛयुवानः नित्यतरुणाः । यद्वा । यजमानान् अभिमतफलैर्मिश्रीकुर्वन्तः । ᵛकवयः क्रान्तदर्शिनः ᵛपप्रथानाः स्वानि स्वानि कर्माणि प्रथयन्तो मित्रादयो देवाः ᵛशृणवन् तदिदं स्तोत्रं शृण्वन्तु ॥ शृणवन् । ' श्रु श्रवणे ' इत्यस्य लेटयडागमः । अग्निजिह्वाः । त्रिचक्रादित्वादन्तोदात्तत्वम् । पप्रथानाः । ' प्रथ प्रख्याने ' इत्यस्य कानचि रूपम् । चित्त्वादन्तोदात्तः ॥　　　　॥ २५ ॥

हिर॑ण्यपाणिः सवि॒ता सु॑जि॒ह्वस्त्रिरा दि॒वो वि॒दथे॒ पत्य॑मानः ।
दे॒वेषु॑ च सवितः॒ श्लोक॒मश्रे॒राद॒स्मभ्य॒मा सु॑व स॒र्वता॑तिम् ॥ ११ ॥

हिर॑ण्यऽपाणिः । स॒वि॒ता । सु॒ऽजि॒ह्वः । त्रिः । आ । दि॒वः । वि॒दथे॑ । पत्य॑मानः ।
दे॒वेषु॑ । च॒ । स॒वि॒त॒रिति॑ । श्लोक॑म् । अश्रेः॑ । आत् । अ॒स्मभ्य॑म् । आ । सु॒व॒ । स॒र्वऽता॑तिम् ॥ ११ ॥

---

१. ख-ग-चं-न-फ-भ-स–सर्वमस्मात् ।　२. च-फ–देवासः देवसंबन्धिनः पनितारः उद्गातारः एवैः स्तोत्रैः तस्थुः ।　३. ख-ग-च-भ-स–' स्तोमं ' नास्ति ।

ᵛहिरण्यपाणिः । दानार्थं हिरण्यं पाणौ हस्ते यस्य स तथोक्तः । यद्वा । देवकर्तृकयागे सवितुर्ऋत्विग्भूतस्य हस्ते प्राशित्रं भक्षणार्थमध्वर्यवो ददुः । तत्प्राशित्रं तस्य हस्तौ चिच्छेद । ततोऽध्वर्यवो हिरण्मयौ हस्तौ कृत्वा संदधुः । ततोऽयं हिरण्यपाणिः । तथा च कौषीतकं—'सवित्रे प्राशित्रं प्रतिजहुस्तत्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिः' इति । ᵛसुजिह्वः शोभनवाक् ᵛसविता ᵛविदथे यज्ञे ᵛत्रिः त्रिषु सवनेषु ᵛदिवः नभसः सकाशात् ᵛआ ᵛपत्यमानः आगच्छन् भवतीति शेषः । परोऽर्धर्चः प्रत्यक्षः । हे ᵛसवितः त्वं ᵛदेवेषु स्तोतृषु विद्यमानं च ᵛश्लोकम् । श्लोक्यतेऽनेनेति श्लोकः स्तोत्रम् । तत् ᵛअश्रेः प्राप्नुहि ᵛच । ᵛआत् अनन्तरं ᵛसर्वतातिं सर्वमपेक्षितं फलम् ᵛअस्मभ्यम् ᵛआ ᵛसुव प्रेरय ॥ हिरण्यपाणिः । हिरण्यशब्दं यास्को बहुधा निर्वक्ति—'हिरण्यं कस्मात् ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनम्' ( निरु. २·१० ) इत्यादिना । पाणिशब्दं च निर्विवेच—'पाणिः पणायतेः पूजाकर्मणः' ( निरु. २·२६ ) इति ॥ 'हर्य कान्तिगत्योः[१]'। 'हर्यतेः कन्यन् हिर च' इति कन्यन्, हिर इत्ययमादेशो धातोः । नित्त्वादाद्युदात्तः । बहुव्रीहौ पूर्वपदस्वरः । पत्यमानः । 'पद गतौ' । दिवादिरात्मनेपदी । दकारस्य तकारश्छान्दसः । अश्रेः । 'श्रिञ् सेवायाम्' इत्यस्य लङि 'बहुलं छन्दसि' इति शपो लुक् । 'चवायोगे प्रथमा' इति न निघातः । सुव । 'षू प्रेरणे'। तुदादिः । सर्वतातिम् । सर्वदेवात्तातिल् स्वार्थिकः । लित्स्वरः ॥

**सुकृत्सुपाणिः स्ववाँ ऋतावा देवस्त्वष्टावसे तानि नो धात् ।**

**पूषण्वन्त ऋभवो मादयध्वमूर्ध्वग्रावाणो अध्वरमतष्ट ॥ १२ ॥**

सुऽकृत् । सुऽपाणिः । स्वऽवान् । ऋतऽवा । देवः । त्वष्टा । अवसे । तानि । नः । धात् ।

पूषण्ऽवन्तः । ऋभवः । मादयध्वम् । ऊर्ध्वऽग्रावाणः । अध्वरम् । अतष्ट ॥ १२ ॥

ᵛसुकृत् सुष्ठु जगतः कर्ता ᵛसुपाणिः कल्याणपाणिः ᵛस्ववान् धनवान् ᵛऋतावा सत्यसंकल्पः ᵛत्वष्टा ᵛदेवः ᵛतानि यान्यस्माकमपेक्षितानि ᵛअवसे रक्षणाय ᵛनः अस्मभ्यं ᵛधात् ददातु । ᵛऋभवः । उरु भान्तीत्यृभवः । हे ऋभवः ᵛपूषण्वन्तः पूष्णा सहिता यूयं ᵛमादयध्वम् । अस्मान् धनप्रदानेन हृष्टान् कुरुत । ᵛऊर्ध्वग्रावाणः सोमाभिषवार्थमुद्यतग्रावाणः सन्तः ऋत्विज इममस्मदीयम् ᵛअध्वरमतष्ट अकुर्वन् ॥ अतष्ट । 'तक्षू त्वक्षू तनूकरणे' । ऊदित्त्वादत्रेडभावः । 'झलो झलि' इति सिलोपः[२] । 'स्कोः संयोगाद्योः०' इति ककारलोपः । बहुवचनस्यैकवचनं छान्दसम् ॥

**विद्युद्रथा मरुत ऋष्टिमन्तो दिवो मर्या ऋतजाता अयासः ।**

**सरस्वती शृणवन्यज्ञियासो धाता रयिं सहवीरं तुरासः ॥ १३ ॥**

विद्युत्ऽरथाः । मरुतः । ऋष्टिऽमन्तः । दिवः । मर्याः । ऋतऽजाताः । अयासः ।

सरस्वती । शृणवन् । यज्ञियासः । धात । रयिम् । सहऽवीरम् । तुरासः ॥ १३ ॥

---

१. त–गतिकान्त्योः । २. च–सिचो लोपः; ज·ण–सलोपः ।

ᵛविद्युद्रथाः विद्योतमानरथोपेताः ᵛऋष्टिमन्तः दीप्तिमन्तः । ऋष्टिरायुधविशेषः तद्वन्तो वा । ᵛदिवः द्योतमानाः[1] ᵛमर्याः शत्रूणां मारयितारः[2] ᵛऋतजाताः उदकाद्यज्ञाद्वा प्रादुर्भूताः । यद्वा । ऋतमुदकं जातं[3] येभ्यस्ते ऋतजाताः । ᵛअयासः सततगमनशीलाः ᵛयज्ञियासः यज्ञार्हाः ᵛमरुतः ᵛसरस्वती । गद्यपद्यरूपेण प्रसरणमस्या अस्तीति सरस्वती । वाग्देवता च । एते सर्वे देवा मदीयमिमं स्तोमं[4] ᵛश्रृणवन् शृण्वन्तु । ᵛतुरासः अस्माकं फलप्रदाने त्वरणयुक्ता हे मरुतः ᵛसहवीरं पुत्रसहितं ᵛरयिं धनं ᵛधात अस्मभ्यं धत्त ॥ धात । दधातेर्लोटि ' बहुलं छन्दसि ' इति शपो लुक् । ' तप्तनप्तनथनाश्च ' इति तबादेशः । पादादित्वादनिघातः । तपः पित्त्वादनुदात्तत्वे धातुस्वरः । तुरासः । ' तुर त्वरणे ' । इगुपधलक्षणः कः । आमन्त्रितत्वान्निघातः ॥

**विष्णुं स्तोमासः पुरुदस्ममर्का भगस्येव कारिणो यामनि ग्मन् ।**

**उरुक्रमः ककुहो यस्य पूर्वीर्न मर्धन्ति युवतयो जनित्रीः ॥ १४ ॥**

विष्णुम् । स्तोमासः । पुरुऽदस्मम् । अर्काः । भगस्यऽइव । कारिणः । यामनि । ग्मन् ।

उरुऽक्रमः । ककुहः । यस्य । पूर्वीः । न । मर्धन्ति । युवतयः । जनित्रीः ॥ १४ ॥

ᵛस्तोमासः । स्तूयन्त एभिरिति स्तोमाः स्तोत्राणि । ᵛअर्काः अर्चनीयानि शस्त्राणि च ᵛभगस्येव धनस्य ᵛकारिणः कर्तृणीव स्थितानि तानि ᵛयामनि संततं प्रतायमानेऽस्मिन् यज्ञे ᵛपुरुदस्मं बहुकर्माणम् । यद्वा । बहून् दस्यत्युपक्षपयतीति पुरुदस्मः । तं ᵛविष्णुं देवं ᵛग्मन् गच्छन्तु । ᵛपूर्वीः बह्व्यः ᵛजनित्रीः सर्वस्य[5] जनयित्र्यः ᵛयुवतयः परस्परमसंकीर्णाः ᵛककुहः । कं स्कुभ्नन्ति विस्तारयन्तीति ककुभो दिशः । यद्वा । ककुबुच्छ्रयार्थः । उच्छ्रिता इव हि दिशो वृक्षाग्रेषूपलभ्यमानाः तिष्ठन्ति । एता दिशो विष्णोराज्ञां ᵛन ᵛमर्धन्ति न हिंसन्ति । सः[6] विष्णुः ᵛउरुक्रमः । उरुर्महान्[7] क्रमः[7] पादविक्षेपो यस्य सः । त्रिविक्रमावतारे एकेनैव पादेन सर्वं जगदाक्रम्यातिष्ठत ॥ ग्मन् । गमेर्लुङि ' मन्त्रे घस॰ ' इत्यादिना च्लेर्लुक् । ककुभः । पृषोदरादित्वाद्रूपस्वरसिद्धिः ॥

**इन्द्रो विश्वैर्वीर्यैः३ः पत्यमान उभे आ पप्रौ रोदसी महित्वा ।**

**पुरंदरो वृत्रहा धृष्णुषेणः संगृभ्या न आ भरा भूरि पश्वः ॥ १५ ॥**

इन्द्रः । विश्वैः । वीर्यैः । पत्यमानः । उभे इति । आ । पप्रौ । रोदसी इति । महिऽत्वा ।

पुरम्ऽदरः । वृत्रऽहा । धृष्णुऽसेनः । सम्ऽगृभ्य । नः । आ । भर । भूरि । पश्वः ॥ १५॥

ᵛविश्वैः सर्वैः ᵛवीर्यैः सामर्थ्यैः ᵛपत्यमानः प्राप्यमाणः सः ᵛइन्द्रः ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛमहित्वा स्वकीयेन महिम्ना ᵛआ ᵛपप्रौ पूरयामास । शेषः[8] प्रत्यक्षकृतः[8] । ᵛपुरंदरः

---

१. त-ल-द्योतमानाः द्योतमानस्य रुद्रस्य पुत्रा वा । २. त-मारयितारः मनुष्येभ्यो हिता वा । ३. त-जायते । ४. त-ण-स्तोमं स्तोत्रम् । ५. ख-ग-घ-च-ज-ण-भ-यस्य सर्वस्य । ६. ख-ग-घ-च-ज-ण-न-भ-स-' सः ' नास्ति । ७. ख-ग-घ-च-ण-न-भ-स-' उरुः...क्रमः ' नास्ति; ज-उरुः विस्तृतः क्रमः । ८ ख-ग-घ-च-ज-ण-न-भ-स-' शेषः प्रत्यक्षकृतः ' नास्ति ।

शत्रुपुरां दारयिता ᵛवृत्रहा वृत्रस्य हन्ता ᵛधृष्णुषेणः पराभिभवनशीलसेनोपेतः[1] स त्वं ᵛपश्वः पशून् ᵛसंगृभ्य संगृह्य ᵛनः अस्मभ्यं ᵛभूरि प्रभूतं यथा भवति तथा ᵛआ ᵛभर देहि । यद्वा । पश्वः पशोर्भूरि बहुत्वं बहून् पशूंश्च यच्छेति ॥ पुरंदरः । 'दॄ विदारणे' इत्यस्य पुरशब्द उपपदे 'पूःसर्वयोर्दारिसहोः' इति खच्प्रत्ययः । 'वाचंयमपुरंदरौ च' इति निपातनात् पूर्वपदस्यामागमः । चित्त्वात् अन्तोदात्तः । धृष्णुषेणः । 'पूर्वपदात्' इति संहितायां षत्वम् । यदा षत्वं तदा 'रषाभ्याम्°' इति णत्वम् । संगृभ्य । ग्रहेर्ल्यपि स्थानिवद्भावात् संप्रसारणम् । 'हृग्रहोर्भश्छन्दसि' इति भत्वम् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । पश्वः । पशुशब्दात् शसः 'जसादिषु छन्दसि वावचनम्' इति सवर्णदीर्घाभावः ॥ ॥ २६ ॥

नास॑त्या मे पि॒तरा॑ बन्धुपृच्छा॑ सजा॒त्य॑म॒श्विनो॒श्चारु॒ नाम॑ ।
यु॒वं हि स्थो र॑यि॒दौ नो॑ र॒यीणां॑ दा॒त्रं र॑क्षेथे॒ अक॑वै॒रद॑ब्धा ॥ १६ ॥

नास॑त्या । मे॒ । पि॒तरा॑ । ब॒न्धु॒ऽपृ॒च्छा॑ । स॒ऽजा॒त्य॑म् । अ॒श्विनोः॑ । चारु॑ । नाम॑ ।
यु॒वम् । हि । स्थः । र॒यि॒ऽदौ । न॒ः । र॒यी॒णाम् । दा॒त्रम् । र॒क्षे॒थे॒ इति॑ । अक॑वैः । अद॑ब्धा ॥ १६ ॥

हे नासत्यावश्विनौ ᵛबन्धुपृच्छा । हविष्प्रदातृत्वेन बन्धूनस्मान् अपेक्षितमर्थं पृच्छतः इति बन्धूनां प्रष्टारौ । युवां ᵛमे ᵛपितरा[2] पालयितारौ भवतम् । युवयोः ᵛअश्विनोः ᵛसजात्यं सजाते भवं संगतं ᵛचारु ᵛनाम कमनीयं[3] खलु । हे अश्विनौ ᵛयुवं युवां ᵛनः अस्मभ्यं ᵛरयीणां धनानां मध्ये ᵛरयिदौ उत्तमस्य धनस्य दातारौ ᵛस्थः ᵛहि भवथः खलु । किंच ᵛअदब्धा केनाप्यतिरस्कृतौ युवां ᵛदात्रं हविषां दातारं माम् ᵛअकवैः अकुत्सितैः शोभनैः कर्मभिः ᵛरक्षेथे पालयतम् ॥ नासत्या । 'नभ्राण्नपात्°' इत्यादिना निपातनान्नञः प्रकृतिभावः । बन्धुपृच्छा । पृच्छेः क्विप् । 'सुपां सुलुक्°' इति सुपो डादेशः । सजात्यम् । सजाते भवम् । 'भवे छन्दसि' इति यत् । तित्स्वरितः । स्थः । अस्तेर्लटि रूपम् । हियोगादनिघातः ॥

म॒हत्तद्वः॑ कव॒यश्चारु॒ नाम॒ यद्ध॑ देवा॒ भव॑थ॒ विश्व॒ इन्द्रे॑ ।
सख॑ ऋ॒भुभिः॑ पुरुहूत प्रि॒येभि॑रि॒मां धियं॑ सा॒तये॑ तक्षता नः ॥ १७ ॥

म॒हत् । तत् । व॒ः । क॒व॒यः॒ । चारु॑ । नाम॑ । यत् । ह॒ । दे॒वाः॒ । भव॑थ । विश्वे॑ । इन्द्रे॑ ।
सखा॑ । ऋ॒भु॒ऽभिः॑ । पु॒रु॒ऽहू॒त॒ । प्रि॒येभिः॑ । इ॒माम् । धिय॑म् । सा॒तये॑ । त॒क्ष॒त॒ । न॒ः ॥ १७ ॥

हे ᵛकवयः मेधाविनो हे[4] देवाः ᵛवः युष्माकं ᵛतत् तादृशं ᵛमहत्[5] प्रभूतं ᵛनाम कर्म नमनं वा ᵛचारु मनोहरं खलु । ᵛयत् येन कर्मणा ᵛविश्वे सर्वे यूयम् ᵛइन्द्रे इन्द्रोपलक्षिते लोके ᵛदेवाः ᵛभवथ ᵛह देवत्वं प्रापुथ खलु । हे ᵛपुरुहूत बहुभिराहूत हे[6] इन्द्र त्वं ᵛप्रियेभिः प्रियतमैः ᵛऋभुभिः ।

---

१. त–°सेनोपेतः समरुद्गण इत्यर्थः । २. ल-स–पितरौ । ३. ल–नासत्याविति नाम रूपं च कमनीयम् । ४. ज-ण–'हे' नास्ति । ५. त–महत्तत् । ६. ज-ण–'हे' नास्ति ।

ऋतेन भवन्त्यृतेन भान्तीति वा। ऋभुभिर्देवैः ᵛसखा असि। इन्द्रसहिता ऋभवो यूयम् ᵛइमाम् अस्मदीयां ᵛधियं स्तुतिं ᵛनः अस्माकं ᵛसातये धनादिलाभार्थं ᵛतक्षत स्वीकुरुत॥ यत। 'सुपां सुलुक्०' इत्यादिना सुपो लुक्। भवथ। भवतेर्लेटि रूपम्। यद्वृत्तयोगादनिघातः। सख ऋभुभिः इत्यत्र[1] संहितायाम् 'ऋत्यकः' इति प्रकृतिभावो ह्रस्वत्वं च॥

अर्य॒मा णो॒ अदि॑तिर्य॒ज्ञिया॒सोऽद॑ब्धानि॒ वरु॑णस्य व्र॒तानि॑।

युयोत॑ नो अनप॒त्यानि॒ गन्तोः॑ प्र॒जावा॑न्नः पशु॒माँ अ॑स्तु गा॒तुः॥ १८॥

अ॒र्य॒मा। नः॒। अदि॑तिः। य॒ज्ञिया॑सः। अद॑ब्धानि। वरु॑णस्य। व्र॒तानि॑।

युयोत॑। नः॒। अ॒न॒प॒त्यानि॑। गन्तोः॑। प्र॒जाऽवा॑न्। नः॒। प॒शु॒ऽमान्। अ॒स्तु॒। गा॒तुः॥१८॥

ᵛअर्यमा। ऋच्छति सर्वदा गच्छतीत्यर्यमा सूर्यः। ᵛअदितिः देवमाता ᵛयज्ञियासः यज्ञार्हा देवा यस्य ᵛवरुणस्य ᵛव्रतानि कर्माणि ᵛअदब्धानि अहिंसितानि भवन्ति स[2] वरुणः[2] ते चार्यमादयो देवाः ᵛनः अस्मान् रक्षन्त्विति शेषः। ते यूयं ᵛनः अस्माकम् ᵛअनपत्यानि अपत्यानां[3] पुत्राणामहितानि कर्माणि। यद्वा। पतनकारणं न भवतीत्यपत्यम्। तदन्यान्यनपत्यानि पतनकारणानि[4] कर्माणि ᵛगन्तोः सन्मार्गात् ᵛयुयोत पृथक्कुरुत। यथा तान्यहितानि[5] कर्माणि न स्पृशन्ति तथा कुरुतेत्यर्थः। अथ ᵛगातुः। गायन्ति स्तुवन्तीन्द्रादीनत्रेति गातुर्गृहम्। ᵛनः अस्मदीयं गृहं ᵛपशुमान् पश्वादियुक्तं ᵛप्रजावान् अपत्योपेतम् ᵛअस्तु॥ अर्यमा। 'ऋ गतौ'। 'श्वन्नुक्षन्प्लीहन्क्लेदन्०' इत्यादिना निपातनात् रूपसिद्धिः। अदितिः। 'दीङ् क्षये' इत्यस्य कर्तरि क्तिच्। नञा[6] समासः[6]। 'अदितिरदीना' (निरु. ४. २२) इति यास्कः। छान्दसं ह्रस्वत्वम्। नञः[7] स्वरः[7]। युयोत। यौतेः अमिश्रीभावकर्मणो लोटि 'बहुलं छन्दसि' इति शपः श्लुः। 'तप्तनप्०' इति तप्रत्ययस्य तबादेशः। गन्तोः। 'गम्लृ गतौ'। 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यः०' इति तुन्प्रत्ययः। नित्त्वादाद्युदात्तः। गातुः। '०गायाहिभ्यश्च' (उ. सू. १. ७२) इति तुप्रत्ययः॥

दे॒वानां॑ दू॒तः पु॑रु॒ध प्रसू॒तोऽना॑गान्नो वोचतु स॒र्वता॑ता।

शृ॒णोतु॑ नः पृथि॒वी द्यौरु॒ताप॒ः सूर्यो॒ नक्ष॑त्रैरु॒र्व१॒॑न्तरि॑क्षम्॥ १९॥

दे॒वाना॑म्। दू॒तः। पु॒रु॒ध। प्रऽसू॑तः। अना॑गान्। नः॒। वो॒च॒तु॒। स॒र्वऽता॑ता।

शृ॒णोतु॑। नः॒। पृ॒थि॒वी। द्यौः। उ॒त। आपः॑। सूर्यः॑। नक्ष॑त्रैः। उ॒रु। अ॒न्तरि॑क्षम्॥१९॥

ᵛपुरुध पुरुषु बहुषु[8] देशेषु ᵛप्रसूतः अग्निहोत्रार्थं विहितः[9]। यद्वा। पुरुभिर्यजमानैः प्रसूतो यष्टव्यदेवाह्वानार्थं प्रेरितः ᵛदेवानां ᵛदूतः। तथा च तैत्तिरीयकम्—'अग्निर्देवानां दूत आसीत्'

१. न-ल-स—इत्यस्य। २. ख-ग-घ-च-ज-ण-न-भ-स—'स वरुणः' नास्ति। ३. ख-ग-घ-च-ज-ण-न-भ—'अपत्यानां' नास्ति। ४. ख-ग-च-ज-ण-त-न-भ—पातनकारणानि। ५. ज-ण—तदहितानि; न—अहितानि। ६. त—नञ्समासः। ७. च-ज-ण-स—नञ्स्वरः। ८. ज—बहुप्रकारेषु। ९. त—विहृतः।

इति । तादृशोऽग्निः कर्मकर्तृसाधनवैगुण्येन सापराधान् ^v^नः[1] अस्मान् ^v^अनागान् अनागसः ^v^सर्वताता सर्वत्र ^v^वोचतु ब्रवीतु । किंच ^v^पृथिवी ^v^द्यौः च ^v^उत अपि च ^v^आपः ^v^सूर्यः च ^v^नक्षत्रैरुरु विस्तीर्णम् ^v^अन्तरिक्षं च । एते सर्वे देवाः ^v^नः अस्मदीयां स्तुतिं ^v^शृणोतु शृण्वन्तु । प्रत्येकविवक्षया एकवचनम् ॥ प्रसूतः । 'षू प्रेरणे'। कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरः । अनागान् । शसि सकारलोपश्छान्दसः । सवर्णदीर्घे कृते 'तस्माच्छसो नः°' इति नत्वम् । वोचतु । 'वच परिभाषणे'। 'व्यत्ययो बहुलम्' इति शपोऽङादेशः । वच उम् । गुणः । निघातः । नक्षत्रैः । 'नक्ष गतौ'। 'अमिनक्षियजिबन्धिपतिभ्योऽत्रन्' इत्यत्रन्प्रत्ययः । नित्त्वादाद्युदात्तः । यद्वा । न क्षरति न क्षीयते इति वा नक्षत्रम् । 'नभ्राण्नपात्°' इति नञः प्रकृतिभावः । नञः[2] स्वरः[2]॥

**शृण्वन्तु नो वृषणः पर्वतासो ध्रुवक्षेमास इळया मदन्तः ।**

**आदित्यैर्नो अदितिः शृणोतु यच्छन्तु नो मरुतः शर्म भद्रम् ॥ २० ॥**

शृण्वन्तु । नः । वृषणः । पर्वतासः । ध्रुवऽक्षेमासः । इळया । मदन्तः ।

आदित्यैः । नः । अदितिः । शृणोतु । यच्छन्तु । नः । मरुतः । शर्म । भद्रम् ॥ २० ॥

^v^वृषणः अभिमतफलसेचका मरुतः ^v^पर्वतासः । पृणन्ति पूरयन्त्यर्थिनां कामानिति पर्वता ग्रावाभिमानिनो देवाः ^v^ध्रुवक्षेमासः निश्चलस्थानाः ^v^इळया हविर्लक्षणेनान्नेन[3] ^v^मदन्तः माद्यन्तः सन्तः ^v^नः अस्मदीयां स्तुतिं ^v^शृण्वन्तु । किंच ^v^आदित्यैः अपत्यभूतैरादित्यैः उपेता[4] ^v^अदितिः ^v^नः अस्मदीयां स्तुतिं ^v^शृणोतु । ^v^मरुतः च ^v^नः अस्मभ्यं ^v^भद्रं कल्याणकरं ^v^शर्म सुखं ^v^यच्छन्तु ददतु ॥ आदित्यैः । अदितेरपत्यानीत्यर्थे 'दित्यदिति°' इति ण्यः । प्रत्ययस्वरेणान्तोदात्तः । सुपा सहैकादेशे कृते एकादेश उदात्तः ॥

प्रवत्स्यन्यजमानः 'सदा सुगः' इत्यृचं जपन् गच्छेत् । सूत्रितं च—'सदा सुगः पितुमाँ अस्तु पन्था इति पन्थानमवरुह्य' ( आश्व. श्रौ. २. ५ ) इति ॥

**सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीः सं पिपृक्त ।**

**भगो मे अग्ने सख्ये न मृध्या उद्रायो अश्यां सदनं पुरुक्षोः ॥ २१ ॥**

सदा । सुऽगः । पितुऽमान् । अस्तु । पन्थाः । मध्वा । देवाः । ओषधीः । सम् । पिपृक्त ।

भगः । मे । अग्ने । सख्ये । न । मृध्याः । उत् । रायः । अश्याम् । सदनम् । पुरुऽक्षोः ॥२१॥

हे अग्ने अस्माकं ^v^पन्थाः मार्गः ^v^सदा सर्वदा ^v^सुगः सुखेन गन्तुं शक्यः ^v^पितुमान् अन्नवांश्च ^v^अस्तु । हे ^v^देवाः ^v^मध्वा माधुर्योपेतेनोदकेन ^v^ओषधीः ^v^सं ^v^पिपृक्त संपर्चयत । सेचयतेरर्थः ।

---

१. त-न-स–'नः' नास्ति; ल-अपि । २. च-ज-ण-स–नञ्स्वरः । ३. त-हविर्लक्षणान्नेन । ४. च–सहिता ।

हे ˅अग्ने त्वया ˅सख्ये संजाते सति ˅मे मम ˅भगः धनं ˅न ˅मृध्याः न विनश्यतु। किंच ˅रायः धनस्य ˅पुरुक्षोः बह्वन्नस्य च ˅सदनं स्थानम् ˅उत ˅अश्यां प्राप्नुयाम्॥ सदा। स्वरादित्वाद्युदात्तत्वेन पाठादाद्युदात्तः। पिपृक्त। 'पृची संपर्के'। लोटि 'बहुलं छन्दसि' इति शपः श्लुः। 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम्। मृध्याः। मृधिर्हिंसार्थः[1]। लिङि 'तिङां तिङो भवन्ति' इति तिपः सिप्॥

पशौ पुरोडाशस्विष्टकृतः 'स्वदस्व हव्या' इति याज्या। सूत्रितं च—'स्वदस्व हव्या समिषो दिदीहीति पुरोडाशस्विष्टकृतः' (आश्व. श्रौ. ३.५) इति॥

**स्वद॑स्व ह॒व्या समिषो॑ दिदीह्यस्म॒द्र्य१॑क्सं मिमीहि॒ श्रवां॑सि।**
**विश्वाँ॑ अग्ने पृ॒त्सु ताञ्जे॑षि॒ शत्रू॑नहा॒ विश्वा॑ सु॒मना॑ दीदिही नः॥ २२॥**

स्वद॑स्व। ह॒व्या। सम्। इषः॑। दि॒दी॒हि॒। अ॒स्म॒द्र्य॑क्। सम्। मि॒मी॒हि॒। श्रवां॑सि।
विश्वा॑न्। अ॒ग्ने॒। पृ॒त्ऽसु। तान्। जे॒षि॒। शत्रू॑न्। अहा॑। विश्वा॑। सु॒ऽमनाः॑। दी॒दि॒हि॒। नः॒॥२२॥

हे ˅अग्ने ˅हव्या हवनयोग्यानि हवींषि ˅स्वदस्व स्वादय। अस्माकम् ˅इषः अन्नानि ˅सं ˅दिदीहि सम्यक् प्रकाशय। दीपितानि तानि ˅श्रवांसि अन्नानि ˅अस्मद्र्यक् अस्मदभिमुखानि ˅सं ˅मिमीहि संमानय[2]। कुरु[2] इत्यर्थः। ततः ˅पृत्सु संग्रामेषु ˅तान् बाधकान् ˅विश्वान् सर्वान्[3] ˅शत्रून् ˅जेषि जय। अथ ˅सुमनाः शोभनमनस्कः सन् ˅नः अस्माकं ˅विश्वा ˅अहा सर्वाण्यहानि ˅दीदिहि अग्निहोत्रादिकर्मयोग्यानि प्रकाशय॥ स्वदस्व। 'स्वद आस्वादने'। लोटि रूपम्। थासो लसार्वधातुकस्वरे धातुस्वरः। दिदीहि। 'दिवु क्रीडादौ' इत्यस्य लोटि 'बहुलं छन्दसि' इति विकरणस्य श्लुः। परत्वात् 'हलि च' इति दीर्घत्वे[4] कृते पश्चात् वलि लोपः। निघातः। अस्मद्र्यक्। अस्मानञ्चति इति अञ्चतेः क्विप्। 'विष्वग्देवयोश्च टेः°' इति[5] टेरद्र्यादेशः। सुपां सुलुगिति सुपो लुक्। अद्र्यादेशस्यान्तोदात्तत्वेन निपातनात् यणादेशे कृते 'उदात्तस्वरितयोः°[5]' इति यणः स्वरितत्वम्। मिमीहि। 'माङ् माने शब्दे च'। जुहोत्यादिः। तस्य लोटि व्यत्ययेन परस्मैपदम्। निघातः। सुमनाः। 'सोर्मनसी°' इत्युत्तरपदाद्युदात्तत्वम्। दीदिहि। दिवेर्यङ्लुकि लोटि तुजादित्वादभ्यासस्य दीर्घः। वलि[6] लोपः[6]॥ ॥ २७॥

'उषसः पूर्वाः' इति द्वाविंशत्यृचं द्वितीयं सूक्तं त्रैष्टुभम्। 'उषसः' इत्यनुक्रमणिका। प्रजापतेरार्षं वैश्वदेवं 'प्रजापतिर्हि वैश्वदेवं ह' इति पूर्वसूक्ते हिहशब्दप्रयोगात्[7]। सूक्तविनियोगो लैङ्गिकः। अत्राद्योषस्या ततः परं नवर्चोऽग्न्यादिदेवतास्ततः परा अहोरात्रदेवताका ततश्चतस्रो रोदस्योः पञ्चदशी द्युनिशोर्वा षोडशी दिग्देवताका ततः षडृचो वर्षत इन्द्रस्य केचिदग्नेस्त्वष्टुश्चेति मन्यन्ते॥

---

१. ख-ग-ज-ण–मृधि हिंसार्थम्; च–मृभि हिंसार्थे; भ-ल-स–मृधि हिंसार्थः। २. ख-ग-च–समानम्; ज-ण–संमानय समानम्; न–समानवनम्। ३. ल–'सर्वान्' नास्ति। ४. त–दीर्घे। ५. ख-ग-च-ज-ण-त-न-भ-स–'इति ... ...उदात्तस्वरितयोः' नास्ति। ६. ख-ग-च-ज-ण-न-भ-स–'वलि लोपः' नास्ति। ७. ख-ग-च-ज-ण-त-न-भ-स–हशब्दप्रयोगात्।

उषसः पूर्वा अध यद्व्यूषुर्महद्वि जज्ञे अक्षरं पदे गोः ।
व्रता देवानामुप नु प्रभूषन्महद्देवानामसुरत्वमेकम् ॥ १ ॥

उषसः । पूर्वाः । अध । यत् । विऽऊषुः । महत् । वि । जज्ञे । अक्षरम् । पदे । गोः ।
व्रता । देवानाम् । उप । नु । प्रऽभूषन् । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १ ॥

˅पूर्वाः उदयकालात् प्राचीनाः ˅उषसः ˅यत् यदा ˅व्यूषुः व्युच्छन्ति ˅अध तदानीम् ˅अक्षरम् । न क्षरतीत्यक्षरम् । अविनाश्यादित्याख्यं ˅महत् प्रभूतं ज्योतिः ˅गोः उदकस्य ˅पदे स्थाने समुद्रे नभसि वा[1] ˅वि ˅जज्ञे उत्पद्यते । अथोदिते सूर्ये ˅प्रभूषन् अग्निहोत्रादिकर्मसु प्रभवितुमिच्छन् यजमानः ˅व्रता कर्माणि ˅देवानां ˅नु क्षिप्रम् ˅उप समीपं नेष्यति[2] । योग्यक्रियाध्याहारः । तदिदं ˅देवानाम् ˅एकं मुख्यम् ˅असुरत्वम्[3] । अस्यति क्षिपति सर्वानित्यसुरः प्रबलः । तस्य भावोऽसुरत्वं प्राबल्यम् । महदैश्वर्यम् ॥ व्यूषुः । 'उष प्लुष दाहे' इत्यस्य विपूर्वस्य लिट्युसि रूपम् । 'सह' इति योगविभागात् समासः । यद्वृत्तयोगादनिघातः । प्रभूषन् । भवतेः सनि द्विर्वचनस्य छन्दसि विकल्पितत्वात् अत्र[4] द्विर्वचनाभावः । तदन्ताच्छतरि रूपम् । प्रादिसमासः । शतुर्लसार्वधातुकस्वरे धातुस्वरः ॥

मो षू णो अत्र जुहुरन्त देवा मा पूर्वे अग्ने पितरः पदज्ञाः ।
पुराण्योः सद्मनोः केतुरन्तर्महद्देवानामसुरत्वमेकम् ॥ २ ॥

मो इति । सु । नः । अत्र । जुहुरन्त । देवाः । मा । पूर्वे । अग्ने । पितरः । पदऽज्ञाः ।
पुराण्योः । सद्मनोः । केतुः । अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २ ॥

हे ˅अग्ने ˅अत्र अस्मिन् काले ˅देवाः ˅नः अस्मान् ˅सु सुष्ठु ˅मो ˅जुहुरन्त मा हिंस्युः । तथा ˅पदज्ञाः कर्माण्यनुष्ठाय देवपदमनुभवन्तः ˅पूर्वे पुरातनाः ˅पितरः ˅मा हिंसिषुः । यस्मात् ˅केतुः यज्ञानां प्रज्ञापकः सूर्यः ˅पुराण्योः पुरातनयोः ˅सद्मनोः । सीदन्त्यनयोर्देवमनुष्या इति सद्मनी रोदसी । तयोः ˅अन्तः मध्ये उदेति । तस्मादत्र मा हिंसन्त्वित्यर्थः । ˅महद्देवानाम् इत्यादि पूर्ववत् ॥ जुहुरन्त । 'हृ प्रसह्यकरणे' । लुङि जुहोत्यादित्वात् श्लुः । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इत्युत्वम् । संज्ञापूर्वकस्य विधेरनित्यत्वाददादेशाभावेऽन्तादेशः ॥

वि मे पुरुत्रा पतयन्ति कामाः शम्यच्छा दीद्ये पूर्व्याणि ।
समिद्धे अग्नावृतमिद्वदेम महद्देवानामसुरत्वमेकम् ॥ ३ ॥

वि । मे । पुरुऽत्रा । पतयन्ति । कामाः । शमि । अच्छ । दीद्ये । पूर्व्याणि ।
सम्ऽइद्धे । अग्नौ । ऋतम् । इत् । वदेम । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ३ ॥

---

१. च-ज-ण-च । २. न-स-तिष्ठति । ३. ख-ग-घ-ज-ण-न-भ-ल-स-'असुरत्वं' नास्ति । ४. च-न-'अत्र' नास्ति ।

हे अग्ने ᵛमे मम ᵛपुरुत्रा बहवः ᵛकामाः अभिलाषाः ᵛवि ᵛपतयन्ति विविधं गच्छन्ति। ᵛशमि अग्निष्टोमादिलक्षणं कर्म ᵛअच्छ अभिलक्ष्याहं ᵛपूर्व्याणि पुरातनानि स्तोत्राणि तदर्थं ᵛदीद्ये दीपयामि। पश्चात् यज्ञार्थम् ᵛअग्नौ ᵛसमिद्धे दीप्यमाने सति ᵛऋतमित् सत्यमेव ᵛवदेम। अनृतवचने हि यज्ञे वैगुण्यं स्यादिति ॥ पुरुत्रा। 'देवमनुष्यपुरुष°' इत्यादिना त्राप्रत्ययः। पतयन्ति। 'पत्लृ गतौ'। स्वार्थिको णिच् ॥

समानो राजा विभृतः पुरुत्रा शये शयासु प्रयुतो वनानु।
अन्या वत्सं भरति क्षेति माता महद्देवानामसुरत्वमेकम् ॥ ४ ॥

समानः। राजा। विऽभृतः। पुरुऽत्रा। शये। शयासु। प्रऽयुतः। वना। अनु।
अन्या। वत्सम्। भरति। क्षेति। माता। महत्। देवानाम्। असुरऽत्वम्। एकम् ॥ ४ ॥

ᵛसमानः साधारणः सर्वेषाम्। यद्वा एक एव। ᵛराजा दीप्यमानोऽग्निः ᵛपुरुत्रा बहुषु देशेषु ᵛविभृतः अग्निहोत्रार्थं विहृतो भवति। यद्वा। राजा अभिषुतः सोमः सर्वेषु देशेषु यज्ञार्थं विहृतो भवति। स चाग्निः सोमो वा ᵛशयासु वेदिषु[1]। शेरते हविरादयः पदार्था अत्रेति शया वेद्यः। तासु ᵛशये शेते निवसति। ᵛवनानु अनुवनं वनेष्वरणिरूपेषु काष्ठेषु ᵛप्रयुतः विभक्तोऽग्निर्वर्तते। सोमश्चेत्[2] वनेषु चमसेषु विभक्तो वर्तते। तस्य द्वे मातरौ द्यावापृथिव्यौ। तयोः ᵛअन्या द्यौः अस्याः[3] भूमेः[3] जायमानतया ᵛवत्सं वत्सभूतमग्निं सोमं वा ᵛभरति वृष्ट्यादिरूपेण भरति पोषयति। ᵛमाता वसुधा ᵛक्षेति केवलं निवासयति ॥ विभृतः। 'हृञ्[4] हरणे[4]'। कर्मणि क्तः। 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम्। पुरुत्रा। अधिकरणे त्राप्रत्ययः। शये। 'शीङ् स्वप्ने'। 'लोपस्तः°' इति तकारलोपः। 'शीङः सार्वधातुके गुणः'। शयासु। 'शीङ् स्वप्ने'। 'एरच्' इत्यधिकरणेऽच्। भरति। 'भृञ् भरणे'। भ्वादिः। 'एकान्याभ्यां समर्थाभ्याम्' इति पूर्वस्य न निघातः। क्षेति। 'क्षि निवासगत्योः' इत्यस्य लटि 'बहुलं छन्दसि' इति विकरणस्य लुक् ॥

आक्षित्पूर्वास्वपरा अनूरुत्सद्यो जातासु तरुणीष्वन्तः।
अन्तर्वतीः सुवते अप्रवीता महद्देवानामसुरत्वमेकम् ॥ ५ ॥

आऽक्षित्। पूर्वासु। अपराः। अनूरुत्। सद्यः। जातासु। तरुणीषु। अन्तरिति।
अन्तःऽवतीः। सुवते। अप्रऽवीताः। महत्। देवानाम्। असुरऽत्वम्। एकम् ॥ ५ ॥

ᵛपूर्वासु जीर्णास्वोषधीषु ᵛआक्षित् आवर्तमानः तथा ᵛअपराः नव्या ओषधीः ᵛअनूरुत् अनुरुन्धन् उत्पत्त्यानुगुण्येनानुतिष्ठन्नग्निः सूर्यो वा ᵛसद्यो ᵛजातासु तदानीमुत्पन्नासु ᵛतरुणीषु पल्लवितास्वोषधीषु ᵛअन्तः वर्तते। ता ओषधयः ᵛअप्रवीताः केनापि पुरुषेणानिषिक्तरेतस्काः

---

१. न-ल-स-'वेदिषु' नास्ति। २. च-फ-सोमश्च। ३. ख-ग-च-फ-अस्यां भूतेः। ४. ख-ग-च-ज-ण-भृञ् भरणे; न-भ-स-भृञ् हरणे।

अनभ्यक्ता वा ᵛअन्तर्वतीः अग्निना गर्भवत्यो भूत्वा ᵛसुवते फलं पुष्पं चोत्पादयन्ति । तदिदं देवानामैश्वर्यम् ॥ आक्षित् । ' क्षि निवासगत्योः ' । क्विप् । अनूरुत् । ' अनो रुध कामे ' । अस्मात् क्विप् । ' अन्येषामपि दृश्यते ' इति दीर्घः[1] । कृत्स्वरः । तरुणीषु । ' नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ' ( पा. म. ४·१·१५·६ ) इति ङीप् । अन्तर्वतीः । ' झयः ' इति मतुपो वत्वम् । सुवते । ' षूङ् प्राणिगर्भविमोचने ' इत्यस्य लटि रूपम् । निघातः ॥ ॥ २८ ॥

शयुः परस्तादध नु द्विमाताबन्धनश्चरति वत्स एकः ।

मित्रस्य ता वरुणस्य व्रतानि महद्देवानामसुरत्वमेकम् ॥ ६ ॥

शयुः । परस्तात् । अध । नु । द्विऽमाता । अबन्धनः । चरति । वत्सः । एकः ।

मित्रस्य । ता । वरुणस्य । व्रतानि । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ६ ॥

ᵛद्विमाता । द्वे द्यावापृथिव्यौ मातरौ यस्य स द्विमाता । यद्वा द्वयोर्लोकयोर्निर्माता । सूर्यः ᵛपरस्तात् पश्चिमायां दिशि अस्तवेलायां[2] ᵛशयुः शयानोऽव्याप्रियमाणो भवति । ᵛअध ᵛनु अथोदयवेलायाम् ᵛएकः द्यावापृथिव्योः साधारणः तयो रसादानात् ᵛवत्सः पुत्रः ᵛअबन्धनः अप्रतिबद्धगतिः अनालम्बनः[3] एकः सन् ᵛचरति नभसि गच्छति । ᵛता तानीमानि ᵛमित्रस्य ᵛवरुणस्य मित्रावरुणयोः ᵛव्रतानि कर्माणि[4] ॥ शयुः । ' शीङ् स्वप्ने ' । भृमृशीतृचरि°' इत्यादिना उप्रत्ययः । द्विमाता । ' नद्यृतश्च ' इति प्राप्तस्य कपः ' ऋतश्छन्दसि ' इति प्रतिषेधः ॥

द्विमाता होता विदथेषु सम्राळन्वग्रं चरति क्षेति बुध्नः ।

प्र रण्यानि रण्यवाचो भरन्ते महद्देवानामसुरत्वमेकम् ॥ ७ ॥

द्विऽमाता । होता । विदथेषु । सम्ऽराट् । अनु । अग्रम् । चरति । क्षेति । बुध्नः ।

प्र । रण्यानि । रण्यऽवाचः । भरन्ते । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ७ ॥

ᵛद्विमाता द्वयोर्लोकयोर्निर्माता ᵛविदथेषु यज्ञेषु ᵛहोता देवानामाह्वाता ᵛसम्राट् यज्ञेषु सम्यक् राजमानोऽग्निः ᵛअन्वग्रम् अग्रे[5] दिवि ᵛचरति सूर्यभूतस्तत्र वर्तते । ᵛबुध्नः सर्वस्य कर्मणो मूलभूतः सन् ᵛक्षेति भूमौ वसति । यद्वा । अग्रं मुख्यं भागं चरति भक्षयति[6] । क्षेति यज्वनां गृहेषु निवसति । यद्वा । बुध्नः प्रतिष्ठा अन्तेभागी स्विष्टकृद्रूपेण । ' प्रतिष्ठा वै स्विष्टकृत् ' इति श्रुतेः । किंच ᵛरण्यवाचः रमणीयवाचः स्तोतारः ᵛरण्यानि रमणीयानि स्तोत्राणि ᵛप्र ᵛभरन्ते प्रकर्षेण[7] कुर्वन्ति । तदिदं देवानामैश्वर्यम् ॥ चरति । ' चादिलोपे° ' इति न[8] निघातः[8] ॥

---

१. त–अनोर्दीर्घः । २. ल–अस्तमयवेलायाम् । ३. ख-भ–अनालम्बेन; च-फ–बलेन । ४. ज-ण–कर्माणि । तदिदं देवानामैश्वर्यम् । ५. ख-ग-घ-च-ज-ण-त-भ-स–अन्वग्रे । ६. ख-ग-च-ज-ण-न-भ-स–' भक्षयति ' नास्ति । ७, न-ल-स–प्रणयन्ति । ८. ख-ग-च-ज-ण–निघाताभावः ।

शूर॑स्येव यु॒ध्य॑तो अन्त॒मस्य॑ प्रती॒चीनं॑ ददृशे॒ विश्व॑मा॒यत् ।
अ॒न्तर्म॒तिश्च॑रति नि॒ष्षिधं॒ गोर्म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥ ८ ॥

शूर॑स्यऽइव । यु॒ध्य॑तः । अ॒न्त॒मस्य॑ । प्र॒ती॒चीन॑म् । द॒दृ॒शे । विश्व॑म् । आ॒ऽयत् ।
अ॒न्तः । म॒तिः । च॒र॒ति । नि॒ःऽसिध॑म् । गोः । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ ८ ॥

अन्तमस्य समीपे वर्तमानस्य दावाग्नेः[1] आयत् अभिमुखमागच्छत् विश्वं भूतजातं प्रतीचीनं पराङ्मुखं ददृशे दृश्यते । तत्र दृष्टान्तः । शूरस्येव । यथा युध्यतः युद्धं कुर्वाणस्य शूरस्य समर्थस्य राज्ञः अभिमुखमागच्छत् परबलं पराङ्मुखं दृश्यते तद्वत् । मतिः सर्वैर्ज्ञायमानः सोऽग्निः गोः उदकस्य निष्षिधं हिंसिकां दीप्तिम् अन्तः चरति अन्तर्धारयति ॥ युध्यतः । 'युध संप्रहारे' । दिवादिः[2] । तस्य शतरि रूपम् । अन्तमस्य । अन्तशब्दात् 'अत इनिठनौ' इति ठन् । अतिशयेनान्तिकः इत्यर्थे तमप् । 'तमे तादेश्च' इति तादिलोपः । नित्त्वादाद्युदात्तः । प्रतीचीनम् । प्रतिपूर्वस्याञ्चतेः क्विन् । तस्मात् 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । ईनादेशः । प्रत्ययस्वरः । आयत् । 'या प्रापणे' इत्यस्याङ्पूर्वस्य शतरि रूपम्; आङ्पूर्वस्य 'अय पय गतौ' इत्यस्य शतरि रूपं वेति व्युत्पत्त्यनवधारणादनवग्रहः ॥

नि वे॑वेति पलि॒तो दू॒त आ॒स्व॒न्तर्म॒हांश्च॑रति रो॒च॒नेन॑ ।
वपूं॑षि॒ बिभ्र॑द॒भि नो॒ वि च॑ष्टे म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥ ९ ॥

नि । वे॒वे॒ति॒ । प॒लि॒तः । दू॒तः । आ॒सु॒ । अ॒न्तः । म॒हान् । च॒र॒ति॒ । रो॒च॒नेन॑ ।
वपूं॑षि । बिभ्र॑त् । अ॒भि । नः॒ । वि । च॒ष्टे॒ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ ९ ॥

पलितः पालयिता पूर्णो वा देवानां दूतः अग्निः आसु ओषधीषु नि वेवेति नितरां व्याप्य वर्तते । महान् सोऽग्निः रोचनेन सूर्येण सह अन्तः रोदस्योर्मध्ये चरति । वपूंषि नानाविधानि रूपाणि बिभ्रत् सोऽग्निः नः अस्मान् यष्टॄन् अभि वि चष्टे विशेषेणानुग्रहदृष्ट्या पश्यति ॥ वेवेति । वी गत्यादिषु । यङ्लुकि ईडभावे रूपम् । रोचनेन । सहार्थे तृतीया । बिभ्रत् । 'डुभृञ् धारणपोषणयोः' इत्यस्य शतरि रूपम् । अभ्यस्तस्वरः ॥

विष्णु॑र्गो॒पाः प॑र॒मं पा॑ति॒ पाथः॑ प्रि॒या धामा॑न्य॒मृता॑ दधा॑नः ।
अ॒ग्निष्टा विश्वा॒ भुव॑नानि वेद म॒हद्दे॒वाना॑मसु॒र॒त्वमेक॑म् ॥ १० ॥

विष्णुः॑ । गो॒पाः । प॒र॒मम् । पा॒ति॒ । पाथः॑ । प्रि॒या । धामा॑नि । अ॒मृता॑ । दधा॑नः ।
अ॒ग्निः । ता । विश्वा॑ । भुव॑नानि । वे॒द॒ । म॒हत् । दे॒वाना॑म् । अ॒सु॒र॒ऽत्वम् । एक॑म् ॥ १० ॥

---

१. ल–देवाग्नेः; स–दीप्ताग्नेः । २. ख-ग-ज-ण-न-भ-स–दिवादित्वात् ।

vविष्णुः व्यासः vगोपाः सर्वस्य गोपायिता vप्रिया प्रियतमानि vअमृता क्षयरहितानि vधामानि तेजांसि vदधानः सोऽग्निः vपरमं vपाथः स्थानं vपाति रक्षति । यद्वा । धामानि लोकधारकाणि अमृता उदकानि दधानः सन् परमं पाथः उदकस्य स्थानमन्तरिक्षं पाति । सः vअग्निः vता तानि vविश्वा सर्वाणि vभुवनानि भूतजातानि vवेद जानाति ॥ गोपाः । गोपायतेः क्विपि अतोलोपयलोपौ । अग्निष्टा इत्यत्र संहितायां 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' इति षत्वम् ॥ ॥ २९ ॥

नाना चक्राते यम्या३ वपूंषि तयोरन्यद्रोचते कृष्णमन्यत् ।
श्यावी च यदरुषी च स्वसारौ महद्देवानामसुरत्वमेकम् ॥ ११ ॥

नाना । चक्राते इति । यम्या । वपूंषि । तयोः । अन्यत् । रोचते । कृष्णम् । अन्यत् ।
श्यावी । च । यत् । अरुषी । च । स्वसारौ । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ ११ ॥

vयम्या यमरूपे मिथुनभूते अहश्च रात्रिश्चेत्येते[1] vनाना[2] नानाविधानि vवपूंषि शुक्लकृष्णादीनि रूपाणि vचक्राते कुरुतः । vश्यावी कृष्णवर्णा vअरुषी शुक्लतया आरोचमाना vयत् ये परस्परं vस्वसारौ भवतः vतयोः मध्ये vअन्यत् अर्जुनमहः vरोचते किरणसंबन्धाद्दीप्यते । vअन्यत् रात्रिलक्षणं vकृष्णं तमःसंबन्धात् कृष्णवर्णमाभाति ॥ यम्या । सुपो डादेशः । रोचते । 'एकान्याभ्यां समर्थाभ्याम्' इति न निघातः ॥

माता च यत्र दुहिता च धेनू सबर्दुघे धापयेते समीची ।
ऋतस्य ते सदसीळे अन्तर्महद्देवानामसुरत्वमेकम् ॥ १२ ॥

माता । च । यत्र । दुहिता । च । धेनू इति ।
सबर्दुघे इति सबःऽदुघे । धापयेते इति । समीची इति सम्ऽईची ।
ऋतस्य । ते इति । सदसि । ईळे । अन्तः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १२ ॥

vमाता सर्वेषां निर्मातृत्वान्माता पृथिवी vच vदुहिता दूरे निहिता[3] द्यौः vच । 'दुहिता दुर्हिता दूरे हिता दोग्धेर्वा' ( निरु. ३. ४ ) इति यास्कः । एते vसबर्दुघे सबरः स्वीयस्य क्षीररूपरसस्य[4] दोग्ध्र्यौ अत एव vधेनू जगतः प्रीणयित्र्यौ ते[5] द्यावापृथिव्यौ vयत्र अन्तरिक्षे vसमीची परस्परं संगते सत्यौ vधापयेते स्वकीयं रसमन्योन्यं पाययेते vऋतस्य उदकस्य vसदसि स्थानभूते तस्मिन्नन्तरिक्षे vअन्तः स्थिते द्यावापृथिव्यौ vईळे अहं स्तौमि । यद्वा । वृष्टिलक्षणं[6] रसं द्यौः पृथिवीं धापयते[6] आहुतिलक्षणं

१. ख-ग-च-फ–रात्रिश्चैते; प–रात्रिश्चेति । २. ख-ग-घ-च-ज-ण-न-भ-ल-स–'नाना' नास्ति । ३. त–विनिहिता । ४. घ–रसस्य; न-ल-स–क्षीररूपस्य । ५. न-ल-स–'ते' नास्ति । ६. ख-ग-च-ज-ण-न-भ-स–द्यौः वृष्टिलक्षणं रसम् ।

रसं द्यौः[1] पृथिवीति एवमन्योन्यं माता च दुहिता च भवतः। ऋतस्य सदसि स्थाने यज्ञसदने स्थितोऽहं ते उभे स्तौमि ॥ सबर्दुघे। 'सबःशब्दः क्षीरवाची' इति संप्रदायविद आहुः। तस्मिन्नुपपदे 'दुह प्रपूरणे' इत्यस्माद्धातोः 'दुहः कब्घश्च' इति कप्प्रत्ययो घश्चान्तादेशः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। धापयेते। 'धेट् पाने' इत्यस्य ण्यन्तस्य लटि 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदे प्राप्ते 'पादिषु धेट उपसंख्यानम्' इत्यात्मनेपदम्। यद्वृत्तयोगादनिघातः ॥

अ॒न्यस्या॑ व॒त्सं रि॑ह॒ती मि॑माय॒ कया॑ भु॒वा नि द॑धे धे॒नुरूधः॑।

ऋ॒तस्य॒ सा पय॑सापिन्व॒तेळा॑ म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १३ ॥

अ॒न्यस्याः॑। व॒त्सम्। रि॒ह॒ती। मि॒मा॒य॒। कया॑। भु॒वा। नि। द॒धे॒। धे॒नुः। ऊधः॑।

ऋ॒तस्य॑। सा। पय॑सा। अ॒पि॒न्व॒त॒। इळा॑। म॒हत्। दे॒वाना॑म्। अ॒सु॒र॒ऽत्वम्। एक॑म् ॥ १३ ॥

ᐯअन्यस्याः पृथिव्याः ᐯवत्सम् अग्निं ᐯरिहती उदकधारारूपया जिह्वया लिहती द्यौः ᐯमिमाय मेघद्वारा ध्वनिं करोति। ᐯधेनुः प्रीणयित्री सा द्यौः ᐯकया जलवर्जितया[2] ᐯभुवा तत्रत्यं जलमादाय स्वकीयम् ᐯऊधः मेघरूपं ᐯनि ᐯदधे उदकेन निहितमकरोत्। ᐯसा जलवर्जिता ᐯइळा पृथिवी ᐯऋतस्य सत्यभूतस्यादित्यस्य ᐯपयसा उदकेन ᐯअपिन्वत वर्षकाले[3] सिक्ता भवति। 'आदित्याज्जायते[4] वृष्टिः' (मनु. ३.७६) इति स्मृतेः ॥ रिहती। 'लिह आस्वादने' इत्यस्य शतरि रूपम्। 'शतुरनुमः०' इति ङीप उदात्तत्वम्। अपिन्वत[3]। 'पिवि सेचने'। मुचादिरात्मनेपदी। निघातः ॥

पद्या॑ वस्ते पु॒रुरू॑पा॒ वपूं॑ष्यू॒र्ध्वा त॑स्थौ॒ त्र्यविं॒ रेरि॑हाणा।

ऋ॒तस्य॒ सद्म॒ वि च॑रामि वि॒द्वान्म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥ १४ ॥

पद्या॑। व॒स्ते॒। पु॒रु॒ऽरू॑पा। वपूं॑षि। ऊ॒र्ध्वा। त॒स्थौ॒। त्रि॒ऽअवि॑म्। रेरि॑हाणा।

ऋ॒तस्य॑। सद्म॑। वि। च॒रा॒मि॒। वि॒द्वान्। म॒हत्। दे॒वाना॑म्। अ॒सु॒र॒ऽत्वम्। एक॑म् ॥ १४ ॥

ᐯपद्या। जगत्स्रष्टुः परमेश्वरस्य पद्भ्यां जातत्वात् पद्या भूमिः। तथा च मन्त्रवर्णः—'पद्भ्यां भूमिः' (ऋ. सं. १०.९०.१४) इति। यद्वा पादसंचारे साधुः पद्या भूमिः ᐯपुरुरूपा नानाविधस्वरूपाणि ᐯवपूंषि स्थावरजङ्गमात्मकानि रूपाणि ᐯवस्ते आच्छादयति। सैषा भूमिः ᐯऊर्ध्वा उत्तरवेद्यात्मनोन्नता सती स्वसारभूतेन हविषा ᐯत्र्यविम्। सार्धसंवत्सरवयस्को वत्सस्त्र्यविरित्युच्यते। तत्प्रमाणमादित्यम्। त्रीन् लोकान् अवति स्वतेजसा व्याप्नोतीति त्र्यविरिति वा। ᐯरेरिहाणा लिहती ᐯतस्थौ। ᐯऋतस्य सत्यभूतस्यादित्यस्य ᐯसद्म स्थानं ᐯविद्वान् जानानोऽहं ᐯवि ᐯचरामि हविर्भिः तमादित्यं परिचरामि ॥ पद्या। पादशब्दात् 'भवे छन्दसि' इति यत्। 'पद्यत्यतदर्थे' (पा. सू. ६.३.५३) इति पादस्य पद्भावः। यद्वा। 'तत्र साधुः' इति यत्। 'यतोऽनावः' इति

---

१. ख-ग-च-ज-ण-न-भ-स–'द्यौः' नास्ति। २. त–जलावर्जितया। ३. ख-ग-च–प्रवर्षकाले; त–वर्षाकाले। ख-ग-च-ज-ण-न-भ-स–'आदित्याज्जायते......अपिन्वत' नास्ति।

आद्युदात्तत्वम्। स्यविम्। अव रक्षणादिषु। '°इन्' (उ. सू. ४. ५५७) इतीन्प्रत्ययः। कृत्स्वरः। रेरिहाणा। 'लिह आस्वादने' इत्यस्य यङ्लुकि शानचि रूपम्। अभ्यस्तस्वरः॥

पदेइव निहिते दस्मे अन्तस्तयोरन्यद्गुह्यमाविरन्यत्।

सध्रीचीना पथ्या३ सा विषूची महद्देवानामसुरत्वमेकम्॥ १५॥

पदेइवेति पदेऽइव। निहिते इति निऽहिते। दस्मे। अन्तरिति।

तयोः। अन्यत्। गुह्यम्। आविः। अन्यत्।

सध्रीचीना। पथ्या। सा। विषूची। महत्। देवानाम्। असुरऽत्वम्। एकम्॥ १५॥

"पदेइव। पद्येते ज्ञायेते तत्तदसाधारणलिङ्गेनेति पदे। अहश्च रात्रिश्चेत्येते "दस्मे सर्वैर्दर्शनीये ते उभे "अन्तः नभसि मध्ये[1] "निहिते स्थापिते इव वर्तेते। "तयोः अहोरात्रयोः "अन्यत् रात्रिलक्षणं "गुह्यम् अप्रकाशमानतया गूढमिवास्ते। "अन्यत् अहः "आविः सूर्यप्रकाशेन प्रकटं भवति। "सध्रीचीना अहोरात्रयोः परस्परमेलनरूपा "पथ्या मार्गः। काल इत्यर्थः। "सा "विषूची। पुण्यकृतोऽपुण्यकृतश्च प्राप्नोतीति विषूची भवति। सर्वे जना अहोरात्रयोर्वर्तन्ते। यद्वा। पदेइव देवमनुष्यादीनां[2] स्थानभूते द्यावापृथिव्यौ अन्तरन्तरिक्षे निहिते वर्तेते। तयोरन्यत् अन्या[3] द्यौः गुह्यमस्माभिः अदृश्यमानतया[4] गूढा[5] वर्तते। अन्या पृथिवी आविः सर्वैः दृश्यमानत्वेन[6] प्रकटा भवति। सध्रीचीनेति पूर्ववत्॥ सध्रीचीना। सहपूर्वादञ्चतेः क्विन्। 'सहस्य सध्रिः' इति सध्र्यादेशः। 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः[7]॥ ॥ ३०॥

आ धेनवो धुनयन्तामशिश्वीः सबर्दुघाः शशया अप्रदुग्धाः।

नव्यानव्या युवतयो भवन्तीर्महद्देवानामसुरत्वमेकम्॥ १६॥

आ। धेनवः। धुनयन्ताम्। अशिश्वीः। सबःऽदुघाः। शशयाः। अप्रऽदुग्धाः।

नव्याःऽनव्याः। युवतयः। भवन्तीः। महत्। देवानाम्। असुरऽत्वम्। एकम्॥ १६॥

"धेनवः वृष्टिद्वारा सर्वस्य जगतः प्रीणयित्र्यः "अशिश्वीः शिशुरहिताः। यद्वा शिशवो न भवन्तीत्यशिश्वीः। "शशयाः नभसि शयाना वर्तमानाः केनापि "अप्रदुग्धाः अक्षीणरसाः "सबर्दुघाः उदकलक्षणस्य क्षीरस्य दोग्ध्र्यः "युवतयः परस्परमिश्रणोपेताः "नव्यानव्याः अतिशयेन नूतनाः "भवन्तीः दिशो मेघा वा "आ "धुनयन्ताम् आदुहन्तु। मेघपक्षे अशिश्वीर्भवन्तीरित्यत्र लिङ्गव्यत्ययः॥

---

१. ख-ग-घ-च-ज-ण-न-भ-ल-स–'मध्ये' नास्ति। २. ख-ग-घ-च-ज-ण-न-भ-स–मनुष्यादीनाम्। ३. ल–'अन्या' नास्ति ४. च–दृश्यतया; ज-ण–अदृश्यतया। ५. ख-ग-च-ज-ण-भ–गुह्यम्; न–गुह्या; ल–गूढम्। ६. ख-ग-च-ज-ण-न–दृश्यमाना; स–दृश्यमानतया। ७. ख-ग-ज-ण-न-भ-स–स्वरः; च-फ–ईनादेशः। प्रत्ययस्वरः।

धुनयन्ताम् । ' धूञ् कम्पने ' । णिचि ' धूञ्प्रीणोर्नुग्वक्तव्यः ' ( पा. सू. ७. ३. ३७. १ ) इति नुक् । ह्रस्वश्छान्दसः । अशिश्रीः । ' सख्यशिश्वीति भाषायाम् ' इति व्यत्ययेन छन्दसि भवति ॥

यदन्यासु वृषभो रोरवीति सो अन्यस्मिन्यूथे नि दधाति रेतः ।

स हि क्षपावान्त्स भगः स राजा महद्देवानामसुरत्वमेकम् ॥ १७ ॥

यत् । अन्यासु । वृषभः । रोरवीति । सः । अन्यस्मिन् । यूथे । नि । दधाति । रेतः ।

सः । हि । क्षपाऽवान् । सः । भगः । सः । राजा । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १७ ॥

ᵛवृषभः अपां वर्षकः ᵛयत् यः पर्जन्यात्मेन्द्रः ᵛअन्यासु दिक्षु ᵛरोरवीति मेघद्वारा भृशं शब्दं करोति ᵛसः पर्जन्य इन्द्रः ᵛअन्यस्मिन् ᵛयूथे दिशां वृन्दे ᵛरेतः उदकं ᵛनि ᵛदधाति तत्र वर्षति । लोके[1] हि[1] वृषभः कासुचिद्गोषु रेतःसेकार्थं रवं करोत्यन्यस्मिन् गोयूथे रेतः सिञ्चति तद्वत् । ᵛसः इन्द्रः ᵛक्षपावान् । क्षिपति शत्रूनुदकं वेति क्षेपणवान् । यद्वा । क्षपा रात्रिः । तथा रात्रिपर्याययागानां स्तोत्राणां भागभूता या रात्रिः सोच्यते । तद्वान् । ᵛसः ᵛभगः सर्वैर्भजनीयः । ᵛसः ᵛराजा ᵛहि तत्तत्कर्मानुरूपफलप्रदानेन सर्वेषां राजा खलु ॥ रोरवीति । ' रु शब्दे ' इत्यस्य यङ्लुगन्तस्य लटि रूपम् । ' एकान्याभ्यां समर्थाभ्याम् ' इति प्रथमस्य न निघातः । यूथे । ' यु मिश्रणे ' । ' तिथपृष्ठगूथयूथप्रोथाः ' ( उ. सू. २. १६९ ) इति थक्प्रत्ययान्तत्वेन निपातनाद्दीर्घः । रेतः । ' रीङ् क्षरणे ' इत्यस्मात् ' स्रुरीभ्यां तुट् च ' इत्यसुन्प्रत्ययस्तुडागमश्च । नित्त्वादाद्युदात्तः ॥

वीरस्य नु स्वश्व्यं जनासः प्र नु वोचाम विदुरस्य देवाः ।

षोळ्हा युक्ताः पञ्चपञ्चा वहन्ति महद्देवानामसुरत्वमेकम् ॥ १८ ॥

वीरस्य । नु । सुऽअश्व्यम् । जनासः । प्र । नु । वोचाम । विदुः । अस्य । देवाः ।

षोळ्हा । युक्ताः । पञ्चऽपञ्च । आ । वहन्ति । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १८ ॥

हे ᵛजनासः जनाः ᵛवीरस्य शूरस्येन्द्रस्य ᵛस्वश्व्यं शोभनाश्वोपेतत्वं ᵛनु क्षिप्रं ᵛप्र ᵛवोचाम प्रकर्षेण वदाम । तथा ᵛदेवाः अपि ᵛअस्य इन्द्रस्य स्वश्वत्वं ᵛनु[2] क्षिप्रं[2] ᵛविदुः जानन्ति । किं तत्स्वश्वत्वम् । तदुच्यते । ᵛषोळ्हा मासानां द्वन्द्वयोगकाले षोढा दृश्यमाना ऋतवोऽश्वा निरूप्यन्ते । ते च षट्संख्याका ऋतवो हेमन्तशिशिरयोः समासेन ᵛपञ्चपञ्च ᵛयुक्ताः सन्तः कालात्मकमिन्द्रम् ᵛआ ᵛवहन्ति । तदिदम् इन्द्रस्य स्वश्वत्वं यदृतुभिरूढत्वम् ॥ षोळ्हा । षष्शब्दात् ' संख्याया विधार्थे धा ' इति धाप्रत्ययः । ' षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च ' ( पा.सू. ६.३. १०९. ३-४ ) इत्युत्वं ष्टुत्वं च । प्रत्ययस्वरः ॥

त्वाष्ट्रे पशौ हविषोऽनुवाक्या ' देवस्त्वष्टा ' इत्येषा । सूत्रितं च—' देवस्त्वष्टा सविता विश्वरूपो देव त्वष्टर्यद्ध चारुत्वमानट् ' ( आश्व. श्रौ. ३.८ ) इति ॥

---

१. ख-ग-घ-च-ज-ण-प-फ-भ-यथा । २. ख-च–क्षिप्रम्; न-ल-स–' नु क्षिप्रम् ' नास्ति ।

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।
इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् ॥ १९ ॥

देवः । त्वष्टा । सविता । विश्वऽरूपः । पुपोष । प्रऽजाः । पुरुधा । जजान ।
इमा । च । विश्वा । भुवनानि । अस्य । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ १९ ॥

ᵛसविता अन्तर्यामितया सर्वस्य प्रेरकः ᵛविश्वरूपः नानाविधरूपः ᵛत्वष्टा त्वष्टृनामकः ᵛदेवः ᵛप्रजाः ᵛपुरुधा बहुधा ᵛजजान जनयति । ताश्च ᵛपुपोष पोषयति । ᵛइमा इमानि ᵛविश्वा विश्वानि सर्वाणि ᵛभुवनानि भूतजातानि ᵛच ᵛअस्य त्वष्टुः संबन्धीनि ॥ विश्वरूपः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् ॥

मही समैरच्चम्वा समीची उभे ते अस्य वसुना न्यृष्टे ।
शृण्वे वीरो विन्दमानो वसूनि महद्देवानामसुरत्वमेकम् ॥ २० ॥

मही इति । सम् । ऐरत् । चम्वा । समीची इति सम्ऽईची ।
उभे इति । ते इति । अस्य । वसुना । न्यृष्टे इति निऽऋष्टे ।
शृण्वे । वीरः । विन्दमानः । वसूनि । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २० ॥

ᵛमही महत्यौ ᵛसमीची परस्परं[1] संगते[1] ᵛचम्वा । चमन्त्यदन्त्यनयोः देवमनुष्याः[2] इति चम्वौ । यद्वा । चम्येते अद्येते भूतजातैरिति चम्वौ द्यावापृथिव्यौ । ᵛसमैरत् इन्द्रः प्रजापश्वादिभिः[3] सम्यगयोजयत् । ᵛते ᵛउभे द्यावापृथिव्यौ ᵛअस्य इन्द्रस्य ᵛवसुना तेजसा धनेन वा ᵛन्यृष्टे नितरां व्याप्ते भवतः । ᵛवीरः समर्थः स इन्द्रः ᵛवसूनि शत्रूनभिभूय तदीयानि धनानि ᵛविन्दमानः लभमानः सन् ᵛशृण्वे सर्वैः श्रूयते । 'तवेदिदमभितश्चेकिते वसु' ( ऋ. सं. १·५३·३ ) इत्यादिषु दृष्टत्वात् ॥ ऐरत् । 'ईर गतौ' इत्यस्य लङि रूपम् । न्यृष्टे । 'ऋषी गतौ' । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः स्वरः । शृण्वे । 'श्रु श्रवणे' इत्यस्य व्यत्ययेन कर्मणि श्नुः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । विन्दमानः । 'विदॢ लाभे' इत्यस्य लटि शानचि रूपम् । तस्य लसार्वधातुकस्वरे[4] धातुस्वरः[4] ॥

इमां च नः पृथिवीं विश्वधाया उप क्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा महद्देवानामसुरत्वमेकम् ॥ २१ ॥

इमाम् । च । नः । पृथिवीम् । विश्वऽधायाः । उप । क्षेति । हितऽमित्रः । न । राजा ।
पुरःऽसदः । शर्मऽसदः । न । वीराः । महत् । देवानाम् । असुरऽत्वम् । एकम् ॥ २१ ॥

१. त—परस्परसंगते । २. ख-ग-च-ज-ण-न-भ—देवाः मनुष्याः । ३. फ—प्रजाः पश्वादिभिः ।
४. ख-ग-च-ज-ण-न-भ-स—लसार्वधातुकस्वरः ।

vविश्वधाय्यः विश्वस्य धाता सर्वाङ्गो वा vनः अस्माकं vराजा इन्द्रः vइमां vपृथिवीम् अन्तरिक्षं vच vउप तयोः समीपे vक्षेति निवसति। तत्र दृष्टान्तः। vहितमित्रो vन। यथा कस्यचित् हितोपदेष्टा सुहृत् समीपे निवसति तद्वत्। vवीराः समर्था युद्धसहाया मरुतः vपुरःसदः युद्धार्थं पुरतो निश्चयेन गन्तार इन्द्रस्य vशर्मसदो vन। नश्चार्थे। शर्मणि गृहे सीदन्तश्च भवन्ति। यत्र यत्रासौ तत्र तत्र संनिधिं कुर्वाणा इत्यर्थः॥ क्षेति। 'क्षि निवासगत्योः' इत्यस्य लटि 'बहुलं छन्दसि' इति विकरणस्य लुक्। निघातः॥

निष्षिध्वरीस्त ओषधीरुतापो रयिं त इन्द्र पृथिवी बिभर्ति।
सखायस्ते वामभाजः स्याम महद्देवानामसुरत्वमेकम्॥ २२॥

निःऽसिध्वरीः। ते। ओषधीः। उत। आपः। रयिम्। ते। इन्द्र। पृथिवी। बिभर्ति।
सखायः। ते। वामऽभाजः। स्याम। महत्। देवानाम्। असुरऽत्वम्। एकम्॥ २२॥

हे पर्जन्यात्मक vइन्द्र vओषधीः ओषधयः vते vनिष्षिध्वरीः निष्षिध्वर्यो[1] नितरां[1] त्वत्कर्तृकसिद्धिमत्यः। vउत अपि च vआपः त्वत्तो निःसृताः। vपृथिवी vते तव भोगयोग्यं vरयिं धनं vबिभर्ति। 'पुरू वसूनि पृथिवी बिभर्ति' (ऋ. सं. ३.५१.५) इति हि निगमः। ततः vते तव vसखायः हविष्प्रदानेनोपकारकाः[2] स्तोतारः[3] वयं vवामभाजः vस्याम सर्वे वननीयधनभागिनो भवेम। तदेतद्देवानां महदैश्वर्यम्॥ निष्षिध्वरीः। 'षिधु संराद्धौ'। संपदादिलक्षणो भावे क्विप्। तदस्यास्ति इत्यर्थे 'छन्दसीवनिपौ°' इति वनिप्। 'वनो र च' इति ङीप् रेफश्च। निसा सह समासः। निसः सकारं छान्दसत्वादनादृत्य 'उपसर्गात्सुनोति°' इत्यादिना षत्वम्। ङीपः पित्त्वादनुदात्तत्वे धातुस्वरः। बिभर्ति। 'डुभृञ् धारणपोषणयोः' इत्यस्य लटि 'भृञामित्' इत्यभ्यासस्येत्वम्। निघातः। वामभाजः। 'भज सेवायाम्'। 'भजो ण्विः' (पा. सू. ३.२.६२) इति ण्विः। कृदुत्तरपदस्वरः॥   ॥ ३१॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल-
साम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये
वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके
तृतीयोऽध्यायः समाप्तः॥

---

१. ख-ग-घ-च-ज-न-भ-ल-स–'निष्षिध्वर्यो नितरां' नास्ति। २. ख-ग-च-ज-ण-न-भ–हविष्प्रदानोपकारकाः। ३. ल–स्तोतारो वा।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

'न ता मिनन्ति' इत्यष्टर्चं तृतीयं सूक्तं विश्वामित्रस्य वाचः[1] पुत्रस्य वा प्रजापतेरार्षं त्रैष्टुभं वैश्वदेवम्। तथा चानुक्रमणिका–'न ताष्टौ' इति। सूक्तविनियोगो लिङ्गादवगन्तव्यः। अस्मिन् सूक्ते प्रायेणादित्यैः सह संवत्सरः स्तूयते ॥

न ता मिनन्ति मायिनो न धीरा व्रता देवानां प्रथमा ध्रुवाणि।

न रोदसी अद्रुहा वेद्याभिर्न पर्वता निनमे तस्थिवांसः ॥ १ ॥

न। ता। मिनन्ति। मायिनः। न। धीराः। व्रता। देवानाम्। प्रथमा। ध्रुवाणि।

न। रोदसी इति। अद्रुहा। वेद्याभिः। न। पर्वताः। निऽनमे। तस्थिऽवांसः ॥ १ ॥

मायिनः कपटबुद्ध्युपेता असुराः देवानाम् इन्द्रादीनां प्रथमा प्रथमानि सृष्ट्यनन्तरभावीनि[2] ध्रुवाणि स्थिराणि केनापि चालयितुमशक्यानि ता तानि लोके प्रसिद्धानि[3] व्रता व्रतानि लोकपालनादिकर्माणि न मिनन्ति न हिंसन्ति। तथा धीराः विद्वांसोऽपि न हिंसन्ति। तथा अद्रुहा देवमनुष्यादिषु प्रजासु द्रोहवर्जिते रोदसी द्यावापृथिव्यौ वेद्याभिः स्वाश्रयतया सर्वैर्वेदनीयाभिः प्रजाभिः सहिते[4] तानि[4] कर्माणि न मिनीतः। तदेतदुपपादयति। तस्थिवांसः पृथिव्यामूर्ध्वतया स्थिताः पर्वताः न निनमे निनमनीयाः[5] न भवन्ति। एतदुक्तं भवति। यद्देवमनुष्यादीनां द्यावापृथिव्याधारकतया अवस्थापनं[6] यच्च[7] पर्वतादीनामुन्नततयावस्थापनं[7] तदिदं देवानां[8] कर्म। तन्न कोऽप्यन्यथयितुमर्हति इति ॥ मिनन्ति। 'मीङ् हिंसायाम्' इत्यस्य लटि 'मीनातेर्निगमे' इति ह्रस्वः। निघातः। वेद्याभिः। वेदनमर्हन्ति। 'छन्दसि च' इति यत्प्रत्ययः। निनमे। 'णमु प्रह्वत्वे' इत्यस्य कृत्यार्थे केन्प्रत्ययः। कृत्स्वरः ॥

षड्भाराँ एको अचरन्बिभर्त्यृतं वर्षिष्ठमुप गाव आगुः।

तिस्रो महीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका ॥ २ ॥

षट्। भारान्। एकः। अचरन्। बिभर्ति। ऋतम्। वर्षिष्ठम्। उप। गावः। आ। अगुः।

तिस्रः। महीः। उपराः। तस्थुः। अत्याः।

गुहा। द्वे इति। निहिते इति निऽहिते। दर्शि। एका ॥२॥

---

१. च–वाचस्पतेः। २. ख-ग-च-फ-भ-स–वृष्ट्यनन्तरभावीनि। ३. त–प्रदानानि। ४. ख-ग-च-ज-त-न-भ-स–सहितानि। ५. घ-ण-न-भ–नमनीयाः। ६. ख-ग-च-ण-न-भ-स–अवस्थानम्। ७. ख-ग-घ-च-ण-न-भ-ल-स–'यच्च......स्थापनं' नास्ति। ८. ल–देवतानाम्।

vअचरन् स्थायी vएकः संवत्सरः vषट् षट्संख्याकान् vभारान् । भ्रियते पुष्पविकासादि येष्विति[1] भारा ऋतवः । तान् व सन्तादीन् vबिभर्ति अवयवत्वेन धारयति । तथा vऋतं सत्यभूतं vवर्षिष्ठं वृद्धतरमादित्यात्मकं तमेव संवत्सरं vगावः रश्मयः vउप vआगुः प्राप्नुवन्ति । किंच तस्मिन्नेव संवत्सरे vअत्याः अतनशीला आगमापायिधर्मोपेताः vतिस्रो vमहीः त्रयो लोकाः vउपराः उपर्युपरि वर्तमानाः vतस्थुः तिष्ठन्ति । लोकत्रयमेव दर्शयति । vगुहा गुहायां स्वात्मनि vद्वे[2] द्यौश्चान्तरिक्षं चेत्येते vनिहिते न दृश्येते । vएका भूमिः vदर्शि सर्वभूताधारतया दृश्यते ॥ भारान् । 'डुभृञ् धारणपोषणयोः' इत्यस्मादधिकरणे घञ् । 'कर्षात्वतो घञः°' इत्यन्तोदात्तत्वम् । निहिते । दधातेः कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । दर्शि । 'दृशिर् प्रेक्षणे' । कर्मणि लुङि चिणि 'चिणो लुक्' इति प्रत्ययस्य लुक् । वाक्यभेदादनिघातः ॥

त्रिपाजस्यो वृषभो विश्वरूप उत त्र्युधा पुरुध प्रजावान् ।
त्र्यनीकः पत्यते माहिनावान्त्स रेतोधा वृषभः शश्वतीनाम् ॥ ३ ॥

त्रिऽपाजस्यः । वृषभः । विश्वऽरूपः । उत । त्रिऽउधा । पुरुध । प्रजाऽवान् ।
त्रिऽअनीकः । पत्यते । माहिनऽवान् । सः । रेतःऽधाः । वृषभः । शश्वतीनाम् ॥ ३ ॥

vत्रिपाजस्यः ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिर्ऋतुभिः पाजस्यमुरो यस्य स त्रिपाजस्यः । त्र्युरस्क इत्यर्थः । उरोवचनश्च पाजस्यशब्दः । 'इन्द्रस्य क्रोडोऽदित्यै पाजस्यम्' (वा. सं. २५. ८) इति अश्वमेधमन्त्रे उरःपरतयाम्नानात्, पाजसि बले साधुरिति व्युत्पत्तेश्च सर्वेषामङ्गानां मध्ये उरसो बलवत्त्वात् । vवृषभः स्वावयवभूते वर्षर्तौ अपां वर्षकः vविश्वरूपः तत्तदृत्वसाधारणकार्यैः पुष्पविकासादिभिर्लिङ्गैर्नानारूपः vउत अपि च vत्र्युधा । वसंतशरद्धेमन्ताख्यैस्त्रिभिर्ऋतुभिरूधो यस्य स त्र्युधा । vप्रजावान् । प्रकर्षेण जायन्त इति व्रीह्यादयः प्रजाः । vपुरुध नानाप्रकारेण विद्यमानव्रीहियवादिरूपप्रजावान्[3] । किंच vत्र्यनीकः त्रिभिरुष्णवर्षशीताख्यैः अनीकैः गुणैरुपेतः[4] vमाहिनावान् महत्त्ववान् संवत्सराभिमानी देवः vपत्यते आगच्छति । vवृषभः सेचनसमर्थः vसः संवत्सरः vशश्वतीनां बह्वीनाम् ओषधीनां पुष्पफलादिसंपत्तये vरेतोधाः रेतस उदकस्य धर्ता भवति ॥ त्र्युधा । बहुव्रीहौ 'ऊधसोऽनङ्' इति अनङ् सर्वविधीनां छन्दसि विकल्पितत्वात् पुंस्यपि भवति । ऊकारस्य ह्रस्वश्छान्दसः । 'उत्तरपदान्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

अभीक आसां पदवीरबोध्यादित्यानामह्वे चारु नाम ।
आपश्चिदस्मा अरमन्त देवीः पृथग्व्रजन्तीः परि षीमवृञ्जन् ॥ ४ ॥

अभीके । आसाम् । पदऽवीः । अबोधि । आदित्यानाम् । अह्वे । चारु । नाम ।
आपः । चित् । अस्मै । अरमन्त । देवीः । पृथक् । व्रजन्तीः । परि । सीम् । अवृञ्जन् ॥ ४ ॥

---

१. ख-ग-च—सर्वे येष्विति; ण—सर्वं यैरिति । २. घ-न-भ-ल—द्वे भूमी । ३. ल—व्रीहियवादिरूपप्रजावान् । ४. ख-ग-घ-ण-त-न-भ-स—गणैरुपेतः ।

संवत्सरः ᵛआसाम् ओषधीनाम् ᵛअभीके समीपे ᵛपदवीः । पदानि तत्तद्वनविशिष्टपुष्पफलादीनि वेति प्रजनयतीति पदवीः सन् ᵛअबोधि बुध्यते सावधानो वर्तते । तथा[1] ᵛआदित्यानाम्[1] । आदित्या मासाः संख्यासाम्यात् । यद्वा । आदित्यसंक्रमणनिमित्तत्वादादित्या मासाः । ' मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः । चैत्राद्यः स ज्ञेयः' इति स्मृतेः । तेषां चैत्रादीनां मासानां ᵛचारु ᵛनाम मधुश्च माधवश्चेत्यादि नामधेयम् ᵛअह्वे आह्वयामि । उच्चारयामीत्यर्थः । किंच ᵛदेवीः द्योतनशीलाः ᵛपृथक् इतस्ततः ᵛव्रजन्तीः गच्छन्त्यः ᵛआपश्चित् आपोऽपि ᵛअस्मै संवत्सराय ᵛअरमन्त संवत्सर-संबन्धिमासचतुष्टये वृष्टिद्वारा रमन्ते । ताः[2] आपः ᵛसीम् एनं संवत्सरं ᵛपरि ᵛअवृञ्जन् अष्टसु मासेषु परिवर्जयन्ति ॥ पदवीः । वी गत्यादिषु । क्विप् । अबोधि । ' बुध अवगमने ' इत्यस्य लुङि ' दीप-जनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ' इति कर्तरि चिण् । ' चिणो लुक् ' । निघातः । आदित्या-नाम् । आदित्यसंबन्धिन इत्यर्थे ' दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ' इति ण्यः । अतोलोपयलोपौ । प्रत्ययस्वरः । अह्वे । ह्वयतेर्लुङि सिचः ' आत्मनेपदेष्वन्यतरस्याम् ' इति अङादेशः । गुणः । निघातः । अवृञ्जन् । ' वृजी वर्जने ' इत्यस्य लङि श्नमि रूपम् । निघातः ॥

त्री ष॒धस्था॒ सिन्ध॑वस्त्रिः क॒वी॒नामु॒त त्रि॒मा॒ता वि॒दथे॑षु स॒म्राट् ।
ऋ॒तावरी॒र्योष॑णास्ति॒स्रो अप्या॒स्त्रिरा दि॒वो वि॒दथे॒ पत्य॑मानाः ॥ ५ ॥

त्री । स॒धऽस्था॑ । सिन्ध॑वः । त्रिः । क॒वी॒नाम् । उ॒त । त्रि॒ऽमा॒ता । वि॒दथे॑षु । स॒म्ऽराट् ।
ऋ॒तऽव॑रीः । योष॑णाः । ति॒स्रः । अप्याः॑ । त्रिः । आ । दि॒वः । वि॒दथे॑ । पत्य॑मानाः ॥ ५ ॥

प्रजापतिः स्वविज्ञानं सिन्धूनां निवेदयति । हे ᵛसिन्धवः आपः सर्वसाक्षिण्यो यूयम् । ᵛत्री ᵛषधस्था त्रयो लोकाः । ते च प्रत्येकं ᵛत्रिः भवन्ति । तथा ' त्रयो वा इमे त्रिवृतो लोकाः ' इति श्रुतिः । ' न द्याव इन्द्रमोजसा नान्तरिक्षाणि वज्रिणम् । न विव्यचन्त भूमयः ' (ऋ. सं. ८.६.१५) इति प्रत्येकं बहुवचनश्रवणात् । बहुवचनं[3] च कपिञ्जलन्यायेन त्रित्वे पर्यवसितम् । ते च लोकाः ᵛकवीनां देवानां निवासस्थानानि भवन्ति । ᵛउत अपि च ᵛत्रिमाता त्रयाणाममीषां लोकानां निर्माता संवत्सरः सूर्यो वा ᵛविदथेषु यज्ञेषु ᵛसम्राट् यजनीयतया सम्यग्दीप्यमानो वर्तते । तथा ᵛऋतावरीः उदकवत्यः ᵛअप्याः नभस्या आप्तव्या वा ᵛतिस्रः ᵛयोषणाः त्रिसंख्याका इला सरस्वती भारती[4] इत्येवंरूपाः परस्परमिश्रणोपेताः देवताः[5] ᵛविदथे यज्ञे ᵛदिवः दिवसस्य ᵛत्रिः त्रिषु सवनेषु ᵛआ ᵛपत्यमानाः आगच्छन्त्यो भवन्ति ॥ सधस्था । ' पूर्वपदात् ' इति संहितायां षत्वम् । योषणाः । युष इति सौत्रो धातुः । ल्युटि रूपम् । लित्स्वरः । तिस्रः । ' तिसृभ्यो जसः ' इत्याद्युदात्तत्वम् । अप्याः । अप् इत्यन्तरिक्षनाम । तत्र भवाः । ' भवे छन्दसि ' इति यत् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् ॥

---

१. ख-ग-च-ण-न-भ-' तथा आदित्यानां ' नास्ति । २. च-किंच ताः । ३. ल-बहुत्वम् ।
४. ख-ग-ण-न-स-मही । ५. ख-ग-घ-च-ण-न-फ-भ-स-' देवताः ' नास्ति ।

त्रिरा दिवः सवितर्वार्याणि दिवेदिव आ सुव त्रिर्नो अह्नः ।
त्रिधातु राय आ सुवा वसूनि भग त्रातर्धिषणे सातये धाः ॥ ६ ॥

त्रिः । आ । दिवः । सवितः । वार्याणि । दिवेऽदिवे । आ । सुव । त्रिः । नः । अह्नः ।
त्रिऽधातु । रायः । आ । सुव । वसूनि । भग । त्रातः । धिषणे । सातये । धाः ॥ ६ ॥

ᵛसवितः सर्वस्य प्रेरक हे आदित्य ᵛदिवः द्युलोकादागत्य त्वं ᵛवार्याणि सर्वैः संभजनीयानि धनानि ᵛदिवेदिवे प्रतिदिनं ᵛत्रिः ᵛआ ᵛसुव त्रिवारमस्मभ्यं प्रेरय प्रयच्छेत्यर्थः । तदेवोच्यते । ᵛभग सर्वैर्भजनीय ᵛत्रातः अस्माकं रक्षक हे आदित्य ᵛत्रिधातु त्रिधातूनि पशुकनकरत्नभेदेन त्रिप्रकाराणि ᵛवसूनि धनानि ᵛरायः । रान्ति क्षीरादीनीति रायो गोधनानि । तानि च ᵛनः अस्मभ्यम् ᵛअह्नः संबन्धिषु ᵛत्रिः त्रिषु सवनेषु ᵛआ ᵛसुव प्रयच्छ । ᵛधिषणे माध्यमिके हे वाक् ᵛसातये धनलाभाय ᵛधाः अस्मान् कुरु ॥ त्रिः । 'द्वित्रिचतुर्भ्यः सुच्' (पा. सू. ५. ४. १८) इति सुच् । चित्स्वरः । सुव । 'षू प्रेरणे' । तुदादिः । लोटि रूपम् । त्रिधातु । 'डुधाञ् धारणपोषणयोः' इत्यस्मात् 'सितनिगमिमसि॰' इत्यादिना तुन्प्रत्ययः । धिषणे । आमन्त्रितत्वात् निघातः ॥

त्रिरा दिवः सविता सोषवीति राजाना मित्रावरुणा सुपाणी ।
आपश्चिदस्य रोदसी चिदुर्वी रत्नं भिक्षन्त सवितुः सवाय ॥ ७ ॥

त्रिः । आ । दिवः । सविता । सोसवीति । राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी ।
आपः । चित् । अस्य । रोदसी इति । चित् । उर्वी इति ।
रत्नम् । भिक्षन्त । सवितुः । सवाय ॥ ७ ॥

ᵛसविता देवः ᵛदिवः दिवसस्य ᵛत्रिः त्रिषु कालेषु ᵛआ ᵛसोषवीति अस्मभ्यं धनान्यासुवतु । प्रेरयतु । किंच ᵛराजाना राजानौ ᵛसुपाणी कल्याणपाणी मित्रावरुणौ[1] ᵛआपः । आप्नोति सर्वं जगत् इत्यापः अन्तरिक्षम् । नित्यबहुवचनान्तत्वात् बहुवचनम् । ᵛचित् अपि च ᵛउर्वी विस्तीर्णे ᵛरोदसी द्यावापृथिव्यौ एता देवताः ᵛसवितुः प्रेरकस्य ᵛअस्य देवस्य ᵛसवाय सवेन प्रेरणेन ᵛरत्नम् अपेक्षितमर्थं ᵛभिक्षन्त याचन्ते ॥ सोसवीति । 'षू प्रेरणे' इत्यस्य यङ्लुकि लटि रूपम् । मित्रावरुणा । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम् । भिक्षन्त । 'भिक्ष याच्ञायाम्' इत्यस्य लङि रूपम् । सवाय । 'जव सवौ च' (पा. सू. ३. ३. ५६. ४) इति अजन्तत्वेन निपातनादन्तोदात्तत्वम् ॥

---

१. च-मित्रावरुणा मित्रावरुणौ ।

त्रिरुत्तमा दूणशा रोचनानि त्रयो राजन्त्यसुरस्य वीराः ।
ऋतावान इषिरा दूळभासस्त्रिरा दिवो विदथे सन्तु देवाः ॥ ८ ॥

त्रिः । उत्ऽतमा । दुःऽनशा । रोचनानि । त्रयः । राजन्ति । असुरस्य । वीराः ।
ऋतऽवानः । इषिराः । दुःऽदभासः । त्रिः । आ । दिवः । विदथे । सन्तु । देवाः ॥ ८ ॥

दूणशा दुर्नशा केनापि विनाशयितुमशक्यानि रोचनानि दीप्यमानानि त्रिः त्रीण्युत्तमानि स्थानानि सन्ति । एतेषु त्रिषु स्थानेषु असुरस्य । अस्यति क्षिपति सर्वमित्यसुरः कालात्मा संवत्सरः । तस्य वीराः पुत्राः त्रयः अग्निवायुसूर्यरूपाः राजन्ति शोभन्ते । तानेव विशिनष्टि । ऋतावानः । ऋतं सत्यभूतमग्निहोत्रादिकं कर्म तद्वन्तः । इषिराः यज्ञार्थं शीघ्रगतिमन्तः दूळभासः दुर्दभासः केनापि स्वतेजसा तिरस्कर्तुमशक्या एते सर्वे देवाः विदथे अस्मदीये यज्ञे दिवः अह्नः[1] संबन्धिषु[1] त्रिः त्रिषु सवनेषु आ सन्तु समन्ताद्यजनीयतया भवन्तु ॥ उत्तमा । 'उत्तमशश्वत्तमौ सर्वत्र' इत्युञ्छादिषु पाठादन्तोदात्तत्वम् । दूणशा । नशेः कृच्छ्रार्थे खल् । 'दुरो दाशनाशदभध्येषूत्वं वक्तव्यम्' इति रेफस्य उत्वम् । उत्तरपदादेः ष्टुत्वम् । लित्स्वरः । दूळभासः । पूर्ववदुत्वष्टुत्वे[2] ॥ ॥ १ ॥

'प्र मे विविक्वान्' इति षड़चं चतुर्थं सूक्तम् । विश्वामित्र ऋषिः । त्रिष्टुप् छन्दः । विश्वेदेवाः देवता । अत्रानुक्रमणिका—'प्र मे षट्' इति । सूक्तविनियोगो लैङ्गिकः ॥

प्र मे विविक्वाँ अविदन्मनीषां धेनुं चरन्तीं प्रयुतामगोपाम् ।
सद्यश्चिद्या दुदुहे भूरि धासेरिन्द्रस्तदग्निः पनितारो अस्याः ॥ १ ॥

प्र । मे । विविक्वान् । अविदत् । मनीषाम् । धेनुम् । चरन्तीम् । प्रऽयुताम् । अगोपाम् ।
सद्यः । चित् । या । दुदुहे । भूरि । धासेः । इन्द्रः । तत् । अग्निः । पनितारः । अस्याः ॥ १ ॥

विविक्वान् विवेकवानिन्द्रोऽग्निर्वा मे मम मनीषां देवताविषयां स्तुतिं प्र अविदत् प्रकर्षेण जानातु । तत्र दृष्टान्तः । चरन्तीं यवसे इतस्ततो गच्छन्तीं प्रयुतां पृथग्भूतामेकाकिनीम् अगोपां गोप्तृरहितां यथाकामं चरन्तीं धेनुं नवसूतिकां गामिव देवतानां प्रीणयित्रीं स्तुतिमविददित्यन्वयः । या स्तुतिरूपा धेनुः सद्यश्चित् तदानीमेव धासेः । धारयति प्राणान्[3] धीयते दीयते अर्थिभ्यः इति वा धासिरन्नम् । कर्मणि षष्ठी । भूरि बह्वन्नमपेक्षितं फलं दुदुहे दुग्धे इन्द्रः अग्निः अन्ये च देवाः अस्याः स्तुतिरूपाया धेनोः तत् तस्यान्नभूतस्य पयसः पनितारः स्तोतारो भवन्ति । यद्वा । इन्द्राग्नी स्तोतारो वयं चास्या धेनोस्तत्पयः प्राप्नुमः ॥ विविक्वान् । 'विचिर् पृथग्भावे' इत्यस्य क्वसौ रूपम् । अविदत् । 'विद ज्ञाने' इत्यस्य लङि 'बहुलं छन्दसि' इति शः । दुदुहे । 'दुह प्रपूरणे' इत्यस्य लिटि रूपम् । यद्वृत्तयोगादनिघातः । प्रत्ययस्वरः । पनितारः । 'पन स्तुतौ' इत्यस्य तृचि रूपम् ॥

---

१. ख-ग-च—अह्नःसंबन्धिषु । २. ख-ग-च-ण—पूर्ववदुत्वं ष्टुत्वम् । ३. ख-ग-च-ण-भ—प्राणानिति धासिः ।

**इन्द्रः सु पूषा वृषणा सुहस्ता दिवो न प्रीताः शशयं दुदुह्रे ।**
**विश्वे यदस्यां रणयन्त देवाः प्र वोऽत्र वसवः सुम्नमश्याम् ॥ २ ॥**

इन्द्रः । सु । पूषा । वृषणा । सुऽहस्ता । दिवः । न । प्रीताः । शशयम् । दुदुह्रे ।
विश्वे । यत् । अस्याम् । रणयन्त । देवाः । प्र । वः । अत्र । वसवः । सुम्नम् । अश्याम् ॥२॥

vवसवः सर्वस्य वासयितारो हे देवाः vइन्द्रः vपूषा च vवृषणा अभिमतफलस्य सेक्तारौ vसुहस्ता कल्याणपाणी नासत्यौ मित्रावरुणौ वा । ‘राजाना मित्रावरुणा सुपाणी’ इत्यादिषु दृष्टत्वात् । एते सर्वे देवाः । vन इति संप्रत्यर्थे । इदानीं vप्रीताः सन्तः vशशयं नभसि शयानं मेघं vदिवः नभसः सकाशात् vसु[1] vदुदुह्रे । वृष्टिद्वारापेक्षितं फलं सुष्टु[2] दुहन्ति । vयत् यस्मात् vविश्वे सर्वे vदेवाः vअस्यां वेद्यां vरणयन्त रमयन्ते[3] vवः युष्माकं संबन्धिनि vअत्र लोके vसुम्नं सुखकरमपेक्षितं फलं vप्र vअश्यां प्राप्नुयाम् ॥ सुहस्ता । हसेः ‘असिहसि°’ इत्यादिना तन्प्रत्ययः । निरवादाद्युदात्तः । बहुव्रीहौ ‘आद्युदात्तं द्व्यच्छन्दसि’ इत्युत्तरपदाद्युदात्तत्वम् । दुदुह्रे । ‘दुह प्रपूरणे’ इत्यस्य लिटि ‘इरयो रे’ । रणयन्त । ‘रमु क्रीडायाम्’ । ण्यन्तस्य लङि रूपम् । वर्णव्यापत्तिः । अश्याम् । ‘अशू व्याप्तौ’ इत्यस्य लिङि ‘बहुलं छन्दसि’ इति विकरणस्य लुक् । व्यत्ययेन परस्मैपदम् ॥

**या जामयो वृष्ण इच्छन्ति शक्तिं नमस्यन्तीर्जानते गर्भमस्मिन् ।**
**अच्छा पुत्रं धेनवो वावशाना महश्चरन्ति बिभ्रतं वपूंषि ॥ ३ ॥**

याः । जामयः । वृष्णे । इच्छन्ति । शक्तिम् । नमस्यन्तीः । जानते । गर्भम् । अस्मिन् ।
अच्छ । पुत्रम् । धेनवः । वावशानाः । महः । चरन्ति । बिभ्रतम् । वपूंषि ॥ ३ ॥

vया vजामयः । जमन्ति वर्षाकाले प्रादुर्भवन्तीति जामय ओषधयः । vवृष्णे अपां वर्षकायेन्द्राय vशक्तिं सेचनसामर्थ्यम् vइच्छन्ति । vनमस्यन्तीः प्रह्वीभूतास्ता ओषधयः vअस्मिन् इन्द्रे vगर्भं वृष्टिद्वारा पुष्पफलादिलक्षणगर्भाधानादिसामर्थ्यं vजानते जानन्ति । vवावशानाः फलं कामयमानाः vधेनवः सर्वस्य प्रीणयित्र्य ओषधयः vमहः महान्ति नानाप्रकाराणि vवपूंषि रूपाणि vबिभ्रतं व्रीहियवनीवारादिफललक्षणं vपुत्रं तनयम् vअच्छ आभिमुख्येन vचरन्ति प्राप्नुवन्ति । लोके हि हम्भारवं कुर्वाणाः धेनवः[4] वत्समभिलक्ष्य गच्छन्ति । तद्वत् । यद्वा जामयः । जमन्ति सर्वत्र प्रसरन्तीति जामयः सूर्यदीप्तयः । वृष्णेऽपां वर्षकाय । स्वरश्मिभिर्भौमान् रसानादाय पुनर्वर्षतीति वर्षकः सूर्यः । ‘आदित्याज्जायते वृष्टिः’ इति स्मृतेश्च । तस्मै वर्षणशक्तिम्[5] इच्छन्ति । ता दीप्तयोऽस्मिन्नादित्ये गर्भम् अब्रूपगर्भाधानसामर्थ्यं जानन्ति ॥ जामयः । जमतेर्गतिकर्मणः ‘जनिघसिभ्यामिण्’ इति विधीयमानो बहुलवचनादस्मादपि भवति । नमस्यन्तीः । नमःशब्दात् ‘नमोवरिवश्चित्रङः क्यच्’

---

१. घ-ण–प्र सु । २. घ-ण–प्रकर्षेण सुष्टु । ३. च–रमयन्ते तस्मात् । ४. ल–धेनवः नवप्रसूता गावः । ५. ण–वर्षकशक्तिम् ।

इति क्यच् । तदन्ताच्छतरि रूपम् । प्रत्ययस्वरः । जानते । 'ज्ञा अवबोधने' इत्यस्य लटि रूपम् । अच्छ । 'निपातस्य च' इति संहितायां दीर्घः ॥

अच्छा विवक्मि रोदसी सुमेके ग्राव्णो युजानो अध्वरे मनीषा ।
इमा उ ते मनवे भूरिवारा ऊर्ध्वा भवन्ति दर्शता यजत्राः ॥ ४ ॥

अच्छ । विवक्मि । रोदसी इति । सुमेके इति सुऽमेके । ग्राव्णः । युजानः । अध्वरे । मनीषा ।
इमाः । ऊँ इति । ते । मनवे । भूरिऽवाराः । ऊर्ध्वाः । भवन्ति । दर्शताः । यजत्राः ॥ ४ ॥

अध्वरे यज्ञे ग्राव्णः सोमाभिषवार्थमुपलान् युजानः प्रयुञ्जानोऽहं सुमेके सुरूपे रोदसी द्यावापृथिव्यौ मनीषा मनस ईषया स्तुतिलक्षणया वाचा अच्छ[1] विवक्मि आभिमुख्येन स्तौमि। हे अग्ने ते तव भूरिवाराः यजमानैर्बहुवारं वरणीयाः दर्शताः कमनीयतया दर्शनीयाः यजत्राः पूज्याः इमाः दीप्तयः मनवे मनुष्यव्यवहारार्थम्[2] ऊर्ध्वाः ऊर्ध्वमुखाः भवन्ति[3] ॥ विवक्मि । 'वच परिभाषणे' । लटि[4] 'बहुलं छन्दसि' इति शपः श्लुः । 'अर्तिपिपर्त्योश्च, बहुलं छन्दसि' इत्यभ्यासस्य इत्वम् । चकारस्य कुत्वं व्यत्ययेन । युजानः । 'युजिबुधिदृशः किच्च' इति आनच् । किस्वात् अगुणः । चित्वादन्तोदात्तः । मनीषा । सुपो डादेशः ॥

या ते जिह्वा मधुमती सुमेधा अग्ने देवेषूच्यत उरूची ।
तयेह विश्वाँ अवसे यजत्राना सादय पायया चा मधूनि ॥ ५ ॥

या । ते । जिह्वा । मधुऽमती । सुऽमेधाः । अग्ने । देवेषु । उच्यते । उरूची ।
तया । इह । विश्वान् । अवसे । यजत्रान् । आ । सादय । पायय । च । मधूनि ॥ ५ ॥

हे अग्ने ते तव मधुमती उदकवती सुमेधाः । शोभना मेधा प्रज्ञा यस्याः सा । सर्वस्य ज्ञापयित्री या जिह्वा ज्वाला उरूची बहुव्याप्तिः सती देवेषु मध्ये आह्वानार्थम् उच्यते प्रेर्यते[5] तया जिह्वया यजत्रान् यजनीयान् विश्वान् देवान् इह कर्मण्यस्माकम् अवसे रक्षणाय आ सादय उपवेशय । किंच तान् विश्वान् देवान् मधूनि मदकरान् सोमान् पायय ॥ सुमेधाः । 'नित्यमसिच्प्रजामेधयोः' इति असिच् । उच्यते । 'वच परिभाषणे' । कर्मणि यकि रूपम् । यद्वृत्तयोगादनिघातः । उरूची । अञ्चतेः क्विन् । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वम् । पायय । 'पा पाने' इत्यस्य णौ परतः 'शाच्छासाह्वाव्यावेपां युक्' इति युक् । तिङ उत्तरत्वादनिघातः ॥

---

१. घ-च-ण-न-स—अच्छा । २. ख-ग-घ-च-ण-फ-भ-स—अनुष्ठानव्यवहारार्थम्; त— मनुष्यानुष्ठानव्यवहारार्थम् । ३. घ—भवन्ति । उ पूरणः; ण—भवन्ति । उः पूरणः । ४. ख-ग-च-ण-न-भ-स—लेटि । ५. ल—प्रेर्यते । यद्वा मधुमती माधुर्यवती सुमेधाः शोभनप्रज्ञानोपेता उरूची । महत इन्द्रादीनञ्चति पूजयतीत्युरूची जिह्वा वाक् देवेषु आह्वानार्थं प्रेर्यते ।

या ते॑ अग्ने॒ पर्व॑तस्येव॒ धारास॑श्चन्ती पी॒पय॑द्देव चि॒त्रा ।
ताम॒स्मभ्यं॒ प्रम॑तिं जातवेदो॒ वसो॒ रास्व॑ सुम॒तिं वि॒श्वज॑न्याम् ॥ ६ ॥

या । ते॒ । अ॒ग्ने॒ । पर्व॑तस्यऽइव । धारा॑ । अस॑श्चन्ती । पी॒पय॑त् । दे॒व॒ । चि॒त्रा ।
ताम् । अ॒स्मभ्य॑म् । प्रऽम॑तिम् । जा॒त॒ऽवे॒दः॒ । वसो॒ इति॑ । रास्व॑ । सु॒ऽम॒तिम् । वि॒श्वऽज॑न्याम् ॥६॥

हे देव दीप्यमान हे अग्ने चित्रा नानारूपा असश्चन्ती अस्मादन्यत्र संगतिमकुर्वाणा या ते तव प्रमतिः प्रकृष्टा[1] बुद्धिः पीपयत् अपेक्षितफलदानेनास्मान् वर्धयति । तत्र दृष्टान्तः । पर्वतस्येव धारा । यथा पर्वतस्य मेघस्योदकधारा ओषधिवनस्पत्यादिषु संगतिं कुर्वाणा तान्[2] वर्धयति तद्वत् । वसो सर्वस्य वासयितः जातवेदः जातप्रज्ञ हे अग्ने तां प्रमतिं परहितकरणसमर्थां बुद्धिम् अस्मभ्यं रास्व देहि । तथा विश्वजन्यां सर्वजनहितां सुमतिं शोभनां बुद्धिं देहि ॥ असश्चन्ती । सश्चतिर्गतिकर्मा । शतरि 'उगितश्च' इति ङीप् । नञा समासे नञ्स्वरः । पीपयत् । 'पा पाने' । ण्यन्तस्य लुङि चङि रूपम् । 'चङ्यन्यतरस्याम्' इति चङि परतः[3] पूर्वस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः । प्रमतिम् । 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम् । रास्व । 'रा दाने' । व्यत्ययेन आत्मनेपदम् । लोटि रूपम् । आमन्त्रितस्याविद्यमानत्वात् निघाताभावः ॥ ॥ २ ॥

'धेनुः प्रत्नस्य' इति नवर्चं पञ्चमं सूक्तं वैश्वामित्रं त्रैष्टुभमाश्विनम् । तथा चानुक्रान्तं— 'धेनुर्नवाश्विनम्' इति । प्रातरनुवाके आश्विनक्रतौ[4] त्रैष्टुभे छन्दस्याश्विनशस्त्रे चास्य सूक्तस्य विनियोगः । सूत्रितं च–'धेनुः प्रत्नस्य क उ श्रवदिति सूक्ते' ( आश्व. श्रौ. ४.१५ ) इति । व्यूळ्हे दशरात्रे द्वितीये छन्दोमे प्रउगशस्त्रेऽयमाश्विनश्चतुर्थस्तृचः । 'द्वितीयस्याग्निं वः' इति खण्डे सूत्रितं– 'धेनुः प्रत्नस्य काम्यं दुहाना ब्रह्मा ण इन्द्रोप याहि विद्वान्' ( आश्व. श्रौ. ८.१० ) इति ॥

धे॒नुः प्र॒त्नस्य॒ काम्यं॒ दुहा॑ना॒न्तः पु॒त्रश्च॑रति॒ दक्षि॑णायाः ।
आ द्यो॑त॒निं व॑हति शु॒भ्रया॑मो॒षसः॒ स्तोमो॑ अ॒श्विना॑वजीगः ॥ १ ॥

धे॒नुः । प्र॒त्नस्य॑ । काम्य॑म् । दु॒हा॑ना । अ॒न्तरिति॑ । पु॒त्रः । च॒र॒ति॒ । दक्षि॑णायाः ।
आ । द्यो॒त॒निम् । व॒ह॒ति॒ । शु॒भ्रऽया॑मा । उ॒षसः॑ । स्तोमः॑ । अ॒श्विनौ॑ । अ॒जी॒ग॒रिति॑ ॥ १ ॥

धेनुः प्रीणयित्र्युषाः प्रत्नस्य पुरातनस्याग्नेः काम्यं कमनीयं पयः दुहाना दोग्ध्री भवति । दक्षिणायाः उषसः पुत्रः सूर्यस्तस्याः अन्तः चरति । उषसोऽनन्तरं शुभ्रयामा । सूर्यकिरण-संपर्कात् शुभ्रतया गमनं यस्यासौ शुभ्रयामा दिवसः । द्योतनिं सर्वस्य प्रकाशकं सूर्यम्[5] आ वहति[5] बिभर्ति । अतः उषसः पुरा अश्विनौ स्तोतुं स्तोमः स्तोत्रकारी होत्रादिः अजीगः जागर्ति उत्तिष्ठति ॥ शुभ्रयामा । 'या प्रापणे' । आतो मनिन् । बहुव्रीहौ पूर्वपदस्वरः । अजीगः । 'जागृ निद्राक्षये' । लङि तिपि अदादित्वात् शपो लुक् । आकारस्य ईकारश्छान्दसः । गुणे कृते हल्ङ्यादिना तिपो लोपः ॥

१. त-ल-प्रकृष्टार्था । २. ख-ग-ण-न-भ-ल-ताः । ३. ख-ग-च-ण-न-भ-'परतः' नास्ति ।
४. त-आश्विने क्रतौ । ५. त-सूर्यकिरणसंपर्कम् ।

सुयुग्वहन्ति प्रति वामृतेनोर्ध्वा भवन्ति पितरेव मेधाः ।
जरेथामस्मद्वि पणेर्मनीषां युवोरवश्चकृमा यातमर्वाक् ॥ २ ॥

सुऽयुक् । वहन्ति । प्रति । वाम् । ऋतेन । ऊर्ध्वाः । भवन्ति । पितराऽइव । मेधाः ।
जरेथाम् । अस्मत् । वि । पणेः । मनीषाम् । युवोः । अवः । चकृम । आ । यातम् । अर्वाक् ॥२॥

हे अश्विनौ vसुयुक् सुष्ठु रथे योजिता अश्वाः vऋतेन सत्यभूतेन रथेन vवां युवां vप्रति vवहन्ति। यज्ञं प्रत्यागमनाय धारयन्ति । vमेधाः यज्ञाश्च vऊर्ध्वाः युष्मदभिमुखम् ऊर्ध्वाः vभवन्ति । तत्र दृष्टान्तः । vपितरेव । यथा पुत्राः पितरौ मातापितरावभिलक्ष्य गच्छन्ति तद्वत् । vअस्मत् अस्मत्तः सकाशात् vपणेर्मनीषां आसुरीं बुद्धिं vवि vजरेथां विशेषेण नाशयतम् । वयं तु vयुवोः युवयोः vअवः हविर्लक्षणमन्नं vचकृम कुर्मः । युवाम् vअर्वाक् अस्मदाभिमुख्येन vआ vयातम् ॥ सुयुक् । युजेः क्विप् । 'सुपां सुलुक्°' इति सुपो लुक् । पितरेव । 'पिता मात्रा' इति पितुः शेषः । सुपो डादेशः । जरेथाम् । 'जॄष् वयोहानौ' । ण्यन्तस्य 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वात् वृद्ध्यभावः । 'छन्दस्युभयथा' इति आथाम आर्धधातुकत्वात् णिलोपः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः ॥

सुयुग्भिरश्वैः सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ ३ ॥

सुयुक्ऽभिः । अश्वैः । सुऽवृता । रथेन । दस्रौ । इमम् । शृणुतम् । श्लोकम् । अद्रेः ।
किम् । अङ्ग । वाम् । प्रति । अवर्तिम् । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥३॥

हे अश्विनौ vसुयुग्भिः सुष्ठु योजितैः vअश्वैः vसुवृता । पुनःपुनरावर्तते इति वृच्चक्रम्[1] । शोभनचक्रोपेतेन vरथेन आगत्य vदस्रौ शत्रूणामुपक्षपयितारौ युवाम् vअद्रेः । आद्रियते सर्वैरित्यद्रिः स्तोता । तस्य vइमं vश्लोकं स्तोत्रं vशृणुतम् । vअङ्ग हे अश्विनौ vविप्रासः[2] मेधाविनः vपुराजाः पुरातना ऋषयः vवां युवाम् vअवर्तिम् अस्माकं वृत्तिहानिं vप्रति vगमिष्ठा अतिशयेन गन्तारावितिvकिम् vआहुः किं[3] कथयन्ति[3] । न कथयन्तीत्यर्थः । प्रथमाष्टकेऽष्टमेऽध्याये 'सुवृता रथेन' (ऋ. सं. १. ११८. ३) इत्यादि गतम् ॥ गमिष्ठा । गन्तृशब्दादिष्ठनि रूपम् ॥

आ मन्येथामा गतं कच्चिदेवैर्विश्वे जनासो अश्विना हवन्ते ।
इमा हि वां गोऋजीका मधूनि प्र मित्रासो न ददुरुस्रो अग्रे ॥ ४ ॥

आ । मन्येथाम् । आ । गतम् । कत् । चित् । एवैः । विश्वे । जनासः । अश्विना । हवन्ते ।
इमा । हि । वाम् । गोऽऋजीका । मधूनि । प्र । मित्रासः । न । ददुः । उस्रः । अग्रे ॥ ४ ॥

१. ख-ग-च-फ-सुवृच्चक्रम् । २. ण-विप्रासः विप्राः । ३. न-स-कथयन्तीति ।

ᵛकच्चित् इति प्रश्ने । हे अश्विनौ ᵛआ ᵛमन्येथाम् इमां मदीयां स्तुतिं जानीतम् । किंच ᵛएवैः गमनसाधनैरश्वैः ᵛआ ᵛगतं यज्ञं प्रत्यागच्छतम् । ᵛविश्वे रूर्वे ᵛजनासः स्तोतारः ᵛअश्विना अश्विनौ ᵛवां युवां ᵛहवन्ते स्तुतिलक्षणाभिर्वाग्भिराह्वयन्ति । किंच ᵛगोऋजीका गवां पयसा मिश्रणोपेतानि ᵛमधूनि मदकराणि[1] सोमरसरूपाणि ᵛइमा इमानि हवींपि युवाभ्यां ᵛप्र ᵛददुः[2] अध्वर्य्वादयः प्रयच्छन्ति। तत्र दृष्टान्तः। ᵛमित्रासो ᵛन। यथा मित्राणि मित्रेभ्योऽपेक्षितं ददति तद्वत्। ᵛउस्रः। वसति नभसीत्युस्रः सूर्यः। ᵛअग्रे उषसोऽग्र उदेति। तस्मादागच्छतमिति भावः[3] ॥ मन्येथाम्[4]। 'मन ज्ञाने'। दिवादिः। लोटि रूपम्। इमा। सुपो डादेशः। गोऋजीका। 'प्रकृत्यान्तःपादम्°' इत्येङः प्रकृतिभावः[4]। ददुः। 'दाण् दाने' इत्यस्य लिट्युसि रूपम्। हियोगादनिघातः। उस्रः। 'वस निवासे'। 'स्फायितञ्चि°' इत्यादिना रक्। किंत्वात् संप्रसारणम्। 'शासिवसिघसीनां च' इति षत्वाभावश्छान्दसः ॥

**ति॒रः पु॒रू चि॑दश्विना॒ रजां॑स्याङ्गू॒षो वां॑ मघवाना॒ जने॑षु ।**

**एह या॑तं प॒थिभि॑र्देव॒यानै॒र्दस्रा॑वि॒मे वां॑ नि॒धयो॒ मधू॑नाम् ॥ ५ ॥**

ति॒रः । पु॒रु । चि॒त् । अ॒श्वि॒ना॒ । रजां॑सि । आ॒ङ्गू॒षः । वा॒म् । म॒घ॒ऽवा॒ना॒ । जने॑षु ।

आ । इ॒ह । या॒त॒म् । प॒थिऽभिः॑ । दे॒व॒ऽयानैः॑ । दस्रौ॑ । इ॒मे । वा॒म् । नि॒ऽधयः॑ । मधू॑नाम् ॥५॥

हे अश्विनौ ᵛपुरू ᵛचित् बहून्यपि ᵛरजांसि स्थानानि ᵛतिरः स्वतेजसा तिरस्कुर्वन्तौ वां युवाम् ᵛइह कर्मणि ᵛदेवयानैः ᵛपथिभिः मार्गैः ᵛआ ᵛयातम् आगच्छतम्। ᵛमघवाना धनवन्तौ हे अश्विनौ ᵛजनेषु स्तोतृषु ᵛवां युवयोः ᵛआङ्गूषः आ समन्तात् घोषणीयं स्तोत्रं वर्तते। ᵛदस्रौ शत्रूणामुपक्षपयितारौ हे अश्विनौ ᵛवां युवयोः ᵛमधूनां मदकराणां सोमानाम् ᵛइमे[5] ᵛनिधयः। निधीयतेऽत्र सोम इति निधयः पात्रविशेषाः। सन्ति। तस्मादागच्छतमिति भावः॥ आङ्गूषः। आङ्पूर्वात् घुषेः कर्मणि घञ्। आघुष्यत इत्याघोषः। घो इत्यस्य पृषोदरादित्वात् गू इत्यादेशः। 'आङोऽनुनासिकश्छन्दसि' इति अनच्यप्यनुनासिकश्छान्दसः। यद्वा। अगिर्गत्यर्थः। अस्मात् 'अङ्गूषः' इति सूत्रेण उषच्प्रत्ययान्तो निपातितः। अङ्गति गच्छति देवानित्यङ्गूषः स्तोत्रम्। अङ्गूष एव आङ्गूषः। प्रज्ञादित्वात् स्वार्थिकः अण्। प्रत्ययस्वरः। 'एह यातम्' इत्यर्धर्चो गतः॥ ॥ ३ ॥

अप्तोर्यामेऽतिरिक्तोक्थ्ये अच्छावाकशस्त्रे 'पुराणमोकः' इति चतस्रो विकल्पेन याज्याः। सूत्रितं च—'यदि नाधीयात्पुराणमोकः सख्यं शिवं वामिति चतस्रो याज्याः' (आश्व. श्रौ.९. ११) इति॥

**पु॒रा॒णमोकः॑ स॒ख्यं शि॒वं वां॑ यु॒वोर्न॑रा॒ द्रवि॑णं ज॒ह्नाव्या॑म् ।**

**पुनः॑ कृ॒ण्वा॒नाः स॒ख्या शि॒वानि॒ मध्वा॑ मदेम स॒ह नू स॑मा॒नाः ॥ ६ ॥**

पु॒रा॒णम् । ओकः॑ । स॒ख्यम् । शि॒वम् । वा॒म् । यु॒वोः । न॒रा॒ । द्रवि॑णम् । ज॒ह्नाव्या॑म् ।

पुन॒रिति॑ । कृ॒ण्वा॒नाः । स॒ख्या । शि॒वानि॑ । मध्वा॑ । म॒दे॒म॒ । स॒ह । नु । स॒मा॒नाः ॥ ६ ॥

---

१. ख-ग-घ-ण—मधुकराणि। २. च—ददुः हि। ३. घ—भावः। हि पूरणः। ४. ख-ग-च-ण-त-न-भ-स-'मन्येथां ...... प्रकृतिभावः' नास्ति। ५. ख-ग-ण-न-भ-ल-स-'इमे' नास्ति।

हे अश्विनौ ^वां युवयोः ^पुराणं पुरातनं ^सख्यम् ^ओकः सेव्यं ^शिवं कल्याणकरं भवति । किंच ^नरा नरावस्मदीयस्य कर्मणो नेतारौ[1] ^युवोः युवयोः ^द्रविणं धनं ^जह्नाव्यां जह्नुकुलजायां भवति । ^शिवानि सुखकराणि युवयोः ^सख्या[2] सख्यानि ^पुनः[3] ^कृण्वानाः कुर्वन्तः ^समानाः हविष्प्रदानेन उपकारकत्वान्मित्रभूता एकीभूताः सन्तः वयं ^मध्वा मदकरेण सोमेन वां युवां ^सह युगपत् ^नु क्षिप्रं ^मदेम हर्षयेम ॥ सख्यम् । सख्युर्भाव इत्यर्थे 'सख्युर्यः' इति यप्रत्ययः । जह्नाव्याम् । जह्नोः संबन्धिनीत्यर्थे 'तस्येदम्' इत्यण् । 'ओर्गुणः' । ह्रस्वदीर्घयोर्व्यत्ययः । मदेम । 'मदी हर्षे' इत्यस्य आशीर्लिङि लिङयाशिष्यङ्प्रत्ययः । निघातः ॥

**अश्विना वायुना युवं सुदक्षा नियुद्भिश्च सजोषसा युवाना ।**
**नासत्या तिरोअह्न्यं जुषाणा सोमं पिबतमस्रिधा सुदानू ॥ ७ ॥**

अश्विना । वायुना । युवम् । सुऽदक्षा । नियुत्ऽभिः । च । सऽजोषसा । युवाना ।
नासत्या । तिरःऽअह्न्यम् । जुषाणा । सोमम् । पिबतम् । अस्रिधा । सुदानू इति सुऽदानू ॥७॥

^सुदक्षा शोभनसामर्थ्योपेतौ ^युवाना नित्यतरुणौ ^नासत्या । न विद्यतेऽसत्यं ययोस्तौ । ^सुदानू शोभनफलस्य दातारौ हे अश्विनौ ^वायुना ^नियुद्भिः अश्वैः[4] ^च ^सजोषसा संगतौ ^जुषाणा सोमविषयप्रीतियुक्तौ ^अस्रिधा अनुपक्षीणौ ^युवं युवां ^तिरोअह्न्यम् अह्नि तिरोहिते हूयमानमिमं ^सोमं ^पिबतम् ॥ नियुद्भिः । यौतेः क्विप् । तिरोअह्न्यम् । अह्नि भवमह्न्यम् । 'भवे छन्दसि' इति यत् । तिरोभूतमह्न्यं यस्मिन् काले स तिरोअह्न्यः । पूर्वपदप्रकृतिस्वरः[5] ॥

**अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः ।**
**रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः ॥ ८ ॥**

अश्विना । परि । वाम् । इषः । पुरूचीः । ईयुः । गीःऽभिः । यतमानाः । अमृध्राः ।
रथः । ह । वाम् । ऋतऽजाः । अद्रिऽजूतः । परि । द्यावापृथिवी इति । याति । सद्यः ॥ ८ ॥

हे अश्विनौ[6] ^पुरूचीः । पुरु[7] अञ्चन्ति गच्छन्ति[7] इति पुरूचीः । बहूनि ^इषः हविर्लक्षणान्यन्नानि ^वां युवां ^परि ^ईयुः परितो गच्छन्ति । तथा ^अमृध्राः केनाप्यतिरस्कृताः ^यतमानाः कर्मणि प्रवर्तमानाः स्तोतारः ^गीर्भिः स्तुतिलक्षणाभिर्वाग्भिर्युवां परिचरन्ति । ^ऋतजाः ऋतस्योदकस्य जनयिता । ऋते यज्ञे प्रादुर्भवतीति वा । ^अद्रिजूतः स्तोतृभिराकृष्टः ^वां युवयोः ^रथः ^द्यावापृथिवी द्यावापृथिव्यौ ^सद्यः तदानीमेव ^परि ^याति ^ह सर्वतः प्राप्नोति खलु । अश्विनो रथस्य वेगवत्त्वे मन्त्रवर्णः[8]—

---

१. घ—नेतारौ अश्विनौ; त-ल—नेतारौ हे अश्विनौ । २. न-ल-स—'सख्या' नास्ति । ३. त—पुनःपुनः । ४. ख-ग-घ-च-ण-त-न-भ-ल-स—'अश्वैः' नास्ति । ५. त—बहुव्रीहौ पूर्वपदप्रकृतिस्वरः; ल—बहुव्रीहौ पूर्वपदस्वरः । ६. च—आश्विना अश्विनौ । ७. ख-ग-घ-च-ण-भ-स—पुरुमञ्चति गच्छति; न—पुरुमञ्चन्ति गच्छन्ति; ल—पुरुतममञ्चन्ति गच्छन्ति । ८. ख-ग-च-ण-न-फ-भ-मन्त्रः ।

'यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति' (ऋ. सं. १. ११७.२) इति। अतः कारणादस्मदीयं यज्ञं प्रत्यागच्छतमिति भावः॥ ईयुः। 'इण् गतौ' इत्यस्य लिटि 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घः। पादादित्वादनिघातः। यतमानाः। 'यती प्रयत्ने' इत्यस्य शानचि रूपम्। शपः पित्त्वादनुदात्तत्वे शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः। ऋतजाः। जनेर्विट्। 'विड्वनोः०' इत्यात्वम्। अद्रिजूतः। जू इति सौत्रो धातुः। कर्मणि क्तः। 'तृतीया कर्मणि' इति पूर्वपदस्वरः॥

अश्विना मधुषुत्तमो युवाकुः सोमस्तं पातमा गतं दुरोणे।
रथो ह वां भूरि वर्पः करिक्रत्सुतावतो निष्कृतमागमिष्ठः॥ ९॥

अश्विना। मधुसुत्ऽतमः। युवाकुः। सोमः। तम्। पातम्। आ। गतम्। दुरोणे।
रथः। ह। वाम्। भूरि। वर्पः। करिक्रत्। सुतऽवतः। निःऽकृतम्। आऽगमिष्ठः॥ ९॥

हे अश्विनौ[1] यः ᵛसोमः ᵛमधुषुत्तमः मधुरसमत्यन्तं[2] प्रेरयन् ᵛयुवाकुः युवां कामयमानो वर्तते। यद्वा। युवाकुर्वसतीवरीप्रभृतिभिर्मिश्रित इत्यर्थः। ᵛतम् इमं सोमं ᵛपातं पिबतम्। ᵛदुरोणे अस्माकं गृहे ᵛआ ᵛगतम् आगच्छतम्। ᵛभूरि प्रभूतं ᵛवर्पः वारकं तेजः रूपं वा सर्वैर्वरणीयं धनं वा ᵛकरिक्रत् पुनःपुनः कुर्वन् ᵛवां युवयोः ᵛरथः ᵛसुतवतः सोमम् अभिषुतवतः[3] यजमानस्य ᵛनिष्कृतम्। 'निरित्येष समित्येतस्य स्थाने' (निरु. १२.७) इति यास्कः। संस्कारि। यद्वा। संस्कृतं गृहम् ᵛआगमिष्ठः अतिशयेनागच्छन् भवति॥ युवाकुः। यौतेः 'कटिकुषिभ्यां काकुः' इति बाहुलकादस्मादपि भवति। प्रत्ययस्वरेण मध्योदात्तः। करिक्रत्। करोतेर्यङ्लुकि शतरि 'दाधर्ति दर्धर्ति दर्धर्षि०' इत्यादिना चुत्वाभावे यणादेशे कृतेऽङ्गस्यानृकारान्तत्वादभ्यासस्य रिगागमो न प्राप्नोतीति सोऽपि निपात्यते। अभ्यस्तस्वरः। निष्कृतम्। करोतेरादिकर्मणि क्तः। संस्कर्तुं प्रवृत्त इत्यर्थः। थाथादिस्वरः॥४॥

'मित्रो जनान्' इति नवर्चं षष्ठं सूक्तं वैश्वामित्रं त्रैष्टुभं मैत्रम्। 'मित्रो मैत्रं चतुर्गायत्र्यन्तम्' इत्यनुक्रमणिका। आदितः पञ्च त्रिष्टुभः शिष्टाश्चतस्रो गायत्र्यः। मित्रो देवता। अग्निहोत्रार्थे पयसि वर्षबिन्दुपतने 'मित्रो जनान्' इत्यनया समिधमादध्यात्। सूत्रितं च-'मित्रो जनान्यातयति ब्रुवाण इति समिदाधानम्' (आश्व. श्रौ. ३. ११) इति॥

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत॥ १॥

मित्रः। जनान्। यातयति। ब्रुवाणः। मित्रः। दाधार। पृथिवीम्। उत। द्याम्।
मित्रः। कृष्टीः। अनिऽमिषा। अभि। चष्टे। मित्राय। हव्यम्। घृतऽवत्। जुहोत॥ १॥

१. च-अश्विना आश्विनौ। २. ख-घ-ण-भ-मधुररसमत्यन्तम्; ल-मधुररसममृतम्। ३. ख-ग-च-पुनः अभिषुतवतः।

ᵛब्रुवाणः स्तूयमानः शब्दं कुर्वाणो वा ᵛमित्रः । प्रकर्षेण सर्वैर्मीयते ज्ञायते तथा सर्वान् वृष्टिप्रदानेन त्रायत इति वा मित्रः सूर्यः । ᵛजनान् कर्षकादिजनान् ᵛयातयति । कृष्यादिकर्मसु प्रयत्नं कारयति । तथा ᵛमित्रः एव ᵛपृथिवीमुत अपि च ᵛद्याम् एतावुभौ लोकौ वृष्टिद्वारा अन्नं यागांश्च जनयन् ᵛदाधार धारयति । तथा सति ᵛमित्रः ᵛअनिमिषा अनिमिषेणानुग्रहदृष्टया ᵛकृष्टीः कर्मवतो मनुष्यान् ᵛअभि ᵛचष्टे सर्वतः पश्यति । एतत्सर्वं ज्ञात्वा हे ऋत्विजः ᵛघृतवत् उपस्तरणाभिघारणयुक्तं ᵛहव्यं हवनयोग्यं पुरोडाशादिकं तस्मै ᵛमित्राय देवाय ᵛजुहोत जुहुत प्रयच्छतेत्यर्थः । उक्तार्थं यास्को ब्रवीति— ' मित्रो जनान्यातयति ब्रुवाणः शब्दं कुर्वन् । मित्र एव धारयति पृथिवीं च दिवं च । मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति । कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वा । मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम् । जुहोतिर्दानकर्मा ' ( निरु. १०. २२ ) इति ॥ यातयति । ' यती प्रयत्ने ' इत्यस्य ण्यन्तस्य लटि रूपम् । दाधार । 'तुजादीनाम्॰ ' इत्यभ्यासस्य दीर्घः । जुहोत । जुहोतेर्लोटि प्रत्ययस्य तबादेशः । गुणः । निघातः ॥

देवसुवां हविःषु मित्रस्य सत्यस्य ' प्र स मित्र ' इति याज्या । एषैव प्रातर्होमस्य कालात्ययनिमित्ते मैत्रे चरौ याज्या । सूत्रितं च— ' प्र स मित्र मर्तो अस्तु प्रयस्वांस्त्वां नष्टवान्महिमाय पृच्छते ' ( आश्व. श्रौ. ४. ११ ) इति । ' तत इष्टिर्मित्रः सूर्योऽभि यो महिना दिवं प्र स मित्र मर्तो अस्तु प्रयस्वानिति संस्थितायाम् ' ( आश्व. श्रौ. ३. १२ ) इति च ॥

**प्र स मित्र॒ मर्तो॑ अस्तु॒ प्रय॑स्वा॒न्यस्त॑ आदित्य॒ शिक्ष॑ति व्र॒तेन॑ ।**

**न ह॑न्यते॒ न जी॑यते॒ त्वोतो॒ नैन॒मंहो॑ अश्नो॒त्यन्ति॑तो॒ न दू॒रात् ॥ २ ॥**

प्र । सः । मि॒त्र॒ । मर्तः॑ । अ॒स्तु॒ । प्रय॑स्वान् । यः । ते॒ । आ॒दि॒त्य॒ । शिक्ष॑ति । व्र॒तेन॑ ।

न । ह॒न्य॒ते॒ । न । जी॒य॒ते॒ । त्वाऽऊ॑तः । न । ए॒न॒म् । अंहः॑ । अ॒श्नो॒ति॒ । अन्ति॑तः । न । दू॒रात् ॥२॥

हे ᵛआदित्य ᵛव्रतेन यज्ञेन युक्तः ᵛयः मनुष्यः ᵛते तुभ्यं ᵛशिक्षति हविर्लक्षणमन्नं ददाति हे ᵛमित्र ᵛसः ᵛमर्तः मनुष्यः ᵛप्रयस्वान् अन्नवान् ᵛप्र ᵛअस्तु प्रभवतु । ᵛत्वोतः त्वया रक्षितः सः[1] मनुष्यः केनापि ᵛन ᵛहन्यते न बाध्यते[2] । ᵛन ᵛजीयते नाभिभूयते च । ᵛएनं तुभ्यं हविर्दत्तवन्तं पुरुषम् ᵛअंहः पापम् ᵛअन्तितः समीपात् ᵛन ᵛअश्नोति न प्राप्नोति[3] । ᵛदूरात् अपि ᵛन प्राप्नोति ॥ शिक्षतिर्दानकर्मा । व्यत्ययेन परस्मैपदम् । यद्वृत्तयोगादनिघातः । जीयते । जयतेः कर्मणि यकि ' अकृत्सार्वधातुकयोः॰' इति दीर्घः । त्वोतः । ' तृतीया कर्मणि ' इति पूर्वपदस्वरः । अश्नोति । ' अशू व्याप्तौ ' । स्वादिः । व्यत्ययेन परस्मैपदम् ॥

देवसुवां हविःषु मित्रस्य सत्यस्यानुवाक्या । ' अनमीवास इळया मदन्तः प्र स मित्र मर्तो अस्तु प्रयस्वान् ' ( आश्व. श्रौ. ४. ११ ) इति सूत्रितम्[4] ॥

---

१. ख-ग-घ-च-ण-न-भ-ल-स–' सः ' नास्ति । २. ण–वध्यते । ३. त–व्याप्नोति । ४. त-न-ल–सूत्रम् ।

अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।
आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॥ ३ ॥

अनमीवासः । इळया । मदन्तः । मितऽज्ञवः । वरिमन् । आ । पृथिव्याः ।
आदित्यस्य । व्रतम् । उपऽक्षियन्तः । वयम् । मित्रस्य । सुऽमतौ । स्याम ॥ ३ ॥

हे मित्र अनमीवासः रोगवर्जिताः इळया अन्नेन मदन्तः माद्यन्तः पृथिव्याः वरिमन् विस्तीर्णे प्रदेशे मितज्ञवः मितजानुकाः आ यथाकामं सर्वत्र गच्छन्तः आदित्यस्य संबन्धि व्रतं कर्म उपक्षियन्तः तस्य कर्मणः समीपे निवसन्तः । तदीयं[1] कर्म[1] कुर्वाणा इत्यर्थः । तादृशाः वयं मित्रस्य आदित्यस्य सुमतौ शोभनायामनुग्रहबुद्धयां स्याम वर्तेमहि ॥ मदन्तः । ' मदी हर्षे ' इत्यस्य शतरि व्यत्ययेन शप् । मितज्ञवः । जानुशब्दस्य ज्ञुश्छान्दसः । वरिमन् । उरुशब्दात् पृथ्वादित्वादिमनिच् । ' प्रियस्थिर° ' इत्यादिना वरादेशः । ' सुपां सुलुक्° ' इति सप्तम्या लुक् । व्यत्ययेनाद्युदात्तः ॥

अयं मित्रो नमस्यः सुशेवो राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ ४ ॥

अयम् । मित्रः । नमस्यः । सुऽशेवः । राजा । सुऽक्षत्रः । अजनिष्ट । वेधाः ।
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ ४ ॥

अयं पूर्वमन्त्रे प्रतिपादितः मित्रः सूर्यः नमस्यः सर्वैर्नमस्करणीयः सुशेवः शोभनसुखः । सुखेन सेव्य इत्यर्थः । राजा सर्वस्य जगतः प्रकाशप्रदानेन स्वामी सुक्षत्रः । क्षत्रशब्देन बलमुच्यते । शोभनबलोपेतः वेधाः सर्वस्य जगतो विधाता । एवंगुणोपेतः सूर्यः अजनिष्ट प्रादुरभूत् । तस्य एवंविधगुणोपेतस्य यज्ञियस्य यज्ञार्हस्य सूर्यस्य सुमतौ शोभनायां बुद्धौ भद्रे कल्याणकारिणि सौमनसे सौमनस्ये अपि यजमानाः वयं स्याम भवेम ॥ नमस्यः । नमसि साधुः । ' तत्र साधुः ' इति यत् । तित्स्वरितः । अजनिष्ट । ' जनी प्रादुर्भावे ' इत्यस्य लुङि सिचि रूपम् । सौमनसे । सुमनस इदमित्यर्थे ' तस्येदम् ' इत्यण् । प्रत्ययस्वरः ॥

महाँ आदित्यो नमसोपसद्यो यातयज्जनो गृणते सुशेवः ।
तस्मा एतत्पन्यतमाय जुष्टमग्नौ मित्राय हविरा जुहोत ॥ ५ ॥

महान् । आदित्यः । नमसा । उपऽसद्यः । यातयत्ऽजनः । गृणते । सुऽशेवः ।
तस्मै । एतत् । पन्यऽतमाय । जुष्टम् । अग्नौ । मित्राय । हविः । आ । जुहोत ॥ ५ ॥

---

१. ख-ग-घ-च-ण-न-भ-स-तदीयकर्म ।

योऽयम् आदित्यः महान् अत एव नमसा नमस्कारेण उपसद्यः सर्वैरुपसदनीयः यातयज्जनः । प्रातःप्रातः स्वस्वकर्मणि प्रवर्तनीया जना येनेति स तथोक्तः । गृणते स्तोत्रं कुर्वते जनाय सुशेवः च भवति तस्मै पन्यतमाय स्तुत्यतमाय मित्राय आदित्याय जुष्टं प्रीतिविषयम् एतत् हविः अग्नौ आ जुहोत जुहुत ॥ यातयज्जनः । ' यती प्रयत्ने ' इत्यस्य ण्यन्तस्य शतरि रूपम् । बहुव्रीहौ पूर्वपद-प्रकृतिस्वरे प्राप्ते मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । गृणते । ' गॄ शब्दे ' । ' शतुरनुमः० ' इति विभक्तेरुदात्तत्वम् । पन्यतमाय । पनतेरघ्न्यादित्वात् यत् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । जुष्टम् । ' नित्यं मन्त्रे ' इत्याद्युदात्तत्वम् ॥ ॥ ५ ॥

अभिप्लवषडहे दशरात्रे च सप्तदशैकविंशादिस्तोमे सति होत्रादिकशस्त्रेष्वावापस्थाने[1] पञ्चसप्तादि-संख्याका ऋच आवपनीयाः । तत्र मैत्रावरुणशस्त्रे ' मित्रस्य चर्षणीधृतः ' इत्याद्याश्चतस्र आवापार्थाः[2] । सूत्रितं च—' मित्रस्य चर्षणीधृत इति चतस्रो मैत्र्यः ' ( आश्व. श्रौ. ७.५ ) इति ॥

मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥ ६ ॥

मित्रस्य । चर्षणिऽधृतः । अवः । देवस्य । सानसि । द्युम्नम् । चित्रश्रवःऽतमम् ॥ ६ ॥

चर्षणीधृतः मनुष्याणां वृष्टिप्रदानेन धारकस्य मित्रस्य देवस्य संबन्धि अवः अन्नं सानसि सर्वैः[3] संभजनीयं द्युम्नं तदीयं धनं च चित्रश्रवस्तमम् अतिशयेन चायनीयकीर्तियुक्तम् ॥ सानसि । सनोतेः ' सानसिपर्णसि० ' इत्यादिना असिच्प्रत्ययान्तत्वेन निपातनादुपधावृद्धिः । चित्त्वादन्तोदात्तः । ' स्वमोः० ' इति स्वमोर्लुक् ॥

प्रातर्होमस्य कालात्यये मैत्रेष्टिः । तस्याम् ' अभि यो महिना ' इत्यनुवाक्या । सूत्रितं च– ' अभि यो महिना दिवं प्र स मित्र मर्तो अस्तु प्रयस्वान् ' ( आश्व. श्रौ. ३. १२ ) इति ॥

अभि यो महिना दिवं मित्रो बभूव सप्रथाः । अभि श्रवोभिः पृथिवीम् ॥ ७ ॥

अभि । यः । महिना । दिवम् । मित्रः । बभूव । सऽप्रथाः । अभि । श्रवःऽभिः । पृथिवीम् ॥ ७ ॥

यः मित्रः महिना स्वकीयेन महिम्ना दिवम् अन्तरिक्षम् अभि बभूव अभिभवति स मित्रः सप्रथाः । प्रथः प्रसिद्धिः कीर्तिः । तत्सहितः श्रवोभिः वृष्टिद्वारोत्पादितैरन्नैः पृथिवीम् अपि अभिभवति । बह्वन्नयुक्तां करोतीत्यर्थः ॥ सप्रथाः । ' प्रथ प्रख्याने ' । असुन् । ' वोपसर्जनस्य ' इति सहस्य सभावः ॥

मित्राय पञ्च येमिरे जना अभिष्टिशवसे । स देवान्विश्वान्बिभर्ति ॥ ८ ॥

मित्राय । पञ्च । येमिरे । जनाः । अभिष्टिऽशवसे । सः । देवान् । विश्वान् । बिभर्ति ॥ ८ ॥

पञ्च जना निषादपञ्चमाश्चत्वारो वर्णाः अभिष्टिशवसे शत्रूणामभिगन्तृबलयुक्ताय मित्राय येमिरे हवींष्युपयच्छन्ति । सः तादृशो मित्रः विश्वान् सर्वान् देवान् बिभर्ति । स्वस्वरूपतया

---

१. ल–°शस्त्रे याज्यापस्थाने । २. च–आवपनीया इत्यर्थः । ३. त–सर्वैरस्माभिः ।

धारयति ॥ अभिष्टिशवसे । इषेः ' मन्त्रे वृष° ' इत्यादिना क्तिन् । ' तादौ च निति°' इत्यभेः अन्तोदात्तत्वम्[1] । शकन्ध्वादित्वात् पररूपत्वम् । बहुव्रीहौ पूर्वपदस्वरः ॥

मि॒त्रो दे॒वेष्वा॒युषु॒ जना॑य वृ॒क्तब॑र्हिषे । इष॑ इ॒ष्टव्र॑ता अकः ॥ ९ ॥

मि॒त्रः । दे॒वेषु॑ । आ॒युषु॑ । जना॑य । वृ॒क्तऽब॑र्हिषे । इष॑ः । इ॒ष्टऽव्र॑ताः । अ॒क॒रित्य॑कः ॥ ९ ॥

ᵛमित्रः भगवानादित्यः ᵛदेवेषु द्योतमानादिगुणयुक्तेषु ᵛआयुषु मनुष्येषु मध्ये यो जनो वृक्तबर्हिः । वृक्तं लूनं बर्हिर्येन सः । बर्हिर्लवनासादनपूर्वं हविषो दाता ऋत्विगित्यर्थः । तस्मै ᵛवृक्तबर्हिषे ᵛजनाय ᵛइष्टव्रताः । इष्टानि कल्याणानि व्रतानि कर्माणि याभिः सिध्यन्ति ताः ᵛइषः तादृशान्यन्नानि ᵛअकः करोति । तस्मै ददातीत्यर्थः ॥ वृक्तबर्हिषे । 'ओव्रश्चू छेदने' । कर्मणि निष्ठायां ' यस्य विभाषा ' इति इट्प्रतिषेधः । बहुव्रीहौ पूर्वपदस्वरः । अकः । करोतेर्लुङि च्लेः ' मन्त्रे घस° ' इत्यादिना लुक् । सिपो हल्ङ्यादिलोपः । निघातः ॥ ॥ ६ ॥

' इहेह वः ' इति सप्तर्चं सप्तमं सूक्तं वैश्वामित्रं जागतमृभुदेवताकम् । अन्त्यस्तृच इन्द्रदेवताकश्च । तथा चानुक्रान्तम्–' इहेह वः सप्तार्भवं जागतं तृचोऽन्त्य ऐन्द्रश्च ' इति । सूक्तविनियोगो लैङ्गिकः । आद्याश्चतस्रः पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयाः । सूत्रितं च– ' इहेह व इति चतस्रः ' ( आश्व. श्रौ. ७. ५ ) इति ॥

इ॒हेह॑ वो॒ मन॑सा ब॒न्धुता॑ नर उ॒शिजो॑ जग्मुर॒भि तानि॒ वेद॑सा ।
याभि॑र्मा॒याभि॑ः प्रति॑जूतिवर्पस॒ः सौध॑न्वना य॒ज्ञियं॑ भा॒गमा॑न॒श ॥ १ ॥

इ॒हऽइ॑ह । व॒ः । मन॑सा । ब॒न्धुता॑ । न॒र॒ः । उ॒शिज॑ः । ज॒ग्मु॒ः । अ॒भि । तानि॑ । वेद॑सा ।

याभि॑ः । मा॒याभि॑ः । प्रति॑जूतिऽवर्पसः । सौध॑न्वनाः । य॒ज्ञिय॑म् । भा॒गम् । आ॒न॒श ॥ १ ॥

हे ऋभवः ᵛवः युष्माकं ᵛबन्धुता । बध्नन्ति फलेन संयोजयन्तीति बन्धवः कर्माणि । तेषां समूहः[2] बन्धुता । ᵛइहेह सर्वत्र[3] ᵛमनसा सर्वैर्ज्ञायते । ᵛनरः हे मनुष्या ऋभवः ᵛउशिजः यज्ञभागं कामयमाना भवन्तः ᵛवेदसा यज्ञभागप्रापककर्मविषयज्ञानेन ᵛतानि तादृशानि कर्माणि ᵛअभि ᵛजग्मुः प्राप्नुवन्ति । कानि तानि । ᵛमायाभिः । मीयन्ते ज्ञायन्त इति मायाः कर्माणि । ᵛयाभिः मायाभिर्यैः कर्मभिः ᵛप्रतिजूतिवर्पसः प्रतिपक्षाभिभवनशीलतेजोयुक्ताः ᵛसौधन्वनाः । सुधन्वा नामाङ्गिरसः पुत्रः कश्चिदृषिः । तस्य पुत्राः सौधन्वनाः । ते च त्रय ऋभुर्विभ्वा वाज इति । एतन्नामका यूयं ᵛयज्ञियं यज्ञार्हं ᵛभागं सोमपानादिलक्षणम् ᵛआनश प्राप्ताः[4] स्थ । तथा च मन्त्रवर्णः–' ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन ' ( ऋ. सं. १. १६१. ६ ) इति । अयमर्थो ब्राह्मणेऽपि ' ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयन् ' ( ऐ. ब्रा. ३. ३० ) इत्यत्रोपाख्यानपूर्वकं स्पष्टमभिहितः ।

---

१. त-न–उदात्तत्वम् । २. ख-ग-घ-च-ण-त-न-भ-ल-स–भावः । ३. ख-ग-घ-च-ण-त-भ-स– सर्वम् । ४. ख-घ-त-न-भ–व्याप्ताः ।

यद्वा । नरः कर्मणां[1] नेतारो हे ऋभव उशिजः कामयमाना वेदसा हविर्लक्षणेन धनेन युक्ताः स्तोतारो वो युष्माकं तानि चमसतक्षणादीनि[2] कर्माणि बन्धुता बन्धुतया सख्येन मनसा जग्मुः अभिगच्छन्ति । कानि इत्याशङ्कायामाह। यैः चमसतक्षणादिभिः[3] कर्मभिर्यज्ञार्हं भागं यूयमाप्नुत तान्यभिगच्छन्ति। युष्माकं बुद्धिनैपुणानि चिन्तयन्तीत्यर्थः ॥ इहेह । 'नित्यवीप्सयोः' इति द्विर्वचनम् । परस्याम्रेडितत्वात् अनुदात्तत्वे पूर्वपदस्वरः । बन्धुता । 'बन्ध बन्धने' । 'भृमृशी(?)त्रिहि°' इत्यादिना कर्तरि उप्रत्ययः । समूह इत्यर्थे 'ग्रामजनबन्धुसहायेभ्यस्तल्' ( पा. सू. ४.२.४३ ) इति तल् । लित्स्वरः[4] ॥

याभिः शचीभिश्चमसाँ अपिंशत यया धिया गामरिणीत चर्मणः ।
येन हरी मनसा निरतक्षत तेन देवत्वमृभवः समानश ॥ २ ॥

याभिः । शचीभिः । चमसान् । अपिंशत । यया । धिया । गाम् । अरिणीत । चर्मणः ।
येन । हरी इति । मनसा । निःऽअतक्षत । तेन । देवऽत्वम् । ऋभवः । सम् । आनश ॥ २ ॥

हे[5] vऋभवः[3] vयाभिः vशचीभिः vशक्तिभिः vचमसान् चतुरः vअपिंशत विभक्तवन्तः स्थ । vयया vधिया प्रज्ञया vगां मृताम्[6] vअरिणीत vचर्मणः चर्मणा[7] योजनात् प्रापितवन्तः स्थ । vयेन vमनसा प्रज्ञानेन vहरी एतन्नामकाविन्द्रस्याश्वौ vनिरतक्षत नितरामकुरुत । तथा च[8] मन्त्रवर्णः–' य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी ' ( ऋ. सं. १.२०.२ ) इति[9] । vतेन सर्वेणानेन कर्मणा vदेवत्वं यज्ञभागार्हत्वलक्षणं[10] देवभावं vसमानश सम्यक् प्राप्ताः स्थ ॥ अपिंशत । ' पिश अवयवे ' । तुदादिः । तस्य लङि मध्यमे रूपम् । यद्वृत्तयोगादनिघातः । अरिणीत । ' री गतिरेषणयोः ' । क्र्यादिः । तस्य लङि रूपम् । अत्रापि पूर्ववदनिघातः । निरतक्षत । ' तक्षू त्वक्षू तनूकरणे ' । लङि रूपम् । पूर्ववत् अनिघाते 'तिङि चोदात्तवति' इति गतेर्निघातः । अडुदात्तः । आनश । अश्नोतेर्लिटि रूपम् । निघातः ॥

इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसो दधन्विरे ।
सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया ॥ ३ ॥

इन्द्रस्य । सख्यम् । ऋभवः । सम् । आनशुः । मनोः । नपातः । अपसः । दधन्विरे ।
सौधन्वनासः । अमृतऽत्वम् । आ । ईरिरे । विष्ट्वी । शमीभिः । सुऽकृतः । सुऽकृत्यया ॥३॥

vमनोर्नपातः मनुष्यस्याङ्गिरसः[11] पुत्राः vअपसः यागादिलक्षणकर्मवन्तः vऋभवः vइन्द्रस्य vसख्यं समानख्यानत्वं[12] vसमानशुः सम्यक् प्राप्नुवन् । तथेन्द्रस्य सख्यं प्राप्तास्त ऋभवः vदधन्विरे । पूर्वं

---

१. ख-ग-ण-त-न-भ-ल–कर्मणि; च-स–कर्माणि । २. ख-ग-च-ण-त-न-भ-स–°भक्षणादीनि । ३. ख-ग-च-ण-त-न-भ-स–°भक्षणादिभिः । ४. ल–लितीति प्रत्ययस्वरः । पूर्वस्योदात्तत्वम् । ५. त–' हे ऋभवः ' नास्ति । ६. त–मृतां सतीम् । ७. त–' चर्मणा ' नास्ति । ८. ख-ग-च-ण-न-भ-ल-स–अयम् । ९. त-ल–इति । ऋभवः । उरु प्रभूतं भान्तीति ऋतेन सत्येन भान्तीति वा तादृशा हे ऋभवः । १०. ख-ग-घ-च-ण-भ–यज्ञभागार्हलक्षणम्; ल–यज्ञलक्षणम् । ११. ल–मनुष्यस्याङ्गिरसस्य । १२. ख-ग-घ-च-ण-फ-भ-स–समानख्यानत्वं प्राप्ताः ।

मनुष्यत्वेन मरणयोग्या अपीदानीमिन्द्रस्य सख्येन प्राणान् धारयन्ति । तथा च[1] मन्त्रः–'अधारयन्त वह्नयः' ( ऋ. सं. १. २०. ८ ) इति । ᵛसौधन्वनासः सुधन्वनामकस्यर्षेः पुत्रा ऋभवः ᵛसुकृतः शोभनकर्माणः सन्तः प्रभूतैः ᵛशमीभिः देवत्वप्राप्तिप्रतिबन्धनिवारणहेतुभिः कर्मभिः ᵛसुकृत्यया शोभनेन कर्मणा च ᵛविष्ट्वी व्याप्य ᵛअमृतत्वमेरिरे देवत्वं प्रापुः । तथा च मन्त्रान्तरमाम्नायते— 'मर्तासः सन्तो अमृतत्वमानशुः' ( ऋ. सं. १. ११०. ४ ) इति ॥ नपातः । 'नभ्राण्नपात्०' इत्यादिना नञः प्रकृतिभावः । दधन्विरे । धविर्गत्यर्थः । व्यत्ययेनात्मनेपदम् । लिटि रूपम् । ईरिरे । 'ईर गतौ' । मन्त्रत्वात् आम् न भवति । निघातः । सुकृत्यया । करोतेर्भावे 'कृञः श च' इति क्यप् । प्रत्ययस्य व्यत्ययेनान्तोदात्तत्वम् । समासे कृदुत्तरस्वरः ॥

इन्द्रे॑ण याथ स॒रथं॑ सु॒ते सचाँ॒ अथो॒ वशा॑नां भवथा स॒ह श्रि॒या ।
न वः॑ प्रति॒मै सु॑कृ॒तानि॑ वाघत॒ः सौध॑न्वना ऋभवो वी॒र्या॑णि च ॥ ४ ॥

इन्द्रे॑ण । या॒थ॒ । स॒ऽरथ॑म् । सु॒ते । सचा॑ । अथो॒ इति॑ । वशा॑नाम् । भ॒व॒थ॒ । स॒ह । श्रि॒या ।
न । व॒ः । प्र॒ति॒ऽमै । सु॒ऽकृ॒तानि॑ । वा॒घ॒तः॒ । सौध॑न्वनाः । ऋ॒भ॒वः॒ । वी॒र्या॑णि । च॒ ॥ ४ ॥

हे ऋभवो यूयम् ᵛइन्द्रेण ᵛसचा सह ᵛसरथं समानमेकं रथमारुह्य ᵛसुते अभिषुतसोमवति यज्ञे ᵛयाथ गच्छथ । ᵛअथो अनन्तरमिन्द्रेण सह एकरथमारूढा यूयं ᵛवशानाम् । उश्यते काम्यते यजमानेन स्वर्गादिलक्षणं[2] फलम्[2] एभिरिति वशाः मनुष्याः । तेषां ᵛश्रिया स्तुतिहविरादिरूपया ᵛसह ᵛभवथ । हे ᵛसौधन्वनाः सुधन्वनः पुत्राः ᵛवाघतः । अमृतत्वादिलक्षणफलस्य वोढारो मेधाविनो वा इति यास्कः । तादृशा हे ᵛऋभवः ᵛवः युष्माकं ᵛसुकृतानि देवत्वस्य प्रापकाणि शोभनानि कर्माणि ᵛन ᵛप्रतिमै । प्रतिमातुमियत्तया परिच्छेत्तुं न केनापि शक्यानि । तथा ᵛवीर्याणि युष्माकं सामर्थ्यानि ᵛच नैव प्रतिमातुं शक्यानि ॥ वशानाम् । 'वश कान्तौ' । 'वशिरण्योरुपसंख्यानम्' इति करणे अप्प्रत्ययः । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । वशाशब्दो वन्ध्यावचनश्चेत् अन्तोदात्तः[3] भवति । 'वशा मेषा अवसृष्टास आहुताः' ( ऋ. सं. १०. ९१. १४ ) इति । वः । युष्मच्छब्दस्य षष्ठीबहुवचने वसादेशः । निघातः । प्रतिमै । 'माङ् माने' । विच् । प्रतिमाः प्रतिमानम् । तस्य चतुर्थ्येकवचने आतो लोपाभावश्छान्दसः[4] । एकादेशस्वरः ॥

आभिप्लविके पञ्चमेऽहनि वैश्वदेवशस्त्रे 'इन्द्र ऋभुभिः' इत्याभवस्तृचः । सूत्रितं च–'घृतवती भुवनानामभिश्रियेन्द्र ऋभुभिर्वाजवद्भिरिति तृचौ' ( आश्व. श्रौ. ७. ७. ) इति । आद्या[5] तृतीयसवने होतुः प्रस्थितयाज्या । सूत्रितं च–'इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिन्द्रावरुणा सुतपाविमं सुतम्' ( आश्व. श्रौ. ५.५ ) इति ॥

---

१. ग-च-भ-ल-स–'च' नास्ति । २. ख-ग-च-भ–स्वर्गादिलक्षणफलम् । ३. ख-ग-च-ण-न-भ-स–इत्यन्तोदात्तः । ४. ख-ग-ण-न-भ-ल-स–लोपश्छान्दसः । ५. ख-ग-च-ण-न-भ-ल-स–आद्यः ।

इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः ।
धियेषितो मघवन्दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ॥ ५ ॥

इन्द्र । ऋभुऽभिः । वाजवत्ऽभिः । सम्ऽउक्षितम् । सुतम् । सोमम् । आ । वृषस्व । गभस्त्योः ।
धिया । इषितः । मघऽवन् । दाशुषः । गृहे । सौधन्वनेभिः । सह । मत्स्व । नृऽभिः ॥५॥

हे ^v^इन्द्र ^v^वाजवद्भिः । वाजो नाम ऋभूणां भ्राता । यद्वा । वाजोऽन्नम् । तत्सहितैः ^v^ऋभुभिः सहितस्त्वं ^v^समुक्षितं सम्यगद्भिः[1] सिक्तं[1] ग्रावभिः ^v^सुतं ^v^सोमं ^v^गभस्त्योः । बध्नस्त्यद्भ्यामन्नमिति गृह्णन्ति पदार्थानाभ्यामिति वा गभस्ती बाहू । तयोर्बाह्वोः ^v^आ ^v^वृषस्व आक्षारय[2] । ग्रहमुभाभ्यां बाहुभ्यां गृहीत्वा सोमं पिबेत्यर्थः । हे ^v^मघवन्[3] इन्द्र ^v^धिया स्तोत्ररूपेण कर्मणा ^v^इषितः प्रेरितस्त्वं ^v^दाशुषः हविर्दत्तवतो यजमानस्य ^v^गृहे ^v^सौधन्वनेभिः सुधन्वनः पुत्रैः ^v^नृभिः मनुष्यैर्ऋभुभिः ^v^सह साकं ^v^मत्स्व सोमपानेन हृष्टो भव ॥ समुक्षितम् । 'उक्ष सेचने' । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः स्वरः । गभस्त्योः । 'भस भर्त्सनदीह्योः' इत्यस्मात् 'भसेर्गट्च' इति सूत्रेण तिप्रत्ययो धातोः गडागमश्च । यद्वा । गृह्णातेः पृषोदरादित्वादेवं नेयम् । मत्स्व । मदि स्तुत्यादिषु । लोटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । निघातः ॥

इन्द्र ऋभुमान्वाजवान्मत्स्वेह नोऽस्मिन्त्सवने शच्या पुरुष्टुत ।
इमानि तुभ्यं स्वसराणि येमिरे व्रता देवानां मनुषश्च धर्मभिः ॥ ६ ॥

इन्द्र । ऋभुऽमान् । वाजऽवान् । मत्स्व । इह । नः । अस्मिन् । सवने । शच्या । पुरुऽस्तुत ।
इमानि । तुभ्यम् । स्वसराणि । येमिरे । व्रता । देवानाम् । मनुषः । च । धर्मऽभिः ॥ ६ ॥

^v^पुरुष्टुत बहुभिः स्तुत हे ^v^इन्द्र ^v^ऋभुमान् ऋभुणा तद्वान् ^v^वाजवान् वाजेन ऋभोर्भ्रात्रा युक्तः ^v^शच्या इन्द्राण्या कर्मणा वा सहितः सन् ^v^नः अस्माकम् ^v^इह कर्मणि ^v^अस्मिन् तृतीयसवने ^v^मत्स्व हृष्टो भव । हे इन्द्र ^v^तुभ्यं त्वदर्थम् ^v^इमानि ^v^स्वसराणि अहानि ^v^येमिरे । तव सोमपानार्थं त्रिषु सवनेषु नियतान्यासते । किंच ^v^देवानाम् अग्न्यादीनां ^v^व्रता व्रतानि कर्माणि ^v^च ^v^मनुषः मनुष्यस्य ^v^धर्मभिः कर्मभिः साकं त्वदर्थं नियतान्यासते ॥

इन्द्र ऋभुभिर्वाजिभिर्वाजयन्निह स्तोमं जरितुरुप याहि यज्ञियम् ।
शतं केतेभिरिषिरेभिरायवे सहस्रणीथो अध्वरस्य होमनि ॥ ७ ॥

इन्द्र । ऋभुऽभिः । वाजिऽभिः । वाजयन् । इह । स्तोमम् । जरितुः । उप । याहि । यज्ञियम् ।
शतम् । केतेभिः । इषिरेभिः । आयवे । सहस्रऽनीथः । अध्वरस्य । होमनि ॥ ७ ॥

---

१. ख-ग-घ-च-ण-फ-भ–सम्यगभिषिक्तम् । २. ग-च–प्रक्षारय । ३ त–मघवन् धनवन्; न-ल-स– मघवन् हे ।

हे ᵛइन्द्र ᵛवाजिभिः[1] वाजयुक्तैः ᵛऋभुभिः सहितस्त्वं ᵛवाजयन् स्तोतुर्वाजमन्नं कुर्वाणः ᵛइह यज्ञे ᵛयज्ञियं यज्ञार्हं ᵛजरितुः स्तोतुः[2] ᵛस्तोमं स्तोत्रम् ᵛउप ᵛयाहि आगच्छ। पुनः किंविशिष्टः। ᵛकेतेभिः। केत्यते ज्ञायते सर्वमेभिरिति केताः प्राज्ञाः[3] मरुतः। तैः ᵛशतं शतसंख्याकैः ᵛइषिरेभिः इषिरैर्गमनकुशलैः अश्वैः सहितः ᵛआयवे मनुष्याय यजमानाय ᵛसहस्रनीथः बहुप्रकारनयनोपेतः ᵛअध्वरस्य। न विद्यते ध्वरो हिंसा यस्य तादृशस्य सोमस्य ᵛहोमनि होमे आगच्छेति शेषः॥ वाजयन्। वाजं करोतीति णिच्। 'णाविष्ठवत्°' इतीष्ठवद्भावात् 'तुरिष्ठेमेयःसु' इति टिलोपः। केतेभिः। 'कित ज्ञाने'। घञ्। ञित्त्वादाद्युदात्तः॥ ॥ ७ ॥

'उषो वाजेन' इति सप्तर्चमष्टमं सूक्तं वैश्वामित्रमुषोदेवताकम्। तथा चानुक्रान्तम्–'उष उषस्यम्' इति। प्रातरनुवाके उषस्ये क्रतावाश्विनशस्त्रे च त्रैष्टुभे छन्दस्येतस्य सूक्तस्य विनियोगः। सूत्रितं च– 'उषो वाजेनेदमु त्यत्' (आश्व. श्रौ. ४. १४) इति॥

**उषो॒ वाजे॑न वाजिनि॒ प्रचे॑ताः॒ स्तोमं॑ जुषस्व गृण॒तो म॑घोनि।**

**पु॒रा॒णी दे॑वि यु॒व॒तिः पुर॑न्धि॒रनु॑ व्र॒तं च॑रसि विश्ववारे॥ १॥**

उषः॑। वाजे॑न। वा॒जि॒नि॒। प्रऽचे॑ताः। स्तोम॑म्। जु॒ष॒स्व॒। गृ॒ण॒तः। म॒घो॒नि॒।

पु॒रा॒णी। दे॒वि॒। यु॒व॒तिः। पुर॑म्ऽधिः। अनु॑। व्र॒तम्। च॒र॒सि॒। वि॒श्व॒ऽवा॒रे॒॥ १॥

ᵛवाजेन ᵛवाजिनि अन्नेनान्नवति। तथा च मन्त्रः–'सं वाजैर्वाजिनीवति' (ऋ. सं. १. ४८. १६) इति। ᵛमघोनि धनवति हे ᵛउषः ᵛप्रचेताः प्रकृष्टज्ञानवती सती[4] त्वं[4] ᵛगृणतः तव स्तोत्रं कुर्वतः[5] स्तोतुः ᵛस्तोमं स्तोत्रं ᵛजुषस्व सेवस्व[6]। यद्वा। वाजेन हविर्लक्षणेनान्नेन सह स्तोमं जुषस्वेति संबन्धः। ᵛविश्ववारे विश्वैः सर्वैर्वरणीये हे उषः ᵛदेवि ᵛपुराणी पुरातनी। ᵛयुवतिः[7] इत्युपमा। तद्वच्छोभमाना। 'सुसंकाशा मातृमृष्टेव योषा' (ऋ. सं. १. १२३. ११) इतिवत्। ᵛपुरंधिः। पुरु बहु धीः स्तोत्रलक्षणं कर्म यस्याः सा। बहुस्तोत्रवती। 'पुरंधिर्बहुधीः' इति यास्कः। पुरंधिः शोभमाना वा। एवंविधगुणोपेता त्वम् ᵛअनु ᵛव्रतं यज्ञकर्माभिलक्ष्य ᵛचरसि यष्टव्यतया वर्तसे॥ मघोनि। मघशब्दात् मतुबर्थे 'छन्दसीवनिपौ°' इति वनिप्। स्त्रियाम् 'ऋन्नेभ्यो ङीप्'। 'श्वयुवमघोनामतद्धिते' इति संप्रसारणे कृते गुणः। संबुद्धौ 'अम्बार्थनद्योर्ह्रस्वः'। निघातः। पुराणी। पुराणशब्दः 'पुराणप्रोक्तेषु°' इत्यन्तोदात्तत्वेन निपातितः। 'टिड्ढाणञ्°' इति ङीप्। 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यन्तोदात्तत्वम्। पुरंधिः। पृषोदरादित्वात् उकारस्य अमादेश ईकारस्य ह्रस्वश्च। 'आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्' इत्याद्युदात्तत्वम्॥

---

१. ख-ग-घ-च-ण-फ-भ–वाजिभिः अन्नवद्भिः। २. ख-ग-च-न-भ-स–'स्तोतुः' नास्ति। ३. घ-च-ण-ल–प्रज्ञाः। ४. ग-च-फ–त्वम्; ण-न-ल-स–सती। ५. ल–कुर्वाणस्य। ६. ख-ग-घ-च-ण-न-भ-स–'सेवस्व' नास्ति। ७. ख-ग-घ-च-ण-फ-भ–युवतिस्तरुणी।

उषो देव्यमर्त्या वि भाहि चन्द्ररथा सूनृता ईरयन्ती ।
आ त्वा वहन्तु सुयमासो अश्वा हिरण्यवर्णां पृथुपाजसो ये ॥ २ ॥

उषः । देवि । अमर्त्या । वि । भाहि । चन्द्रऽरथा । सूनृताः । ईरयन्ती ।
आ । त्वा । वहन्तु । सुऽयमासः । अश्वाः । हिरण्यऽवर्णाम् । पृथुऽपाजसः । ये ॥ २ ॥

हे ᵛउषो ᵛदेवि ᵛअमर्त्या मरणधर्मरहिता ᵛचन्द्ररथा सुवर्णमयरथोपेता ᵛसूनृताः प्रियसत्यरूपा वाचः ᵛईरयन्ती उच्चारयन्ती । तथा च मन्त्रवर्णः–'सुम्नावरी सूनृता ईरयन्ती' (ऋ. सं. १. ११३. १२) इति । तादृशी त्वं ᵛवि ᵛभाहि सूर्यकिरणसंबन्धात् विशेषेण दीप्यस्व[1] । ᵛपृथुपाजसः प्रभूतबलयुक्ता अरुणवर्णाः ᵛये ᵛअश्वाः विद्यन्ते ᵛसुयमासः सुष्ठु नियन्तुं शक्या रथे योजितास्तेऽश्वाः ᵛहिरण्यवर्णां ᵛत्वा त्वाम् ᵛआ ᵛवहन्तु ॥ सुयमासः । यमेरकृच्छ्रार्थे खल् । लित्स्वरः ॥

उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्यमृतस्य केतुः ।
समानमर्थं चरणीयमाना चक्रमिव नव्यस्या ववृत्स्व ॥ ३ ॥

उषः । प्रतीची । भुवनानि । विश्वा । ऊर्ध्वा । तिष्ठसि । अमृतस्य । केतुः ।
समानम् । अर्थम् । चरणीयमाना । चक्रम्ऽइव । नव्यसि । आ । ववृत्स्व ॥ ३ ॥

हे ᵛउषः देवि ᵛविश्वा सर्वाणि ᵛभुवनानि ᵛप्रतीची । प्रति आभिमुख्येनाञ्चति प्राप्नोतीति प्रतीची । ᵛअमृतस्य मरणधर्मरहितस्य सूर्यस्य ᵛकेतुः प्रज्ञापयित्री त्वम् ᵛऊर्ध्वा नभस्युन्नता ᵛतिष्ठसि । ᵛनव्यसि पुनःपुनर्जायमानतया नवतरे हे उषो देवि ᵛअर्थम्[2] । अर्यते गम्यतेऽस्मिन्निल्यर्थो मार्गः । ᵛसमानम् एकं मार्गमुदयात् प्राचीनकाललक्षणं ᵛचरणीयमाना चरितुमिच्छन्ती त्वम् ᵛआ ᵛववृत्स्व पुनरतस्मिन् मार्गे आवृत्ता भव । तत्र दृष्टान्तः । ᵛचक्रमिव । यथा नभसि चरितुः सूर्यस्य रथाङ्गं पुनःपुनरावर्तते तद्वत् ॥ प्रतीची । प्रतिपूर्वादञ्चतेः क्विन् । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अचः' इत्यकारलोपे 'चौ' इति दीर्घः[2] । उदात्तनिवृत्तिस्वरेणान्तोदात्तः । केतुः । 'चायृ पूजानिशामनयोः' इत्यस्मात् 'चायः की च' इति तुः । की इत्यादेशः । आर्धधातुकलक्षणो गुणः । अर्थम् । अर्तेस्थन्प्रत्ययः । नव्यसि । नवशब्दात् ईयसुनि ङीपि रूपम् । ईकारलोपश्छान्दसः । ववृत्स्व । 'वृतु वर्तने' । 'बहुलं छन्दसि' इति विकरणस्य श्लुः ॥

---

१. घ-च-ण-त-न-भ-ल-स–दीप्यसे । २. घ-च-ण-न-फ-भ–त्वं चक्रमिव चरणीयमाना समानमर्थं उत्तमं मार्गम् आववृत्स्व आवर्तनं कुरुष्व । अर्थम् । अर्थ्यते गम्यते मार्गोऽस्मिन्निल्यर्थः; ल-स–अर्थम् । अर्थ्यते गम्यते मार्गोऽस्मिन्निल्यर्थः ।

अव॒ स्यूमे॑व चि॒न्वती॑ म॒घोन्यु॒षा या॑ति॒ स्वस॑रस्य॒ पत्नी॑ ।
स्व१॒॑र्जन॑न्ती सु॒भगा॑ सु॒दंसा॒ आन्ता॑द्दि॒वः प॑प्रथ॒ आ पृ॑थि॒व्याः ॥ ४ ॥

अव॑ । स्यूम॑ऽइव । चि॒न्वती॑ । म॒घोनी॑ । उ॒षाः । या॒ति॒ । स्वस॑रस्य । पत्नी॑ ।
स्व१॒॑: । जन॑न्ती । सु॒ऽभगा॑ । सु॒ऽदंसाः॑ । आ । अन्ता॑त् । दि॒वः । प॒प्र॒थे॒ । आ । पृ॒थि॒व्याः ॥ ४ ॥

येयम् ᵛउषाः ᵛस्यूमेव वस्त्रमिव विस्तृतं तमः ᵛअव ᵛचिन्वती अवचयमपक्षयं प्रापयन्ती ᵛमघोनी धनवती ᵛस्वसरस्य । सुष्ठ्वस्यति क्षिपति तम इति स्वसरः सूर्यो वासरो वा । तस्य ᵛपत्नी सती ᵛयाति गच्छति । ᵛस्वः स्वकीयं तेजः ᵛजनन्ती जनयन्ती ᵛसुभगा सुधना[1] सौभाग्ययुक्ता[1] वा ᵛसुदंसाः शोभनाग्निहोत्रकर्मा[2] सेयमुषाः[2] ᵛदिवः द्युलोकस्य ᵛआ ᵛअन्तात् ᵛपृथिव्याः च ᵛआ अन्तात् आवसानात्[3] ᵛपप्रथे प्रथते प्रकाशते इत्यर्थः ॥ स्यूमेव । ‘ षिवु तन्तुसंताने ’ । ‘ अविषिविशुषिभ्यः कित् ’ इति मन्प्रत्ययः । ‘ छ्वोः शूडनुनासिके च ’ इति ऊठ् । यणादेशः । ‘ सुपां सुलुक्° ’ इति सोर्लुक् । नित्त्वादाद्युदात्तः । चिन्वती । ‘ शतुरनुमः° ’ इति ङीप उदात्तत्वम् । जनन्ती । ‘ जन जनने ’ इत्यस्य ण्यन्तस्य शतरि रूपम् । ‘ छन्दस्युभयथा ’ इति शप आर्धधातुकत्वेन णिलोपः ॥

अच्छा॑ वो दे॒वीमु॒षसं॑ विभा॒तीं प्र वो॑ भरध्वं॒ नम॑सा सुवृ॒क्तिम् ।
ऊ॒र्ध्वं म॑धु॒धा दि॒वि पाजो॑ अश्रे॒त्प्र रो॑च॒ना रु॑रुचे र॒ण्वसं॑दृक् ॥ ५ ॥

अच्छ॑ । व॒: । दे॒वीम् । उ॒षस॑म् । वि॒ऽभा॒तीम् । प्र । व॒: । भ॒र॒ध्व॒म् । नम॑सा । सु॒ऽवृ॒क्तिम् ।
ऊ॒र्ध्वम् । म॒धु॒धा । दि॒वि । पाज॑: । अ॒श्रे॒त् । प्र । रो॒च॒ना । रु॒रु॒चे॒ । र॒ण्वऽसं॑दृक् ॥ ५ ॥

हे स्तोतारः ᵛवः युष्मान् ᵛअच्छ अभिलक्ष्य ᵛविभातीं शोभमानाम् ᵛउषसं[4] ᵛदेवीं[4] प्रति ᵛवः युष्माकं संबन्धिना ᵛनमसा नमस्कारेण सह ᵛसुवृक्तिं शोभनां[5] स्तुतिं ᵛप्र ᵛभरध्वं यूयं कुरुत । ᵛमधुधा । मधुराणि स्तुतिलक्षणानि वाक्यानि दधातीति । मधु[6] सोमः[7] । तं धारयतीति[8] वा । यद्वा । मधुधादित्यधात्री । यद्वा । अवग्रहाभावादव्युत्पन्नावयवम् अखण्डमिदं[9] पदम्[9] उषोनाम । सेयमुषाः ᵛदिवि नभसि ᵛऊर्ध्वं ᵛपाजः ऊर्ध्वाभिमुखं पाजस्तेजः ᵛअश्रेत् श्रयति[10] । तथा[11] ᵛरोचना रोचनशीला ᵛरण्वसंदृक् रमणीयदर्शनोषाः ᵛप्र ᵛरुरुचे प्रकर्षेण दीप्यते । यद्वा । रोचना लोकान् प्र रुरुचे प्रकर्षेण स्वतेजसा दीपयति । तथा च मन्त्रवर्णः–‘ व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् ’ ( ऋ. सं. १. ४९. ४ ) इति ॥ रण्वसंदृक् । रवेर्गत्यर्थस्य अच्प्रत्ययः । इदित्त्वात् नुमागमः । संपूर्वात् दृशेः क्विन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः ॥

---

१. च-फ–सुष्ठु सौभाग्ययुक्ता । २. च-फ–शोभनाग्निहोत्रकर्मोपेतेयमुषाः । ३. ख-ग-घ-च-ण-त-न-स–अवसानात् । ४. त–उषोदेवीम् । ५. ख-ग-त-न-फ-भ-स–शोभमानाम्; च–सुष्ठु शोभमानाम् । ६. त–मधुः । ७. ख-ग-घ-च-ण-त-न-भ-स–स्तोमः । ८. ग-च-भ–धारयन्तीति । ९. च-फ–सदिदम् । १०. च–आश्रयति । ११. ख-ग-च-यथा च; घ-ण-भ–तथा च ।

ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात् ।
आयतीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः ॥ ६ ॥

ऋतऽवरी । दिवः । अर्कैः । अबोधि । आ । रेवती । रोदसी इति । चित्रम् । अस्थात् ।
आऽयतीम् । अग्ने । उषसम् । विऽभातीम् । वामम् । एषि । द्रविणम् । भिक्षमाणः ॥ ६ ॥

ऋतावरी सत्यवती येयमुषाः दिवः द्युलोकात् अर्कैः तेजोभिः अबोधि सर्वैर्ज्ञायते । ततः रेवती धनवती येयं रोदसी द्यावापृथिव्यौ चित्रं नानाविधरूपयुक्तं यथा भवति तथा आ अस्थात् सर्वतो व्याप्य तिष्ठति हे अग्ने आयतीं त्वदभिमुखमागच्छन्तीं विभातीं भासमानाम् उषसम् उषोदेवीं भिक्षमाणः हवींषि याचमानस्त्वं वामं वननीयं द्रविणम् अग्निहोत्रादिलक्षणं धनम् एषि प्राप्नोषि ॥ अबोधि । 'बुध अवगमने' । कर्मणि लुङि 'चिण् भावकर्मणोः' इति चिण् । 'चिणो लुक्' । रेवती । रयिशब्दात् मतुप् । 'छन्दसीरः' इति वत्वम् । 'रयेर्मतौ बहुलम्' इति संप्रसारणपरपूर्वत्वे[1] । गुणः । 'उगितश्च' इति ङीप् । 'रेशब्दाच्चोपसंख्यानम्' इति मतुप उदात्तत्वम् ॥

ऋतस्य बुध्न उषसामिषण्यन्वृषा मही रोदसी आ विवेश ।
मही मित्रस्य वरुणस्य माया चन्द्रेव भानुं वि दधे पुरुत्रा ॥ ७ ॥

ऋतस्य । बुध्ने । उषसाम् । इषण्यन् । वृषा । मही इति । रोदसी इति । आ । विवेश ।
मही । मित्रस्य । वरुणस्य । माया । चन्द्राऽइव । भानुम् । वि । दधे । पुरुऽत्रा ॥ ७ ॥

वृषा वृष्टिद्वारा अपां[2] प्रेरक आदित्यः ऋतस्य अग्निहोत्रादिकर्मकरणे सत्यभूतस्याह्नः बुध्ने मूले उषसामिषण्यन् प्रेरणं कुर्वन् मही महत्यौ रोदसी द्यावापृथिव्यौ आ विवेश स्वतेजोभिः[3] सर्वतः प्रविष्टवान् । यद्वा । वृषा वर्षितेषण्यन् सर्वतो गच्छन्नुषसां संबन्धी रश्मिसमूहो रोदसी द्यावापृथिव्यौ विष्टवानिति योजनीयम् । तत उषाः मही महती[4] मित्रस्य वरुणस्य मित्रावरुणयोः माया[4] प्रभारूपा सती चन्द्रेव सुवर्णानीव भानुं स्वप्रभां पुरुत्रा बहुषु देशेषु वि दधे विदधाति सर्वत्र प्रसारयति ॥ मही । अल्लोपश्छान्दसः । पुरुत्रा । 'देवमनुष्य°' इत्यादिना अधिकरणे त्राप्रत्ययः ॥ ॥ ८ ॥

'इमा उ वाम्' इत्यष्टादशर्चं नवमं सूक्तम् । अत्रेयमनुक्रमणिका–'इमा उ द्व्यूनैन्द्रावरुणबार्हस्पत्यपौष्णसावित्रसौम्यमैत्रावरुणास्तृचा अन्त्यो जमदग्न्यार्षो वा चतुर्थ्याद्या गायत्र्यः' इति । कृत्स्नस्य विश्वामित्र ऋषिरन्त्यस्य तृचस्य जमदग्निर्वा । आद्यास्तिस्रस्त्रिष्टुभः शिष्टाः पञ्चदश गायत्र्यः । प्रथमस्येन्द्रावरुणौ देवता द्वितीयस्य बृहस्पतिस्तृतीयस्य पूषा चतुर्थस्य सविता पञ्चमस्य सोमः षष्ठस्य

---

१. त–संप्रसारणं पररूपत्वे; न–संप्रसारणं परपूर्वत्वम् । २. ख-ग-च-ण-भ-स–'अपां' नास्ति । ३. ख-ग-घ-च-ण-न-भ-स–'स्वतेजोभिः' नास्ति । ४. ख-ग-घ-च-ण-फ-भ–मित्रस्य वरुणस्य माया महती मित्रावरुणयोः या माया ।

मित्रावरुणौ । आभिप्लविकेषूक्थ्येषु तृतीयसवने स्तोमवृद्धौ सत्यां स्वस्वशस्त्रे होत्रका अन्यसूक्तमवशोष्य स्तोमाभिशंसनार्थं[1] तृचादिसंख्या ऋच आवपेयुः । तत्र मैत्रावरुणस्यावापार्थमाद्यस्तृचः । सूत्रितं च—' इमा उ वां भृमयो मन्यमाना इति तिस्रः ' ( आश्व. श्रौ. ७. ९ ) इति ॥

इमा उं वां भृमयो मन्यमाना युवावते न तुज्या अभूवन् ।
क्व१ त्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः ॥ १ ॥

इमाः । ऊँ इति । वाम् । भृमयः । मन्यमानाः । युवाऽवते । न । तुज्याः । अभूवन् ।
क्व । त्यत् । इन्द्रावरुणा । यशः । वाम् । येन । स्म । सिनम् । भरथः । सखिऽभ्यः ॥ १ ॥

हे इन्द्रावरुणा[2] इन्द्रावरुणौ वां युवयोः संबन्धिन्यः मन्यमानाः बलिभिः शत्रुभिः अभिमन्यमानाः[3] अत एव भृमयः भ्रमणशीलाः इमाः प्रजाः । उ[4] पूरणः[4] । युवावते । तृतीयार्थे चतुर्थी । यौवनवता बलिना शत्रुणा तुज्याः हिंस्याः न अभूवन् न भवन्तु । अपि[5] च[5] वां युवयोः त्यत् तादृशं[6] यशः क्व कुत्रास्ते । येन यशसा सखिभ्यः अस्मभ्यं सिनम् अन्नं भरथः स्म प्रदातुं संपादयथः । तत् क्वास्ति[7] इत्यन्वयः[8] । यद्वा । हे इन्द्रावरुणौ वां युवयोः संबन्धिन्य इमा अस्माभिः क्रियमाणा भृमयो युवां प्राप्तुं भ्रमणशीलाः[9] मन्यमानाः । मन्यतिरर्चतिकर्मा । युवाम् अर्चन्त्यस्ताः[10] स्तुतयो युवावते युवाभ्यां सदृशायान्यस्मै देवाय न तुज्याः । तुजतिर्दानकर्मार्थः । प्रदेया मा भूवन् । शिष्टं समानम् ॥ भृमयः । ' भ्रमु अनवस्थाने ' । भ्रमेः ' संप्रसारणं च ' इति इन्प्रत्ययः संप्रसारणं च । व्यत्ययेनान्तोदात्तत्वम् । युवावते । ' युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ' इति वतुप् । अविभक्तावपि युवादेशश्छान्दसः । तुज्याः । ' तुज[11] हिंसादाननिकेतनेषु ' । ' अघ्न्यादयश्च ' इति यत् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । सिनम् । ' षिञ् बन्धने ' । ' इणिषिन्दीङुष्यविभ्यो नक् ' इति नक् । व्यत्ययेनाद्युदात्तत्वम् ॥

अयमु वां पुरुतमो रयीयञ्छश्वत्तममवसे जोहवीति ।
सजोषाविन्द्रावरुणा मरुद्भिर्दिवा पृथिव्या शृणुतं हवं मे ॥ २ ॥

अयम् । ऊँ इति । वाम् । पुरुऽतमः । रयिऽयन् । शश्वत्ऽतमम् । अवसे । जोहवीति ।
सऽजोषौ । इन्द्रावरुणा । मरुत्ऽभिः । दिवा । पृथिव्या । शृणुतम् । हवम् । मे ॥ २ ॥

हे इन्द्रावरुणा[12] इन्द्रावरुणौ रयीयन् रयिमात्मन इच्छन् अयमु[13] पुरुतमः वैदिककर्मप्रवृत्ततयातिशयेन पुरुर्महानयं यजमानः अवसे रक्षणायान्नाय वा वां युवां शश्वत्तमं सर्वदा जोहवीति

---

१. ख-ग-च-ण—स्तोमातिशंसनार्थम्; त-न-भ-स—स्तोमातिशंसनार्थाः । २. न-ल-स—' इन्द्रावरुणा ' नास्ति । ३. ण—अभिनन्द्यमानाः । ४. ख-ग-घ-च-ण-न-भ-ल-स—' उ पूरणः ' नास्ति । ५. ख-ग-घ-च-ण-न-भ-स—' अपि च ' नास्ति । ६. ख-ग-च-ण—एतादृशम् । ७. न-ल-स—क्वास्ते । ८. घ—इत्यन्वयः । उ पूरणः । ९. ख-ग-च-ण-फ-भ-स—क्रमणशीलाः । १०. त—अर्चन्त्य एताः । ११. त—तुजि । १२. न-ल-स—' इन्द्रावरुणा ' नास्ति । १३. त-स—अयम् ।

भृशमाह्वयति । vमरुद्भिः देवविशेषैः vदिवा vपृथिव्या च vसजोषौ संगतौ युवां vमे मम vहवं युष्मदीयमाह्वानं vश्रृणुतम् ॥ पुरुतमः । तमपो व्यत्ययेनाद्युदात्तत्वम् ॥ जोहवीति । ह्वयतेर्यङ्लुकि 'अभ्यस्तस्य च' इति संप्रसारणे कृते रूपम् । दिवा । 'ऊडिदम्°' इति विभक्तेरुदात्तत्वम् । पृथिव्या । 'उदात्तयणो हल्पूर्वात्' इति उदात्तत्वम् । हवम् । ह्वयतेः 'भावेऽनुपसर्गस्य' इति अप् । प्रत्ययस्य पित्त्वादनुदात्तत्वम् ॥

अस्मे तदिन्द्रावरुणा वसु ष्यादस्मे रयिर्मरुतः सर्ववीरः ।

अस्मान्वरूत्रीः शरणैरवन्त्वस्मान्होत्रा भारती दक्षिणाभिः ॥ ३ ॥

अस्मे इति । तत् । इन्द्रावरुणा । वसु । स्यात् । अस्मे इति । रयिः । मरुतः । सर्वऽवीरः ।

अस्मान् । वरूत्रीः । शरणैः । अवन्तु । अस्मान् । होत्रा । भारती । दक्षिणाभिः ॥ ३ ॥

vइन्द्रावरुणा[1] हे इन्द्रावरुणौ[1] vअस्मे अस्मासु vतत् अभिलषितं तादृशं vवसु धनं vस्यात् भवतु[2] । हे vमरुतः vसर्ववीरः सर्वेषु[3] कर्मसु वीरः[3] समर्थः vरयिः पुत्रपौत्रयुक्तः[4] पशुसंघः[4] । 'पशवो वै रयिः' इति तैत्तिरीयकम् । सः[5] vअस्मे अस्माकं भवतु । vवरूत्रीः सर्वैः संभजनीया देवपत्न्यः vशरणैः । श्रृणन्ति शीतादिक्लेशमिति शरणानि गृहाः । तैः vअस्मान् vअवन्तु । vहोत्रा । हूयन्तेऽस्यां हवींषीति । यद्वा[6] । हूयते तत्र प्राण इति होत्रा वाक् । तथा च श्रुतिः–'वाचि हि प्राणं जुहुमः प्राणे वा वाचम्' इति । यद्वा । होत्रेति यज्ञनाम । हूयते अत्र हविरिति[6] । यज्ञश्च वागुच्यते । 'वाचं यच्छन्ति वाग्वै यज्ञः' (ऐ. ब्रा. ५. २४) इति ब्राह्मणम् । तादृशी vभारती सरस्वती vदक्षिणाभिः गोरूपाभिर्दक्षिणाभिः यद्वा उदाराभिर्वाग्भिः vअस्मान् पालयतु[7] ॥ वसु ष्यात् इत्यत्र संहितायां 'पूर्वपदात्' इति षत्वम् । वरूत्रीः । 'ग्रसितस्कभित°' इत्यादिना ङीबन्तत्वेन निपातनादिष्टसिद्धिः । होत्रा । 'हु दानादनयोः[8]' । 'हुयामाश्रुभसिभ्यस्त्रन्' इत्यधिकरणे त्रन्प्रत्ययः ॥

बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे ॥ ४ ॥

बृहस्पते । जुषस्व । नः । हव्यानि । विश्वऽदेव्य । रास्व । रत्नानि । दाशुषे ॥ ४ ॥

vविश्वदेव्य सर्वदेवहित हे vबृहस्पते vनः अस्मत्संबन्धीनि vहव्यानि हवनयोग्यानि पुरोडाशादीनि[9] हवींषि[9] vजुषस्व सेवस्व । ततस्त्वं vदाशुषे हविर्दत्तवते यजमानाय मह्यं vरत्नानि उत्तमानि धनानि vरास्व देहि ॥ रास्व । 'रा दाने' । व्यत्ययेनात्मनेपदम् ॥

---

१. ग-घ-ण-भ–हे इन्द्रावरुणा इन्द्रावरुणौ; च-न-स–हे इन्द्रावरुणौ । २. च-फ–भवेत् । ३. ख-ग-च–सर्वकर्मवीरः; घ-ण-न-भ-स–सर्वकर्मसु वीरः । ४. ख-ग-घ-च-ण-न-फ-भ-ल-स–पुत्रपशुसंघः । ५. ख-ग-च-ण–'सः' नास्ति । ६. ख-ग-च-ण-न-भ-स–'यद्वा ... ... हविरिति' नास्ति । ७. त–पालयतु । यद्वा होत्रा होतुरग्नेः पत्नी भारती सूर्यपत्नी च सरस्वती च तिस्रो देव्यः पालयन्त्विति । ८. ख-ग-च-ण-न-भ–दानादानयोः । ९. घ-त- ल–पुरोडाशादिहवींषि ।

शुचिमर्कैर्बृहस्पतिमध्वरेषु नमस्यत । अनाम्योज आ चके ॥ ५ ॥

शुचिम् । अर्कैः । बृहस्पतिम् । अध्वरेषु । नमस्यत । अनामि । ओजः । आ । चके ॥ ५ ॥

हे ऋत्विजो यूयम् ᵛअध्वरेषु ᵛशुचिं शुद्धं ᵛबृहस्पतिम् ᵛअर्कैः अर्चनीयैः स्तोत्रैः ᵛनमस्यत परिचरत । ᵛअनामि अनमनशीलं परैरनभिभवनीयम् ᵛओजः तस्य बलम् ᵛआ ᵛचके सर्वतो याचे[1] ॥ बृहस्पतिम् । वनस्पत्यादित्वादुभयपदप्रकृतिस्वरः । चके । कमेर्लिट्युत्तमे मकारलोपश्छान्दसः ॥ ॥ ९ ॥

वृषभं चर्षणीनां विश्वरूपमदाभ्यम् । बृहस्पतिं वरेण्यम् ॥ ६ ॥

वृषभम् । चर्षणीनाम् । विश्वऽरूपम् । अदाभ्यम् । बृहस्पतिम् । वरेण्यम् ॥ ६ ॥

ᵛचर्षणीनां मनुष्याणां ᵛवृषभम् अभिमतफलवर्षकं ᵛविश्वरूपं व्याप्तरूपम् । यद्वा । विश्वरूपानामकगोवाहनोपेतम् । तथा च मन्त्रवर्णः—' बृहस्पतिर्विश्वरूपामुपाजत ' ( ऋ. सं. १. १६१. ६ ) इति । ᵛअदाभ्यं[2] केनाप्यतिरस्करणीयं ᵛवरेण्यं सर्वैर्भजनीयं ᵛबृहस्पतिम् । अभिमतफलं याचे* इति पूर्वेणान्वयः[2] ॥ विश्वरूपम् । ' बहुव्रीहौ विश्वं संज्ञायाम् ' इति पूर्वपदान्तोदात्तत्वम् । यद्वा । विश्वरूपास्य अस्तीति[3] अर्शआदित्वात् अच्प्रत्ययः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । अदाभ्यम् । ' दभेश्चेति वक्तव्यम् ' इति ण्यत्प्रत्ययः ॥

इयं ते पूषन्नाघृणे सुष्टुतिर्देव नव्यसी । अस्माभिस्तुभ्यं शस्यते ॥ ७ ॥

इयम् । ते । पूषन् । आघृणे । सुऽस्तुतिः । देव । नव्यसी ।

अस्माभिः । तुभ्यम् । शस्यते ॥ ७ ॥

ᵛआघृणे दीप्तिमन्[4] हे ᵛपूषन् ᵛदेव ᵛनव्यसी नवतरा ᵛइयं ᵛसुष्टुतिः शोभनस्तुतिरूपा[5] वाक् ᵛते त्वत्संबन्धिनी भवति । सैषा स्तुतिः ᵛअस्माभिः[6] स्तोतृभिः ᵛतुभ्यं त्वदर्थं ᵛशस्यते क्रियते[7] । तां जुषस्वेत्युत्तरेणान्वयः ॥

तां जुषस्व गिरं मम वाजयन्तीमवा धियम् । वधूयुरिव योषणाम् ॥ ८ ॥

ताम् । जुषस्व । गिरम् । मम । वाजऽयन्तीम् । अव । धियम् । वधूयुःऽइव । योषणाम् ॥८॥

हे पूषन् स्तोत्रं कुर्वाणस्य ᵛमम ᵛतां तादृशीं ᵛगिरं स्तुतिलक्षणां वाचं ᵛजुषस्व सेवस्व । स्तुत्या प्रीतस्त्वं ᵛवाजयन्तीं वाजमन्नमिच्छन्तीं हर्षकारिणीं ᵛधियम् इमां स्तुतिं प्रति[8] ᵛअव अभिगच्छ । तत्र दृष्टान्तः । ᵛवधूयुरिव । यथा वधूयुः स्त्रीकामः ᵛयोषणां स्त्रियं प्रत्यागच्छति तद्वत् ॥ वाजयन्तीम् ।

१. ख-ग-घ-च-ण-न-फ-भ-स—ययाचे । २. च-फ—अदाभ्यं अहिंस्यं वरेण्यं वरणीयं बृहस्पतिं नमस्यत इति पूर्वेणान्वयः । *ख-ग-भ—आचके । ३. भ—सतीति । ४. ल—दीप्तिमान् । ५. ख-ग-घ-च-ण-न-भ-स—शोभना स्तुतिरूपा । ६. त-न-स—अस्माभिः वाणी । ७. ख-ग-च-ण-भ-ल-स—' क्रियते ' नास्ति । ८. ख-ग-घ-च-ण-फ-भ—' प्रति ' नास्ति ।

वाजशब्दादिच्छतीत्यर्थे क्यच्। तदन्ताच्छतरि ङीपि रूपम्। ङीपोऽनुदात्तत्वे प्रत्ययस्वरः[१] । अव । अव रक्षणादिषु इत्यस्य लोटि रूपम् ॥

यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पूषाविता भुवत् ॥९॥

यः । विश्वा । अभि । विऽपश्यति । भुवना । सम् । च । पश्यति ।

सः । नः । पूषा । अविता । भुवत् ॥ ९ ॥

ᵛयः पूषा ᵛविश्वा ᵛभुवना सर्वान् लोकान् ᵛअभि आभिमुख्येन ᵛविपश्यति विशेषेण पश्यति । किंच तानि ᵛसं ᵛपश्यति तत्तद्वस्तुयाथात्म्यं[२] सम्यक् जानाति[३] । ᵛसः तादृशः ᵛपूषा देवः ᵛनः अस्माकम् ᵛअविता रक्षकः ᵛभुवत् भवतु[४] ॥ विपश्यति । यद्वृत्तयोगादनिघातः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । ' तिङि चोदात्तवति ' इति गतेर्निघातः । पश्यति । अत्र सकर्मकत्वात् परस्मैपदम् । पूर्ववदनिघातः । भुवत् । भवतेर्लेटि[५] अडागमः । ' भूसुवोस्तिङि ' इति गुणप्रतिषेधे उवङादेशः । निघातः ॥

दशरात्रस्य षष्ठेऽहनि वैश्वदेवशस्त्रे ' तत्सवितुः ' इति द्वे ऋचौ प्रतिपत्तृचस्य द्वितीयातृतीये[६] । सूत्रितं[७] च– ' तत्सवितुर्वरेण्यमिति द्वे दोषो आगात् ' ( आश्व. श्रौ. ८. १ ) इति । अभिप्लवपृष्ठ्यषडहयोर्द्वितीयेऽहनि वैश्वदेवशस्त्रे प्रतिपत्तृचस्यैते एव प्रथमाद्वितीये । सूत्रितं च–' तत्सवितुर्वरेण्यमिति द्वे आ विश्वदेवम् ' ( आश्व. श्रौ. ७. ६ ) इति[७] ॥

तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ १० ॥

तत् । स॒वि॒तुः । वरे॑ण्यम् । भर्गः॑ । दे॒वस्य॑ । धी॒म॒हि॒ । धियः॑ । यः । नः॒ । प्र॒ऽचो॒दया॑त् ॥ १० ॥

ᵛयः सविता देवः ᵛनः अस्माकं ᵛधियः कर्माणि धर्मादिविषया वा[८] बुद्धीः ᵛप्रचोदयात् प्रेरयेत्[९] ᵛतत् तस्य[९] ᵛदेवस्य[१०] ᵛसवितुः[१०] सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य[११] ᵛवरेण्यं सर्वैः

---

१. ल–प्रत्ययस्वरः । एकादेशस्वरः । २. ख-ग-च-ण-फ-स–यद्वस्तुयाथात्म्यम् । ३. ण–जानाति च । ४. घ–भवतु । च पूरणः । ५. च–°लेटि रूपम् । ६. ख-ग-च-फ-भ-स–द्वितीयतृतीये । ७. न–सूत्रितं च । अभि त्यं देवं सवितारमोण्योरित्येका । तत्सवितुर्वरेण्यमिति द्वे इति । तथा तत्सवितुरित्येषा उपनयने वटोरुपदेशे विनियुक्ता । सूत्रितं च–पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाहेति । तथा अनुप्रवचनीयहोमेऽप्येषा । सूत्रितं च–सदसस्पतिमद्भुतमिति सावित्र्या द्वितीयमिति । ब्रह्मयज्ञेऽप्येषा । ओंपूर्वा व्याहृतयः सावित्रीमन्वाहेति सूत्रितं । उपाकरणोत्सर्जनयोरप्येषा । ओंपूर्वा व्याहृतयः सावित्री च त्रिरभ्यस्येति तथोत्सर्गे इति च सूत्रात् । सायंप्रातः संध्योपासनेऽप्येषा । तथा च सूत्रं । सावित्रीं जपेदर्धास्तमिते मंडले आनक्षत्रदर्शनादेवं प्रातरिति । पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि आभिप्लविकेषु द्वितीयचतुर्थे षष्ठेऽप्यहःसु च वैश्वदेवशस्त्रे तत्सवितुरिति द्वे ऋचौ प्रतिपत्तृचस्य द्वितीयातृतीये । तथा च सूत्रितं । तत्सवितुर्वरेण्यमिति द्वे आ विश्वदेवमिति । युग्मेष्वेवमभिप्लव इति च । ८. ण-फ-भ–' वा ' नास्ति । ९. ख-ग-च-त-फ-भ-स–तस्य । १०. त-न-ल–सर्वासु श्रुतिषु प्रसिद्धस्य देवस्य द्योतमानस्य । ११. त–परमेश्वरस्य आत्मभूतम्; ल–परमेश्वरस्य आत्ममूलभूतम् ।

उपास्यतया ज्ञेयतया च संभजनीयं ᵛभर्गः[१] अविद्यातत्कार्ययोर्भर्जनाद्भर्गः[२] स्वयंज्योतिः[३] परब्रह्मात्मकं तेजः ᵛधीमहि वयं ध्यायामः । यद्वा । तत् इति भर्गोविशेषणम् । सवितुः ᵛदेवस्य तत्तादृशं भर्गो धीमहि[४]। किं तदित्यपेक्षायामाह । यः इति लिङ्गव्यत्ययः। यद्भर्गो धियः प्रचोदयात् । तत् ध्यायेमेति[५] समन्वयः। यद्वा । यः[६] सविता सूर्यो धियः कर्माणि प्रचोदयात् प्रेरयति तस्य सवितुः सर्वस्य[७] प्रसवितुः[७] देवस्य द्योतमानस्य सूर्यस्य तत्सर्वैः दृश्यमानतया[८] प्रसिद्धं वरेण्यं[९] सर्वैः संभजनीयं भर्गः पापानां तापकं तेजोमण्डलं धीमहि ध्येयतया मनसा धारयेम । यद्वा । भर्गःशब्देनान्नमभिधीयते । यः सविता देवो धियः प्रचोदयति तस्य प्रसादाद्भर्गोऽन्नादिलक्षणं फलं धीमहि धारयामः । तस्याधारभूता भवेमेत्यर्थः । भर्गःशब्दस्यान्नपरत्वे धीशब्दस्य[१०] कर्मपरत्वे[१०] चाथर्वणं–' वेदांश्छन्दांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः । कर्माणि धियस्तदु ते प्रब्रवीमि प्रचोदयंत्सविता याभिरेति ' ( गो. ब्रा. १. ३२ ) इति ॥ भर्गः । ' भ्रस्ज पाके ' । असुन् । ' भ्रस्जो रोपधयो रमन्यतरस्याम् ' ( पा. सू. ६. ४. ४७ ) इति रोपधयोर्लोपो रमागमः । न्यङ्क्वादिपाठात्[११] कुत्वम् । धीमहि । ध्यायतेर्लिङि ' बहुलं छन्दसि ' इति संप्रसारणम् । व्यत्ययेनात्मनेपदम् । यद्वा । ' धीङ् आधारे ' । लिङि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । प्रचोदयात् । चोदयतेर्लेट्याडागमः । यद्वृत्तयोगादनिघातः । आगमस्यानुदात्तत्वे णिचः[१२] स्वरः[१२] ॥ ॥ १० ॥

**दे॒वस्य॑ सवि॒तुर्व॒यं वा॑ज॒यन्त॒ः पुरं॑ध्या । भर्ग॑स्य रा॒तिमी॑महे ॥ ११ ॥**

दे॒वस्य॑ । स॒वि॒तुः । व॒यम् । वा॒ज॒ऽयन्त॑ः । पुर॑म्ऽध्या । भर्ग॑स्य । रा॒तिम् । ई॒म॒हे॒ ॥ ११ ॥

ᵛवाजयन्तः वाजमन्नमात्मन इच्छन्तः ᵛवयं ᵛदेवस्य द्योतमानस्य ᵛसवितुः ᵛपुरंध्या तद्विषयस्तुत्या प्रज्ञया वा ᵛभगस्य भजनीयस्य धनस्य ᵛरातिं[१३] दानम् ᵛईमहे याचामहे ॥ रातिम् । ' मन्त्रे वृष॰' इत्यादिना क्तिन उदात्तत्वम् ॥

**दे॒वं नर॑ः सवि॒तारं॒ विप्रा॑ य॒ज्ञैः सु॑वृ॒क्तिभि॑ः । न॒म॒स्यन्ति॑ धि॒येषि॒ताः ॥१२॥**

दे॒वम् । नर॑ः । स॒वि॒तार॑म् । विप्रा॑ः । य॒ज्ञैः । सु॒वृ॒क्तिऽभि॑ः । न॒म॒स्यन्ति॑ । धि॒या । इ॒षि॒ताः ॥१२॥

ᵛनरः कर्मणां नेतारः ᵛविप्राः मेधाविनोऽध्वर्य्वादयः ᵛधियेषिताः कर्मणा बुद्ध्या वा प्रेर्यमाणाः सन्तः ᵛसवितारं ᵛदेवं त्वां ᵛयज्ञैः यजनीयैर्हविर्भिः ᵛसुवृक्तिभिः शोभनस्तोत्रैश्च ᵛनमस्यन्ति परिचरन्ति ॥ नमस्यन्ति । ' नमोवरिवश्चित्रङः क्यच् ' इति क्यच् ॥

अग्नीषोमप्रणयने ' सोमो जिगाति ' इत्याद्यास्तिस्र ऋचः । सूत्रितं च—' सोमो जिगाति गातुविद्देवानां तमस्य राजा वरुणस्तमश्विनेत्यर्धर्चे आरमेत् ' ( आश्व. श्रौ. ४. १० ) इति ॥

---

१. ख-ग-घ-च-ण-भ–तद्भर्गः । २. ख-ग-च-ण-भ–अविद्याभञ्जनात् तत्कार्ययोर्भजनम् ( भर्जनं-भ ); न-फ–अविद्यातत्कार्ययोः भञ्जनं ( भर्जनं-न ) । ३. ख-ग-च-ण-न-भ-स–स्वयंज्योतिः तेजः । ४. त-न-ल–धीमहि । तयोऽहं सोऽसौ योऽसौ सोऽहमिति वयं ध्यायेम । ५. ख-ग-च–ध्यायामीति; ण–ध्यायाम; न-भ-स–ध्यायामेति । ६. ख-ग-च-ण-फ-भ-स–' यः ' नास्ति । ७. ख-ग-घ-च-ण-भ-ल–' सर्वस्य प्रसवितुः ' नास्ति । ८. त–दृश्यतया । ९. ख-ग-च-ण–वरेण्यं च । १०. ख-ग-च-ण-न-भ-स–' धीशब्दस्य कर्मपरत्वे ' नास्ति । ११. त–न्यङ्क्वादित्वात् । १२. त–णिच्स्वरः । १३. ख-ग-च-ण-न-भ-ल-स–' रातिं ' नास्ति ।

सोमो॑ जिगाति गातु॒विद्दे॒वाना॑मेति निष्कृ॒तम् । ऋ॒तस्य॒ योनि॑मा॒सद॑म् ॥ १३ ॥

सोम॑ः । जि॒गा॒ति॒ । गा॒तु॒ऽवित् । दे॒वाना॑म् । ए॒ति॒ । निः॒ऽकृ॒तम् ।

ऋ॒तस्य॑ । योनि॑म् । आ॒ऽसद॑म् ॥ १३ ॥

गातुवित् । गातुः वेदिमार्गः[1] । तं जानानः सोमो जिगाति गच्छति । गन्तव्यं स्थानं दर्शयति । देवानां संबन्धि[2] निष्कृतं संस्कृतम्[2] आसदं सर्वैरासदनीयम् ऋतस्य यज्ञस्य योनिं स्थानं हविर्धानाख्यम् एति प्राप्नोति ॥ जिगाति । 'गा स्तुतौ' । जुहोत्यादिः ॥

सोमो॑ अ॒स्मभ्यं॑ द्वि॒पदे॒ चतु॑ष्पदे च प॒शवे॑ । अ॒न॒मी॒वा इष॑स्करत् ॥ १४ ॥

सोम॑ः । अ॒स्मभ्य॑म् । द्वि॒ऽपदे॑ । चतु॑ःऽपदे । च॒ । प॒शवे॑ । अ॒न॒मी॒वाः । इष॑ः । क॒र॒त् ॥ १४ ॥

सोमः स्तोतृभ्यः अस्मभ्यं तथा द्विपदे अस्मदीयाभ्यो द्विपाद्भ्यः प्रजाभ्यः चतुष्पदे पशवे चतुष्पाद्भ्यो गवादिपशुभ्यः च अनमीवाः रोगवर्जितानि इषः अन्नानि करत् करोतु ॥ चतुष्पदे । भसंज्ञायां पादस्य पद्भावः । 'इसुसोः सामर्थ्ये' इति संहितायां सत्वम् । 'आदेशप्रत्यययोः' इति षत्वम् । बहुव्रीहौ पूर्वपदस्वरः । करत् । करोतेर्लेट्यडागमः । इषस्करत् इत्यत्र संहितायां 'कः करत्करति°' इत्यादिना सत्वम् ॥

अ॒स्माक॒मायु॑र्व॒र्धय॑न्न॒भिमा॑ती॒ः सह॑मानः । सोम॑ः स॒धस्थ॒मास॑दत् ॥ १५ ॥

अ॒स्माक॑म् । आयु॑ः । व॒र्धय॑न् । अ॒भिऽमा॑तीः । सह॑मानः ।

सोम॑ः । स॒धऽस्थ॑म् । आ । अ॒स॒द॒त् ॥ १५ ॥

सः सोमः देवः अस्माकमायुः अन्नं जीवनं वा[3] वर्धयन् वृद्धिं प्रापयन् अभिमातीः कर्मविघ्नकारिणः शत्रून् सहमानः अभिभवन्नस्माकं सधस्थं हविर्धानाख्यं स्थानम् आसदत् आसीदतु ॥ असदत् । सदेर्लेटि रूपम् । निघातः ॥

अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रे 'आ नो मित्रावरुणा' इति स्तोत्रियस्तृचः[4] । सूत्रितं च– 'आ नो मित्रावरुणा नो गन्तं रिशादसा' ( आश्व. श्रौ. ५. १० ) इति । चतुर्विंशेऽहनि प्रातःसवने मैत्रावरुणे शस्त्रे 'आ नो मित्रावरुणा' इति षडहस्तोत्रियसंज्ञकस्तृचः । सूत्रितं च– 'आ नो मित्रावरुणा मित्रं वयं हवामहे' ( आश्व. श्रौ. ७. २ ) इति । स्तोमवृद्धावयमेव तृच आवापार्थः । सूत्रितं च–'आ नो मित्रावरुणेति तृचौ' ( आश्व. श्रौ. ७. ५ ) इति[5] । दाक्षायणे यज्ञे द्वे अमावास्ये कर्तव्ये । तत्रोत्तरस्याममावास्यायां द्वितीयेऽहनि मैत्रावरुणे 'आ नो मित्रावरुणा' इति तस्यानुवाक्या । सूत्रितं च—'आ नो मित्रावरुणा यद्बंहिष्ठं नातिविधे सुदानू' ( आश्व. श्रौ. २. १४ ) इति ॥

१. ख-ग-घ-च-ण-त-न-भ-स–मार्गः । २. घ-त–निष्कृतं निःसृतम्; स–निष्कृतं निःकृतम् । ३. त-न-भ-स–च । ४. न–तृचः । तथा च सूत्रितं–आर्षं चैक आ नो मित्रावरुणेति । चातुर्विंशिके प्रातःसवनमैत्रावरुणशस्त्रे अयं तृच षळहस्तोत्रियसंज्ञकः । तथा च सूत्रं–चतुर्विंशे होताजनिष्ट इत्याज्यमानो मित्रावरुणेति । पृष्ठ्याभिप्लवषडहयोः सोमनिमित्तावापार्थमयं तृचः । सूत्रितं च–आ नो मित्रावरुणेति तृचाः प्र वो मित्रायेति ।

आ नो॑ मित्रावरुणा घृ॒तैर्गव्यू॑तिमुक्षतम् । मध्वा॒ रजां॑सि सुक्रतू ॥ १६ ॥

आ । नः॒ । मि॒त्रा॒व॒रु॒णा॒ । घृ॒तैः । गव्यू॑तिम् । उ॒क्ष॒त॒म् । मध्वा॑ । रजां॑सि । सु॒क्र॒तू॒ इति॑ सुऽक्रतू ॥ १६॥

ᵛसुक्रतू शोभनकर्माणौ हे मित्रावरुणौ ᵛनः अस्माकं ᵛगव्यूतिं गवां मार्गं गोनिवासस्थानं ᵛघृतैः क्षरणसाधनैः पयोभिः ᵛआ ᵛउक्षतं समन्तात् सिञ्चतम् । अस्मभ्यं दोग्ध्रीर्गाः प्रयच्छतमिति भावः । ᵛरजांसि अस्मदावासस्थानानि ᵛमध्वा मधुरेण[1] रसेन[1] सिञ्चतम् ॥ गव्यूतिम् । 'गोर्यूतौ छन्दसि' इति वान्तादेशः । मध्वा । सर्वविधीनां छन्दसि विकल्पितत्वादत्र नुमागमाभावः ॥

उ॒रु॒शंसा॑ नमो॒वृधा॑ म॒ह्ना दक्ष॑स्य राजथः । द्राघि॑ष्ठाभिः शुचिव्रता ॥ १७ ॥

उ॒रु॒ऽशंसा॑ । न॒मः॒ऽवृधा॑ । म॒ह्ना । दक्ष॑स्य । रा॒ज॒थः॒ । द्राघि॑ष्ठाभिः । शु॒चि॒ऽव्र॒ता॒ ॥ १७ ॥

ᵛशुचिव्रता परिशुद्धकर्माणौ[2] हे मित्रावरुणौ ᵛउरुशंसा उरुभिर्बहुभिः शंसनीयौ । यद्वा । उरु महत् शंसः शंसं ययोस्तौ । ᵛनमोवृधा नमसा हविर्लक्षणेनान्नेन स्तोत्रेण वा वर्धमानौ ᵛद्राघिष्ठाभिः अत्यन्तं दीर्घस्तुतिलक्षणाभिर्वाग्भिर्युक्तौ युवां ᵛदक्षस्य । दक्षं धनं बलं वा । तस्य ᵛमह्ना महत्त्वेन ᵛराजथः ईशाथे ॥ उरुशंसा । 'शंसु स्तुतौ' । कर्मणि घञ् । क्रुत्स्वरः । द्राघिष्ठाभिः । दीर्घशब्दादिष्ठनि 'प्रियस्थिर°' इत्यादिना द्राघीय्यादेशः । नित्त्वादाद्युदात्तः ॥

मैत्रावरुणस्य ग्रहस्य याज्या 'गृणाना जमदग्निना' इत्येषा । सूत्रितं च—'होता यक्षन्मित्रावरुणा गृणाना जमदग्निना' ( आश्व. श्रौ. ५. ५ ) इति । अध्यायोपाकरणे मण्डलाद्यन्तहोमे 'गृणाना जमदग्निना' ( आश्व. गृ. ३. ५. ७ ) इत्येषा[3] ॥

गृ॒णा॒ना ज॒मद॑ग्निना॒ योना॑वृ॒तस्य॑ सीदतम् । पा॒तं सोम॑मृतावृधा ॥ १८ ॥

गृ॒णा॒ना । ज॒मत्ऽअ॑ग्निना । योनौ॑ । ऋ॒तस्य॑ । सी॒द॒त॒म् । पा॒त॒म् । सोम॑म् । ऋ॒त॒ऽवृ॒धा॒ ॥१८॥

हे मित्रावरुणौ ᵛजमदग्निना एतन्नामकेन महर्षिणा ᵛगृणाना स्तूयमानौ । यद्वा । जमदग्निना प्रज्वलिताग्निना विश्वामित्रेण स्तूयमानौ युवाम् ᵛऋतस्य यज्ञस्य ᵛयोनौ देवयजनाख्ये देशे ᵛसीदतम् उपविशतम् । ᵛऋतावृधा ऋतस्य कर्मफलस्य वर्धयितारौ युवां ᵛसोमं ᵛपातं पिबतम् ॥ गृणाना । 'गॄ शब्दे' । व्यत्ययेन[4] कर्मणि शानच् । चित्त्वादन्तोदात्तः । सीदतम् । सदेर्लोटि 'पाघ्रा°' इत्यादिना सीदादेशः । पातम् । 'पा पाने' । 'बहुलं छन्दसि' इति शपो लुक् ॥ ॥ ११ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये दाशतय्यां तृतीये मण्डले पञ्चमोऽनुवाकः समाप्तः[5] च[5] तृतीयं मण्डलम् ॥

---

१. ल–मधुररसेन । २. ख-ग-घ-च-ण-भ–शुद्धकर्माणौ । ३. न–इत्येषा । तथा च सूत्रितम् । आवदंस्त्वं शकुने भद्रमावद गृणाना जमदग्निनेति । उत्सर्जनेऽप्येषा । तथोत्सर्गे इति च सूत्रात् । ४. ख-ग-च-ण-न-भ-स–'व्यत्ययेन' नास्ति । ५. स–इति ।

॥ श्रीः ॥

# ॥ अथ चतुर्थं मण्डलम् ॥

वामदेव्ये[1] चतुर्थे मण्डले[1] पञ्चानुवाकाः । तत्र प्रथमेऽनुवाके दश सूक्तानि । तेषु ‘ त्वां ह्यग्ने सदमित् ’ इति विंशत्यृचं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका—‘ त्वां ह्यग्ने विंशतिरष्ट्यतिजगतीधृतय आद्या उपाद्याश्चतस्रो वारुण्यश्च वा ’ इति । मन्त्रद्रष्टा वामदेव ऋषिः । प्रथमा चतुःषष्ट्यक्षराष्टिः द्वितीया द्विपञ्चाशदक्षरातिजगती तृतीया द्विसप्तत्यक्षरा[2] धृतिश्चतुर्थ्याद्या अनादेशपरिभाषया सप्तदश त्रिष्टुभः। कृत्स्नस्य सूक्तस्य ‘ मण्डलादिष्वाग्नेयम् ’ इति परिभाषयाग्निर्देवता द्वितीयाद्याश्चतस्रो वरुणदेवत्या वा । सूक्तविनियोगो लैङ्गिकः । आद्या अध्यायोपाकरणे मण्डलादिहोमे विनियुक्ता ॥

त्वां ह्यग्ने सदमित्समन्यवो देवासो देवमरतिं न्येरिर इति क्रत्वा न्येरिरे ।
अमर्त्यं यजत मर्त्येष्वा देवमादेवं जनत प्रचेतसं विश्वमादेवं जनत प्रचेतसम् ॥ १ ॥

त्वाम् । हि । अग्ने । सदम् । इत् । सऽमन्यवः । देवासः ।
देवम् । अरतिम् । निऽएरिरे । इति । क्रत्वा । निऽएरिरे ।
अमर्त्यम् । यजत । मर्त्येषु । आ । देवम् । आऽदेवम् ।
जनत । प्रऽचेतसम् । विश्वम् । आऽदेवम् । जनत । प्रऽचेतसम् ॥ १ ॥

वामदेवः स्तौति । हे vअग्ने vसमन्यवः । मन्युः स्पर्धा । तया सह वर्तमानाः । स्वसमानैः स्पर्धमाना इत्यर्थः । vदेवासः देवनशीला इन्द्रादयो देवाः vदेवं द्योतमानम् vअरतिं शीघ्रं गन्तारं vत्वां vसदमित् सदैव vन्येरिरे vहि । स्पर्धानिमित्ते युद्धे प्रेरयन्ति खलु । इतिशब्दो हेत्वर्थः । यस्मात् देवास्त्वां युद्धार्थं नितरां प्रेरयन्ति तस्माद्यजमानाः vक्रत्वा स्तुतिलक्षणेन कर्मणा vन्येरिरे । यज्ञकर्मणि देवान् हविः प्रापयितुं देवानाह्वातुं च त्वां नितरां प्रेरयन्ति खलु । vयजत यजनीय हे अग्ने vअमर्त्यं मरणधर्मरहितम् vआ सर्वतः vदेवं द्योतमानं vप्रचेतसम् । प्रकृष्टं कर्मविषयं चेतो ज्ञानं यस्य तादृशं त्वां vमर्त्येषु यागं कुर्वाणेषु मनुष्येषु vआदेवम् आगन्तारं vजनत देवा हविःश्रपणार्थम्[3] अजनयन् । तथा vप्रचेतसं कर्माभिज्ञम्[4] vआदेवं तत्तद्यज्ञेष्वागन्तारं त्वां vविश्व vजनत युगपन्नानादेशवर्तिषु यज्ञेषु यौगपद्येन हविरानयनार्थं [illegible]वा अकुर्वन् ॥ न्येरिरे । ‘ ईर गतौ ’। लिटि मन्त्रत्वात् आम् न भवति । सहेति योगविभागात् [illegible]सः । हियोगादनिघातः । क्रत्वा । ‘ जसादिषु छन्दसि वावचनम् ’ इति नादेशाभावः । यणादेशः ॥

---

१. त–वामदेवे चतुर्थे मण्डले; स–अथ चतुर्थे वामदेवमण्डले । २. त–द्वासप्तत्यक्षरा । ३. ल–हविरानयनार्थम् । ४. ग-च–कर्मणोऽभिज्ञम् ।

स भ्रातरं वरुणमग्न आ ववृत्स्व देवाँ अच्छा सुमती यज्ञवनसं ज्येष्ठं यज्ञवनसम् ।
ऋतावानमादित्यं चर्षणीधृतं राजानं चर्षणीधृतम् ॥ २ ॥

सः । भ्रातरम् । वरुणम् । अग्ने । आ । ववृत्स्व । देवान् ।
अच्छ । सुऽमती । यज्ञऽवनसम् । ज्येष्ठम् । यज्ञऽवनसम् ।
ऋतऽवानम् । आदित्यम् । चर्षणिऽधृतम् । राजानम् । चर्षणिऽधृतम् ॥ २ ॥

हे vअग्ने vसः तादृशस्त्वं vभ्रातरम् एकस्थानवासेन[1] भ्रातरं vवरुणम्[2] । वृणोत्युदकमिति वरुणः । तं देवं vयज्ञवनसं यज्ञैर्यजनीयैर्हविर्भिः संभजनीयं vयज्ञवनसं च यज्ञस्य[3] संभक्तारं[3] vज्येष्ठम् अतिशयेन प्रशस्यम् vऋतावानम् अपां स्वामितयोदकवन्तं सत्यवन्तं वा vआदित्यम् अदितेः पुत्रं vचर्षणीधृतं मनुष्याणामुदकप्रदानेन धारकं vसुमती[4] शोभनबुद्ध्या हेतुना vचर्षणीधृतं चर्षणिभिर्विद्वद्भिर्धृतं vराजानं राजन्तम् एतादृशं वरुणं देवं vदेवान् देवनशीलान् स्तोतॄन्[5] vअच्छ अभि vआ vववृत्स्व आवर्तय अभिमुखीकुरु ॥ ववृत्स्व । ' वृतु वर्तने ' । लोटि ' बहुलं छन्दसि ' इति विकरणस्य श्लुः । निघातः । सुमती । ' मन्त्रे वृष॰ ' इत्यादिना क्तिन्नुदात्तः । ' सुपां सुलुक्॰ ' इति तृतीयायाः पूर्वसवर्णदीर्घः । एकादेशस्वरः । ज्येष्ठम् । प्रशस्यस्येष्ठनि ' ज्य च ' इति ज्यादेशः । नित्वादाद्युदात्तः । एकादेशस्वरः । यज्ञवनसम् । ' वन षण संभक्तौ ' । कर्मकर्तरि च असुन्प्रत्ययः । ' गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ' इति पूर्वपदस्वरः ॥

प्रवर्ग्येऽभिष्टवे उत्तरस्मिन् पटले ' सखे सखायम् ' इत्येषा । सूत्रितं च—' सखे सखायमभ्या ववृत्स्वोर्ध्व ऊ षु ण ऊतये ' ( आश्व. श्रौ. ४. ७ ) इति ॥

सखे सखायमभ्या ववृत्स्वाशुं न चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्या ।
अग्ने मृळीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु ।
तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधि ॥ ३ ॥

सखे । सखायम् । अभि । आ । ववृत्स्व । आशुम् ।
न । चक्रम् । रथ्याऽइव । रंह्या । अस्मभ्यम् । दस्म । रंह्या ।
अग्ने । मृळीकम् । वरुणे । सचा । विदः । मरुतऽसु । विश्वऽभानुषु ।
तोकाय । तुजे । शुशुचान । शम् । कृधि । अस्मभ्यम् । दस्म । शम् । कृधि ॥ ३ ॥

---

१. च–एकेन स्थानवासेन; त-न–एकस्थानावासेन । २. ख-ग-च-ण-न-भ-ल-स–' वरुणं ' नास्ति । ३. ण–यज्ञसंभक्तारम् । ४. ण–सुमती सुमत्या । ५. ख-ग-घ-च-फ-भ-स–देवान्; त-न-ल–स्तोतॄन् देवान् ।

सखे सखिभूत दस्म दर्शनीय हे अग्ने[1] त्वं तव सखायं वरुणम् अस्मभ्यम् अस्मदर्थम् आ ववृत्स्व अभिमुखीकुरु। तत्र दृष्टान्तः। रंह्या रंहणे गमने साधुभूतौ रथ्येव रथे योजितौ अश्वौ[2] यथा आशुं[2] शीघ्रगन्तृ चक्रं लक्ष्यदेशं प्रति अभिमुखीकुरुतस्तद्वत्। हे अग्ने सचा तव सहाये वरुणे मृळीकं सुखकरं हविः विदः लब्धवानसि। तथा विश्वभानुषु सर्वतो व्याप्ततेजस्केषु मरुत्सु सुखकरं लब्धवानसि। आग्निवारुणाग्निमारुतयोः कर्मणोरिष्टवानसीत्यर्थः। शुशुचान दीप्यमान हे अग्ने तोकाय। तुज्यते पीड्यतेऽनेन[3] माता गर्भवासेनेति तोकं पुत्रः। तस्मै तुजे। गच्छत्यनेनानृण्यं पितेति तुक् पौत्रः। तस्मै शं सुखं कृधि कुरु। दस्म दर्शनीय हे अग्ने अस्मभ्यं शं कृधि सुखं कुरु॥ रथ्येव। रथस्येमावित्यर्थे 'रथाद्यत्' इति यत्। 'सुपां सुलुक्॰' इति सुपो डादेशः। रंह्या। रंहशब्दात् 'तत्र साधुः' इति यत्प्रत्ययः। 'यतोऽनावः' इत्याद्युदात्तत्वम्॥

'त्वं नो अग्ने' इत्येतदारभ्येदं सूक्तमुत्तराणि सूक्तानि च प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे च विनियुक्तानि। सूत्रितं च—'त्वं नो अग्ने वरुणस्य विद्वानित्येतत्प्रभृतीनि चत्वारि' (आश्व. श्रौ. ४. १३) इति। अवभृथेष्ट्यां स्विष्टकृदर्थेऽग्नीवरुणौ यष्टव्यौ। तत्र 'त्वं नो अग्ने' इति द्वे याज्यानुवाक्ये। सूत्रितं च—'अग्नीवरुणौ स्विष्टकृदर्थे त्वं नो अग्ने वरुणस्य विद्वानिति द्वे' (आश्व. श्रौ. ६. १३) इति। अस्नातो यद्यग्निहोत्रं जुहुयात् तदा[4] आग्निवारुणीष्टिः। तस्यामेते एव याज्यानुवाक्ये। 'तदाहुर्य आहिताग्निः' इत्युपक्रम्याम्नातं—'तस्य याज्यानुवाक्ये त्वं नो अग्ने वरुणस्य विद्वान्त्स त्वं नो अग्नेऽवमो भवोती' (ऐ. ब्रा. ७. ९) इति॥

त्वं नो॑ अग्ने॒ वरु॑णस्य वि॒द्वान्दे॒वस्य॒ हेळोऽव॑ यासिसीष्ठाः।

यजि॑ष्ठो॒ वह्नि॑तमः॒ शोशु॑चानो॒ विश्वा॒ द्वेषां॑सि॒ प्र मु॑मुग्ध्य॒स्मत् ॥ ४ ॥

त्वम्। नः॒। अ॒ग्ने॒। वरु॑णस्य। वि॒द्वान्। दे॒वस्य॑। हेळः॑। अव॑। या॒सि॒सी॒ष्ठाः॒।

यजि॑ष्ठः। वह्नि॑ऽतमः। शोशु॑चानः। विश्वा॑। द्वेषां॑सि। प्र। मु॒मु॒ग्धि॒। अ॒स्मत् ॥ ४ ॥

हे अग्ने[5] विद्वान् सर्वपुरुषार्थसाधनोपायज्ञः त्वं देवस्य द्योतमानस्य वरुणस्य हेळः क्रोधान् नः अस्मत्संबन्धिनो वरुणकर्तृकान् पाशग्रहणान् अव यासिसीष्ठाः अपनय। किंच यजिष्ठः यष्टृतमः वह्नितमः हविषामतिशयेन वोढा शोशुचानः अतिशयेन दीप्यमानस्त्वं विश्वा सर्वाणि द्वेषांसि पापानि द्वेष्टॄणि रजांसि वा अस्मत् अस्मत्तः प्र मुमुग्धि प्रकर्षेण मोचय॥ हेळः। 'हेडृ अनादरे'। क्विप्। शसि रूपम्। शसः सुप्त्वादनुदात्तत्वे धातुस्वरः। यासिसीष्ठाः। यसेर्ण्यन्तादाशीर्लिङ्। थासि सीयुडागमः। 'छन्दस्युभयथा' इति लिङः सार्वधातुकत्वात् णिलोपाभावः। अवपूर्वो यासिर्विनाशे वर्तते। मुमुग्धि। मुञ्चतेर्लोटि रूपम्। 'बहुलं छन्दसि' इति शपः श्लुः॥

---

१. ख-ग-घ-च-ण-फ-भ—अग्ने रंह्या साधुभूतः। २. च—अश्वौ यथा आशुं न चक्रम्; ण—अश्वाविव न यथा आशुम्। ३. ख-ग-च-ण-न-भ-स—पीड्यते। ४. ख-ग-च-ण-न-भ-स—तस्य। ५. ख-ग-च—अग्ने त्वम्।

स त्वं नो॑ अग्नेऽव॒मो भ॑वो॒ती नेदि॑ष्ठो अ॒स्या उ॒षसो॒ व्यु॑ष्टौ ।

अव॑ यक्ष्व नो॒ वरु॑णं॒ ररा॑णो वी॒हि मृ॑ळी॒कं सु॒हवो॑ न एधि ॥ ५ ॥

सः । त्वम् । नः॒ । अ॒ग्ने॒ । अ॒व॒मः । भ॒व॒ । ऊ॒ती । नेदि॑ष्ठः । अ॒स्याः । उ॒षसः॑ । विऽउ॑ष्टौ ।

अव॑ । य॒क्ष्व॒ । नः॒ । वरु॑णम् । ररा॑णः । वी॒हि । मृ॒ळी॒कम् । सु॒ऽहवः॑ । नः॒ । ए॒धि॒ ॥ ५ ॥

हे ᵛअग्ने ᵛसः तादृशः ᵛत्वम् ᵛऊती ऊत्या रक्षणेन ᵛनः अस्माकम् ᵛअवमः अर्वाचीनः प्रत्यासन्नः सन् ᵛअस्या ᵛउषसो ᵛव्युष्टौ व्युच्छने प्रातःकालेऽग्निहोत्रादिकर्मसिद्ध्यर्थं ᵛनेदिष्ठः ᵛभव अतिशयेनास्मदन्तिकस्थो भव । यद्वा । ऊत्या गमनेनास्माकमवमो रक्षको भव । किंच ᵛनः अस्माकं ᵛवरुणं वरुणकृतं जलोदरादिरोगम् आवरकं पापं वा ᵛअव ᵛयक्ष्व अवयज । विनाशयेत्यर्थः । ᵛरराणः अस्मद्दत्ते हविषि रममाणः । यद्वा । यजमानेभ्यः अत्यन्तमीप्सितफलप्रदः[1] त्वं ᵛमृळीकं सुखकरमिदं हविः ᵛवीहि भक्षय। किंच ᵛनः अस्माकं ᵛसुहवः शोभनाह्वानोपेतः ᵛएधि भव ॥ नेदिष्ठः । अन्तिकशब्दादिष्ठनि ' अन्तिकबाढयोर्नेदसाधौ ' इति नेद इत्यादेशः । नित्त्वादाद्युदात्तः । रराणः । रमतेः कानचि मकारलोपश्छान्दसः । यद्वा । रातेः यङ्लुकि[2] व्यत्ययेन कानच् । ' अभ्यस्तानामादिः ' । एधि । अस्तेर्लोटि ' घ्वसोरेद्धावभ्यासलोपश्च ' इति ए इत्यादेशः । तस्यासिद्धत्वात् ' हुझल्भ्यो हेर्धिः ' । निघातः ॥ ॥ १२ ॥

अ॒स्य श्रेष्ठा॑ सु॒भग॑स्य सं॒दृग्दे॒वस्य॑ चि॒त्रत॑मा॒ मर्त्ये॑षु ।

शुचि॑ घृ॒तं न त॒प्तमघ्न्या॑याः स्पा॒र्हा दे॒वस्य॑ मं॒हने॑व धे॒नोः ॥ ६ ॥

अ॒स्य । श्रेष्ठा॑ । सु॒ऽभग॑स्य । स॒म्ऽदृक् । दे॒वस्य॑ । चि॒त्रऽत॑मा । मर्त्ये॑षु ।

शुचि॑ । घृ॒तम् । न । त॒प्तम् । अघ्न्या॑याः । स्पा॒र्हा । दे॒वस्य॑ । मं॒हना॑ऽइव । धे॒नोः ॥ ६ ॥

ᵛसुभगस्य सुधनस्य सुष्ठु भजनीयस्याग्नेः ᵛदेवस्य ᵛश्रेष्ठा अतिशयेन प्रशस्या ᵛसंदृक् संदृष्टिः ᵛमर्त्येषु ᵛचित्रतमा अतिशयेन चायनीया पूजनीया भवति । ᵛस्पार्हा सर्वैः स्पृहणीया भवति । तत्र दृष्टान्तः । यथा ᵛदेवस्य क्षीरं कामयमानस्य पुरुषस्य ᵛअघ्न्यायाः अहन्तव्याया गोः ᵛशुचि तेजोयुक्तं ᵛघृतं क्षरणयुक्तं ᵛतप्तं क्षीरं स्पृहणीयं भवति । तत्रैव दृष्टान्तान्तरम् । यथा गां भिक्षमाणस्य मर्त्यस्य ᵛधेनोः दोग्ध्र्या गोः ᵛमंहनेव । मंहतिर्दानकर्मा । दानं यथा प्रियकरं भवति तद्वत् ॥ सुभगस्य । ' आद्युदात्तं द्व्यच्छन्दसि ' इत्युत्तरपदाद्युदात्तत्वम् । स्पार्हा । ' कर्षात्वतो घञोऽन्त उदात्तः ' । देवस्य । दीव्यतीति देवः । दीव्यतेः कान्त्यर्थस्य पचाद्यचि रूपम् ॥

---

१. ख-ग-च-ण-न-भ-स–अत्यन्तफलप्रदः । २. ख-ग-च-ण-न-भ-ल-स–' यङ्लुकि ' नास्ति ।

त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः ।
अनन्ते अन्तः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः ॥ ७ ॥

त्रिः । अस्य । ता । परमा । सन्ति । सत्या । स्पार्हा । देवस्य । जनिमानि । अग्नेः ।
अनन्ते । अन्तरिति । परिऽवीतः । आ । अगात् । शुचिः । शुक्रः । अर्यः । रोरुचानः ॥७॥

अग्नेः अग्न्यभिमानिनः अस्य देवस्य त्रिः त्रीण्यग्निवायुसूर्यात्मना त्रीणि ता तानि प्रसिद्धानि परमा उत्तमानि सत्या यथार्थभूतानि जनिमानि जन्मानि स्पार्हा सर्वैः स्पृहणीयानि सन्ति । यद्वा । अग्नेरेव त्रीणि जन्मानि ' दिवस्परि प्रथमं जज्ञे अग्निः ' ( ऋ. सं. १०. ४५. १ ) इति ' त्रीणि जाना परि भूषन्त्यस्य ' ( ऋ. सं. १.९५.३ ) इत्येवमादिषु मन्त्रेषु प्रसिद्धानि । अनन्ते अपर्यन्ते[1] नभसि अन्तः मध्ये स्वतेजसा परिवीतः परिवेष्टितः[2] शुचिः सर्वस्य[3] शोधकः शुक्रः दीप्तियुक्तोऽत एव रोरुचानः भृशं दीप्यमानः अर्यः स्वामी तादृशो देवः आगात् अस्मदीयं यज्ञं प्रत्यागच्छतु ॥ सत्या । ' शेश्छन्दसि बहुलम् ' इति शेर्लुक् । परिवीतः । ' व्येञ् संवरणे ' । कर्मणि क्तः । यजादित्वात् संप्रसारणम् । ' गतिरनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । अर्यः । ' ऋ गतौ ' । ' अर्यः स्वामिवैश्ययोः ' इति यत्प्रत्ययान्तो निपातितः । ' स्वामिन्यन्तोदात्तत्वं वक्तव्यम्[4] ' इत्यन्तोदात्तत्वम् ॥

स दूतो विश्वेदभि वष्टि सद्मा होता हिरण्यरथो रंसुजिह्वः ।
रोहिदश्वो वपुष्यो विभावा सदा रण्वः पितुमतीव संसत् ॥ ८ ॥

सः । दूतः । विश्वा । इत् । अभि । वष्टि । सद्म । होता । हिरण्यऽरथः । रम्ऽसुजिह्वः ।
रोहित्ऽअश्वः । वपुष्यः । विभाऽवा । सदा । रण्वः । पितुमतीऽइव । सम्ऽसत् ॥ ८ ॥

देवानां दूतः होता देवानामाह्वाता हिरण्यरथः सुवर्णमयरथोपेतः रंसुजिह्वः रमणीयशोभनज्वालोपेतः सः तादृशोऽग्निः विश्वेत् सर्वाण्येव सद्म देवयजनस्थानानि अभि वष्टि कामयते । पुनश्च कीदृशः । रोहिदश्वः । रोहितवर्णाः[5] अश्वाः[5] यस्य स तथोक्तः । वपुष्यः वपुषि रूपे साधुः विभावा कान्तियुक्तोऽत एव सदा रण्वः रमणीयो भवति । तत्र दृष्टान्तः । पितुमतीव संसत् । यथा अन्नादिमत्[6] समृद्धं गृहं रमणीयं तद्वत् ॥ रंसुजिह्वः । रमतेः ' अन्येभ्योऽपि दृश्यन्ते ' इति विच् । बहुव्रीहौ पूर्वपदस्वरः । वपुष्यः । ' तत्र साधुः ' इति यत् । तित्स्वरितः । विभावा । ' छन्दसीवनिपौ ' इति वनिप् ॥

---

१. ख-ग-च-ण-फ–अपगतान्ते । २. घ-ण–परिवृतः । ३. च-फ–सर्वस्य जगतः । ४. ख-ग-च-ण–' वक्तव्यं ' नास्ति । ५. च–रोहितवर्णावश्वौ । ६. ख-ग-घ-च-भ-ल-स–अन्नादिवत् ।

**स चेतयन्मनुषो यज्ञबन्धुः प्र तं मह्या रशनया नयन्ति ।**
**स क्षेत्यस्य दुर्यासु साधन्देवो मर्तस्य सधनित्वमाप ॥ ९ ॥**

सः । चेतयत् । मनुषः । यज्ञऽबन्धुः । प्र । तम् । मह्या । रशनया । नयन्ति ।
सः । क्षेति । अस्य । दुर्यासु । साधन् । देवः । मर्तस्य । सधनिऽत्वम् । आप ॥ ९ ॥

यज्ञबन्धुः । यज्ञेऽग्निहोत्रादौ बन्धनं विनियोजनं यस्य स तथोक्तः । सः अग्निः मनुषः कर्मणि प्रवृत्तान् मनुष्यान् चेतयत् जानाति । मह्या महत्या रशनया स्तुतिरूपया रज्वा युक्तं तं तादृशमग्निं प्र नयन्ति उत्तरवेद्यादिष्वध्वर्य्वादयः प्रक्षिपन्ति । मर्तस्य मनुष्यस्य अस्य यजमानस्य दुर्यासु गृहेषु साधन् अभीष्टानि साधयन् सः अग्निः क्षेति वसति । सः देवः द्योतमानोऽग्निः सधनित्वं यस्य गृहे निवसति तेन धनिना साहित्यम् आप प्राप्नोति । प्रभूतं धनं यजमानाय दापयित्वा[1] तेन सहितोऽभवदित्यर्थः ॥ साधन् । 'राध साध संसिद्धौ' । ण्यन्तस्य शतरि रूपम् ॥

**स तू नो अग्निर्नयतु प्रजानन्नच्छा रत्नं देवभक्तं यदस्य ।**
**धिया यद्विश्वे अमृता अकृण्वन्द्यौष्पिता जनिता सत्यमुक्षन् ॥ १० ॥**

सः । तु । नः । अग्निः । नयतु । प्रऽजानन् । अच्छ । रत्नम् । देवऽभक्तम् । यत् । अस्य ।
धिया । यत् । विश्वे । अमृताः । अकृण्वन् । द्यौः । पिता । जनिता । सत्यम् । उक्षन् ॥ १० ॥

प्रजानन् सर्वं जानानः सः अग्निः देवभक्तं देवैः देवनशीलैः स्तोतृभिः संभजनीयम् अस्य अग्नेः संबन्धि यत् उत्तमं रत्नं धनमस्ति तद्रत्नम् अच्छ आभिमुख्येन तु क्षिप्रं नः अस्मान् नयतु प्रापयतु । अमृताः मरणधर्मरहिताः[2] विश्वे सर्वे देवाः धिया हविर्वहनलक्षणेन[3] कर्मणा हेतुना यत् यमग्निम् अकृण्वन् हविषां प्रापयितारमकुर्वन् । यस्य चाग्नेः द्यौः पिता पालयित्री जनिता जनयित्री च । 'अग्ने दिवः सूनुरसि प्रचेताः' ( ऋ. सं. ३. २५. १ ) इति श्रवणात् । यद्वा । द्यौर्देवनशील आदित्यः पिता जनयिता च । 'आदित्यादग्निः' इत्याम्नानात् । सत्यं यथार्थभूतं तमग्निम् उक्षन् । घृताद्याहुतिभिरध्वर्य्वादयः सिञ्चन्ति ॥ देवभक्तम् । 'भज सेवायाम्' । कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः । उक्षन् । 'उक्ष सेचने' । लङि रूपम् । 'बहुलं छन्दसि' इत्यडभावः ॥ ॥ १३ ॥

**स जायत प्रथमः पस्त्यासु महो बुध्ने रजसो अस्य योनौ ।**
**अपादशीर्षा गुहमानो अन्तायोयुवानो वृषभस्य नीळे ॥ ११ ॥**

सः । जायत । प्रथमः । पस्त्यासु । महः । बुध्ने । रजसः । अस्य । योनौ ।
अपात् । अशीर्षा । गुहमानः । अन्ता । आऽयोयुवानः । वृषभस्य । नीळे ॥ ११ ॥

---

१. ल–दत्त्वा । २. ख-ग-घ-च-ण-न-भ-स– °रहिताश्च । ३. ख-ग-घ-च-ण-त-न-भ–हविर्लक्षणेन ।

ᵛसः अग्निः ᵛप्रथमः आहवनीयादिरूपतया श्रेष्ठः सन् ᵛपस्त्यासु यजमानानां गृहेषु ᵛजायत आहुत्यधिकरणतया संपद्यते। तथा ᵛमहः महतः ᵛअस्य ᵛरजसः अन्तरिक्षस्य ᵛबुध्ने मूले पृथिव्यां तत्रापि ᵛयोनौ उत्तरवेद्यादिस्थाने संपद्यते। सोऽग्निः ᵛअपात् पादवर्जितः ᵛअशीर्षा शिरोवर्जितः। तदेवाह। ᵛअन्ता आद्यन्ते पादशिरसी ᵛगुहमानः गूहमानः। अविज्ञेयपादशिरा इत्यर्थः। ᵛवृषभस्य वर्षणसमर्थस्य मेघस्य ᵛनीळे निलये नभसि ᵛआयोयुवानः धूमाकारेणात्मानमायोजयन् वर्तते। यद्वा। यः प्रथमो वैद्युतोऽग्निः पस्त्यासु नदीषु[1] बुध्नेऽन्तरिक्षे महो महतो रजस उदकस्य तेजसो वा योनौ स्थाने च चरति। अपादशीर्षा पादशिरोवर्जितः अन्ता आत्मनः पर्यन्तप्रदेशान् स्वतेजसा गुहमान आच्छादयन् पुनश्च आयोयुवानः तानि तेजांसि स्वात्मनि मिश्रीकुर्वन् वृषभस्य मेघस्य[2] नीळे स्थाने नभसि चरति सोऽग्निरधुना कर्मयोग्यतया अजायत ॥ अपात्। 'पादस्य लोपोऽहस्त्यादिभ्यः' इति अकारलोपः समासान्तः। गुहमानः। 'गुहू संवरणे'। शब्विकरणी[3]। शानचि रूपम्। शानचो लसार्वधातुकस्वरे कृते प्रत्ययस्वरः। आयोयुवानः। 'यु मिश्रणे'। यङ्लुकि शानचि रूपम्। अभ्यस्तस्वरेणाद्युदात्तः ॥

**प्र शर्धं आर्त प्रथमं विपन्याँ ऋतस्य योना वृषभस्य नीळे।**

**स्पार्हो युवा वपुष्यो विभावा सप्त प्रियासोऽजनयन्त वृष्णे ॥ १२ ॥**

प्र। शर्धः। आर्त। प्रथमम्। विपन्या। ऋतस्य। योना। वृषभस्य। नीळे।

स्पार्हः। युवा। वपुष्यः। विभाऽवा। सप्त। प्रियासः। अजनयन्त। वृष्णे ॥ १२ ॥

हे अग्ने ᵛविपन्या स्तुत्या युक्तम् ᵛऋतस्य उदकस्य ᵛयोना[4] योनौ स्थाने ᵛवृषभस्य वर्षणसमर्थस्य मेघस्य ᵛनीळे कुलायभूतेऽन्तरिक्षे वैद्युताग्निरूपेण वर्तमानं त्वां ᵛशर्धः तेजः ᵛप्रथमं ᵛप्र ᵛआर्त प्रकर्षेण गच्छति। यश्चाग्निः ᵛस्पार्हः सर्वैः स्पृहणीयः ᵛयुवा नित्यतरुणः ᵛवपुष्यः कमनीयः ᵛविभावा दीप्तिमान् तस्मै ᵛवृष्णे अभिमतफलवर्षकाय अग्नये[5] ᵛप्रियासः प्रियाः ᵛसप्त होत्रकाः ᵛअजनयन्त स्तोत्रम् अकुर्वन् ॥ आर्त। 'ऋ गतौ'। लङि व्यत्ययेनात्मनेपदम्। निघातः। विपन्या। 'पन च' इत्यस्य इन्प्रत्ययः। 'कृदिकारादक्तिनः' इति ङीष्। प्रत्ययस्वरेणान्तोदात्तः। 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम्। विपन्यँ ऋतस्य इत्यत्र संहितायाम्[6] 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' ( पा. सू. ६.१.१२७ ) इत्यनिकोऽपि ह्रस्वोऽनुनासिकश्च ॥

**अस्माकमत्र पितरो मनुष्या अभि प्र सेदुर्ऋतमाशुषाणाः।**

**अश्मव्रजाः सुदुघा वव्रे अन्तरुदुस्रा आजन्नुषसो हुवानाः ॥ १३ ॥**

अस्माकम्। अत्र। पितरः। मनुष्याः। अभि। प्र। सेदुः। ऋतम्। आशुषाणाः।

अश्मऽव्रजाः। सुऽदुघाः। वव्रे। अन्तः। उत्। उस्राः। आजन्। उषसः। हुवानाः॥१३॥

१. त–महीषु; न–मदीयेषु। २. ख-ग-च-ण-न-भ-स–'मेघस्य' नास्ति। ३. भ-स–शविकरणी। ४. ण-न-ल-स–'योना' नास्ति। ५. ख-ग-घ-च-ण-न-भ-ल-स–'अग्नये' नास्ति। ६. ख-ग-घ-च-ण-न-भ-स–'संहितायां' नास्ति।

अत्र लोके[1] पूर्वे मनुष्याः अस्माकं पितरः अङ्गिरसः ऋतं यज्ञम् आशुषाणाः अश्नुवानाः सन्तः अभि प्र सेदुः अग्निमभिलक्ष्य प्रजग्मुः । तेऽङ्गिरसोऽग्निपरिचर्याबलात् अश्मव्रजाः पर्वतैः परिवृताः वव्रे । वृणोत्याच्छादयतीति वव्रं पर्वतबिलान्तर्वर्ति तमः । तस्मिन् अन्तः मध्ये स्थिताः सुदुघाः सुष्ठु दोग्ध्रीः उस्राः पणिभिरपहृता गाः उत् आजन् तस्माद्बिलान्निरगमयन् । किं कुर्वन्तः । तमसो विध्वंसिनीः उषसः देवीः प्रकाशार्थं हुवानाः आह्वयन्तः ॥ वव्रे । वृणोतेरौणादिकः कः । 'कृञादीनां द्वे भवतः' इति द्विर्वचनम् ॥

**ते मर्मृजत ददृवांसो अद्रिं तदेषामन्ये अभितो वि वोचन् ।**

**पश्वयन्त्रासो अभि कारमर्चन्विदन्त ज्योतिश्चकृपन्त धीभिः ॥ १४ ॥**

ते । मर्मृजत । ददृऽवांसः । अद्रिम् । तत् । एषाम् । अन्ये । अभितः । वि । वोचन् ।

पश्वऽयन्त्रासः । अभि । कारम् । अर्चन् । विदन्त । ज्योतिः । चकृपन्त । धीभिः ॥ १४ ॥

ते अङ्गिरसः अद्रिं पणिभिरपहृतानां गवां निरोधकं पर्वतं ददृवांसः विदारयन्तः सन्तः[2] मर्मृजत अग्निं पर्यचरन् । एषाम् अङ्गिरसां तत् तादृशं कर्म अन्ये महर्षयः अभितः सर्वत्र जगति वि वोचन् विशेषेणाकथयन् । पश्वयन्त्रासः पशुनिर्गमनार्थानि यन्त्राण्युपाया येषां तेऽङ्गिरसः कारम् अभिमतस्य प्रयोजनस्य कर्तारमग्निम् अभि अर्चन् अस्तुवन् । ततस्तमोपहम् आदित्याख्यं ज्योतिः विदन्त अलभन्त । ततः धीभिः बुद्धिभिः चकृपन्त यज्ञानकुर्वन् ॥ मर्मृजत । 'मृजू शुद्धौ' । यङ्लुकि लङि व्यत्ययेनात्मनेपदम् । निघातः । चकृपन्त । 'कृपू सामर्थ्ये' । ण्यन्तस्य लुङि चङि सन्वद्भावाभावश्छान्दसः ।

**ते गव्यता मनसा दृध्रमुब्धं गा येमानं परि षन्तमद्रिम् ।**

**दृळ्हं नरो वचसा दैव्येन व्रजं गोमन्तमुशिजो वि वव्रुः ॥ १५ ॥**

ते । गव्यता । मनसा । दृध्रम् । उब्धम् । गाः । येमानम् । परि । सन्तम् । अद्रिम् ।

दृळ्हम् । नरः । वचसा । दैव्येन । व्रजम् । गोऽमन्तम् । उशिजः । वि । वव्रुरिति वव्रुः ॥ १५ ॥

नरः कर्मणां नेतारः उशिजः अग्निं कामयमानाः ते अङ्गिरसः गव्यता गा इच्छता मनसा दृध्रं गवां निर्गमनद्वारनिरोधकम् उब्धं समुब्धं संहतम्[3] । यद्वा । उभिः पूरणार्थः । गोभिः पूर्णं गाः येमानं नियच्छन्तं परि सर्वतः सन्तम् वर्तमानं दृळ्हं दृढं गोमन्तं गोभिर्युक्तं व्रजं गवां निवासस्थानम् अद्रिं पर्वतं दैव्येन अग्निविषयेण वचसा वेदात्मकेन स्तोत्रेण वि वव्रुः गोनिर्गमनार्थमुद्घाटितवन्तः ॥ उब्धम् । उब्नातिर्हन्तिना समानार्थः । यद्वा । 'उभ उम्भ पूरणे' । कर्मणि क्तः । येमानम् । यमेः कानचि एत्वाभ्यासलोपौ । चित्त्वादन्तोदात्तः । परि षन्तम् इत्यत्र संहितायाम् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् ॥ ॥ १४ ॥

---

१. च –इह लोके । २. ख-ग-च-ण-न-भ–'सन्तः' नास्ति । ३. ख-ग-घ-च-ण-त-न-फ-भ-स–संहितम् ।

ते म॑न्वत प्रथ॒मं नाम॑ धे॒नोस्त्रिः स॒प्त मा॒तुः प॑र॒माणि॑ विन्दन् ।
तज्जा॑न॒तीर॒भ्य॑नूषत॒ व्रा आ॒विर्भु॑वदरु॒णीर्य॒शसा॒ गोः ॥ १६ ॥

ते । म॒न्व॒त । प्र॒थ॒मम् । नाम॑ । धे॒नोः । त्रिः । स॒प्त । मा॒तुः । प॒र॒माणि॑ । वि॒न्द॒न् ।
तत् । जा॒न॒तीः । अ॒भि । अ॒नू॒ष॒त॒ । व्राः । आ॒विः । भु॒व॒त् । अ॒रु॒णीः । य॒शसा॑ । गोः ॥ १६ ॥

हे अग्ने ^v^ते स्तोत्रं कुर्वाणा अङ्गिरसः ^v^मातुः जनन्याः ^v^धेनोः वाचः संबन्धि ^v^नाम स्तुतिसाधकं शब्दमात्रं ^v^प्रथमं पूर्वं ^v^मन्वत अजानत । पश्चात्तस्या वाचः संबन्धीनि ^v^त्रिः ^v^सप्त एकविंशतिसंख्याकानि स्तुतिसाधनानि छन्दांसि । तानि च गायत्र्यादीनि जगत्यन्तानि सप्त । अतिजगत्यादीन्यतिधृत्यन्तानि सप्त । कृतिप्रभृतीन्युत्कृतिपर्यन्तानि सप्तेति । एवं त्रिः सप्त छन्दांसि ^v^परमाणि उत्तमानि ^v^विन्दन् अलभन्त । एवंविधच्छन्दोयुक्तैः[1] मन्त्रैरग्निमस्तुवन्नित्यर्थः । ^v^तत् ततः ^v^जानतीः सर्वं जानानाः[2] ^v^व्राः । व्रा इत्युषोनाम । उषसः ^v^अभ्यनूषत अस्तुवन् । ततः ^v^गोः सूर्यस्य ^v^यशसा तेजसा सह ^v^अरुणीः अरुणवर्णोषाः ^v^आविर्भुवत् आविरभूत् । यद्वा । तेऽङ्गिरसः प्रथमं पुरातनं नाम एहि सुरभि गुग्गुलगन्धिनीति धेनोर्नामधेयं मन्वत उच्चारयामासुः । मातुर्भूम्याः स्वभूतानि पणिभिरपहृतानि त्रिः सप्त रत्नानि[3] विन्दन्[3] । तत उच्चरितं नाम जानन्त्यो गावोऽभ्यनूषत । हम्भारवलक्षणं शब्दमकुर्वन् । तदानीमुषाः प्रादुरभूदिति ॥ जानतीः । एकस्मिन् पक्षे 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । उभयत्र 'शतुरनुमो नद्यजादी' इति ङीप उदात्तत्वम् । अनूषत । 'णु स्तुतौ' । लुङि रूपम् । कुटादित्वादगुणः । अरुणीः । सोरलोपश्छान्दसः 'गौरीर्मिमाय' (ऋ. सं. १. १६४. ४१) इतिवत् ॥

नेश॒त्तमो॑ दु॒धितं॒ रोच॑त॒ द्यौरुद्दे॒व्या उ॒षसो॑ भा॒नुर॑र्त ।
आ सूर्यो॑ बृह॒तस्ति॑ष्ठ॒दज्रा॑ँ ऋ॒जु मर्ते॑षु वृ॒जिना॑ च॒ पश्य॑न् ॥ १७ ॥

नेश॑त् । तमः॑ । दु॒धित॑म् । रोच॑त । द्यौः । उत् । दे॒व्याः । उ॒षसः॑ । भा॒नुः । अ॒र्त॒ ।
आ । सूर्यः॑ । बृ॒ह॒तः । ति॒ष्ठ॒त् । अज्रा॑न् । ऋ॒जु । मर्ते॑षु । वृ॒जिना॑ । च॒ । पश्य॑न् ॥ १७ ॥

^v^तमः रात्रिकृतं ध्वान्तं ^v^दुधितम् । दुधिः प्रेरणकर्मा । प्रातरग्निविहरणकाले उपसा प्रेरितं सत् ^v^नेशत् अनश्यत । ततः ^v^द्यौः अन्तरिक्षं ^v^रोचत अदीप्यत । ततः ^v^देव्याः देवनशीलायाः ^v^उषसो ^v^भानुः प्रभा ^v^उत् ^v^अर्त उद्गच्छति । अथ ^v^सूर्यो ^v^बृहतः महतः ^v^अज्रान् अजरान् पर्वतान् गमनशीलान् रश्मीन् वा ^v^आ ^v^तिष्ठत् अध्यतिष्ठत् । किं कुर्वन् । ^v^मर्तेषु मनुष्येषु विद्यमानम् ^v^ऋजु सत्कर्म ^v^वृजिना अनृजूनि[4] असत्कर्माणि ^v^च ^v^पश्यन् अध्यतिष्ठदिति शेषः ॥ नेशत् । 'णश अदर्शने' । लङि 'णशिमन्योरलिट्येत्वं वक्तव्यम्' (पा. म. ६. ४. १२०. ५) इति एत्वम् । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । रोचत । 'रुच दीप्तौ' । लङि रूपम् । वाक्यभेदादनिघातः ॥

---

१. च-फ-एवं त्रिविध° । २. च-जानन्ति ताः; ण-जानन्तीति जानानाः । ३. ख-ग-च-ण-फ-भ-नामानि अविन्दन् । ४. त-न-वृजिनानि ।

आदित्पश्चा बुबुधाना व्यख्यन्नादिद्रत्नं धारयन्त द्युभक्तम् ।

विश्वे विश्वासु दुर्यासु देवा मित्र धिये वरुण सत्यमस्तु ॥ १८ ॥

आत् । इत् । पश्चा । बुबुधानाः । वि । अख्यन् । आत् । इत् । रत्नम् । धारयन्त । द्युऽभक्तम् ।

विश्वे । विश्वासु । दुर्यासु । देवाः । मित्र । धिये । वरुण । सत्यम् । अस्तु ॥ १८ ॥

ᵛआदित् सूर्योदयादनन्तरं ᵛबुबुधानाः पणिभिरपहृता निरोधान्निर्गता गा जानाना अङ्गिरसः ᵛपश्चा पृष्ठदेशेषु[१] ᵛव्यख्यन् अशेषेण ता गा अपश्यन् । तथा ᵛआदित् अनन्तरं ᵛद्युभक्तं दीप्तियुक्तं देवैः संभक्तं वा ᵛरत्नं पणिभिरपहृतं धनं च ᵛधारयन्त अधारयन् । लब्धगोधनानामङ्गिरसां ᵛविश्वासु ᵛदुर्यासु सर्वेषु गृहेषु ᵛविश्वे यजनीयाः सर्वे ᵛदेवाः आजग्मुः । हे ᵛमित्र मित्रभूत हे ᵛवरुण उपद्रवाणां वारक हे अग्ने ᵛधिये कर्मणां कर्त्रे स्तोत्रे वा यजमानाय. ᵛसत्यमस्तु । यदेतत्तवोपद्रववारणसामर्थ्यं तद्यथार्थभूतमस्तु ॥ पश्चा । 'पश्च पश्चा च छन्दसि' इति निपातितः । बुबुधानाः । बुधेर्लिटि कानचि रूपम् । चित्वादन्तोदात्तः । द्युभक्तम् । 'भज सेवायाम्' । कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः ॥

अच्छा वोचेय शुशुचानमग्निं होतारं विश्वभरसं यजिष्ठम् ।

शुच्यूधो अतृणन्न गवामन्धो न पूतं परिषिक्तमंशोः ॥ १९ ॥

अच्छ । वोचेय । शुशुचानम् । अग्निम् । होतारम् । विश्वऽभरसम् । यजिष्ठम् ।

शुचि । ऊधः । अतृणत् । न । गवाम् । अन्धः । न । पूतम् । परिऽसिक्तम् । अंशोः ॥ १९ ॥

हे अग्ने ᵛशुशुचानं भृशं दीप्यमानं ᵛहोतारं देवानामाह्वातारं ᵛविश्वभरसम् आहुतिद्वारा वृष्टिप्रदानेन विश्वस्य पोषकं ᵛयजिष्ठं यष्टृतमम् ᵛअग्निं त्वाम् ᵛअच्छ अभिलक्ष्य ᵛवोचेय स्तवानि[२] । ᵛगवाम् ᵛऊधः ᵛशुचि शुद्धं पयः ᵛन ᵛअतृणत् । तवाहुत्यर्थं यजमानो न दोग्धि । ᵛअंशोः सोमलताखण्डस्य संबन्धि ᵛअन्धः रसाख्यमन्नं ᵛपूतं दशापवित्रेण शोधितं सत् ᵛन ᵛपरिषिक्तम् । गृहेषु न प्रक्षिप्तम्[३]। किंत्वनेन[४] यजमानेन केवलं स्तुतिरेव क्रियते[५] ॥ वोचेय । ब्रूञः आशीर्लिङि 'ब्रुवो वचिः' । 'लिङ्याशिष्यङ्' । 'छन्दस्युभयथा' इति सार्वधातुकत्वात् सीयुटः सलोपः । अतृणत् । 'उतृदिर् हिंसानादरयोः' । दोहनमेव ऊधोहिंसनम्[६] । परिषिक्तम् । सिञ्चतेः कर्मणि क्तः । 'उपसर्गात्सुनोति' इति संहितायां षत्वम् । 'गतिरनन्तरः' इति गतेः स्वरः[७] ॥

---

१. ख-ग-च-त-न-फ-स–पृथग्देशेषु; भ–पृष्ठ्यदेशेषु । २. ख-ग-घ-च-ण-फ-भ–स्तौमि । ३. ख-ग-च–क्षिप्तम् । ४. ख-घ-त-न-भ-स–किं तेन; च-फ–किमनेन । ५. भ-स–न क्रियते । ६. ख-ग-च–ऊधोहिंसा । ७. ल–प्रकृतिस्वरः ।

विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम् ।

अग्निर्देवानामव आवृणानः सुमृळीको भवतु जातवेदाः ॥ २० ॥

विश्वेषाम् । अदितिः । यज्ञियानाम् । विश्वेषाम् । अतिथिः । मानुषाणाम् ।

अग्निः । देवानाम् । अवः । आऽवृणानः । सुऽमृळीकः । भवतु । जातऽवेदाः ॥ २० ॥

अयमग्निः विश्वेषां सर्वेषां यज्ञियानां यज्ञार्हाणां देवानाम् अदितिः । अदितिर्देवमाता । तद्वद्देवानां पोषक इत्यर्थः । यद्वा । विश्वेषां देवानामदितिर्भूस्थानीयः आधारभूत इति यावत् । 'इयं वा अग्नि-र्वैश्वानरः' (तै. ब्रा. ३. ९. १७) इति श्रुतेः । तथायमग्निः विश्वेषां मानुषाणां मनुष्याणाम्[1] अतिथिः अतिथिवत् पूज्यो भवति । देवानां देवनशीलानां स्तोतॄणाम् अवः अन्नं हविः आवृणानः संभजन् जातवेदाः । जातं सर्वं वेत्तीति जातवेदाः[2] । सः अग्निः तेषां स्तोतॄणां सुमृळीकः सुखकरः भवतु ॥ अतिथिः । 'अत सातत्यगमने' । 'ऋतन्यञ्जि°' इत्यादिना इथिन्प्रत्ययः । नित्वादाद्युदात्तः । मानु-षाणाम् । मनोरपत्यानीत्यर्थे 'मनोर्जातावञ्यतौ षुक्च' इति अञ्प्रत्ययः । ञित्वादाद्युदात्तः ॥ ॥ १५ ॥

'यो मर्त्येषु' इति विंशत्यृचं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् । 'यो मर्त्येषु' इत्यनु-क्रमणिका । अस्य सूक्तस्य प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्त एव विनियोग उक्तः ॥

यो मर्त्येष्वमृत ऋतावा देवो देवेष्वरतिर्निधायि ।

होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ईरयध्यै ॥ १ ॥

यः । मर्त्येषु । अमृतः । ऋतऽवा । देवः । देवेषु । अरतिः । निऽधायि ।

होता । यजिष्ठः । मह्ना । शुचध्यै । हव्यैः । अग्निः । मनुषः । ईरयध्यै ॥ १ ॥

अमृतः मरणधर्मरहितः यः अग्निः मर्त्येषु मनुष्येषु ऋतावा सत्यवान् निधायि निहितः । यद्वा । मर्त्येषु मनुष्यसंबन्धिषु वागादीन्द्रियेषु निहितः । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ. उ. २. ४) इति श्रुतेः । देवः देवनशीलो योऽग्निरिन्द्रादिषु देवेषु अरतिः अभिगन्ता शत्रूणाम् । यद्वा देवलोके गन्ता । निधायि निहितः । स च होता देवानामाह्वाता यजिष्ठः यष्टृतमः अग्निः मह्ना स्वकीयेन महता तेजसा शुचध्यै दीपितुमुत्तरवेद्यां निहितः । किंच हव्यैः हवनीयैराज्यपुरोडाशादिभिर्हविर्भिः[3] हेतुभिः[4] मनुषः मनुष्यस्य यजमानस्य ईरयध्यै स्वर्गं प्रति प्रेरणाय निहितः ॥ अरतिः । 'ऋ गतौ' । 'वहिवस्यर्तिभ्यश्चित्' इत्यतिप्रत्ययः । चित्वादन्तोदात्तः । निधायि । दधातेः कर्मणि लुङि रूपम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । शुचध्यै । 'शुच दीप्तौ' । तुमर्थे कध्यैप्रत्ययः । कित्वादगुणः । प्रत्ययस्वरः । ईरयध्यै । ईरयतेस्तुमर्थे शध्यैप्रत्ययः । शित्वेन सार्वधातुकत्वात् णिलोपाभावः ॥

---

१. न-ल-स-'मनुष्याणां' नास्ति । २. त-ल-जातवेदाः । जातान्येनं विदन्तीति वा जातवेदाः । ३. ख-ग-च-ण-°पुरोडाशादिहविर्भिः । ४. ख-ग-घ-च-ण-भ-'हेतुभिः' नास्ति ।

इह त्वं सूनो सहसो नो अद्य जातो जाताँ उभयाँ अन्तरग्ने ।
दूत ईयसे युयुजान ऋष्व ऋजुमुष्कान्वृषणः शुक्रांश्च ॥ २ ॥

इह । त्वम् । सूनो इति । सहसः । नः । अद्य । जातः । जातान् । उभयान् । अन्तः । अग्ने ।
दूतः । ईयसे । युयुजानः । ऋष्व । ऋजुऽमुष्कान् । वृषणः । शुक्रान् । च ॥ २ ॥

हे ᵛसहसः ᵛसूनो बलस्य पुत्र ᵛअग्ने ᵛअद्य अस्मिन् दिवसे ᵛनः अस्मदीये ᵛइह कर्मणि ᵛजातः आधानपवमानेष्टिभिः संस्कृतः ᵛत्वं ᵛजातान् उत्पन्नान् ᵛउभयान् देवमनुष्यान् ᵛअन्तः तेषामुभयेषां मध्ये ᵛदूतः हवींषि देवान् प्रापयितुम् ᵛईयसे गच्छसि । किं कुर्वन् । हे ᵛऋष्व दर्शनीयाग्ने ᵛऋजुमुष्कान् । मुष्कशब्देन मांसलोऽभिधीयते । ऋजवः प्रसाधकाः । ऋजवश्च ते मुष्काश्च इति ऋजुमुष्काः । तान् ᵛवृषणः रेतःसेचनसमर्थान् ᵛशुक्रान् दीप्यमानानश्वान् ᵛच ᵛयुयुजानः स्वरथे योजयन्[1] ईयसे[1] । यद्वा । ऋष्व महन्नग्ने युयुजानो हविर्वहने नियुज्यमानस्त्वं वृषणो हविःसेचनसमर्थान् यजमानान् शुक्रान् दीप्तान् देवांश्चेयसे ॥ सूनो सहसः । ‘ परमपि छन्दसि ’ इति सहसः पराङ्गवद्भावात् द्वयोः सर्वानुदात्तत्वम् । ईयसे । ‘ ईङ् गतौ ’ । दिवादिः । निघातः । युयुजानः । युजेः वर्तमाने लिटि कानचि रूपम् । ऋष्व । संहितायाम् ‘ ऋत्यकः ’ इति प्रकृतिभावः । ऋजुमुष्कान् । समासस्वरः ॥

अत्या वृधस्नू रोहिता घृतस्नू ऋतस्य मन्ये मनसा जविष्ठा ।
अन्तरीयसे अरुषा युजानो युष्मांश्च देवान्विश आ च मर्तान् ॥ ३ ॥

अत्या । वृधस्नू इति वृधऽस्नू । रोहिता । घृतस्नू इति घृतऽस्नू ।
ऋतस्य । मन्ये । मनसा । जविष्ठा ।
अन्तः । ईयसे । अरुषा । युजानः । युष्मान् । च । देवान् । विशः । आ । च । मर्तान् ॥ ३ ॥

हे अग्ने ᵛऋतस्य सत्यभूतस्य तव संबन्धिनौ ᵛमनसा मनसोऽपि ᵛजविष्ठा वेगवत्तमौ ᵛवृधस्नू । वर्धयतीति वृधमन्नम् । तत् क्षरन्तौ । ᵛघृतस्नू । घृतमुदकं तत्स्रवन्तौ ᵛरोहिता रोहितवर्णौ ᵛअत्या अश्वौ ᵛमन्ये स्तौमि । ᵛअरुषा आरोचमानौ तावश्वौ ᵛयुजानः रथे युञ्जानस्त्वं ᵛयुष्मान् । देवेष्वग्नेरन्तर्भावात् यजनीयरूपेण कीर्तनम् । युष्मान् यष्टव्यान् ᵛदेवान् ᵛविशः परिचारकान् ᵛमर्तान् मनुष्यान् ᵛअन्तः । षष्ठ्यर्थे द्वितीया । तेषां मध्ये ᵛआ समन्तात् ᵛईयसे हविः स्वीकर्तुं यजमानान् गच्छसि । तद्धविः प्रदातुं देवान् गच्छसि ॥ मन्ये । मन्यतिः अर्चतिकर्मा[2] । मनसा । ‘ सुपां सुलुक्° ’ इति पञ्चम्या आकारः । युजानः । ‘ युजिर् योगे ’ । ‘ युजिबुधिदृशः किच्च ’ इत्यानच्प्रत्ययः । चित्त्वादन्तोदात्तः ॥

---

१. ख-ग-च-भ—योजयसे । २. ख-ग-च-ण—स्तुतिकर्मा ।

अर्यमणं वरुणं मित्रमेषामिन्द्राविष्णू मरुतो अश्विनोत ।
स्वश्वो अग्ने सुरथः सुराधा एदु वह सुहविषे जनाय ॥ ४ ॥

अर्यमणम् । वरुणम् । मित्रम् । एषाम् । इन्द्राविष्णू इति । मरुतः । अश्विना । उत ।
सुऽअश्वः । अग्ने । सुऽरथः । सुऽराधाः । आ । इत् । ऊँ इति । वह । सुऽहविषे । जनाय ॥ ४ ॥

हे अग्ने स्वश्वः शोभनाश्वोपेतः सुरथः शोभनरथः[1] सुराधाः शोभनधनोपेतः त्वम्[2] एषां मर्त्यानां मध्ये सुहविषे शोभनहविष्काय जनाय यजमानाय अर्यमणं[3] वरुणं मित्रं इन्द्राविष्णू मरुतः अश्विना अश्विनौ च[3] यष्टव्यान् देवान् आ वह इदु आह्वयैव । उः पूरणः ॥ इन्द्राविष्णू । 'ऋत्रेन्द्र०' इत्यादिना निपातनादिन्द्रशब्द आद्युदात्तः । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम् । सुहविषे[4] । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।
इळावाँ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान् ॥ ५ ॥

गोऽमान् । अग्ने । अविऽमान् । अश्वी । यज्ञः । नृवत्ऽसखा । सदम् । इत् । अप्रऽमृष्यः ।
इळाऽवान् । एषः । असुर । प्रजाऽवान् । दीर्घः । रयिः । पृथुऽबुध्नः । सभाऽवान् ॥ ५ ॥

हे असुर बलवन् हे अग्ने एषः मदीयोऽयं यज्ञः गोमान् गोभिस्तद्वान् अविमान् । अवयो मेषा अस्य सन्ति इति[5] तद्वान् अश्वी अश्वोपेतश्चास्तु[6] । नृवत्सखा । नरः कर्मणां नेतारोऽध्वर्य्वादयः तद्वन्तः सखायोऽनुष्ठातारो यजमाना यस्य स तथोक्तः । सदमित् सदैव अप्रमृष्यः अप्रधृष्यश्चास्तु । तथा इळावान् । इळा हविर्लक्षणमन्नम् । तद्वान् । प्रजावान् पुत्रपौत्रादियुक्तश्चास्तु । दीर्घः अविच्छिन्नानुष्ठानोपेतः रयिः धनवान् । लुप्तमत्वर्थीयः । पृथुबुध्नः । पृथूनि बहुलानि बुध्नानि धनादीनि कारणानि यस्य स तथोक्तः । सभावान् उपद्रष्टृरूपसभायुक्तश्चास्तु ॥ नृवत्सखा । नरो येषां सन्तीति नृवत् । मतुप् । तस्य छान्दसं वत्वम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । बहुव्रीहौ पूर्वपदस्वरः ॥ ॥ १६ ॥

यस्त इध्मं जभरत्सिष्विदानो मूर्धानं वा ततपते त्वाया ।
भुवस्तस्य स्वतवाँ पायुरग्ने विश्वस्मात्सीमघायत उरुष्य ॥ ६ ॥

यः । ते । इध्मम् । जभरत् । सिस्विदानः । मूर्धानम् । वा । ततपते । त्वाऽया ।
भुवः । तस्य । स्वऽतवान् । पायुः । अग्ने । विश्वस्मात् । सीम् । अघऽयतः । उरुष्य ॥ ६ ॥

---

१. ख-ग-घ-च-ण-न-भ-ल-स—'शोभनरथः' नास्ति । २. ख-ग-घ-च-ण-फ-भ—त्वम् उत अपि च । ३. ण-ल-स—अर्यमादीन् उतापि चाश्विनौ । ४. ख-ग-च-ण-न—सुहविषे इत्यत्र; त-भ-स—सुहविषे चेत्यत्र । ५. त-न-भ-ल-स—'इति' नास्ति । ६. ख-ग-घ-च-ण-फ-भ—अश्वोपेतश्च ।

हे ᵛअग्ने ᵛते त्वदर्थं ᵛयः पुमान् ᵛसिष्विदानः[1] स्विद्यद्गात्रः सन् ᵛइध्मं त्वत्समिन्धनार्थं काष्ठभारं ᵛजभरत् आहरति । यः ᵛवा ᵛत्वाया त्वत्कामनया ᵛमूर्धानं स्वमस्तकं ᵛततपते काष्ठभारेण तापयति ᵛतस्य तादृशस्य पुंसः ᵛस्वतवान् । 'स्वतवान्धनवान्[2]' इति तलवकारे उक्तम्[2] । धनवान् ᵛभुवः भवसि । ᵛपायुः पालयितासि । ᵛसीम् एनं ᵛविश्वस्मात् सर्वस्मात्[3] ᵛअघायतः अघं पापमिच्छतः पुरुषात् ᵛउरुष्य रक्ष ॥ जभरत्[4] । हरतेर्लुङि चङि रूपम् । 'चङ्यन्यतरस्याम्' इति चङ्पूर्वस्य उदात्तत्वम् । सिष्विदानः । 'ञिष्विदा गात्रप्रक्षरणे' । कानचि रूपम् । संहितायाम् 'आदेशप्रत्यययोः' इति धातुसकारस्य षत्वम् । त्वाया । त्वामात्मन इच्छतीत्यर्थे क्यच् । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । दकारस्य छान्दसमात्वम् । क्यजन्तात् धातोर्भावे 'अ प्रत्ययात्' इति अकारप्रत्ययः । 'सुपां सुलुक्' इति तृतीयाया आकारः । एकादेशस्वरः । भुवः । भवतेर्लेट्यडागमे रूपम् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । आगमस्यानुदात्तत्वे धातुस्वरः । स्वतवाँ ᳲ पायुः इत्यत्र संहितायां 'स्वतवान्पायौ' (पा. सू. ८.३.११) इति नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' इति आकारोऽनुनासिकः । रेफस्य विसर्जनीयः । 'कुप्वोः ᳲक ᳲपौ च' इति ᳲप इत्यादेशः । अघायतः । अघमात्मन इच्छतीत्यर्थे सुपः क्यच्[4] । 'अश्वाघस्यात्' इति आत्वम् । तदन्ताच्छतृप्रत्ययः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । उरुष्य । उरुशब्दः कण्ड्वादिः । लोटि रूपम् । निघातः ॥

**य॒स्ते॒ भरा॒दन्नि॑यते चि॒दन्नं॒ नि॒शिष॒न्म॒न्द्रमति॑थिमु॒दीर॑त् ।**

**आ दे॑व॒युरि॒नध॑ते दुरो॒णे तस्मि॑न्र॒यिर्ध्रु॒वो अ॑स्तु॒ दास्वा॑न् ॥ ७ ॥**

यः । ते॒ । भरा॑त् । अन्नि॑ऽयते । चि॒त् । अन्न॑म् । नि॒ऽशिष॑त् । म॒न्द्रम् । अति॑थिम् । उ॒त्ऽईर॑त् ।

आ । दे॒व॒ऽयुः । इ॒नध॑ते । दु॒रो॒णे । तस्मि॑न् । र॒यिः । ध्रु॒वः । अ॒स्तु॒ । दास्वा॑न् ॥ ७ ॥

हे अग्ने ᵛयः पुमान् ᵛअन्नियते अन्नमिच्छते ᵛते तुभ्यं हविर्लक्षणं[5] पुरोडाशादिकम् ᵛअन्नं[5] ᵛभरात् दातुं बिभृयात् । ᵛचित् इति चार्थे । यश्च ᵛमन्द्रं मदकरं सोमं ᵛनिशिषत् नितरां प्रयच्छति । यश्च ᵛअतिथिम् अतिथिवत् पूज्यं त्वाम् ᵛउदीरत् उत्तरवेद्यां प्रणयति । ᵛआ अपि च यश्च ᵛदेवयुः देवं[6] त्वां[6] कामयमानः ᵛदुरोणे स्वकीये गृहे ᵛइनधते त्वां समिद्भिः समिन्धते ᵛतस्मिन् एतस्मिन् पुरुषे ᵛरयिः पुत्रः ᵛध्रुवः आस्तिक्यबुद्ध्या वैदिके मार्गे निश्चलः ᵛअस्तु । तथा ᵛदास्वान् औदार्योपेतश्चास्तु ॥ भरात् । 'डुभृञ् धारणपोषणयोः' इत्यस्य लेट्याडागमे रूपम् । यद्वृत्तयोगादनिघातः । अन्नियते । अन्नमात्मन इच्छते । क्यच् । 'क्यचि च' इति इत्वम् । ह्रस्वश्छान्दसः । निशिषत् । 'शासु अनुशिष्टौ' । लुङि 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङादेशः । 'शास इदङ्हलोः' इति इत्वम् । उदीरत् । 'ईर गतौ' । लेटि व्यत्ययेन परस्मैपदम् । अडागमः । आगमस्यानुदात्तत्वे धातुस्वरः[7] । 'तिङि चोदात्तवति' इति गतेर्निघातः । इनधते । 'ञिइन्धी दीप्तौ' । लटि व्यत्ययेन शप् । रुधादित्वात् श्नम् । 'श्नान्नलोपः'

---

१. न–सिष्विदानः सिस्विदानः । २. ख-ग-घ-च-ण-फ-भ–'स्वतवान्......उक्तं' नास्ति । ३. न-ल-स–'सर्वस्मात्' नास्ति । ४. ख-ग-च-ण-फ-भ–'जभरत् ......क्यच्' नास्ति । ५. ल–अन्नं हविर्लक्षणं पुरोडाशादिकम् । ६. ख-ग-घ-च-ण-त-फ-भ-स–देवत्वम् । ७. त–धातुस्वरः । उभयत्र ।

इति धातुनकारलोपः। क्ङित्परत्वाभावात्[1] श्नसोरल्लोपाभावः। यद्वृत्तयोगादनिघातः। श्नमः स्वरः। दास्वान्। 'दासृ दाने'। संपदादिलक्षणो भावे क्विप्। 'तदस्यास्ति°' इति मतुप्। 'मादुपधायाः°' इति वत्वम्। प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरः॥

यस्त्वा दोषा य उषसि प्रशंसात्प्रियं वा त्वा कृणवते हविष्मान्।

अश्वो न स्वे दम आ हेम्यावान्तमंहसः पीपरो दाश्वांसम्॥ ८॥

यः। त्वा। दोषा। यः। उषसि। प्रऽशंसात्। प्रियम्। वा। त्वा। कृणवते। हविष्मान्।

अश्वः। न। स्वे। दमे। आ। हेम्याऽवान्। तम्। अंहसः। पीपरः। दाश्वांसम्॥ ८॥

हे अग्ने ᵛयः पुमान् ᵛदोषा दोषायां रात्रौ त्वां[2] ᵛप्रशंसात् संस्तुयात्। ᵛयः[3] च[3] ᵛउषसि प्रातःकाले त्वां[4] प्रशंसेत्। ᵛहविष्मान् संभृतहविष्को यः ᵛवा यजमानः ᵛत्वा त्वां ᵛप्रियं हविर्भिः प्रीतं ᵛकृणवते कुर्यात्[4]। ᵛआ अथ ᵛदाश्वांसं हविर्दत्तवन्तं ᵛतं[5] तादृशं[5] यजमानं ᵛस्वे ᵛदमे स्वकीये गृहे ᵛहेम्यावान् सुवर्णनिर्मितकक्ष्यावान् ᵛअश्वो ᵛन अश्व इव संचरंस्त्वम् ᵛअंहसः पापरूपाद्दारिद्र्यात् ᵛपीपरः पारं नय। तस्मै यजमानाय बहु धनं प्रयच्छेत्यर्थः॥ दोषा। सप्तम्या आकारः। प्रशंसात्। 'शंसु स्तुतौ'। लेटि आडागमे रूपम्। कृणवते। 'कृवि हिंसाकरणयोः' इत्यस्य लेटि 'धिन्विकृण्व्योरच्च' इत्युप्रत्ययः। 'लेटोऽडाटौ' इत्यडागमः। यद्वृत्तयोगादनिघातः। प्रत्ययस्वरः। हेम्यावान्। हेम अर्हति। 'छन्दसि च' इति यः। पीपरः। 'पृ पालनपूरणयोः' इत्यस्य ण्यन्तस्य लुङि चङि रूपम्। निघातः॥

यस्तुभ्यमग्ने अमृताय दाशद्दुवस्त्वे कृणवते यतस्रुक्।

न स राया शशमानो वि योषन्नैनमंहः परि वरदघायोः॥ ९॥

यः। तुभ्यम्। अग्ने। अमृताय। दाशत्। दुवः। त्वे इति। कृणवते। यतऽस्रुक्।

न। सः। राया। शशमानः। वि। योषत्। न। एनम्। अंहः। परि। वरत्। अघऽयोः॥९॥

हे ᵛअग्ने ᵛयः यजमानः ᵛअमृताय मरणधर्मरहिताय ᵛतुभ्यं ᵛदाशत् हवींषि प्रयच्छेत्। ᵛयतस्रुक् संयतस्रुक्[6] यश्च यजमानः ᵛत्वे त्वयि ᵛदुवः परिचर्यां ᵛकृणवते करोति ᵛशशमानः स्तोत्रं कुर्वाणः ᵛसः यजमानः ᵛराया धनेन ᵛन ᵛवि ᵛयोषत् न पृथग्भवेत्। सदा धनयुक्तो भवेदित्यर्थः। ᵛअघायोः पापमिच्छतो हिंसकस्य संबन्धि ᵛअंहः आहननं पापम् ᵛएनं यजमानं ᵛन ᵛपरि ᵛवरत् न परिवृणुयात्। न स्पृशेदित्यर्थः॥ दाशत्। 'दाशृ दाने'। लेट्यडागमे रूपम्। त्वे। 'सुपां सुलुक्°' इति सप्तम्याः शे इत्यादेशः। कृणवते। यद्वृत्तयोगादनिघातः। योषत्। 'यु मिश्रणे'। लेटि 'सिब्बहुलम्°' इति सिप्। अडागमः। निघातः। वरत्। 'वृञ् वरणे'। लेटि रूपम्॥

---

१. ख-ग-च-ण-त-न-फ-भ-स–कित्परत्वाभावात्। २. त–त्वा त्वाम्। ३. फ–तथा। ४. च–त्वा त्वां प्रशंसात् वा हविष्मान् त्वा त्वां प्रियं कृण्वते कुर्वते। ५. ख-ग-च-ण-न-फ-भ-स–'तं तादृशं' नास्ति; ध–तम्; ल–तादृशम्। ६. ख-ग-च-स–'संयतस्रुक्' नास्ति।

यस्य॒ त्वम॑ग्ने अध्व॒रं जुजो॑षो दे॒वो मर्त॑स्य॒ सुधि॑तं॒ ररा॑णः ।
प्री॒तेद॑स॒द्धोत्रा॒ सा य॑वि॒ष्ठासा॑म॒ यस्य॑ विध॒तो वृ॒धास॑ः ॥ १० ॥

यस्य॑ । त्वम् । अ॒ग्ने॒ । अ॒ध्व॒रम् । जुजो॑षः । दे॒वः । मर्त॑स्य । सु॒ऽधि॑तम् । ररा॑णः ।
प्री॒ता । इ॒त् । अ॒स॒त् । होत्रा॑ । सा । य॒वि॒ष्ठ॒ । असा॑म । यस्य॑ । वि॒ध॒तः । वृ॒धास॑ः ॥ १० ॥

हे ᵛअग्ने ᵛरराणः रममाणः[1] ᵛदेवः दीप्यमानः ᵛत्वं ᵛयस्य ᵛमर्तस्य मनुष्यस्य संबन्धि ᵛसुधितं त्वदर्थं सुष्ठु निहितम् ᵛअध्वरम् अनुपहतं हविर्लक्षणमन्नं ᵛजुजोषः सेवेथाः[2] हे ᵛयविष्ठ युवतम ᵛसा ᵛहोत्रा स होता यजमानः ᵛप्रीतेदसत् प्रीत एव भवेत् । ᵛअसाम तस्य यजमानस्य संबन्धिनो भवेम ᵛयस्य ᵛविधतः अग्निपरिचर्यां कुर्वतो यजमानस्य होत्रादयः ᵛवृधासः यज्ञस्य वर्धयितारो भवन्ति ॥ जुजोषः । 'जुषी प्रीतिसेवनयोः' इत्यस्य 'बहुलं छन्दसि' इति श्लुः । अडागमः । अभ्यस्तस्वरः । सुधितम् । दधातेर्निष्ठायां 'सुधितवसुधित॰' इति निपातनात् ध्यादेशः । 'गतिरनन्तरः' इति गतेः स्वरः । असाम । अस्तेर्लोटि 'आडुत्तमस्य पिच्च' इति आडागमः । उत्तमस्य पिद्वद्भावादनुदात्तत्वे धातुस्वरः । विधतः । 'विध विधाने' । तुदादिः । 'शतुरनुमः॰' इति विभक्तेरुदात्तत्वम् ॥ ॥ १७ ॥

चि॒त्तिम॒चित्तिं॑ चिनव॒द्वि वि॒द्वान्पृ॒ष्ठेव॑ वी॒ता वृ॑जि॒ना च॒ मर्ता॑न् ।
रा॒ये च॑ नः स्वप॒त्याय॑ देव॒ दितिं॑ च॒ रास्वादि॑तिमुरुष्य ॥ ११ ॥

चि॒त्तिम् । अचि॑त्तिम् । चि॒न॒व॒त् । वि । वि॒द्वान् । पृ॒ष्ठाऽइ॑व । वी॒ता । वृ॒जि॒ना । च॒ । मर्ता॑न् ।
रा॒ये । च॒ । न॒ः । सु॒ऽअ॒प॒त्याय॑ । दे॒व॒ । दिति॑म् । च॒ । रास्व॑ । अदि॑तिम् । उ॒रु॒ष्य॒ ॥ ११ ॥

ᵛविद्वान् प्राणिनां पुण्यपापरूपाणि कर्माणि जानानः सोऽग्निः ᵛचित्तिं ज्ञातव्यं पुण्यम् ᵛअचित्तिम् अनुपादेयत्वेनाचेतनीयं पापम् । यद्वा । चित्तिं ज्ञानमचित्तिमज्ञानं ᵛवि ᵛचिनवत् विचिनोतु पृथक्करोतु । तत्र दृष्टान्तः । ᵛपृष्ठेव । यथाश्वपालोऽश्वानां ᵛवीता कान्तानि ᵛवृजिना दुर्वहाणि च पृष्ठा पृष्ठानि हेयोपादेयत्वेन[3] पृथक्करोति तद्वत् । किंच ᵛमर्तान् पुण्यकृतोऽपुण्यकृतः ᵛच मनुष्यान् पृथक्करोतु । हे ᵛदेव अग्ने ᵛस्वपत्याय शोभनपुत्रोपेताय ᵛराये धनाय ᵛनः अस्मान् कुरु । ᵛदितिं दातारं ᵛच ᵛरास्व देहि । ᵛअदितिम् । पञ्चम्यर्थे द्वितीया । अदातुः सकाशात् ᵛउरुष्य रक्ष ॥ चित्तिम् । 'चिती संज्ञाने' । स्त्रियां क्तिन् । नित्त्वादाद्युदात्तः । चिनवत् । चिनोतेर्लेट्यडागमः । दितिम् । 'दाण् दाने' । कर्तरि[4] क्तिन्[4] । रास्व । 'रा दाने' । लोटि व्यत्ययेनात्मनेपदम् । 'चवायोगे प्रथमा' इति न निघातः ॥

---

१. ख-ग-च-स-'रममाणः' नास्ति । २. ख-ग-घ-च-ण-न-फ-भ-सेवसे । ३. घ-न-ल-स-ज्ञेयोपादेयत्वेन । ४. ख-च-ण-त-न-भ-कर्मणि क्तिच्; ल-कर्मणि क्तिन् ।

कविं शशासुः कवयोऽदब्धा निधारयन्तो दुर्यास्वायोः ।
अतस्त्वं दृश्याँ अग्न एतान्पड्भिः पश्येरद्भुताँ अर्य एवैः ॥ १२ ॥

कविम् । शशासुः । कवयः । अदब्धाः । निऽधारयन्तः । दुर्यासु । आयोः ।
अतः । त्वम् । दृश्यान् । अग्ने । एतान् । पट्ऽभिः । पश्येः । अद्भुतान् । अर्यः । एवैः ॥१२॥

हे ᵛअग्ने ᵛआयोः मनुष्यस्य ᵛदुर्यासु गृहेषु ᵛअदब्धाः केनाप्यतिरस्कृताः ᵛनिधारयन्तः निवसन्तः ᵛकवयः क्रान्तदृशो देवाः ᵛकविं मेधाविनं त्वां ᵛशशासुः । होता भवेति शशंसुः । ᵛअतः कारणात् ᵛअर्यः यज्ञस्य स्वामी ᵛत्वं ᵛदृश्यान् दर्शनीयान् ᵛअद्भुतान् आश्चर्यरूपोपेतानिन्द्रादीन् ᵛएतान् देवान् ᵛएवैः गमनशीलैः ᵛपड्भिः पादैः स्वतेजोभिः ᵛपश्येः जानीयाः ॥ दृश्यान् । 'दृशिर् प्रेक्षणे' । 'ऋदुपधाच्चाक्लृपिचृतेः' (पा. सू. ३. १. ११०) इति कर्मणि क्यप् । कित्त्वादगुणः । पित्त्वादनुदात्तत्वे धातुस्वरः ॥

त्वमग्ने वाघते सुप्रणीतिः सुतसोमाय विधते यविष्ठ ।
रत्नं भर शशमानाय घृष्वे पृथु श्चन्द्रमवसे चर्षणिप्राः ॥ १३ ॥

त्वम् । अग्ने । वाघते । सुऽप्रनीतिः । सुतऽसोमाय । विधते । यविष्ठ ।
रत्नम् । भर । शशमानाय । घृष्वे । पृथु । चन्द्रम् । अवसे । चर्षणिऽप्राः ॥ १३ ॥

हे ᵛयविष्ठ युवतम ᵛघृष्वे दीप्तियुक्त । यद्वा[1] । परेषां घर्षणशील[1] हे ᵛअग्ने ᵛचर्षणिप्राः अपेक्षितफलप्रदानेन मनुष्याणां कामपूरकः ᵛसुप्रणीतिः सुष्ठूत्तरवेद्यां प्रणयनीयः ᵛत्वं ᵛसुतसोमाय ᵛविधते तव परिचरणं कुर्वते ᵛशशमानाय त्वां स्तुवते ᵛवाघते यज्ञनिर्वाहकाय यजमानाय ᵛपृथु प्रभूतं ᵛचन्द्रम् आह्लादकारि[2] ᵛरत्नम् उत्तमं धनम् ᵛअवसे रक्षणाय ᵛभर आहर प्रयच्छेत्यर्थः ॥ सुप्रणीतिः[3] । 'णीञ् प्रापणे' । कर्मणि क्तिन् । 'तादौ च निति कृति°' इत्यनन्तरप्रशब्दस्योदात्तत्वम् । पृथु श्चन्द्रम् इत्यत्र संहितायां 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुडागमः । श्चुत्वेन शकारः[3] ॥

अधा ह यद्वयमग्ने त्वाया पड्भिर्हस्तेभिश्चकृमा तनूभिः ।
रथं न क्रन्तो अपसा भुरिजोर्ऋतं येमुः सुध्य आशुषाणाः ॥ १४ ॥

अध । ह । यत् । वयम् । अग्ने । त्वाऽया । पट्ऽभिः । हस्तेभिः । चकृम । तनूभिः ।
रथम् । न । क्रन्तः । अपसा । भुरिजोः । ऋतम् । येमुः । सुऽध्यः । आशुषाणाः ॥ १४ ॥

---

१. ख-घ-च-ण-फ-फ-भ-'यद्वा ... घर्षणशील' नास्ति । २. ख-घ-च-ण-फ-भ-आह्लादकरम् । ३. ख-च-ण-फं-भ-'सुप्रणीतिः ......... शकारः' नास्ति ।

हे ^अग्ने ^अधा[1] ^ह अथ खलु ^वयं ^स्वाया त्वत्कामनया ^पड्भिः पादैः ^हस्तेभिः हस्तैः ^तनूभिः अन्यैश्चावयवैः ^चकृम ^यत् यस्मात् कारणात् कर्मसिद्ध्यर्थं त्वामुपपादयामस्तस्मात् ^सुध्यः सुकर्माणः ^आशुषाणाः कर्माणि[2] व्याप्नुवन्तस्तेऽङ्गिरसः ^ऋतं सत्यभूतं त्वां ^भुरिजोः । बिभृतः कर्मकरणसामर्थ्यं पदार्थान् वेति भुरिजौ बाहू । तयोः ^अपसा मन्थनाख्येन कर्मणा ^येमुः उद्यच्छन्ति । तत्र दृष्टान्तः । ^रथं ^न । यथा ^क्रन्तः कारवः शिल्पिनः क्रामन्तोऽध्वगा वा हस्तयोः यथा रथमुद्यच्छन्ति तद्वत् । यद्वा । भुरिजोः । देवान् मनुष्यांश्च बिभृत इति भुरिजौ द्यावापृथिव्यौ । तयोर्मध्येऽपसा परिचरणकर्मणा सत्यभूतं तमग्निं येमुः उद्यच्छन्ति ॥ अध । संहितायां ' निपातस्य च ' इति दीर्घः । क्रन्तः । करोतेः शतरि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । प्रत्ययस्वरः । भुरिजोः[3] । ' डुभृञ् धारणपोषणयोः ' । ' भृञ उच्च ' इति इजिप्रत्ययः । धातोरुकारो रपरः । प्रत्ययस्वरः[3] ॥

**अधा मातुरुषसः सप्त विप्रा जायेमहि प्रथमा वेधसो नॄन् ।**
**दिवस्पुत्रा अङ्गिरसो भवेमाद्रिं रुजेम धनिनं शुचन्तः ॥ १५ ॥**

अध । मातुः । उषसः । सप्त । विप्राः । जायेमहि । प्रथमाः । वेधसः । नॄन् ।
दिवः । पुत्राः । अङ्गिरसः । भवेम । अद्रिम् । रुजेम । धनिनम् । शुचन्तः ॥ १५ ॥

वामदेवोऽन्यैः षड्भिरङ्गिरोभिः सह ब्रूते । ^अध अपि च ^मातुरुषसः सकाशात् ^सप्त सप्तसंख्याकाः ^विप्राः प्राज्ञा वयं स्मः । ^प्रथमाः श्रेष्ठा वयं ^वेधसः अग्नेः परिचारकान् ^नॄन् वेधसो विधातॄन् रश्मीन् वा ^जायेमहि वयं जनयामः । ^दिवः द्योतमानस्यादित्यस्य ^पुत्राः वयं ^अङ्गिरसो ^भवेम भूतिमन्तः स्याम । ^शुचन्तः दीप्यमाना वयं ^धनिनम् उदकवन्तम् ^अद्रिं मेघं ^रुजेम वर्षार्थं भिन्द्याम । यद्वा । धनिनं पणिनामकासुरापहृतगोधनयुक्तमद्रिं पर्वतं रुजेम । अङ्गिरसामादित्यपुत्रत्वमेवमाम्नायते—' तस्य यद्रेतसः प्रथममुददीप्यत तदसावादित्योऽभवत् ' इत्युपक्रम्य[4] ' येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् ' ( ऐ. ब्रा. ३. ३४ ) इति ॥ जायेमहि । ' जनी प्रादुर्भावे ' । लिङि ' ज्ञाजनोर्जा ' इति जादेशः । वेधसः । ' डुधाञ् धारणपोषणयोः ' इत्यस्मात् ' विधाञो वेध च ' ( उ. सू. ४.६६४ ) इति असिप्रत्ययः । धातोर्वेधः इत्यादेशः । दिवस्पुत्रा इत्यत्र संहितायां ' षष्ठ्याः पतिपुत्र° ' इति विसर्जनीयस्य सत्वम् । रुजेम । ' रुजो भङ्गे ' । अदादिः । लिङि रूपम् ॥ ॥१८॥

---

१. न-ल-स—अध । २. ख-घ-च-ण-फ-भ-ल—कर्मणि । ३. ख-च-ण-भ-ल—' भुरिजोः...... प्रत्ययस्वरः ' नास्ति । ४. त—यद्द्वितीयमासीत्तद्भृगुरभवत्तं वरुणो न्यगृह्णीत तस्मात् स भृगुर्वारुणिरथ यत्तृतीयमदीदेदिव त आदित्या अभवन् ।

अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥ १६ ॥

अध । यथा । नः । पितरः । परासः । प्रत्नासः । अग्ने । ऋतम् । आशुषाणाः ।
शुचि । इत् । अयन् । दीधितिम् । उक्थऽशसः ।
क्षाम । भिन्दन्तः । अरुणीः । अप । व्रन् ॥ १६ ॥

हे अग्ने अध अपि च परासः श्रेष्ठाः प्रत्नासः पुराणाः ऋतं सत्यभूतं यज्ञं[1] यथा यथावत् आशुषाणाः अश्नुवानाः नः अस्माकं पितरः अङ्गिरसः शुचि दीप्तं स्थानम् अयन् अगच्छन् । तथा दीधितिं तेजश्चागच्छन् । किंच उक्थशासः उक्थानां शस्त्राणां शंसितारः क्षाम क्षयकारणं तमः पापं वा[2] भिन्दन्तः विनाशयन्तोऽङ्गिरसः अरुणीः अरुणवर्णाः पणिभिरपहृता गा उषसो[3] वा[3] अप व्रन् अपावृण्वन् । प्रकाशितवन्त इत्यर्थः ॥ अयन् । 'इण् गतौ' । लङि 'इणो यण्' इति यण् । व्यत्ययेन अडागमः । दीधितिम् । 'दीधीङ् दीप्तिदेवनयोः' इत्यस्मात् क्तिनि ह्रस्वश्छान्दसः । नित्त्वादाद्युदात्तः । उक्थशासः । उक्थशब्द उपपदे 'शंसु स्तुतौ' इत्यस्मात् 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (पा. सू. ३. २. ७१) इति ण्विन् नकारलोपश्च निपातनादेव । पदकाले ह्रस्वश्छान्दसः । अरुणीः । गौरादिङीषन्तः । एकादेशस्वरः । व्रन् । वृणोतेर्लुङि 'मन्त्रे घस॰' इत्यादिना च्लेर्लुक् । निघातः ॥

आग्रयण आग्नेन्द्रस्य हविषः 'सुकर्माणः' इति याज्या । सूत्रितं च—'सुकर्माणः सुरुचो देवयन्तो विश्वे देवास आ गत' (आश्व. श्रौ. २. ९) इति ॥

सुकर्माणः सुरुचो देवयन्तोऽयो न देवा जनिमा धमन्तः ।
शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वं गव्यं परिषदन्तो अग्मन् ॥ १७ ॥

सुऽकर्माणः । सुऽरुचः । देवऽयन्तः । अयः । न । देवाः । जनिम । धमन्तः ।
शुचन्तः । अग्निम् । ववृधन्तः । इन्द्रम् । ऊर्वम् । गव्यम् । परिऽसदन्तः । अग्मन् ॥ १७ ॥

सुकर्माणः सुष्ठ्वनुष्ठितयागादिकर्माणः सुरुचः शोभनदीप्तयः देवयन्तः देवान् कामयमानाः देवाः देवनशीलाः स्तोतारः जनिम स्वकीयं मानुषं जन्म धमन्तः यागादिलक्षणेन कर्मणा निर्मलीकुर्वन्तः । तत्र दृष्टान्तः । अयो न । यथा कर्मारा अयो भस्त्रेण धमन्ति तद्वत् । तादृशाः[4] अग्निं शुचन्तः हविर्भिर्दीपयन्तः इन्द्रं ववृधन्तः सोमेन स्तुत्या[5] वा[5] वर्धयन्तोऽङ्गिरसः परिषदन्तः परितः

---

१. ख-च-ण-न-फ-भ-ल–'यज्ञं' नास्ति । २. ख-च-ण-न-भ-स– च । ३. ख-च-ण-भ–'उषसो वा' नास्ति । ४. ख-च-फ–तादृशम्; भ-ल–तादृशः । ५. ल–'स्तुत्या वा' नास्ति ।

सीदन्तः सन्तः ᵛऊर्वं महान्तं ᵛगव्यं गोसंघम् ᵛअग्मन् प्राप्नुवन् ॥ सुकर्माणः[1] । 'सोर्मनसी°' इत्युत्तरपदाद्युदात्तत्वम् । धमन्तः । 'ध्मा शब्दाग्निसंयोगयोः' । शतरि पाघ्रादिना धमादेशः । शपः पित्त्वात् अनुदात्तत्वे* शतुर्लसार्वधातुकस्वरः[1] । ववृधन्तः । 'वृधु वर्धने' । व्यत्ययेन परस्मैपदम् । शतरि शपः श्लुः । गव्यम् । गवां समूह इत्यर्थे 'खलगोरथात्' इति यः । अग्मन् । गमेर्लुङि च्लेर्लुकि रूपम् ॥

आ यूथेव क्षुमति पश्वो अख्यद्देवानां यज्जनिमान्त्युग्र ।
मर्तानां चिदुर्वशीरकृप्रन्वृधे चिदर्य उपरस्यायोः ॥ १८ ॥

आ । यूथाऽइव । क्षुऽमति । पश्वः । अख्यत् । देवानाम् । यत् । जनिम । अन्ति । उग्र ।
मर्तानाम् । चित् । उर्वशीः । अकृप्रन् । वृधे । चित् । अर्यः । उपरस्य । आयोः ॥ १८ ॥

ᵛउग्र तेजस्विन् हे अग्ने ᵛदेवानाम् अङ्गिरसां संबन्धि ᵛयज्जनिम यं गोसंघम् ᵛअन्ति पर्वतस्य समीपे ᵛआ ᵛअख्यत् आ समन्तादिन्द्रोऽपश्यत् । तत्र दृष्टान्तः । ᵛयूथेव । यथा ᵛपश्वः पशूनां गवां यूथानि ᵛक्षुमति अन्नवत्याढ्यगृहे वर्तमानानि पश्यन्ति जनास्तद्वत् । यद्वा । हे अग्ने तव परिचारकः अङ्गिरोगणः[2] देवानाम् इन्द्रादीनां यज्जनिम योऽयं जनः अन्ति मदन्तिके पश्वः पणिभिः अपहृतान् पशून् आख्यत् समन्तात् पश्यति । तत्र दृष्टान्तः । यथा क्षुमति शब्दं कुर्वाणे गवां यूथा यूथे पशून् पश्यन्ति तद्वत् । ᵛमर्तानां ᵛचित् मनुष्याणाम् ᵛउर्वशीः ऊरुभ्यामश्नुवानाः । 'उर्वश्यश्नुत ऊरुभ्यामश्नुते' (निरु. ५. १३) इति यास्कः । प्रजाः ᵛअकृप्रन् । ताभिरानीताभिर्गोभिः क्लृप्ताः समर्था अभवन् । ᵛचित् अपि च ᵛअर्यः स्वामी लब्धगोधनः ᵛउपरस्य उप्तस्य निषिक्तस्यापत्यस्य ᵛवृधे वर्धनाय समर्थो भवति । तथा ᵛआयोः मनुष्यस्य भृत्यादेश्च पोषणे समर्थो भवति ॥ यूथेव । शसः सप्तम्या वा डादेशः । क्षुमति । क्षुत् इत्यन्ननाम । यद्वा । 'टुक्षु शब्दे' । भावे क्विप् । छान्दसः तकारलोपः । 'तदस्यास्ति°' इति मतुप् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । अख्यत् । 'ख्या प्रकथने' । लुङि च्लेः 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङादेशः । आतो लोपः । जनिम । 'जनी प्रादुर्भावे' । 'हृजनिभ्यामिमनिन्' इति इमनिन्प्रत्ययः । नित्त्वादाद्युदात्तः । अकृप्रन् । 'कृपू सामर्थ्ये' । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । रुडागमः ॥

अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः ।
अनूनमग्निं पुरुधा सुश्चन्द्रं देवस्य मर्मृजतश्चारु चक्षुः ॥ १९ ॥

अकर्म । ते । सुऽअपसः । अभूम । ऋतम् । अवस्रन् । उषसः । विभातीः ।
अनूनम् । अग्निम् । पुरुधा । सुऽचन्द्रम् । देवस्य । मर्मृजतः । चारु । चक्षुः ॥ १९ ॥

---

१. ख-च-ण-न-भ-स-'सुकर्माणः ...°स्वरः' नास्ति । * त-ल-अनुदात्तत्वम् । २. ख-च-त-भ-स-अङ्गिरसो गणः; ण-न-अङ्गिरसां गणः ।

हे अग्ने ᵛते तव परिचरणम् ᵛअकर्म कुर्मः । तेन कर्मणा ᵛस्वपसः शोभनकर्माणः ᵛअभूम । ᵛविभातीः व्युच्छन्त्यः ᵛउषसः ᵛऋतं तेजः ᵛअवस्रन् आच्छादयन्ति । धारयन्तीत्यर्थः । तथा ता उषसः ᵛअनूनं संपूर्णं ᵛपुरुधा बहुधा ᵛसुश्चन्द्रं सुष्ठ्वाह्लादकारिणं यद्वा सुहिरण्यम् ᵛअग्निं धारयन्ति । किंच ᵛदेवस्य द्योतमानस्य तव ᵛचारु मनोहरं ᵛचक्षुः तेजः ᵛमर्मृजतः परिचरन्तो वयं स्वपसोऽभूमेति पूर्वेणान्वयः ॥ अकर्म । करोतेर्लङि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । मर्मृजतः । ' मृजूष् शुद्धौ ' । यङ्लुकि ' रुग्रिकौ च लुकि ' इत्यभ्यासस्य रुगागमः । शतरि ' नाभ्यस्ताच्छतुः ' इति नुमभावः । अभ्यस्तस्वरः ॥

एता ते॑ अग्न उ॒चथा॑नि वे॒धोऽवो॑चाम क॒वये॒ ता जु॑षस्व ।

उच्छो॑चस्व कृणु॒हि वस्य॑सो नो म॒हो रा॒यः पु॑रुवार॒ प्र य॑न्धि ॥ २० ॥

ए॒ता । ते॒ । अ॒ग्ने॒ । उ॒चथा॑नि । वे॒धः॒ । अवो॑चाम । क॒वये॑ । ता । जु॒ष॒स्व॒ ।

उत् । शो॒च॒स्व॒ । कृ॒णु॒हि । वस्य॑सः । नः॒ । म॒हः । रा॒यः । पु॒रु॒ऽवा॒र॒ । प्र । य॒न्धि॒ ॥ २० ॥

ᵛवेधः विधातर्हे ᵛअग्ने ᵛकवये मेधाविने ᵛते तुभ्यम् ᵛएता एतानि ᵛउचथानि उवथानि शस्त्राणि ᵛअवोचाम । त्वं ᵛता तानि ᵛजुषस्व सेवस्व । किंच त्वम् ᵛउच्छोचस्व उद्दीप्यस्व । ᵛनः अस्मान् ᵛवस्यसः अतिशयेन धनयुक्तान् ᵛकृणुहि कुरु । तदेवोच्यते । ᵛपुरुवार पुरुभिर्बहुभिर्वरणीय ᵛमहो ᵛरायः महद्धनं ᵛप्र ᵛयन्धि अस्मभ्यं प्रयच्छ ॥ अवोचाम । ' वच परिभाषणे ' । लुङि च्लेरङादेशः । पादादित्वादनिघातः । कृणुहि । ' कृवि हिंसाकरणयोः ' इत्यस्य लोटि रूपम् । तिङः उत्तरत्वादनिघातः । वस्यसः । वसुमच्छब्दात् ईयसुनि ' विन्मतोर्लुक् ' इति मतुपो लुकि टिलोपे च कृते ईकारलोपश्छान्दसः । यन्धि । यमेर्लोटि ' बहुलं छन्दसि ' इति विकरणस्य लुक् । ' वा छन्दसि ' इति हेर्विकल्पेन पित्त्वात् ' अङितश्च ' इति धिरादेशः ॥ ॥ १९ ॥

' आ वो राजानम् ' इति षोडशर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् । ' आ वः षोळश ' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः ॥

आ वो॒ राजा॑नमध्व॒रस्य॑ रु॒द्रं होता॑रं सत्य॒यजं॒ रोद॑स्योः ।

अ॒ग्निं पु॒रा त॑नयि॒त्नोर॒चित्ता॒द्धिर॑ण्यरूप॒मव॑से कृणुध्वम् ॥ १ ॥

आ । व॒ः । राजा॑नम् । अ॒ध्व॒रस्य॑ । रु॒द्रम् । होता॑रम् । स॒त्य॒ऽयज॑म् । रोद॑स्योः ।

अ॒ग्निम् । पु॒रा । त॒न॒यि॒त्नोः । अ॒चित्ता॑त् । हिर॑ण्यऽरूपम् । अव॑से । कृ॒णु॒ध्व॒म् ॥ १ ॥

हे ऋत्विग्यजमानाः ᵛअध्वरस्य यज्ञस्य[1] ᵛराजानम् अधिपतिं ᵛहोतारं देवानामाह्वातारं ᵛरुद्रं रोरूयमाणं द्रवन्तं शत्रून् रोदयन्तं वा । यद्वा । ' एषा वा अग्नेस्तनूर्यद्रुद्रः ' इति रुद्रात्मकं ᵛरोदस्योः

१. ख-च-ण-न-' यज्ञस्य ' नास्ति ।

द्यावापृथिव्योः ᵛसत्ययजं सत्यस्यान्नस्य दातारम् । यद्वा । सत्ययजं सत्येन हविषा देवान् यजन्तम् । यद्वा । रोदस्योर्व्याप्य वर्तमानम् ᵛहिरण्यरूपं सुवर्णप्रभम् एवंविधम् ᵛअग्निं ᵛवः युष्माकम् ᵛअवसे रक्षणाय ᵛतनयित्नोः । तनयित्नुरशनिः स ह्याकस्मिकः । तत्सदृशात् ᵛअचित्तात् । न विद्यते चित्तं यस्मिन् तदचित्तम् । चित्तोपलक्षितसर्वेन्द्रियोपसंहारो मरणमिति यावत् । तस्मान्मरणात्[1] ᵛपुरा प्रागेव ᵛआ ᵛकृणुध्वम् । यूयं समन्ताद्धविर्भिरग्निं भजध्वम् ॥ रुद्रम् । रोदयतेः ' रोदेर्णिलुक्च ' ( उ. सू. २. १७९ ) इति रक्प्रत्ययः । तनयित्नोः । तनिः शब्दार्थः । चुरादिरदन्तः । ' स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ' ( उ. सू.३. ३०९ ) इति इत्नुच्प्रत्ययः । चित्स्वरेणान्तोदात्तः । सुपा सहैकादेशे एकादेशस्वरः । कृणुध्वम् । ' कृवि हिंसाकरणयोः ' । लोटि रूपम् ॥

अ॒यं योनि॑श्चकृ॒मा यं व॒यं ते॑ जा॒येव॒ पत्य॑ उश॒ती सु॒वासा॑ः ।
अ॒र्वा॒ची॒नः परि॑वीतो॒ नि षी॑दे॒मा उ॑ ते स्वपाक प्रती॒चीः ॥ २ ॥

अ॒यम् । योनि॑ः । च॒कृ॒म । यम् । व॒यम् । ते॒ । जा॒याऽइ॑व । पत्ये॑ । उ॒श॒ती । सु॒ऽवासा॑ः ।
अ॒र्वा॒ची॒नः । परि॑ऽवीतः । नि । सी॒द॒ । इ॒माः । ऊँ॒ इति॑ । ते॒ । सु॒ऽअ॒पा॒क॒ । प्र॒ती॒चीः ॥ २ ॥

हे अग्ने ᵛते[2] त्वदर्थं ᵛयम् उत्तरवेदिलक्षणं प्रदेशं ᵛवयं ᵛचकृम कुर्मः । ᵛअयं ᵛयोनिः तव स्थानं भवति । तत्र दृष्टान्तः । ᵛजायेव । यथा ᵛपत्य ᵛउशती पतिं कामयमाना ᵛसुवासाः शोभनवस्त्रोपेता जाया स्वात्मसमीपे तस्य स्थानं करोति तद्वत् । हे ᵛस्वपाक स्वपस्क सुकर्मन्नग्ने त्वं ᵛपरिवीतः यष्टव्यदेवैस्तेजोभिर्वा परिवीतः ᵛअर्वाचीनः अस्मदभिमुखः सन् ᵛनि ᵛषीद उत्तरवेद्यामुपविश । तत्र स्थितस्य ᵛते तव ᵛइमाः ज्वालाः स्तुतयः[3] वा ᵛप्रतीचीः त्वदभिमुखाः प्रवर्तन्ते । ᵛउ[4] पूरणः[4]॥ चकृम । करोतेर्लिटि रूपम् । वाक्यभेदान्निघाताभावः । अर्वाचीनः । ' विभाषाञ्चेरदिक्॰' इति खः । परिवीतः । ' व्येञ् संवरणे ' । कर्मणि निष्ठा । यजादित्वात् संप्रसारणम् । ' गतिरनन्तरः ' इति गतेः स्वरः ॥

आ॒शृ॒ण्व॒ते अदृ॑पिताय॒ मन्म॑ नृ॒चक्ष॑से सुमृ॒ळी॒काय॑ वेधः ।
दे॒वाय॑ श॒स्तिम॒मृता॑य शंस॒ ग्रावे॑व॒ सोता॑ मधु॒षुद्यमी॒ळे ॥ ३ ॥

आ॒ऽशृ॒ण्व॒ते । अदृ॑पिताय । मन्म॑ । नृ॒ऽचक्ष॑से । सु॒ऽमृ॒ळी॒काय॑ । वे॒धः॒ ।
दे॒वाय॑ । श॒स्तिम् । अ॒मृता॑य । शं॒स॒ । ग्रावा॑ऽइव । सोता॑ । म॒धु॒ऽसुत् । यम् । ई॒ळे ॥ ३ ॥

ᵛवेधः स्तोत्राणां कर्तर्हे स्तोतः ᵛआश्रृण्वते स्तोत्राकर्णनपराय ᵛअदृपिताय अदृप्तायाप्रमत्ताय ᵛनृचक्षसे नृणां द्रष्ट्रे ᵛसुमृळीकाय सुसुखाय ᵛअमृताय मरणधर्मरहिताय ᵛदेवाय तस्मा अग्नये ᵛमन्म स्तोत्रं ᵛशस्तिं शस्त्रं च ᵛशंस । ᵛमधुषुत् मदकरस्य सोमस्य सोता । तत्र दृष्टान्तः । ᵛग्रावेव । यथा ग्रावा सोमस्य ᵛसोता तद्वत् । सोमाभिषवं कुर्वाणो यजमानः ᵛयम् अग्निम् ᵛईळे स्तौति । तस्मै शंसेति

१. ख-घ-च-ण-न-फ-भ-स—तन्मरणात् । २. ख-च-न-भ-स—' ते ' नास्ति । ३. ख-च-ण-फ-भ-स—ऊतयः । ४. ख-च-न-भ-ल-स—' उ पूरणः ' नास्ति ।

समन्वयः । यद्वा । मधुषुत् सोमसुद्यजमानोऽग्निमीळे स्तौति । तत्र दृष्टान्तः । यथा ग्रावा सोमस्य सोता शब्दं करोति । ' प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यः ' ( ऋ. सं. १०. ९४. १ ) इत्यत्र ग्राव्णां शब्दकर्तृत्वं[1] श्रुतमिति ॥ आशृण्वते । ' शतुरनुमः° ' इति विभक्तेरुदात्तत्वम् । ईळे । ' ईड स्तुतौ ' । लटि ' लोपस्त आत्मनेपदेषु ' इति तलोपः । यद्वा । लिटि तशब्दस्य एशादेशे कृते रूपम् ॥

त्वं चिन्नः शम्या अग्ने अस्या ऋतस्य बोध्यृतचित्स्वाधीः ।
कदा त उक्था सधमाद्यानि कदा भवन्ति सख्या गृहे ते ॥ ४ ॥

त्वम् । चित् । नः । शम्यै । अग्ने । अस्याः । ऋतस्य । बोधि । ऋतऽचित् । सुऽआधीः ।
कदा । ते । उक्था । सधऽमाद्यानि । कदा । भवन्ति । सख्या । गृहे । ते ॥ ४ ॥

हे vअग्ने vत्वं vचित् त्वमेव vशम्यै । शमीशब्दः कर्मनाम । vअस्याः शम्यै vनः अस्मत्संबन्धिनोऽस्य कर्मणो देवता भवसि । हे vऋतचित् सत्यज्ञ हे अग्ने vस्वाधीः सुकर्मा सुध्यानो वा त्वम् vऋतस्य vबोधि अस्मदीयं स्तोत्रं बुध्यस्व । vते तव vसधमाद्यानि सहमदनिमित्तानि vउक्था शस्त्राणि vकदा कस्मिन् काले vभवन्ति भविष्यन्ति । तथास्मदीये vगृहे vते त्वया सह vसख्या सख्यानि vकदा भविष्यन्ति ॥ सधमाद्यानि । मादयतेर्ण्यन्तस्य ' अचो यत् ' इति यत् । ' सध मादस्थयोः° ' इति सहस्य सधादेशः । भवन्ति । ' विभाषा कदाकर्ह्योः ' ( पा. सू. ३. ३. ५ ) इति भविष्यदर्थे लट् ॥

कथा ह तद्वरुणाय त्वमग्ने कथा दिवे गर्हसे कन्न आगः ।
कथा मित्राय मीळ्हुषे पृथिव्यै ब्रवः कदर्यम्णे कद्भगाय ॥ ५ ॥

कथा । ह । तत् । वरुणाय । त्वम् । अग्ने । कथा । दिवे । गर्हसे । कत् । नः । आगः ।
कथा । मित्राय । मीळ्हुषे । पृथिव्यै । ब्रवः । कत् । अर्यम्णे । कत् । भगाय ॥ ५ ॥

हे vअग्ने vत्वं vतत् अस्मदीयं पापं vवरुणाय vकथा vगर्हसे । केन हेतुना गर्हापूर्वमावेदयेः । vह इति पूरणः । vदिवे द्युलोकाय द्योतमानाय सूर्याय वा vकथा कथं तत्पापमावेदयेः । vनः अस्माकम् vआगः तत्पापं[2] vकत्[2] किमस्ति । त्वत्परिचरणान्नास्तीत्यर्थः । तथा vमीळ्हुषे अभिमतफलसेक्त्रे vमित्राय vपृथिव्यै च vकथा vब्रवः कथमागो ब्रूयाः । vअर्यम्णे देवाय vभगाय एतन्नामकाय च देवाय vकत्[3] कथं ब्रूयाः ॥ कथा । किंशब्दात् ' था हेतौ च छन्दसि ' इति थाप्रत्ययः । ' प्राग्दिशो विभक्तिः ' इति विभक्तिसंज्ञायां ' किमः कः ' ( पा. सू. ७. २. १०३ ) इति कादेशः । मीळ्हुषे । ' मिह सेचने ' । क्वसौ ' दाश्वान् साह्वान् मीढ्वांश्च ' इति निपातितः । ब्रवः । ' ब्रूञ् व्यक्तायां वाचि ' । लेटि ' लेटोऽडाटौ ' इत्यडागमः । पादादित्वादनिघातः । आगमस्यानुदात्तत्वात् धातुस्वरः ॥ ॥ २० ॥

---

१. ख-ग-त-न-भ-ल-स–कर्तृत्वम् । २. ख-घ-च-ण-न-प-फ-भ-स–पापं कथा किं ते; त–तत्पापं कथा किं ते । ३. ख-च-ण-प-फ-भ–कत् पापम् ।

कद्धिष्ण्या॑सु वृ॒धसा॒नो अ॑ग्ने॒ कद्वाता॑य॒ प्रत॑वसे शु॒भं॒ये ।
परि॑ज्मने॒ नास॑त्याय॒ क्षे ब्रव॒: कद॑ग्ने रु॒द्राय॒ नृ॒घ्ने ॥ ६ ॥

कत् । धिष्ण्या॑सु । वृ॒धसा॒नः । अ॒ग्ने॒ । कत् । वाता॑य । प्रऽत॑वसे । शु॒भ॒म्ऽये ।
परि॑ऽज्मने । नास॑त्याय । क्षे । ब्रव॑: । कत् । अ॒ग्ने॒ । रु॒द्राय॑ । नृ॒ऽघ्ने ॥ ६ ॥

हे ᵛअग्ने ᵛधिष्ण्यासु आग्नीध्रीयादिधिष्ण्येषु ᵛवृधसानः घृताद्याहुतिभिर्वर्धमानस्त्वं ᵛकत्[1] कथं ब्रूयाः । ᵛप्रतवसे प्रकृष्टबलाय ᵛशुभंये शुभस्य प्रापयित्रे ᵛपरिज्मने परितो गन्त्रे ᵛनासत्याय सत्यस्य नेत्रे। यद्वा न विद्यतेऽसत्यं यस्य तस्मै। ᵛवाताय वायवे। यद्वा नासत्याय इति वचनव्यत्ययः। नासत्याभ्यामश्विभ्याम्। ᵛक्षे। क्षा इति पृथिवीमाह। क्षियन्ति निवसन्त्यस्यां प्राणिन इति। तस्यै क्षे पृथिव्यै च ᵛकत् कथं ब्रूयाः। हे ᵛअग्ने ᵛनृघ्ने नृणां पापकृतां हन्त्रे ᵛरुद्राय देवाय ᵛकत् कथमागः ᵛब्रवः ब्रूयाः ॥ वृधसानः । 'वृधु वर्धने' । 'असानच्' इत्यनुवृत्तौ 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' इति असानच्प्रत्ययः । कित्त्वादगुणः । चित्त्वादन्तोदात्तः । शुभंये । 'या प्रापणे' । विच् । 'तत्पुरुषे कृति बहुलम्' इति द्वितीयायाः अप्यलुक्[2] । कृत्स्वरः । क्षे । 'क्षि निवासगत्योः' । 'अन्येभ्योऽपि दृश्यते' इत्यधिकरणे डः । ततष्टाप् । चतुर्थ्येकवचने 'आतो धातोः' इत्यत्र 'आतः' इति योगविभागात् आकारलोपः । नृघ्ने । 'हन हिंसागत्योः' । 'बहुलं छन्दसि' इति क्विप् ॥

क॒था म॒हे पु॑ष्टिंभ॒राय॑ पू॒ष्णे कद्रु॒द्राय॒ सुम॑खाय हवि॒र्दे ।
कद्विष्ण॑व उरुगा॒याय॒ रेतो॒ ब्रव॒: कद॑ग्ने॒ शर॑वे बृ॒हत्यै ॥ ७ ॥

क॒था । म॒हे । पु॒ष्टि॒म्ऽभ॒राय॑ । पू॒ष्णे । कत् । रु॒द्राय॑ । सुऽम॑खाय । ह॒वि॒ःऽदे ।
कत् । विष्ण॑वे । उ॒रु॒ऽगा॒याय॑ । रेत॑: । ब्रव॑: । कत् । अ॒ग्ने॒ । शर॑वे । बृ॒ह॒त्यै ॥ ७ ॥

हे ᵛअग्ने ᵛमहे महते ᵛपुष्टिंभराय पुष्टिधारकाय ᵛपूष्णे एतन्नामकाय देवाय ᵛकथा केन हेतुना पापं ब्रवीथाः । ᵛसुमखाय सुपूजनीयाय सुयज्ञाय वा ᵛहविर्दे अग्निरूपेण देवानां हविर्दात्रे । यद्वा स्विष्टकृत्त्वाद्धविषो दात्रे । ᵛरुद्राय ᵛकत् कथं ब्रूयाः। तथा ᵛउरुगायाय उरुभिर्बहुभिः गीयमानाय[3] यद्वा प्रभूतकीर्तये ᵛविष्णवे ᵛरेतः क्षयहेतु पापं ᵛकत् कथं वदेः । ᵛशरवे । शृणाति पक्वा ओषधीरिति शरुः शरत् संवत्सरः । यद्वा । हिंसिका निर्ऋतिः । ᵛबृहत्यै महत्यै शरदे[4] निर्ऋत्यै वा ᵛकत् कथं पापं ᵛब्रवः ब्रूयाः ॥ पुष्टिंभराय । 'डुभृञ् धारणपोषणयोः' । संज्ञायां 'भृतॄवृजि°' इत्यादिना खच् । 'अरुर्द्विषदजन्तस्य मुम्[5]' इति पूर्वपदस्य मुमागमः[5] । चित्त्वादन्तोदात्तः । समासे कृत्स्वरः । हविर्दे । 'अनुदात्तस्य च यत्रोदात्तलोपः' इति सुप उदात्तत्वम् । शरवे । 'शॄ हिंसायाम्' । 'शॄस्वृस्निहित्रप्यसि°' इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तः ॥

---

१. ख-घ-च-ण-प-फ-भ–कत् पापम् । २. त–अलुक् । ३. ख-च-ण-भ-स–गायमानाय । ४. ख-घ-च-ण-त-न-भ-स–शरवे । ५. ख-च-ण-त-न-भ-स–इति मुम् पूर्वपदस्य ।

**कथा शर्धाय मरुतामृताय कथा सूरे बृहते पृच्छयमानः ।**

**प्रति ब्रवोऽदितये तुराय साधा दिवो जातवेदश्चिकित्वान् ॥ ८ ॥**

कथा । शर्धाय । मरुताम् । ऋताय । कथा । सूरे । बृहते । पृच्छयमानः ।

प्रति । ब्रवः । अदितये । तुराय । साध । दिवः । जातऽवेदः । चिकित्वान् ॥ ८ ॥

हे अग्ने ᵛऋताय गन्त्रे सत्यभूताय वा ᵛमरुतां ᵛशर्धाय बलभूताय गणाय ᵛकथा केन हेतुना मदीयमागः प्रतिब्रूयाः । तेन ᵛपृच्छयमानः सन् तस्मै ᵛबृहते महते[1] ᵛसूरे सूर्याय ᵛकथा कथं वदेः । तथा ᵛअदितये देव्यै ᵛतुराय त्वरितगमनाय वायवे च[2]। अदितयेऽदीनाय तुराय वा । ᵛप्रति ᵛब्रवः । मदीयमागः कथं प्रतिब्रूयाः । यस्मादेवं तस्मात् हे ᵛजातवेदः अग्ने ᵛचिकित्वान् एतत्सर्वं[3] जानानस्त्वं ᵛदिवः दीप्तान् देवान् ᵛसाध साधय गच्छ । यद्वा । दिवो द्युलोकस्य यज्ञवहनलक्षणं कार्यं साध कुरु॥ सूरे । सर्वविधीनां छन्दसि विकल्पितत्वात् ङेर्यत्वाभावः । ' अतो गुणे ' इति पररूपत्वम् । पृच्छयमानः । ' प्रच्छ ज्ञीप्सायाम् '। कर्मणि यक् । ग्रहिज्यादिना संप्रसारणम् । शानचो लसार्वधातुकानुदात्तत्वे यक्स्वरः । साध । ' राध साध संसिद्धौ ' । अन्तर्भावितण्यर्थस्य लोटि व्यत्ययेन शप् ॥

**ऋतेन ऋतं नियतमीळ आ गोरामा सचा मधुमत्पक्वमग्ने ।**

**कृष्णा सती रुशता धासिनैषा जामर्येण पयसा पीपाय ॥ ९ ॥**

ऋतेन । ऋतम् । निऽयतम् । ईळे । आ । गोः । आमा । सचा । मधुऽमत् । पक्वम् । अग्ने ।

कृष्णा । सती । रुशता । धासिना । एषा । जामर्येण । पयसा । पीपाय ॥ ९ ॥

हे ᵛअग्ने ᵛऋतेन सत्यभूतेन यज्ञेन ᵛनियतम् अनुस्यूतम् ᵛऋतम् उदकं ᵛगोः धेनोः पयः ᵛआ ᵛईळे आयाचे । सांनाय्यादिहविरर्थं गव्यं पयस्त्वां याचे इत्यभिप्रायः । ᵛआमा अपक्वा सा गौः ᵛमधुमत् माधुर्योपेतं ᵛपक्वं पयः ᵛसचा सह धारयति । ᵛकृष्णा कृष्णवर्णा ᵛसती ᵛएषा गौः ᵛरुशता श्वेतेन ᵛधासिना प्राणिनां धारकेण ᵛजामर्येण । जायन्त इति जाः प्रजाः । तासाम्[4] अमर्येण अमरणनिमित्तेन तेन ᵛपयसा ᵛपीपाय प्रजाः प्याययति । तवैष महिमा यद्रसान् परिणामयन्नेवं करोषि ॥ पीपाय । प्यायतेर्लिटि ' लिड्यङोश्च ' इति पीभावः ॥

**ऋतेन हि ष्मा वृषभश्चिदक्तः पुमाँ अग्निः पयसा पृष्ठ्येन ।**

**अस्पन्दमानो अचरद्वयोधा वृषा शुक्रं दुदुहे पृश्निरूधः ॥ १० ॥**

ऋतेन । हि । स्म । वृषभः । चित् । अक्तः । पुमान् । अग्निः । पयसा । पृष्ठ्येन ।

अस्पन्दमानः । अचरत् । वयःऽधाः । वृषा । शुक्रम् । दुदुहे । पृश्निः । ऊधः ॥ १० ॥

---

१. ख-घ-च-ण-न-भ-ल-स–' महते ' नास्ति । २. न-ल-स–' च ' नास्ति । ३. न-स–तत्सर्वम् । ४. ख-घ-च-ण-भ–ताः जाः ।

वृषभः अभिमतफलवर्षकः पुमान् श्रेष्ठः सः अग्निः ऋतेन सत्यभूतेन पृष्ठ्येन धारकेण पयसा अक्तः सिक्तो भवति । हि स्म[1] चित्[2] त्रयः पूरणाः। वयोधाः अन्नदः सोऽग्निः अस्पन्दमानः एकत्रावस्थितः सन् एव अचरत् सर्वत्र तेजसा चरति । तथा वृषा अपां वर्षकः पृश्निः सूर्यः शुक्रं पयः ऊधः अन्तरिक्षं मेघं वा दुदुहे दोग्धि ॥ अक्तः । 'अञ्जू व्यक्तिम्रक्षणगतिषु'। कर्मणि निष्ठा । दुदुहे । द्विकर्मकोऽयं धातुः । ऊधः । 'अकथितं च' इति कर्मसंज्ञा ॥ ॥ २१॥

**ऋतेनाद्रिं व्यसन्भिदन्तः समङ्गिरसो नवन्त गोभिः ।**
**शुनं नरः परि षदन्नुषासमाविः स्वरभवज्जाते अग्नौ ॥ ११ ॥**

ऋतेन । अद्रिम् । वि । असन् । भिदन्तः । सम् । अङ्गिरसः । नवन्त । गोभिः ।
शुनम् । नरः । परि । सदन् । उषसम् । आविः । स्वः । अभवत् । जाते । अग्नौ ॥ ११ ॥

अङ्गिरसः मेधातिथिप्रभृतयः ऋतेन यज्ञेन हेतुना गवां निरोधकम् अद्रिं पर्वतं भिदन्तः विदारयन्तः सन्तः व्यसन् व्यक्षिपन्[3] । ततस्ते गोभिः सं नवन्त समगच्छन्त । नरः कर्मणां नेतारः ते शुनं सुखेन उषसं परि[4] सदन्[4] परितः प्राप्नुवन् । ततः स्वः सूर्योऽपि आविः अभवत् । सर्वमेतत् अग्नौ त्वयि जाते मथनेन[5] निष्पादिते सत्यभूदिति ॥ असन् । अस्यतेर्लुङि च्लेः 'अस्यतिवक्ति०' इत्यादिना अङादेशः । 'अनित्यमागमशासनम्[6]' इति थुगभावः ॥

**ऋतेन देवीरमृता अमृक्ता अर्णोभिरापो मधुमद्भिरग्ने ।**
**वाजी न सर्गेषु प्रस्तुभानः प्र सदमित्स्रवितवे दधन्युः ॥ १२ ॥**

ऋतेन । देवीः । अमृताः । अमृक्ताः । अर्णःऽभिः । आपः । मधुमत्ऽभिः । अग्ने ।
वाजी । न । सर्गेषु । प्रऽस्तुभानः । प्र । सदम् । इत् । स्रवितवे । दधन्युः ॥ १२ ॥

हे अग्ने अमृताः अमरणहेतवः अमृक्ताः रक्षःप्रभृतिभिरबाधिताः मधुमद्भिः माधुर्योपेतैः अर्णोभिः उदकैर्युक्ताः देवीः देव्यो नद्यः ऋतेन सत्येन यज्ञेन वा हेतुना आपः आप्तव्याः सत्यः सदमित् सदैव स्रवितवे स्रवणाय प्र दधन्युः प्रगच्छन्ति । तत्र दृष्टान्तः । वाजी न । यथा सर्गेषु प्रेरणेषु प्रस्तुभानः प्रोत्साह्यमानः[7] अश्वः प्रगच्छति तद्वत् ॥ आपः । 'आप्लृ व्याप्तौ'। 'आप्नोतेः क्विप् ह्रस्वश्च' इति कर्मणि क्विप् । 'अप्तृन्०' इत्यादिना जसि दीर्घः । प्रस्तुभानः । स्तोभतिरर्चतिकर्मा ॥

---

१. त–स्म । २. ल–चिदिति । ३. ख-घ-च-ण-त-न-प-फ-भ-स–प्रक्षिपन् । ४. ख-घ-च-ण–परिषदन् । ५. च–मन्थनेन । ६. त–अनित्यमागमानुशासनम् । ७. त–प्रसह्यमानः ।

मा कस्य॑ य॒क्षं सद॒मिद्धु॒रो गा॒ मा वे॒शस्य॑ प्रमिन॒तो मापेः ।
मा भ्रातु॑रग्ने॒ अनृ॑जोर्ऋ॒णं वे॒र्मा सख्यु॒र्दक्षं॑ रि॒पोर्भु॑जेम ॥ १३ ॥

मा । कस्य॑ । य॒क्षम् । सद॑म् । इत् । हु॒रः । गाः॒ । मा । वे॒शस्य॑ । प्र॒ऽमि॒न॒तः । मा । आ॒पेः ।
मा । भ्रातु॑ः । अ॒ग्ने॒ । अनृ॑जोः । ऋ॒णम् । वे॒ः । मा । सख्यु॑ः । दक्ष॑म् । रि॒पोः । भु॒जे॒म ॥ १३ ॥

हे अग्ने हुरः अस्माकं हिंसकस्य कस्य कस्यचिदपि जन्तोः यक्षं यज्ञं सदमित् सदैव मा गाः कदाचिदपि मा गच्छ । प्रमिनतः हिंसकस्य वेशस्य प्रातिवेश्यस्य[1] यज्ञं मा गाः । तथा आपेः मद्व्यतिरिक्तस्य बन्धोर्यज्ञं मा गच्छ। तथा अनृजोः कुटिलचित्तस्य भ्रातुः ऋणम् ऋणवद्देयं हविः मा वेः मा कामयेथाः । तथा वयमपि सख्युः मित्रस्य रिपोः शत्रोः दक्षं भोगसमर्थं धनं मा भुजेम मा भुञ्जीमहि । किंतु त्वया दत्तं धनं भुञ्जीमहि॥ हुरः। 'हृ प्रसह्यकरणे'। क्विप्। 'बहुलं छन्दसि' इति उत्वम्। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम् । भुजेम । 'भुज पालनाभ्यवहारयोः'। आशीर्लिङि व्यत्ययेन परस्मैपदम् । 'लिङ्याशिष्यङ्' इति अङ्प्रत्ययः ॥

रक्षा॑ णो अग्ने॒ तव॒ रक्ष॑णेभी रारक्षा॒णः सु॑मख प्रीणा॒नः ।
प्रति॑ ष्फुर॒ वि रु॑ज वी॒ड्वंहो॑ ज॒हि रक्षो॒ महि॑ चिद्वावृधा॒नम् ॥ १४ ॥

रक्ष॑ । नः॒ । अ॒ग्ने॒ । तव॑ । रक्ष॑णेभिः । र॒र॒क्षा॒णः । सु॒ऽम॒ख॒ । प्री॒णा॒नः ।
प्रति॑ । स्फु॒र॒ । वि । रु॒ज॒ । वी॒ळु । अंहः॑ । ज॒हि । रक्षः॑ । महि॑ । चि॒त् । व॒वृ॒धा॒नम् ॥ १४ ॥

सुमख सुयज्ञ सुधनेति वा हे अग्ने ररक्षाणः भृशमस्माकं रक्षिता प्रीणानः हविर्भिः प्रीतः त्वं तव रक्षणेभिः त्वदीयैरवनैः नः अस्मान् रक्ष पालय । प्रति स्फुर अस्मान् प्रति दीप्यस्व। वीळु दृढम् अंहः पापं वि रुज विशेषेण नाशय। किंच महि चित् महदपि[2] वावृधानं वर्धमानं वृद्धं वा बाधकं रक्षः जहि ॥ नः । 'नश्च धातुस्थोरुषुभ्यः' इति संहितायां णत्वम् । ररक्षाणः । रक्षेर्यङ्लुकि चानशि रूपम् । जहि । 'हन हिंसागत्योः'। लोटि 'हन्तेर्जः' इति जादेशः। आभाच्छास्त्रीयस्यासिद्धत्वात् 'अतो हेः' इति लुक् न भवति ॥

ए॒भिर्भ॑व सु॒मना॑ अग्ने अ॒र्कैरि॒मान्त्स्पृ॑श॒ मन्म॑भिः शू॒र॒ वाजा॑न् ।
उ॒त ब्रह्मा॑ण्यङ्गिरो जुषस्व॒ सं ते॑ श॒स्तिर्दे॒ववा॑ता जरेत ॥ १५ ॥

ए॒भिः । भ॒व॒ । सु॒ऽमनाः॑ । अ॒ग्ने॒ । अ॒र्कैः । इ॒मान् । स्पृ॒श॒ । मन्म॑ऽभिः । शू॒र॒ । वाजा॑न् ।
उ॒त । ब्रह्मा॑णि । अ॒ङ्गि॒रः॒ । जु॒ष॒स्व॒ । सम् । ते॒ । श॒स्तिः । दे॒वऽवा॑ता । ज॒रे॒त॒ ॥ १५ ॥

१. ख-घ-च-ण-प-फ-भ—जनस्य; त—जनस्य प्रातिवेशस्य । २. ख-घ-च-ण-त-न-भ-ल—महत् ।

हे ˅अग्ने ˅एभिः मदीयैः[1] ˅अर्कैः अर्चनीयैः शस्त्रैः ˅सुमनाः शोभनमनस्कः ˅भव। हे ˅शूर ˅इमान् अस्मदीयान् हविर्लक्षणान् ˅वाजान् अन्नानि[2] ˅मन्मभिः स्तोत्रैः सह ˅स्पृश प्रतिगृहाण। ˅उत अपि च ˅अङ्गिरः। अङ्गति हवींषि प्राप्नोतीत्यङ्गिरा अग्निः। यद्वा। 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (ऐ. ब्रा. ३. ३४) इति ब्राह्मणम्। तेषामङ्गिरसां कारणत्वादग्नेरङ्गिरस्त्वम्। तत्कारणत्वे[3] च मन्त्रः 'ये अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे' (ऋ. सं. १०. ६२. ५) इति। तादृश हे अग्ने ˅ब्रह्माणि मन्त्रान् ˅जुषस्व सेवस्व। ˅देववाता। देवार्थं[4] गता देवान् स्तोतुं प्राप्तेत्यर्थः। तादृशी ˅शस्तिः शंसनं ˅ते त्वां ˅सं ˅जरेत संवर्धयतु॥ स्पृश। 'स्पृश संस्पर्शने'। तुदादिः। देववाता। 'वा गतिगन्धनयोः'। 'गत्यर्थाकर्मक॰' इति कर्तरि क्तः। देवः। पचाद्यजन्तः। 'क्ते च' इति चतुर्थ्यन्तस्य पदस्य प्रकृतिस्वरः॥

**ए॒ता विश्वा॑ वि॒दुषे॒ तुभ्यं॑ वेधो नी॒थान्य॑ग्ने नि॒ण्या वचां॑सि।**

**नि॒वच॑ना क॒वये॒ काव्या॒न्यशं॑सिषं म॒तिभि॒र्विप्र॑ उ॒क्थैः॥ १६॥**

ए॒ता। विश्वा॑। वि॒दुषे॑। तुभ्य॑म्। वे॒धः॒। नी॒थानि॑। अग्ने॑। नि॒ण्या। वचां॑सि।

नि॒ऽवच॑ना। क॒वये॑। काव्या॑नि। अशं॑सिषम्। म॒तिऽभिः॑। विप्रः॑। उ॒क्थैः॥ १६॥

˅वेधः विधातर्हे ˅अग्ने ˅विदुषे कर्मविषयज्ञानवते ˅कवये क्रान्तदर्शिने ˅तुभ्यं ˅नीथानि फलप्रापकाणि[5] ˅निण्या नेयार्थानि गूढानि ˅निवचना नितरां वक्तव्यानि ˅काव्यानि कविभिर्मेधाविभिः कृतानि ˅एता ˅विश्वा एतानि[6] सर्वाणि ˅वचांसि वाक्यानि ˅मतिभिः मननीयैः स्तोत्रैः ˅उक्थैः शस्त्रैश्च सहितः ˅विप्रः प्राज्ञोऽहम् ˅अशंसिषम् अवोचम्। तानि सेवस्वेत्यर्थः॥ ॥ २२॥

'कृणुष्व' इति पञ्चदशर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभं रक्षोहाग्निदेवताकम्। 'कृणुष्व पञ्चोना राक्षोघ्नम्' इत्यनुक्रमणिका। प्रातरनुवाकाश्विनशस्त्रयोः सूक्तविनियोगः। प्रवर्ग्येऽभिष्टवे 'कृणुष्व पाजः' इत्याद्याः पञ्चर्चो विनियुक्ताः। सूत्रितं च— कृणुष्व पाजः प्रसितिं न पृथ्वीमिति पञ्च' (आश्व. श्रौ. ४. ६) इति॥

**कृ॒णु॒ष्व पाजः॒ प्रसि॑तिं॒ न पृ॒थ्वीं या॒हि राजे॒वाम॑वाँ॒ इभे॑न।**

**तृ॒ष्वीमनु॒ प्रसि॑तिं द्रूणा॒नोऽस्ता॑सि॒ विध्य॑ र॒क्षस॒स्तपि॑ष्ठैः॥ १॥**

कृ॒णु॒ष्व। पाजः॑। प्रऽसि॑तिम्। न। पृ॒थ्वीम्। या॒हि। राजा॑ऽइव। अम॑ऽवान्। इभे॑न।

तृ॒ष्वीम्। अनु॑। प्रऽसि॑तिम्। द्रू॒णा॒नः। अस्ता॑। अ॒सि॒। विध्य॑। र॒क्षसः॑। तपि॑ष्ठैः॥ १॥

हे ˅अग्ने ˅पाजः तेजःसंघं ˅कृणुष्व कुरुष्व विस्तारय। तत्र दृष्टान्तः। ˅प्रसितिं ˅न। यथा मृगयुः ˅पृथ्वीं विस्तीर्णां प्रसितिं प्रकर्षेण सीयते बध्यत इति प्रसितिर्वागुरा। तादृशीं प्रसितिं पक्षिग्रहणार्थं

---

१. घ-ण-न-भ-स—मदनीयैः; च-फ—भवदीयैः; प—महनीयैः। २. न-ल-स—'अन्नानि' नास्ति। ३. ख-च—तत्कारणम्; न-भ-स—तत्कारणे। ४. ख-च-ण-न-फ-भ-स—देवती(ता)र्थम्। ५. ख-घ-च-ण-प-फ-भ—प्रापकाणि। ६. ख-च-ण-भ—एतानि विश्वानि।

वनगहनेषु प्रसारयति तद्वत् त्वमपि रक्षांसि हन्तुं महद्बलमग्रतस्तनुष्व। ᵛइभेन गतभयेन तेजःसंघेन युक्तस्त्वं ᵛयाहि रक्षांसि हन्तुं गच्छ। तत्र दृष्टान्तः। ᵛराजेव। यथा ᵛअमवान्। राज्ञा[1] सह वर्तते इत्यमः अमात्यः। तद्वान्। यद्वा। अमोऽमनं रोगः। शत्रूणां कर्तव्यै रोगैस्तद्वान्। शत्रूणां रोगभूत इत्यर्थः। राजा ᵛइभेन गजेन युक्तः सन् परबलं प्रतिगच्छति तद्वत्। किंच ᵛतृष्वीम्। तृष्वीति क्षिप्रनाम। क्षिप्रगामिनीं ᵛप्रसितिं प्रकृष्टां सेनाम् ᵛअनु ᵛद्रूणानः अनुगच्छन्। यद्वा। तृष्वीमिति तृतीयार्थे द्वितीया। तृष्व्या क्षिप्रया प्रसित्या अनुबद्धया[2] संततया गत्या द्रूणानः परसेनां हिंसन् ᵛअस्ता शत्रूणां क्षेप्ता ᵛअसि। ᵛतपिष्ठैः तप्तृतमैः[3] तेजोभिः ᵛरक्षसः राक्षसान् ᵛविध्य ताडय। अत्र निरुक्तम्– 'कुरुष्व पाजः। पाजः पालनात्। प्रसितिमिव पृथ्वीम्। प्रसितिः प्रसहनात्तन्तुर्वा जालं वा। याहि राजेवामात्यवानभ्यमनवान्स्ववान्वेरावता गणेन गतभयेन हस्तिनेति वा। तृष्व्यानु प्रसित्या द्रूणानः। तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वा। अस्तासि विध्य रक्षसस्तपिष्ठैस्तप्ततमैः तृप्ततमैः[4] तपिष्ठतमैरिति वा' (निरु. ६. १२) इति॥ कृणुष्व। 'कृवि हिंसाकरणयोः'। लोटि 'धिन्विकृण्व्योर च' इत्युप्रत्ययः। व्यत्ययेनात्मनेपदम्। विकरणस्वरस्तु सतिशिष्टोऽपि लसार्वधातुकस्वरं न बाधते इति लसार्वधातुकस्वरः (पा. म. ६. १. १५८. ११)॥

तव॑ भ्र॒मास॑ आशु॒या प॑त॒न्त्यनु॑ स्पृश धृष॒ता शोशु॑चानः।
तपूं॑ष्यग्ने जु॒ह्वा॑ पत॒ङ्गानसं॑दितो॒ वि सृ॑ज॒ विष्व॑गु॒ल्काः॥ २॥

तव॑। भ्र॒मासः॑। आ॒शु॒ऽया। प॒त॒न्ति॒। अनु॑। स्पृ॒श॒। धृ॒ष॒ता। शोशु॑चानः।
तपूं॑षि। अ॒ग्ने॒। जु॒ह्वा॑। प॒त॒ङ्गान्। अस॑म्ऽदितः। वि। सृ॒ज॒। विष्व॑क्। उ॒ल्काः॥ २॥

हे ᵛअग्ने ᵛतव संबन्धिनः ᵛभ्रमासः भ्राम्यन्तः ᵛआशुया शीघ्रगतयो रश्मयः ᵛपतन्ति सर्वतः प्रसरन्ति। ᵛशोशुचानः भृशं दीप्यमानस्त्वं ᵛधृषता अभिभवसमर्थेन तेजःसंघेन शत्रून् ᵛअनु क्रमेण ᵛस्पृश दह। दहनोपायं दर्शयति। ᵛअसंदितः परैरनिरुद्धस्त्वं ᵛतपूंषि तापकानि तेजांसि ᵛपतङ्गान् पतनशीलान् विस्फुलिङ्गान् ᵛउल्काः चेत्येतत्त्रितयं ᵛजुह्वा। हूयन्तेऽस्यामाहुतय इति जुहूर्ज्वाला। तया ᵛविष्वक् सर्वतः ᵛवि ᵛसृज प्रसारय॥ आशुया। आशुशब्दाज्जसः 'सुपां सुलुक्°' इति याजादेशः। चित्स्वरः। धृषता। 'धृष[5] प्रसहने'। चुरादिराधृषीयः। व्यत्ययेन शः। 'शतुरनुमः°' इति विभक्तेरुदात्तत्वम्। जुह्वा। 'जुहोतेर्दीर्घश्च' इति क्विप् द्विर्वचनं दीर्घत्वम्। 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वस्य 'नोङ्धात्वोः' इति प्रतिषेधे 'उदात्तस्वरितयोर्यणः°' इति स्वरितत्वम्। असंदितः। 'दो अवखण्डने'। कर्मणि निष्ठा। 'द्यतिस्यति°' इति इत्वम्। नञा[6] समासे[6] तस्य स्वरः॥

---

१. ख-ग-च-ण-न-स–राजा। २. ख-ग-च-ण-भ–अनुवृद्धया। ३. ख-ग-च-ण-स–तप्ततमैः। ४. न-ल-स–'तृप्ततमैः' नास्ति। ५. ख-ग-च-त-न-भ-ल-स–धृषु। ६. ख-ग-च-ण-भ–नञ्समासे।

प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥ ३ ॥

प्रति । स्पशः । वि । सृज । तूर्णिऽतमः । भव । पायुः । विशः । अस्याः । अदब्धः ।

यः । नः । दूरे । अघऽशंसः । यः । अन्ति । अग्ने । माकिः । ते । व्यथिः । आ । दधर्षीत् ॥ ३ ॥

हे ˅अग्ने ˅तूर्णितमः त्वरिततमस्त्वं ˅स्पशः परबाधकान् रश्मीन् चारान्[1] वा सत्यानृतविवेकार्थं ˅वि ˅सृज शत्रून् ˅प्रति विशेषेण प्रेरय । ˅अदब्धः केनाप्यहिंसितस्त्वम् ˅अस्याः त्वदीयायाः ˅विशः अस्मदादिकायाः प्रजायाः ˅पायुः पालकः ˅भव । कस्मात्तद्रक्षणमित्यपेक्षायामाह । ˅नः अस्माकं ˅दूरे ˅यः ˅अघशंसः । अघं पापात्मकं शंसनमभिलाषः कीर्तनं वा[2] यस्य सोऽघशंसः । ˅यः च अघशंसः ˅अन्ति अस्माकं समीपे तिष्ठति तस्मादुभयविधाच्छत्रोः पालको भव । किंच ˅ते त्वत्संबधिनोऽस्मान् ˅माकिः न कश्चिदपि ˅व्यथिः बाधको राक्षसः ˅आ ˅दधर्षीत् आधर्षयतु । अस्माकं कश्चिदपि परिभवं मा करोत्वित्यर्थः ॥ अन्ति । अन्तिकस्य कादिलोप आद्युदात्तत्वं च । अग्ने । पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् । माकिष्टे इति संहितायां ‘ युष्मत्तत्ततक्षुःष्वन्तःपादम् ’ इति षत्वम् । दधर्षीत् । ‘ धृष प्रसहने ’ । लङि ‘ बहुलं छन्दसि ’ इति शपः श्लुः । ‘ बहुलं छन्दसि ’ इति तिप ईडागमः । निघातः ॥

उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ ४ ॥

उत् । अग्ने । तिष्ठ । प्रति । आ । तनुष्व । नि । अमित्रान् । ओषतात् । तिग्मऽहेते ।

यः । नः । अरातिम् । सम्ऽइधान । चक्रे । नीचा । तम् । धक्षि । अतसम् । न । शुष्कम् ॥ ४ ॥

˅तिग्महेते । तिग्माः[3] तीक्ष्णाः* हेतयो ज्वाला यस्य स तथोक्तः । तादृश[3] हे ˅अग्ने ˅उत् ˅तिष्ठ रक्षोहननार्थमुद्यतो भव । शत्रून् ˅प्रत्या ˅तनुष्व ज्वालासंघं विस्तारय । तैस्तेजःसंघैः ˅अमित्रान् शत्रून् ˅नि ˅ओषतात् नितरां दह । हे ˅समिधान समिद्भिर्दीप्यमानाग्ने ˅यः पुमान् ˅नः अस्माकम् ˅अरातिम् । भावप्रधाननिर्देशः । अरातित्वं शात्रवं ˅चक्रे कुरुते । अरातिमदानं वा कुरुते । ˅तं पुमांसं ˅नीचा न्यग्भूतं ˅धक्षि दह । तत्र दृष्टान्तः । ˅अतसं ˅न । यथा ˅शुष्कम् अनार्द्रम् अतसं काष्ठं दहसि तद्वत् ॥ ओषतात् । ‘ उष दाहे ’ । लोटि हेः ‘ तुह्योः° ’ इति तातङादेशः । धक्षि । दहेर्लोटि ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ हो ढः ’ इति ढत्वम् । भष्भावः । ‘ षढोः कः सि ’ इति कत्वम् । निघातः ॥

---

१. ख-ग-च-ण-न-भ–परान् । २. ख-ग-घ-च-ण-न-भ-स–‘ वा ’ नास्ति । ३. ख-ग-घ-च-ण-प-फ-भ–तीक्ष्णज्वाल । * स–तीव्राः ।

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥ ५ ॥

ऊर्ध्वः । भव । प्रति । विध्य । अधि । अस्मत् । आविः । कृणुष्व । दैव्यानि । अग्ने ।
अव । स्थिरा । तनुहि । यातुऽजूनाम् । जामिम् । अजामिम् । प्र । मृणीहि । शत्रून् ॥५॥

हे ᵛअग्ने ᵛऊर्ध्वो ᵛभव रक्षोहननार्थमुद्युक्तो भव । ᵛअस्मत् अस्मत्तः ᵛअधि अधिकान् राक्षसान् ᵛप्रति ᵛविध्य प्रत्येकं ताडय । ᵛदैव्यानि तेजांसि च[1] ᵛआविष्कृणुष्व आविष्कुरु । एतत्त्रयं विधाय ᵛयातुजूनां यातयितुं प्राणिनः क्लेशयितुं ये जवं कुर्वन्ति तेषां यातुधानानां ᵛस्थिरा दृढानि धनूंषि ᵛअव ᵛतनुहि अवगतज्यानि कुरु । किंच ᵛजामिं[2] बन्धुम् ᵛअजामिम् अबन्धुम्[2] एतादृशान्[3] ᵛशत्रून् ᵛप्र ᵛमृणीहि प्रजहि । यद्वा । जामिं यः पूर्वं प्रहृतस्तम् । अजामिं पूर्वमप्रहृतम् । एवंभूतान् शत्रून् जहि । प्रहृतोऽयम् इत्युपेक्षां[4] मा कृथाः ॥ आविष्कृणुष्व इत्यत्र संहितायाम् 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् । तनुहि । तनोतेर्लोटि 'उतश्च प्रत्ययाच्छन्दसि वावचनम्' इति हेर्लुगभावः । यातुजूनाम् । 'जु गतौ' । 'क्विब्वचि०' इत्यादिना क्विप्[5] । दीर्घः[5] । आमि छान्दसो नुम् । मृणीहि । 'मृङ् प्राणत्यागे' । अन्तर्भावितण्यर्थस्य लोटि 'बहुलं छन्दसि' इति विकरणस्य श्ना । निघातः ॥ ॥ २३ ॥

स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥ ६ ॥

सः । ते । जानाति । सुऽमतिम् । यविष्ठ । यः । ईवते । ब्रह्मणे । गातुम् । ऐरत् ।
विश्वानि । अस्मै । सुऽदिनानि । रायः । द्युम्नानि । अर्यः । वि । दुरः । अभि । द्यौत् ॥६॥

ᵛयविष्ठ युवतम यद्वा देवानां हवींषि मिश्रयितृतम हे अग्ने ᵛयः पुमान् ᵛईवते गमनवते कल्याणहेतुभूतागमनाय[6] ᵛब्रह्मणे परिवृढाय तुभ्यं ᵛगातुम् । । गीयते उच्चार्यते इति गातुः स्तोत्रम् । तत् ᵛऐरत् प्रेरयति । ᵛसः पुमान् ᵛते तव ᵛसुमतिं कल्याणकरीमनुग्रहात्मिकां बुद्धिं ᵛजानाति लभत इत्यर्थः । ᵛअस्मै स्तोत्रं कृतवते यजमानाय तदर्थं ᵛविश्वानि सर्वाणि[7] ᵛसुदिनानि शोभनानि[8] दिनानि ᵛरायः धनानि ᵛद्युम्नानि द्युतिमन्ति रत्नकनकादीनि ᵛदुरः गृहान् ᵛअभि अभिलक्ष्य ᵛअर्यः यज्ञानां स्वामी त्वं ᵛवि ᵛद्यौत् विशेषेण द्योतस्व । केचिदत्र वाक्यभेदमङ्गीकुर्वते । स्तोत्रं[8] कृतवते यजमानाय विश्वानि सुदिनानि अभ्युदयकारीणि भवन्ति । रायः । रान्ति क्षीरादीनीति रायो गोधनानि[9] । द्युम्नानि द्योतमानानि कनकादीनि चास्मै भवन्ति । अर्यः कर्मणामनुष्ठाता सः[10] यजमानो दुरो गृहानभि

---

१. ख-ग-घ-च-ण-त-न-प-फ-भ-'च' नास्ति । २. न-ल-स-जामिमजामिं बन्धुमबन्धुम् । ३. ख-ग-तादृशान्; न-ल-स-'एतादृशान्' नास्ति । ४. न-भ-ल-स-इत्यपेक्षाम् । ५. ण-ल-क्विब्दीर्घौ । ६. ख-ग-घ-च-ण-त-प-फ-भ-स-कल्याणहेतुभूतगमनाय । ७. न-ल-स-'सर्वाणि' नास्ति । ८. ख-ग-घ-च-ण-भ-'शोभनानि दिनानि' नास्ति । ९. च-ल-धनानि । १०. ख-ग-च-ण-न-भ-स-'सः' नास्ति ।

वि[1] द्यौत् विशेषेण द्योतते॥ ईवते। 'ई गतौ'। क्विप्। 'तदस्यास्ति°' इति मतुप्। 'छन्दसीरः' इति मतुपो वत्वम्। ऐरत्। 'ईर गतौ'। यद्वृत्तयोगादनिघातः[2]। अर्यः। 'ऋ गतौ'। 'अर्यः स्वामिवैश्ययोः' इति यत्प्रत्ययान्तो निपातितः[3]। स्वामिन्यन्तोदात्तत्वम्। द्यौत्। 'द्युत दीप्तौ'। छान्दसे लुङि 'द्युद्भ्यो लुङि' इति परस्मैपदम्। 'बहुलं छन्दसि' इत्यडभावः॥

**सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः।**
**पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः॥ ७॥**

सः। इत्। अग्ने। अस्तु। सुऽभगः। सुऽदानुः। यः। त्वा। नित्येन। हविषा। यः। उक्थैः।
पिप्रीषति। स्वे। आयुषि। दुरोणे। विश्वा। इत्। अस्मै। सुऽदिना। सा। असत्। इष्टिः॥७॥

हे अग्ने यः पुमान् नित्येन यावज्जीवं संकल्पितेनाग्निहोत्रादिसाधनभूतेन हविषा त्वा त्वां पिप्रीषति प्रीणयितुमिच्छति, यः च उक्थैः शस्त्रैः प्रीणयितुमिच्छति सेत् स एव पुमान् सुभगः शोभनधनः[4] सौभाग्यवान् वा सुदानुः शोभनदानोपेतश्च अस्तु। किंच दुरोणे दुरवने कृच्छ्रलभ्ये स्वे स्वकीये आयुषि शतवर्षाख्ये जीवने[5] तिष्ठतु[6]। अस्मै यजमानाय विश्वा सर्वाणि सुदिना शोभनानि दिनानि भवन्तु। अस्य सा इष्टिः स यज्ञः असत् फलसाधनसमर्थो भवतु॥ पिप्रीषति। 'प्रीञ्[7] तर्पणे'। 'धातोः कर्मणः°' (पा. सू. ३. १. ७) इति सन्। असत्। अस्तेर्लेट्यडागमः। इष्टिः। 'मन्त्रे वृष°' इत्यादिना क्तिन्नुदात्तः॥

उखासंभरणीयेष्टावग्नेः क्षत्रभृतः 'अर्चामि ते' इति याज्या। सूत्रितं च— 'अर्चामि ते सुमतिं घोष्यर्वागितीदंप्रभृतिकर्मणाम्' (आश्व. श्रौ. ४. १) इति॥

**अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः।**
**स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून्॥ ८॥**

अर्चामि। ते। सुऽमतिम्। घोषि। अर्वाक्। सम्। ते। ववाता। जरताम्। इयम्। गीः।
सुऽअश्वाः। त्वा। सुऽरथाः। मर्जयेम। अस्मे इति। क्षत्राणि। धारयेः। अनु। द्यून्॥ ८॥

हे अग्ने ते तव सुमतिम् अनुग्रहकरीं[8] शोभनां बुद्धिम् अर्चामि[9] पूजयामि। ववाता[10] पुनः-पुनस्त्वाम्[11] अभिगच्छन्ती इयम् उच्यमाना गीः वाक् घोषि घोषयुक्तं यथा भवति तथा अर्वाक्

---

१. ख-ग-घ-च-ण-न-भ-स-'वि' नास्ति। २. ख-ग-च-ण-त-न-भ-ल-स-'यद्वृत्तयोगादनिघातः' नास्ति। ३. ख-ग-च-ण-फ-भ-ल-निपातः। ४. त-ल-शोभनधनयुक्तः। ५. त-न-फ-भ-जीवने निमित्ते सति यस्त्वां प्रीणयति सः (त-अस्तु) सुभगोऽस्तु। यद्वा यस्त्वां प्रीणयति स्वकीये गृहे स्व आयुषि शतवर्षाख्ये जीवने। ६. ण-अस्तु तिष्ठतु; भ-तिष्ठतु अस्तु। ७. ख-ग-च-ण-त-न-भ-प्रीङ्। ८. ख-ग-न-भ-ल-स-अनुग्रहकराम्। ९. ण-अर्चामि अर्चयामि। १०. ण-वावाता। ११. ख-ग-च-प-फ-भ-पुनः त्वा त्वाम्; घ-ण-पुनःपुनस्त्वा त्वाम्।

त्वदभिमुखं ते त्वां सं जरतां स्तौतु[१] । वयमपि स्वश्वाः शोभनाश्वोपेताः सुरथाः च । उपलक्षणमेतत् । पुत्रपौत्रादिभिः सहिताः सन्तः त्वां[२] मर्जयेम अलंकुर्याम । परिचरेमेति यावत् । त्वं तु अनु द्यून् अन्वहम् अस्मे अस्मासु क्षत्राणि धनानि धारयेः निधेहि ॥ घोषि । 'घुष[३] शब्दने'। औणादिक इन् । नित्वादाद्युदात्तः। वावाता[४]। 'वा गतिगन्धनयोः' इत्यस्य यङ्लुगन्तस्य निष्ठायां[५] रूपम् । मर्जयेम । 'मृजू शौचालंकारयोः'। ण्यन्तस्य लिङि रूपम् । वृद्ध्यभावश्छान्दसः ॥

इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून् ।
क्रीळन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानाम् ॥ ९ ॥

इह । त्वा । भूरि । आ । चरेत् । उप । त्मन् । दोषाऽवस्तः । दीदिऽवांसम् । अनु । द्यून् ।
क्रीळन्तः । त्वा । सुऽमनसः । सपेम । अभि । द्युम्ना । तस्थिऽवांसः । जनानाम् ॥ ९ ॥

हे अग्ने इह रक्षोहननाख्ये कर्मणि यद्वा अस्मिन् लोके यः पुरुषः दोषावस्तः रात्रावहनि च दीदिवांसं दीप्यमानं त्वा[६] त्वाम् अनु द्यून् अन्वहं त्मन् आत्मना स्वयमेव उप समीपे भूरि भूयिष्ठं यथा भवति तथा आ चरेत् परिचरति। तस्माद्वयमपि जनानां शत्रूणां द्युम्ना द्युम्नानि धनानि अभि तस्थिवांसः त्वत्प्रसादादात्मसात्कुर्वन्तोऽत एव क्रीळन्तः[७] स्वे स्वे गृहे पुत्रपौत्रादिभिः सह संक्रीडमानास्तथा सुमनसः शोभनमनस्काः सन्तस्त्वां सपेम परिचरेम । यद्वा । दोषावस्तरिति संबुद्धिः । दोषाया रात्रिकृतस्य तमसो वस्तराच्छादयितर्निवारयितः ॥ त्मन् । आत्मन्शब्दस्य तृतीयायाः 'सुपां सुलुक्°' इति लुक् । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः । दोषावस्तः । द्वन्द्वपक्षे 'कार्तकौजपादयश्च' इति पूर्वपदप्रकृतिस्वरः । संबुद्धिपक्षे आमन्त्रितस्य पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् । सपेम । 'षप समवाये'। लिङि रूपम् । निघातः ॥

यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥ १० ॥

यः । त्वा । सुऽअश्वः । सुऽहिरण्यः । अग्ने । उपऽयाति । वसुऽमता । रथेन ।
तस्य । त्राता । भवसि । तस्य । सखा । यः । ते । आतिथ्यम् । आनुषक् । जुजोषत् ॥ १० ॥

हे अग्ने यः पुमान् स्वश्वः शोभनाश्वोपेतः सुहिरण्यः यागयोग्यधनोपेतः वसुमता व्रीह्यादिधनयुक्तेन रथेन सहितः सन् त्वा[८] त्वाम्[८] उपयाति परिचरणार्थं तव समीपं गच्छति । तस्य पुंसः त्राता सर्वदुरितेभ्यो रक्षकः भवसि । यः च पुमान् ते तव आतिथ्यम् अतिथियोग्यां पूजाम् आनुषक् अनुक्रमेण जुजोषत् प्रापयति तस्य पुंसः सखा तदुचितफलप्रदानेनोपकर्ता भवसि ॥

---

१. ख-ग-घ-च-ण-त-भ–स्तोतुं संसरताम् ; स–संसरताम् । २. ण–त्वा त्वाम् । ३. च-फ–घुषि । ४. ल–ववाता । ५. ख-ग-च-ण-न-भ-स–'निष्ठायां' नास्ति । ६. न-ल-स–'त्वा' नास्ति । ७. ख-ग-च-ण-न-भ-स–क्रीडन्तः । ८. ख-ग-घ-च-भ–त्वा; त-न-ल-स–'त्वा त्वां' नास्ति ।

उपयाति । ' सह सुपा ' इत्यत्र सहेति योगविभागात् समासः । तिपः पित्वादनुदात्तत्वे धातुस्वरः । ' तिङि चोदात्तवति ' इति गतेर्निघातः । आतिथ्यम् । अतिथिशब्दात् तादर्थ्ये ' अतिथेर्ञ्यः ' इति ञ्यप्रत्ययः । प्रत्ययस्वरः । जुजोषत् । जोषयतेर्लङि ' बहुलं छन्दसि ' इति शपः श्लुः । अडागमः । ' छन्दस्युभयथा ' इति तिप आर्धधातुकत्वात् णिलोपः । ' अभ्यस्तानामादिः ' इत्याद्युदात्तः[1] ॥ ॥ २४ ॥

म॒हो रु॑जामि ब॒न्धुता॒ वचो॑भि॒स्तन्मा॑ पि॒तुर्गोत॑मा॒दन्वि॑याय ।
त्वं नो॑ अ॒स्य वच॑सश्चिकिद्धि॒ होत॑र्यविष्ठ सुक्रतो॒ दमू॑नाः ॥ ११ ॥

म॒हः । रु॒जा॒मि॒ । ब॒न्धुता॑ । वचः॑ऽभिः । तत् । मा॒ । पि॒तुः । गोत॑मात् । अनु॑ । इ॒या॒य॒ ।
त्वम् । न॒ः । अ॒स्य । वच॑सः । चि॒कि॒द्धि॒ । होत॒रिति॑ । य॒वि॒ष्ठ॒ । सु॒क्र॒तो॒ इति॑ सुऽक्रतो । दमू॑नाः ॥ ११ ॥

हे ᵛहोतः देवानामाह्वातः ᵛयविष्ठ युवतम ᵛसुक्रतो शोभनप्रज्ञ हे अग्ने ᵛवचोभिः त्वदुद्देशेन कृतैः स्तोत्रैः समुपजाता येयं ᵛबन्धुता बन्धुभावस्तया बन्धुतया ᵛमहः महतो राक्षसान् ᵛरुजामि भनज्मि[2] । ᵛतत् तादृशं स्तोत्रात्मकं वचः ᵛपितुः उत्पादयितुः ᵛगोतमात् ऋषेः सकाशात्[3] ᵛमा मां[4] वामदेवं[4] ᵛअन्वियाय प्राप्तम्[5] । ᵛदमूनाः दान्तमना दानमना वा शत्रूणामुपक्षपयिता वा तादृशः ᵛत्वं ᵛनः अस्मदीयस्य ᵛअस्य ᵛवचसः स्तोत्रात्मकमेतद्वाक्यं ᵛचिकिद्धि जानीहि ॥ चिकिद्धि । ' कित ज्ञाने ' । जौहोत्यादिकः । लोटि रूपम् । होतः । पादादित्वात् षाष्ठिकमाद्युदात्तत्वम् । इतरयोस्तु ' नामन्त्रिते समानाधिकरणे° ' इति प्रथमस्य अविद्यमानवद्भावनिषेधात् अपादादित्वेन निघातः ॥

अस्व॑प्नजस्त॒रण॑यः सु॒शेवा॒ अत॑न्द्रासोऽवृ॒का अश्र॑मिष्ठाः ।
ते पा॒यवः॑ स॒ध्र्य॑ञ्चो नि॒षद्याग्ने॒ तव॑ नः पान्त्वमूर ॥ १२ ॥

अस्व॑प्नऽजः । त॒रण॑यः । सु॒ऽशेवाः॑ । अत॑न्द्रासः । अ॒वृ॒काः । अश्र॑मिष्ठाः ।
ते । पा॒यवः॑ । स॒ध्र्य॑ञ्चः । नि॒ऽसद्य॑ । अग्ने॑ । तव॑ । न॒ः । पा॒न्तु॒ । अ॒मू॒र॒ ॥ १२ ॥

ᵛअमूर अमूढ सर्वज्ञ । यद्वा । अमूर अप्रतिहतगते हे ᵛअग्ने ᵛअस्वप्नजः अस्वपन्तः । जागरूका इति यावत् । ᵛतरणयः सततगमनस्वभावा आपद्भ्यस्तारका वा ᵛसुशेवाः सुसुखाः ᵛअतन्द्रासः अतन्द्रा अनलसाः सर्वदोद्युक्ताः ᵛअवृकाः अहिंसकाः ᵛअश्रमिष्ठाः अश्रान्ततमाः ᵛसध्र्यञ्चः परस्परं संगताः[6] ᵛपायवः रक्षकाः ᵛते तादृशाः ᵛतव रश्मयः ᵛनिषद्य अस्मद्यज्ञे निषण्णा भूत्वा ᵛनः अस्मान् ᵛपान्तु रक्षन्तु[7] ॥ अस्वप्नजः । स्वपितृषोर्नजिङ्प्रत्ययः । मध्येऽवग्रहश्छान्दसः । सध्र्यञ्चः । सहपूर्वादञ्चतेः क्विप् । ' सहस्य सध्रिः ' इति सहस्य सध्र्यादेशः । सध्र्यादेशस्य

१. त–इत्याद्युदात्तत्वम् । २. ख-ग-घ-च-ण-प-फ-भ–भिनद्मि । ३. त–सकाशात् तत् । ४. न-ल-स–वामदेवं माम् । ५. न-ल-स–' प्राप्तं ' नास्ति । ६. ख-ग-घ-च-ण-न-भ-स–संमताः । ७ ख-ग-घ-च-ण-न-भ-स–' रक्षन्तु ' नास्ति ।

अन्तोदात्तत्वनिपातनात्[1] यणादेशे ' उदात्तस्वरितयोः° ' इति स्वरितत्वम्। अमूर। 'मुह वैचित्त्ये'। निष्ठायां ढकारस्य रेफश्छान्दसः। यद्वा। ' मूङ् बन्धने '। औणादिकः रक्[2] ॥

ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।

ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ १३ ॥

ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् । दुःऽइतात् । अरक्षन् ।

ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥१३॥

अत्रेयमैतिहासिकी कथा। उचथ्यस्य गर्भिणीं ममतानामधेयां भार्यां तदनुजो बृहस्पतिरचकमत। तस्यां रेत आधित्सुं तं बृहस्पतिं गर्भस्थं रेतोऽब्रवीत्। रेतोऽत्र मा संक्षीरहमत्र वसामीति। एवमुक्तो बृहस्पतिर्निरुद्धरेतस्कः सन् रेतोरूपं गर्भं शशाप। जात्यन्धत्वरूपं दीर्घं तमः प्राप्नुहीति। ततस्तस्यां दीर्घतमा अजनिष्ट। स चान्ध्यपरिहारायाग्निं स्तुत्वा चक्षुरलभतेति। तदिदानीमाह। हे ᵛअग्ने ᵛपायवः रक्षकाः ᵛपश्यन्तः अन्धोऽयमिति कृपादृष्ट्या पश्यन्तः ᵛते तव ᵛये रश्मयः ᵛमामतेयं ममतायाः पुत्रम् ᵛअन्धं चक्षुर्हीनं दीर्घतमसं ᵛदुरितात् आन्ध्यलक्षणात् शापात्[3] ᵛअरक्षन् चक्षुष्प्रदानेनापालयन्। ᵛविश्ववेदाः विश्वप्रज्ञो भवान् ᵛसुकृतः शोभनं[4] चक्षुष्प्रदानादिकर्म[4] कृतवतः ᵛतान् रश्मीन् ᵛररक्ष आदरेण परिगृह्य पालयति[5]। तेषां परिग्रहसिद्धिः[6] अभिधीयते। ᵛदिप्सन्त ᵛइत् दम्भितुं परिभवितुम् इच्छन्त एव ᵛरिपवः शत्रव एनं दीर्घतमसं ᵛनाह ᵛदेभुः नैव परिभवन्ति खलु॥ मामतेयम्। ममताया अपत्यमित्यर्थे 'स्त्रीभ्यो ढक्'। दिप्सन्तः। ' दम्भु दम्भे '। ' सनीवन्तर्ध° ' इत्यादिना इडभावः। ' दम्भ इच्च ' इति इकारः। देभुः। ' श्रन्थिग्रन्थिदम्भिष्वञ्जीनामुपसंख्यानम् ' ( का. ६. १ ) इति लिटः कित्त्वादुपधालोपः॥

त्वया वयं सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् ।

उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ १४ ॥

त्वया । वयम् । सऽधन्यः । त्वाऽऊताः । तव । प्रऽनीती । अश्याम । वाजान् ।

उभा । शंसा । सूदय । सत्यऽताते । अनुष्ठुया । कृणुहि । अह्रयाण ॥ १४ ॥

ᵛअह्रयाण अलज्जितगमन[7]। 'अह्रयाणोऽह्रीतयानः' ( निरु.५.१५ ) इति यास्कः। तादृश हे अग्ने ᵛवयं स्तोतारः ᵛत्वया ᵛसधन्यः त्वत्प्रसादात् समानधनाः ᵛत्वोताः त्वया रक्षिता वयं ᵛतव ᵛप्रणीती प्रणीत्या तव प्रेरणेनानुज्ञया ᵛवाजान् अन्नानि ᵛअश्याम प्राप्नुयाम। हे ᵛसत्यताते। सत्यं तनोतीति वा सत्यं तायते यस्मिन्निति वा सत्यतातिः। हे सत्यताते ᵛशंसा पापानां शंसितारौ ᵛउभा[8] उभौ

---

१. त–अन्तोदात्तत्वेन निपातनात्। २. त–रक्प्रत्ययः। ३. त–पापात्। ४. ख-ग-घ-च-ण-न-भ-ल-स–शोभनचक्षु°। ५. ख-ग-घ-च-ण-फ-भ–पालय। ६. त–परिग्रहप्रसिद्धिः। ७. ख-ग-घ-च-ण-भ–अलक्षितगमन; त-न-स–अलक्षितागमन। ८. न-ल-स–' उभा ' नास्ति।

आसन्नविप्रकृष्टौ शत्रू ^V^सूदय जहि। ^V^अनुष्टुया अनुक्रमेण ^V^कृणुहि। अस्मिन् सूक्ते प्रतिपादितमर्थं कुरु॥ सधन्यः। धनमेषामस्तीति 'छन्दसीवनिपौ°' इति ईप्रत्ययः। 'एरनेकाचः°' इति यण्। 'उदात्तस्वरितयोः°' इति स्वरितत्वम्। अनुष्टुया। 'अपदुःसुषु स्थः' इति विधीयमानः कुप्रत्ययो बहुलवचनादनुपूर्वस्यापि भवति। 'सुपां सुलुक्°' इति तृतीयाया याजादेशः। अह्वयाण। 'ह्री लज्जायाम्'। 'बहुलं छन्दसि' इति शपः श्लुभावाभावः। 'अनित्यमागमशासनम्' इति मुगभावः॥

अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय।
दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात्॥ १५॥

अया। ते। अग्ने। सम्ऽइधा। विधेम। प्रति। स्तोमम्। शस्यमानम्। गृभाय।
दह। अशसः। रक्षसः। पाहि। अस्मान्। द्रुहः। निदः। मित्रऽमहः। अवद्यात्॥१५॥

हे ^V^अग्ने ^V^अया अनया ^V^समिधा दीप्त्या स्तुत्या ^V^ते त्वां ^V^विधेम परिचरेम। अस्माभिः ^V^शस्यमानम् ^V^इमं ^V^स्तोमं स्तोत्रं ^V^प्रति ^V^गृभाय प्रतिगृहाण। ^V^अशसः। शंसन्ति स्तुवन्तीति शसः स्तोतारः। ते न भवन्तीत्यशसो नृशंसाः। तान् ^V^रक्षसः ^V^दह भस्मसात्कुरु। हे ^V^मित्रमहः मित्रैः पूजनीय हे अग्ने ^V^द्रुहः द्रोग्धुः ^V^निदः निन्दकात् ^V^अवद्यात् परिवादाच्च ^V^अस्मान् ^V^पाहि रक्ष॥ गृभाय। ग्रहेर्लोटि 'छन्दसि शायजपि' इति श्नः शायच्। हृग्रहोर्भः। पाहि। वाक्यभेदात् अनिघातः। निदः। 'णिदि कुत्सायाम्'। क्विप्। आगमशासनस्यानित्यत्वान्नुमभावः। 'सावेकाचः°' इति विभक्तेरुदात्तत्वम्। अवद्यात्। 'अवद्यपण्य°' इति यत्। 'ययतोश्चातदर्थे' (पा. सू. ६. २. १५६) इत्यन्तोदात्तत्वम्। मित्रमहो अवद्यात् इत्यत्र संहितायाम् 'अव्यादवद्यात्°' इति एङः प्रकृतिभावः॥ २५॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके चतुर्थोऽध्यायः समाप्तः[1]॥

---

१. त-न-भ-संपूर्णः।

॥ श्रीगणेशाय नमः ॥

इत्थं तृतीयाष्टकगश्चतुर्थोऽध्याय आदरात्।
व्याख्यातः सायणार्येण[1] पञ्चमो व्याकरिष्यते ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

चतुर्थे मण्डले प्रथमेऽनुवाके दश सूक्तानि । 'वैश्वानराय' इति पञ्चदशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं त्रैष्टुभं वैश्वानराग्निदेवताकम् । अत्रानुक्रमणिका–'वैश्वानराय वैश्वानरीयम्' इति । विनियोगो लैङ्गिकः ॥

**वैश्वानराय मीळ्हुषे सजोषाः कथा दाशेमाग्नये बृहद्भाः ।**
**अनूनेन बृहता वक्षथेनोप स्तभायदुपमिन्न रोधः ॥ १ ॥**

वैश्वानराय । मीळ्हुषे । सऽजोषाः । कथा । दाशेम । अग्नये । बृहत् । भाः ।
अनूनेन । बृहता । वक्षथेन । उप । स्तभायत् । उपऽमित् । न । रोधः ॥ १ ॥

सजोषाः सजोषसः[2] समानप्रीतियुक्ता वयमृत्विग्यजमानाः वैश्वानराय विश्वनरसंबन्धिने[3] एतन्नामकाय मीळ्हुषे अभिमतवृष्ट्यादिसेक्त्रे बृहत् बृहते महते भाः भासमानाय अग्नये देवाय कथा कथं केन प्रकारेण दाशेम दद्याम । सामर्थ्यात् हविरिति गम्यते । अथवा बृहद्भा इत्युत्तरत्र योज्यम् । कथा दाशेमेत्युक्तम् । किं तत्र आधिक्यमिति[4] तदुच्यते । योऽग्निर्बृहन्महान् भा भासमानश्च सन् अनूनेन अविकलेन संपूर्णेन अत एव बृहता प्रभूतेन वक्षथेन वोढव्येन स्वशरीरेण उप स्तभायत् उप स्तभ्नाति । सामर्थ्यात् द्यामिति शेषः । द्युलोकं व्याप्नोतीत्यर्थः । तत्र दृष्टान्तः । उपमिन्न रोधः । उप समीपे मीयते क्षिप्यते इत्युपमित् स्थूणा । सा यथा तृणाच्छादनादिनिरोधकं वंशादिकमुपस्तभ्नाति तद्वत् । यद्वा । वक्षथेनोक्थलक्षणेन फलादिवाहकेन स्तोत्रेण सह द्युलोकमुपस्तभायत् ॥ स्तभायत् । स्तम्भुः सौत्रो धातुः । लङि 'छन्दसि शायजपि' इति व्यत्ययेन अहावपि शायजादेशः । 'बहुलं छन्दसि' इत्यडभावः ॥ किमिव । उपमिन्न रोधः । उप समीपे मीयते इत्युपमिदुदकम् । कूलमिव ॥

**मा निन्दत य इमां मह्यं रातिं देवो ददौ मर्त्याय स्वधावान् ।**
**पाकाय गृत्सो अमृतो विचेता वैश्वानरो नृतमो यह्वो अग्निः ॥ २ ॥**

मा । निन्दत । यः । इमाम् । मह्यम् । रातिम् । देवः । ददौ । मर्त्याय । स्वधाऽवान् ।
पाकाय । गृत्सः । अमृतः । विऽचेताः । वैश्वानरः । नृऽतमः । यह्वः । अग्निः ॥ २ ॥

---

१. ख-ग-ण-त-न-फ-भ-स–सायणाचार्यैः । २. ख-ग-च-ण-भ–'सजोषसः' नास्ति । ३. ख-ग-च-ण-भ-ल-स–विश्वानरसंबन्धिने । ४. ख-ग-च–अधिकमिति ।

हे होत्रादयः असुं वैश्वानरमग्निं ˇमा ˇनिन्दत निन्दां[1] मा[1] कुरुत । स्तुतेत्यर्थः । ˇयः ˇदेवः दीप्यमानोऽग्निः ˇस्वधावान् अस्मद्दत्तेन हविर्लक्षणेनान्नेन तद्वान् सन् ˇमर्त्याय मरणधर्माय[2] ˇपाकाय परिपक्वप्रज्ञाय ˇमह्यं यजमानाय ˇइमाम् इदानीं दीयमानप्रकारां ˇरातिं धनं ˇददौ दत्तवान् । स विशेष्यते । ˇगृत्सः मेधावी । मेधाविनामैतत् । ˇअमृतः अमरणस्वभावः ˇविचेताः विशिष्टप्रज्ञः ˇवैश्वानरः विश्वैर्नरैः आहवनीयादिरूपेण नीयमानः[3] ˇनृतमः नेतृतमः फलादीनां ˇयह्वः महान् । महन्नामैतत् । ˇअग्निः अङ्गनादिगुणविशिष्टः । तादृशमग्निं स्तुतेति भावः ॥

**साम॑ द्वि॒बर्हा॒ महि॑ ति॒ग्मभृ॑ष्टिः स॒हस्र॑रेता वृष॒भस्तुवि॑ष्मान् ।**
**प॒दं न गोरप॑गूळ्हं विवि॒द्वान॒ग्निर्मह्यं॒ प्रेदु॑ वोचन्मनी॒षाम् ॥ ३ ॥**

साम॑ । द्वि॒ऽबर्हाः॑ । महि॑ । ति॒ग्मऽभृ॑ष्टिः । स॒हस्र॑ऽरेताः । वृ॒ष॒भः । तु॒विष्मा॑न् ।
प॒दम् । न । गोः । अप॑ऽगूळ्हम् । वि॒वि॒द्वान् ।
अ॒ग्निः । मह्य॑म् । प्र । इत् । ऊँ॒ इति॑ । वो॒च॒त् । म॒नी॒षाम् ॥ ३ ॥

ˇद्विबर्हाः द्वयोर्मध्यमोत्तमयोः स्थानयोः परिवृढः ˇतिग्मभृष्टिः तीक्ष्णतेजाः ˇसहस्ररेताः बहुविधहिरण्यरेतस्कः । रेतःशब्दः सारवाची । प्रभूतसारो वा । ˇवृषभः वर्षिता कामानां ˇतुविष्मान् बहुधनः[4] । ईदृशोऽयम् ˇअग्निः अत्यन्तगोपितं[5] ˇगोः ˇपदं ˇन नष्टाया गोः पदमिव ˇअपगूळ्हम् अत्यन्तरहस्यम् । मनीषाशब्दो ज्ञानवाची सन् अत्र ज्ञातव्ये वर्तते । ˇमनीषां ज्ञातव्यं ˇमहि महत् पूज्यं ˇसाम अस्मदभिमतं स्तोत्रं ˇविविद्वान् विशेषेण जानन् ˇमह्यं[6] ˇप्रेदु ˇवोचत् प्रैव ब्रवीतु ॥

**प्र ताँ अ॒ग्निर्ब॑भसत्ति॒ग्मज॑म्भ॒स्तपि॑ष्ठेन शो॒चिषा॒ यः सु॒राधाः॑ ।**
**प्र ये मि॒नन्ति॒ वरु॑णस्य॒ धाम॑ प्रि॒या मि॒त्रस्य॒ चेत॑तो ध्रु॒वाणि॑ ॥ ४ ॥**

प्र । तान् । अ॒ग्निः । ब॒भ॒स॒त् । ति॒ग्मऽज॑म्भः । तपि॑ष्ठेन । शो॒चिषा॑ । यः । सु॒ऽराधाः॑ ।
प्र । ये । मि॒नन्ति॑ । वरु॑णस्य । धाम॑ । प्रि॒या । मि॒त्रस्य॑ । चेत॑तः । ध्रु॒वाणि॑ ॥ ४ ॥

ˇयः ˇअग्निः ˇसुराधाः शोभनधनः सः ˇतिग्मजम्भः तीक्ष्णदंष्ट्रः सन् ˇतपिष्ठेन ˇशोचिषा अतिशयेन शत्रूणां तापकेन तेजसा ˇतान् वक्ष्यमाणान् द्वेष्टॄन् ˇप्र ˇबभसत् प्रकर्षेण भर्त्सयतु । दहतु इत्यर्थः ॥ 'भस भर्त्सनदीप्त्योः' । लेटि 'इतश्च लोपः[०]' इतीकारलोपः । 'लेटोऽडाटौ' इत्यडागमः ॥ तानित्युक्तं कानित्याह । ˇये द्वेष्टारः[7] ˇचेततः[7] जानतः । एतदुभयविशेषणम् । ˇमित्रस्य ˇवरुणस्य च ˇप्रिया प्रियाणि ˇध्रुवाणि स्थिराणि ˇधाम धामानि तेजःस्थानानि कर्माणि वा[8] ˇप्र ˇमिनन्ति प्रकर्षेण हिंसन्ति ॥ 'मीञ् हिंसायाम्' । 'मीनातेर्निगमे' इति ह्रस्वत्वम् । विकरणस्वरः ॥

---

१. ख-ग-च-ण-न-भ—मा निन्दाम् । २. च-फ—मरणधर्मसहिताय । ३. ख-ग-घ-च-ण-प-फ-भ—स्थापितः । ४. च-फ—बहुधनः विविद्वान् विशेषेण ज्ञानवान् । ५. ख-ग-घ-च-ण-प-फ-भ—'अत्यन्तगोपितं' नास्ति । ६. न-ल-स—'मह्यं' नास्ति । ७. ख-ग-च-ण-न-फ-भ—चेततः द्वेष्टॄन्; घ-प—चेततः द्वेष्टारः; त-स—चेततः । ८. ख-ग-च-ण-त-फ-भ-स—त्वाम्; घ-प—'वा' नास्ति ।

अभ्रातरो न योषणो व्यन्तः पतिरिपो न जनयो दुरेवाः ।
पापासः सन्तो अनृता असत्या इदं पदमजनता गभीरम् ॥ ५ ॥

अभ्रातरः । न । योषणः । व्यन्तः । पतिऽरिपः । न । जनयः । दुःऽएवाः ।
पापासः । सन्तः । अनृताः । असत्याः । इदम् । पदम् । अजनत । गभीरम् ॥ ५ ॥

ᐯअभ्रातरः भ्रात्रादिबन्धुरहिताः ᐯयोषणः ᐯन गतभर्तृका योषित इव ॥ 'वा षपूर्वस्य निगमे' इति विकल्पनात् दीर्घाभावः ॥ ता यथा भर्तृगृहात् पितृगृहं प्रयायन्ति[1] तद्वत् ᐯव्यन्तः गच्छन्तः । यज्ञादीनपहाय अमार्गे वर्तमाना इत्यर्थः । तथा ᐯपतिरिपो ᐯन[2] ᐯजनयः[2] पतिद्वेषिण्यः स्त्रिय इव ᐯदुरेवाः दुष्टगतयो दुराचारा अत एव ᐯपापासः पापाः ᐯसन्तः ᐯअनृताः मानससत्यरहिताः ᐯअसत्याः वाचिकसत्यरहिता मनसा वाचाग्निमभजमानाः ᐯइदं पापिभिरनुभूयमानतया प्रसिद्धं ᐯगभीरम् अगाधं ᐯपदं नरकस्थानम् ᐯअजनत अजनयन्त उत्पादयन्ति ॥ लङि जनेरन्तर्भावितण्यर्थात् व्यत्ययेनैकवचनम् ॥ ॥ १ ॥

इदं मे अग्ने कियते पावकामिनते गुरुं भारं न मन्म ।
बृहद्दधाथ धृषता गभीरं यह्वं पृष्ठं प्रयसा सप्तधातु ॥ ६ ॥

इदम् । मे । अग्ने । कियते । पावक । अमिनते । गुरुम् । भारम् । न । मन्म ।
बृहत् । दधाथ । धृषता । गभीरम् । यह्वम् । पृष्ठम् । प्रयसा । सप्तऽधातु ॥ ६ ॥

हे ᐯपावक शोधक ᐯअग्ने ᐯकियते अत्यल्पाय ᐯगुरुं ᐯभारं ᐯन वोढुमशक्यं भारमिव । तं यथा धर्तुमसहमानः पातयति तद्वत् । त्वदीयं कर्म ᐯअमिनते अहिंसतेऽत्यजते ᐯमे मह्यम् ᐯइदं दातव्यत्वेन[3] प्रसिद्धं ᐯ बृहत् प्रभूतं ᐯमन्म मननीयं धनं ᐯदधाथ देहि। तदेव विशेष्यते । ᐯधृषता शत्रूणां धर्षकेण ᐯप्रयसा। अन्ननामैतत् । अन्नेन युक्तं ᐯगभीरम् अन्यैरनवगाह्यं ᐯयह्वं महत् ᐯपृष्ठं स्प्रष्टुं योग्यं ᐯसप्तधातु ग्राम्यारण्यभेदेन[4] सप्तप्रकारम्। 'सप्त ग्राम्याः पशवः सप्तारण्याः' (तै. सं. ७. २. २. १) इति श्रुतेः । ईदृग्धनं देहीत्यर्थः । गुरुं भारं न अन्यदीयं भारं यथाऽन्यस्मै ददाति तद्वदस्माकं दातव्यं धनं देहीति वा योज्यम् ॥

तमिन्न्वे३व समना समानमभि क्रत्वा पुनती धीतिरश्याः ।
ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु ॥ ७ ॥

तम् । इत् । नु । एव । समना । समानम् । अभि । क्रत्वा । पुनती । धीतिः । अश्याः ।
ससस्य । चर्मन् । अधि । चारु । पृश्नेः । अग्रे । रुपः । अरुपितम् । जबारु ॥ ७ ॥

---

१. ख-ग-च-ण-फ-प्रत्यायान्ति । २. ख-ग-घ-च-ण-प-फ-भ-जनयः न । ३. घ-ल-स-ज्ञातव्यत्वेन ।
४. ख-ग-घ-च-ण-प-फ-भ-ग्राम्यपश्वरण्यपशुभेदेन ।

'अग्निविद्युदादित्यास्त्रयोऽपि मतभेदेन वैश्वानरशब्दाभिधेयाः' ( निरु. ७. २३ ) इति यास्केनोक्तत्वादत्र आदित्यात्मना वैश्वानरः स्तूयते। ᵛतमित् तमेव वैश्वानरं द्युस्थानं ᵛसमानं सर्वेषामेकरूपं ᵛसमना सदृशी तद्योग्या ᵛपुनती अस्मान् शोधयित्री[1] ᵛधीतिः मतिः अस्मदीया स्तुतिः ᵛऋत्वा तदुचितेन कर्मणा ᵛन्वेव क्षिप्रमेव ᵛअश्याः अभिप्राप्नुयात्। भजेदित्यर्थः ॥ अश्नोतेर्लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। व्यत्ययेन परस्मैपदं मध्यमपुरुषत्वं च। पूर्वत्र तच्छब्दश्रुतेः यच्छब्दोऽध्याहार्यः ॥ यस्य द्युस्थानस्य वैश्वानरस्य ᵛजबारु जवमानरोहि[2] जरमाणरोहि वा[2] ᵛचारु दीप्तं मण्डलम्। 'जबारु जरमाणरोहीति वा जवमानरोहीति वा' ( निरु. ६. १७ ) इति यास्कः। ᵛअग्रे पुरस्तात् पूर्वस्यां दिशि ᵛरुपः। आरोपयति स्वात्मनि सस्यादीनि इति[3] रुबिति भूमिरुच्यते। तस्याः सकाशात् ᵛससस्य। लुप्तोपममेतत्[4]। स्वपत इव निश्चलस्य ᵛपृश्नेः। द्युनामैतत्। 'स्वः पृश्निः' ( नि. १. ४. २ ) इति द्युलोकादित्ययोः साधारणनामसु पाठात्। ज्योतिरादिभिः स्पृश्यमानस्य द्युलोकस्य ᵛअधि उपरि ᵛचर्मन् चर्मणे चरणाय॥ चरेरौणादिको मनिन्। 'सुपां सुलुक्॰' इति चतुर्थ्या लुक् ॥ ᵛआरुपितम् आरोपितं देवैः। तमश्या इति पूर्वत्रान्वयः ॥

प्रवाच्यं॒ वचः॑सः॒ किं मे॑ अ॒स्य गुहा॑ हि॒तमुप॑ नि॒णिग्व॑दन्ति।
यदु॒स्रिया॑णा॒मप॒ वारि॑व॒ व्रन्पाति॑ प्रि॒यं रु॒पो अग्रं॑ प॒दं वेः ॥ ८ ॥

प्र॒ऽवाच्य॑म्। वच॑सः। किम्। मे॒। अ॒स्य। गुहा॑। हि॒तम्। उप॑। नि॒णिक्। व॒दन्ति॒।
यत्। उ॒स्रिया॑णाम्। अप॑। वाःऽइ॑व। व्रन्।
पाति॑। प्रि॒यम्। रु॒पः। अग्र॑म्। प॒दम्। वेरिति॒ वेः ॥ ८ ॥

ᵛमे मदीयस्य ᵛअस्य वक्ष्यमाणस्य ᵛवचसः वाक्यस्य ᵛकिं ᵛप्रवाच्यम् अस्ति। तथ्यमेवोच्यत इत्यर्थः। किं तद्वच इत्युच्यते। ᵛउस्रियाणाम्। गोनामैतत्। क्षीराद्युत्स्राविणीनां[5] गवां संबन्धि ᵛयत् क्षीरं ᵛवारिव उदकमिव तद्यथा सेकेनाविष्कुर्वन्ति तथा ᵛअप ᵛव्रन् अपवृण्वन्ति दोग्धारः। ᵛनिणिक्। नितरां नेनेक्ति शोधयतीति निणिक् क्षीरमुच्यते। तादृक् क्षीरमनेन वैश्वानरेण ᵛगुहा गुहायाम् ᵛउप ᵛहितम् उपनिहितं ᵛवदन्ति वेत्तारः। किंचायं[6] ᵛवेः व्याप्तायाः ᵛरुपः भूम्याः ᵛप्रियं सर्वेषाम् आधारत्वेन प्रियभूतम् ᵛअग्रं श्रेष्ठं ᵛपदं स्थानं ᵛपाति रक्षति ॥

इ॒दमु॒ त्यन्महि॑ म॒हामनी॑कं॒ यदु॒स्रिया॒ सच॑त पू॒र्व्यं गौः।
ऋ॒तस्य॑ प॒दे अधि॒ दीद्या॑नं॒ गुहा॑ रघु॒ष्यद्र॑घुयद्वि॑वेद ॥ ९ ॥

इ॒दम्। ऊँ॒ इति॑। त्यत्। महि॑। म॒हाम्। अनी॑कम्। यत्। उ॒स्रिया॑। सच॑त। पू॒र्व्यम्। गौः।
ऋ॒तस्य॑। प॒दे। अधि॑। दीद्या॑नम्। गुहा॑। र॒घु॒ऽस्यत्। र॒घु॒ऽयत्। वि॒वे॒द ॥ ९ ॥

---

१. ख-ग-घ-च-ण-त-न-प-फ-भ—शोधयन्ती। २. ख-ग-घ-च-ण-प-फ-भ—जवमानम्; न-स—जवमानरोहि। ३. ख-ग-च-त-न-भ-स—'इति' नास्ति। ४. त—लुप्तोपमैतत्। ५. ख-ग-च-ण-भ—क्षीरादिस्राविणीनाम्। ६. ख-ग-घ-च-ण-प-फ-भ—'किंचायं' नास्ति।

इदमु इदमेव त्यत् प्रसिद्धं महि महत् पूज्यं महां महतां देवानाम् अनीकं समूहरूपं सूर्यमण्डलं वैश्वानर एवेति शेषः । पूर्व्यं पूर्वकालीनं पूरकं वा यत् मण्डलम् उस्रिया क्षीराद्युत्स्राविणी गौः अग्निहोत्राद्यर्थं[1] सचत सेवते । ऋतस्य उदकस्य पदे स्थानेऽन्तरिक्षे अधि अधिकम् । यद्वा अधीति ससप्तम्यर्थानुवादः[2] । दीद्यानं द्योतमानं गुहा गुहायां रघुष्यत् शीघ्रं स्यन्दमानं रघुयत् शीघ्रं गच्छत् सूर्यमण्डलं विवेद वैश्वानरमेवेति ज्ञातवानस्मि ॥

**अध द्युतानः पित्रोः सचासामनुत गुह्यं चारु पृश्नेः ।**

**मातुष्पदे परमे अन्ति षद्गोर्वृष्णः शोचिषः प्रयतस्य जिह्वा ॥ १० ॥**

अध । द्युतानः । पित्रोः । सचा । आसा । अमनुत । गुह्यम् । चारु । पृश्नेः ।

मातुः । पदे । परमे । अन्ति । सत् । गोः । वृष्णः । शोचिषः । प्रऽयतस्य । जिह्वा ॥ १० ॥

अध अथ द्युतानः दीप्यमानः पित्रोः द्यावापृथिव्योः सचा सह मध्ये व्याप्तः सन् पृश्नेः गोः संबन्धि चारु रमणीयं गुह्यम् ऊधसि निगूढं पयः आसा स्वकीयेनास्येन अमनुत पानाय अबुध्यत । उक्तमेवार्थं विवृणोति । मातुः क्षीरादिनिर्मात्र्याः गोः परमे पदे उत्कृष्टे स्थाने ऊधोलक्षणे अन्ति सत् समीपे विद्यमानं क्षीरं वृष्णः फलानां वर्षितुः शोचिषः दीप्तस्य प्रयतस्य आहवनीयादिरूपेण नियतस्य वैश्वानरस्य जिह्वा पातुमिच्छतीति शेषः ॥ ॥ २ ॥

**ऋतं वोचे नमसा पृच्छ्यमानस्तवाशसा जातवेदो यदीदम् ।**

**त्वमस्य क्षयसि यद्ध विश्वं दिवि यदु द्रविणं यत्पृथिव्याम् ॥ ११ ॥**

ऋतम् । वोचे । नमसा । पृच्छ्यमानः । तव । आऽशसा । जातऽवेदः । यदि । इदम् ।

त्वम् । अस्य । क्षयसि । यत् । ह । विश्वम् ।

दिवि । यत् । ऊँ इति । द्रविणम् । यत् । पृथिव्याम् ॥ ११ ॥

अहं यजमानः नमसा नमस्कारेण सह पृच्छ्यमानः अन्यैरनुयुज्यमानः सन् ऋतं वोचे सत्यं ब्रवीमि । किं तदित्युच्यते । हे जातवेदः जातानां वेदितर्जातप्रज्ञ वा अग्ने तवाशसा त्वत्स्तुत्या साधनेन यदीदं धनं लब्धमस्माभिः स्यात् अस्य धनस्य त्वं क्षयसि त्वमेवेश्वरो भवसि । तस्य[3] धनस्य यज्ञादिद्वारा अग्न्यर्थत्वादिति भावः । अत्यल्पमिदमुक्तम् । यद्ध विश्वं यत्खलु कृत्स्नं धनमस्ति तस्यापीशिषे । विश्वमिति सामान्येन यदुक्तं तदेव विशदयति । दिवि द्युलोके यदु द्रविणं यदेव धनं यत् च पृथिव्यां धनं तस्य सर्वस्य त्वमीश्वरो भवसि । 'यज्ञार्थं द्रव्यमुत्पन्नम्' इति स्मरणात् । अग्निव्यतिरेकेण यज्ञासंभवादिति भावः ॥

---

१. त–अग्निहोत्राद्यर्था । २. त–°वादी । ३. त–अस्य ।

किं नो॑ अ॒स्य द्रवि॑णं॒ कद्ध॒ रत्नं॒ वि नो॑ वोचो जातवेदश्चिकि॒त्वान् ।
गुहाध्व॑नः पर॒मं यन्नो॑ अ॒स्य रेकु॑ प॒दं न नि॑दा॒ना अग॑न्म ॥ १२ ॥

किम् । न॒ः । अ॒स्य । द्रवि॑णम् । कत् । ह॒ । रत्न॑म् । वि । न॒ः । वो॒च॒ः । जा॒त॒ऽवे॒द॒ः । चि॒कि॒त्वान् ।
गुहा॑ । अध्व॑नः । प॒र॒मम् । यत् । न॒ः । अ॒स्य । रेकु॑ । प॒दम् । न । नि॒दा॒नाः । अग॑न्म ॥ १२ ॥

पूर्वमन्त्रेण यस्य[1] धनस्य[2] अग्निस्वामित्वमुक्तम् अस्य धनस्य[3] किं द्रविणं किं साधनभूतं नः अस्मभ्यं[4] दातव्यं धनमस्ति । कद्ध रत्नं किं च रमणीयं हितकरं धनमस्ति । तद्धनं हे जातवेदः जातधनाग्ने[5] चिकित्वान् चेतनावानभिज्ञस्त्वं नः अस्मभ्यं वि वोचः विब्रूहि । यद्वा । किं दातव्यं द्रविणमस्ति । अस्य द्रविणराशेः कद्ध रत्नमिति वा योज्यम् । अस्य अध्वनः धनप्राप्तिमार्गस्य यत् गुहा गुहायां निहितं गूढं परमम् उत्कृष्टं प्राप्तव्यमस्ति तदपि नः अस्मभ्यं विवोचः । वयं रेकु रिक्तं पदं गन्तव्यं स्थानं गृहादिकं निदानाः अन्यैर्निन्द्यमानाः॥ कर्मणि कर्तृप्रत्ययः ॥ न अगन्म न प्राप्नुमः ॥

का म॒र्यादा॑ व॒युना॒ कद्ध॑ वा॒मम॒च्छा॑ गमेम र॒घवो॒ न वाज॑म् ।
क॒दा नो॑ दे॒वीर॒मृत॑स्य॒ पत्नी॒ः सूरो॒ वर्णे॑न ततनन्नु॒षास॑ः ॥ १३ ॥

का । म॒र्यादा॑ । व॒युना॑ । कत् । ह॒ । वा॒मम् । अच्छ॑ । ग॒मे॒म॒ । र॒घव॑ः । न । वाज॑म् ।
क॒दा । न॒ः । दे॒वीः । अ॒मृत॑स्य । पत्नी॑ः । सूर॑ः । वर्णे॑न । त॒त॒न॒न् । उ॒षस॑ः ॥ १३ ॥

का मर्यादा का प्रीत्यादिव्यवस्था का च वयुना प्रज्ञानं पदार्थविषयं कद्ध किं च वामं वननीयं पदार्थजातम् । एतत्सर्वम् अच्छ[6] गमेम अभिगच्छेम । तत्र दृष्टान्तः । रघवो न वाजम् । शीघ्रगामिनोऽश्वादयः संग्राममिव । तद्वत्[6] । कदा कस्मिन् काले नः अस्माकं व्यवहाराय देवीः देव्यो द्योतमानाः अमृतस्य अमरणधर्मस्यादित्यस्य पत्नीः पत्न्यः पालयित्र्यः[7] सूरः प्रसवित्र्यः उषासः[8] उषसः[8] वर्णेन प्रकाशेन ततनन् विस्तारयेयुः । एवं सूर्यसंबन्धिन उषसः स्तुत्या[9] सर्वात्मनो वैश्वानरस्य स्तुतिरवगन्तव्या ॥ ततनन् । तनोतेर्लेटि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । द्विर्भावहलादिशेषौ ॥

अ॒नि॒रेण॒ वच॑सा फ॒ल्ग्वे॑न प्र॒तीत्ये॑न कृ॒धुना॑तृ॒पास॑ः ।
अधा॒ ते अ॑ग्ने॒ किमि॒हा वद॒न्त्यना॑यु॒धास॒ आस॑ता सचन्ताम् ॥ १४ ॥

अ॒नि॒रेण॑ । वच॑सा । फ॒ल्ग्वे॑न । प्र॒तीत्ये॑न । कृ॒धुना॑ । अ॒तृ॒पास॑ः ।
अध॑ । ते । अ॒ग्ने॒ । किम् । इ॒ह । व॒द॒न्ति॒ । अ॒ना॒यु॒धास॑ः । अस॑ता । स॒च॒न्ता॒म् ॥ १४ ॥

---

१. ख-ग-च-ण-फ–अस्य । २. ल–'धनस्य' नास्ति । ३. न-स–'धनस्य' नास्ति। ४. ख-ग-ण-त-न-भ-स–अस्मभ्यं तत्; च-फ–अस्मभ्यं यत् । ५. त–जातवेदोऽसि जातधनोऽसि; न-स–जातधनोऽसि । ६. ख-ग-घ-च-ण-न-भ-स–'अच्छ ... तद्वत्' नास्ति । ७. त-ल–पालयित्र्यः पत्नीस्थानीया वा । ८. न-स–उषसः; ल–उषासः । ९. ख-ग-च-फ-भ–'स्तुत्या' नास्ति ।

ᵛअनिरेण । इरा अन्नं तद्रहितेन । ᵛफल्ग्वेन तुच्छेन[1] ᵛप्रतीत्येन प्रतिगन्तव्येन । आरोह्येणेत्यर्थः । ᵛकृधुना ह्रस्वेन । कृधिवति ह्रस्वनाम 'कृधुको वम्रकः' ( नि. २. २. ६ ) इति तन्नामसूक्तत्वात् । एवंविधेन ᵛवचसा ᵛअतृपासः अतृप्ता जनाः ᵛअध अधुना ᵛइह अस्मिन् लोके हे ᵛअग्ने ᵛते त्वां ᵛकिं ᵛवदन्ति । निर्हविष्केण वचसा न किंचिल्लभ्यत इत्यर्थः । किंतु ᵛअनायुधासः । आयुधशब्दः साधनं लक्षयति । हविरादिसाधनरहितास्ते ᵛअसता दुःखेन ᵛसचन्तां संगच्छन्ताम् ॥

अस्य श्रिये समिधानस्य वृष्णो वसोरनीकं दम आ रुरोच ।
रुशद्वसानः सुदृशीकरूपः क्षितिर्न राया पुरुवारो अद्यौत् ॥ १५ ॥

अस्य । श्रिये । सम्ऽइधानस्य । वृष्णः । वसोः । अनीकम् । दमे । आ । रुरोच ।
रुशत् । वसानः । सुदृशीकऽरूपः । क्षितिः । न । राया । पुरुऽवारः । अद्यौत् ॥ १५ ॥

ᵛसमिधानस्य समिध्यमानस्य[2] ॥ कर्मणि कर्तृप्रत्ययः ॥ ᵛवृष्णः वर्षितुः फलस्य[3] ᵛवसोः[3] वासयितुः ᵛअस्य अग्नेः ᵛअनीकं तेजःसंघः ᵛदमे यागगृहे ᵛआ ᵛरुरोच सर्वतो दीप्यते । किमर्थम् । ᵛश्रिये श्रेयसे यजमानानाम् । सोऽग्निः ᵛरुशत् । वर्णनामैतत् । दीप्तं तेजः ᵛवसानः आच्छादयन् अत एव ᵛसुदृशीकरूपः सुष्ठु दर्शनीयरूपः ᵛपुरुवारः बहुभिः ऋत्विग्भिर्यजमानैः[4] वरणीयः सन् ᵛअद्यौत् द्योतते । किमिव । ᵛराया अश्वादिधनेन ᵛक्षितिर्न राजादिरिव । क्षितिरिति मनुष्यनाम ॥ ॥ ३ ॥

'ऊर्ध्व ऊ षु णः' इत्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् । 'ऊर्ध्व ऊ ष्वेकादश' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसीदम् । सूत्रितं च—'ऊर्ध्व ऊ षु णः ससस्य यद्वियुतेति पञ्च' ( आश्व. श्रौ. ४. १३ ) इति ॥

ऊर्ध्व ऊ षु णो अध्वरस्य होतरग्ने तिष्ठ देवताता यजीयान् ।
त्वं हि विश्वमभ्यसि मन्म प्र वेधसश्चित्तिरसि मनीषाम् ॥ १ ॥

ऊर्ध्वः । ऊँ इति । सु । नः । अध्वरस्य । होतः । अग्ने । तिष्ठ । देवऽताता । यजीयान् ।
त्वम् । हि । विश्वम् । अभि । असि । मन्म । प्र । वेधसः । चित् । तिरसि । मनीषाम् ॥ १ ॥

हे ᵛअध्वरस्य ᵛहोतः यागसंबन्धिनां देवानामाह्वातः । यद्वा । होतरित्यत्र प्रकृत्यंशोऽनुवादः । हे होमनिष्पादक ᵛअग्ने ᵛयजीयान् यष्टृतमस्त्वं ᵛनः अस्माकम् ᵛऊर्ध्व ᵛऊ ᵛषु ᵛतिष्ठ उन्नत एव तिष्ठ । नित्यमुन्नतो भवेत्यर्थः । कुत्रेति तदुच्यते । ᵛदेवताता देवतातौ । देवास्तायन्ते[5] विस्तीर्यन्ते* अत्रेति देवतातिर्यज्ञः । तस्मिन् । ᵛत्वं ᵛहि त्वं खलु ᵛविश्वं सर्वं ᵛमन्म मननीयं शत्रूणां धनम् ᵛअभ्यसि अभिभवसि । किंच ᵛवेधसश्चित् । चित् पूजायाम्[5] । स्तोतुर्यजमानादेः ᵛमनीषां मतिं स्तुतिं ᵛप्र ᵛतिरसि प्रवर्धयसि । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥

---

१. ख-न-भ—उक्थेन । २. ख-ग-च-ण-न-भ-स—'समिध्यमानस्य' नास्ति । ३. ख-ग-घ-च-ण-प-फ-भ—वसोः फलस्य; न-स—फलस्य । ४. ख-ग-च-ण—ऋत्विग्यजमानैः । ५. च-फ—यज्ञे मन्म मननीयत्वं वेधसो ब्रह्मणो विश्वमभि असि हि खलु । देवतायाः । * त-न-भ—विस्तार्यन्ते ।

अमूरो होता न्यसादि विक्ष्वग्निर्मन्द्रो विदथेषु प्रचेताः ।
ऊर्ध्वं भानुं सवितेवाश्रेन्मेतेव धूमं स्तभायदुप द्याम् ॥ २ ॥

अमूरः । होता । नि । असादि । विक्षु । अग्निः । मन्द्रः । विदथेषु । प्रऽचेताः ।
ऊर्ध्वम् । भानुम् । सविताऽइव । अश्रेत् । मेताऽइव । धूमम् । स्तभायत् । उप । द्याम् ॥ २ ॥

अमूरः अमूढः । प्रगल्भ इत्यर्थः । होता होमनिष्पादकः मन्द्रः मदनीयः[1] मादयिता वा प्रचेताः प्रकृष्टज्ञानः अग्निः देवः विक्षु ऋत्विग्रूपासु[2] प्रजासु मध्ये विदथेषु यागेषु निमित्तभूतेषु न्यसादि नितरां स्थापितः । अथ तथाभूतोऽग्निः भानुं दीप्तिं सवितेव उदितः सूर्य इव ऊर्ध्वम् अश्रेत् ऊर्ध्वमुखमाश्रयति । किंच मेतेव स्थूणेव । सा यथा स्वाधिष्ठितं[3] वंशादिकं स्तभ्नाति तद्वदयमग्निः धूमं[4] स्वोत्थितं[4] द्याम् उप द्युलोकस्योपरि स्तभायत् स्तभ्नाति ॥

यता सुजूर्णी रातिनी घृताची प्रदक्षिणिद्देवतातिमुराणः ।
उदु स्वरुर्नवजा नाक्रः पश्वो अनक्ति सुधितः सुमेकः ॥ ३ ॥

यता । सुऽजूर्णिः । रातिनी । घृताची । प्रऽदक्षिणित् । देवऽतातिम् । उराणः ।
उत् । ऊँ इति । स्वरुः । नवऽजाः । न । अक्रः । पश्वः । अनक्ति । सुऽधितः । सुऽमेकः ॥ ३ ॥

यता संयता सुजूर्णिः शोभनजवा सुष्ठु जीर्णा पुराणी[5] वा घृताची । घृतमञ्चतीति घृताची जुहूः । रातिनी । रातिर्धनम् । हविर्लक्षणधनवती । आज्यपूर्णा भवतीत्यर्थः । देवतातिं यज्ञं तथा उराणः उरु कुर्वाणोऽध्वर्युरग्निर्वा प्रदक्षिणित् प्रदक्षिणमेतीति प्रदक्षिणित् । प्रदक्षिणगमनो भवति[6] । अकारलोपश्छान्दसः । नवजाः नवजातस्तदानीमेवोत्पादितः स्वरुः न । यूपशकलवाची स्वरुरत्र यूपं लक्षयति । ' चषालवन्तः स्वरवः पृथिव्याम् ' ( ऋ. सं. ३. ८. १० ) इत्यादिषु स्वरुशब्देन यूपाभिधानाच्च । नकारः समुच्चये । यूपोऽपि उदु । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । उन्नतो भवति । किंच अक्रः आक्रमिता सुमेकः सुदीप्तः सुधितः स्वधितिरित्यर्थः । सोऽपि पश्वः पशून् अनक्ति गच्छति । यद्वा । सुधितः स्वरुरेव उदु उत्कृष्टः पश्वः पशूननक्ति । ' स्वरुणा पशुमनक्ति ' इति श्रुतेः ॥

स्तीर्णे बर्हिषि समिधाने अग्ना ऊर्ध्वो अध्वर्युर्जुजुषाणो अस्थात् ।
पर्यग्निः पशुपा न होता त्रिविष्ट्येति प्रदिव उराणः ॥ ४ ॥

स्तीर्णे । बर्हिषि । समऽइधाने । अग्नौ । ऊर्ध्वः । अध्वर्युः । जुजुषाणः । अस्थात् ।
परि । अग्निः । पशुऽपाः । न । होता । त्रिऽविष्टि । एति । प्रऽदिवः । उराणः ॥ ४ ॥

---

१. ख-ग-च-मद्दनीयः; ण-न-भ-ल-स-मंहनीयः । २. त-न-स-ऋत्विग्भूतासु । ३. ख-ग-च-ण-फ-स्वधिष्ठितम् । ४. ख-ग-न-धूमश्चोत्थितम्; च-फ-चोत्थितं धूमम्; स-धूमांश्चाच्छादितम् । ५. घ-च-ण-त-न-फ-भ-स-पुराणा । ६. ख-ग-घ-च-ण-भ-ल-अभवत् ।

बर्हिषि वेद्यां स्तीर्णे आस्तृते सति अग्नौ आहवनीयादिके समिधाने सम्यगिध्यमाने च सति अध्वर्युः अध्वरस्य नेता जुजुषाणः देवान् प्रीणयन् ऊर्ध्वः अस्थात् तिष्ठति। होता होमनिष्पादकः प्रदिवः[१]। पुराणनामैतत्[१]। पुरातनः उराणः स्वल्पमपि हविर्देवयोग्यत्वसंपादनेन उरु कुर्वाणः। 'उराण उरु कुर्वाणः' इति निरुक्तम्। 'यद्वै देवैर्जोष्यते हविस्तद्ध्रिरिमात्रं वर्धते' इति श्रुतेः अग्नेरुरुकरणमुचितम्। ईदृशः अग्निः पशुपा न पशूनां पालक इव पशून् त्रिविष्टि त्रिरावृत्य परि एति। त्रिर्हि पर्यग्निः क्रियते॥

परि त्मना मितद्रुरेति होताग्निर्मन्द्रो मधुवचा ऋतावा।
द्रवन्त्यस्य वाजिनो न शोका भयन्ते विश्वा भुवना यदभ्राट्॥ ५॥

परि। त्मना। मितऽद्रुः। एति। होता। अग्निः। मन्द्रः। मधुऽवचाः। ऋतऽवा।
द्रवन्ति। अस्य। वाजिनः। न। शोकाः। भयन्ते। विश्वा। भुवना। यत्। अभ्राट्॥ ५॥

उक्तमेवार्थं स्पष्टयति। अयं होता होमनिष्पादकः अग्निः त्मना आत्मना स्वरूपेणैव मितद्रुः परिमितगतिः सन् परि एति परितो गच्छति पशुम्। कीदृशोऽयम्। मन्द्रः मादनीयो मोदयिता वा मधुवचाः मधुरवचनः[२] ऋतावा यज्ञवान्। वाजिनः हविष्मतः अस्य अग्नेः शोकाः न दीप्तयोऽपि। नशब्दोऽप्यर्थे। द्रवन्ति गच्छन्ति परितः। यद्वा नकार उपमार्थीयः[३]। वाजिनो न अश्वा इव द्रवन्तीति योज्यम्। यत् यस्मात् अयम् अभ्राट् भ्राजते तस्मात् विश्वा भुवना सर्वाणि भूतजातानि[४] भयन्ते भीतानि भवन्ति॥ ॥ ४॥

भद्रा ते अग्ने स्वनीक संदृग्घोरस्य सतो विषुणस्य चारुः।
न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तन्वी३ रेप आ धुः॥ ६॥

भद्रा। ते। अग्ने। सुऽअनीक। सम्ऽदृक्। घोरस्य। सतः। विषुणस्य। चारुः।
न। यत्। ते। शोचिः। तमसा। वरन्त।
न। ध्वस्मानः। तन्वि। रेपः। आ। धुरिति धुः॥ ६॥

हे स्वनीक शोभनज्वाल अग्ने घोरस्य भीतिजनकस्यापि सतः विषुणस्य विष्वक् सर्वतो व्याप्तस्य ते तव चारुः रमणीया भद्रा स्तुत्या कल्याणी वा मूर्तिः संदृक् संदृष्टिः। सम्यक् दृश्या भवतीत्यर्थः। यत् यस्मात् ते शोचिः दीप्तिं तमसा अन्धकारेण न वरन्त न वारयन्ति निशाः। यस्माच्च ध्वस्मानः ध्वंसका राक्षसादयः ते तन्वि तव शरीरे रेपः पापं ध्वंसनादिरूपं न आ धुः न दधति। न कुर्वन्ति। अतः संदृगिति संबन्धः॥

---

१. ख-ग-च-ण-भ-प्रदिवः उराणः उरुकुर्वाणोऽध्वर्युर्नामैतत्। २. ख-ग-घ-च-ण-न-प-फ-भ-स-मधुवचनः। ३. त-उपमार्थकः। ४. ख-ग-च-ण-भूतानि।

न यस्य सातुर्जनितोरवारि न मातरापितरा नू चिदिष्टौ ।
अधा मित्रो न सुधितः पावकोऽग्निर्दीदाय मानुषीषु विक्षु ॥ ७ ॥

न । यस्य । सातुः । जनितोः । अवारि । न । मातरापितरा । नु । चित् । इष्टौ ।
अध । मित्रः । न । सुऽधितः । पावकः । अग्निः । दीदाय । मानुषीषु । विक्षु ॥ ७ ॥

जनितोः जनयितुर्वृष्ट्युत्पादकस्य यस्य वैश्वानरस्य सातुः सनिः पश्वादिलक्षणं दानं दीप्तिर्वा न अवारि केनापि न वार्यते। किंच मातरापितरा मातापितरौ द्यावापृथिव्यौ यस्य इष्टौ प्रेषणे नू चित् क्षिप्रमेव न प्रभवतः। अध अपि च मित्रो न सखेव सुधितः सुतृप्तः पावकः शोधकः अग्निः मानुषीषु मनोः संबन्धिनीषु विक्षु प्रजासु दीदाय दीप्यते ॥ 'दीपी दीप्तौ'। पकारलोपश्छान्दसः। व्यत्ययेन परस्मैपदम्। लिट्यभ्यासस्य ह्रस्वे कृते तुजादित्वाद्दीर्घत्वम् ॥

द्विर्यं पञ्च जीजनन्त्संवसानाः स्वसारो अग्निं मानुषीषु विक्षु ।
उषर्बुधमथर्यो॒३ न दन्तं शुक्रं स्वासं परशुं न तिग्मम् ॥ ८ ॥

द्विः । यम् । पञ्च । जीजनन् । सम्ऽवसानाः । स्वसारः । अग्निम् । मानुषीषु । विक्षु ।
उषःऽबुधम् । अथर्यः । न । दन्तम् । शुक्रम् । सुऽआसम् । परशुम् । न । तिग्मम् ॥ ८ ॥

मानुषीषु मनोः संबन्धिनीषु विक्षु प्रजासु संवसानाः संगच्छमानाः द्विः पञ्च दश स्वसारः अङ्गुलयः[2] यम् अग्निं जीजनन् मथनेन[3] उदपादयन् ॥ 'जनी प्रादुर्भावे'। लुङि छान्दसत्वादडभावः ॥ कीदृश्य अङ्गुलयः। अथर्यो न स्त्रिय इव। कीदृशमग्निम्। उषर्बुधम् उषसि बुध्यमानं दन्तम् अदन्तं[4] हविषां भक्षकं शुक्रं रश्मिभिर्दीप्यमानं स्वासं शोभनास्यं तिग्मं तीक्ष्णं परशुं न परशुमिव रक्षसां हन्तारमिति शेषः ॥

तव त्ये अग्ने हरितो घृतस्ना रोहितास ऋज्वञ्चः स्वञ्चः ।
अरुषासो वृषण ऋजुमुष्का आ देवतातिमह्वन्त दस्माः ॥ ९ ॥

तव । त्ये । अग्ने । हरितः । घृतऽस्नाः । रोहितासः । ऋजुऽअञ्चः । सुऽअञ्चः ।
अरुषासः । वृषणः । ऋजुऽमुष्काः । आ । देवऽतातिम् । अह्वन्त । दस्माः ॥ ९ ॥

हे अग्ने त्ये ते प्रसिद्धाः तव हरितः त्वत्संबन्धिनोऽश्वाः देवतातिम् अस्मदीयं यागं प्रति आ अह्वन्त ऋत्विग्भिराहूयन्ते ॥ लुङि 'लिपिसिचिह्वश्च' इत्यङादेशः॥ कीदृशाः। घृतस्नाः घृतस्नुवः

1. ख-ग-च-त-भ-ल-स—उत। 2. ख-ग-च-ण—अङ्गुल्यः। 3. ल-स—मन्थनेन। 4. ख-ग-च-ण-त-न-भ-स—'अदन्तं' नास्ति।

बलातिशयान्नासापुटादिस्थानेभ्य उदकं क्षरन्तः ᵛरोहितासः रोहिता लोहितवर्णाः ᵛऋज्वञ्चः । ऋजु अकुटिलमञ्चन्ति गच्छन्तीत्यृज्वञ्चः । ᵛस्वञ्चः सुष्ठु गच्छन्तः ᵛअरुषासः आरोचमानाः ᵛवृषणः युवानो वर्षितारः[1] वा ॥ ' वा षपूर्वस्य निगमे ' इति विकल्पेन दीर्घविधानादत्र दीर्घाभावः ॥ ᵛऋजुमुष्काः ऋजुवृषणाः[2] ᵛदस्माः दर्शनीयाः ॥

ये ह त्ये ते सहमाना अयासस्त्वेषासो अग्ने अर्चयश्चरन्ति ।

श्येनासो न दुवसनासो अर्थं तुविष्वणसो मारुतं न शर्धः ॥ १० ॥

ये । ह । त्ये । ते । सहमानाः । अयासः । त्वेषासः । अग्ने । अर्चयः । चरन्ति ।

श्येनासः । न । दुवसनासः । अर्थम् । तुविऽस्वनसः । मारुतम् । न । शर्धः ॥ १० ॥

हे ᵛअग्ने ᵛये ᵛह खलु ᵛत्ये ते प्रसिद्धाः ᵛसहमानाः शत्रूनभिभवन्तः ᵛअयासः गमनशीलाः ᵛत्वेषासः दीप्ताः ᵛदुवसनासः परिचरणीयाः ᵛते त्वदीयाः ᵛअर्चयः रश्मयः ᵛश्येनासो ᵛन अश्वा इव ᵛअर्थं गन्तव्यं ᵛचरन्ति गच्छन्ति । कीदृशाः । ᵛमारुतं ᵛशर्धः ᵛन मरुत्संबन्धी गण इव ᵛतुविष्वणसः तुविस्वना अधिकध्वनयो भवन्ति ॥

अकारि ब्रह्म समिधान तुभ्यं शंसात्युक्थं यजते व्यू धाः ।

होतारमग्निं मनुषो नि षेदुर्नमस्यन्त उशिजः शंसमायोः ॥ ११ ॥

अकारि । ब्रह्म । सम्ऽइधान । तुभ्यम् । शंसाति । उक्थम् । यजते । वि । ऊँ इति । धाः ।

होतारम् । अग्निम् । मनुषः । नि । सेदुः । नमस्यन्तः । उशिजः । शंसम् । आयोः ॥ ११ ॥

हे ᵛसमिधान समिध्यमानाग्ने ᵛतुभ्यं त्वदर्थं ᵛब्रह्म स्तोत्रम् ᵛअकारि अस्माभिः कृतम् । होता ᵛउक्थं शस्त्ररूपं स्तोत्रं ᵛशंसाति शंसति ॥ ' शंसु स्तुतौ ' । ' लेटोऽडाटौ ' इत्याडागमः ॥ त्वां यजमानः ᵛयजते । अतः कारणात् अस्मभ्यं धनं ᵛवि ᵛधाः विधेहि[3] ॥ दधातेश्छान्दसे लुङि ' बहुलं छन्दसि ' इत्यडभावः ॥ ᵛउ इति पादपूरणः । किंच ᵛआयोः मनुष्यस्य ᵛशंसं शंसनीयं ᵛहोतारं देवानामाह्वातारम् ᵛअग्निं त्वां ᵛनमस्यन्तः पूजयन्तः ᵛउशिजः पश्वादिलक्षणं धनं कामयमानाः ᵛमनुषः मनुष्या ऋत्विजः ᵛनि ᵛषेदुः उपाविशन् । सेवन्ते इत्यर्थः ॥ ॥ ५ ॥

' अयमिह ' इत्येकादशर्चं सप्तमं सूक्तं वामदेवस्यार्षमाग्नेयम् । आद्या जगती द्वितीयाद्याः[4] पञ्चानुष्टुभः शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—' अयमिहादौ जगती पञ्चानुष्टुभः ' इति । सूक्तविनियोगो लैङ्गिकः । अग्निप्रणयने ' अयमिह ' इति वैश्यस्य प्रतिपत् । तथा च सूत्रितम्—' अयमिह प्रथमो धायि धातृभिरिति तु राजन्यवैश्ययोराद्ये ' ( आश्व. श्रौ. २. १७ ) इति ॥

---

१. ख-ग-च-णं–वर्धितारः । २. ल-स–साधनमुष्काः । ३. त-न-भ-स–व्यधाः विधेहि । ४. ख-ग-च-ण-न-भ-स–' द्वितीयाद्याः ' नास्ति ।

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ १ ॥

अयम् । इह । प्रथमः । धायि । धातृऽभिः । होता । यजिष्ठः । अध्वरेषु । ईड्यः ।
यम् । अप्नवानः । भृगवः । विऽरुरुचुः । वनेषु । चित्रम् । विऽभ्वम् । विशेऽविशे ॥ १ ॥

धातृभिः यज्ञार्थं कर्म कुर्वद्भिरध्वर्युभिः इह अस्मिन् यज्ञे होता देवानामाह्वाता यजिष्ठः अतिशयेन यष्टा अध्वरेषु यागेषु ईड्यः ऋत्विग्भिः स्तूयमानः प्रथमः सर्वेषां देवानां मुख्यः अयम् आहवनीयादिस्थानेषु प्रत्यक्षेणोपलभ्यमानोऽग्निः धायि अधायि निहितः ॥ दधातेः कर्मणि लुङ्[1] । 'बहुलं छन्दस्यमाङ्योगे॰' इत्यडभावः । 'तिङ्ङतिङः' इति निघातः ॥ अयमग्निरित्युक्तम् । कोऽसावग्निरित्यत आह । अप्नवानः भृगुसंबन्धी कश्चिदृषिः । स चान्ये भृगवः च वनेषु अरण्येषु चित्रं दावाग्निरूपेण बहुधा दर्शनीयं विशेविशे । वीप्सया सर्वजनव्याप्तिर्गृह्यते । सर्वस्या विशः प्रजायाः विभ्वं विभुमीश्वरं यं देवानां हविर्वाहकत्वेन[2] प्रसिद्धमग्निं[3] विरुरुचुः दीप्तियुक्तं कुर्वन्ति स्म[3] । यमिति यच्छब्दस्यायमिति इदंशब्देन[4] संबन्धः ॥

'अग्ने कदा ते' इति । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ आनुष्टुभे छन्दसि 'अग्ने कदा ते' इत्याद्याः पञ्चर्चः । सूत्रितं च—'अग्ने कदा त इति पञ्च' ( आश्व. श्रौ. ४. १३ ) इति ॥

अग्ने कदा त आनुषग्भुवद्देवस्य चेतनम् ।
अधा हि त्वा जगृभ्रिरे मर्तासो विक्ष्वीड्यम् ॥ २ ॥

अग्ने । कदा । ते । आनुषक् । भुवत् । देवस्य । चेतनम् ।
अध । हि । त्वा । जगृभ्रिरे । मर्तासः । विक्षु । ईड्यम् ॥ २ ॥

हे अग्ने अध अतः कारणात् देवस्य द्योतमानस्य ते तव संबन्धि चेतनं तेजः कदा आनुषक् अनुषक्तं भुवत् भवेत् ॥ लेटयडागमः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः ॥ अतः कारणादित्युक्तम् । कस्माद्धेतोरित्युच्यते । हि यस्मात् कारणात् मर्तासः मनुष्याः विक्षु विड्भिः[5] प्रजाभिः ईड्यं स्तुत्यं त्वा त्वां जगृभ्रिरे जगृहिरे गृह्णन्ति ॥ ग्रहेर्धातोर्लिटि 'हृग्रहोर्भः॰' इति भत्वम् । 'बहुलं छन्दसि' इति रुडागमः ॥

ऋतावानं विचेतसं पश्यन्तो द्यामिव स्तृभिः ।
विश्वेषामध्वराणां हस्कर्तारं दमेदमे ॥ ३ ॥

ऋतऽवानम् । विऽचेतसम् । पश्यन्तः । द्याम्ऽइव । स्तृऽभिः ।
विश्वेषाम् । अध्वराणाम् । हस्कर्तारम् । दमेऽदमे ॥ ३ ॥

---

१. त—लुङि । २. ख-ग-च-ण-प-फ-भ—हव्यवाहकत्वेन । ३. ख-ग-घ-च-ण-प-फ-भ-स—दीप्तियुक्तं विरुरुचुः दीपितवन्तः । ४. ख-ग-च-ण-न-भ-ल—शब्देन । ५. ख-ग-घ-च-ण-प-फ-भ—'विड्भिः' नास्ति ।

<sup>v</sup>ऋतावानम् अमायिनं <sup>v</sup>विचेतसं विशिष्टज्ञानं <sup>v</sup>स्तृभिः नक्षत्रैः परिवृतं <sup>v</sup>द्यामिव विस्फुलिङ्गैः समेतं <sup>v</sup>विश्वेषां सर्वेषाम् <sup>v</sup>अध्वराणां यज्ञानां <sup>v</sup>हस्कर्तारं प्रभासकं[1] वृद्धेः[2] कर्तारं वा[2] अग्निं <sup>v</sup>पश्यन्तः ऋत्विगादयः <sup>v</sup>दमेदमे सर्वस्मिन् यज्ञगृहे । जगृभ्रिरे इति पूर्वेण संबन्धः ॥

आशुं दूतं विवस्वतो विश्वा यश्चर्षणीरभि ।
आ जभ्रुः केतुमायवो भृगवाणं विशेविशे ॥ ४ ॥

आशुम् । दूतम् । विवस्वतः । विश्वाः । यः । चर्षणीः । अभि ।
आ । जभ्रुः । केतुम् । आयवः । भृगवाणम् । विशेऽविशे ॥ ४ ॥

<sup>v</sup>यः अग्निः <sup>v</sup>विश्वाः <sup>v</sup>चर्षणीः सर्वाः प्रजाः <sup>v</sup>अभि भवति <sup>v</sup>आयवः मनुष्याः । आयव इति मनुष्यनाम[3] 'आयवः* यदवः ' ( नि. २. ३. १७ ) इति[3] मनुष्यनामसु पाठात् । <sup>v</sup>आशुं क्षिप्रगामिनं <sup>v</sup>विवस्वतः मनुष्यस्य यजमानस्य <sup>v</sup>दूतम् । विवस्वन्त इति मनुष्यनाम[4] । <sup>v</sup>केतुं प्रज्ञापकं <sup>v</sup>भृगवाणं भृगुवदाचरन्तम् । दीप्यमानमित्यर्थः ॥ ' सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः ' इति क्विप्[5] । तदन्ताल्लटो व्यत्ययेन शानच् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वात् आद्युदात्तत्वम् ॥ तमग्निं <sup>v</sup>विशेविशे सर्वस्यै प्रजायै <sup>v</sup>आ <sup>v</sup>जभ्रुः आजह्रुः ॥ 'हृग्रहोर्भः०' इति भत्वम् ॥

तमीं होतारमानुषक्चिकित्वांसं नि षेदिरे ।
रण्वं पावकशोचिषं यजिष्ठं सप्त धामभिः ॥ ५ ॥

तम् । ईम् । होतारम् । आनुषक् । चिकित्वांसम् । नि । सेदिरे ।
रण्वम् । पावकऽशोचिषम् । यजिष्ठम् । सप्त । धामऽभिः ॥ ५ ॥

ऋत्विगादयो मनुष्याः <sup>v</sup>आनुषक् आनुपूर्व्येण <sup>v</sup>होतारं देवानामाह्वातारं <sup>v</sup>चिकित्वांसं जानन्तम् ॥ ' कित ज्ञाने ' । लिटः क्वसुः । द्विर्भावहलादिशेषचुत्वदीर्घाः । प्रत्ययस्वरः ॥ <sup>v</sup>तमीं तमिममग्निं <sup>v</sup>नि <sup>v</sup>षेदिरे निषादयन्ति स्म । कीदृशम् । <sup>v</sup>रण्वं रमणीयं <sup>v</sup>पावकशोचिषं शोधकदीप्तिं <sup>v</sup>यजिष्ठं यष्टृतमं <sup>v</sup>सप्त सप्तभिः <sup>v</sup>धामभिः तेजोभिर्युक्तम् ॥ ॥ ६ ॥

तं शश्वतीषु मातृषु वन आ वीतमश्रितम् ।
चित्रं सन्तं गुहा हितं सुवेदं कूचिदर्थिनम् ॥ ६ ॥

तम् । शश्वतीषु । मातृषु । वने । आ । वीतम् । अश्रितम् ।
चित्रम् । सन्तम् । गुहा । हितम् । सुऽवेदम् । कूचित्ऽअर्थिनम् ॥ ६ ॥

---

१. ख-ग-च-ण-न-फ-भ-प्रारम्भकम्; च-प-प्रारभकम् । २. ख-ग-घ-च-ण-न-प-फ-भ-स-' वृद्धेः कर्तारं वा ' नास्ति । ३. ख-ग-च-ण-' मनुष्यनाम... इति ' नास्ति । * ल-द्रुह्यवः आयवः । ४. न-ल-मनुष्यनामेदम् । ५. च-फ-क्विप् वा ।

शश्वतीषु बह्वीषु मातृषु अप्सु । ताः सस्यादिनिर्मातृकत्वात् मातर इत्युच्यन्ते । वने आ वृक्षसमूहे च । आकारश्चार्थे । सन्तं विद्यमानं वीतं कान्तम् अश्रितं प्राणिभिर्दाहभयात् असेवितम् । दुरासदमित्यर्थः । चित्रं चायनीयं गुहा गुहायां हितं निहितं सुवेदं सुविज्ञानं सुधनं वा कूचिदर्थिनं क्वापि हविष्यर्थिनं[1] समिदाज्यपुरोडाशादि हविः[2] स्वीकुर्वन्तम् ॥ क्व इत्यत्र वकारस्य छान्दसे संप्रसारणे परपूर्वत्वे च ' हलः ' इति दीर्घत्वम् ॥ एवंभूतं तम्[3] अग्निं निषेदिरे इति पूर्वेण संबन्धः ॥

प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छन्दसि ' ससस्य यद्वियुता ' इत्याद्याः पञ्चर्चः । सूत्रितं च— ' ससस्य यद्वियुतेति पञ्च ' ( आश्व. श्रौ. ४. १३ ) इति ॥

ससस्य यद्वियुता सस्मिन्नूधन्नृतस्य धामन्रणयन्त देवाः ।
महाँ अग्निर्नमसा रातहव्यो वेरध्वराय सदमिदृतावा ॥ ७ ॥

ससस्य । यत् । विऽयुता । सस्मिन् । ऊधन् । ऋतस्य । धामन् । रणयन्त । देवाः ।
महान् । अग्निः । नमसा । रातऽहव्यः । वेः । अध्वराय । सदम् । इत् । ऋतऽवा ॥ ७ ॥

यत् यमग्निं देवाः स्तोतारः ससस्य स्वप्नस्य वियुता वियुते वियोगे । उषसीत्यर्थः । ऋतस्य उदकस्य धामन् धामनि स्थाने[4] सस्मिन् सर्वस्मिन् ऊधन् ऊधनि यज्ञे रणयन्त रमयन्ति । स्तोत्रैरिति शेषः । महान् प्रभूतः नमसा नमस्कारेण रातहव्यः दत्तहविष्कः ऋतावा सत्यवान् सः अग्निः सदमित् सदैव अध्वराय अध्वरं यजमानैः कृतं यज्ञम् ॥ ' सुपां सुपो भवन्तीति वक्तव्यम् ' ( पा. म. ७. १. ३९ ) इति वचनादत्र द्वितीयार्थे चतुर्थी ॥ वेः वेत्ति जानाति । यद्वा । देवा इन्द्रादयः ससस्य ऋत्विग्भिः सेव्यस्य[5] यद्यस्याग्नेर्वियुता विशिष्टे सस्मिन् भजनीये ऋतस्य सत्यस्य धामन् धामनि योनौ ऊधन्नूधनि यज्ञे रणयन्त रमयन्ते । महान् प्रभूतो नमसा हविषा रातहव्यो दत्तहविष्क ऋतावा सत्यवान् सोऽग्निरध्वराय यज्ञार्थं सदमित् सदैव वेः[6] गन्ता भवति । अध्वराय यज्ञं वेः कामयते[7] वा ॥

वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी संचिकित्वान् ।
दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि ॥ ८ ॥

वेः । अध्वरस्य । दूत्यानि । विद्वान् । उभे इति । अन्तरिति । रोदसी इति । सम्ऽचिकित्वान् ।
दूतः । ईयसे । प्रऽदिवः । उराणः । विदुःऽतरः । दिवः । आऽरोधनानि ॥ ८ ॥

---

१. ख-ग-च-फ–हविरर्थिनम् ; ण–हविषः अर्थिनम् ; स–हवींषि । २. त-ल–सर्वं हविः । ३. न-ल-स–' तं ' नास्ति । ४. ख-ग-घ-च-ण-त-न-भ-ल-स–' स्थाने ' नास्ति । ५. च-ण-न-भ–सत्यस्य । ६. ख-ग-घ-च-ण-न-भ-ल-स–' वेः ' नास्ति । ७. ख-ग-च-ण-त-भ-स–कामयमानः ।

हे अग्ने विद्वान् सर्वं जानानस्त्वम् अध्वरस्य यज्ञस्य संबन्धीनि दूत्यानि दूतकर्माणि वेः वेत्सि कामयसे[1] वा । यद्वा वेरिति यज्ञविशेषणम् । वेर्यजमानस्याभीष्टफलजनकस्याध्वरस्य यागस्य संबन्धीनि दूत्यानि दूतकर्माणि विद्वान् जानन्[1] । उभे रोदसी उभयो रोदस्योर्द्यावापृथिव्योः अन्तः मध्ये स्थितमन्तरिक्षं संचिकित्वान् सम्यक् जानन् प्रदिवः पुराणः । पुराणनामैदं ' प्रत्नं प्रदिवः ' ( नि. ३. २७. २ ) इति पुराणनामसु पाठात् । उराणः अल्पमपि हविः उरु बहु कुर्वाणः । ' उराण उरु कुर्वाणः ' इति यास्केनोक्तत्वात् । विदुष्टरः विद्वत्तरो देवानां दूतः त्वं दिवः स्वर्गस्य आरोधनानि आरोहणानि । आरोहणार्हाणि स्थानानीत्यर्थः । देवानां हवींष्यर्पयितुम् ईयसे गच्छसि ॥

कृष्णं त एम रुशतः पुरो भाश्चरिष्ण्वर्चिर्वपुषामिदेकम् ।
यदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः ॥ ९ ॥

कृष्णम् । ते । एम । रुशतः । पुरः । भाः । चरिष्णु । अर्चिः । वपुषाम् । इत् । एकम् ।
यत् । अप्रऽवीता । दधते । ह । गर्भम् । सद्यः । चित् । जातः । भवसि । इत् । ऊँ इति । दूतः ॥९॥

हे अग्ने रुशतः रोचमानस्य ते तव संबन्धि । अत्र एमन्शब्देन गमनमार्ग उच्यते । एम वर्त्म कृष्णं कृष्णवर्णं भवति । भाः तव संबन्धिनी दीप्तिः पुरः पुरस्ताद्भवति । चरिष्णु संचरणशीलम् अर्चिः त्वदीयं तेजः वपुषां वपुष्मतां रूपवताम् । तेजस्विनामित्यर्थः । एकम् इत् मुख्यमेव भवति । यत् यं त्वाम् अप्रवीता अनुपगता यजमानाः गर्भं त्वज्जननहेतुमरणिं दधते ह धारयन्ति खलु । स त्वं सद्यश्चित् सद्य एव जातः उत्पन्नः सन् दूतः भवसीदु यजमानस्य दूतो भवस्येव ॥

सद्यो जातस्य ददृशानमोजो यदस्य वातो अनुवाति शोचिः ।
वृणक्ति तिग्मामतसेषु जिह्वां स्थिरा चिदन्ना दयते वि जम्भैः ॥ १० ॥

सद्यः । जातस्य । ददृशानम् । ओजः । यत् । अस्य । वातः । अनुऽवाति । शोचिः ।
वृणक्ति । तिग्माम् । अतसेषु । जिह्वाम् । स्थिरा । चित् । अन्ना । दयते । वि । जम्भैः ॥ १० ॥

सद्यो जातस्य अरणिनिर्मथनादनन्तरमेवोत्पन्नस्याग्नेः ओजः तेजः ददृशानम् । ऋत्विगादिभिर्दृश्यमानं भवतीति शेषः । वातः वायुः यत् यदा अस्य[2] अग्नेः शोचिः दीप्तिम्[3] अनु लक्षीकृत्य वाति गच्छति तदा सोऽयमग्निः अतसेषु वृक्षसंघेषु तिग्मां तीक्ष्णां जिह्वां ज्वालां वृणक्ति संयोजयति । स्थिरा चित् स्थिराण्यपि अन्ना अन्नरूपाणि काष्ठादीनि जम्भैः तेजोभिः वि दयते विखण्डयति[4] । भक्षयतीत्यर्थः ॥

---

१. ख-ग-घ-च-ण-प-फ-भ-स-' कामयसे ... जानन् ' नास्ति; न-विद्वान् जानन् । २. ख-ग-घ-च-न-भ-स-यस्य । ३. च-दीप्तं तेजः । ४. ख-ग-च-फ-विस्यन्दयति ।

तृषु यदन्ना तृषुणा ववक्ष तृषुं दूतं कृणुते यह्वो अग्निः ।
वातस्य मेळिं सचते निजूर्वन्नाशुं न वाजयते हिन्वे अर्वा ॥ ११ ॥

तृषु । यत् । अन्ना । तृषुणा । ववक्ष । तृषुम् । दूतम् । कृणुते । यह्वः । अग्निः ।
वातस्य । मेळिम् । सचते । निऽजूर्वन् । आशुम् । न । वाजयते । हिन्वे । अर्वा ॥ ११ ॥

ᐯयत् यः अग्निः ᐯतृषु क्षिप्रमेव ᐯअन्ना अन्नानि काष्ठादीनि ᐯतृषुणा क्षिप्रेण रश्मिसमूहेन ᐯववक्ष वहति । दहतीत्यर्थः । ᐯयह्वः महान् सः ᐯअग्निः ᐯतृषुम् आत्मानं ᐯदूतं ᐯकृणुते यजमानदूतं[1] करोति । ᐯनिजूर्वन् काष्ठानि निःशेषेण दहन्नग्निः ᐯवातस्य वायोः ᐯमेळिं बलं ᐯसचते सेवते । ᐯआशुं ᐯन । अश्वसादी यथाश्वं तथा ᐯअर्वा गमनशीलोऽग्निः स्वरश्मिं ᐯवाजयते वाजिनं बलवन्तं करोति । ᐯहिन्वे प्रेरयति च ॥ ॥ ७ ॥

' दूतं वः ' इत्यष्टर्चमष्टमं सूक्तं वामदेवस्यार्षं गायत्रीछन्दस्कमग्निदेवताकम् । तथा चानुक्रम्यते– ' दूतं वोऽष्टौ गायत्रं तु ' इति । व्यूळ्हे दशरात्रे प्रथमे छन्दोमे इदं सूक्तं जातवेदस्यनिविद्धानीयम् । तथा च सूत्रितं—' दूतं[2] व इत्याग्निमारुतम् ' ( आश्व. श्रौ. ८. ९ ) इति । इदमादिके द्वे सूक्ते प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दसि विनियुक्ते । सूत्रितं च—' अग्ने पावक दूतं व इति सूक्ते ' ( आश्व. श्रौ. ४. १३ ) इति[2] ॥

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् । यजिष्ठमृञ्जसे गिरा ॥ १ ॥

दूतम् । वः । विश्वऽवेदसम् । हव्यऽवाहम् । अमर्त्यम् । यजिष्ठम् । ऋञ्जसे । गिरा ॥ १ ॥

हे अग्ने ᐯविश्ववेदसम् । विश्वं समस्तं वेदो धनं यस्यासौ विश्ववेदाः । तं सर्वविदं वा ᐯहव्यवाहं देवेभ्यो हविषां वोढारम् ᐯअमर्त्यम् अमरणधर्माणं ᐯयजिष्ठम् अतिशयेन यष्टारं ᐯदूतं देवानां ᐯवः त्वां ᐯगिरा स्तुतिरूपया वाचा ᐯऋञ्जसे यजमानोऽहं प्रसाधयामि । वर्धयामीत्यर्थः । ' ऋञ्जतिः प्रसाधनकर्मा ' इति यास्कः ॥

स हि वेदा वसुधितिं महाँ आरोधनं दिवः । स देवाँ एह वक्षति ॥ २ ॥

सः । हि । वेद । वसुऽधितिम् । महान् । आऽरोधनम् । दिवः ।
सः । देवान् । आ । इह । वक्षति ॥ २ ॥

ᐯस ᐯहि प्रसिद्ध एवाग्निः ᐯवसुधितिं यजमानाभीष्टफलरूपधनस्य दानं ᐯवेद वेत्ति । ᐯमहान् प्रभूतोऽग्निः ᐯदिवः ᐯआरोधनम् आरोहणं देवानां स्थानं वेत्ति । ᐯसः अग्निः ᐯइह अस्मिन् यज्ञे

---

१. ख-ग-च-न-भ-ल-स–यजमानं दूतम् । २. ख-ग-च-ण-भ-स–अग्ने पावक दूतं व इति सूक्ते इति; न–प्र यद्वस्त्रिष्टुभं दूतं व इत्याग्निमारुतमिति । प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि आश्विनशस्त्रे चैतदादिके द्वे सूक्ते । तथा च सूत्रितम्–अग्ने पावक दूतं व इति सूक्ते इति। प्रातरनुवाकन्यायेनेति च ।

"देवान् इन्द्रादीन् "आ "वक्षति आवहतु ॥ वहेर्धातोः 'लिङर्थे लेट्' इति लेट्। तस्य तिप्। 'सिब्बहुलं लेटि' इति सिप्। 'लेटोऽडाटौ' इत्यडागमश्च। 'हो ढः' इति ढत्वम्। ढत्वकत्वषत्वानि। 'तिङ्ङतिङः' इति निघातः ॥

स वेद देव आनमं देवाँ ऋतायते दमे। दाति प्रियाणि चिद्वसु ॥ ३ ॥

सः। वेद। देवः। आऽनमम्। देवान्। ऋतऽयते। दमे। दाति। प्रियाणि। चित्। वसु ॥३॥

"देवः द्योतमानः "सः अग्निः "आनमं यजमानादीनानमयितुं नमस्कारयितुं "देवान् इन्द्रादीन् "वेद क्रमेण[1] वेत्ति। "दमे यज्ञगृहे "ऋतायते ऋतं यज्ञमिच्छते यजमानाय "प्रियाणि "चित् अभीष्टान्यपि "वसु वसूनि पश्वादीनि[2] धनानि "दाति ददाति प्रयच्छति ॥

स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते। विद्वाँ आरोधनं दिवः ॥ ४ ॥

सः। होता। सः। इत्। ऊँ इति। दूत्यम्। चिकित्वान्। अन्तः। ईयते।

विद्वान्। आऽरोधनम्। दिवः ॥ ४ ॥

"सः अग्निः "होता देवानामाह्वाता भवति। "सेदु स एवाग्निः "दूत्यं देवानां दूतकर्म "चिकित्वान् जानन् "दिवः स्वर्गस्य "आरोधनम् आरोहणम् आरोहणार्हं[3] देवानां स्थानं च "विद्वान् जानन् "अन्तः द्यावापृथिव्योर्मध्ये "ईयते गच्छति ॥ 'ईङ् गतौ'। 'दिवादिभ्यः श्यन्'। 'तिङ्ङतिङः' इति निघातः ॥

ते स्याम ये अग्नये ददाशुर्हव्यदातिभिः। य ईं पुष्यन्त इन्धते ॥ ५ ॥

ते। स्याम। ये। अग्नये। ददाशुः। हव्यदातिऽभिः। ये। ईम्। पुष्यन्तः। इन्धते ॥ ५ ॥

"ते तव यजमानाः "स्याम भूयाम। ते इत्युक्तम्। के इत्युच्यते। "ये यजमानाः "अग्नये "हव्यदातिभिः हविर्दानैः "ददाशुः प्रीतिं कुर्वन्ति। "ईम् एनमग्निं "पुष्यन्तः वर्धयन्तः "ये यजमानाः "इन्धते समिद्भिर्दीप्तियुक्तं कुर्वन्ति ॥

ते राया ते सुवीर्यैः ससवांसो वि शृण्विरे। ये अग्ना दधिरे दुवः ॥ ६ ॥

ते। राया। ते। सुऽवीर्यैः। ससऽवांसः। वि। शृण्विरे। ये। अग्ना। दधिरे। दुवः ॥ ६ ॥

"ये यजमानाः "अग्ना अग्नौ ॥ 'सुपां सुलुक्°' इत्याकारः ॥ "दुवः परिचर्यां[4] "दधिरे धारयन्ति। कुर्वन्तीत्यर्थः। "ते[5] "ससवांसः अग्निं संभजमानाः "राया पश्वादिलक्षणेन धनेन "वि "शृण्विरे विश्रूयन्ते प्रख्यायन्ते। "ते "सुवीर्यैः शोभनवीर्योपेतैः पुत्रादिभिश्च विश्रूयन्ते ॥

---

१. ल–अनुक्रमेण। २. ख-ग-च-प-भ–'पश्वादीनि' नास्ति। ३. ख-ग-घ-च-ण-न-भ-ल-स–आरोहणार्थम्। ४. ख-ग-च–सपर्याम्। ५. ख-ग-त-न-प-फ-भ-ल-स–'ते' नास्ति।

अस्मे रायो दिवेदिवे सं चरन्तु पुरुस्पृहः । अस्मे वाजास ईरताम् ॥ ७ ॥

अस्मे इति । रायः । दिवेऽदिवे । सम् । चरन्तु । पुरुऽस्पृहः ।

अस्मे इति । वाजासः । ईरताम् ॥ ७ ॥

ᵛपुरुस्पृहः ऋत्विगादिभिरभिलष्यमाणाः ᵛरायः पश्वादिधनानि ᵛअस्मे अस्मासु यजमानेषु ᵛदिवेदिवे प्रतिदिनं ᵛसं ᵛचरन्तु प्रचरन्त्यो भवन्तु ॥ दिवूशब्दादुत्तरस्याः सप्तम्याः ' सुपां सुलुक्° ' इत्यादिना शेआदेशः । ' ऊडिदम्° ' इत्यादिना च तस्योदात्तत्वम् । ' नित्यवीप्सयोः ' इति द्विर्भावे सत्युत्तरभागस्य ' अनुदात्तं च ' इत्यनुदात्तत्वम् ॥ ᵛवाजासः अन्नानि च ᵛअस्मे अस्मान् ᵛईरतां यज्ञार्थं प्रेरयन्तु ॥

स विप्रश्चर्षणीनां शवसा मानुषाणाम् । अति क्षिप्रेव विध्यति ॥ ८ ॥

सः । विप्रः । चर्षणीनाम् । शवसा । मानुषाणाम् । अति । क्षिप्राऽइव । विध्यति ॥ ८ ॥

ᵛविप्रः मेधावी । विप्र इति मेधाविनाम ' विप्रो धीरः ' ( नि. ३. १५. १ ) इति तन्नामसु पाठात् । ᵛसः अग्निः ᵛशवसा बलेन । शव इति बलनाम ' पाजः शवः ' ( नि. २. ९. ३ ) इति तन्नामसु पाठात् । ᵛमानुषाणां मनुसंबन्धिनां ᵛचर्षणीनां प्रजानां ᵛक्षिप्रेव क्षेप्याण्येव[1] विनाशयितुमर्हाणि । दुरितानीति शेषः । ᵛअति ᵛविध्यति अतिविध्यतु अतिशयेन नाशयतु ॥ ॥ ८ ॥

' अग्ने मृळ ' इत्यष्टर्चं नवमं सूक्तं वामदेवस्यार्षं गायत्रीच्छन्दस्कमग्निदेवताकम्[2] । अनुक्रान्तं[3] च– ' अग्ने मृळ ' इति[3] । द्वितीये[4] छन्दोमे इदं सूक्तं जातवेदस्यनिविद्धानीयम् । सूत्रितं च[4]– ' क्रीळं वः शर्धोऽग्ने मृळेत्याग्निमारुतम् ' ( आश्व. श्रौ. ८. १० ) इति ॥

अग्ने मृळ महाँ असि य ईमा देवयुं जनम् । इयेथ बर्हिरासदम् ॥ १ ॥

अग्ने । मृळ । महान् । असि । यः । ईम् । आ । देवऽयुम् । जनम् ।

इयेथ । बर्हिः । आऽसदम् ॥ १ ॥

हे ᵛअग्ने ᵛमृळ अस्मान् सुखय । स त्वं ᵛमहान् ᵛअसि प्रभूतो[5] भवसि[5] । ᵛयः त्वम् ᵛईम् इमं ᵛदेवयुं देवानां कामयितारं ᵛजनं यजमानं ᵛबर्हिः दर्भम् ᵛआसदं यज्ञे आसत्तुम् ᵛआ ᵛइयेथ आगच्छसि ॥

स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः । दूतो विश्वेषां भुवत् ॥ २ ॥

सः । मानुषीषु । दुःऽदभः । विक्षु । प्रऽअवीः । अमर्त्यः । दूतः । विश्वेषाम् । भुवत् ॥ २ ॥

---

१. ख-ग-घ-च-ण-फ-भ–क्षिप्राण्येव; न–क्षिप्रमेव । २. स–गायत्रमाग्नेयम् । ३. स–अग्ने मृळेति अनुक्रान्तं च । सूक्तविनियोगो लैङ्गिकः । ४. न–व्यूळ्हे दशरात्रे द्वितीये छन्दोमे आग्निमारुतशस्त्रे इदं सूक्तम् । तथा च सूत्रम् । ५. ख-ग-घ-च-ण-प-फ-भ–' प्रभूतो भवसि ' नास्ति ।

vदूळभः दुर्दभो राक्षसादिना दुर्हिंसः vमानुषीषु मनुसंबन्धिनीषु[1] vविक्षु प्रजासु vप्रावीः प्रकर्षेण गन्ता vअमर्त्यः अमरणधर्मा vसः अग्निः vविश्वेषां सर्वेषां देवानां vदूतः vभुवत् भवतु ॥

स सद्म परि णीयते होता मन्द्रो दिविष्टिषु। उत पोता नि षीदति ॥ ३ ॥

सः । सद्म । परि । नीयते । होता । मन्द्रः । दिविष्टिषु । उत । पोता । नि । सीदति ॥ ३ ॥

vसः अग्निः vसद्म यज्ञगृहं vपरि vणीयते ऋत्विग्भिः परितो नीयते । नीयमानः सन् vदिविष्टिषु यागेषु vमन्द्रः मदनीयः स्तुत्यः सोऽग्निः vहोता च भवति । vउत अपि च vपोता सन् vनि vषीदति यज्ञगृहे उपविशति ॥

उत ग्ना अग्निरध्वर उतो गृहपतिर्दमे । उत ब्रह्मा नि षीदति ॥ ४ ॥

उत । ग्नाः । अग्निः । अध्वरे । उतो इति । गृहऽपतिः । दमे ।

उत । ब्रह्मा । नि । सीदति ॥ ४ ॥

vउत अपि च vअग्निः vअध्वरे यागे vग्नाः देवपत्नीर्यजति । यष्टा भवतीत्यर्थः । यद्वा । ग्ना गच्छन् अध्वर्युर्भवति । vउतो अपि च सोऽग्निः vदमे यज्ञगृहे vगृहपतिः यजमानश्च भवति । vउत अपि च vब्रह्मा ब्राह्मणाच्छंसी सन् vनि vषीदति उपविशति ॥

वेषि ह्यध्वरीयतामुपवक्ता जनानाम् । हव्या च मानुषाणाम् ॥ ५ ॥

वेषि । हि । अध्वरिऽयताम् । उपऽवक्ता । जनानाम् । हव्या । च । मानुषाणाम् ॥ ५ ॥

vअध्वरीयतां यज्ञमिच्छतां vमानुषाणां मनुसंबन्धिनां[2] vजनानां[3] vहव्या vच हव्यानि हवींषि हे अग्ने vवेषि vहि कामयसे खलु । vउपवक्ता अध्वर्युप्रभृतीनां सर्वेषां कर्मणामनुज्ञार्थं ‘ मां प्रणय ’ इत्यादिरूपस्य वाक्यस्य वक्ता सन् ब्रह्मा चासि । ‘ ब्रह्मा त्वो वदति जातविद्याम् ’ ( ऋ. सं. १०. ७१. ११ ) इति श्रुतेः । उपवक्ता[4] सर्वेषां कर्मणामवैकल्यार्थमुपद्रष्टा वा[5] सदस्योऽसि । ‘ स हि सप्तदशः कर्मणामुपद्रष्टा भवति ’ इत्यापस्तम्बेनोक्तत्वात् ॥

वेषीद्वस्य दूत्यं यस्य जुजोषो अध्वरम् । हव्यं मर्तस्य वोळ्हवे ॥ ६ ॥

वेषि । इत् । ऊँ इति । अस्य । दूत्यम् । यस्य । जुजोषः । अध्वरम् ।

हव्यम् । मर्तस्य । वोळ्हवे ॥ ६ ॥

---

१. प–मनुष्यसंबन्धिनीषु । २. प–मनुष्यसंबन्धिनीनाम् । ३. ल–जनानां यजमानानाम् । ४. ण–यद्वा उपवक्ता । ५. ख-ग-च-ण-त-न-प-फ-भ-स–‘ वा ’ नास्ति ।

हे अग्ने त्वं मर्तस्य मनुष्यस्य यस्य यजमानस्य अध्वरं यागं हव्यं हविः वोळ्हवे वोढुम् ॥ वहेर्धातोः ' तुमर्थे सेसेनसे० ' इति तवेन्प्रत्ययः । ' ञ्नित्यादिर्नित्यम् ' इत्याद्युदात्तत्वम् ॥ जुजोषः सेवेथाः ॥ ' जुषी प्रीतिसेवनयोः ' । लेट् । ' बहुलं छन्दसि ' इति शपः श्लुर्द्विर्भावश्च । ' लेटोऽडाटौ ' इत्यडागमः ॥ अस्य यजमानस्य दूत्यं दूतकर्म वेषीदु कामयस एव ॥

अस्माकं जोष्यध्वरमस्माकं यज्ञमङ्गिरः । अस्माकं शृणुधी हवम् ॥ ७ ॥

अस्माकम् । जोषि । अध्वरम् । अस्माकम् । यज्ञम् । अङ्गिरः । अस्माकम् । शृणुधि । हवम् ॥७॥

हे अङ्गिरः अग्ने त्वम् अस्माकम् अध्वरम् अस्मदीयं यागं जोषि जुषस्व सेवस्व । अस्माकम् अस्मदीयं यज्ञं यजनसाधनं[1] हविश्च जुषस्व । अस्माकम् अस्मदीयं हवम् आह्वानरूपं स्तोत्रं च शृणुधि शृणु ॥ शृणोतेर्लोण्मध्यमैकवचनम् । सिप् । तस्य हिरादेशे[2] ' श्रुवः शृ च ' इति धातोः श्नुप्रत्ययः शृभावश्च[3] । ' श्रुशृणुपृकृवृभ्यश्छन्दसि ' इति हेर्धिरादेशः ॥

परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ ८ ॥

परि । ते । दुःऽदभः । रथः । अस्मान् । अश्नोतु । विश्वतः । येन । रक्षसि । दाशुषः ॥ ८ ॥

हे अग्ने त्वं येन रथेन विश्वतः विश्वासु सर्वासु दिक्षु गच्छन् दाशुषः हविष्प्रदातॄन् यजमानान् रक्षसि विघ्नेभ्यः पालयसि । ते[4] त्वदीयः दूळभः दुर्दभः दुर्हिंसः[5] सः रथः अस्मान् यजमानान् परि परितः सर्वतः अश्नोतु व्याप्नोतु ॥ अश्नोतेर्व्यत्ययेन परस्मैपदम् ॥ ॥ ९ ॥

' अग्ने तमद्य ' इत्यष्टर्चं दशमं सूक्तं वामदेवस्यार्षम् आग्नेयम्[6] । तथा चानुक्रमणिका—' अग्ने तमद्य पदपाङ्क्तं[7] पञ्चमी महापदपङ्क्तिरन्त्योष्णिक् चतुर्थी षष्ठ्युपान्त्या वा सप्तम्याः पञ्चकौ मुख्यौ तृतीयः सप्तको नवकश्चाष्टम्याः पञ्चकः पादश्चतुष्कः सप्तकस्त्रिष्टुभश्च ' इति । इदं कृत्स्नमपि सूक्तं पदपङ्क्तिच्छन्दस्कं ' पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्तिः ' इत्युक्तलक्षणोपेतत्वात्[8] । पञ्चमी ' तव स्वादिष्ठा ' इत्येषा महापदपङ्क्तिः ' पञ्च पञ्चकाः षट्कश्चैकः ' इति लक्षणसद्भावात् । अन्त्या ' शिवा नः सख्या ' इत्येषोष्णिक्छन्दस्का । चतुर्थीषष्ठीसप्तम्यः ' आभीष्टे अद्य ', ' घृतं न पूतं ', ' कृतं चिद्धि ष्मा ' इत्येतास्तिस्र उष्णिहः पदपङ्क्तयो वा । अत्र सप्तम्यष्टम्योः पदपङ्क्त्युष्णिहोः परिभाषोक्तपादविच्छेदापवादाय प्रकारान्तरेण विच्छेदः कृतः । दशमेऽहनि इदं सूक्तमाज्यशस्त्रम् । सूत्रितं च—' अग्ने तमद्याश्वं न स्तोमैरित्याज्यम् ' ( आश्व. श्रौ. ८. १२ ) इति । पिण्डपितृयज्ञे ' अग्ने तमद्य ' इत्यनयाग्निं प्रत्यागच्छेत् । सूत्रितं च— 'अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैः ' ( आश्व. श्रौ. २. ७ ) इति । पौनराधेयिक्यां स्विष्टकृत्येषैव याज्या । सूत्रितं च—' अग्ने तमद्याश्वं न स्तोमैरिति संयाज्ये ' ( आश्व. श्रौ. २. ८ ) इति ॥

---

१. ख-ग-घ-च-ण-प-ल-स—यजमानसाधनम् । २. त-ल—हिरादेशः । ३. च—प्रकृतेः शृभावश्च । ४. न-ल-स—' ते ' नास्ति । ५. ख-ग-च-ण-त-न-भ—दुर्हिंस्यः । ६. ख-ग-घ-च-ण-न-भ-ल-स—' आग्नेयं ' नास्ति । ७. त—पदपांक्ति । ८. ख-ग-च-ण-न-भ-स—इत्युक्तलक्षणत्वात् ।

**अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् । ऋध्यामा त ओहैः ॥१॥**

अग्ने । तम् । अद्य । अश्वम् । न । स्तोमैः । क्रतुम् । न । भद्रम् । हृदिऽस्पृशम् ।
ऋध्याम । ते । ओहैः ॥ १ ॥

हे अग्ने अद्य अस्मिन्नहनि वयमृत्विगादयः ओहैः इन्द्रादिप्रापकैः स्तोमैः स्तोत्रसमूहैः तं प्रसिद्धं ते[1] त्वाम् ऋध्याम समर्धयामः । कीदृशं त्वाम् । अश्वं न वोढारमश्वमिव तथा हविषो वाहकं क्रतुं न कर्तारमिव । उपकर्तारमित्यर्थः । तथा भद्रं भजनीयं हृदिस्पृशं हृदयंगमम् । अतिशयेन प्रियमित्यर्थः ॥

पौनराधेयिक्यामिष्टौ प्रधानस्य ' अधा ह्यग्ने ' इत्येषानुवाक्या । ' एभिर्नो अर्कैः ' इति तस्यां स्विष्टकृतोऽनुवाक्या । ' आभिष्टे अद्य ' इति प्रधानस्य याज्या । सूत्रितं च–' अधा ह्यग्ने क्रतोर्भद्रस्या-भिष्टे अद्य गीर्भिर्गृणन्त एभिर्नो अर्कैः ' ( आश्व. श्रौ. २. ८ ) इति ॥

**अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ ॥ २ ॥**

अध । हि । अग्ने । क्रतोः । भद्रस्य । दक्षस्य । साधोः । रथीः । ऋतस्य । बृहतः । बभूथ ॥२॥

अधा हि इदानीमेव हे अग्ने त्वं क्रतोः अस्मदीयस्य यागस्य रथीः नेता बभूथ भवसि ॥ ' छन्दसि लुङ्लङ्लिटः ' इति भवतेर्वर्तमानेऽर्थे लिटि सिपस्थल् । ' आर्धधातुकस्येड्वलादेः ' इतीडागमे प्राप्ते ' बभूथाततन्थ° ' इति निपातनादिडभावः ॥ कीदृशस्य यागस्य । भद्रस्य भजनीयस्य दक्षस्य प्रवृद्धस्य साधोः अभीष्टफलानां साधकस्य ऋतस्य सत्यभूतस्य बृहतः महतः ॥

**एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः ।**
**अग्ने विश्वेभिः सुमना अनीकैः ॥ ३ ॥**

एभिः । नः । अर्कैः । भव । नः । अर्वाङ् । स्वः । न । ज्योतिः ।
अग्ने । विश्वेभिः । सुऽमनाः । अनीकैः ॥ ३ ॥

हे अग्ने ज्योतिः ज्योतिष्मान् स्वर्ण सूर्य इव तथा विश्वेभिः विश्वैः समस्तैः अनीकैः तेजोभिः सुमनाः शोभनमनस्कस्त्वं नः अस्मदीयैः एभिः एतैः अर्कैः अर्चनीयैः स्तोत्रैः नः अस्माकम् अर्वाङ् अभिमुखः भव ॥

**आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम । प्र ते दिवो न स्तनयन्ति शुष्माः ॥४॥**

आभिः । ते । अद्य । गीःऽभिः । गृणन्तः । अग्ने । दाशेम ।
प्र । ते । दिवः । न । स्तनयन्ति । शुष्माः ॥ ४ ॥

---

१. न-ल-स–' ते ' नास्ति ।

ᵛअद्य अस्मिन् दिवसे हे ᵛअग्ने ᵛआभिः ᵛगीर्भिः स्तुतिरूपाभिर्वाग्भिः ᵛगृणन्तः त्वां स्तुवन्तो वयमृत्विगादयः ᵛते तुभ्यं ᵛदाशेम हवींषि दद्याम[1]। ᵛदिवो ᵛन सूर्यस्य रश्मय इव ᵛते त्वदीयाः ᵛशुष्माः शोधका ज्वालाः ᵛप्र ᵛस्तनयन्ति प्रकर्षेण शब्दायन्ते । यद्वा । दिवो न मेघा इव त्वदीया ज्वालाः शब्दायन्ते ॥

तव॒ स्वादि॑ष्ठाग्ने॒ संदृ॑ष्टिरि॒दा चि॒दह्न॑ इ॒दा चि॑द॒क्तोः ।

श्रि॒ये रु॒क्मो न रो॑चत उपा॒के ॥ ५ ॥

तव॑ । स्वादि॑ष्ठा । अग्ने॑ । सम्ऽदृ॑ष्टिः । इ॒दा । चि॒त् । अह्नः॑ । इ॒दा । चि॒त् । अ॒क्तोः ।

श्रि॒ये । रु॒क्मः । न । रो॒च॒ते॒ । उ॒पा॒के ॥ ५ ॥

हे ᵛअग्ने ᵛस्वादिष्ठा स्वादुतमा प्रियतमा ᵛतव त्वदीया ᵛसंदृष्टिः दीप्तिः ᵛअह्नः ᵛइदा ᵛचित् दिवसस्येदानीं च ᵛअक्तोः ᵛइदा ᵛचित् । अक्तुरिति रात्रिनाम 'शर्वरी अक्तुः ऊर्म्या' ( नि. १.७.४) इति रात्रिनामसु पाठात् । रात्रेरिदानीं च । अहोरात्र इत्यर्थः ॥ 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' इत्यस्माद्धातोः 'किच्च' इत्यौणादिकसूत्रेण तुप्रत्ययः तस्य किद्वद्भावश्च । 'तितुत्र°' इतीट्प्रतिषेधः । 'अनिदिताम्°' इत्युपधानकारलोपः । 'चोः कुः' इति कुत्वम् ॥ ᵛरुक्मो ᵛन अलंकार इव ᵛश्रिये पदार्थमाश्रयितुम् ᵛउपाके अन्तिके[2] । उपाक इत्यन्तिकनाम 'आके उपाके' (नि. २.१६.७) इति तन्नामसु पाठात् । ᵛरोचते राजते ॥

घृ॒तं न पू॒तं त॒नूर॑रे॒पाः शुचि॒ हिर॑ण्यम् । तत्ते॑ रु॒क्मो न रो॑चत स्वधावः ॥ ६ ॥

घृ॒तम् । न । पू॒तम् । त॒नूः । अ॒रे॒पाः । शुचि॑ । हिर॑ण्यम् ।

तत् । ते॒ । रु॒क्मः । न । रो॒च॒त॒ । स्व॒धा॒ऽवः॒ ॥ ६ ॥

हे ᵛस्वधावः । स्वधाशब्दोऽन्नवाची । अन्नवन्नग्ने ᵛपूतं शोधितं ᵛघृतं ᵛन आज्यमिव ᵛतनूः त्वदीया मूर्तिः ᵛअरेपाः पापरहिता भवति । ᵛशुचि शुद्धं ᵛहिरण्यं हितरमणीयं ᵛते त्वदीयं ᵛतत् प्रसिद्धं तेजः ᵛरुक्मो ᵛन भूषणमिव ᵛरोचत रोचते भासते ॥

कृ॒तं चि॒द्धि ष्मा॒ सने॑मि॒ द्वेषोऽग्न॑ इनो॒षि॒ मर्ता॑त् । इ॒त्था यज॑मानादृतावः ॥७॥

कृ॒तम् । चि॒त् । हि । स्म॒ । सने॑मि । द्वेषः॑ । अग्ने॑ । इ॒नो॒षि॑ । मर्ता॑त् ।

इ॒त्था । यज॑मानात् । ऋ॒त॒ऽवः॒ ॥ ७ ॥

हे ᵛऋतावः[3] सत्यवन् ᵛअग्ने ᵛकृतं ᵛचित् यजमानेन कृतमपि[4] ᵛसनेमि चिरंतनम् । सनेमीति पुराणनाम 'सनेमि[5] पूर्व्यम्' ( नि. ३.२७.४ ) इति पुराणनामसु पाठात् । ᵛद्वेषः पापं[6] ᵛमर्तात्

---

१. घ-च-प-भ-ल-दद्म । २. ल-अर्वाके अन्तिके । ३. ख-ग-च-न-स-ऋतवः । ४. घ-ण-त-प-भ-पापं कृतमपि । ५. त-प्रवयाः सनेमि । ६. ख-ग-घ-च-ण-न-भ-स-पापात ।

मनुष्यात् यजमानात् ᵛइत्था सत्यम् । इत्थेति सत्यनामैतत् ' अद्धा[1] इत्था[1] ' ( नि. ३. १०. ५ ) इति तन्नामसु पाठात् । ᵛइनोषि ᵛहि ᵛस्म प्रेरयस्येव खलु । नाशयसीत्यर्थः ॥

शिवा नः सख्या सन्तु भ्रात्राग्ने देवेषु युष्मे ।

सा नो नाभिः सदने सस्मिन्नूधन् ॥ ८ ॥

शिवा । नः । सख्या । सन्तु । भ्रात्रा । अग्ने । देवेषु । युष्मे इति ।

सा । नः । नाभिः । सदने । सस्मिन् । ऊधन् ॥ ८ ॥

हे ᵛअग्ने ᵛनः अस्मदीयानि ᵛसख्या सख्यानि सखित्वानि[2] ᵛभ्रात्रा भ्रात्राणि भ्रातृसंबन्धीनि कर्माणि ᵛदेवेषु द्योतमानेषु ᵛयुष्मे युष्मासु ॥ ' सुपां सुलुक्° ' इति सप्तमीबहुवचनस्य शेआदेशः ॥ ᵛशिवा शिवानि ᵛसन्तु मङ्गलानि भवन्तु । ᵛसा सखित्वभ्रातृकर्मसंततिः ᵛसदने देवानां स्थाने ᵛसस्मिन्नूधन्[3] सर्वस्मिन् यज्ञे ᵛनः अस्माकं ᵛनाभिः बन्धनं भवति ॥ ॥ १० ॥ ॥ १ ॥

द्वितीयेऽनुवाके एकादश सूक्तानि । तत्र ' भद्रं ते ' इति षड्टचं प्रथमं सूक्तं वामदेवस्यार्षं त्रिष्टुप्छन्दस्कमग्निदेवताकम् । ' भद्रं षट् ' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोराग्नेये क्रतौ त्रैष्टुभे छन्दसीदमादिके द्वे सूक्ते विनियुक्ते। तथा च[4] सूत्रितं— ' भद्रं ते अग्न इति सूक्ते ' ( आश्व. श्रौ. ४. १३ ) इति ॥

भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य ।

रुशद्दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नम् ॥ १ ॥

भद्रम् । ते । अग्ने । सहसिन् । अनीकम् । उपाके । आ । रोचते । सूर्यस्य ।

रुशत् । दृशे । ददृशे । नक्तऽया । चित् । अरूक्षितम् । दृशे । आ । रूपे । अन्नम् ॥ १ ॥

हे ᵛसहसिन् बलवन् ᵛअग्ने ᵛते त्वदीयं ᵛभद्रं[5] भजनीयम् ᵛअनीकं तेजः[5] ᵛसूर्यस्य ᵛउपाके समीपभूते । दिवसे इत्यर्थः । ᵛआ ᵛरोचते समन्ताद्दीप्यते । ᵛरुशत् रोचमानं ᵛदृशे दर्शनीयं तेजः[6] ᵛनक्तया ᵛचित् रात्रावपि ᵛददृशे दृश्यते । आ इत्ययं शब्दः चेत्यर्थे[7] वर्तते । ᵛआ किंच ᵛअरूक्षितं स्निग्धं ᵛदृशे दर्शनीयम् ᵛअन्नं पुरोडाशादिरूपं हविः ᵛरूपे रूपवति त्वयि ऋत्विगादिभिः हुतं भवति ॥

---

१. ख-ग-च-ण-त-न-भ-ल—इत्था अद्धा; स—इत्था ऋतम् । २. ख-ग-घ-च-ण-न-भ-स—' सखित्वानि ' नास्ति । ३. ल-स—सस्मिन्नूधनि । ४. ख-ग-च-ण-न-भ-स—' च ' नास्ति । ५. ख-ग-घ-च-ण-प-भ—अनीकं तेजः भद्रं मङ्गलम्; न-ल—अनीकं तेजः । ६. ल—त्वदीयं तेजः । ७. ल—किंचेत्यर्थे ।

वि षाह्यग्ने गृणते मनीषां खं वेपसा तुविजात स्तवानः ।
विश्वेभिर्यद्वावनः शुक्र देवैस्तन्नो रास्व सुमहो भूरि मन्म ॥ २ ॥

वि । साहि । अग्ने । गृणते । मनीषाम् । खम् । वेपसा । तुविऽजात । स्तवानः ।
विश्वेभिः । यत् । ववनः । शुक्र । देवैः । तत् । नः । रास्व । सुऽमहः । भूरि । मन्म ॥२॥

हे ᵛतुविजात मथनेन[1] अरणिद्वारा यज्ञादिकर्मसु बहुजन्मन् ᵛअग्ने ᵛस्तवानः ऋत्विगादिभिः स्तूयमानस्त्वं ᵛवेपसा यज्ञादिकर्मणा । वेप इति कर्मनाम 'वेषः वेपः विष्ट्वी' ( नि. २. १. ५ ) इति कर्मनामसु पाठात् । ᵛमनीषां स्तुतिं ᵛगृणते कुर्वते यजमानाय ᵛखं यजमानप्राप्यस्य[2] पुण्यलोकस्य द्वारं ᵛवि ᵛषाहि विष्य । विमुञ्चेत्यर्थः ॥ 'षोऽन्तकर्मणि' इत्यस्माद्धातोर्लोण्मध्यमपुरुषैकवचनं सिप् । 'दिवादिभ्यः[3] श्यन्'। तस्य 'बहुलं छन्दसि' इति लुक् । 'आदेच उपदेशेऽशिति' इत्यात्वम् । सेर्हिरादेशः[3] । 'तिङ्ङतिङः' इति निघातः ॥ हे ᵛशुक्र दीप्यमानाग्ने त्वं ᵛविश्वेभिः विश्वैः सर्वैः ॥ 'बहुलं छन्दसि' इति भिस ऐसभावः ॥ ᵛदेवैः इन्द्रादिभिः सह ᵛयत् पश्वादिधनं ᵛववनः[4] यजमानेभ्यः प्रयच्छेः ॥ वनतेर्लेट् । तस्य सिपः 'इतश्च लोपः°' इति इकारलोपः । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'श्लौ' इति द्विर्वचनम् । हलादिशेषः । 'लेटोऽडाटौ' इत्यडागमः । 'यद्वृत्तान्नित्यम्' इति निघाताभावः ॥ हे ᵛसुमहः शोभनतेजस्काग्ने ᵛभूरि प्रभूतं ᵛमन्म[5] मननीयं ᵛतत् धनं ᵛनः अस्मभ्यं ᵛरास्व देहि ॥

महापितृयज्ञे स्विष्टकृदग्निः कव्यवाहनो यष्टव्यः । तस्य द्वे अनुवाक्ये । तत्र 'त्वदग्ने काव्या' इति द्वितीयानुवाक्या । तथा च सूत्रितं–'त्वदग्ने काव्या त्वन्मनीषाः स प्रत्नथा सहसा जायमानः' ( आश्व. श्रौ. २. १९ ) इति ॥

त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।
त्वदेति द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॥ ३ ॥

त्वत् । अग्ने । काव्या । त्वत् । मनीषाः । त्वत् । उक्था । जायन्ते । राध्यानि ।
त्वत् । एति । द्रविणम् । वीरऽपेशाः । इत्थाऽधिये । दाशुषे । मर्त्याय ॥ ३ ॥

हे ᵛअग्ने ᵛकाव्या काव्यानि हविर्वहनदेवतानयनादीन्यग्निसंबन्धीनि कर्माणि आध्वर्यवाणि कर्माणि वा ᵛत्वत् त्वत्तः[6] ᵛजायन्ते उत्पद्यन्ते । ᵛमनीषाः स्तुतिरूपा वाचः ᵛत्वत्[7] एव जायन्ते । ᵛराध्यानि राद्धुं योग्यानि ᵛउक्था उक्थानि शस्त्राणि ᵛत्वत् त्वत्तो जायन्ते । ᵛइत्थाधिये । धीरिति कर्मनाम । इत्थेति सत्यनामसु पाठात् सत्यकर्मणे ᵛदाशुषे हवींषि दत्तवते ᵛमर्त्याय मनुष्याय यजमानाय ᵛवीरपेशाः । पेश इति रूपनाम । इदं विक्रान्तरूपम् । अत्र लिङ्गव्यत्ययेन वीरपेशा इति रूपम् । ᵛद्रविणं पश्वादिधनं ᵛत्वत् त्वत्तः ᵛएति निर्गच्छति । उत्पद्यत इत्यर्थः ॥

---

१. त–मथनीय । २. त–यजमानेन प्राप्यस्य; न–यजमानेन प्रार्थ्यस्य । ३. ख-ग-च-ण-न-फ-भ-स–'दिवादिभ्यः... हिरादेशः' नास्ति । ४. च-ण-न–वावनः । ५. ख-ग-च-भ-न-ल-स–'मन्म' नास्ति । ६. न-ल-स–भवतः । ७. च-फ–त्वदु त्वत्तः ।

त्वद्वाजी वाजंभरो विहाया अभिष्टिकृज्जायते सत्यशुष्मः ।
त्वद्रयिर्देवजूतो मयोभुस्त्वदाशुर्जूजुवाँ अग्ने अर्वा ॥ ४ ॥

त्वत् । वाजी । वाजम्ऽभरः । विऽहायाः । अभिष्टिऽकृत् । जायते । सत्यऽशुष्मः ।
त्वत् । रयिः । देवऽजूतः । मयःऽभुः । त्वत् । आशुः । जूजुऽवान् । अग्ने । अर्वा ॥ ४ ॥

हे अग्ने वाजी बलवान् वाजंभरः हविर्लक्षणान्नस्य[1] वाहकः । अग्नेर्वाजंभर इत्येषा वैदिकी संज्ञा ॥ 'संज्ञायां भृतॄवृजि°' इति वाजशब्दे कर्मण्युपपदे खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य°' इति मुमागमः । 'चितः' इत्यन्तोदात्तत्वम् ॥ विहायाः महान् अभिष्टिकृत् यज्ञकृत् अभ्येषणकृत् वा । सत्यशुष्मः सत्यबलः पुत्रः त्वत् त्वत्तः जायते उत्पद्यते । देवजूतः देवैः प्रेरितः मयोभुः सुखप्रदः । मय इति सुखनामैतत् । रयिः धनं त्वत्[2] जायते । आशुः शीघ्रगामी । अप्रतिहतगमन इत्यर्थः । जूजुवान् वेगेन गच्छन् अर्वा अश्वः त्वत् भवतो जायते ॥

त्वामग्ने प्रथमं देवयन्तो देवं मर्ता अमृत मन्द्रजिह्वम् ।
द्वेषोयुतमा विवासन्ति धीभिर्दमूनसं गृहपतिममूरम् ॥ ५ ॥

त्वाम् । अग्ने । प्रथमम् । देवऽयन्तः । देवम् । मर्ताः । अमृत । मन्द्रऽजिह्वम् ।
द्वेषःऽयुतम् । आ । विवासन्ति । धीभिः । दमूनसम् । गृहऽपतिम् । अमूरम् ॥ ५ ॥

हे अमृत अमरणशील अग्ने देवयन्तः देवानिच्छन्तः मर्ताः मर्त्याः[3] मनुष्या यजमानाः त्वां धीभिः[4] स्तुतिभिः कर्मभिर्वा आ विवासन्ति समन्तात् परिचरन्ति । कीदृशं त्वाम् । प्रथमं देवानाम् आद्यं देवं द्योतमानं मन्द्रजिह्वम् । देवानां मादयित्री जिह्वा यस्य तम् । द्वेषोयुतं द्वेषसां पापानां पृथक्कर्तारं दमूनसं रक्षसां दमनकरेण मनसोपेतम् । दमूनःशब्दस्य कथमयमर्थ इति 'दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यात्' ( निरु. ४. ४ ) इति यास्केनोक्तत्वात् इति ॥ 'दमु उपशमे' । 'दमेरूनसिः' इत्यौणादिक ऊनसिप्रत्ययः ॥ गृहपतिं गृहाणां पालयितारम् अमूरम् अमूढम् । प्रगल्भमित्यर्थः ॥

स्वस्त्ययन्याम् 'आरे अस्मत्' इति स्वस्तिमतोऽग्नेर्याज्या । सूत्रितं[5] च[5]—'आरे अस्मदमतिमारे अंहः[6]' ( आश्व. श्रौ. २. १० ) इति[6] ॥

---

१. त–हविर्लक्षणस्यान्नस्य । २. घ-ण-प-भ-स–त्वत् त्वत्तः । ३. न-ल-स–'मर्त्याः' नास्ति । ४. ख-ग-च-ण-न-भ-ल-स–धीतिभिः । ५. ण–सूत्रितं च–स्वस्त्ययन्यां रक्षितवन्तौ । अग्ने रक्षा णो अंहसस्त्वं नः सोम विश्वत इति । अग्निः स्वस्तिमान् । स्वस्ति नो दिवो अग्ने पृथिव्याः । ६. ण-न–अंह इति पूर्वयोक्ते संयाज्ये ।

आरे अस्मदमतिमारे अंह आरे विश्वां दुर्मतिं यन्निपासिं ।
दोषा शिवः सहसः सूनो अग्ने यं देव आ चित्सचसे स्वस्ति ॥ ६ ॥

आरे । अस्मत् । अमतिम् । आरे । अंहः । आरे । विश्वाम् । दुःऽमतिम् । यत् । निऽपासिं ।
दोषा । शिवः । सहसः । सूनो इति । अग्ने । यम् । देवः । आ । चित् । सचसे । स्वस्ति ॥६॥

हे ᵛसहसः ᵛसूनो बलस्य पुत्र । मथ्यमानोऽग्निर्मथनकारिणां हि बलेन जायते इत्यग्नेर्बलपुत्रत्वम् । हे ᵛअग्ने ᵛदोषा रात्रौ ᵛशिवः शिवकरः ᵛदेवः द्योतमानस्त्वं ᵛयं यानस्मान् ᵛस्वस्ति अविनाशाय ᵛआ ᵛसचसे परितः सेवसे । ᵛचित् इति पूरणः । ᵛयत् यस्मात् कारणात् ᵛनिपासि यजमानान् नितरां पालयसि । तेभ्यः ᵛअस्मत् अस्मत्तः ᵛअमतिं पापरूपामशनेच्छाम् ᵛआरे दूरे कुरु । 'अशनाया वै पाप्मामतिः' ( ऐ. ब्रा. २. २ ) इति ब्राह्मणम् । ᵛआरे दूरेऽस्मत्तः ᵛअंहः पापं कुरु । आरे इति दूरनामैतत् । अस्मत्तः ᵛआरे दूरे ᵛविश्वां[1] सर्वां[1] ᵛदुर्मतिं दुर्मनस्त्वं कुरु ॥　　॥ ११ ॥

'यस्त्वामग्ने' इति षड्टचं द्वितीयं सूक्तम् । वामदेव[2] ऋषिः । त्रैष्टुभं छन्दः । अग्निर्देवता[2] । 'यस्त्वाम्' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

यस्त्वामग्न इनधते यतस्रुक्त्रिस्ते अन्नं कृणवत्सस्मिन्नहन् ।
स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चिकित्वान् ॥ १ ॥

यः । त्वाम् । अग्ने । इनधते । यतऽस्रुक् । त्रिः । ते । अन्नम् । कृणवत् । सस्मिन् । अहन् ।
सः । सु । द्युम्नैः । अभि । अस्तु । प्रऽसक्षत् । तव । क्रत्वा । जातऽवेदः । चिकित्वान् ॥१॥

हे ᵛअग्ने ᵛयतस्रुक् स्रुचा संबद्धः ᵛयः यजमानः ᵛत्वाम् ᵛइनधते दीप्तियुक्तं कुर्यात् । यः ᵛसस्मिन्नहन् सर्वस्मिन्नहनि ᵛते तुभ्यं ᵛत्रिः त्रिवारं सवनत्रये ᵛअन्नं हविर्लक्षणमन्नं ᵛकृणवत् कुर्यात् । हे ᵛजातवेदः जातानां वेदितरग्ने ᵛतव तोषकेण ᵛक्रत्वा इन्धनादिहेतुना कर्मणा ᵛप्रसक्षत् प्रसहमानं त्वदीयं तेजः ᵛचिकित्वान् जानन् ᵛसः यजमानः ᵛद्युम्नैः धनैर्यशोभिर्वा ᵛसु अत्यन्तम् ᵛअभ्यस्तु शत्रून् अभिभवतु ॥

इध्मं यस्ते जभरच्छश्रमाणो महो अग्ने अनीकमा सपर्यन् ।
स इधानः प्रति दोषामुषासं पुष्यन्रयिं सचते घ्नन्नमित्रान् ॥ २ ॥

इध्मम् । यः । ते । जभरत् । शश्रमाणः । महः । अग्ने । अनीकम् । आ । सपर्यन् ।
सः । इधानः । प्रति । दोषाम् । उषसम् । पुष्यन् । रयिम् । सचते । घ्नन् । अमित्रान् ॥ २ ॥

१. ख-ग-न-भ-ल-स-'विश्वां सर्वां' नास्ति ।　२. स-वामदेवस्यार्षं त्रैष्टुभमाग्नेयम् ।

हे vअग्ने vयः यजमानः vते तुभ्यम् vइध्मं होमसाधनं समिज्जातं vजभरत् आहरेत् ॥ ‘ हृञ् हरणे ’। लिङर्थे लेट्। तस्य तिपः ‘ इतश्च लोपः° ’ इति इकारलोपः । ‘ बहुलं छन्दसि ’ इति शपः श्लुः । द्विर्वचनादिकार्यम् । ‘ लेटोऽडाटौ ’ इत्यडागमः । ‘ हृग्रहोर्भः° ’ इति भत्वम् ॥ vशश्रमाणः इध्माद्याहरणे श्राम्यन् vमहः महतः[1] तव vआ vअनीकम् । आकारश्चार्थे । तेजश्च vसपर्यन् परिचरन् यो यजमानः vदोषां vप्रति रात्रिं लक्षीकृत्य vउषसं प्रति उषःकालं च लक्षीकृत्य । कालद्वयेऽपीत्यर्थः । vइधानः इन्धानस्त्वां दीप्तियुक्तं करोति vपुष्यन् प्रजाभिः पशुभिश्च पुष्टः सन् vसः यजमानः vअमित्रान् शत्रून् vघ्नन् हिंसन् vरयिं धनं vसचते सेवते । सर्वदा पश्वादिधनसमृद्धो भवतीत्यर्थः ॥

उखासंभरणीयेष्टौ अग्नेः क्षत्रभृतोऽनुवाक्या । तथा च सूत्रितम्—‘ अग्निरीशे बृहतः क्षत्रियस्याचामि ते सुमतिं घोष्यर्वाक् ’ ( आश्व. श्रौ. ४. १ ) इति ॥

अग्निरीशे बृहतः क्षत्रियस्याग्निर्वाजस्य परमस्य रायः ।

दधाति रत्नं विधते यविष्ठो व्यानुषङ्मर्त्याय स्वधावान् ॥ ३ ॥

अग्निः । ईशे । बृहतः । क्षत्रियस्य । अग्निः । वाजस्य । परमस्य । रायः ।

दधाति । रत्नम् । विधते । यविष्ठः । वि । आनुषक् । मर्त्याय । स्वधाऽवान् ॥ ३ ॥

vअग्निः vबृहतः महतः vक्षत्रियस्य बलस्य vईशे ईश्वरः[2] भवति ॥ वर्तमानेऽर्थे लिट् ॥ किंच vअग्निः vपरमस्य उत्कृष्टस्य vवाजस्य अन्नस्य vरायः पश्वादेर्धनस्य चेशे । vयविष्ठः युवतमः vस्वधावान् अन्नवान् तेजस्वी वाग्निः[3] vविधते परिचरते । ‘ विधतिः परिचरणकर्मा ’ इति यास्कः । vमर्त्याय मनुष्याय यजमानाय vरत्नं रमणीयं धनम् vआनुषक् अनुषक्तं vवि vदधाति करोति ॥

यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः ।

कृधी ष्वस्माँ अदितेरनागान्व्येनांसि शिश्रथो विष्वगग्ने ॥ ४ ॥

यत् । चित् । हि । ते । पुरुषऽत्रा । यविष्ठ । अचित्तिऽभिः । चकृम । कत् । चित् । आगः ।

कृधि । सु । अस्मान् । अदितेः । अनागान् । वि । एनांसि । शिश्रथः । विष्वक् । अग्ने ॥ ४ ॥

हे vयविष्ठ युवतम vअग्ने vयच्चिद्धि यद्यपि खलु vते त्वदीयेषु vपुरुषत्रा परिचारकेषु पुरुषेषु[4] vअचित्तिभिः अज्ञानैः vकच्चिदागः किंचिदपि पापं वयं vचकृम तथापि हे अग्ने vअस्मान् vअदितेः भूमेः vअनागान् अनागसः पापरहितान् vसु अत्यन्तं vकृधि कुरु । हे अग्ने vविष्वक् सर्वतो विद्यमानानि vएनांसि अस्माभिः कृतानि पापानि vवि vशिश्रथः विश्लथय[5] शिथिलीकुरु[5] ॥

---

१. च-फ—महत् । २. ल—ईशः । ३. ख-ग-च-ण-न-भ-स—चाग्निः; घ—अग्निः । ४. ख-त-न-भ-स—‘ पुरुषेषु ’ नास्ति । ५. च-फ—विश्लथानि कुरु ।

म॒हश्चि॒दग्न॒ एन॑सो अ॒भीक॑ ऊ॒र्वाद्दे॒वाना॑मु॒त मर्त्या॑नाम् ।
मा ते॒ सखा॑यः॒ सद॒मिद्रि॑षाम॒ यच्छा॑ तो॒काय॒ तन॑याय॒ शं योः ॥ ५ ॥

म॒हः । चि॒त् । अ॒ग्ने॒ । एन॑सः । अ॒भीके॑ । ऊ॒र्वात् । दे॒वाना॑म् । उ॒त । मर्त्या॑नाम् ।
मा । ते॒ । सखा॑यः । सद॑म् । इत् । रि॒षा॒म॒ । यच्छ॑ । तो॒काय॑ । तन॑याय । शम् । योः ॥५॥

हे ᵛअग्ने ᵛदेवानाम् इन्द्रादीनाम् ᵛउत अपि च ᵛमर्त्यानां मनुष्याणाम् ᵛअभीके अन्तिके । अभीक इत्यन्तिकनामैतत् । अस्माभिर्यत्पापं कृतं ᵛमहश्चित् महतोऽपि ᵛऊर्वात् विस्तृतादस्मात् ᵛएनसः पापात् ᵛते त्वदीयाः ᵛसखायः मित्रभूताः स्तोतारो वयं ᵛसदमित् सर्वदैव ᵛमा ᵛरिषाम मा हिंसिता भूम । हे अग्ने त्वं ᵛतोकाय पुत्राय ᵛतनयाय पौत्राय ᵛशं पापरूपोपद्रवाणां शान्तिं ᵛयोः सुकृतोत्पादितं सुखं च ᵛयच्छ देहि ॥

यथा॑ ह॒ त्यद्व॑सवो गौ॒र्यं॑ चित्प॒दि षि॒ताममु॑ञ्चता यजत्राः ।
ए॒वो ष्व१॒॑स्मन्मु॑ञ्चता॒ व्यंह॒ः प्र ता॑र्यग्ने प्रत॒रं न॒ आयु॑ः ॥ ६ ॥

यथा॑ । ह॒ । त्यत् । व॒स॒वः॒ । गौ॒र्य॑म् । चि॒त् । प॒दि । सि॒ताम् । अमु॑ञ्चत । य॒ज॒त्राः॒ ।
ए॒वो इति॑ । सु । अ॒स्मत् । मु॒ञ्च॒त॒ । वि । अंह॑ः । प्र । ता॒रि॒ । अ॒ग्ने॒ । प्र॒ऽत॒रम् । नः॒ । आयु॑ः ॥६॥

ᵛयजत्राः यजनीयाः पूजार्हा हे ᵛवसवः निवासयितारः[1] अग्नयः यूयं ᵛयथा ᵛह यथैव ᵛत्यत् त्यां तां ᵛपदि पादे ᵛसितां बद्धां ᵛगौर्यं ᵛचित् गौरीं गामपि ᵛअमुञ्चत त्यक्तवन्तो भूयास्त । ᵛएवो एवमेव ᵛअस्मत् अस्मत्तः ᵛअंहः पापं ᵛसु अत्यन्तं ᵛवि ᵛमुञ्चत विमुक्तं कुरुत । बहुवचनं पूजार्थम् । हे ᵛअग्ने त्वया ᵛप्रतरं प्रवृद्धं ᵛनः अस्मदीयम् ᵛआयुः ᵛप्र ᵛतारि प्रवृद्धं क्रियताम् ॥　॥ १२ ॥

' प्रत्यग्निः ' इति पञ्चर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं तत्तन्मन्त्रवर्णाभिधेयोषःप्रभृतिदैवतं वा । तथा चानुक्रान्तं—' प्रत्यग्निः पञ्च लिङ्गोक्तदैवतं त्वेके ' इति । लैङ्गिको विनियोगः ॥

प्रत्य॒ग्निरु॒षसा॒मग्र॑मख्यद्विभा॒ती॒नां सु॒मना॑ रत्न॒धेय॑म् ।
या॒तम॑श्विना सु॒कृतो॑ दु॒रो॒णमुत्सूर्यो॑ ज्योति॑षा दे॒व ए॑ति ॥ १ ॥

प्रति॑ । अ॒ग्निः । उ॒षसा॑म् । अग्र॑म् । अ॒ख्य॒त् । वि॒ऽभा॒ती॒नाम् । सु॒ऽमना॑ः । र॒त्न॒ऽधेय॑म् ।
या॒त॒म् । अ॒श्वि॒ना॒ । सु॒ऽकृत॑ः । दु॒रो॒णम् । उत् । सूर्य॑ः । ज्योति॑षा । दे॒वः । ए॒ति॒ ॥ १ ॥

ᵛसुमनाः शोभनमनस्कः ᵛअग्निः ᵛविभातीनां व्युच्छन्तीनाम् ᵛउषसाम् उषोदेवतानां ᵛरत्नधेयं रत्नधानम् । धनप्रकाशकमित्यर्थः । ᵛअग्रं ᵛप्रति[2] पूर्वकालं[2] लक्षीकृत्य ᵛअख्यत्[3] प्रवृद्धो भवति ।

---

१. ख-ग-च-न-फ-भ-स—विवासितारः ।　२. ख-ग-च-ण-फ-भ—पूर्वकालीनम् ; घ-प—पूर्वकालम् ।
३. ख-ग-घ-च-ण-प-फ-भ—प्रत्यख्यत् ।

हे अश्विना अश्विनौ युवां सुकृतः यजमानस्य दुरोणं गृहम् । दुरोणे[1] इति गृहनाम ' दुरोणे दुर्याः ' ( नि. ३. ४. ७ ) इति गृहनामसु पाठात्[1] । यातं गच्छतम् । सूर्यः ऋत्विगादीनां प्रेरकः देवः ज्योतिषा स्वेन तेजसा उत् एति उषःकाले प्रादुर्भवतीत्यर्थः ॥

ऊर्ध्वं भानुं सविता देवो अश्रेद्द्रप्सं दविध्वद्गविषो न सत्वा ।
अनु व्रतं वरुणो यन्ति मित्रो यत्सूर्यं दिव्यारोहयन्ति ॥ २ ॥

ऊर्ध्वम् । भानुम् । सविता । देवः । अश्रेत् । द्रप्सम् । दविध्वत् । गोऽइषः । न । सत्वा ।
अनु । व्रतम् । वरुणः । यन्ति । मित्रः । यत् । सूर्यम् । दिवि । आऽरोहयन्ति ॥ २ ॥

सविता प्रेरकः देवः ऊर्ध्वम् उन्मुखं भानुम् अश्रेत् आश्रयति । यत् यदा रश्मयः सूर्यं दिवि द्युलोके आरोहयन्ति आरोहणं कारयन्ति तदा वरुणः राज्यभिमानी देवः मित्रः अहरभिमानी[2] अन्ये देवाश्च व्रतं तत्संबन्धि कर्म अनु यन्ति अनुगच्छन्ति । अनुगमने दृष्टान्त उच्यते । द्रप्सं पार्थिवं रजः दविध्वत् धुन्वन् । विकिरन्नित्यर्थः । गविषः गा इच्छन् सत्वा न वृषभ इव तद्वत् ॥

यं सीमकृण्वन्तमसे विपृचे ध्रुवक्षेमा अनवस्यन्तो अर्थम् ।
तं सूर्यं हरितः सप्त यह्वीः स्पशं विश्वस्य जगतो वहन्ति ॥ ३ ॥

यम् । सीम् । अकृण्वन् । तमसे । विऽपृचे । ध्रुवऽक्षेमाः । अनवऽस्यन्तः । अर्थम् ।
तम् । सूर्यम् । हरितः । सप्त । यह्वीः । स्पशम् । विश्वस्य । जगतः । वहन्ति ॥ ३ ॥

ध्रुवक्षेमाः स्थिरनिवासाः सृष्टिकर्तारो देवाः सीं सर्वतः तमसे तमसः विपृचे पृथक्करणाय अर्थं जगल्लक्षणं कार्यम् अनवस्यन्तः अविमुञ्चन्तः कुर्वन्त एव यं सूर्यम् अकृण्वन् असृजन्नित्यर्थः । यह्वीः महत्यः सप्त सप्तसंख्याकाः हरितः अश्वाः विश्वस्य समस्तस्य जगतः प्राणिसमूहस्य स्पशं प्रेरकत्वेन ज्ञातारं तं सूर्यं वहन्ति धारयन्ति ॥

वहिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्म ।
दविध्वतो रश्मयः सूर्यस्य चर्मेवावाधुस्तमो अप्स्वन्तः ॥ ४ ॥

वहिष्ठेभिः । विऽहरन् । यासि । तन्तुम् । अवऽव्ययन् । असितम् । देव । वस्म ।
दविध्वतः । रश्मयः । सूर्यस्य । चर्मऽइव । अव । अधुः । तमः । अप्ऽसु । अन्तरिति ॥ ४ ॥

---

१. ख-ग-च-ण-भ-' दुरोणे...... पाठात् ' नास्ति । २. ख-ग-घ-च-ण-भ-ल-स-' अहरभिमानी ' नास्ति ।

हे ᵛदेव द्योतमान सूर्य त्वं जगन्निर्वाहात्मकस्य रसस्यादानार्थं ᵛतन्तुं[1] रश्मिसमूहं ᵛविहरन् विस्तारयन् ᵛअसितं कृष्णवर्णं ᵛवस्म नक्तंचराणां निवासभूतां रात्रिम् ᵛअवव्ययन् अवाचीनं[2] यथा भवति तथा संवृण्वन्[3]। तिरस्कुर्वन्नित्यर्थः। ᵛवहिष्ठेभिः वोढुमत्यन्तं शक्तैः अश्वैः ᵛयासि गमनमार्गं गच्छसि। अस्यामृचि पूर्वार्धे सूर्यस्य प्रत्यक्षमर्थं प्रतिपाद्योत्तरार्धे परोक्षमर्थं प्रतिपादयितुमाह। ᵛदविध्वतः धुन्वानाः ᵛसूर्यस्य संबन्धिनः ᵛरश्मयः किरणाः ᵛअप्सु अन्तरिक्षे। आप इत्यन्तरिक्षनाम 'आकाशम् आपः पृथिवी' (नि. १. ३. ८) इति तन्नामसु पाठात्। ᵛअन्तः मध्ये ᵛचर्मेव चर्मवत् स्थितं ᵛतमः अन्धकारम् ᵛअवाधुः अवाचीनमदधुः। तिरस्कुर्वन्तीत्यर्थः॥

**अना॑यतो॒ अनि॑बद्धः कृ॒थायं न्य॑ङ्ङुत्ता॒नोऽव॑ पद्यते॒ न।**

**कया॑ याति स्व॒धया॒ को द॑दर्श दि॒वः स्क॒म्भः समृ॑तः पाति॒ नाक॑म्॥ ५॥**

अना॑यतः। अनि॑ऽबद्धः। कृ॒था। अ॒यम्। न्य॑ङ्। उ॒त्ता॒नः। अव॑। प॒द्य॒ते॒। न।

कया॑। या॒ति॒। स्व॒धया॑। कः। द॒द॒र्श॒। दि॒वः। स्क॒म्भः। सम्ऽऋ॑तः। पा॒ति॒। नाक॑म्॥ ५॥

आयतशब्दो दूरवाची। तद्विपरीतः ᵛअनायतः आसीनः सन् ᵛअयं प्रत्यक्षेणोपलभ्यमानो मण्डलाभिमानी सूर्यः ᵛअनिबद्धः केनापि बद्धो न क्रियते। अपि चायं सूर्यः ᵛन्यङ् अवाङ्मुखः सन् केनचित् ᵛकथा कथं ᵛन ᵛअव ᵛपद्यते न हिंस्यते। किंचायम् ᵛउत्तानः ऊर्ध्वमुखत्वेन[4] तिष्ठन् ᵛकया ᵛस्वधया केन बलेन ᵛयाति गच्छति। स्वधाशब्दोऽन्नवाची अत्र तत्कार्यं बलं लक्षयति। अपि च ᵛदिवः द्युलोकस्य ᵛस्कम्भः स्तम्भः[5] ᵛसमृतः नाकेन[6] समवेतः सूर्यः ᵛनाकं स्वर्गं ᵛपाति पालयति। ᵛको ᵛददर्श तत्त्वतः कः पश्यति। न कोऽपि जानातीत्यर्थः॥　॥ १३॥

'प्रत्यग्निरुषसः' इति पञ्चर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभमाग्नेयं मान्त्रवर्णिकदैवतं वा। तथा चानुक्रान्तं—'प्रत्यग्निः' इति। 'लिङ्गोक्तदैवतं तु' इति तुशब्दादस्यापि सूक्तस्य लिङ्गोक्तदैवतत्वम्। विनियोगो लैङ्गिकः॥

**प्रत्य॒ग्निरु॒षसो॑ जा॒तवे॑दा॒ अख्य॑द्दे॒वो रोच॑माना॒ महो॑भिः।**

**आ ना॑सत्योरुगा॒या रथे॑ने॒मं य॒ज्ञमुप॑ नो या॒तमच्छ॑॥ १॥**

प्रति॑। अ॒ग्निः। उ॒षसः॑। जा॒तऽवे॑दाः। अख्य॑त्। दे॒वः। रोच॑मानाः। महः॑ऽभिः।

आ। ना॒स॒त्या॒। उ॒रु॒ऽगा॒या॒। रथे॑न। इ॒मम्। य॒ज्ञम्। उप॑। नः॒। या॒तम्। अच्छ॑॥ १॥

ᵛदेवः द्योतमानः ᵛजातवेदाः जातधनः ᵛअग्निः ᵛमहोभिः तेजोभिः ᵛरोचमानाः दीप्यमानाः ᵛउषसः ᵛप्रति उषसो लक्षीकृत्य ᵛअख्यत् प्रवृद्धो भवति। ᵛउरुगाया प्रभूतगमनौ हे ᵛनासत्या अश्विनौ ᵛरथेन ᵛनः अस्मदीयम् ᵛइमं ᵛयज्ञम् ᵛअच्छ अभिमुखम् ᵛउप ᵛयातम् उपगच्छतम्॥

---

१. ण–तन्तुं रज्जुम्। २. घ-च-ल–अर्वाचीनम्। ३. ख-ग-घ-त-प-भ-ल-स–अवृण्वन्; च-ण-न-फ–अकृण्वन्। ४. च-फ–ऊर्ध्वमुखः। ५. च-फ–स्कन्धः। ६. ख-ग-च-ण-फ–ऋतेन।

ऊर्ध्वं केतुं सविता देवो अश्रेज्ज्योतिर्विश्वस्मै भुवनाय कृण्वन् ।
आप्रा द्यावापृथिवी अन्तरिक्षं वि सूर्यो रश्मिभिश्चेकितानः ॥ २ ॥

ऊर्ध्वम् । केतुम् । सविता । देवः । अश्रेत् । ज्योतिः । विश्वस्मै । भुवनाय । कृण्वन् ।
आ । अप्राः । द्यावापृथिवी इति । अन्तरिक्षम् । वि । सूर्यः । रश्मिऽभिः । चेकितानः ॥ २ ॥

विश्वस्मै सर्वस्मै भुवनाय लोकाय ज्योतिः तेजः कृण्वन् कुर्वन् सविता प्रेरकः देवः ऊर्ध्वम् उन्मुखं[1] केतुं प्रकाशकं भानुम् अश्रेत् आश्रयति । वि चेकितानः सर्वं विशेषेण पश्यन् सूर्यः रश्मिभिः स्वकीयैः किरणैः द्यावापृथिवी द्युलोकभूलोकौ[2] अन्तरिक्षं च आप्राः समन्तादपूरयत् ॥

आवहन्त्यरुणीर्ज्योतिषागान्मही चित्रा रश्मिभिश्चेकिताना ।
प्रबोधयन्ती सुविताय देव्युषा ईयते सुयुजा रथेन ॥ ३ ॥

आऽवहन्ती । अरुणीः । ज्योतिषा । आ । अगात् । मही । चित्रा । रश्मिऽभिः । चेकिताना ।
प्रऽबोधयन्ती । सुविताय । देवी । उषाः । ईयते । सुऽयुजा । रथेन ॥ ३ ॥

आवहन्ती धनानि धारयन्ती अरुणीः अरुणवर्णाः ॥ प्रथमैकवचने द्वितीयाबहुवचनं छान्दसम् ॥ ज्योतिषा तेजसा युक्ता मही महती रश्मिभिः किरणैः चित्रा दर्शनीया चेकिताना जानती उषाः आगात् आगच्छत् । किंच प्रबोधयन्ती सुप्तान् प्रबुद्धान् कुर्वती देवी द्योतमाना उषाः सुयुजा शोभनयुक्तेन रथेन सुविताय सुखप्राप्तये ईयते गच्छति ॥

आ वां वहिष्ठा इह ते वहन्तु रथा अश्वास उषसो व्युष्टौ ।
इमे हि वां मधुपेयाय सोमा अस्मिन्यज्ञे वृषणा मादयेथाम् ॥ ४ ॥

आ । वाम् । वहिष्ठाः । इह । ते । वहन्तु । रथाः । अश्वासः । उषसः । विऽउष्टौ ।
इमे । हि । वाम् । मधुऽपेयाय । सोमाः । अस्मिन् । यज्ञे । वृषणा । मादयेथाम् ॥ ४ ॥

हे अश्विनौ इह यज्ञे वहिष्ठाः वोढृतमाः ते प्रसिद्धाः रथाः रंहणा गन्तारः अश्वासः अश्वाः वां युवाम् उषसः उषोदेवतायाः व्युष्टौ व्युच्छनकाले[3] आ वहन्तु समन्तात् नयन्तु । हि यस्मात् कारणात् हे वृषणा वृषणौ कामानां वर्षितारौ हे अश्विनौ इमे सोमाः वां युवां मधुपेयाय मधोः सोमस्य पानाय अस्मिन्यज्ञे मादयेथां हर्षयेथाम् ॥

---

१. ख-ग-च-न-फ-भ-स—सन्मुखं । २. ल—°भूलोकौ च । ३. ण—व्युष्टिकाले ।

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न ।

कया याति स्वधया को ददर्श दिवः स्कम्भः समृतः पाति नाकम् ॥ ५ ॥

अनायतः । अनिऽबद्धः । कथा । अयम् । न्यङ् । उत्तानः । अव । पद्यते । न ।

कया । याति । स्वधया । कः । ददर्श । दिवः । स्कम्भः । सम्ऽऋतः । पाति । नाकम् ॥५॥

इयमृक् पूर्वं व्याख्याता ॥　　॥ १४ ॥

' अग्निर्होता ' इति दशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं गायत्रम् । अत्रेयमनुक्रमणिका—' अग्निर्होता दश गायत्रमृषिर्बोधत् इत्याभ्यां[1] सोमकं साहदेव्यमभ्यवदत्पराभ्यामस्याश्विनावायुरयाचत ' इति । ' बोधद्यत् ' इति द्वृचेन सोमकराजा[2] स्तूयते ' एष वाम् ' इति द्वृचेनाश्विनौ शिष्टाभिः षड्भिरग्निः स्तूयते। अतस्ता एव क्रमेण[3] देवताः । सूक्तविनियोगो लैङ्गिकः । पशोः पर्यग्निकरणे ' अग्निर्होता नः ' इत्याद्यस्तृचोऽनुवचनीयः । तथा च सूत्रितम्—' अग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह ' ( आश्व. श्रौ. ३. २ ) इति । प्रातरनुवाकेऽप्याग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चायं तृचो विनियुक्तः । तथा च सूत्रितम्—' अग्निर्होता नो अध्वर इति तिस्रः ' ( आश्व. श्रौ. ४. १३ ) इति ॥

अग्निर्होता नो अध्वरे वाजी सन्परि णीयते । देवो देवेषु यज्ञियः ॥ १ ॥

अग्निः । होता । नः । अध्वरे । वाजी । सन् । परि । नीयते । देवः । देवेषु । यज्ञियः ॥१॥

होता देवानामाह्वाता होमनिष्पादको वा अग्निः नः अस्मदीये अध्वरे यागे । वाजीत्येतत् लुप्तोपमाकम् । वाजी शीघ्रगामी वोढाश्व इव तथा देवेभ्यो हविर्वाहकः सन् परि णीयते परितः समन्तात् प्राप्यते । तथा ब्राह्मणं च[4] भवति—' वाजी सन्परि णीयत इति वाजिनमिव ह्येनं सन्तं परिणयन्ति ' ( ऐ. ब्रा. २. ५ ) इति । कीदृशोऽग्निः । देवेषु द्योतमानेष्विन्द्रादिषु मध्ये देवः द्योतमानः यज्ञियः यज्ञार्हः ॥

परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥ २ ॥

परि । त्रिऽविष्टि । अध्वरम् । याति । अग्निः । रथीःऽइव । आ । देवेषु । प्रयः । दधत् ॥ २ ॥

देवेषु द्योतमानेष्विन्द्रादिषु । प्रयः इत्यन्ननामेदम् । प्रयः यजमानैर्दत्तं हवीरूपमन्नम् आ दधत् आ समन्ताद्धारयन् अग्निः अङ्गनादिगुणविशिष्टोऽग्निः त्रिविष्टि त्रिवारम् । सवनत्रयेऽपीत्यर्थः । परि परितः समन्तात् अध्वरं यजमानैः कृतं यागं याति गच्छति । परिगमने दृष्टान्तः । रथीरिव । रथवान् पुरुषो यथा शीघ्रं याति तद्वत् । तथा च ब्राह्मणं—' परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिवेत्येष हि रथीरिवाध्वरं पर्येति ' ( ऐ. ब्रा. २. ५ ) इति ॥

---

१. ण-त-न-भ-स—इति द्वाभ्याम् । २. त—सोमको देवता राजा । ३. ख-ग-च-ण-न-भ-स—' क्रमेण ' नास्ति । ४. ख-ग-च-ण-त-न-भ-स—' च ' नास्ति ।

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ ३ ॥

परि । वाजऽपतिः । कविः । अग्निः । हव्यानि । अक्रमीत् । दधत् । रत्नानि । दाशुषे ॥ ३ ॥

^v^वाजपतिः वाजानामन्नानां पतिः पालकः । 'परि वाजपतिः कविरित्येष हि वाजानां पतिः' ( ऐ. ब्रा. २. ५ ) इति ब्राह्मणम् । ^v^कविः क्रान्तदर्शी मेधावी वा ^v^दाशुषे हविर्दत्तवते यजमानाय ^v^रत्नानि रमणीयानि धनानि ^v^दधत् प्रयच्छन् ^v^अग्निः ^v^हव्यानि हवींषि ^v^परि ^v^अक्रमीत् परितः क्रामति । व्याप्नोति ॥

अयं यः सृञ्जये पुरो दैववाते समिध्यते । द्युमाँ अमित्रदम्भनः ॥ ४ ॥

अयम् । यः । सृञ्जये । पुरः । दैवऽवाते । सम्ऽइध्यते । द्युऽमान् । अमित्रऽदम्भनः ॥ ४ ॥

^v^यः प्रसिद्धः ^v^अयं प्रत्यक्षेणोपलभ्यमानोऽग्निः ^v^दैववाते देववातस्य पुत्रे ^v^सृञ्जये । सृञ्जयो नाम कश्चित्सोमयाजी । तस्मिन्निमित्तभूते सति । तद्यागार्थमित्यर्थः । सृञ्जयस्य यष्टृत्वं तैत्तिरीया आमनन्ति– 'वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽयीयजः[1]' ( तै. सं. ६. ६. २. २ ) इति । ^v^पुरः पूर्वस्यां दिशि स्थितायामुत्तरवेद्यां ^v^समिध्यते सम्यग्दीप्यते । ^v^अमित्रदम्भनः शत्रूणां हिंसकः[2] सोऽग्निः ^v^द्युमान् दीप्तिमान् भवतीति शेषः ॥

अस्य घा वीर ईवतोऽग्नेरीशीत मर्त्यः । तिग्मजम्भस्य मीळ्हुषः ॥ ५ ॥

अस्य । घ । वीरः । ईवतः । अग्नेः । ईशीत । मर्त्यः । तिग्मऽजम्भस्य । मीळ्हुषः ॥ ५ ॥

^v^वीरः स्तुतौ विक्रान्तः ^v^मर्त्यः मरणधर्मा यजमानः ^v^तिग्मजम्भस्य तीक्ष्णतेजसः ^v^मीळ्हुषः अभिलषितफलानां सेक्तुः ^v^ईवतः गमनवतः ^v^अस्य ^v^अग्नेः ^v^ईशीत ईश्वरो भवेत् । ^v^घ इति पादपूरणः । एतेन[3] यजमानः आत्माभीष्टफलं कारयितुं समर्थो भवतीत्यर्थः ॥ ॥ १५ ॥

तमर्वन्तं न सानसिमरुषं न दिवः शिशुम् । मर्मृज्यन्ते दिवेदिवे ॥ ६ ॥

तम् । अर्वन्तम् । न । सानसिम् । अरुषम् । न । दिवः । शिशुम् । मर्मृज्यन्ते । दिवेऽदिवे ॥ ६ ॥

यजमानाः ^v^अर्वन्तं ^v^न शीघ्रगामिनमश्वमिव ^v^सानसिं संभजनीयं[4] ^v^दिवः ^v^शिशुं ^v^न द्युलोकस्य पुत्रभूतं सूर्यमिव ^v^अरुषम् आरोचमानं ^v^तम् अग्निं ^v^दिवेदिवे प्रतिदिनं ^v^मर्मृज्यन्ते भृशं परिचरणं कुर्वन्ति[5] ॥

बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः । अच्छा न हूत उदरम् ॥ ७ ॥

बोधत् । यत् । मा । हरिऽभ्याम् । कुमारः । साहऽदेव्यः । अच्छ । न । हूतः । उत् । अरम् ॥ ७ ॥

---

१. ख-ग-च-ण–°अयीयजः यज्ञे । २. प–दम्भकः । ३. ल–अनेन । ४. ख-ग-च-ण–भजनीयम् । ५. ख-ग-च–कुर्वीरन् ।

ᵛसाहदेव्यः सहदेवनाम्नो राज्ञः पुत्रः ᵛकुमारः सोमकाभिधो राजा ᵛहरिभ्याम् अश्वाभ्याम् अश्वौ दातुं ᵛमा मां ᵛयत् यदा ᵛबोधत् बोधयामास इमौ तवाश्वाविति । तदा अहम् ᵛअच्छ आभिमुख्येन कुमारेण ᵛह्रूतः[1] सन् ᵛन ᵛउदरं तावश्वावलब्ध्वा न निर्गतवानस्मि ॥

उ॒त त्या य॑ज॒ता हरी॑ कु॒मा॒रात्सा॑हदे॒व्यात् । प्रय॑ता स॒द्य आ द॑दे ॥ ८ ॥

उ॒त । त्या । य॒ज॒ता । हरी॒ इति॑ । कु॒मा॒रात् । सा॒ह॒ऽदे॒व्यात् । प्रऽय॑ता । स॒द्यः । आ । द॒दे॒ ॥८॥

ᵛउत अपि च ᵛसाहदेव्यात् सहदेवस्य पुत्रात् ᵛकुमारात् सोमकाख्यात्[2] राज्ञः ᵛयजता पूजनीयौ[3] ᵛप्रयता प्रयतौ ᵛत्या त्यौ तौ प्रसिद्धौ ᵛहरी अश्वौ ᵛसद्यः यस्मिन् दिने तेनाहूतस्तस्मिन्नेव दिने ᵛआ ᵛददे आदत्तवानस्मि । मन्त्रद्रष्टा ऋषिः ' बोधत् ' इत्यृग्द्वयेन कुमारमश्वेप्सयाभ्युपगम्य अश्वौ एतस्मात्[4] लब्ध्वा प्रीतोऽभवदित्यर्थः ॥

ए॒ष वां॑ देवावश्विना कु॒मा॒रः सा॑हदे॒व्यः । दी॒र्घायु॑रस्तु॒ सोम॑कः ॥ ९ ॥

ए॒षः । वा॒म् । दे॒वौ॒ । अ॒श्वि॒ना॒ । कु॒मा॒रः । सा॒ह॒ऽदे॒व्यः । दी॒र्घऽआ॑युः । अ॒स्तु॒ । सोम॑कः ॥९॥

ᵛदेवौ द्योतमानौ हे ᵛअश्विना अश्विनौ ᵛवां युवां तर्पकः ᵛसाहदेव्यः सहदेवस्य पुत्रः ᵛकुमारः ᵛसोमकः सोमकाभिधानः ᵛएषः राजा ᵛदीर्घायुरस्तु शतायुष्को भवतु । ' एतमु हैव प्रोचतुः पर्वतनारदौ सोमकाय ' इत्यादिना ' सर्वे हैव महाराजा आसुः ' ( ऐ. ब्रा. ७.३४ ) इत्यनेन ब्राह्मणेन सोमकस्य राजत्वं स्पष्टीकृतम् ॥

तं यु॒वं दे॑वावश्विना कु॒मा॒रं सा॑हदे॒व्यम् । दी॒र्घायु॑षं कृणोतन ॥ १० ॥

तम् । यु॒वम् । दे॒वौ॒ । अ॒श्वि॒ना॒ । कु॒मा॒रम् । सा॒ह॒ऽदे॒व्यम् । दी॒र्घऽआ॑युषम् । कृ॒णो॒त॒न॒ ॥१०॥

हे ᵛदेवावश्विना द्योतमानावश्विनौ ᵛयुवं युवां ᵛतं[5] ᵛसाहदेव्यं सहदेवस्य पुत्रं ᵛकुमारं सोमकाख्यं राजानं ᵛदीर्घायुषं शतायुष्कं ᵛकृणोतन कुरुतम् । अनेन तृचेनास्य कुमारस्य दीर्घमायुः[6] अश्विनावृषिरयाचतेत्यर्थः ॥ ॥ १६ ॥

' आ सत्यो यातु ' इत्येकविंशत्यृचं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । अत्रेयमनुक्रमणिका— 'आ सत्यः सैकैन्द्रम्' इति । तत्र ' ऐन्द्रम् ' इत्युक्तत्वादग्न्यधिकारो निवृत्त इत्यवगम्यते । चतुर्विंशेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्रे इदं द्वितीयमहीनसूक्तम् । तथा च सूत्रितम्—' आ सत्यो यात्वित्य- हीनसूक्तं द्वितीयं मैत्रावरुणः ' ( आश्व. श्रौ. ७. ४) इति । समूळ्हे[7] दशरात्रे नवमेऽहनि निष्केवल्यशस्त्रे इदं सूक्तम् । तथा च सूत्रितम्—' आ सत्यो यात्वहं भुवं तत्त इन्द्रियमिति निष्केवल्यम् ' ( आश्व. श्रौ. ८. ७ ) इति ॥

---

१. ख-ग-घ-च-त-न-भ-ल-स—आहूतः । २. ख-ग-च-न-भ-स—सोमकात् । ३. घ-ण-फ—यजनीयौ । ४. त—एतस्माच्च । ५. ख-ग-न-भ-ल-स—' तं ' नास्ति । ६. ख-ग-च-ण-न-भ-स—दीर्घायुः । ७. ख-ग-च-भ—अव्यूळ्हे ।

आ सत्यो यातु मघवाँ ऋजीषी द्रवन्त्वस्य हरय उप नः ।
तस्मा इदन्धः सुषुमा सुदक्षमिहाभिपित्वं करते गृणानः ॥ १ ॥

आ । सत्यः । यातु । मघऽवान् । ऋजीषी । द्रवन्तु । अस्य । हरयः । उप । नः ।
तस्मै । इत् । अन्धः । सुसुम । सुऽदक्षम् । इह । अभिऽपित्वम् । करते । गृणानः ॥ १ ॥

ऋजीषी । ऋजीषशब्देन निष्पिष्टो विगतसारः सोमोऽभिधीयते । तद्वान् सत्यः सत्यवान् मघवान् धनवानिन्द्रः नः अस्माकम् उप समीपे आ यातु आगच्छतु । किंच अस्य इन्द्रस्य हरयः अश्वाः नोऽस्माकम् उप समीपे द्रवन्तु आगच्छन्तु । वयं यजमानाः इह अस्मिन् यज्ञे तस्मै इन्द्राय सुदक्षं शोभनबलम् । सारोपेतमित्यर्थः । इत् इदं प्रत्यक्षेणोपलभ्यमानम् अन्धः अन्नरूपं सोमं सुषुम अभिषुतं कुर्याम । गृणानः अस्माभिः स्तूयमान इन्द्रः अभिपित्वम् अस्मदभिमतप्राप्तिं करते करोतु ॥

अव स्य शूराध्वनो नान्तेऽस्मिन्नो अद्य सवने मन्दध्यै ।
शंसात्युक्थमुशनेव वेधाश्चिकितुषे असुर्याय मन्म ॥ २ ॥

अव । स्य । शूर । अध्वनः । न । अन्ते । अस्मिन् । नः । अद्य । सवने । मन्दध्यै ।
शंसाति । उक्थम् । उशनाऽइव । वेधाः । चिकितुषे । असुर्याय । मन्म ॥ २ ॥

हे शूर शत्रूणाम् अभिभवसमर्थेन्द्र[1] अद्य इदानीम् अस्मिन् सवने माध्यंदिनाख्ये मन्दध्यै त्वां मादयितुं नः अस्मान् अव स्य विमुञ्च । तत्र दृष्टान्तः । अध्वनः गन्तव्यस्य मार्गस्य अन्ते समीपे न[2] अश्वान्मनुष्या यथा[2] मुञ्चन्ति तद्वत् । उशनेव काव्य इव वेधाः शंसिता यजमानो हे इन्द्र चिकितुषे सर्वं जानते असुर्याय असुराणां हिंसकाय तुभ्यं मन्म मननीयम् उक्थं शस्त्ररूपं स्तोत्रं शंसाति शंसनं करोति ॥

कविर्न निण्यं विदथानि साधन्वृषा यत्सेकं विपिपानो अर्चात् ।
दिव इत्था जीजनत्सप्त कारूनह्ना चिच्चक्रुर्वयुना गृणन्तः ॥ ३ ॥

कविः । न । निण्यम् । विदथानि । साधन् । वृषा । यत् । सेकम् । विऽपिपानः । अर्चात् ।
दिवः । इत्था । जीजनत् । सप्त । कारून् । अह्ना । चित् । चक्रुः । वयुना । गृणन्तः ॥३॥

कविः मेधावी निण्यं न । निण्यमित्यन्तर्हितनामैतत् । अन्तर्हितं गूढमर्थमिव विदथानि वेदनीयानि कार्यजातानि[3] साधन् साधयन् वृषा कामानां वर्षितेन्द्रः यत् यदा सेकं सेचनीयं सोमं

---

१. ण–अभिभवनसमर्थेन्द्र । २. ख-ग-ण-न-भ–मनुष्या यथा अश्वान्; घ–मनुष्या यथा अश्वान्; च–मनुष्या अयथा अश्वान्; त-ल–अश्वान्न मनुष्या यथा अश्वान्; न–अश्वान्न मनुष्या यथा । ३. ण–कर्मजातानि ।

ᵛविपिपानः अत्यर्थं पिबन् ᵛअर्चात् विशेषेणार्चति । सोमपाने श्रद्धां करोतीत्यर्थः । तदानीं ᵛदिवः अमुष्मात् द्युलोकात्[1] ᵛइत्था सत्यमेव ᵛसप्त सप्तसंख्याकान् ᵛकारून् रश्मीन् ᵛजीजनत् अजीजनत् । जनयति । ᵛगृणन्तः स्तूयमाना रश्मयः ᵛवयुना वयुनानि मनुष्याणां ज्ञानानि ᵛअह्ना ᵛचित् ᵛदिवसेनापि ᵛचक्रुः कृतवन्तः ॥

स्वऽर्यद्वेदि सुदृशीकमर्कैर्महि ज्योती रुरुचुर्यद्ध वस्तोः ।

अन्धा तमांसि दुधिता विचक्षे नृभ्यश्चकार नृतमो अभिष्टौ ॥ ४ ॥

स्वः । यत् । वेदि । सुऽदृशीकम् । अर्कैः । महि । ज्योतिः । रुरुचुः । यत् । ह । वस्तोः ।

अन्धा । तमांसि । दुधिता । विऽचक्षे । नृऽभ्यः । चकार । नृऽतमः । अभिष्टौ ॥ ४ ॥

ᵛयद्ध यदा खलु ᵛमहि महत् प्रभूतं ᵛज्योतिः तेजोरूपं ᵛयत् ᵛस्वः यो द्युलोकः ᵛअर्कैः रश्मिभिः ᵛसुदृशीकं सुष्ठु दर्शनीयं ᵛवेदि अवेदि ज्ञायते तदानीं देवास्तस्मिन् स्वर्गे ᵛवस्तोः निवासार्थं ᵛरुरुचुः दीप्तियुक्ता बभूवुः । ᵛनृतमः नेतृतमः सूर्यः ᵛअभिष्टौ अभ्यागमने ᵛनृभ्यः नृणां ᵛविचक्षे विशेषेण दर्शनाय ᵛअन्धा अन्धकाररूपाणि निबिडानि ᵛतमांसि ᵛदुधिता दुधितानि नाशितानि ᵛचकार कृतवान् ॥

ववक्ष इन्द्रो अमितमृजीष्युऽभे आ पप्रौ रोदसी महित्वा ।

अतश्चिदस्य महिमा वि रेच्यभि यो विश्वा भुवना बभूव ॥ ५ ॥

ववक्षे । इन्द्रः । अमितम् । ऋजीषी । उभे इति । आ । पप्रौ । रोदसी इति । महिऽत्वा ।

अतः । चित् । अस्य । महिमा । वि । रेचि । अभि । यः । विश्वा । भुवना । बभूव ॥ ५ ॥

ᵛऋजीषी । ऋजीषशब्देन निष्पिष्टो विगतसारः सोमोऽभिधीयते । तद्वान् ᵛइन्द्रः परमैश्वर्ययुक्तः ᵛअमितम् इयत्तारहितं महिमानं ᵛववक्षे उवाह । किंच ᵛमहित्वा महत्त्वेन स्वेन महिम्ना ᵛउभे ᵛरोदसी उभे द्यावापृथिव्यौ ᵛआ ᵛपप्रौ समन्तादपूरयत् । ᵛयः इन्द्रः ᵛविश्वा ᵛभुवना सर्वाणि भुवनानि ᵛअभि ᵛबभूव तिरश्चकार । ᵛअतश्चित् एभ्योऽपि विश्वेभ्यो भुवनेभ्यः ᵛअस्य इन्द्रस्य ᵛमहिमा ᵛवि ᵛरेचि अतिरिरिचे । अधिको बभूवेत्यर्थः ॥　　　॥ १७ ॥

विश्वानि शक्रो नर्याणि विद्वानपो रिरेच सखिभिर्निकामैः ।

अश्मानं चिद्ये बिभिदुर्वचोभिर्व्रजं गोमन्तमुशिजो वि वव्रुः ॥ ६ ॥

विश्वानि । शक्रः । नर्याणि । विद्वान् । अपः । रिरेच । सखिऽभिः । निऽकामैः ।

अश्मानम् । चित् । ये । बिभिदुः । वचःऽभिः ।

व्रजम् । गोऽमन्तम् । उशिजः । वि । वव्रुरिति वव्रुः ॥ ६ ॥

---

[1] ख-ग-च-ण-न-भ-स—लोकात् ।

ᵛविश्वानि समस्तानि ᵛनर्याणि मनुष्याणां हितानि वृष्ट्यादीनि कार्याणि ᵛविद्वान् जानन् ᵛशक्रः समर्थ इन्द्रः ᵛनिकामैः निकामयमानेभ्यः[1] ᵛसखिभिः मित्रभूतेभ्यो मरुद्भ्यः ॥ व्यत्ययेन चतुर्थ्यर्थे तृतीया ॥ ᵛअपः वृष्टिलक्षणान्युदकानि ᵛरिरेच रिक्तीचकार । इन्द्रः सस्यादिफलसिद्ध्यर्थं मेघस्थान्युदकानि मरुद्भ्यो दत्तवानित्यर्थः । यद्वा । निकामैर्निकामयमानैः सखिभिर्मरुद्भिः सहितः सन् अपो नभसः सकाशात् । आप इत्यन्तरिक्षनामैतत् । अत्र विभक्तिव्यत्ययः । रिरेच व्यतिरिक्तः[2] बभूव । ᵛये मरुतः ᵛवचोभिः वाग्रूपैर्ध्वनिभिः ᵛअश्मानं ᵛचित् पर्वतमपि मेघं वा । अश्मेति मेघनामैतत् । ᵛबिभिदुः अभैत्सुः । ᵛउशिजः कामयमानास्ते मरुतः ᵛगोमन्तं गोभिरुपेतं ᵛव्रजम् अङ्गिरसां संबन्धि गोस्थानं ᵛवि ᵛवव्रुः आच्छादयामासुः ॥

**अपो वृत्रं वव्रिवांसं पराहन्प्रावत्ते वज्रं पृथिवी सचेताः ।**

**प्रार्णांसि समुद्रियाण्यैनोः पतिर्भवञ्छवसा शूर धृष्णो ॥ ७ ॥**

अपः । वृत्रम् । वव्रिऽवांसम् । परा । अहन् । प्र । आवत् । ते । वज्रम् । पृथिवी । सऽचेताः ।

प्र । अर्णांसि । समुद्रियाणि । ऐनोः । पतिः । भवन् । शवसा । शूर । धृष्णो इति ॥ ७ ॥

हे इन्द्र ᵛप्रावत् राक्षसादिभ्यः प्रकर्षेण लोकान् पालयितृ ᵛते त्वदीयं[3] ᵛवज्रम् ᵛअपः वृष्टिलक्षणान्युदकानि ᵛवव्रिवांसम् आवरकं[4] ᵛवृत्रं मेघं ᵛपराहन् प्रकर्षेण प्रेरयति स्म । ᵛपृथिवी भूमिः ᵛसचेताः चेतनावती । त्वया संगता बभूव । ᵛधृष्णो धर्षणशील हे ᵛशूर विक्रान्तेन्द्र त्वं ᵛशवसा बलेन ᵛपतिर्भवन् लोकानां पालकः सन् ᵛसमुद्रियाणि समुद्रसंबन्धीनि ᵛअर्णांसि नभसि स्थितानि उदकानि ᵛप्र ᵛऐनोः प्रेरकः अभूः[5] ॥

**अपो यदद्रिं पुरुहूत दर्दराविर्भुवत्सरमा पूर्व्यं ते ।**

**स नो नेता वाजमा दर्षि भूरिं गोत्रा रुजन्नङ्गिरोभिर्गृणानः ॥ ८ ॥**

अपः । यत् । अद्रिम् । पुरुऽहूत । दर्दः । आविः । भुवत् । सरमा । पूर्व्यम् । ते ।

सः । नः । नेता । वाजम् । आ । दर्षि । भूरिम् । गोत्रा । रुजन् । अङ्गिरःऽभिः । गृणानः ॥८॥

हे ᵛपुरुहूत बहुभिराहूतेन्द्र ᵛयत् यदा ᵛअपः प्रति वृष्टिलक्षणान्युदकानि लक्षीकृत्य ᵛअद्रिं मेघं ᵛदर्दः विदारितवानसि । ᵛसरमा देवशुनी ᵛपूर्व्यं पुरा ᵛते तुभ्यं पणिभिः अपहृतं[6] गोधनम् ᵛआविर्भुवत् प्रकाशयामास । ᵛअङ्गिरोभिः ऋषिभिः ᵛगृणानः स्तूयमानः सन् ᵛगोत्रा गोत्राण्यभ्राणि ᵛरुजन् ᵛनः अस्मान् ᵛभूरिं प्रभूतं ᵛवाजम् अन्नं ᵛनेता प्रापयिता ᵛसः त्वम् ᵛआ ᵛदर्षि आदरं कृतवानसि ॥

---

१. ख-ग-घ-च-ण-भ-कामयमानेभ्यः । २. च-फ-रिक्तः । ३. ख-ग-घ-प-फ-भ-स-त्वदीयं च । ४. ख-ग-च-आवारकम् । ५. ख-ग-च-ण-त-न-भ-स-बभूव । ६. ख-ग-च-ण-भ-स-अपहृतं धनम्; न-स-आहृतम् ।

अच्छा॑ क॒विं नृ॑मणो गा अ॒भिष्टौ॒ स्व॑र्षाता मघव॒न्नाध॑मानम् ।
ऊ॒तिभि॒स्तमि॑षणो द्यु॒म्नहू॑तौ॒ नि मा॒या॒वा॒नब्र॑ह्मा दस्यु॑रर्त ॥ ९ ॥

अच्छ॑ । क॒विम् । नृ॒ऽम॒नः॒ । गाः॒ । अ॒भिष्टौ॑ । स्वः॑ऽसाता । म॒घ॒ऽव॒न् । नाध॑मानम् ।
ऊ॒तिऽभिः॑ । तम् । इ॒ष॒णः॒ । द्यु॒म्नऽहू॑तौ । नि । मा॒याऽवा॑न् । अब्र॑ह्मा । दस्युः॑ । अ॒र्त॒ ॥ ९ ॥

हे ᵛमघवन् धनवन्निन्द्र ᵛनृमणः नृभिर्मनुष्यैर्मन्यते इति नृमणः । त्वं ᵛकविं मेधाविनं[1] कुत्सम् ᵛअच्छ[2] ᵛगाः अभ्यगाः । किंच ᵛस्वर्षाता । स्वर्धनम् । तस्य सातौ दाने निमित्ते ᵛअभिष्टौ कवेरभिगमे सति ᵛनाधमानं युद्धार्थं त्वां याचमानं कुत्सम् ᵛऊतिभिः शत्रुकृतोपद्रवपरिहाररूपै रक्षणैः ᵛइषणः प्रेरितवानसि । ᵛमायावान् कपटवान् ᵛअब्रह्मा । ऋत्विग्भिः क्रियमाणं सर्वं कर्मजातमनुज्ञारूपेण जानन् ऋत्विग्विशेषो ब्रह्मशब्देनोच्यते । स न विद्यते यस्य असौ[3] अब्रह्मा । वेदोक्तकर्मस्वास्तिक्यरहितः इत्यर्थः । ᵛदस्युः कुत्सस्य शत्रुः ᵛद्युम्नहूतौ द्युम्नं धनं हूतिराह्वानं यस्यां युधि तस्यां ᵛनि ᵛअर्त विनष्टो बभूव । इन्द्रः[4] कुत्सेनाहूतः सन् तस्य शत्रुं हतवानित्यर्थः ॥

आ द॑स्यु॒घ्ना मन॑सा या॒ह्यस्तं॒ भुव॑त्ते॒ कुत्सः॑ स॒ख्ये निका॑मः ।
स्वे योनौ॒ नि ष॑दतं॒ सरू॑पा॒ वि वां॑ चिकित्सदृत॒चिद्ध॒ नारी॑ ॥ १० ॥

आ । द॒स्यु॒ऽघ्ना । मन॑सा । या॒हि॒ । अस्त॑म् । भुव॑त् । ते॒ । कुत्सः॑ । स॒ख्ये । निऽका॑मः ।
स्वे । योनौ॑ । नि । स॒द॒त॒म् । सऽरू॑पा । वि । वा॒म् । चि॒कि॒त्स॒त् । ऋ॒त॒ऽचित् । ह॒ । नारी॑ ॥ १० ॥

अत्र काचिदाख्यायिका श्रूयते । कथम् । रुरुनामकः कश्चिद्राजर्षिः । तस्य पुत्रः कुत्साख्यो[5] राजर्षिरासीत्[5] । स च कदाचित् शत्रुभिः सह युयुत्सुः संग्रामे स्वयमशक्तः सन् शत्रूणां हननार्थमिन्द्रस्य आह्वानं चकार । स चेन्द्रः कुत्सस्य गृहमागत्य तस्य शत्रून् जघान । तदनन्तरमतिप्रीत्या तयोः सख्यमभवत् । सख्यानन्तरमिन्द्र एनमपि स्वकीयं गृहं प्रापयामास । तत्र शची इन्द्रं प्रासुमागता सती तौ समानरूपौ दृष्ट्वा अयमिन्द्रोऽयं कुत्स इति विवेकाभावेन संशयं चकार इति । अनयाख्यायिकया प्रतीयमानोऽर्थोऽत्र प्रतिपाद्यते । हे इन्द्र ᵛदस्युघ्ना दस्यूनां शत्रूणां हन्त्रा ᵛमनसा युक्तस्त्वम् ᵛअस्तं कुत्सस्य गृहम् । अस्तमिति गृहनामैतत् । ᵛआ ᵛयाहि आगाः ॥ लुङर्थे लोट् ॥ ᵛकुत्सः च ᵛते तव संबन्धिनि ᵛसख्ये ᵛनिकामः नितरां कामयमानः ᵛभुवत् अभवत् । ततः तौ[6] युवां ᵛस्वे ᵛयोनौ स्वकीये स्थाने ᵛनि ᵛषदतं न्यसीदतम् । उपविष्टावभूतम् । ᵛऋतचित् सत्यदर्शनी ᵛनारी इन्द्रस्य भार्या शची ᵛसरूपा सरूपौ[7] समानरूपौ ᵛवां[8] युवां ᵛवि ᵛचिकित्सत् संशयं चकार ॥ ॥ १८ ॥

---

१. ख-ग-घ-च-ण-फ-भ—मेधाविनं तम् । २. ख-ग-च—अच्छा । ३. न-ल-स— सः । ४. ख-ग-घ-च-ण-न-भ—'इन्द्रः' नास्ति । ५. प—कुत्सः । ६. ख-ग-घ-च-ण-फ-भ—वाम् । ७. च-न-ल—'सरूपौ' नास्ति । ८. ख-ग-घ-ण-न-भ-स—'वां' नास्ति ।

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः ।
ऋज्रा वाजं न गध्यं युयूषन्कविर्यदहन्पार्याय भूषात् ॥ ११ ॥

यासि । कुत्सेन । सऽरथम् । अवस्युः । तोदः । वातस्य । हर्योः । ईशानः ।
ऋज्रा । वाजम् । न । गध्यम् । युयूषन् । कविः । यत् । अहन् । पार्याय । भूषात् ॥ ११ ॥

हे इन्द्र ᐯअवस्युः कुत्सस्य रक्षणमिच्छन् ॥ छन्दसि क्यच् परेच्छायामपि दृश्यते ॥ ᐯतोदः तोदकः शत्रूणां[1] हिंसकः[1] ᐯवातस्य वायुसदृशयोर्वेगवतोः ᐯहर्योः अश्वयोः ᐯईशानः ईश्वरस्त्वं ᐯकुत्सेन कुत्साख्येन राजर्षिणा ᐯसरथं समानरथं[2] ᐯयासि गच्छसि । ᐯगध्यं ग्राह्यम् । 'गध्यं गृह्णातेः । ऋज्रा वाजं न गध्यं युयूषन्नित्यपि निगमो भवति' (निरु. ५. १५) इति निरुक्तम् । ᐯवाजं ᐯन अन्नमिव ᐯऋज्रा ऋजुगामिनौ अश्वौ ᐯयुयूषन् स्वकीये रथे योजयन् ᐯकविः प्राज्ञः कुत्सः ᐯयत् यस्मिन् ᐯअहन् अहनि दिवसे ᐯपार्याय पारणाय[3] आपन्निस्तरणाय ᐯभूषात् प्रभवते । तस्मिन्नेव[4] दिने कुत्सेन सरथं यासीति पूर्वेण संबन्धः ॥

कुत्साय शुष्णमशुषं नि बर्हीः प्रपित्वे अह्नः कुयवं सहस्रा ।
सद्यो दस्यून्प्र मृण कुत्स्येन प्र सूरश्चक्रं वृहतादभीके ॥ १२ ॥

कुत्साय । शुष्णम् । अशुषम् । नि । बर्हीः । प्रऽपित्वे । अह्नः । कुयवम् । सहस्रा ।
सद्यः । दस्यून् । प्र । मृण । कुत्स्येन । प्र । सूरः । चक्रम् । वृहतात् । अभीके ॥ १२ ॥

'शुष्णं पिप्रुम्' (ऋ. सं. १. १०३. ८) इत्यस्यामृचि प्रतिपादितः अर्थः[5] 'कुत्साय' इत्यनेन ऋग्द्वयेन स्पष्टीक्रियते । हे इन्द्र त्वं ᐯकुत्साय कुत्सार्थम् ᐯअशुषम् । शूषमिति सुखनामैतत् । तद्रहितम् । अत्र दीर्घाभावः । ᐯशुष्णं शुष्णनामानमसुरं ᐯनि ᐯबर्हीः न्यबर्हीः अवधीः । तथा ᐯअह्नः दिवसस्य ᐯप्रपित्वे प्रक्रमे पूर्वाह्णे ᐯकुयवं कुयवनामानमसुरं च हतवानसि । तथा स त्वं ᐯसहस्रा सहस्रेण बहुभिः परिजनैः सह ᐯसद्यः यस्मिन् काले कुयवमवधीस्तस्मिन् काल एव ᐯकुत्स्येन । कुत्स इति वज्रनामैतत् । कुत्स[6] एव[6] कुत्स्यं वज्रम् । तेन ᐯदस्यून् शत्रून् ᐯप्र ᐯमृण जहि ॥ भूतार्थे[7] लोट् ॥ हतवानसि । तथा ᐯसूरः प्रेरकस्य सूर्यस्य ᐯचक्रम् आयुधम् ᐯअभीके समीपे संग्रामे वा ᐯप्र ᐯवृहतात् प्रकर्षेण छिन्नवानसि[8] ॥

१. त-'शत्रूणां हिंसकः' नास्ति । २. ख-ग-च-ण-न-प-फ-भ-स-'समानरथं' नास्ति । ३. न-प्रेरणाय । ४. त-न-स-अस्मिन्नेव । ५. ख-ग-ण-अप्यर्थः । ६. त-'कुत्स एव' नास्ति । ७. ख-ग-च-ण-न-भ-ल-स-भूतेऽर्थे । ८. त-स-स्थितवानसि; न-रक्षितवानसि ।

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः ।
पञ्चाशत्कृष्णा नि वपः सहस्रात्कं न पुरो जरिमा वि दर्दः ॥ १३ ॥

त्वम् । पिप्रुम् । मृगयम् । शूशुऽवांसम् । ऋजिश्वने । वैदथिनाय । रन्धीः ।
पञ्चाशत् । कृष्णा । नि । वपः । सहस्रा । अत्कम् । न । पुरः । जरिमा । वि । दर्दरिति दर्दः ॥१३॥

हे इन्द्र ᵛत्वं ᵛपिप्रुं पिप्रुनामानमसुरं ᵛशूशुवांसं प्रवृद्धं ᵛमृगयं मृगयनामानमसुरं च हतवानसि किंच स त्वं ᵛवैदथिनाय विदथिनः पुत्राय ᵛऋजिश्वने ऋजिश्वनाम्ने राज्ञे ᵛरन्धीः वशमनयः । ᵛपञ्चाशत् पञ्चाशत्संख्याकानि ᵛसहस्रा सहस्राणि ᵛकृष्णा कृष्णवर्णानि रक्षांसि ᵛनि ᵛवपः न्यवपः अवधीः । तथा स त्वं ᵛजरिमा जरा ᵛअत्कं ᵛन वयोविशेषं रूपमिव ᵛपुरः शम्बरस्य नगराणि ᵛवि ᵛदर्दः विदारितवानसि ॥

सूर उपाके तन्वं१ दधानो वि यत्ते चेत्यमृतस्य वर्पः ।
मृगो न हस्ती तविषीमुषाणः सिंहो न भीम आयुधानि बिभ्रत् ॥ १४ ॥

सूरः । उपाके । तन्वम् । दधानः । वि । यत् । ते । चेति । अमृतस्य । वर्पः ।
मृगः । न । हस्ती । तविषीम् । उषाणः । सिंहः । न । भीमः । आयुधानि । बिभ्रत् ॥१४॥

हे इन्द्र ᵛसूरः प्रेरकस्य सूर्यस्य ᵛउपाके समीपे ᵛतन्वं त्वदीयं शरीरं ᵛयत् यदा ᵛदधानः धारकोऽभवः तदा ᵛअमृतस्य मरणरहितस्य ᵛते त्वदीयं ᵛवर्पः रूपं ᵛवि ᵛचेति व्यचेति । हे इन्द्र ज्ञातृभिर्विशेषेण अज्ञायत[१] । सूर्यस्य समीपे सर्वाणि रूपाणि मलिनीभवन्ति न तथेन्द्रस्य रूपं किंतु सूर्यस्य समीपे इन्द्रस्य रूपं विशेषेण भासमानं बभूवेत्यर्थः । अपि च हे इन्द्र ᵛहस्ती ᵛमृगः ᵛन गजविशेषो मृग इव ᵛतविषीं परेषां बलम् ᵛउषाणः दहन् ᵛआयुधानि वज्रादीनि शस्त्राणि ᵛबिभ्रत् बिभ्राणस्त्वं ᵛसिंहो ᵛन सिंह इव ᵛभीमः भयंकरोऽभूः ॥

इन्द्रं कामा वसूयन्तो अग्मन्त्स्वर्मीळ्हे न सवने चकानाः ।
श्रवस्यवः शशमानास उक्थैरोको न रण्वा सुदृशीव पुष्टिः ॥ १५ ॥

इन्द्रम् । कामाः । वसुऽयन्तः । अग्मन् । स्वःऽमीळ्हे । न । सवने । चकानाः ।
श्रवस्यवः । शशमानासः । उक्थैः । ओकः । न । रण्वा । सुदृशीऽइव । पुष्टिः ॥ १५ ॥

ᵛकामाः राक्षसादिभयनिवारणार्थमिन्द्रं कामयमानाः ᵛवसूयन्तः पश्वादिधनमिच्छन्तः स्तोतारः ᵛइन्द्रं परमैश्वर्ययुक्तम् ᵛअग्मन् अगमन् गच्छन्ति ॥ वर्तमानेऽर्थे[२] छान्दसो लुङ् ॥ कीदृशाः स्तोतारः ।

१. ख-ग-च-ण-प-फ-भ-ल—ज्ञायते; घ-न—आज्ञायते । २. त—वर्तमानार्थे ।

ᵛस्वर्मीळ्हे ᵛन युद्धे इव ᵛसवने यज्ञे ᵛचकानाः याचमानाः ᵛश्रवस्यवः अन्नकामाः ᵛउक्थैः स्तोत्रैः ᵛशशमानासः शंसमानाः स्तुवन्तः । तदा सोऽयमिन्द्रः ᵛओको ᵛन स्तोतॄणामावास इव भवति । ᵛरण्वा रमणीया ᵛसुदृशीव ᵛपुष्टिः शोभनदर्शना लक्ष्मीरिव भवति ॥ ॥ १९ ॥

तमिद्व इन्द्रं सुहवं हुवेम यस्ता चकार नर्या पुरूणि ।
यो मावते जरित्रे गध्यं चिन्मक्षू वाजं भरति स्पार्हराधाः ॥ १६ ॥

तम् । इत् । वः । इन्द्रम् । सुऽहवम् । हुवेम । यः । ता । चकार । नर्या । पुरूणि ।
यः । माऽवते । जरित्रे । गध्यम् । चित् । मक्षु । वाजम् । भरति । स्पार्हऽराधाः ॥ १६ ॥

ᵛयः इन्द्रः ᵛनर्या नर्याणि मनुष्यहितानि ᵛपुरूणि बहूनि ᵛता तानि प्रसिद्धानि कर्माणि ᵛचकार अकरोत् । किंच ᵛस्पार्हराधाः स्पृहणीयधनः ᵛयः इन्द्रः ᵛमावते मत्सदृशाय ᵛजरित्रे स्तोत्रे ᵛगध्यं ᵛचित् ग्राह्यं संयोजनीयमपि ᵛवाजम् अन्नं ᵛमक्षु क्षिप्रं ᵛभरति आहरति । वयं स्तोतारो हे यजमानाः ᵛवः युष्मभ्यं ᵛतमित् तमेव ᵛइन्द्रं ᵛसुहवं शोभनमाह्वानं यथा भवति तथा ᵛहुवेम आह्वयामः[1] ॥

तिग्मा यदन्तरशनिः पताति कस्मिञ्चिच्छूर मुहुके जनानाम् ।
घोरा यदर्य समृतिर्भवात्यध स्मा नस्तन्वो बोधि गोपाः ॥ १७ ॥

तिग्मा । यत् । अन्तः । अशनिः । पताति । कस्मिन् । चित् । शूर । मुहुके । जनानाम् ।
घोरा । यत् । अर्य । सम्ऽऋतिः । भवाति । अध । स्म । नः । तन्वः । बोधि । गोपाः ॥ १७ ॥

हे ᵛशूर विक्रान्तेन्द्र ᵛयत् यदा ᵛकस्मिंश्चित् सर्वस्मिन्नपि ᵛजनानां मनुष्याणां ᵛमुहुके मोहके युद्धे ᵛअन्तः अस्माकं मध्ये ᵛतिग्मा तीक्ष्णा ᵛअशनिः ᵛपताति पतेत् । हे ᵛअर्य स्वामिन्निन्द्र ᵛयत् यदास्माकं शत्रुभिः सह ᵛघोरा भीमरूपा ᵛसमृतिः युद्धं ᵛभवाति भवेत् । ᵛअध तदानीं ᵛनः अस्मदीयस्य ᵛतन्वः शरीरस्य ᵛगोपाः रक्षकः ᵛबोधि ᵛस्म अबोधि । शत्रुभ्यः सकाशात् अस्मान् रक्षकत्वेन बुद्धवानसि खलु ॥

भुवोऽविता वामदेवस्य धीनां भुवः सखावृको वाजसातौ ।
त्वामनु प्रमतिमा जगन्मोरुशंसो जरित्रे विश्वध स्याः ॥ १८ ॥

भुवः । अविता । वामऽदेवस्य । धीनाम् । भुवः । सखा । अवृकः । वाजऽसातौ ।
त्वाम् । अनु । प्रऽमतिम् । आ । जगन्म । उरुऽशंसः । जरित्रे । विश्वध । स्याः ॥ १८ ॥

---

१. ख-ग-घ-च-ण-भ—आह्वयाम; ल-स—आह्वयामि ।

हे इन्द्र त्वं वामदेवस्य वामदेवाख्यस्य मन्त्रद्रष्टुर्मम संबन्धिनीनां धीनां कर्मणाम् अविता रक्षिता भुवः भव । अवृकः हिंसारहितस्त्वं वाजसातौ युद्धे सखा मम सुहृत् भुवः भव । हे इन्द्र वयं प्रमतिं प्रकृष्टज्ञानं त्वामनु लक्षीकृत्य आ जगन्म आगच्छाम । स त्वं विश्वध सर्वदा जरित्रे स्तोत्रे उरुशंसः महता शंसनेन युक्तः स्याः भवेः ॥

एभिर्नृभिरिन्द्र त्वायुभिष्ट्वा मघवद्भिर्मघवन्विश्व आजौ ।
द्यावो न द्युम्नैरभि सन्तो अर्यः क्षपो मदेम शरदश्च पूर्वीः ॥ १९ ॥

एभिः । नृऽभिः । इन्द्र । त्वायुऽभिः । त्वा । मघवत्ऽभिः । मघऽवन् । विश्वे । आजौ ।
द्यावः । न । द्युम्नैः । अभि । सन्तः । अर्यः । क्षपः । मदेम । शरदः । च । पूर्वीः ॥१९॥

हे मघवन् धनवन् इन्द्र विश्वे विश्वस्मिन् आजौ संग्रामे त्वायुभिः शत्रुजयार्थं त्वां कामयमानैः मघवद्भिः त्वदर्थं दीयमानहविर्लक्षणैर्धनैरुपेतैः एभिः प्रत्यक्षेणोपलभ्यमानैः नृभिः[1] पुत्रपौत्राद्यैः परिजनैः सहिता वयं यजमानाः[1] द्युम्नैः धनैः द्यावो न द्योतमानाः[2] प्रकाशमाना धनिनो यथा तथा अर्यः अरीन् शत्रून्[3] अभि सन्तः अभिभवन्तः क्षपः सर्वा रात्रीः पूर्वीः बह्वीः शरदश्च संवत्सरांश्च मदेम स्तवाम । यजमानाः[4] सर्वेषु कालेषु स्तोत्रैरिन्द्रं हर्षयन्तीत्यर्थः ॥

एवेदिन्द्राय वृषभाय वृष्णे ब्रह्माकर्म भृगवो न रथम् ।
नू चिद्यथा नः सख्या वियोषदसन्न उग्रोऽविता तनूपाः ॥ २० ॥

एव । इत् । इन्द्राय । वृषभाय । वृष्णे । ब्रह्म । अकर्म । भृगवः । न । रथम् ।
नु । चित् । यथा । नः । सख्या । विऽयोषत् । असत् । नः । उग्रः । अविता । तनूऽपाः ॥२०॥

यथा इन्द्रः नः अस्मदीयानि सख्या सख्यानि कर्माणि नू चित् क्षिप्रमेव[5] वियोषत् न पृथक्कुर्यात् । उग्रः तेजस्वी तनूपाः शरीराणां[6] पालक इन्द्रो यथा नः अस्मान् अविता रक्षिता असत् स्यात् । तथा वयं यजमानाः एवेत् एवमेवोक्तप्रकारेण इन्द्राय वृषभाय कामानां वर्षित्रे वृष्णे नित्यतरुणाय ब्रह्म स्तोत्रम् अकर्म अकुर्म । तत्र दृष्टान्तः । भृगवः दीप्तास्तक्षाणः रथं न रथमिव तद्वत् । यजमानेभ्यो यथेन्द्रोऽभीप्सितफलप्रदो भवति तथेन्द्रं यजमानाः स्तुवन्तीत्यर्थः ॥

---

१. ख-ग-च-ण-भ–' नृभिः...... यजमानाः ' नास्ति । २. ख-ग-घ-च-ण-न-भ-स–' द्योतमानाः ' नास्ति । ३. ख-ग-घ-च-ण-न-भ-स–' शत्रून् ' नास्ति । ४. ख-ग-च-ण-भ–यजमानाः त्वा त्वां नृभिः पुत्रपौत्राद्यैः परिजनैः सहिता वयं यजमानाः । ५. न-भ-ल-स–' क्षिप्रमेव ' नास्ति । ६. ख-ग-च-ण-त-न-फ-भ-स–शरीरिणाम् ।

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ २१ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ २१ ॥

हे ᵛइन्द्र ᵛनु क्षिप्रं ᵛस्तुतः पूर्वैर्ऋषिभिः संस्तुतः ᵛनु क्षिप्रं ᵛगृणानः अस्माभिः स्तूयमानश्च त्वम् ᵛइषम् अन्नं ᵛजरित्रे स्तोत्रे मह्यं ᵛनद्यो ᵛन अद्भिर्नदीरिव ᵛपीपेः प्यायय प्रवृद्धं कुरु । हे[1] ᵛहरिवः हरिवन् हरिसंज्ञकाश्वोपेतेन्द्र ᵛते तुभ्यं ᵛनव्यं नवतरं ᵛब्रह्म स्तोत्रम् ᵛअकारि अस्माभिः क्रियते । ᵛरथ्यः रथवन्तो वयं ᵛधिया प्रज्ञारूपया स्तुत्या ᵛसदासाः त्वां सर्वदा भजमानास्त्वदर्थं हवीरूपस्य अन्नस्य[2] दातारो वा ᵛस्याम भूयास्म ॥ ॥ २० ॥

' त्वं महाँ इन्द्र तुभ्यम् ' इत्येकविंशत्यृचं सप्तमं सूक्तं वामदेवस्यार्षम्[3] । अत्रेयमनुक्रमणिका–' त्वं महाँ असिक्न्यामेकपदा ' इति । ' असिक्न्यां यजमानो न होता ' इत्येकपदा विराट् शिष्टा विंशतिः त्रिष्टुभः । इन्द्रो देवता । समूळ्हे दशरात्रेऽष्टमेऽहनि निष्केवल्ये इदं सूक्तं विनियुक्तम्[4] । तथा च सूत्रितं– ' त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यम् ' ( आश्व. श्रौ. ८. ७ ) इति । इन्द्रस्य वृत्रघ्नः ' त्वं महाँ ' इति पशुपुरोडाशस्यानुवाक्या । सूत्रितं च–' त्वं महाँ इन्द्र तुभ्यं ह क्षाः सत्राहणम् ' ( आश्व. श्रौ. ३. ८ ) इति ॥

त्वं महाँ इन्द्र तुभ्यं ह क्षा अनु क्षत्रं मंहना मन्यत द्यौः ।
त्वं वृत्रं शवसा जघन्वान्त्सृजः सिन्धूँरहिना जग्रसानान् ॥ १ ॥

त्वम् । महान् । इन्द्र । तुभ्यम् । ह । क्षाः । अनु । क्षत्रम् । मंहना । मन्यत । द्यौः ।
त्वम् । वृत्रम् । शवसा । जघन्वान् । सृजः । सिन्धून् । अहिना । जग्रसानान् ॥ १ ॥

हे ᵛइन्द्र ᵛत्वं ᵛमहान् प्रभूतो भवसि । ᵛक्षाः पृथिवी । क्षा इति पृथिवीनामैतत् । ᵛमंहना महत्त्वेन युक्ता सती ᵛतुभ्यं ᵛह त्वदर्थमेव ᵛक्षत्रं त्वदीयं बलम् ᵛअनु ᵛमन्यत अन्वमन्यत । अनुमतीचकार । ᵛद्यौः च त्वदर्थं बलमन्वमन्यत । हे इन्द्र ᵛत्वं ᵛशवसा त्वदीयेन बलेन ᵛवृत्रं लोकानाम्[5] आवरकं वृत्रनामकम्[5] असुरं ᵛजघन्वान् हतवान् । किंच ᵛअहिना वृत्रेण ᵛजग्रसानान् जग्रहाणान् ग्रस्तान् ॥ ग्रसतेर्लिटः कानजादेशः ॥ ᵛसिन्धून् अपः[6] ᵛसृजः असृजः[7] सृष्टवानसि[7] ॥

---

१. ग–इन्द्र हे; न-स–हे इन्द्र । २. ख-ग-च-ण-भ–अन्धसः अन्नस्य । ३. घ–वामदेव ऋषिः; न-ल-स–' वामदेवस्यार्षं ' नास्ति । ४. ल–निविद्धानीयम् । ५. ख-ग-घ-च-ण-भ–' लोकानां... °नामकं ' नास्ति । ६. ख-ग-घ-च-ण-न-भ-स–' अपः ' नास्ति । ७. ण-त–असृजः इ सृष्टवानसि खलु ।

तव त्विषो जनिमन्रेजत द्यौ रेजद्भूमिर्भियसा स्वस्य मन्योः ।

ऋघायन्त सुभ्वः पर्वतास आर्दन्धन्वानि सरयन्त आपः ॥ २ ॥

तव । त्विषः । जनिमन् । रेजत । द्यौः । रेजत् । भूमिः । भियसा । स्वस्य । मन्योः ।

ऋघायन्त । सुऽभ्वः । पर्वतासः । आर्दन् । धन्वानि । सरयन्ते । आपः ॥ २ ॥

हे इन्द्र ^v^त्विषः दीप्यमानस्य ^v^तव त्वदीये ^v^जनिमन् जन्मनि सति ^v^द्यौः अन्तरिक्षं ^v^स्वस्य त्वदीयात् ^v^मन्योः कोपात्। पञ्चम्यर्थे षष्ठी । ^v^भियसा जातभयेन[1] ^v^रेजत अरेजत् । अकम्पत[2] । ^v^भूमिः च ^v^रेजत् कम्पमाना बभूव । ^v^सुभ्वः महान्तः ^v^पर्वतासः । पर्वता मेघाः । ^v^ऋघायन्त सस्यादीनां वृष्टिप्रदानार्थं नियामकेन[3] त्वया अबाध्यन्त[4] । तथा[5] मेघाः[5] ^v^आर्दन् प्राणिनां पिपासारूपां पीडामहिंसन् । तथा मेघाः ^v^धन्वानि उदकरहितान् देशान् ^v^आपः अपः ^v^सरयन्ते गमयन्ति ॥

भिनद्गिरिं शवसा वज्रमिष्णन्नाविष्कृण्वानः सहसान ओजः ।

वधीद्वृत्रं वज्रेण मन्दसानः सरन्नापो जवसा हतवृष्णीः ॥ ३ ॥

भिनत् । गिरिम् । शवसा । वज्रम् । इष्णन् । आविःऽकृण्वानः । सहसानः । ओजः ।

वधीत् । वृत्रम् । वज्रेण । मन्दसानः । सरन् । आपः । जवसा । हतऽवृष्णीः ॥ ३ ॥

^v^सहसानः शत्रूणामभिभवन् ^v^ओजः तेजः ^v^आविष्कृण्वानः आविष्कुर्वन् इन्द्रः ^v^वज्रमिष्णन् वज्रं प्रेरयन् ^v^शवसा बलेन ^v^गिरिं पर्वतजातं ^v^भिनत् अभिनत् बिभेद । किंच ^v^मन्दसानः सोमेन मोदमान इन्द्रः ^v^वज्रेण ^v^वृत्रं वृत्रनामानमसुरं ^v^वधीत् अवधीत् जघान । ततः ^v^आपः वृत्रेणावृतान्युदकानि ^v^हतवृष्णीः । हतो वृषा[6] वृत्रो यासां ता हतवृष्ण्यः । ता वृत्रवधानन्तरं निवारण-रहिताः सत्यः ^v^जवसा वेगेन ^v^सरन् असरन्[7] अगच्छन्[7] ॥

सुवीरस्ते जनिता मन्यत द्यौरिन्द्रस्य कर्ता स्वपस्तमो भूत् ।

य ईं जजान स्वर्यं सुवज्रमनपच्युतं सदसो न भूम ॥ ४ ॥

सुऽवीरः । ते । जनिता । मन्यत । द्यौः । इन्द्रस्य । कर्ता । स्वपःऽतमः । भूत् ।

यः । ईम् । जजान । स्वर्यम् । सुऽवज्रम् । अनपऽच्युतम् । सदसः । न । भूम ॥ ४ ॥

---

१. त–जातेन भयेन । २. ख-ग-च-ण-न-भ-स–अकम्पयत् । ३. ख-ग-च-ण-फ-भ–नियामकत्वेन । ४. ख-ग-च–आबध्यन्त । ५. ख-ग-घ-च-ण-भ–‘ तथा मेघाः ’ नास्ति । ६. ख-ग-घ-ण-त-न-भ-ल-स–‘ वृषा ’ नास्ति । ७. ख-ग-घ-ण-न-भ-ल-स–अगच्छन्; च-फ–आगच्छन्; प–असरन् आगच्छन् ।

हे इन्द्र ᵛयः प्रजापतिः ᵛस्वर्यम् ऋत्विगादिभिः स्तुत्यं ᵛसुवज्रं शोभनवज्रोपेतं ᵛसदसः स्वकीयात् स्वर्गाख्यात् स्थानात् ᵛअनपच्युतं विच्युतिरहितं च । ᵛन इति समुच्चयार्थे । ᵛभूम भूम्ना महत्त्वेन युक्तम् ᵛईम् एनं त्वां ᵛजजान अजीजनत् ॥ ' जन जनने ' इति धातुः ॥ ᵛद्यौः द्योतमानः ᵛते तव ᵛजनिता जनयिता स प्रजापतिः ᵛसुवीरः शोभनपुत्रवानहमस्मीति ᵛमन्यत अमन्यत । किंच ᵛइन्द्रस्य ᵛकर्ता इन्द्रस्य[1] जनयिता प्रजापतिः ᵛस्वपस्तमः अत्यन्तं[2] शोभनकर्मा[2] अभूत् ॥

**य एक इच्च्यावयति प्र भूमा राजा कृष्टीनां पुरुहूत इन्द्रः ।**

**सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः ॥ ५ ॥**

यः । एकः । इत् । च्यवयति । प्र । भूम । राजा । कृष्टीनाम् । पुरुऽहूतः । इन्द्रः ।

सत्यम् । एनम् । अनु । विश्वे । मदन्ति । रातिम् । देवस्य । गृणतः । मघोनः ॥ ५ ॥

ᵛकृष्टीनां सर्वासां प्रजानां ᵛराजा प्रभुः ᵛपुरुहूतः बहुभिराहूतः ᵛएक ᵛइत् देवानां मध्ये मुख्य एव ᵛयः ᵛइन्द्रः ᵛभूम भूतं निष्पन्नं शत्रुभ्यो भयं ᵛप्र ᵛच्यावयति प्रकर्षेण नाशयति । ᵛविश्वे सर्वे यजमानाः ᵛमघोनः मघवतः । हविर्लक्षणधनवत इत्यर्थः । ᵛदेवस्य इन्द्रसमाश्रयात् द्योतमानस्य ᵛगृणतः स्तुवतः ᵛरातिं बन्धुम् ᵛएनम् इन्द्रम् ᵛअनु लक्षीकृत्य ᵛसत्यम् एव ᵛमदन्ति स्तुवन्ति ॥ ॥ २१ ॥

**सत्रा सोमा अभवन्नस्य विश्वे सत्रा मदासो बृहतो मदिष्ठाः ।**

**सत्राभवो वसुपतिर्वसूनां दत्रे विश्वा अधिथा इन्द्र कृष्टीः ॥ ६ ॥**

सत्रा । सोमाः । अभवन् । अस्य । विश्वे । सत्रा । मदासः । बृहतः । मदिष्ठाः ।

सत्रा । अभवः । वसुऽपतिः । वसूनाम् । दत्रे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ॥ ६ ॥

ᵛविश्वे सर्वे ᵛसोमाः ᵛअस्य इन्द्रस्य ᵛसत्रा । सत्रेति सत्यनामैतत् । सत्यमेव प्रभूताः ᵛअभवन् । किंच ᵛमदासः मदा मदकराः सोमाः ᵛबृहतः महतोऽस्येन्द्रस्य ᵛमदिष्ठाः मादयितृतमाः ᵛसत्रा सत्यमेवाभवन् । हे ᵛइन्द्र त्वं ᵛवसुपतिः धनपतिः । न केवलं धनपतिः किंतु ᵛवसूनां सर्वेषां पश्वादीनां धनानां पतिः ᵛसत्रा सत्यमेव ᵛअभवः भवसि । हे इन्द्र त्वं ᵛदत्रे धने निमित्तभूते सति ᵛविश्वाः सर्वाः ᵛकृष्टीः स्तोत्रीः प्रजाः ᵛअधिथाः धारयसि[3] ॥

**त्वमध प्रथमं जायमानोऽमे विश्वा अधिथा इन्द्र कृष्टीः ।**

**त्वं प्रति प्रवत आशयानमहिं वज्रेण मघवन्वि वृश्चः ॥ ७ ॥**

त्वम् । अध । प्रथमम् । जायमानः । अमे । विश्वाः । अधिथाः । इन्द्र । कृष्टीः ।

त्वम् । प्रति । प्रऽवतः । आऽशयानम् । अहिम् । वज्रेण । मघऽवन् । वि । वृश्चः ॥ ७ ॥

---

१. च-फ–' इन्द्रस्य ' नास्ति । २. ख-ग-घ-च-ण-त-भ–अत्यन्तशोभनकर्मा । ३. ण–रक्षकत्वेन धारयसि ।

अध अपि च प्रथमम् एव जायमानः त्वम् अमे वृत्रनिमित्ते भये सति विश्वाः सर्वाः कृष्टीः प्रजाः अधिथाः रक्षकत्वेन धारयसि । हे मघवन् धनवन् इन्द्र त्वं प्रति प्रवतः प्रति प्रवणानुदकवतो देशान् लक्षीकृत्य आशयानम् अपां निरोधकम् अहिं वृत्रनामानमसुरं वज्रेण वि वृश्चः व्यवृश्चः[1] छिन्नवानसि ॥

इन्द्रस्य वृत्रघ्नः पशौ 'सत्राहणम्' इति हविषोऽनुवाक्या । सूत्रितं च–'सत्राहणं दाधृषिं तुम्रमिन्द्रं सहदानुं पुरुहूत क्षियन्तम्' ( आश्व. श्रौ. ३. ८ ) इति ॥

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥ ८ ॥

सत्राऽहनम् । दधृषिम् । तुम्रम् । इन्द्रम् । महाम् । अपारम् । वृषभम् । सुऽवज्रम् ।
हन्ता । यः । वृत्रम । सनिता । उत । वाजम् । दाता । मघानि । मघऽवा । सुऽराधाः ॥ ८ ॥

सत्राहणं बहूनां शत्रूणां हन्तारं दाधृषिम् अत्यन्तं धर्षकं तुम्रम् । तुमिः प्रेरणकर्मा[2] । शत्रूणां प्रेरकं महां महान्तम् अपारम् अपरिमाणम् । विनाशरहितमित्यर्थः । वृषभं कामानां वर्षितारं सुवज्रं शोभनेन वज्रेणोपेतम् इन्द्रम् । वयं स्तोतारः स्तुमेति शेषः । यः इन्द्रः वृत्रं वृत्रनामानम् असुरं हन्ता हिंसिता भवति । उत अपि च य इन्द्रः वाजम् अन्नं सनिता दाता भवति । सुराधाः[3] शोभनधनयुक्तो यः मघवा इन्द्रः[3] मघानि धनानि दाता भवति । तमिन्द्रं स्तुमेति पूर्वेण अन्वयः[4] ॥ अत्र सर्वत्र तृनन्तत्वात् 'न लोकाव्यय°' इति[5] षष्ठीप्रतिषेधे सति द्वितीयैव भवति ॥

अयं वृतश्चातयते समीचीर्य आजिषु मघवा शृण्व एकः ।
अयं वाजं भरति यं सनोत्यस्य प्रियासः सख्ये स्याम ॥ ९ ॥

अयम् । वृतः । चातयते । सम्ऽईचीः । यः । आजिषु । मघऽवा । शृण्वे । एकः ।
अयम् । वाजम् । भरति । यम् । सनोति । अस्य । प्रियासः । सख्ये । स्याम ॥ ९ ॥

मघवा धनवान् यः इन्द्रः आजिषु संग्रामेषु एकः मुख्य एव शृण्वे श्रूयते । अयम् इन्द्रः समीचीः संगताः वृतः । वृण्वन्त्याच्छादयन्ति लोकानिति वृतः शत्रुसेनाः । ताः चातयते नाशयति । अयम् इन्द्रः यं[6] वाजं यदन्नं[7] सनोति यजमानाय ददाति तं वाजं भरति यजमानस्य तदन्नं दातुं बिभर्ति । स्तोतारो वयम् अस्य एवंभूतस्येन्द्रस्य सख्ये सखित्वे प्रियासः प्रियाः स्याम भवेम ॥

---

१. ख-ग-घ-च-ण-त-न-प-फ-भ-स–'व्यवृश्चः' नास्ति । २. ण–प्रेरणे । ३. ख-ग-घ-ण-न-प-फ-भ–किंच मघवा धनवान् सुराधाः सत्यधनवान् । ४. घ-ल–संबन्धः । ५. ल–इत्यादिना । ६. ण–यं यत् । ७. ख-ग-च-ण-न-प-फ-भ-स–अन्नम् ।

अयं शृण्वे अध जयन्नुत घ्नन्नयमुत प्र कृणुते युधा गाः ।
यदा सत्यं कृणुते मन्युमिन्द्रो विश्वं दृळ्हं भयत एजदस्मात् ॥ १० ॥

अयम् । शृण्वे । अध । जयन् । उत । घ्नन् । अयम् । उत । प्र । कृणुते । युधा । गाः ।
यदा । सत्यम् । कृणुते । मन्युम् । इन्द्रः । विश्वम् । दृळ्हम् । भयते । एजत् । अस्मात् ॥ १० ॥

अध अपि च अयम् इन्द्रः जयन् शत्रून् विजयन् शृण्वे श्रूयते । सर्वत्र प्रख्यातो भवति । उत अपि च घ्नन् शत्रून् हिंसन् सर्वत्र श्रूयते । उत अपि च अयम्[1] इन्द्रः[1] युधा युद्धेन गाः पशून् प्र कृणुते शत्रुसकाशात् आहरति । किंच इन्द्रः यदा मन्युं कोपं सत्यम् एव कृणुते द्विषदर्थं करोति तदानीं दृळ्हं[2] दृढं स्थिरं[3] स्थावररूपम्[4] एजत् कम्पमानं जङ्गमरूपं च विश्वं समस्तं जगत् अस्मात् इन्द्रात् भयते बिभेति ॥ ॥ २२ ॥

समिन्द्रो गा अजयत्सं हिरण्या समश्विया मघवा यो ह पूर्वीः ।
एभिर्नृभिर्नृतमो अस्य शाकै रायो विभक्ता संभरश्च वस्वः ॥ ११ ॥

सम् । इन्द्रः । गाः । अजयत् । सम् । हिरण्या । सम् । अश्विया । मघऽवा । यः । ह । पूर्वीः ।
एभिः । नृऽभिः । नृऽतमः । अस्य । शाकैः । रायः । विऽभक्ता । सम्ऽभरः । च । वस्वः ॥ ११ ॥

यो ह यः खलु मघवा धनवान् इन्द्रः गाः असुराणां सम् अजयत् सम्यक् जितवान् भवति । किंच हिरण्या हिरण्यानि हितरमणीयानि शत्रुसंबन्धीनि धनानि सम् अजयत् । तथा अश्विया अश्वियानि शत्रुसंबन्धिनोऽश्वसमूहान् सम्यक् जयति स्म । तथा पूर्वीः बह्वीः शत्रुसेनाः समजयत् । इन्द्रः सर्वान् शत्रून् जित्वा सकलमपि पश्वादिधनमपहृतवानित्यर्थः । शाकैः सामर्थ्यैः नृतमः नेतृतमः पश्वादीनामतिशयेन निर्वाहकः स इन्द्रः एभिर्नृभिः नेतृभिः स्तोतृभिः स्तुतः सन् अस्य रायः पश्वादिरूपस्य धनस्य विभक्ता स्तोतृभ्यो विभागस्य कर्ता । दाता भवतीत्यर्थः । किंच वस्वः वसुनो धनस्य संभरश्च संभर्ता धारकश्च भवति ॥

कियत्स्विदिन्द्रो अध्येति मातुः कियत्पितुर्जनितुर्यो जजान ।
यो अस्य शुष्मं मुहुकैरियर्ति वातो न जूतः स्तनयद्भिरभ्रैः ॥ १२ ॥

कियत् । स्वित् । इन्द्रः । अधि । एति । मातुः । कियत् । पितुः । जनितुः । यः । जजान ।
यः । अस्य । शुष्मम् । मुहुकैः । इयर्ति । वातः । न । जूतः । स्तनयत्ऽभिः । अभ्रैः ॥ १२ ॥

१. ख-ग-च-न-फ-भ-स–' अयमिन्द्रः ' नास्ति । २. न-ल-स–' दृळ्हं ' नास्ति । ३. ख-ग-घ-च-ण-त-न-भ-स–' स्थिरं ' नास्ति । ४. त–स्थावररूपं च ।

यः इन्द्रः मातुः जनन्याः सकाशात् कियत्स्वित् यावद्बलम् अध्येति अधिगच्छति। पितुः सकाशात्[1] कियत् यावद्बलमधिगच्छति। यः[2] इन्द्रः जनितुः जनयितुर्यस्मात् प्रजापतेः सकाशादिदं दृश्यमानं जगत्[3] जजान अजनयत्। यः इन्द्रः तस्मात् प्रजापतेः सकाशात् अस्य जगतः शुष्मं यावद्बलं मुहुकैः मुहुर्मुहुः इयर्ति प्रेरयति। स्तनयद्भिः गर्जद्भिः अभ्रैः मेघैः जूतः प्रेरितः वातो न वायुरिव तथा स इन्द्रः स्तोतृभिर्जूतः प्रेरितः[4] हविष्प्रदानार्थमाहूतो भवति ॥

क्षियन्तं त्वमक्षियन्तं कृणोतीयर्ति रेणुं मघवा समोहम्।
विभञ्जनुरशनिमाँइव द्यौरुत स्तोतारं मघवा वसौ धात् ॥ १३ ॥

क्षियन्तम्। त्वम्। अक्षियन्तम्। कृणोति। इयर्ति। रेणुम्। मघऽवा। सम्ऽओहम्।

विऽभञ्जनुः। अशनिमान्ऽइव। द्यौः। उत। स्तोतारम्। मघऽवा। वसौ। धात् ॥ १३ ॥

मघवा धनवानिन्द्रः क्षियन्तं धनराहित्येन क्षीयमाणं त्वम् एकं जनम् अक्षियन्तं धनेन अक्षीयमाणं कृणोति करोति। अकिंचनः कश्चित्पुरुषः इन्द्रं स्तुत्वा धनसमृद्धोऽभवदित्यर्थः। अशनिमान् अशनिना युक्तः द्यौः इव अन्तरिक्षमिव विभञ्जनुः शत्रूणां विशेषेण भञ्जकः मघवा इन्द्रः समोहं सम्मूढं[5] रेणुं पापम् इयर्ति स्तोतुः सकाशात् प्रेरयति[6]। उत अपि च मघवा धनवानिन्द्रः स्तोतारं वसौ धने धात् अधात् निदधाति ॥

अयं चक्रमिषणत्सूर्यस्य न्येतशं रीरमत्ससृमाणम्।
आ कृष्ण ईं जुहुराणो जिघर्ति त्वचो बुध्ने रजसो अस्य योनौ ॥ १४ ॥

अयम्। चक्रम्। इषणत्। सूर्यस्य। नि। एतशम्। रीरमत्। ससृमाणम्।

आ। कृष्णः। ईम्। जुहुराणः। जिघर्ति। त्वचः। बुध्ने। रजसः। अस्य। योनौ ॥ १४ ॥

'प्रैतशं सूर्ये पस्पृधानम्' ( ऋ. सं. १. ६१.१५ ) इत्यर्धर्चे पूर्वं काचिदाख्यायिका सूचिता। अत्रापि 'अयं चक्रम्' इति पूर्वार्धे सा[7] सूच्यते[7]। स्वश्वनामा कश्चिद्राजा। स च पुत्रार्थं सूर्यमुपास्ते। स च सूर्यः पुत्ररूपेण स्वयमेव तत्रोत्पन्नः सन् एतशाख्येन महर्षिणा सार्धं युद्धं चकार। तदानीं स ऋषिः युद्धे जयार्थमिन्द्रं तुष्टाव। स इन्द्रः तेन स्तूयमानः सन् स्वश्वपुत्रस्य सूर्यस्य संबन्धिनः संग्रामात् एनमपालयदिति। अयम् इन्द्रः सूर्यस्य चक्रम् आयुधम् इषणत् प्रैरयत्। ससृमाणं युद्धार्थं सरन्तं गच्छन्तम् एतशम्[8] एतशनामानमृषिं नि रीरमत् न्यरीरमत् निवारितवान्। जुहुराणः कुटिलं यथा भवति तथा संचरन् कृष्णः कृष्णवर्णो मेघः त्वचः तेजसः बुध्ने मूलभूते रजसो अस्य उदकस्य

---

१. ख-ग-घ-च-ण-न-भ-ल–'सकाशात्' नास्ति। २. ख-ग-च-न–सः। ३. ख-ग-घ-च-ण-त-प-फ-भ–कियज्जगत्। ४. ख-ग-च-ण–'प्रेरितः' नास्ति। ५. ख-भ-ल–संमूढम्। ६. ख-ग-घ-ण-भ-ल–प्रेरयति तत्; त-स–प्रेरयति ततः। ७. ख-ग-घ-च-ण-त-न-भ–स्तूयते; ल–सूच्यते, स–श्रूयते। ८. न-ल-स–'एतशं' नास्ति।

योनौ स्थानेऽन्तरिक्षे स्थितम् ईम् एनमिन्द्रम् आ जिघर्ति आसिञ्चति । शत्रूणां प्रेरिताचक्रादेस्त्वं रक्षेत्यर्थः ॥

आसिक्न्यां यजमानो न होता ॥ १५ ॥

असिक्न्याम् । यजमानः । न । होता ॥ १५ ॥

एकपदेयमृक्[1] पूर्वर्चा सह दृष्टान्तत्वेन संबध्यते । असिक्न्यां रात्रौ यजमानो न यजमान इव होता होतारमाह्वातारमग्निम् । द्वितीयार्थे प्रथमा । सोमेनासिञ्चति तद्वन्मेघ इन्द्रम् आसिञ्चतीत्यर्थः ॥ ॥ २३ ॥

गव्यन्त इन्द्रं सख्याय विप्रा अश्वायन्तो वृषणं वाजयन्तः ।
जनीयन्तो जनिदामक्षितोतिमा च्यावयामोऽवते न कोशम् ॥ १६ ॥

गव्यन्तः । इन्द्रम् । सख्याय । विप्राः । अश्वऽयन्तः । वृषणम् । वाजयन्तः ।
जनिऽयन्तः । जनिऽदाम् । अक्षितऽऊतिम् । आ । च्यवयामः । अवते । न । कोशम् ॥ १६ ॥

गव्यन्तः गा इच्छन्तः अश्वायन्तः अश्वानिच्छन्तः वाजयन्तः वाजमन्नमिच्छन्तः जनीयन्तः जायाश्च[2] इच्छन्तः विप्राः मेधाविनः स्तोतारो वयं सख्याय इन्द्रसंबन्धिने सखित्वाय वृषणं कामानां वर्षितारं जनिदां जायाप्रदम् अक्षितोतिम् अक्षीणरक्षम् । सर्वदा रक्षाकरमित्यर्थः । एवंभूतम्[3] इन्द्रम् आ च्यावयामः आगमयामः । तत्र दृष्टान्तः । अवते कूपे । अवत इति कूपनाम ' अवतः अवटः क्रिविः ' ( नि. ३. २३. ७ ) इति कूपनामसु पाठात् । कोशं न जलोद्धरणपात्रमिव । पुरुषा जलोद्धरणपात्रं जलेन पूरयितुं कूपे यथा आच्यावयन्ति तथा वयमाच्यावयाम इत्यर्थः[3] ।

त्राता नो बोधि ददृशान आपिरभिख्याता मर्डिता सोम्यानाम् ।
सखा पिता पितृतमः पितॄणां कर्तेमु लोकमुशते वयोधाः ॥ १७ ॥

त्राता । नः । बोधि । ददृशानः । आपिः । अभिऽख्याता । मर्डिता । सोम्यानाम् ।
सखा । पिता । पितृऽतमः । पितॄणाम् । कर्ता । ईम् । ऊँ इति । लोकम् । उशते । वयःऽधाः ॥ १७ ॥

हे इन्द्र आपिः आप्तः ददृशानः सर्वं[4] पालकत्वेन[4] पश्यंस्त्वं नः अस्माकं त्राता रक्षकः बोधि भव । किंच । अभिख्याता अभिद्रष्टा मर्डिता सुखयिता सोम्यानां सोमार्हाणां यजमानादीनां सखा प्रजापतिना समानख्यातिः पिता पालकः । केवलं पालको न किंतु पितॄणां पालकानां मध्ये पितृतमः

---

१. ख-ग-घ-च-ण-त-प-फ-भ-स—एकपदीयमृक् । २. ख-ग-घ-ण-त-न-भ-स—जायां च । ३. ख-ग-घ-च-ण-न-प-फ-भ—कोशमाधारभूतमिन्द्रमवते रक्षणार्थं नाच्यावयामः न त्यजामः भजेमेत्यर्थः । ४. घ-ण-न-स—सर्वपालकत्वेन ।

अतिशयेन पालकः कर्तेमु पितॄणां स्रष्टा च त्वं लोकं स्वर्गादिलोकम्[1] उशते कामयमानाय स्तोत्रे वयोधाः । वय इत्यन्ननामैतत् । अन्नप्रदो भव ॥

सखीयतामविता बोधि सखा गृणान इन्द्र स्तुवते वयो धाः ।

वयं ह्या ते चकृमा सबाध आभिः शमीभिर्महयन्त इन्द्र ॥ १८ ॥

सखिऽयताम् । अविता । बोधि । सखा । गृणानः । इन्द्र । स्तुवते । वयः । धाः ।

वयम् । हि । आ । ते । चकृम । सऽबाधः । आभिः । शमीभिः । महयन्तः । इन्द्र ॥ १८ ॥

हे इन्द्र त्वं सखीयतां सखित्वमिच्छतामस्माकम् अविता रक्षिता बोधि भव । तथा गृणानः स्तूयमानस्त्वं सखा भव । हे इन्द्र स्तुवते स्तुतिं कुर्वते मह्यं वयः अन्नं धाः अधाः धेहि[2] । हे[3] इन्द्र[3] सबाधः बाधासहिताः वयं हि वयं खलु ते त्वाम् आ चकृम आह्वयामः । किं कुर्वन्तः । आभिः प्रत्यक्षेणोपलभ्यमानैः शमीभिः स्तुतिरूपैः कर्मभिः महयन्तः त्वां[4] पूजयन्तः ॥

इन्द्रस्य वृत्रघ्नः पुरोडाशस्य ' स्तुत इन्द्रः ' इति याज्या । सूत्रितं च—' स्तुत इन्द्रो मघवा यद्ध वृत्रैवा वस्व इन्द्रः सत्यः सम्राट् ' ( आश्व. श्रौ. ३. ८ ) इति ॥

स्तुत इन्द्रो मघवा यद्ध वृत्रा भूरीण्येको अप्रतीनि हन्ति ।

अस्य प्रियो जरिता यस्य शर्मन्नकिर्देवा वारयन्ते न मर्ताः ॥ १९ ॥

स्तुतः । इन्द्रः । मघऽवा । यत् । ह । वृत्रा । भूरीणि । एकः । अप्रतीनि । हन्ति ।

अस्य । प्रियः । जरिता । यस्य । शर्मन् । नकिः । देवाः । वारयन्ते । न । मर्ताः ॥ १९ ॥

यद्ध यदा खलु मघवा धनवान् इन्द्रः स्तुतः अस्माभिः स्तुतो भवति तदेन्द्रः एकः असहाय एव भूरीणि बहूनि अप्रतीनि अप्रतिगमनानि । अभिगमनयुक्तानीत्यर्थः । वृत्रा वृत्राणि शत्रून् हन्ति हिनस्ति । यस्य इन्द्रस्य शर्मन् शर्मणि आश्रये वर्तमानं स्तोतारं देवाः नकिः वारयन्ते निवारणं न कुर्वन्ति । मर्ताः च न निवारयन्ते[5] । अस्य इन्द्रस्य जरिता स्तोता प्रियः भवति ॥

आग्निमारुतशस्त्रे ' एवा न इन्द्रः ' इति परिधानीया । सूत्रितं च–' एवा न इन्द्रो मघवा विरप्शीति परिदध्यात् ' ( आश्व. श्रौ. ५. २० ) इति ॥

---

१. ख-ग-घ-च-ण-न-भ-ल-स–' स्वर्गादिलोकं ' नास्ति । २. ख-ग-घ-च-ण-न-भ–देहि । ३. ख-ग-घ-च-ण-न-भ–' हे इन्द्र ' नास्ति । ४. ख-ग-घ-च-ण-न-प-फ-भ-स–' त्वां ' नास्ति । ५. ख-ग-च-ण-न-प-फ-भ-स–निवारयन्ते निवारणं ( ख-ग-च-फ–निर्वारणं; भ-स–निर्धारणं ) न कुर्वन्ति

एवा न इन्द्रो मघवा विरप्शी करत्सत्या चर्षणीधृदनर्वा ।

त्वं राजा जनुषां धेह्यस्मे अधि श्रवो माहिनं यज्जरित्रे ॥ २० ॥

एव । नः । इन्द्रः । मघऽवा । विऽरप्शी । करत् । सत्या । चर्षणिऽधृत् । अनर्वा ।

त्वम् । राजा । जनुषाम् । धेहि । अस्मे इति । अधि । श्रवः । माहिनम् । यत् । जरित्रे ॥ २० ॥

विरप्शी बहुविधशब्दवान् चर्षणीधृत् सर्वासां प्रजानां धारयिता अनर्वा अप्रत्यृतः । केनापि प्रतिकूलेन न प्राप्त इत्यर्थः । मघवा धनवान् इन्द्रः एवा एवमस्माभिः स्तुतः सन् नः अस्माकं सत्या सत्यरूपाण्यभिमतानि फलानि करत् करोतु । हे इन्द्र जनुषां जन्मवतां सर्वेषां राजा प्रभुः[1] त्वं माहिनं महिम्नोपेतं यत् श्रवः यद्यशः जरित्रे स्तोत्रे देयं तद्यशः अस्मे अस्मासु अधि अधिकत्वेन धेहि । 'एवा न इन्द्रो मघवा विरप्शीत्युत्तमया परिदधातीयं[2] वा इन्द्रो मघवा विरप्शी' ( ऐ. ब्रा. ३. ३८ ) इत्यादि ब्राह्मणम् ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ २१ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ २१ ॥

नू[3] ष्टुत इन्द्रेति व्याख्याता[3] ॥ ॥ २४ ॥

'अयं पन्थाः' इति त्रयोदशर्चमष्टमं सूक्तं त्रैष्टुभम् । अत्रानुक्रमणिका—'अयं पन्थाः सप्तोना संवाद इन्द्रादितिवामदेवानाम्' इति । 'यस्य वाक्यं स ऋषिः या तेनोच्यते सा देवता' इति परिभाषितत्वात् ऋषिदेवते तत्र तत्र ज्ञातव्ये । अस्मिन् सूक्ते इन्द्रादितिवामदेवसंवादरूपिणी[4] काचित् आख्यायिका श्लोकरूपेण सूच्यते—'गर्भस्थो ज्ञानसंपन्नो वामदेवो महामुनिः । मतिं चक्रे न जायेय योनिदेशात्तु मातृतः ॥ १ ॥ किंतु पार्श्वादितश्चेति ज्ञात्वा नु जननी त्विदम् । दध्यौ शान्त्यै शचीं देवीमदितिं त्विन्द्रमातरम् ॥ २ ॥ अदितिस्त्विन्द्रसहिता गर्भिणीमभ्यगाद्वने । अदितीन्द्रवामदेवाः संवादमथ चक्रिरे ॥ ३ ॥ संवाद इति सूत्रेण कथा सैपात्र सूच्यते । नोक्तो वक्तृविशेषोऽत्र ह्युपदेशेष्वनुक्तितः ॥ ४ ॥ अर्थतस्त्ववगन्तव्यो वक्तृभेद इति स्थितिः । इन्द्रोऽदितिर्ऋषिश्चास्मिन्मिथः सूक्ते समूचिरे ॥ ५ ॥ गर्भे शयानं सुचिरं मातुर्गर्भादनिर्गतम् । वामदेवं प्रतिब्रूत आद्ययर्चा शतक्रतुः ॥ ६ ॥ द्वितीयादिभिरर्धचैर्ऋषिरत्राह पञ्चभिः । न ही न्वस्येति सप्त स्युरर्धर्चा अदितेर्वचः ॥ ७ ॥ ममचन त्वा युवतिरित्यृचः पञ्च वै मुनेः । दौर्गत्यशान्तिमत्राह वामदेवस्तथान्त्यया ॥ ८ ॥ एवमर्थाद्वक्तृभेद इति बह्वृचशासनम् । अर्थो विवेकस्पष्टत्वादुपदेशेषु नेरितः ॥ ९ ॥ ऋषिदैवतसिद्ध्यर्थं विवेकादर्थ ईरितः' ( अनु. भा. ४. १८ ) इति ॥

---

१. ख-ग-घ-च-ण-प-फ-भ—'प्रभुः' नास्ति । २. ल—परिदध्यादियम् । ३. त—व्याख्यातेयम्; स—प्राग्व्याख्याता । ४. च-ण—°संवादरूपा ।

अयं पन्था अनुवित्तः पुराणो यतो देवा उदजायन्त विश्वे ।
अतश्चिदा जनिषीष्ट प्रवृद्धो मा मातरममुया पत्तवे कः ॥ १ ॥

अयम् । पन्थाः । अनुऽवित्तः । पुराणः । यतः । देवाः । उत्ऽअजायन्त । विश्वे ।
अतः । चित् । आ । जनिषीष्ट । प्रऽवृद्धः । मा । मातरम् । अमुया । पत्तवे । कुरिति कः ॥१॥

इन्द्रवाक्यम्[1] । vपुराणः अनादिः vअयं प्रत्यक्षेणोपलभ्यमानः vपन्थाः योनिनिर्गमनरूपो मार्गः vअनु आनुपूर्व्येण vवित्तः सर्वैर्जायमानैर्लब्धः । vयतः यस्माद्योनिमार्गात् vविश्वे सर्वे vदेवाः vउदजायन्त उत्कर्षेणोत्पन्ना भवन्ति । तस्माद्योनिमार्गान्मनुष्या उत्पन्ना भवन्तीति[2] किमु[3] वक्तव्यम् । vअतश्चित् अस्माद्योनिमार्गादेव vप्रवृद्धः गर्भे प्रकर्षेण वृद्धिं गतो वामदेवः vआ vजनिषीष्ट आ समन्तात् जायताम् । vअमुया अमूं vमातरं vपत्तवे पतनाय । मरणायेत्यर्थः । vमा vकः मा करोतु ॥

नाहमतो निरया दुर्गहैतत्तिरश्चता पार्श्वान्निर्गमाणि ।
बहूनि मे अकृता कर्त्वानि युध्यै त्वेन सं त्वेन पृच्छै ॥ २ ॥

न । अहम् । अतः । निः । अय । दुःऽगहा । एतत् । तिरश्चता । पार्श्वात् । निः । गमानि ।
बहूनि । मे । अकृता । कर्त्वानि । युध्यै । त्वेन । सम् । त्वेन । पृच्छै ॥ २ ॥

वामदेव एवमुक्तवन्तमिन्द्रं प्रत्याह । vअहम् vअतः योनिमार्गात् vन vनिरया न निरयाणि । न निर्गच्छानि । vएतत् योनिनिर्गमरूपं वर्त्म vदुर्गहा दुर्ग्रहम्[4] । दुःखेन[5] ग्राह्यम्[5] । न प्राप्यं भवतीत्यर्थः । किंतु vतिरश्चता तिरश्चीनात् vपार्श्वात् vनिर्गमानि निर्गच्छानि । योनिदेशादनिर्गतोऽहं पार्श्वं[6] भित्त्वा निर्गच्छानीत्यर्थः । अन्यैरकृतमिदमेव न केवलं मया क्रियते किंत्वन्यैः अकृतानि[7] vबहूनि कर्माणि vमे vकर्त्वानि कर्तव्यानि सन्ति । vत्वेन एकेन सपत्नेन विवदमानेन सह vयुध्यै युद्धं करवाणि । vत्वेन एकेन बुभुत्सुना vसं vपृच्छै सम्यक् पृच्छानि[8] ॥

परायतीं मातरमन्वचष्ट न नानु गान्यनु नू गमानि ।
त्वष्टुर्गृहे अपिबत्सोममिन्द्रः शतधन्यं चम्वोः सुतस्य ॥ ३ ॥

पराऽयतीम् । मातरम् । अनु । अचष्ट । न । न । अनु । गानि । अनु । नु । गमानि ।
त्वष्टुः । गृहे । अपिबत् । सोमम् । इन्द्रः । शतऽधन्यम् । चम्वोः । सुतस्य ॥ ३ ॥

---

१. न-ल-स–'इन्द्रवाक्यं' नास्ति । २. ख-ग-घ-च-ण-त-न-भ-स–भवन्ति । ३. ल–किम् । ४. त–दुर्गहम् । ५. न–दुर्ग्रहणीयम् । ६. ख-ग-च-ण-फ–पार्श्वे । ७. ख-ग-च-ण-प-फ-भ–अकृता सपत्नेनाकृतानि । ८. त–पृच्छामि ।

मयि गर्भस्थिते[1] सतीन्द्रो मदीयां ᵛमातरं ᵛपरायतीं परेतां म्रियमाणाम् ᵛअन्वचष्ट अन्वब्रवीत्। एवमपि इदानीं गर्भे स्थितोऽहं पुराणं पन्थानं ᵛन ᵛनानु ᵛगानि नानुगच्छानीति न। किंतु ᵛनु क्षिप्रम् ᵛअनु ᵛगमानि अनुगच्छान्येव। वामदेवः स्वकीयमकृत्यकारित्वं परिहृत्येन्द्रस्याकृत्यकारित्वम् उत्तरार्धेन[2] प्रतिपादयति। ᵛइन्द्रः ᵛचम्वोः सोमाभिषवफलकयोः ᵛसुतस्य सोमं सुतवतोऽभिषुतवतः ᵛत्वष्टुः संबधिनि ᵛगृहे अनुपहूतः सन् ᵛशतधन्यं बहुधनेन क्रीतं ᵛसोमम् ᵛअपिबत् बलात्कारेण सोमस्य पानं कृतवान्। अयमर्थस्तैत्तिरीयैः 'त्वष्टा हतपुत्रो वीन्द्रं सोममाहरत्' (तै. सं. २. ४. १२. १) इत्यनुवाके महता प्रबन्धेन प्रपञ्चितः॥

**किं स ऋधक्कृणवद्यं सहस्रं मासो जभार शरदश्च पूर्वीः।**
**नही न्वस्य प्रतिमानमस्त्यन्तर्जातेषूत ये जनित्वाः॥ ४॥**

किम्। सः। ऋधक्। कृणवत्। यम्। सहस्रम्। मासः। जभार। शरदः। च। पूर्वीः।
नहि। नु। अस्य। प्रतिऽमानम्। अस्ति। अन्तः। जातेषु। उत। ये। जनिऽत्वाः॥ ४॥

अदितिः ᵛयम् इन्द्रं ᵛसहस्रं बहून् ᵛमासः मासान् ᵛपूर्वीः बह्वीः ᵛशरदश्च संवत्सरांश्च ᵛजभार बभार॥ बिभर्तेरिदं रूपम्॥ गर्भे स्थित इन्द्रो बहुषु संवत्सरेष्वदितिं क्लेशितवानित्यर्थः। एवंभूतः ᵛसः इन्द्रः ᵛकिं यत्[3] किमपि। सर्वमपीत्यर्थः। ᵛऋधक् विरुद्धं कर्म ᵛकृणवत् अकरोत्। इन्द्रस्य आक्षेपम्[4] असहमानादितिरिन्द्रमातापि एनं प्रति ब्रूते। हे वामदेव ᵛजातेषु उत्पन्नेषु देवादिषु[5] ᵛअन्तः मध्ये ᵛअस्य इन्द्रस्य ᵛप्रतिमानम् उपमानं[6] ᵛनहि ᵛअस्ति न विद्यते खलु। ᵛनु[7] इति पादपूरणार्थः[8]। ᵛउत अपि च ᵛये देवादयः ᵛजनित्वाः जनयितव्या जनयिष्यमाणास्तेषु मध्येऽस्येन्द्रस्य प्रतिमानं नास्ति॥

**अवद्यमिव मन्यमाना गुहाकरिन्द्रं माता वीर्येणा न्यृष्टम्।**
**अथोदस्थात्स्वयमत्कं वसान आ रोदसी अपृणाज्जायमानः॥ ५॥**

अवद्यम्ऽइव। मन्यमाना। गुहा। अकः। इन्द्रम्। माता। वीर्येण। निऽऋष्टम्।
अथ। उत्। अस्थात्। स्वयम्। अत्कम्। वसानः।
आ। रोदसी इति। अपृणात्। जायमानः॥ ५॥

ᵛगुहा गुहायां गह्वररूपे सूतिकागृहे जातम् ᵛइन्द्रम् ᵛअवद्यमिव गर्हमिव[9] ᵛमन्यमाना जानती ᵛमाता इन्द्रजनन्यदितिः ᵛवीर्येण सामर्थ्येन ᵛन्यृष्टं नितरां प्राप्तम् ᵛअकः अकरोत्। ᵛअथ अनन्तरं

---

१. त–गर्भस्थे। २. त–उत्तरार्धेन। ३. ख-ग-च-न-भ-स–कियत्। ४. ख-ग-च-ण–क्षेपणम्। ५. ख-ग-घ-च-ण-न-भ-ल-स–'देवादिषु' नास्ति। ६. ख-ग-च-ण-न-भ–'उपमानं' नास्ति। ७. ख-ग-च-न-भ-स–हि। ८. त-ल–पूरणार्थः। ९. ख-ग-घ-च-ण-त-न-प-फ-भ-ल-स–'गर्हमिव' नास्ति।

ᵛजायमानः उत्पद्यमान इन्द्रः ᵛस्वयम् एव[1] ᵛअत्कं तेजः ᵛवसानः आच्छादकः सन्। दधान इत्यर्थः। ᵛउदस्थात् उत्कर्षेण अतिष्ठत्[2]। किंच ᵛरोदसी द्यावापृथिव्यौ ᵛआ ᵛअपृणात् समन्तात् पूरयामास[3]॥ ॥ २५ ॥

एता अर्षन्त्यललाभवन्तीर्ऋतावरीरिव संक्रोशमानाः।

एता वि पृच्छ किमिदं भनन्ति कमापो अद्रिं परिधिं रुजन्ति ॥ ६ ॥

एताः। अर्षन्ति। अललाऽभवन्तीः। ऋतवरीःऽइव। सम्ऽक्रोशमानाः।

एताः। वि। पृच्छ। किम्। इदम्। भनन्ति। कम्। आपः। अद्रिम्। परिऽधिम्। रुजन्ति ॥६॥

ᵛअललाभवन्तीः अललेत्येवंरूपं शब्दं कुर्वत्यः ᵛऋतावरीरिव उदकवत्य एव ᵛएताः नद्यः ᵛसंक्रोशमानाः इन्द्रमहत्त्वप्रतिपादकोद्भूतेन हर्षेण बहुविधं शब्दायमानाः सत्यः ᵛअर्षन्ति गच्छन्ति। एवंभूता नद्यः ᵛइदं ᵛकिं ᵛभनन्ति श्रोत्रग्राह्यं शब्दायमानं किं वदन्तीममर्थं हे ऋषे त्वम् ᵛएताः नदीः ᵛवि ᵛपृच्छ विशेषेण पृष्टवान् भव। एवं संपृच्छ। विचारिते सति एतच्छब्दायमानमिन्द्रमाहात्म्यस्यैव वचनं भवतीत्यर्थः। किंच ᵛआपः उदकानि ᵛपरिधिम् आवरकं ᵛकम् ᵛअद्रिं कं मेघं ᵛरुजन्ति भञ्जन्ति। आपः कमपि मेघं न भञ्जन्ति किंतु इन्द्रो मम पुत्र एव उदकावरकं[4] मेघं भङ्क्त्वा आपः प्रवर्तयतीत्यर्थः॥

किमु ष्विदस्मै निविदो भनन्तेन्द्रस्यावद्यं दिधिषन्त आपः।

ममैतान्पुत्रो महता वधेन वृत्रं जघन्वाँ असृजद्वि सिन्धून् ॥ ७ ॥

किम्। ऊँ इति। स्वित्। अस्मै। निऽविदः। भनन्त। इन्द्रस्य। अवद्यम्। दिधिषन्ते। आपः।

मम। एतान्। पुत्रः। महता। वधेन। वृत्रम्। जघन्वान्। असृजत्। वि। सिन्धून् ॥ ७ ॥

यदेन्द्रो वृत्रासुरं हतवान् तदा शाश्वतीं ब्रह्महत्यां प्राप्तवानिति वामदेवस्याभिप्रायमुन्नीय अदितिः आह। ᵛनिविदः। मरुत्वतीयशस्त्रे प्रयुज्यमानानि 'मरुत्स्तोत्रो मरुद्गणः' इत्यादीनीन्द्रस्तुतिप्रतिपादकानि कानिचित् पदानि निविच्छब्देनोच्यन्ते। ता निविदः ᵛअस्मै इमं वृत्रवधनिमित्तं ब्रह्महत्यारूपं पापं प्राप्नुवन्तमिन्द्रं ᵛकिमु ᵛस्वित् ᵛभनन्त भनन्ति। किं वदन्तीति चेत्। तर्हि इन्द्रं[5] पापरहितं मत्वा निविदः स्तुवन्ति। कथमिन्द्रस्य पापरहितत्वम्। उच्यते। ᵛआपः फेनरूपेणास्य ᵛइन्द्रस्य ᵛअवद्यं ब्रह्महत्यादिरूपं पापं ᵛदिधिषन्ते धारयन्ति। ᵛमम ᵛपुत्रः मदीयः पुत्र इन्द्रः[6] ᵛमहता प्रभूतेन ᵛवधेन। वध इति वज्रनामैतत्। वज्रेण ᵛवृत्रं ᵛजघन्वान् हतवान्। ततः ᵛएतान् सिन्धून् उदकानि ᵛवि ᵛअसृजत् विशेषेण स्वैरत्वेन सर्तुं[7] सृष्टवान्[7]। इन्द्रेणोत्सृष्टा आपस्तस्य पापं जगृहुरित्यर्थः॥

---

१. त-ल-स-'एव' नास्ति। २. त-तिष्ठति। ३. ण-पूरयामास इति। ४. त-उदकावारकम्। ५. ख-ग-घ-च-ण-न-भ-स-'इन्द्रं' नास्ति। ६. त- यः इन्द्रः। ७. ण-समुत्सृष्टवान्।

मर्मच्चन त्वा युवतिः परास मर्मच्चन त्वा कुषवा जगार ।
मर्मच्चिदापः शिशवे ममृड्युर्मर्मच्चिदिन्द्रः सहसोदतिष्ठत् ॥ ८ ॥

मर्मत् । चन । त्वा । युवतिः । पराऽआस । मर्मत् । चन । त्वा । कुषवा । जगार ।
मर्मत् । चित् । आपः । शिशवे । ममृड्युः ।
मर्मत् । चित् । इन्द्रः । सहसा । उत् । अतिष्ठत् ॥ ८ ॥

सूक्तशेषेण ऋषिरिन्द्रं स्तौति । हे इन्द्र ममच्चन माद्यन्त्येव । प्रमत्तैवेत्यर्थः । युवतिः त्वदीया मातादितिः त्वा त्वां परास पराचिक्षेप । किंच कुषवानाम्नी काचित्[1] राक्षसी सा ममच्चन प्रमत्तैव त्वा त्वां जगार गिरति स्म । हे इन्द्र ममच्चित् प्रमाद्यन्त्य एव आपः शिशवे जाताय तुभ्यं ममृड्युः सुखयांचक्रुः[2] । ममच्चित् माद्यन्नेव इन्द्रः सहसा स्वेन वीर्येण[3] उदतिष्ठत् सूतिकागृहात् राक्षसीं बाधमानः सन् उत्कर्षेण तस्थौ ॥

मर्मच्चन ते मघवन्व्यंसो निविविध्वाँ अप हनू जघान ।
अधा निविद्ध उत्तरो बभूवाञ्छिरो दासस्य सं पिणग्वधेन ॥ ९ ॥

मर्मत् । चन । ते । मघऽवन् । विऽअंसः । निऽविविध्वान् । अप । हनू इति । जघान ।
अध । निऽविद्धः । उत्ऽतरः । बभूवान् । शिरः । दासस्य । सम् । पिणक् । वधेन ॥ ९ ॥

हे मघवन् धनवन्निन्द्र ममच्चन प्रमाद्यन्नेव व्यंसो नाम राक्षसः निविविध्वान् प्रविध्यन् ते हनू त्वदीये हनू मुखपार्श्वे अप जघान अपहतवान् । अध अथानन्तरं हे[4] इन्द्र निविद्धः[4] राक्षसेन ताडितः त्वम्[5] उत्तरः व्यंसादधिकबलः बभूवान् भूतः सन् दासस्य क्षीणस्य व्यंसस्य शिरः वधेन वज्रेण सं पिणक् पिष्टवानसि ॥

गृष्टिः ससूव स्थविरं तवागामनाधृष्यं वृषभं तुम्रमिन्द्रम् ।
अरीळ्हं वत्सं चरथाय माता स्वयं गातुं तन्व इच्छमानम् ॥ १० ॥

गृष्टिः । ससूव । स्थविरम् । तवागाम् । अनाधृष्यम् । वृषभम् । तुम्रम् । इन्द्रम् ।
अरीळ्हम् । वत्सम् । चरथाय । माता । स्वयम् । गातुम् । तन्वे । इच्छमानम् ॥ १० ॥

---

१. ख-ग-घ-च-ण-न-भ-स–'काचित्' नास्ति । २. ख-ग-घ-च-ण-भ–सुखं चक्रुः । ३. त-ल–वीर्येण सह । ४. ख-ग-च-फ–निविद्धः स्वेच्छया हे इन्द्र; घ-ण–निविद्धः स्वेच्छया; प-भ–हे इन्द्र निविद्धः स्वेच्छया ; स–हे इन्द्र । ५. ण–त्वं हे इन्द्र ।

ᵛगृष्टिः काचित् गौः ᵛवत्सं यथा ᵛससूव सुषुवे। तथा ᵛमाता इन्द्रजनन्यदितिः ᵛचरथाय[1] स्वेच्छया संचरणाय इन्द्रं ससूव[2] सुषुवे। कीदृशमिन्द्रम्। ᵛस्थविरं वयसा प्रवृद्धं ᵛतवागां प्रवृद्धबलम् ᵛअनाधृष्यं शत्रुभिरनभिभाव्यं ᵛवृषभं सेचनसमर्थं ᵛतुम्रं प्रेरकम् ᵛअरीळ्हं शत्रुभिरनभिभूतं ᵛस्वयं ᵛगातुम् अन्यनिरपेक्षगमनं ᵛतन्वे स्वशरीराय[3] ᵛइच्छमानम् इच्छन्तम् ॥

उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः ।

अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं वि क्रमस्व ॥ ११ ॥

उत । माता । महिषम् । अनु । अवेनत् । अमी इति । त्वा । जहति । पुत्र । देवाः ।

अथ । अब्रवीत् । वृत्रम् । इन्द्रः । हनिष्यन् । सखे । विष्णो इति । विऽतरम् । वि । क्रमस्व ॥११॥

ᵛउत अपि च हे मदीय ᵛपुत्र इन्द्र ᵛअमी वह्न्यादयः ᵛदेवाः ᵛत्वा त्वां ᵛजहति त्यजन्ति। इत्युक्तवतीन्द्रस्य ᵛमाता अदितिः इन्द्रं ᵛमहिषं महान्तम्। महिष इति महन्नामैतत्। ᵛअन्ववेनत् अयाचत। ᵛअथ अनन्तरं हे ᵛविष्णो व्यापनशील हे ᵛसखे मित्रभूत हरे त्वं ᵛवृत्रं ᵛहनिष्यन् हन्तुम् इच्छन् ᵛवितरं ᵛवि ᵛक्रमस्व अतिपराक्रमी भव इति ᵛइन्द्रः विष्णुम् ᵛअब्रवीत् उवाच ॥

कस्ते मातरं विधवामचक्रच्छयुं कस्त्वामजिघांसच्चरन्तम् ।

कस्ते देवो अधि मार्डीक आसीद्यत्प्राक्षिणाः पितरं पादगृह्य ॥ १२ ॥

कः । ते । मातरम् । विधवाम् । अचक्रत् । शयुम् । कः । त्वाम् । अजिघांसत् । चरन्तम् ।

कः । ते । देवः । अधि । मार्डीके । आसीत् । यत् । प्र । अक्षिणाः । पितरम् । पादऽगृह्य ॥१२॥

हे इन्द्र ᵛयत् यस्मात् कारणात् पितुः सकाशात् जनिष्यमाणात् भीतस्त्वं त्वदीयं ᵛपितरं ᵛपादगृह्य पादेषु गृहीत्वा ᵛप्राक्षिणाः प्रकर्षेणावधीः। तस्मात् कारणात् ᵛते त्वत्तोऽन्यः ᵛकः देवः ᵛमातरं स्वकीयजननीं ᵛविधवां पितृवधेन पतिरहिताम् ᵛअचक्रत् अकरोत्। ᵛकः त्वत्तोऽन्यः ᵛशयुं शयानं ᵛचरन्तं जाग्रतं वा ᵛत्वाम् ᵛअजिघांसत् हन्तुमैच्छत्। ᵛते त्वत्तोऽन्यः ᵛकः ᵛदेवः ᵛमार्डीके प्रजानां सुखकरणे ᵛअधि अधिकः ᵛआसीत्। अयमर्थः 'ऋक्सामे वै देवेभ्यः' (तै. सं. ६. १. ३. ६) इत्यनुवाके 'यज्ञो दक्षिणामभ्यध्यायत्' इत्यादिब्राह्मणेन तैत्तिरीयकैर्बहुधा प्रपञ्चितः ॥

---

१. ख-ग-घ-च-ण-भ-वत्सं चरथाय; त-ल-संचरथाय। २. त-सुषुव। ३. ख-ग-घ-च-ण-त-न-भ-स-शरीराय।

अवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् ।
अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥ १३ ॥

अवर्त्या । शुनः । आन्त्राणि । पेचे । न । देवेषु । विविदे । मर्डितारम् ।

अपश्यम् । जायाम् । अमहीयमानाम् । अध । मे । श्येनः । मधु । आ । जभार ॥ १३ ॥

अनया वामदेवः स्वकीयं दारिद्यं सूचयन्निन्द्रस्योत्कर्षमाह । वामदेवोऽहम् अवर्त्या जीवनोपायराहित्येन शुनः शुनकसंबन्धीनि आन्त्राणि पुरीतन्ति पेचे अपचम् । देवेषु द्योतमानेषु वह्न्यादिषु मध्ये इन्द्रादन्यं मर्डितारं सुखयितारं न विविदे न लेभे । किंच जायां स्वकीयां भार्याम् अमहीयमानाम् अश्लाघनीयाम् अपश्यम् अद्राक्षम् । अध अथानन्तरं श्येनः श्येनवच्छीघ्रगामीन्द्रः मे मह्यं मधु मधुरोपेतमुदकम् आ जभार आजहार ॥ ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
तृतीयाष्टके पञ्चमोऽध्यायः संपूर्णः[1] ॥

---

१. ब-ल-समाप्तः ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

व्याख्यातः पञ्चमोऽध्यायस्तृतीयाष्टक[1] आदरात् ।
धीमता सायणाख्येन[2] षष्ठोऽध्यायोऽथ वर्ण्यते ॥

चतुर्थे मण्डले द्वितीयेऽनुवाकेऽष्ट सूक्तानि व्याख्यातानि । ‘ एवा त्वामिन्द्र ’ इत्येकादशर्चं नवमं सूक्तम् । तस्य मण्डलादिपरिभाषया वामदेव ऋषिः । अनादेशपरिभाषया त्रिष्टुप् छन्दः । इन्द्रो देवता । तथा चानुक्रान्तम्–‘ एवैकादश ’ इति । अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणशस्त्रे इदं सूक्तम् । सूत्र्यते हि–‘ एवा त्वामिन्द्रोशन्नु षु णः सुमना उपाक इति याज्या ’ ( आश्व. श्रौ. ५. १६ ) इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि मैत्रावरुणशस्त्रे अहीनसूक्तं[3] तत्स्थाने[3] त्रीणि संपातसूक्तानि । तत्रेदं प्रथमं सूक्तम् । सूत्रितं च—‘ एवा त्वामिन्द्र यन्न इन्द्रः ’ ( आश्व. श्रौ. ७. ५ ) इति ॥

**एवा त्वामिन्द्र वज्रिन्नत्र विश्वे देवासः सुहवास ऊमाः ।**
**महामुभे रोदसी वृद्धमृष्वं निरेकमिद्वृणते वृत्रहत्ये ॥ १ ॥**

एव । त्वाम् । इन्द्र । वज्रिन् । अत्र । विश्वे । देवासः । सुऽहवासः । ऊमाः ।
महाम् । उभे इति । रोदसी इति । वृद्धम् । ऋष्वम् ।
निः । एकम् । इत् । वृणते । वृत्रऽहत्ये ॥ १ ॥

अत्र अस्मिन् यज्ञे[4] वज्रिन् हे वज्रवन् इन्द्र सुहवासः सुहवाः शोभनाह्वानाः ऊमाः रक्षकाः विश्वे देवासः सर्वे देवाः उभे रोदसी द्यावापृथिव्यौ च एव[5] एवमुक्तप्रकारेण स्तूयमानं महां महान्तं प्रभूतं वृद्धं गुणैः प्रवृद्धम् ऋष्वं दर्शनीयं त्वाम् एकमित् एकमेव वृत्रहत्ये वृत्रहननार्थं निः वृणते निःशेषेण संभजन्ते ॥

**अवासृजन्त जिव्रयो न देवा भुवः सम्राळिन्द्र सत्ययोनिः ।**
**अहन्नहिं परिशयानमर्णः प्र वर्तनीररदो विश्वधेनाः ॥ २ ॥**

अव । असृजन्त । जिव्रयः । न । देवाः । भुवः । सम्ऽराट् । इन्द्र । सत्यऽयोनिः ।
अहन् । अहिम् । परिऽशयानम् । अर्णः । प्र । वर्तनीः । अरदः । विश्वऽधेनाः ॥ २ ॥

---

१. ख–पञ्चमाध्याय° । २. त–सायणार्येण । ३. ल–अहीनसूक्तस्थाने । ४. त-ल– लोके ।
५. ख-ग-घ-च-ण-भ-स–‘ एव ’ नास्ति ।

हे vइन्द्र vदेवाः त्वां[1] vजिव्रयो vन जीर्णाः प्रवृद्धाः पितरो यूनः पुत्रानिव vअवासृजन्त असुरवधार्थं प्रैरयन् । ततो हे इन्द्र vसत्ययोनिः सत्यनिवासस्त्वं vसम्राट् सर्वेषां लोकानामधीश्वरः vभुवः अभवः । vअर्णः उदकं लक्षीकृत्य vपरिशयानं परितः समन्तात् शयनं कुर्वन्तम् vअहिं वृत्रासुरम् vअहन् अवधीः । vविश्वधेनाः विश्वस्य प्रीणयित्रीः vवर्तनीः सर्वत्र प्रवर्तिका नदीः[2] vप्र vअरदः प्रकर्षेण विलेखनं कृतवानसि । इन्द्रो वृत्रं हत्वा तेनावृतान्युदकानि प्रवाहरूपेण प्रवर्तयतीत्यर्थः ॥

अतृप्णुवन्तं वियतमबुध्यमबुध्यमानं सुषुपाणमिन्द्र ।
सप्त प्रति प्रवत आशयानमहिं वज्रेण वि रिणा अपर्वन् ॥ ३ ॥
अतृप्णुवन्तम् । विऽयतम् । अबुध्यम् । अबुध्यमानम् । सुसुपानम् । इन्द्र ।
सप्त । प्रति । प्रऽवतः । आऽशयानम् । अहिम् । वज्रेण । वि । रिणाः । अपर्वन् ॥ ३ ॥

हे vइन्द्र त्वम् vअतृप्णुवन्तं भोगेषु अतृप्यन्तं vवियतं शिथिलाङ्गम् vअबुध्यं दुर्विज्ञानम् vअबुध्यमानं किमप्यजानन्तं vसुषुपाणं सुप्तं vसप्त सर्पणस्वभावाः vप्रवतः अपः vप्रति[3] vआशयानम् आवृत्य तिष्ठन्तम् vअहिं वृत्रम् vअपर्वन् अपर्वणि[4] पौर्णमास्यां vवज्रेण vवि vरिणाः व्यरिणाः । विशेषेण हतवानसि । पौर्णमास्यां वृत्रवधः 'त्वष्टा हतपुत्रः' इत्यनुवाके 'घ्नन्ति वा एनं पौर्णमास आमावास्यायां प्याययन्ति' ( तै. सं. २. ५. २. ५ ) इति तैत्तिरीयेऽपि उक्तः[5] ॥

अक्षोदयच्छवसा क्षाम बुध्नं वार्ण वातस्तविषीभिरिन्द्रः ।
दृळ्हान्यौभ्नादुशमान ओजोऽवाभिनत्ककुभः पर्वतानाम् ॥ ४ ॥
अक्षोदयत् । शवसा । क्षाम । बुध्नम् । वाः । न । वातः । तविषीभिः । इन्द्रः ।
दृळ्हानि । औभ्नात् । उशमानः । ओजः । अव । अभिनत् । ककुभः । पर्वतानाम् ॥ ४ ॥

vइन्द्रः परमैश्वर्ययुक्तः vशवसा बलेन vबुध्नम् अन्तरिक्षं vक्षाम क्षीणोदकम् vअक्षोदयत् संपिपेष । तत्र दृष्टान्तः । vवातः वायुः vतविषीभिः बलैः vवार्ण उदकमिव तद्वत् । किंच vओजः बलम् vउशमानः कामयमान इन्द्रः vदृळ्हानि दृढानि स्थिराण्यप्यभ्राणि vऔभ्नात् अभाङ्क्षीत् । तथा vपर्वतानां गिरीणां vककुभः पक्षान् vअवाभिनत् अत्यन्तमभैत्सीत् ॥

अभि प्र दद्रुर्जनयो न गर्भं रथाइव प्र ययुः साकमद्रयः ।
अतर्पयो विसृत उब्ज ऊर्मीन्त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥ ५ ॥
अभि । प्र । दद्रुः । जनयः । न । गर्भम् । रथाःऽइव । प्र । ययुः । साकम् । अद्रयः ।
अतर्पयः । विऽसृतः । उब्जः । ऊर्मीन् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥ ५ ॥

---

१. ख-ग-घ-च-ण-न-प-फ-भ-ल-स–'त्वां' नास्ति । २. ख-ग-घ-च-ण-त-भ–आपस्तासाम् ; न-स–'नदीः' नास्ति । ३. त-न-ल-स–'प्रति' नास्ति । ४. ल–पर्वणि । ५. ख-ग-च-ण-न-भ-स–उक्तम् ।

हे ᵛइन्द्र त्वाम् ᵛअद्रयः मरुतः ᵛजनयः जनन्यः ᵛगर्भं ᵛन पुत्रमिव ᵛअभि ᵛप्र ᵛदद्रुः अभिजग्मुः । किंच ᵛरथाइव रंहणशीला रथा यथा तथा वृत्रवधार्थं त्वया ᵛसाकं ᵛप्र ᵛययुः प्रकर्षेण अयासिषुः । हे[1] इन्द्र त्वं ᵛविसृतः विसरणशीला नदीः ᵛअतर्पयः अद्भिरपूरयः । तथा ᵛऊर्मीन् मेघान् ᵛउब्जः अवधीः । तथा ᵛत्वं ᵛवृतान् वृत्रेणावृतान्[2] ᵛसिन्धून् अपः ᵛअरिणाः प्रैरयः ॥ ॥ ५ ॥

**त्वं म॒हीम॒वनिं॑ वि॒श्वधे॑नां तु॒र्वीत॑ये व॒य्या॑य॒ क्षर॑न्तीम् ।**
**अर॑मयो॒ नम॒सैज॒दर्णः॑ सुतर॒णाँ अ॑कृणोरिन्द्र॒ सिन्धू॑न् ॥ ६ ॥**

त्वम् । म॒हीम् । अ॒वनि॑म् । वि॒श्वऽधे॑नाम् । तु॒र्वीत॑ये । व॒य्या॑य । क्षर॑न्तीम् ।
अर॑मयः । नम॑सा । एज॑त् । अर्णः॑ । सु॒ऽत॒र॒णान् । अ॒कृ॒णोः॒ । इ॒न्द्र॒ । सिन्धू॑न् ॥ ६ ॥

हे इन्द्र ᵛत्वं ᵛमहीं महतीं ᵛविश्वधेनां विश्वस्य प्रीणयित्रीं ᵛतुर्वीतये तुर्वीतिनाम्ने राज्ञे ᵛवय्याय वय्यनाम्ने च ᵛक्षरन्तीम् अभीष्टान् कामान् दुहतीम् ᵛअवनिं भूमिं ᵛनमसा अन्नेन ᵛएजत् एजता चलता ᵛअर्णः अर्णसोदकेन च ᵛअरमयः रमयसि । इन्द्रः पृथिवीमन्नोदकसमृद्धां करोतीत्यर्थः । किंच हे ᵛइन्द्र त्वं ᵛसिन्धून् जलानि ᵛसुतरणान् सुष्ठु तीर्णानि ᵛअकृणोः अकार्षीः ॥

**प्राग्रुवो॑ नभ॒न्वो॒३॒॑ न वक्वा॑ ध्व॒स्रा अ॑पिन्वद्यु॒व॒तीॠ॑त॒ज्ञाः ।**
**धन्वा॒न्यज्राँ॑ अपृणक्तृषा॒णाँ अधो॒गिन्द्रः॑ स्त॒र्यो॒३॒॑ दंसु॑पत्नीः ॥ ७ ॥**

प्र । अ॒ग्रुवः॑ । न॒भन्वः॑ । न । वक्वाः॑ । ध्व॒स्राः । अ॒पि॒न्व॒त् । यु॒व॒तीः । ऋ॒त॒ऽज्ञाः ।
धन्वा॑नि । अज्रा॑न् । अ॒पृ॒ण॒क् । तृ॒षा॒णान् । अधो॑क् । इन्द्रः॑ । स्त॒र्यः॑ । दम्ऽसु॑पत्नीः ॥ ७ ॥

इन्द्रः ᵛनभन्वः शत्रूणां हिंसिकाः ᵛवक्वाः ᵛन सेना इव ᵛध्वस्राः कूलानां ध्वंसिकाः ᵛयुवतीः अद्भिर्मिश्रिताः ᵛऋतज्ञाः ऋतस्यान्नस्य जनयित्रीः ᵛअग्रुवः । अग्रुव इति नदीनामैतत् । अग्रगामिनीः नदीः ᵛप्र ᵛअपिन्वत् प्रकर्षेणापूरयत् । तथा ᵛधन्वानि निर्जलानुन्नतान् देशांश्च वृष्ट्या ᵛअपृणक् अपूरयत् । तथा ᵛअज्रान् मार्गस्य गन्तॄन् ᵛतृषाणान् पिपासया युक्तान् पुरुषान् अपृणक् अपूरयत् । किंच ᵛइन्द्रः ᵛदंसुपत्नीः दमनपरा असुराः सुष्ठु पतयो यासां ताः ᵛस्तर्यः स्तरीर्निवृत्तप्रसवा गाः ᵛअधोक् अधुक्षत्[3] । इन्द्रो राक्षसकृतनिरोधदुःखात् निरुद्धप्रसवा अपि गा विमुच्य सप्रसवाश्चकारेत्यर्थः ॥

**पूर्वी॑रु॒षसः॑ श॒रद॑श्च गू॒र्ता वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒द्वि सिन्धू॑न् ।**
**परि॑ष्ठिता अतृणद्बद्बधा॒नाः सी॒रा इन्द्रः॒ स्रवि॑तवे पृथि॒व्या ॥ ८ ॥**

पूर्वीः॑ । उ॒षसः॑ । श॒रदः॑ । च॒ । गू॒र्ताः । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒सृ॒ज॒त् । वि । सिन्धू॑न् ।
परि॑ऽस्थिताः । अ॒तृ॒ण॒त् । ब॒द्ब॒धा॒नाः । सी॒राः । इन्द्रः॑ । स्रवि॑तवे । पृ॒थि॒व्या ॥ ८ ॥

---

१. ग-च-ण-स-'हे' नास्ति ।　२. ख-ग-घ-च-ण-न-प-फ-भ-ल-स-'वृत्रेणावृतान्' नास्ति ।
३. त-अधुक्षत ।

ᵛवृत्रं वृत्राख्यमसुरं ᵛजघन्वान् हतवानिन्द्रः ᵛगूर्ताः तमिस्रया गीर्णाः ᵛपूर्वीः बह्वीः ᵛउषसः ᵛशरदश्च संवत्सरांश्च ᵛवि ᵛअसृजत् विशेषेण ससर्ज । तथा ᵛसिन्धून् वृत्रेणावृतान्युदकानि व्यसृजत्। किंच ᵛइन्द्रः ᵛपरिष्ठिताः मेघेषु परितः स्थिताः ᵛबद्धधानाः वृत्रेण परितो बध्यमानाः ᵛसीराः नदीः। सीरा इति नदीनामैतत् । ᵛपृथिव्या पृथिवीरूपेण मार्गेण ᵛस्रवितवे स्रवितुं गमनार्थम् ᵛअतृणत् अविध्यत् ॥

**व॒म्रीभि॑ः पु॒त्रम॒ग्रुवो॑ अदा॒नं नि॒वेश॑नाद्धरिव॒ आ ज॑भर्थ ।**

**व्य॑१॒॑न्धो अ॑ख्य॒दहि॑मादद॒ानो निर्भू॑दुख॒च्छित्सम॑रन्त॒ पर्व॑ ॥ ९ ॥**

व॒म्रीभि॑ः । पु॒त्रम् । अ॒ग्रुव॑ः । अ॒दा॒नम् । नि॒ऽवेश॑नात् । ह॒रि॒ऽव॒ः । आ । ज॒भ॒र्थ॒ ।

वि । अ॒न्धः । अ॒ख्य॒त् । अहि॑म् । आ॒ऽद॒दा॒नः ।

निः । भू॒त् । उ॒ख॒ऽछित् । सम् । अ॒र॒न्त॒ । पर्व॑ ॥ ९ ॥

हे ᵛहरिवः हरिसंज्ञकाश्वोपेतेन्द्र त्वं ᵛवम्रीभिः उपजिह्विकाभिः ᵛअदानम् अद्यमानम् ᵛअग्रुवः । अग्रू नाम काचित् । तस्याः ᵛपुत्रं ᵛनिवेशनात् वल्मीकाख्यात् स्थानात् ᵛआ ᵛजभर्थ आहृतवानसि। ᵛआददानः इन्द्रेणाह्रियमाणोऽग्रुवः पुत्रः ᵛअन्धः पूर्वमन्धः सन् ᵛअहिं सर्पं ᵛवि ᵛअख्यत् विशेषेण अपश्यत्। ततः ᵛनिर्भूत् वल्मीकान्निर्गतः अभूत्[1]। ᵛउखच्छित् वल्मीकाख्याया उखायाश्छेदकानि ᵛपर्व पर्वाणि अस्य सर्वाण्यङ्गानां शिथिलानि पर्वाणि ᵛसमरन्त समगच्छन्त। उपजिह्विकाभिः शिथिलीकृतानि अग्रुवः पुत्रस्य पर्वाणीन्द्रेण समधीयन्तेत्यर्थः ॥

**प्र ते॒ पू॒र्वाणि॒ कर॑णानि विप्रावि॒द्वाँ आ॑ह वि॒दुषे॒ करां॑सि ।**

**यथा॑यथा॒ वृष्ण्या॑नि॒ स्वगू॒र्तापां॑सि राज॒न्नर्या विवे॑षीः ॥ १० ॥**

प्र । ते॒ । पू॒र्वाणि॑ । कर॑णानि । वि॒प्र॒ । आ॒ऽवि॒द्वान् । आ॒ह॒ । वि॒दुषे॑ । करां॑सि ।

यथा॑ऽयथा । वृष्ण्या॑नि । स्व॒ऽगू॑र्ता । अपां॑सि । रा॒ज॒न् । नर्या॑ । अवि॑वेषीः ॥ १० ॥

हे ᵛराजन् राजमानेन्द्र ᵛवृष्ण्यानि वर्षणयोग्यानि ᵛस्वगूर्ता स्वगूर्तानि स्वयमुद्गीर्णानि ᵛनर्या नर्याणि मनुष्यहितानि ᵛअपांसि त्वत्संबन्धीनि कर्माणि ᵛयथायथा ᵛअविवेषीः व्याप्नोः । अकार्षीरिति यावत्। तथातथा हे ᵛविप्र प्राज्ञेन्द्र ᵛविदुषे विदुषः सर्वं जानतः ᵛते त्वत्संबन्धीनि ᵛपूर्वाणि पुरातनानि ᵛकरणानि कर्माणि ᵛआविद्वान् आ समन्ताज्जानन् वामदेवः ᵛकरांसि त्वदीयानि कर्माणि ᵛप्र प्रकर्षेण ᵛआह ब्रवीति ॥

---

१. त–अभवत् ।

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्योऽ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

हे ^v^इन्द्र ^v^नु क्षिप्रं ^v^स्तुतः पूर्वैर्ऋषिभिः संस्तुतः ^v^नु क्षिप्रं ^v^गृणानः अस्माभिः स्तूयमानः त्वम् ^v^इषम् अन्नं ^v^जरित्रे स्तोत्रे मह्यं ^v^नद्यो ^v^न अद्भिर्नदीरिव ^v^पीपेः प्यायय । प्रवृद्धं कुरु । हे ^v^हरिवः हरिसंज्ञकाश्वोपेतेन्द्र ^v^ते तुभ्यं ^v^नव्यं नवतरं ^v^ब्रह्म स्तोत्रम् ^v^अकारि अस्माभिः क्रियते[1] । ^v^रथ्यः रथवन्तो वयं ^v^धिया प्रज्ञारूपया स्तुत्या ^v^सदासाः त्वां सर्वदा भजमानास्त्वदर्थं हवीरूपस्यान्नस्य दातारो वा ^v^स्याम भूयास्म ॥ ॥ २ ॥

'आ न इन्द्रः' इत्येकादशर्चं दशमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । 'आ नः' इत्यनुक्रमणिका । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि निष्केवल्ये एतन्निविद्धानीयम् । सूत्रितं च—'आ न इन्द्र इति निष्केवल्यम्' ( आश्व. श्रौ. ७. ५ ) इति । महाव्रतेऽप्येतत् संपातसूक्तम् । तथैव पञ्चमारण्यके सूत्रितं च—'आ न इन्द्रो दूरादा न आसादिति संपातः' ( ऐ. आ. ५. २. २ ) इति ॥

आ न इन्द्रो दूरादा न आसादभिष्टिकृदवसे यासदुग्रः ।
ओजिष्ठेभिर्नृपतिर्वज्रबाहुः संगे समत्सु तुर्वणिः पृतन्यून् ॥ १ ॥

आ । नः । इन्द्रः । दूरात् । आ । नः । आसात् । अभिष्टिऽकृत् । अवसे । यासत् । उग्रः ।
ओजिष्ठेभिः । नृऽपतिः । वज्रऽबाहुः । सम्ऽगे । समत्ऽसु । तुर्वणिः । पृतन्यून् ॥ १ ॥

^v^अभिष्टिकृत् यजमानसंबन्धिनामभीष्टानां कर्ता ^v^उग्रः तेजस्वी ^v^इन्द्रः ^v^नः अस्माकम् ^v^अवसे रक्षणाय ^v^दूरात् ^v^आ ^v^यासत् आयातु आगच्छतु । अपि च ^v^आसात् आसन्नादन्तिकाच्च ^v^नः अस्माकमवसे रक्षणाय ^v^आ यासत् आयातु । कीदृशः । ^v^समत्सु संग्रामेषु ^v^संगे शत्रुभिः संयोगे सति ^v^पृतन्यून् शत्रून् ^v^तुर्वणिः हिंसन् ^v^वज्रबाहुः वज्रहस्तः ^v^नृपतिः वृष्टिद्वारा नृणां मनुष्याणां पालकः ^v^ओजिष्ठेभिः अतिशयेन तेजस्विभिः मरुद्भिर्युक्त इति शेषः ॥

आ न इन्द्रो हरिभिर्यात्वच्छार्वाचीनोऽवसे राधसे च ।
तिष्ठाति वज्री मघवा विरप्शीमं यज्ञमनु नो वाजसातौ ॥ २ ॥

आ । नः । इन्द्रः । हरिऽभिः । यातु । अच्छ । अर्वाचीनः । अवसे । राधसे । च ।
तिष्ठाति । वज्री । मघऽवा । विऽरप्शी । इमम् । यज्ञम् । अनु । नः । वाजऽसातौ ॥ २ ॥

१. ल–अक्रियत ।

अर्वाचीनः अस्मदभिमुखः इन्द्रः अवसे अस्मदीयाय रक्षणाय राधसे च धनाय च नः अच्छ अस्मान् अभि[1] लक्षीकृत्य[1] हरिभिः अश्वैः सह आ यातु आगच्छतु । किंच वज्री वज्रवान् मघवा धनवान् विरप्शी महान्[2] । विरप्शीति महन्नामसु पाठात् । अस्मदीयस्य कर्मणो द्वेष्टृभिरसुरादिभिः सह नः अस्माकं वाजसातौ युद्धे प्राप्ते सति इमम् अस्मदीयं यज्ञम् अनु उद्दिश्य तिष्ठाति तिष्ठतु ॥

इमं यज्ञं त्वमस्माकमिन्द्र पुरो दधत्सनिष्यसि क्रतुं नः ।
श्वघ्नीव वज्रिन्त्सनये धनानां त्वया वयमर्य आजिं जयेम ॥ ३ ॥

इमम् । यज्ञम् । त्वम् । अस्माकम् । इन्द्र । पुरः । दधत् । सनिष्यसि । क्रतुम् । नः ।
श्वघ्नीऽइव । वज्रिन् । सनये । धनानाम् । त्वया । वयम् । अर्यः । आजिम् । जयेम ॥ ३ ॥

हे इन्द्र त्वं नः अस्मान् पुरो दधत् पुरस्कृतान् कुर्वन् अस्माकं क्रतुं क्रियमाणम् इमं यज्ञं सनिष्यसि संभजिष्यसि । अपि च श्वघ्नीव मृगयुर्मृगानिव हे वज्रिन् वज्रवन्निन्द्र त्वया अर्यः अरयः स्तोतारः वयं धनानां पश्वादिधनानां सनये लाभाय आजिं शत्रुसंबन्धिनं संग्रामं जयेम संजीयास्म[3] ॥

अग्निष्टोमे माध्यंदिनसवने मैत्रावरुणस्य 'उशन्नु षु णः' इति शस्त्रयाज्या । सूत्रितं च –'उशन्नु षु णः सुमना उपाक इति याज्या' ( आश्व. श्रौ. ५. १६ ) इति ॥

उशन्नु षु णः सुमना उपाके सोमस्य नु सुषुतस्य स्वधावः ।
पा इन्द्र प्रतिभृतस्य मध्वः समन्धसा ममदः पृष्ठ्येन ॥ ४ ॥

उशन् । ऊँ इति । सु । नः । सुऽमनाः । उपाके । सोमस्य । नु । सुऽसुतस्य । स्वधाऽवः ।
पाः । इन्द्र । प्रतिऽभृतस्य । मध्वः । सम् । अन्धसा । ममदः । पृष्ठ्येन ॥ ४ ॥

हे स्वधावः अन्नवन् इन्द्र सुमनाः शोभनमनस्कस्त्वम् उपाके समीपे नः अस्मान् उशन्नु सु अत्यन्तं कामयमानः सन् सुषुतस्य सुष्ठ्वभिषुतं प्रतिभृतस्य संभृतं मध्वः मादकं सोमस्य सोमं नु क्षिप्रमेव पाः पिब । पृष्ठ्येन । पृष्ठशब्देन[4] माध्यंदिनसवने उद्गातृभिर्गीयमानं स्तोत्रमुच्यते । तत्संबन्धिना अन्धसा पीतेन सोमेन सं ममदः प्रहृष्टो भव ॥

वि यो ररप्श ऋषिभिर्नवेभिर्वृक्षो न पक्वः सृण्यो न जेता ।
मर्यो न योषामभि मन्यमानोऽच्छा विवक्मि पुरुहूतमिन्द्रम् ॥ ५ ॥

वि । यः । ररप्शे । ऋषिऽभिः । नवेभिः । वृक्षः । न । पक्वः । सृण्यः । न । जेता ।
मर्यः । न । योषाम् । अभि । मन्यमानः । अच्छ । विवक्मि । पुरुऽहूतम् । इन्द्रम् ॥ ५ ॥

---

१. ख-ग-च-ण-प-फ–अभिलक्ष्य; त-न-स–अभिमुखीकृत्य । २. त–महानिन्द्रः । ३. त–जीयास्म ।
४. त-न-भ-ल–पृष्ठ्यशब्देन ।

vपक्वः पक्वफलः vवृक्षो vन वृक्ष इव । अत्र सृणिशब्दोऽङ्कुशवाची । तेनायुधमात्रं लक्ष्यते । vसृण्यः आयुधकुशलः vजेता vन शत्रुविजयी वीरपुरुष इव vयः[1] vनवेभिः नवैर्नूतनैः vऋषिभिः vवि vररप्शे विविधं स्तूयते । स्तोताहं vपुरुहूतं बहुभिराहूतं[2] तम् vइन्द्रम् vअच्छ अभि लक्षीकृत्य vविवक्मि विशेषेण[3] वच्मि[3] स्तौमि । तत्र दृष्टान्तः । vअभि vमन्यमानः मदीयेयं योषिदित्यभिजानन् vमर्यः मर्त्यः vयोषां vन स्त्रीमिव तद्वत् ॥ ॥ ३ ॥

गिरिर्न यः स्वतवाँ ऋष्व इन्द्रः सनादेव सहसे जात उग्रः ।

आदर्ता वज्रं स्थविरं न भीम उद्नेव कोशं वसुना न्यृष्टम् ॥ ६ ॥

गिरिः । न । यः । स्वऽतवान् । ऋष्वः । इन्द्रः । सनात् । एव । सहसे । जातः । उग्रः ।

आऽदर्ता । वज्रम् । स्थविरम् । न । भीमः । उद्नाऽइव । कोशम् । वसुना । निऽऋष्टम् ॥६॥

vगिरिर्न पर्वत इव vस्वतवान् स्वयं प्रवृद्धः vऋष्वः महान् । ऋष्व इति महन्नाम 'महत् ब्रध्नः ऋष्वः' ( नि. ३. ३. ३ ) इति तन्नामसु पाठात् । vउग्रः ओजस्वी vयः vइन्द्रः vसहसे शत्रोरभिभवाय vसनादेव चिरादेव vजातः उत्पन्नः vभीमः शत्रूणां भयंकरः स इन्द्रः vउद्नेव vकोशम् उदकेन जलपात्रमिव vवसुना तेजसा vन्यृष्टं निगतं vस्थविरं बृहत्[4] vवज्रं vन वज्रं च । नेति चार्थे । vआदर्ता आदृतवान्[5] आसीत् ॥

न यस्य वर्ता जनुषा न्वस्ति न राधस आमरीता मघस्य ।

उद्वावृषाणस्तविषीव उग्रास्मभ्यं दद्धि पुरुहूत रायः ॥ ७ ॥

न । यस्य । वर्ता । जनुषा । नु । अस्ति । न । राधसः । आऽमरीता । मघस्य ।

उत्ऽववृषाणः । तविषीऽवः । उग्र । अस्मभ्यम् । दद्धि । पुरुऽहूत । रायः ॥ ७ ॥

हे इन्द्र vयस्य तव कश्चित् vजनुषा जन्मना स्वत एव vनु नूनं सत्यं vवर्ता वारयिता vन vअस्ति । vराधसः यज्ञादिकर्मणां साधकस्य vमघस्य त्वया दीयमानस्य धनस्य vआमरीता कश्चिदपि नाशयिता vन अस्ति । हे vतविषीवः बलवन् vउग्र तेजस्विन् हे vपुरुहूत बहुभिराहूतेन्द्र vउद्ववृषाणः अभीष्टान् कामान् वर्षकस्त्वं vरायः पश्वादिधनानि vअस्मभ्यं स्तोतृभ्यः vदद्धि देहि ॥

ईक्षे रायः क्षयस्य चर्षणीनामुत व्रजमपवर्तासि गोनाम् ।

शिक्षानरः समिथेषु प्रहावान्वस्वो राशिमभिनेतासि भूरिम् ॥ ८ ॥

ईक्षे । रायः । क्षयस्य । चर्षणीनाम् । उत । व्रजम् । अपऽवर्ता । असि । गोनाम् ।

शिक्षाऽनरः । सम्ऽइथेषु । प्रहाऽवान् । वस्वः । राशिम् । अभिऽनेता । असि । भूरिम् ॥८॥

---

१. ख-ग-घ-च-ण-त-न-भ-ल-स–'यः' नास्ति । २. ख-ग-घ-च-ण-प-फ-भ-ल–'बहुभिराहूतं' नास्ति । ३. ख-ग-घ-च-ण-भ–'विशेषेण वच्मि' नास्ति । ४. ख-ग-च-फ-भ–बृहत् महत् । ५. त–आदत्तवान् ।

हे इन्द्र त्वं ᐯचर्षणीनां प्रजानां ᐯरायः धनस्य[1] ᐯक्षयस्य गृहस्य च ᐯईक्षे ईक्षसे। ᐯउत अपि च ᐯगोनां गवां ᐯव्रजं समूहम् ᐯअपवर्ता अपवारकः ᐯअसि। निरोधकेभ्योऽसुरेभ्यो गवां मोचयिता भवसीत्यर्थः। किंच हे इन्द्र ᐯशिक्षानरः शिक्षया नेता प्रज्ञानां शासकः ᐯसमिथेषु युद्धेषु ᐯप्रहावान् प्रहरणवांस्त्वं ᐯभूरिं प्रभूतं ᐯवस्वः धनस्य ᐯराशिं समूहम् ᐯअभिनेतासि प्रापयिता च[2] भवसि॥

कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु का चिदृष्वः।
पुरु दाशुषे विचयिष्ठो अंहोऽथा दधाति द्रविणं जरित्रे॥ ९॥

कया। तत्। शृण्वे। शच्या। शचिष्ठः। यया। कृणोति। मुहु। का। चित्। ऋष्वः।
पुरु। दाशुषे। विऽचयिष्ठः। अंहः। अथ। दधाति। द्रविणम्। जरित्रे॥ ९॥

ᐯशचिष्ठः अतिशयेन प्राज्ञः। तदिति लिङ्गव्यत्ययः। ᐯतत् स इन्द्रः ᐯकया ᐯशच्या कया[3] प्रज्ञया। शचीति प्रज्ञानामैतत्। ᐯशृण्वे श्रूयते। ᐯऋष्वः[4] महानिन्द्रः[5] ᐯमुहु मुहुः ᐯयया प्रज्ञया ᐯका ᐯचित् कानिचित् कर्माणि ᐯकृणोति करोति। स इन्द्रः ᐯदाशुषे हविर्दत्तवते यजमानाय ᐯपुरु भूयिष्ठम् ᐯअंहः पापं ᐯविचयिष्ठः अतिशयेन नाशको भवति। ᐯअथ अपि च ᐯजरित्रे स्तोत्रे ᐯद्रविणं पश्वादिधनं ᐯदधाति ददाति॥

मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत्ते।
नव्ये देष्णे शस्ते अस्मिन्त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः॥ १०॥

मा। नः। मर्धीः। आ। भर। दद्धि। तत्। नः। प्र। दाशुषे। दातवे। भूरि। यत्। ते।
नव्ये। देष्णे। शस्ते। अस्मिन्। ते। उक्थे। प्र। ब्रवाम। वयम्। इन्द्र। स्तुवन्तः॥१०॥

हे इन्द्र त्वं ᐯनः अस्मान् ᐯमा ᐯमर्धीः मा हिंसीः। किंतु त्वम् ᐯआ ᐯभर पोषको भव। हे इन्द्र ᐯते त्वदीयं ᐯभूरि[6] बह्वपि ᐯयत् धनं[6] ᐯदाशुषे हविर्दत्तवते यजमानाय ᐯदातवे दातुम्। ᐯप्र भवतीति शेषः। ᐯनः अस्मभ्यं ᐯतत् धनम् आहृत्य ᐯदद्धि देहि। हे ᐯइन्द्र त्वां ᐯस्तुवन्तः ᐯवयम् ᐯअस्मिन् ᐯउक्थे अस्मिन्निष्केवल्याख्यशस्त्रे ᐯते त्वदर्थं ᐯनव्ये नूतने ᐯशस्ते प्रशस्ते ᐯदेष्णे दातव्ये हविषि निमित्तभूते सति ᐯप्र ᐯब्रवाम प्रकर्षेण त्वां वदाम॥

---

१. त–धनस्य ईक्षे। २. ख-प-फ-भ–'च' नास्ति। ३. ख-प-फ-भ–'कया' नास्ति। ४. ख-ग-च-ण-प-फ-भ–यः ऋष्वः। ५. त-न-ल-स–'महानिन्द्रः' नास्ति। ६. ख-ग-घ-च-ण-प-फ-भ–यद्भूरि बह्वपि धनम्।

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

पूर्वं व्याख्याता ॥      ॥ ४ ॥

'आ यात्विन्द्रः' इत्येकादशर्चमेकादशं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । 'आ यातु' इत्यनुक्रान्तम् । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहन्येतन्निविद्धानीयम् । सूत्रितं च—'आ यात्विन्द्रोऽवस इति मरुत्वतीयम्' ( आश्व. श्रौ. ७. ५ ) इति ॥

आ यात्विन्द्रोऽवस उप न इह स्तुतः सधमादस्तु शूरः ।
वावृधानस्तविषीर्यस्य पूर्वीर्द्यौर्न क्षत्रमभिभूति पुष्यात् ॥ १ ॥

आ । यातु । इन्द्रः । अवसे । उप । नः । इह । स्तुतः । सधऽमात् । अस्तु । शूरः ।
ववृधानः । तविषीः । यस्य । पूर्वीः । द्यौः । न । क्षत्रम् । अभिऽभूति । पुष्यात् ॥ १ ॥

सः vइन्द्रः vनः अस्माकम् vअवसे रक्षणाय vउप vआ vयातु उपागच्छतु । य इन्द्रः vइह अस्मिन् यज्ञे vस्तुतः । vशूरः विक्रान्तः vववृधानः प्रवृद्धोऽयमिन्द्रः vसधमादस्तु अस्माभिः सह माद्यन् भवतु । vयस्य इन्द्रस्य vतविषीः तविष्यो बलानि vपूर्वीः पूर्व्यो बहूनि । सन्तीति शेषः । यश्चेन्द्रः vद्यौर्न द्योतमानः सूर्य इव vअभिभूति परकीयं बलमभिभावुकं vक्षत्रं स्वकीयं बलं तेजो वा vपुष्यात् पुष्यतु । स इन्द्र उपायात्विति पूर्वेण संबन्धः ॥

तस्येदिह स्तवथ वृष्ण्यानि तुविद्युम्नस्य तुविराधसो नॄन् ।
यस्य क्रतुर्विदथ्यो३ न सम्राट् साह्वान्तरुत्रो अभ्यस्ति कृष्टीः ॥ २ ॥

तस्य । इत् । इह । स्तवथ । वृष्ण्यानि । तुविऽद्युम्नस्य । तुविऽराधसः । नॄन् ।
यस्य । क्रतुः । विदथ्यः । न । सम्ऽराट् । सह्वान् । तरुत्रः । अभि । अस्ति । कृष्टीः ॥ २ ॥

vतुविद्युम्नस्य बहुकीर्तेः vतुविराधसः बहुधनस्य vतस्येत् तस्येन्द्रस्यैव vवृष्ण्यानि बलभूतान् vनॄन् नेतॄन् मरुतो हे स्तोतारो यूयम् vइह अस्मिन् यज्ञे vस्तवथ स्तुत । vसाह्वान् शत्रूनभिभावुकः vतरुत्रः अस्मानापद्भ्यस्तारकः vयस्य इन्द्रस्य vक्रतुः कर्म vकृष्टीः शत्रुसंबन्धिनीः प्रजाः vअभ्यस्ति अभिभवति । तत्र दृष्टान्तः । vविदथ्यो vन vसम्राट् । विदथार्हः[1] यज्ञार्हः सम्राट् सकललोकानाम् अधिपतिरिव तद्वत् । तस्य वृष्ण्यानि इति पूर्वेण संबन्धः ॥

---

१. ल–विदथार्हो न ।

आ यात्विन्द्रो दिव आ पृथिव्या मक्षू समुद्रादुत वा पुरीषात् ।
स्वर्णरादवसे नो मरुत्वान्परावतो वा सदनादृतस्य ॥ ३ ॥

आ । यातु । इन्द्रः । दिवः । आ । पृथिव्याः । मक्षु । समुद्रात् । उत । वा । पुरीषात् ।
स्वःऽनरात् । अवसे । नः । मरुत्वान् । पराऽवतः । वा । सदनात् । ऋतस्य ॥ ३ ॥

मरुत्वान् मरुद्भिः सहितः इन्द्रः नः अस्माकम् अवसे रक्षणाय दिवः स्वर्गलोकात् आ यातु आगच्छतु । पृथिव्याः भूलोकाच्च मक्षु शीघ्रम् आ यातु । उत वा अथवा समुद्रात् अन्तरिक्षलोकाच्चायातु । समुद्र इत्यन्तरिक्षनाम 'सगरः समुद्रः अध्वरम्[1]' (नि. १. ३. १५) इति तन्नामसु पाठात् । अथवा पुरीषात् उदकादायातु । पुरीषमित्युदकनाम 'मधु पुरीषं पिप्पलम्' (नि. १. १२. १२) इति तन्नामसु पाठात् । स्वर्णरात् स्वरादित्यो नरो नेता यस्य तस्माल्लोकाद्वा आयातु । परावतो वा दूराद्वा आयातु । ऋतस्य उदकस्य सदनात् स्थानात् मेघलोकाद्वा आयातु ॥

स्थूरस्य रायो बृहतो य ईशे तमु ष्टवाम विदथेष्विन्द्रम् ।
यो वायुना जयति गोमतीषु प्र धृष्णुया नयति वस्यो अच्छ ॥ ४ ॥

स्थूरस्य । रायः । बृहतः । यः । ईशे । तम् । ऊँ इति । स्तवाम । विदथेषु । इन्द्रम् ।
यः । वायुना । जयति । गोऽमतीषु । प्र । धृष्णुऽया । नयति । वस्यः । अच्छ ॥ ४ ॥

यः इन्द्रः स्थूरस्य स्थूलस्य बृहतः महतः रायः धनस्य ईशे ईष्टे विदथेषु यज्ञेषु । विदथ इति यज्ञनामैतत् । तम्[2] इन्द्रम् उ[2] तमिन्द्रमेव वयं स्तोतारः स्तवाम । यः इन्द्रः वायुना प्राणरूपेण बलेन गोमतीषु सेनासु जयति शत्रून् विजयते । धृष्णुया धृष्णुः प्रगल्भो य इन्द्रः स्तोतॄन् वस्यः वसीयः श्रेष्ठं पश्वादिधनम् अच्छ अभि प्र नयति प्रापयति । तमेवेन्द्रं स्तवामेति पूर्वेण संबन्धः ॥

उप यो नमो नमसि स्तभायन्नियर्ति वाचं जनयन्यजध्यै ।
ऋञ्जसानः पुरुवार उक्थैरेन्द्रं कृण्वीत सदनेषु होता ॥ ५ ॥

उप । यः । नमः । नमसि । स्तभायन् । इयर्ति । वाचम् । जनयन् । यजध्यै ।
ऋञ्जसानः । पुरुऽवारः । उक्थैः । आ । इन्द्रम् । कृण्वीत । सदनेषु । होता ॥ ५ ॥

---

१. ख-ग-च-ण-त-न-भ-स—अध्वरः । २. ख-ग-च-ण-भ-स—'तमिन्द्रमु' नास्ति ।

ᐯउप ᐯस्तभायन् लोकानुपस्तम्भयन् ᐯयजध्यै यष्टुं ᐯवाचं गर्जितलक्षणां वाचं ᐯजनयन् प्रजनयन् ᐯऋञ्जसानः प्रसाध्यमानः । 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः । ᐯउक्थैः शस्त्रलक्षणैः स्तोत्रैः ᐯपुरुवारः बहुभिः[1] संभजनीयः ᐯयः इन्द्रः ᐯनमसि । नम इत्यन्ननामैतत् । यजमानैर्दत्ते हविषि ᐯनमः यजमानेभ्यो यज्ञादिसाधनमन्नम् ᐯइयर्ति प्रेरयति । इन्द्रो हविषा तृप्तः सन् वृष्टिद्वारा अन्नं प्रयच्छति तेन चान्नेन पुनर्यज्ञः प्रजायत इत्यर्थः । अस्मदीयः ᐯहोता ᐯसदनेषु यज्ञगृहेषु[2] तम् ᐯइन्द्रम् ᐯआ ᐯकृण्वीत अभिमुखीकरोतु ॥ ॥ ५ ॥

धिषा यदिं धिषण्यन्तः सरण्यान्त्सदन्तो अद्रिमौशिजस्य गोहे ।
आ दुरोषाः पास्त्यस्य होता यो नो महान्त्संवरणेषु वह्निः ॥ ६ ॥
धिषा । यदि । धिषण्यन्तः । सरण्यान् । सदन्तः । अद्रिम् । औशिजस्य । गोहे ।
आ । दुरोषाः । पास्त्यस्य । होता । यः । नः । महान् । सम्ऽवरणेषु । वह्निः ॥ ६ ॥

ᐯधिषण्यन्तः धिषणामिन्द्रविषयां स्तुतिमिच्छन्तः ᐯऔशिजस्य । उशिजः कामयमाना ऋत्विजः । तेषां संबन्ध्यौशिजो यजमानः । तस्य ᐯगोहे गृहे ᐯसदन्तः निषीदन्तो जनाः ᐯअद्रिम् । आदृणाति शत्रून् इत्यद्रिरिन्द्रः । तमिन्द्रं ᐯधिषा स्तुत्या ᐯयदि यदा ᐯसरण्यान् उपागच्छेयुः तदा स इन्द्रः ᐯआ यातु । ᐯनः अस्माकं ᐯसंवरणेषु शत्रुसंबन्धिषु निरोधेषु ᐯवह्निः वोढा ᐯपास्त्यस्य पस्त्ये गृहे वसता यजमानेन ᐯहोता आह्वाता ᐯदुरोषाः दुस्तरक्रोधः ᐯयः इन्द्रः ᐯमहान् प्रभूतो भवति । स आयात्विति ॥

सत्रा यदीं भार्वरस्य वृष्णः सिषक्ति शुष्मः स्तुवते भराय ।
गुहा यदीमौशिजस्य गोहे प्र यद्धियै प्रायसे मदाय ॥ ७ ॥
सत्रा । यत् । ईम् । भार्वरस्य । वृष्णः । सिसक्ति । शुष्मः । स्तुवते । भराय ।
गुहा । यत् । ईम् । औशिजस्य । गोहे । प्र । यत् । धिये । प्र । अयसे । मदाय ॥ ७ ॥

ᐯभार्वरस्य । भर्वरो जगद्भर्ता प्रजापतिः । तस्य पुत्रो भार्वरः । तस्य ᐯवृष्णः कामानां वर्षितुरिन्द्रस्य संबन्धी ᐯईम् एषः ᐯशुष्मः बलं ᐯस्तुवते स्तोत्रं कुर्वन्तं यजमानं ᐯसिषक्ति सेवते इति ᐯयत् तत् ᐯसत्रा सत्यमेव । ᐯईम् एतद्बलम् ᐯऔशिजस्य यजमानस्य ᐯभराय भर्तुं ᐯगुहा गुहायां गुहारूपे हृदये ᐯप्र भवतीति ᐯयत् तत्सत्यम् । यजमानस्य ᐯगोहे गृहे ᐯधिये कर्मणे ᐯप्र भवतीति ᐯयत् तत्सत्यम् । ᐯअयसे गमनाय कामानां प्राप्तये ᐯमदाय हर्षाय तत्र यद्बलं प्रभवति तत्सत्यम् । इन्द्रस्य बलं यजमानं सर्वदा पालयतीत्यर्थः ॥

---

१. च–पुरुभिः । २. ख-ग-घ-च-ण–'यज्ञगृहेषु' नास्ति ।

वि यद्वरांसि पर्वतस्य वृण्वे पयोभिर्जिन्वे अपां जवांसि ।
विदद्गौरस्य गवयस्य गोहे यदी वाजाय सुध्यो३ वहन्ति ॥ ८ ॥

वि । यत् । वरांसि । पर्वतस्य । वृण्वे । पयःऽभिः । जिन्वे । अपाम् । जवांसि ।
विदत् । गौरस्य । गवयस्य । गोहे । यदि । वाजाय । सुऽध्यः । वहन्ति ॥ ८ ॥

इन्द्रः ᵛपर्वतस्य मेघस्य ᵛवरांसि द्वाराणि ᵛवि ᵛवृण्वे विवृतानि कृतवानिति ᵛयत् । ᵛअपाम् उदकानां ᵛजवांसि वेगान् ᵛपयोभिः जलैः ᵛजिन्वे प्याययतीति यत् । ᵛयदि यदा ᵛसुध्यः शोभनकर्माणो यजमानाः ᵛवाजाय अन्नाय ᵛवहन्ति इन्द्रं प्राप्नुवन्ति तदा ᵛगोहे गृहे ᵛगौरस्य गौरमृगस्य ᵛगवयस्य गवयमृगस्य च ᵛविदत् तौ द्वौ पशू लभते इति यत् । तत्सर्वं सत्रा इति पूर्वेण संबन्धः ॥

अभ्युदयेष्टौ इन्द्रस्य प्रदातुः 'भद्रा ते हस्ता' इति याज्या । सूत्रितं च—'दीर्घस्ते अस्त्वङ्कुशो भद्रा ते हस्ता सुकृतोत पाणी' ( आश्व. श्रौ. ३.१३ ) इति ॥

भद्रा ते हस्ता सुकृतोत पाणी प्रयन्तारा स्तुवते राध इन्द्र ।
का ते निषत्तिः किमु नो ममत्सि किं नोदुदु हर्षसे दातवा उं ॥ ९ ॥

भद्रा । ते । हस्ता । सुऽकृता । उत । पाणी इति । प्रऽयन्तारा । स्तुवते । राधः । इन्द्र ।
का । ते । निऽसत्तिः । किम् । ऊँ इति । नो इति । ममत्सि ।
किम् । न । उत्ऽउत् । ऊँ इति । हर्षसे । दातवै । ऊँ इति ॥ ९ ॥

हे ᵛइन्द्र ᵛते त्वदीयौ ᵛभद्रा भद्रौ कल्याणौ ᵛहस्ता हस्तौ ᵛसुकृता सुकृतौ शोभनकर्माणौ भवतः । ᵛउत अपि च ᵛपाणी त्वदीयौ हस्तौ ᵛस्तुवते स्तोत्रे यजमानाय ᵛराधः धनं ᵛप्रयन्तारा प्रयन्तारौ प्रदातारौ भवतः । हे इन्द्र ᵛते त्वदीया ᵛनिषत्तिः निषदनं स्थितिः ᵛका । त्वमस्मान् ᵛकिमु किमर्थं ᵛनो ᵛममत्सि न मादयसि । ᵛकिम् ᵛउदुदु किमर्थमेव ᵛदातवै अस्माकं धनं दातुं ᵛन ᵛहर्षसे हृष्टो न भवसि[1] ॥

ऐन्द्रस्य वार्त्रघ्नस्य पशोः 'एवा वस्वः' इति हविषो याज्या । सूत्रितं च—'एवा वस्व इन्द्रः सत्यः सम्राड्ढन्ता वृत्रं वरिवः पूरवे कः' ( आश्व. श्रौ. ३. ८ ) इति ॥

एवा वस्व इन्द्रः सत्यः सम्राड्ढन्ता वृत्रं वरिवः पूरवे कः ।
पुरुष्टुत क्रत्वा नः शग्धि रायो भक्षीय तेऽवसो दैव्यस्य ॥ १० ॥

एव । वस्वः । इन्द्रः । सत्यः । सम्ऽराट् । हन्ता । वृत्रम् । वरिवः । पूरवे । करिति कः ।
पुरुऽस्तुत । क्रत्वा । नः । शग्धि । रायः । भक्षीय । ते । अवसः । दैव्यस्य ॥ १० ॥

---

१. त-प-भवसि । उ पूरणः ।

ᵛएवा एवमुक्तप्रकारेण स्तूयमानः ᵛसत्यः सत्यवान् ᵛवस्वः धनस्य ᵛसम्राट् ईश्वरः ᵛवृत्रं वृत्रनामानमसुरं ᵛहन्ता हिंसिता ᵛइन्द्रः ᵛपूरवे मनुष्याय यजमानाय ᵛवरिवः धनं ᵛकः करोति । ददातीत्यर्थः । ᵛक्रत्वा कर्मणा स्तुतिहेतुना हे ᵛपुरुष्टुत बहुभिर्यजमानैः स्तुतेन्द्र त्वं ᵛनः अस्मभ्यं ᵛरायः धनानि ᵛशग्धि देहि । ᵛते त्वया दीयमानस्य ᵛदैव्यस्य देवसंबन्धिनः ᵛअवसः अन्नस्य ॥ कर्मणि षष्ठी ॥ अन्नं ᵛभक्षीय अहं भजेय[1] ॥

**नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।**

**अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥**

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

पूर्वं व्याख्याता ॥ ॥ ६ ॥ ॥ २ ॥

तत्र[2] तृतीयानुवाके[3] एकादश सूक्तानि । तत्र ' यन्न इन्द्रः' इत्येकादशर्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । ' यन्नः ' इत्यनुक्रमणिका । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्रे द्वितीयमिदं संपातसूक्तम्[4] । सूत्रितं च-' एवा त्वामिन्द्र यन्न इन्द्रः ' ( आश्व. श्रौ. ७. ५ ) इति ॥

**यन्न इन्द्रो जुजुषे यच्च वष्टि तन्नो महान्करति शुष्म्या चित् ।**

**ब्रह्म स्तोमं मघवा सोममुक्था यो अश्मानं शवसा बिभ्रदेति ॥ १ ॥**

यत् । नः । इन्द्रः । जुजुषे । यत् । च । वष्टि ।

तत् । नः । महान् । करति । शुष्मी । आ । चित् ।

ब्रह्म । स्तोमम् । मघऽवा । सोमम् । उक्था । यः । अश्मानम् । शवसा । बिभ्रत् । एति ॥ १ ॥

ᵛइन्द्रः ᵛनः अस्मदीयं ᵛयत् हविर्लक्षणमन्नादिकं ᵛजुजुषे सेवते ᵛयच्च हविरादिकं च ᵛवष्टि कामयते ᵛमहान् प्रभूतः ᵛशुष्मी बलवानिन्द्रः । चिदिति चार्थे । ᵛब्रह्म ᵛचित् हविर्लक्षणपुरोडाशादिकमन्नं च ᵛस्तोमं स्तोत्रसमूहं च ᵛसोमम् अभिषुतं सोमं च ᵛउक्था उक्थानि शस्त्राणि चेत्येवंभूतं ᵛतत् ब्रह्मादिचतुष्टयम् ᵛआ ᵛकरति आकरोतु स्वीकरोतु । ᵛमघवा धनवान् । अत्र[5] अश्मशब्दः[6] वज्रवाची । ᵛअश्मानं वज्रं ᵛबिभ्रत् धारयन् ᵛशवसा बलेन युक्तः ᵛयः इन्द्रः ᵛएति आगच्छति । स इन्द्रः स्वीकरोत्विति पूर्वेण संबन्धः ॥

---

१. त–भजेयम् । २. घ-च-न–अथ । ३. घ-न–तृतीयेऽनुवाके । ४. ख-प-फ-भ–सूक्तम् । ५. ख-ग-घ-च-ण-न-भ-स–' अत्र ' नास्ति । ६. ल–अस्मन्शब्दः ।

वृषा वृषन्धिं चतुरश्रिमस्यन्नुग्रो बाहुभ्यां नृतमः शचीवान् ।
श्रिये परुष्णीमुषमाण ऊर्णां यस्याः पर्वाणि सख्याय विव्ये ॥ २ ॥

वृषा । वृषन्धिम् । चतुःऽअश्रिम् । अस्यन् । उग्रः । बाहुऽभ्याम् । नृऽतमः । शचीऽवान् ।
श्रिये । परुष्णीम् । उषमाणः । ऊर्णाम् । यस्याः । पर्वाणि । सख्याय । विव्ये ॥ २ ॥

वृषा कामानां वर्षिता वृषन्धिं मेघभेदनद्वारेण वर्षं कुर्वन्तं चतुरश्रिं चतसृभिः अश्रिभिः धाराभिरुपेतं वज्रं बाहुभ्यां हस्ताभ्याम् अस्यन् शत्रुषु प्रक्षिपन् उग्रः उद्गूर्णबलः नृतमः नेतृतमः शचीवान् कर्मवानिन्द्रः ऊर्णाम् आच्छादिकां परुष्णीं पर्ववतीं नदीं श्रिये आश्रयणार्थम् उषमाणः सेवमानः[1] भवति । यस्याः नद्याः पर्वाणि भिन्नान् देशान् सख्याय सखिकर्मणे विव्ये संवृतवान् ॥

यो देवो देवतमो जायमानो महो वाजेभिर्महद्भिश्च शुष्मैः ।
दधानो वज्रं बाह्वोरुशन्तं द्याममेन रेजयत्प्र भूम ॥ ३ ॥

यः । देवः । देवऽतमः । जायमानः । महः । वाजेभिः । महत्ऽभिः । च । शुष्मैः ।
दधानः । वज्रम् । बाह्वोः । उशन्तम् । द्याम् । अमेन । रेजयत् । प्र । भूम ॥ ३ ॥

देवः दीप्यमानः देवतमः दातृतमः जायमानः उत्पद्यमानः यः इन्द्रः महः महद्भिः वाजेभिः अन्नैः महद्भिः शुष्मैः बलैः च । युक्तोऽभवदिति शेषः । स इन्द्रः बाह्वोः हस्तयोः उशन्तं कामयमानं वज्रं दधानः धारयन् अमेन बलेन द्यां द्युलोकं च[2] भूम भूलोकं च प्र रेजयत् प्रकम्पयति स्म ॥

विश्वा रोधांसि प्रवतश्च पूर्वीर्द्यौर्ऋष्वाज्जनिमन्रेजत क्षाः ।
आ मातरा भरति शुष्म्या गोर्नृवत्परिज्मन्नोनुवन्त वाताः ॥ ४ ॥

विश्वा । रोधांसि । प्रऽवतः । च । पूर्वीः । द्यौः । ऋष्वात् । जनिमन् । रेजत । क्षाः ।
आ । मातरा । भरति । शुष्मी । आ । गोः । नृऽवत् । परिऽज्मन् । नोनुवन्त । वाताः ॥ ४ ॥

विश्वा विश्वानि रोधांसि । रोधःशब्देन उन्नतप्रदेशः[3] उच्यते[3] । उन्नतप्रदेशाः पर्वताश्च पूर्वीः पूर्व्यो बहूनि प्रवतः प्रवणानि । समुद्राश्चेत्यर्थः । द्यौः द्युलोकश्च क्षाः पृथिवी च जनिमन् इन्द्रस्य जन्मनि सति ऋष्वात् महतोऽस्मादिन्द्रात् रेजत अरेजन्त[4] अकम्पन्त[4] । किंच शुष्मी बलवान्

---

१. ख-ग-च-ण-सेचमानः । २. ख-ग-घ-च-ण-भ-'च' नास्ति । ३. ल-उन्नतप्रदेशाः उच्यन्ते । ४. ख-ग-घ-च-ण-न-भ-ल-स-अरेजत अकम्पत ।

इन्द्रः vगोः गन्तुः सूर्यस्य vमातरा मातरौ मातापितृभूतौ द्यावापृथिव्यौ च। vआ इति चार्थे। vआ vभरति आ समन्तात् बिभर्ति। vनृवत् मनुष्या इव vवाताः इन्द्रेण प्रेरिता वायवश्च[1] vपरिज्मन् अन्तरिक्षे vनोनुवन्त शब्दायन्ते ॥

ता तू तं इन्द्र महतो महानि विश्वेष्वित्सवनेषु प्रवाच्या ।
यच्छूर धृष्णो धृषता दधृष्वानहिं वज्रेण शवसाविवेषीः ॥ ५ ॥

ता । तु । ते । इन्द्र । महतः । महानि । विश्वेषु । इत् । सवनेषु । प्रऽवाच्या ।
यत् । शूर । धृष्णो इति । धृषता । दधृष्वान् । अहिम् । वज्रेण । शवसा । अविवेषीः ॥ ५ ॥

हे vइन्द्र vमहतः प्रभूतस्य vते त्वदीयानि vता तानि कर्माणि vतु क्षिप्रं vमहानि महान्ति भवन्ति। vविश्वेष्वित् सर्वेष्वेव vसवनेषु प्रातःसवनादिकर्मसु त्वदीयानि कर्माणि[2] vप्रवाच्या प्रवाच्यानि स्तोतृभिः प्रकर्षेण वक्तुं योग्यानि स्तुत्यानि इति[3] vयत्[3]। हे vधृष्णो प्रगल्भ हे vशूर विक्रान्तेन्द्र vदधृष्वान् पालकत्वेन लोकान् धारयन् vशवसा बलेन युक्तस्त्वं vधृषता धर्षकेण vवज्रेण vअहिं वृत्रमसुरम् vअविवेषीः अवधीरिति यत्। एतदादीनि कर्माणि महान्तीति पूर्वेण संबन्धः। अत्र अविवेषीरिति वधकर्मा ॥ ॥ ७ ॥

ता तू तें सत्या तुविनृम्ण विश्वा प्र धेनवः सिस्रते वृष्ण ऊध्नः ।
अधा ह त्वद्वृषमणो भियानाः प्र सिन्धवो जवसा चक्रमन्त ॥ ६ ॥

ता । तु । ते । सत्या । तुविऽनृम्ण । विश्वा । प्र । धेनवः । सिस्रते । वृष्णः । ऊध्नः ।
अध । ह । त्वत् । वृषऽमनः । भियानाः । प्र । सिन्धवः । जवसा । चक्रमन्त ॥ ६ ॥

हे vतुविनृम्ण अधिकबल[4] इन्द्र vते त्वदीयानि vविश्वा विश्वानि vता तानि कर्माणि vतु क्षिप्रं vसत्या सत्यानि भवन्ति। हे इन्द्र vवृष्णः कामानां वर्षितुस्त्वत्तो भयात् vधेनवः गावः vऊध्नः स्वकीयादापीनात् vप्र vसिस्रते प्रकर्षेण क्षीरं क्षरन्ति। vअध अपि च हे vवृषमनः कामानां वर्षणपरमनस्केन्द्र vसिन्धवः नद्यः vत्वत् त्वत्तः vभियानाः बिभ्यत्यः सत्यः vजवसा वेगेन vप्र vचक्रमन्त vह प्रकर्षेण गच्छन्ति खलु ॥

अत्राह ते हरिवस्ता उ देवीरवोभिरिन्द्र स्तवन्त स्वसारः ।
यत्सीमनु प्र मुचो बद्बधाना दीर्घामनु प्रसितिं स्यन्दयध्यै ॥ ७ ॥

अत्र । अह । ते । हरिऽवः । ताः । ऊँ इति । देवीः । अवःऽभिः । इन्द्र । स्तवन्त । स्वसारः ।
यत् । सीम् । अनु । प्र । मुचः । बद्बधानाः । दीर्घाम् । अनु । प्रऽसितिम् । स्यन्दयध्यै ॥ ७ ॥

---

१. ख-ग-च-ण-भ—वायवः। २. ख-ग-घ-च-ण-न-भ-स—'कर्माणि' नास्ति। ३. ख-ग-च-ण-न-भ—'इति यत्' नास्ति। ४. त— अधिकधन।

हे ᵛइन्द्र त्वं ᵛयत् यदा ᵛबद्धधानाः वृत्रेण बध्यमानाः[१] ᵛसीमनु एताः[२] नदीरुद्दिश्य ᵛदीर्घाम् अत्यधिकां ᵛप्रसितिं बन्धनम् ᵛअनु ᵛस्यन्दयध्यै यथाकामं स्यन्दितुं ᵛप्र ᵛमुचः प्रकर्षेणामोचयः। हे ᵛहरिवः हरिवन् इन्द्र ᵛअत्राह अत्रैव मोचनवेलायां ᵛता ᵛउ ताः प्रसिद्धा एव ᵛदेवीः देव्यो द्योतमानाः ᵛस्वसारः नद्यः। अत्र स्वसृशब्दो नदीवाची। ᵛअवोभिः त्वत्कृतै रक्षणैः ᵛते त्वां ᵛस्तवन्त स्तावयन्ति। नदीपूरणादिभिः कर्मभिः जना इन्द्रं स्तुवन्तीत्यर्थः॥

पिपीळे अंशुर्मद्यो न सिन्धुरा त्वा शमी शशमानस्य शक्तिः।

अस्मद्र्यक्शुशुचानस्य यम्या आशुर्न रश्मिं तुव्योजसं गोः॥ ८॥

पिपीळे। अंशुः। मद्यः। न। सिन्धुः। आ। त्वा। शमी। शशमानस्य। शक्तिः।

अस्मद्र्यक्। शुशुचानस्य। यम्याः। आशुः। न। रश्मिम्। तुविऽओजसम्। गोः॥ ८॥

हे इन्द्र ᵛमद्यः मादयिता ᵛअंशुः सोमः ᵛपिपीळे अपीड्यत। अभ्यषूयत[३] इत्यर्थः। नेति संप्रत्यर्थे। ᵛन इदानीं ᵛसिन्धुः स्यन्दमानः सोमः ᵛत्वा त्वाम् ᵛआ ᵛयम्याः आयच्छतु। ᵛशुशुचानस्य दीप्यमानस्य ᵛशशमानस्य स्तुवतः संबन्धी ᵛअस्मद्र्यक् अस्मदभिमुखं ᵛशमी शमनं ᵛशक्तिः स्तुतिकर्म च आयच्छतु। तत्र दृष्टान्तः। ᵛआशुः शीघ्रगामी यन्ता ᵛगोः गन्तुरश्वस्य ᵛतुव्योजसं बहुबलम्। दृढमित्यर्थः। ᵛरश्मिं ᵛन अश्वबन्धनरज्जुमिव तद्वत्॥

अस्मे वर्षिष्ठा कृणुहि ज्येष्ठा नृम्णानि सत्रा सहुरे सहांसि।

अस्मभ्यं वृत्रा सुहनानि रन्धि जहि वधर्वनुषो मर्त्यस्य॥ ९॥

अस्मे इति। वर्षिष्ठा। कृणुहि। ज्येष्ठा। नृम्णानि। सत्रा। सहुरे। सहांसि।

अस्मभ्यम्। वृत्रा। सुऽहनानि। रन्धि। जहि। वधः। वनुषः। मर्त्यस्य॥ ९॥

हे ᵛसहुरे सहनशीलेन्द्र त्वं ᵛसत्रा सर्वदा ᵛसहांसि शत्रूनभिभावुकानि ᵛवर्षिष्ठा वर्षिष्ठानि प्रवृद्धानि ᵛज्येष्ठा ज्येष्ठानि प्रशस्तानि ᵛनृम्णानि बलानि ᵛअस्मे अस्मभ्यं ᵛकृणुहि कुरु। हे इन्द्र त्वम् ᵛअस्मभ्यं ᵛसुहनानि शोभनवधानि ᵛवृत्रा वृत्राणि शत्रून् ᵛरन्धि रन्धय वशं नय। किंच ᵛवनुषः हिंसकस्य ᵛमर्त्यस्य मरणधर्मणः[४] शत्रोः संबन्धि ᵛवधः हननसाधनमायुधं ᵛजहि नाशय॥

अस्माकमित्सु शृणुहि त्वमिन्द्रास्मभ्यं चित्राँ उप माहि वाजान्।

अस्मभ्यं विश्वा इषणः पुरंधीरस्माकं सु मघवन्बोधि गोदाः॥ १०॥

अस्माकम्। इत्। सु। शृणुहि। त्वम्। इन्द्र। अस्मभ्यम्। चित्रान्। उप। माहि। वाजान्।

अस्मभ्यम्। विश्वाः। इषणः। पुरम्ऽधीः। अस्माकम्। सु। मघऽवन्। बोधि। गोऽदाः॥ १०॥

---

१. प-फ-बाध्यमानाः। २. न-ल-स-एनाः। ३. न-अभ्यसूयत। ४. त- मरणशीलस्य।

हे इन्द्र त्वम् अस्माकमित् अस्मदीयाः[1] एव स्तुतीः[1] सु सुष्ठु शृणुहि। तथा हे इन्द्र त्वं चित्रान् चायनीयानि वाजान् अन्नानि अस्मभ्यम् उप माहि देहि। किंच अस्मभ्यं विश्वाः सर्वाः पुरंधीः बुद्धीः[2] इषणः प्रेरय। अपि च हे मघवन् धनवन्निन्द्र त्वं[3] अस्माकं गोदाः गवां दाता सु सुष्ठु बोधि भव॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो न पीपेः।

अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः॥ ११॥

नु। स्तुतः। इन्द्र। नु। गृणानः। इषम्। जरित्रे। नद्यः। न। पीपेरिति पीपेः।

अकारि। ते। हरिऽवः। ब्रह्म। नव्यम्। धिया। स्याम। रथ्यः। सदाऽसाः॥ ११॥

पूर्वं व्याख्याता॥　　॥ ८॥

'कथा महाम्' इत्येकादशर्चं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम्। 'ऋतस्य हि' इत्याद्यास्तिस्र ऋतदेवताका वा। तथा चानुक्रान्तं—'कथोपान्त्यास्तिस्र ऋतदेव्यो वा' इति। आभिप्लविकेऽहनि दशरात्रे प्रथमेऽहनि माध्यंदिनसवने मैत्रावरुणशस्त्रेऽहीनसूक्तस्य स्थान इदं तृतीयं संपातसूक्तम्। सूत्रितं च—'कथा महामिन्द्रः पूर्भिद्य एक इत्' (आश्व. श्रौ. ७. ५) इति। महाव्रते निष्केवल्ये एतत्। तथैव पञ्चमारण्यके शौनकेन सूत्रितं च-'कथा महामवृधत्कस्य होतुरिति संपातः' (ऐ. आ. ५. २. २) इति॥

कथा महामवृधत्कस्य होतुर्यज्ञं जुषाणो अभि सोममूधः।

पिबन्नुशानो जुषमाणो अन्धो ववक्ष ऋष्वः शुचते धनाय॥ १॥

कथा। महाम्। अवृधत्। कस्य। होतुः। यज्ञम्। जुषाणः। अभि। सोमम्। ऊधः।

पिबन्। उशानः। जुषमाणः। अन्धः। ववक्षे। ऋष्वः। शुचते। धनाय॥ १॥

महां महान्तं गुणैः प्रवृद्धमिन्द्रं कथा कथं केन प्रकारेण अवृधत् वर्धयेत्[4]। अस्मत्प्रेरिता स्तुतिरिति शेषः। तस्य महिम्नोऽतिमहत्त्वादिति भावः। स एवेन्द्रः होतुः होमनिष्पादकस्य कस्य यजमानस्य यज्ञं यागं जुषाणः प्रीयमाणः सन् अभि। गच्छेदिति शेषः। उपसर्गश्रुतेरुचितक्रियाध्याहारः। किंच ऊधः उद्धतमतिप्रवृद्धं सोमम् अन्धः सोमलक्षणमन्नं पिबन् आस्वादयन् उशानः तदेवान्नं कामयमानः जुषमाणः सेवमानश्च ऋष्वः महानिन्द्रः शुचते प्रदीप्ताय धनाय हिरण्यादिलक्षणाय[5]। उक्तलक्षणं धनं कस्मै यजमानाय दातुं ववक्षे वहति। पीतमेवान्नं जठरे धारयति। अनेन वाक्यद्वयेन इन्द्रस्याचिन्त्यचरितत्वं ख्यापितं भवति॥

---

१. ख-ग-च-ण-अस्मदीयामेव स्तुतिम्। २. ख-ग-च-ण-प-फ-भ-बह्वीः। ३. न-स-'त्वं' नास्ति। ४. ख-ग-च-ण-अवर्धयत्। ५. ख-ग-च-ण-न-भ-स-हिरण्यार्थ लक्षणाय; त-हिरण्यार्थलक्षणाय।

को अस्य वीरः सधमादमाप समानंश सुमतिभिः को अस्य ।
कदस्य चित्रं चिकिते कदूती वृधे भुवच्छशमानस्य यज्योः ॥ २ ॥

कः । अस्य । वीरः । सधऽमादम् । आप । सम् । आनंश । सुमतिऽभिः । कः । अस्य ।
कत् । अस्य । चित्रम् । चिकिते । कत् । ऊती । वृधे । भुवत् । शशमानस्य । यज्योः ॥ २ ॥

अस्य इन्द्रस्य संबन्धिनं सधमादम् । सह माद्यन्तीति सधमादः संग्रामः । तं सह सोमपानं वा वीरः स्तोत्राणाममित्राणां वा वीरयिता कः पुमान् आप प्राप्नोति । कः च अस्य इन्द्रस्य सुमतिभिः शोभनाभिरनुग्रहबुद्धिभिः समानंश संगच्छते । कत् कदा वा अस्य इन्द्रस्य चित्रं चायनीयं धनं चिकिते प्रज्ञायते। तत्प्रदानसमयं न कोऽपि जानातीत्यर्थः । कत् कदा वा[1] शशमानस्य स्तुवतः[2] यज्योः यष्टुर्यजमानस्य वृधे वर्धनाय ऊती ऊत्या रक्षया भुवत् भवेत् ॥

कथा शृणोति हूयमानमिन्द्रः कथा शृण्वन्नवसामस्य वेद ।
का अस्य पूर्वीरुपमातयो ह कथैनमाहुः पपुरिं जरित्रे ॥ ३ ॥

कथा । शृणोति । हूयमानम् । इन्द्रः । कथा । शृण्वन् । अवसाम् । अस्य । वेद ।
काः । अस्य । पूर्वीः । उपऽमातयः । ह । कथा । एनम् । आहुः । पपुरिम् । जरित्रे ॥ ३ ॥

इन्द्रः परमैश्वर्ययुक्तः हूयमानम् आह्वयन्तं स्तोतारं कथा कथं शृणोति । स्तोत्राणि शृण्वन् अस्य स्तोतुः संबन्धीनि अवसां रक्षणानि कथा कथं च[3] वेद वेत्ति । पूर्वीः पुरातनानि अस्य इन्द्रस्य संबन्धीनि उपमातयः दानानि काः ह कानिचित्[4] सन्तीति शेषः । तानि दानानि जरित्रे स्तोतुः संबन्धिनां कामानां पपुरिं पूरयितारम् एनम् इन्द्रं कथा कथं च[5] आहुः वदन्ति ॥

कथा सबाधः शशमानो अस्य नशदभि द्रविणं दीध्यानः ।
देवो भुवन्नवेदा म ऋतानां नमो जगृभ्वाँ अभि यज्जुजोषत् ॥ ४ ॥

कथा । सऽबाधः । शशमानः । अस्य । नशत् । अभि । द्रविणम् । दीध्यानः ।
देवः । भुवत् । नवेदाः । मे । ऋतानाम् । नमः । जगृभ्वान् । अभि । यत् । जुजोषत् ॥ ४ ॥

सबाधः सपत्नानां पीडासहितः शशमानः इन्द्रविषयां स्तुतिं कुर्वन् दीध्यानः कर्मभिः दीप्यमानो यजमानः अस्य इन्द्रस्य संबन्धि द्रविणं पश्वादिधनं कथा कथम् अभि नशत्

---

१. ख-ग-च-ण-भ–'वा' नास्ति । २. ख-ग-घ-च-ण-भ–स्तुवतोऽस्य । ३. ख-ग-घ-च-ण–'च' नास्ति । ४. ख-ग-च-ण-न-भ-ष–कानि । ५. ख-ग-च-ण-न-भ–'च' नास्ति ।

अभिप्राप्नोति । ᵛनमः हविर्लक्षणमन्नं ᵛजगृभ्वान् गृहीतवानिन्द्रः ᵛयत् यदा ᵛअभि ᵛजुजोषत् माम् अभिसेवेत[1] तदा ᵛदेवः दीप्यमान इन्द्रः ᵛमे मदीयानाम् ᵛऋतानां स्तोत्राणां[2] ᵛनवेदाः अतिशयेन ज्ञाता ᵛभुवत् भवेत् । अत्र निपातस्थो नकारोऽतिशयवाची ॥

कथा कदस्या उषसो व्युष्टौ देवो मर्तस्य सख्यं जुजोष ।
कथा कदस्य सख्यं सखिभ्यो ये अस्मिन्कामं सुयुजं ततस्रे ॥ ५ ॥

कथा । कत् । अस्याः । उषसः । विऽउष्टौ । देवः । मर्तस्य । सख्यम् । जुजोष ।
कथा । कत् । अस्य । सख्यम् । सखिऽभ्यः । ये । अस्मिन् । कामम् । सुऽयुजम् । ततस्रे ॥५॥

ᵛदेवः द्योतमान इन्द्रः ᵛअस्या ᵛउषसो ᵛव्युष्टौ प्रभाते ᵛमर्तस्य मर्त्यस्य मनुष्यस्य स्तोतुः संबन्धि ᵛसख्यं सखिकर्म ᵛकथा कथं केन प्रकारेण ᵛकत् कदा ᵛजुजोष सेवेत । ᵛये स्तोतारः ᵛअस्मिन् इन्द्रे ᵛसुयुजं सुष्ठु प्रयुज्यमानं ᵛकामं कामनीयं[3] हविः स्तोत्रं च ᵛततस्रे वितेनिरे ᵛअस्य इन्द्रस्य ᵛसख्यं सखिकर्म ᵛसखिभ्यः स्तोतृभ्यः ᵛकथा कथं ᵛकत् कदाचित् । भवेदिति शेषः ॥ ॥ ९ ॥

किमादमत्रं सख्यं सखिभ्यः कदा नु ते भ्रात्रं प्र ब्रवाम ।
श्रिये सुदृशो वपुरस्य सर्गाः स्वर्ण चित्रतममिष आ गोः ॥ ६ ॥

किम् । आत् । अमत्रम् । सख्यम् । सखिऽभ्यः । कदा । नु । ते । भ्रात्रम् । प्र । ब्रवाम ।
श्रिये । सुऽदृशः । वपुः । अस्य । सर्गाः । स्वः । न । चित्रऽतमम् । इषे । आ । गोः ॥ ६ ॥

हे इन्द्र वयं यजमानाः ते त्वदीयम् ᵛअमत्रं शत्रूनभिभावुकं ᵛसख्यं सखिकर्म ᵛसखिभ्यः स्तोतृभ्यः[4] ᵛकिमात् किं स्वित् ᵛप्र ᵛब्रवाम प्रकर्षेण वदेम । ᵛते त्वदीयं ᵛभ्रात्रं भ्रातृकर्म च ᵛकदा ᵛनु कदा खलु प्र ब्रवाम । ᵛसुदृशः शोभनदर्शनस्य ᵛअस्य इन्द्रस्य संबन्धिनः ᵛसर्गाः उद्योगाः ᵛश्रिये सर्वेषां स्तोतॄणां श्रेयसे । भवन्तीति शेषः । ᵛस्वर्ण सूर्यो यथा दर्शनीयतमस्तथा ᵛगोः गन्तुरिन्द्रस्य ᵛचित्रतमं दर्शनीयतमं ᵛवपुः शरीरम् ᵛआ ᵛइषे आ समन्तात् सर्वैरिष्यते ॥

द्रुहं जिघांसन्ध्वरसमनिन्द्रां तेतिक्ते तिग्मा तुजसे अनीका ।
ऋणा चिद्यत्र ऋणया न उग्रो दूरे अज्ञाता उषसो बबाधे ॥ ७ ॥

द्रुहम् । जिघांसन् । ध्वरसम् । अनिन्द्राम् । तेतिक्ते । तिग्मा । तुजसे । अनीका ।
ऋणा । चित् । यत्र । ऋणऽयाः । नः । उग्रः । दूरे । अज्ञाताः । उषसः । बबाधे ॥ ७ ॥

---

१. ख-ग-च-ण-भ-ल–अभिसेवते । २. ख-ग-च-ण–च स्तोतॄणाम्; भ–च स्तोत्राणाम् । ३. ख-ग-ण-प-फ-भ–कमनीयम् । ४. ख-ग-च-ण–'स्तोतृभ्यः' नास्ति; न-स–तेभ्यः स्तोतृभ्यः ।

अयमिन्द्रः ᵛद्रुहं द्रोहं कुर्वतीं ᵛध्वरसं हिंसिकाम् ᵛअनिन्द्राम् इन्द्रमजानतीं राक्षसीं ᵛजिघांसन् हन्तुमिच्छन् ᵛतिग्मा तिग्मानि पूर्वमेव तीक्ष्णानि ᵛअनीका अनीकानि आयुधानि ᵛतुजसे तद्वधाय ᵛतेतिक्ते अत्यर्थं तीक्ष्णीकरोति। ᵛयत्र यासूषःसु तदुपलक्षितेष्वहःसु ᵛऋणा ᵛचित् ऋणान्यपि ᵛनः अस्मान् बाधन्त इति शेषः । ताः ᵛउषसः च ᵛउग्रः उद्गूर्णबलः ᵛऋणयाः ऋणस्य हन्तेन्द्रः । यातिः वधकर्मा । ᵛदूरे ᵛअज्ञाताः अननुभूताः सतीः ᵛबबाधे अपीडयत् ॥

ऋतपेयनाम्न्येकाहे मरुत्वतीयनिष्केवल्यशस्त्रयोः निविद्धानात्[1] पुरस्तात् ' ऋतस्य हि ' इत्येतदादिके द्वे ऋचौ क्रमेण शंसनीये । सूत्रितं च–' ऋतस्य हि शुरुधः सन्ति पूर्वीरिति सूक्तमुखीये[2]' (आश्व. श्रौ. ९. ७ ) इति ॥

**ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।**

**ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥ ८ ॥**

ऋतस्य । हि । शुरुधः । सन्ति । पूर्वीः । ऋतस्य । धीतिः । वृजिनानि । हन्ति ।

ऋतस्य । श्लोकः । बधिरा । ततर्द । कर्णा । बुधानः । शुचमानः । आयोः ॥ ८ ॥

अत्र ऋतशब्देनेन्द्रो वादित्यो वा सत्यं वा यज्ञो वोच्यते । ᵛऋतस्य[3] ऋतदेवस्य संबन्धिन्यः ᵛपूर्वीः बह्व्यः ᵛशुरुधः आपः ᵛसन्ति ᵛहि भवन्ति खलु । ᵛऋतस्य ऋतदेवस्य संबन्धिनी ᵛधीतिः प्रज्ञा तद्विषया स्तुतिर्वा ᵛवृजिनानि वर्जनीयानि पापानि ᵛहन्ति हिनस्ति । ᵛऋतस्य ऋतदेवस्य[3] संबन्धिनी ᵛश्लोकः स्तुतिरूपा वाक् ᵛआयोः गन्तुर्मनुष्यस्य संबन्धिनौ ᵛबधिरा बधिरौ प्रतिबद्धौ[4] ᵛकर्णा कर्णौ ᵛततर्द तृणत्ति । कीदृशः श्लोकः । ᵛबुधानः बुध्यमानः ᵛशुचमानः दीप्यमानः ॥

**ऋतस्य दृळ्हा धरुणानि सन्ति पुरूणि चन्द्रा वपुषे वपूंषि ।**

**ऋतेन दीर्घमिषणन्त पृक्ष ऋतेन गाव ऋतमा विवेशुः ॥ ९ ॥**

ऋतस्य । दृळ्हा । धरुणानि । सन्ति । पुरूणि । चन्द्रा । वपुषे । वपूंषि ।

ऋतेन । दीर्घम् । इषणन्त । पृक्षः । ऋतेन । गावः । ऋतम् । आ । विवेशुः ॥ ९ ॥

ᵛवपुषे वपुष्मतः । षष्ठ्यर्थे चतुर्थी । ᵛऋतस्य ऋतदेवस्य संबन्धीनि ᵛदृळ्हा दृढानि ᵛधरुणानि धारकाणि ᵛपुरूणि बहूनि ᵛचन्द्रा चन्द्राण्याह्लादकानि ᵛवपूंषि रूपाणि ᵛसन्ति भवन्ति । ᵛऋतेन ऋतदेवेन ᵛदीर्घम् अत्यधिकं ᵛपृक्षः अन्नम् ᵛइषणन्त स्तोतार इच्छन्ति । ᵛऋतेन ऋतदेवेन ᵛगावः धेनवः ᵛऋतं यज्ञं दक्षिणात्वेन ᵛआ ᵛविवेशुः प्रविशन्ति । यद्वा । गावो रश्मय ऋतमुदकम् आविवेशुः ॥

---

१. ख-ग-च-ण-न-स–निविद्धानीयात् । २. घ-फ-भ–सूक्तमुखे । ३. ख-ग-च-ण–ऋतस्य देवस्य संबन्धिनी धीतिः प्रज्ञा वृजिना वर्जनीयानि पापानि हन्ति हिनस्ति । ऋतस्य ऋतदेवस्य संबन्धिन्यः पूर्वीः बह्व्यः शुरुधः आपः सन्ति हि भवन्ति खलु । ऋतस्य इन्द्रस्य । ४. ख-ग-च-ण-न-भ-स–' प्रतिबद्धौ ' नास्ति ।

ऋतं येमान ऋतमिद्वनोत्यृतस्य शुष्मस्तुरया उ गव्युः ।
ऋताय पृथ्वी बहुले गभीरे ऋताय धेनू परमे दुहाते ॥ १० ॥

ऋतम् । येमानः । ऋतम् । इत् । वनोति । ऋतस्य । शुष्मः । तुरऽयाः । ऊँ इति । गव्युः ।
ऋताय । पृथ्वी इति । बहुले इति । गभीरे इति ।
ऋताय । धेनू इति । परमे इति । दुहाते इति ॥ १० ॥

ऋतम् ऋतदेवं येमानः नियच्छन् स्तुतिभिर्वशीकुर्वन् स्तोता ऋतमित् ऋतदेवमेव वनोति संभजते। ऋतस्य ऋतदेवस्य[1] संबन्धि शुष्मः बलं तुरयाः तूर्णं गव्युः । उ इति चार्थे । जलकामश्च भवति । बहुले विस्तीर्णे गभीरे दुरवगाहे पृथ्वी द्यावापृथिव्यौ ऋताय ऋतदेवाय[2] भवतः । धेनू प्रीणयित्र्यौ परमे उत्कृष्टे द्यावापृथिव्यौ ऋताय ऋतदेवायैव दुहाते दोहनं कुर्वाते ॥

नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।
अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

पूर्वं व्याख्याता ॥　　　॥ १० ॥

' का सुष्टुतिः ' इत्येकादशर्चं तृतीयं सूक्तं वामदेवस्यार्षमैन्द्रम् । दशम्यनुष्टुप् शिष्टास्त्रिष्टुभः । तथा चानुक्रमणिका—' का सुष्टुतिरुपान्त्यानुष्टुप् ' इति । विनियोगो लैङ्गिकः ॥

का सुष्टुतिः शवसः सूनुमिन्द्रमर्वाचीनं राधस आ ववर्तत् ।
ददिर्हि वीरो गृणते वसूनि स गोपतिर्निष्षिधां नो जनासः ॥ १ ॥

का । सुऽस्तुतिः । शवसः । सूनुम् । इन्द्रम् । अर्वाचीनम् । राधसे । आ । ववर्तत् ।
ददिः । हि । वीरः । गृणते । वसूनि । सः । गोऽपतिः । निःऽसिधाम् । नः । जनासः ॥ १ ॥

का कीदृशी सुष्टुतिः शवसः सूनुं बलस्य पुत्रम् । अतिबलिनमित्यर्थः । अर्वाचीनम् अस्मदभिमुखम् इन्द्रं परमैश्वर्ययुक्तं राधसे धनाय अस्मभ्यं धनं दातुम् आ ववर्तत् आवर्तयेत् । हे जनासः जना यजमानाः वीरः विक्रान्तः गोपतिः पश्वादिधनस्य पालकः सः इन्द्रः निष्षिधां निषेद्धृणां शत्रूणां संबन्धीनि वसूनि धनानि गृणते गृणद्भ्यः स्तोतृभ्यः नः अस्मभ्यं ददिर्हि दाता खलु भवति ॥

१. ख-ग-च-ण—देवस्य ।　२. ख-ग-च-ण—देवाय ।

स वृत्रहत्ये हव्यः स ईड्यः स सुष्टुत इन्द्रः सत्यराधाः ।
स यामन्ना मघवा मर्त्याय ब्रह्मण्यते सुष्वये वरिवो धात् ॥ २ ॥

सः । वृत्रऽहत्ये । हव्यः । सः । ईड्यः । सः । सुऽस्तुतः । इन्द्रः । सत्यऽराधाः ।
सः । यामन् । आ । मघऽवा । मर्त्याय । ब्रह्मण्यते । सुस्वये । वरिवः । धात् ॥ २ ॥

ᵛसः इन्द्रः ᵛवृत्रहत्ये वृत्राणां शत्रूणां हत्ये हनने निमित्तभूते सति ᵛयामन् युद्धे ᵛहव्यः आह्वातव्यो भवति । ᵛसः इन्द्रः ᵛईड्यः स्तुत्यो भवति । ᵛसः ᵛइन्द्रः ᵛसुष्टुतः सन् ᵛसत्यराधाः यजमानेभ्यो दातुं सत्यधनो भवति । ᵛमघवा धनवान् ᵛसः इन्द्रः ᵛब्रह्मण्यते स्तोत्रमिच्छते ᵛसुष्वये सोमं सुन्वते ᵛमर्त्याय मनुष्याय यजमानाय ᵛवरिवः धनम् । वरिव इति धननामैतत् । ᵛआ ᵛधात् आ समन्तात् ददाति ॥

तमिन्नरो वि ह्वयन्ते समीके रिरिक्वांसस्तन्वः कृण्वत त्राम् ।
मिथो यत्त्यागमुभयासो अग्मन्नरस्तोकस्य तनयस्य सातौ ॥ ३ ॥

तम् । इत् । नरः । वि । ह्वयन्ते । सम्ऽईके । रिरिक्वांसः । तन्वः । कृण्वत । त्राम् ।
मिथः । यत् । त्यागम् । उभयासः । अग्मन् । नरः । तोकस्य । तनयस्य । सातौ ॥ ३ ॥

ᵛनरः नेतारो मनुष्याः ᵛसमीके युद्धे ᵛतमित् तमेवेन्द्रं ᵛवि ᵛह्वयन्ते विविधमाह्वानं कुर्वते । ᵛतन्वः स्वकीयानि शरीराणि ᵛरिरिक्वांसः तपसा रेचयन्तो यजमानास्तमेवेन्द्रं ᵛत्रां त्रातारं ᵛकृण्वत कृण्वते कुर्वते । ᵛयत् यदा ᵛमिथः परस्परं संगताः ᵛउभयासः उभये यजमानाः स्तोतारश्च ᵛत्यागं त्यागकर्तारं दातारमिन्द्रम् ᵛअग्मन् उपगच्छन्ति[1] तदा ᵛनरः उभयविधा मनुष्याः ᵛतोकस्य पुत्रस्य ᵛतनयस्य पौत्रस्य च ᵛसातौ लाभे निमित्तभूते सति[2] तमेवेन्द्रं त्रातारं कुर्वन्तीति संबन्धः ॥

क्रतूयन्ति क्षितयो योग उग्राशुषाणासो मिथो अर्णसातौ ।
सं यद्विशोऽववृत्रन्त युध्मा आदिन्नेम इन्द्रयन्ते अभीके ॥ ४ ॥

क्रतुऽयन्ति । क्षितयः । योगे । उग्र । आशुषाणासः । मिथः । अर्णऽसातौ ।
सम । यत् । विशः । अववृत्रन्त । युध्माः । आत् । इत् । नेमे । इन्द्रयन्ते । अभीके ॥ ४ ॥

हे ᵛउग्र उद्गूर्णबलेन्द्र ᵛआशुषाणासः व्याप्नुवन्तः ᵛक्षितयः मनुष्याः । क्षितय इति मनुष्यनामैतत् । ᵛअर्णसातौ सस्यादिफलसिद्ध्यर्थमुदकलाभे निमित्ते सति ᵛमिथः परस्परं ᵛयोगे संबन्धे सति ᵛक्रतूयन्ति क्रतूनि कर्माणीच्छन्ति । ᵛयत् यदा ᵛयुध्माः योधयित्र्यः ᵛविशः प्रजाः ᵛअभीके युद्धे ।

---

१. ख–अनुगच्छन्ति; प–उपागच्छन्ति । २. ख-ग-च-ण-न-भ–' सति ' नास्ति ।

अभीक इति संग्रामनामैतत् । ᵛसम् ᵛअववृत्रन्त संवर्तन्ते परस्परं संगच्छन्ते ᵛआदित् तदानीमेव ᵛनेमे केचन भाग्यवन्तो योधकाः ᵛइन्द्रयन्ते युद्धे इन्द्रमिच्छन्ति ॥

आदिद्ध नेम इन्द्रियं यजन्त आदित्पक्तिः पुरोळाशं रिरिच्यात् ।
आदित्सोमो वि पपृच्यादसुष्वीनादिज्जुजोष वृषभं यजध्यै ॥ ५ ॥

आत् । इत् । ह । नेमे । इन्द्रियम् । यजन्ते । आत् । इत् । पक्तिः । पुरोळाशम् । रिरिच्यात् ।
आत् । इत् । सोमः । वि । पपृच्यात् । असुस्वीन् । आत् । इत् । जुजोष । वृषभम् । यजध्यै ॥५॥

ᵛआदित् तदानीमेव युद्धकाले ᵛनेमे अन्ये योधाः ᵛइन्द्रियं बलवन्तमिन्द्रं ᵛयजन्ते ᵛह पूजयन्ति[1] खलु । कश्चित् ᵛआदित् अनन्तरमेव ᵛपुरोळाशं पिष्टरूपं हविः ᵛपक्तिः पचन् ᵛरिरिच्यात् इन्द्राय दद्यात् । ᵛआदित्[2] अनन्तरमेव ᵛसोमः अभिषुतसोमो यजमानः ᵛअसुष्वीन् अनभिषुतसोमान् यजमानान् ᵛवि ᵛपपृच्यात् धनैः पृथक्कुर्यात्[2] । ᵛआदित् अनन्तरमेव कश्चित् ᵛवृषभं कामानां वर्षितारमिन्द्रं ᵛयजध्यै यष्टुं ᵛजुजोष सेवते ॥ ॥ ११ ॥

कृणोत्यस्मै वरिवो य इत्थेन्द्राय सोममुशते सुनोति ।
सध्रीचीनेन मनसाविवेनं तमित्सखायं कृणुते समत्सु ॥ ६ ॥

कृणोति । अस्मै । वरिवः । यः । इत्था । इन्द्राय । सोमम् । उशते । सुनोति ।
सध्रीचीनेन । मनसा । अविऽवेनम् । तम् । इत् । सखायम् । कृणुते । समत्ऽसु ॥ ६ ॥

ᵛयः यजमानः ᵛसोमम् ᵛउशते कामयमानाय ᵛइत्था अमुत्र स्वर्गलोके स्थिताय ᵛइन्द्राय ᵛसुनोति अभिषवं करोति इन्द्रोऽपि ᵛअस्मै यजमानाय ᵛवरिवः धनं ᵛकृणोति करोति । ᵛसध्रीचीनेन संगतेन ᵛमनसा प्रवणेन चित्तेन ᵛअविवेनम् । वेनतिः कान्तिकर्मा । विवेनो विगतेच्छः । तदन्योऽविवेनः । आत्मानं कामयमानं ᵛतमित् तमेव सुन्वन्तं यजमानं ᵛसखायं मित्रं ᵛसमत्सु संग्रामेष्विन्द्रः ᵛकृणुते करोति ॥

य इन्द्राय सुनवत्सोममद्य पचात्पक्तीरुत भृज्जाति धानाः ।
प्रति मनायोरुचथानि हर्यन्तस्मिन्दधद्वृषणं शुष्ममिन्द्रः ॥ ७ ॥

यः । इन्द्राय । सुनवत् । सोमम् । अद्य । पचात् । पक्तीः । उत । भृज्जाति । धानाः ।
प्रति । मनायोः । उचथानि । हर्यन् । तस्मिन् । दधत् । वृषणम् । शुष्मम् । इन्द्रः ॥ ७ ॥

---

१. ख-ग-च-ण-त-न-भ-स–पूजयन्ते । २. ख-ग-घ-च-ण-भ-स–'आदित्... पृथक्कुर्यात्' नास्ति ।

अद्य अस्मिन् दिवसे यः यजमानः इन्द्राय परमैश्वर्ययुक्ताय देवाय सोमं[1] सोमलक्षणमन्नं सुनवत् सुनुयात् अभिषवं कुर्यात्। तथा यः पक्तीः पक्तव्यांश्च पुरोडाशादीन् पचात् पचेत् पचनं कुर्यात्। उत अपि च यः धानाः भर्जनयोग्यान् यवान्। अत्र भृष्टयववाची धानाशब्दस्तद्योग्यं यवमात्रं लक्षयति। भृज्जाति भृज्जेत् भर्जनं कुर्यात्। इन्द्रः मनायोः स्तुतिमिच्छतो यजमानस्य उचथानि स्तोत्राणि प्रति हर्यन् प्रतिकामयमानः सन् तस्मिन् यजमाने वृषणं कामानां वर्षणसमर्थं शुष्मं बलं दधत् धारयति॥

यदा समर्यं व्यचेदृघावा दीर्घं यदाजिमभ्यख्यदर्यः।
अचिक्रदद्वृषणं पत्न्यच्छा दुरोण आ निशितं सोमसुद्भिः॥ ८॥

यदा। सऽमर्यम्। वि। अचेत्। ऋघावा। दीर्घम्। यत्। आजिम्। अभि। अख्यत्। अर्यः।
अचिक्रदत्। वृषणम्। पत्नी। अच्छ। दुरोणे। आ। निऽशितम्। सोमसुत्ऽभिः॥ ८॥

यदा ऋघावा[2] शत्रूणां हिंसक इन्द्रः समर्यं सह मर्तव्यं शत्रुं व्यचेत् व्यज्ञासीत् विशेषेण जानीयात्। यत् यदा अर्यः स्वामीन्द्रः दीर्घम् अत्यधिकम् आजिं संग्रामम् अभ्यख्यत् अभिपश्येत् तदा तस्य[3] इन्द्रस्य पत्नी दुरोणे यज्ञगृहे सोमसुद्भिः सोमं सुन्वद्भिर्ऋत्विग्भिः निशितं तीक्ष्णीकृतम्। सोमपानेनोत्साहवन्तमित्यर्थः। वृषणं कामानां वर्षितारमिन्द्रम् अच्छ अभि आ अचिक्रदत् आक्रन्दति आह्वयते॥

भूयसा वस्नमचरत्कनीयोऽविक्रीतो अकानिषं पुनर्यन्।
स भूयसा कनीयो नारिरेचीद्दीना दक्षा वि दुहन्ति प्र वाणम्॥ ९॥

भूयसा। वस्नम्। अचरत्। कनीयः। अविऽक्रीतः। अकानिषम्। पुनः। यन्।
सः। भूयसा। कनीयः। न। अरिरेचीत्। दीनाः। दक्षाः। वि। दुहन्ति। प्र। वाणम्॥ ९॥

अत्र ऋग्द्वये संप्रदायविद्भिः पूर्वाचार्यैः केचित् श्लोकाः पठ्यन्ते। ते एव[4] लिख्यन्ते। 'अल्पं यः परिगृह्णाति मूल्यं पण्येन भूयसा। स क्रेतारं पुनर्गच्छन्न विक्रीतस्त्वयं[5] मया[5]॥ १॥ इति ब्रुवन्कामयते पुनर्मूल्यस्य पूरणम्। स[6] विक्रेता[6] पुनर्मूल्यं भूयसा न प्रपूरयेत्॥२॥ हीनं न लभते वस्नं[7] यदा विक्रीतवान्पुरा। यथासमयमेव स्यात्तयोर्न पुनरन्यथा॥ ३॥ अयं विक्रय एवेति समयश्चेत् कृतो[8] भवेत्। अथ मूल्यार्थमेतत्स्याद्विचार्यैव[9] तु निर्णयः[9]॥४॥ इत्येवं समयोऽकारि तदा मूल्यं प्रपूर्यते[10]। तस्मादादौ मया कार्यः समयोऽत्रेति[11] चिन्तयन्[11]॥५॥ वामदेवो वशीकृत्य शक्रं स्तोत्रेण भूयसा। विक्रीणन्

---

१. ख-ग-च-ण-न-भ–'सोमं' नास्ति। २. त–ऋघावान् हिंसावान्। ३. ख-ग-च-ण–अस्य। ४. फ–अत्र। ५. ख-ग-च-ण-त-न-भ-स विक्रीतवान् पुरा। ६. ख-ग-च-ण-भ–विक्रेता न। ७. त-न-भ-स–वक्तुम्; ल–क्रेतुः। ८. ख-ग-च-ण-त-न-भ-स–कुतो। ९. ख-ण–°मेतस्यामविचार्यैव निश्चयः; ग-च–°मेतस्यामविचार्ये विनिश्चयः; न-भ-स–° मेतस्यामविचार्यैव निर्णयः। १०. ल–प्रवर्तते। ११. ण-त-भ–समयो नेति चिन्तयेत्।

समयं चक्र इन्द्रं क इममित्यृचि ॥ ६ ॥ अतश्च द्वृच एकार्थो भूयसा वस्नमित्ययम्[1] ' इति ॥ अयमर्थः प्रतिपाद्यते । कश्चित् भूयसा भूम्ना पण्येन द्रव्येण कनीयः अल्पतरं वस्नं वसु मूल्यं धनम् अचरत् प्राप्नोति । पुनर्यन् क्रेतारं पुनर्गच्छन् स विक्रेतायमर्थो मया अविक्रीतः इति ब्रुवन् अकानिषं मूल्यपूर्तिं कामयते ॥ व्यत्ययेन उत्तमपुरुषः ॥ सः विक्रेता भूयसा धनेन कनीयः अल्पतरं मूल्यं नारिरेचीत् क्रेतुः सकाशान्न रिक्तीकरोति । न लभत इत्यर्थः । दीनाः असमर्थाः दक्षाः समर्थाश्च वाणं वचनं वि प्र दुहन्ति यथोक्तं क्रयकाले तथैव लभन्ते ॥

**क इमं दशभिर्ममेन्द्रं क्रीणाति धेनुभिः। यदा वृत्राणि जङ्घनदथैनं मे पुनर्ददत् ॥ १० ॥**

कः । इमम् । दशऽभिः । मम । इन्द्रम् । क्रीणाति । धेनुऽभिः ।

यदा । वृत्राणि । जङ्घनत् । अथ । एनम् । मे । पुनः । ददत् ॥ १० ॥

मम मदीयम् इमं स्वभूतम् इन्द्रं धेनुभिः प्रीणयित्रीभिः दशभिः दशसंख्याकाभिः स्तुतिभिः[2] कः क्रीणाति क्रयं करोति । तदानीं हे क्रेतारो युष्माकं मध्ये एवमपि समयः क्रियते । यदा अयमिन्द्रः वृत्राणि त्वदीयान् शत्रून् जङ्घनत् हन्यात् अथ अनन्तरमेव एनम् इन्द्रं मे मह्यं पुनर्ददत् पुनर्दद्यात् ॥

**नू ष्टुत इन्द्र नू गृणान इषं जरित्रे नद्यो३ न पीपेः ।**
**अकारि ते हरिवो ब्रह्म नव्यं धिया स्याम रथ्यः सदासाः ॥ ११ ॥**

नु । स्तुतः । इन्द्र । नु । गृणानः । इषम् । जरित्रे । नद्यः । न । पीपेरिति पीपेः ।

अकारि । ते । हरिऽवः । ब्रह्म । नव्यम् । धिया । स्याम । रथ्यः । सदाऽसाः ॥ ११ ॥

पूर्वं व्याख्याता ॥  ॥ १२ ॥

' को अद्य ' इत्यष्टर्चं चतुर्थं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । तथा चानुक्रान्तं— ' को अद्याष्टौ ' इति । दशरात्रे चतुर्थेऽहनि माध्यंदिने सवने स्तोमवृद्धौ मैत्रावरुणशस्त्रे आरम्भणीयाया उपरिष्टादिदं सूक्तमावपनीयं च । सूत्रितं च—' स्तोमे वर्धमाने को अद्य नर्यः ' ( आश्व. श्रौ. ७. १२ ) इति ॥

**को अद्य नर्यो देवकाम उशन्निन्द्रस्य सख्यं जुजोष ।**
**को वा महेऽवसे पार्याय समिद्धे अग्नौ सुतसोम ईट्टे ॥ १ ॥**

कः । अद्य । नर्यः । देवऽकामः । उशन् । इन्द्रस्य । सख्यम् । जुजोष ।

कः । वा । महे । अवसे । पार्याय । सम्ऽइद्धे । अग्नौ । सुतऽसोमः । ईट्टे ॥ १ ॥

---

१. ख-ग-च-ण-फ-भ—वस्नमीरितम्; ल—वस्नमित्यृचम् । २. ख-ग-च-ण-त-न-प-फ-भ-स— ' स्तुतिभिः ' नास्ति ।

vअद्य अस्मिन् दिवसे vनर्यः[1] मनुष्यहितः[2] vदेवकामः देवानिच्छन् vउशन् कामयमानः vकः यजमानः vइन्द्रस्य vसख्यं सखित्वं vजुजोष सेवते । किंच vसुतसोमः अभिषुतसोमः vको vवा यजमानः vअग्नौ vसमिद्धे प्रज्वलिते सति vमहे महते प्रवृद्धाय vपार्याय पारमर्हते vअवसे तर्पणाय[3] vईट्टे इन्द्रं स्तौति ॥

**को ना॑नाम॒ वच॑सा सो॒म्याय॑ मना॒युर्वा॑ भवति॒ वस्त॑ उ॒स्राः ।**

**क इन्द्र॑स्य॒ युज्यं॒ कः स॑खि॒त्वं को भ्रा॒त्रं व॑ष्टि क॒वये॒ क ऊ॒ती ॥ २ ॥**

कः । न॒नाम॒ । वच॑सा । सो॒म्याय॑ । म॒ना॒युः । वा॒ । भ॒व॒ति॒ । वस्तै॑ । उ॒स्राः ।

कः । इन्द्र॑स्य । युज्य॑म् । कः । स॒खि॒ऽत्वम् । कः । भ्रा॒त्रम् । व॒ष्टि॒ । क॒वये॑ । कः । ऊ॒ती ॥ २ ॥

vकः यजमानः vवचसा वाग्रूपया स्तुत्या vसोम्याय सोमार्हायेन्द्राय vननाम नमति प्रह्वीभवति । कः vवा इन्द्राय vमनायुः vभवति स्तुतिकामोऽस्ति । कः vउस्राः इन्द्रेण दत्ता गाः vवस्ते आच्छादयति । धारयतीत्यर्थः[4] । vकः vइन्द्रस्य vयुज्यं साहाय्यं vवष्टि इच्छति । vकः vसखित्वं vको vभ्रात्रं भ्रातृभावं वष्टि इच्छति । vकवये[4] क्रान्तदर्शिने इन्द्राय vऊती ऊतये तर्पणाय vकः । भवतीति शेषः ॥

**को दे॒वाना॒मवो॑ अ॒द्या वृ॑णीते॒ क आ॑दि॒त्याँ अदि॑तिं॒ ज्योति॑रीट्टे ।**

**कस्या॒श्विना॒विन्द्रो॑ अ॒ग्निः सु॒तस्यां॒शोः पि॑बन्ति॒ मन॒साऽवि॑वेनम् ॥ ३ ॥**

कः । दे॒वाना॑म् । अवः॑ । अ॒द्य । वृ॒णी॒ते॒ । कः । आ॒दि॒त्यान् । अदि॑तिम् । ज्योतिः॑ । ई॒ट्टे॒ ।

कस्य॑ । अ॒श्विनौ॑ । इन्द्रः॑ । अ॒ग्निः । सु॒तस्य॑ । अं॒शोः । पि॒ब॒न्ति॒ । मन॑सा । अवि॑ऽवेनम् ॥ ३ ॥

vअद्य अस्मिन् दिने vकः यजमानः vदेवानां द्योतमानानामिन्द्रादीनाम् vअवः रक्षणं vवृणीते प्रार्थयते । vक vआदित्यान् देवान्[5] vअदितिं देवमातरं च vज्योतिः उदकं च[6] vईट्टे याचते । vअश्विनौ अश्विदेवौ[7] vइन्द्रः च vअग्निः च vमनसा स्तुत्या प्रीताः सन्तः vअविवेनम् अविगतकामम् । यथाकाममित्यर्थः । vकस्य यजमानस्य संबन्धिनं vसुतस्य अभिषुतस्य vअंशोः सोमस्य । सोममित्यर्थः[8] । vपिबन्ति पानं कुर्वन्ति ॥

---

१. ख-प-फ-भ—कः नर्यः । २. ल—मनुष्यः नृभ्यो हितः । ३. ख-ग-च-ण-त-न-प-फ-भ-स—अर्पणाय । ४. ख-ग-च-ण-भ—कः सखित्वं कः भ्रात्रं भ्रातृत्वं च धारयतीत्यर्थः । क इन्द्रस्य युज्यं साहाय्यं वष्टि इच्छति । कः कवये । ५. ख-ग-च-ण—‘देवान्’ नास्ति । ६. ख-ग-च-ण-न-भ—‘च’ नास्ति । ७. ख-ग-च-ण-भ—देवौ । ८. ख-ग-च-ण-भ—सोमम् ।

तस्मा॑ अ॒ग्निर्भार॑तः॒ शर्म॑ यंस॒ज्ज्योक्प॑श्या॒त्सूर्य॑मु॒च्चर॑न्तम् ।
य इन्द्रा॑य सु॒नवा॒मेत्याह॒ नरे॒ नर्या॑य॒ नृत॑माय नृ॒णाम् ॥ ४ ॥

तस्मै॑ । अ॒ग्निः । भार॑तः । शर्म॑ । यं॒स॒त् । ज्योक् । प॒श्या॒त् । सूर्य॑म् । उ॒त्ऽचर॑न्तम् ।
यः । इन्द्रा॑य । सु॒नवा॑म । इति॑ । आह॑ । नरे॑ । नर्या॑य । नृऽत॑माय । नृ॒णाम् ॥ ४ ॥

ᵛभारतः हविषो भर्ताग्निः । ' प्राणो भूत्वा प्रजा धारयन् भारतः ' इति वाजसनेयकम् । ᵛअग्निः ᵛतस्मै यजमानाय ᵛशर्म सुखं ᵛयंसत् यच्छेत् । किंचायमग्निः ᵛज्योक् चिरकालम् ᵛउच्चरन्तम् उद्यन्तं ᵛसूर्यं ᵛपश्यात् पश्येत् । ᵛयः यजमानः ᵛइन्द्राय ᵛसुनवामेत्याह इन्द्रार्थं सोमाभिषवं कुर्यामिति ब्रवीति । कीदृशायेन्द्राय । ᵛनरे नेत्रे ᵛनर्याय नरहिताय ᵛनृणां नराणां नेतॄणां[1] मध्ये[1] ᵛनृतमाय नेतृतमाय ॥

न तं जि॑नन्ति ब॒हवो॒ न द॒भ्रा उ॒र्व॑स्मा॒ अदि॑तिः॒ शर्म॑ यंसत् ।
प्रि॒यः सु॒कृत्प्रि॒य इन्द्रे॑ मना॒युः प्रि॒यः सु॑प्रा॒वीः प्रि॒यो अ॑स्य सो॒मी ॥ ५ ॥

न । तम् । जि॒न॒न्ति॒ । ब॒हवः॑ । न । द॒भ्राः । उ॒रु । अ॒स्मै॒ । अदि॑तिः । शर्म॑ । यं॒स॒त् ।
प्रि॒यः । सु॒ऽकृत् । प्रि॒यः । इन्द्रे॑ । म॒ना॒युः । प्रि॒यः । सु॒प्र॒ऽअ॒वीः । प्रि॒यः । अ॒स्य॒ । सो॒मी ॥ ५ ॥

ᵛदभ्राः अल्पाः[2] ᵛबहवो[3] ᵛन[3] बहवोऽपि शत्रुजनाः[4] ᵛतं यजमानं ᵛन ᵛजिनन्ति न हिंसन्तु । य इन्द्राय सुनवामेत्याह तमिति पूर्वेण संबन्धः । ᵛअदितिः इन्द्रमाता ᵛअस्मै[5] यजमानाय ᵛउरु विस्तीर्णं ᵛशर्म सुखं ᵛयंसत् यच्छतु । किंच ᵛइन्द्रे इन्द्राय ᵛसुकृत् शोभनयागादीनां[6] कर्ता यजमानः ᵛप्रियः भवति । ᵛमनायुः इन्द्रविषयस्तुतिकामश्चास्येन्द्रस्य[7] ᵛप्रियः भवति[7] । ᵛसुप्रावीः सुष्ठु[8] प्राविता[8] सुष्ठु प्रगच्छन्नुपगच्छन् वा यजमानोऽस्येन्द्रस्य ᵛप्रियः भवति । ᵛसोमी सोमवान् यजमानः ᵛअस्य इन्द्रस्य ᵛप्रियः भवति ॥ ॥ १३ ॥

सु॒प्रा॒व्यः॑ प्राशु॒षाळे॒ष वी॒रः सुष्वेः॑ प॒क्तिं कृ॑णु॒ते केव॒लेन्द्रः॑ ।
नासु॑ष्वेरा॒पिर्न सखा॒ न जा॒मिर्दु॑ष्प्रा॒व्यो॑ऽवह॒न्तेदवा॑चः ॥ ६ ॥

सु॒प्र॒ऽअ॒व्यः॑ । प्रा॒शु॒षाट् । ए॒षः । वी॒रः । सुस्वेः॑ । प॒क्तिम् । कृ॒णु॒ते । केव॑ला । इन्द्रः॑ ।
न । असु॑स्वेः । आ॒पिः । न । सखा॑ । न । जा॒मिः ।
दुः॒प्र॒ऽअ॒व्यः॑ । अ॒व॒ऽह॒न्ता । इत् । अवा॑चः ॥ ६ ॥

---

१. ख-ग-च-ण-भ–' नेतॄणां मध्ये ' नास्ति । २. ख-ग-च-ण-फ-भ–दक्षाः; घ-न-प-स–लक्ष्याः । ३. ख-ग-च-ण-न–' बहवो न ' नास्ति । ४. ख-ग-घ-च-ण-त-न-स–शत्रुजाताः । ५. त–तस्मै । ६. खं-त-प-फ–शोभनमार्गादीनाम् । ७. ख-ग–मनोयुक्तो यजमानः; घ-च-ण-न-भ-स– ' इन्द्रविषय॰...भवति ' नास्ति । ८. त-ल–हविर्भिः सुष्ठु प्रतर्पयिता ।

ᵛप्राशुषाट् शत्रूणां प्रकर्षेण शीघ्रमभिभविता ᵛवीरः विक्रान्तः ᵛएषः ᵛइन्द्रः ᵛसुप्राव्यः सुष्ठु उपगच्छतो हविर्भिः सुष्ठु प्रतर्पयितुर्वा ᵛसुष्वेः सुन्वतो यजमानस्य संबन्धिनीं ᵛकेवला केवलामसाधारणां ᵛपक्तिं ᵛकृणुते आत्मनः कुरुते । किंचेन्द्रः ᵛअसुष्वेः असुन्वतोऽयजमानस्य ᵛआपिः व्याप्तः ᵛन भवति । इन्द्रोऽयजमानस्य[1] ᵛसखा[1] ᵛन भवति । ᵛजामिः बन्धुश्च ᵛन भवति । अपि च ᵛदुष्प्राव्यः दुरुपगमनस्य ᵛअवाचः स्तुतिरहितस्य पुरुषस्य ᵛअवहन्तेत् हिंसितैव भवति ॥

**न रेवता पणिना सख्यमिन्द्रोऽसुन्वता सुतपाः सं गृणीते ।**

**आस्य वेदः खिदति हन्ति नग्नं वि सुष्वये पक्तये केवलो भूत् ॥ ७ ॥**

**न । रेवता । पणिना । सख्यम् । इन्द्रः । असुन्वता । सुतऽपाः । सम् । गृणीते ।**

**आ । अस्य । वेदः । खिदति । हन्ति । नग्नम् । वि । सुस्वये । पक्तये । केवलः । भूत् ॥ ७ ॥**

ᵛसुतपाः अभिषुतं सोमं पिबन् ᵛइन्द्रः ᵛरेवता धनवता ᵛपणिना वणिजा लुब्धेन ᵛअसुन्वता सोमाभिषवमकुर्वता अयजमानेन सह ᵛसख्यं सखित्वं ᵛन ᵛसं ᵛगृणीते न संस्तौति । नानुमन्यत इत्यर्थः । किंच ᵛअस्य अयजमानस्य ᵛनग्नं निरर्थकं ᵛवेदः धनं ज्ञानं वा ᵛआ ᵛखिदति उद्धरति । ᵛहन्ति हिनस्ति च । अपि च ᵛसुष्वये सोमं सुन्वते ᵛपक्तये हवींषि पचते यजमानाय ᵛकेवलः असाधारणः सन् ᵛवि ᵛभूत् विभवति ॥

**इन्द्रं परेऽवरे मध्यमास इन्द्रं यान्तोऽवसितास इन्द्रम् ।**

**इन्द्रं क्षियन्त उत युध्यमाना इन्द्रं नरो वाजयन्तो हवन्ते ॥ ८ ॥**

**इन्द्रम् । परे । अवरे । मध्यमासः । इन्द्रम् । यान्तः । अवऽसितासः । इन्द्रम् ।**

**इन्द्रम् । क्षियन्तः । उत । युध्यमानाः । इन्द्रम् । नरः । वाजयन्तः । हवन्ते ॥ ८ ॥**

ᵛपरे उत्कृष्टाः ᵛअवरे निकृष्टाश्च जनाः[2] ᵛइन्द्रं[3] ᵛहवन्ते आह्वयन्ति । ᵛमध्यमासः मध्यमाश्च ᵛइन्द्रम् एव हवन्ते । ᵛयान्तः कार्यसिद्ध्यर्थं गच्छन्तो जनाः[4] इन्द्रमेवाह्वयन्ति । ᵛअवसितासः निविष्टाश्च[5] ᵛइन्द्रम् एवाह्वयन्ति । ᵛक्षियन्तः गृहे निवसन्तो जनाः ᵛइन्द्रम् एव हवन्ते । ᵛउत अपि च ᵛयुध्यमानाः युद्धं कुर्वाणा जना जयार्थमिन्द्रमेवाह्वयन्ति । ᵛवाजयन्तः वाजमन्नमिच्छन्तः ᵛनरः नेतारो मनुष्याः ᵛइन्द्रम् एव ᵛहवन्ते ॥ ॥ १४ ॥

'अहं मनुः' इति सप्तर्चं पञ्चमं सूक्तं वामदेवस्यार्षम् । अत्रेयमनुक्रमणिका—'अहं मनुः सप्ताद्याभिस्तिसृभिरिन्द्रमिवात्मानमृषिस्तुष्टावेन्द्रो वात्मानं परा नवाष्टौ वा श्येनस्तुतिः' इति ।

---

१. ल—सखा सहायश्च । २. च—'जनाः' नास्ति । ३. च-फ—इन्द्रमेव । ४. ख-ग-ण-न-भ—जनाः जयार्थम् । ५. च—उद्योगिनो जनाः जयार्थं च ।

अत्र 'अहं मनुः' इत्याद्याभिस्तिसृभिरात्मानमिन्द्ररूपेण वामदेवः स्तुतवान्। यद्वा। इन्द्र एव आत्मानं स्तुतवान्। अतो वामदेववाक्यपक्षे[1] वामदेव ऋषिरिन्द्रो देवता। इन्द्रवाक्यपक्षे[2] त्विन्द्र ऋषिः परमात्मा देवता। त्रिष्टुप् छन्दः। अवशिष्टानां वामदेव ऋषिः। अवशिष्टाभिरुत्तरसूक्तेन च सुपर्णात्मना[3] ब्रह्म स्तूयते। अतस्तासां परब्रह्म देवता। श्येननाम्न्येकाहे माध्यंदिनसवने मरुत्वतीयशस्त्रे इदं सूक्तम्। सूत्रितं च—'श्येनाजिराभ्यामभिचरन्यजेताहं मनुर्गर्भे नु सन्' ( आश्व. श्रौ. ९. ७ ) इति॥

अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः।
अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा॥ १॥

अहम्। मनुः। अभवम्। सूर्यः। च। अहम्। कक्षीवान्। ऋषिः। अस्मि। विप्रः।
अहम्। कुत्सम्। आर्जुनेयम्। नि। ऋञ्जे। अहम्। कविः। उशना। पश्यत। मा॥ १॥

इदमादिमन्त्रत्रयेण[4] गर्भे वसन् वामदेवः[5] उत्पन्नतत्त्वज्ञानः सन्[6] सार्वात्म्यं[7] स्वानुभवं[8] मन्वादिरूपेण प्रदर्शयन्नाह। vअहं वामदेव इन्द्रो[9] वा[9] vमनुरभवं सर्वस्य मन्ता प्रजापतिरस्मि। vअहम् एव vसूर्यश्च सर्वस्य प्रेरकः सविता चास्मि। vविप्रः मेधावी vकक्षीवान् दीर्घतमसः पुत्रः एतत्संज्ञकः[10] vऋषिः अप्यहमेव vअस्मि। vआर्जुनेयम्[11] अर्जुन्याः पुत्रं vकुत्सम् एतन्नामकमृषिम् vअहम् एव vन्यृञ्जे नितरां प्रसाधयामि। vकविः क्रान्तदर्शी vउशना एतदाख्य ऋषिः vअहम् एवास्मि। उक्तमुपलक्षणम्। परमार्थदृष्ट्या कृत्स्नमप्यहमेवास्मीत्यर्थः। हे जनाः vमा मां सर्वात्मकं vपश्यत। यूयमप्येवमेव स्वस्वरूपमनुभवतेत्युक्तं भवति[11]॥

अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय।
अहमपो अनयं वावशाना मम देवासो अनु केतमायन्॥ २॥

अहम्। भूमिम्। अददाम्। आर्याय। अहम्। वृष्टिम्। दाशुषे। मर्त्याय।
अहम्। अपः। अनयम्। वावशानाः। मम। देवासः। अनु। केतम्। आयन्॥ २॥

vअहं वामदेव इन्द्रो वा vआर्याय मनवे vभूमिं पृथ्वीम् vअददां दत्तवानस्मि। vदाशुषे हविर्दत्तवते vमर्त्याय मनुष्याय[12] यजमानाय vवृष्टिं सस्याद्यभिवृद्ध्यर्थं वृष्टिलक्षणमुदकम् vअहम् एव

---

१. ख-ग-घ-च-ण-त-स—वामदेववाक्यत्वात्। २. ख-ग-ण—इन्द्रवाक्ये; च—इन्द्रवाक्यत्वे; स—इन्द्रवाक्यत्वात्। ३. ख-ग-च-त-न-स—सुपर्णात्मा। ४. त—°मन्त्रत्रयेऽयम्। ५. ग-च-ण—वामदेवोऽयम्। ६. ख-ग-च-ण-ल-स—'सन्' नास्ति। ७. ख-ग-च-ण-त-ल-स—सर्वात्म्यम्। ८. ग—सुस्वानुभवम्; च-ण—सुखानुभवम्; त-न—सानुभवम्। ९. त—'इन्द्रो वा' नास्ति। १०. ख-ग-च-ण-न—'एतत्संज्ञकः' नास्ति। ११. ख-ग-घ-च-ण-स—उक्तमुपलक्षणम्। परमार्थदृष्ट्या कृत्स्नमप्यहमेवास्मीत्यर्थः। हे मा ( ख-ग-घ-ण—'मा' नास्ति ) मां सर्वात्मकं पश्यत। यूयं मामेवं स्वस्वरूपमनुभवतेत्युक्तं कर्मा। किंच आर्जुनेयमर्जुन्याः पुत्रं कुत्समहं न्यृञ्जे प्रसाधये। अहं कविः सर्वज्ञः उशना ( ग-च-शुक्र इति मा मां पश्यत। १२. ख-ग-च-ण—'मनुष्याय' नास्ति।

अददाम्। किंच अहं वावशानाः शब्दायमानाः अपः उदकानि अनयं सर्वमपि प्रदेशम् अगमयम्। देवासः वह्न्यादयो देवाः मम केतं मदीयं संकल्पम् अनु आयन् अनुयन्ति ॥

अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।
शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम् ॥ ३ ॥

अहम् । पुरः । मन्दसानः । वि । ऐरम् । नव । साकम् । नवतीः । शम्बरस्य ।
शतऽतमम् । वेश्यम् । सर्वऽताता । दिवःऽदासम् । अतिथिऽग्वम् । यत् । आवम् ॥ ३ ॥

अहं वामदेव इन्द्रो वा मन्दसानः सोमेन माद्यन् नव नवसंख्याकाः नवतीः नवतिसंख्याकाश्च शम्बरस्य एतन्नामकस्यासुरस्य संबन्धीनि पुरः पुराणि साकं युगपदेव व्यैरम् अध्वंसयम्[1]। शततमं[2] शतसंख्यापूरणं पुरं वेश्यं दिवोदासनाम्ने[3] प्रवेशार्हमकरवम्। सर्वताता सर्वतातौ यज्ञे अतिथिग्वम् अतिथीनामभिगन्तारं दिवोदासं दिवोदासनामकं राजर्षिं यत्[4] यदा आवम्[4] अपालयम्। तदा पुरो[5] व्यैरमिति[5] पूर्वेण संबन्धः ॥

प्र सु ष विभ्यो मरुतो विरस्तु प्र श्येनः श्येनेभ्य आशुपत्वा ।
अचक्रया यत्स्वधया सुपर्णो हव्यं भरन्मनवे देवजुष्टम् ॥ ४ ॥

प्र । सु । सः । विऽभ्यः । मरुतः । विः । अस्तु । प्र । श्येनः । श्येनेभ्यः । आशुऽपत्वा ।
अचक्रया । यत् । स्वधया । सुऽपर्णः । हव्यम् । भरत् । मनवे । देवऽजुष्टम् ॥ ४ ॥

अथैतदादिभिः श्येनः स्तूयते। हे मरुतः वेगेन मरुत्सदृशाः पक्षिणः सः प्रसिद्धः श्येनाख्यः विः पक्षी विभ्यः पक्षिभ्यो युष्मत्तः प्र सु अस्तु[6] बलेन प्रकृष्टो भवतु[6]। किंच श्येनेभ्यः शंसनीयगमनेभ्यः स्वसमानजातिभ्यः पक्षिभ्यः सकाशात् आशुपत्वा आशुपतनः शीघ्रगामी श्येनः प्रकृष्टो भवतु। सुपर्णः शोभनपतनः यत् यदा श्येनः अचक्रया चक्रवर्जितया स्वधया रथेन देवजुष्टं देवैः सेवितं हव्यं सोमलक्षणं हविः मनवे[7] प्रजापतये[8] भरत् अहरत् द्युलोकसकाशादाहृतवान्। अत्र स्वधाशब्दो रथवाची[9] 'अचक्रया स्वधया वर्तमानम्' ( ऋ. सं. १०. २७. १९ ) इत्यादौ दर्शनात् ॥

---

१. त-ल-प्रैरयम्। २. ख-ग-घ-च-ण-त-न-स-शततमं वेश्यम्। ३. ख-ग-घ-ण-ल-दिवोदास-[illegible] ४. न-स-यदावम्। ५. ख-ग-घ-च-ण-त-न-स-'पुरो व्यैरमिति' नास्ति। ६. ख-[illegible]न प्रकृष्टोऽस्तु भवतु। ७. न-ल-स-'मनवे' नास्ति। ८. ख-ग-घ-च-ण-न-ल-स-[illegible]स्ति। ९. ख-ग-च-ण-त-फ-स-अन्नवाची; ल-रसवाची।

भरद्यदि विरतो वेविजानः पथोरुणा मनोजवा असर्जि ।
तूयं ययौ मधुना सोम्येनोत श्रवो विविदे श्येनो अत्र ॥ ५ ॥

भरत् । यदि । विः । अतः । वेविजानः । पथा । उरुणा । मनःऽजवाः । असर्जि ।
तूयम् । ययौ । मधुना । सोम्येन । उत । श्रवः । विविदे । श्येनः । अत्र ॥ ५ ॥

vयदि यदा vविः पक्षी श्येनः vअतः अमुष्मात् द्युलोकात् vवेविजानः सोमपालकान्[1] भीषयन् vभरत् अहरत् । सोममाहृतवान् । तदा[2] vउरुणा विस्तीर्णेन vपथा अन्तरिक्षमार्गेण vमनोजवाः मनोवत् वेगयुक्तः सन् vअसर्जि संसृष्टः आसीत् । vसोम्येन सोममयेन vमधुना अन्नेन[3] सह vतूयं क्षिप्रं vययौ जगाम । vउत अपि च vअत्र अस्मिन् लोके vश्येनः सुपर्णः vश्रवः सोमाहरणनिमित्तं यशः vविविदे लेभे ॥

ऋजीपी श्येनो ददमानो अंशुं परावतः शकुनो मन्द्रं मदम् ।
सोमं भरद्दादृहाणो देवावान्दिवो अमुष्मादुत्तरादादाय ॥ ६ ॥

ऋजीपी । श्येनः । ददमानः । अंशुम् । पराऽवतः । शकुनः । मन्द्रम् । मदम् ।
सोमम् । भरत् । दादृहाणः । देवऽवान् । दिवः । अमुष्मात् । उत्ऽतरात् । आऽदाय ॥ ६ ॥

vऋजीपी ऋजुगामी vपरावतः दूरात् vअंशुं सोमं vददमानः धारयन् vश्येनः शंसनीयगमनः vदेववान् देवैः सहितः vशकुनः पक्षी vमन्द्रं मदनीयं[4] स्तुत्यं vमदं मदकरं vसोमम् vउत्तरात् उद्गततरात् vअमुष्मात् vदिवः द्युलोकात् vआदाय स्वीकृत्य vदादृहाणः[5] दृढीभवन् vभरत् अहरत् ॥

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम् ।
अत्रा पुरंधिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥ ७ ॥

आऽदाय । श्येनः । अभरत् । सोमम् । सहस्रम् । सवान् । अयुतम् । च । साकम् ।
अत्र । पुरम्ऽधिः । अजहात् । अरातीः । मदे । सोमस्य । मूराः । अमूरः ॥ ७ ॥

vश्येनः शंसनीयगमनः पक्षी vसवान् सवानां यज्ञानां vसहस्रं सहस्रसंख्याकम् vअयुतं vच अयुतसंख्याकम् । अपरिमितसंख्याकमित्यर्थः । vसाकं सह vसोमं सोमलक्षणमन्नम् vआदाय आदानं कृत्वा vअभरत् अहरत् । आजहार । vअत्र अस्मिन् सोमे आहृते सति vपुरंधिः पुरंधीर्बहुकर्मा

---

१. ख-ग-च-ण-त-स-सोमकान्; न-सोमकामान् । २. ख-ग-घ-च-ण-त-न-स-यदा । ३. च-मधुरान्नेन । ४. ल-मादनीयम् । ५. च-ण-दादृहाणः ।

अमूरः अमूढः प्राज्ञ इन्द्रः सोमस्य संबन्धिनि मदे हर्षे सति मूराः मूढाः अरातीः शत्रून् अजहात् अत्यजत्। जघानेत्यर्थः। अत्रारातिशब्दः स्त्रीलिङ्गः ॥ ॥ १५ ॥

‘ गर्भे नु ’ इति पञ्चर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभम्। अन्त्या शक्वरी षट्पञ्चाशदक्षरा। श्येनो देवता। पूर्वसूक्ते ‘ अष्टौ वा ’ इत्युक्तत्वात् अन्त्याया इन्द्रो वा देवता। तथा चानुक्रान्तं—‘गर्भे नु पञ्चान्त्या शक्वरी ’ इति। श्येने निष्केवल्यशस्त्रे इदं सूक्तम्। सूत्रं तु पूर्वमुदाहृतम् ॥

**गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।**

**शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम् ॥ १ ॥**

गर्भे । नु । सन् । अनु । एषाम् । अवेदम् । अहम् । देवानाम् । जनिमानि । विश्वा ।

शतम् । मा । पुरः । आयसीः । अरक्षन् । अध । श्येनः । जवसा । निः । अदीयम् ॥ १ ॥

अत्रैषः[1] श्लोकः पठ्यते—‘ श्येनभावं समास्थाय गर्भाद्योगेन निःसृतः। ऋषिर्गर्भे शयानः सन् ब्रूते गर्भे नु सन्निति ’ ॥ गर्भे नु गर्भे एव सन् विद्यमानः अहं वामदेवः एषाम् इन्द्रादीनां देवानां विश्वा विश्वानि सर्वाणि जनिमानि जन्मानि अनु अवेदम् आनुपूर्व्येणाज्ञासिषम्। परमात्मनः सकाशात् सर्वे देवा जाता इत्यवेदिषमित्यर्थः। इतः पूर्वं शतं बहूनि आयसीः अयोमयानि अभेद्यानि पुरः शरीराणि मा माम् अरक्षन् अपालयन्। यथाहं शरीरात् व्यतिरिक्तमात्मानं न जानीयां तथा मामरक्षन्नित्यर्थः। अध अधुना[2] श्येनः श्येनवत्स्थितः अहं[3] जवसा वेगेन निरदीयं शरीरान्निरगमम्। अनावरणमात्मानं जानन्निर्गतोऽस्मीत्यर्थः। ‘ पुरुषे ह वा अयमादितः ’ इति खण्डे ‘ गर्भ एवैतच्छयानो वामदेव एवमुवाच ’ ( ऐ. आ. २. ५. १ ) इत्यादिनायमर्थः सम्यक् प्रतिपादितः ॥

**न घा स मामप जोषं जभाराभीमास त्वक्षसा वीर्येण ।**

**ईर्मा पुरंधिरजहादरातीरुत वाताँ अतरच्छूशुवानः ॥ २ ॥**

न । घ । सः । माम् । अप । जोषम् । जभार । अभि । ईम् । आस । त्वक्षसा । वीर्येण ।

ईर्मा । पुरम्ऽधिः । अजहात् । अरातीः । उत । वातान् । अतरत् । शूशुवानः ॥ २ ॥

सः गर्भः मां वामदेवं जोषं पर्याप्तं न घ नैव अप जभार अपजहार। गर्भेऽपि वसतो मे मोहो नाभूदित्यर्थः। अहं तु ईम् इदं गर्भस्थं दुःखं त्वक्षसा तीक्ष्णेन वीर्येण ज्ञानसामर्थ्येन अभि आस अभ्यभवम्। ईर्मा सर्वस्य प्रेरकः पुरंधिः पुरां धारकः परमात्मा अरातीः गर्भसंश्रितान् शत्रून् अजहात् अत्यजत्। जघान। उत अपि च शूशुवानः वर्धमानः परिपूर्णः परमात्मा वातान् गर्भक्लेशकरान्[4] वायून् अतरत् अतारीत् ॥

---

१. ख-ग-च-ण—तत्रैषः। २. ख-ग-घ-च-ण-भ—अनन्तरम्। ३. ख-ग-घ-च-ण-भ—अहं सन्।
४. ल—क्लेशकरान्।

अव यच्छ्येनो अस्वनीदध द्योर्वि यद्यदि वात ऊहुः पुरंधिम् ।
सृजद्यदस्मा अव ह क्षिपज्ज्यां कृशानुरस्ता मनसा भुरण्यन् ॥ ३ ॥

अव । यत् । श्येनः । अस्वनीत् । अध । द्योः । वि । यत् । यदि । वा । अतः । ऊहुः । पुरम्ऽधिम् ।
सृजत् । यत् । अस्मै । अव । ह । क्षिपत् । ज्याम् । कृशानुः । अस्ता । मनसा । भुरण्यन् ॥ ३ ॥

अध तदानीं सोमाहरणकाले यत् यदा श्येनः द्योः द्युलोकात् अव अस्वनीत् अवाङ्मुखं शब्दमकरोत् । यदि वा यदा च । वेति चार्थे । यत् यं पुरंधिं सोमम् अतः अस्माच्छ्येनात् वि ऊहुः सोमपाला विक्षिप्तवन्तः । यत् यदा अस्ता शराणां क्षेप्ता मनसा मनोवेगेन भुरण्यन् गन्तुमिच्छन् कृशानुः एतन्नामकः सोमपालः ज्यां धनुषः कोटौ मौर्वीं क्षिपत् ह चिक्षेप खलु । अस्मै श्येनाय शरम् अव असृजत् त्यक्तवान् । तथा च ब्राह्मणं—'तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत्' ( ऐ. ब्रा. ३. २६ ) इत्यादि । यदा सोमपाला इत्थमित्थं चक्रुस्तदा श्येनः सोममाजहारेत्यृचोत्तरया संबन्धः ॥

ऋजिप्य ईमिन्द्रावतो न भुज्युं श्येनो जभार बृहतो अधि ष्णोः ।
अन्तः पतत्पतत्र्यस्य पर्णमध यामनि प्रसितस्य तद्वेः ॥ ४ ॥

ऋजिप्यः । ईम् । इन्द्रऽवतः । न । भुज्युम् । श्येनः । जभार । बृहतः । अधि । स्नोः ।
अन्तरिति । पतत् । पतत्रि । अस्य । पर्णम् । अध । यामनि । प्रऽसितस्य । तत् । वेरिति वेः ॥४॥

ऋजिप्यः ऋजुगामी श्येनः इन्द्रवतः[1] इन्द्रो रक्षको यस्य तस्मात् बृहतः महतः अधि उपरि स्नोः स्थितात् द्युलोकात् ईम् एनं सोमं जभार आजहार । तत्र दृष्टान्तः । इन्द्रवतः । इन्द्रः समर्थः । तद्वतो देशात् भुज्युं न भुज्युनामकं राजानं यथाश्विनावाजहतुस्तद्वत् । अध तदानीं यामनि युद्धे प्रसितस्य कृशानोरस्त्रैर्बद्धस्य वेः गन्तुः अस्य श्येनस्य[2] अन्तः मध्ये स्थितं पतत्रि पतनशीलं तत् पर्णं पतत् अपतत् ॥

अध श्वेतं कलशं गोभिरक्तमापिप्यानं मघवा शुक्रमन्धः ।
अध्वर्युभिः प्रयतं मध्वो अग्रमिन्द्रो मदाय प्रति धत्पिबध्यै
शूरो मदाय प्रति धत्पिबध्यै ॥ ५ ॥

अध । श्वेतम् । कलशम् । गोभिः । अक्तम् । आऽपिप्यानम् । मघऽवा । शुक्रम् । अन्धः ।
अध्वर्युऽभिः । प्रऽयतम् । मध्वः । अग्रम् । इन्द्रः । मदाय । प्रति । धत् । पिबध्यै ।
शूरः । मदाय । प्रति । धत् । पिबध्यै ॥ ५ ॥

---

१. णं-इन्द्रावतः । २. ख-ग-घ-च-ण-न-प-फ-भ-स-'श्येनस्य' नास्ति ।

ˇअध अधुना ˇशूरः विक्रान्तः ˇमघवा धनवान्[1] ˇइन्द्रः ˇश्वेतं शुभ्रं ˇकलशं कलशो पात्रे स्थितं ˇगोभिः गव्येन पयसा ˇअक्तं सिक्तम् ˇआपिप्यानम् आप्याययन्तं ˇशुक्रं सारोपेतम् ˇअध्वर्युभिः ˇप्रयतं दत्तम्[2] ˇअन्धः सोमलक्षणमन्नं ˇमध्वः मधुरस्य सोमरसस्य[3] ˇअग्रम् अग्रे[4] ˇमदाय मदार्थं ˇपिबध्यै पातुं[5] ˇप्रति ˇधत् प्रतिदधातु । पुनरुक्तिरादरार्था ॥ ॥ १६ ॥

‘ त्वा युजा ’ इति पञ्चर्चं सप्तमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम् इन्द्रासोमदेवताकम्[6] । अनुक्रान्तं[7] च[7]—‘ त्वा युजैन्द्रासोमम् ’ इति । विनियोगो लैङ्गिकः ॥

**त्वा युजा तव तत्सोम सख्य इन्द्रो अपो मनवे सस्रुतस्कः ।**

**अहन्नहिमरिणात्सप्त सिन्धूनपावृणोदपिहितेव खानि ॥ १ ॥**

त्वा । युजा । तव । तत् । सोम । सख्ये । इन्द्रः । अपः । मनवे । सऽस्रुतः । करिति कः ।

अहन् । अहिम् । अरिणात् । सप्त । सिन्धून् । अप । अवृणोत् । अपिहिताऽइव । खानि ॥ १ ॥

हे ˇसोम ˇतव त्वदीये ˇतत् तस्मिन् ˇसख्ये सखित्वे सति[8] ˇत्वा त्वया ˇयुजा सहायेन ˇइन्द्रः ˇसस्रुतः सरणशीलाः ˇअपः वृष्टिलक्षणान्युदकानि ˇमनवे मनुष्येभ्यः ˇकः अकरोत् । किंच ˇअहिं वृत्रमसुरम् ˇअहन् हतवान् । ˇसप्त सर्पणशीलाः ˇसिन्धून् अपः ˇअरिणात् प्रैरयत् । ˇअपिहितेव अपिहितानीव वृत्रेण तिरोहितानि च । अत्रेवशब्दश्चार्थे । ˇखानि स्रोतसां द्वाराणि ˇअपावृणोत् उद्घाटितवान् ॥

**त्वा युजा नि खिदत्सूर्यस्येन्द्रश्चक्रं सहसा सद्य इन्दो ।**

**अधि ष्णुना बृहता वर्तमानं महो द्रुहो अप विश्वायु धायि ॥ २ ॥**

त्वा । युजा । नि । खिदत् । सूर्यस्य । इन्द्रः । चक्रम् । सहसा । सद्यः । इन्दो इति ।

अधि । स्नुना । बृहता । वर्तमानम् । महः । द्रुहः । अप । विश्वऽआयु । धायि ॥ २ ॥

हे ˇइन्दो सोम ˇइन्द्रः ˇसद्यः सपदि ˇत्वा त्वया ˇयुजा सहायेन ˇसूर्यस्य प्रेरकस्य सवितुः संबन्धिनः पूर्वं[9] द्विचक्रस्य रथस्यैकं ˇचक्रं ˇसहसा अभिभावुकेन बलेन ˇनि ˇखिदत् आच्छिनत् । कीदृशम्[10] । ˇअधि उपरि ˇस्नुना स्थितेन ˇबृहता महता अन्तरिक्षेण ˇवर्तमानम् । किंच ˇमहः महतः प्रभूतस्य ˇद्रुहः द्रोग्धुः सूर्यस्य संबन्धि ˇविश्वायु सर्वतो गन्तृ चक्रम् ˇअप ˇधायि इन्द्रेणापाहारि[10] ॥

---

१. ख-ग-घ-च-त-प-फ-भ-स–‘ धनवान् ’ नास्ति । २. ख-ग-घ-च-ण-न-भ-स–‘ दत्तं ’ नास्ति । ३. त– सोमराजस्य । ४. ख-प-फ-भ–‘ अग्रे ’ नास्ति । ५. ख-ग-घ-च-ण-त-प-फ-भ–पानाय पात्रम्; न-स–पात्रम् । ६. त–ऐन्द्रासोमदेवताकम् । ७. ख-ग-च-ण-भ–तथा चानुक्रान्तम् । ८. ख-ग-च-ण-फ-भ–सति च । ९. ख-ग-च-ण-प-फ-भ–‘ पूर्वं ’ नास्ति । १०. च-फ–कीदृशं चक्रम् । स्नुना बृहता महता चक्रनेमिना युक्तं वर्तमानं विद्यमानं विश्वायु नित्यं महो द्रुहः द्रोहनाशार्थमपधायि इन्द्रेणापाहारि ।

अहन्निन्द्रो अदहदग्निरिन्दो पुरा दस्यून्मध्यंदिनादभीके ।
दुर्गे दुरोणे क्रत्वा न यातां पुरू सहस्रा शर्वा नि बर्हीत् ॥ ३ ॥

अहन् । इन्द्रः । अदहत् । अग्निः । इन्दो इति । पुरा । दस्यून् । मध्यंदिनात् । अभीके ।
दुःऽगे । दुरोणे । क्रत्वा । न । याताम् । पुरु । सहस्रा । शर्वा । नि । बर्हीत् ॥ ३ ॥

हे ᵛइन्दो सोम ᵛअभीके संग्रामे ᵛदस्यून् शत्रून् ᵛइन्द्रः ᵛअहन् अवधीत् । ᵛअग्निः कांश्चिच्छत्रून् ᵛअदहत् ददाह । कीदृशाविन्द्राग्नी । ᵛमध्यंदिनात् मध्याह्नात् ᵛपुरा पुरस्तात् पूर्वाह्णे तव पानात् लब्धबलाविति[1] शेषः[1] । ᵛयातां गच्छतामसुराणां ᵛपुरु पुरूणि बहूनि सर्वा[2] सर्वाणि निरवशेषाणि ᵛसहस्रा सहस्राण्यपरिमितानि ᵛनि ᵛबर्हीत् न्यबर्हीत् । इन्द्रोऽवधीत् । तत्र दृष्टान्तः । ᵛदुरोणे दुरवने रक्षितुमशक्ये ᵛदुर्गे दुरवगाहे देशे ᵛक्रत्वा ᵛन कर्मणा स्वकीयं कार्यमुद्दिश्य गच्छतः पथिकान् यथा धनलोलुपश्चोरो हन्ति तद्वत्[3] ॥

विश्वस्मात्सीमधमाँ इन्द्र दस्यून्विशो दासीरकृणोरप्रशस्ताः ।
अबाधेथाममृणतं नि शत्रूनविन्देथामपचितिं वधत्रैः ॥ ४ ॥

विश्वस्मात् । सीम् । अधमान् । इन्द्र । दस्यून् । विशः । दासीः । अकृणोः । अप्रऽशस्ताः ।
अबाधेथाम् । अमृणतम् । नि । शत्रून् । अविन्देथाम् । अपऽचितिम् । वधत्रैः ॥ ४ ॥

हे ᵛइन्द्र त्वं ᵛसीम् एनान् ᵛदस्यून् ᵛविश्वस्मात् सर्वस्मात्[4] गुणात् ᵛअधमान् हीनान्[5] ᵛअकृणोः अकरोः । किंच ᵛदासीः कर्महीनाः ᵛविशः मानुषीः प्रजाः ᵛअप्रशस्ताः गर्हिता अकृणोः । हे इन्द्रासोमौ युवां ᵛशत्रून् ᵛअबाधेथाम् । ᵛनि ᵛअमृणतं नितरां हिंसितवन्तौ । अपि च ᵛवधत्रैः तेषां शत्रूणां प्रहारैः ᵛअपचितिं पूजां जनेभ्यः ᵛअविन्देथाम् अलभेथाम् ॥

एवा सत्यं मघवाना युवं तदिन्द्रश्च सोमोर्वमश्व्यं गोः ।
आदर्दृतमपिहितान्यश्ना रिरिचथुः क्षाश्चित्ततृदाना ॥ ५ ॥

एव । सत्यम् । मघऽवाना । युवम् । तत् । इन्द्रः । च । सोम । ऊर्वम् । अश्व्यम् । गोः ।
आ । अदर्दृतम् । अपिऽहितानि । अश्ना । रिरिचथुः । क्षाः । चित् । ततृदाना ॥ ५ ॥

हे ᵛसोम त्वं च ᵛइन्द्रश्च इति युवामुभौ ᵛऊर्वं महान्तम् ᵛअश्व्यम् अश्वसमूहं ᵛगोः गवां समूहं च ᵛआदर्दृतम् आदरयतम् । ᵛअपिहितानि पणिभिराच्छादितानि गवां[6] वृन्दानि[6] ᵛक्षाश्चित् पणीनां

१. ख-ग-च-ण-न-फ-भ-स—लब्धबलविशेषौ । २. ख-ग-च-ण-फ-भ—शर्वा । ३. ख-ग-च-ण-भ-स—'तद्वत्' नास्ति । ४. ख-ग-घ-च-ण-भ-ल—'सर्वस्मात्' नास्ति । ५. ख-ग-घ-च-ण-न-भ-ल—'हीनान्' नास्ति । ६. ख-ग-च-ण-भ—गोवृन्दानि ।

भूमीश्च अश्ना अशनपरेण बलेन रिरिचथुः रेचितवन्तौ । हे मघवाना[1] मघवानौ धनवन्ताविन्द्रासोमौ ततृदाना शत्रूणां हिंसकौ युवं युवाम् एव एवमुक्तप्रकारेण यत्कृतवन्तौ तत् सर्वं सत्यम् एव ॥ ॥ १७ ॥

' आ नः स्तुतः ' इति पञ्चर्चमष्टमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रम् । ' आ नः स्तुतः ' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

आ नः स्तुत उप वाजेभिरूती इन्द्र याहि हरिभिर्मन्दसानः ।
तिरश्चिदर्यः सवना पुरूण्याङ्गूषेभिर्गृणानः सत्यराधाः ॥ १ ॥

आ । नः । स्तुतः । उप । वाजेभिः । ऊती । इन्द्र । याहि । हरिऽभिः । मन्दसानः ।
तिरः । चित् । अर्यः । सवना । पुरूणि । आङ्गूषेभिः । गृणानः । सत्यऽराधाः ॥ १ ॥

हे इन्द्र स्तुतः त्वं वाजेभिः वाजैरन्नैः सह तिरश्चित् प्राप्तानि । ' तिरः सत इति प्राप्तस्य ' ( निरु. ३. २० ) इति यास्कः । पुरूणि पूर्णानि सवना सवनानि नः अस्मदीयान् यज्ञान् उप प्रति ऊती ऊत्यै नोऽस्माकं रक्षणार्थं हरिभिः अश्वैः आ याहि आगच्छ । कीदृशः । मन्दसानः मोदमानः अर्यः स्वामी आङ्गूषेभिः स्तोत्रैः गृणानः स्तूयमानः सत्यराधाः सत्यधनः ॥

आ हि ष्मा याति नर्यश्चिकित्वान्हूयमानः सोतृभिरुप यज्ञम् ।
स्वश्वो यो अभीरुर्मन्यमानः सुष्वाणेभिर्मदति सं ह वीरैः ॥ २ ॥

आ । हि । स्म । याति । नर्यः । चिकित्वान् । हूयमानः । सोतृऽभिः । उप । यज्ञम् ।
सुऽअश्वः । यः । अभीरुः । मन्यमानः । सुस्वानेभिः । मदति । सम् । ह । वीरैः ॥ २ ॥

नर्यः नृभ्यो हितः चिकित्वान् सर्वं जानन् सोतृभिः सोममभिषुण्वद्भिर्ऋत्विग्भिः हूयमानः आहूयमान इन्द्रोऽस्मदीयं यज्ञम् उप प्रति आ याति आगच्छतु । हि स्म इति पूरणौ । स्वश्वः शोभनाश्वोपेतः अभीरुः निर्भयशीलः सुस्वानेभिः सुन्वद्भिर्यजमानैः मन्यमानः स्तूयमानः यः इन्द्रः वीरैः शूरैर्मरुद्भिः सह सं मदति ह सह[2] माद्यत्येव[2]। स इन्द्र आगच्छत्विति पूर्वेण संबन्धः ॥

श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्र दिशं मन्दयध्यै ।
उद्वावृषाणो राधसे तुविष्मान्करन्न इन्द्रः सुतीर्थाभयं च ॥ ३ ॥

श्रवय । इत् । अस्य । कर्णा । वाजयध्यै । जुष्टाम् । अनु । प्र । दिशम् । मन्दयध्यै ।
उत्ऽववृषाणः । राधसे । तुविष्मान् । करत् । नः । इन्द्रः । सुऽतीर्था । अभयम् । च ॥ ३ ॥

---

१. न-ल-स-' मघवाना ' नास्ति । २. ख-फ-भ-स्म संमाद्यत्येव ।

हे स्तोतः त्वम् ᵛअस्य इन्द्रस्य संबन्धिनौ ᵛकर्णा कर्णौ ᵛवाजयध्यै इन्द्रं बलिनं कर्तुं ᵛजुष्टामनु ᵛदिशं सेवितासु सर्वासु दिक्षु ᵛप्र ᵛमन्दयध्यै प्रकर्षेणेन्द्रं मादयितुं च ᵛश्रवय स्तोत्राणि श्रावय । ᵛइत् इति पूरणः । ᵛउद्वावृषाणः सोमेनोत्सिच्यमानः ᵛतुविष्मान् बलवान् ᵛइन्द्रः ᵛनः अस्माकं ᵛराधसे धनार्थं ᵛसुतीर्था शोभनानि तीर्थानि ᵛअभयं ᵛच भयराहित्यं च ᵛकरत् करोतु ॥

**अच्छा॒ यो गन्ता॒ नाध॑मानमू॒ती इ॒त्था विप्रं॒ हव॑मानं गृ॒णन्त॑म् ।**

**उप॒ त्मनि॒ दधा॑नो धु॒र्या॒३॑शून्त्स॒हस्रा॑णि श॒तानि॒ वज्र॑बाहुः ॥ ४ ॥**

अच्छ॑ । यः । गन्ता॑ । नाध॑मानम् । ऊ॒ती । इ॒त्था । विप्र॑म् । हव॑मानम् । गृ॒णन्त॑म् ।

उप॑ । त्मनि॑ । दधा॑नः । धु॒रि । आ॒शून् । स॒हस्रा॑णि । श॒तानि॑ । वज्र॑ऽबाहुः ॥ ४ ॥

ᵛवज्रबाहुः वज्रहस्तः ᵛयः इन्द्रः ᵛत्मनि आत्मनि स्थितानात्मवश्यान् ᵛसहस्राणि सहस्रसंख्याकान् ᵛशतानि शतसंख्याकान् ᵛआशून् शीघ्रगामिनोऽश्वान् ᵛधुरि रथवहनप्रदेशे[1] ᵛउप ᵛदधानः संस्थापयन् ᵛऊती रक्षणार्थं ᵛनाधमानं याचमानं ᵛविप्रं मेधाविनं ᵛहवमानम् आह्वयन्तम् ᵛइत्था इत्थमनेन प्रकारेण ᵛगृणन्तं स्तुवन्तं यजमानम् ᵛअच्छ आभिमुख्येन ᵛगन्ता गमनशीलः । भवतीति शेषः । स इन्द्रः सुतीर्थानि अभयं च करोत्विति पूर्वेण संबन्धः ॥

**त्वोता॑सो मघवन्निन्द्र॒ विप्रा॑ व॒यं ते॑ स्याम सू॒रयो॑ गृ॒णन्तः॑ ।**

**भे॒जा॒नासो॑ बृ॒हद्दि॑वस्य रा॒य आ॑का॒य्य॑स्य दा॒वने॑ पुरु॒क्षोः ॥ ५ ॥**

त्वाऽऊ॑तासः । म॒घ॒ऽव॒न् । इन्द्र॑ । विप्राः॑ । व॒यम् । ते॒ । स्या॒म॒ । सू॒रयः॑ । गृ॒णन्तः॑ ।

भे॒जा॒नासः॑ । बृ॒ह॒त्ऽदि॑वस्य । रा॒यः । आ॒ऽका॒य्य॑स्य । दा॒वने॑ । पु॒रु॒ऽक्षोः ॥ ५ ॥

हे ᵛमघवन् धनवन् ᵛइन्द्र ᵛत्वोतासः त्वया रक्षिताः ᵛविप्राः मेधाविनः ᵛगृणन्तः त्वां स्तुवन्तः ᵛसूरयः स्तोतारः ᵛवयं ᵛबृहद्दिवस्य महद्दीप्तेः ᵛआकाय्यस्य आ समन्तात् स्तुत्यस्य ᵛपुरुक्षोः बहुन्नस्य[2] बहुकीर्तेर्वा ᵛते त्वदीयस्य ᵛरायः धनस्य ᵛदावने दाने निमित्ते[3] सति ᵛभेजानासः त्वां भजमानाः ᵛस्याम भवेम ॥　　॥ १८ ॥

' नकिरिन्द्र ' इति चतुर्विंशत्यृचं नवमं सूक्तं वामदेवस्यार्षं गायत्रम् । अष्टमी चतुर्विंशी च द्वे अनुष्टुभौ । इन्द्रो देवता । ' दिवश्चिद्घा ' इत्ययं तृच उषोदेवताक इन्द्रदेवताकश्च । तथा चानुक्रान्तं— ' नकिश्चतुर्विंशतिर्दिवश्चित्तृच उषस्यश्च गायत्रं ह्यष्टम्यन्त्ये चानुष्टुभौ ' इति । अतिरात्रे तृतीये पर्याये मैत्रावरुणशस्त्रे उत्तमावर्जमिदं सूक्तम् । तथा च सूत्रितं—' नकिरिन्द्र त्वदुत्तर इत्युत्तमामुद्धरेत् ' ( आश्व. श्रौ. ६. ४ ) इति ॥

---

१. ख-ग-च-ण—रथवाहन° ।　२. च—बहुधनस्य ।　३. ख-ग-च-ण-फ—निमित्तभूते ।

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् । नकिरेवा यथा त्वम् ॥ १ ॥

नकिः । इन्द्र । त्वत् । उत्ऽतरः । न । ज्यायान् । अस्ति । वृत्रऽहन् ।

नकिः । एव । यथा । त्वम् ॥ १ ॥

हे ᵛवृत्रहन् ᵛइन्द्र वृत्रस्य नाशकेन्द्र । लोके एकोऽपीति शेषः । ᵛत्वत् त्वत्तः ᵛउत्तरः उत्कृष्टतरः ᵛनकिः ᵛअस्ति न भवति । त्वत्तः ᵛज्यायान् प्रशस्यतरः एकोऽपि ᵛन अस्ति । हे इन्द्र ᵛत्वं लोके ᵛयथा प्रसिद्धो भवसि तथाविध एकोऽपि ᵛनकिरेव अस्ति नैव भवति । कश्चिदपि लोके इन्द्रसदृशो नास्तीत्यर्थः ॥

सत्रा ते अनु कृष्टयो विश्वा चक्रेव वावृतुः । सत्रा महाँ असि श्रुतः ॥ २ ॥

सत्रा । ते । अनु । कृष्टयः । विश्वा । चक्राऽइव । ववृतुः । सत्रा । महान् । असि । श्रुतः ॥ २ ॥

हे इन्द्र ᵛकृष्टयः प्रजाः ᵛते त्वाम् ᵛअनु लक्षीकृत्य ᵛसत्रा सत्यमेव ᵛववृतुः वर्तन्ते । तत्र दृष्टान्तः । ᵛविश्वा विश्वानि व्याप्तानि ᵛचक्रेव चक्राणीव । यथा चक्राणि शकटमनुवर्तन्ते तद्वत् । हे इन्द्र ᵛमहान् त्वं ᵛसत्रा सत्यमेव ᵛश्रुतः विश्रुतः ᵛअसि । गुणैः प्रख्यातो भवसि ॥

विश्वे चनेदना त्वा देवास इन्द्र युयुधुः । यदहा नक्तमातिरः ॥ ३ ॥

विश्वे । चन । इत् । अना । त्वा । देवासः । इन्द्र । युयुधुः । यत् । अहा । नक्तम् । आ । अतिरः ॥ ३ ॥

हे ᵛइन्द्र ᵛविश्वे ᵛचनेत् सर्वे एव ᵛदेवासः असुरान् विजिगीषवो देवाः ᵛअना प्राणरूपेण बलेन ᵛत्वा त्वां सहायं लब्ध्वा ᵛयुयुधुः असुरैः सह युद्धं चक्रुः । ᵛयत् यस्मात् कारणात् ᵛअहा अहःसु ᵛनक्तं रात्रिषु च[1] ᵛआतिरः आ समन्तात् शत्रूनवधीः । अतः कारणात् युयुधुरिति पूर्वेण संबन्धः ॥

यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते । मुषाय इन्द्र सूर्यम् ॥ ४ ॥

यत्र । उत । बाधितेभ्यः । चक्रम् । कुत्साय । युध्यते । मुषायः । इन्द्र । सूर्यम् ॥ ४ ॥

ᵛयत्र यस्मिन् युद्धे ᵛउत अपि च हे ᵛइन्द्र त्वं ᵛबाधितेभ्यः कुत्ससहायेभ्यः ᵛयुध्यते युद्धं कुर्वते ᵛकुत्साय च ᵛसूर्यं सूर्यसंबन्धि ᵛचक्रं ᵛमुषायः अमुष्णाः । अपहृतवानसीत्यर्थः । तस्मिन् युद्धे 'प्रावः शचीभिरेतशम्' इति परेण संबन्धः ॥

यत्र देवाँ ऋघायतो विश्वाँ अयुध्य एक इत् । त्वमिन्द्र वनूँरहन् ॥ ५ ॥

यत्र । देवान् । ऋघायतः । विश्वान् । अयुध्यः । एकः । इत् । त्वम् । इन्द्र । वनून् । अहन् ॥ ५ ॥

---

१. ख-ग-च-ण-त-न-फ-भ-स–'च' नास्ति ।

हे ᵛइन्द्र ᵛत्वम् ᵛएक ᵛइत् असहाय एव ᵛयत्र यस्मिन् संग्रामे ᵛदेवान् इन्द्रादीन् ᵛऋघायतः बाधमानान् ᵛविश्वान्[1] सर्वान् राक्षसादीन् ᵛअयुध्यः युद्धमकरोः। तथा ᵛवनून् हिंसकान् ᵛअहन् अवधीः ॥ ॥ १९ ॥

यत्रोत मर्त्याय कमरिणा इन्द्र सूर्यम्। प्रावः शचीभिरेतशम् ॥ ६ ॥

यत्र। उत। मर्त्याय। कम्। अरिणाः। इन्द्र। सूर्यम्। प्र। आवः। शचीभिः। एतशम् ॥ ६ ॥

ᵛयत्र यस्मिन् संग्रामे ᵛउत अपि च हे ᵛइन्द्र त्वं ᵛमर्त्याय मनुष्याय एतशाख्याय ऋषये ᵛसूर्यम् ᵛअरिणाः अहिंसीः। ᵛकम् इति पूरणः। तदानीं ᵛशचीभिः युद्धकर्मभिः ᵛएतशम् एतत्संज्ञकमृषिं ᵛप्रावः प्रकर्षेणारक्षः ॥

किमादुतासि वृत्रहन्मघवन्मन्युमत्तमः। अत्राह दानुमातिरः ॥ ७ ॥

किम्। आत्। उत। असि। वृत्रऽहन्। मघऽवन्। मन्युमत्ऽतमः।
अत्र। अह। दानुम्। आ। अतिरः ॥ ७ ॥

हे ᵛवृत्रहन् वृत्राणामावरकाणां तमसां हन्तः ᵛमघवन् धनवन् इन्द्र त्वम् ᵛआत् अनन्तरमेव ᵛउत अपि च। ᵛकिम् इति प्रश्ने। ᵛमन्युमत्तमः ᵛअसि अत्यन्तं क्रोधवान् भवसि। ᵛअत्र अस्मिन्नन्तरिक्षे ᵛअह एव ᵛदानुं दनोः पुत्रं वृत्रम् ᵛआतिरः आ समन्तादहिंसीः ॥

एतद्घेदुत वीर्यमिन्द्र चकर्थ पौंस्यम्। स्त्रियं यद्दुर्हणायुवं वधीर्दुहितरं दिवः ॥ ८ ॥

एतत्। घ। इत्। उत। वीर्यम्। इन्द्र। चकर्थ। पौंस्यम्।
स्त्रियम्। यत्। दुःऽहनायुवम्। वधीः। दुहितरम्। दिवः ॥ ८ ॥

हे ᵛइन्द्र ᵛउत अपि च ᵛयत् यस्त्वम् ᵛएतत् उपलक्षितं ᵛपौंस्यं बलं ᵛवीर्यं सामर्थ्योपेतं ᵛचकर्थ कृतवानसि। ᵛघ ᵛइत् इति पूरणौ। किंच ᵛदुर्हणायुवं दुष्टं[2] हननम्[2] इच्छन्तीं ᵛदिवः ᵛदुहितरं द्युलोकसकाशादुत्पन्नां ᵛस्त्रियम् उषसं ᵛवधीः अवधीः ॥

दिवश्चिद्घा दुहितरं महान्महीयमानाम्। उषासमिन्द्र सं पिणक् ॥ ९ ॥

दिवः। चित्। घ। दुहितरम्। महान्। महीयमानाम्। उषसम्। इन्द्र। सम्। पिणक् ॥ ९ ॥

हे ᵛइन्द्र ᵛमहान् त्वं ᵛदिवः ᵛदुहितरं द्युलोकस्य पुत्रीं ᵛमहीयमानां पूज्यमानाम् ᵛउषसम् उषोदेवीं ᵛसं ᵛपिणक् ᵛचिद्ध संपिष्टवानसि खलु ॥

---

१. ख-ग-च-ण-न-भ-स–'विश्वान्' नास्ति। २. च-फ–दुष्टहननम्।

अपोषा अनः सरत्संपिष्टादह बिभ्युषी । नि यत्सीं शिश्नथद्वृषा ॥ १० ॥

अप । उषाः । अनसः । सरत् । सम्ऽपिष्टात् । अह । बिभ्युषी ।

नि । यत् । सीम् । शिश्नथत् । वृषा ॥ १० ॥

ᵛवृषा कामानां वर्षिता इन्द्रः[1] ᵛयत् यदा ᵛसीम् एतत् उषसः[2] संबन्धि[2] शकटं ᵛनि ᵛशिश्नथत् न्यवधीत् तदा ᵛउषाः उषोदेवता ᵛबिभ्युषी इन्द्रसकाशात् भीता सती ᵛसंपिष्टात् इन्द्रेण संचूर्णितात् ᵛअनसः शकटात् ᵛअप ᵛसरत् अपासरत् अपजगाम । ᵛअह इति पूरणः ॥ ॥ २० ॥

एतदस्या अनः शये सुसंपिष्टं विपाश्या । ससार सीं परावतः ॥ ११ ॥

एतत् । अस्याः । अनः । शये । सुऽसंपिष्टम् । विऽपाशि । आ । ससार । सीम् । पराऽवतः ॥ ११ ॥

ᵛसुसंपिष्टम् इन्द्रेण सुष्ठु संचूर्णितम् ᵛअस्याः उषसः संबन्धि ᵛएतत् ᵛअनः शकटं ᵛविपाशि । विपाडाख्या नदी । तस्यां तत्तीरे ᵛआ ᵛशये आ समन्तात् शेते अशेत । ᵛसीम् इयमुषोदेवता शकटे भग्ने सति ᵛपरावतः दूरदेशात् ᵛससार अपससार ॥

उत सिन्धुं विबाल्यं वितस्थानामधि क्षमि । परि ष्ठा इन्द्र मायया ॥ १२ ॥

उत । सिन्धुम् । विऽबाल्यम् । विऽतस्थानाम् । अधि । क्षमि ।

परि । स्थाः । इन्द्र । मायया ॥ १२ ॥

हे ᵛइन्द्र ᵛउत अपि च ᵛविबाल्यं विगतबाल्यावस्थां संपूर्णजलां ᵛवितस्थानां वितिष्ठमानां ᵛसिन्धुं नदीम् ᵛअधि ᵛक्षमि क्षमायां ᵛमायया प्रज्ञया ᵛपरि ᵛष्ठाः पर्यस्थाः । सर्वतः स्थापनं कृतवानसि ॥

उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनम् । पुरो यदस्य संपिणक् ॥ १३ ॥

उत । शुष्णस्य । धृष्णुऽया । प्र । मृक्षः । अभि । वेदनम् ।

पुरः । यत् । अस्य । सम्ऽपिणक् ॥ १३ ॥

ᵛउत अपि च हे इन्द्र ᵛधृष्णुया धृष्णुः धर्षकस्त्वं ᵛशुष्णस्य शुष्णनाम्नोऽसुरस्य संबन्धि ᵛवेदनं वित्तम् ᵛअभि अभितः सर्वतः ᵛप्र ᵛमृक्षः प्रकर्षेणाबाधथाः । ᵛयत् यदा ᵛअस्य शुष्णस्य ᵛपुरः पुराणि नगराणि ᵛसंपिणक् संपिष्टवानसि । तदा प्र मृक्षः इति संबन्धः ॥

---

१. ख-ग-च-ण-' इन्द्रः ' नास्ति । २. ल-उषःसंबन्धि ।

उत दासं कौलितरं बृहतः पर्वतादधि । अवाहन्निन्द्र शम्बरम् ॥ १४ ॥

उत । दासम् । कौलिऽतरम् । बृहतः । पर्वतात् । अधि । अव । अहन् । इन्द्र । शम्बरम् ॥ १४ ॥

उत अपि च हे इन्द्र त्वं दासम् उपक्षपयितारं कौलितरं कुलितरनाम्नोऽपत्यं शम्बरम् असुरं बृहतः महतः पर्वतात् अद्रेः अधि उपरि अव अवाचीनं कृत्वा अहन् हतवानसि ॥

उत दासस्य वर्चिनः सहस्राणि शतावधीः । अधि पञ्च प्रधीरिव ॥ १५ ॥

उत । दासस्य । वर्चिनः । सहस्राणि । शता । अवधीः । अधि । पञ्च । प्रधीन्ऽइव ॥ १५ ॥

उत अपि च हे इन्द्र त्वं प्रधीनिव चक्रस्य परितः स्थितान् शङ्कूनिव हिंसकान् पञ्च शता पञ्चशतानि पञ्चशतसंख्याकान् सहस्राणि सहस्रसंख्याकान् दासस्य लोकानामुपक्षपयितुः वर्चिनः वर्चिनामकस्यासुरस्य संबन्धिनोऽनुचरान् पुरुषान् अधि अधिकम् अवधीः हतवानसि ॥ ॥ २१ ॥

उत त्यं पुत्रमग्रुवः परावृक्तं शतक्रतुः । उक्थेष्विन्द्र आभजत् ॥ १६ ॥

उत । त्यम् । पुत्रम् । अग्रुवः । पराऽवृक्तम् । शतऽक्रतुः ।
उक्थेषु । इन्द्रः । आ । अभजत् ॥ १६ ॥

उत अपि च शतक्रतुः शतकर्मा इन्द्रः त्यं तं प्रसिद्धम् अग्रुवः एतन्नाम्न्याः पुत्रं परावृक्तम् एतन्नामकम् उक्थेषु स्तोत्रेषु आभजत् भागिनं कृतवान् । अयमर्थः ' वम्रीभिः पुत्रमग्रुवः ' ( ऋ. सं. ४. १९. ९ ) इत्यस्यामृचि प्रतिपादित इति ॥

उत त्या तुर्वशायदू अस्नातारा शचीपतिः । इन्द्रो विद्वाँ अपारयत् ॥ १७ ॥

उत । त्या । तुर्वशायदू इति । अस्नातारा । शचीऽपतिः । इन्द्रः । विद्वान् । अपारयत् ॥ १७ ॥

उत अपि च अस्नातारा अस्नातारौ ययातिशापादनभिषिक्तौ त्या त्यौ तौ प्रसिद्धौ तुर्वशायदू तुर्वशनामानं यदुनामकं च राजानौ शचीपतिः कर्मणां पालकः[1] । यद्वा शचीन्द्रस्य भार्या । तस्याः पतिर्भर्ता विद्वान् सकलमपि जानन् इन्द्रः अपारयत् अभिषेकार्हावकरोत् ॥

उत त्या सद्य आर्या सरयोरिन्द्र पारतः । अर्णाचित्ररथावधीः ॥ १८ ॥

उत । त्या । सद्यः । आर्या । सरयोः । इन्द्र । पारतः । अर्णाचित्ररथा । अवधीः ॥ १८ ॥

उत अपि च सद्यः सपदि हे इन्द्र त्वं त्या त्यौ तौ आर्या आर्यौ आर्यत्वाभिमानिनौ सन्तावपि । इन्द्रविषयभक्तिश्रद्धारहितावित्यर्थः । सरयोः सरय्वा नद्याः पारतः पारे तीरे वसन्तौ अर्णाचित्ररथा अर्णनामकं चित्ररथनामकं च राजानौ अवधीः अहिंसीः ॥

---

१. ख-ग-च-ण- पालक इन्द्रः ।

अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् । न तत्ते सुम्नमष्टवे ॥ १९ ॥

अनु । द्वा । जहिता । नयः । अन्धम् । श्रोणम् । च । वृत्रऽहन् ।

न । तत् । ते । सुम्नम् । अष्टवे ॥ १९ ॥

हे वृत्रहन् वृत्रस्य हिंसकेन्द्र त्वं जहिता जहितौ सर्वैर्बन्धुभिस्त्यक्तौ अन्धं चक्षुर्हीनमेकं श्रोणं च पङ्गुमपरं[1] च द्वा[2] एतौ द्वौ[2] अनु नयः अन्धपङ्गुत्वपरिहारेण अनुनीतवानसि । हे इन्द्र ते त्वया दत्तं तत् सुम्नं सुखम् अष्टवे व्याप्तुं कोऽपि न । प्रभवतीति शेषः ॥

शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत् । दिवोदासाय दाशुषे ॥ २० ॥

शतम् । अश्मन्ऽमयीनाम् । पुराम् । इन्द्रः । वि । आस्यत् । दिवःऽदासाय । दाशुषे ॥ २० ॥

इन्द्रः अश्मन्मयीनां पाषाणैर्निर्मितानां पुरां शम्बरस्य संबन्धिनां नगराणां शतं शतसंख्याकं दिवोदासाय एतन्नामकाय दाशुषे हविर्दत्तवते यजमानाय व्यास्यत् व्यक्षिपत्[3] ॥ ॥ २२ ॥

अस्वापयद्दभीतये सहस्रा त्रिंशतं हथैः । दासानामिन्द्रो मायया ॥ २१ ॥

अस्वापयत् । दभीतये । सहस्रा । त्रिंशतम् । हथैः । दासानाम् । इन्द्रः । मायया ॥ २१ ॥

इन्द्रो मायया स्वकीयया शक्त्या दासानां लोकानामुपक्षपयितॄणां राक्षसादीनां त्रिंशतं त्रिंशत्संख्याकानि सहस्रा सहस्राणि दभीतये दभीतिनामकस्यार्थाय हथैः हननसाधनैरायुधैः अस्वापयत् अवधीत् ॥

स घेदुतासि वृत्रहन्त्समान इन्द्र गोपतिः । यस्ता विश्वानि चिच्युषे ॥ २२ ॥

सः । घ । इत् । उत । असि । वृत्रऽहन् । समानः । इन्द्र । गोऽपतिः ।

यः । ता । विश्वानि । चिच्युषे ॥ २२ ॥

उत अपि च हे इन्द्र यः त्वं ता तानि विश्वानि[4] समस्तान् शत्रून् चिच्युषे प्राच्यावयः । हे वृत्रहन् वृत्राणां शत्रूणां हिंसकेन्द्र गोपतिः गवां पालकः सः त्वं समानः सर्वेषां यजमानानां समः सन् प्रख्यातः असि । घेत् इति पूरणौ ॥

उत नूनं यदिन्द्रियं करिष्या इन्द्र पौंस्यम् । अद्या नकिष्टदा मिनत् ॥ २३ ॥

उत । नूनम् । यत् । इन्द्रियम् । करिष्याः । इन्द्र । पौंस्यम् ।

अद्य । नकिः । तत् । आ । मिनत् ॥ २३ ॥

---

१. ख-ग-च-त-प-फ-भ-पङ्गुमेकपदम् । २. ख-ग-च-फ- एतौ द्वा द्वौ; ण-एतौ द्वौ । ३. ख-ग-घ-च-ण-न-भ-ल-स-व्याक्षिपत् । ४. ख-ग-च-ण-ल-' विश्वानि ' नास्ति ।

ᵛउत अपि च हे ᵛइन्द्र ᵛयत् ᵛपौंस्यं त्वदीयं बलम् ᵛइन्द्रियं सामर्थ्योपेतं ᵛनूनं ᵛकरिष्याः कृतवानसि खलु । ᵛअद्य[1] अद्यतनः कश्चित् ᵛतत् बलं ᵛनकिः ᵛआ ᵛमिनत् न हिंस्यात् ॥

**वामंवामं त आदुरे देवो ददात्वर्यमा । वामं पूषा वामं भगो वामं देवः करूळती ॥ २४ ॥**

वामम्ऽवामम् । ते । आऽदुरे । देवः । ददातु । अर्यमा ।

वामम् । पूषा । वामम् । भगः । वामम् । देवः । करूळती ॥ २४ ॥

हे ᵛआदुरे शत्रूणाम् आदारयितरिन्द्र[2] ᵛते तव ᵛवामंवामं यद्यत् वननीयं संभजनीयं धनमस्ति लोके तद्वामं वसु ᵛअर्यमा अरीणां[3] नियमयिता एतन्नामकः ᵛदेवो ᵛददातु प्रयच्छतु। तथा ᵛकरूळती कृत्तदन्तः ᵛपूषा पोषकः ᵛदेवः ᵛवामं धनं ददातु । तथा[4] ᵛभगः अपि ᵛवामं[5] धनं ददातु । ननु[5] करूळतीत्येतत् संनिहितत्वाद्भग इत्यनेन संबन्धनीयम् । अथवा अर्यमादीनां त्रयाणामपि विशेषणत्वेन भाव्यम् । कथं पूष्णो विशेषणं स्यादिति साकाङ्क्षत्वात् । न । सांनिध्याकाङ्क्षयोः सद्भावेऽपि योग्यतामन्तरेण अन्वयायोगात् । 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' (तै. सं. २. ६. ८. ५) इत्यादिश्रुतिषु पूष्ण एवादन्तकत्वेन प्रसिद्धेः व्यवहितस्यापि तस्यैव विशेषणत्वं युक्तम् । 'वामं वननीयं भवति' (निरु. ६. ३१) इत्यादि निरुक्तमत्र द्रष्टव्यम् ॥　॥ २३ ॥

'कया नः' इति पञ्चदशर्चं दशमं सूक्तं वामदेवस्यार्षमैन्द्रं गायत्रम् । 'अभी षु णः' इत्येषा पादनिचृन्नाम गायत्री 'त्रयः सप्तकाः पादनिचृत्' (अनु. ४. ४) इति तल्लक्षणयुक्तत्वात् । तथा चानुक्रमणिका— 'कया पञ्चोनाभी षु पादनिचृत्' इति । सूक्तविनियोगो लैङ्गिकः । अग्निष्टोमे चातुर्विंशिकेऽहनि च माध्यंदिने सवने मैत्रावरुणस्य 'कया नः' इत्याद्यस्तृचः स्तोत्रियः । सूत्रितं च— 'होत्रकाणां कया नश्चित्र आ भुवत्' (आश्व. श्रौ. ७. ४) इति । वरुणप्रघासेषु कायस्य हविषः अनुवाक्या 'कया नः' इत्येषा । तथा च सूत्रितं—'कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्रे' (आश्व. श्रौ. २. १७) इति ॥

**कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ १ ॥**

कया । नः । चित्रः । आ । भुवत् । ऊती । सदाऽवृधः । सखा । कया । शचिष्ठया । वृता ॥ १ ॥

ᵛसदावृधः सदा वर्धमानः ᵛचित्रः चायनीयः पूजनीयः ᵛसखा मित्रभूत इन्द्रः ᵛकया ᵛऊती ऊत्या तर्पणेन ᵛनः अस्मान् ᵛआ ᵛभुवत् आभिमुख्येन भवेत् । ᵛशचिष्ठया प्रज्ञावत्तमया प्रज्ञासहितमनुष्ठीयमानेन ᵛकया ᵛवृता केन वर्तनेन कर्मणा चाभिमुखो भवेत् ॥

---

१. ख-ग-ण-न-भ-स-'अद्य' नास्ति । २. ख-प-फ-भ-दारयितरिन्द्र । ३. ख-ग-च-ण-अरीणां शत्रूणाम् । ४. ग-च-भगोऽपि । ५. ख-ग-च-ण-न-फ- अत्र ।

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृळ्हा चिदारुजे वसु ॥ २ ॥

कः । त्वा । सत्यः । मदानाम् । मंहिष्ठः । मत्सत् । अन्धसः । दृळ्हा । चित् । आऽरुजे । वसु ॥२॥

मंहिष्ठः पूजनीयः सत्यः सत्यभूतः मदानां मादयितॄणां मध्ये कः मदकरः अन्धसः सोमस्य रसः दृळ्हा चित् दृढान्यपि वसु वसूनि शत्रूणां धनानि आरुजे आ समन्तात् भङ्क्तुं[1] हे इन्द्र त्वा त्वां मत्सत् मादयेत् ॥

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ३ ॥

अभि । सु । नः । सखीनाम् । अविता । जरितॄणाम् । शतम् । भवासि । ऊतिऽभिः ॥ ३ ॥

हे इन्द्र त्वं सखीनां समानख्यातीनां[2] जरितॄणां स्तोतॄणाम् अविता रक्षिता त्वं शतं शतेन बह्वीभिः ऊतिभिः रक्षाभिः सह नः अस्माकं सु सुष्ठु अभि भवासि अभिमुखो भव ॥

अभी न आ ववृत्स्व चक्रं न वृत्तमर्वतः । नियुद्भिश्चर्षणीनाम् ॥ ४ ॥

अभि । नः । आ । ववृत्स्व । चक्रम् । न । वृत्तम् । अर्वतः । नियुत्ऽभिः । चर्षणीनाम् ॥ ४ ॥

हे इन्द्र त्वं वृत्तं चक्रं न वर्तमानं चक्रमिव अर्वतः उपगन्तॄन् नः अस्मान् चर्षणीनाम् अस्मदीयानां मनुष्याणां नियुद्भिः स्तुतिभिः अभि आ ववृत्स्व अभ्यावर्तस्व ॥

प्रवता हि क्रतूनामा हा पदेव गच्छसि । अभक्षि सूर्ये सचा ॥ ५ ॥

प्रऽवता । हि । क्रतूनाम् । आ । ह । पदाऽइव । गच्छसि । अभक्षि । सूर्ये । सचा ॥ ५ ॥

हे इन्द्र त्वं क्रतूनां कर्मणां यजमानानां संबन्धिनः[3] प्रवता प्रवतः[4] प्रवणान् देशान् पदेव पदानि स्वकीयानि स्थानानीव आ गच्छसि हि आगतो भवसि खलु । ह इति पूरणः । हे इन्द्र त्वामहं सूर्ये सूर्येण सचा सह अभक्षि भजे ॥ ॥ २४ ॥

सं यत्त इन्द्र मन्यवः सं चक्राणि दधन्विरे । अध त्वे अध सूर्ये ॥ ६ ॥

सम् । यत् । ते । इन्द्र । मन्यवः । सम् । चक्राणि । दधन्विरे । अध । त्वे इति । अध । सूर्ये ॥६॥

हे इन्द्र ते त्वदर्थं मन्यवः स्तुतयः यत् यदा सं दधन्विरे अस्माभिरनुमन्यन्ते । चक्राणि चङ्क्रमणानि कर्माणि च सं दधन्विरे । अध तदानीं ताः स्तुतयः तानि कर्माणि च त्वे त्वयि भवन्ति । अध तदनन्तरं सूर्ये च भवन्ति ॥

---

१. ख-ग-च-ण-त-न-फ-भ-स–भोक्तुम् । २. फ-ल–समानख्यानानाम् । ३. ग-च-फ–अस्मदीयानां संबन्धिनाम् । ४. ख-ग-घ-च-ण-त-न-भ-ल-स–‘ प्रवतः ’ नास्ति ।

उत स्मा हि त्वामाहुरिन्मघवानं शचीपते । दातारमविदीधयुम् ॥ ७ ॥

उत । स्म । हि । त्वाम् । आहुः । इत् । मघऽवानम् । शचीऽपते ।

दातारम् । अविऽदीधयुम् ॥ ७ ॥

हे शचीपते कर्मपालकेन्द्र[1] उत अपि च मघवानं धनवन्तं दातारं स्तोतृभ्योऽभीष्टप्रदं त्वा त्वाम् अविदीधयुम् । विदीधयुः अदीप्यमानः । न विदीधयुः अविदीधयुः । तं दीप्यमानम् आहुः स्म प्रवदन्ति खलु । हि इत् इति द्वयं पूरणार्थम् ॥

उत स्मा सद्य इत्परि शशमानाय सुन्वते । पुरू चिन्मंहसे वसु ॥ ८ ॥

उत । स्म । सद्यः । इत् । परि । शशमानाय । सुन्वते । पुरु । चित् । मंहसे । वसु ॥ ८ ॥

उत अपि च हे इन्द्र त्वं सद्य इत् सद्य एव शशमानाय स्तुतिं कुर्वते । 'शशमानः शंसमानः' ( निरु. ६. ८ ) इति यास्केनोक्तत्वात् । सुन्वते सोमाभिषवं कुर्वते यजमानाय पुरु चित् पुरूणि बहून्यपि वसु वसूनि धनानि परि परितः मंहसे स्म प्रयच्छसि खलु ॥

नहि ष्मा ते शतं चन राधो वरन्त आमुरः । न च्यौत्नानि करिष्यतः ॥ ९ ॥

नहि । स्म । ते । शतम् । चन । राधः । वरन्ते । आऽमुरः । न । च्यौत्नानि । करिष्यतः ॥ ९ ॥

हे इन्द्र आमुरः बाधका राक्षसादयः ते त्वदीयं शतं चन शतपरिमितमपि राधः धनं नहि वरन्ते स्म न वारयन्ति खलु । किंच शत्रूणां हिंसनं करिष्यतः तव च्यौत्नानि बलानि न वारयन्ति[2] ॥

अस्माँ अवन्तु ते शतमस्मान्त्सहस्रमूतयः । अस्मान्विश्वा अभिष्टयः ॥ १० ॥

अस्मान् । अवन्तु । ते । शतम् । अस्मान् । सहस्रम् । ऊतयः ।

अस्मान् । विश्वाः । अभिष्टयः ॥ १० ॥

हे इन्द्र ते त्वदीयाः शतं शतसंख्याकाः ऊतयः रक्षाः अस्मान् अवन्तु रक्षन्तु । सहस्रं सहस्रसंख्याकास्त्वदीया रक्षाः अस्मान् अवन्तु । विश्वाः सर्वाणि अभिष्टयः त्वदीयान्यभिगमनानि अस्मान् अवन्तु ॥     ॥ २५ ॥

अस्माँ इहा वृणीष्व सख्याय स्वस्तये । महो राये दिवित्मते ॥ ११ ॥

अस्मान् । इह । वृणीष्व । सख्याय । स्वस्तये । महः । राये । दिवित्मते ॥ ११ ॥

---

१. ख-ग-घ-च-ण-भ–कर्मणां पालकेन्द्र । २. ख-ग-च-ण-फ–धारयन्ति ।

हे इन्द्र त्वम् इह अस्मिन् यज्ञे अस्मान् यजमानान् सख्याय सखिभावाय स्वस्तये अविनाशाय च महः महते दिविस्मते दीप्तिमते राये धनाय च वृणीष्व संभजस्व ॥

अस्माँ अविड्ढि विश्वहेन्द्र राया परीणसा । अस्मान्विश्वाभिरूतिभिः ॥ १२ ॥

अस्मान् । अविड्ढि । विश्वहा । इन्द्र । राया । परीणसा । अस्मान् । विश्वाभिः । ऊतिऽभिः ॥१२॥

हे इन्द्र त्वं विश्वहा सर्वेष्वहःसु परीणसा महता राया धनेन अस्मान् यजमानान् अविड्ढि रक्ष । किंच विश्वाभिः सर्वाभिः ऊतिभिः रक्षाभिः अस्मान् अविड्ढि[1] ॥

अस्मभ्यं ताँ अपा वृधि व्रजाँ अस्तेव गोमतः । नवाभिरिन्द्रोतिभिः ॥ १३ ॥

अस्मभ्यम् । तान् । अप । वृधि । व्रजान् । अस्ताऽइव । गोऽमतः ।
नवाभिः । इन्द्र । ऊतिऽभिः ॥ १३ ॥

हे इन्द्र त्वं नवाभिः नूतनाभिः ऊतिभिः रक्षाभिः अस्तेव क्षेप्ता शूर इव गोमतः गोभिः युक्तान् तान् प्रसिद्धान् व्रजान् गोनिवासान् अस्मभ्यम् अपा वृधि उद्घाटय[2] ॥

अस्माकं धृष्णुया रथो द्युमाँ इन्द्रानपच्युतः । गव्युरश्वयुरीयते ॥ १४ ॥

अस्माकम् । धृष्णुऽया । रथः । द्युऽमान् । इन्द्र । अनपऽच्युतः । गव्युः । अश्वऽयुः । ईयते ॥१४॥

हे इन्द्र धृष्णुया धृष्णुः शत्रूणां धर्षकः द्युमान् दीप्तिमान् अनपच्युतः विनाशरहितः गव्युः गोमान् अश्वयुः अश्ववान् अस्माकम् अस्मत्संबन्धी रथः ईयते सर्वत्र गच्छतु । तेन रथेनास्मान् रक्षेत्यर्थः ॥

' अस्माकमुत्तमं कृधि ' इत्यनया आदित्यं दृष्ट्वा रथादवरोहेत् । तथा च सूत्रितम्—' अस्माकमुत्तमं कृधीत्यादित्यमीक्षमाणो जपित्वावरोहेत् ' ( आश्व. गृ. २. ६. १२ ) इति ॥

अस्माकमुत्तमं कृधि श्रवो देवेषु सूर्य । वर्षिष्ठं द्यामिवोपरि ॥ १५ ॥

अस्माकम् । उत्ऽतमम् । कृधि । श्रवः । देवेषु । सूर्य । वर्षिष्ठम् । द्याम्ऽइव । उपरि ॥ १५ ॥

हे सूर्य सर्वस्य प्रेरकेन्द्र हे आदित्य वा त्वं देवेषु द्योतमानेषु वह्न्यादिषु मध्ये अस्माकम् अस्मत्संबन्धि श्रवः यशः उत्तमम् उत्कृष्टं कृधि कुरु । तत्र दृष्टान्तः । वर्षिष्ठम् अतिशयेन प्रवृद्धं सेचनसमर्थं वा द्यामिव द्युलोकं यथा सर्वेषां लोकानाम् उपरि स्थितमुत्कृष्टमकरोस्तद्वत् ॥ ॥ २६ ॥

---

१. ल–अविड्ढि इति पूर्वेण संबन्धः । २. ख-ग-च-ण-त-न-प-फ-भ-स–उत्पादय; ल–उत्पाटय ।

‘ आ तू न इन्द्र ’ इति चतुर्विंशत्यृचमेकादशं सूक्तं वामदेवस्यार्षं गायत्रमैन्द्रम्। अन्त्ये ‘ कनीनकेव ’ इत्यादिके द्वे इन्द्रस्याश्वदेवताके। तथा चानुक्रान्तम्—‘ आ तू नश्चतुर्विंशतिरन्त्याभ्यामिन्द्राश्वौ स्तुतौ ’ इति । गतो विनियोगः ॥

आ तू नं इन्द्र वृत्रहन्नस्माकंमर्धमा गंहि । महान्महीभिरूतिभिः ॥ १ ॥

आ । तु । नः । इन्द्र । वृत्रऽहन् । अस्माकम् । अर्धम् । आ । गहि ।

महान् । महीभिः । ऊतिऽभिः ॥ १ ॥

हे वृत्रहन् वृत्राणां शत्रूणां हिंसक इन्द्र त्वं नः अस्मान् प्रति तु क्षिप्रम् आ गच्छ। हे इन्द्र महान् प्रभूतस्त्वं महीभिः महतीभिः ऊतिभिः रक्षाभिः सह अस्माकमर्धं समीपम्[1] आ गहि आगच्छ ॥

भृमिश्चिद्घासि तूतुजिरा चित्र चित्रिणीष्वा । चित्रं कृणोष्यूतये ॥ २ ॥

भृमिः । चित् । घ । असि । तूतुजिः । आ । चित्र । चित्रिणीषु । आ ।

चित्रम् । कृणोषि । ऊतये ॥ २ ॥

हे चित्र चायनीय पूजनीयेन्द्र त्वं भृमिश्चित् भ्रमणशीलोऽपि तूतुजिः घासि[2] अस्मदभीष्टप्रदाता च भवसि। आकारश्चार्थे। चित्रिणीषु चित्रकर्मयुक्तास्वस्मद्रूपासु प्रजासु चित्रं चायनीयं धनम् ऊतये रक्षणाय आ कृणोषि आ समन्तात् करोषि। घ इति पूरणः ॥

दभ्रेभिश्चिच्छशीयांसं हंसि व्राधन्तमोजसा । सखिभिर्ये त्वे सचा ॥ ३ ॥

दभ्रेभिः । चित् । शशीयांसम् । हंसि । व्राधन्तम् । ओजसा ।

सखिऽभिः । ये । त्वे इति । सचा ॥ ३ ॥

हे इन्द्र त्वं दभ्रेभिश्चित् अल्पैरपि सखिभिः यजमानैः सह शशीयांसम्। ‘ शश प्लुतगतौ ’। उत्प्लवमानं व्राधन्तं महान्तमपि शत्रुम् ओजसा बलेन हंसि नाशयसि। ये यजमानाः त्वे त्वयि सचा संगताः। तैरिति पूर्वेण संबन्धः ॥

वयमिन्द्र त्वे सचा वयं त्वाभि नोनुमः । अस्माँअस्माँ इदुदव ॥ ४ ॥

वयम् । इन्द्र । त्वे इति । सचा । वयम् । त्वा । अभि । नोनुमः ।

अस्मान्ऽअस्मान् । इत् । उत् । अव ॥ ४ ॥

---

१. ख-ग-घ-च-भ—समीपे । २. ख-ग-ण-फ-भ—असि ।

हे ᵛइन्द्र ᵛवयं यजमानाः ᵛत्वे त्वयि ᵛसचा संगताः स्मः । ᵛवयं ᵛत्वा त्वाम् ᵛअभि ᵛनोनुमः अतिशयेनाभिष्टुमः । हे इन्द्र त्वमपि ᵛअस्मानस्मानित् सर्वानस्मानेव ᵛउदव उत्कर्षेण रक्ष ॥

स न॑श्चि॒त्राभि॑रद्रिवोऽनव॒द्याभि॑रू॒तिभिः॑ । अना॑धृष्टाभि॒रा ग॑हि ॥ ५ ॥

सः । नः॒ । चि॒त्राभिः॑ । अ॒द्रि॒ऽवः॒ । अ॒न॒व॒द्याभिः॑ । ऊ॒तिऽभिः॑ । अना॑धृष्टाभिः । आ । ग॒हि॒ ॥ ५ ॥

हे ᵛअद्रिवः वज्रवन्निन्द्र ᵛसः त्वं ᵛचित्राभिः चायनीयाभिः ᵛअनवद्याभिः अनिन्दिताभिः ᵛअनाधृष्टाभिः शत्रुभिरप्रधर्षितैः ᵛऊतिभिः रक्षणैः सहितः सन् ᵛनः अस्मान् ᵛआ ᵛगहि आगच्छ ॥ ॥ २७ ॥

भू॒यामो॒ षु त्वाव॑तः॒ सखा॑य इन्द्र॒ गोम॑तः । यु॒जो॒ वाजा॑य॒ घृष्व॑ये ॥ ६ ॥

भू॒यामो॒ इति॑ । सु । त्वाऽव॑तः । सखा॑यः । इन्द्र॒ । गोऽम॑तः । यु॒जः॑ । वाजा॑य । घृष्व॑ये ॥ ६ ॥

हे ᵛइन्द्र ᵛत्वावतः त्वत्सदृशस्य ᵛगोमतः गोभिर्युक्तस्य देवस्य[1] संबन्धिनः ᵛसखायः स्तोतारो वयं ᵛघृष्वये महते ᵛवाजाय अन्नाय ᵛयुजः संयुक्ताः ᵛसु सुष्ठु ᵛभूयामो भवामैव ॥

त्वं ह्येक॒ ईशि॑ष॒ इन्द्र॒ वाज॑स्य॒ गोम॑तः । स नो॑ यन्धि म॒हीमिष॑म् ॥ ७ ॥

त्वम् । हि । एकः॑ । ईशि॑षे । इन्द्र॑ । वाज॑स्य । गोऽम॑तः ।
सः । नः॒ । य॒न्धि॒ । म॒हीम् । इष॑म् ॥ ७ ॥

हे ᵛइन्द्र ᵛहि यस्मात् कारणात् ᵛत्वम् ᵛएकः एव ᵛगोमतः गोभिर्युक्तस्य ᵛवाजस्य अन्नस्य ᵛईशिषे प्रभवसि । अतः कारणात् ᵛसः त्वं ᵛनः अस्मभ्यं ᵛमहीं महतीम् ᵛइषम् अन्नं ᵛयन्धि प्रयच्छ ॥

न त्वा॑ वरन्ते अ॒न्यथा॒ यद्दित्स॑सि स्तु॒तो म॒घम् । स्तो॒तृभ्य॑ इन्द्र गिर्वणः ॥ ८ ॥

न । त्वा॒ । व॒र॒न्ते॒ । अ॒न्यथा॑ । यत् । दित्स॑सि । स्तु॒तः । म॒घम् । स्तो॒तृऽभ्यः॑ । इन्द्र॒ । गि॒र्व॒णः॒ ॥ ८ ॥

हे ᵛइन्द्र ᵛगिर्वणः गिरां संभक्तः ᵛस्तुतः अस्माभिः संस्तुतः ᵛयत् यदा ᵛस्तोतृभ्यः अस्मभ्यं ᵛमघं धनं ᵛदित्ससि दातुमिच्छसि । तदा ᵛत्वा त्वाम् ᵛअन्यथा प्रकारान्तरेण ᵛन ᵛवरन्ते न निवारयन्ति । किंतु सर्वेऽप्यनुकूला एव भवन्ति ॥

अ॒भि त्वा॒ गोत॑मा गि॒रानू॑षत॒ प्र दा॒वने॑ । इन्द्र॒ वाजा॑य॒ घृष्व॑ये ॥ ९ ॥

अ॒भि । त्वा॒ । गोत॑माः । गि॒रा । अनू॑षत । प्र । दा॒वने॑ । इन्द्र॑ । वाजा॑य । घृष्व॑ये ॥ ९ ॥

---

१. ख-ग-च-ण–' देवस्य ' नास्ति ।

हे ᵛइन्द्र ᵛत्वा त्वाम् ᵛअभि लक्षीकृत्य ᵛगोतमाः एतन्नामका ऋषयः ᵛगिरा स्तुतिरूपया वाचा ᵛदावने धनदानार्थं ᵛप्र ᵛअनूषत प्रकर्षेण स्तुवन्ति । ᵛधृष्वये महते ᵛवाजाय अन्नाय प्रस्तुवन्ति ॥

प्र ते वोचाम वीर्या३ या मन्दसान आरुजः । पुरो दासीरभीत्य ॥ १० ॥

प्र । ते । वोचाम । वीर्या । याः । मन्दसानः । आ । अरुजः ।

पुरः । दासीः । अभिऽइत्य ॥ १० ॥

हे इन्द्र ᵛमन्दसानः सोमेन मोदमानस्त्वं ᵛदासीः क्षेप्तुरसुरस्य स्वभूताः ᵛयाः ᵛपुरः यानि नगराणि ᵛअभीत्य अभिगम्य ᵛआ ᵛअरुजः आ समन्तात् अभाङ्क्षीः । हे इन्द्र ᵛते त्वदीयानि तत्रत्यानि[1] ᵛवीर्या[2] वीर्याणि वयं स्तोतारः ᵛप्र ᵛवोचाम प्रकर्षेण वदाम ॥  ॥ २८ ॥

ता ते गृणन्ति वेधसो यानि चकर्थ पौंस्या । सुतेष्विन्द्र गिर्वणः ॥ ११ ॥

ता । ते । गृणन्ति । वेधसः । यानि । चकर्थ । पौंस्या । सुतेषु । इन्द्र । गिर्वणः ॥ ११ ॥

हे ᵛइन्द्र ᵛगिर्वणः गिरां स्तुतिरूपाणां वाचां संभक्ता त्वं ᵛयानि ᵛपौंस्या पौंस्यानि बलानि ᵛचकर्थ कृतवानसि । हे इन्द्र ᵛवेधसः प्राज्ञाः[3] ᵛसुतेषु अभिषुतेषु सोमेषु ᵛते त्वदीयानि ᵛता तानि बलानि ᵛगृणन्ति कीर्तयन्ति ॥

अवीवृधन्त गोतमा इन्द्र त्वे स्तोमवाहसः । ऐषु धा वीरवद्यशः ॥ १२ ॥

अवीवृधन्त । गोतमाः । इन्द्र । त्वे इति । स्तोमऽवाहसः ।

आ । एषु । धाः । वीरऽवत् । यशः ॥ १२ ॥

ᵛस्तोमवाहसः स्तोमानां स्तोत्राणां वोढारः ᵛगोतमाः ऋषयो हे ᵛइन्द्र ᵛत्वे त्वाम् ᵛअवीवृधन्त स्तोत्रैर्वर्धयन्ति । त्वम् ᵛएषु गोतमेषु ᵛवीरवत् पुत्रपौत्रादियुक्तं ᵛयशः अन्नम् ᵛआ ᵛधाः निधेहि ॥

यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् । तं त्वा वयं हवामहे ॥ १३ ॥

यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् ।

तम् । त्वा । वयम् । हवामहे ॥ १३ ॥

हे ᵛइन्द्र ᵛत्वं ᵛयच्चिद्धि यद्यपि खलु ᵛशश्वतां बहूनां सर्वेषां यजमानानां ᵛसाधारणः ᵛअसि सामान्यो भवसि । तथापि ᵛतम् एव ᵛत्वा त्वां ᵛवयं स्तोतारः ᵛहवामहे आह्वयामः ॥

---

१. ख-ग-च-ण-भ-तत्र । २. न-स-'वीर्या' नास्ति । ३. ख-ग-च-ण-स-प्रज्ञाः ।

अर्वाचीनो वसो भवास्मे सु मत्स्वान्धसः । सोमानामिन्द्र सोमपाः ॥ १४ ॥

अर्वाचीनः । वसो इति । भव । अस्मे इति । सु । मत्स्व । अन्धसः ।

सोमानाम् । इन्द्र । सोमऽपाः ॥ १४ ॥

हे वसो यज्ञनिवासक[1] इन्द्र त्वम् अस्मे अस्मासु यजमानेषु अर्वाचीनः अभिमुखः भव । तथा हे सोमपाः सोमानां पातः इन्द्र त्वं सोमानाम् अन्धसः अन्नेन सु सुष्ठु मत्स्व माद्य ॥

अस्माकं त्वा मतीनामा स्तोम इन्द्र यच्छतु । अर्वागा वर्तया हरी ॥ १५ ॥

अस्माकम् । त्वा । मतीनाम् । आ । स्तोमः । इन्द्र । यच्छतु ।

अर्वाक् । आ । वर्तय । हरी इति ॥ १५ ॥

मतीनां स्तोतॄणाम् ॥ मन्यतेः कर्तरि क्तिच् ॥ अस्माकं संबन्धि स्तोमः स्तोत्रं हे इन्द्र त्वा त्वाम् आ यच्छतु अस्मासु नियच्छतु । त्वमपि हरी त्वदीयावश्वौ अर्वाक् अस्मदभिमुखं यथा भवति तथा आ वर्तय परिवर्तनं कुरु ॥

पुरोळाशं च नो घसो जोषयासे गिरश्च नः । वधूयुरिव योषणाम् ॥ १६ ॥

पुरोळाशम् । च । नः । घसः । जोषयासे । गिरः । च । नः । वधूयुःऽइव । योषणाम् ॥ १६ ॥

हे इन्द्र त्वं नः अस्मदीयं पुरोळाशं च पुरोडाशरूपमन्नं च[2] घसः अद्धि । तथा नः अस्मदीयाः गिरश्च स्तुतिरूपा वाचश्च जोषयासे सेवस्व । तत्र दृष्टान्तः । वधूयुरिव । स्त्रीकामो यथा योषणां स्त्रीणां गिरः सेवते तद्वत् ॥ ॥ २९ ॥

सहस्रं व्यतीनां युक्तानामिन्द्रमीमहे । शतं सोमस्य खार्यः ॥ १७ ॥

सहस्रम् । व्यतीनाम् । युक्तानाम् । इन्द्रम् । ईमहे । शतम् । सोमस्य । खार्यः ॥ १७ ॥

वयं स्तोतारः इन्द्रं परमैश्वर्ययुक्तं युक्तानां शिक्षितानां व्यतीनां गमनवतामश्वानां सहस्रं सहस्रसंख्याकम् ईमहे याचामहे । तथा सोमस्य अभिषुतसोमस्य[3] शतं शतसंख्याकाः खार्यः खारीः ईमहे द्रोणकलशान्[4] याचामहे[4]। अत्र मानविशेषवाचिना खारीशब्देन द्रोणकलश उपलक्ष्यते । अपरिमितद्रोणकलशान् बहून् यज्ञान् याचामह इत्यर्थः ॥

---

१. त–यज्ञे निवासक । २. ख-ग-च-ण-न-फ-भ-स–'च' नास्ति । ३. ख-ग-घ-च-ण-प-फ-भ–अभिषुतस्य । ४. ल–'द्रोणकलशान् याचामहे' नास्ति ।

सहस्रा ते शता वयं गवामा च्यावयामसि । अस्मत्रा राध एतु ते ॥ १८ ॥

सहस्रा । ते । शता । वयम् । गवाम् । आ । च्यवयामसि ।

अस्मऽत्रा । राधः । एतु । ते ॥ १८ ॥

हे इन्द्र ते त्वदीयानि गवां सहस्रा सहस्रसंख्याकानि शता शतसंख्याकानि च आ च्यावयामसि आच्यावयामः । अस्मदभिमुखं कुर्मः । तथा अस्मत्रा अस्मासु त्वदीयं राधः धनं ते त्वत्तः एतु आगच्छतु ॥

दश ते कलशानां हिरण्यानामधीमहि । भूरिदा असि वृत्रहन् ॥ १९ ॥

दश । ते । कलशानाम् । हिरण्यानाम् । अधीमहि ।

भूरिऽदाः । असि । वृत्रऽहन् ॥ १९ ॥

हे इन्द्र ते त्वत्तः कलशानां कुम्भानाम् । कुम्भपरिमितानामिति यावत् । हिरण्यानां हितरमणीयानां धनानां दश दशसंख्याकानि अधीमहि धारयामः । हे वृत्रहन् वृत्राणां शत्रूणां हिंसकेन्द्र त्वं भूरिदाः असि बहुप्रदो भवसि ॥

भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर । भूरि घेदिन्द्र दित्ससि ॥ २० ॥

भूरिऽदाः । भूरि । देहि । नः । मा । दभ्रम् । भूरि । आ । भर ।

भूरि । घ । इत् । इन्द्र । दित्ससि ॥ २० ॥

हे इन्द्र भूरिदाः बहुप्रदस्त्वं भूरि बहु धनं नः अस्मभ्यं देहि प्रयच्छ । किंतु दभ्रम् अल्पं धनं मा प्रयच्छ । भूरि बहुलं धनमस्मभ्यम् आ भर आहर । किंच भूरि इत् अदभ्रमेव धनं दित्ससि घ अस्मभ्यं दातुमिच्छसि खलु ॥

भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन् । आ नो भजस्व राधसि ॥ २१ ॥

भूरिऽदाः । हि । असि । श्रुतः । पुरुऽत्रा । शूर । वृत्रऽहन् ।

आ । नः । भजस्व । राधसि ॥ २१ ॥

हे वृत्रहन् वृत्रस्य हिंसक शूर विक्रान्तेन्द्र भूरिदाः बहुप्रदस्त्वं पुरुत्रा पुरुषु बहुषु यजमानेषु श्रुतः असि हि विख्यातो भवसि खलु । राधसि धने नः अस्मान् आ भजस्व आ समन्तात् भागिनः कुरु ॥

प्र ते बभ्रू विचक्षण शंसामि गोषणो नपात् । माभ्यां गा अनु शिश्रथः ॥ २२ ॥

प्र । ते । बभ्रू इति । विऽचक्षण । शंसामि । गोऽसनः । नपात् ।

मा । आभ्याम् । गाः । अनु । शिश्रथः ॥ २२ ॥

हे विचक्षण प्राज्ञेन्द्र ते त्वदीयौ बभ्रू बभ्रुवर्णावश्वौ प्र शंसामि प्रकर्षेण स्तौमि । हे गोसनः[1] गवां सनितः हे नपात् न पातयितः स्तोतॄनविनाशयितः । किंतु पालयितरित्यर्थः । हे इन्द्र त्वम् आभ्यां त्वदीयाभ्यामश्वाभ्यां गा अनु अस्मदीया गा लक्षीकृत्य मा शिश्रथः विनष्टा मा कार्षीः । गावोऽश्वदर्शनात् विश्लिष्यन्ते । तन्मा भूदित्यर्थः ॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते ॥ २३ ॥

कनीनकाऽइव । विद्रधे । नवे । द्रुऽपदे । अर्भके ।

बभ्रू इति । यामेषु । शोभेते इति ॥ २३ ॥

विद्रधे विदृढे व्यूढे नवे नवजाते अर्भके अल्पके[2] द्रुपदे द्रुमाख्यस्थाने स्थिते कनीनकेव कमनीये शालभञ्जिके इव हे इन्द्र बभ्रू बभ्रुवर्णौ त्वदीयावश्वौ यामेषु यज्ञेषु शोभेते कान्तियुक्तौ भवतः ॥ ' कनीनके कन्यके । कन्या कमनीया भवति क्वेयं नेतव्येति वा कमनेनानीयत इति वा कनतेर्वा स्यात् कान्तिकर्मणः ' ( निरु. ४. १५ ) इत्यादि निरुक्तम् ॥

अरं म उस्रयाम्णेऽरमनुस्रयाम्णे । बभ्रू यामेष्वस्रिधा ॥ २४ ॥

अरम् । मे । उस्रऽयाम्ने । अरम् । अनुस्रऽयाम्ने ।

बभ्रू इति । यामेषु । अस्रिधा ॥ २४ ॥

हे इन्द्र अस्रिधा अस्रिधावहिंसकौ बभ्रू बभ्रुवर्णौ त्वदीयावश्वौ यामेषु गमनेषु[3] प्राप्तेषु सत्सु उस्रयाम्णे । उस्राभ्यामनडुद्भ्यां युक्तेन रथेन यातीत्युस्रयामा । तस्मै मे मह्यम् अरम् अलं पर्याप्तकारिणौ भवताम् । अनुस्रयाम्णे पद्भ्यामेव गच्छते मह्यम् अरं[4] पर्याप्तकारिणौ भवताम् ॥
॥ ३० ॥ ॥ ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके षष्ठोऽध्यायः समाप्तः ॥

---

१. त–गोषणः । २. ख-ग-घ-च-ण-प-फ-भ-स–' अल्पके ' नास्ति । ३. ख-ग-घ-च-ण-प-फ-भ–यज्ञेषु; त-ल–यज्ञेषु गमनेषु; न-स–' गमनेषु ' नास्ति । ४. ख-ग-च-ण-न-भ-ल-स–' अरं ' नास्ति ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

चतुर्थेऽनुवाके त्रयोदश सूक्तानि । तत्र ' प्र ऋभुभ्यः ' इत्येकादशर्चं प्रथमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम् । तुह्यादिपरिभाषया इदमादि सूक्तपञ्चकमृभुदेवताकम् । अत्रानुक्रमणिका—' प्र ऋभुभ्य एकादशार्भवं वा ' इति । व्यूढे दशरात्रे चतुर्थेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदम् । तथा च सूत्रितं—' प्र ऋभुभ्यः प्र शुक्रैत्विति वैश्वदेवम् ' ( आश्व. श्रौ. ८. ८ ) इति ॥

**प्र ऋभुभ्यो दूतमिव वाचमिष्य उपस्तिरे श्वैतरीं धेनुमीळे ।**

**ये वातजूतास्तरणिभिरेवैः परि द्यां सद्यो अपसो बभूवुः ॥ १ ॥**

प्र । ऋभुऽभ्यः । दूतम्ऽइव । वाचम् । इष्ये । उपऽस्तिरे । श्वैतरीम् । धेनुम् । ईळे ।

ये । वातऽजूताः । तरणिऽभिः । एवैः । परि । द्याम् । सद्यः । अपसः । बभूवुः ॥ १ ॥

तत्र ऋभूणां पूर्वं मनुष्याणामेव सतां तपसा देवत्वप्राप्तिः ' आर्भवं शंसत्यृभवो वै देवेभ्यः ' ( ऐ. ब्रा. ३. ३० ) इत्यत्र ब्राह्मणे स्पष्टमाम्नाता । केचन ऋभवो नाम सूर्यरश्मय इत्याचक्षते । अहं यजमानः vऋभुभ्यः उरुभासमानेभ्य एतन्नामकेभ्यो देवेभ्यः vवाचं स्तुतिरूपां vप्र vइष्ये प्रेरयामि। किमिव । vदूतमिव । यथा दूतं स्वकार्यं प्रति प्रेषयन्ति तद्वत् । किंच vउपस्तिरे सोमोपस्तरणाय vश्वैतरीं पयोयुक्तां श्वेततरां[1] वा[1] vधेनुमीळे याचामि ऋभून् । vये ऋभवः vवातजूताः वातसमानगतयः[2] vअपसः जगदुपकारिकर्माणः सन्तः vतरणिभिः तारकैः vएवैः गमनशीलैरश्वैः vद्याम् अन्तरिक्षं vसद्यः तदानीमेव vपरि vबभूवुः परिभवन्ति सर्वतो व्याप्नुवन्ति । अथ रश्मय एव ऋभव इत्युक्तत्वादादित्यं वा रश्मयः परितो व्याप्नुवन्ति ॥

**यदारमक्रन्नृभवः पितृभ्यां परिविष्टी वेषणा दंसनाभिः ।**

**आदिद्देवानामुप सख्यमायन्धीरासः पुष्टिमवहन्मनायै ॥ २ ॥**

यदा । अरम् । अक्रन् । ऋभवः । पितृऽभ्याम् । परिऽविष्टी । वेषणा । दंसनाभिः ।

आत् । इत् । देवानाम् । उप । सख्यम् । आयन् । धीरासः । पुष्टिम् । अवहन् । मनायै ॥२॥

vयदा यस्मिन् काले vऋभवः vपितृभ्यां मातापितृभ्यां vपरिविष्टी परिवेषणेन परिचर्यया vवेषणा वेषणेन व्याप्त्या । यद्वा वेषेण जरद्रूपयोर्युवत्वकरणेन vदंसनाभिः अन्यैश्चमसनिर्माणादिकर्मभिः[3] vअरम्

---

१. ख-ग-घ-च-ण-प-फ-भ—' श्वेततरां वा ' नास्ति । २. ख-ग-घ-च-ण-प-फ-भ—वायुसमानगन्तव्याः; न-स—वातसमानगन्तव्याः । ३. ख-ग-च-ण-त-प-फ-भ-ल—स्वकर्मसामर्थ्यैश्च ।

अत्यर्थम् ᵛअक्रन् ᵛआदित् अनन्तरमेव ᵛदेवानाम् इन्द्रादीनां ᵛसख्यं सखित्वं समानख्यानत्वं देवतात्वम् ᵛउप ᵛआयन् आगमन्। 'युवशा कर्वा' ( ऋ. सं. १.१६१.३ ) इति देवत्वप्राप्तेरेकान्तत्वेन देवैरुक्तत्वादिति भावः । किंच ᵛधीरासः धीरा बुद्धिमन्तस्तेषां ᵛपुष्टिं[1] गवादिविषयां ᵛमनायै मतिकृते[2] यजमानाय ᵛअवहन् वहन्ति धारयन्ति । यद्वा । सविषयां पुष्टिं मनायै मनसे प्रकृष्टमनस्कत्वायावहन् ॥

पुनर्ये चक्रुः पितरा युवाना सना यूपेव जरणा शयाना ।

ते वाजो विभ्वाँ ऋभुरिन्द्रवन्तो मधुप्सरसो नोऽवन्तु यज्ञम् ॥ ३ ॥

पुनः । ये । चक्रुः । पितरा । युवाना । सना । यूपाऽइव । जरणा । शयाना ।

ते । वाजः । विऽभ्वा । ऋभुः । इन्द्रऽवन्तः । मधुऽप्सरसः । नः । अवन्तु । यज्ञम् ॥ ३ ॥

ᵛये ऋभवः ᵛपितरा मातापितरौ ᵛयूपेव छिन्नस्थाणू इव ᵛजरणा जीर्णौ ᵛशयाना शयानौ ᵛपुनः ᵛसना सदा ᵛयुवाना युवानौ ᵛचक्रुः नित्यतरुणावकुर्वन् । ᵛते ᵛवाजो ᵛविभ्वा ᵛऋभुः च एतन्नामकास्त्रयः सुधन्वन आङ्गिरसस्य पुत्रा ऋभवः[3] ᵛइन्द्रवन्तः अनुग्राहकेणेन्द्रेण तद्वन्तः ᵛमधुप्सरसः मधुरस्य सोमरसस्य[4] भक्षयितारः[4] मनोहररूपा वा ᵛनः अस्मदीयं ᵛयज्ञम् ᵛअवन्तु रक्षन्तु गच्छन्तु वा ॥

यत्संवत्समृभवो गामरक्षन्यत्संवत्समृभवो मा अपिंशन् ।

यत्संवत्समभरन्भासो अस्यास्ताभिः शमीभिरमृतत्वमाशुः ॥ ४ ॥

यत् । सम्ऽवत्सम् । ऋभवः । गाम् । अरक्षन् । यत् । सम्ऽवत्सम् । ऋभवः । माः । अपिंशन् ।

यत् । सम्ऽवत्सम् । अभरन् । भासः । अस्याः । ताभिः । शमीभिः । अमृतऽत्वम् । आशुः ॥ ४ ॥

ᵛसंवत्सम् । संवसन्ति भूतान्यस्मिन्निति संवत्सः संवत्सरः । संवत्सरपर्यन्तम् ᵛऋभवो ᵛगां मृताम् ᵛअरक्षन् अपालयन् । स्वसामर्थ्यादिति ᵛयत् यदेतत्कर्मास्ति । तथा ᵛसंवत्सं संवत्सरम् ᵛऋभवो ᵛमाः तस्या एव गोर्मांसम् ᵛअपिंशन् अवयवानकुर्वन्निति ᵛयत् । किंच[5] ᵛसंवत्सं संवत्सरपर्यन्तम् ᵛअस्याः ᵛभासः ᵛअभरन् दीप्तीः अवयवशोभा अकुर्वन्निति ᵛयत् ᵛताभिः ᵛशमीभिः मृताया गोर्नवीकरणविषयैः कर्मभिः ᵛअमृतत्वमाशुः देवत्वं प्राप्ताः । 'धेनुः कर्त्वा' इति देवत्वप्राप्तिसाधनत्वेन[6] देवैः प्रतिश्रुतत्वात् । यद्वा । अत्र संवत्समित्येतत् वत्सेन सहेति व्याख्येयम् ।

---

१. त-ल—पुष्टिं पोषम् । २. ख-ग-घ-च-णं-न-प-फ-भ-स—' मतिकृते ' नास्ति । ३. ख-ग-घ-च-ण-त-न-प-फ-भ-ल-स—ऋषयः । ४. ख-ग-च-फ-भ—सोमरसं भक्षयितारः; प—सोमस्य रसं भक्षयितारः । ५. त-ल—किंच अमुया ( त—मृतायाः ) गोस्त्वचा अङ्गमुच्छाद्य तस्याः मांसं समयोजयन्नित्यर्थः । कुर्वन्निति यत् ( त—' कुर्वन्निति यत् ' नास्ति ) । ६. ख-ग-च-ण-फ-भ—देवत्वप्राप्तिसाधनेन ।

ज्येष्ठ आह चमसा द्वा करेति कनीयान्त्रीन्कृणवामेत्याह ।
कनिष्ठ आह चतुरस्करेति त्वष्ट ऋभवस्तत्पनयद्वचो वः ॥ ५ ॥

ज्येष्ठः । आह । चमसा । द्वा । कर । इति । कनीयान् । त्रीन् । कृणवाम । इति । आह ।
कनिष्ठः । आह । चतुरः । कर । इति । त्वष्टा । ऋभवः । तत् । पनयत् । वचः । वः ॥ ५ ॥

'एकं चमसं चतुरस्कृणोतन' (ऋ. सं. १. १६१. २) इति यदा[1] देवदूतोऽग्निर्ऋभूनाह देवत्वप्राप्त्युक्थेन[2] तदा तेषु[3] मध्ये देवत्वप्राप्त्युत्कः[4] एकः ज्येष्ठः ऋभुरितरौ आह । किमिति । उच्यते । चमसा द्वा करेति । एकमेव सन्तं द्वौ कृणवामेति । कनीयान् तदनन्तरो विभ्वा त्रीन् कृणवाम करवाम इत्याह । तदवरः[5] कनिष्ठः वाजः[5] चतुरस्कर चतुर्धा[6] करवाम[6] इति आह तत् एव चतुष्करणरूपं हे ऋभवः त्वष्टा युष्मद्गुरुः वः वचः युष्मद्वचनं पनयत् अस्तौत् । अङ्गीचकार इत्यर्थः ॥ ॥ १ ॥

सत्यमूचुर्नर एवा हि चक्रुरनु स्वधामृभवो जग्मुरेताम् ।
विभ्राजमानांश्चमसाँ अहेवावेनत्त्वष्टा चतुरो ददृश्वान् ॥ ६ ॥

सत्यम् । ऊचुः । नरः । एव । हि । चक्रुः । अनु । स्वधाम् । ऋभवः । जग्मुः । एताम् ।
विऽभ्राजमानान् । चमसान् । अहाऽइव । अवेनत् । त्वष्टा । चतुरः । ददृश्वान् ॥ ६ ॥

नरः मनुष्यरूपा ऋभवः सत्यमूचुः सत्यमेवाब्रुवन् । हि यस्मादेते एव एवं[7] चक्रुः चतुरोऽकुर्वन् । यथोक्तं तथैव कृतत्वात्[8] इत्यभिप्रायः । अनु चतुर्धाकरणानन्तरम् एतां[9] तृतीयसवनगतां[10] स्वधां सोमाख्यममृतम् ऋभवो जग्मुः । 'एकं चमसं चतुरस्कृणोतन, साकं देवैर्यज्ञियासो भविष्यथ' (ऋ. सं. १.१६१. २) इति श्रुतत्वात् । अथ त्वष्टा देवः विभ्राजमानान् अहेव अहानीव दीप्यमानान् चमसान् चतुरो ददृश्वान् दृष्टवान् सन् अवेनत् अकामयत[11]। अङ्गीचकारेत्यर्थः ॥

द्वादश द्यून्यदगोह्यस्यातिथ्ये रणन्नृभवः ससन्तः ।
सुक्षेत्राकृण्वन्ननयन्त सिन्धून्धन्वातिष्ठन्नोषधीर्निम्नमापः ॥ ७ ॥

द्वादश । द्यून् । यत् । अगोह्यस्य । आतिथ्ये । रणन् । ऋभवः । ससन्तः ।
सुऽक्षेत्रा । अकृण्वन् । अनयन्त । सिन्धून् ।
धन्व । आ । अतिष्ठन् । ओषधीः । निम्नम् । आपः ॥ ७ ॥

---

१. ख-ग-च-ण–'यदा' नास्ति । २. ख-ग- घ-च-ण-त-न-भ-ल-स–देवत्वप्राप्त्युक्थेन देवत्वेन । ३. ख-ग-घ-च-ण-त-न-भ–तेषाम् । ४. ख-ग-घ-च-ण-त-न-भ-ल-स–'देवत्वप्राप्त्युत्कः' नास्ति । ५. त-ल–तत्कनिष्ठस्ततोऽपि कनीयान् । ६. ख-ग-च-ण-भ–कृणवाम । ७. ख-ग-घ-च-ण-न-प-फ-भ-स–इदम् । ८. ख-ग-घ-च-ण-प-फ-भ–कृतवन्तः । ९. ख-ग-घ-च-ण-प-फ-भ–एव । १०. ख-ग-घ-च-ण-फ-भ–तृतीयसवनगतामेताम् । ११. ख-ग-घ-च-ण-त-प-फ-भ-ल–अमन्यत ।

तत्र रश्मय एव ऋभव इत्युक्तत्वात् तद्रूपेण स्तूयन्ते। vयत् यदा vद्वादश[1] vद्यून् दिवसान्। आर्द्रादिद्वादशवृष्टिनक्षत्राणीत्यर्थः। vअगोह्यस्य अगोप्यस्यादित्यस्य गृहे vआतिथ्ये। अकस्मादागतोऽतिथिः। तदुचितं सत्काररूपं कर्म आतिथ्यम्। तदर्थं vससन्तः स्वपन्तः सुखेन निवसन्तः vऋभवः vरणन् रमन्ते। 'अगोह्यस्य यदसस्तना गृहे' ( ऋ. सं. १. १६१. ११ ) इत्युक्तम्। तदानीं vसुक्षेत्राकृण्वन्। अकृष्टानि[2] शून्यानि[2] क्षेत्राणि वृष्ट्या सस्यादिसमृद्धान्यकुर्वन्। vसिन्धून् नदीः vअनयन्त प्रैरयन्। तस्मिन् काले vओषधीः ओषधयः vधन्व निरुदकस्थानमाश्रित्य vआतिष्ठन्। vनिम्नं नीचस्थानम् vआपः अतिष्ठन्। 'उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः' ( ऋ. सं. १. १६१. ११ ) इत्युक्तम्॥

**रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं विश्वरूपाम्।**
**त आ तक्षन्त्वृभवो रयिं नः स्ववसः स्वपसः सुहस्ताः॥ ८॥**

रथम्। ये। चक्रुः। सुऽवृतम्। नरेऽस्थाम्। ये। धेनुम्। विश्वऽजुवम्। विश्वऽरूपाम्।
ते। आ। तक्षन्तु। ऋभवः। रयिम्। नः। सुऽअवसः। सुऽअपसः। सुऽहस्ताः॥ ८॥

vये ऋभवः vसुवृतं सुचक्रं सुष्ठु वर्तमानं वा vनरेष्ठां नेतरि चक्रे वर्तमानं vरथं vचक्रुः। vये च vविश्वजुवं[3] विश्वस्य प्रेरयित्रीं vविश्वरूपां बहुरूपामेतन्नामिकां वा[4] vधेनुं गां[4] चक्रुः अकुर्वन्। 'बृहस्पतिर्विश्वरूपामुपाजत' ( ऋ. सं. १. १६१. ६ ) इति ह्युक्तम्। vते महान्तः vऋभवः vनः अस्माकं vरयिं धनम् vआ vतक्षन्तु सर्वतो निष्पादयन्तु। कीदृशास्त ऋभवः। vस्ववसः सुकर्माणः vस्ववसः शोभनान्नोपेताः सुरक्षणा[5] वा[5] vसुहस्ताः शोभनहस्ताः कुशलहस्ताः[6]॥

**अपो ह्येषामजुषन्त देवा अभि क्रत्वा मनसा दीध्यानाः।**
**वाजो देवानामभवत्सुकर्मेन्द्रस्य ऋभुक्षा वरुणस्य विभ्वा॥ ९॥**

अपः। हि। एषाम्। अजुषन्त। देवाः। अभि। क्रत्वा। मनसा। दीध्यानाः।
वाजः। देवानाम्। अभवत्। सुऽकर्मा। इन्द्रस्य। ऋभुक्षाः। वरुणस्य। विऽभ्वा॥ ९॥

vएषाम् ऋभूणाम् vअपः अश्वरथनिर्माणादिरूपं कर्म vदेवाः इन्द्रादयः vअजुषन्त असेवन्त। 'इन्द्रो हरी युयुजे अश्विना रथम्' (ऋ. सं. १. १६१. ६) इत्यादिमन्त्रोक्तप्रकारेण स्वीकृतवन्त इत्यर्थः। कीदृशास्ते। vक्रत्वा वरप्रदानरूपेण कर्मणा vमनसा शोभनेन चित्तेनानुग्रहयुक्तेन vअभि vदीध्यानाः दीप्यमानाः। देवानाम्[7] अनुग्रहेण किं लब्धमित्याह। vसुकर्मा[8] शोभनव्यापारः vवाजः कनीयान्

---

१. ख-ग-च-ण-भ-स-'द्वादश' नास्ति। २. ख-ग-च-ण-स-अरिष्टानि; न-भ-अरिष्टानि शून्यानि। ३. त-ल-धेनुं विश्वजुवम्। ४. ख-ग-ण-भ-धेनुं गावम्; च-धेनुं गां च; त-ल-गां वा; न-गां च; स-वाचम्। ५. ख-ग-च-ण-त-न-भ-ल-स-'सुरक्षणा वा' नास्ति। ६. ख-ग-च-ण-त-न-भ-ल-स-'कुशलहस्ताः' नास्ति। ७. ख-ग-च-ण-भ-भवताम्; न-तेषाम्। ८. त-ल-सुकर्मा शोभनकर्मा।

ᵛदेवानां सर्वेषां संबन्धी ᵛअभवत्। तथा ᵛइन्द्रस्य संबन्धी ᵛऋभुक्षाः ऋभुज्येष्ठः। ᵛविभ्वा मध्यमः ᵛवरुणस्य संबन्ध्यभवत्। ᵛहि[1] पूरणः[1] ॥

ये हरी॑ मे॒धयो॒क्था मद॑न्त॒ इन्द्रा॑य च॒क्रुः सु॒युजा॒ ये अश्वा॑।

ते रा॒यस्पोषं॒ द्रवि॑णान्य॒स्मे ध॒त्त ऋ॑भवः क्षेम॒यन्तो॒ न मि॒त्रम्॥ १०॥

ये। हरी॒ इति॑। मे॒धया॑। उ॒क्था। मद॑न्तः। इन्द्रा॑य। च॒क्रुः। सु॒ऽयुजा॑। ये। अश्वा॑।

ते। रा॒यः। पोष॑म्। द्रवि॑णानि। अ॒स्मे इति॑। ध॒त्त। ऋ॒भ॒वः। क्षे॒म॒ऽयन्त॑ः। न। मि॒त्रम्॥ १०॥

ᵛये ऋभवः ᵛहरी अश्वौ ᵛमेधया प्रज्ञया[2] ᵛउक्था उक्थैः स्तुतिभिः ᵛमदन्तः हर्षयन्तः ᵛचक्रुः। ᵛये च तौ ᵛसुयुजा सुयुजौ सुयोजनावश्वौ[3] ᵛइन्द्राय इन्द्रार्थं चक्रुः अकुर्वन्। हे ᵛऋभवः ᵛते यूयं ᵛरायस्पोषं धनपुष्टिं ᵛद्रविणानि गवादिधनानि च सुखानि वा ᵛअस्मे अस्मासु ᵛधत्त धारयत। किमिव। ᵛक्षेमयन्तः क्षेममिच्छन्तः ᵛमित्रं ᵛन मित्रमिव। अत्र यद्यप्येक एव ऋभुनामा तत्संबन्धात् इतरेऽप्यृभव उच्यन्ते प्राणभृन्न्यायेन॥

इ॒दाह्नः॑ पी॒तिमु॒त वो॒ मदं॑ धु॒र्न ऋ॒ते श्रा॒न्तस्य॑ स॒ख्याय॑ दे॒वाः।

ते नू॒नम॒स्मे ऋ॑भवो॒ वसू॑नि तृ॒तीये॑ अ॒स्मिन्त्सव॑ने दधात॥ ११॥

इ॒दा। अह्नः॑। पी॒तिम्। उ॒त। वः॒। मद॑म्। धुः॒। न। ऋ॒ते। श्रा॒न्तस्य॑। स॒ख्याय॑। दे॒वाः।

ते। नू॒नम्। अ॒स्मे इति॑। ऋ॒भ॒वः॒। वसू॑नि। तृ॒तीये॑। अ॒स्मिन्। सव॑ने। द॒धा॒त॒॥ ११॥

ᵛइदा इदानीं चमसादिनिर्माणानन्तरम् ᵛअह्नः सुत्याहसंबन्धिनस्तृतीये सवने ᵛपीतिं सोमपानम् ᵛउत अपि च ᵛमदं तज्जनितं ᵛवः युष्माकं ᵛधुः ददुर्देवाः। ᵛश्रान्तस्य श्रान्तात्तपोयुक्तात्[4] ᵛऋते ᵛसख्याय सखित्वाय ᵛन भवन्ति ᵛदेवाः। यत एते श्रान्ता अतो ददुरित्यर्थः। हे ᵛऋभवः ᵛते महान्तो यूयं ᵛनूनं निश्चयम् ᵛअस्मे अस्मासु ᵛअस्मिन् ᵛतृतीये ᵛसवने ᵛवसूनि धनानि ᵛदधात धारयत॥ ॥२॥

'ऋभुर्विभ्वा' इत्येकादशर्चं द्वितीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमार्भवम्। 'ऋभुर्विभ्वा' इत्यनुक्रमणिका। व्यूढे दशरात्रे पञ्चमेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदम्। 'ऋभुर्विभ्वा स्तुषे जनम्' (आश्व. श्रौ. ८. ८) इति सूत्रितत्वात्॥

---

१. ख-ग-त-न-ल-स–'हि पूरणः' नास्ति। २. ख-ग-घ-च-ण-त-न-प-फ-भ-स–'प्रज्ञया' नास्ति। ३. ख-ग-ण-न-भ-स–सुयोजमानावश्वौ; घ-च-प-फ-ल–सुयोजमानावश्वाश्वौ। ४. ख-ग-घ-च-ण-प-फ-भ-स–श्रान्ताय श्रमयुक्ताय; न–श्रान्ताय तपोयुक्ताय।

ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेमं यज्ञं रत्नधेयोप यात ।
इदा हि वो धिषणा देव्यह्नामधात्पीतिं सं मदा अग्मता वः ॥ १ ॥

ऋभुः । विऽभ्वा । वाजः । इन्द्रः । नः । अच्छ । इमम् । यज्ञम् । रत्नऽधेया । उप । यात ।
इदा । हि । वः । धिषणा । देवी । अह्नाम् । अधात् । पीतिम् । सम् । मदाः । अग्मत । वः ॥१॥

ऋभुर्विभ्वा वाज इन्द्रः चैते देवाः नः अस्मदीयम् इमं यज्ञम् अच्छ अभिमुखं रत्नधेया अस्मभ्यं रत्नधानाय उप यात उपगच्छत । ननु इन्द्रः सोमस्वामित्वात्[1] आगच्छतु कथमेतेषां यज्ञप्राप्तिरिति चेत् । उच्यते । इदा हि इदानीं खलु वः युष्माकं धिषणा वाक् देवी प्रजापतेः संबन्धिनी अह्नां सोमाभिषवसंबन्धिनां पीतिं सोमपानम् अधात् । ‘ स प्रजापतिरब्रवीत्सवितारं तव वा इमेऽन्तेवासास्त्वमेवैभिः संपिबस्व ’ (ऐ. ब्रा. ३.३०) इति ब्राह्मणम् । यस्मादेवं तस्मात् मदाः च वः युष्मान् सम् अग्मत संगताः । यद्वा । वो मदा देवैः संगताः ॥

विदानासो जन्मनो वाजरत्ना उत ऋतुभिर्ऋभवो मादयध्वम् ।
सं वो मदा अग्मत सं पुरंधिः सुवीरामस्मे रयिमेरयध्वम् ॥ २ ॥

विदानासः । जन्मनः । वाजऽरत्नाः । उत । ऋतुऽभिः । ऋभवः । मादयध्वम् ।
सम् । वः । मदाः । अग्मत । सम् । पुरम्ऽधिः । सुऽवीराम् । अस्मे इति । रयिम् । आ । ईरयध्वम् ॥२॥

हे वाजरत्नाः सोमलक्षणेनान्नेन[2] राजमानाः ऋभवः यूयं जन्मनः जननस्य देवत्वलक्षणस्य[3] देवत्वप्राप्तिं विदानासः जानन्तः । यद्वा विदानासः सोमप्राप्तिं जानन्तो जन्मनः पूर्वं मनुष्यजन्मवन्तश्च सन्तः । उतशब्दश्चार्थे । ऋतुभिः देवैः सह मादयध्वम् । वः युष्मान् मदाः सोमपानजनिताः सम् अग्मत संगताः । पुरंधिः स्तुतिरपि सम् अग्मत । ते यूयम् अस्मे अस्माकं सुवीरां शोभनैर्वीरैः पुत्रैः[4] उपेतां रयिं धनम्[5] एरयध्वं प्रेरयत ॥

अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत्प्रदिवो दधिध्वे ।
प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥ ३ ॥

अयम् । वः । यज्ञः । ऋभवः । अकारि । यम् । आ । मनुष्वत् । प्रऽदिवः । दधिध्वे ।
प्र । वः । अच्छ । जुजुषाणासः । अस्थुः । अभूत । विश्वे । अग्रिया । उत । वाजाः ॥ ३ ॥

---

१. ख-ग-घ-च-ण-प-फ-भ—सोमस्वामी । २. ख-ग-च-ण-न-भ—सोमलक्षणान्नेन । ३. ख-ग-च-ण—‘ देवत्वलक्षणस्य ’ नास्ति । ४. ख-त-प-फ-भ—‘ पुत्रैः ’ नास्ति । ५. न-स—‘ धनं ’ नास्ति ।

हे ऋभवः वः युष्मदर्थम् अयं यज्ञः अकारि । यं यज्ञं मनुष्वत् मनुष्यवत् प्रदिवः प्रकर्षेण द्योतमानाः सन्तः आ[1] दधिध्वे[1] धारयत जठरे । तदर्थं वः युष्मान् अच्छ आभिमुख्येन जुजुषाणासः सेवमानाः सोमाः प्र[2] अस्थुः[2] प्रतिष्ठन्ते । उत अपि च धारयित्वा च हे वाजाः ऋभवः विश्वे यूयम् अग्रिया अग्राहा अग्रत्वसंपादिनो वा अभूत भवथ॥

अभूदु वो विधते रत्नधेयमिदा नरो दाशुषे मर्त्याय ।
पिबत वाजा ऋभवो ददे वो महि तृतीयं सवनं मदाय ॥ ४ ॥

अभूत् । ऊँ इति । वः । विधते । रत्नऽधेयम् । इदा । नरः । दाशुषे । मर्त्याय ।
पिबत । वाजाः । ऋभवः । ददे । वः । महि । तृतीयम् । सवनम् । मदाय ॥ ४ ॥

हे नरः नेतार ऋभवः वः युष्माकमनुग्रहात् इदा इदानीं तृतीये सवने रत्नधेयं दातव्यं रत्नं विधते । विधतिः परिचरणकर्मा । स्तुत्या परिचरते दाशुषे हविर्दत्तवते मर्त्याय यजमानाय मह्यम् अभूत् भवतु । तदर्थं हे वाजाः ऋभवः । एतद्द्वयं विभ्वनामकस्याप्युपलक्षणम् । इतरापेक्षया प्रत्येकं बहुवचनम् । यूयं पिबत । तदर्थं वः ददे । किम् । महि महत्प्रभूतं तृतीयं सवनम् । तत्संबन्धिनं सोममित्यर्थः । किमर्थम् । मदाय हर्षाय तृप्तये वा ॥

आ वाजा यातोप न ऋभुक्षा महो नरो द्रविणसो गृणानाः ।
आ वः पीतयोऽभिपित्वे अह्नामिमा अस्तं नवस्वइव ग्मन् ॥ ५ ॥

आ । वाजाः । यात । उप । नः । ऋभुक्षाः । महः । नरः । द्रविणसः । गृणानाः ।
आ । वः । पीतयः । अभिऽपित्वे । अह्नाम् । इमाः । अस्तम् । नवस्वःऽइव । ग्मन् ॥ ५ ॥

हे वाजाः ऋभुक्षाः नरः नेतारो यूयं नः अस्मान्[3] उप आ यात । किं कुर्वन्तः । महः महतः द्रविणसः धनस्य ॥ कर्मणि षष्ठ्यौ ॥ महत् द्रविणं गृणानाः स्तुवन्तः । किंच अह्नाम् अभिपित्वे अभिपतने समाप्तौ । तृतीये सवने इत्यर्थः । वः युष्मान् इमाः पीतयः पानानि आ ग्मन् आगच्छन्ति । तत्र दृष्टान्तः । अस्तम् । गृहनामैतत् । गृहं नवस्वः नवप्रसवा गावः इव ॥ ॥ ३ ॥

आ नपातः शवसो यातनोपेमं यज्ञं नमसा हूयमानाः ।
सजोषसः सूरयो यस्य च स्थ मध्वः पात रत्नधा इन्द्रवन्तः ॥ ६ ॥

आ । नपातः । शवसः । यातन । उप । इमम् । यज्ञम् । नमसा । हूयमानाः ।
सऽजोषसः । सूरयः । यस्य । च । स्थ । मध्वः । पात । रत्नऽधाः । इन्द्रऽवन्तः ॥ ६ ॥

---

१. ख-ग-घ-ण-भ-प्रदधिध्वे; च-प्रादधिध्वे । २. ख-ग-घ-च-ण-प-फ-भ-आ अस्थुः; न-स-अस्थुः ।
३. न-ल-स-‘ अस्मान् ’ नास्ति ।

हे शवसः नपातः बलस्य न पातयितारस्तस्य पुत्रा वा । बलवन्त इत्यर्थः । यूयं नमसा स्तोत्रेण हूयमानाः आकारिताः सन्तः इमं यज्ञम् उप आ यातन उपागच्छत । कीदृशा यूयम् । सजोषसः इन्द्रेण सह प्रीताः सूरयः मेधाविनः । इन्द्रस्य चैषां च कः प्रसङ्ग इत्युच्यते । यस्य च स्थ । चेति प्रसिद्धौ । यस्येन्द्रस्य संबन्धिनो यूयं भवथ तदुचिताश्वनिर्माणात्[1] इत्यभिप्रायः । यस्मादेवं तस्मात् इन्द्रवन्तः प्रीतेन[2] इन्द्रेण तद्वन्तः रत्नधाः रमणीयधनानां[3] दातारो यूयं मध्वः मधुरं सोमं पात पिबत ॥

सजोषा इन्द्र वरुणेन सोमं सजोषाः पाहि गिर्वणो मरुद्भिः ।

अग्रेपाभिर्ऋतुपाभिः सजोषा ग्नास्पत्नीभी रत्नधाभिः सजोषाः ॥ ७ ॥

सऽजोषाः । इन्द्र । वरुणेन । सोमम् । सऽजोषाः । पाहि । गिर्वणः । मरुत्ऽभिः ।

अग्रेऽपाभिः । ऋतुऽपाभिः । सऽजोषाः । ग्नाःपत्नीभिः । रत्नऽधाभिः । सऽजोषाः ॥ ७ ॥

हे इन्द्र त्वं वरुणेन रात्र्यभिमानिदेवेन सजोषाः समानप्रीतिः सन् सोमं पाहि पिब । हे गिर्वणः गीर्भिर्वननीय संभजनीयेन्द्र त्वं मरुद्भिः सजोषाः संगतः सन् सोमं पाहि पिब ॥ किंच अग्रेपाभिः प्रथमपातृभिः ऋतुपाभिः ऋतुयाजदेवैश्च ग्नाःपत्नीभिः । स्त्रीणां पालयित्र्यो देव्यो ग्नाःपत्न्यः । ताभिः । ‘ मेना ग्ना इति स्त्रीणाम् ’ ( निरु. ३. २१ ) इति निरुक्तम् । रत्नधाभिः रमणीयधनदातृभिर्ऋभुभिः सह पिब । यद्वा । एतत् ग्नाःपत्नीभिरित्यस्य विशेषणम् । ताभिर्वा सजोषाः सोमं पिब ॥

सजोषस आदित्यैर्मादयध्वं सजोषस ऋभवः पर्वतेभिः ।

सजोषसो दैव्येना सवित्रा सजोषसः सिन्धुभी रत्नधेभिः ॥ ८ ॥

सऽजोषसः । आदित्यैः । मादयध्वम् । सऽजोषसः । ऋभवः । पर्वतेभिः ।

सऽजोषसः । दैव्येन । सवित्रा । सऽजोषसः । सिन्धुऽभिः । रत्नऽधेभिः ॥ ८ ॥

हे ऋभवः आदित्यैः सजोषसः संगता यूयं मादयध्वम् । तथा पर्वतेभिः पर्ववद्भिः पर्वण्यर्च्यमानैर्देवविशेषैः सजोषसः मादयध्वम् । तथा च दैव्येन देवेभ्यो हितेन सवित्रा सजोषसः रत्नधेभिः रत्नानां दातृभिः सिन्धुभिः स्यन्दनस्वभावैर्नद्यभिमानिदेवैश्च सजोषसः मादयध्वम् ॥

---

१. ल-स--तदुचिताश्च निर्माणात् । २. ख-ग-च-ण-फ-भ--तेन । ३. ख-ग-च-ण-भ--रमणीयानां धनानाम् ।

ये अश्विना ये पितरा य ऊती धेनुं ततक्षुर्ऋभवो ये अश्वा ।
ये अंसत्रा य ऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥ ९ ॥

ये । अश्विना । ये । पितरा । ये । ऊती । धेनुम् । ततक्षुः । ऋभवः । ये । अश्वा ।
ये । अंसत्रा । ये । ऋधक् । रोदसी इति । ये । विऽभ्वः । नरः । सुऽअपत्यानि । चक्रुः ॥९॥

vये vऋभवः vअश्विना अश्विनौ vऊती ऊत्या क्रियया रथनिर्माणरूपया[1] अप्रीणयन् । vये च vपितरा पितरौ vततक्षुः तक्षणेन समपादयन् जीर्णौ सन्तावूती ऊत्या युवानौ vचक्रुः । vये च vधेनुं ततक्षुः मृतायाः पुनर्नवीकरणेन । vये च vअश्वा अश्वौ ततक्षुः । ‘ निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ’ (ऋ. सं. १. १६१. ७) इत्याद्युक्तम् । vये च vअंसत्रा अंसत्राणि कवचानि देवेभ्यश्चक्रुः । vये च vरोदसी द्यावापृथिव्यौ vऋधक् पृथक्[2] चक्रुः । एवमुक्तप्रकारेण[3] vये vविभ्वः व्याप्ता ऋभवः vनरः नेतारः vस्वपत्यानि स्वपतनसाधनानि तत्प्राप्तिसाधनानि वा कर्माणि चक्रुः । ‘ तेऽग्रेपाः ’ इत्युत्तरत्र संबन्धः[3] ॥

ये गोमन्तं वाजवन्तं सुवीरं रयिं धत्थ वसुमन्तं पुरुक्षुम् ।
ते अग्रेपा ऋभवो मन्दसाना अस्मे धत्त ये च रातिं गृणन्ति ॥ १० ॥

ये । गोऽमन्तम् । वाजऽवन्तम् । सुऽवीरम् । रयिम् । धत्थ । वसुऽमन्तम् । पुरुऽक्षुम् ।
ते । अग्रेऽपाः । ऋभवः । मन्दसानाः । अस्मे इति । धत्त । ये । च । रातिम् । गृणन्ति ॥ १० ॥

हे ऋभवः vये यूयं vगोमन्तं vगोसहितं[4] vवाजवन्तम् अन्नवन्तं[5] vसुवीरं शोभनपुत्रोपेतं vवसुमन्तं निवासयोग्यगृहादिधनोपेतं vपुरुक्षुं बहन्नं vरयिं धनं vधत्थ धारयथ मह्यं दातुम्[6]। हे vऋभवः vते यूयम् vअग्रेपाः प्रथमं पातारः vमन्दसानाः माद्यन्तः सन्तः vअस्मे अस्मभ्यं vधत्त दत्त रयिम्[7] । vये vच यूयं vरातिं दानं दत्तं सोमं वा vगृणन्ति स्तुवन्ति । ते[8] धत्त । यद्वा। ये च रातिं गृणन्ति यजमानाः तेभ्योऽपि धत्त ॥

नापाभूत न वोऽतीतृषामानिःशस्ता ऋभवो यज्ञे अस्मिन् ।
समिन्द्रेण मदथ सं मरुद्भिः सं राजभी रत्नधेयाय देवाः ॥ ११ ॥

न । अप । अभूत । न । वः । अतीतृषाम । अनिःऽशस्ताः । ऋभवः । यज्ञे । अस्मिन् ।
सम् । इन्द्रेण । मदथ । सम् । मरुत्ऽभिः । सम् । राजऽभिः । रत्नऽधेयाय । देवाः ॥ ११ ॥

---

१. ख-ग-च-ण-न-फ-भ-स—निर्माणरूपया । २. ख-ग-च-ण-न-प-फ-भ—विरुद्धं कर्म । ३. ख-ग-घ-च-ण-न-प-फ-भ—ये च नरो नेतारः विभ्वः ऋभवः स्वपत्यानि सुप्रजाः चक्रुः ते अग्ने पाहि (अग्रेपाः) इत्युत्तरत्र संबन्धः । ४. ख-ग-च-ण-न-भ-स—गोहितम् । ५. ख-न-स—‘ अन्नवन्तं ’ नास्ति; ग-च-ण-प-फ-भ—बलवन्तम्; त-ल—अन्नवन्तं बलवन्तम् । ६. ख-ग-घ-च-ण-न-प-फ-भ-ल—दत्त; स—ददातु । ७. ख-ग-घ-च-ण-भ-स—‘ रयिं ’ नास्ति; न—ऋषिम् । ८. ख-ग-घ-च-ण-न-प-फ-भ—तेभ्यः ।

हे[1] ऋभवः यूयं[1] नापाभूत नापगच्छत[2]। अपरक्ता न भवत। वयं च वः युष्मान् न अतीतृषाम अत्यन्तं तृषितान् मा करवाम। अतो हे ऋभवः देवाः अनिःशस्ताः अनिन्दिताः सन्तः अस्मिन् यज्ञे इन्द्रेण सं मदथ मरुद्भिः सं मदथ। राजभिः राजमानैरन्यैर्देवैः सं[3] मदथ[3] तृप्ता भवथ। किमर्थम्। रत्नधेयाय रमणीयाय धनदानाय॥ ॥ ४ ॥

'इहोप यात' इति नवर्चं तृतीयं सूक्तं वामदेवस्यार्षं त्रैष्टुभमार्भवम्। 'इहोप नव' इत्यनुक्रमणिका। तृतीयसवने मैत्रावरुणस्येदमुन्नीयमानसूक्तम्। सूत्रितं च—'आ त्वा वहन्त्वसावि देवमिहोप यातेत्यनुसवनम्' (आश्व. श्रौ. ५. ५) इति॥

**इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत।**

**अस्मिन्हि वः सवने रत्नधेयं गमन्त्विन्द्रमनु वो मदासः॥ १॥**

इह। उप। यात। शवसः। नपातः। सौधन्वनाः। ऋभवः। मा। अप। भूत।

अस्मिन्। हि। वः। सवने। रत्नऽधेयम्। गमन्तु। इन्द्रम्। अनु। वः। मदासः॥ १॥

हे शवसो नपातः बलस्य पुत्रास्तस्य न पातयितारो वा हे सौधन्वनाः सुधन्वनः पुत्राः हे ऋभवः यूयम् इहोप यात अस्मिन् तृतीयसवने उपगच्छत। माप भूत अपगता न भवत। अस्मिन् सवने रत्नधेयं रमणीयधनस्य दातारम् इन्द्रमनु[4] अनुसृत्य वः युष्मान् मदासः मदकराः सोमाः गमन्तु गच्छन्तु। अन्विति क्रियया वा संबध्यते। इन्द्रं युष्मांश्चान्वागच्छन्तु इत्यर्थः। हि पूरणः॥

**आगन्नृभूणामिह रत्नधेयमभूत्सोमस्य सुषुतस्य पीतिः।**

**सुकृत्यया यत्स्वपस्यया चँ एकं विचक्र चमसं चतुर्धा॥ २॥**

आ। अगन्। ऋभूणाम्। इह। रत्नऽधेयम्। अभूत्। सोमस्य। सुऽसुतस्य। पीतिः।

सुऽकृत्यया। यत्। सुऽअपस्यया। च। एकम्। विऽचक्र। चमसम्। चतुःऽधा॥ २॥

ऋभूणां युष्माकम् इह तृतीयसवने रत्नधेयं रत्नदानम् आगन् आगच्छतु मह्यम्। यद्वा। युष्माकमेव सोमाख्यं रत्नमागन्[5]। यस्मात् सोमस्य सुषुतस्य पीतिः पानम् अभूत् प्रजापतिना लब्धमित्यर्थः। तदपि कुत इति चेत्। उच्यते। यत् यस्मात् सुकृत्यया शोभनहस्तव्यापारेण स्वपस्यया शोभनरथनिर्माणादिकर्मेच्छया च एकं सन्तं चमसं चतुर्धा विचक्र कृतवन्तः॥

---

१. ख-ग-घ-च-ण-न-भ-स–'हे ऋभवः यूयं' नास्ति। २. ख-ग-घ-च-ण-त-न-भ-ल-स–'नापगच्छत' नास्ति। ३. ख-ग-च-ण-न-भ–'सं मदथ' नास्ति। ४. ख-ग-घ-च-ण-न-भ-ल-स–इन्द्रम्। ५. ख-ग-च-ण-त-न-भ-ल-स–रत्नमागमत्।

व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत ।
अथैत वाजा अमृतस्य पन्थां गणं देवानामृभवः सुहस्ताः ॥ ३ ॥

वि । अकृणोत । चमसम् । चतुःऽधा । सखे । वि । शिक्ष । इति । अब्रवीत ।
अथ । ऐत । वाजाः । अमृतस्य । पन्थाम् । गणम् । देवानाम् । ऋभवः । सुऽहस्ताः ॥ ३ ॥

हे[1] ऋभवो यूयं ᵛचमसं ᵛचतुर्धा ᵛव्यकृणोत व्यकुरुत । कृत्वा च हे ᵛसखे हे सखिभूताग्ने ᵛवि ᵛशिक्ष अनुगृहाण सोमपानम् ᵛइत्यब्रवीत अवदत यूयम् । ᵛअथ सोऽग्निर्युष्मानवादीत् खलु । किमिति । हे ᵛवाजाः ᵛऋभवः ᵛसुहस्ताः कुशलहस्ता यूयम् ᵛअमृतस्य ᵛअमरणधर्मकस्य स्वर्गस्य ᵛपन्थां पन्थानम् ᵛऐत गच्छत । किं तदमृतमिति । ᵛदेवानाम् इन्द्रादीनां ᵛगणं संघातमैत[1] ॥

किंमयः स्विच्चमस एष आस यं काव्येन चतुरो विचक्र ।
अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्य ॥ ४ ॥

किम्ऽमयः । स्वित् । चमसः । एषः । आस । यम् । काव्येन । चतुरः । विऽचक्र ।
अथ । सुनुध्वम् । सवनम् । मदाय । पात । ऋभवः । मधुनः । सोम्यस्य ॥ ४ ॥

ᵛकिंमयः ᵛस्वित् किमात्मकः ᵛएषः ᵛचमसः ᵛआस[2] । स्वित् प्रश्ने । ᵛयं चमसमेकं सन्तं ᵛकाव्येन कवीनां मेधाविनां[3] संबन्धिना कर्मणा कौशलेन ᵛचतुरो ᵛविचक्र कृतवन्तः । ᵛअथ अधुना ᵛसवनम् । सूयते इति सवनः सोमः । तं ᵛमदाय हर्षाय ᵛसुनुध्वं हे ऋत्विजः । हे ᵛऋभवः यूयं च ᵛसोम्यस्य सोमसंबन्धिनं ᵛमधुनः मधुररसं[4] ᵛपात पिबत ॥

शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानम् ।
शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नाः ॥ ५ ॥

शच्या । अकर्त । पितरा । युवाना । शच्या । अकर्त । चमसम् । देवऽपानम् ।
शच्या । हरी इति । धनुऽतरौ । अतष्ट । इन्द्रऽवाहौ । ऋभवः । वाजऽरत्नाः ॥ ५ ॥

---

१. ख-ग-च-न-प-फ-भ-हे वाजाः सुहस्ताः शोभनहस्तोपेताः ऋभवो वो यूयं चमसं चतुर्धा व्यकृणोत व्यकुरुत । कृत्वा च हे सखे सखिभूताग्ने विशिक्षते ( न-भ-विशिक्ष ) अनुग्रहेण सोमपानमिति अब्रवीत् (न-अब्रवीत) अवदत । अथ यूयममृतस्यामरणधर्मकस्य स्वर्गस्य पन्थां पन्थानमभिगच्छत । किं तदमृतमिति देवानामिन्द्रादीनां गणं संघातमैत प्राप्ताः ( न-'प्राप्ताः' नास्ति ) । २. ख-ग-घ-च-ण-न-भ-स-'आस' नास्ति । ३. ख-ग-घ-च-ण-न-भ-स-'मेधाविनां' नास्ति । ४. ख-ण-स-मधुरसम् ।

हे वाजरत्नाः रमणीयसोमान्ना हे ऋभवः यूयं शच्या कर्मणा पितरा मातापितरौ युवाना युवानौ अकर्त अकुरुत । तथा शच्या चमसं देवपानं देवपानार्हम् अकर्त चतुर्धा कुरुतेत्यर्थः । शच्या हरी अश्वौ[1] अतष्ट तक्षणेन संपादितवन्तः । कीदृशौ हरी । धनुतरौ शीघ्रं गन्तृतरौ इन्द्रवाहौ इन्द्रवोढारौ ॥ ॥ ५ ॥

यो वः॑ सु॒नोत्य॑भिपि॒त्वे अह्नां॑ ती॒व्रं वा॑जासः॒ सव॑नं॒ मदा॑य ।
तस्मै॑ र॒यिमृ॑भवः॒ सर्व॑वीर॒मा त॑क्षत वृषणो मन्दसा॒नाः ॥ ६ ॥

यः । वः॒ । सु॒नोति॑ । अ॒भि॒ऽपि॒त्वे । अह्ना॑म् । ती॒व्रम् । वा॒जा॒सः॒ । सव॑नम् । मदा॑य ।
तस्मै॑ । र॒यिम् । ऋ॒भ॒वः॒ । सर्व॑ऽवीरम् । आ । त॒क्ष॒त॒ । वृ॒ष॒णः॒ । म॒न्द॒सा॒नाः॒ ॥ ६ ॥

हे ऋभवः वाजासः अन्नवन्तः वः युष्मभ्यं यः यजमानः अह्नाम् अभिपित्वे अभिपतने। तृतीयसवने इत्यर्थः । तस्मिन् तीव्रं रसवत्तरं सवनम् । सूयते इति सवनः सोमः । तं[2] मदाय सुनोति तस्मै सर्ववीरं बहुपुत्रोपेतं रयिं धनं हे वृषणः फलवर्षितारः मन्दसानाः मोदमानाः सन्तः आ तक्षत संपादयतेत्यर्थः ॥

प्रा॒तः सु॒तम॑पिबो हर्यश्व॒ माध्यं॑दिनं॒ सव॑नं॒ केव॑लं ते ।
समृ॒भुभिः॑ पिबस्व रत्न॒धेभिः॒ सखीँ॒र्याँ इ॑न्द्र चकृ॒षे सु॑कृ॒त्या ॥ ७ ॥

प्रा॒तरिति॑ । सु॒तम् । अ॒पि॒बः॒ । ह॒रि॒ऽअ॒श्व॒ । माध्यं॑दिनम् । सव॑नम् । केव॑लम् । ते॒ ।
सम् । ऋ॒भु॒ऽभिः॑ । पि॒ब॒स्व॒ । र॒त्न॒ऽधेभिः॑ । सखी॑न् । यान् । इ॒न्द्र॒ । च॒कृ॒षे । सु॒ऽकृ॒त्या ॥७॥

हे हर्यश्व हरितवर्णाश्वोपेतेन्द्र प्रातः प्रातःसवने सुतम् अभिषुतं सोमम् अपिबः पिबस्व । माध्यंदिनं सवनं केवलं ते परं तवैव नान्येषाम् । सवनद्वयस्य पृथगभिधानात्तृतीयसवनं परिशिष्यते । तृतीयसवने रत्नधेभिः रमणीयदानैः ऋभुभिः सं पिबस्व । हे इन्द्र यान् ऋभून् सुकृत्या शोभनकर्मणा सखीन् चकृषे अकरोः ॥

ये दे॒वासो॒ अभ॑वता सुकृ॒त्या श्ये॒नाइ॒वेदधि॑ दि॒वि नि॑षे॒द ।
ते रत्नं॑ धात शवसो नपातः॒ सौध॑न्वना॒ अभ॑वता॒मृता॑सः ॥ ८ ॥

ये । दे॒वासः॑ । अभ॑वत । सु॒ऽकृ॒त्या । श्ये॒नाःऽइ॑व । इत् । अधि॑ । दि॒वि । नि॒ऽसे॒द ।
ते । रत्न॑म् । धा॒त॒ । श॒व॒सः॒ । न॒पा॒तः॒ । सौध॑न्वनाः । अभ॑वत । अ॒मृता॑सः ॥ ८ ॥

---

१. न-ल-स-‘ अश्वौ ’ नास्ति । २. ख-ग-च-ण-न-भ-स-‘ तं ’ नास्ति ।

हे ऋभवः ये यूयं सुकृत्या शोभनकर्मणा देवासः देवाः अभवत अभूत । श्येनाइवेत् शंसनीयगतयो गृध्रविशेषा इव दिवि द्युलोके अधि निषेद अधिनिषण्णाः हे शवसो नपातः बलवन्तः ते यूयं रत्नं धनं धात प्रयच्छत । हे सौधन्वनाः सुधन्वनः[1] पुत्राः[1] अमृतासः अमृता देवाः अभवत ॥

**यत्तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।**
**तदृभवः परिषिक्तं व एतत्सं मदेभिरिन्द्रियेभिः पिबध्वम् ॥ ९ ॥**

यत् । तृतीयम् । सवनम् । रत्नऽधेयम् । अकृणुध्वम् । सुऽअपस्या । सुऽहस्ताः ।
तत् । ऋभवः । परिऽसिक्तम् । वः । एतत् । सम् । मदेभिः । इन्द्रियेभिः । पिबध्वम् ॥९॥

हे सुहस्ताः शोभनहस्ताः ऋभवः रत्नधेयं रमणीयसोमदानवत्[2] यत्तृतीयं सवनम् अकृणुध्वं[2] प्रसाधितवन्तः । स्वपस्या शोभनकर्मेच्छया तत् एतत् सवनं सवनगतं सोमद्रव्यं परिषिक्तं परिषेचनवत् वः युष्माकं संबन्धिभिः मदेभिः मादयद्भिः इन्द्रियेभिः इन्द्रियैः सं पिबध्वम् । यद्यपि वदनमेव पानसाधनं तथापि चक्षुःश्रोत्रादीनामपि दर्शनश्रवणादिना तृप्तिसद्भावात् पातृत्वमुपचर्यते ॥  ॥ ६ ॥

'अनश्वो जातः' इति नवर्चं चतुर्थं सूक्तमार्भवम् । ऋषिर्वामदेवः । अन्त्या त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । 'अनश्वोऽन्त्या त्रिष्टुप्' इत्यनुक्रमणिका । आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे आर्भवनिविद्धानीयमिदम् । तथा च सूत्रितम्–'अनश्वो जातः परावतो य इति वैश्वदेवम्' ( आश्व. श्रौ. ७. ७ ) इति ॥

**अनश्वो जातो अनभीशुरुक्थ्यो३ रथस्त्रिचक्रः परि वर्तते रजः ।**
**महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥ १ ॥**

अनश्वः । जातः । अनभीशुः । उक्थ्यः । रथः । त्रिऽचक्रः । परि । वर्तते । रजः ।
महत् । तत् । वः । देव्यस्य । प्रऽवाचनम् । द्याम् । ऋभवः । पृथिवीम् । यत् । च । पुष्यथ ॥१॥

हे ऋभवः अश्विनोः संबन्धी युष्मद्दत्तः रथः अनश्वो जातः वाहनाश्वनिरपेक्षः संपन्नः । तथा अनभीशुः प्रग्रहरहितः[3] उक्थ्यः स्तुत्यः त्रिचक्रः चक्रत्रययुक्तः सन्[4] रजः अन्तरिक्षं परि वर्तते परिभ्रमति । महत् प्रभूतं तत् रथनिर्माणाख्यं कर्म वः युष्माकं देव्यस्य देवत्वस्य प्रवाचनं प्रवक्तृ प्रख्यापकम् । यच्च येन कर्मणा द्यां[5] पृथिवीं च[5] पुष्यथ पुष्टां कुरुथ ॥

---

१. न-ल-स–'सुधन्वनः पुत्राः' नास्ति । २. ख-ग-च-ण-त-न-स–सोमदानवन्तं तृतीयसवनम् अनुकृणुध्वम् ( त–अकृणुध्वम् ) । ३. ल–ग्रहरहितः । ४. ख-ग-च-ण–'सन्' नास्ति । ५. ख-ग-च-ण-न–द्यावापृथिवी वा ( न-च ) ।

रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया ।
ताँ ऊ न्वस्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि ॥ २ ॥

रथम् । ये । चक्रुः । सुऽवृतम् । सुऽचेतसः । अविऽह्वरन्तम् । मनसः । परि । ध्यया ।
तान् । ऊँ इति । नु । अस्य । सवनस्य । पीतये । आ । वः । वाजाः । ऋभवः । वेदयामसि ॥२॥

ᵛसुचेतसः शोभनचित्ताः ᵛये ऋभवः ᵛसुवृतं सुवर्तनचक्रम्[1] ᵛअविह्वरन्तम् अकुटिलं ᵛरथं ᵛमनसः ᵛपरि ᵛध्यया मनसो ध्यानेनाप्रयत्नेन ᵛनु ᵛक्षिप्रं ᵛचक्रुः ᵛतान् । उशब्द एवार्थे । तानेव ᵛअस्य ᵛसवनस्य ᵛपीतये एतं सोमं पातुं हे ᵛवाजाः हे ᵛऋभवः ᵛवः युष्मान् ᵛआ ᵛवेदयामसि आवेदयामः ॥

तद्वो वाजा ऋभवः सुप्रवाचनं देवेषु विभ्वो अभवन्महित्वनम् ।
जिव्री यत्सन्ता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ ॥ ३ ॥

तत् । वः । वाजाः । ऋभवः । सुऽप्रवाचनम् । देवेषु । विऽभ्वः । अभवत् । महिऽत्वनम् ।
जिव्री इति । यत् । सन्ता । पितरा । सनाऽजुरा । पुनः । युवाना । चरथाय । तक्षथ ॥ ३ ॥

हे ᵛवाजाः ᵛऋभवः हे ᵛविभ्वः विभवः । इतरापेक्षया परस्परं बहुवचनमित्युक्तम् । ᵛवः युष्माकं ᵛतत् ᵛमहित्वनं महत्त्वं माहात्म्यं ᵛदेवेषु मध्ये ᵛसुप्रवाचनं प्रवाच्यम् ᵛअभवत् । तदित्युक्तं यदित्याह । ᵛजिव्री वृद्धौ ᵛसन्ता सन्तौ ᵛसनाजुरा सदा जीर्णौ सन्तौ ᵛपितरा पितरौ ᵛपुनर्युवाना नित्यतरुणौ ᵛचरथाय यथेच्छं[2] संचरणाय ᵛतक्षथ संपादितवन्तः ॥

एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गामरिणीत धीतिभिः ।
अथा देवेष्वमृतत्वमानश श्रुष्टी वाजा ऋभवस्तद्व उक्थ्यम् ॥ ४ ॥

एकम् । वि । चक्र । चमसम् । चतुःऽवयम् । निः । चर्मणः । गाम् । अरिणीत । धीतिऽभिः ।
अथ । देवेषु । अमृतऽत्वम् । आनश । श्रुष्टी । वाजाः । ऋभवः । तत् । वः । उक्थ्यम् ॥ ४ ॥

हे ऋभवः ᵛएकं ᵛचमसम् एकमेव सन्तं पानसाधनं चमसं ᵛचतुर्वयम् । वयाः शाखाः । चतुःशाखं चतुरवयवं ᵛवि ᵛचक्र व्यकुरुत । तथा ᵛधीतिभिः कर्मभिः ᵛचर्मणः नूतनां ᵛगां ᵛनिः ᵛअरिणीत समस्कुरुत । निरित्येष समित्येतस्य स्थाने । ᵛअथ अतः कारणात् ᵛदेवेषु मध्ये ᵛअमृतत्वमानश प्राप्नुत । हे ᵛवाजाः हे ᵛऋभवः ᵛतत् तादृशं ᵛवः युष्माकं कर्म । ᵛश्रुष्टी इति क्षिप्रनामैतत् । क्षिप्रम् ᵛउक्थ्यं स्तुत्यं भवति ॥

---

१. ख-ग-च-ण-त-न-भ—सुवर्तनं चक्रम्; स—सुवर्तमानं चक्रम् । २. ख-ग-च-ण-प-फ-भ—' यथेच्छम् ' नास्ति ।

ऋभुतो रयिः प्रथमश्रवस्तमो वाजश्रुतासो यमजीजनन्नरः ।
विभ्वतष्टो विदथेषु प्रवाच्यो यं देवासोऽवथा स विचर्षणिः ॥ ५ ॥

ऋभुतः । रयिः । प्रथमश्रवःऽतमः । वाजऽश्रुतासः । यम् । अजीजनन् । नरः ।
विभ्वऽतष्टः । विदथेषु । प्रऽवाच्यः । यम् । देवासः । अवथ । सः । विऽचर्षणिः ॥ ५ ॥

ˇऋभुतः ऋभूणां सकाशात् ˇप्रथमश्रवस्तमः प्रथमं मुख्यमतिशयितं श्रवः[1] अन्नं यशो वा यस्य धनस्य तत् ˇरयिः धनम् । अस्माकं भवत्विति शेषः । ˇवाजश्रुतासः वाजैः अन्नैः[2] सह[3] विख्याताः[3] ˇनरः नेतारः ऋभवः ˇयं रयिम् ˇअजीजनन् उत्पादितवन्तः । ˇविभ्वतष्टः विभ्वभिर्ऋभुभिस्तष्टः तक्षणसंपन्नश्चमसोऽश्विनो रथो वा ˇविदथेषु यज्ञेषु ˇप्रवाच्यः प्रकर्षेण स्तुत्यः । हे ˇदेवासः द्योतमानाः[4] यूयं ˇयं रथं चमसं वा[4] ˇअवथ रक्षथ । ˇस ˇविचर्षणिः विविधं द्रष्टा भवति द्रष्टव्यो भवतीत्यर्थः ॥ ॥ ७ ॥

स वाज्यर्वा स ऋषिर्वचस्यया स शूरो अस्ता पृतनासु दुष्टरः ।
स रायस्पोषं स सुवीर्यं दधे यं वाजो विभ्वाँ ऋभवो यमाविषुः ॥ ६ ॥

सः । वाजी । अर्वा । सः । ऋषिः । वचस्यया । सः । शूरः । अस्ता । पृतनासु । दुस्तरः ।
सः । रायः । पोषम् । सः । सुऽवीर्यम् । दधे ।
यम् । वाजः । विऽभ्वा । ऋभवः । यम् । आविषुः ॥ ६ ॥

ˇस ˇवाजी वेजनवान् बलवान् सन् ˇअर्वा अरणकुशलो भवति । ˇस ˇऋषिः अतीन्द्रियज्ञानी सन् ˇवचस्यया स्तुत्या युक्तो भवति । ˇस ˇशूरः विक्रान्तः सन् ˇअस्ता क्षेप्ता शत्रूणां भवति । स्वयं च ˇपृतनासु संग्रामेषु ˇदुष्टरः नाभिभाव्यो भवति । ˇसः एव[5] ˇरायस्पोषं धनपुष्टिं ˇदधे धत्ते । ˇस ˇसुवीर्यं सुवीरत्वं दधे धत्ते । ˇयं मनुष्यं ˇवाजो ˇविभ्वा ˇऋभवः च ˇआविषुः अरक्षन् । स एवमेवं भवतीति । अन्त्यस्य बहुवन्निर्देशस्त्रयाणाम् ऋभुव्यवहारप्राचुर्याभिप्रायः[6] ॥

श्रेष्ठं वः पेशो अधि धायि दर्शतं स्तोमो वाजा ऋभवस्तं जुजुष्टन ।
धीरासो हि ष्ठा कवयो विपश्चितस्तान्व एना ब्रह्मणा वेदयामसि ॥ ७ ॥

श्रेष्ठम् । वः । पेशः । अधि । धायि । दर्शतम् । स्तोमः । वाजाः । ऋभवः । तम् । जुजुष्टन ।
धीरासः । हि । स्थ । कवयः । विपःऽचितः । तान् । वः । एना । ब्रह्मणा । आ । वेदयामसि ॥ ७ ॥

---

१. ल–'श्रवः' नास्ति । २. न-ल-स–'अन्नैः' नास्ति । ३. ख-ग-च-ण-न-प-फ-भं–सदसि ख्यातः; घ-स–सदभिख्यातः; त–सदाभिख्यातः । ४. ख-ग-च-ण-प-भ–यं चमसं रथं वा । ५. ख-ग-घ-ण-त-न-भ–दाता; स–तदा । ६. त–ऋभुत्वव्यवहार० ।

ᵛश्रेष्ठम् अत्युत्कृष्टमत एव ᵛदर्शतं दर्शनीयं ᵛवः युष्माकं ᵛपेशः रूपम् ᵛअधि ᵛधायि अधिनिहितम्। अतस्तदुचितो यः ᵛस्तोमः स्तोत्रमस्मत्कृतमस्ति हे ᵛवाजा ᵛऋभवस्तं स्तोमं स्तोत्रं ᵛजुजुष्टन सेवध्वम्। ये यूयं ᵛधीरासो ᵛहि धीमन्तः प्रसिद्धाः ᵛकवयः मेधाविनः ᵛविपश्चितः ज्ञानवन्तः ᵛस्थ भवत[1] ᵛतान्वः युष्मान् ᵛएना एनेन ᵛब्रह्मणा मन्त्रेण शस्त्रात्मकेन ᵛआ ᵛवेदयामसि। अथवोक्तलक्षणाः विपश्चितः स्तोतारो यान्। स्तुवन्तीति शेषः। तान् ब्रह्मणा आ वेदयामसि प्रज्ञापयामः॥

यूयमस्मभ्यं धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणि भोजना।
द्युमन्तं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः॥ ८॥

यूयम्। अस्मभ्यम्। धिषणाभ्यः। परि। विद्वांसः। विश्वा। नर्याणि। भोजना।
द्युऽमन्तम्। वाजम्। वृषऽशुष्मम्। उत्ऽतमम्।
आ। नः। रयिम्। ऋभवः। तक्षत। आ। वयः॥ ८॥

हे ऋभवः ᵛयूयमस्मभ्यं ᵛधिषणाभ्यस्परि स्तुतिभ्यो निमित्तभूताभ्यः। परीति पञ्चम्यर्थानुवादी। यद्वा[2]। अस्मन्मतिभ्योऽधिकानि[2] ᵛनर्याणि नृभ्यो हितानि ᵛविश्वा सर्वाणि ᵛभोजना भोग्यानि ᵛविद्वांसः जानन्तः सन्तः ᵛआ ᵛतक्षत संपादयत[3]। किं च ᵛद्युमन्तं दीप्तिमन्तं हिरण्यादिरूपं ᵛवाजं बलवन्तं ᵛवृषशुष्मं सेक्तॄणां बलवतां शोषकम् ᵛउत्तमं ᵛरयिं ᵛनः अस्माकं ᵛवयः अन्नं च ᵛआ तक्षत हे[4] ᵛऋभवः[4]॥

इह प्रजामिह रयिं रराणा इह श्रवो वीरवत्तक्षता नः।
येन वयं चितयेमात्यन्यान्तं वाजं चित्रमृभवो ददा नः॥ ९॥

इह। प्रऽजाम्। इह। रयिम्। रराणाः। इह। श्रवः। वीरऽवत्। तक्षत। नः।
येन। वयम्। चितयेम। अति। अन्यान्। तम्। वाजम्। चित्रम्। ऋभवः। दद। नः॥९॥

ᵛनः अस्माकम् ᵛइह यज्ञे ᵛरराणाः रममाणाः[5] ᵛप्रजां पुत्रपौत्रादिरूपां[5] ᵛतक्षत संपादयत[6]। ᵛइह एव यज्ञे ᵛरयिं च तक्षत। ᵛइह एव यज्ञे ᵛश्रवः यशः ᵛवीरवत् वीरैर्भृत्यादिभिरुपेतं तक्षत। किंच ᵛवयं ᵛयेन वाजेन ᵛअन्यान् अस्मत्समानान् ᵛअति ᵛचितयेम अतिक्रम्य ज्ञायेमहि। ᵛतं ᵛचित्रं चायनीयं ᵛवाजम् अन्नं हे ᵛऋभवः ᵛनः ᵛदद अस्मभ्यं दत्त॥ ॥ ८॥

---

१. न-ल-स-‘ भवत ’ नास्ति। २. ख-ग-च-ण-न-भ-‘ यद्वा...अधिकानि ’ नास्ति। ३. ख-ग-च-ण-न-भ-‘ संपादयत ’ नास्ति; घ-संपादितवन्तः। ४. ख-ग-च-ण-प-फ-भ-‘ हे ऋभवः ’ नास्ति। ५. ख-ग-च-ण-प-फ-भ-स्तुताः सन्तः प्रजाम्; न-स-‘ रममाणाः...°रूपां ’ नास्ति। ६. ख-ग-च-ग-भ-इह; न-स-‘ संपादयत ’ नास्ति।

'उप नो वाजाः' इत्यष्टर्चं पञ्चमं सूक्तं वामदेवस्यार्षमार्भवं त्रैष्टुभम्। पञ्चम्याद्याश्चतस्रोऽनुष्टुभः। तथा चानुक्रान्तम्—'उप नोऽष्टौ चतुरनुष्टुबन्तम्' इति। व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे आद्याः चतस्रः शस्याः। 'उप नो वाजा इति त्रयोदशार्भवं चतस्रश्च' (आश्व. श्रौ. ८. ८) इति हि सूत्रितम्॥

उप नो वाजा अध्वरमृभुक्षा देवा यात पथिभिर्देवयानैः।
यथा यज्ञं मनुषो विक्ष्वा३सु दधिध्वे रण्वाः सुदिनेष्वह्नाम्॥ १॥

उप। नः। वाजाः। अध्वरम्। ऋभुक्षाः। देवाः। यात। पथिऽभिः। देवऽयानैः।
यथा। यज्ञम्। मनुषः। विक्षु। आसु। दधिध्वे। रण्वाः। सुऽदिनेषु। अह्नाम्॥ १॥

हे[1] वाजाः[1] हे ऋभुक्षाः ऋभवो हे देवाः नः अध्वरं यागम्[2] उप यात उपगच्छत। देवयानैः देवैर्गन्तव्यैः पथिभिः मार्गैः। यथा येन प्रकारेण मनुषः मनोः संबन्धिनीषु आसु विक्षु प्रजासु यजमानेषु मध्ये हे रण्वाः रमणीया ऋभवः[3] अह्नां सुदिनेषु सुदिनत्वनिमित्तेषु यज्ञम् अस्मदीयं दधिध्वे धारयथ। यथा येन प्रकारेण यज्ञमागत्य सुदिनत्वं कुरुथ तथा यज्ञमायातेति॥

ते वो हृदे मनसे सन्तु यज्ञा जुष्टासो अद्य घृतनिर्णिजो गुः।
प्र वः सुतासो हरयन्त पूर्णाः क्रत्वे दक्षाय हर्षयन्त पीताः॥ २॥

ते। वः। हृदे। मनसे। सन्तु। यज्ञाः। जुष्टासः। अद्य। घृतऽनिर्निजः। गुः।
प्र। वः। सुतासः। हरयन्त। पूर्णाः। क्रत्वे। दक्षाय। हर्षयन्त। पीताः॥ २॥

अद्य अस्मिन् यागदिने ते[4] एते[4] यज्ञाः यागसाधनाः सोमाः वो हृदे युष्मद्धृदयाय[5] मनसे तत्प्रीतये सन्तु भवन्तु। अद्यास्मिन् दिने जुष्टासः पर्याप्ताः सोमाः घृतनिर्णिजः मिश्रणद्रव्येण दीप्तरूपाः गुः गच्छन्तु युष्मद्धृदयम्। सुतासः अभिषुताः सोमाः चमसेषु[6] पूर्णाः वः युष्मदर्थं प्र हरयन्त प्रह्रियन्ते। यद्वा। हर्यतेः कान्तिकर्मण इदं रूपम्। प्रकर्षेण वः युष्मान् कामयन्ते। क्रत्वे क्रतवे कर्मणे दक्षाय उत्साहाय[7] पीताः हर्षयन्त हर्षयन्तु॥

त्र्युदायं देवहितं यथा वः स्तोमो वाजा ऋभुक्षणो ददे वः।
जुह्वे मनुष्वदुपरासु विक्षु युष्मे सचा बृहद्दिवेषु सोमम्॥ ३॥

त्रिऽउदायम्। देवऽहितम्। यथा। वः। स्तोमः। वाजाः। ऋभुक्षणः। ददे। वः।
जुह्वे। मनुष्वत्। उपरासु। विक्षु। युष्मे इति। सचा। बृहत्ऽदिवेषु। सोमम्॥ ३॥

१. ख-ग-च-ण-प-फ-भ—'हे वाजाः' नास्ति। २. प-भ—अस्मदीयं यागम्। ३. ख-ग-च-ण-प-फ-भ—वाजाः। ४. ख-ग-च-ण-फ-भ—ते; न-स—एते। ५. न-ल-स—हृदयाय। ६. ख-ग-च-ण-त-न-प-फ-भ—सवनेषु। ७. ख-ग-घ-च-ण-फ-भ—बलाय।

<sup></sup>

ᵛऋयुदायं ऋयुदयं सवनत्रयगमनोपेतं ᵛदेवहितं सोमाख्यमन्नं देवेभ्यो हितं देवैर्वा विहितम्[1] । तृतीयसवनस्थम्[2] इत्यर्थः । तत् ᵛयथा ᵛवः युष्मान् ᵛददे धारयति । हे ᵛवाजाः हे ᵛऋभुक्षणः ऋभवो यथा ᵛस्तोमः स्तोत्रं ᵛवः ददे धारयति । ᵛउपरासु । उप देवयजनसमीपे रमन्ते इत्युपराः । तासु ᵛविक्षु प्रजासु ᵛबृहद्दिवेषु प्रभूतदीप्तिषु देवेषु[3] मध्ये ᵛमनुष्वत् मनुरिव ᵛयुष्मे युष्मदर्थं ᵛसचा सह अनेकग्रहेषु प्रस्थितं ᵛजुह्वे जुहोमि ᵛसोमम् ॥

पीवोअश्वाः शुचद्रथा हि भूतायःशिप्रा वाजिनः सुनिष्काः ।
इन्द्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय ॥ ४ ॥

पीवःऽअश्वाः । शुचत्ऽरथाः । हि । भूत । अयःऽशिप्राः । वाजिनः । सुऽनिष्काः ।
इन्द्रस्य । सूनो इति । शवसः । नपातः । अनु । वः । चेति । अग्रियम् । मदाय ॥ ४ ॥

हे ᵛवाजिनः ऋभवः ᵛपीवोअश्वाः पीवानोऽश्वा येषां ते तादृशाः । तथा ᵛशुचद्रथाः दीप्तरथाः[4] ᵛअयःशिप्राः । 'शिप्रे हनू नासिके वा' । अयोवत्सारभूतशिप्राः[5] ᵛसुनिष्काः शोभनधनाश्च ᵛभूत भवत । हे ᵛइन्द्रस्य ᵛसूनो सूनवः[6] पुत्रवद्रक्षणीया हे ᵛशवसो ᵛनपातः बलस्य पुत्रा बलिनः ᵛवः युष्मभ्यं ᵛमदाय ᵛअनु ᵛचेति अन्वज्ञायि । देवेषु ᵛअग्रियम् अग्रे भवं तृतीयसवनम्[7] ॥

ऋभुमृभुक्षणो रयिं वाजे वाजिन्तमं युजम् ।
इन्द्रस्वन्तं हवामहे सदासातममश्विनम् ॥ ५ ॥

ऋभुम् । ऋभुक्षणः । रयिम् । वाजे । वाजिन्ऽतमम् । युजम् ।
इन्द्रस्वन्तम् । हवामहे । सदाऽसातमम् । अश्विनम् ॥ ५ ॥

हे ᵛऋभुक्षणः ऋभवः ᵛऋभुम् उरुभासमानं ᵛरयिं धनरूपम् । तद्धेतुभूतत्वात् ताच्छब्द्यम् । ᵛवाजे संग्रामे ᵛवाजिन्तमम् अत्यन्तबलवन्तं ᵛयुजं परस्परयोगोपेतम् ᵛइन्द्रस्वन्तम् इन्द्रवन्तमिन्द्रियवन्तं ᵛसदासातमं सर्वदा दातृतमम् ᵛअश्विनम् अश्ववन्तं भवतां गणं ᵛहवामहे आह्वयामि ॥ ॥९॥

सेदृभवो यमवथ यूयमिन्द्रश्च मर्त्यम् ।
स धीभिरस्तु सनिता मेधसाता सो अर्वता ॥ ६ ॥

सः । इत् । ऋभवः । यम् । अवथ । यूयम् । इन्द्रः । च । मर्त्यम् ।
सः । धीभिः । अस्तु । सनिता । मेधऽसाता । सः । अर्वता ॥ ६ ॥

---

१. ख-ग-ण-न-भ-स—हितम् । २. ख-ग-च-ण-ल—तृतीयसवने स्थितम्; भ—तृतीयसवनस्थितम् । ३. ग-च—'देवेषु' नास्ति । ४. ख-ग-च-ण-फ-भ- सुष्ठु रथाः; न-स—सप्त रथाः; प—सुषु रथाः । ५. ख-ग-च-ण-फ-भ—अयोवा सारभूतनासिशिकाः; प—अयोवत् सारभूतनासिकाः । ६. ख-ग-च-ण-प-भ—सूनवः पुत्राः । ७. ख-ग-च-ण-प-फ-भ—तृतीयसवनं हि ।

हे ᵛऋभवः ᵛयूयमिन्द्रश्च ᵛयं ᵛमर्त्यम् ᵛअवथ रक्षथ । ᵛसेत् स एव ᵛअस्तु भवतु[1] । नान्यः श्रेष्ठो भवत्वित्यर्थः । ᵛसः एव ᵛधीभिः कर्मभिः ᵛसनिता संभक्ता भवतु । ᵛमेधसाता मेधसातौ यज्ञे ᵛसः एव ᵛअर्वता अरणवताश्वेन युक्तो भवतु ॥

वि नो॑ वाजा ऋभुक्षणः पथश्चितन यष्टवे ।

अस्मभ्यं॑ सूरयः स्तुता विश्वा आशा॑स्तरीषणि ॥ ७ ॥

वि । नः । वाजाः । ऋभुक्षणः । पथः । चितन । यष्टवे ।

अस्मभ्य॑म् । सूरयः । स्तुताः । विश्वाः । आशाः । तरीषणि ॥ ७ ॥

हे ᵛवाजाः हे ᵛऋभुक्षणः ऋभवः ᵛनः अस्माकं ᵛपथः मार्गान् ᵛयष्टवे यष्टुं यज्ञमार्गान् ᵛवि ᵛचितन विचेतयत । प्रज्ञापयतेत्यर्थः । ᵛअस्मभ्यं हे ᵛसूरयः मेधाविनो यूयं ᵛस्तुताः सन्तः ᵛविश्वा ᵛआशाः सर्वा दिशः ᵛतरीषणि तरीतुम् । सामर्थ्यं वितरतेति शेषः ॥

तं नो॑ वाजा ऋभुक्षण इन्द्र नास॑त्या रयिम् ।

समश्वं॑ चर्षणिभ्य आ पुरु श॑स्त मघत्तये ॥ ८ ॥

तम् । नः । वाजाः । ऋभुक्षणः । इन्द्र॑ । नास॑त्या । रयिम् ।

सम् । अश्व॑म् । चर्षणिऽभ्यः॑ । आ । पुरु । शस्त । मघत्त॑ये ॥ ८ ॥

अनया स्तुतिमुपसंहृत्य[2] अभिमतमाशास्ते । हे ᵛवाजाः हे ᵛऋभुक्षणः ऋभवो हे ᵛइन्द्र हे ᵛनासत्या अश्विनौ ते यूयं ᵛनः अस्मभ्यं ᵛचर्षणिभ्यः मनुष्येभ्यः स्तोतृभ्यः ᵛतं ᵛपुरु प्रभूतं ᵛरयिं धनम् ᵛअश्वं च पुरु प्रभूतं ᵛमघत्तये धनदानाय ᵛसम् ᵛआ ᵛशस्त सम्यगाशासनं कुरुत ॥ ॥ १० ॥

'उतो हि वाम्' इति दशर्चं षष्ठं सूक्तम् । वामदेव ऋषिः । त्रिष्टुप् छन्दः । दधिक्रा देवता । आद्या[2] द्यावापृथिव्या[3] । अत्रानुक्रमणिका—'उतो हि दश दाधिक्रं हि द्यावापृथिव्याद्या' इति । विनियोगो लैङ्गिकः ॥

उतो हि वां॑ दात्रा सन्ति पूर्वा या पूरुभ्य॑स्त्रसद॑स्युर्नितोशे ।

क्षेत्रासां द॑दथुरुर्वरासां घनं दस्यु॑भ्यो अभिभूतिमुग्रम् ॥ १ ॥

उतो इति॑ । हि । वाम् । दात्रा । सन्ति । पूर्वा॑ । या । पूरुऽभ्यः॑ । त्रसद॑स्युः । निऽतोशे ।

क्षेत्रऽसाम् । ददथुः । उर्वराऽसाम् । घनम् । दस्यु॑ऽभ्यः । अभिऽभूतिम् । उग्रम् ॥ १ ॥

---

१. ख-ग-घ-च-ण-न-भ-स—भवति । २. ख-ग-च-ण-फ-भ-स—स्तुतिमुपसंहरन् । ३. ख-ग-ण-भ—आद्या द्यावापृथिव्यौ; घ-च-त-प-फ—आद्यायाः द्यावापृथिव्यौ ।

"उतो इति पूरणः । अस्या द्यावापृथिव्यत्वादत्र तद्वाचकशब्दाभावेऽपि ते एव संबोध्ये । हे द्यावापृथिव्यौ "वां[1] युवाभ्यां सकाशात् "दात्रा दानकर्त्रा पौरुकुत्सेन त्रसदस्युना लब्धानि "पूर्वा पूर्वाणि पुरातनानि पूरकाणि वा धनानि "सन्ति । "या यानि धनानि "पूरुभ्यः अर्थिभ्यो मनुष्येभ्यः[2] "त्रसदस्युः राजा "नितोशे न्यतोशत दत्तवान् । "क्षेत्रसाम् । क्षेत्राणि सर्वा भूमीः सनोतीति क्षेत्रसाः अश्वः । तं "ददथुः[3] । तथा "उर्वरासाम् । उर्वरा सर्वसस्याढ्या भूः । तां सनोतीत्युर्वरासाः पुत्रः । तं ददथुः । "घनं हननार्हम्[4] आयुधं "दस्युभ्यः दस्यूनां वधार्थं च ददथुः । कीदृशमायुधम् । "अभिभूतिम् अभिभवितारम् "उग्रम् उद्गूर्णबलम् । यद्वा । उत्तरार्धमेकं वाक्यम् । दातव्यानि धनान्युक्तलक्षणं पुत्रं च ददथुः । दत्तवत्यौ स्थः । तानि मह्यमपि ददाथाम् इत्यर्थः[5] ॥

**उ॒त वा॒जिनं॑ पुरुनि॒ष्षिध्वा॑नं दधि॒क्रामु॑ ददथुर्वि॒श्वकृ॑ष्टिम् ।**

**ऋ॒जि॒प्यं श्ये॒नं प्रु॑षि॒तप्सु॑मा॒शुं च॒र्कृत्य॑म॒र्यो नृ॒पतिं॒ न शूर॑म् ॥ २ ॥**

उ॒त । वा॒जिन॑म् । पु॒रु॒निः॒ऽसिध्वा॑नम् । द॒धि॒ऽक्राम् । ऊँ इति॑ । द॒द॒थुः॒ । वि॒श्वऽकृ॑ष्टिम् ।

ऋ॒जि॒प्यम् । श्ये॒नम् । प्रु॒षि॒तऽप्सु॑म् । आ॒शुम् । च॒र्कृत्य॑म् । अ॒र्यः । नृ॒ऽपति॑म् । न । शूर॑म् ॥ २ ॥

"उत अपि च "वाजिनं गमनवन्तम् । अश्वरूपं वा देवं अग्नेरश्वरूपस्यैव दधिक्राख्यत्वात्[6] । अग्नेस्तद्रूपत्वं ब्राह्मणे समाम्नातं–' तानग्निरश्वो भूत्वाभ्यद्रवत् ' इति । "पुरुनिष्षिध्वानं पुरूणां बहूनां शत्रूणां निष्षेद्धारं "दधिक्राम् । दधदन्यं धारयन् क्रामतीति दधिक्राः । तमेतन्नामकं[7] देवम् । उः पूरणः । "विश्वकृष्टिम् । विश्वाः कृष्टयो रक्षणीयाः सेवका वा[8] मनुष्या यस्य तम् । "ऋजिप्यम् । ऋजवाप्नोति गच्छतीत्यृजिप्यः । तं "श्येनं शंसनीयगमनं "प्रुषितप्सुं दीप्तरूपम्[9] "आशुं व्याप्तं शीघ्रगमनं वा[10] "अर्यः अरेः "चर्कृत्यं कर्तनशीलं "शूरं "नृपतिं "न राजानमिव स्थितं देवं द्यावापृथिव्यौ "ददथुः धारयतः ॥

**यं सी॒मनु॑ प्र॒वते॑व॒ द्रव॑न्तं॒ विश्वः॑ पू॒रुर्मद॑ति॒ हर्ष॑माणः ।**

**प॒ड्भिर्गृध्य॑न्तं मेध॒युं न शूरं॑ रथ॒तुरं॒ वात॑मिव॒ ध्रज॑न्तम् ॥ ३ ॥**

यम् । सी॒म् । अनु॑ । प्र॒वता॑ऽइव । द्रव॑न्तम् । विश्वः॑ । पू॒रुः । मद॑ति । हर्ष॑माणः ।

प॒ट्ऽभिः । गृध्य॑न्तम् । मे॒ध॒ऽयुम् । न । शूर॑म् । र॒थ॒ऽतुर॑म् । वात॑म्ऽइव । ध्रज॑न्तम् ॥ ३ ॥

"यं दधिक्रां "विश्वः "पूरुः सर्वोऽपि मनुष्यः "हर्षमाणः हृष्यन् हर्षयन् वा "मदति स्तौति । तं देवं द्यावापृथिव्यौ ददथुरिति संबन्धः । स देवो विशेष्यते । "सीं सर्वतः "प्रवतेव[11] प्रवणवता[12] निम्नेन मार्गेणोदकमिवानुक्रमेण "द्रवन्तं गच्छन्तं[13] "पड्भिः पादैः "गृध्यन्तम् अभिकाङ्क्षन्तं दिशो लङ्घितुम् ।

---

१. त–वां युवाम् । २. त–अर्थिमनुष्येभ्यः । ३. ख-ग-च-ण-प-भ–ददथुः ददाथाम् । ४. ख-ग-च-ण-भ–' हननार्हं ' नास्ति; न–घातार्हम् । ५. त–इत्यर्थः । हि पूरणः । ६. ख-ग-च-ण-न-फ-भ–दधिक्राख्या; स–दधिक्राख्यम् । ७. ख-ग-च-न-प-फ-भ-स–तमेकम् । ८. ख-ग-च-ण-न-प-फ-भ–' वा ' नास्ति । ९. ख-ग-च-ण-न-फ-भ-स–दीप्तस्वरूपम् । १०. ख-ग-च-ण-फ-स–च । ११. न-ल-स–प्रवता । १२. च-फ–प्रवणेनेव । १३. ख-ग-च-ण-न-प-फ-भ-स–' गच्छन्तं ' नास्ति ।

तत्र दृष्टान्तः । ᵛमेधयुं ᵛन ᵛशूरं । संग्रामेच्छुं शूरमिव । यद्वा । यज्ञक्रमणेच्छुमध्वर्य्वादिकमिव । ᵛरथतुरं रथेन गच्छन्तं ᵛवातमिव ᵛध्रजन्तं शीघ्रगं[1] वायुमिव । उक्तविशेषविशिष्टान्[2] उदकशूरवायून् यथा सर्वो जनः स्तौति तथा[3] यं[3] देवं स्तौति तं ददथुरित्यर्थः ॥

यः स्मा॑रुन्धा॒नो गध्या॑ स॒मत्सु॒ सनु॑तर॒श्चर॑ति॒ गोषु॒ गच्छ॑न् ।

आ॒विर्ऋ॑जीको वि॒दथा॑ नि॒चिक्य॑त्ति॒रो अ॑र॒तिं पर्याप॑ आ॒योः ॥ ४ ॥

यः । स्म॒ । आ॒ऽरु॒न्धा॒नः । गध्या॑ । स॒मत्ऽसु॑ । सनु॑ऽतरः । चर॑ति । गोषु॑ । गच्छ॑न् ।

आ॒विःऽऋ॑जीकः । वि॒दथा॑ । नि॒ऽचिक्य॑त् । ति॒रः । अ॒र॒तिम् । परि॑ । आप॑ः । आ॒योः ॥४॥

ᵛयः ᵛस्म यः खलु देवः ᵛगध्या गध्यानि । ' गध्यतिर्मिश्रीभावकर्मा ' ( निरु. ५. १५ ) इति निरुक्तम् । मिश्रयितव्यानि फलानि ᵛसमत्सु संग्रामेषु ᵛआरुन्धानः सर्वतो निरोधयन् ᵛसनुतरः संभक्तृतरः ᵛगोषु सर्वासु दिक्षु गोषु वा निमित्तभूतेषु ᵛगच्छन् ᵛआविर्ऋजीकः आविर्भूतसाधनः[4] आविर्भूतसुखो वा ᵛविदथा विदथानि ज्ञातव्यानि ᵛनिचिक्यत् । पश्यतिकर्मैतत् । जानन् ᵛअरतिम् अरमणं दुःखमभिगन्तारम् अरिं[5] वा ᵛपरि सर्वतः ᵛतिरः ᵛचरति तिरस्करोति[5] । कस्यारतिमिति । ᵛआपः व्याप्तस्य[6] स्तोतुः ᵛआयोः मनुष्यस्य यजमानस्य[7] ॥

उ॒त स्मै॑नं वस्त्र॒मथिं॒ न ता॒युमनु॑ क्रोशन्ति क्षि॒तयो॒ भरे॑षु ।

नी॒चाय॑मानं॒ जसु॑रिं॒ न श्ये॒नं श्रव॒श्चाच्छा॑ पशु॒मच्च॑ यू॒थम् ॥ ५ ॥

उ॒त । स्म॒ । ए॒न॒म् । व॒स्त्र॒ऽम॒थिम् । न । ता॒युम् । अनु॑ । क्रो॒श॒न्ति॒ । क्षि॒तय॑ः । भरे॑षु ।

नी॒चा । अय॑मानम् । जसु॑रिम् । न । श्ये॒नम् । श्रव॑ः । च॒ । अच्छ॑ । प॒शु॒ऽमत् । च॒ । यू॒थम् ॥५॥

ᵛउत ᵛस्म अपि खलु ᵛएनं दधिक्रां ᵛभरेषु संग्रामेषु ᵛवस्त्रमथिं ᵛतायुं ᵛन वस्त्रमाथिनं तस्करमिव । तं दृष्ट्वा ᵛक्षितयः मनुष्या यथा ᵛअनु ᵛक्रोशन्ति तद्वद्वैरिणः अनुक्रोशन्ति[8] । किंच ᵛनीचा नीचैः ᵛअयमानं गच्छन्तं ᵛजसुरिं ᵛन ᵛश्येनं क्षुधितं श्येनं पक्षिणमिव[9] । तं यथा दृष्ट्वा पक्षिगः पलायन्ते तद्वत् । ᵛश्रवः अन्नं कीर्तिं वा ᵛपशुमत् ᵛयूथं ᵛच ᵛअच्छ अभिलक्ष्य गच्छन्तमेनमनुक्रोशन्तीति संबन्धः[10] । 'अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् ' ( निरु. ४. २४ ) इत्यादिनिरुक्तमत्रानुसंधेयम् ॥　　॥ ११ ॥

---

१. ख-ग-च-ण-शीघ्रम्; स-शीघ्रगन्तारम् । २ त-उक्तविशेषण० । ३. ख-ग-च-ण-भ-तथाप्ययम्; प-फ-तत्रापि यम् । ४. ख-ग-च-फ-आविर्भूतरथसारथिधनः; न-आविर्भूतधनसाधनः; भ-आविर्भूतनसाधनः; स-आविर्भूतेन साधनेन । ५. ख-ग-च-ण-प-फ-भ-परि तिरश्चरति सर्वतः ( ख-सर्वः ) तिरस्करोति । ६ ख-ग-घ-च-ण-प-फ-भ-आप्तस्य; न-स-वाप्तस्य । ७. त-ल-यजमानस्य । आप इति वा देवताविशेषणम् । अद्भ्यः संभूत इत्यर्थः । ८. ख-ग-घ-च-ण-न-भ-स-क्रोशन्ति । ९. त-श्येनपक्षिणमिव । १०. त-प-संबन्धः । च पूरणः ।

उत स्मासु प्रथमः सरिष्यन्नि वेवेति श्रेणिभी रथानाम् ।
स्रजं कृण्वानो जन्यो न शुभ्वा रेणुं रेरिहत्किरणं ददश्वान् ॥ ६ ॥

उत । स्म । आसु । प्रथमः । सरिष्यन् । नि । वेवेति । श्रेणिऽभिः । रथानाम् ।
स्रजम् । कृण्वानः । जन्यः । न । शुभ्वा । रेणुम् । रेरिहत् । किरणम् । ददश्वान् ॥ ६ ॥

उत स्म अपि च खलु आसु असुरसेनासु[1] सरिष्यन् सर्तुमिच्छन् प्रथमः प्रतमः[2] उत्कृष्टतमो मुख्यः सन् रथानां श्रेणिभिः राजिभिर्युक्तः सन् नि वेवेति नितरां गच्छति । इतस्ततो धावति । क इवेति । उच्यते । स्रजम् । सृज्यते उत्पाद्यते रूपमनयेति स्रगलंकृतिः । तां कृण्वानः कुर्वाणः[3] जन्यो न जनेभ्यो हितोऽश्व इव सुभ्वा । सुष्ठु भवतीति सुभ्वा शोभमानः । किरणम् आस्यगतं खलीनं ददश्वान् दशन्[4] रेणुं स्वपादघातजनितं रेरिहत् भृशं लेढि[5] ॥

उत स्य वाजी सहुरिर्ऋतावा शुश्रूषमाणस्तन्वा समर्ये ।
तुरं यतीषु तुरयन्नृजिप्योऽधि भ्रुवोः किरते रेणुमृञ्जन् ॥ ७ ॥

उत । स्यः । वाजी । सहुरिः । ऋतऽवा । शुश्रूषमाणः । तन्वा । सऽमर्ये ।
तुरम् । यतीषु । तुरयन् । ऋजिप्यः । अधि । भ्रुवोः । किरते । रेणुम् । ऋञ्जन् ॥ ७ ॥

उत अपि च स्यः[6] सः[6] उक्तलक्षणः वाजी वेजनवान् गमनवान् समर्ये समरणे सहुरिः सहनशीलः शत्रूणाम् ऋतावा अन्नवान् तन्वा स्वावयवेन[7] खुरादिना स्वतनुं शुश्रूषमाणः तुरं यतीषु त्वरगामिनीष्वसुरसेनासु तुरयन् त्वरयन् ऋजिप्यः ऋजुगामी रेणुं धूलिम् ऋञ्जन् प्रसाधयंस्तमेव[8] रेणुं भ्रुवोः अधि उपरि किरते विक्षिपति ॥

उत स्मास्य तन्यतोरिव द्योर्ऋघायतो अभियुजो भयन्ते ।
यदा सहस्रमभि षीमयोधीद्दुर्वर्तुः स्मा भवति भीम ऋञ्जन् ॥ ८ ॥

उत । स्म । अस्य । तन्यतोःऽइव । द्योः । ऋघायतः । अभिऽयुजः । भयन्ते ।
यदा । सहस्रम् । अभि । सीम् । अयोधीत् । दुःऽवर्तुः । स्म । भवति । भीमः । ऋञ्जन् ॥ ८ ॥

उत स्म अपि च खलु द्योः दीप्यमानात् तन्यतोः शब्दयितुरशनेः इव ऋघायतः हिंसतः अस्य अस्मात् दधिक्रावाख्यात्[9] देवात् अभियुजः अभियोक्तारोऽसुराः भयन्ते बिभ्यति ।

---

१. त–आसुरसेनासु । २. ख-ग-घ-च-ण-प-फ-भ–‘ प्रतमः ’ नास्ति; न–प्रथतमः । ३. न-ल-स–‘ कुर्वाणः ’ नास्ति । ४. ख-ग-च-ण-भ–‘ दशन् ’ नास्ति । ५. फ–लेलिहन् । ६. ख-ग-च-णं-भ–स्यः; न-स–सः । ७. ख-ग-ण–सस्यावयवेन; च-प-भ–स्वस्यावयवेन; न-स–अस्यावयवेन । ८. ख-ग-च-ण-फ–प्रसाधयंस्तन्वा स्वस्यावयवेन खुरादिनामेव । ९. ख-ग-च-ण-त-न-प-फ-भ-स–‘ दधिक्रावाख्यात् ’ नास्ति ।

किंचायं ᵛयदा ᵛसीं सर्वतः ᵛसहस्रम् ᵛअभि ᵛअयोधीत् संप्रहरेत् । तदा ᵛऋञ्जन् प्रसाधयन्नात्मानं ᵛभीमः भयहेतुः ᵛदुर्वर्तुः[1] दुर्वारश्च ᵛभवति ॥

उत स्मास्य पनयन्ति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः ।
उतैनमाहुः समिथे वियन्तः परा दधिक्रा असरत्सहस्रैः ॥ ९ ॥

उत । स्म । अस्य । पनयन्ति । जनाः । जूतिम् । कृष्टिऽप्रः । अभिऽभूतिम् । आशोः ।
उत । एनम् । आहुः । सम्ऽइथे । विऽयन्तः । परा । दधिऽक्राः । असरत् । सहस्रैः ॥९॥

ᵛउत ᵛस्म अपि च खलु ᵛअस्य दधिक्राव्णः ᵛअभिभूतिम् अभिभवित्रीं ᵛजूतिं पराभिभूतिं चेत्युभयं[2] वा ᵛजनाः[2] ᵛपनयन्ति स्तुवन्ति । कीदृशस्यास्य । ᵛकृष्टिप्रः । कृष्टयो मनुष्याः । तेषां पूरकस्य ᵛआशोः व्याप्तस्य वेगवतो वा । ᵛउत अपि च ᵛएनं ᵛसमिथे संग्रामे ᵛवियन्तः विविधं गच्छन्तो जना अयं ᵛदधिक्राः देवः ᵛसहस्रैः अनुचरैः परिवृतः ᵛपरा ᵛअसरत् इति अस्मान् विहायान्यान् हन्तुं गत इति ᵛआहुः । यद्वा । एनमेवमाहुः । वियन्तः शत्रवः परा । भवन्तीति शेषः । दधिक्राः[3] सहस्रैरसरत् गच्छतीति ॥

पवित्रेष्टौ 'आ दधिक्राः' इति दधिक्राव्णो याज्या । तथा च सूत्रितं-'दधिक्राव्णो अकारिषमा दधिक्राः शवसा पञ्च कृष्टीः' ( आश्व. श्रौ. २. १२ ) इति ॥

आ दधिक्राः शवसा पञ्च कृष्टीः सूर्यइव ज्योतिषापस्ततान ।
सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥ १० ॥

आ । दधिऽक्राः । शवसा । पञ्च । कृष्टीः । सूर्यःऽइव । ज्योतिषा । अपः । ततान ।
सहस्रऽसाः । शतऽसाः । वाजी । अर्वा । पृणक्तु । मध्वा । सम् । इमा । वचांसि ॥ १० ॥

यः ᵛदधिक्राः देवः ᵛशवसा बलेन ᵛपञ्च ᵛकृष्टीः पञ्च जनान् देवमनुष्यासुररक्षःपितृसंज्ञकान् निषादपञ्चमान् चतुरो वर्णान् वा ᵛसूर्यः[4] ᵛज्योतिषा तेजसा यथा जगदावृणोति तद्वत् ᵛअपः उदकानि ᵛआ ᵛततान आतनोति । ᵛसहस्रसाः ᵛशतसाः शतानां सहस्राणां च दाता ᵛवाजी वेजनवान् ᵛअर्वा अरणकुशलः स देवः ᵛमध्वा मधुना मधुरेण फलेन ᵛइमा इमान्युक्तानि स्तुतिवचांसि ᵛसं ᵛपृणक्तु संयोजयतु ॥ ॥ १२ ॥

'आशुं दधिक्राम्' इति षडृचं सप्तमं सूक्तम् । आदितः पञ्च त्रिष्टुभः[5] षष्ठ्यनुष्टुप् । ऋषिर्वामदेवः । पूर्वसूक्ते हीत्युक्तत्वात् 'एतदपि[6] दाधिक्रम्[6]' । तथा चानुक्रान्तम्—'आशुं षळन्त्यानुष्टुप्' इति । सूक्तविनियोगो लैङ्गिकः ॥

---

१. ख-ग-घ-च-ण-प-फ-भ—दुर्वर्तुः स्म । २. ख-ग-फ—चेत्युक्तं यजमानाः; च—चेत्युक्तं ये जनाः; ण-त—चेत्युक्तं य जनाः; न—चेतनां जनाः; प-भ—चेत्युक्तं यं जनाः; स—चेत्युक्तं यं वा जनाः । ३. त—दधिक्राः तु । ४. प— सूर्यइव । ५. ख-ग-च-ण-भ—त्रैष्टुभः । ६. ख-ग-च-ण-फ-भ—देवतापि दधिक्रा ।

आशुं दधिक्रां तमु नु ष्टवाम दिवस्पृथिव्या उत चर्किराम ।
उच्छन्तीर्मामुषसः सूदयन्त्वति विश्वानि दुरितानि पर्षन् ॥ १ ॥

आशुम् । दधिऽक्राम् । तम् । ऊँ इति । नु । स्तवाम । दिवः । पृथिव्याः । उत । चर्किराम ।
उच्छन्तीः । माम् । उषसः । सूदयन्तु । अति । विश्वानि । दुःऽइतानि । पर्षन् ॥ १ ॥

vआशुं शीघ्रगामिनं vतमु तमेव vदधिक्रां देवं vनु क्षिप्रं vस्तवाम । vउत अपि च vदिवः vपृथिव्याः च सकाशादस्य वासं vचर्किराम विक्षिपाम । vउच्छन्तीः तमो विवासयन्तीः vउषसः vमां प्रति vसूदयन्तु रक्षन्तु फलानि । vविश्वानि सर्वाणि vदुरितानि vअति vपर्षन् अतिपारयन्तु । अन्यदेवताकेषु मन्त्रेष्वन्यदेवतास्तुतिस्तासां निपातभाक्त्वान्न विरुध्यते ॥

महश्चर्कर्म्यर्वतः क्रतुप्रा दधिक्राव्णः पुरुवारस्य वृष्णः ।
यं पूरुभ्यो दीदिवासं नाग्निं ददथुर्मित्रावरुणा ततुरिम् ॥ २ ॥

महः । चर्कर्मि । अर्वतः । क्रतुऽप्राः । दधिऽक्राव्णः । पुरुऽवारस्य । वृष्णः ।
यम् । पूरुऽभ्यः । दीदिऽवांसम् । न । अग्निम् । ददथुः । मित्रावरुणा । ततुरिम् ॥ २ ॥

vक्रतुप्राः कर्मणां पूरकोऽहं vमहः[1] महतः[1] vअर्वतः अरणवतः[2] vपुरुवारस्य पुरुभिः[3] बहुभिर्वरणीयस्य vवृष्णः वर्षकस्य vदधिक्राव्णः[4] स्तुतिं vचर्कर्मि अत्यर्थं करोमि । हे vमित्रावरुणा मित्रावरुणौ युवां[5] vततुरिं तारकं[6] vयं[6] vदीदिवांसं vनाग्निं दीप्यमानमग्निमिव स्थितं vपूरुभ्यः मनुष्येभ्यस्तेषामुपकाराय vददथुः[7] धारयथः ॥

यो अश्वस्य दधिक्राव्णो अकारीत्समिद्धे अग्ना उषसो व्युष्टौ ।
अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना सजोषाः ॥ ३ ॥

यः । अश्वस्य । दधिऽक्राव्णः । अकारीत् । सम्ऽइद्धे । अग्नौ । उषसः । विऽउष्टौ ।
अनागसम् । तम् । अदितिः । कृणोतु । सः । मित्रेण । वरुणेन । सऽजोषाः ॥ ३ ॥

vयः यजमानः vअश्वस्य[8] अश्वरूपस्य व्याप्तस्य वा[8] vदधिक्राव्णः स्तुतिम् vउषसो vव्युष्टौ प्रभाते सति vअग्नौ vसमिद्धे सति vअकारीत् अकार्षीत् । vमित्रेण vवरुणेन चाहोरात्राभिमानिदेवाभ्यां

---

१. ख-ग-च-ण-प-फ-भ–' महः महतः ' नास्ति । २. ख-ग-च-ण-प-फ-भ–अरणकुशलस्य । ३. न-ल-स–' पुरुभिः ' नास्ति । ४. ख-ग-च-ण-प-फ-भ-दधिक्राव्णः महः । ५. ख-ग-च-ण-भ–' युवां ' नास्ति । ६. ख-ग-च-ण-प-फ-भ-स–तारयितारम् । ७. प–यं दधिक्रावाणं ददथुः । ८. ख-ग-च-ण-प-फ-भ–अश्वस्याप्तस्य ।

vसजोषाः समानप्रीतिः vअदितिः अखण्डनीयो दधिक्राः vतं यजमानम् vअनागसं पापरहितं[1] vकृणोतु करोतु ॥

दधिक्राव्ण इष ऊर्जो महो यदमन्महि मरुतां नाम भद्रम् ।
स्वस्तये वरुणं मित्रमग्निं हवामह इन्द्रं वज्रबाहुम् ॥ ४ ॥

दधिऽक्राव्णः । इषः । ऊर्जः । महः । यत् । अमन्महि । मरुताम् । नाम । भद्रम् ।
स्वस्तये । वरुणम् । मित्रम् । अग्निम् । हवामहे । इन्द्रम् । वज्रऽबाहुम् ॥ ४ ॥

vइषः अन्नसाधकस्य vऊर्जः बलसाधकस्य vमहः महतः vदधिक्राव्णः देवस्य vमरुतां स्तोतॄणां स्वभूतं vभद्रं[2] कल्याणं[3] vनाम नामरूपमस्ति vयत्* तत्[3] vअमन्महि स्तुमः । किंचात्र[4] निपातभाजो वरुणादींश्च[4] vस्वस्तये क्षेमाय vहवामहे ॥

इन्द्रमिवेदुभये वि ह्वयन्त उदीराणा यज्ञमुपप्रयन्तः ।
दधिक्रामु सूदनं मर्त्याय ददथुर्मित्रावरुणा नो अश्वम् ॥ ५ ॥

इन्द्रम्ऽइव । इत् । उभये । वि । ह्वयन्ते । उत्ऽईराणाः । यज्ञम् । उपऽप्रयन्तः ।
दधिऽक्राम् । ऊँ इति । सूदनम् । मर्त्याय । ददथुः । मित्रावरुणा । नः । अश्वम् ॥ ५ ॥

vइन्द्रमिव एनं दधिक्राम् vउदीराणाः युद्धाय उद्योगं[5] कुर्वन्तः vयज्ञमुपप्रयन्तः यज्ञमुपक्रम्य प्रवर्तमानाश्च vउभये vवि vह्वयन्ते आह्वयन्ति। यं vमर्त्याय मर्त्यस्य vसूदनं प्रेरकम् vअश्वम् अश्वरूपं vदधिक्रां देवं हे vमित्रावरुणा मित्रावरुणौ[6] vनः अस्माकमर्थाय vददथुः धारयथः । तं विह्वयन्ते । उभये इत्यत्र स्तोतृशंसितृभेदेन वा[7] उभयविधत्वम् अवगन्तव्यम्[8] ॥

'दधिक्राव्णो[9] अकारिषम्' इति षष्ठी पवित्रेष्ट्या अनुवाक्या । सूत्रितं च— 'दधिक्राव्णो अकारिषमा दधिक्राः शवसा पञ्च कृष्टीः' (आश्व. श्रौ. २. १२) इति । दधिद्रप्सभक्षणेऽप्येषा । दधिक्राव्णो अकारिषमित्याग्नीध्रीये दधिद्रप्सान् भक्षयन्ति' (आ. श्रौ. ६. १२) इति सूत्रितत्वात्[9] ॥

---

१. ख-ग-च-ण-न-भ-ल-स-'पापरहितं' नास्ति । २. ख-ग-ण-भ-ल-स-'भद्रं' नास्ति । ३. प-कल्याणं यत् नाम नामरूपमस्ति तत । * त-'यत' नास्ति । ४. ख-ग-च-ण-प-फ-भ-किंच वरुणं मित्रमग्निमिन्द्रं कीदृशमिन्द्रं वज्रबाहुं च । ५. घ-ल-स-उद्योगम्; प-उत योग्यम् । ६. न-ल-स-'मित्रावरुणौ' नास्ति । ७. ख-ग-च-ण-न-भ-ल-च । ८. त-अवगन्तव्यम् । इत् उ पूरणौ । ९. न-दधिक्राव्णो अकारिषम् इत्याग्नीध्रीये दधिद्रप्सान् भक्षयन्तीति । दधिक्राव्णो अकारिषम् इत्याग्नीध्रीयं दधिद्रप्सान् प्राश्य इति सूत्रितत्वात् । दशरात्रस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे दधिक्राव्ण इत्येषा । सूत्रितं च । दधिक्राव्णो अकारिषमित्यनुष्टुबिति । पवित्रेष्ट्यां दधिक्रावद्धविषो दधिक्राव्ण इति पुरोऽनुवाक्या । इमा जुह्वाना युष्मदा नमोभिर्दधिक्राव्णो अकारिषमिति सूत्रितत्वात् ।

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।

सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥ ६ ॥

दधिऽक्राव्णः । अकारिषम् । जिष्णोः । अश्वस्य । वाजिनः ।

सुरभि । नः । मुखा । करत् । प्र । नः । आयूंषि । तारिषत् ॥ ६ ॥

दधिक्राव्णः देवस्य स्तुतिम् अकारिषं करवाणि । जिष्णोः जयशीलस्य अश्वस्य व्यापकस्य वाजिनः वेगवतः[1] । स देवः नः अस्माकं मुखा मुखानि चक्षुरादीन्द्रियाणि सुरभि सुरभीणि करत् करोतु । नः अस्मभ्यम् आयूंषि प्र तारिषत् प्रवर्धयतु । प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ ॥१३॥

'दधिक्राव्ण इत्' इति पञ्चर्चमष्टमं सूक्तं वामदेवस्यार्षं दाधिक्रम् । आद्या त्रिष्टुप् शिष्टा जगत्यः । 'हंसः शुचिषत्' इत्येषा[2] सूर्यदेवताका । तथा चानुक्रमणिका—'दधिक्राव्णः पञ्च चतस्रोऽन्त्या जगत्योऽन्त्या सौरी' इति । सूक्तविनियोगो लैङ्गिकः ॥

दधिक्राव्ण इदु नु चर्किराम विश्वा इन्मामुषसः सूदयन्तु ।

अपामग्नेरुषसः सूर्यस्य बृहस्पतेराङ्गिरसस्य जिष्णोः ॥ १ ॥

दधिऽक्राव्णः । इत् । ऊँ इति । नु । चर्किराम । विश्वाः । इत् । माम् । उषसः । सूदयन्तु ।

अपाम् । अग्नेः । उषसः । सूर्यस्य । बृहस्पतेः । आङ्गिरसस्य । जिष्णोः ॥ १ ॥

दधिक्राव्ण इदु एतन्नामकस्य देवस्यैव स्तुतिं नु क्षिप्रं चर्किराम भृशं करवाम । मां विश्वा इत् उषसः सर्वा अपि ताः सूदयन्तु कर्मसु प्रेरयन्तु । अपाम्[3] अग्नेः उषसः सूर्यस्य बृहस्पतेः आङ्गिरसस्य जिष्णोः एतेषां देवतानामहं[3] स्तुतिं करवाणीति शेषः । तासामपि निपातभाक्त्वात् स्तुतिरविरुद्धा ॥

सत्वा भरिषो गविषो दुवन्यसच्छ्रवस्यादिष उषसस्तुरण्यसत् ।

सत्यो द्रवो द्रवरः पतङ्गरो दधिक्रावेषमूर्जं स्वर्जनत् ॥ २ ॥

सत्वा । भरिषः । गोऽइषः । दुवन्यऽसत् । श्रवस्यात् । इषः । उषसः । तुरण्यऽसत् ।

सत्यः । द्रवः । द्रवरः । पतङ्गरः । दधिऽक्रावा । इषम् । ऊर्जम् । स्वः । जनत् ॥ २ ॥

सत्वा गन्ता भरिषः भरणकुशलः गविषः गवां प्रेरकः एष्टा[4] वा[4] दुवन्यसत् । दुवः परिचरणमिच्छन्तो दुवन्याः । तेषु सीदतीति दुवन्यसत् । इषः इष्यमाणायाः उषसः संबन्धिनि काले

---

१. च—अन्नवतः । २. ख-ग-च-ण-त-न-फ-भ-स—इत्येका । ३. न-ल-स—अहमप्यबादिदेवतानाम् । ४. ख-ग-ण-प-फ-भ—'एष्टा वा' नास्ति ।

इत्यर्थः । यद्वा । इषः एष्टा एषणीयो वा । ᵛश्रवस्यात् श्रवस्येत् अन्नमिच्छेत् । किंच ᵛतुरण्यसत्[1] । त्वरया सीदतीति तुरण्यसत्[1] । ᵛसत्यः सत्सु तायमानः[2] ᵛद्रवः गन्ता ᵛद्रवरः प्रकृष्टवेगवान् ᵛपतङ्गरः । पतनेनोत्प्लवनेन पतनं पतङ्गः । तद्वान् पतङ्गरः । उक्तलक्षणः ᵛदधिक्रावा[3] देवः ᵛइषम् अन्नम् ᵛऊर्जं बलं ᵛस्वः स्वर्गं च ᵛजनत् जनयेत् उत्पादयेत् ॥

**उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः ।**

**श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः ॥ ३ ॥**

उत । स्म । अस्य । द्रवतः । तुरण्यतः । पर्णम् । न । वेः । अनु । वाति । प्रऽगर्धिनः ।

श्येनस्यऽइव । ध्रजतः । अङ्कसम् । परि । दधिऽक्राव्णः । सह । ऊर्जा । तरित्रतः ॥३॥

ᵛउत ᵛस्म अपि च खलु ᵛद्रवतः गच्छतः ᵛतुरण्यतः त्वरमाणस्य ᵛप्रगर्धिनः प्रकर्षेणाभिकाङ्क्षतः ᵛअस्य ᵛदधिक्राव्णः[4] देवस्य गतिं ᵛवेः गन्तुः पक्षिणः ᵛपर्णं ᵛन गमनं पत्रं वा अनुसृत्य[5] यथा वान्त्यन्ये[6] पक्षिणस्तद्वत् ᵛअनु ᵛवाति सर्वो वेगवान् जनः । सर्वेषामपि शीघ्रगामीत्यर्थः । किंच ᵛध्रजतः गच्छतः ᵛतरित्रतः तारयतोऽन्यान् ॥ अन्तर्भावितण्यर्थोऽयम् ॥ ᵛश्येनस्येव[7] ᵛअङ्कसं पादाधारम् उरःप्रदेशं[8] वा ᵛपरि परितः ᵛऊर्जा बलेन निमित्तेनान्नार्थं वा ᵛसह एकीभूय । संघेन गच्छन्तीति[9] शेषः ॥

**उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि ।**

**क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥ ४ ॥**

उत । स्यः । वाजी । क्षिपणिम् । तुरण्यति । ग्रीवायाम् । बद्धः । अपिऽकक्षे । आसनि ।

क्रतुम् । दधिऽक्राः । अनु । सम्ऽतवीत्वत् । पथाम् । अङ्कांसि । अनु । आऽपनीफणत् ॥४॥

ᵛउत अपि च ᵛस्यः सः ᵛवाजी वेजनवानश्वरूपो देवः ᵛग्रीवायां गरणसाधनायां कण्ठे ᵛबद्धः ᵛअपिकक्षे कक्षप्रदेशे ᵛआसनि आस्ये च बद्धः । बद्धपल्यङ्कस्योक्तेषु स्थानेषु पाशबन्धाः संभवन्ति । एवं बद्धः[10] सन्[10] ᵛक्षिपणिं क्षेपणम् ᵛअनु ᵛतुरण्यति त्वरयति गन्तुम् । किंचायं ᵛदधिक्राः देवः ᵛक्रतुं कर्म प्रज्ञां वा ᵛअनु अनुसृत्य ᵛसंतवीत्वत् प्रवृद्धबलवान्[11] सन् ᵛपथां मार्गाणाम् ᵛअङ्कांसि कुटिलानि अनुसृत्य ᵛआपनीफणत् सर्वतो भृशं गच्छति ॥ फणतेर्गत्यर्थस्य यङ्लुकि इदं रूपम् ॥ ‘ अपि स वाजी वेजनवान् ’ ( निरु. २.२८ ) इत्यादि निरुक्तमनुसंधेयम् ॥

---

१. ख-ग-घ-ण-भ–तुरण्यसत् त्वरया सीदतीति; त-न-ल-स–‘ तुरण्यसत्... तुरण्यसत् ’ नास्ति । २. ख-ण-प-भ–स्तूयमानः; ग-फ–सूयमानः । ३. ख-ग-ण–दधिक्रा । ४. न-ल-स–‘ दधिक्राव्णः ’ नास्ति । ५. ख-प-फ-भ–अनु । ६. ख-फ-भ–वात्येति । ७. त-ल–श्येनस्येव तस्य देवस्य । ८. ख-फ–उरुप्रदेशम् । ९. ख-ल–गच्छतीति । १०. ख-घ-ण–बलवान् । ११. ग-स–प्रवृद्धः बलवान् ।

दशरात्रे षष्ठेऽहनि तृतीयसवने मैत्रावरुणशस्त्रे[1] ' हंसः शुचिषत् ' इत्येषा । ' आहूय दूरोहणं रोहेद्धंसः शुचिषदिति पच्छोऽर्धर्चशः ' ( आश्व. श्रौ. ८. २ ) इति सूत्रम् । स्मार्तविनियोगमाह शौनकः—' हंसः शुचिषदित्यृचा शुचिरीक्षेद्दिवाकरम्[2] । अन्तकाले जपन्नेति ब्रह्मणः सद्म शाश्वतम् ' ( ऋग्वि. २. १३ ) इति ॥

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ५ ॥

हंसः । शुचिऽसत् । वसुः । अन्तरिक्षऽसत् । होता । वेदिऽसत् । अतिथिः । दुरोणऽसत् ।
नृऽसत् । वरऽसत् । ऋतऽसत् । व्योमऽसत् ।
अप्ऽजाः । गोऽजाः । ऋतऽजाः । अद्रिऽजाः । ऋतम् ॥ ५ ॥

अनया* सौर्यर्चा ' य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः ' ( छा. उ. १.६. ६ ) इत्यादिश्रुत्युक्तो मण्डलाभिमानी देवोऽस्ति यश्च सर्वप्राणिचित्तरूपस्थितः परमात्मा यच्च निरस्तसमस्तोपाधिकं परं ब्रह्म तत्सर्वमेकमेवेति प्रतिपाद्यते ॥ ^v^हंसः । हन्तिर्गत्यर्थः । सर्वत्र सर्वदा गन्ता[3] ' योऽहं[3] सोऽसौ ' इत्यादिश्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्ममन्त्रप्रतिपाद्य आदित्यः । स च शुचौ दीप्ते द्युलोके सीदतीति ^v^शुचिषत् । ' अथ यदतः परो दिवो ज्योतिर्दीप्यते ' ( छा. उ. ३. १३. ७ ) इत्यादिश्रुतेः । अनेन द्युस्थानः आदित्यः प्रतिपादितः । स एव मध्यस्थानो वायुरित्याह । ^v^वसुः सर्वस्य वासयिता वायुः । स च ^v^अन्तरिक्षसत् अन्तरिक्षसंचारी । अथ तस्यैव क्षितिस्थानवैदिकाग्निरूपतामाह । ^v^होता देवानामाह्वाता होमनिष्पादको वा[4] ^v^वेदिषत् वेद्यां गार्हपत्यादिरूपेण स्थितः[5] । ^v^अतिथिः अतिथिवत् सर्वदा पूज्योऽग्निः । ^v^दुरोणसत् । दुरोणं[6] गृहनाम । तत्र पाकादिसाधनत्वेन स्थितः । अनेन लौकिकाग्न्यात्मकत्वमुक्तम् । ^v^नृषत् । नृषु मनुष्येषु चैतन्यरूपेण[7] सीदतीति नृषत् । अनेन परमात्मरूपत्वमुक्तम् । पुनरप्यादित्यात्मतामाह । ^v^वरसत् । वरे वरणीये मण्डले सीदतीति वरसत् आदित्यः । ' वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति ' ( ४. २० ) इति हि श्रूयते । ऋतं सत्यं ब्रह्म यज्ञो वा । तत्र सीदतीति ^v^ऋतसत् अग्निः । व्योमान्तरिक्षम् । तत्र सीदतीति ^v^व्योमसत् वायुः । इदानीमादित्यतोच्यते । ^v^अब्जाः उदकेषु जातः । उदकमध्ये खल्वयं जायते । ^v^गोजाः गोषु रश्मिषु

---

१. न-°शस्त्रे वालखिल्ये । २. ख-ग-ण-न-फ-भ-स—शुचिरीक्ष्य दिवाकरम् । * प—पुस्तकेऽस्य मन्त्रस्य भाष्यमेवं दृश्यते—हे ( ? ) हंसः सर्वगन्ता सूर्यः शुचिषत् शुचौ दीप्ते द्युलोके सीदति । वसुः सर्वस्य वासयिता वायुः । अन्तरिक्षसत् स एव अन्तरिक्षे वायुरूपेण संचरति । होता देवानामाह्वाताग्निः । वेदिषत् स एव वेद्यां गार्हपत्यादिरूपेण स्थितः अतिथिः अतिथिवत् सर्वदा पूज्योऽग्निः । दुरोणसत् दुरोणेषु गृहेषु स एव लौकिकाग्निरूपेण स्थितः । नृषत् नृषु मनुष्येषु जठराग्निस्वरूपेण स्थितः । वरसत् वरणीये मण्डले स्थितः । ऋतसत् ऋते यज्ञे स्थितः । व्योमसत् व्योमनि वैद्युताग्निरूपेण स्थितः । अब्जाः उदके वडवाग्निरूपेण स्थितः । गोजाः गोषु रश्मिषु सवितुः प्रकाशेषु उदयति ( ? ) ऋतजाः सर्वैः दृश्यत्वेन सत्यजातः । अद्रिजाः अद्रौ उदयाचले प्रादुर्भूतः । ऋतं सत्यं तद्रूपेण स्थितः । ३. ख-ग-ण-भ—गन्ताहं सोऽहं सूर्योऽहम् । ४. ख-ग-ण-भ—अग्निः । ५. ख-ग-च-ण—आस्थितः । ६. त—दुरोण इति । ७. ख-ग-च-ण-न-फ-भ-स—चित्स्वरूपेण; घ—जठराग्निरूपेण ।

जातः । ऋतं सत्यम् । सर्वैर्द्दश्यत्वेन सत्यजातः[1] । न ह्यसाविन्द्रादिवत् परोक्षो भवति । यद्वा । उदकेषु वैद्युतरूपेण वा वाडवरूपेण वा जातः । vअद्रिजाः अद्रावुदयाचले जातः । एवं महानुभाव आदित्यः vऋतं सत्यमबाध्यं[2] सर्वाधिष्ठानं ब्रह्मतत्त्वम् । तद्रूपो ह्यसावेव । आदित्यस्योक्तरूपत्वं 'हंसः शुचिषदित्येष वै हंसः शुचिषत्' (ऐ. ब्रा. ४. २०) इत्यादिना ब्राह्मणे समाम्नातम् ॥ ॥ १४ ॥

'इन्द्रा को वाम्' इत्येकादशर्चं नवमं सूक्तं वामदेवस्यार्षं त्रैष्टुभमैन्द्रावरुणम् । अत्रानुक्रमणिका— 'इन्द्रा को वामेकादशैन्द्रावरुणं तु' इति । आभिप्लविकेषूक्थ्येषु तृतीयसवने मैत्रावरुणशस्त्रेषु स्तोमवृद्धावावापार्थमेतदादिसूक्तद्वयम् । 'इन्द्रा को वामिति सूक्ते' (आश्व. श्रौ. ७.९) इति सूत्रितत्वात् ॥

इन्द्रा को वां वरुणा सुम्नमाप स्तोमो हविष्माँ अमृतो न होता ।
यो वां हृदि क्रतुमाँ अस्मदुक्तः पस्पर्शदिन्द्रावरुणा नमस्वान् ॥ १ ॥

इन्द्रा । कः । वाम् । वरुणा । सुम्नम् । आप । स्तोमः । हविष्मान् । अमृतः । न । होता ।
यः । वाम् । हृदि । क्रतुऽमान् । अस्मत् । उक्तः । पस्पर्शत् । इन्द्रावरुणा । नमस्वान् ॥१॥

हे vइन्द्रा हे vवरुणा हे इन्द्रावरुणौ । परस्परापेक्षया द्विवचनम् । vवां युवयोः vसुम्नं सुखं vकः vस्तोमो vहविष्मान् हविर्भिरुपेतः सोमाज्यादिप्रदेयद्रव्योपेतं कतमत् स्तोत्रं सुम्नम् vआप । फलकत्वेन प्राप्नुयादित्यर्थः । यद्वा । हविष्मानित्येतदुत्तरत्र योज्यम् । हविष्मान् हविर्युक्तः vअमृतः अमरणलक्षणः स्वर्गसाधनः[3] vहोता अग्निरिव[3] । स यथा तथा vयः[4] स्तोमो हे इन्द्रावरुणौ vवां युवयोः vहृदि हृदये vक्रतुमान् प्रज्ञोपेतः[5] vअस्मत् अस्मत्सकाशात् vउक्तः उदितः[6] vनमस्वान् हविष्मान् नमस्कारोपेतो वा vपस्पर्शत् स्पृशेत्[7] हृदयंगमो भवेत् । स क इति स्तोमप्रशंसा ॥

इन्द्रा ह यो वरुणा चक्र आपी देवौ मर्तः सख्याय प्रयस्वान् ।
स हन्ति वृत्रा समिथेषु शत्रूनवोभिर्वा महद्भिः स प्र शृण्वे ॥ २ ॥

इन्द्रा । ह । यः । वरुणा । चक्रे । आपी इति । देवौ । मर्तः । सख्याय । प्रयस्वान् ।
सः । हन्ति । वृत्रा । समऽइथेषु । शत्रून् । अवःऽभिः । वा । महत्ऽभिः । सः । प्र । शृण्वे ॥२॥

vइन्द्रा vवरुणा इन्द्रावरुणौ vदेवौ । हशब्दः[8] पूरणः प्रसिद्धौ वा[8] । vयः vमर्तः मरणधर्मा vप्रयस्वान् हविर्लक्षणान्नवान् सन् vसख्याय सखित्वाय vआपी[9] बन्धू vचक्रे करोति[9] । vसः मर्तः vवृत्रा आवरकाणि पापानि vहन्ति । तथा vसमिथेषु संग्रामेषु vशत्रून् हन्ति । वाशब्दश्चार्थे । vमहद्भिः vअवोभिः रक्षणैः[10] vसः नरः vप्र vशृण्वे[10] प्रकृष्टं श्रूयते विख्यातो भवति ।

---

१. त—सत्याज्जातः । २. ख-ग-च-ण-भ—सत्यं वाबाध्यम्; फ—सत्यं वावाच्यम् । ३. ख-ग-च-ण-प-फ-भ—अमृतः मरणरहितः होता न स्वर्गसाधनभूतोऽग्निरिव । ४. ख-ग-घ-च-ण-न-स—अयम् । ५. ख-प-फ-भ—यज्ञोपेतः । ६. ख-ग-च-ण-फ-भ—अभिहितेन; त-प—अभिहितः; न-स—हिते । ७. ख-ग-च-ण-फ-भ—स्पृशेदेव । ८. ख-ग-च-ण-न-स—'हशब्दः ... वा' नास्ति । ९. ख-ग-च-ण-फ-भ—आपी चक्रे सबन्धू चक्रे; प—आपी चक्रे बन्धु (न्धू) चक्रे । १०. ख-ग-च-ण-प-फ-ण—रक्षणैश्च प्रशृण्वे ह्व ।

इन्द्रा ह रत्नं वरुणा धेष्ठेत्था नृभ्यः शशमानेभ्यस्ता ।
यदी सखाया सख्याय सोमैः सुतेभिः सुप्रयसा मादयैते ॥ ३ ॥

इन्द्रा । ह । रत्नम् । वरुणा । धेष्ठा । इत्था । नृऽभ्यः शशमानेभ्यः । ता ।
यदि । सखाया । सख्याय । सोमैः । सुतेभिः । सुऽप्रयसा । मादयैते इति ॥ ३ ॥

हे[1] इन्द्रावरुणौ ᵛता[2] । ᵛह इति प्रसिद्धौ । तौ खलु देवौ ᵛइत्था इत्थं ᵛनृभ्यः मनुष्येभ्यः ᵛशशमानेभ्यः शंसमानेभ्यः[3] स्तोतृभ्योऽस्मभ्यं ᵛरत्नं रमणीयं धनं ᵛधेष्ठा दातृतमौ । भवत इति शेषः । ᵛयदि ᵛसखाया परस्परं यजमानस्य वा सखिभूतौ ᵛसख्याय सखिकर्मणे सखित्वाय ᵛसुतेभिः अभिषुतैः ᵛसोमैः ᵛसुप्रयसा शोभनसोमान्नवन्तौ ᵛमादयैते माद्येताम्[4] । तर्हि रत्नानां दातारौ भवतः ॥

इन्द्रा युवं वरुणा दिद्युमस्मिन्नोजिष्ठमुग्रा नि वधिष्टं वज्रम् ।
यो नो दुरेवो वृकतिर्दभीतिस्तस्मिन्मिमाथामभिभूत्योजः ॥ ४ ॥

इन्द्रा । युवम् । वरुणा । दिद्युम् । अस्मिन् । ओजिष्ठम् । उग्रा । नि । वधिष्टम् । वज्रम् ।
यः । नः । दुःऽएवः । वृकतिः । दभीतिः । तस्मिन् । मिमाथाम् । अभिऽभूति । ओजः ॥ ४ ॥

हे ᵛइन्द्रा इन्द्रौ ᵛवरुणा वरुणौ हे[5] ᵛउग्रा उग्रौ । अत्र सर्वत्र परस्परापेक्षया द्विवचनं ' प्र मित्रयोर्वरुणयोः ' (ऋ. सं. ७.६६.१) इतिवत् । यद्वा । छान्दसत्वात् व्यवहितस्यापि[6] आनङ् । ᵛअस्मिन् शत्रौ ᵛदिद्युं दीप्तम् ᵛओजिष्टम् अतिशयेन तेजोवत्[7] ᵛवज्रम्[7] आयुधं ᵛनि ᵛवधिष्टम् । वधार्थं प्रेरयतमित्यर्थः । ᵛयः शत्रुः ᵛनः अस्माकं ᵛदुरेवः दुष्प्रापः ᵛवृकतिः अतिशयेनादाता ᵛदभीतिः हिंसकः ᵛतस्मिन् शत्रौ ᵛअभिभूति अभिभावुकम् ᵛओजः बलं ᵛयुवं[8] युवां[8] ᵛमिमाथां कुरुतमित्यर्थः ॥

इन्द्रा युवं वरुणा भूतमस्या धियः प्रेतारा वृषभेव धेनोः ।
सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ५ ॥

इन्द्रा । युवम् । वरुणा । भूतम् । अस्याः । धियः । प्रेतारा । वृषभाऽइव । धेनोः ।
सा । नः । दुहीयत् । यवसाऽइव । गत्वी । सहस्रऽधारा । पयसा । मही । गौः ॥ ५ ॥

---

१. न-ल-स–' हे ' नास्ति । २. त–ता ह । ३. ख-ग-च-ण-न-भ-स–' शंसमानेभ्यः ' नास्ति । ४. ख-ग-च-ण-स–' माद्येतां ' नास्ति । ५. ख-ग-च-ण-न-भ–' हे ' नास्ति । ६. ख-ण-च-ण-न-भ-स–व्यवहितस्य; त-ल–व्यवहितेऽपि । ७ ख-ग-ण-भ–ओजोवन्तं दिद्युं दीप्तम्; त–तेजोवन्तं वज्रम्; च-फ–ओजोवन्तं दिद्युं दीप्तं वज्रम् । ८. ख-ण-भ–युवम्; न-ल-स–' युवं युवां ' नास्ति; प–इव ।

हे इन्द्रा वरुणा इन्द्रावरुणौ युवं युवाम् अस्या धियः स्तुत्याः प्रेतारा प्रीणयितारौ भूतं भवतम् । वृषभा सेक्तारौ वृषभौ धेनोः इव । सा स्तुतिरूपा धेनुः नः अस्माकं दुहीयत् दुह्येत् । कामान् पूरयेत् । यवसा तृणादिघासेन[1] निमित्तेन[1] गत्वी[2] गत्वा पयसा सहस्रधारा मही महती गौः इव ॥　　॥ १५ ॥

तोके हिते तनय उर्वरासु सूरो दृशीके वृषणश्च पौंस्ये ।
इन्द्रा नो अत्र वरुणा स्यातामवोभिर्दस्मा परितक्म्यायाम् ॥ ६ ॥

तोके । हिते । तनये । उर्वरासु । सूरः । दृशीके । वृषणः । च । पौंस्ये ।
इन्द्रा । नः । अत्र । वरुणा । स्याताम् । अवःऽभिः । दस्मा । परिऽतक्म्यायाम् ॥ ६ ॥

हे[3] इन्द्रावरुणौ देवौ नः हिते तोके पुत्रे तनये तत्पुत्रे[4] च उर्वरासु सस्याढ्यासु भूमिषु निमित्तभूतासु सूरः प्रेरकस्य सूर्यस्य दृशीके चिरकालदर्शनाय । चिरजीवनायेत्यर्थः । तथा[5] वृषणः सेक्तुर्मम पौंस्ये च[6] पुंस्त्वाय च पुनरपि प्रजननसामर्थ्याय च दस्मा शत्रूणां हिंसकौ सन्तौ[7] नः अस्माकम् अवोभिः रक्षणैः सह[8] परितक्म्यायां परितकने[9] निमित्तभूते सति । यद्वा रात्रिनामैतत् । रात्रौ हिंसकानां वधाय स्यातां भवेताम् ॥

युवामिद्ध्यवसे पूर्व्याय परि प्रभूती गविषः स्वापी ।
वृणीमहे सख्याय प्रियाय शूरा मंहिष्ठा पितरेव शंभू ॥ ७ ॥

युवाम् । इत् । हि । अवसे । पूर्व्याय ।
परि । प्रभूती इति प्रऽभूती । गोऽइषः । स्वापी इति सुऽआपी ।
वृणीमहे । सख्याय । प्रियाय । शूरा । मंहिष्ठा । पितराऽइव । शंभू इति शम्ऽभू ॥ ७ ॥

हे इन्द्रावरुणौ गविषः गा इच्छन्तो वयं युवामित् । हि इति पादपूरणः । युवामेव पूर्व्याय पुरातनाय युवाभ्यां कृताय अवसे रक्षणाय । वृणीमहे इति संबन्धः । प्रभूती प्रभवन्तौ स्वापी शोभनबन्धुभूतौ । आपिरिति बन्धुनाम[10] । यद्वा । सुष्टु व्यापनशीलौ शूरा विक्रान्तौ मंहिष्ठा अतिशयेन पूज्यौ युवां सख्याय समानख्यानाय प्रियाय च परि वृणीमहे परितः प्रार्थयामहे । शंभू सुखस्य भावयितारौ पितरेव पितरौ पुत्राय तद्वत् ॥

---

१. प–तृणादिनिमित्तेन । २. त-ल-गत्वी गमनशीला । ३. न-ल-स–'हे' नास्ति । ४. च–च पौत्रे । ५. ख-ग-च-ण-न-भ-स–'तथा' नास्ति । ६. ख-ग-च-ण-न-भ-स–'च' नास्ति । ७. त–तौ । ८. प-भ-सह अत्र । ९. त–परितस्तकने । १०. ख-ग-च-ण-भ–बन्धुः ।

ता वां धियोऽवसे वाजयन्तीराजिं न जग्मुर्युवयूः सुदानू ।
श्रिये न गाव उप सोममस्थुरिन्द्रं गिरो वरुणं मे मनीषाः ॥ ८ ॥

ताः । वाम् । धियः । अवसे । वाजऽयन्तीः ।
आजिम् । न । जग्मुः । युवऽयूः । सुदानू इति सुऽदानू ।
श्रिये । न । गावः । उप । सोमम् । अस्थुः । इन्द्रम् । गिरः । वरुणम् । मे । मनीषाः ॥८॥

"सुदानू शोभनफलदातारौ हे देवौ "वां युवां "वाजयन्तीः रत्नमिच्छन्त्यः[1] "धियः स्तुतयः "जग्मुः गच्छन्ति। "युवयूः युवां कामयमानाः पदातयः[2] "अवसे रक्षणाय[2] "आजिं "न संग्राममिव। किंच "श्रिये दध्यादिश्रयणाय "गावः "सोमं "न सोममिव "इन्द्रं "वरुणं च "मे मदीयाः "मनीषाः मनस[3] ईश्वराः[3] "गिरः[4] स्तुतयः "उप "अस्थुः तिष्ठन्ति प्रीणयन्तीत्यर्थः ॥

इमा इन्द्रं वरुणं मे मनीषा अग्मन्नुप द्रविणमिच्छमानाः ।
उपेमस्थुर्जोष्टारइव वस्वो रघ्वीरिव श्रवसो भिक्षमाणाः ॥ ९ ॥

इमाः । इन्द्रम् । वरुणम् । मे । मनीषाः । अग्मन् । उप । द्रविणम् । इच्छमानाः ।
उप । ईम् । अस्थुः । जोष्टारःऽइव । वस्वः । रघ्वीःऽइव । श्रवसः । भिक्षमाणाः ॥ ९ ॥

"इन्द्रं "वरुणं च "मे मम "मनीषाः स्तुतयः[5] "द्रविणमिच्छमानाः सत्यः[6] "उप "अग्मन् उपगच्छन्ति। "जोष्टारः सेवकाः "वस्वः धनस्य लाभाय धनिकं[7] स्वामिनम्[7] "इव। "रघ्वीरिव लघ्व्य इव शीघ्रगामिन्य इव "श्रवसः अन्नस्य अन्नं "भिक्षमाणाः एनमिन्द्रं[8] वरुणं च "उप "अस्थुः उपतिष्ठन्ते ॥

अश्व्यस्य त्मना रथ्यस्य पुष्टेर्नित्यस्य रायः पतयः स्याम ।
ता चक्राणा ऊतिभिर्नव्यसीभिरस्मत्रा रायो नियुतः सचन्ताम् ॥ १० ॥

अश्व्यस्य । त्मना । रथ्यस्य । पुष्टेः । नित्यस्य । रायः । पतयः । स्याम ।
ता । चक्राणौ । ऊतिऽभिः । नव्यसीभिः । अस्मऽत्रा । रायः । निऽयुतः । सचन्ताम् ॥१०॥

"अश्व्यस्य अश्वसमूहस्य "रथ्यस्य रथरूपस्य[9] रथार्हस्य वा "पुष्टेः पोषस्य "नित्यस्य अविचलितस्य "रायः धनस्य "त्मना[10] आत्मना स्वयमेवाप्रयत्नेन[10] "पतयः "स्याम। "ता तौ देवौ "चक्राणा

---

१. प–अन्नमिच्छन्त्यः। २. त–'पदातयः ... रक्षणाय' नास्ति। ३. ख-ग-च-ण-फ–मनसा इषाः; प-भ–मनस ईषाः। ४. ख-प-फ-भ–गिरयः ताः; ग-च-ण–गिरः ताः। ५. ख-प-फ-भ–इमाः स्तुतयः। ६. ख-ग-च-ण-न-भ-स–सन्तः। ७. ख-ग-च-ण-प-फ-भ–अधिकं स्वामिनाम्। ८. ख-फ-भ–ईमेनम्। ९. त–रथसमूहरूपस्य। १०. ख-ग-च-ण-न-भ-स–'त्मना ... ॰प्रयत्नेन' नास्ति।

चङ्क्रममाणौ[1] गन्तारौ । भवतमिति[2] शेषः । नव्यसीभिः नूतनाभिः ऊतिभिः रक्षाभिः अस्मत्रा अस्मासु नियुतः अश्वाः रायः धनानि च सचन्तां सेवन्ताम् ॥

आ नो बृहन्ता बृहतीभिरूती इन्द्र यातं वरुण वाजसातौ ।
यद्दिद्यवः पृतनासु प्रक्रीळान्तस्य वां स्याम सनितार आजेः ॥ ११ ॥

आ । नः । बृहन्ता । बृहतीभिः । ऊती । इन्द्र । यातम् । वरुण । वाजऽसातौ ।
यत् । दिद्यवः । पृतनासु । प्रऽक्रीळान् । तस्य । वाम् । स्याम । सनितारः । आजेः ॥ ११ ॥

हे बृहन्ता महान्तौ हे इन्द्र हे वरुण बृहतीभिः महतीभिः ऊती ऊतिभिः रक्षाभिः सह आ यातम् आगच्छतम् । वाजसातौ[3] संग्रामेऽन्नलाभनिमित्तभूते वा यत् यस्मिन्नाजौ संग्रामे पृतनासु सेनासु दिद्यवः । आयुधनामैतत् । आयुधानि शत्रुसंबन्धीनि प्रक्रीळान् प्रक्रीडन्ते । तस्य तादृशस्य आजेः युद्धस्य[4] सनितारः संभक्तारः स्याम भवेम । वां युवयोरनुग्रहात् ॥　　॥ १६ ॥

'मम द्विता' इति दशर्चं दशमं सूक्तम् । पुरुकुत्सस्य पुत्रस्त्रसदस्यू राजर्षिः[5] । आद्यासु षट्स्वात्मनः स्तुत्यत्वात् आत्मा देवता । अवशिष्टानां चतसृणामिन्द्रावरुणौ देवता । त्रिष्टुप् छन्दः । अत्रानुक्रमणिका—'मम द्विता दश त्रसदस्युः पौरुकुत्स्यः षळाद्या आत्मस्तवः' इति । उक्तो विनियोगः पूर्वसूक्ते ॥

मम द्विता राष्ट्रं क्षत्रियस्य विश्वायोर्विश्वे अमृता यथा नः ।
क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥ १ ॥

मम । द्विता । राष्ट्रम् । क्षत्रियस्य । विश्वऽआयोः । विश्वे । अमृताः । यथा । नः ।
क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥ १ ॥

क्षत्रियस्य क्षत्रियजात्युत्पन्नस्य[6] विश्वायोः कृत्स्नमनुष्याधीशस्य । मम इत्यात्मनो निर्देशः । द्विता क्षितिस्वर्गभेदेन द्वित्वापन्नं राष्ट्रम् । मम त्रसदस्योः विश्वे सर्वे अमृताः देवाः यथा नः अस्माकं[7] भवन्ति तथा राष्ट्रं प्रजाश्चेत्यर्थः । वरुणस्य वारकस्य वरुणात्मनो वा कृष्टेः मनुष्यस्य तद्वतो वा उपमस्य । अन्तिकनामैतत् । सर्वेषामन्तिकतमस्य वव्रेः । रूपनामैतत् । रूपवतो मम क्रतुं कर्म सचन्ते सेवन्ते देवाः सर्वेऽपि । अहं च राजामि । राजतिरैश्वर्यकर्मा[8] । सर्वेश्वरः[9] भवामि । यद्वा । उपमस्य वव्रेः कृष्टे राजामीति योज्यम् ॥

---

१. ख-ग-च-ण-भ—चक्रमाणौ; घ-न-ल-स—चक्रममाणौ । २. ख-ग-च-ण-भ-स—अवतमिति । ३. ख-ग-च-ण-फ-भ—ततोऽस्मदीये वाजसातौ; प—नोऽस्मदीये वाजसातौ । ४. न-ल-स—'युद्धस्य' नास्ति । ५. च-प-फ—राजर्षिः ऋषिः । ६. ख-ग-च-ण-प-फ-भ-स—जात्युत्पन्नस्य । ७. प—अस्मदीयाः । ८. ख-ग-च-ण-फ-भ—सर्वैश्वर्यकर्मा । ९. त—सर्वस्येश्वरः ।

अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयन्त ।
क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः ॥ २ ॥

अहम् । राजा । वरुणः । मह्यम् । तानि । असुर्याणि । प्रथमा । धारयन्त ।
क्रतुम् । सचन्ते । वरुणस्य । देवाः । राजामि । कृष्टेः । उपमस्य । वव्रेः ॥ २ ॥

अहम् एव च राजा वरुणः भवामि । मह्यं मदर्थमेव प्रथमा मुख्यानि तानि प्रसिद्धानि असुर्याणि असुरविघातकानि बलानि धारयन्त । अधारयन् देवाः । शिष्टं गतम् ॥

अहमिन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके ।
त्वष्टेव विश्वा भुवनानि विद्वान्त्समैरयं रोदसी धारयं च ॥ ३ ॥

अहम् । इन्द्रः । वरुणः । ते इति । महिऽत्वा ।
उर्वी इति । गभीरे इति । रजसी इति । सुमेके इति सुऽमेके ।
त्वष्टाऽइव । विश्वा । भुवनानि । विद्वान् । सम् । ऐरयम् । रोदसी इति । धारयम् । च ॥ ३ ॥

अहं त्रसदस्युः इन्द्रः इन्द्रोऽप्यस्मि । अहं वरुणः च । ते[1] महित्वा महित्वेन उर्वी विस्तीर्णे गभीरे दुरवगाहे अवकाशवत्यौ वा सुमेके सुरूपे रजसी[2] द्यावापृथिव्यौ[3] ते अप्यहमेव । विद्वान् जानन्नहं त्वष्टेव प्रजापतिरिव विश्वा भुवनानि सर्वाणि भूतानि समैरयं संप्रैरयम् । रोदसी द्यावापृथिव्यौ धारयं च धृतवानस्मि[3] ॥

अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य ।
ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु प्रथयद्वि भूम ॥ ४ ॥

अहम् । अपः । अपिन्वम् । उक्षमाणाः । धारयम् । दिवम् । सदने । ऋतस्य ।
ऋतेन । पुत्रः । अदितेः । ऋतऽवा । उत । त्रिऽधातु । प्रथयत् । वि । भूम ॥ ४ ॥

अहम् एव उक्षमाणाः सिञ्चतीः अपः अपिन्वम् असेचयम् । तथा ऋतस्य उदकस्य आदित्यस्य वा सदने स्थाने निमित्ते[4] सति दिवं द्युलोकं धारयम् । यद्वा । उदकाधारे स्थाने

---

१. त-ये । २. त-रजसी राजमाने रोदसी । ३. ख-ग-च-ण-प-फ-भ-राजमाने रोदसी द्यावापृथिव्यौ धारयन् च धृतवानस्मि । किंच ( प-किंचित् ) विद्वान् त्वष्टेव प्रजापतिरिव विश्वा सर्वाणि भुवनानि समैरयं प्रेरयामि । ४. त-निमित्तभूते ।

दिवमादित्यं धारयम् । अहमेव ऋतेन उदकेन निमित्तेन अदितेः पुत्रः ऋतावा[1] अभूवम् । उत अपि च भूम व्याप्तमाकाशं त्रिधातु त्रिप्रकारं वि विशेषेण प्रथयत् । मदर्थमेव[2] क्षित्यादिलोकत्रयमकार्षीत्[3] परमेश्वरः ॥

**मां नरः स्वश्वा वाजयन्तो मां वृताः समरणे हवन्ते ।**
**कृणोम्याजिं मघवाहमिन्द्र इयर्मि रेणुमभिभूत्योजाः ॥ ५ ॥**

माम् । नरः । सुऽअश्वाः । वाजयन्तः । माम् । वृताः । सम्ऽअरणे । हवन्ते ।
कृणोमि । आजिम् । मघऽवा । अहम् । इन्द्रः । इयर्मि । रेणुम् । अभिभूतिऽओजाः ॥ ५ ॥

मां मामेव स्वश्वाः शोभनाश्वाः वाजयन्तः संग्राममिच्छन्तः नरः नेतारो भटाः । अनुगच्छन्ति इति शेषः । माम् एव[4] वृताः सन्तः समरणे संग्रामे हवन्ते आह्वयन्ति युद्धार्थम् । मघवा धनवान् अहमिन्द्रः सन् आजिं रणं[5] कृणोमि करोमि । अभिभूत्योजाः परेषाम्[6] अभिभावि-बलोऽहं रेणुम् इयर्मि प्रेरयामि ॥ ॥ १७ ॥

**अहं ता विश्वा चकरं नकिर्मा दैव्यं सहो वरते अप्रतीतम् ।**
**यन्मा सोमासो ममदन्यदुक्थोभे भयेते रजसी अपारे ॥ ६ ॥**

अहम् । ता । विश्वा । चकरम् । नकिः । मा । दैव्यम् । सहः । वरते । अप्रतिऽइतम् ।
यत् । मा । सोमासः । ममदन् । यत् । उक्था ।
उभे इति । भयेते इति । रजसी इति । अपारे इति ॥ ६ ॥

अहं त्रसदस्युः ता तानि प्रसिद्धानि विश्वा सर्वाणि चकरम् अकार्षम् । अप्रतीतम् अप्रतिगतं मा मां दैव्यं सहः[7] देवसंबन्धि सहो बलं नकिः वरते नैव वारयति । यत् यस्मात् सोमासः सोमाः मा मां ममदन् अमदयन्[8] । यत् च[9] उक्था शस्त्राण्यपि समदन् तस्मात् मत्तः अपारे दूरपारे[10] उभे[11] रजसी द्यावापृथिव्यौ[12] भयेते चलतः[13] ॥

**विदुष्टे विश्वा भुवनानि तस्य ता प्र ब्रवीषि वरुणाय वेधः ।**
**त्वं वृत्राणि शृण्विषे जघन्वान्त्वं वृताँ अरिणा इन्द्र सिन्धून् ॥ ७ ॥**

विदुः । ते । विश्वा । भुवनानि । तस्य । ता । प्र । ब्रवीषि । वरुणाय । वेधः ।
त्वम् । वृत्राणि । शृण्विषे । जघन्वान् । त्वम् । वृतान् । अरिणाः । इन्द्र । सिन्धून् ॥७॥

---

१. त–ऋतावा यज्ञवान् । २. ख-ग-च-ण-प-फ-भ-स–समर्थमेव । ३. च-फ–°लोकत्रयमपि प्रख्यापयत् । ४. ख-ग-च-ण-फ–मामेव । ५. न-ल-स–' रणं ' नास्ति । ६. ख-ग-च-ण-प-भ–अन्येषाम्; स–एषाम् । ७. त–' सहः ' नास्ति । ८. त–अमादयन् । ९. ख-ग-च-न-प-भ–यस्मात् । १०. ख-ग-घ-च-प-फ-भ–अदूरे पारे; न–अदूरे; स–दूरे पारे । ११. ख-ग-च-ण-भ–उभे तु । १२. ख-ग-च-ण-प-भ–द्यावापृथिव्यौ उभे । १३. ल–बिभ्य(भी)तः ।

इतः परमिन्द्रावरुणयोः स्तुतिः । हे वरुण तस्य ते । कर्मणि षष्ठी । तं[1] त्वां विश्वा सर्वाणि ता तानि भुवनानि भूतजातानि विदुः जानन्ति । हे वेधः । स्तोतृनामैतत् । हे स्तोतः वरुणाय प्र ब्रवीषि वरुणं स्तौषि । हे इन्द्र त्वं वृत्राणि वैरिणः जघन्वान् हतवानिति शृण्विषे श्रूयसे । किंच हे इन्द्र त्वं वृतान् आच्छन्नान्[2] सिन्धून् स्यन्दनस्वभावानप्संघान्[3] अरिणाः अगमयः ॥

अस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमाने ।

त आयजन्त त्रसदस्युमस्या इन्द्रं न वृत्रतुरमर्धदेवम् ॥ ८ ॥

अस्माकम् । अत्र । पितरः । ते । आसन् । सप्त । ऋषयः । दौःऽगहे । बध्यमाने ।

ते । आ । अयजन्त । त्रसदस्युम् । अस्याः । इन्द्रम् । न । वृत्रऽतुरम् । अर्धऽदेवम् ॥८॥

पुरुकुत्सस्य महिषी दौर्गहे बन्धनस्थिते[4] । पत्यावराजकं[5] दृष्ट्वा राष्ट्रं पुत्रस्य[6] लिप्सया ॥ यदृच्छया समायातान् सप्तर्षीन्पर्यपूजयत् । ते च प्रीताः पुनः[7] प्रोचुर्यजेन्द्रावरुणौ भृशम् ॥ सा चेन्द्रावरुणाविष्ट्वा त्रसदस्युमजीजनत् । इतिहासमिमं जानन्नृषिर्ब्रूते ऋचाविह[8] ॥ अथ अस्माकमत्र अस्मिन्नराजके देशेऽस्यां पृथिव्यां वा[9] पितरः पालयितारः उत्पादकाः[10] ते आसन् अभवन् । एते सप्त ऋषयः प्रसिद्धाः दौर्गहे दुर्गहस्य पुत्रे पुरुकुत्से बध्यमाने दृढं पाशैर्यस्मात् अस्याः अस्यै पुरुकुत्सान्यै त्रसदस्युम् आयजन्त प्रादुरिन्द्रावरुणयोरनुग्रहात । कीदृशं तम् । वृत्रतुरं वृत्रस्य शत्रोर्हन्तारम् अर्धदेवं देवानामर्धे[11] समीपे वर्तमानम् । यद्वा । देवानामर्धभूतम् इन्द्रं न इन्द्रमिव स्थितं पुत्रं दत्तवन्तः । ' यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः ' ( तै. सं. ५. ४. ८. ३ ) इति तैत्तिरीयकम् ॥

पुरुकुत्सानी हि वामदाशद्धव्येभिरिन्द्रावरुणा नमोभिः ।

अथा राजानं त्रसदस्युमस्या वृत्रहणं ददथुरर्धदेवम् ॥ ९ ॥

पुरुऽकुत्सानी । हि । वाम् । अदाशत् । हव्येभिः । इन्द्रावरुणा । नमःऽभिः ।

अथ । राजानम् । त्रसदस्युम् । अस्याः । वृत्रऽहनम् । ददथुः । अर्धऽदेवम् ॥ ९ ॥

हे इन्द्रावरुणौ[12] पुरुकुत्सानी पुरुकुत्सस्य पत्नी ऋषिप्रेरिता वां युवाम् अदाशत हि अप्रीणयत्[13] खलु । हव्येभिः हविर्भिः नमोभिः स्तुतिभिश्च । अथ राजानं त्रसदस्युं वृत्रहणम् अर्धदेवम् उक्तलक्षणं पुत्रम् अस्याः अस्यै पुरुकुत्सान्यै ददथुः दत्तवन्ताविति ॥

---

१. ख-ग-च-ण-भ-' तं ' नास्ति । २. ख-ग-च-ण-प-भ-आवृतान् । ३. ख-ग-च-फ-स्यन्दनस्वभावान् मेघान् अप्सुतान्; ण-स-स्यन्दनस्वभावान् अप्सुतान्; प-सिन्धून् मेघान् अप्सुतान् । ४. ख-ग-त-भ-बन्धने स्थिते; ण-बन्धने स्थाने । ५. ख-ग-च-ण-प-फ-भ-अराजकम्; न-म-अपि सा । ६. ख-ग-च-ण-प-फ-भ-पुरुकुत्सस्य । ७. ख-ग-च-ण-भ-प्रति° । ८. ख-ग-च-ण-प-फ-द्वृचाविति; न-भ-स-द्वृचादिति । ९. ख-ग-च-ण-न-भ-स-च । १०. ख-ग-च-ण-प-फ-भ-' उत्पादकाः ' नास्ति । ११. ख-ग-च-ग-न-प-फ-भ-स-देवानां मध्ये । १२. च-फ-भ-इन्द्रावरुणा इन्द्रावरुणौ । १३. ख-ग-च-ण-त-न-प-फ-भ-स-प्रीणयति ।

राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः ।
तां धेनुमिन्द्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् ॥ १० ॥

राया । वयम् । ससऽवांसः । मदेम । हव्येन । देवाः । यवसेन । गावः ।
ताम् । धेनुम् । इन्द्रावरुणा । युवम् । नः । विश्वाहा । धत्तम् । अनपऽस्फुरन्तीम् ॥१०॥

<sup>v</sup>राया धनेन <sup>v</sup>मदेम <sup>v</sup>ससवांसः युवां[1] संभक्तारः <sup>v</sup>वयम् । <sup>v</sup>हव्येन <sup>v</sup>देवाः मोदन्तु[2] <sup>v</sup>यवसेन च[3] <sup>v</sup>गावः । <sup>v</sup>तां <sup>v</sup>धेनुं प्रीणयित्रीं रयिं हे इन्द्रावरुणौ <sup>v</sup>विश्वाहा विश्वस्य हन्तारौ <sup>v</sup>युवं युवां <sup>v</sup>नः अस्माकं <sup>v</sup>धत्तं दत्तम् । कीदृशीम् । <sup>v</sup>अनपस्फुरन्तीम् अनवहिंसिताम् । यद्वा । विश्वाहेत्यव्ययम् । सर्वदेत्यर्थः ॥　　॥ १८ ॥

' क उ श्रवत् ' इति सप्तर्चमेकादशं सूक्तम् । सुहोत्रपुत्रौ पुरुमीळ्हाजमीळ्हावृषी । त्रिष्टुप् छन्दः । अश्विनौ देवता । अत्रानुक्रमणिका—' क उ श्रवत्सप्त पुरुमीळ्हाजमीळ्हौ सौहोत्रौ त्वाश्विनं हि ' इति । प्रातरनुवाकाश्विनशस्त्रयोराश्विने क्रतौ त्रैष्टुभे छन्दसीदमादिके द्वे सूक्ते । ' धेनुः प्रत्नस्य क उ श्रवत् ' ( आश्व. श्रौ. ४. १५ ) इति सूत्रितत्वात् ॥

क उं श्रवत्कतमो यज्ञियानां वन्दारु देवः कतमो जुषाते ।
कस्येमां देवीममृतेषु प्रेष्ठां हृदि श्रेषाम सुष्टुतिं सुहव्याम् ॥ १ ॥

कः । ऊँ इति । श्रवत् । कतमः । यज्ञियानाम् । वन्दारु । देवः । कतमः । जुषाते ।
कस्य । इमाम् । देवीम् । अमृतेषु । प्रेष्ठाम् । हृदि । श्रेषाम । सुऽस्तुतिम् । सुऽहव्याम् ॥१॥

<sup>v</sup>यज्ञियानां यज्ञार्हाणां देवानां मध्ये <sup>v</sup>क <sup>v</sup>उ देवः <sup>v</sup>श्रवत् शृणुयात् स्तुतिम् । <sup>v</sup>कतमः देवः <sup>v</sup>वन्दारु वन्दनशीलं स्तोत्रम् । <sup>v</sup>कतमः <sup>v</sup>देवः <sup>v</sup>जुषाते सेवते । <sup>v</sup>कस्य <sup>v</sup>हृदि <sup>v</sup>इमां <sup>v</sup>प्रेष्ठां प्रियतरां <sup>v</sup>देवीं द्योतमानां <sup>v</sup>सुहव्यां शोभनान्नोपेतां शोभनैर्हविर्भिर्युक्तां वा <sup>v</sup>सुष्टुतिं शोभनां[4] स्तुतिम्[4] <sup>v</sup>अमृतेषु मध्ये <sup>v</sup>श्रेषाम श्लेषयेम श्राययेम[5] वा । अश्विनावन्तरेण स्तुतेः को देवः स्वामी भवेदिति ॥

को मृळाति कतम आगमिष्ठो देवानामु कतमः शंभविष्ठः ।
रथं कमाहुर्द्रवदश्वमाशुं यं सूर्यस्य दुहितावृणीत ॥ २ ॥

कः । मृळाति । कतमः । आऽगमिष्ठः । देवानाम् । ऊँ इति । कतमः । शम्ऽभविष्ठः ।
रथम् । कम् । आहुः । द्रवत्ऽअश्वम् । आशुम् । यम् । सूर्यस्य । दुहिता । अवृणीत ॥ २ ॥

---

१. ख-ग-घ-च-ण-प-फ-भ-हविषाम्;　न-' युवां ' नास्ति ।　२. त-मोदन्ते ।　३. ख-ग-च-ण-न-भ-स-' च ' नास्ति ।　४ ल-' शोभनां स्तुतिं ' नास्ति ।　५. त-' श्राययेम ' नास्ति ।

ˇको ˇमृळाति को देवो मृड्डाति[1] सुखयेत् अस्मान्। ˇकतमः देवः ˇआगमिष्ठः आगन्तृतमः अस्मद्यज्ञं प्रति। ˇदेवानामु देवानां मध्ये ˇकतमः देवः ˇशंभविष्ठः सुखस्य भावयितृतमः। एवमुक्तगुणविशिष्टः को भवेत् अश्विनावन्तरेणेति भावः। ˇकं ˇरथं ˇद्रवदश्वमाशुम्[2] ˇआहुः ब्रुवते। ˇयं रथं ˇसूर्यस्य ˇदुहिता सूर्यस्य पत्नी ˇअवृणीत समभजत्। तं कं रथं वेगवन्तमाहुः॥

मक्षू हि ष्मा गच्छ॑थ ईव॑तो द्यूनिन्द्रो न शक्तिं परि॑तक्म्यायाम्।
दिव आजा॑ता दि॒व्या सु॑प॒र्णा कया॒ शची॑नां भवथः शचि॑ष्ठा॥ ३॥

मक्षु। हि। स्म। गच्छ॑थः। ईव॑तः। द्यून्। इन्द्रः॑। न। शक्तिम्। परि॑ऽतक्म्यायाम्।

दिवः। आऽजा॑ता। दि॒व्या। सुऽप॒र्णा। कया॑। शची॑नाम्। भवथः। शचि॑ष्ठा॥ ३॥

ˇमक्षु शीघ्रम्। ˇहि ˇस्म इति पूरणौ। ˇईवतः गमनवत आगामिनः ˇद्यून् दिवसान् सुत्यासंबन्धिनः प्रति ˇगच्छथः। ˇइन्द्रः ˇशक्तिं ˇन स्वकीयां शक्तिं यथा ˇपरितक्म्यायां रात्रावतीतायाम्। प्रदर्शयतीति शेषः। सुत्याहन्युषःकाले इन्द्रो यथा गच्छति तद्वत् युवामपि[3] गच्छतमित्यर्थः[3]। ˇदिवः द्युलोकात् ˇआजाता आगतौ ˇदिव्या दिवि भवौ ˇसुपर्णा शोभनगमनौ युवां ˇशचीनां युष्मत्संबन्धिनां कर्मणां शक्तीनां वा मध्ये ˇकया शच्या ˇशचिष्ठा शक्तिमत्तरौ शोभनकर्मवन्तौ वा ˇभवथः॥

का वां॑ भूदुप॑मातिः कया॑ न आश्विना गमथो हूयमा॑ना।
को वां॑ म॒हश्चि॒त्त्यज॑सो अ॒भीक॑ उरुष्यतं॑ माध्वी दस्रा न ऊ॒ती॥ ४॥

का। वाम्। भूत्। उप॑ऽमातिः। कया॑। नः। आ। अश्विना। गमथः। हूयमा॑ना।

कः। वाम्। महः। चित्। त्यज॑सः। अभीके॑।

उरुष्यत॑म्। माध्वी इति॑। दस्रा। नः। ऊती॥ ४॥

ˇवां युवयोः ˇका ˇउपमातिः। उप समीपे मातिर्मानं गुणानां परिच्छित्तिर्यस्यां सा स्तुतिः का ˇभूत् भवेत्। ˇकया स्तुत्या ˇहूयमाना[4] आहूयमानौ सन्तौ ˇनः अस्मान् ˇआ ˇगमथः आगच्छथः। ˇवां युवयोः ˇअभीके आसन्नप्रदेशे ˇमहश्चित् महतः ˇत्यजसः। त्यज्यते परित्यज्यते सर्वैरिति त्यजः क्रोधः। तस्य सोढा ˇकः भवेत्। हे ˇमाध्वी[5] मधुररसस्योदकस्य स्रष्टारौ हे ˇदस्रा शत्रूणामुपक्षपयितारौ अश्विनौ ˇनः अस्मान् ˇऊती ऊत्या रक्षया[6] ˇउरुष्यतम्। रक्षाकर्मैतत्। रक्षतम्॥

१. त–मृळाति मृळयेत्। २. त-ल–द्रवदश्वमाशुं च। ३. ख-ग-घ-च-ण-भ–युवामागच्छतमित्यर्थः। ४. ख-ण-फ-भ–हूयमाना हूयमानौ; ग-च–हूयमाना ह्वयमानौ; न-ल-स–हूयमानौ। ५. ग-च-ण-भ–माध्वी मधु। ६. ख-ग-घ-च-ण-त-प–रक्षणाय; भ-ल-स–रक्षणया।

उरु वां रथः परि नक्षति द्यामा यत्समुद्रादभि वर्तते वाम् ।
मध्वा माध्वी मधु वां प्रुषायन्यत्सीं वां पृक्षो भुरजन्त पक्काः ॥ ५ ॥

उरु । वाम् । रथः । परि । नक्षति । द्याम् । आ । यत् । समुद्रात् । अभि । वर्तते । वाम् ।
मध्वा । माध्वी इति । मधु । वाम् । प्रुषायन् । यत् । सीम् । वाम् । पृक्षः । भुरजन्त । पक्काः ॥५॥

हे अश्विनौ ^वां ^रथः ^द्यां ^परि द्युलोकस्य परितः ^उरु प्रभूतं ^नक्षति गच्छति । ^यत् यस्मात् ^आ अर्वाक् ^समुद्रात् समुद्द्रवणसाधनादन्तरिक्षात् ^वां प्रति ^अभि ^वर्तते आभिमुख्येन गच्छति । हे ^माध्वी उक्तलक्षणौ[1] ^मध्वा मधुरेण पयसा ^मधु मधुरं सोमरसं[2] ^प्रुषायन् सिञ्चन्त्यध्वर्यवः । ^यत् यस्मात् ^सीं सर्वतः ^वां ^पृक्षः युवयोः सोमं ^पक्काः पक्का यवाः ^भुरजन्त प्राप्नुवन्ति[3] । तस्मादभिवर्तते वामिति ॥

सिन्धुर्ह वां रसया सिञ्चदश्वान्घृणा वयोऽरुषासः परि ग्मन् ।
तदू षु वामजिरं चेति यानं येन पती भवथः सूर्यायाः ॥ ६ ॥

सिन्धुः । ह । वाम् । रसया । सिञ्चत् । अश्वान् । घृणा । वयः । अरुषासः । परि । ग्मन् ।
तत् । ऊँ इति । सु । वाम् । अजिरम् । चेति । यानम् । येन । पती इति । भवथः । सूर्यायाः ॥६॥

^वां युवयोः[4] ^अश्वान् ^सिन्धुः स्यन्दमानो मेघ उदकं वा ^रसया रसेन ^सिञ्चत् असेचयत् । ^घृणा दीप्त्या[5] ^वयः पक्षिसदृशा वेतारः[6] वा अश्वाः ^अरुषासः आरोचमानाः सन्तः ^परि परितः ^ग्मन् गच्छन्ति । ^वां ^यानं गमनसाधनं प्रसिद्धो रथः ^अजिरम् । क्षिप्रनामैतत्[7] । ^सु सुष्ठु ^चेति ज्ञायते । ^येन रथेन ^सूर्यायाः ^पती पालयितारौ वोढारौ ^भवथः सः[8] रथश्चेतीति ॥

इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ ७ ॥

इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना ।
उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥ ७ ॥

हे अश्विनौ ^यत्[9] यस्मात् । यया वा सुमत्या[9] । ^इहेह अस्मिन्नेव यज्ञे ^समना समानमनस्कौ । सदृशावित्यर्थः । तौ ^वां युवां सुमत्या[10] ^पपृक्षे स्तुत्या संयोजयामि । ^सेयम् इदानीं क्रियमाणा

---

१. ख-ग-उक्तलक्षणौ मधुरस्य सोदकस्य स्रष्टारौ; च-ण-फ-उक्तलक्षणौ मधुरस्योदकस्य स्रष्टारौ; प-भ-मधुररसस्योदकस्य स्रष्टारौ । २. प-सोमरसं वां । ३. त-प्राप्नुवन्ति स्थिता भवन्ति; ल-प्राप्नुवन्ति मिश्रिता भवन्ति । ४. ख-ग-घ-च-ण-न-भ-स-' युवयोः ' नास्ति । ५. ख-प-फ-भ-दीप्ताः । ६. त-ल-वेतारः गन्तारः । ७ त-क्षिप्रम् । ८. च-तदु; फ-तदु सः । ९. ख-ग-च-ण-प-फ-भ-' यत्... सुमत्या ' नास्ति । १०. ख-प-फ-भ-यत् यया सुमत्या ।

सुमतिः शोभनस्तुतिः[1] अस्मे अस्माकमेव फलवती भवत्विति शेषः । हे वाजरत्ना रमणीयान्नौ । ‘ अन्नं वै वाजः ’ ( श. ब्रा. ९. ३. ४. १ ) इति श्रुतेः । युवं युवां जरितारं[2] गरितारं[3] स्तोतारं माम् उरुष्यतं रक्षतम् । हे नासत्या अश्विनौ कामः अस्मदीयः युवद्रिक् ह युवामेव गच्छन् श्रितः प्राप्तः ॥ ॥ १९ ॥

‘ तं वां रथम् ’ इति सप्तर्चं द्वादशं सूक्तम् । पुरुमीळ्हाजमीळ्हावेव ऋषी । त्रिष्टुप् छन्दः । अश्विनौ देवता । ‘ तं वाम् ’ इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

**तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः ।**

**यः सूर्यां वहति वन्धुरायुर्गिर्वाहसं पुरुतमं वसूयुम् ॥ १ ॥**

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । पृथुऽज्रयम् । अश्विना । सम्ऽगतिम् । गोः ।

यः । सूर्याम् । वहति । वन्धुरऽयुः । गिर्वाहसम् । पुरुऽतमम् । वसुऽयुम् ॥ १ ॥

हे अश्विनौ[4] वां युवयोः रथं वयं[5] स्तोतारः अद्य सुत्याहनि हुवेम आह्वयामः । कीदृशं तम्[6] । पृथुज्रयं प्रथितवेगं गोः[7] गवां संगतिं[7] संगमयितारम् । यः रथः सूर्यां वहति धारयति । वन्धुरयुः। रथे निवासाधारभूतः काष्ठो वन्धुरं तद्वान् । तं गिर्वाहसं गिरां स्तुतीनां वोढारं पुरुतमं प्रभूततमं वसूयुं वसुमन्तम् ॥

**युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।**

**युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत्ककुहासो रथे वाम् ॥ २ ॥**

युवम् । श्रियम् । अश्विना । देवता । ताम् । दिवः । नपाता । वनथः । शचीभिः ।

युवोः । वपुः । अभि । पृक्षः । सचन्ते । वहन्ति । यत् । ककुहासः । रथे । वाम् ॥ २ ॥

हे दिवो नपाता आदित्यस्य पुत्रस्थानीयौ द्युलोकस्य वा न पातयितारौ हे[8] अश्विनौ युवं युवां देवता देवते ॥ विभक्तिव्यत्ययः ॥ तां प्रसिद्धां श्रियं शचीभिः कर्मभिः शक्तिभिर्वा वनथः संभजेथे । यद्वा । वनतिर्दानार्थः । युवोः युवयोः वपुः शरीरं पृक्षः अन्नानि सोमलक्षणानि अभि सचन्ते प्राप्नुवन्ति[9] यत् यदा रथे वां वहन्ति ककुहासः[10] महान्तोऽश्वाः । यद्वा । स्तुतयो वां युवां रथे वहन्ति[11] ॥

---

१. त–शोभना स्तुतिः । २. ख-ग-ण-प-भ–अवस्युवं रक्षणमिच्छन्तं जरितारम् । ३. त–‘ गरितारं ’ नास्ति । ४. च-प-फ–अश्विना अश्विनौ । ५. ख-ग-न-भ-स–‘ वयं ’ नास्ति । ६. ख-ग-च-ण-न-फ-भ–‘ तं ’ नास्ति । ७. ख-ग-च-ण-भ-स–गोः संगतिम्; न–गोः संगतिं गवाम् । ८. प–हे अश्विना । ९. त-न-ल-स–‘ प्राप्नुवन्ति ’ नास्ति । १०. ख-ग-ण–ये ककुहास्ते; च-भ–ये ककुहासः । ११. त-ल–वहन्ति वाहयन्ति ।

को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः ।
ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥ ३ ॥

कः । वाम् । अद्य । करते । रातऽहव्यः । ऊतये । वा । सुतऽपेयाय । वा । अर्कैः ।
ऋतस्य । वा । वनुषे । पूर्व्याय । नमः । येमानः । अश्विना । आ । ववर्तत् ॥ ३ ॥

vकः यजमानः vअद्य vवां युवयोः vकरते कुर्यात् स्तुतिम् । vअर्कैः मन्त्रैः vरातहव्यः दत्तसोमः vऊतये vवा रक्षणाय वा vसुतपेयाय सोमपानाय vवा । vऋतस्य उदकस्य यज्ञस्य vवा vपूर्व्याय पुराणाय vवनुषे संभजनाय हे vअश्विना अश्विनौ[1] vनमो vयेमानः नमस्कारं कुर्वाणः कः vआ vववर्तत् आवर्तयेत्[2] यज्ञं प्रति ॥

हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातम् ।
पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥ ४ ॥

हिरण्ययेन । पुरुभू इति पुरुऽभू । रथेन । इमम् । यज्ञम् । नासत्या । उप । यातम् ।
पिबाथः । इत् । मधुनः । सोम्यस्य । दधथः । रत्नम् । विधते । जनाय ॥ ४ ॥

हे vपुरुभू बहु[3] भवन्तौ[3] नासत्यौ[4] vइमं vयज्ञं vहिरण्ययेन[5] vरथेन vउप vयातम् । vसोम्यस्य सोमसंबन्धिनः vमधुनः मधुररसस्य ॥ कर्मणि षष्ठ्यौ ॥ सोमरसं vपिबाथः पिबथः । vविधते परिचरते vजनाय मह्यं vरत्नं रमणीयं धनं vदधथः धारयथः । दधतेर्दानार्थस्य लेटि[6] रूपम्[7] ॥

आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।
मा वामन्ये नि यमन्देवयन्तः सं यद्ददे नाभिः पूर्व्या वाम् ॥ ५ ॥

आ । नः । यातम् । दिवः । अच्छ । पृथिव्याः । हिरण्ययेन । सुऽवृता । रथेन ।
मा । वाम् । अन्ये । नि । यमन् । देवऽयन्तः । सम् । यत् । ददे । नाभिः । पूर्व्या । वाम् ॥५॥

vनः अस्मान् vअच्छ अभि प्राप्तुं vदिवः द्युलोकात् vपृथिव्याः सकाशाद्वा[8] vआ vयातम् । केन साधनेन । vहिरण्ययेन हितरमणीयेन[9] vसुवृता शोभनावर्तनेन vरथेन । vवां युवाम् vअन्ये vदेवयन्तः देवौ युवामिच्छन्तो[10] यजमानाः[10] vमा vनि vयमन् नियमनं मा कुर्वन् । vयत् यस्मात् vपूर्व्या पूर्वार्हा इतरयष्टृभ्यः पूर्वभाविनी vनाभिः बन्धिका स्तुतिः vसं vददे संबध्नाति । तस्मादायातम् ॥

---

१. न-ल-स-'अश्विनौ' नास्ति । २. त-अवर्तयत् । ३. त-बहूभवन्तौ । ४. च-प-फ-नासत्या नासत्यौ । ५. ख-ग-हिरण्मयेन । ६. त-लोटि । ७. प-रूपम् । इत् पूरणः । ८. ग-सकाशाद्वा अत्र । ९. प-रमणीयेन । १०. ख-ग-च-ण-प-फ-भ-स-युवामिच्छमानाः ।

नू नो रयिं पुरुवीरं बृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।
नरो यद्वामश्विना स्तोममावन्त्सधस्तुतिमाजमीळ्हासो अग्मन् ॥ ६ ॥

नु । नः । रयिम् । पुरुऽवीरम् । बृहन्तम् । दस्रा । मिमाथाम् । उभयेषु । अस्मे इति ।
नरः । यत् । वाम् । अश्विना । स्तोमम् । आवन् । सधऽस्तुतिम् । आजऽमीळ्हासः । अग्मन् ॥ ६ ॥

नु क्षिप्रं नः अस्माकं रयिं धनं पुरुवीरं बहुपुत्रोपेतं बृहन्तं महान्तं हे दस्रा[1] अश्विनौ[1] मिमाथां कुरुतम् । उभयेषु पुरुमीळ्हाजमीळ्हेषु अस्मे अस्मासु यत् यदा नरः नेतार ऋत्विजः पुरुमीळ्हसंबन्धिनः वां युवयोः स्तोमं स्तोत्रम् आवन् अगमन् प्राप्ताः । तथा सधस्तुतिं सहस्तुतिम् आजमीळ्हासः अजमीळ्हसंबन्धिनोऽपि तैः सह अग्मन् अगमन् ॥

इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ ७ ॥

इहऽइह । यत् । वाम् । समना । पपृक्षे । सा । इयम् । अस्मे इति । सुऽमतिः । वाजऽरत्ना ।
उरुष्यतम् । जरितारम् । युवम् । ह । श्रितः । कामः । नासत्या । युवद्रिक् ॥ ७ ॥

'इहेह[2]' इति गतम्[2] ॥ ॥ २० ॥

'एष स्य भानुः' इति सप्तर्चं त्रयोदशं सूक्तम् । आदितः षट् जगत्यः सप्तमी त्रिष्टुप् । मण्डलद्रष्टा वामदेव ऋषिः । अश्विनौ देवता । 'एष स्य त्रिष्टुबन्तम्' इति ह्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्जागते छन्दसीदं शस्यम् । तथा च सूत्रितम्–'अबोध्यग्निर्ज्म एष स्य भानुः' (आश्व. श्रौ. ४. १५) इति ॥

एष स्य भानुरुदियर्ति युज्यते रथः परिज्मा दिवो अस्य सानवि ।
पृक्षासो अस्मिन्मिथुना अधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥ १ ॥

एषः । स्यः । भानुः । उत् । इयर्ति । युज्यते । रथः । परिऽज्मा । दिवः । अस्य । सानवि ।
पृक्षासः । अस्मिन् । मिथुनाः । अधि । त्रयः । दृतिः । तुरीयः । मधुनः । वि । रप्शते ॥ १ ॥

एषः पुरतो दृश्यमानः स्यः सः भानुः दीप्तिमानादित्यः उदियर्ति ऊर्ध्वं गच्छति । पुरस्तात् रथः च युवयोः संबन्धी परिज्मा परितो गन्ता अस्य दिवः द्योतमानस्यादित्यस्य सानवि[3] सानौ

---

१. ख-ग-च-ण-फ-भ–हे दस्रा दस्रौ उपक्षपयितारावश्विनौ; प–दस्रा शत्रूणां रक्षयितारौ (उपक्षपयितारौ) अश्विना अश्विनौ । २. ण–इहेहेति पूर्ववत् व्याख्याता; त-न–व्याख्यातेयम्; प–पुस्तकेऽस्य मन्त्रस्य संपूर्णं भाष्यं वर्तते । ३. ख-ग-च-ण-भ–सानवि युज्यते ।

समुच्छ्रितप्रदेशे उदियर्तीति विरप्शते[1] इति वा संबन्धनीयम्। ᵛअस्मिन् रथे ᵛअधि उपरिभागे ᵛमिथुनाः मिथुनीभूताः ᵛत्रयः त्रिविधाः[2] ᵛपृक्षासः अन्नानि। त्रेधा विहितं चान्नम्। 'इदमन्नमशनं पानं खादश्च' इति हि श्रुतम्[2]। त्रिष्वपि पदार्थेषु मिथुनशब्दः तैत्तिरीयेषु[3] दृश्यते—'माता पिता पुत्रस्तदेव तन्मिथुनम्' इति। ᵛदृतिस्तुरीयः। रसद्रव्याधारः पदार्थश्चर्ममयो दृतिरित्युच्यते। ᵛमधुनः सोमरसस्य संबन्धी मधुपूर्णश्चतुर्थः ᵛवि ᵛरप्शते विविधं राजते॥

उद्वां पृक्षासो मधुमन्त ईरते रथा अश्वास उषसो व्युष्टिषु।
अपोर्णुवन्तस्तम आ परीवृतं स्वर्ण शुक्रं तन्वन्त आ रजः॥ २॥

उत्। वाम्। पृक्षासः। मधुऽमन्तः। ईरते। रथाः। अश्वासः। उषसः। विऽउष्टिषु।
अपऽऊर्णुवन्तः। तमः। आ। परिऽवृतम्। स्वः। न। शुक्रम्। तन्वन्तः। आ। रजः॥२॥

ᵛपृक्षासः पृक्षास्त्रिविधान्नवन्तः ᵛमधुमन्तः सोमरसोपेताः ᵛअश्वासः अश्वयुक्ताः ᵛवां युवयोः ᵛरथाः। यद्वा। मधुमन्तः पृक्षा रथा अश्वासोऽश्वाः ᵛउषसो ᵛव्युष्टिषु व्युच्छनेषु[4] सत्सु ᵛउत् ᵛईरते उन्मुखं गच्छन्ति। किं कुर्वन्तः। ᵛपरीवृतं परितो व्याप्तं ᵛतमः ᵛआ सर्वतः ᵛअपोर्णुवन्तः अपाकुर्वन्तः ᵛस्वर्न आदित्य इव ᵛशुक्रं दीप्तं ᵛरजः तेजश्च ᵛतन्वन्तः। आकारश्चार्थे। यद्वा। रजोऽन्तरिक्षं शुक्रं दीप्तं तन्वन्तः॥

मध्वः पिबतं मधुपेभिरासभिरुत प्रियं मधुने युञ्जाथां रथम्।
आ वर्तनिं मधुना जिन्वथस्पथो दृतिं वहेथे मधुमन्तमश्विना॥ ३॥

मध्वः। पिबतम्। मधुऽपेभिः। आसऽभिः। उत। प्रियम्। मधुने। युञ्जाथाम्। रथम्।
आ। वर्तनिम्। मधुना। जिन्वथः। पथः। दृतिम्। वहेथे इति। मधुऽमन्तम्। अश्विना॥ ३॥

ᵛमध्वः मधुरं सोमरसं ᵛमधुपेभिः सोमपानार्हैः ᵛआसभिः आस्यैः ᵛपिबतम्। ᵛउत अपि च ᵛप्रियं ᵛरथं ᵛमधुने मधुलाभाय ᵛयुञ्जाथाम् अश्वैर्युक्तं कुरुतम्। ᵛवर्तनिं यजमानगृहम् ᵛआ[5] गच्छतमिति शेषः। ᵛपथः गमनमार्गान् ᵛमधुना ᵛजिन्वथः प्रीणयतम्। यद्वैकं वाक्यम्। पथो वर्तनिमाकाशं जिन्वथः। ᵛदृतिं ᵛमधुमन्तं हे ᵛअश्विना[6] ᵛवहेथे धारयथः॥

---

१. ल–वा रप्शते। २. ख-ग-च-ण–त्रिविधाः मिथुनं त्रेधा विहितं पात्र इदमन्नमशनम्; त–त्रिविधाः विहितं वा इदमन्नमशनं पानं खादश्चेति हि श्रुतम्; भ-ल-स–त्रिविधाः त्रेधाः (स–'त्रेधाः' नास्ति) त्रेधा विहितं (ब-°विहितं पात्रम्) वा इदमन्नमशनं पानं खादश्चेति (स-खादयश्चेति) हि श्रुतिः। ३. त–तैत्तिरीये। ४. ख-ग-च-ण-फ-भ–व्युच्छितेषु। ५. ख-ग-च-ण-न-भ-स–'आ' नास्ति। ६. प–अश्विना अश्विनौ।

हंसासो ये वां मधुमन्तो अस्रिधो हिरण्यपर्णा उहुव उषर्बुधः ।
उदप्रुतो मन्दिनो मन्दिनिस्पृशो मध्वो न मक्षः सवनानि गच्छथः ॥४॥

हंसासः । ये । वाम् । मधुऽमन्तः । अस्रिधः । हिरण्यऽपर्णाः । उहुवः । उषःऽबुधः ।
उदऽप्रुतः । मन्दिनः । मन्दिऽनिस्पृशः । मध्वः । न । मक्षः । सवनानि । गच्छथः ॥ ४ ॥

ᵛहंसासः अध्वनि शीघ्रं गन्तारः ᵛमधुमन्तः माधुर्योपेताः ᵛअस्रिधः अद्रोग्धारः ᵛहिरण्यपर्णाः हितरमणीयपर्णाः ᵛउहुवः वोढारः ᵛउषर्बुधः उषसि बुध्यमानाः ᵛउदप्रुतः उदकस्य प्लावयितारः ᵛमन्दिनः[1] हर्षयितारः[1] ᵛमन्दिनिस्पृशः मन्दिनं सोमं स्पृशन्तः । इत्थंलक्षणाः[2] अश्वा ᵛये सन्ति तैरश्वैः ᵛमध्वो ᵛन मध्विव[3] ᵛमक्षः मक्षिकाः ᵛसवनानि अस्मदीयानि ᵛगच्छथः ॥

स्वध्वरासो मधुमन्तो अग्नय उस्रा जरन्ते प्रति वस्तोरश्विना ।
यन्निक्तहस्तस्तरणिर्विचक्षणः सोमं सुषाव मधुमन्तमद्रिभिः ॥ ५ ॥

सुऽअध्वरासः । मधुऽमन्तः । अग्नयः । उस्रा । जरन्ते । प्रति । वस्तोः । अश्विना ।
यत् । निक्तऽहस्तः । तरणिः । विऽचक्षणः । सोमम् । सुसाव । मधुऽमन्तम् । अद्रिऽभिः ॥५॥

ᵛस्वध्वरासः शोभनयागसाधनाः ᵛमधुमन्तः होतव्यसोमवन्तः ᵛअग्नयः गार्हपत्यादयः ᵛउस्रा सह[4] निवसन्तावश्विनौ ᵛप्रति ᵛवस्तोः अन्वहमुषःकाले ᵛजरन्ते स्तुवन्ति । ᵛयत् यदा ᵛनिक्तहस्तः समन्त्रेणोदकेन शोधितहस्तः ᵛतरणिः कर्मणस्तारयिता ᵛविचक्षणः विविधं[5] द्रष्टा[5] अध्वर्युः ᵛसोमं ᵛमधुमन्तम् ᵛअद्रिभिः ग्रावभिः ᵛसुषाव अभिषुतवान् । तदा तेऽग्नयः स्तुवन्ति तस्मादागच्छतमित्यर्थः ॥

आकेनिपासो अहभिर्दविध्वतः स्वर्ण शुक्रं तन्वन्त आ रजः ।
सूरश्चिदश्वान्युयुजान ईयते विश्वाँ अनु स्वधया चेतथस्पथः ॥ ६ ॥

आकेऽनिपासः । अहऽभिः । दविध्वतः । स्वः । न । शुक्रम् । तन्वन्तः । आ । रजः ।
सूरः । चित् । अश्वान् । युयुजानः । ईयते । विश्वान् । अनु । स्वधया । चेतथः । पथः ॥६॥

ᵛआकेनिपासः । आकेऽन्तिके निपतन्तीत्याकेनिपा रश्मयः । ते[6] च[6] ᵛअहभिः अहोभिः[7] ᵛदविध्वतः कम्पयन्तो ध्वंसयन्तः[8] वा तमांसि । ᵛस्वर्न आदित्य इव ᵛशुक्रं दीप्तं ᵛरजः ᵛआ

---

१. ख-ग-च-ण-' मन्दिनः हर्षयितारः ' नास्ति । २. त-उक्तलक्षणाः । ३. त-मधुमिव । ४. ख-ग-सदरसि; च-प-फ-भ-सदसि; ण-भ-सदीप्ति । ५. ख-ग-च-ण-फ-भ-विविधद्रष्टा । ६. फ-तथा । ७. त-ल-प्रकाशप्रसिद्धैरहोभिर्वा । ८. ख-ग-च-ण-न-भ-स-' ध्वंसयन्तः ' नास्ति ।

ᵛतन्वन्तः भवन्त्यश्विनोरश्वाः ᵛसूरश्चित् सूर्यश्च ᵛअश्वान्युयुजानः योजयन् ᵛईयते गच्छति। हे अश्विनौ[1] युवां ᵛविश्वान् ᵛपथः आगमनमार्गाननुक्रमेण ᵛस्वधया अन्नेन सोमलक्षणेन ᵛचेतथः चेतयथः प्रज्ञापयथः ॥

प्र वा॑मवोचमश्विना धिय॒ंधा रथ॑ः स्वश्वो॑ अ॒जरो॒ यो अस्ति॑ ।
येन॑ स॒द्यः परि॒ रजां॑सि या॒थो ह॒विष्म॑न्तं त॒रणिं॑ भो॒जमच्छ॑ ॥ ७ ॥

प्र । वाम् । अ॒वो॒च॒म् । अ॒श्वि॒ना॒ । धि॒य॒म्ऽधाः । रथ॑ः । सु॒ऽअश्व॑ः । अ॒जर॑ः । यः । अस्ति॑ ।
येन॑ । स॒द्यः । परि॑ । रजां॑सि । या॒थः । ह॒विष्म॑न्तम् । त॒रणि॑म् । भो॒जम् । अच्छ॑ ॥ ७ ॥

ᵛधियंधाः कर्मणां धारकोऽहम् हे ᵛअश्विना[2] ᵛवां ᵛप्र ᵛअवोचं प्रब्रवीमि स्तौमि । ᵛस्वश्वः[3] ᵛअजरः अजीर्णो नित्यनूतनोऽजरयिता वा ᵛरथः ᵛयः ᵛअस्ति । ᵛयेन रथेन ᵛसद्यः तदानीमेव ᵛरजांसि लोकान् ᵛपरि ᵛयाथः[4] । तेन रथेन ᵛहविष्मन्तं सोमादिहविर्युक्तं ᵛतरणिं तारकं शीघ्रगामिनं ᵛभोजं भोजयितारमस्मद्यागम् ᵛअच्छ प्राप्तुम्[5] । आगच्छतमिति शेषः ॥ ॥ २१ ॥ ॥ ४ ॥

पञ्चमेऽनुवाके त्रयोदश सूक्तानि । तत्र 'अग्रं पिब' इति सप्तर्चं प्रथमं सूक्तं वामदेवस्यार्षं गायत्रम् । कृत्स्नम्[6] इन्द्रवायुदेवताकम् आद्या केवलवायव्या[7] । तथा चानुक्रान्तम्—'अग्रं वायव्या-चैन्द्रवायवं तु गायत्रम्' इति । सूक्तविनियोगो लैङ्गिकः । आद्ये द्वे ऐन्द्रवायवग्रहस्य याज्ये । तथा च सूत्रितम्—'अग्रं पिबा मधूनामिति याज्ये अनवानम्' (आश्व. श्रौ. ५. ५) इति ॥

अग्रं॑ पिबा॒ मधू॑नां सु॒तं वा॑यो॒ दिवि॑ष्टिषु । त्वं हि पू॑र्व॒पा असि॑ ॥ १ ॥

अग्र॑म् । पि॒ब॒ । मधू॑नाम् । सु॒तम् । वा॒यो॒ इति॑ । दिवि॑ष्टिषु ।
त्वम् । हि । पू॒र्व॒ऽपाः । असि॑ ॥ १ ॥

हे ᵛवायो त्वम् ᵛअग्रम् इन्द्रादिभ्यः पूर्वं ᵛमधूनां मधुररसानां सोमानां संबन्धिनं ᵛसुतम् अभिषुतं रसं ᵛपिब । कुत्रेति तदुच्यते । ᵛदिविष्टिषु दिवः स्वर्गस्य प्रापकेषु यज्ञेषु । यद्वा । अस्माकं दिवः स्वर्गस्यै-षणेषु निमित्तेषु । ᵛत्वं ᵛहि त्वं खलु ᵛपूर्वपा ᵛअसि । हिशब्दः 'देव दधिषे पूर्वपेयम्' (ऋ. सं. ७. ९२. १) इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः । वायोरग्रपानं 'देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्नहं प्रथमः पिबेयम्' (ऐ. ब्रा. २. २५) इत्यादिब्राह्मणे स्पष्टमाम्नातम् । तत्र हि वायुराजिं प्रथमं धावित्वाग्रपानं लब्धवान् ॥

श॒तेना॑ नो अ॒भिष्टि॑भिर्नि॒युत्वाँ॒ इन्द्र॑सारथिः । वायो॑ सु॒तस्य॑ तृम्पतम् ॥ २ ॥

श॒तेन॑ । नः॒ । अ॒भिष्टि॑ऽभिः । नि॒युत्वा॑न् । इन्द्र॑ऽसारथिः । वायो॒ इति॑ । सु॒तस्य॑ । तृ॒म्प॒त॒म् ॥ २ ॥

---

१. प—अश्विना अश्विनौ । २. त-प—अश्विना अश्विनौ । ३. ख-ग-च-ण-त-प-फ-भ—स्वश्वः सुष्ठु अश्वः । ४. प—याथः परितो गच्छथः । ५. त—अभिप्राप्तुम् । ६. त—कृत्स्नं सूक्तम् । ७. त—केवला वायव्या ।

हे वायो नियुत्वान् नियुद्भिस्तद्वान् इन्द्रसारथिः इन्द्रसहायः सन् त्वं शतेन अपरिमितैः अभिष्टिभिः अभित एषणीयैः कामैर्निमित्तभूतैरागच्छेति शेषः । आगत्य च सुतस्य सुतमभिषुतं नः[1] अस्मदीयं[1] सोमं तृम्पतं पिबतं त्वमिन्द्रश्च । इन्द्रस्य साहित्यं ब्राह्मणे एवोक्तं—'तत्तुरीयभागिन्द्रोऽभवत्त्रिभाग्वायुः' इति, 'तुरीये हैव संग्रहीतारो वदन्तेऽमुनैवानूकाशेन यदद इन्द्रः सारथिरिव भूत्वोदजयत्' ( ऐ. ब्रा. २. २५ ) इति वा ॥

आ वां सहस्रं हरय इन्द्रवायू अभि प्रयः । वहन्तु सोमपीतये ॥ ३ ॥

आ । वाम् । सहस्रम् । हरयः । इन्द्रवायू इति । अभि । प्रयः । वहन्तु । सोमऽपीतये ॥ ३ ॥

हे इन्द्रवायू वां युवां सहस्रं हरयः सहस्रसंख्याका अश्वाः प्रयः अन्नं प्रति त्वरयन्तः सन्ति । अत्र हरिशब्दोऽश्वसामान्यवचनः । ते सोमपीतये[2] आ वहन्तु ॥

रथं हिरण्यवन्धुरमिन्द्रवायू स्वध्वरम् । आ हि स्थाथो दिविस्पृशम् ॥ ४ ॥

रथम् । हिरण्यऽवन्धुरम् । इन्द्रवायू इति । सुऽअध्वरम् । आ । हि । स्थाथः । दिविऽस्पृशम् ॥ ४ ॥

हे इन्द्रवायू हिरण्यवन्धुरं हिरण्मयनिवासाधारकाष्ठोपेतं दिविस्पृशं द्युलोकस्पर्शिनं स्वध्वरं शोभनाध्वरवन्तं[3] रथम् आ स्थाथः हि आस्थितौ[4] खलु । यस्मादेवं तस्मादागच्छतमित्यर्थः । स्वध्वरं प्रत्यास्थाथ इति वा व्याख्येयम् ॥

'रथेन पृथु' इत्यादिकस्तृचो दशरात्रे पञ्चमेऽहनि प्रउगशस्त्रे ऐन्द्रवायवो द्वितीयः । सूत्रितं च—'रथेन पृथुपाजसा बहवः सूरचक्षसः' ( आश्व. श्रौ ७. १२ ) इति ॥

रथेन पृथुपाजसा दाश्वांसमुप गच्छतम् । इन्द्रवायू इहा गतम् ॥ ५ ॥

रथेन । पृथुऽपाजसा । दाश्वांसम् । उप । गच्छतम् । इन्द्रवायू इति । इह । आ । गतम् ॥ ५ ॥

हे इन्द्रवायू पृथुपाजसा प्रभूतबलेन रथेन दाश्वांसं दातारं यजमानम् उप गच्छतम् । तदर्थम् इह अस्मिन् यज्ञे आ[5] गतम्[5] आगच्छतम् ॥

इन्द्रवायू अयं सुतस्तं देवेभिः सजोषसा । पिबतं दाशुषो गृहे ॥ ६ ॥

इन्द्रवायू इति । अयम् । सुतः । तम् । देवेभिः । सऽजोषसा । पिबतम् । दाशुषः । गृहे ॥ ६ ॥

हे इन्द्रवायू अयं सोमः सुतः अभिषुतः । तं सोमं देवेभिः देवैः सजोषसा समानप्रीतौ[6] दाशुषः हविर्दातुः गृहे यागशालायां पिबतम् ॥

---

१. ख-ग-ण-न-भ-ल-स-'नः अस्मदीयं' नास्ति । २. त-सोमपीतये पानाय; प-सोमपीतये पानाय अभि । ३. प-शोभनयज्ञवन्तम् । ४. ख-ग-च-ण-भ-स्थितौ । ५. ख-ग-च-ण-न-भ-स-'आ गतं' नास्ति । ६. ल-समानप्रीतौ सन्तौ ।

**इह प्रयाणमस्तु वामिन्द्रवायू विमोचनम् । इह वां सोमपीतये ॥ ७ ॥**

इह । प्रऽयानम् । अस्तु । वाम् । इन्द्रवायू इति । विऽमोचनम् । इह । वाम् । सोमऽपीतये ॥७॥

हे इन्द्रवायू वां युवयोः इह अस्मिन् यज्ञे प्रयाणं गमनम् अस्तु । इह अस्मिन्नेव यज्ञे वां[1] सोमपीतये विमोचनम् अश्वानाम् अस्तु । पर्यवसानत एकार्थत्वेऽप्यादरार्थत्वादविरोधः ॥ ॥ २२ ॥

' वायो शुक्रः ' इति चतुर्ऋचं द्वितीयं सूक्तमानुष्टुभं[2] वामदेवस्यार्षम्[2] ऐन्द्रवायवम् । आद्या केवलवायव्या । अत्रानुक्रमणिका—' वायो चतुष्कमाद्या[3] वायव्यानुष्टुभं तु[3] ' इति । सूक्तविनियोगो लैङ्गिकः । आद्या दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे वायव्यतृचे प्रथमा । ' वायो शुक्रो अयामि ते विहि होत्रा अवीताः ' ( आश्व. श्रौ. ७. ११ ) इति सूत्रितम् ॥

**वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।**
**आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥ १ ॥**

वायो इति । शुक्रः । अयामि । ते । मध्वः । अग्रम् । दिविष्टिषु ।
आ । याहि । सोमऽपीतये । स्पार्हः । देव । नियुत्वता ॥ १ ॥

हे वायो ते तुभ्यं शुक्रः व्रतचर्यादिना दीप्तोऽहं मध्वः मधुरं सोमरसम् ॥ कर्मणि षष्ठी ॥ अग्रम् इतरेभ्यः पूर्वम् अयामि आययामि[4]॥ अयतिरन्तर्भावितण्यर्थः ॥ किमर्थम् । दिविष्टिषु दिवो द्युलोकस्यैषणेषु सत्सु हे देव वायो स्पार्हः स्पृहणीयस्त्वं नियुत्वता । नियुत् वायोः प्रतिनियतोऽश्वः । तेन साधनेन आ याहि सोमपीतये सोमपानाय ॥

' इन्द्रश्च ' इत्यादिस्तृचो दशरात्रे चतुर्थेऽहन्यैन्द्रवायवो द्वितीयः । सूत्रितं च–' इन्द्रश्च वायवेषां सोमानामा चिकितान सुक्रतू ' ( आ. श्रौ. ७. ११ ) इति ॥

**इन्द्रश्च वायवेषां सोमानां पीतिमर्हथः ।**
**युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ २ ॥**

इन्द्रः । च । वायो इति । एषाम् । सोमानाम् । पीतिम् । अर्हथः ।
युवाम् । हि । यन्ति । इन्दवः । निम्नम् । आपः । न । सध्र्यक् ॥ २ ॥

हे वायो त्वम् इन्द्रश्च एषां गृहीतानां सोमानां पीतिं पानम् अर्हथः । युवां हि खलु इन्दवः सोमाः यन्ति प्राप्नुवन्ति । निम्नं खातप्रदेशम्[5] आपो न सध्र्यक् उदकानि यथा सहैव गच्छन्ति तद्वत् सर्वे सोमा युवां हि यन्ति ॥

---

१. ल–वां युवाम् ।　२. त–सूक्तं वामदेवस्यार्षमानुष्टुभम् ।　३. त–ख-ग-च-ण-त-न-स–चतुष्कमानुष्टुभमाद्या वायव्या ।　४. त–प्रापयामि; प–आगच्छामि । ५. न–नीचं प्रदेशम; ल–खातं प्रदशम् ।

वायुविन्द्रश्च शुष्मिणा सरथं शवसस्पती ।
नियुत्वन्ता न ऊतय आ यातं सोमपीतये ॥ ३ ॥

वायो इति । इन्द्रः । च । शुष्मिणा । सऽरथम् । शवसः । पती इति ।
नियुत्वन्ता । नः । ऊतये । आ । यातम् । सोमऽपीतये ॥ ३ ॥

हे वायो त्वम् इन्द्रश्च हे शवसस्पती बलस्य पती शुष्मिणा बलवन्तौ नियुत्वन्ता नियुत्संज्ञकाश्ववन्तौ युवां सरथं समानमेव रथमारुह्येति शेषः । न ऊतये रक्षणाय[1] सोमपीतये सोमपानायात्र आ यातम् आगच्छतम् । यद्वा । सरथमधितिष्ठतम् आरुह्य चायातमिति च वाक्यद्वयम् ॥

या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।
अस्मे ता यज्ञवाहसेन्द्रवायू नि यच्छतम् ॥ ४ ॥

याः । वाम् । सन्ति । पुरुऽस्पृहः । निऽयुतः । दाशुषे । नरा ।
अस्मे इति । ताः । यज्ञऽवाहसा । इन्द्रवायू इति । नि । यच्छतम् ॥ ४ ॥

हे नरा नेतारौ हे यज्ञवाहसा यज्ञवाहकौ इन्द्रवायू याः पुरुस्पृहः बहुभिः स्पृहणीयाः नियुतः सन्ति[2] अस्मे अस्मभ्यं दाशुषे हविर्दत्तवते यजमानाय मदर्थं[3] ताः नियुतः नि यच्छतम् ॥ ॥ २३ ॥

' विहि होत्राः ' इति पञ्चर्चं तृतीयं सूक्तं वामदेव्यं वायव्यम् । अत्रानुक्रमणिका—' विहि पञ्च वायव्यम् ' इति। सूक्तविनियोगो लैङ्गिकः । आद्या[4] दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे वायव्यतृचस्य द्वितीया । तथा च सूत्रितं—' विहि होत्रा अवीता वायो शतं हरीणाम् ' (आश्व. श्रौ. ७. ११) इति ॥

विहि होत्रा अवीता विपो न रायो अर्यः ।
वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ १ ॥

विहि । होत्राः । अवीताः । विपः । न । रायः । अर्यः ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ १ ॥

हे वायो विहि वीहि भक्षय । होत्राः होमसाधिकाः सोमाहुतीः अवीताः अन्यैः पूर्वमभक्षिताः विपो न शत्रूणां वेपयिता राजेव । किंच अर्यः स्तोतुर्मम रायः धनानि । संपादयेति शेषः । हे वायो चन्द्रेण आह्लादकेन रथेन आ याहि सुतस्य सोमस्य पीतये पानाय ॥

---

१. ख-ग-घ-च-ण-प-भ—अस्मद्रक्षणाय । २. ख-ग-घ-च-ण-प-भ—वां युष्माकं सन्ति ताः । ३. प—मह्यम् । ४. ख-ग-ङ-ण-भ—अथ च; स—अथ ।

**निर्युवाणो अशस्तीर्नियुत्वाँ इन्द्रसारथिः ।**
**वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ २ ॥**

निःऽयुवानः । अशस्तीः । नियुत्वान् । इन्द्रऽसारथिः ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ २ ॥

हे ᵛवायो त्वम् ᵛअशस्तीः अभिशस्तीः ᵛनिर्युवाणः निःशेषेण नियोजयन् ᵛनियुत्वान् नियुत्संज्ञकाश्ववान् ᵛइन्द्रसारथिः इन्द्रसहायः सन् ᵛआ ᵛयाहि ॥

**अनु कृष्णे वसुधिती येमाते विश्वपेशसा ।**
**वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ ३ ॥**

अनु । कृष्णे इति । वसुधिती इति वसुऽधिती । येमाते इति । विश्वऽपेशसा ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ ३ ॥

ᵛकृष्णे कृष्णवर्णे ᵛवसुधिती वसूनां धाञ्यौ ᵛविश्वपेशसा विश्वरूपे द्यावापृथिव्यौ त्वाम् ᵛअनु ᵛयेमाते अनुगच्छतः ॥

**वहन्तु त्वा मनोयुजो युक्तासो नवतिर्नव ।**
**वायवा चन्द्रेण रथेन याहि सुतस्य पीतये ॥ ४ ॥**

वहन्तु । त्वा । मनःऽयुजः । युक्तासः । नवतिः । नव ।
वायो इति । आ । चन्द्रेण । रथेन । याहि । सुतस्य । पीतये ॥ ४ ॥

हे ᵛवायो ᵛत्वा त्वां ᵛमनोयुजः मनःसमानगतयः ᵛयुक्तासः परस्परसंयुक्ताः[1] ᵛनवतिर्नव नवोत्तरनवतिसंख्याका अश्वाः ᵛवहन्तु धारयन्तु ॥

' वायो शतम् ' इति पञ्चमी पूर्वोक्त एव तृचे तृतीया । सूत्रं पूर्वमेवोक्तम् ॥

**वायो शतं हरीणां युवस्व पोष्याणाम् ।**
**उत वा ते सहस्रिणो रथ आ यातु पाजसा ॥ ५ ॥**

वायो इति । शतम् । हरीणाम् । युवस्व । पोष्याणाम् ।
उत । वा । ते । सहस्रिणः । रथः । आ । यातु । पाजसा ॥ ५ ॥

---

१. ख-फ-भ-°संयुक्ताः भवन्ति ।

हे वायो त्वं पोष्याणां पोषणीयानां हरीणां शतं युवस्व योजय रथे । उत वा अपि[1] च[1] ते सहस्रिणः सहस्रसंख्यापूरका अश्वाः । तैर्युक्तः रथः पाजसा बलेन आ यातु आगच्छतु ॥ ॥ २४ ॥

' इदं वामास्ये ' इति षड्टचं चतुर्थं सूक्तं वामदेवस्यार्षं गायत्रमैन्द्राबार्हस्पत्यम् । अत्रानुक्रमणिका—' इदं वां षळैन्द्राबार्हस्पत्यं गायत्रम् ' इति । सूक्तविनियोगो लैङ्गिकः ॥

**इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं मदश्च शस्यते ॥ १ ॥**

इदम् । वाम् । आस्ये । हविः । प्रियम् । इन्द्राबृहस्पती इति ।

उक्थम् । मदः । च । शस्यते ॥ १ ॥

हे इन्द्राबृहस्पती वामास्ये[2] इदं प्रियं हविः सोमरूपम् । प्रक्षिपामीति शेषः । उक्थं शस्त्रं च मदः मदजनकं शस्यते ॥

**अयं वां परि षिच्यते सोम इन्द्राबृहस्पती । चारुर्मदाय पीतये ॥ २ ॥**

अयम् । वाम् । परि । सिच्यते । सोमः । इन्द्राबृहस्पती इति । चारुः । मदाय । पीतये ॥ २ ॥

हे इन्द्राबृहस्पती वाम् आस्ये चारुः[3] शोभनः[3] अयं सोमः परि षिच्यते परितो दीयते । मदाय हर्षाय पीतये पानाय च ॥

ऐन्द्राबार्हस्पत्यायामिष्टौ प्रधानस्य ' आ न इन्द्रा ' इति तृतीयानुवाक्या उत्तरा याज्या । सूत्रितं च—' आ न इन्द्राबृहस्पती अस्मे इन्द्राबृहस्पती ' ( आश्व. श्रौ. २. ११) इति ॥

**आ न इन्द्राबृहस्पती गृहमिन्द्रश्च गच्छतम् । सोमपा सोमपीतये ॥ ३ ॥**

आ । नः । इन्द्राबृहस्पती इति । गृहम् । इन्द्रः । च । गच्छतम् । सोमऽपा । सोमऽपीतये ॥ ३ ॥

हे इन्द्राबृहस्पती । अथ विविच्योच्यते । हे बृहस्पते त्वं च इन्द्रश्च सोमपा सोमपौ युवां[4] सोमपीतये सोमपानाय नः गृहम् अस्मद्यागसंबन्धि[5] आ गच्छतम् ॥

**अस्मे इन्द्राबृहस्पती रयिं धत्तं शतग्विनम् । अश्वावन्तं सहस्रिणम् ॥ ४ ॥**

अस्मे इति । इन्द्राबृहस्पती इति । रयिम् । धत्तम् । शतऽग्विनम् ।

अश्वऽवन्तम् । सहस्रिणम् ॥ ४ ॥

---

१. न-ल-स—अथवा । २. प—वामास्ये युष्मदीये मुखे । ३. ख-ग-ण-न-भ-स—सोमः । ४. ख-ग-ण-भ—युवं युवाम् । ५. त—अस्मद्यागसंबन्धिनम् ।

अस्या विनियोगः पूर्वमन्त्रेण सहोक्तः। हे इन्द्राबृहस्पती अस्मे अस्मभ्यं रयिं धनं धत्तम्[1]। कीदृशं रयिम्। शतग्विनं शतसंख्याकाभिर्गोभिर्युक्तम् अश्वावन्तम् अश्ववन्तं सहस्रिणं सहस्रसंख्यायुक्तम् ॥

**इन्द्राबृहस्पती वयं सुते गीर्भिर्हवामहे। अस्य सोमस्य पीतये ॥ ५ ॥**

इन्द्राबृहस्पती इति। वयम्। सुते। गीःऽभिः। हवामहे। अस्य। सोमस्य। पीतये ॥ ५ ॥

सुते[2] सोमेऽभिषुते गीर्भिः स्तुतिभिः। शिष्टं[3] गतम्[3] ॥

**सोममिन्द्राबृहस्पती पिबतं दाशुषो गृहे। मादयेथां तदोकसा ॥ ६ ॥**

सोमम्। इन्द्राबृहस्पती इति। पिबतम्। दाशुषः। गृहे। मादयेथाम्। तत्ऽओकसा ॥ ६ ॥

हे इन्द्राबृहस्पती[4] युवां[5] दाशुषः हविर्दातुर्यजमानस्य गृहे तदोकसा। तदेव यजमानगृहमोको निवासस्थानं ययोस्तौ। तादृशौ सन्तौ सोमं पिबतम्। पीत्वा च मादयेथाम् इति ॥ ॥२५॥

'यस्तस्तम्भ' इत्येकादशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम्। दशमी जगती। दशम्येकादश्याविन्द्राबृहस्पतिदेवताके शिष्टा नव बार्हस्पत्यः[6]। अत्रानुक्रमणिका—'यस्तस्तम्भैकादश बार्हस्पत्यमन्त्ये ऐन्द्र्यौ चोपान्त्या जगती'। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदं सूक्तमावापार्थम्। तथा च सूत्रं—'यस्तस्तम्भ यो अद्रिभित्' ( आश्व. श्रौ. ७. ९ ) इति। आद्ये बृहस्पतिसवे[7] मरुत्वतीयनिष्केवल्ययोः सूक्तमुखीये। सूत्रितं च— 'यस्तस्तम्भ धुनेतय इति सूक्तमुखीये' ( आश्व. श्रौ. ९. ५ ) इति ॥

**यस्तस्तम्भ सहसा वि ज्मो अन्तान्बृहस्पतिस्त्रिषधस्थो रवेण।**
**तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥ १ ॥**

यः। तस्तम्भ। सहसा। वि। ज्मः। अन्तान्। बृहस्पतिः। त्रिऽसधस्थः। रवेण।
तम्। प्रत्नासः। ऋषयः। दीध्यानाः। पुरः। विप्राः। दधिरे। मन्द्रऽजिह्वम् ॥ १ ॥

यः बृहस्पतिः बृहतो देवस्य[8] यज्ञस्य वा पालयिता देवः सहसा बलेन ज्मः पृथिव्याः अन्तान्। दश दिश इत्यर्थः। तान् वि तस्तम्भ विविधं स्तम्भितवान् नियमितवान्। त्रिषधस्थः त्रिषु स्थानेषु वर्तमानः रवेण एवं तिष्ठतेत्यनेन शब्देन तं देवं प्रत्नासः पुराणाः ऋषयः अतीन्द्रियद्रष्टारः दीध्यानाः दीप्यमानाः विप्राः मेधाविनो यजमानादयः पुरः दधिरे पुरस्तात् स्थापितवन्तः स्तुत्यादिना। मन्द्रजिह्वं[9] मादनजिह्वं मोदनजिह्वम्[9] ॥

---

१. ख-ग-च-न-प-भ-स—धत्तं दत्तम्। २. ख-ग-च-ण-प-फ-भ—हे इन्द्राबृहस्पती सुते। ३. त—शिष्टं स्पष्टम्; प—वयं वां हवामहे। अस्य सोमस्य पीतये। ४. ल—इन्द्राबृहस्पती इन्द्रश्च बृहस्पतिश्च। ५. ख-ग-च-ण-न-भ-स—वाम्। ६. त—बार्हस्पत्याः। ७. ख-ग-च-ण-न-भ-ल-स—°सवने। ८. त—वेदस्य। ९. ख-ग-च-ण-फ-भ—मन्द्रजिह्वं मन्द्रा जिह्वा यस्यासौ मन्द्रजिह्वः तम्; त—मन्द्राजिह्वं मोदनजिह्वम्; न—मन्द्राजिह्वं मादनाजिह्वं तम्; प—मन्द्रजिह्वं कीदृशं मन्द्रा जिह्वा यस्यासौ मन्द्रजिह्वः तं मन्द्रजिह्वम्।

धुनेतयः सुप्रकेतं मदन्तो बृहस्पते अभि ये नस्ततस्रे ।
पृषन्तं सृप्रमदब्धमूर्वं बृहस्पते रक्षतादस्य योनिम् ॥ २ ॥

धुनऽईतयः । सुऽप्रकेतम् । मदन्तः । बृहस्पते । अभि । ये । नः । ततस्रे ।
पृषन्तम् । सृप्रम् । अदब्धम् । ऊर्वम् । बृहस्पते । रक्षतात् । अस्य । योनिम् ॥ २ ॥

हे बृहस्पते धुनेतयः । धुना शत्रूणां कम्पयित्रीतिर्गतिर्येषां ते । तादृशाः सुप्रकेतं शोभनप्रज्ञं[1] त्वां मदन्तः मादयन्तः नः अस्मत्संबन्धिनः ये ऋत्विजः अभि ततस्रे आत्मानमुपक्षिपन्ति[2] स्तुवन्ति वा अस्य एषां योनिं कारणं यज्ञं यजमानं वा मां रक्षतात् रक्ष । योनिर्विशेष्यते । पृषन्तं फलानि सिञ्चन्तं सृप्रं सर्पणस्वभावम् अदब्धम् अहिंसितम् ऊर्वम् उरुम् ॥

'बृहस्पते या' इत्यादिके द्वे बार्हस्पत्ये पशौ वपापुरोडाशयोरनुवाक्ये । 'बृहस्पते या परमा परावदिति द्वे[3]' (आश्व. श्रौ. ३. ७) इति[3] हि[4] सूत्रितम् ॥

बृहस्पते या परमा परावदत आ त ऋतस्पृशो नि षेदुः ।
तुभ्यं खाता अवता अद्रिदुग्धा मध्वः श्चोतन्त्यभितो विरप्शम् ॥ ३ ॥

बृहस्पते । या । परमा । पराऽवत् । अतः । आ । ते । ऋतऽस्पृशः । नि । सेदुः ।
तुभ्यम् । खाताः । अवताः । अद्रिऽदुग्धाः । मध्वः । श्चोतन्ति । अभितः । विऽरप्शम् ॥ ३ ॥

हे बृहस्पते या प्रसिद्धा परमा उत्कृष्टा परावत् अत्यन्तं दूरभूता वसतिः स्वर्गाख्यास्ति । यद्वा लिङ्गव्यत्ययः । परमं स्थानमस्ति । अतः अस्माद्देशात् आ । आ इत्यर्वागर्थे । अधस्तात् ते तव संबन्धिनः ऋतस्पृशः यज्ञं स्पृशन्तोऽश्वाः नि षेदुः निषण्णा भवन्ति । तुभ्यं खाता अवताः[5] । लुप्तोपमैषा । यथा खाताः कूपाः[6] अभितः श्चोतन्ति तद्वत् अद्रिदुग्धाः ग्रावभिरभिषुताः सोमाः विरप्शं विशेषेण शब्देन[7] स्तोत्रं यथा भवति तथा मध्वः मधुररसं श्चोतन्ति स्रवन्ति ॥

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि ॥ ४ ॥

बृहस्पतिः । प्रथमम् । जायमानः । महः । ज्योतिषः । परमे । विऽओमन् ।
सप्तऽआस्यः । तुविऽजातः । रवेण । वि । सप्तऽरश्मिः । अधमत् । तमांसि ॥ ४ ॥

अयं बृहस्पतिः मन्त्राभिमानी देवः महः महतः ज्योतिषः दीप्तस्य आदित्यस्य परमे निरतिशये व्योमन् व्योमनि प्रथमं जायमानः प्रादुर्भवन् सप्तास्यः सप्तच्छन्दोमयमुखः तुविजातः बहुप्रकारं

---

१. ख-ग-च-ण-न-प-फ-भ-स–शोभनयज्ञम् । २. त–आत्मानमुपक्षपयन्ति । ३. ख-ग-च-ण-न-भ-स–'द्वे इति' नास्ति । ४. ल–च । ५. त-ल–अवताः अवटाः । ६. ख-भ–अवताः; प-फ–अवटाः । ७. त–शब्दनम् ।

संभूतः ᵛरवेण शब्देन ᵛससरश्मिः सर्पणस्वभावतेजोयुक्तः ᵛतमांसि ᵛवि ᵛअधमत्। 'धमतिर्गतिकर्मा' ( निरु. ६. २ ) इति निरुक्तम्। विविधं गच्छति। नाशयतीत्यर्थः ॥

स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥ ५ ॥

सः । सुऽस्तुभा । सः । ऋक्वता । गणेन । वलम् । रुरोज । फलिऽगम् । रवेण ।
बृहस्पतिः । उस्रियाः । हव्यऽसूदः । कनिक्रदत् । वावशतीः । उत् । आजत् ॥ ५ ॥

ᵛसः ᵛबृहस्पतिः ᵛसुष्टुभा शोभनस्तुतिमता ᵛऋक्वता दीप्तिमता ᵛगणेन अङ्गिरसां ᵛरवेण शब्देन च सह ᵛफलिगम् ॥ 'ञिफला विशरणे' ॥ फलिर्भेदः । तेन गच्छतीति फलिगम् । ᵛवलं[1] वलनामानमसुरं ᵛरुरोज बभञ्ज । द्वितीयः सशब्दः[2] पूरणः । स एव देवः ᵛउस्रियाः भोगानामुत्स्राविणीः ᵛहव्यसूदः क्षीरादिहविष्प्रेरिकाः ᵛवावशतीः वावश्यमानाः गाः ᵛकनिक्रदत् शब्दं कुर्वन् ᵛउदाजत् उद्घाटयति स्म ॥　　॥ २६ ॥

'एवा पित्रे' इति बार्हस्पत्ये पशौ हविषो याज्या । 'एवा पित्रे विश्वदेवाय वृष्णे विश्वे अद्य मरुतो विश्व ऊती' ( आश्व. श्रौ. ३. ७ ) इति सूत्रितत्वात् । अग्निष्टोमे वैश्वदेवशस्त्रे एषैव धाय्या । तथा च सूत्रम्—'एवा पित्रे विश्वदेवाय वृष्ण आ नो भद्राः क्रतवो यन्तु विश्वतः' ( आश्व. श्रौ. ५. १८ ) इति[3] ॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥ ६ ॥

एव । पित्रे । विश्वऽदेवाय । वृष्णे । यज्ञैः । विधेम । नमसा । हविःऽभिः ।
बृहस्पते । सुऽप्रजाः । वीरऽवन्तः । वयम् । स्याम । पतयः । रयीणाम् ॥ ६ ॥

ᵛपित्रे पालकाय ᵛविश्वदेवाय सर्वदेवतारूपाय । देवानां मन्त्रप्रतिपाद्यत्वादस्य च मन्त्राभिमानित्वात् विश्वदेवत्वम्[4] । यद्वा । अत्र देवशब्दः स्तुत्यर्थः । सर्वैः स्तुत्याय ᵛवृष्णे वर्षकाय बृहस्पतये देवाय ᵛएव एवमुक्तप्रकारेण ᵛयज्ञैः तत्साधनैः ᵛहविर्भिः आज्यचर्वादिलक्षणैः ᵛनमसा स्तुत्या च ᵛविधेम परिचरेम । हे ᵛबृहस्पते ᵛसुप्रजाः शोभनपुत्राः[5] ᵛवीरवन्तः वीर्योपेताः ᵛवयं ᵛरयीणां धनानां ᵛपतयः ᵛस्याम ॥

---

१. त–तं वलम् । २. ल–तच्छब्दः । ३. त–इति वैश्वदेवति; न–इति नवेति; ल–इति मवेति । ४. ख-ग-ण-न-भ-स–वैश्वदेवत्वम् । ५. त–शोभनप्रजाः ।

स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।

बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वन्दते पूर्वभाजम् ॥ ७ ॥

सः । इत् । राजा । प्रतिऽजन्यानि । विश्वा । शुष्मेण । तस्थौ । अभि । वीर्येण ।

बृहस्पतिम् । यः । सुऽभृतम् । बिभर्ति । वल्गुऽयति । वन्दते । पूर्वऽभाजम् ॥ ७ ॥

इदमाद्यृक्त्रयं पुरोहितप्रशंसा इति ब्राह्मणम् ( ऐ. ब्रा. ८. २६ ) । अथवा सूक्तस्य ऋग्द्वय-वर्जितस्य बार्हस्पत्यत्वात् बृहस्पतेरेव स्तुतिः । ᵛस ᵛइत् स एव ᵛराजा मूर्धाभिषिक्तः अन्यः[1] वा राजमानः ᵛप्रतिजन्यानि । जन्यं युद्धं प्रति बलानीत्यर्थः । प्रत्यर्थिजनपदानि वा तानि ᵛविश्वा सर्वाणि ᵛशुष्मेण बलेन ᵛवीर्येण शरीरसामर्थ्येन वा ᵛअभि अभिगम्याक्रम्य ᵛतस्थौ तिष्ठति । स इत्युक्तं क इत्याह । ᵛयः ᵛबृहस्पतिं बृहतां महतां[2] पालयितारं देवमुक्तलक्षणं पुरोहितं वा ᵛसुभृतं सुष्ठु हविः-स्तोत्रादिनान्नाच्छादनादिना वा ᵛबिभर्ति भरति ᵛवल्गूयति स्तौति । ᵛवन्दते नमस्करोति च ᵛपूर्वभाजम् इतरेभ्यः प्रथमं[3] संभक्तारं[3] कृत्वा । एवं यः करोति स एव[4] तस्थाविति ॥

स इत्क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीम् ।

तस्मै विशः स्वयमेवा नमन्ते यस्मिन्ब्रह्मा राजनि पूर्व एति ॥ ८ ॥

सः । इत् । क्षेति । सुऽधितः । ओकसि । स्वे । तस्मै । इळा । पिन्वते । विश्वऽदानीम् ।

तस्मै । विशः । स्वयम् । एव । नमन्ते । यस्मिन् । ब्रह्मा । राजनि । पूर्वः । एति ॥ ८ ॥

ᵛस ᵛइत् स एव ᵛक्षेति निवसति । ᵛसुधितः सुष्ठु तृप्तः सन्[5] ᵛस्वे स्वकीये एव ᵛओकसि सदने । स एव समृद्धो निर्बाधः सन् सुखेनास्ते । ᵛतस्मा ᵛइळा भूमिः ᵛविश्वदानीं सर्वकालं[6] ᵛपिन्वते वर्धते फलैः । ᵛतस्मै ᵛविशः प्रजाः ᵛस्वयमेव ᵛनमन्ते प्रणता भवन्ति । दण्डनमन्तरेण स्वयमेव दत्तकरा भवन्ति । ᵛयस्मिन् ᵛराजनि ᵛब्रह्मा ᵛपूर्वः प्रथमं पूज्यः सन् ᵛएति गच्छति । वर्तत इत्यर्थः ॥

अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।

अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः ॥ ९ ॥

अप्रतिऽइतः । जयति । सम् । धनानि । प्रतिऽजन्यानि । उत । या । सऽजन्या ।

अवस्यवे । यः । वरिवः । कृणोति । ब्रह्मणे । राजा । तम् । अवन्ति । देवाः ॥ ९ ॥

---

१. ख-ग-च-ण-न-भ-यः । २. त- महतां मन्त्राणाम् । ३. न-प्रथमसंभक्तारम् । ४. त-इत् । ५. त-सन् । कुत्र । ६. च-सर्वदा ।

स एव ᵛअप्रतीतः अन्यैरप्रतिगतः सन् यानि धनानि ᵛप्रतिजन्यानि प्रतिस्पर्धिजनसंबन्धीनि ᵛउत अपि च ᵛसजन्या जनसंबन्धीनि ᵛधनानि ᵛसं ᵛजयति[1] । ᵛयः ᵛराजा ᵛअवस्यवे अवसीयसे[2] धनरहिताय रक्षणमिच्छते ᵛब्रह्मणे ब्राह्मणाय वा प्रीणनमिच्छते बृहस्पतये वा ᵛवरिवः धनं ᵛकृणोति करोति ददाति । स उक्तप्रकारेण महान् भवति । ᵛतम् एव ᵛदेवाः ᵛअवन्ति रक्षन्ति ॥

' इन्द्रश्च सोमम् ' इति दशमी तृतीयसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या । सूत्रितं च— ' इन्द्रश्च सोमं पिबतं बृहस्पते आ वो वहन्तु सप्तयो रघुष्यदः ' ( आश्व. श्रौ. ५. ५ ) इति[3] ॥

इन्द्र॑श्च॒ सोमं॑ पिबतं बृहस्पते॒ऽस्मिन्य॒ज्ञे म॑न्दसा॒ना वृ॑षण्वसू ।
आ वां॑ विश॒न्त्विन्द॑वः स्वा॒भुवो॒ऽस्मे र॒यिं सर्व॑वीरं॒ नि य॑च्छतम् ॥ १० ॥

इन्द्रः॑ । च॒ । सोम॑म् । पि॒ब॒त॒म् । बृ॒ह॒स्प॒ते॒ । अ॒स्मिन् । य॒ज्ञे । म॒न्द॒सा॒ना ।
वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ॥ आ । वा॒म् । वि॒श॒न्तु॒ । इन्द॑वः । सु॒ऽआ॒भुवः॑ ।
अ॒स्मे इति॑ । र॒यिम् । सर्व॑ऽवीरम् । नि । य॒च्छ॒त॒म् ॥ १० ॥

हे ᵛबृहस्पते त्वं ᵛइन्द्रश्च ᵛसोमं ᵛपिबतम् । कीदृशौ युवाम् । ᵛअस्मिन्यज्ञे ᵛमन्दसाना हृष्यन्तौ ᵛवृषण्वसू वर्षितृधनौ यजमानेभ्यो दीयमानधनावित्यर्थः । ᵛवां युवां ᵛस्वाभुवः सुष्ठु सर्वतो भवन्तः । कृत्स्नशरीरव्यापनसमर्था इत्यर्थः । तादृशाः ᵛइन्दवः सोमाः ᵛविशन्तु युवयोः शरीरं प्रविशन्तु । ᵛअस्मे अस्मभ्यं ᵛरयिं धनं ᵛसर्ववीरं सर्वपुत्राद्युपेतं ᵛनि ᵛयच्छतं दत्तम् ॥

बृह॑स्पत इन्द्र॒ वर्ध॑तं नः॒ सचा॒ सा वां॑ सुम॒तिर्भू॑त्व॒स्मे ।
अ॒वि॒ष्टं धियो॑ जिगृ॒तं पुरं॑धीर्जज॒स्तम॒र्यो व॒नुषा॒मरा॑तीः ॥ ११ ॥

बृह॑स्पते । इ॒न्द्र॒ । वर्ध॑तम् । नः॒ । सचा॑ । सा । वा॒म् । सु॒ऽम॒तिः । भू॒तु॒ । अ॒स्मे इति॑ ।
अ॒वि॒ष्टम् । धियः॑ । जि॒गृ॒तम् । पुर॑म्ऽधीः । ज॒ज॒स्तम् । अ॒र्यः । व॒नुषा॑म् । अरा॑तीः ॥ ११ ॥

हे ᵛबृहस्पते हे ᵛइन्द्र युवां[4] ᵛनः अस्मान् ᵛवर्धतं वर्धयतं प्रवृद्धान् कुरुतम् । ᵛसा ᵛसुमतिः युवयोरनुग्रहबुद्धिः ᵛअस्मे अस्मासु ᵛसचा सह ᵛभूतु भवतु । ᵛधियः कर्माणि ᵛअविष्टं रक्षतं पारं नयतम् । ᵛपुरंधीः । पुरं शरीरं धीयते स्थाप्यते याभिर्मतिभिस्ताः स्तुतीः ᵛजिगृतं प्रबुध्यतम् । ᵛवनुषां संभक्तॄणामस्माकम् ᵛअर्यः गन्त्रीः ᵛअरातीः । शत्रूनित्यर्थः । ᵛजजस्तं युध्यतं क्षपयतमित्यर्थः[5] ॥ छन्दस्यरातिशब्दः स्त्रीलिङ्गः ॥ एवं स्तुतिं निगमय्याभीष्टं प्रार्थितवान् ॥ ॥ २७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
श्रीमत्सायणमन्त्रीशो दाशतय्यास्तृतीयके । अष्टके सप्तमाध्यायं व्याकार्षीदतिपेशलम् ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये तृतीयाष्टके सप्तमोऽध्यायः समाप्तः[6] ॥

---

१. प–जयति संजयेत् । २. ख-ग-च-ण-न-भ–अवसीयते । ३. ख-ग-च-ण-न-भ-ल–इति । तत्पाठस्तु । ४. प–वां युवाम् । ५. त–क्षपयितुमित्यर्थः । ६. ग-ल–' समाप्तः ' नास्ति ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथाष्टमं[1] व्याख्यातुमारभते[1]। ‘ इदमु त्यत् ’ इत्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमुषोदेवताकम्। ‘ इदमुषस्यं तु ’ इत्यनुक्रान्तम्। प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे इदं सूक्तम्। सूत्रितं च—‘ उषो वाजेनेदमु त्यत् ’ (आश्व. श्रौ. ४. १४) इति ॥

इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥ १ ॥

इदम्। ऊँ इति। त्यत्। पुरुऽतमम्। पुरस्तात्। ज्योतिः। तमसः। वयुनऽवत्। अस्थात्।
नूनम्। दिवः। दुहितरः। विऽभातीः। गातुम्। कृणवन्। उषसः। जनाय ॥ १ ॥

˅इदमु पुरतो दृश्यमानमिदं ˅त्यत् तदस्माभिः स्तुत्यं सर्वप्रसिद्धं ˅पुरुतमम् अत्यन्तप्रभूतं ˅ज्योतिः तेजः ˅वयुनावत् ॥ वेतेः कान्तिकर्मण इदम् ॥ प्रकृष्टकान्तिमत्। अथवा वयुनमिति प्रज्ञानाम। प्रज्ञोपेतम्। सर्वस्य प्रज्ञापकमित्यर्थः। कीदृक् तेजः। ˅पुरस्तात् पूर्वस्यां दिशि ˅तमसः अन्धकारात् ˅अस्थात् उदतिष्ठत्। एवं सति ˅नूनं सत्यं ˅दिवः आदित्यस्य ˅दुहितरः दुहितृस्थानीयाः ˅विभातीः[2] विभानं कुर्वतीः ˅उषसो ˅जनाय यजमानानां ˅गातुं गमनं गमनादिव्यापारसामर्थ्यं ˅कृणवन् अकुर्वन्[2] ॥

अस्थुरु चित्रा उषसः पुरस्तान्मिताइव स्वरवोऽध्वरेषु ।
व्यू व्रजस्य तमसो द्वारोच्छन्तीरव्रञ्छुचयः पावकाः ॥ २ ॥

अस्थुः। ऊँ इति। चित्राः। उषसः। पुरस्तात्। मिताःऽइव। स्वरवः। अध्वरेषु।
वि। ऊँ इति। व्रजस्य। तमसः। द्वारा। उच्छन्तीः। अव्रन्। शुचयः। पावकाः ॥ २ ॥

˅चित्राः चायनीयाः[3] ˅उषसः ˅पुरस्तात् पूर्वस्यां दिशि ˅अस्थुः तिष्ठन्ति। व्याप्ता इत्यर्थः। तत्र दृष्टान्तः। ˅अध्वरेषु ˅मिताः खाताः ˅स्वरवः यूपाः ˅इव। ते यथा वेद्याः पुरतो भासन्ते तद्वत्। यद्यपि स्वरुशब्दो यूपच्छेदपतितप्रथमशकलवाची ‘ यः प्रथमः शकलः परापतेत्स स्वरुः कार्यः’ इत्युक्तत्वात् तथाप्यत्र मितशब्दश्रवणात् ‘ चषालवन्तः स्वरवः ’ ( ऋ. सं. ३. ८. १० ) इत्यादौ तथा दर्शनाच्चात्र यूपवचनः। ताः ˅व्रजस्य वारकस्य[4] ˅तमसो ˅द्वारा द्वाराणि ˅वि ˅उच्छन्तीः ˅शुचयः दीप्ताः ˅पावकाः शोधिकाः ˅अव्रन् व्यावृण्वन्[6] ॥

---

१. स–अथ तृतीयस्याष्टमाध्यायव्याख्यानमारभते। २. च-फ–विभातीरुषसो जनाय गातुं कृण्वन् आविर्भावं कुर्वन्। ३. प–चायनीयाः श्लाघनीयाः। ४. ख-ग-ण–आवारकस्य; घ-प–अन्धकारस्य; च-फ-भ–आवरकस्य। ६. च–आवृण्वन्; प–व्यवृण्वन्। उ पूरणः।

उच्छन्तीरद्य चितयन्त भोजान्राधोदेयायोषसो मघोनीः ।
अचित्रे अन्तः पणयः ससन्त्वबुध्यमानास्तमसो विमध्ये ॥ ३ ॥

उच्छन्तीः । अद्य । चितयन्त । भोजान् । राधःऽदेयाय । उषसः । मघोनीः ।
अचित्रे । अन्तरिति । पणयः । ससन्तु । अबुध्यमानाः । तमसः । विऽमध्ये ॥ ३ ॥

अद्य अस्मिन् दिने उच्छन्तीः तमः विवासयन्त्यः मघोनीः धनवत्यः उषसः भोजान् भोजयितॄन् यजमानान् तेषां राधोदेयाय सोमादिधनदानाय चितयन्त प्रज्ञापयन्ति । अचित्रे अचायनीये तमसो विमध्ये[1] । अत्यन्तगाढान्धकारे इत्यर्थः । तत्र पणयः वणिज इवादातारः अबुध्यमानाः ससन्तु स्वपन्तु ॥

कुवित्स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य ।
येना नवग्वे अङ्गिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥ ४ ॥

कुवित् । सः । देवीः । सनयः । नवः । वा । यामः । बभूयात् । उषसः । वः । अद्य ।
येन । नवऽग्वे । अङ्गिरे । दशऽग्वे । सप्तऽआस्ये । रेवतीः । रेवत् । ऊष ॥ ४ ॥

हे देवीः द्योतमानाः उषसो वः युष्मान् सनयः पुराणः नवो वा यामः गमनसाधनः सः[2] रथः अद्य अस्मिन् यागदिने कुवित् बहुवारं बभूयात् भवेत् गच्छेदित्यर्थः । येन रथेन हे रेवतीः धनवत्यो यूयं नवग्वे दशग्वे सप्तास्ये सप्तच्छन्दोयुक्तमुखे अङ्गिरे अङ्गिरोगणे । तौ[3] द्वौ तत्र येऽप्यङ्गिरसः[3] तेषां गणे । तथान्यत्र ' नवग्वो नु दशग्वो अङ्गिरस्तमः ' ( ऋ. सं. १०. ६२. ६ ) इति । रेवत् धनवत् यथा भवति तथा ऊष विभातं कृतवत्यः ॥ वसेर्व्युच्छनकर्मणो लिण्मध्यमबहुवचनस्येदं रूपम् ॥

यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः ।
प्रबोधयन्तीरुषसः ससन्तं द्विपाच्चतुष्पाच्चरथाय जीवम् ॥ ५ ॥

यूयम् । हि । देवीः । ऋतयुक्ऽभिः । अश्वैः । परिऽप्रयाथ । भुवनानि । सद्यः ।
प्रऽबोधयन्तीः । उषसः । ससन्तम् । द्विऽपात् । चतुःऽपात् । चरथाय । जीवम् ॥ ५ ॥

हे देवीः द्योतमानाः उषसः यूयं हि खलु ऋतयुग्भिः यज्ञगामिभिः अश्वैः भुवनानि सद्यः परिप्रयाथ परितः प्रकृष्टं गच्छथ । किं कुर्वत्यः । ससन्तं स्वपन्तं द्विपाच्चतुष्पात् मनुष्य-

---

१. त-विमध्ये अन्धकारस्य अन्तर्मध्ये । २. ख-ग-च-ण-भ-' सः ' नास्ति । ३. त-यद्वैते त्रयोऽप्यङ्गिरसः ।

गवादिलक्षणं ᵛजीवं ᵛचरथाय चरणाय गमनादिव्यवहाराय ᵛप्रबोधयन्तीः प्रबोधयन्त्यः सत्यः परिप्रयाथ ॥ ॥ १ ॥

क्व॑ स्वि॑दासां कत॒मा पु॑रा॒णी यया॑ वि॒धाना॑ विद॒धुर्ऋ॒भूणाम् ।
शुभं॒ यच्छु॒भ्रा उ॒षस॒श्चर॑न्ति॒ न वि ज्ञा॑यन्ते स॒दृशी॑रजु॒र्याः ॥ ६ ॥

क्व॑ । स्वि॒त् । आ॒सा॒म् । क॒त॒मा । पु॒रा॒णी । यया॑ । वि॒ऽधाना॑ । वि॒ऽद॒धुः । ऋ॒भूणा॒म् ।
शुभ॑म् । यत् । शु॒भ्राः । उ॒षसः॑ । चर॑न्ति । न । वि । ज्ञा॒य॒न्ते॒ । स॒ऽदृशीः॑ । अ॒जु॒र्याः॑ ॥ ६ ॥

ᵛआसाम् उषसां मध्ये ᵛक्व ᵛस्वित् अभूदद्य[1] ᵛकतमा[2] ᵛपुराणी पुरातनी । ᵛयया ᵛऋभूणां संबन्धीनि ᵛविधाना चमसादिनिर्माणानि ᵛविदधुः अकुर्वन् ऋभवः । ᵛयत् याश्च ᵛउषसः ᵛशुभ्राः दीप्ताः ᵛशुभं ᵛचरन्ति शोभां दीप्तिं कुर्वन्ति । ताः ᵛअजुर्याःअजीर्णा नित्यनूतनाः ᵛन[3] ᵛवि ᵛज्ञायन्ते । यतः[4] ᵛसदृशीः सदृश्यः सर्वेष्वपि दिवसेष्वेकरूपा अतोऽद्यतन्य एता एताः पुराण्य इति न ज्ञायन्ते । उषासादृश्यं[5] ‘ सदृशीरद्य सदृशीरिदु श्वः ’ ( ऋ. सं. १. १२३. ८ ) इत्यत्र प्रतिपादितम् ॥

ता घा॒ ता भ॒द्रा उ॒षसः॑ पु॒रासु॑रभि॒ष्टिद्यु॑म्ना ऋ॒तजा॑तसत्याः ।
यास्वी॑जा॒नः श॑शमा॒न उ॒क्थैः स्तु॒वञ्छंस॒न्द्रवि॑णं स॒द्य आप॑ ॥ ७ ॥

ताः । घ॒ । ताः । भ॒द्राः । उ॒षसः॑ । पु॒रा । आ॒सुः॒ । अ॒भि॒ष्टिऽद्यु॑म्नाः । ऋ॒तजा॑तऽसत्याः ।
यासु॑ । ई॒जा॒नः । श॒श॒मा॒नः । उ॒क्थैः । स्तु॒वन् । शंस॑न् । द्रवि॑णम् । स॒द्यः । आप॑ ॥ ७ ॥

ᵛता ᵛघ । घेति प्रसिद्धौ । ताः खलूपकारिण्यः[6] ᵛता ᵛभद्राः कल्याण्यः स्तुत्या वा ᵛउषसः ᵛपुरा पूर्वम् ᵛआसुः अभवन् । ᵛअभिष्टिद्युम्नाः अभिगमनमात्रेण द्युम्नं धनं यासां ताः । ᵛऋतजातसत्याः । ऋतार्थं यज्ञार्थं जाताश्च ताः सत्याः सत्यफलाश्च तादृश्यः । ᵛयासु उषःसु ᵛईजानः यागं कुर्वाणः ᵛउक्थैः शस्त्रैः ᵛशशमानः शंसमानः ᵛस्तुवन् सामभिः स्तोत्रं निष्पादयन् ᵛशंसन् शस्त्राणि कुर्वन् ᵛद्रविणं धनं ᵛसद्यः ᵛआप प्राप्नोति । ता भद्रा इति संबन्धः ॥

ता आ चर॑न्ति सम॒ना पु॒रस्ता॑त्समा॒नतः॑ सम॒ना प॑प्रथा॒नाः ।
ऋ॒तस्य॑ दे॒वीः सद॑सो बुधा॒ना गवां॒ न सर्गा॑ उ॒षसो॑ जरन्ते ॥ ८ ॥

ताः । आ । च॒र॒न्ति॒ । स॒म॒ना । पु॒रस्ता॑त् । स॒मा॒नतः॑ । स॒म॒ना । प॒प्र॒था॒नाः ।
ऋ॒तस्य॑ । दे॒वीः । सद॑सः । बु॒धा॒नाः । गवा॑म् । न । सर्गाः॑ । उ॒षसः॑ । ज॒र॒न्ते॒ ॥ ८ ॥

---

१. ख-ग-च-ण-प-फ-भ-अभूत् । २. त-कतमा च । ३. ख-ग-घ-च-ण-भ-ल-स-‘ न ’ नास्ति । ४. ख-ग-ण-त-न-भ-ल-यथा; स-तथा । ५. त-उषसा सादृश्यम्; न-उषस सादृश्यम् । ६. ख-ग-घ-ण-न-प-भ-ल-स-स्वरूपकारिण्यः; च-फ-स्वरूपचारिण्यः ।

ᵛताः उषसः ᵛआ सर्वतः ᵛचरन्ति । ᵛसमना[1] सर्वतः समानाः[1] ᵛपुरस्तात् पूर्वस्यां दिशि ᵛसमानतः समानाद्देशात् अन्तरिक्षात्[2] ᵛसमना सर्वतः[3] ᵛपप्रथानाः प्रथमानाः[4] ᵛऋतस्य यज्ञस्य ᵛसदसः सदः । तत्रस्थम् ऋत्विग्घविरादिकम्[5] इत्यर्थः । ᵛबुधानाः बोधयन्त्यः ॥ अन्तर्भावितण्यर्थोऽयम् ॥ एवं महानुभावाः ᵛउषसो ᵛजरन्ते स्तूयन्ते । ᵛगावां ᵛसर्गाः ᵛन उदकानां सृष्टय इव । 'गवां सर्गा न रश्मयः' (ऋ. सं. ४. ५२. ५) इति हि श्रुतम् । ता यथा सर्वत्र प्रसंगादुपकारत्वाच्च स्तूयन्ते तद्वत् ॥

ता इन्न्वे॒३॒व स॒मना॑ समा॒नीरमी॑तवर्णा उ॒षस॑श्चरन्ति ।
गूह॑न्ती॒रभ्व॒मसि॑तं॒ रुश॑द्भिः शु॒क्रास्त॒नूभि॒ः शुच॑यो रुचा॒नाः ॥ ९ ॥

ताः । इत् । नु । एव । स॒मना॑ । स॒मा॒नीः । अमी॑तऽवर्णाः । उ॒षस॑ः । च॒र॒न्ति॒ ।
गूह॑न्तीः । अभ्व॑म् । असि॑तम् । रुश॑त्ऽभिः । शु॒क्राः । त॒नूभि॑ः । शुच॑यः । रु॒चा॒नाः ॥ ९ ॥

ᵛताः[6] ᵛएव उषसः । इदिति पूरणः । ᵛनु अद्य ᵛसमना समानाः एकधेत्यर्थः । ᵛसमानीः एकरूपाः ᵛअमीतवर्णाः अहिंसितवर्णाः[7] अपरिमितवर्णा वा ᵛउषसश्चरन्ति सर्वतः । किं कुर्वत्यः । ᵛअभ्वम् । महन्नामैतत् । अतिमहत् ᵛअसितं कृष्णं[8] रूपं ᵛगूहन्तीः गोपयन्त्यः ᵛरुशद्भिः रोचमानैः ᵛतनूभिः स्वशरीरैः ᵛशुक्राः दीप्ताः ᵛशुचयः शुद्धाः ᵛरुचानाः रोचमाना रोचयन्त्यो वा ॥

र॒यिं दि॑वो दुहितरो विभा॒तीः प्र॒जाव॑न्तं यच्छता॒स्मासु॑ देवीः ।
स्यो॒नादा वः॑ प्रति॒बुध्य॑मानाः सु॒वीर्य॑स्य॒ पत॑यः स्याम ॥ १० ॥

र॒यिम् । दि॒वः । दु॒हि॒त॒रः । वि॒ऽभा॒तीः । प्र॒जाऽव॑न्तम् । य॒च्छ॒त॒ । अ॒स्मासु॑ । दे॒वीः ।
स्यो॒नात् । आ । व॒ः । प्र॒ति॒ऽबुध्य॑मानाः । सु॒ऽवीर्य॑स्य । पत॑यः । स्या॒म॒ ॥ १० ॥

हे ᵛदिवो ᵛदुहितरः द्योतमानस्यादित्यस्य दुहितृस्थानीयाः ᵛविभातीः विभात्यो विशेषेण भानं कुर्वत्यः[9] ᵛअस्मासु ᵛप्रजावन्तं ᵛरयिं पुत्राद्युपेतं धनं ᵛयच्छत दत्त । हे ᵛदेवीः देव्यः ᵛस्योनात् सुखात् निमित्तभूतात् ᵛवः युष्मान् ᵛप्रतिबुध्यमानाः प्रतिबोधयन्तो वयं ᵛसुवीर्यस्य ᵛपतयः ᵛस्याम । पुत्रादिसहितस्य धनस्य पालका भवेम[10] ॥

'तद्वो दिवः' इति व्युष्टायां जपेत् ॥

---

१. ख-ग-ण-भ-ल–समानाः; च-समनाः; त-प-समना सर्वतः समानाः समेन । २. त–एकरूपादन्तरिक्षात् । ३. ख-ग-च-ण-न-भ-ल-स–'सर्वतः' नास्ति । ४. ख-ग-प-भ–समेन प्रथमानाः । ५. ख-ग-घ-च-ण-भ–ऋत्विगादिकम्; ल–ऋत्विग्यशादिकम्; स–ऋत्विग्वशादिकम् । ६. ख-प-फ-भ– ता इत् ताः । ७. ख-प-फ-भ–'अहिंसितवर्णाः' नास्ति । ८. च–तमोरूपम् । ९. त–कुर्वत्यः सत्यः । १०, प– भवेम । आ पूरणः ।

तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः ।
वयं स्याम यशसो जनेषु तद्द्यौश्च धत्तां पृथिवी च देवी ॥ ११ ॥

तत् । वः । दिवः । दुहितरः । विऽभातीः । उप । ब्रुवे । उषसः । यज्ञऽकेतुः ।
वयम् । स्याम । यशसः । जनेषु । तत् । द्यौः । च । धत्ताम् । पृथिवी । च । देवी ॥ ११ ॥

हे ᵛदिवो ᵛदुहितरः हे ᵛउषसः ᵛविभातीः[1] ᵛवः युष्मान् ᵛतत् उत्तरार्धप्रथमपादेन वक्ष्यमाणं फलं ᵛयज्ञकेतुः । यज्ञ एव केतुः प्रज्ञापको यस्य तादृशोऽहम् ᵛउप ᵛब्रुवे उपेत्य ब्रवीमि । अथ बहुवदुच्यते । ᵛवयं स्तुवन्तः[2] ᵛजनेषु अस्मत्समानेषु मध्ये ᵛयशसः कीर्तेः अन्नस्य[3] वा[3] स्वामिनः ᵛस्याम । ᵛतत् यशः ᵛद्यौः ᵛपृथिवी ᵛच ᵛदेवी ᵛधत्तां धारयताम्[4] ॥ ॥ २ ॥

' प्रति ष्या ' इति सप्तर्चं सप्तमं सूक्तं वामदेवस्यार्षं[5] गायत्रमुषोदेवताकम् । ' प्रति ष्या सप्त गायत्रम् ' इत्यनुक्रमणिका । प्रातरनुवाक उषस्ये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं शस्यम् । ' अथोषस्यः प्रति ष्या सूनरी ' ( आश्व. श्रौ. ४. १४ ) इति हि सूत्रितम् ॥

प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः । दिवो अदर्शि दुहिता ॥ १ ॥

प्रति । स्या । सूनरी । जनी । विऽउच्छन्ती । परि । स्वसुः । दिवः । अदर्शि । दुहिता ॥ १ ॥

ᵛस्या सा संस्तूयमाना[6] ᵛसूनरी सुष्ठु प्राणिनां नेत्री ᵛजनी जनयित्री फलानां ᵛस्वसुः स्वसृस्थानीयाया रात्रेः ᵛपरि उपरिभागे रात्रिपर्यवसानकाले ᵛव्युच्छन्ती तमो विवासयन्ती । ' स्वसा स्वस्रे ज्यायस्यै ' ( ऋ. सं. १. १२४. ८ ) इत्युक्तम् । ᵛदिवः द्योतमानस्यादित्यस्य ᵛदुहिता उषाः ᵛप्रति ᵛअदर्शि प्रतिदृश्यते सर्वैः ॥

अश्वेव चित्रारुषी माता गवामृतावरी । सखाभूदश्विनोरुषाः ॥ २ ॥

अश्वाऽइव । चित्रा । अरुषी । माता । गवाम् । ऋतऽवरी । सखा । अभूत् । अश्विनोः । उषाः ॥ २ ॥

ᵛअश्वेव ᵛचित्रा चायनीया ᵛअरुषी रोचमाना ᵛगवां रश्मीनां ᵛमाता निर्मात्री ᵛऋतावरी यज्ञवती ᵛउषाः ᵛअश्विनोः ᵛसखा समानख्याना सह स्तूयमाना ᵛअभूत् भवति । अश्विनोः उषसा[7] सह स्तूयमानत्वात् सखित्वं परस्परम् ॥

उत सखास्यश्विनोरुत माता गवामसि । उतोषो वस्व ईशिषे ॥ ३ ॥

उत । सखा । असि । अश्विनोः । उत । माता । गवाम् । असि । उत । उषः । वस्वः । ईशिषे ॥ ३ ॥

---

१. प–विशेषण भानु ( ? नं ) कुर्वन्त्यः; त–विभातीर्विविधभानाः । २. ख-ग-च-ण-फ-भ-ल–ब्रुवन्तः; प-स–' स्तुवन्तः ' नास्ति । ३. प–' अन्नस्य वा ' नास्ति । ४. ख-ग-च-ण-फ-भ–धारयताम् । च पूरणः । ५. स–वामदेव्यम् । ६. त–प्रस्तूयमाना । ७. ख-ग-ण-भ-स–उषा उषसः; घ–उषसः ।

उत अपि च अश्विनोः सखा[1] असि। उत अपि च गवां रश्मीनां माता असि। उत अपि च हे उषः वस्वः धनस्य ईशिषे ईश्वरा[2] भवसि ॥

**यावयद्द्वेषसं त्वा चिकित्वित्सूनृतावरि । प्रति स्तोमैरभुत्स्महि ॥ ४ ॥**

यवयत्ऽद्वेषसम्। त्वा। चिकित्वित्। सूनृताऽवरि। प्रति। स्तोमैः। अभुत्स्महि ॥ ४ ॥

यावयद्द्वेषसम्[3]। यवयन्तो वियुज्यमाना द्वेषांसि द्वेष्टारो यस्यास्तादृशी। पृथक्क्रियन्ते द्वेषांस्यनयेति वा[4]। रात्रौ हननायोद्युक्ता द्वेषिण उषःकाले हि पलायन्ते[5]। तादृशीं चिकित्वित् ज्ञापयन्तीं त्वा त्वां सूनृतावरि[6]। सूनृतेति[7] वाङ्नाम। तद्वति[7] देवि स्तोमैः स्तुतिभिः प्रति अभुत्स्महि प्रतिबोधयामः। स्तुम इत्यर्थः ॥

**प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः। ओषा अप्रा उरु ज्रयः ॥ ५ ॥**

प्रति। भद्राः। अदृक्षत। गवाम्। सर्गाः। न। रश्मयः। आ। उषाः। अप्राः। उरु। ज्रयः ॥ ५ ॥

भद्राः स्तुत्याः रश्मयः प्रति अदृक्षत प्रतिदृश्यन्ते। गवाम्[8] उदकानां सर्गाः न[8] वर्षधारा इवेयम् उषाः उरु ज्रयः महत्तेजः आ अप्राः आपूरयत् ॥

**आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः। उषो अनु स्वधामव ॥ ६ ॥**

आऽपप्रुषी। विभाऽवरि। वि। आवः। ज्योतिषा। तमः। उषः। अनु। स्वधाम्। अव ॥ ६ ॥

हे विभावरि विभावति उषः त्वम् आपप्रुषी आपूरयन्ती तेजसा जगत् ज्योतिषा तेजसा तमः अन्धकारं व्यावः व्यावृणोः। किंच अनु[9] पश्चात्[9] स्वधां हविर्लक्षणमन्नम् अव रक्ष ॥

'आ[10] द्यां तनोषि' इत्येषा देवानां हविःषु उषसोऽनुवाक्या। सूत्रितं च—'आ द्यां तनोषि रश्मिभिरावहन्ती पोष्या वार्याणि' (आश्व. श्रौ. ६. १४) इति[10] ॥

**आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम्। उषः शुक्रेण शोचिषा ॥ ७ ॥**

आ। द्याम्। तनोषि। रश्मिऽभिः। आ। अन्तरिक्षम्। उरु। प्रियम्। उषः। शुक्रेण। शोचिषा ॥ ७ ॥

हे उषः रश्मिभिः द्यां दिवम् आ तनोषि। उरु विस्तीर्णं प्रियम् अन्तरिक्षं रश्मिभिः आ तनोषि। शुक्रेण दीप्तेन शोचिषा प्रकाशेन युक्ता सती एवं करोषि ॥  ॥ ३ ॥

---

१. त–सखा सखी। २. ख-ग-च-ण-प-फ-भ– ईश्वरी; ल-स–ईश्वरः। ३. प-ल–यवयद्द्वेषसम्। ४. ख-ग-च-ण-भ-ल-स–'वा' नास्ति। ५. ख-ग-च-ण-प-भ–पलायन्त इत्यर्थः। ६. ख-ग-च-ण-प-फ-भ– हे सूनृतावरि। ७. प–सत्यवाग्वति। ८. ख-ग-च-ण-भ–गवां सर्गा न उदकानाम्। ९. ख-ग-घ-च-ण-न-भ-ल-स–'अनु पश्चात्' नास्ति। १०. ख-ग-च-ण-भ-ल-स–'आ द्यां...इति' नास्ति।

'तद्देवस्य' इति सप्तर्चमष्टमं सूक्तं वामदेवस्यार्षं जागतं सावित्रम्। तथा चानुक्रम्यते— 'तद्देवस्य सावित्रं तु जागतम्' इति। आभिप्लविके तृतीयेऽहनि वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम्[1]। तथा च सूत्रितं—'तद्देवस्य घृतेन द्यावापृथिवी इति तिस्रः' (आश्व. श्रौ. ७. ७) इति॥

तद्देवस्य॑ सवि॒तुर्वार्यं॑ म॒हद्वृ॑णी॒महे॒ असु॑रस्य॒ प्रचे॑तसः।
छ॒र्दिर्येन॑ दा॒शुषे॒ यच्छ॑ति॒ त्मना॒ तन्नो॑ म॒हाँ उद॑यान्दे॒वो अ॒क्तुभिः॑॥ १॥

तत्। दे॒वस्य॑। स॒वि॒तुः। वार्य॑म्। म॒हत्। वृ॒णी॒महे॑। असु॑रस्य। प्रऽचे॑तसः।
छ॒र्दिः। येन॑। दा॒शुषे॑। यच्छ॑ति। त्मना॑। तत्। नः॒। म॒हान्। उत्। अ॒या॒न्। दे॒वः। अ॒क्तुऽभिः॑॥१॥

ᵛसवितुः प्रेरकस्य ᵛदेवस्य ᵛवार्यं वरणीयं ᵛमहत् पूज्यं ᵛतत् धनं ᵛवृणीमहे प्रार्थयामः। ᵛअसुरस्य। असुर्बलम्। तद्वतः ᵛप्रचेतसः प्रकृष्टमतेः[2]। देवस्येति संबन्धः। ᵛयेन धनेन युक्तः सन् ᵛछर्दिः। गृहनामैतत्। गृहोपलक्षितं धनजातं ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛत्मना आत्मनैव ᵛयच्छति ᵛतत् ᵛछर्दिः ᵛमहान् ᵛदेवः सविता ᵛअक्तुभिः रात्रिभिः। एतदह्नामप्युपलक्षणम्। सर्वैः दिवसैः सर्वेषु दिवसेषु ᵛनः अस्माकम् ᵛउदयान् उद्यच्छतु करोत्वित्यर्थः। यद्वा। छर्दिरिति तेजोनाम। तत्तेज उद्यच्छत्विति॥

दि॒वो ध॒र्ता भुव॑नस्य प्र॒जाप॑तिः पि॒शङ्गं॑ द्रा॒पिं प्रति॑ मुञ्चते क॒विः।
वि॒च॒क्ष॒णः प्र॒थय॑न्नापृ॒णन्नु॒र्वजी॑जनत्सवि॒ता सु॒म्नमु॒क्थ्य॑म्॥ २॥

दि॒वः। ध॒र्ता। भुव॑नस्य। प्र॒जाऽप॑तिः। पि॒शङ्ग॑म्। द्रा॒पिम्। प्रति॑। मु॒ञ्च॒ते॒। क॒विः।
वि॒ऽच॒क्ष॒णः। प्र॒थय॑न्। आ॒ऽपृ॒णन्। उ॒रु। अजी॑जनत्। स॒वि॒ता। सु॒म्नम्। उ॒क्थ्य॑म्॥ २॥

ᵛदिवः द्युलोकस्य ᵛधर्ता धारकः। न केवलं दिव एव अपि तु ᵛभुवनस्य कृत्स्नस्यापि लोकस्य धर्ता ᵛप्रजापतिः प्रजानां प्रकाशवृष्ट्यादिना पालयिता ᵛकविः प्राज्ञो देवः ᵛपिशङ्गं ᵛद्रापिं हिरण्मयं कवचं ᵛप्रति ᵛमुञ्चते। आच्छादयति प्रत्युदयम्। ᵛविचक्षणः विविधं द्रष्टा स एव देवः[3] ᵛप्रथयन् प्रख्यापयन् तेजः ᵛआपृणन् आपूरयन् परितः ᵛउरु प्रभूतं ᵛसुम्नं सुखम् ᵛउक्थ्यं स्तुत्यम् ᵛअजीजनत् उत्पादयति॥

---

१. ख-ण-न-भ-ल–सावित्रं निविद्धानम्; स–सावित्रं निविद्धानीयम्। २. ख-ग-ण-भ-ल-स–प्रकृष्टतमः; घ–प्रकृष्टस्य; च–प्रकृष्टतमस्य। ३. प–देवः सविता।

आप्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे ।
प्र बाहू अस्राक्सविता सवीमनि निवेशयन्प्रसुवन्नक्तुभिर्जगत् ॥ ३ ॥

आ । अप्राः । रजांसि । दिव्यानि । पार्थिवा । श्लोकम् । देवः । कृणुते । स्वाय । धर्मणे ।
प्र । बाहू इति । अस्राक् । सविता । सवीमनि ।
निऽवेशयन् । प्रऽसुवन् । अक्तुऽभिः । जगत् ॥ ३ ॥

अयं ᵛदेवः सविता ᵛदिव्यानि द्युसंबन्धीनि ᵛपार्थिवा पार्थिवानि[1] ᵛरजांसि लोकान् । तिस्रः खलु[2] द्यावः पृथिव्यश्च । 'तिस्रो भूमीर्धारयन् त्रीरुत द्यून्' (ऋ. सं. २. २७. ८) इति हि श्रुतम् । ᵛआप्राः । आपूरयति स्वाभिर्भाभिर्देवः । ᵛस्वाय ᵛधर्मणे स्वकीयाय धारणाय ᵛश्लोकं प्रशस्तिं ᵛकृणुते करोति । ᵛसविता ᵛसवीमनि प्रसवेऽनुज्ञायां निमित्तायां ᵛबाहू स्वीयौ ᵛप्र ᵛअस्राक् प्रसृजति । प्रसारयतीत्यर्थः । किं कुर्वन् । ᵛअक्तुभिः कान्तिभिः ᵛजगत् ᵛनिवेशयन् स्वस्वकार्ये स्थापयन् ᵛप्रसुवन् प्रेरयन् । अथवा अक्तुभिरिति रात्रिनाम । तदुपलक्षितैः सर्वैर्वासरैः सर्वेष्वपि दिनेष्वेवं करोतीत्यर्थः ॥

अदाभ्यो भुवनानि प्रचाकशद्व्रतानि देवः सविताभि रक्षते ।
प्रास्राग्बाहू भुवनस्य प्रजाभ्यो धृतव्रतो महो अज्मस्य राजति ॥ ४ ॥

अदाभ्यः । भुवनानि । प्रऽचाकशत् । व्रतानि । देवः । सविता । अभि । रक्षते ।
प्र । अस्राक् । बाहू इति । भुवनस्य । प्रऽजाभ्यः । धृतऽव्रतः । महः । अज्मस्य । राजति ॥ ४ ॥

ᵛसविता ᵛदेवः ᵛअदाभ्यः अन्यैरहिंसितः सन् ᵛभुवनानि ᵛप्रचाकशत् दीपयन् ᵛव्रतानि कर्माणि प्राणिनाम् ᵛअभि ᵛरक्षते । ᵛभुवनस्य लोकस्य ᵛप्रजाभ्यः[3] तत्रत्याभ्यः[3] ᵛबाहू स्वीयौ ᵛप्रास्राक् प्रसारयति । स्वस्वकर्मणे अनुजानातीत्यर्थः[4] । सर्वव्यापाराणां सूर्याधीनत्वात् । 'सविता वै प्रसवानामीशे' (ऐ. ब्रा. १. १६) इति हि श्रुतिः । ᵛधृतव्रतः धृतकर्मा स तथा कुर्वन् ᵛमहः महतः ᵛअज्मस्य जगतः ᵛराजति ईश्वरो भवति ॥

त्रिरन्तरिक्षं सविता महित्वना त्री रजांसि परिभूस्त्रीणि रोचना ।
तिस्रो दिवः पृथिवीस्तिस्र इन्वति त्रिभिर्व्रतैरभि नो रक्षति त्मना ॥ ५ ॥

त्रिः । अन्तरिक्षम् । सविता । महिऽत्वना । त्री । रजांसि । परिऽभूः । त्रीणि । रोचना ।
तिस्रः । दिवः । पृथिवीः । तिस्रः । इन्वति । त्रिऽभिः । व्रतैः । अभि । नः । रक्षति । त्मना ॥ ५ ॥

---

१. त–पृथिवीसंबन्धीनि । २. ग-च-ण-भ–तु । ३. ख-प-भ-ल–प्रजाभ्यस्तत्प्रजाभ्यः; ग-च–प्रजापतयस्तत्प्रजाभ्यः; ण–प्राजापत्यस्तत्प्रजाभ्यः । ४. ख-ग-च-ण-प-भ–अनुज्ञापयतीत्यर्थः ।

अयं vसविता vत्रिः त्रिभेदम् vअन्तरिक्षम् । अन्तरा क्षान्तं भवति जगदित्यन्तरिक्षम् । vपरिभूः परिभविता[1] सन् vमहित्वना महित्वेन vइन्वति व्याप्नोति । 'वायुविद्युद्वरुणाख्यास्त्रयो लोका अन्तरिक्षभेदाः स वायुलोकं स वरुणलोकम्' (कौ. उ. १. ३) इत्यादिश्रुतेः । vत्री vरजांसि रञ्जनात्मकानि त्रीणि क्षित्यन्तरिक्षद्युलक्षणान् त्रीन् लोकान् इन्वति । पूर्वमन्तरिक्षस्यैवावान्तरभेद उक्तः इह तु सामान्याकारेणेत्यपुनरुक्तिः । vत्रीणि vरोचना रोचनानि रोचमानान् अग्निवाय्वादित्यान् उक्तस्थानत्रयस्वामित्वेन इन्वति । पूर्वमन्तरिक्षस्यैवावान्तरभेद उक्तः । अथ द्युपृथिव्योरवान्तरभेद उच्यते । vतिस्रो vदिवः इन्द्रप्रजापतिसत्याख्यान्[2] त्रीन् लोकान् इन्वति । तथा vतिस्रः vपृथिवीः इन्वति । क्षित्यवान्तरभेदान् लोकान् इन्वति । एवं सर्वत्र व्याप्तो देवः vत्रिभिर्व्रतैः कर्मभिः उष्णवर्षहिमाख्यैः vनः अस्मान् vत्मना आत्मनैव स्वीयानुग्रहबुद्ध्यैव vअभि vरक्षति अभिरक्षतु । परिपालयतु ॥

**बृहत्सुम्नः प्रसवीता निवेशनो जगतः स्थातुरुभयस्य यो वशी ।**

**स नो देवः सविता शर्म यच्छत्वस्मे क्षयाय त्रिवरूथमंहसः ॥ ६ ॥**

बृहत्ऽसुम्नः । प्रऽसविता । निऽवेशनः । जगतः । स्थातुः । उभयस्य । यः । वशी ।

सः । नः । देवः । सविता । शर्म । यच्छतु । अस्मे इति । क्षयाय । त्रिऽवरूथम् । अंहसः ॥ ६ ॥

यः vबृहत्सुम्नः प्रभूतधनः प्रभूतसुखो[3] वा[3] vप्रसविता प्रकर्षेणानुज्ञाता कर्मणां vनिवेशनः सर्वैर्गन्तव्यः । vजगतः जङ्गमस्य vस्थातुः स्थावरस्य vउभयस्य vयो vवशी vसः महान् vसविता vदेवः vनः अस्मभ्यं vशर्म सुखं vयच्छतु । कीदृशं शर्म । vत्रिवरूथम् । त्रीणि वरूथानि गृहाणि स्थानानि क्षित्यादीनि यस्य तत्तादृशम् । vअस्मे अस्माकम् vअंहसः पापस्य vक्षयाय भवत्विति शेषः ॥

राजक्रये 'आगन्देवः' इत्येषानुवचनीया । सूत्रितं च–'आगन्देव ऋतुभिर्वर्धतु क्षयमित्यर्धर्च आरमेत्' (आश्व. श्रौ. ४. ४) इति ॥

**आगन्देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषम् ।**

**स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतु ॥ ७ ॥**

आ । अगन् । देवः । ऋतुऽभिः । वर्धतु । क्षयम् । दधातु । नः । सविता । सुऽप्रजाम् । इषम् ।

सः । नः । क्षपाभिः । अहऽभिः । च । जिन्वतु ।

प्रजाऽवन्तम् । रयिम् । अस्मे इति । सम् । इन्वतु ॥ ७ ॥

vदेवः vसविता vऋतुभिः सह vआगन् आगच्छतु ॥ गमेर्लङि रूपम् ॥ किंच vक्षयं गृहं vवर्धतु वर्धयतु । vनः अस्माकं vसुप्रजां शोभनपुत्राद्युपेतम् vइषम् अन्नं vदधातु ददातु । vसः एव

---

१. ख-प-फ-भ–परितो भविता । २. ख-भ– अग्नीन्द्रप्रजापतिसत्याख्यान्; फ–अग्नीन्द्रप्रजापतिरित्याख्यान् । ३. ख-ग-च-ण-भ–'प्रभूतसुखो वा' नास्ति ।

ᵛनः अस्मान् ᵛक्षपाभिः रात्रिभिः ᵛअहभिश्च । सर्वेषु दिनेष्वित्यर्थः । ᵛजिन्वतु प्रीणयतु धनादिभिः[1]। ᵛअस्मे अस्मासु ᵛप्रजावन्तं ᵛरयिं ᵛसमिन्वतु व्याप्नोतु । प्रापयत्वित्यर्थः ॥ ॥ ४ ॥

'अभूद्देवः' इति षडृचं नवमं सूक्तं वामदेवस्यार्षं सावित्रम् । अन्त्या त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । तथा चानुक्रमणिका—'अभूद्देवः षट् त्रिष्टुबन्तम्' इति । अग्निष्टोमे वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम्[2] । तथा च सूत्रम्—'अभूद्देव एकया च दशभिश्च स्वभूते' ( आश्व. श्रौ. ५. १८ ) इति । आद्या सावित्रग्रहस्यानुवाक्या । तथा च सूत्रं—'सावित्रेण ग्रहेण चरन्त्यभूद्देवः सविता वन्द्यो नु नः' ( आश्व. श्रौ. ५. १८ ) इति ॥

**अभूद्देवः सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः ।**
**वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥ १ ॥**

अभूत् । देवः । सविता । वन्द्यः । नु । नः । इदानीम् । अह्नः । उपऽवाच्यः । नृऽभिः ।
वि । यः । रत्ना । भजति । मानवेभ्यः । श्रेष्ठम् । नः । अत्र । द्रविणम् । यथा । दधत् ॥ १ ॥

सः ᵛसविता ᵛदेवः ᵛअभूत् प्रादुरासीत् । अतः ᵛनु क्षिप्रमेव ᵛनः अस्माकं ᵛवन्द्यः वन्दनीयो भवति । ᵛइदानीं यागकाले ᵛअह्नः तृतीयसवने ᵛनृभिः अस्मदीयैर्होतृभिः ᵛउपवाच्यः स्तुत्यः[3] भवति । ᵛयः देवः ᵛमानवेभ्यः[4] मनोरपत्येभ्यो यजमानेभ्यस्तेषामर्थाय ᵛरत्ना रमणीयानि धनानि ᵛवि ᵛभजति स देवः ᵛश्रेष्ठं प्रशस्यं ᵛद्रविणं गवादिलक्षणं धनं ᵛनः अस्मभ्यम्[5] ᵛअत्र अस्मिन् कर्मणि ᵛयथा ᵛदधत् दद्यादित्यर्थः । तथा वन्द्य उपवाच्यश्चाभूदिति ॥

**देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमम् ।**
**आदिद्दामानं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥ २ ॥**

देवेभ्यः । हि । प्रथमम् । यज्ञियेभ्यः । अमृतऽत्वम् । सुवसि । भागम् । उत्ऽतमम् ।
आत् । इत् । दामानम् । सवितः । वि । ऊर्णुषे । अनूचीना । जीविता । मानुषेभ्यः ॥२॥

ᵛप्रथमं ᵛदेवेभ्यो ᵛहि । हिशब्दः प्रसिद्धौ । देवेभ्यः ᵛयज्ञियेभ्यः यज्ञार्हेभ्यः ᵛअमृतत्वं तत्साधनम् ᵛउत्तमम् उत्कृष्टतमं ᵛभागं सोमादिलक्षणं[6] ᵛसुवसि अनुजानासि । ᵛआदित् अनन्तरमेव ᵛदामानं हविषां दातारं हे ᵛसवितः ᵛव्यूर्णुषे प्रकाशयसि । ᵛमानुषेभ्यः यजमानेभ्यः ᵛजीविता जीवितानि ᵛअनूचीना अनुक्रमयुक्तानि । पितृपुत्रपौत्रा इत्यनुक्रमः । ईदृशानि जीवितानि पश्चात् व्यूर्णुषे ॥

---

१. ख-ग-घ-च-ण-त-प-फ-भ-ल-स-धनानि । २. ख-फ-सावित्रं निविद्धानमिदम् ; स-°निविद्धानीयमिदम् । ३. त-स्तुत्यश्च । ४. ण- मानवेभ्यो यज्ञियेभ्यः । ५. ख-ग-च-ण-न-भ-अस्माकम् । ६. त-सोमाज्यादिलक्षणम् ।

अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ।

देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥ ३ ॥

अचित्ती । यत् । चकृम । दैव्ये । जने । दीनैः । दक्षैः । प्रऽभूती । पुरुषत्वता ।

देवेषु । च । सवितः । मानुषेषु । च । त्वम् । नः । अत्र । सुवतात् । अनागसः ॥ ३ ॥

हे सवितः वयम् अचित्ती अप्रज्ञया दैव्ये जने देवे त्वयि दीनैः दुर्बलैः पुत्रादिभिर्ऋत्विग्भिर्वा तथा दक्षैः प्रवृद्धैर्वा तैः प्रभूती प्रभूत्या। ऐश्वर्यमदेनेति यावत्। पुरुषत्वता पुरुषवत्तया च यत् आगः चकृम। न केवलं त्वय्येव कृतम् अपि तु देवेषु अन्येषु मानुषेषु च अज्ञानादिभिः[1] यच्चकृम नः कृतवतोऽस्मान् त्वम् अत्र अस्मिन् कर्मणि अनागसः अपापान्[2] सुवतात् अनुजानीहि ॥

देवसुवां हविःषु सवितुः सत्यप्रसवस्य ' न प्रमिये ' इति याज्या। सूत्रितं[3] च[3]—' न प्रमिये सवितुर्दैव्यस्य तद्बृहस्पते प्रथमम् ' ( आश्व. श्रौ. ४. ११ ) इति ॥

न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति ।

यत्पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन्दिवः सुवति सत्यमस्य तत् ॥ ४ ॥

न । प्रऽमिये । सवितुः । दैव्यस्य । तत् । यथा । विश्वम् । भुवनम् । धारयिष्यति ।

यत् । पृथिव्याः । वरिमन् । आ । सुऽअङ्गुरिः ।

वर्ष्मन् । दिवः । सुवति । सत्यम् । अस्य । तत् ॥ ४ ॥

सवितुर्दैव्यस्य देवस्य तत् कर्म न प्रमिये न प्रमीयेत न प्रहिंस्येत। हिंसार्हं न भवतीत्यर्थः ॥ कृत्यार्थे केन्प्रत्ययः ॥ यद्वा। दैव्यस्येति अधिकरणे[4] षष्ठी । सा च कर्मार्था। दैव्यं कर्मेत्यर्थः। कथमहिंस्यमित्यत आह। यथा विश्वं भुवनं धारयिष्यति धारयति। विश्वधारणरूपं यत् कर्मास्ति तन्न प्रमिये। तथा स्वङ्गुरिः शोभनाङ्गुल्युपलक्षितहस्तः यत्[5] यः[5] पृथिव्या वरिमन्ना। आकारश्चार्थे। भूम्या उरुत्वे च सुवति प्रेरयति[6]। तथा दिवः द्युलोकस्य वर्ष्मन् उरुत्वे च सुवति। अस्य देवस्य तत् उक्तं कर्म सत्यम् अबाध्यमिति ॥

---

१. ल–तथाज्ञानादिभिः। २. न-ल-स–' अपापान् ' नास्ति। ३. त–तथा च सूत्रम्। ४. त–व्यधिकरणे। ५. ख-ग-च-ण-भ-ल-स– यः; त–यम्; न–यत्। ६. न-ल-स–' प्रेरयति ' नास्ति।

**इन्द्रंज्येष्ठान्बृहद्भ्यः पर्वतेभ्यः क्षयाँ एभ्यः सुवसि पुस्त्यावतः ।**
**यथायथा पतयन्तो वियेमिर एवैव तस्थुः सवितः सवाय ते ॥ ५ ॥**

इन्द्रंऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः । सुवसि । पस्त्यंऽवतः ।
यथांऽयथा । पतयन्तः । विऽयेमिरे । एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥ ५ ॥

हे स ... ज्येष्ठो ज्यायान् पूज्यो येषां ते
तादृशाः । ता ... सि प्रेरयसि । किंच एभ्यः
यजमानेभ्यः ... सुवसि प्रेरयसि । यथा-
यथा पतयन् ... सवाय अनुज्ञायै एवैव
एवमेव नियर ...



**ये ते ... त ।**
**इन्द्रो ... यंसत् ॥ ६ ॥**

ये । ते । त्रि ... गम् । आऽसुवन्ति ।
इन्द्रः । द्या ...
आदित्यैः । ...

ये यज ... तीयार्थे प्रथमा । सोमान् ।
यद्वा । सवा ... न केवलमेकस्मिन्नेवाहनि
सवनत्रयेषु अ ... सुवन्ति अभिषुण्वन्ति ।
तेभ्यः नः ... द्यावापृथिव्यौ च अद्भिः
विशिष्टा ... च शर्म यंसत् । सावित्रे
सूक्ते इन्द्रादी ...

' को वस्त्राता ' इति दशर्चं दशमं सूक्तं वामदेवस्यार्षं विश्वदेवदेवताकम्[७] । अष्टम्याद्यास्तिस्रो गायत्र्यः शिष्टा अनादेशपरिभाषया त्रिष्टुभः । तथा चानुक्रम्यते—' को वो दश वैश्वदेवं त्रिगायत्र्यन्तं तु ' इति । विनियोगो लैङ्गिकः ॥

---

१. ख-ग-ण-संग्रामान् जगद्वीरादीन्; स-संग्रामान् संगरादीन् । २. ख-ग-च-ण-प-भ-गच्छन्तः प्राणिनः । ३. ख-ग-च-ण-भ-त्वया । ४. प-तथा ते । ५. न-ल-स-' द्यावापृथिवी ' नास्ति । ६. त-निपातभाक्त्वात्; प-निपातमुक्त्वफत्वात् । ७. ख-ग-च-ण-त-न-भ-ल-स-विश्वेदेवदेवताकम् ।

अचि॑त्ती॒ यच्च॑कृ॒मा दैव्ये॒ जने॑ दी॒नैर्दक्षैः॒ प्रभू॑ती पूरुष॒त्वता॑ ।

दे॒वेषु॑ च सवित॒र्मानु॑षेषु च॒ त्वं नो॒ अत्र॑ सुवता॒दना॑गसः ॥ ३ ॥

अचि॑ … ती । पु॒रु॒ष॒त्वता॑ ।

दे॒वेषु॑ … व॒ता॒त् । अना॑गसः ॥ ३ ॥

हे … नैः दुर्बलैः पुत्रादिभिर्ऋत्विग्भिर्वा

तथा … । ᵛपुरुषावता पुरुषवत्तया च

ᵛयत् अ … ᵛमानुषेषु ᵛच अज्ञानादिभिः[1]

यच्चकृम … नागसः अपापान्[2] ᵛसुवतात्

अनुजा …

… या । सूत्रितं[3] च[3]—' न प्रमिये

सवितुर्वै …

न … ष्यति ।

यत् … स॒त्यम॑स्य॒ तत् ॥ ४ ॥

न । प्र … नम् । धा॒र॒यि॒ष्यति॑ ।

यत् । …

वर्ष्मन् …

… येत न प्रहिंस्येत । हिंसार्हं न भवतीत्यर्थः ॥ कृत्यार्थे केन्प्रत्ययः ॥ यद्वा । दैव्यस्येति अधिकरणे[4] षष्ठी । सा च कर्मार्था । दैव्यं कर्मेत्यर्थः । कथमहिंस्यमित्यत आह । ᵛयथा ᵛविश्वं ᵛभुवनं ᵛधारयिष्यति धारयति । विश्वधारणरूपं यत् कर्मास्ति तन्न प्रमिये । तथा ᵛस्वङ्गुरिः शोभनाङ्गुल्युपलक्षितहस्तः ᵛयत्[5] यः[5] ᵛपृथिव्या ᵛवरिमन्ना । आकारश्चार्थे । भूम्या उरुत्वे च ᵛसुवति प्रेरयति[6] । तथा ᵛदिवः द्युलोकस्य ᵛवर्ष्मन् उरुत्वे च सुवति । ᵛअस्य देवस्य ᵛतत् उक्तं कर्म ᵛसत्यम् अबाध्यमिति ॥

१. ल–तथाज्ञानादिभिः । २. न-ल-स–' अपापान् ' नास्ति । ३. त–तथा च सूत्रम् । ४. त–व्यधिकरणे । ५. ख-ग-च-ण-भ-ल-स– यः; त–यम्; न-यत् । ६. न-ल-स–' प्रेरयति ' नास्ति ।

इन्द्रज्येष्ठान्बृहद्भ्यः पर्वतेभ्यः क्षयाँ एभ्यः सुवसि पस्त्यावतः ।
यथायथा पतयन्तो वियेमिर एवैव तस्थुः सवितः सवाय ते ॥ ५ ॥

इन्द्रऽज्येष्ठान् । बृहत्ऽभ्यः । पर्वतेभ्यः । क्षयान् । एभ्यः । सुवसि । पस्त्यऽवतः ।
यथाऽयथा । पतयन्तः । विऽयेमिरे । एव । एव । तस्थुः । सवितरिति । सवाय । ते ॥ ५ ॥

हे ᵛसवितः ᵛइन्द्रज्येष्ठान् । इन्द्रः परमैश्वर्ययुक्तस्त्वमेवेन्द्रो वा ज्येष्ठो ज्यायान् पूज्यो येषां ते तादृशाः । तान् अस्मान् ᵛबृहद्भ्यः महद्भ्यः ᵛपर्वतेभ्यः अत्यधिकान् ᵛसुवसि प्रेरयसि । किंच ᵛएभ्यः यजमानेभ्यः ᵛपस्त्यावतः गृहवतः ᵛक्षयान् निवासान् ग्रामनगरादीन्[1] सुवसि प्रेरयसि । ᵛयथा-यथा ᵛपतयन्तः गच्छन्तः[2] त्वां[3] ᵛवियेमिरे विनियम्यन्ते त्वया । ᵛते[4] तव ᵛसवाय अनुज्ञायै ᵛएवैव एवमेव नियमनमनतिक्रम्य ᵛतस्थुः तिष्ठन्ति ॥

ये ते त्रिरहन्त्सवितः सवासो दिवेदिवे सौभगमासुवन्ति ।
इन्द्रो द्यावापृथिवी सिन्धुरद्भिरादित्यैर्नो अदितिः शर्म यंसत् ॥ ६ ॥

ये । ते । त्रिः । अहन् । सवितरिति । सवासः । दिवेऽदिवे । सौभगम् । आऽसुवन्ति ।
इन्द्रः । द्यावापृथिवी इति । सिन्धुः । अत्ऽभिः ।
आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥ ६ ॥

ᵛये यजमाना हे ᵛसवितः ᵛते त्वदर्थं ᵛसवासः सवाः सोमाः । द्वितीयार्थे प्रथमा । सोमान् । यद्वा । सवासः सवनानि प्रातरादीनि प्रति ᵛत्रिरहन् अभिषुण्वन्ति । न केवलमेकस्मिन्नेवाहनि सवनत्रयेषु अपि तु ᵛदिवेदिवे प्रतिदिनं ᵛसौभगं सौभाग्यजनकम् ᵛआसुवन्ति अभिषुण्वन्ति । तेभ्यः ᵛनः अस्मभ्यम् ᵛइन्द्रः ᵛशर्म ᵛयंसत् यच्छतु । ᵛद्यावापृथिवी[5] द्यावापृथिव्यौ च ᵛअद्भिः विशिष्टा ᵛसिन्धुः सिन्ध्वभिमानिदेवता च ᵛआदित्यैः सहिता ᵛअदितिः च शर्म यंसत् । सावित्रे सूक्ते इन्द्रादीनां निपातमुक्त्वा[6] तेषां प्रार्थना न विरुध्यते ॥　　॥ ५ ॥

' को वस्त्राता ' इति दशर्चं दशमं सूक्तं वामदेवस्यार्षं विश्वदेवदेवताकम्[7] । अष्टम्याद्यास्तिस्रो गायत्र्यः शिष्टा अनादेशपरिभाषया त्रिष्टुभः । तथा चानुक्रम्यते—' को वो दश वैश्वदेवं त्रिगायत्र्यन्तं तु ' इति । विनियोगो लैङ्गिकः ॥

१. ख-ग-ण-संग्रामान् जगद्वीरादीन्; स-संग्रामान् संगरादीन् । २. ख-ग-च-ण-प-भ-गच्छन्तः प्राणिनः । ३. ख-ग-च-ण-भ-त्वया । ४. प-तथा ते । ५. न-ल-स-' द्यावापृथिवी ' नास्ति । ६. त-निपातभाक्त्वात्; प-निपातमुक्त्वक्त्वात् । ७. ख-ग-च-ण-त-न-भ-ल-स-विश्वेदेवदेवताकम् ।

को वस्त्राता वसवः को वरूता द्यावाभूमी अदिते त्रासीथां नः ।
सहीयसो वरुण मित्र मर्तात्को वोऽध्वरे वरिवो धाति देवाः ॥ १ ॥

कः । वः । त्राता । वसवः । कः । वरूता । द्यावाभूमी इति । अदिते । त्रासीथाम् । नः ।
सहीयसः । वरुण । मित्र । मर्तात् । कः । वः । अध्वरे । वरिवः । धाति । देवाः ॥ १ ॥

हे vवसवः सर्वस्य वासयितारो देवाः vवः युष्मान् vकः vत्राता अस्ति । यतो यूयं वसवोऽत इत्यभिप्रायः । vकः[१] च vवरूता संभक्तास्ति । यद्वा । वो युष्माकं मध्ये कस्त्राता रक्षको देवः कश्च वरूता[१] वारयिता[२] दुःखानां वरणीयो वा भवति । हे vद्यावाभूमी vनः अस्मान् vत्रासीथां रक्षतम् । हे vअदिते अखण्डनीये । एतदपि द्यावाभूम्योर्विशेषणम् । संख्याव्यत्ययः । यदीदं पृथग्देवतामन्त्रणं[३] स्यात् तर्हि निघातो न स्यात् । ‘ आमन्त्रितं पूर्वमविद्यमानवत् ’ इति पूर्वस्याविद्यमानवत्त्वेनास्यैव पादादित्वात् । ‘ अदिते मित्र वरुणोत मृळ ’ (ऋ. सं. २. २७. १४ ) इति, ‘आदित्या रुद्रा वसवः सुदानवः ’ ( ऋ. सं. १०. ६६. १२) इतिवत्[४] । तस्यैव विशेषणत्वे समानाधिकरणे[५] इति सामानाधिकरण्यात्[५] ‘ अग्ने पावक रोचिषा ’ ( ऋ. सं. ५. २६. १ ) इतिवत् अस्य निघातः सिध्यति । तस्मात् द्यावाभूमी इत्येतस्य विशेषणम् । हे vवरुण हे vमित्र युवां vसहीयसः vमर्तात् अभिभवितुः मनुष्यात् नस्त्रासीथाम् । हे vदेवाः vवः युष्माकम् vअध्वरे यागे vकः vवरिवः धनं vधाति ददाति । यद्वा । वो युष्माकं मध्ये को वरिवो धाति[६] धारयति[६] ॥

प्र ये धामानि पूर्व्याण्यर्चान्वि यदुच्छान्वियोतारो अमूराः ।
विधातारो वि ते दधुरजस्रा ऋतधीतयो रुरुचन्त दस्माः ॥ २ ॥

प्र । ये । धामानि । पूर्व्याणि । अर्चान् । वि । यत् । उच्छान् । विऽयोतारः । अमूराः ।
विऽधातारः । वि । ते । दधुः । अजस्राः । ऋतऽधीतयः । रुरुचन्त । दस्माः ॥ २ ॥

vये देवाः vपूर्व्याणि पुरातनानि vधामानि स्थानानि वा vप्र vअर्चान् अर्चन्ति प्रयच्छन्ति स्तोतृभ्यः । vयत् ये च vवियोतारः दुःखानाम् अमिश्रयितारः[७] vअमूराः अमूढाः vवि vउच्छान् उच्छन्ति तमो विवासयन्ति देवाः । ते vविधातारः फलानां कर्तारः vअजस्राः नित्याः vवि vदधुः कुर्वन्त्यभिमतम् । किंच vऋतधीतयः सत्यकर्माणः vदस्माः दर्शनीयाः vते vरुरुचन्त रोचन्ते ॥

---

१. ख-ग-च-ण-प-भ-ल-स–‘ कः......वरूता ’ नास्ति । २. ख-ग-ण-प-फ-भ-स–संचारयिता; च–संचरायिता; ल–संचरयिता । ३. ख-ग-च-ण-भ-ल–°मन्त्रेण; स–°मन्त्रणे । ४. चेतिवत् । ५. ख-ग-च-ण–समानाधिकरणे इति समानाधिकरणं यत्; त–नामन्त्रिते समानाधिकरणे इति अविद्यमानवत्त्वप्रतिषेधात् । ६. प-भ–धनं धाति ददाति तं रक्षत । ७. ख-ग-च-ण-न-भ-ल-स–आश्रयितारः; घ–नाशयितारः ।

प्र प॒स्त्या॒३॑मदि॑तिं॒ सिन्धु॑म॒र्कैः स्व॒स्तिमी॑ळे स॒ख्याय॑ दे॒वीम् ।
उ॒भे यथा॑ नो॒ अह॑नी नि॒पात॑ उ॒षासा॒नक्ता॑ करता॒मद॑ब्धे ॥ ३ ॥

प्र । प॒स्त्या॑म् । अदि॑तिम् । सिन्धु॑म् । अ॒र्कैः । स्व॒स्तिम् । ई॒ळे । स॒ख्याय॑ । दे॒वीम् ।
उ॒भे इति॑ । यथा॑ । न॒ः । अह॑नी॒ इति॑ । नि॒ऽपात॑ः ।
उ॒षसा॒नक्ता॑ । क॒र॒ता॒म् । अद॑ब्धे॒ इति॑ ॥ ३ ॥

पस्त्यां सर्वैर्गन्तव्याम् अदितिम्[1] अदीनां देवमातरं तां देवीं सिन्धुं स्यन्दनशीलां नद्यभिमानिदेवीं स्वस्तिं सुखनिवासामेतन्नामिकां देवीं सख्याय आनुकूल्याय अर्कैः मन्त्रैः ईळे[2] स्तौमि[3]। उभे अहनी द्यावापृथिव्यौ यथा नः अस्मान् निपातः नितरां पातः तथा स्तौमि । उषासानक्ता अहोरात्राभिमानिदेवते अदब्धे अदम्भनीये करतां कुरुताम् । अभिमतमिति शेषः ॥

व्य॑र्य॒मा वरु॑णश्चेति॒ पन्थां॑मि॒षस्पति॑ः सुवि॒तं गा॒तुम॒ग्निः ।
इन्द्रा॑विष्णू नृ॒वदु॒ षु स्तवा॑ना॒ शर्म॑ नो य॒न्तम॒मव॑द्वरू॑थम् ॥ ४ ॥

वि । अ॒र्य॒मा । वरु॑णः । चे॒ति॒ । पन्था॑म् । इ॒षः । पति॑ः । सु॒वि॒तम् । गा॒तुम् । अ॒ग्निः ।
इन्द्रा॑विष्णू॒ इति॑ । नृ॒ऽवत् । ऊँ॒ इति॑ । सु । स्तवा॑ना ।
शर्म॑ । न॒ः । य॒न्त॒म् । अम॑ऽवत् । वरू॑थम् ॥ ४ ॥

अर्यमा देवः अस्माकं पन्थां यज्ञादिमार्गं वि चेति ज्ञापयति । तथा वरुणः वि चेति। इषः अन्नस्य हविर्लक्षणस्य पतिः पालकः अग्निः सुवितं सुखकरं गातुं गमनं मार्गं वा स्वर्गादेः वि चेति । इन्द्राविष्णू सु सुष्ठु स्तवाना स्तूयमानौ नृवत् मनुष्यवत् मनुष्योपेतं वरूथं वरणीयम् अमवत् बलोपेतं शर्म गृहं सुखं वा नः अस्माकं यन्तं यच्छतम् । उ पूरणः ॥

आ पर्व॑तस्य म॒रुता॒मवां॑सि दे॒वस्य॑ त्रा॒तुर॑व्रि॒ भग॑स्य ।
पात्पति॒र्जन्या॒दंह॑सो नो मि॒त्रो मि॒त्रिया॑दु॒त न॑ उरुष्येत् ॥ ५ ॥

आ । पर्व॑तस्य । म॒रुता॑म् । अवां॑सि । दे॒वस्य॑ । त्रा॒तुः । अ॒व्रि॒ । भग॑स्य ।
पात् । पति॑ः । जन्या॑त् । अंह॑सः । न॒ः । मि॒त्रः । मि॒त्रिया॑त् । उ॒त । न॒ः । उ॒रु॒ष्ये॒त् ॥ ५ ॥

---

१. त–अदितिमदीतिम् । २. ख-ग-च-ण-भ– च ईळे; घ-प–प्र ईळे । ३. ख-ग-ण–प्रास्तोति; च––प्रास्तोदिति; न–‘ स्तौमि ’ नास्ति ; भ–प्रस्तौमि; स–स्तौति ।

ᵛपर्वतस्य इन्द्रसखस्य[1] एतन्नामकस्य ᵛदेवस्य ᵛमरुतां च ᵛत्रातुः रक्षकस्य ᵛभगस्य देवस्य च ᵛअवांसि रक्षणानि ᵛआ ᵛअत्रि आवृणे। किंच ᵛपतिः वरुणो देवः ᵛजन्यात् जनसंबन्धात् ᵛअंहसः पापात् ᵛनः अस्मान् ᵛपात् पातु रक्षतु। ᵛउत अपि च ᵛमित्रः च ᵛमित्रियात् मित्रभावेन ᵛनः अस्मान् ᵛउरुष्येत् रक्षतु ॥ ॥ ६ ॥

नू रोदसी अहिना बुध्न्येन स्तुवीत देवी अप्येभिरिष्टैः।
समुद्रं न संचरणे सनिष्यवो घर्मस्वरसो नद्यो३ अप व्रन् ॥ ६ ॥

नु। रोदसी इति। अहिना। बुध्न्येन। स्तुवीत। देवी इति। अप्येभिः। इष्टैः।
समुद्रम्। न। सम्ऽचरणे। सनिष्यवः। घर्मऽस्वरसः। नद्यः। अप। व्रन् ॥ ६ ॥

हे[2] ᵛरोदसी द्यावापृथिव्यौ युवाम् ᵛअहिना ᵛबुध्न्येन अहिर्बुध्न्यनामकेन देवेन सह ᵛनु क्षिप्रम् ᵛअप्येभिः आपनीयैः ᵛइष्टैः कामैर्निमित्तभूतैः ᵛस्तुवीत स्तुवे। ᵛसनिष्यवः धनानां संभक्तुमिच्छन्तः ᵛसंचरणे संचाराय समुद्रमध्यगमनाय ᵛसमुद्रं[3] ᵛन[3] समुद्रमिव। तं यथा स्तुवन्ति तद्वत्। यस्मादेते देवाः ᵛघर्मस्वरसः दीप्तध्वनयः ᵛनद्यः नदीः ᵛअप ᵛव्रन् अपवृण्वन्तीति परोक्ष इव। अथवा ते देवा नदीरपवृण्वन्तु इत्याशीः। तस्मात् स्तुवे इति संबन्धः ॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन्।
नहि मित्रस्य वरुणस्य धासिमर्हामसि प्रमियं सान्वग्नेः ॥ ७ ॥

देवैः। नः। देवी। अदितिः। नि। पातु। देवः। त्राता। त्रायताम्। अप्रऽयुच्छन्।
नहि। मित्रस्य। वरुणस्य। धासिम्। अर्हामसि। प्रऽमियम्। सानु। अग्नेः ॥ ७ ॥

ᵛअदितिः[4] ᵛदेवी अदीना देवमाता ᵛदेवैः अन्यैर्मित्रादिभिः सह ᵛनः अस्मान् ᵛनि ᵛपातु पालयतु[4]। तथा[5] ᵛत्राता पालकः ᵛदेवः[5]। इन्द्रः इत्यर्थः। सोऽपि ᵛअप्रयुच्छन् अप्रमाद्यन् ᵛत्रायताम्। वयं च ᵛमित्रस्य ᵛवरुणस्य ᵛअग्नेः च ᵛसानु समुच्छ्रितं ᵛधासिम् अन्नं सोमादिलक्षणं ᵛप्रमियं हिंसितुं ᵛनहि ᵛअर्हामसि अर्हामः। समर्था भवामः। किंत्वनुष्ठानेन संवर्धितुम् अर्हाम[6] इत्यर्थः[6] ॥

अग्निरीशे वसव्यस्याग्निर्महः सौभगस्य। तान्यस्मभ्यं रासते ॥ ८ ॥

अग्निः। ईशे। वसव्यस्य। अग्निः। महः। सौभगस्य। तानि। अस्मभ्यम्। रासते ॥ ८ ॥

---

१. ख-ग-च-ण-न-फ-भ-ल-स- अद्रेः सखस्य। २. प-देवी द्योतमाने हे। ३. ख-ग-च-ल- 'समुद्रं न' नास्ति। ४. च-फ- देवी द्योतमाना अदितिर्देवैः सह नोऽस्मान् निपातु रक्षतु। ५. ख-ण-भ-ल-स-तथा पालको देवः; च-फ-देवस्त्राता त्रायतां स च। ६. क-ख-ग-घ-च-ण-त-न-भ-ल- अर्हामेत्यर्थः।

अग्निः देवः वसव्यस्य धनसमूहस्य ईशे ईष्टे दातुम्। तथा अग्निः महः महतः सौभगस्य सुभगत्वस्यापि ईशे । अतः तानि धनानि सौभाग्यं च अस्मभ्यं रासते ददातु ॥

उषो मघोन्या वह सूनृते वार्या पुरु। अस्मभ्यं वाजिनीवति ॥ ९ ॥

उषः । मघोनि । आ । वह । सूनृते । वार्या । पुरु । अस्मभ्यम् । वाजिनीऽवति ॥ ९ ॥

हे उषः हे मघोनि धनवति हे सूनृते प्रियसत्यरूपवागभिमानिनि हे वाजिनीवति अन्नवति देवि अस्मभ्यं वार्या वरणीयानि पुरु बहूनि धनानि आ वह प्रापय ॥

तत्सु नः सविता भगो वरुणो मित्रो अर्यमा ।
इन्द्रो नो राधसा गमत् ॥ १० ॥

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा ।
इन्द्रः । नः । राधसा । आ । गमत् ॥ १० ॥

येन राधसा धनेन सह सविता भगो वरुणो मित्रोऽर्यमा इन्द्रः प्रत्येकम् आ गमत् आगच्छति[1] यज्ञम् । तत् राधो धनं ते देवाः नः अस्मभ्यं सु सुष्ठु प्रयच्छन्त्विति शेषः ॥ ॥ ७ ॥

'मही द्यावापृथिवी' इति सप्तर्चमेकादशं सूक्तं वामदेवस्यार्षं द्यावापृथिव्यम् । पूर्वत्र 'त्रि-गायत्र्यन्तं तु' इत्युक्तत्वात् पञ्चम्याद्यास्तिस्रो गायत्र्यः शिष्टास्त्रिष्टुभः । 'मही सप्त द्यावापृथिवीयम्' इत्यनुक्रमणिका । व्यूढे दशरात्रे पञ्चमेऽहनि वैश्वदेवशस्त्रे आदितश्चतुर्ऋचं द्यावापृथिव्यनिविद्धानीयम्। तथा च सूत्रितं–'मही द्यावापृथिवी इति चतस्र ऋभुर्विभ्वा' (आश्व. श्रौ. ८. ८) इति ॥

मही द्यावापृथिवी इह ज्येष्ठे रुचा भवतां शुचयद्भिरर्कैः ।
यत्सीं वरिष्ठे बृहती विमिन्वन्रुवद्धोक्षा पप्रथानेभिरेवैः ॥ १ ॥

मही इति । द्यावापृथिवी इति । इह । ज्येष्ठे इति । रुचा । भवताम् । शुचयत्ऽभिः । अर्कैः ।
यत् । सीम् । वरिष्ठे इति । बृहती इति । विऽमिन्वन् ।
रुवत् । ह । उक्षा । पप्रथानेभिः । एवैः ॥ १ ॥

इह यज्ञे मही महत्यौ ज्येष्ठे प्रशस्ये द्यावापृथिवी द्यावापृथिव्यौ रुचा दीप्त्या युक्ते शुचयद्भिः दीपयद्भिः अर्कैः मन्त्रैः सोमादिहविर्भिर्वा युक्ते भवताम् । यत् यस्मात् सीं सर्वतः वरिष्ठे उरुतरे बृहती महत्यौ द्यावापृथिव्यौ विमिन्वन् परिच्छिन्दन् स्थापयन् उक्षा सेक्ता पर्जन्यः

१. ख-ग-च-ण-न-फ-भ-ल– आगच्छन्ति ।

ᵛपप्रथानेभिः प्रथमानैः ᵛएवैः गमनशीलैर्मरुद्भिर्मेघैर्वा सह ᵛरुवत् रौति शब्दं करोति। ᵛह इति पूरणः। तस्माद्युचा भवतामिति संबन्धः॥

देवी देवेभिर्यजते यजत्रैरमिनती तस्थतुरुक्षमाणे।
ऋतावरी अद्रुहा देवपुत्रे यज्ञस्य नेत्री शुचयद्भिरर्कैः॥ २॥

देवी इति। देवेभिः। यजते इति। यजत्रैः। अमिनती इति। तस्थतुः। उक्षमाणे इति।
ऋतवरी इत्यृतऽवरी। अद्रुहा। देवपुत्रे इति देवऽपुत्रे।
यज्ञस्य। नेत्री इति। शुचयत्ऽभिः। अर्कैः॥ २॥

ᵛदेवी देव्यौ ᵛयजते यष्टव्ये ᵛअमिनती प्रजा अहिंसत्यौ ᵛउक्षमाणे सिञ्चन्त्यौ ᵛऋतावरी ऋतवत्यौ[1] ᵛअद्रुहा अद्रोग्ध्र्यौ द्रोहमकुर्वत्यौ ᵛदेवपुत्रे देवोत्पादिक्यौ ᵛयज्ञस्य ᵛनेत्री निर्वाहयित्र्यौ द्यावापृथिव्यौ ᵛदेवेभिः देवैः ᵛयजत्रैः यष्टव्यैः सहिते ᵛशुचयद्भिः शोचयद्भिः[2] ᵛअर्कैः मन्त्रैः[3] हविर्भिर्वा युक्ते ᵛतस्थतुः तिष्ठतः स्यातामित्यर्थः॥

स इत्स्वपा भुवनेष्वास य इमे द्यावापृथिवी जजान।
उर्वी गभीरे रजसी सुमेके अवंशे धीरः शच्या समैरत्॥ ३॥

सः। इत्। सुऽअपाः। भुवनेषु। आस। यः। इमे इति। द्यावापृथिवी इति। जजान।
उर्वी इति। गभीरे इति। रजसी इति। सुमेके इति सुऽमेके।
अवंशे। धीरः। शच्या। सम्। ऐरत्॥ ३॥

ᵛस ᵛइत् स एव ᵛस्वपाः शोभनकर्मा सन् ᵛभुवनेषु ᵛआस आस्ते। ᵛय ᵛइमे ᵛद्यावापृथिवी द्यावापृथिव्यौ ᵛजजान उत्पादितवान्। यश्च प्रजापतिः ᵛउर्वी उर्व्यौ विस्तीर्णे ᵛगभीरे अविचले ᵛसुमेके शोभनरूपे[4] ᵛअवंशे उत्पत्तिरहिते अनाधारे वान्तरिक्षे ᵛधीरः धीमान् ᵛशच्या कुशलकर्मणा ᵛसमैरत् सम्यक् प्रेरितवान्। स एव स्वपा इति॥

नू रोदसी बृहद्भिर्नो वरूथैः पत्नीवद्भिरिषयन्ती सजोषाः।
उरूची विश्वे यजते नि पातं धिया स्याम रथ्यः सदासाः॥ ४॥

नु। रोदसी इति। बृहत्ऽभिः। नः। वरूथैः। पत्नीवत्ऽभिः। इषयन्ती इति। सऽजोषाः।
उरूची इति। विश्वे इति। यजते इति। नि। पातम्। धिया। स्याम। रथ्यः। सदाऽसाः॥४॥

---

१, ख-ग-च-ण-प-फ-भ-सत्यवत्यौ। २. प-दीपयद्भिः। ३. प-अर्चनीयैः। ४. प-शोभनरूपे रजसी भुवने।

हे ᵛरोदसी द्यावापृथिव्यौ ᵛनु क्षिप्रं ᵛपत्नीवद्भिः पत्नीसहितैः ᵛबृहद्भिः महद्भिः ᵛवरूथैः गृहैर्धनैर्वा सह ᵛइषयन्ती अस्माकमन्नमिच्छन्त्यौ ᵛसजोषाः परस्परं संगते ᵛउरूची उर्वञ्चने ᵛविश्वे व्याप्ते ᵛयजते यष्टव्ये सत्यौ ᵛनः अस्मान् ᵛनि ᵛपातं नितरां रक्षतम्। धियेत्यादि[1] गतम्[1]॥

'प्र वाम्' इत्यादिगायत्रस्तृचो व्यूढे[2] दशरात्रे वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानीयत्वेन प्रक्षेप्यः। तथा च सूत्रितं—'प्र वां महि द्यवी इति तृचौ' (आश्व. श्रौ. ८. ११) इति॥

**प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे। शुची उप प्रशस्तये॥ ५॥**

प्र। वाम्। महि। द्यवी इति। अभि। उपऽस्तुतिम्। भरामहे।

शुची इति। उप। प्रऽशस्तये॥ ५॥

हे द्यावापृथिव्यौ ᵛद्यवी द्योतमाने ᵛवां युवाभ्याम् ᵛउपस्तुतिं स्तोत्रं ᵛमहि महत् प्रभूतम् ᵛअभि ᵛप्र ᵛभरामहे प्रकर्षेण संपादयामः। ᵛशुची शुद्धे युवां ᵛप्रशस्तये प्रशंसितुम् ᵛउप। उपसर्गश्रुतेरुचित-क्रियाध्याहारः। उप गच्छाम इति शेषः॥

**पुनाने तन्वा मिथः स्वेन दक्षेण राजथः। ऊह्याथे सनादृतम्॥ ६॥**

पुनाने इति। तन्वा। मिथः। स्वेन। दक्षेण। राजथः।

ऊह्याथे इति। सनात्। ऋतम्॥ ६॥

हे देव्यौ ᵛतन्वा स्वकीयया मूर्त्या ᵛस्वेन ᵛदक्षेण बलेन च ᵛमिथः प्रत्येकं ᵛपुनाने शोधयन्त्यौ यज्ञं यजमानं वा युवां ᵛराजथः[3]। यद्वा। तन्वा स्वस्वशरीरैकदेशेन[4] मिथः परस्परं पुनाने शोध-यन्त्यौ। द्यौः स्वीयेनासारेण भुवं सा च स्वकीयेन कार्ष्ण्येन चन्द्रमसि स्थितेन दिवम् इति विवेकः। ᵛसनात् सदाकालम् ᵛऋतं यज्ञम् ᵛऊह्याथे वहथः॥

**मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम्। परि यज्ञं नि षेदथुः॥ ७॥**

मही इति। मित्रस्य। साधथः। तरन्ती इति। पिप्रती इति। ऋतम्।

परि। यज्ञम्। नि। सेदथुः॥ ७॥

ᵛमही महत्यौ द्यावापृथिव्यौ ᵛमित्रस्य मित्रभूतस्य स्तोतुरभिमतं ᵛसाधथः[5]। ᵛऋतम् अन्नं ᵛतरन्ती तारयन्त्यौ ᵛपिप्रती पूरयन्त्यौ ᵛयज्ञं ᵛपरि परितः ᵛनि ᵛषेदथुः आश्रयथः[6]॥ ॥ ८॥

'क्षेत्रस्य पतिना' इत्यष्टर्चं द्वादशं सूक्तं वामदेवस्यार्षम्। आद्याचतुर्थीषष्ठीसप्तम्योऽनुष्टुभः पञ्चमी पुरउष्णिक्। 'आद्यश्चेत्पुरउष्णिक्' इति हि तल्लक्षणम्। शिष्टास्तिस्रस्त्रिष्टुभः। आद्यास्तिस्रः

---

१. प-रथ्यः रथवन्तो वयं धिया स्तुत्या सदासाः त्वां सर्वदा भजमानाः स्याम भूयास्म। २. त-व्यूळ्हे। ३. त-राजथः ईशाने भवतः। ४. ख-ग-च-फ-स्वस्वशरीरैक्यादिना। ५. त-साधथः साधयथः। ६. ख-न-ल-स-आश्रयतः।

क्षेत्रपतिदेवताकाश्चतुर्थी शुनाख्यदेवताका पञ्चम्यष्टम्यौ शुनासीरदेवताके षष्ठीसप्तम्यौ सीतादेवताके। तथा चानुक्रमणिका–' क्षेत्रस्याष्टौ तिस्रः क्षैत्रपत्याः शुनायैका परा पुरउष्णिक् सान्त्या च शुनासीराभ्यामुपान्त्ये सीतायै ते[1] अनुष्टुभावाद्या च चतुर्थी च ' इति ॥ क्षेत्रस्य कर्षणेऽनेन सूक्तेन प्रत्यृचं जुहुयाज्जपेद्वा। तथा च सूत्रितं—' क्षेत्रस्य पतिना वयमिति प्रत्यृचं जुहुयाज्जपेद्वा ' ( आश्व. गृ. २. १०. ४ ) इति ॥ अप्तोर्यामे होतुरतिरिक्तोक्थ्य आश्विनशस्त्रादूर्ध्वं चत्वार्यतिरिक्तोक्थ्यानि। तत्राद्या परिधानीया। सूत्रितं च–' क्षेत्रस्य पतिना वयमिति परिधानीया ' ( आश्व. श्रौ. ९. ११ ) इति ॥

**क्षेत्र॑स्य॒ पति॑ना व॒यं हि॒तेने॑व जयामसि।**

**गामश्वं॑ पोषयि॒त्न्वा स नो॑ मृळाती॒दृशे॑ ॥ १ ॥**

क्षेत्र॑स्य। पति॑ना। व॒यम्। हि॒तेन॑ऽइव। ज॒या॒म॒सि॒।

गाम्। अश्व॑म्। पो॒ष॒यि॒त्नु। आ। सः। नः॒। मृ॒ळा॒ति॒। ई॒दृशे॑ ॥ १ ॥

वयं यजमानाः क्षेत्रस्य पतिना देवेन ॥ रुद्रं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे। स्वतन्त्र एव वा कश्चित्क्षेत्रस्य पतिरुच्यते ॥ हितेनेव। इव शब्द एवार्थे। सर्वप्राणिहितेनैव तेन। अथवा मित्रेणेव[2]। यथा सख्युः साहाय्ये[3] सन्[3] स्वकार्यं साधयति तद्वत्। जयामसि। जयामः क्षेत्रम्। स देवः गामश्वं च पोषयित्नु पोषयितृ गवाश्वलक्षणं धनम् आ हरत्विति शेषः। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। सः एव देवः नः अस्मान् ईदृशे उक्तलक्षणे धने दातव्ये सति मृळाति सुखयति। ' क्षेत्रस्य[4] पतिना ' ( निरु. १०. १५ ) इत्यादिनिरुक्तं जानीयात् ॥

अप्तोर्यामे मैत्रावरुणस्यातिरिक्तोक्थ्ये परिधानीया। सूत्रितं च–' क्षेत्रस्य पते मधुमन्तमूर्मिमिति परिधानीया ' ( आश्व. श्रौ. ९. ११ ) इति ॥

**क्षेत्र॑स्य पते॒ मधु॑मन्तमू॒र्मिं धे॒नुरि॑व॒ पयो॑ अ॒स्मासु॑ धुक्ष्व।**

**म॒धु॒श्चुतं॑ घृ॒तमि॑व॒ सुपू॑तमृ॒तस्य॑ नः॒ पत॑यो मृ॒ळयन्तु ॥ २ ॥**

क्षेत्र॑स्य। प॒ते॒। मधु॑ऽमन्तम्। ऊ॒र्मिम्। धे॒नुः॑ऽइव। पयः॑। अ॒स्मासु॑। धु॒क्ष्व॒।

म॒धु॒ऽश्चुत॑म्। घृ॒तम्ऽइ॑व। सु॒ऽपूत॑म्। ऋ॒तस्य॑। नः॒। पत॑यः। मृ॒ळ॒य॒न्तु॒ ॥ २ ॥

हे क्षेत्रस्य पते त्वं मधुमन्तं माधुर्योपेतम् ऊर्मिं प्रवृद्धम्[5] उदकं धेनुः पयः इव सा यया दुग्धे तथा अस्मासु धुक्ष्व। मधुश्चुतं मधुस्त्रावि सुपूतं[6] घृतमिव इत्युपमा। तादृशमुदकमित्यर्थः। ऋतस्य यज्ञस्योदकस्य वा पतयः स्वामिनः नः अस्मान् मृळयन्तु सुखयन्तु। यद्वा। ऋतस्य एतत् कर्मणि षष्ठी। ऋतं मृळयन्तु प्रयच्छन्तु। मृळतिरत्र दानकर्मा ॥

---

१. त–ते च। २. ख-ग-ण-फ-भ-ल-स–मित्रेणैव वा; न–मित्रेणेव वा। ३. त–साहाय्येन। ४. त–अत्र क्षेत्रस्य। ५. ख-ग-घ-च-ण-प-भ–प्रवृद्धं सुतं ( पूतं ) शोधितम्; फ–प्रवृद्धं सुपूतं शोधकम्। ६. ख-ग-घ-च-ण-फ-भ–तत्।

ब्राह्मणाच्छंसिनोऽतिरिक्तोक्थ्ये परिधानीयैषा । 'मधुमतीरोषधीर्द्याव आप इति परिधानीया' (आश्व. श्रौ. ९. ११) इति सूत्रितत्वात् ॥

मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् ।
क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ ३ ॥

मधुऽमतीः । ओषधीः । द्यावः । आपः । मधुऽमत् । नः । भवतु । अन्तरिक्षम् ।
क्षेत्रस्य । पतिः । मधुऽमान् । नः । अस्तु । अरिष्यन्तः । अनु । एनम् । चरेम ॥ ३ ॥

ᵛओषधीः ओषध्यो व्रीहिप्रियङ्ग्वादयः ᵛनः अस्मभ्यं ᵛमधुमतीः मधुमत्यः भवन्तु । तथा ᵛद्यावः । तिस्रो दिव इत्युक्तत्वात् बहुवचनं युक्तम् । तथा ᵛआपः ᵛअन्तरिक्षं च नः ᵛमधुमत्[1] ᵛभवतु । किंच ᵛक्षेत्रस्य ᵛपतिः अपि ᵛमधुमान्नो ᵛअस्तु । ᵛअरिष्यन्तः अन्यैरहिंस्यन्तो वयम् ᵛएनं क्षेत्रपतिम् ᵛअनु अनुसृत्य ᵛचरेम संचरेम[2] सुखेन ॥

शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् ।
शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥ ४ ॥

शुनम् । वाहाः । शुनम् । नरः । शुनम् । कृषतु । लाङ्गलम् ।
शुनम् । वरत्राः । बध्यन्ताम् । शुनम् । अष्ट्राम् । उत् । इङ्गय ॥ ४ ॥

ᵛवाहाः बलीवर्दाः ᵛशुनम् । सुखनामैतत् । सुखं यथा भवति तथा वहन्त्विति शेषः । तथा ᵛनरः नेतारो मनुष्याः कर्षकाः ᵛशुनं कुर्वन्तु । तथा ᵛलाङ्गलम् अपि ᵛशुनं ᵛकृषतु । ᵛवरत्राः वरणेन त्रायमाणाः प्रग्रहाः ᵛशुनं ᵛबध्यन्ताम् । ᵛअष्ट्रां प्रतोदं ᵛशुनम् ᵛउदिङ्गय प्रेरय । शुनाख्यो वाय्विन्द्रयोरन्यतमः सुखकृद्देवः । तदनुग्रहादेतत्सर्वं भवत्विति तस्य श्रुतिसामान्येन स्तुतिः ॥

शुनासीरीये पर्वणि शुनासीरदेवताकस्य हविषोऽनुवाक्यैषा अन्त्या ऋक् याज्या । सूत्रितं च— 'शुनासीराविमां वाचं जुषेथां शुनं नः फालाः[3]' (आश्व. श्रौ. २. २०) इति ॥

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः ।
तेनेमामुप सिञ्चतम् ॥ ५ ॥

शुनासीरौ । इमाम् । वाचम् । जुषेथाम् । यत् । दिवि । चक्रथुः । पयः ।
तेन । इमाम् । उप । सिञ्चतम् ॥ ५ ॥

---

१. ख-ग-ण-भ—मधु मधुमत् । २. ख-प-फ-भ—'संचरेम' नास्ति । ३. त—फाला विकृषन्तु भूमिम् ।

'द्युदेवः शुनदेवता' इति शौनकः[1]। अतः शुन इन्द्रः सीरो वायुः[2]। 'शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्यः सरणात्' (निरु. ९. ४०) इति यास्कः। हे[3] √शुनासीरौ[3] तौ युवाम् √इमां वक्ष्यमाणां मदीयां √वाचं √जुषेथाम्। √यत् √पयः √दिवि √चक्रथुः √तेनेमां भूमिम् √उ √सिञ्चतम्॥

अर्वाची सुभगे भव सीते वन्दामहे त्वा।

यथा नः सुभगाससि यथा नः सुफलाससि ॥ ६ ॥

अर्वाची। सुऽभगे। भव। सीते। वन्दामहे। त्वा।

यथा। नः। सुऽभगा। अससि। यथा। नः। सुऽफला। अससि ॥ ६ ॥

हे √सुभगे √सीते त्वम् √अर्वाची अर्वागञ्चना √भव। √त्वा त्वां √वन्दामहे स्तुवीमहि। √यथा √नः √सुभगाससि शोभनधना भवसि। √यथा √नः √सुफलाससि तथा वन्दामहे॥

इन्द्रः सीतां नि गृह्णातु तां पूषानु यच्छतु।

सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥ ७ ॥

इन्द्रः। सीताम्। नि। गृह्णातु। ताम्। पूषा। अनु। यच्छतु।

सा। नः। पयस्वती। दुहाम्। उत्तराम्ऽउत्तराम्। समाम् ॥ ७ ॥

√इन्द्रः देवः √सीतां सीताधारकाष्ठं[4] √नि √गृह्णातु। √तां सीतां √पूषा देवः √अनु √यच्छतु नियमयतु। √सा द्यौः √पयस्वती उदकवती[5] √दुहां दुह्यात्[6]। कदेति तदुच्यते। √उत्तरामुत्तरां √समाम् उत्तरमुत्तरं[7] संवत्सरम्॥

अस्या अष्टम्या विनियोगः 'शुनासीराविमाम्' इत्यत्रोक्तः॥

शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः।

शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् ॥ ८ ॥

शुनम्। नः। फालाः। वि। कृषन्तु। भूमिम्। शुनम्। कीनाशाः। अभि। यन्तु। वाहैः।

शुनम्। पर्जन्यः। मधुना। पयःऽभिः। शुनासीरा। शुनम्। अस्मासु। धत्तम् ॥ ८ ॥

---

१. ख-ग-ण-भ-स—शौनकः। हे शुनासीरा; घ-च-फ-ल—शौनकः। हे शुनासीरौ; त—शौनकः। हे शुनासीराः। २. त—वायुः। इन्द्रवायू वाय्वादित्याविति नैरुक्ताः। ३. ख-ग-च-ण-न-फ-भ-ल-स—'हे शुनासीरौ' नास्ति। ४. ख-ग-च-ण-न-ल-स—सीताधारकाष्ठाम्। ५. प—उदकवती नोऽस्माकम्। ६. त—दुह्यते। ७. ग-च-ण-न—उत्तरम्।

ᵛनः[1] ᵛभूमिं ᵛफालाः भूमिविदारककाष्ठाः[1] ᵛशुनं ᵛवि ᵛकृषन्तु । ᵛशुनं यथा भवति तथा ᵛकीनाशाः बलीवर्दरक्षकाः ᵛवाहैः बलीवर्दैः ᵛअभि ᵛयन्तु अभिगच्छन्तु[2] । ᵛशुनं यथा भवति तथा ᵛपर्जन्यो ᵛमधुना मधुरैः ᵛपयोभिः उदकैः सिञ्चतु[3] । हे ᵛशुनासीरा इन्द्रवायू वाय्वादित्यौ वा ᵛशुनं सुखम् ᵛअस्मासु ᵛधत्तं धारयतम् ॥ ॥ ९ ॥

' समुद्रादूर्मिः ' इत्येकादशर्चं त्रयोदशं सूक्तम् । अन्त्या जगती शिष्टास्त्रिष्टुभः । अग्निसूर्याब्गोघृतानामन्यतमो देवता । वामदेव[4] ऋषिः[4] । अत्रानुक्रमणिका—' समुद्रादूर्मिरेकादशाग्नेयं जगत्यन्तं सौर्यं वापं वा गव्यं वा घृतस्तुतिर्वा ' इति । विषुवतीदं सूक्तमाज्यम् । तथा च सूत्रं—' समुद्रादूर्मिरित्याज्यं त्यं सुमेषम् ' ( आश्व. श्रौ. ८. ६ ) इति । व्यूढे दशरात्रे सप्तमेऽहनीदमेव सूक्तमाज्यम् । सूत्रितं च—' अथ छन्दोमाः समुद्रादूर्मिरित्याज्यम् ' ( आश्व. श्रौ. ८. ९ ) इति ॥

**समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् ।**

**घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ १ ॥**

समुद्रात् । ऊर्मिः । मधुऽमान् । उत् । आरत् । उप । अंशुना । सम् । अमृतऽत्वम् । आनट् ।
घृतस्य । नाम । गुह्यम् । यत् । अस्ति । जिह्वा । देवानाम् । अमृतस्य । नाभिः ॥ १ ॥

संमोदन्तेऽस्मिन्यजमाना इति वा[5] समुद्रोऽग्निः[5] पार्थिवः अथवा समुद्द्रवन्त्यापोऽस्मादिति व्युत्पत्त्या वैद्युतोऽग्निः । तस्मात् ᵛऊर्मिः ऊर्मिवदुपर्युपरि उद्भूतः ᵛमधुमान् माधुर्योपेतफलसमूहः ᵛउदारत् उद्गच्छति । अथवा वैद्युतात् ऊर्म्युत्पादकः[6] रस उदारत् उद्भूतः । अथवा समुद्रात् समुद्द्रवणसाधनात् आदित्यादूर्मी रस उदकलक्षण उदारत् । ' आदित्याज्जायते वृष्टिः ' इति श्रुतेः । यद्वा । समुद्रादुक्तव्युत्पत्तेः[7] अन्तरिक्षादूर्मिरुदकमुदारत् । अथवा समुद्रादुक्तलक्षणात् गवामूधसः सकाशात् ऊर्मिरुज्वलः क्षीररसः । एतत् घृतपक्षेऽपि समानम् । यद्यपि घृतं क्षीराज्जायते तथापि तस्योधस उत्पत्तेरेवमुपचर्यते । शिष्टं वाक्यमग्न्यादिपञ्चसु पक्षेष्वपि समानम् । ᵛअंशुना दीप्त्यांशेन वा ᵛअमृतत्वं मोक्षम् ᵛउप ᵛसम् ᵛआनट् । उपेति पूरणः । प्राप्नोति नरः । ᵛघृतस्य दीप्तस्य क्षीरद्रव्यरूपस्य[8] वा[9] ᵛगुह्यं ᵛनाम गोपनीयं नमनसाधनं ᵛयदस्ति तद्ब्रवीमि । तत् ᵛदेवानां ᵛजिह्वा आस्वादकजिह्वास्थानीयं भवति । तदेव ᵛअमृतस्य ᵛनाभिः बन्धकं भवति । तदुभयं घृतस्य नामेत्यर्थः । एवं सर्वमन्त्रेषु तत्तत्पक्षानुसारेण योज्यम् ॥

**वयं नाम प्र ब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः ।**

**उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ॥ २ ॥**

वयम् । नाम । प्र । ब्रवाम । घृतस्य । अस्मिन् । यज्ञे । धारयाम । नमःऽभिः ।
उप । ब्रह्मा । शृणवत् । शस्यमानम् । चतुःऽशृङ्गः । अवमीत् । गौरः । एतत् ॥ २ ॥

---

१. ख-ग-च-ण-भ– ता फाला भूमिविदारककाष्ठाः; ल-स–ता भूमिफाला विदारककाष्ठाः । २. ग-घ-च-ण-भ-ल-स–' अभिगच्छन्तु ' नास्ति; न–आगच्छन्तु । ३. प–शुनं सिञ्चतु । ४. ख-ग-च-ण-न-भ-ल-सं–' वामदेव ऋषिः ' नास्ति । ५. ख-ग-च-ण-न-भ–' वा समुद्रोऽग्निः ' नास्ति; ल-स– वा । ६. त–अग्न्युत्पादकः । ७. ख-ग-च-ण-न-भ–°क्तव्युत्पत्त्या । ८. न-ल–क्षरद्द्रव्यरूपस्य । ९. ख-ग-च-ण-भ-स– च ।

ˇवयं यजमानाः ˇघृतस्य ˇनाम ˇप्र ˇब्रवाम स्तुमः[1] । ˇअस्मिन्यज्ञे ˇनमोभिः नमस्कारैः हविर्भिर्वा ˇधारयाम च । ˇब्रह्मा परिवृढो देवः ˇशस्यमानं स्तूयमानमिदम् ˇउप ˇशृणवत् शृणुयात् । ˇचतुःशृङ्गः । चत्वारि शृङ्गाणि वेदचतुष्टयरूपाणि[2] यस्य सः । आदित्याग्निपक्षे एवम्[3] । इतरेष्वपि[4] यास्कोक्तव्युत्पत्त्या शृङ्गशब्दो व्याख्येयः । ˇगौरः अरुणवर्णः[5] तादृशो देवः ˇएतत् कर्म जगद्वा ˇअवमीत् उद्गिरति निर्वहतीत्यर्थः ॥

**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।**
**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥ ३ ॥**

चत्वारि । शृङ्गा । त्रयः । अस्य । पादाः । द्वे इति । शीर्षे इति । सप्त । हस्तासः । अस्य
त्रिधा । बद्धः । वृषभः । रोरवीति । महः । देवः । मर्त्यान् । आ । विवेश ॥ ३ ॥

यद्यपि सूक्तस्याग्निसूर्यादिपञ्चदेवताकत्वात् पञ्चधायं मन्त्रो व्याख्येयस्तथापि निरुक्ताद्युक्तनीत्या[6] यज्ञात्मकाग्नेः सूर्यस्य च प्रकाशकत्वेन तत्परतया व्याख्यायते । ˇअस्य यज्ञात्मकस्याग्नेः ˇचत्वारि ˇशृङ्गा चत्वारो वेदाः शृङ्गस्थानीयाः । यद्यप्यापस्तम्बेन 'यज्ञं व्याख्यास्यामः स[7] त्रिभिर्वेदैर्विधीयते (परिभा. १. ३) इत्युक्तं तथाप्याथर्वणस्य इतरानपेक्षयैव एकाग्निसाध्यानां कृत्स्नकर्मणामभिधायकत्वात्तदपेक्षया चत्वारि शृङ्गेत्युक्तम् । ˇत्रयो ˇअस्य ˇपादाः सवनानि त्रीण्यस्य पादाः । प्रवृत्तिसाधनत्वात् पादा इत्युच्यन्ते । ˇद्वे ˇशीर्षे ब्रह्मौदनं प्रवर्ग्यश्च । इष्टिसोमप्राधान्येनेदमुक्तम् । ˇसप्त ˇहस्तासः सप्त छन्दांसि । हस्ताः[8] अनुष्ठानस्य मुख्यसाधनम् । छन्दांस्यपि देवताप्रीणनस्य मुख्यसाधनमिति हस्तव्यवहारः[9] । ˇत्रिधा ˇबद्धः मन्त्रब्राह्मणकल्पैः[10] त्रिप्रकारं बद्धः । बन्धनमस्य तन्निष्पाद्यत्वम्[10] । ˇवृषभः फलानां वर्षिता ˇरोरवीति । भृशं शब्दायते । ऋग्यजुःसामोक्थैः शस्त्रयागस्तुतिरूपैर्हौत्राद्युत्पादितैर्ध्वनिभिरसौ रौति[11] । एवं ˇमहो ˇदेवः[12] ˇमर्त्यान् ˇआ ˇविवेश । मर्त्यैर्यजमानैर्निष्पाद्यत्वात् प्रवेश उपचर्यते । अत्र यास्कः—'चत्वारिशृङ्गेति वेदा वा एत उक्ताः' (निरु. १३. ७) इत्यादिना निरवोचत् । तदत्रानुसंधेयम् ॥ अथ* सूर्यपक्षे व्याख्यायते— अस्यादित्यस्य चत्वारि शृङ्गाणि चतस्रो दिशः । एताः[13] श्रयणार्थत्वात्[13] शृङ्गाणीत्युपचर्यन्ते । त्रयो अस्य पादाः । त्रयो वेदाः पादस्थानीया भवन्ति गमनसाधनत्वात् । तथा हि—'ऋग्भिः पूर्वाह्ले दिवि देव ईयते' इत्युपक्रम्य 'वेदैरशून्यस्त्रिभिरेति सूर्यः' (तै. ब्रा. ३. १२. ९. १) इति हि वेदत्रयेण गतिराम्नाता । द्वे शीर्षे । अहश्च रात्रिश्चेति द्वे शिरसी । सप्त हस्तासो अस्य । सप्त रश्मयः षड्विलक्षणा ऋतव एकः साधारण इति वा सप्त हस्ता भवन्ति । त्रिधा बद्धस्त्रिषु स्थानेषु क्षित्यादिषु अग्न्याद्यात्मकत्वेन[14] संबद्धः । ग्रीष्मवर्षाहेमन्ताख्यैस्त्रिभिस्त्रेधा बद्धो वा । वृषभो वर्षिता रोरवीति ।

---

१. ख-ग-च-ण—स्तुवामः । २. त—दिग्रूपाणि वेदचतुष्टयरूपाणि वा । ३. ख-ग-च-ण-न-भ-स—इव । ४. ख-ग-च-ण—उत्तरेष्वपि; ल-स—अन्तरेष्वपि । ५. त—गौरवर्णः । ६. च-फ-स—॰क्तरीत्या । ७. त—स त्रयाणां वर्णानाम् । ८. त—हस्तः । ९. न—हस्तव्यापारः । १०. न-ल-स—मन्त्रकल्पब्राह्मणैः । ११. प-ल—स्तौति । १२. त—देवः एष यज्ञात्मा महानुभावो देवः । * 'अथ' इत्यारभ्य 'द्रष्टव्यम्' इत्यन्तस्य स्थाने 'एवं सूर्यादिपक्षे युक्त्या योज्यम्' इति पाठः प—पुस्तके वर्तते । १३. ख-न—एवाश्रवणार्थत्वात्; ग-भ-ल-स— एवश्रवणार्थत्वात्; च-ण-फ—एवाश्रयणार्थत्वात्; त—एवाश्रयणार्हत्वात् । १४. ख-ग-च-ण-भ-ल-स—अन्योन्यात्मकत्वेन ।

शब्दं करोति वृष्ट्यादिद्वारा । स महो महान् देवो मर्त्यांना विवेश तन्नियन्तृतया[1] । 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ. सं. १. ११५. १ ) इति हि श्रुतम् ॥ एवं त्वबादिपक्षेऽपि[2] योज्यम् । शाब्दिकास्तु शब्दब्रह्मपरतया चत्वारि शृङ्गेति चत्वारि पदजातानि नामाख्याते[3] चोपसर्गनिपाताश्च[3] इत्यादिना व्याचक्षते । अपरे त्वपरथा । तत्सर्वमत्र द्रष्टव्यम् ॥

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥ ४ ॥

त्रिधा । हितम् । पणिऽभिः । गुह्यमानम् । गवि । देवासः । घृतम् । अनु । अविन्दन् ।
इन्द्रः । एकम् । सूर्यः । एकम् । जजान । वेनात् । एकम् । स्वधया । निः । ततक्षुः ॥ ४ ॥

पणिभिः असुरैः गवि गोषु त्रिधा क्षीरदध्याज्यभेदेन त्रिप्रकारं हितं निहितं गुह्यमानं गोपितं घृतं दीप्तं रसरूपं वा द्रव्यं देवासः देवाः अन्वविन्दन् अलभन्त । तत्र इन्द्र एकं क्षीरं जजान उदपादयत् । सूर्य एकं जजान । वेनात् कान्तिमतः[4] अग्नेर्गमनवतो वायोर्वा एकं घृतं स्वधया अन्नेन निमित्तेन द्रव्येण वा साधनेन निष्टतक्षुः निरपादयन् देवाः ॥

एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे ।
घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥ ५ ॥

एताः । अर्षन्ति । हृद्यात् । समुद्रात् । शतऽव्रजाः । रिपुणा । न । अवऽचक्षे ।
घृतस्य । धाराः । अभि । चाकशीमि । हिरण्ययः । वेतसः । मध्ये । आसाम् ॥ ५ ॥

एताः आपो घृतधारा वा अर्षन्ति अधः पतन्ति । शतव्रजाः अपरिमितगतयः सत्यः हृद्यात् हृदयङ्गमात् समुद्रात् अन्तरिक्षात् रिपुणा जलमोकप्रतिबन्धकारिणा शत्रुणा वृत्रेण नावचक्षे न अवदर्शनाय यथादृष्टं भवति तथा अर्षन्ति । ताः घृतस्य धारा अभि चाकशीमि अभिपश्यामि । कुत्रेति तदुच्यते । हिरण्ययः हिरण्मयः वेतसः अप्संभवोऽग्निर्वैद्युतः आसाम् अपां मध्ये वर्तत इति शेषः । अत्र घृतस्य धारा अभि चाकशीमीत्यनेन चरमपादेन होमाधारोऽग्निर्वैद्युतोऽग्निरादित्यो वोक्तः ॥ ॥१०॥

सम्यक्स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगाइव क्षिपणोरीषमाणाः ॥ ६ ॥

सम्यक् । स्रवन्ति । सरितः । न । धेनाः । अन्तः । हृदा । मनसा । पूयमानाः ।
एते । अर्षन्ति । ऊर्मयः । घृतस्य । मृगाःऽइव । क्षिपणोः । ईषमाणाः ॥ ६ ॥

१. त– तत्तन्नियन्तृतया । २. त-न–अबादिपक्षेऽपि । ३. ग-च–नामाख्यातोपसर्गनिपाताश्च ।
४. ख-ग-च-ण-फ–एतयतः; प-ल-स–एकान्तिमतः; भ–एकायतः ।

अस्याग्नेरुपरि ᵛसम्यक् ᵛस्रवन्ति क्षरन्ति। घृतस्य[१] धाराः[१]। किमिव। ᵛसरितो ᵛन ᵛधेनाः प्रीणयित्र्यो नद्य इव। ᵛअन्तर्हृदा[२] ᵛमनसा हृदयमध्यगतेन चित्तेन। भावनासचिवेनेति यावत्। तेन ᵛपूयमानाः शुद्धीकृताः। तदेवोच्यते। ᵛएते ᵛघृतस्य ᵛऊर्मयः रसाः ᵛअर्षन्ति गच्छन्ति। जुह्वाः सकाशादग्नेरुपरि पतन्ति। किमिव। ᵛक्षिपणोः क्षेपकात् व्याधात्। ᵛईषमाणाः पलायमानाः ᵛमृगाइव। ते यथा कक्षं प्रविशन्ति तद्वत्। अनेन शैघ्र्यमुक्तं भवति॥

**सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः।**

**घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः॥ ७॥**

सिन्धोःऽइव। प्रऽअध्वने। शूघनासः। वातऽप्रमियः। पतयन्ति। यह्वाः।

घृतस्य। धाराः। अरुषः। न। वाजी। काष्ठाः। भिन्दन्। ऊर्मिभिः। पिन्वमानः॥ ७॥

ᵛसिन्धोः स्यन्दमानाया नद्याः सकाशात् ᵛइव उदकानीव ᵛप्राध्वने प्रवणवति देशे ᵛशूघनासः आशुगन्त्यः। 'आशु इति च शु इति च क्षिप्रनामनी भवतः' (निरु. ६. १) इति निरुक्तम्। ᵛवातप्रमियः वायुवत् प्रकृष्टवेगाः ᵛयह्वाः महत्यः ᵛघृतस्य ᵛधाराः ᵛपतयन्ति गच्छन्त्यग्नेरुपरि। घृतमुदकमिति पक्षे सिन्धोरिवेत्यत्र इवशब्दोऽनर्थकः। स्यन्दनसाधनादन्तरिक्षादुक्तलक्षणा घृतधारा उदकधाराः पतयन्ति गच्छन्ति भूमौ। किंच घृतसंस्रयायः ᵛकाष्ठाः[३] मर्यादाभूतान् परिधीन् ᵛभिन्दन् ᵛऊर्मिभिः रसैः ᵛपिन्वमानः वर्धमानो भवति। उदकमिति पक्षे काष्ठाः क्रान्त्वा स्थिता दिशो भिन्दन्नूर्मिभिः तरङ्गैः पिन्वमानो भवति। तत्र दृष्टान्तः। ᵛअरुषो ᵛन ᵛवाजी आरोचमानो गर्वेण गमनशीलोऽश्व इव। स यथा[४] भिन्दन् पिन्वमानश्च भवति तद्वत्॥

**अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम्।**

**घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः॥ ८॥**

अभि। प्रवन्त। समनाऽइव। योषाः। कल्याण्यः। स्मयमानासः। अग्निम्।

घृतस्य। धाराः। सम्ऽइधः। नसन्त। ताः। जुषाणः। हर्यति। जातऽवेदाः॥ ८॥

ᵛघृतस्य ᵛधाराः अमुम् ᵛअग्निं ᵛसमनेव समानमनस्काः ᵛयोषाः योषितः पतिमिव ᵛअभि ᵛप्रवन्त अभिनमयन्ति। निमग्नं कुर्वन्ति। कीदृश्यस्ताः। ᵛकल्याण्यः भद्ररूपाः ᵛस्मयमानासः हसन्त्यः। किंच ताः ᵛसमिधः सम्यग्दीपयित्र्यः सत्यः ᵛनसन्त व्याप्नुवन्ति। ᵛताः एव धाराः ᵛजुषाणः प्रीयमाणः सेवमानो वा अयं ᵛजातवेदाः ᵛहर्यति कामयते। घृतशब्दस्योदकमिति पक्षेऽग्निजातवेदःशब्दाभ्यां वैद्युतोऽग्निरादित्यो वा गृह्यते। तं देवमुदकधारा अभि प्रवन्त नसन्त च। स[५] ताश्च हर्यति[५]॥

---

१. त-घृतधाराः। २. त-किंच अन्तर्हृदा। ३. ख-च-त-फ-भ-काष्ठाः काष्ठान्। ४. त-यथा काष्ठाः। ५. ख-ग-च-ण-स ता वा हयीत; त-न-स च ता हर्यतीति (न-हर्यति)।

कन्याइव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥ ९ ॥

कन्याःऽइव । वहतुम् । एतवै । ऊँ इति । अञ्जि । अञ्जानाः । अभि । चाकशीमि ।
यत्र । सोमः । सूयते । यत्र । यज्ञः । घृतस्य । धाराः । अभि । तत् । पवन्ते ॥ ९ ॥

कन्याइव अनूढा बालिका इव । ता यथा वहतुम् उद्वाहं प्राप्तुम् एतवा उ एतुं पतिं गन्तुम् अञ्जि अञ्जकमाभरणं तेजो वा अञ्जानाः व्यञ्जयन्त्यः । एवं कुर्वत्यः कन्याइव स्वभर्तृभूतमाध्वरं वैद्युतं वाग्निमादित्यं वा वहतुम् एतुम्[1] अञ्जि व्यञ्जकं तदीयं रूपमञ्जाना व्यञ्जयन्तीः[2] घृतस्य धाराः अभि चाकशीमि अभिपश्यामि । घृतेनोदकेन च भौमस्य वैद्युतस्य चाग्नेः प्रज्वलनं प्रसिद्धम् । किंच ता धाराः सोमः सूयते यत्र यत्र[3] चेतरः[3] यज्ञः तायते[4] तत् तं यज्ञमभिलक्ष्य पवन्ते गच्छन्ति खलु ॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ १० ॥

अभि । अर्षत । सुऽस्तुतिम् । गव्यम् । आजिम् । अस्मासु । भद्रा । द्रविणानि । धत्त ।
इमम् । यज्ञम् । नयत । देवता । नः । घृतस्य । धाराः । मधुऽमत् । पवन्ते ॥ १० ॥

हे[5] मदीया ऋत्विजः गव्यं गोसमूहरूपं गोसंबन्धिनं वा आजिं* संघातम्* अभ्यर्षत अभिगच्छत[5] अभिगमयत वा सुष्टुतिं शोभनां स्तुतिम् । अत्र गोशब्देनोदकानि गावो वोच्यन्ते । तत्संघातोऽभिप्रेतः । अस्मासु यजमानेषु भद्रा स्तुत्यानि द्रविणानि धत्त धारयत । स्तुत्या खलु फलं लप्स्यते । किंच नः अस्मदीयम् इमं यज्ञं देवता अत्र यष्टव्यान् देवान् नयत प्रापयत । घृतस्य धारा मधुमत् यथा[6] तथा[6] पवन्ते गच्छन्ति ॥

' धामन्ते ' इत्येषोत्तरसूक्तस्याद्या चाध्यायोत्सर्जनोपाकरणयोर्विनियुक्ते । ' धामन्ते विश्वम् ' इति प्रतीकमुक्त्वा तदन्ते ' द्वृचाः[7] ' ( आश्व. गृ. ३. ५. ७ ) इति सूत्रितत्वात् ॥

---

१. ख-ग-च-ण-न-फ-भ-ल-स-एनम् । २. ख-ग-च-ण-त-न-भ-ल-स–व्यञ्जयन्त्यः । ३. ख-ग-च-णं–यत्र वा; भ-ल-स–अवतारः । ४. ख-ग-च-ण-भ-ल-स–तायात् । ५. फ–हे धाराः अस्मासु गव्यमुदकमयम् आजिं समूहं अभ्यर्षत वर्षत गायत वाम् । * ख-घ-ण-प–आजिं आसमन्तात्; ल-स–आसमन्तात् । ६. ख-ग-घ-च-ण-न-भ-ल-स–' यथा तथा ' नास्ति । ७. त–इति द्वृचाः ।

धाम॑न्ते॒ विश्वं॒ भुव॑न॒मधि॑ श्रि॒तम॒न्तः स॑मु॒द्रे हृ॒द्य१॒॑न्तरायु॑षि ।
अ॒पामनी॑के समि॒थे य आभृ॑त॒स्तम॑श्याम॒ मधु॑मन्तं त ऊ॒र्मिम् ॥ ११ ॥

धाम॑न् । ते॒ । विश्व॑म् । भुव॑नम् । अधि॑ । श्रि॒तम् । अ॒न्तरिति॑ । स॒मु॒द्रे । हृ॒दि । अ॒न्तः । आयु॑षि ।
अ॒पाम् । अनी॑के । स॒म्ऽइ॒थे । यः । आऽभृ॑तः । तम् । अ॒श्या॒म॒ । मधु॑ऽमन्तम् । ते॒ । ऊ॒र्मिम् ॥ ११ ॥

^v^ते त्वदीये ^v^धामन् धामनि तेजःस्थाने ^v^विश्वं ^v^भुवनम्[1] ^v^अधि ^v^श्रितम्[2] । ^v^अन्तः ^v^समुद्रे वडवाग्नित्वेन[3] ^v^हृद्यन्तः सर्वप्राणिनां हृदये वैश्वानरत्वेन ^v^आयुषि अन्ने सर्वप्राण्याहारत्वेन । यद्वा । आयुषीत्येतत् हृद्विशेषणम् । जठराग्निना खल्वायुः धार्यते[4] । ^v^अपामनीके उदकसंस्त्याये वैद्युताग्नित्वेन ^v^समिथे संग्रामे च शौर्याग्निरूपेण । एवं सर्वेषु स्थानेषु वर्तमानं धाम । तस्मिन् धामनि ^v^यः ऊर्मिर्घृतरूप उदकरूपो वा रसः ^v^आभृतः[5] स्थापितः ^v^ते त्वदीयं ^v^तं रसं ^v^मधुमन्तं माधुर्योपेतम् ^v^अश्याम व्याप्नुयाम ॥ ॥ ११ ॥ ॥ ५ ॥

इत्थं श्रीबुक्कभूपालसाम्राज्यैकधुरंधरः ।
विद्यातीर्थगुरोर्दृष्ट्या प्राप्तसार्वज्ञ्यवैभवः[6] ॥
श्रीमत्सायणमन्त्रीशः सकलागमतत्त्ववित् ।
दाशतय्यां माधवीये वेदार्थस्य प्रकाशने ॥
चतुर्थं मण्डलं सम्यक् वामदेवेन वीक्षितम् ।
अष्टोत्तरैस्तु पञ्चाशत्सूक्तैः पञ्च शतैरपि ॥
एकोनया नवत्या च युक्तैर्मन्त्रैश्च संमितम् ।
व्याकार्षीत्सुखबोधार्थं पश्यतैतद्विमत्सराः[7] ॥
॥ इति चतुर्थं मण्डलं समाप्तम् ॥

---

१. त–भुवनं कृत्स्नं भूतजातम् । २. त–श्रितं तदपि च धाम कुत्र कुत्रास्त इति । ३. त–अन्तरिक्षस्य मध्ये सूर्यमण्डलत्वेन । ४. त–ध्रियते । ५. त–आहृतः । ६. ख-ग-च-ण-भ–°सर्वज्ञ° ७. ख-ग-घ-च-ण-फ–पश्यन्तु गतमत्सराः; न–पश्य तद्वीतमत्सरः ।

॥ श्रीगणेशाय नमः ॥

## ॥ अथ पञ्चमं मण्डलम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

आत्रेये[1] पञ्चमे मण्डले षडनुवाकाः । तत्र प्रथमेऽनुवाके चतुर्दश सूक्तानि । तत्र ‘ अबोध्यग्निः ’ इति द्वादशर्चं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका—‘ अबोधि द्वादश बुधगविष्ठिरौ ’ इति । पञ्चमे मण्डलेऽनुक्तगोत्रमात्रेयं विद्यादिति परिभाषितत्वादात्रेयौ बुधगविष्ठिरावृषी । अनादेशपरिभाषया त्रिष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता । प्रातरनुवाके[2] आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चैतदादिचत्वारि सूक्तानि । तथा च सूत्रितम्–‘ अबोध्यग्निः समिधेति चत्वारि ’ ( आश्व. श्रौ. ४. १३ ) इति ॥ अध्यायोत्सर्जनोपाकरणयोर्धामन्ते विश्वमिति द्वृचत्वेन विनियोग उक्तः ॥

**अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।**

**यह्वाइव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥ १ ॥**

अबोधि । अग्निः । सम्ऽइधा । जनानाम् । प्रति । धेनुम्ऽइव । आऽयतीम् । उषसम् ।

यह्वाःऽइव । प्र । वयाम् । उत्ऽजिहानाः । प्र । भानवः । सिस्रते । नाकम् । अच्छ ॥ १ ॥

अयं vअग्निः vजनानाम् अध्वर्य्वादीनां vसमिधा समिद्भिः vअबोधि प्रबुद्धोऽभूत्[3] । vधेनुमिव । अग्निहोत्रार्थधेनुं प्रति यथा प्रातर्बुध्यते तद्वत् vआयतीम् आगच्छन्तीम् vउषसं vप्रति । उषःकाले इत्यर्थः । अथ[4] प्रबुद्धस्याग्नेः[5] vभानवः ज्वालाः vयह्वाः महान्तः vवयां शाखां vप्र vउज्जिहानाः प्रोद्गमयन्तो वृक्षाः vइव प्रोज्जिहानाः स्वाधिष्ठानं त्यजन्तः vनाकम् अन्तरिक्षम् vअच्छ आभिमुख्येन vप्र vसिस्रते प्रसरन्ति ॥

**अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।**

**समिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि ॥ २ ॥**

अबोधि । होता । यजथाय । देवान् । ऊर्ध्वः । अग्निः । सुऽमनाः । प्रातः । अस्थात् ।

सम्ऽइद्धस्य । रुशत् । अदर्शि । पाजः । महान् । देवः । तमसः । निः । अमोचि ॥ २ ॥

---

१. ख-च-फ–‘ आत्रेये ’ नास्ति । २. ख-ग-च-ण-भ-ल-स–‘ प्रातरनुवाके ’ नास्ति । ३. ख-ग-च-ण-न-भ-ल-स–प्रवृद्धोऽभूत् । ४. न-ल-स– अथवा । ५. ख-ग-घ-च-ण-न-भ-ल-स–प्रवृद्धस्याग्नेः ।

अयं होता होमनिष्पादकः अग्निः देवान् यष्टव्यान् यजथाय यष्टुम् अबोधि बुध्यते[1]। सोऽग्निः प्रातःकाले सुमनाः शोभनमनस्को यजमानानुग्रहबुद्धिः सन्[2] ऊर्ध्वः अस्थात् उत्तिष्ठति। समिद्धस्य अस्य रुशत् रोचमानं पाजः बलं ज्वालालक्षणम् अदर्शि दृश्यते। एवंभूतः[3] महान् देवः तमसः अन्धकारात् निरमोचि निर्मुक्तोऽभूत् ॥

यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः।
आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥ ३ ॥

यत्। ईम्। गणस्य। रशनाम्। अजीगरिति। शुचिः। अङ्क्ते। शुचिऽभिः। गोभिः। अग्निः।
आत्। दक्षिणा। युज्यते। वाजऽयन्ती। उत्तानाम्। ऊर्ध्वः। अधयत्। जुहूभिः ॥ ३ ॥

यत् यदा ईम् अयमग्निः गणस्य संघात्मकस्य[4] जगतः रशनां रज्जुमिव[5] व्यापारप्रतिबन्धकं तमः अजीगः। गिरति गृह्णाति वा। समिद्धो भवतीत्यर्थः। तदा[6] शुचिः दीप्तः अग्निः[7] शुचिभिः गोभिः दीप्तैः रश्मिभिः अङ्क्ते व्यनक्ति विश्वं जगत्। आत् अनन्तरमेव दक्षिणा प्रवृद्धा वाजयन्ती अन्नमिच्छन्त्याज्यधारा युज्यते युक्ता भवति। अथवा दक्षिणा प्रवृद्धाज्यधारा युज्यते। तां च धाराम् उत्तानाम् ऊर्ध्वतानामुपरि विस्तृताम् ऊर्ध्वः उन्नतः सन् जुहूभिः अधयत् पिबति ॥

अग्निमच्छा देवयतां मनांसि चक्षूंषीव सूर्ये सं चरन्ति।
यदीं सुवाते उषसा विरूपे श्वेतो वाजी जायते अग्रे अह्नाम् ॥ ४ ॥

अग्निम्। अच्छ। देवऽयताम्। मनांसि। चक्षूंषिऽइव। सूर्ये। सम्। चरन्ति।
यत्। ईम्। सुवाते इति। उषसा। विरूपे इति विऽरूपे।
श्वेतः। वाजी। जायते। अग्रे। अह्नाम् ॥ ४ ॥

अग्निं देवम् अच्छ आभिमुख्येन देवयतां देवानात्मन इच्छतां यजमानानां मनांसि सं चरन्ति। देवा यष्टव्यास्तदर्थं कदायं वर्धिष्यतीति ध्यायन्तीत्यर्थः। चक्षूंषीव सर्वेषां प्राणिनां यथा सूर्ये संचरन्ति तद्वत्। यत् यदा ईम् एनमग्निम् उषसा सह विरूपे नानारूपे[8] द्यावापृथिव्यौ सुवाते जनयतः। तदानीं श्वेतः प्रकृष्टवर्णोपेतः वाजी वेजनवानग्निः अह्नाम् अग्रे उदयकाले[9] जायते[10] प्रवर्धत इत्यर्थः ॥

---

१. ख-ग-च-ण-फ-भ-ल-अबुध्यत। २. ख-ग-घ-च-ण-न-भ-स-‘सन्’ नास्ति। ३. न-ल-अथ तथाभूतः। ४. ल-संघातात्मकस्य। ५. न-ल-स-रज्जुरिव। ६. त-यदा च। ७. ख-ग-घ-च-ण-प-फ-भ-अग्निः आद्भिः भक्षकैः दाहकैरित्यर्थः। ८. ख-ग-च-ण-स-‘नानारूपे’ नास्ति। ९. त-प-ल-प्रातःकाले। १०. ल-जायते उत्पद्यते।

जनिष्ट हि जेन्यो अग्रे अह्नां हितो हितेष्वरुषो वनेषु ।
दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान् ॥ ५ ॥

जनिष्ट । हि । जेन्यः । अग्रे । अह्नाम् । हितः । हितेषु । अरुषः । वनेषु ।
दमेऽदमे । सप्त । रत्ना । दधानः । अग्निः । होता । नि । ससाद । यजीयान् ॥ ५ ॥

अयमग्निः ˅जेन्यः उत्पादनीयः ˅अह्नां ˅अग्रे उदयकाले ˅जनिष्ट प्रादुरभूत् । पश्चात् ˅हितेषु ˅वनेषु वनोत्थेषु काष्ठेषु ˅अरुषः आरोचमानः सन् ˅हितः स्थापितः । पश्चात् ˅दमेदमे तत्तद्यागगृहे ˅सप्त ˅रत्ना रमणीयाः सप्त ज्वालाः ˅दधानः धारयमाणः । अथवा यजमानेभ्यः सप्तविधानि रत्नानि दधानः ˅अग्निः ˅होता होमनिष्पादकः सन् ˅यजीयान् यष्टव्यः सन् ˅नि ˅षसाद निषण्णो भवति ॥

जीवति यजमाने मृत इति शब्दो यदि स्यात्तदानीं सुरभिमतीष्टिः कार्या । तत्रेयमनुवाक्या । सूत्रितं च–'अग्निर्होता न्यसीदद्यजीयान्त्साध्वीमकर्देववीतिं नो अद्य' (ऐ. ब्रा. ७. ९) इति ॥

अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुः सुरभा उ लोके ।
युवा कविः पुरुनिःष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥ ६ ॥

अग्निः । होता । नि । असीदत् । यजीयान् । उपऽस्थे । मातुः । सुरभौ । ऊँ इति । लोके ।
युवा । कविः । पुरुनिःऽस्थः । ऋतऽवा । धर्ता । कृष्टीनाम् । उत । मध्ये । इद्धः ॥ ६ ॥

अयम् ˅अग्निः ˅होता होमनिष्पादकः सन् ˅यजीयान् यष्टव्यश्च सन् ˅न्यसीदत् निषसाद । कुत्रेति तदुच्यते । ˅मातुः सर्वस्य निर्मातुर्भूम्याः ˅उपस्थे उत्संगे तत्रापि ˅सुरभौ आज्यादिसौरभ्ययुक्ते ˅लोके सर्वैर्द्रष्टव्ये स्थाने वेदिलक्षणे । ˅उत अपि च ˅युवा नित्यतरुणः सर्वत्र मिश्रितो वा ˅कविः मेधावी ˅पुरुनिःष्ठः बहुस्थानः ˅ऋतावा यज्ञवान् ˅धर्ता सर्वस्य धारक एवंभूतः सन् ˅कृष्टीनाम् ऋत्विग्यजमानानां ˅मध्ये ˅इद्धः समिद्धः[1] सन् । वर्तत इति शेषः[2] ॥ ॥ १२ ॥

प्र णु त्यं विप्रमध्वरेषु साधुमग्निं होतारमीळते नमोभिः ।
आ यस्ततान रोदसी ऋतेन नित्यं मृजन्ति वाजिनं घृतेन ॥ ७ ॥

प्र । नु । त्यम् । विप्रम् । अध्वरेषु । साधुम् । अग्निम् । होतारम् । ईळते । नमःऽभिः ।
आ । यः । ततान । रोदसी इति । ऋतेन । नित्यम् । मृजन्ति । वाजिनम् । घृतेन ॥ ७ ॥

˅त्यं तम् ˅अग्निं ˅नमोभिः स्तुतिभिः ˅नु क्षिप्रं ˅प्र ˅ईळते स्तुवन्ति । कीदृशं तम् । ˅विप्रं मेधाविनम् ˅अध्वरेषु ˅साधुं फलसाधकं ˅होतारं होमनिष्पादकम् । ˅यः देवः ˅रोदसी द्यावापृथिव्यौ

---

१. त-प-ल– दीप्तः । २. ख-ग-घ-च-ण-प-फ-भ– शेषः । उ पूरणः ।

ᵛऋतेन उदकेन ᵛआ ᵛततान विस्तारितवान्। अग्नौ प्रास्ताहुतेरादित्यद्वारा वृष्ट्युत्पादकत्वात्। अथवा ऋतेन सत्यभूतेन हविषा दिवं तथाभूतेन वृष्ट्यादिफलेन भुवं च आततान। ᵛवाजिनम् अन्नवन्तं देवं यजमानाः ᵛनित्यं ᵛघृतेन उदकेनाज्येन वा ᵛमृजन्ति परिचरन्ति ॥

मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः।
सहस्रशृङ्गो वृषभस्तदोजा विश्वाँ अग्ने सहसा प्रास्यन्यान् ॥ ८ ॥

मार्जाल्यः। मृज्यते। स्वे। दमूनाः। कविऽप्रशस्तः। अतिथिः। शिवः। नः।
सहस्रऽशृङ्गः। वृषभः। तत्ऽओजाः। विश्वान्। अग्ने। सहसा। प्र। असि। अन्यान् ॥८॥

ᵛमार्जाल्यः संमार्जनीयोऽयमग्निः ᵛमृज्यते परिचर्यते। ᵛस्वे स्वकीये स्थाने। कीदृशोऽयम्। ᵛदमूनाः दानमना दान्तमना वा ᵛकविप्रशस्तः कविभिर्मेधाविभिः प्रशस्तः प्रकर्षेण स्तुत्यः ᵛनः अस्माकम् ᵛअतिथिः अतिथिवत् पूज्यः ᵛशिवः सुखकरश्च। ᵛसहस्रशृङ्गः अपरिमितज्वालः ᵛवृषभः वर्षिता फलानां ᵛतदोजाः। यत्प्रसिद्धं बलं तेजो वास्ति तदेवौजो यस्य तादृशः। सर्वबलस्वरूप इत्यर्थः। अथ प्रत्यक्षवादः। हे ᵛअग्ने ᵛविश्वान् ᵛअन्यान् स्वव्यतिरिक्तान् सर्वान् ᵛसहसा बलेन ᵛप्रासि। प्रेति परेत्यर्थे। पराभवसि। व्याप्तुं वा प्रभवसि ॥

प्र सद्यो अग्ने अत्येष्यन्यानाविर्यस्मै चारुतमो बभूथ।
ईळेन्यो वपुष्यो विभावा प्रियो विशामतिथिर्मानुषीणाम् ॥ ९ ॥

प्र। सद्यः। अग्ने। अति। एषि। अन्यान्। आविः। यस्मै। चारुऽतमः। बभूथ।
ईळेन्यः। वपुष्यः। विभाऽवा। प्रियः। विशाम्। अतिथिः। मानुषीणाम् ॥ ९ ॥

हे ᵛअग्ने त्वं यज्ञमासाद्य ᵛसद्यः[1] तदानीमेव ᵛअन्यान् स्वसमानान् ᵛअत्येषि अतिक्रामसि। ᵛयस्मै यज्ञाय[2] ᵛचारुतमः सन् ᵛआविः ᵛबभूथ। किंच त्वम् ᵛईळेन्यः स्तुत्यः ᵛवपुष्यः वपुष्करो दीप्तिकरो वा ᵛविभावा विशिष्टदीप्तिमान् ᵛप्रियः प्रियभूतः ᵛविशां सर्वेषां प्राणिनां तथा ᵛअतिथिः पूज्यः ᵛमानुषीणां[3] प्रजानां भवसि ॥

तुभ्यं भरन्ति क्षितयो यविष्ठ बलिमग्ने अन्तित ओत दूरात्।
आ भन्दिष्ठस्य सुमतिं चिकिद्धि बृहत्ते अग्ने महि शर्म भद्रम् ॥ १० ॥

तुभ्यम्। भरन्ति। क्षितयः। यविष्ठ। बलिम्। अग्ने। अन्तितः। आ। उत। दूरात्।
आ। भन्दिष्ठस्य। सुऽमतिम्। चिकिद्धि। बृहत्। ते। अग्ने। महि। शर्म। भद्रम् ॥ १० ॥

---

१. ख-ग-घ-च-ण-प-फ-भ– प्र सद्यः। २. न-ल-स– ‘यज्ञाय’ नास्ति। ३. त–मानुषीणां यजमानरूपाणाम्।

हे <sup>v</sup>यविष्ठ युवतम <sup>v</sup>अग्ने <sup>v</sup>क्षितयः[1] मनुष्याः यजमानाः <sup>v</sup>तुभ्यं[1] <sup>v</sup>भरन्ति संपादयन्ति। किम्। <sup>v</sup>बलिं पूजां हविर्लक्षणाम् <sup>v</sup>अन्तितः अन्तिकात् <sup>v</sup>उत अपि च <sup>v</sup>दूरात्। <sup>v</sup>आ इति चार्थे। किंच <sup>v</sup>भन्दिष्ठस्य अतिशयेन स्तोतुः <sup>v</sup>सुमतिं स्तुतिम् <sup>v</sup>आ <sup>v</sup>चिकिद्धि आजानीहि। हे <sup>v</sup>अग्ने <sup>v</sup>ते तव <sup>v</sup>शर्म सुखम् अस्मभ्यं दातव्यं <sup>v</sup>बृहत् महत् <sup>v</sup>भद्रं[2] स्तुत्यं च ॥

**आद्य रथं भानुमो भानुमन्तमग्ने तिष्ठ यजतेभिः समन्तम्।**
**विद्वान्पथीनामुर्व१न्तरिक्षमेह देवान्हविरद्याय वक्षि ॥ ११ ॥**

आ। अद्य। रथम्। भानुऽमः। भानुऽमन्तम्। अग्ने। तिष्ठ। यजतेभिः। सम्ऽअन्तम्।
विद्वान्। पथीनाम्। उरु। अन्तरिक्षम्। आ। इह। देवान्। हविःऽअद्याय। वक्षि ॥११॥

हे <sup>v</sup>भानुमः दीप्तिमन् <sup>v</sup>अग्ने <sup>v</sup>अद्य अस्मिन् यागदिने <sup>v</sup>भानुमन्तं दीप्तिमन्तं <sup>v</sup>समन्तं समीचीनप्रान्तोपेतं <sup>v</sup>रथं <sup>v</sup>यजतेभिः यष्टव्यैर्देवैः सह <sup>v</sup>आ <sup>v</sup>तिष्ठ आरोह। <sup>v</sup>विद्वान् यष्टव्यदेवपरिज्ञानवांस्त्वं <sup>v</sup>पथीनां देवयजनमार्गान् प्रति ॥ द्वितीयार्थे षष्ठी ॥ <sup>v</sup>उर्वन्तरिक्षं प्रभूतेऽन्तरिक्षे <sup>v</sup>देवान् यष्टव्यान् <sup>v</sup>हविरद्याय हविर्भक्षणाय <sup>v</sup>इह अस्मिन्[3] यज्ञे[3] <sup>v</sup>आ <sup>v</sup>वक्षि आवहसि ॥

**अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे।**
**गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रेत् ॥ १२ ॥**

अवोचाम। कवये। मेध्याय। वचः। वन्दारु। वृषभाय। वृष्णे।
गविष्ठिरः। नमसा। स्तोमम्। अग्नौ। दिविऽइव। रुक्मम्। उरुऽव्यञ्चम्। अश्रेत् ॥१२॥

वयमात्रेयाः <sup>v</sup>कवये मेधाविने <sup>v</sup>मेध्याय मेधार्हाय <sup>v</sup>वृषभाय वर्षकाय फलानां <sup>v</sup>वृष्णे सेक्त्रे यूने <sup>v</sup>वृन्दारु वन्दनशीलं <sup>v</sup>वचः स्तोत्रम् <sup>v</sup>अवोचाम। अथ ऋषिरात्मानं परोक्षेणैव निर्दिश्य स्तुतिम् उपसंहरति। <sup>v</sup>गविष्ठिरः अयमृषिः <sup>v</sup>नमसा नमस्कारेण हविषा वा युक्तं <sup>v</sup>स्तोमं स्तोत्रम् <sup>v</sup>अग्नौ <sup>v</sup>अश्रेत् श्रयति स्म। <sup>v</sup>दिवि <sup>v</sup>रुक्मं रोचमानम् <sup>v</sup>उरुव्यञ्चम् उरुगमनमादित्यम् <sup>v</sup>इव ॥　　॥ १३ ॥

'कुमारं माता' इति द्वादशर्चं द्वितीयं सूक्तम्। अत्रेः पुत्रः कुमार ऋषिः जननाम्नः[4] पुत्रो वृशो वोभौ वात्र ऋषी। 'कमेतं त्वं', 'वि ज्योतिषा' इत्यनयोस्तु वृश एव नोभौ न कुमारः। अन्त्या षट्पञ्चाशदक्षरा शक्वरी शिष्टास्त्रिष्टुभः। अग्निर्देवता। अत्रानुक्रमणिका—'कुमारं कुमारो वृशो वा जान[5] उभौ[6] वा शक्वर्यन्तं कं वीत्यृचोस्तु वृश एव' इति। प्रातरनुवाकाश्विनशस्त्रयोरस्यापि सूक्तस्य विनियोग उक्तः पूर्वसूक्तेन सह ॥

---

१. न– तुभ्यं क्षितयो मनुष्याः; ल-स–तुभ्यम्।　२. ख-ग-घ-च-ण-प-फ-भ–महि भद्रं महत्। ३. न-ल-स–'अस्मिन् यज्ञे' नास्ति। ४. ख-ग-घ-च-ण-त-प-फ-भ-ल-स–जरनाम्नः। ५. ख-ग-च-ण-न-फ-भ-ल–जार उभौ।

कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे ।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥ १ ॥

कुमारम् । माता । युवतिः । सम्ऽउब्धम् । गुहा । बिभर्ति । न । ददाति । पित्रे ।
अनीकम् । अस्य । न । मिनत् । जनासः । पुरः । पश्यन्ति । निऽहितम् । अरतौ ॥ १ ॥

शाट्यायनब्राह्मणोक्त इतिहास इहोच्यते । राजा त्रैवृष्ण ऐक्ष्वाकः[1] त्र्यरुणोऽभवदस्य[2] च[2] ॥ पुरोहितो वृशो जान[3] ऋषिरासीत्तदा खलु । संगृह्णन्ति रथान्[4] राज्ञां रक्षणाय पुरोहिताः ॥ त्र्यरुणस्य वृशो रश्मिं संजग्राह पुरोहितः । कुमारो वर्त्मनि क्रीडन्रथचक्रेण घातितः[5] ॥ छिन्नः कुमारश्चक्रेण ममाराथ पुरोहितः । त्वं हन्तास्येति राजानं राजा चापि पुरोहितम् ॥ त्वं हन्तास्य कुमारस्य नाहमित्यब्रवीत्तदा । यतस्त्वं रथवेगस्य नियन्तातस्त्वया हतः ॥ रथस्वामी यतो राजन् तस्मात्त्वं तस्य घातकः । एवं विवदमानौ ताविक्ष्वाकून्प्रष्टुमागतौ ॥ तौ पप्रच्छतुरिक्ष्वाकून् केनासौ निहतो द्विजः[6] । तेऽब्रुवन्नथयन्तारं हन्तारं वृशसंज्ञकम् ॥ स वृशो वार्शसाम्ना तं कुमारं समजीवयत् । एवमाख्याय तत्रैव पुनरन्यदुदीरितम् ॥ यत इक्ष्वाकवो रागात्[7] हन्तारमृषिमब्रुवन् । तस्मात्तेषां गृहेष्वग्नेस्तेजो निर्गतमेषु च ॥ गृहे पाकादयो नासन् तत्कारणमचिन्तयन् । वृशं कुमारहन्तारं यदवोचाम तेन नः ॥ अपाक्रमद्धरो वह्नेराह्वयाम वृशं वयम् । इति संचिन्त्य[8] तमृषिमाह्वयामासुरादरात् ॥ समागत्य[9] ततः शीघ्रं तेषामग्नेर्हरो भवेत् । इति वार्शेन साम्नासावकामयत पूर्ववत् ॥ एवं गायन् स ऋषिर्ब्रह्महत्यां भार्याजातां[10] त्रसदस्योर्नृपस्य । पिशाचवेषां हर आदाय चाग्नेर्गृहान्नीत्वा कशिपौ स्थापयन्तीम्[11] ॥ दृष्ट्वा[12] सम्यक् तद्धरस्तोषयित्वा[12] साम्ना पश्चाद्योजयामास चाग्निम् । ततः सतेजाः संजातोऽभवत्पाकादि पूर्ववत् ॥ एवं शाट्यायनेनोक्तं ताण्डकोक्तमथोच्यते । वृशः पुरोधा अभवत्त्रसदस्योर्महीपतेः ॥ स रथं धावयन्राजा ब्राह्मणस्य कुमारकम् । चिच्छेद रथचक्रेण प्रमादात्सोऽब्रवीद्वृशम् ॥ पुरोहिते वर्तमाने त्वयि मां हन्तिरागता[13] । एषा त्वयापनेतव्या ऋषिमित्यब्रवीन्नृपः ॥ स ऋषिर्वार्शसाम्ना तं कुमारमुदजीवयत् ॥ vमाता कुमारस्योत्पादयित्री vयुवतिः यौवनोपेता vकुमारं पथि संचरन्तं vसमुब्धं चक्रेण हतं vगुहा गुहायां vबिभर्ति धारयति । vन vददाति vपित्रे तस्य जनकाय । यद्वा । माता सर्वस्य निर्मात्री पृथिवी समुब्धं सम्यक् निगूढं गुहा[14] बिभर्ति न ददाति पित्रे । vअस्य कुमारस्य vअनीकं रूपं vमिनत् हिंसितं vजनासः जनाः vन vपश्यन्ति । किंतु vअरतौ अरमणे देशे vनिहितं स्थितं vपुरः पुरोदेशे[15] पश्यन्ति । अथवायं वृशेन पुनरुज्जीवितः कुमार आत्मानमपरोक्षतया वक्ति कथयति । जानः[16] वा तं जीवयित्वा वक्ति । अथवा । सूक्तस्य आग्नेयत्वात् कुमार इत्यग्निरुच्यते । तं माता अरणिर्युवतिर्मिश्रयन्ती समुब्धं निगूढं गुहायां बिभर्ति पित्रे उत्पादकाय यजमानाय न ददाति । अस्याग्नेर्मिनत् हिंसत् दाहकमनीकं तेजो जना न पश्यन्ति । किंतु अरतौ अरण्यां हितं[17] पश्यन्ति ॥

---

१. ख-ग-च-फ-भ-इक्ष्वाकुः । २. च-फ-त्रय एव ब्रवीन्मिथः । ३. ख-ग-ण-त-न-भ-ल- जारः । ४. त-तथा । ५. ल-पातितः । ६. ण-भ-स-द्विजाः । ७. ख-ग-च-ण-न-फ-भ-स-वेगात्; त-ल-संगात् । ८. त-ल-निश्चित्य । ९. त-न-ल-स आगत्य । १०. त-भार्यां जाताम् । ११. ख-ग-ण-त-न-भ-ल-स-स्थापयन्ती । १२. ख-ग-च-फ-दृष्ट्वा दृशः संस्तरे तोषयित्वा; ण-दृष्ट्वा वृषः संस्तरे तोषयित्वा; भ-दृष्ट्वा स्त्रकस्तरे स्तोषयित्वा; ल-दृष्ट्वा स्वकस्तद्धरस्तोषयित्वा; स-दृष्ट्वा सकंस्तरे (?) तोषयित्वा । १३. त-न-हतिरागता । १४. ल-गुहायाम् । १५. ख-ग-च-ण-भ-'पुरोदेशे' नास्ति । १६. ख-ग-च-ण-त-न-फ-भ-ल-स-जारः । १७. ल-निहितम् ।

कमेतं त्वं युवते कुमारं पेषी बिभर्षि महिषी जजान ।

पूर्वीर्हि गर्भः शरदो ववर्धापश्यं जातं यदसूत माता ॥ २ ॥

कम् । एतम् । त्वम् । युवते । कुमारम् । पेषी । बिभर्षि । महिषी । जजान ।

पूर्वीः । हि । गर्भः । शरदः । ववर्ध । अपश्यम् । जातम् । यत् । असूत । माता ॥ २ ॥

अत्राग्नेरुत्पाद्यमानत्वात् कुमारशब्देन व्यवहारः । हे ˇयुवते ˇत्वं ˇकमेतं ˇकुमारं ˇपेषी हिंसिका पिशाचिका सती ˇबिभर्षि । एवं वृशाख्यो महर्षिः कशिपुनाच्छन्नम्[1] अग्नेर्हरो ब्रूते । त्वयानुत्पादितत्वात् धारणमनुचितमित्यर्थः। ˇमहिषी महती पूजनीयारणिः एनं ˇजजान अजनयत्। तदेवाह[2]। ˇगर्भः शिशोर्ग्राहकोऽरण्याः संबन्धी गर्भः ˇहि यस्मात् ˇपूर्वीः ˇशरदः गताननेकान् संवत्सरान् ˇववर्ध ववृधे । अहं च ततो ˇजातम् ˇअपश्यम् । ˇयत् यस्मात् ˇमाता अरणिः ˇअसूत उदपादयत्। राजकुमारपक्षे[3] हे युवते भूदेवि कमेतं कुमारं पेषी सती बिभर्षि । अवशिष्टं कुमारजननपरतया[4] योज्यम् । एवमुत्तरत्रापि कुमाराग्निहरसोः परत्वेन यथोचितं व्याख्येयम् ॥

हिरण्यदन्तं शुचिवर्णमारात्क्षेत्रादपश्यमायुधा मिमानम् ।

ददानो अस्मा अमृतं विपृक्वत्किं मामनिन्द्राः कृणवन्ननुक्थाः ॥ ३ ॥

हिरण्यऽदन्तम् । शुचिऽवर्णम् । आरात् । क्षेत्रात् । अपश्यम् । आयुधा । मिमानम् ।

ददानः । अस्मै । अमृतम् । विपृक्वत् । किम् । माम् । अनिन्द्राः । कृणवन् । अनुक्थाः ॥ ३ ॥

ˇहिरण्यदन्तं हिरण्यसदृशदन्तस्थानीयज्वालोपेतं ˇशुचिवर्णं प्रदीप्तवर्णम् ˇआयुधा आयुधानि आयुधस्थानीयान् स्फुलिङ्गान् ज्वाला वा ˇमिमानं निर्मिमाणमग्निम् ˇआरात् समीपे ˇक्षेत्रात् क्षेत्रे[5] देशे[5] ˇअपश्यं पश्येयम् । एवं वृशः कामयते । अहम् ˇअस्मै अग्नये ˇअमृतम् अविनाश्यमृतत्वसाधनं वा ˇविपृक्वत् सर्वतो व्याप्तं हविः स्तोत्रं वा ˇददानः दातास्मि । ˇमाम् ˇअनिन्द्राः । इन्द्रः परमैश्वर्योऽग्निः । तद्रहिता अनिन्द्राः । इन्द्रमयजन्त इत्यर्थः । ˇअनुक्थाः अस्तुतय इन्द्रमस्तुवन्तश्च ˇकिं ˇकृणवन् किं कुर्युः ॥

क्षेत्रादपश्यं सनुतश्चरन्तं सुमद्यूथं न पुरु शोभमानम् ।

न ता अगृभ्रन्नजनिष्ट हि षः पलिक्नीरिद्युवतयो भवन्ति ॥ ४ ॥

क्षेत्रात् । अपश्यम् । सनुतरिति । चरन्तम् । सुऽमत् । यूथम् । न । पुरु । शोभमानम् ।

न । ताः । अगृभ्रन् । अजनिष्ट । हि । सः । पलिक्नीः । इत् । युवतयः । भवन्ति ॥ ४ ॥

---

१. त-ल– कशिपुनाच्छिन्नम् । २. ख-ग-घ-च-ण-भ-स–तदेव हि; ल–तदेवाहुः । ३. ल–राजकुमाराश्रियपक्षे । ४. त–कुमारमातृपरतया । ५. त–क्षेत्रदेशे ।

अहं वृश इदानीं क्षेत्रात् क्षेत्रे सनुतः। अन्तर्हितनामैतत्। निगूढं चरन्तम् अरण्यां[1] यूथं न गवां समूहमिव सुमत् स्वयमेव पुरु बहु शोभमानम्[2] अपश्यं पश्यामि। पुरा हरसः पिशाच्याक्रमणकाले ताः ज्वाला निर्वीर्याः न अगृभ्रन् नागृह्णन्त नराः। इदानीं सः अग्निः अजनिष्ट हि। हरसा प्रादुरभूत् खलु। अत एव हेतोः पलिक्नीरित् पलिक्न्यः पलिता जीर्णाः[3] ज्वाला एवेदानीं युवतयो भवन्ति ॥

के मे मर्यकं वि यवन्त गोभिर्न येषां गोपा अरणश्चिदास ।

य ईं जगृभुरव ते सृजन्त्वाजाति पश्व उप नश्चिकित्वान् ॥ ५ ॥

के। मे। मर्यकम्। वि। यवन्त। गोभिः। न। येषाम्। गोपाः। अरणः। चित्। आस।

ये। ईम्। जगृभुः। अव। ते। सृजन्तु। आ। अजाति। पश्वः। उप। नः। चिकित्वान् ॥५॥

के मे मदीयं मर्यकं मर्त्यसंघं राष्ट्रं गोभिः सह वि यवन्त वियुक्तमकुर्वन्। गा[4] भृत्यांश्च व्ययोजयन्[4]। येषां गोपाः अस्माकं गोपायिता[5] अरणश्चित् अभिगन्ता न आस बभूव[6]। सोऽयमग्निः। ये द्वेषिणः ईम् एनं जनसंघं राष्ट्रं जगृभुः गृह्णन्ति। ते अव सृजन्तु नश्यन्तु[7]। किंच चिकित्वान् चेतनावान् अस्मद्विषयज्ञानवानग्निः नः अस्माकं पश्वः पशून् उप आजाति उपागच्छति ॥

वसां राजानं वसतिं जनानामरातयो नि दधुर्मर्त्येषु ।

ब्रह्माण्यत्रेरव तं सृजन्तु निन्दितारो निन्द्यासो भवन्तु ॥ ६ ॥

वसाम्। राजानम्। वसतिम्। जनानाम्। अरातयः। नि। दधुः। मर्त्येषु।

ब्रह्माणि। अत्रेः। अव। तम्। सृजन्तु। निन्दितारः। निन्द्यासः। भवन्तु ॥ ६ ॥

वसां वसतां प्राणिनां राजानं स्वामिनं जनानां प्राणिनां वसतिम् आवासभूतं त्र्यरुणमुक्तलक्षणमग्निं वा[8] अरातयो नि दधुः अगोपयन् मर्त्येषु[9] लोकेषु मध्ये। अत्रेः अत्रिगोत्रस्य वृशस्य ब्रह्माणि मन्त्राः स्तोत्राणि[10] वा[10] तं कुमारम्[11] अग्निं वा अव सृजन्तु। अथवा अत्रेः[12] अत्रिगोत्रस्य कुमारं ब्रह्माणि। यद्वा। वृशस्य ब्रह्माण्यत्रेरत्रिगोत्रम् ॥ कर्मणि षष्ठी ॥ तं कुमारमव सृजन्तु विसृजन्तु। निन्दितारः अस्मन्निन्दकाः निन्द्यासः अस्माभिर्निन्द्याः भवन्तु। अत्रेर्ब्रह्माणीत्येतत्[13] उपजीव्य वृशमप्यात्रेयं वदन्ति। आत्रेयः कुमार इति पक्षे स एव प्राणमयम्[14] आत्मानमवसृजन्त्वित्याशास्ते ॥१४॥

---

१. त–आरण्यम्। २. प– शोभमानमग्निम्। ३. ख-ग-च-ण-त-न-प-फ-भ-ल-स–‘जीर्णाः’ नास्ति। ४. ख-ग-घ-च-ण-त-भ-ल-स–गोभृत्यांश्च वियोजयन्; न–गोभृत्यांश्च व्ययोजयन्। ५. न-भ-ल-स–गोपयिता। ६. ख-प-फ-भ– न बभूव। ७. ल– न पश्यन्तु। ८. ख-ग-च-ण-प-फ-भ–‘त्र्यरुण° ... वा’ नास्ति। ९. त–मर्त्येषु तदीयेषु। १०. ख-ग-च-ण-भ–‘स्तोत्राणि वा’ नास्ति। ११. ख-ग-च-ण-प-फ-भ– कुमारमरुणमुक्तलक्षणम्। १२. ख-ग-च-ण-भ-ल-स–अत्रेः अत्रिम्। १३. ख-ग-च-ण-त-न-भ-ल-स–अत्र ब्रह्माणीत्येते। १४. ख-ग-च-ण-त-न-भ-ल-स– शाणं मेगम् (?)।

अञ्जःसवे आहवनीयोपस्थाने 'शुनश्चिच्छेपम्' इत्येषा। 'अग्निमाहवनीयमुपस्थापयांचकार-शुनश्चिच्छेपं निदितं सहस्रात्' ( ऐ. ब्रा. ७. १७ ) इति ब्राह्मणम्।

**शुनश्चिच्छेपं निदितं सहस्राद्यूपादमुञ्चो अशमिष्ट हि षः।**
**एवास्मदग्ने वि मुमुग्धि पाशान्होतश्चिकित्व इह तू निषद्य ॥ ७ ॥**

शुनःऽशेपम्। चित्। निऽदितम्। सहस्रात्। यूपात्। अमुञ्चः। अशमिष्ट। हि। सः।
एव। अस्मत्। अग्ने। वि। मुमुग्धि। पाशान्। होतरिति। चिकित्वः। इह। तु। निऽसद्य ॥७॥

हे अग्ने ˅निदितं नितरां बद्धं ˅शुनःशेपम् ऋषिं ˅सहस्रात् अनेकरूपात्[1] ˅यूपात्[1] ˅अमुञ्चः अमोचयः। ˅चित् इति पूरणः। शुनःशेपमिति पदस्य मध्ये पदान्तरस्य संहितायां व्यत्ययेनावस्थितिः। ˅सः ऋषिः ˅अशमिष्ट ˅हि शान्तवान् खलु। यद्वा[2]। स हि यस्मादशमिष्ट। स्तुतिकर्मैतत्[3]। अस्तावीत्। तस्मादमुञ्च इति संबन्धः। ˅एव एवम् ˅अस्मत् अस्मत्तः ˅पाशान् ˅वि ˅मुमुग्धि विमोचय। हे ˅होतः[4] हे ˅चिकित्वः चेतनावन् ˅अग्ने ˅इह ˅तु वेद्यां ˅निषद्य अवस्थाय ॥

**हृणीयमानो अप हि मदैयेः प्र मे देवानां व्रतपा उवाच।**
**इन्द्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम् ॥ ८ ॥**

हृणीयमानः। अप। हि। मत्। ऐयेः। प्र। मे। देवानाम्। व्रतऽपाः। उवाच।
इन्द्रः। विद्वान्। अनु। हि। त्वा। चचक्ष।
तेन। अहम्। अग्ने। अनुऽशिष्टः। आ। अगाम् ॥८॥

हे अग्ने ˅हृणीयमानः क्रुध्यंस्त्वं ˅मत् मत्तः ˅अप ˅ऐयेः ˅हि अपागाः खलु ॥ 'ई गतौ' इत्यस्मात् श्यन्विकरणात् लङि मध्यमे छान्दसे परस्मैपद आडागमे वृद्धौ व्यत्ययेन श्यनोऽकारस्य एकारे च कृते रूपम् ॥ ˅मे मह्यं ˅देवानां ˅व्रतपाः कर्मणः पालकः ˅इन्द्रः ˅प्र ˅उवाच ˅हि। स एव ˅विद्वान् ˅त्वा ˅अनु ˅चचक्ष त्वां ददर्श। ˅तेन ˅अनुशिष्टः ˅अहं हे ˅अग्ने त्वाम् ˅आगाम् इति। एवं वृश आह ॥

**वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा।**
**प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ ९ ॥**

वि। ज्योतिषा। बृहता। भाति। अग्निः। आविः। विश्वानि। कृणुते। महिऽत्वा।
प्र। अदेवीः। मायाः। सहते। दुःऽएवाः। शिशीते। शृङ्गे इति। रक्षसे। विऽनिक्षे ॥९॥

---

१. ख-ग-घ-च-ण-न-भ-स–अनेकयूपात्। २. त–विद्वान्। ३. ख-ग-च-ण-त-न-भ-ल-स–स्तुतिकर्मत्वात्। ४. ख-ग-च-ण-प-फ-भ–होतर्देवानामाह्वातः।

अयम् अग्निः ज्योतिषा तेजसा बृहता महता वि भाति विशेषेण दीप्यते। अथ तथाभूतः सन् महित्वा स्वमहत्त्वेन विश्वानि सर्वाणि पदार्थजातानि आविः कृणुते प्रकटीकरोति। एवं प्रवृद्धोऽग्निः अदेवीः अदेवनशीला आसुरीः मायाः दुरेवाः दुःखगमनाः[1] प्र सहते अभिभवति। किंच शिशीते तीक्ष्णीकरोति। शृङ्गे शृङ्गाणि। शृङ्गसदृशीर्हिंसिका वा ज्वालाः शिशीते तीक्ष्णीकरोति। किमर्थम्। रक्षसे विनिक्षे रक्षसो नाशाय। 'निश्यति शृङ्गे रक्षसो विनिक्षणनाय' (निरु. ४. १८) इति यास्कः॥

उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ।

मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः॥ १०॥

उत। स्वानासः। दिवि। सन्तु। अग्नेः। तिग्मऽआयुधाः। रक्षसे। हन्तवै। ऊँ इति।

मदे। चित्। अस्य। प्र। रुजन्ति। भामाः। न। वरन्ते। परिऽबाधः। अदेवीः॥ १०॥

उत अपि च अग्नेः स्वानासः शब्दं कुर्वाणा ज्वालाः दिवि षन्तु द्युलोके प्रादुर्भवन्तु। किमर्थम्। तिग्मायुधाः तीक्ष्णायुधस्थानीया ज्वालाः। रक्षसे हन्तवा उ रक्षसो हननाय। उ इति पूरणः। मदे चित् हर्षे सति अस्य अग्नेः भामाः क्रोधा दीप्तयो वा प्र रुजन्ति प्रकर्षेण भङ्गं[2] गच्छन्ति पीडयन्ति वा रक्षांसि। परिबाधः परितो बाधिकाः अदेवीः अदेवनाः आसुर्यः सेनाः न वरन्ते न वारयन्त्येनम्[3]॥

एतं ते स्तोमं तुविजात विप्रो रथं न धीरः स्वपा अतक्षम्।

यदीदग्ने प्रति त्वं देव हर्याः स्वर्वतीरप एना जयेम॥ ११॥

एतम्। ते। स्तोमम्। तुविऽजात। विप्रः। रथम्। न। धीरः। सुऽअपाः। अतक्षम्।

यदि। इत्। अग्ने। प्रति। त्वम्। देव। हर्याः। स्वःऽवतीः। अपः। एन। जयेम॥ ११॥

हे तुविजात बहुभावमापन्नाग्ने ते त्वदर्थम् एतं स्तोमम् एतत् स्तोत्रं विप्रः मेधावी स्तोता रथं न रथमिव धीरः स्वपाः शोभनकर्माहम् अतक्षं समपादयम्। हे अग्ने देव त्वं यदीत् एनं स्तोमं प्रति हर्याः प्रतिकामयेथाः। तर्हि स्वर्वतीः स्वरणवतीर्व्याप्तिमतीः अपः एना एनेन जयेम प्राप्नुयाम॥

---

१. त–दुरवगमनाः। २. त–पीडाम्; न-ल-स–यावाम्। ३. ख-ग-च-ण-न-प-फ-भ-ल-स–अदेवताः ४. ख-च-ण-भ–वारयन्त्येव; न-स–वारयन्त्येतम्।

तुविग्रीवो वृषभो वावृधानोऽशत्र्वर्यः समजाति वेदः ।
इतीममग्निममृता अवोचन्बर्हिष्मते मनवे शर्म यंसद्धविष्मते
मनवे शर्म यंसत् ॥ १२ ॥

तुविऽग्रीवः । वृषभः । ववृधानः । अशत्रु । अर्यः । सम् । अजाति । वेदः ।
इति । इमम् । अग्निम् । अमृताः । अवोचन् । बर्हिष्मते । मनवे । शर्म । यंसत् ।
हविष्मते । मनवे । शर्म । यंसत् ॥ १२ ॥

तुविग्रीवः बहुज्वालः प्रभूतग्रीवो वा वृषभः वर्षिता कामानां ववृधानः वर्धमानोऽग्निः अर्यः अरेः वेदः धनम् अशत्रु अकण्टकं समजाति संयोजयति । इतीमम् अर्थम् अग्निम् अमृताः अन्ये देवाः अवोचन् । यस्मादेवं तस्मात् बर्हिष्मते यागवते मनवे मनुष्याय यजमानाय शर्म सुखं यंसत् यच्छतु । हविष्मते च[1] शर्म यंसत् ॥ ॥ १५ ॥

'त्वमग्ने वरुणः' इति द्वादशर्चं तृतीयं सूक्तमात्रेयस्य वसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयम् । 'त्वमग्ने वसुश्रुतः[2]' इत्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः 'अबोध्यग्निः' इत्यत्रोक्तः ॥

त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः ।
त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय ॥ १ ॥

त्वम् । अग्ने । वरुणः । जायसे । यत् । त्वम् । मित्रः । भवसि । यत् । सम्ऽइद्धः ।
त्वे इति । विश्वे । सहसः । पुत्र । देवाः । त्वम् । इन्द्रः । दाशुषे । मर्त्याय ॥ १ ॥

हे अग्ने त्वं वरुणः तमसां वारको रात्र्यभिमानी देवोऽपि त्वमेव यत् यदा जायसे । किंच त्वं मित्रः अहरभिमानी देवः प्रमीतेस्त्राता यत् यदा समिद्धः । त्वमुत्पन्नमात्रः सन्[3] तमो निवारयसि प्रवृद्धः सन् हितकारी भवसीत्यर्थः । त्वे त्वयि विश्वे सर्वेऽपि देवाः वर्तन्ते । त्वद्दत्तेन हविषा तेषां जीवनात् । 'ते देवा बिभ्यतोऽग्निं प्राविशन्' (तै. सं. ६. २. २. ६) इति हि श्रुतेः[4] । हे सहसस्पुत्र बलेन मथ्यमानत्वात् । किंच त्वम् इन्द्रः स्वामी दाशुषे हविर्दात्रे मर्त्याय[5] यजमानाय ॥

विवाहे चतुर्थ्यामाज्याहुतौ 'त्वमर्यमा' इत्येषा । सूत्रितं च—'त्वमर्यमा भवसि यत्कनीनामिति विवाहे चतुर्थीम्' (आश्व. गृ. १. ४. ७) इति ॥

---

१. प–मनवे । २. स–वसुश्रुतः आद्या विराट् तृतीया मारुतरौद्रावैष्णवीति । ३. ख-घ-च-ण-प-फ-भ–सन् भवसि । ४. ल–श्रुतिः । ५. च–मर्त्याय मनुष्याय ।

त्वम॑र्य॒मा भ॑वसि॒ यत्क॒नीनां॒ नाम॑ स्वधाव॒न्गुह्यं॑ बिभर्षि ।
अ॒ञ्जन्ति॑ मि॒त्रं सुधि॑तं॒ न गोभि॒र्यद्दम्प॑ती॒ सम॑नसा कृ॒णोषि॑ ॥ २ ॥

त्वम् । अ॒र्य॒मा । भ॒व॒सि॒ । यत् । क॒नीना॑म् । नाम॑ । स्व॒धा॒ऽव॒न् । गुह्य॑म् । बि॒भ॒र्षि॒ ।
अ॒ञ्जन्ति॑ । मि॒त्रम् । सुऽधि॑तम् । न । गोभिः॑ ।
यत् । दम्प॑ती॒ इति॒ दम्ऽप॑ती । सऽम॑नसा । कृ॒णोषि॑ ॥ २ ॥

हे अग्ने ᐯत्वमर्यमा ᐯभवसि । सर्वेषां नियमितासि । ᐯयत् यदा ᐯकनीनां कन्यकानां संबन्धयसि । किंच हे ᐯस्वधावन् हविर्लक्षणान्नवन् ᐯगुह्यं गोपनीयं ᐯनाम ᐯबिभर्षि वैश्वानर इति तन्नाम । ᐯसुधितं सुष्ठु[1] निहितं[1] ᐯमित्रं ᐯन मित्रमिव त्वां ᐯगोभिः । विकारे प्रकृतिशब्दः । गोविकारैः[2] क्षीरादिभिः ᐯअञ्जन्ति । ᐯयत् यस्मात् ᐯदम्पती जायापती ᐯसमनसा समानमनस्कौ ᐯकृणोषि करोषि ॥

तव॑ श्रि॒ये म॒रुतो॑ मर्जयन्त॒ रुद्र॒ यत्ते॒ जनि॑म॒ चारु॑ चि॒त्रम् ।
प॒दं यद्विष्णो॑रुप॒मं नि॒धायि॒ तेन॑ पासि॒ गुह्यं॒ नाम॒ गोना॑म् ॥ ३ ॥

तव॑ । श्रि॒ये । म॒रुतः॑ । म॒र्ज॒य॒न्त॒ । रुद्र॑ । यत् । ते॒ । जनि॑म । चारु॑ । चि॒त्रम् ।
प॒दम् । यत् । विष्णोः॑ । उ॒प॒ऽमम् । नि॒ऽधायि॑ । तेन॑ । पा॒सि॒ । गुह्य॑म् । नाम॑ । गोना॑म् ॥ ३ ॥

अनयाग्नेर्माध्यमिकी मूर्तिरुच्यते । हे अग्ने ᐯतव ᐯश्रिये श्रयणाय ᐯमरुतः अपः[3] अन्तरिक्ष्याः ᐯमर्जयन्त मार्जयन्ति । हे ᐯरुद्र वृष्ट्या[4] रुद्रवद्वर्धितरग्ने[5] ᐯते तव ᐯयत् ᐯजनिम जन्म वैद्युतलक्षणं ᐯचारु चरणीयं[6] ᐯचित्रं चायनीयं[7] च[7] । तत्कथमिति चेदुच्यते । ᐯविष्णोः व्यापनशीलस्य देवस्य ᐯउपमं ᐯगुह्यम् अगम्यं ᐯयत् ᐯपदं ᐯनिधायि । अनेनान्तरिक्षमुक्तम् । 'उपमेयमिव विष्णोर्मध्यमं पदं तस्मान्नान्तरिक्षं पश्यन्ति' इति ब्राह्मणम् । ᐯतेन ᐯगोनाम् उदकानां ᐯगुह्यं ᐯनाम नामानि ᐯपासि रक्षसि ॥

तव॑ श्रि॒या सु॒दृशो॑ देव दे॒वाः पु॒रू दधा॑ना अ॒मृतं॑ सपन्त ।
होता॑रम॒ग्निं मनु॑षो॒ नि षे॑दुर्दश॒स्यन्त॑ उ॒शिजः॒ शंस॑मा॒योः ॥ ४ ॥

तव॑ । श्रि॒या । सु॒ऽदृशः॑ । दे॒व॒ । दे॒वाः । पु॒रु । दधा॑नाः । अ॒मृत॑म् । स॒प॒न्त॒ ।
होता॑रम् । अ॒ग्निम् । मनु॑षः । नि । से॒दुः॒ । द॒श॒स्यन्तः॑ । उ॒शिजः॑ । शंस॑म् । आ॒योः ॥ ४ ॥

---

१. ख-च-ण-न-प-फ-भ-ल-स-' सुष्ठु निहितं ' नास्ति । २. ख-च-ण-प-फ-भ-' गोविकारैः ' नास्ति । ३. त-' अपः ' नास्ति । ४. ल-दृष्टया; स-धिष्ण्या । ५. च-न-रुद्रवद्वर्धितामे; त-रुद्रवधितामे । ६. च-रमणीयम् । ७. च-शोभनम् ।

हे ˅देव अग्ने ˅सुदृशः ˅तव ˅श्रिया समृद्धया ˅देवाः इन्द्रादयः ˅पुरु अत्यधिकं ˅दधानाः त्वयि प्रीतिं धारयन्तः ˅अमृतं ˅सपन्त स्पृशन्ति । ˅होतारं होमनिष्पादकम् ˅अग्निं ˅मनुषः मनुष्याः ˅नि ˅षेदुः परिचरन्ति ऋत्विजः । किं कुर्वन्तः । ˅दशस्यन्तः हविर्वितरन्तः ˅शंसं फलम् ˅उशिजः कामयमानस्य ˅आयोः मनुष्यस्य यजमानस्यार्थम् ॥

**न त्वद्धोता पूर्वो अग्ने यजीयान्न काव्यैः परो अस्ति स्वधावः ।**

**विशश्च यस्या अतिथिर्भवासि स यज्ञेन वनवद्देव मर्तान् ॥ ५ ॥**

न । त्वत् । होता । पूर्वः । अग्ने । यजीयान् । न । काव्यैः । परः । अस्ति । स्वधाऽवः ।

विशः । च । यस्याः । अतिथिः । भवासि । सः । यज्ञेन । वनवत् । देव । मर्तान् ॥ ५ ॥

हे ˅अग्ने ˅त्वत् त्वत्तोऽन्यः ˅न ˅अस्ति ˅होता ˅पूर्वः पूरकः[1] पुराणो वा ˅यजीयान् यष्टा वा । ˅काव्यैः स्तोत्रैः स्तुत्यः ˅परः परस्तात् परस्मिन्नपि काले ˅न अस्ति । हे ˅देव हे ˅स्वधावः अन्नवन्[2] ˅यस्याः ˅विशः प्रजाया ऋत्विग्रूपायाः ˅अतिथिः ˅भवासि अतिथिवत्पूज्यः[3] भवसि । ˅सः[4] ˅यज्ञेन ˅मर्तान् अस्मद्द्वेष्टॄन् ˅वनवत् वृश्चति[5] हिनस्ति[5] । यद्वा । मर्तान् परिचारकान् वनवत् संभजेत् ॥

**वयमग्ने वनुयाम त्वोता वसूयवो हविषा बुध्यमानाः ।**

**वयं समर्ये विदथेष्वह्नां वयं राया सहसस्पुत्र मर्तान् ॥ ६ ॥**

वयम् । अग्ने । वनुयाम । त्वाऽऊताः । वसुऽयवः । हविषा । बुध्यमानाः ।

वयम् । सऽमर्ये । विदथेषु । अह्नाम् । वयम् । राया । सहसः । पुत्र । मर्तान् ॥ ६ ॥

हे ˅अग्ने ˅वयं यजमानाः ˅त्वोताः त्वया रक्षिताः सन्तः[6] ˅वनुयाम । शत्रून् पीडयाम संभजेमहि वा धनम् । कीदृशा वयम् । ˅वसूयवः वसुकामाः[7] ˅हविषा त्वां ˅बुध्यमानाः बोधयन्तः ˅वयं ˅समर्ये समरणे जयेम शत्रूनिति शेषः । ˅विदथेषु यागेषु प्राप्नुयाम बलम् । यद्वा । वनुयामेत्येतदनुषज्यते । ˅अह्नां सर्वेष्वहःसु । किंच ˅वयं हे ˅सहसस्पुत्र बलस्य पुत्र पालक[8] वाग्ने ˅राया धनेन सह ˅मर्तान्[9] पुत्रभृत्यादीन् लभेमहि ॥　　　॥ १६ ॥

---

१. ल–प्रेरकः ।　२. ख-घ-च-ण-भ–अन्नवन्नग्ने ।　३. ख-च-ण-न-प-फ-भ-ल-स–‘ अतिथिवत् पूज्यः ’ नास्ति । ४. प– स त्वम् । ५. त–वृश्चसि हि(हिं)ससि; प–हिंससि । ६. ख-घ-च-ण-न-प-भ-ल-स–सन्तो वयम् ।　७. प -धनकामाः ।　८. ल–बलपालक ।　९. न–मर्त्यान् ।

यो न आगो॑ अ॒भ्येनो॒ भरा॑त्यधीद॒घम॒घशं॑से दधात ।
ज॒ही चि॑कित्वो अ॒भिश॑स्तिमे॒ताम॑ग्ने॒ यो नो॑ म॒र्चय॑ति द्व॒येन॑ ॥ ७ ॥

यः । नः॒ । आगः॑ । अ॒भि । एनः॑ । भरा॑ति । अधि॑ । इत् । अ॒घम् । अ॒घऽशं॑से । द॒धा॒त॒ ।
ज॒हि । चि॒कि॒त्वः॒ । अ॒भिऽश॑स्तिम् । ए॒ताम् । अग्ने॑ । यः । नः॒ । म॒र्चय॑ति । द्व॒येन॑ ॥ ७ ॥

यः मर्त्यः आगः अपराधम् एनः पापं च नः अस्मभ्यम् अभि भराति अभितः करोति। तस्मिन् अघशंसे[1] अघं पापम् अधि दधात ददात्वग्निः । इत् इति पूरणः । आगोऽपराधं यो मह्यमिदं करोति तस्मा एवाग्निस्तत्करोत्वित्यर्थः । अथ प्रत्यक्षेणोच्यते । हे[2] अग्ने एताम् अभिशस्तिं[2] जहि । उत्तरत्र यच्छब्दश्रवणात्तदानुगुण्येनैनमभिशंसकमिति व्याख्येयम् । यः अभिशस्ता नः अस्मान् द्वयेन उक्तेन आगसा एनसा वा मर्चयति बाधते । तमिति ॥

त्वाम॒स्या व्यु॑षि देव॒ पूर्वे॑ दू॒तं कृ॑ण्वा॒ना अ॑यजन्त ह॒व्यैः ।
सं॒स्थे यद॑ग्न॒ ईय॑से रयी॒णां दे॒वो मर्तै॒र्वसु॑भिरि॒ध्यमा॑नः ॥ ८ ॥

त्वाम् । अ॒स्याः । वि॒ऽउषि॑ । दे॒व॒ । पूर्वे॑ । दू॒तम् । कृ॒ण्वा॒नाः । अ॒य॒ज॒न्त॒ । ह॒व्यैः ।
स॒म्ऽस्थे । यत् । अ॒ग्ने॒ । ईय॑से । र॒यी॒णाम् । दे॒वः । मर्तैः॑ । वसु॑ऽभिः । इ॒ध्यमा॑नः ॥ ८ ॥

हे[3] अग्ने त्वामस्याः रात्रेः व्युषि । व्युष्टायामुषसीत्यर्थः । पूर्वे पुरातना यजमानाः दूतं देवानां प्रेरकं कृण्वानाः कुर्वाणाः अयजन्त हव्यैः हविर्भिः साधनैः रयीणां हविर्लक्षणानां संस्थे संस्थाने आसादने सति हे अग्ने यत् यदा ईयसे गच्छसि । देवः[4] द्योतमानः मर्तैः मनुष्यैर्ऋत्विग्भिः वसुभिः वासकैः इध्यमानः समिध्यमानः[5] सन् ॥

अव॑ स्पृधि पि॒तरं॒ योधि॑ वि॒द्वान्पु॒त्रो यस्ते॑ सहसः सून ऊ॒हे ।
क॒दा चि॑कित्वो अ॒भि चक्ष॑से॒ नोऽग्ने॑ क॒दाँ ऋ॑त॒चिद्या॑तयासे ॥ ९ ॥

अव॑ । स्पृ॒धि॒ । पि॒तर॑म् । योधि॑ । वि॒द्वान् । पु॒त्रः । यः । ते॒ । स॒ह॒सः॒ । सू॒नो॒ इति॑ । ऊ॒हे ।
क॒दा । चि॒कि॒त्वः॒ । अ॒भि । च॒क्ष॒से॒ । नः॒ । अग्ने॑ । क॒दा । ऋ॒त॒ऽचित् । या॒त॒या॒से॒ ॥ ९ ॥

हे सहसः सूनो बलस्य पुत्राग्ने त्वम् अव स्पृधि पारय । योधि पृथक्कुरु[6] पापात् । यः पुत्रः[7] पुत्रस्थानीयः तव[8] यो यजमानः ते त्वां पितरं पालकं पितृभूतं विद्वान् जानन् ऊहे वहति

---

१. प– अघशंसे पापकारिणे (णि)। २. च-फ– हे अग्ने चिकित्वः चेतनावन् एतामभिशस्तिम्; प–हे चिकित्वः चेतनावन्नग्ने एतामभिशस्तिमभिशंसकम् । ३. प–हे देव । ४. प–त्वं देवः । ५. ख-ग-च-ण-फ-भ–‘ समिध्यमानः ’ नास्ति । ६. प-ल–पृथक्कुरु च । ७. ख-ग-घ-च-ण-न-प-फ-भ-ल-स–‘ पुत्रः ’ नास्ति । ८. त–पुरुत्राता वा ।

हविः । तमेवं कुरु इत्यृषिरात्मानं परोक्षेणाह । ‘ हव्यवाळग्निरजरः पिता नः ’ ( ऋ. सं. ५. ४. २ ) इति हि वक्ष्यति । यद्वा । पितृपुत्रभावो व्यत्यस्तः । पितरं पितृवद्रक्षकं यजमानमव स्पृधि योधि[1] च[2] यस्त्वं पुत्रः पुत्रवत्सदा रक्षणीयः । ‘ त्वं पुत्रो भवसि यस्तेऽविधत् ’ ( ऋ. सं. २. १. ९ ) इति हि श्रुतिः । हे vचिकित्वः चेतनावन् vअग्ने vकदा vनः अस्मान् vअभि vचक्षसे अभिपश्यसि । vकदा च vऋतचित् यज्ञस्योदकस्य वा चेतयिता vयातयासे प्रेरयसि सन्मार्गेण ॥

भूरि॒ नाम॒ वन्द॑मानो दधाति पि॒ता व॑सो॒ यदि॒ तज्जो॒षया॑से ।
कु॒विद्दे॒वस्य॒ सह॑सा चका॒नः सु॒म्नम॒ग्निर्व॑नते वावृधा॒नः ॥ १० ॥

भूरि॑ । नाम॑ । वन्द॑मानः । द॒धा॒ति॒ । पि॒ता । व॒सो॒ इति॑ । यदि॑ । तत् । जो॒षया॑से ।
कु॒वित् । दे॒वस्य॑ । सह॑सा । च॒का॒नः । सु॒म्नम् । अ॒ग्निः । व॒न॒ते॒ । व॒वृ॒धा॒नः ॥ १० ॥

vभूरि प्रभूतं vनाम त्वदीयं नाम vवन्दमानः सन् vदधाति धारयति । सामर्थ्याद्धविः । अथवा नामकं हविः प्रभूतं धारयति दातुम् । vपिता पालकस्त्वं हे vवसो वासकाग्ने vयदि[3] vतत् हविः[3] vजोषयासे सेवसे । vदेवस्य व्यवहर्तुर्यजमानस्य vकुवित् बहु हविः vसहसा बलेन युक्तः सन् vचकानः कामयमानः । यद्वा कर्मणि षष्ठी । देवं यजमानं कामयमानः vअग्निः vवावृधानः वर्धमानो यजमानं वर्धयन् वा vसुम्नं[4] vवनते प्रयच्छति ॥

त्वम॒ङ्ग ज॑रि॒तारं॑ यविष्ठ॒ विश्वा॑न्यग्ने दुरि॒ताति॑ पर्षि ।
स्ते॒ना अ॑दृश्रन्रि॒पवो॒ जना॒सोऽज्ञा॑तकेता वृजि॒ना अ॑भूवन् ॥ ११ ॥

त्वम् । अ॒ङ्ग । ज॒रि॒तार॑म् । य॒वि॒ष्ठ॒ । विश्वा॑नि । अ॒ग्ने॒ । दुः॒ऽइ॒ता । अति॑ । प॒र्षि॒ ।
स्ते॒नाः । अ॒दृ॒श्र॒न् । रि॒पवः॑ । जना॑सः । अज्ञा॑तऽकेताः । वृ॒जि॒नाः । अ॒भू॒व॒न् ॥ ११ ॥

हे[5] vअङ्ग[5] स्वामिन् vयविष्ठ युवतम vअग्ने[6] vजरितारं स्तोतारम्[7] अनुग्रहीतुं vविश्वानि[8] vदुरिता दुरितानि vअति vपर्षि अतिपारयसि । vस्तेनाः तस्कराः vअदृश्रन् दृश्यन्ते । vरिपवो vजनासः शत्रुभूता मनुष्याः vअज्ञातकेताः अप्रज्ञातचिह्नाः vवृजिनाः अस्माभिर्वर्जिताः vअभूवन् भवन्ति ॥

इ॒मे यामा॑सस्त्व॒द्रिग॑भूव॒न्वस॑वे वा॒ तदिदागो॑ अवाचि ।
नाहा॒यम॒ग्निर॒भिश॑स्तये॒ नो॒ न रीष॑ते वावृधा॒नः परा॑ दात् ॥ १२ ॥

इ॒मे । यामा॑सः । त्व॒द्रिक् । अ॒भू॒व॒न् । वस॑वे । वा॒ । तत् । इत् । आगः॑ । अ॒वा॒चि॒ ।
न । अह॑ । अ॒यम् । अ॒ग्निः । अ॒भिऽश॑स्तये । नः॒ । न । रिष॑ते । व॒वृ॒धा॒नः । परा॑ । दा॒त् ॥ १२ ॥

---

१. ख-ग-च-ण–‘ योधि ’ नास्ति । २. ल– वा; स–त्वम् । ३. ख-ग-च-ण-भ–यत्तद्धविः; न–यद्धविः । ४. ख-ग-घ-चं-ण-प-फ-भ–सुम्नं धनम् । ५. त–अङ्ग हे । ६. प–अग्ने त्वम् । ७. ग-च-ण-न-स–‘ स्तोतारं ’ नास्ति । ८. प–विश्वानि सर्वाणि ।

ᵛइमे ᵛयामासः गन्तारः स्तोमाः ᵛत्वद्रिक् त्वदभिमुखाः ᵛअभूवन् भवन्ति। ᵛवा अथवा ᵛवसवे वासकाय[1] ᵛतत्[2] ᵛआगः अपराधमाशासनरूपम् ᵛअवाचि उक्तवानहमग्निम्[3]। इदं देहीति याचनमेवापराधः। ᵛइत् इति पूरणः। यद्वा। तदिदं वक्ष्यमाणं शत्रुभिः कृतमागोऽवाचि[4]। किंच ᵛअयमग्निः ᵛववृधानः स्तुत्या वर्धमानः सन् ᵛनाह नैव ᵛअभिशस्तये निन्दकाय ᵛनः अस्मान् ᵛपरा ᵛदात् परादद्यात्। तथा ᵛरिषते हिंसकाय नैव परा दात्॥ ॥ १७ ॥

'त्वामग्ने' इत्येकादशर्चं चतुर्थं सूक्तमात्रेयस्य वसुश्रुतस्यार्षं त्रैष्टुभमाग्नेयम्। अनुक्रान्तं च— 'त्वामग्न एकादश' इति। प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः 'अबोध्यग्निः' इत्यत्रोक्तः॥

**त्वाम॑ग्ने वसु॑पतिं वसू॑नाम॒भि प्र म॑न्दे अध्व॒रेषु॑ राजन्।**

**त्वया॒ वाजं॑ वाज॒यन्तो॑ जयेमा॒भि ष्या॑म पृत्सु॒तीर्मर्त्या॑नाम्॥ १॥**

त्वाम्। अ॒ग्ने॒। वसु॑ऽपतिम्। वसू॑नाम्। अ॒भि। प्र। म॒न्दे॒। अ॒ध्व॒रेषु॑। रा॒ज॒न्।

त्वया॑। वाज॑म्। वा॒ज॒ऽयन्तः॑। ज॒येम॒। अ॒भि। स्या॒म॒। पृ॒त्सु॒तीः। मर्त्या॑नाम्॥ १॥

हे ᵛअग्ने ᵛवसूनां ᵛवसुपतिम्। वृत्त्यवृत्तिभ्यां वसूनां बाहुल्यं तत्स्वामित्वं चोक्तम्। बहूनां धनानां स्वामिनं ᵛत्वाम् ᵛअध्वरेषु यागेषु ᵛअभि ᵛप्र ᵛमन्दे आभिमुख्येन स्तौमि हे ᵛराजन्। किंच ᵛत्वया अनुकूलेन ᵛवाजयन्तः अन्नमिच्छन्तो वयं ᵛवाजं ᵛजयेम। किंच ᵛमर्त्यानां मरणधर्मकाणां ᵛपृत्सुतीः सेनाः ᵛअभि ᵛष्याम अभिभवेम॥

दर्शपूर्णमासे पत्नीसंयाजे गृहपतेर्याज्यैषा। सूत्रितं च—'हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजाः' (आश्व. श्रौ. १. १०) इति। देवसुवां[5] हविःष्वप्यग्नेरेषैव याज्या[5]। सूत्रितं च— 'हव्यवाळग्निरजरः पिता नस्त्वं च सोम नो वशः' (आश्व. श्रौ. ४. ११) इति॥

**ह॒व्य॒वाळ॒ग्निर॒जरः॑ पि॒ता नो॑ वि॒भुर्वि॒भावा॑ सु॒दृशी॑को अ॒स्मे।**

**सु॒गा॒र्ह॒प॒त्याः समिषो॑ दिदीह्यस्म॒द्र्य१॑क्सं मिमीहि॒ श्रवां॑सि॥ २॥**

ह॒व्य॒ऽवाट्। अ॒ग्निः। अ॒जरः॑। पि॒ता। नः॒। वि॒ऽभुः। वि॒भाऽवा॑। सु॒ऽदृशी॑कः। अ॒स्मे इति॑।

सु॒ऽगा॒र्ह॒प॒त्याः। सम्। इषः॑। दि॒दी॒हि॒। अ॒स्म॒द्र्य॑क्। सम्। मि॒मी॒हि॒। श्रवां॑सि॥ २॥

अयं ᵛहव्यवाडग्निः ᵛअजरः अजीर्णः सन् ᵛनः ᵛपिता भवत्विति शेषः। किंच ᵛविभुः व्याप्तः ᵛविभावा दीप्तिमान् ᵛसुदृशीकः शोभनदर्शनः ᵛअस्मे अस्माकं भवतु। अथ प्रत्यक्षवादः। ᵛसुगार्हपत्याः शोभनगार्हपत्ययुक्तानि ᵛइषः अन्नानि ᵛसं ᵛदिदीहि सम्यक् प्रकाशय ददस्व वा। ᵛअस्मद्र्यक् अस्मदभिमुखं ᵛश्रवांसि अन्नानि ᵛसं ᵛमिमीहि सम्यक् प्रयच्छ॥

---

१. ख-ग-च-ण-फ-भ–धनार्थं वासकाः; घ-प–धनार्थम्। २. त–तदित्तत्। ३. ख-फ–उक्तवानस्मि। ४. ख-ग-घ-च-ण-न-भ-स–'कृतमागोऽवाचि' नास्ति। ५. ख-ग-च-ण-भ–अन्यत्र।

विशां कविं विश्पतिं मानुषीणां शुचिं पावकं घृतपृष्ठमग्निम् ।
नि होतारं विश्वविदं दधिध्वे स देवेषु वनते वार्याणि ॥ ३ ॥

विशाम् । कविम् । विश्पतिम् । मानुषीणाम् । शुचिम् । पावकम् । घृतऽपृष्ठम् । अग्निम् ।
नि । होतारम् । विश्वऽविदम् । दधिध्वे । सः । देवेषु । वनते । वार्याणि ॥ ३ ॥

ᵛमानुषीणां ᵛविशां ᵛविश्पतिं सर्वासां मनुष्यरूपाणां प्रजानां पालकं स्वामिनं वा ᵛकविं मेधाविनं ᵛशुचिं शुद्धं[1] दीप्तं वा ᵛपावकम् अन्येषां शोधकं ᵛघृतपृष्ठं प्रदीप्तपृष्ठोपलक्षितशरीरम् । अथवा उपरितनभागे आज्योपेतं ᵛहोतारं होमनिष्पादकं ᵛविश्वविदं विश्वस्य वेत्तारम् ᵛअग्निं ᵛनि ᵛदधिध्वे धारयथ[2] हे ऋत्विजः । ᵛसः देवः ᵛदेवेषु मध्ये ᵛवार्याणि वरणीयानि धनानि ᵛवनते संभजते अस्मदर्थम् । स्वयं वा वार्याणि हवींषि वनते ॥

जुषस्वाग्न इळया सजोषा यतमानो रश्मिभिः सूर्यस्य ।
जुषस्व नः समिधं जातवेद आ च देवान्हविरद्याय वक्षि ॥ ४ ॥

जुषस्व । अग्ने । इळया । सऽजोषाः । यतमानः । रश्मिऽभिः । सूर्यस्य ।
जुषस्व । नः । सम्ऽइधम् । जातऽवेदः । आ । च । देवान् । हविःऽअद्याय । वक्षि ॥ ४ ॥

हे ᵛअग्ने ᵛजुषस्व सेवस्व स्तुतिम् । ᵛइळया वेदिलक्षणया भूम्या वाचा वा ᵛसजोषाः समानप्रीतिः । तथा ᵛसूर्यस्य ᵛरश्मिभिः ᵛयतमानः प्रयत्नमुषःकाले कुर्वन् । किंच हे ᵛजातवेदः जातस्य वेदितरग्ने ᵛनः अस्मदीयां ᵛसमिधं ᵛजुषस्व सेवस्व । ᵛआ वह ᵛच ᵛदेवान् ᵛहविरद्याय हविरदनाय । आवाह्य ᵛवक्षि वहसि तद्धविः ॥

अथ पवित्रेष्ट्यां[3] स्विष्टकृतोऽनुवाक्यैषा । सूत्रितं च — ' जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये ' (आश्व. श्रौ. २. १२) इति । मरुद्भ्यः[4] पुरोडाशं सप्तकपालमित्यत्रापि स्विष्टकृतोऽनुवाक्या । ' अत्यासो न ये मरुतः स्वञ्चो जुष्टो दमूनाः ' (आश्व. श्रौ. २. १८ ) इति ॥

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥ ५ ॥

जुष्टः । दमूनाः । अतिथिः । दुरोणे । इमम् । नः । यज्ञम् । उप । याहि । विद्वान् ।
विश्वाः । अग्ने । अभिऽयुजः । विऽहत्य । शत्रुऽयताम् । आ । भर । भोजनानि ॥ ५ ॥

---

१. ख-ग-च-ण-फ-भ-स–विशुद्धम् ।  २. ख-ग-घ-च-ण-न-प-फ-भ- धारयध्वे; त-स–धारयथे । ३. त–पवित्रेष्ट्याः ।  ४. ख-ग-च-ण-भ–मरुद्भ्यः क्रीडिभ्यः; न–मरुद्भ्यः क्रीळिभ्यः ।

जुष्टः पर्याप्तः दमूनाः दानमना दान्तमना वा अतिथिः तद्वत् दुरोणे[1] गृहे[1] पूज्यः सन् इमं नः अस्मदीयं यज्ञम् उप याहि उपागच्छ[2]। विद्वान् जानन् हे अग्ने विश्वाः अभियुजः सर्वानभियोक्तॄन् विहत्य शत्रूयतां तेषां भोजनानि अन्नानि धनानि आ भर आहर। 'अतिथिरभ्यतितो गृहान्भवति' ( निरु. ४. ५ ) इत्यादिनिरुक्तं द्रष्टव्यम् ॥ ॥ १८ ॥

वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे३ स्वायै।

पिपर्षि यत्सहसस्पुत्र देवान्त्सो अग्ने पाहि नृतम वाजे अस्मान् ॥ ६ ॥

वधेन। दस्युम्। प्र। हि। चातयस्व। वयः। कृण्वानः। तन्वे। स्वायै।

पिपर्षि। यत्। सहसः। पुत्र। देवान्। सः। अग्ने। पाहि। नृऽतम। वाजे। अस्मान् ॥ ६ ॥

हे अग्ने वधेन आयुधेन दस्युम् उपक्षपयितारं प्र हि चातयस्व प्रणाशय। हि इति पूरणः। वयः कृण्वानः कुर्वाणः तन्वे शरीराय स्वायै स्वीयाय। अथवा स्वायै तन्वे यजमानादिरूपाय पुत्राय वयोऽन्नं कुर्वाणः। यत् यस्मात् सहसस्पुत्र अग्ने देवान् पिपर्षि तर्पयसि[3]। हे नृतम नेतृतम अग्ने सः त्वं वाजे संग्रामे अस्मान् पाहि रक्ष ॥

वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे।

अस्मे रयिं विश्ववारं समिन्वास्मे विश्वानि द्रविणानि धेहि ॥ ७ ॥

वयम्। ते। अग्ने। उक्थैः। विधेम। वयम्। हव्यैः। पावक। भद्रऽशोचे।

अस्मे इति। रयिम्। विश्वऽवारम्। सम्। इन्व।

अस्मे इति। विश्वानि। द्रविणानि। धेहि ॥ ७ ॥

हे अग्ने ते त्वां वयम् उक्थैः शस्त्रैः विधेम परिचरेम। वयं हव्यैः हविर्भिर्विधेम। पावक शोधक हे भद्रशोचे कल्याणदीप्ते अस्मे अस्मभ्यं विश्ववारं विश्वैर्वरणीयं रयिं धनं समिन्व प्रापय। अस्मे अस्मभ्यं विश्वानि द्रविणानि धेहि स्थापय ॥

अस्माकमग्ने अध्वरं जुषस्व सहसः सूनो त्रिषधस्थ हव्यम्।

वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि ॥ ८ ॥

अस्माकम्। अग्ने। अध्वरम्। जुषस्व। सहसः। सूनो इति। त्रिऽसधस्थ। हव्यम्।

वयम्। देवेषु। सुऽकृतः। स्याम। शर्मणा। नः। त्रिऽवरूथेन। पाहि ॥ ८ ॥

---

१. ख-ग-च-ण-न-भ-ल-स-'दुरोणे गृहे' नास्ति। २. च-उपगच्छ; ल-उपागाः।
३. ख-ग-च-ण-त-न-भ-ल-स-तर्पयसि पाहि।

हे ᵛअग्ने ᵛअस्माकम् ᵛअध्वरं ᵛजुषस्व सेवस्व । हे ᵛसहसः ᵛसूनो हे बलस्य पुत्र[1] ᵛत्रिषधस्थ त्रिषु क्षित्यादिषु[2] स्थानेषु[2] स्थित[3] ᵛहव्यं हविः जुषस्व । यद्वा । अध्वरं हविरिति योज्यम् । अहिंसितं हविरित्यर्थः। ᵛवयं यजमानाः ᵛदेवेषु मध्ये ᵛसुकृतः शोभनापूर्वकर्तारः[4] ᵛस्याम भवेम । ᵛत्रिवरूथेन वाचिकादिभेदेन त्रिधा वरणीयेन ᵛशर्मणा सुखेन त्रिच्छदिष्केण गृहेण वा ᵛनः ᵛपाहि रक्ष ॥

**विश्वा॑नि नो दु॒र्गहा॑ जातवेदः॒ सिन्धुं॒ न ना॒वा दु॑रि॒ताति॑ पर्षि ।**

**अग्ने॑ अत्रि॒वन्नम॑सा गृणा॒नो॒३॑ऽस्माकं॑ बोध्यवि॒ता त॒नूना॑म् ॥ ९ ॥**

विश्वा॑नि । न॒ः । दुः॒ऽगहा॑ । जा॒त॒ऽवे॒द॒ः । सिन्धु॑म् । न । ना॒वा । दुः॒ऽइ॒ता । अति॑ । प॒र्षि॒ ।

अग्ने॑ । अ॒त्रि॒ऽवत् । नम॑सा । गृ॒णा॒नः । अ॒स्माक॑म् । बो॒धि॒ । अ॒वि॒ता । त॒नूना॑म् ॥ ९ ॥

हे ᵛजातवेदः[5] ᵛनः अस्माकं ᵛदुर्गहा दुःखेन गाह्यानि[6] दुःखेन भोग्यानि ᵛविश्वानि दुरितानि[7] ᵛअति ᵛपर्षि अतिपारय । ᵛसिन्धुं ᵛन ᵛनावा नदीं नाविको यथा तद्वत् । हे ᵛअग्ने ᵛअत्रिवत् अत्रेर्यथा तथा अस्माकं[8] ᵛनमसा स्तोत्रेण ᵛगृणानः स्तूयमानः सन् ᵛअस्माकं ᵛतनूनाम् ᵛअविता रक्षकः ᵛबोधि बुध्यस्व ॥

पुत्रकामेष्ट्यां ' यस्त्वा ' इत्येषा प्रधानस्य याज्या । सूत्रितं च—' यस्त्वा हृदा कीरिणा मन्यमानोऽग्निस्तुविश्रवस्तमम् ' ( आश्व. श्रौ. २. १० ) इति ॥

**यस्त्वा॑ हृ॒दा की॒रिणा॒ मन्य॑मा॒नोऽम॑र्त्यं॒ मर्त्यो॒ जोह॑वीमि ।**

**जात॑वेदो॒ यशो॑ अ॒स्मासु॑ धेहि प्र॒जाभि॑रग्ने अमृत॒त्वम॑श्याम् ॥ १० ॥**

यः । त्वा॒ । हृ॒दा । की॒रिणा॑ । मन्य॑मानः । अम॑र्त्यम् । मर्त्यः॑ । जोह॑वीमि ।

जात॑ऽवेदः । यश॑ः । अ॒स्मासु॑ । धे॒हि॒ । प्र॒ऽजाभि॑ः । अ॒ग्ने॒ । अ॒मृ॒त॒ऽत्वम् । अ॒श्या॒म् ॥ १० ॥

ᵛयः ᵛमर्त्यः मरणधर्माहम्[9] ᵛअमर्त्यम् अविनाशं[10] ᵛत्वा त्वां ᵛकीरिणा स्तुत्यादिषु विक्षिप्तेन ᵛहृदा हृदयेन युक्तः ᵛमन्यमानः स्तुवन् ᵛजोहवीमि अत्यर्थमाह्वयामि । यद्वा । स्तोतृवाचकेन कीरिणाशब्देन स्तुतिरुपलक्ष्यते[11] । स्तुतियुक्तेन मनसा त्वां[12] मन्यमानो जोहवीमि । हे ᵛजातवेदः[13] ᵛयशः धनं प्रजां वा[14] ᵛअस्मासु ᵛधेहि । ᵛप्रजाभिः त्वद्दत्ताभिर्हे ᵛअग्ने अहम् ᵛअमृतत्वं संतत्यविच्छेदलक्षणम् ᵛअश्यां प्राप्नुयाम् । ' प्रजामनु प्रजायसे[15] तदु ते मर्त्यामृतम् ' ( तै. ब्रा. १. ५. ५. ६ ) इति हि श्रुतिः ॥

---

१. प–पुत्र अग्ने । २. ख-ग-च-ण-न-भ-स–दिव्यादिषु स्थानेषु; ल–क्षित्यादिस्थानषे । ३. ख-ग-च-ण-न-स–स्थितम्; ल–स्थितः । ४. प–शोभनकर्मकर्तारः । ५. प–जातवेदोऽग्ने । ६. ख-ग-च-ण-न-भ-ग्राह्यानि; घ–ग्राह्याणि; स–' गाह्यानि ' नास्ति । ७. प–दुरिता दुरितानि । ८. ख-ग-च-ण-त-न-भ-ल-स–नोऽस्माकम् । ९. ख-ग-घ-च-ण-न-भ-स–मरणधर्मा । १०. ल-स–अनाशम् । ११. त– स्तुतिरूपं लक्ष्यते । १२. त–त्वामन्नप्रदम् । १३. प–जातवेदोऽग्ने । १४. ख-ग-च-ण-त-न-ल-स– च । १५. त–प्रजायते ।

तस्यामेव पुत्रकामेष्ट्यां 'यस्मै त्वम्' इत्येषाग्नेः पुत्रवतोऽनुवाक्या। 'यस्मै त्वं सुकृते जातवेदो यस्त्वा हृदा कीरिणा मन्यमानः' (आश्व. श्रौ. २. १०) इति हि सूत्रितम्॥

यस्मै॑ त्वं सु॒कृते॑ जातवेद उ लो॒कम॑ग्ने कृ॒णव॑ः स्यो॒नम्।

अ॒श्विनं॒ स पु॒त्रिणं॑ वी॒रव॑न्तं॒ गोम॑न्तं र॒यिं न॑शते स्व॒स्ति॥ ११॥

यस्मै॑। त्वम्। सु॒ऽकृते॑। जा॒त॒ऽवे॒दः॒। ऊँ इति॑। लो॒कम्। अ॒ग्ने॒। कृ॒णव॑ः। स्यो॒नम्।

अ॒श्विन॑म्। सः। पु॒त्रिण॑म्। वी॒रऽव॑न्तम्। गोऽम॑न्तम्। र॒यिम्। न॒श॒ते॒। स्व॒स्ति॥ ११॥

हे ᵛजातवेदः ᵛअग्ने ᵛत्वं ᵛयस्मै ᵛसुकृते सुकर्मणे यजमानाय। ᵛउ इति पूरणः। ᵛलोकं ᵛस्योनं सुखकरं ᵛकृणवः अकरोः। यद्वा। लोकमालोकेन स्योनं कृणवः अनुग्रहेण कुर्वित्यर्थः। ᵛसः यजमानः ᵛअश्विनं बह्वश्वोपेतं ᵛपुत्रिणं बहुपुत्रोपेतं ᵛवीरवन्तं वीरैर्वीर्येण वा उपेतं ᵛगोमन्तं गोभिर्युक्तं[1] ᵛरयिं धनं ᵛनशते प्राप्नोति। ᵛस्वस्ति अविनश्वरम्॥ ॥ १९॥

'सुसमिद्धाय' इत्येकादशर्चं पञ्चमं सूक्तमात्रेयस्य वसुश्रुतस्यार्षं गायत्रमिध्माद्युक्तदेवताकम्। आप्रमित्युक्तत्वात्तनूनपाद्वर्जितम् (अनु. म. १. सू. १३)। 'सुसमिद्धायाप्रं गायत्रम्' इत्यनुक्रमणिका। अत्रीणामिदमाप्रीसूक्तम्। 'समिद्धो अद्येति सर्वेषां यथर्षि वा' (आश्व. श्रौ. ३. २) इत्युक्तत्वात्॥

सु॒स॑मिद्धाय शो॒चिषे॑ घृ॒तं ती॒व्रं जु॑होतन। अ॒ग्नये॑ जा॒तवे॑दसे॥ १॥

सु॒ऽस॑मिद्धाय। शो॒चिषे॑। घृ॒तम्। ती॒व्रम्। जु॒हो॒त॒न॒। अ॒ग्नये॑। जा॒त॒ऽवे॑दसे॥ १॥

ᵛसुसमिद्धाय सुष्ठु समिद्धायैतन्नामकायाग्नये ᵛशोचिषे दीप्तिमते ᵛघृतम् आज्यं ᵛतीव्रं प्रभूतं ᵛजुहोतन हे[2] ऋत्विजः[2] ᵛअग्नये अङ्गनादिगुणयुक्ताय ᵛजातवेदसे जातधनाय॥

न॒रा॒शंस॑ः सुषूदती॒मं य॒ज्ञमदा॑भ्यः। क॒विर्हि मधु॑हस्त्यः॥ २॥

न॒रा॒शंस॑ः। सु॒सू॒द॒ति॒। इ॒मम्। य॒ज्ञम्। अदा॑भ्यः। क॒विः। हि। मधु॑ऽहस्त्यः॥ २॥

ᵛनराशंसः नरैः शंसनीयोऽयमग्निः ᵛइमं ᵛयज्ञम् इदं हविः वा ᵛसुषूदति सुष्ठु प्रेरयति। स देवः ᵛअदाभ्यः अहिंस्यः केनापि ᵛकविः मेधावी ᵛमधुहस्त्यः मधुरहस्त्यः[3]॥

ई॒ळि॒तो अ॑ग्न॒ आ व॒हेन्द्रं॑ चि॒त्रमि॒ह प्रि॒यम्। सु॒खै रथे॑भिरू॒तये॑॥ ३॥

ई॒ळि॒तः। अ॒ग्ने॒। आ। व॒ह॒। इन्द्र॑म्। चि॒त्रम्। इ॒ह।

प्रि॒यम्। सु॒ऽखैः। रथे॑भिः। ऊ॒तये॑॥ ३॥

---

१. न-ल-स-'गोभिर्युक्तं' नास्ति। २. ख-ग-च-ण-न-भ-स-'हे ऋत्विजः' नास्ति। ३. घ-मधुरहस्त्यो हि।

हे अग्ने ईळितः स्तुतः सन् आ वहेन्द्रं चित्रं चायनीयं प्रियम् इह अस्मिन् यज्ञे सुखैः रथेभिः रथैः ऊतये अस्मद्रक्षणाय ॥

ऊर्णम्रदा वि प्रथस्वाभ्यर्का अनूषत । भवा नः शुभ्र सातये ॥ ४ ॥

ऊर्णऽम्रदाः । वि । प्रथस्व । अभि । अर्काः । अनूषत । भव । नः । शुभ्र । सातये ॥ ४ ॥

हे ऊर्णम्रदाः ऊर्णाकम्बलवत् मृदु हे बर्हिः वि प्रथस्व प्रथय । अर्काः स्तोतारः अभि अनूषत स्तुवन्ति । हे शुभ्र दीप्त सातये धनाय तद्दानाय वा नः अस्माकं भव ॥

देवीर्द्वारो वि श्रयध्वं सुप्रायणा न ऊतये । प्रप्र यज्ञं पृणीतन ॥ ५ ॥

देवीः । द्वारः । वि । श्रयध्वम् । सुप्रऽअयनाः । नः । ऊतये ।

प्रऽप्र । यज्ञम् । पृणीतन ॥ ५ ॥

हे द्वारः यज्ञस्य द्वाराभिमानिन्यो हे देवीः देव्यः वि श्रयध्वं वियुक्ता भवत । सुप्रायणाः शोभनगमनसाधनाः नः अस्माकम् ऊतये रक्षायै[1] यज्ञं यजमानं प्रप्र पृणीतन पूरयत कामैर्यज्ञमेव वा फलैः ॥ ॥ २० ॥

सुप्रतीके वयोवृधा यह्वी ऋतस्य मातरा । दोषामुषासमीमहे ॥ ६ ॥

सुप्रतीके इति सुऽप्रतीके । वयःऽवृधा । यह्वी इति । ऋतस्य । मातरा ।

दोषाम् । उषसम् । ईमहे ॥ ६ ॥

हे अह्नो रात्रेश्च अभिमानिदेव्यौ[2] सुप्रतीके सुरूपे शोभनाङ्गे वा वयोवृधा अन्नस्य वर्धयित्र्यौ यह्वी महत्यौ ऋतस्य यज्ञस्योदकस्य वा मातरा निर्मात्र्यौ तयोर्मध्ये प्रत्येकं दोषां रात्रिदेवीम् उषसम् अहर्देवीम् ईमहे स्तुमः ॥

वातस्य पत्मन्नीळिता दैव्या होतारा मनुषः । इमं नो यज्ञमा गतम् ॥ ७ ॥

वातस्य । पत्मन् । ईळिता । दैव्या । होतारा । मनुषः । इमम् । नः । यज्ञम् । आ । गतम् ॥ ७ ॥

वातस्य पत्मन् । लुप्तोपमैषा । वायुगमनसदृशगमनार्थम्[3] ईळिता अस्माभिः स्तुतौ । यद्वा । वातस्य पतनसाधनेऽन्तरिक्षे गच्छन्तौ दैव्या देवादग्नेरादित्याच्च समुद्भूतौ होतारा देवानामाह्वातारौ युवां मनुषः मनुष्यस्य इमं नः अस्माकं यज्ञमा गतम् आगच्छतम् । नो मनुषो यज्ञमिति व्यधिकरणे षष्ठ्यौ । अस्माकं यजमानस्य यज्ञमित्यर्थः ॥

---

१. प–रक्षणाय । २. प-ल–अभिमानिन्यौ देव्यौ । ३. ग-च–वायुगमनार्थम्; घ-प-ल–वायुसदृशगमनार्थम् ।

**इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधः ॥ ८ ॥**

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः ॥ ८ ॥

ᵛइळा पृथिवी ᵛसरस्वती । सर उदकम् । तस्मात् सरस्वान् वायुः । तस्य स्त्री सरस्वती । ᵛमही महती भारती भरतस्यादित्यस्य पत्नी । अत्र यद्यप्येषा नोक्ता तथापि सर्वत्र सहदृष्टत्वात् त्रिसंख्याश्रवणाच्च सा गृह्यते । अथवैताः[1] क्षित्यन्तरिक्षद्युस्थाना वाग्देव्यः[2] । एताः ᵛमयोभुवः सुखस्य भावयित्र्यः ᵛअस्रिधः अहिंसिकाः सत्यः ᵛबर्हिः बर्हिषि ᵛसीदन्तु उपविशन्तु ॥

**शिवस्त्वष्टरिहा गहि विभुः पोष उत त्मना । यज्ञेयज्ञे न उदव ॥ ९ ॥**

शिवः । त्वष्टः । इह । आ । गहि । विऽभुः । पोषे । उत । त्मना ।

यज्ञेऽयज्ञे । नः । उत् । अव ॥ ९ ॥

हे ᵛत्वष्टः देव ᵛशिवः सुखकरः सन् ᵛइहा ᵛगहि अस्मद्यज्ञमागच्छ । ᵛविभुः व्याप्तस्त्वं ᵛपोषे पोषकरणे । ᵛउत आगत्य च ᵛत्मना आत्मना स्वयमेव ᵛयज्ञेयज्ञे सर्वेषु यज्ञेषु ᵛनः अस्मान् ᵛउदव उत्कृष्टं रक्ष ॥

अग्निहोत्रे उत्तराहुतिस्कन्दने ' यत्र वेत्थ ' इत्यनया समिधमादध्यात् । सूत्रितं च—' यत्र वेत्थ वनस्पत इत्युत्तरस्या आहुत्याः स्कन्दने ' ( आश्व. श्रौ. ३. ११ ) इति ॥

**यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥ १० ॥**

यत्र । वेत्थ । वनस्पते । देवानाम् । गुह्या । नामानि । तत्र । हव्यानि । गमय ॥ १० ॥

हे ᵛवनस्पते यूपाभिमानिदेव ᵛयत्र यस्मिन् स्थाने ᵛवेत्थ ᵛदेवानां ᵛगुह्या गुह्यानि ᵛनामानि नामकानि रूपाणि ᵛतत्र ᵛहव्यानि ᵛगमय प्रापय ॥

**स्वाहाग्नये वरुणाय स्वाहेन्द्राय मरुद्भ्यः । स्वाहा देवेभ्यो हविः ॥ ११ ॥**

स्वाहा । अग्नये । वरुणाय । स्वाहा । इन्द्राय । मरुत्ऽभ्यः । स्वाहा । देवेभ्यः । हविः ॥ ११ ॥

अग्न्यादिविश्वेदेवाः[3] । तेभ्यः* ᵛदेवेभ्य इदं ᵛहविः ᵛस्वाहा करोमीति शेषः । स्वाहुतं करोमीत्यर्थः । एवं स्वाहाकृतेः स्तुतिः[3] ॥ ॥ २१ ॥

' अग्निं तं मन्ये ' इति दशर्चं षष्ठं सूक्तं वसुश्रुतस्यार्षमाग्नेयं पाङ्क्तम् । ' अग्निं तं दश पाङ्क्तम् ' इत्यनुक्रमणिका । प्रातरनुवाके आग्नेये क्रतौ पाङ्क्ते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । ' अग्निं

---

१. प–अथवैतास्तिस्रः । २. ख-ग-च-ण-भ– वा देव्यः । ३. प–अग्नये इदं हविः स्वाहा करोमि वरुणाय स्वाहा इन्द्राय मरुद्भ्यः देवेभ्यः स्वाहा स्वाहुतं करोमीत्यर्थः । एवं स्वाहाकृतिस्तुतिः । *ख-ग-घ-च-ण-न-भ-स–' तेभ्यः ' नास्ति ।

तं मन्य इति पाङ्क्तम् ' ( आश्व. श्रौ. ४. १३ ) इति हि सूत्रितम् । आश्वमेधिके[1] मध्यमेऽहनीदमेव आज्यशस्त्रम् । सूत्रितं च—' अग्निं तं मन्य इत्याज्यं तस्यैकाहिकमुपरिष्टात् ' ( आश्व. श्रौ. १०.१० ) इति । आद्य आभिप्लविकेषूक्थ्येषु मैत्रावरुणस्यानुरूपस्तृचः । सूत्रितं च—' अग्निं तं मन्ये यो वसुरग्ने स्थूरं रयिं भर ' ( आश्व. श्रौ. ७. ८ ) इति[1] ॥

**अ॒ग्निं तं म॑न्ये॒ यो वसु॒रस्तं॒ यं यन्ति॑ धे॒नवः॑ ।**
**अस्त॒मर्व॑न्त आ॒शवोऽस्तं॒ नित्या॑सो वा॒जिन॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥ १ ॥**

अ॒ग्निम् । तम् । म॒न्ये॒ । यः । वसुः॑ । अस्त॑म् । यम् । यन्ति॑ । धे॒नवः॑ ।
अस्त॑म् । अर्व॑न्तः । आ॒शवः॑ । अस्त॑म् । नित्या॑सः । वा॒जिनः॑ ।
इष॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र ॥ १ ॥

vतम् vअग्निं vमन्ये स्तौमि । vयः अग्निः vवसुः वासकः । vयम् vअस्तं सर्वेषां गृहवदाश्रयभूतं vधेनवः vयन्ति गच्छन्ति प्रीणयितुम् । vअस्तम् उक्तलक्षणम् vअर्वन्तः अरणवन्तोऽश्वाः । vआशवः शीघ्रगामिनो यन्ति । तथा vनित्यासः नित्यप्रवृत्तयः[2] vवाजिनः हविर्लक्षणान्नवन्तः[2] यजमाना यम् vअस्तं यन्ति तं मन्ये । vइषम् अन्नं vस्तोतृभ्यः अस्मभ्यम् vआ vभर अग्ने ॥

**सो अ॒ग्निर्यो वसु॑र्गृ॒णे सं यमा॒यन्ति॑ धे॒नवः॑ ।**
**सम॑र्वन्तो रघु॒द्रुवः॒ सं सु॑जा॒तासः॑ सू॒रय॒ इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥ २ ॥**

सः । अ॒ग्निः । यः । वसुः॑ । गृ॒णे । सम् । यम् । आ॒ऽयन्ति॑ । धे॒नवः॑ ।
सम् । अर्व॑न्तः । र॒घु॒ऽद्रुवः॑ । सम् । सु॒ऽजा॒तासः॑ । सू॒रयः॑ । इष॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र ॥ २ ॥

vसः vअग्निः स खल्वग्निः vयो vवसुः वासकः vगृणे स्तूयते । vयं vधेनवः vसम् vआयन्ति होमार्थम् । vअर्वन्तः अश्वाः vरघुद्रुवः लघुगमनाः vसम् आयन्ति । vसुजातासः[3] vसूरयः मेधाविनश्च[4] vसम् आयन्ति स खल्वग्निरिति ॥

---

१. न–प्रातरनु ( वाक ) न्यायेनेति च । आभिप्लविकेषूक्थेषु तृतीयसवने मैत्रावरुणस्य अग्निं तं मन्ये इत्यादिको वैकल्पिकोऽनुरूपस्तृचः । सूत्रितं च–अग्निं तं मन्ये यो वसुरा ते वत्सो मनो यमदिति । महापितृयज्ञे गार्हपत्योपस्थाने अग्निं तं मन्ये इति । तथा च सूत्रितं–गार्हपत्यमग्निं तं मन्य इति । आश्वमेधिके मध्यमेऽहनि इदमेवाज्यशस्त्रम् । तस्य विशेषान् वक्ष्याम इति खण्डे सूत्रितं च–अग्निं तं मन्य इदमाज्यमिति । २. ख-ग-घ-च-ण-प-फ-भ–वाजिनो नित्यप्रवृत्तहविर्लक्षणान्नवन्तः; न-ल–नित्यप्रवृत्त ( ल-त्ति ) हविर्लक्षणान्नवन्तः ; स–नित्याः प्रवृत्तहविर्लक्षणान्नवन्तः । ३. प–सुजातासः सत्कुलोत्पन्नाः । ४. प–मेधाविनश्च यजमानादयः ।

अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भर ॥ ३ ॥

अग्निः । हि । वाजिनम् । विशे । ददाति । विश्वऽचर्षणिः ।
अग्निः । राये । सुऽआभुवम् । सः । प्रीतः । याति । वार्यम् ।
इषम् । स्तोतृऽभ्यः । आ । भर ॥ ३ ॥

ᵛअग्निर्हि अयमग्निः[1] खलु ᵛविशे यजमानाय ᵛवाजिनम् अन्नवन्तं पुत्रमश्वमन्नं वा ᵛददाति । ᵛविश्वचर्षणिः । विश्वे चर्षणयो मनुष्या रक्षणीया अर्चका वा यस्य स तथोक्तः । यद्वा । पश्यतिकर्मैतत् । सर्वस्य द्रष्टा ᵛअग्निः ᵛराये धनार्थिने । अथवा द्वितीयार्थे चतुर्थी । धनं ᵛस्वाभुवं सुष्ठु सर्वत्र व्याप्तं ᵛवार्यं सर्वैर्वरणीयं ᵛप्रीतः सन् ᵛयाति यमयति । दातुं वा गच्छति । इषमित्यादि[2] गतम्[2] ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने[3] स्तोत्रियतृचस्य ' आ ते अग्न इधीमहि ' इत्यादिके प्रथमाद्वितीये । सूत्रितं च भवति–' आ ते अग्न इधीमह्युभे सुश्चन्द्र सर्पिष इति द्वे एका च ' ( आश्व. श्रौ. ७. ८ ) इति ॥

आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥ ४ ॥

आ । ते । अग्ने । इधीमहि । द्युऽमन्तम् । देव । अजरम् ।
यत् । ह । स्या । ते । पनीयसी । सम्ऽइत् । दीदयति । द्यवि । इषम् । स्तोतृऽभ्यः । आ । भर ॥४॥

हे ᵛअग्ने ᵛदेव ᵛद्युमन्तं दीप्तिमन्तम् ᵛअजरम् अजीर्णं ᵛते त्वाम् ᵛआ सर्वतः ᵛइधीमहि दीपयामः । ᵛयद्ध खलु ᵛस्या[4] सा ᵛते तव[4] ᵛपनीयसी स्तुत्या ᵛसमित् दीप्तिः ᵛदीदयति दीप्यते द्यवि द्युलोके ॥

आ ते अग्न ऋचा हविः शुक्रस्य शोचिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥ ५ ॥

आ । ते । अग्ने । ऋचा । हविः । शुक्रस्य । शोचिषः । पते ।
सुऽचन्द्र । दस्म । विश्पते । हव्यऽवाट् । तुभ्यम् । हूयते । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ५॥

---

१. ख-ग-च-ण-फ-भ–' अयमग्निः ' नास्ति । २. प–इषमन्नं स्तोतृभ्योऽस्म ( भ्यम् ) आभराभे । ३. न– तृतीयसवने मैत्रावरुणशस्त्रे । ४. त– ते तव स्या सा ।

हे शोचिषः दीप्तेः पते स्वामिन् अग्ने शुक्रस्य दीप्तस्य ते तुभ्यम्[1] ऋचा मन्त्रेण सह[2] हविः हूयते। हे सुश्चन्द्र सुष्ठ्वाह्लादक शोभनहिरण्य वा हे दस्म शत्रूणामुपक्षपयितः विश्पते विशां प्रजानां पालक हव्यवाट् हविषो वोढः। इषमिति गतम् ॥ ॥ २२ ॥

प्रो त्ये अग्नयोऽग्निषु विश्वं पुष्यन्ति वार्यम्।
ते हिन्विरे त इन्विरे त इषण्यन्त्यानुषगिषं स्तोतृभ्य आ भर ॥ ६ ॥

प्रो इति। त्ये। अग्नयः। अग्निषु। विश्वम्। पुष्यन्ति। वार्यम्।
ते। हिन्विरे। ते। इन्विरे। ते। इषण्यन्ति। आनुषक्। इषम्। स्तोतृऽभ्यः। आ। भर ॥ ६ ॥

प्रो प्रैव पुष्यन्ति त्ये ते अग्नयः धिष्ण्या अग्निषु गार्हपत्यादिषु[3]। यद्वा। लौकिका अग्नयः तेजःपदार्थोऽग्निषु वैदिकेषु विश्वं सर्वं वार्यं वरणीयमपेक्षितं धनं पुष्यन्ति। ते अग्नयः हिन्विरे प्रीणयन्ति। इन्विरे व्याप्नुवन्ति च। ते इषण्यन्ति अन्नमिच्छन्ति। आनुषक् सर्वत्रानुषक्तम्। तत्राग्निसामान्याभिप्रायेणैकवचनम् ॥

तव त्ये अंग्ने अर्चयो महिं व्राधन्त वाजिनः।
ये पत्वंभिः शुफानां व्रजा भुरन्त गोनामिषं स्तोतृभ्य आ भर ॥ ७ ॥

तव। त्ये। अग्ने। अर्चयः। महि। व्राधन्त। वाजिनः।
ये। पत्वऽभिः। शुफानाम्। व्रजा। भुरन्त। गोनाम्। इषम्। स्तोतृऽभ्यः। आ। भर ॥ ७ ॥

हे अग्ने तव त्वदीयाः त्ये ते अर्चयः रश्मयः महि महदत्यधिकं वाजिनः अन्नवन्तो वा व्राधन्त वर्धन्ते। यद्वा लुप्तोपमा। वाजिनोऽश्वा इव। ये रश्मयः पत्वभिः पतनैः शफानां गोनां व्रजा यूथानि भुरन्त इच्छन्ति। आयता ज्वाला होमाय काङ्क्षन्त इत्यर्थः। ते[4] वर्धन्ते[4] ॥

नवां नो अग्न आ भंर स्तोतृभ्यः सुक्षितीरिषः।
ते स्याम य आंनृचुस्त्वादूंतासो दमेंदम इषं स्तोतृभ्य आ भर ॥ ८ ॥

नवाः। नः। अग्ने। आ। भर। स्तोतृऽभ्यः। सुऽक्षितीः। इषः।
ते। स्याम। ये। आनृचुः। त्वाऽदूतासः। दमेऽदमे। इषम्। स्तोतृऽभ्यः। आ। भर ॥ ८ ॥

हे अग्ने स्तोतृभ्यः नः अस्मभ्यं नवाः स्तुत्या नूतना वा सुक्षितीः सुनिवासाः सुप्रजा वा इषः[5] उक्तलक्षणान्यन्नानि आ भर प्रयच्छ। ये वयं दमेदमे सर्वेषु यागगृहेषु त्वाम्

---

१. ख-ग-घ-च-ण-न-भ-तव; स-'तुभ्यं' नास्ति। २. ख-ग-घ-च-ण-भ-सह तुभ्यम्। ३. ख-ग-च-ण-भ-स-'गार्हपत्यादिषु' नास्ति। ४. ख-ग-च-ण-न-भ-स-तेऽवर्धन्त। ५. ख-ग-च-ण-इषो वा।

आनृचुः अर्चयन्ति[1] । ते वयं त्वादूतासः त्वां दूतं फलसूचकं लब्धवन्तः सन्तः स्याम समृद्धा भूयास्म । दमे[2] दमे स्यामेति वा योज्यम्[2] ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने वैकल्पिकस्तोत्रियतृचे ' उभे सुश्चन्द्र ' इत्येषा तृतीया । सूत्रमुक्तम्[3] ॥

**उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।**

**उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥ ९ ॥**

उभे इति । सुऽचन्द्र । सर्पिषः । दर्वी इति । श्रीणीषे । आसनि ।

उतो इति । नः । उत् । पुपूर्याः । उक्थेषु । शवसः । पते । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ९ ॥

हे सुश्चन्द्र शोभनाह्लादन शोभनहिरण्य वाग्ने उभे सर्पिषः पूर्णे दर्वी जुहूपभृतौ आसनि आस्ये श्रीणीषे श्रयसि पचसि[4] वा । उतो अपि च नः अस्मान् उक्थेषु यागेषु उत्पुपूर्याः उत्पूरय फलैः[5] । हे शवसस्पते बलस्य पालयितः ॥

**एवाँ अग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।**

**दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य आ भर ॥ १० ॥**

एव । अग्निम् । अजुर्यमुः । गीःऽभिः । यज्ञेभिः । आनुषक् ।

दधत् । अस्मे इति । सुऽवीर्यम् । उत । त्यत् । आशुऽअश्व्यम् ।

इषम् । स्तोतृऽभ्यः । आ । भर ॥ १० ॥

एव[6] उक्तरीत्या अग्निं गीर्भिः स्तुतिभिः यज्ञेभिः यज्ञैर्वा तत्साधनैर्हविर्भिर्वा आनुषक् अनुषक्तम्[7] अजुः[8] गच्छन्ति[8] । तथा कृत्वा यमुः[9] यमयन्ति स्थापयन्ति हविर्भिर्यजन्तीत्यर्थः । एवमात्रेयाः स्वान् परोक्षतया निर्दिशन्ति ॥ अजुर्यमुरित्यत्र[10] ' आख्यातमाख्यातेन क्रियासातत्ये ' (पा. सू. २. १. ७२ ग. ) इति समासः[10] ॥ किंच अस्मे अस्मासु सुवीर्यं शोभनपुत्रादिकम् उत अपि च त्यत् तत् आश्वश्व्यम् । आशवोऽश्वा यस्य भवन्ति स आश्वश्वः । तस्य भाव आश्वश्व्यम् । तदपि दधत् धारयति ॥ ॥ २३ ॥

' सखायः सं वः ' इति दशर्चं सप्तमं सूक्तम् । आत्रेय[11] इष ऋषिः[11] । अन्त्या पङ्क्तिः शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः । तथा चानुक्रान्तं—' सखाय इषः पङ्क्त्यन्तम् ' इति । प्रातरनुवाके

---

१. ख-ग-घ-च-ण-प-फ-भ– अर्चयन्तः । २. ख-ग-च-ण-प-फ-भ–' दमे... योज्यं ' नास्ति । ३. ख-ग-च-ण-फ–सूत्रितं च । ४. ख-ग-च-ण-न-फ-भ-स– सेवसि । ५. ख-ग-च-ण-भ–काले; स–फाले । ६. घ–एव एवम्; च-न-ल-स–एवम् । ७. त–अनुषक्तं संबद्धम् । ८. ख-ग-च-ण-प-फ-भ–अनुगच्छन्ति । ९. ख-ग-च-ण-प-फ-भ–अजुर्यमुः । १०. ख-ग-च-ण-न-भ-स–' अजु°... समासः ' नास्ति । ११. प–आत्रेयवसुश्रुत ऋषिः ।

आग्नेये क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चोत्तमावर्जमिदं सूक्तम् । सूत्रितं च—' सखायः सं वस्त्वामग्ने हविष्मन्त इति सूक्ते ' ( आश्व. श्रौ. ४. १३ ) इति ॥

सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥ १ ॥

सखायः । सम् । वः । सम्यञ्चम् । इषम् । स्तोमम् । च । अग्नये ।
वर्षिष्ठाय । क्षितीनाम् । ऊर्जः । नप्त्रे । सहस्वते ॥ १ ॥

हे vसखायः सखिभूता ऋत्विजः vवः यूयं vसं[1] संस्कुरुत । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । किंच vसम्यञ्चम् vइषम् अन्नं vस्तोमं स्तोत्रं vचाग्नये vवर्षिष्ठाय अतिशयेन प्रवृद्धाय vक्षितीनां यजमानानामर्थाय वर्षिष्ठाय प्रवृद्धतमाय vऊर्जो vनप्त्रे बलस्य न पातयित्रे तत्पुत्राय वा vसहस्वते बलवते संस्कुरुतेति ॥

कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने ।
अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ॥ २ ॥

कुत्र । चित् । यस्य । सम्ऽऋतौ । रण्वाः । नरः । नृऽसदने ।
अर्हन्तः । चित् । यम् । इन्धते । सम्ऽजनयन्ति । जन्तवः ॥ २ ॥

सोऽग्निः vकुत्र vचित् वर्तते इति शेषः । कुत्रास्ते । vयस्य अग्नेः vसमृतौ संप्राप्तौ vरण्वाः रममाणाः vनरः नेतार ऋत्विजः । vनृषदने यागगृहे vअर्हन्तश्चित् । चिदिति पूजायाम् । अर्हन्तः पूज्याः पूजयन्तो वा सन्तः vयमिन्धते दीपयन्ति । तदर्थं vसंजनयन्ति च अरण्यां vजन्तवः प्राणिनः । स कुत्रेति संबन्धः ॥

सं यदिषो वनामहे सं हव्या मानुषाणाम् ।
उत द्युम्नस्य शवस ऋतस्य रश्मिमा ददे ॥ ३ ॥

सम् । यत् । इषः । वनामहे । सम् । हव्या । मानुषाणाम् ।
उत । द्युम्नस्य । शवसा । ऋतस्य । रश्मिम् । आ । ददे ॥ ३ ॥

vयत् यदा vइषः अन्नानि vसं vवनामहे संभजामहे । यदा च vमानुषाणां मनुष्याणाम्[2] अस्माकं vहव्या हवींषि अग्निः vसं सेवते vउत तदानीं vद्युम्नस्य द्योतमानस्यान्नस्य vशवसा बलेन

---

१. न-ल-स–' सं ' नास्ति । २. न-ल-स–' मनुष्याणां ' नास्ति ।

सामर्थ्येन ᵛऋतस्य उदकस्य ग्राहकं ᵛरश्मिमा ᵛददे आदत्तेऽग्निः । फलजनकं[1] तेजः[1] स्वीकृतवान् इत्यर्थः । यद्वा । ᵛऋतस्य यज्ञस्य रश्मिं रश्मिवत् ग्राहकं स्तवम् आ ददे स्वीकरोति[2] ॥

स स्मा॑ कृणोति के॒तुमा नक्तं॑ चिद्दू॒र आ स॒ते ।

पा॒व॒को यद्व॒नस्पती॒न्प्र स्मा॑ मि॒नात्य॒जरः॑ ॥ ४ ॥

सः । स्म॒ । कृ॒णो॒ति॒ । के॒तुम् । आ । नक्त॑म् । चि॒त् । दू॒रे । आ । स॒ते ।

पा॒व॒कः । यत् । व॒नस्पती॑न् । प्र । स्म॒ । मि॒नाति॑ । अ॒जरः॑ ॥ ४ ॥

ᵛस ᵛस्म स खल्वग्निः ᵛकृणोति करोति ᵛकेतुं प्रज्ञानम् ᵛआ सर्वतः । कस्येत्युच्यते । चिद-प्यर्थे । ᵛनक्तं ᵛचित् रात्रावपि ᵛदूरे ᵛआ ᵛसते । आ इति चार्थे । दूरेऽपि वर्तमानाय मनुष्याय । कदा । ᵛयत् यदा ᵛपावकः अयमग्निः ᵛअजरः अजीर्णोऽनभिभाव्यः सन् ᵛवनस्पतीन् एधांसि ᵛप्र ᵛस्म ᵛमिनाति प्रकर्षेण दहति । स्मेति पूरणः ॥

अव॑ स्म॒ यस्य॒ वेष॑णे॒ स्वेदं॑ प॒थिषु॒ जुह्व॑ति ।

अ॒भीम॒ह स्वजे॑न्यं॒ भूमा॑ पृ॒ष्ठेव॑ रुरुहुः ॥ ५ ॥

अव॑ । स्म॒ । यस्य॑ । वेष॑णे । स्वेद॑म् । प॒थिषु॑ । जु॒ह्व॑ति ।

अ॒भि । ई॒म् । अह॑ । स्वऽजे॑न्यम् । भूम॑ । पृ॒ष्ठाऽइ॑व । रु॒रु॒हुः॒ ॥ ५ ॥

ᵛयस्य[3] अग्नेः ᵛवेषणे परिचर्यायां ᵛपथिषु होममार्गेषु[4] रश्मिषु ᵛस्वेदं स्रवदाज्यम्[5] ᵛअव अधोमुखं ᵛजुह्वति अध्वर्यवः[6] तदानीम् ᵛईम्[7] एनमग्निम् ᵛअभि ᵛरुरुहुः ᵛअह । अभ्यारोहन्त्येवाज्य-धाराः । अह इति विनिग्रहार्थीयः । ᵛस्वजेन्यं स्वोत्पन्नं ᵛभूम । बहु[8] भवतीति भूमापत्यम् । तत् ᵛपृष्ठेव पितुः पृष्ठदेशानिव[9] । पुत्राः[10] यथा पितुरङ्कम् आरोहन्ति[11] तद्वत् ॥ ॥ २४ ॥

यं मर्त्यः॑ पुरु॒स्पृहं॑ वि॒दद्विश्व॑स्य॒ धाय॑से ।

प्र स्वाद॑नं पितू॒नामस्त॑तातिं चिदा॒यवे॑ ॥ ६ ॥

यम् । मर्त्यः॑ । पु॒रु॒ऽस्पृह॑म् । वि॒दत् । विश्व॑स्य । धाय॑से ।

प्र । स्वाद॑नम् । पि॒तू॒नाम् । अस्त॑ऽतातिम् । चि॒त् । आ॒यवे॑ ॥ ६ ॥

---

१. ख-ग-च-ण-फ—फलजनकत्वं न; न—फलजनकत्वम्; भ—फलजनकत्वेन । २. ग-च-त-न-भ-स—स्वीकरोमि । ३. ख-ग-ण-न-भ-स—अस्य । ४. त—होमाग्निषु । ५. ख-ग-च-ण-भ—स्रवदाज्यमीमेनम् । ६. ख-ग-च-ण-फ-भ—अध्वर्यवः । दृष्टान्तः । ७. ख-ग-च-ण-भ-ल-स—'ईम्' नास्ति । ८. ख-ग-च-ण-न-भ—'बहु' नास्ति । ९. ख-ग-च-ण-भ—पृष्ठदेशे । १०. ख-ग-च-ण-भ—पुत्रः । ११. ख-ग-च-ण-भ—आरोहति ।

ᵛयम् अग्निं ᵛपुरुस्पृहं बहुभिः स्पृहणीयं[1] ᵛविदत् वेत्ति । ᵛमर्त्यः यजमानः ᵛविश्वस्य ᵛधायसे सर्वस्य व्यापारार्थं[2] ᵛपितूनाम् अन्नानां ᵛप्र ᵛस्वादनं प्रकर्षेण स्वादूकर्तारम् ᵛअस्ततातिम् अस्ते गृहे निवासकर्तारम् ᵛआयवे अन्नार्थं[3] यजमानार्थं वा । ᵛचित्[4] पूरणः[4] ॥

स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः ।
हिरिश्मश्रुः शुचिदन्नृभुरनिभृष्टतविषिः ॥ ७ ॥

सः । हि । स्म । धन्वं । आऽक्षितम् । दाता । न । दाति । आ । पशुः ।
हिरिऽश्मश्रुः । शुचिऽदन् । ऋभुः । अनिभृष्टऽतविषिः ॥ ७ ॥

ᵛस ᵛहि ᵛष्म[5] स खल्वग्निः ᵛधन्व निरुदकप्रदेशम् ᵛआक्षितं तृणकाष्ठादिभिराक्षिप्तम् ᵛआ ᵛदाति सर्वतः खण्डयति दहतीत्यर्थः । ᵛदाता तृणादिखण्डयिता ᵛपशुः ᵛन पशुरिव । पशुर्यथा तृणजातं क्रमेण भक्षयति तद्वत् । ᵛहिरिश्मश्रुः हिरण्यश्मश्रुः ᵛशुचिदन् दीप्तदन्तः ᵛऋभुः[6] उरु भवन् । महानित्यर्थः[6] । ᵛअनिभृष्टतविषिः अपीडितबलः ॥

शुचिः ष्म यस्मा अत्रिवत्प्र स्वधितीव रीयते ।
सुषूरसूत माता क्राणा यदानशे भर्गम् ॥ ८ ॥

शुचिः । स्म । यस्मै । अत्रिऽवत् । प्र । स्वधितिःऽइव ।
रीयते । सुऽसूः । असूत । माता । क्राणा । यत् । आनशे । भर्गम् ॥ ८ ॥

अयमग्निः ᵛशुचिः ᵛष्म दीप्तः खलु । ᵛयस्मै अग्नये ᵛअत्रिवत् अत्रिरिव यजमानो[7] हविर्दातुं[7] ᵛप्र ᵛरीयते प्रगच्छति । यद्वा । स्मेति पूरणः । शुचिर्यस्मै ॥ प्रथमार्थे चतुर्थी ॥ दीप्तो योऽत्रिवत् । अत्ति तृणमित्यत्रिः पशुः । स इव । स यथा तृणानि खादमानो गच्छति तद्वद्दहतीत्यर्थः । ᵛस्वधितिरिव परशुरिव छिन्दन् । ᵛसुषूः सुप्रसवा ᵛमाता अरणिः ᵛअसूत ᵛक्राणा कुर्वाणं जगदुपकारकम्[8] । ᵛयत् यस्मात् य इति वा । योऽग्निः ᵛभर्गम् अन्नम् ᵛआनशे अश्नुते ।

आ यस्ते सर्पिरासुतेऽग्ने शमस्ति धायसे ।
ऐषु द्युम्नमुत श्रव आ चित्तं मर्त्येषु धाः ॥ ९ ॥

आ । यः । ते । सर्पिःऽआसुते । अग्ने । शम् । अस्ति । धायसे ।
आ । एषु । द्युम्नम् । उत । श्रवः । आ । चित्तम् । मर्त्येषु । धाः ॥ ९ ॥

---

१. त–स्पृहणीयमग्निम् । २. न-ल-स-व्याप्त्यर्थम् । ३. स–मित्रार्थम् । ४. न-ल-स–' चित् पूरणः ' नास्ति । ५. ख-ग-च-ण–ह्म । ६. ख-ग-च-ण-प-फ-भ–ऋभुर्महान् । ७. ख-ग-च-ण-फ-भ–अत्र; प–अन्नम् । ८. त–जगदुपकारम् ।

हे सर्पिरासुते घृतान्नात्र[1] अग्ने यः त्वम् आ सर्वतो भवसि तादृशाय धायसे सर्वस्य धात्रे ते तुभ्यं शमस्ति सुखमस्ति । स्तुतेः सकाशात् । तथा चेत् एषु मर्त्येषु स्तोतृष्वात्रेयेषु द्युम्नं यशः आ धाः आधेहि । उत अपि च श्रवः अन्नम् आ धाः । चित्तं त्वदीयामनुग्रहबुद्धिमपि आ धाः ॥

इति॑ चि॒न्मन्यु॑म॒ध्रिज॒स्त्वादा॑त॒मा प॒शुं द॑दे ।

आद॑ग्ने॒ अपृ॑ण॒तोऽत्रिः॑ सासह्या॒द्दस्यू॑नि॒षः सा॑सह्या॒न्नॄन् ॥ १० ॥

इति॑ । चि॒त् । म॒न्युम् । अ॒ध्रिजः॑ । त्वाऽदा॑तम् । आ । प॒शुम् । द॒दे ।

आत् । अ॒ग्ने॒ । अपृ॑णतः । अत्रिः॑ । स॒स॒ह्या॒त् । दस्यू॑न् । इ॒षः । स॒स॒ह्या॒त् । नॄन् ॥ १० ॥

इति[2] चित् इत्थं कृतप्रकारेण मन्युं मननसाधनं स्तोत्रम् अध्रिजः । अधृतम्[3] अन्यैरग्निव्यतिरिक्तैः अधृष्यं[4] वा जनयिता ऋषिः त्वादातं त्वया दातव्यं पशुम् आ ददे आदत्ते । आददीत वा । आत् अनन्तरमेव अग्ने अपृणतः अददतः[5] दस्यून् अत्रिः तद्गोत्रः इषः सासह्यात् भृशमभिभवेत् । इषः एष्टॄन्[6] नॄन् विरोधिनः सासह्यात् । पुनरुक्तिरादरार्था ॥ ॥ २५ ॥

'त्वामग्ने' इति सप्तर्चमष्टमं सूक्तमात्रेयस्य इषस्य[7] आर्षं जागतमाग्नेयम् । 'त्वामग्ने सप्त जागतम्' इत्यनुक्रमणिका । प्रातरनुवाके आग्नेये क्रतौ जागते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । तथा च सूत्रं—'जनस्य गोपास्त्वामग्न ऋतायवः' ( आश्व. श्रौ. ४. १३ ) इति ॥

त्वाम॑ग्न ऋ॒ताय॑वः॒ समी॑धिरे प्र॒त्नं प्र॒त्नास॑ ऊ॒तये॑ सहस्कृत ।

पु॒रु॒श्च॒न्द्रं य॑ज॒तं वि॒श्वधा॑यसं॒ दमू॑नसं गृ॒हप॑तिं॒ वरे॑ण्यम् ॥ १ ॥

त्वाम् । अ॒ग्ने॒ । ऋ॒तऽय॑वः । सम् । ई॒धि॒रे॒ । प्र॒त्नम् । प्र॒त्नासः॑ । ऊ॒तये॑ । स॒ह॒ःऽकृ॒त॒ ।

पु॒रु॒ऽच॒न्द्रम् । य॒ज॒तम् । वि॒श्वऽधा॑यसम् । दमू॑नसम् । गृ॒हऽप॑तिम् । वरे॑ण्यम् ॥ १ ॥

हे सहस्कृत बलस्य कर्तः अग्ने प्रत्नं पुरातनं त्वां प्रत्नासः पुरातनाः ऋतायवः यज्ञकामा ऋषयः ऊतये स्वरक्षणाय समीधिरे सम्यग्दीपितवन्तः । कीदृशं त्वाम् । पुरुश्चन्द्रं बहुधनम् अतिशयेनाह्लादकं वा यजतं यष्टव्यं विश्वधायसं बह्वन्नं दमूनसं दानमनसं गृहपतिं यजमानगृहस्य पालकं वरेण्यं वरणीयम् ॥

---

१. फ-घृताक्तान्न । २. ख-ग-च-ण-प-फ-भ-हे अग्ने इति । ३. ख-ग-च-ण-फ- न धृतम् । ४. ख-ग-च-ण-फ-अध्रिजः अधृष्यः; त-न-ल-स-अध्रिजः अधृष्यम्; भ-अध्रिजः अधृष्य । ५. त-अदत् । ६. ख-ग-च-ण-त-प-फ-भ-द्वेष्टॄन् । ७. ख-ग-च-ण-भ-'इषस्य' नास्ति; स-वसुश्रुतस्य ।

त्वाम॑ग्ने अति॑थिं पू॒र्व्यं विशः॑ शो॒चिष्के॑शं गृ॒हप॑तिं॒ नि षे॑दिरे ।
बृ॒हत्के॑तुं पु॒रुरू॑पं धन॒स्पृत॑ सु॒शर्मा॑णं॒ स्वव॑सं जर॒द्विष॑म् ॥ २ ॥

त्वाम् । अ॒ग्ने॒ । अति॑थिम् । पू॒र्व्यम् । विशः॑ । शो॒चिः॒ऽके॑शम् । गृ॒हऽप॑तिम् । नि । से॒दि॒रे॒ ।
बृ॒हत्ऽके॑तुम् । पु॒रु॒ऽरूप॑म् । ध॒न॒ऽस्पृत॑म् । सु॒ऽशर्मा॑णम् । सु॒ऽअव॑सम् । ज॒र॒त्ऽवि॒ष॑म् ॥ २ ॥

हे ᵛअग्ने ᵛत्वां ᵛविशः यजमानाः ᵛगृहपतिं गृहस्वामिनं ᵛनि ᵛषेदिरे । गार्हपत्यरूपेण स्थापितवन्त इत्यर्थः । कीदृशं त्वाम् । ᵛअतिथिम् अतिथिवत्पूज्यं ᵛपूर्व्यं पुरातनं ᵛशोचिष्केशं दीप्तज्वालं ᵛबृहत्केतुं प्रभूतप्रज्ञानं[1] ᵛपुरुरूपम् आहवनीयादिरूपेण बहुरूपं ᵛधनस्पृतं धनानां स्पर्तारं[2] ᵛसुशर्माणं शोभनसुखं ᵛस्ववसं सुरक्षणं ᵛजरद्विषं जरतां वृक्षाणां[3] व्यापकं जीर्णोदकं वा ॥

अग्नीनां परस्परं[4] संसर्गे[4] विविचयेऽग्नये काचिदिष्टिः । तत्र ' त्वामग्ने मानुषीः ' इति याज्या । सूत्रितं च—' त्वामग्ने मानुषीरीळते विशोऽग्न आयाहि वीतये ' ( आश्व. श्रौ. ३. १३ ) इति ॥

त्वाम॑ग्ने॒ मानु॑षीरीळते॒ विशो॑ होत्रा॒विदं॒ विवि॑चिं रत्न॒धात॑मम् ।
गुहा॒ सन्तं॑ सुभग वि॒श्वद॑र्शतं तुवि॒ष्व॒णसं॑ सु॒यजं॑ घृत॒श्रिय॑म् ॥ ३ ॥

त्वाम् । अ॒ग्ने॒ । मानु॑षीः । ई॒ळ॒ते॒ । विशः॑ । हो॒त्रा॒ऽवि॒द॑म् । विवि॑चिम् । र॒त्न॒ऽधात॑मम् ।
गुहा॑ । सन्त॑म् । सु॒ऽभ॒ग॒ । वि॒श्वऽद॑र्शतम् । तु॒वि॒ऽस्व॒नस॑म् । सु॒ऽयज॑म् । घृ॒त॒ऽश्रिय॑म् ॥ ३ ॥

हे ᵛअग्ने ᵛसुभग शोभनधन ᵛत्वां ᵛमानुषीः ᵛविशः मानुषसंबन्धिन्यः सर्वाः प्रजाः ᵛईळते स्तुवन्ति । कीदृशं त्वाम् । ᵛहोत्राविदं होत्राणां[5] होमानां सप्तहोत्रकाणां वा वेत्तारं ᵛविविचिं विवेचकं सदसतोः ᵛरत्नधातमं रमणीयानां धनानां दातृतमं ᵛगुहा गुहायामरण्यां हृदयेषु[6] वा ᵛसन्तं सर्वदा वर्तमानं ᵛविश्वदर्शतं सर्वैः[7] द्रष्टव्यं ᵛतुविष्वणसं प्रभूतध्वनिं ᵛसुयजं सुष्ठु यष्टारं ᵛघृतश्रियं घृतं श्रयन्तम् ॥

त्वाम॑ग्ने ध॒र्णसिं॑ वि॒श्वधा॑ व॒यं गी॒र्भिर्गृ॒णन्तो॒ नम॒सोप॑ सेदिम ।
स नो॑ जुषस्व समिधा॒नो अ॑ङ्गिरो दे॒वो मर्त॑स्य य॒शसा॑ सु॒दी॒तिभिः॑ ॥ ४ ॥

त्वाम् । अ॒ग्ने॒ । ध॒र्णसि॑म् । वि॒श्वधा॑ । व॒यम् । गीः॒ऽभिः । गृ॒णन्तः॑ । नम॑सा । उप॑ । से॒दि॒म॒ ।
सः । नः॒ । जु॒ष॒स्व॒ । स॒म्ऽइ॒धा॒नः । अ॒ङ्गि॒रः॒ । दे॒वः । मर्त॑स्य । य॒शसा॑ । सु॒दी॒ति॒ऽभिः॑ ॥ ४ ॥

हे ᵛअग्ने ᵛधर्णसिं सर्वस्य धारकं ᵛत्वां ᵛवयम् आत्रेया वा[8] ᵛविश्वधा बहुप्रकारेण ᵛगीर्भिर्गृणन्तः स्तुवन्तः ᵛनमसा नमस्कारेण ᵛउप ᵛसेदिम उपसन्ना भवेम । ᵛसः त्वं ᵛनः अस्मान् ᵛजुषस्व सेवस्व

---

१. प–प्रभूतप्रज्ञम् । २. ख-ग-च-ण-फ–संस्पर्शितारम्; घ-प-भ–संपर्कितारम् । ३. ख-ग-च-ण-प-फ-भ–रक्षसाम्; न-स–दक्षाणाम्; ल–रक्षणाम् । ४. त–परस्परसंसर्गे । ५. घ-न-ल-स–' होत्राणां ' नास्ति । ६. ख-ग-च-ण-फ-भ–हृदये । ७. त–विश्वैः । ८. प–' वा ' नास्ति ।

धनादिभिः । ^समिधानः सम्यग्दीप्तो दीप्यमानोऽस्माभिर्हे ^अङ्गिरः सर्वत्र गन्तरङ्गिरसः पुत्र वा[1] ^देवः दीप्यमानस्त्वं ^मर्तस्य यजमानस्य ^यशसा ^सुदीतिभिः ज्वालाभिः सह जुषस्व ॥

त्वम॑ग्ने पुरु॒रूपो॑ वि॒शेवि॑शे॒ वयो॑ दधासि प्र॒त्नथा॑ पुरुष्टुत ।
पु॒रूण्यन्ना॒ सह॑सा॒ वि रा॑जसि॒ त्विषि॒ः सा ते॑ तित्वि॒षा॒णस्य॒ नाधृषे॑ ॥ ५ ॥

त्वम् । अ॒ग्ने॒ । पु॒रु॒ऽरूपः॑ । वि॒शेऽवि॑शे । वयः॑ । द॒धा॒सि॒ । प्र॒त्नऽथा॑ । पु॒रु॒ऽस्तु॒त॒ ।
पु॒रूणि॑ । अन्ना॑ । सह॑सा । वि । रा॒ज॒सि॒ । त्विषिः॑ । सा । ते॒ । ति॒त्वि॒षा॒णस्य॑ । न । आ॒ऽधृषे॑ ॥ ५ ॥

हे ^अग्ने ^त्वं ^पुरुरूपः सन् ^विशेविशे सर्वस्मै यजमानाय ^प्रत्नथा पुराण इव ^वयः अन्नं ^दधासि धारयसि । हे ^पुरुष्टुत बहुभिः स्तुत[2] ^पुरूणि बहूनि ^अन्ना अन्नानि चरुपुरोडाशादीनि ^सहसा बलेन ^वि ^राजसि ईश्वरो भवसि स्वीकर्तुम् । ^तित्विषाणस्य दीप्तस्य ^ते तव ^सा प्रसिद्धा ^त्विषिः दीप्तिः ^नाधृषे अन्यैरधृष्या भवति ॥

त्वाम॑ग्ने समि॒धा॒नं य॑विष्ठ्य दे॒वा दू॒तं च॑क्रिरे हव्य॒वाह॑नम् ।
उ॒रु॒ज्रय॑सं घृ॒तयो॑नि॒माहु॑तं त्वे॒षं चक्षु॑र्दधिरे चोद॒यन्म॑ति ॥ ६ ॥

त्वाम् । अ॒ग्ने॒ । स॒म्ऽइ॒धा॒नम् । य॒वि॒ष्ठ्य॒ । दे॒वाः । दू॒तम् । च॒क्रि॒रे॒ । ह॒व्य॒ऽवाह॑नम् ।
उ॒रु॒ऽज्रय॑सम् । घृ॒तऽयो॑निम् । आऽहु॑तम् । त्वे॒षम् । चक्षुः॑ । द॒धि॒रे॒ । चो॒द॒यत्ऽम॑ति ॥ ६ ॥

हे ^यविष्ठ्य युवतम ^अग्ने ^समिधानं सम्यगिध्यमानं ^त्वां ^हव्यवाहनं[3] हविषां वोढारं ^दूतं ^चक्रिरे कृतवन्तः ^देवाः । त्रयाणामग्नीनां मध्ये हव्यवाहनः खलु पूर्वं देवैर्हविर्वहनाय दूतः कृतः । ' हव्यवाहनो[4] देवानाम् ' ( तै. सं. २. ५. ८. ६ ) इति हि श्रुतिः । किंच ^उरुज्रयसं प्रभूतवेगं ^घृतयोनिम् । घृतं[5] योनिः कारणं यस्य तम् । ^आहुतं[6] त्वां ^चोदयन्मति । चोदयन्ती मतिर्यस्य तच्चोदयन्मति । ^त्वेषं दीप्तं ^चक्षुः[7] उक्तलक्षणं[7] सर्वप्रकाशकं चक्षुःस्थानीयं कृत्वा ^दधिरे देवा मनुष्याश्च । मत्या हि चक्षुश्चोद्यते ॥

त्वाम॑ग्ने प्र॒दिव॒ आहु॑तं घृ॒तैः सु॑म्ना॒यव॑ः सु॒षमि॒धा॒ समी॑धिरे ।
स वा॑वृधा॒न ओष॑धीभिरुक्षि॒तो॒३॑ऽभि ज्रयां॑सि॒ पार्थि॑वा॒ वि ति॑ष्ठसे ॥ ७ ॥

त्वाम् । अ॒ग्ने॒ । प्र॒ऽदिवः॑ । आऽहु॑तम् । घृ॒तैः । सु॒म्न॒ऽयवः॑ । सु॒ऽस॒मिधा॑ । सम् । ई॒धि॒रे॒ ।
सः । व॒वृ॒धा॒नः । ओष॑धीभिः । उ॒क्षि॒तः । अ॒भि । ज्रयां॑सि । पार्थि॑वा । वि । ति॒ष्ठ॒से॒ ॥ ७ ॥

---

१. ख-ग-च-ण-न-प-फ-भ-' वा ' नास्ति । २. न-ल-स-स्तुत्य । ३. ख-ग-च-ण-फ-देवाः हव्यवाहम्; घ-त-न-प-भ-ल-स-देवाः हव्यवाहनम् । ४. ख-ग-घ-च-ण-फ-भ-हव्यवाहः । ५. त-घृतमेव । ६. त-आहुतं सर्वतः । ७. ख-प-फ-भ-' चक्षुरुक्तलक्षणं ' नास्ति ।

हे ˅अग्ने ˅घृतैः ˅आहुतं ˅त्वां ˅प्रदिवः पुरातनाः[1] ˅सुम्नायवः सुखमिच्छन्तो यजमानाः ˅सुषमिधा शोभनेन इध्मेन[2] ˅समीधिरे सम्यक् दीपितवन्तः । ˅सः त्वं ˅वावृधानः वर्धमानः ˅ओषधीभिः ˅उक्षितः सिक्तः ˅व्रयांसि अन्नानि ˅पार्थिवा पार्थिवान् वृक्षान् । यद्वा । पार्थिवेति व्रयोविशेषणम् । पार्थिवानि चरुपुरोडाशादिकानि ˅अभि ˅वि ˅तिष्ठसे अभिव्यज्य वर्तसे ॥ ॥ २६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये
तृतीयाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

---

१. ख-ग-भ–प्रातनाः; घ-प-ल–पुराणाः; च-फ–प्राक्तनाः । २. त–इन्धनेन ।

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः[1] सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्[1] ॥
यस्य[2] निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्[2] ॥

पञ्चमे मण्डले प्रथमेऽनुवाके पूर्वमष्टौ सूक्तानि व्याख्यातानि । ‘त्वामग्ने हविष्मन्तः’ इति सप्तर्चं नवमं सूक्तम् आत्रेयस्य[3] गयस्यार्षम्[3] । सप्तमीपञ्चम्यौ पङ्क्ती शिष्टाः[4] अनुष्टुभः । अग्निर्देवता । तथा[5] चानुक्रम्यते[5]—‘त्वामग्ने गयोऽन्त्यापञ्चम्यौ पङ्क्ती’ इति । प्रातरनुवाके आश्विनशस्त्रे[6] च[6] एतदादिके द्वे सूक्ते शंसनीये । तथैव सूत्रितं—‘त्वामग्ने हविष्मन्त इति सूक्ते’ ( आश्व. श्रौ. ४. १३ ) इति[7] ॥

**त्वाम॑ग्ने ह॒विष्म॑न्तो दे॒वं मर्ता॑स ईळते ।**
**मन्ये॑ त्वा जा॒तवे॑दसं॒ स ह॒व्या व॑क्ष्यानु॒षक् ॥ १ ॥**

त्वाम् । अ॒ग्ने॒ । ह॒विष्म॑न्तः । दे॒वम् । मर्ता॑सः । ई॒ळ॒ते॒ ।
मन्ये॑ । त्वा॒ । जा॒तऽवे॑दसम् । सः । ह॒व्या । व॒क्षि॒ । आ॒नु॒षक् ॥ १ ॥

हे vअग्ने vत्वां vदेवं दीप्यमानं vहविष्मन्तः होमसाधनद्रव्यसमेताः vमर्तासः मर्त्याः vईळते स्तुवन्ति । अहं च[8] vजातवेदसम्[9] । जातमुत्पन्नं चराचरं भूतजातं वेत्तीति जातवेदाः । अथवा जातानि स्थावरजङ्गमात्मकानि एनं विदुरिति जातवेदाः । यद्वा । वेद इति धननाम । जातं सर्वं वेदो धनं यस्यासौ जातवेदाः । एवंविधं[10] vत्वा त्वां vमन्ये स्तौमि । मनिरत्र स्तुत्यर्थे वर्तते धातूनामनेकार्थत्वात् । vसः त्वं[11] vहव्या हवनसाधनानि[12] हवींषि vआनुषक् निरन्तरतया अनुषक्तं यथा तथा vवक्षि वहसि ॥ हविष्मन्तः । हविःशब्दः औणादिकइस्प्रत्ययान्तः । प्रत्ययस्वरेणान्तोदात्तः । ‘तदस्यास्ति°’ इति मतुप् । पदसंज्ञाया अपवादत्वेन ‘तसौ मत्वर्थे’ इति भसंज्ञायां रुत्वाभावः । मतुब्जसोरनुदात्तत्वात् प्रत्ययस्वर एव शिष्यते । देवम्[13] । अच्प्रत्ययान्तत्वात् देवशब्दोऽन्तोदात्तः । मर्तासः[14] । ‘मृङ् प्राणत्यागे’ । ‘असिहसिमृङ्°’ इत्यादिना तन् । गुणः । मर्तः । जसेरसुक् । मर्तासः । नित्वादाद्युदात्तः । ईळते[15] । ‘ईड स्तुतौ’ । अदादित्वाच्छपो लुक् । ‘आत्मनेपदेष्वनतः’ । टेरेत्वम् ।

---

१. ख-च-ज-झ-ण-त-प-फ-ब-र-श–‘वागीशाद्याः ... गजाननं’ नास्ति । २. ज-प-फ-ब-र–‘यस्य ...°महेश्वरं’ नास्ति । ३. ग-घ-ज-प-फ-ब– आत्रेय ऋषिः । ४. त-न-श– शिष्टाः पङ्क्त्यन्तस्य च सूक्तस्येति परिभाषया । ५. ग-ज-प-फ-ब-र-श–‘तथा चानुक्रम्यते’ नास्ति । ६. ख-च-झ-ण-भ-र– आश्विनशस्त्रे; प-फ-ब–‘आश्विनशस्त्रे च’ नास्ति । ७. न–प्रातरनुवाकन्यायेनेति च । ८. प– तु । ९. ख-च-झ-ण-भ-र–जातवेदसं यम् । १०. प-फ-ब– तमेवंविधम् । ११. न-र– च । १२. ख-झ– हवनसाधनानि हव्यानि । १३. ख-च-झ-ण-न-भ-र-श–‘देवं’ नास्ति । १४. ख-च-झ-ण-न-भ-र-श– ‘मर्तासः’ नास्ति । १५. ख-च-झ-ण-न-भ-र–‘ईळते’ नास्ति ।

अत्र डकारस्य अध्येतृसंप्रदायप्राप्तो ळकारः । लसार्वधातुकानुदात्तत्वेन धातुस्वरे प्राप्ते आष्टमिको निघातः । मन्ये । श्यनो नित्त्वात् आद्युदात्तत्वम् । त्वा । ‘ युषि मिश्रणे ’ । मदिकुप्रत्ययान्तो युष्मच्छब्दः प्रत्ययस्वरेणान्तोदात्तः । ‘ त्वमावेकवचने ’ इति मपर्यन्तस्य त्वादेशः । ‘ द्वितीयायां च ’ ( पा. सू. ७. २. ८७ ) इत्याकारः । ‘ एकादेश उदात्तेनोदात्तः ’ इत्येकादेशोऽप्युदात्त एव । ‘ त्वामौ द्वितीयायाः ’ इति त्वादेशः । स्थानिवद्भावेनान्तोदात्तत्वे प्राप्ते ‘ अनुदात्तं सर्वमपादादौ ’ इत्यनुदात्तत्वम् । जातवेदसम् । ‘ जनी प्रादुर्भावे ’ । क्तः । ‘ श्वीदितो निष्ठायाम् ’ इतीट्प्रतिषेधः । ‘ जनसनखनां सञ्झलोः ’ इत्यात्वम् । प्रत्ययस्वरेणान्तोदात्तः । वेदस्शब्दोऽपि असुन्प्रत्ययान्तत्वात् आद्युदात्तः । कर्मधारयपक्षे समासान्तोदात्तापवादत्वेन ‘ तत्पुरुषे तुल्यार्थ० ’ इत्यादिना पूर्वपदप्रकृतिस्वरत्वे प्राप्ते कृदुत्तरपदप्रकृतिस्वरत्वम् । तदपवादत्वेन ‘ गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च ’ इति पूर्वपदप्रकृतिस्वरत्वम् । बहुव्रीहिपक्षे ‘ बहुव्रीहौ प्रकृत्या पूर्वपदम् ’ इति । हव्या । हवमर्हतीत्यस्मिन्नर्थे ‘ यः ’ इत्यनुवर्तमाने ‘ छन्दसि च ’ इति यः । नपुंसकत्वाच्छिरादेशः । ‘ शेश्छन्दसि बहुलम् ’ इति लोपः । प्रत्ययलक्षणेन नुम् । दीर्घनलोपौ । प्रत्ययस्वरेणान्तोदात्तः । वक्षि । ‘ वह प्रापणे ’ । सिप् । लुगनुवृत्तौ ‘ बहुलं छन्दसि ’ इति शपो लुक् । ढत्वकत्वषत्वानि । सिपः पित्त्वादनुदात्तत्वेन[1] धातुस्वरेण आद्युदात्तत्वे[2] प्राप्ते निघातः । आनुषक्[3] । अनुपूर्वस्य षञ्जेः क्विप् नकारलोपः कुत्वं च । धात्वादेः सकारस्य ‘ उपसर्गात्सुनोति० ’ इत्यादिना षत्वम् । दीर्घश्छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

अग्निर्होता दास्वतः क्षयस्य वृक्तबर्हिषः ।

सं यज्ञासश्चरन्ति यं सं वाजासः श्रवस्यवः ॥ २ ॥

अग्निः । होता । दास्वतः । क्षयस्य । वृक्तऽबर्हिषः ।

सम् । यज्ञासः । चरन्ति । यम् । सम् । वाजासः । श्रवस्यवः ॥ २ ॥

ᵛयम् अग्निं ᵛयज्ञासः सर्वे यज्ञाः ᵛसं ᵛचरन्ति सहिता गच्छन्ति । ᵛश्रवस्यवः यजमानस्य प्रभूतां कीर्तिं संपादयन्तः ᵛवाजासः हवींषि यमग्निं ᵛसं चरन्ति प्राप्नुवन्ति । एवंविशिष्टः ᵛअग्निः ᵛदास्वतः हविष्प्रक्षेपणादिदानवतः ᵛवृक्तबर्हिषः । वृक्तानि लूनानि बर्हींषि दर्भा येनासौ वृक्तबर्हिः[4] । तस्य ᵛक्षयस्य । क्षियन्ति निवसन्त्यस्मिन् स्वर्गसाधनफलानीति क्षयः । तस्य[5] यजमानस्य यागार्थं ᵛहोता देवानामाह्वाता भवति ॥ दास्वतः । ‘ दा दाने ’ । असुन्प्रत्ययान्तः । मतुपः आदुपधत्वात्[6] वत्वम् । धातुस्वरेणाद्युदात्त एव । क्षयस्य । ‘ क्षि निवासगत्योः ’ । ‘ क्षयो निवासे ’ इत्याद्युदात्तत्वम् । वृक्तबर्हिषः । ‘ वृजी वर्जने ’ । वर्जनम् अत्रोपचारात्[7] छेदनम् । निष्ठा । प्रत्ययस्वरेणान्तोदात्तः । बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् । यज्ञासः । यज्ञशब्दः ‘ यजयाच० ’ इत्यादिना नङ्प्रत्ययान्तः अन्तोदात्तः । चरन्ति । ‘ चर गतिभक्षणयोः ’ । अदुपदेशाल्लसार्वधातुकानुदात्तत्वम् । ‘ यद्वृत्तान्नित्यम् ’ इति निघाताभावः । वाजासः । वजेर्घञ् । वाजः । ‘ कर्षात्वतः० ’ इत्यन्तोदात्तत्वम्[8] । छान्दसत्वात्

---

१. च-ण–पित्त्वादनुदात्तत्वम् । २. ख-च-झ-ण-न-भ–आद्युदात्ते । ३. ख-च-झ-ण-न-भ-र-श– ‘ आनुषक् ’ नास्ति । ४. ख-च-झ-ण-भ-र–वृक्तबर्हिषः । ५. ग-घ-च– यस्य । ६. ख-झ-त– आदुपधात्वात् । ७. ख-च–चोपंचारात् । ८. ख-च-झ-ण-न-भ-श–इत्यन्तोदात्तः ।

' ञ्नित्यादिर्नित्यम् ' इत्याद्युदात्तः । श्रवस्यवः । ' छन्दसि परेच्छायाम् ' इति क्यच् । ' क्याच्छन्दसि ' इत्युप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः ॥

उ॒त स्म॒ यं शिशुं॑ यथा॒ नवं॒ जनि॑ष्टा॒रणी॑ ।
ध॒र्तारं॒ मानु॑षीणां वि॒शाम॒ग्निं स्व॑ध्व॒रम् ॥ ३ ॥

उ॒त । स्म॒ । यम् । शिशु॑म् । य॒था॒ । नव॑म् । जनि॑ष्ट । अ॒रणी॒ इति॑ ।
ध॒र्तार॑म् । मानु॑षीणाम् । वि॒शाम् । अ॒ग्निम् । सु॒ऽअ॒ध्व॒रम् ॥ ३ ॥

उत स्म अपि च मानुषीणां मनोर्जातानां विशाम् । विशन्ति प्रविशन्ति गर्भाशयमिति विशः प्रजाः । तासां धर्तारम् आहारादिपाकद्वारेण शरीरधातूनां पोषकं स्वध्वरं शोभनयज्ञं यम् अग्निम् अरणी द्वे अरणी नवं नूतनं शिशुं यथा अपत्यमिव जनिष्ट अजनिषाताम् । अरणी प्रजानां पोषणार्थं चैतमग्निम्[1] असृजतामित्यर्थः ॥ शिशुम् । ' शो तनूकरणे ' । 'आदेचः°' इत्यादिना आत्वम् । ' शः कित् सन्वच्च ' इत्युप्रत्ययः सन्वद्भावश्च । द्विर्भावोऽभ्यासस्य ह्रस्वश्च । ' सन्यतः ' इतीत्वम् । ' आतो धातोः ' इत्याकारलोपः[2] । नित्त्वादाद्युदात्तः । यथा । ' यथेति पादान्ते ' इति सर्वानुदात्तः । जनिष्ट । ' जनी प्रादुर्भावे ' । लुङ् । छान्दसत्वाद्वचनव्यत्ययः । अरणी । ' ऋ गतौ ' । ' अर्तिसृभृध्रधम्यश्यवितॄभ्योऽनिः ' इति अनिप्रत्ययः[3] आद्युदात्तः[3]। आभ्यामर्ति गच्छत्यग्निरित्यरणी । कथमपादानार्थे औणादिकोऽनिः । ' ताभ्यामन्यत्रोणादयः ' ( पा. सू. ३. ४. ७५ ) इति नियमात् भीमादित्वात् सिद्धम् । मानुषीणाम् । ' मनोर्जातावञ्यतौ षुक्च ' इति अञ्प्रत्ययः षुगागमश्च । ' ञ्नित्यादिर्नित्यम् ' इत्याद्युदात्तत्वम् । विशाम् । ' विश प्रवेशने ' । कर्तरि क्विप् । ' सावेकाचः° ' इति विभक्तेः उदात्तत्वम् । स्वध्वरम् । हिंसार्थस्य ध्वरतेः पचाद्यच् । न विद्यते ध्वरो यागहिंसा यस्मिन्नित्यध्वरः । बहुव्रीहिस्वरापवादत्वेन ' नञ्सुभ्याम् ' इत्यन्तोदात्तः ॥

उ॒त स्म॑ दुर्गृभीयसे पु॒त्रो न ह्वा॒र्याणा॑म् ।
पु॒रू यो दग्धा॑सि॒ वनाग्ने॑ प॒शुर्न यव॑से ॥ ४ ॥

उ॒त । स्म॒ । दुः॒ऽगृ॒भी॒य॒से॒ । पु॒त्रः । न । ह्वा॒र्याणा॑म् ।
पु॒रु । यः । दग्धा॑ । असि॑ । वना॑ । अग्ने॑ । प॒शुः । न । यव॑से ॥ ४ ॥

उत स्म अपि च ह्वार्याणां कुटिलं गच्छतां सर्पाणाम् । यद्वा । आस्कन्दितादिगतिविशेषेण वक्रगमनानामश्वानां पुत्रो न पुत्र इव बालसर्प इवाशिक्षितबालाश्व इव वा दुर्गृभीयसे दुःखेन गृह्यसे । हे अग्ने यः त्वं पुरु बहूनि[4] वना वनानि दग्धासि दाहको भवसि । कथमिव । यवसे तृणे पशुर्न पशुरिव । अयमर्थः । अत्यन्तक्षुधार्तः पशुस्तृणविषये विसृष्टः सन् यथा सर्वं भक्षयति

१. ख-च-झ-ण-त-न-भ-र—चैनमग्निम्; श—चैवमग्निम् । २. त—इत्याकारलोपः । णि धान्ये नित् । अस्मात्सूत्रान्निदित्यनुवर्तते । ३. ख-च-ण-भ—प्रत्ययान्तोदात्तः; झ-त-र—अनिः प्रत्ययान्तोदात्तः; न—अनिप्रत्ययान्तोदात्तः । ४. प-फ-ब-श—पुरूणि ।

तद्वदित्यर्थः ॥ दुर्गृभीयसे । ‘ ग्रह उपादाने ’ । यक् । ‘ ग्रुव ईट् ’ इत्यनुवृत्तौ ‘ बहुलं छन्दसि ’ इति ईडागमः । ग्रहिज्यादिना[1] संप्रसारणम् । ‘ हृग्रहोर्भश्छन्दसि ’ इति भकारः । निघातः । ह्वार्याणाम् । ‘ ह्वृ कौटिल्ये ’ । ऋहलोर्ण्यत् । आदिवृद्धिः । ‘ तित्स्वरितम् ’ इति स्वरितत्वम् । पुरु । ‘ पॄ पालनपूरणयोः ’ । ‘ पॄभिदिव्यधिगृधिधृषिदृशिभ्यः ’ इति कुप्रत्ययः । ‘ उदोष्ठ्यपूर्वस्य ’ इत्युत्वम् । प्रत्ययस्वरेण अन्तोदात्तत्वम्[2] । असि । ‘ यद्वृत्तान्नित्यम् ’ इति न निघातः ॥

अध स्म यस्यार्चयः सम्यक्संयन्ति धूमिनः ।

यदीमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा ॥ ५ ॥

अध । स्म । यस्य । अर्चयः । सम्यक् । समऽयन्ति । धूमिनः ।

यत् । ईम् । अह । त्रितः । दिवि । उप । ध्माताऽइव । धमति । शिशीते । ध्मातरि । यथा ॥ ५ ॥

vअध vस्म अपि च vधूमिनः धूमवतः vयस्य अग्नेः vअर्चयः अर्चींषि vसम्यक् शोभनं vसंयन्ति सर्वतः प्राप्नुवन्ति vत्रितः त्रिषु स्थानेषु ततो व्याप्तः त्रीणि स्थानानि वा अतीत्य vदिवि अन्तरिक्षे vयत् यदा vईम् अयमात्मानम् vउप vधमति उपवर्धयति[3] तदा ज्वालाः सर्वतो निर्गच्छन्तीत्यर्थः । कथमिव । vध्मातेव[4] । कर्मारो यथा भस्त्रादिभिरग्निं संवर्धयति तद्वत्स्वात्मानं वर्धयतीत्यर्थः । किंच vध्मातरि vयथा । यथा ध्मातृसमीपे[5] विद्यमानोऽग्निस्तेन ध्मायमानः स आत्मानं vशिशीते तीक्ष्णीकरोति तद्वत्स्वयमेव स्वात्मानं तीक्ष्णीकरोतीत्यर्थः । vअह इति पादपूरणः ॥ यन्ति । ‘ इण् गतौ ’ । यच्छब्दयोगान्निघाताभावः । धमति । ‘ ध्मा शब्दाग्निसंयोगयोः ’ । पाघ्रादिना धमादेशः । पूर्ववत् निघाताभावः । शिशीते । ‘ शो तनूकरणे ’ । व्यत्ययेनात्मनेपदी । ‘ श्लौ ’ इत्यनुवर्तमाने[6] ‘ बहुलं छन्दसि ’ इति विकरणस्य श्लुः । ‘ आदेच उपदेशे शिति ’ इति आत्वम् । ‘ श्लौ ’ इति द्विर्वचनम् । ‘ बहुलं छन्दसि ’ इत्यभ्यासस्य इत्वम् । ‘ उभे अभ्यस्तम् ’ इत्यभ्यस्तसंज्ञायाम् आतः ‘ ई हल्यघोः ’ इति ईत्वम् । तिङ उत्तरत्वान्निघाताभावः ॥

तवाहमग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः ।

द्वेषोयुतो न दुरिता तुर्याम मर्त्यानाम् ॥ ६ ॥

तव । अहम् । अग्ने । ऊतिऽभिः । मित्रस्य । च । प्रशस्तिऽभिः ।

द्वेषःऽयुतः । न । दुःऽइता । तुर्याम । मर्त्यानाम् ॥ ६ ॥

हे vअग्ने vअहं vमित्रस्य सर्वेषां मित्रभूतस्य[7] vतव vऊतिभिः युष्मत्कर्तृकरक्षणैः[7] युष्मत्प्रशस्तिभिः[8] vच अस्मत्कृतैः[9] स्तोत्रैश्च[9] vमर्त्यानां शत्रुभूतानां मनुष्याणां vदुरिता दुरितानि तत्कर्तृकाणि पापसाधन-

---

१. न-र–ग्रह्यादिना; श–ग्रहिज्येत्यादिना । २. ख-च-झ-ण-न-भ-श–अन्तोदात्तः । ३. झ-र–उपवर्धयते । ४. न-र-श–ध्मातेव कर्मार इव । ५. त– ध्मातुः समीपे । ६. ख-च-झ-ण-न-भ-र–अनुवर्तमाने । ७. प-फ-ब–मित्रस्य तवोतिभिः रक्षाभिः । ८. न-प-फ-ब– प्रशस्तिभिः । ९. न–स्तुतिभिश्च ।

कर्माणि ᵛद्वेषोयुतो ᵛन द्वेषयुक्तान् शत्रूनिव ᵛतुर्याम[1] तरेयम् । अयमर्थः । त्वद्रक्षणैस्त्वत्संबन्धिस्तुतिभिश्च बाह्याभ्यन्तरशत्रून् तरेयमित्यर्थः ॥ ऊतिभिः । 'अव रक्षणे'। क्तिन्। 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इति ऊठ्। 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इति अन्तोदात्तत्वेन[2] निपातितः। प्रशस्तिभिः। 'शंसु स्तुतौ'। क्तिन्। कृदुत्तरपदप्रकृतिस्वरापवादत्वेन 'तादौ च निति कृत्यतौ' इति गतेः प्रकृतिस्वरत्वम्[3]। द्वेषोयुतः। 'द्विष अप्रीतौ'। भावेऽसुन्प्रत्ययः। 'यु मिश्रणे'। कर्तरि क्विप्। तुक्। कृदुत्तरपदप्रकृतिस्वरत्वम्। तुर्याम। 'तॄ प्लवनतरणयोः'। प्रार्थनायां लिङ्। यासुट्। 'लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः। 'बहुलं छन्दसि' इति शपो लुक्। उदोष्ठ्यपूर्वस्य 'बहुलं छन्दसि' इति उत्वम्। यासुडागमस्योदात्तत्वाच्छेषनिघातः। '°अपादादौ' इति प्रतिषेधान्निघाताभावः ॥

तं नो॑ अग्ने अ॒भी नरो॑ र॒यिं स॑हस्व॒ आ भ॑र ।
स क्षे॑पयत्स पो॑षय॒द्भुव॒द्वाज॑स्य सा॒तय॑ उ॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥ ७ ॥

तम्। न॒ः। अ॒ग्ने॒। अ॒भि। नर॑ः। र॒यिम्। स॒ह॒स्व॒ः। आ। भ॒र।
सः। क्षे॒प॒य॒त्। सः। पो॒ष॒य॒त्। भुव॑त्। वाज॑स्य। सा॒तये॑।
उ॒त। ए॒धि॒। पृ॒त्ऽसु। न॒ः। वृ॒धे ॥ ७ ॥

हे ᵛअग्ने ᵛसहस्वः बलवन् ᵛनरः हविषां नेता[4] त्वम्[4] अस्माकं ᵛतं ᵛरयिं लोके प्रसिद्धं पश्वादिलक्षणं धनम् ᵛअभि ᵛआ ᵛभर आभिमुख्येनाहर। पूर्वोक्तः ᵛसः अग्निः ᵛक्षेपयत्। अस्मदीयान् शत्रून् क्षेपयतु। ᵛसः अग्निः ᵛपोषयत् अस्मान् पोषयतु। ᵛवाजस्य अन्नस्य ᵛसातये लाभाय ᵛभुवत् भवतु। ᵛउत अपि च हे अग्ने ᵛपृत्सु पृतनासु युद्धेषु ᵛनः अस्माकं ᵛवृधे समृद्धये ᵛएधि भव। संग्रामे शत्रुविजयार्थं स त्वं समृद्धिं कुर्वित्यर्थः ॥ सहस्वः। 'षह मर्षणे'। असुन्। सहत्यनेन शत्रूनिति सहो बलम्। मतुप्। 'मादुपधायाः°' इति वत्वम्। 'मतुवसो रुः संबुद्धौ छन्दसि' इति रुत्वम्। 'आमन्त्रितस्य च' इति निघातः। क्षेपयत्। 'क्षिप प्रेरणे'। णिजन्तात् लेट्। इतश्च लोपः। 'लेटोऽडाटौ' इत्यडागमः। शप् गुणायादेशौ पररूपत्वं च। पोषयत्। 'पुष पुष्टौ'। भुवत्। 'भू सत्तायाम्'। 'भूसुवोस्तिङि' इति गुणप्रतिषेधः। उवङ्। एधि। 'अस भुवि'। 'घ्वसोरेद्धावभ्यासलोपश्च' इति एत्वम्। तस्यासिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति धिरादेशः। निघातः। पृत्सु। 'पदादिषु' इत्यादिना पृतनाशब्दस्य पृदादेशः। सावेकाचः[5]त्वात् अन्तोदात्तत्वम् ॥ ॥ १ ॥

'अग्न ओजिष्ठम्' इति सप्तर्चं दशमं सूक्तम्। ऋष्यादि[6] विनियोगश्च पूर्ववत्। चतुर्थीसप्तम्यौ पङ्क्ती। 'अग्न ओजिष्ठमन्याचतुर्थ्यौ च' इत्यनुक्रान्तम्[6] ॥

---

१. प-फ-ब—अहं तुर्याम तुरेयम्। २. र—अन्तोदात्तत्वे; श—अन्तोदात्तः। ३. श—उदात्तत्वम्। ४. ख-च-झ-ण-न-भ-र-श—नेतारः। ५. ख-च-ण—सावेकाच इति। ६. प-फ-ब—आत्रेयो गय ऋषिः। चतुर्थीसप्तम्यौ पङ्क्ती। शिष्टा अनुष्टुभः। अग्निर्देवता।

अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।

प्र नो राया परीणसा रत्सि वाजाय पन्थाम् ॥ १ ॥

अग्ने । ओजिष्ठम् । आ । भर । द्युम्नम् । अस्मभ्यम् । अध्रिगो इत्यध्रिऽगो ।

प्र । नः । राया । परीणसा । रत्सि । वाजाय । पन्थाम् ॥ १ ॥

हे अग्ने ओजिष्ठं बलवत्तमं द्युम्नम् । द्योतते कटकमुकुटादिरूपेण सर्वत्र प्रकाशते इति द्युम्नं धनम् । अस्मभ्यम् आ भर आहर । हे अध्रिगो अधृतगमन । अधृतमप्रतिहतं गमनं यस्येति अधृता अनिवारिता गावो रश्मयो यस्येति वा अधृतगुः अध्रिगुः । तस्य संबोधनम् । नः अस्मान् परीणसा परितो[1] व्यापकेन[1] राया धनेन प्र प्रकर्षेण योजय । वाजाय अन्नलाभाय पन्थां पन्थानमन्नस्य मत्समीपप्राप्तिसाधनं मार्गं रत्सि विलिख । कुर्वित्यर्थः ॥ ओजिष्ठम् । ‘ उब्ज आर्जवे ’ । ‘ उब्जेर्बले बलोपश्च ’ इत्यसुन् बलोपश्च । गुणः । ओजः । ‘ तदस्यास्ति°’ इत्यर्थे ‘ अस्मायामेधा° ’ इत्यादिना विनिः । ‘अतिशायने°’ इति इष्ठन् । विन्मतोर्लुक् । ‘ टेः ’ इति टिलोपः । नित्त्वादाद्युदात्तः । द्युम्नम् । ‘ द्युत दीप्तौ ’ इत्यस्माद्धातोः ‘ सुम्नद्युम्ननिम्न° ’ इत्यादिना नक्प्रत्ययो मकारश्चान्तादेशो निपात्यते । प्रत्ययस्वरेणान्तोदात्तः । अध्रिगो । अधृतशब्दस्य अध्र्यादेशः । गोशब्दस्योपसर्जनह्रस्वत्वम् । आमन्त्रितस्य[2] निघातः[2] । परीणसा । ‘ णस कौटिल्ये ’ । अत्र व्याप्त्यर्थो धातूनामनेकार्थत्वात् । अस्मात् संपदादिलक्षणो भावे क्विप् । परि प्राप्तं नस् व्यापनं यस्य तत्तथोक्तम्[3] । ‘ उपसर्गादसमासेऽपि° ’ इति णत्वम् । अत्र प्रापणक्रियया युक्तस्य परेर्णसतिं प्रत्युपसर्गसंज्ञा नास्ति ‘ यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञाः[4] ’ (पा. सू. १. ४. ६०. ३ ) इति न्यायात् । अतः कथं णत्वम् । एवं तर्हि ‘ उपसर्गाद्बहुलम्’ इति वचनात् णसो णत्वं भविष्यति । ‘ निपातस्य च ’ इति पूर्वपदस्य दीर्घः । ‘ बहुव्रीहौ प्रकृत्या° ’ इति पूर्वपदप्रकृतिस्वरत्वम् । रत्सि । ‘ रद विलेखने ’ । भौवादिकः । ‘ बहुलं छन्दसि ’ इति शपो लुक् । पादादित्वान्निघाताभावः । पन्थाम् । द्वितीयैकवचने ‘ इतोऽत् सर्वनामस्थाने ’ इत्यत् । नकारलोपश्छान्दसः । ‘ पथिमथोः सर्वनामस्थाने ’ इत्याद्युदात्तत्वम् ॥

त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना ।

त्वे असुर्यं१मारुहत्क्राणा मित्रो न यज्ञियः ॥ २ ॥

त्वम् । नः । अग्ने । अद्भुत । क्रत्वा । दक्षस्य । मंहना ।

त्वे इति । असुर्यम् । आ । अरुहत् । क्राणा । मित्रः । न । यज्ञियः ॥ २ ॥

हे अग्ने अद्भुत सामर्थ्यातिशयेन सर्वेषामाश्चर्यभूत त्वं नः अस्माकं क्रत्वा कर्मणा अस्मत्कृतेन यज्ञादिव्यापारेण प्रीतः सन् दक्षस्य बलस्य धनस्य वा मंहना मंहनं नाम दानं कुर्विति शेषः ।

---

१. ख-च-झ-ण-न-भ-र–परिप्राप्तव्यापनेन । २. ख-च-झ-ण-त-न-भ-र–आमन्त्रितनिघातः । ३. ख-च-झ-ण-त-न-भ-र-श–तथोक्तम् । ४. झ-त-न-र–°संज्ञकाः ।

यतः कारणात् त्वे त्वयि असुर्यम् असुरत्नं बलम् आरुहत् आरूढं अतः मित्रो न सूर्य इव यज्ञियः यज्ञार्हस्त्वं क्राणा यज्ञघातुकराक्षसापनोदनलक्षणानि[1] कर्माणि कुर्वाणो भव ॥ अद्भुत । आमन्त्रितस्याद्युदात्तत्वम् । क्रत्वा । ' डुकृञ् करणे ' । ' कृञः कतुः ' इति कतुप्रत्ययः । ककारो गुणवृद्धिप्रतिषेधार्थः । यणादेशः । क्रतुः कर्म । तृतीयैकवचने ' जसादिषु वावचनम् ' इति वचनान्नाभावाभावः । दक्षस्य । ' दक्ष गतिहिंसनयोः ' । दक्ष्यन्ते हिंस्यन्तेऽनेन शत्रव इति दक्षं बलम् । ' करणाधिकरणयोश्च ' इति घञ् । ञित्त्वात् आद्युदात्तः[2] । मंहना । मंहतिर्दानकर्मा । ' सुपां सुलुक्° ' इत्याकारादेशः । त्वे । ' सुपां सुलुक्° ' इत्यादिना ङेः शेआदेशः । सुबादेशत्वादनुदात्तः । त्वशब्दः प्रत्ययस्वरेणान्तोदात्तः । ' एकादेश उदात्तेनोदात्तः ' इत्येकादेशस्योदात्तत्वम् । आरुहत् । रुहेर्धातोर्लुङि ' कृमृदृरुहिभ्यश्छन्दसि ' इति च्लेरङादेशः । ङित्त्वाद्गुणाभावः । क्राणा । ' डुकृञ् करणे ' । शानच् । ' बहुलं छन्दसि ' इति विकरणस्य लुक् । यणादेशः । ' सुपां सुलुक्° ' इत्यात्वम् । ' चितः ' इत्यन्तोदात्तः । यज्ञियः । यज्ञमर्हतीत्यस्मिन्नर्थे ' यज्ञर्त्विग्भ्यां घखञौ ' इति घः । प्रत्ययस्वरेणान्तोदात्तः ॥

**त्वं नो अग्न एषां गयं पुष्टिं च वर्धय ।**

**ये स्तोमेभिः प्र सूरयो नरो मघान्यानशुः ॥ ३ ॥**

त्वम् । नः । अग्ने । एषाम् । गयम् । पुष्टिम् । च । वर्धय ।

ये । स्तोमेभिः । प्र । सूरयः । नरः । मघानि । आनशुः ॥ ३ ॥

हे अग्ने त्वम् एषां नः त्वत्स्तावकानामस्माकं गयम् । गम्यते निवासायेति गयं गृहं गीयते स्तूयत इति वा गयं धनम् । पुष्टिं च गवादिविषयां पुष्टिं च वर्धय[3] वृद्धिं प्रापय । ये लोके प्रसिद्धाः सूरयः लब्धवर्णाः नरः स्तोतारो मनुष्याः स्तोमेभिः स्तोमैः स्तोत्रैः मघानि मंहनीयानि गवादिधनानि यथा प्र[4] आनशुः प्राप्नुवन् तद्वद्वयमपीत्यर्थः ॥ गयम् । गृहपक्षे गमेः ' अघ्न्यादयश्च ' इति यत्प्रत्ययान्तो मकारलोपश्च निपात्यते । धनपक्षे ' गा स्तुतौ ' । अस्माद्यत्प्रत्ययः । ह्रस्वत्वम् । ' यतोऽनावः ' इत्याद्युदात्तत्वम् । पुष्टिम् । ' पुष पुष्टौ ' । स्त्रियां क्तिन् । छान्दसत्वादन्तोदात्तत्वम् । स्तोमेभिः । ' ष्टुञ् स्तुतौ ' । ' अर्तिस्तुसुहु° ' इत्यादिना मन् । गुणः । नित्त्वादाद्युदात्तः । आनशुः । ' अशू व्याप्तौ ' । लिट् । द्विर्वचनम् । हलादिशेषः । ' अत आदेः ' इत्यात्वम् । ' अश्नोतेश्च ' इति नुडागमः । निघातः ॥

**ये अग्ने चन्द्र ते गिरः शुम्भन्त्यश्वराधसः ।**

**शुष्मेभिः शुष्मिणो नरो दिवश्चिद्येषां बृहत्सुकीर्तिर्बोधति त्मना ॥ ४ ॥**

ये । अग्ने । चन्द्र । ते । गिरः । शुम्भन्ति । अश्वऽराधसः ।

शुष्मेभिः । शुष्मिणः । नरः । दिवः । चित् । येषाम् । बृहत् । सुऽकीर्तिः । बोधति । त्मना ॥ ४ ॥

---

१. ग-घ-यज्ञघातक°; ब-यज्ञान्तक° । २. ख-च-ण-र-श-आद्युदात्तत्वम् । ३. ख-च-झ-ण-भ-प्रापय; घ-श-वर्धय प्रापय । ४. ख-च-ज-झ-ण-न-भ-र-श-' प्र ' नास्ति ।

हे ᵛअग्ने ᵛचन्द्र सर्वेषां प्राणिनामाह्लादकर ᵛये ᵛनरः ᵛते ᵛगिरः त्वत्संबन्धिस्तोत्ररूपा वाचः ᵛशुम्भन्ति शोभनाः कुर्वन्ति ते ᵛअश्वराधसः अश्वधना भवन्ति । एतेन सर्वसमृद्धिरुपलक्ष्यते । किंच । ᵛशुष्मिणः बलवन्तः सन्तः ᵛशुष्मेभिः शुष्मैः स्वकीयैर्बलैः सत्त्वैः शत्रुशोषका भवन्ति । ᵛयेषां त्वत्संबन्धिनं स्तवं कुर्वतां ᵛदिवश्चित् आकाशादपि ᵛबृहत् महती ᵛसुकीर्तिः भवति । सर्वदिगन्तरालवर्तिनी[1] कीर्तिर्भवतीत्यर्थः । एवंविधं त्वां गयः ᵛत्मना आत्मना स्वयमेव ᵛबोधति बोधयति ॥ शुम्भन्ति । 'शुभ शुम्भ दीप्तौ' । तुदादिः । पादादित्वान्निघाताभावः । लसार्वधातुकानुदात्तत्वे प्राप्ते सति शिष्टत्वाद्विकरणस्वर एव[2] । अश्वराधसः । 'अशू व्याप्तौ' । 'अशूप्रुषि°[3]' इत्यादिना क्वन् । अश्नुते व्याप्नोत्यध्वानमित्यश्वः । नित्त्वादाद्युदात्तः । 'राध साध संसिद्धौ' । असुन् । राध्नुवन्ति साधयन्त्यनेन धर्मादीनीति राधो धनम् । बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् । बृहत् । 'बृह बृहि वृद्धौ' । शतृ । ङीपो लोपश्छान्दसः । प्रत्ययस्वरः । बोधति । 'बुध अवगमने' । ण्यन्तात् शपि कृते तस्य 'छन्दस्युभयथा' इति सार्वधातुकसंज्ञायां णिलोपः । 'यद्वृत्तान्नित्यम्' इति निघाताभावः । धातुस्वरेणाद्युदात्तः । त्मना । 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोपः ॥

**तव॒ त्ये अ॑ग्ने अ॒र्चयो॒ भ्राज॑न्तो यन्ति धृष्णु॒या ।**

**परि॑ज्मानो॒ न वि॒द्युत॑ः स्वा॒नो रथो॒ न वा॒जयुः ॥ ५ ॥**

तव॑ । त्ये । अ॒ग्ने॒ । अ॒र्चय॑ः । भ्राज॑न्तः । य॒न्ति॒ । धृ॒ष्णु॒ऽया ।

परि॑ऽज्मानः । न । वि॒ऽद्युत॑ः । स्वा॒नः । रथ॑ः । न । वा॒ज॒ऽयुः ॥ ५ ॥

हे ᵛअग्ने ᵛधृष्णुया धृष्णवोऽत्यन्तप्रगल्भाः ᵛभ्राजन्तः दीप्यमानाः ᵛत्ये ते प्रसिद्धाः ᵛतव ᵛअर्चयः[4] त्वदीया रश्मयः ᵛयन्ति सर्वतो गच्छन्ति । कथमिव । ᵛपरिज्मानः परितो गन्त्र्यः सर्वतो व्याप्ताः ᵛविद्युतः ᵛन अचिरप्रभा इव । अनेन प्रकाशातिशय उक्तः । ᵛस्वानः शब्दायमानः ᵛरथो ᵛन रथ इव । अनेनार्चिषां स्वनाधिक्यमुक्तम् । ᵛवाजयुः न अन्नकाम इवान्नार्थं युद्धेषु शत्रुविजयाय यथा प्रवर्तते तद्वदित्यर्थः । अनेनाहुतिविषयोऽभिलाष उक्तः ॥ यन्ति । 'इण् गतौ' । धृष्णुया । 'ञिधृषा प्रागल्भ्ये' । 'त्रसिगृधिधृषि°' इत्यादिना क्नुप्रत्ययः । 'आदितश्च' (पा. सू. ७. २. १६) इति इट्प्रतिषेधः । बहुवचने 'सुपां सुलुक्°' इत्यादिना याजादेशः । 'चितः' इत्यन्तोदात्तत्वम् । परिज्मानः । 'अज व्रज गतौ' । परिपूर्वाद्धातोः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । अकारलोपः छान्दसः । नित्वादाद्युदात्तः । वाजयुः । वाजमात्मन इच्छति इति क्यच् । 'न छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोः प्रतिषेधः । 'क्याच्छन्दसि' इति उप्रत्ययः ॥

**नू नो॑ अग्न ऊ॒तये॑ स॒बाध॑सश्च रा॒तये॑ ।**

**अ॒स्माका॑सश्च सू॒रयो॒ विश्वा॒ आशा॑स्तरी॒षणि॑ ॥ ६ ॥**

नु । नः॒ । अ॒ग्ने॒ । ऊ॒तये॑ । स॒ऽबाध॑सः । च॒ । रा॒तये॑ ।

अ॒स्माका॑सः । च॒ । सू॒रय॑ः । विश्वा॑ः । आशा॑ः । त॒री॒षणि॑ ॥ ६ ॥

---

१. श–°दिगन्तरावर्तिनी । २. ख-च-ण–एव शिष्यते । ३. च-झ-ण-भ-र-श–अशिप्रुषि° । ४. ख-च-झ-ण-न-भ-र-श–अर्चिषः ।

हे अग्ने नः अस्माकं नु क्षिप्रम् ऊतये रक्षायै भव । सबाधसश्च दारिद्र्यनिमित्तबाधसहितस्य[1] च रातये धनानां दानाय भव । किंच अस्माकासः आस्माकाः[2] पुत्रमित्रादयः सूरयः स्तोतारः विश्वाः सर्वाः आशाः दिशः तरीषणि । तासां तरणे क्षमा भवन्तु । अथवा आशाः कामाः । अयमर्थः । स्वाभिलषितप्रशस्तसमस्तवस्तुसंपादनं कुर्वित्यर्थः ॥ सबाधसः । बाधेरसुन् । बाधसा सह वर्तत इति सबाधाः । 'वोपसर्जनस्य' इति सहस्य सभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रातये । 'रा दाने' । क्तिन् । 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इत्यन्तोदात्तः । अस्माकासः । 'तस्मिन्नणि च युष्माकास्माकौ' इत्यणि कृतेऽस्माकादेशः । छान्दसत्वादणो लोपः । बहुवचने असुगागमः । षष्ठीबहुवचने मध्योदात्तत्वेन दृष्टत्वात्तथाविधमादेशमचापि कृतवानाचार्यः[3] । विश्वाः । विशेः 'अशिप्रुषि°' इत्यादिना क्वन् । नित्वादाद्युदात्तः । तरीषणि । 'तॄ प्लवनतरणयोः' । 'कृतॄभ्यामीषन्' (उ. सू. ४. ४६६) इति ईषन् । बहुलवचनान्नलोपाभावः । अन्तोदात्तश्छान्दसः ॥

**त्वं नो॑ अग्ने अङ्गिरः स्तु॒तः स्तवा॑न॒ आ भ॑र ।**

**होत॑र्विभ्वा॒सहं॑ र॒यिं स्तो॒तृभ्यः॒ स्तव॑से च न उ॒तैधि॑ पृ॒त्सु नो॑ वृ॒धे ॥ ७ ॥**

त्वम् । न॒ः । अ॒ग्ने॒ । अ॒ङ्गि॒र॒ः । स्तु॒तः । स्तवा॑नः । आ । भ॒र॒ ।

होत॒रिति॑ । वि॒भ्व॒ऽसह॑म् । र॒यिम् । स्तो॒तृऽभ्यः॑ । स्तव॑से । च॒ । न॒ः ।

उ॒त । ए॒धि॒ । पृ॒त्ऽसु । न॒ः । वृ॒धे ॥ ७ ॥

हे अग्ने अङ्गिरः । कार्यकारणयोरभेदोपचारादङ्गिरसां प्रकृतिभूतोऽप्यग्निरङ्गिरा इत्युच्यते । हे अङ्गिरः पूर्वैः महर्षिभिः स्तुतः स्तवानः इदानींतनैश्च स्तूयमानस्त्वं विभ्वासहं महतामप्यभिभवितारम् । अभिभवहेतुत्वादभिभवितृ धनमुच्यते[4] । रयिं धनं नः अस्माकम् आ भर आहर । हे होतः देवानामाह्वातः स्तोतृभ्यः नः अस्मभ्यं स्तवसे स्तोतुं सामर्थ्यं च प्रयच्छ । उत अपि च पृत्सु युद्धेषु नः अस्माकं वृधे समृद्ध्यै एधि भव ॥ स्तवानः । 'ष्टुञ् स्तुतौ' । शानचि कर्मणि व्यत्ययेन शप्प्रत्यय आद्युदात्तश्च । विभ्वासहम् । संहितायां विभूनामिति षष्ठीबहुवचनस्य 'सुपाम्°' इत्यादिना आकारादेशः । 'तत्पुरुषे कृति बहुलम्' इति षष्ठ्या अलुक् । पदकारास्तु विपूर्वाद्भवतेः अगागमम्[5] 'अन्येषामपि दृश्यते' इति दीर्घत्वं च मत्वावग्रहं कुर्वन्ति । कृदुत्तरपदप्रकृतिस्वरत्वम् । स्तवसे । 'ष्टुञ् स्तुतौ' । तुमर्थेऽसेन्प्रत्ययः । नित्वादाद्युदात्तः ॥ ॥ २ ॥

'जनस्य गोपाः' इति षडृचमेकादशं सूक्तमात्रेयस्य सुतंभरस्यार्षं जागतमाग्नेयम् । तथा चानुक्रान्तं—'जनस्य षट् सुतंभरो जागतम्' इति । प्रातरनुवाके आश्विनशस्त्रे चास्य सूक्तस्य विनियोगः । 'जनस्य गोपास्त्वामग्न ऋतायवः' (आश्व. श्रौ. ४. १३) इति ॥

---

१. ख-च-ण-श—दारिद्रनिमित्त° । २. ख-च-झ-ण-भ-र-श—अस्माकाः । ३. ख-च-ण-भ—कृतवानित्यर्थः; झ-र—कृतवानीचार्थः । ४. ख-च-झ-ण-त-न-भ-र—धनामित्युच्यते । ५. श—अगागमे ।

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥ १ ॥

जनस्य । गोपाः । अजनिष्ट । जागृविः । अग्निः । सुऽदक्षः । सुविताय । नव्यसे ।
घृतऽप्रतीकः । बृहता । दिविऽस्पृशा । द्युऽमत् । वि । भाति । भरतेभ्यः । शुचिः ॥ १ ॥

vजनस्य vगोपाः गोपायिता रक्षिता vजागृविः जागरणशीलः सदा प्रबुद्धः vसुदक्षः सुबलः सर्वैः श्लाघनीयबलः[1] सः vअग्निः vनव्यसे नवतराय vसुविताय लोकानां कल्याणाय vअजनिष्ट जातः । vघृतप्रतीकः घृतेन प्रज्वलिताङ्गः vबृहता महता vदिविस्पृशा अभ्रंलिहेन तेजसा युक्तः vशुचिः शुद्धः एवंविधोऽग्निः vभरतेभ्यः ऋत्विग्भ्यस्तदर्थं vद्युमत् दीप्तिमत् यथा भवति तथा vवि vभाति प्रकाशते ॥ गोपाः । 'गुपू रक्षणे'। आयप्रत्ययः । गोपायतेः क्विप् । परत्वादतो[2] लोपः[2] । अत्र परत्वादपृक्तलोपे कृते वर्णाश्रयत्वात् प्रत्ययलक्षणाभावेन यलोपो न स्यात् । 'लोपो व्योर्वलि' इति प्रथमं लोपग्रहणात् ज्ञापकाद्यलोप एव भवति । लोपाजादेशस्य यलोपविधिं प्रति न[3] स्थानिवद्भावः । प्रत्ययस्वरः । जागृविः । 'जागृ निद्राक्षये'। 'जॄशॄस्तॄजागृभ्यः क्विन्' इति क्विन्प्रत्ययः । 'जाग्रोऽविचिण्णल्ङित्सु' इति प्रतिषेधाद्गुणाभावः । नित्त्वादाद्युदात्तः । सुदक्षः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । सुविताय । 'तन्वादीनां छन्दस्युपसंख्यानम्' इति सोरुवङादेशः । 'सूपमानात् क्तः' इत्युत्तरपदान्तोदात्तत्वम् । नव्यसे । नवशब्दादतिशायनेऽर्थे ईयसुन्प्रत्ययः । ईकारलोपश्छान्दसः । अतो लोपः । आद्युदात्तः । दिविस्पृशा । 'हृद्द्युभ्यां ङेरुपसंख्यानम्' इत्यलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । द्युमत् । 'ह्रस्वनुड्भ्यां मतुप्' इति ह्रस्वात्परस्य मतुपोऽन्तोदात्तत्वम् ॥

यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे ।
इन्द्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥ २ ॥

यज्ञस्य । केतुम् । प्रथमम् । पुरःऽहितम् । अग्निम् । नरः । त्रिऽसधस्थे । सम् । ईधिरे ।
इन्द्रेण । देवैः । सऽरथम् । सः । बर्हिषि । सीदत् । नि । होता । यजथाय । सुऽक्रतुः ॥२॥

vनरः ऋत्विजः vयज्ञस्य यागस्य vकेतुं प्रज्ञापकं vपुरोहितं यजमानैः पुरस्कृतम् vइन्द्रेण vदेवैः च vसरथं तेषां मान्यत्वात् समानरथम् vअग्निं vत्रिषधस्थे त्रिस्थाने विहारप्रदेशे vप्रथमं vसमीधिरे समैन्धत । vसुक्रतुः शोभनकर्मा vहोता देवानामाह्वाता vसः अग्निः vबर्हिषि बर्हिर्युक्ते तस्मिन् स्थाने vयजथाय यज्ञाय vनि vसीदत् प्रतिष्ठितोऽभवदिति यावत् ॥ केतुम् । 'कित ज्ञाने'। औणादिक उप्रत्ययः । अन्तोदात्तः । पुरोहितम् । 'पुरोऽव्ययम्' इति गतिसंज्ञायां 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् । त्रिषधस्थे । आहवनीयादिलक्षणेन त्रिप्रकारेणानेन

---

१. ख-च-ञ-ण-न-भ-र–श्लाघनीयः । २. ख-च-ण-त-न-भ-र–परत्वादकारलोपः । ३. ख-ञ-न-भ-र–'न' नास्ति ।

सह तिष्ठतीति त्रिषधस्थः । कप्रत्ययः । 'सध मादस्थयोश्छन्दसि' इति सधादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । सीदत् । सदेः पाघ्रादिना सीदादेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । पादादित्वान्निघाताभावः । यजथाय । यजेरौणादिकोऽथप्रत्ययः । प्रत्ययस्वरेण मध्योदात्तः ॥

असंमृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरुदतिष्ठो विवस्वतः ।
घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद्दिवि श्रितः ॥ ३ ॥

असम्ऽमृष्टः । जायसे । मात्रोः । शुचिः । मन्द्रः । कविः । उत् । अतिष्ठः । विवस्वतः ।
घृतेन । त्वा । अवर्धयन् । अग्ने । आऽहुत । धूमः । ते । केतुः । अभवत् । दिवि । श्रितः ॥ ३ ॥

हे ᵛअग्ने ᵛमात्रोः अरण्योः । स्वजननिमित्तत्वात्[1] अरणी मातराविल्युच्येते । ताभ्याम् ᵛअसंमृष्टः अबाधित एव ᵛजायसे प्रादुर्भूतो भवसि । ᵛमन्द्रः सर्वैः स्तुत्यः ᵛकविः क्रान्तः सर्वत्र व्याप्तः । अथवा मेधावी ᵛशुचिः त्वं ᵛविवस्वतः अग्निहोत्राद्यर्थं[2] गृहे विशेषेण वसतः[3] यजमानात् ᵛउदतिष्ठः उदितोऽभवः । पूर्वे महर्षयः ᵛत्वा त्वां ᵛघृतेन ᵛअवर्धयन् वृद्धिमनयन् । हे ᵛआहुत आहुतिभिर्हुत ᵛते तव ᵛदिवि अन्तरिक्षे ᵛश्रितः व्याप्तः ᵛधूमः ᵛकेतुः प्रज्ञापकः ᵛअभवत् । अग्न्यनुमापकत्वात् धूमस्य ॥ मात्रोः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । मन्द्रः । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। अत्र स्तुत्यर्थादस्मात् 'स्फायितञ्चि°' इत्यादिना रक् । अन्तोदात्तः । कविः । क्रमेः 'इन्[4] सर्वधातुभ्यः' इति इन्प्रत्ययः । बाहुलकत्वात्[5] मकारस्य वत्वं रेफलोपश्च । व्यत्ययेनान्तोदात्तत्वम् । उदतिष्ठः । उत्पूर्वादूर्ध्वकर्मवाचिनस्तिष्ठतेरात्मनेपदाभावः । विवस्वतः । विपूर्वाद्वसतेः संपदादिलक्षणो भावे क्विप् । 'तदस्यास्ति°' इति मतुप् । 'मादुपधायाश्च°' इति वत्वम् । मतुपोऽनुदात्तत्वाद्धातुस्वरः ॥

अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरन्ते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतुम् ॥ ४ ॥

अग्निः । नः । यज्ञम् । उप । वेतु । साधुऽया । अग्निम् । नरः । वि । भरन्ते । गृहेऽगृहे ।
अग्निः । दूतः । अभवत् । हव्यऽवाहनः । अग्निम् । वृणानाः । वृणते । कविऽक्रतुम् ॥ ४ ॥

ᵛसाधुया सर्वपुरुषार्थानां साधकः ᵛअग्निर्नो ᵛयज्ञम् अस्मदीयं यागं प्रति ᵛउप ᵛवेतु आगच्छतु । ᵛनरः मनुष्याः ᵛगृहेगृहे अनुगृहम् ᵛअग्निं ᵛवि ᵛभरन्ते विहरन्ति विहरणं कुर्वन्तीत्यर्थः । ᵛहव्यवाहनः हव्यानां हविषां वोढा ᵛअग्निर्दूतः देवानां दूतः ᵛअभवत् । ᵛवृणानाः संभजमानाः सन्तः ᵛकविक्रतुं क्रान्तयज्ञम् ᵛअग्निं ᵛवृणते संभजन्ते ॥ साधुया । 'सुपां सुलुक्°' इत्यादिना विभक्तेर्यादेशः ॥

---

१. च–°निमित्तात् । २. ख-च-झ-ण-त-न-भ-र–अग्निहोत्रार्थम् । ३. ख-च-झ-ण-न-भ-र–वासवतः । ४. ख-च-झ-ण-भ-र-श–विन् । ५. त–बाहुलकात् ।

तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।
त्वां गिरः सिन्धुमिवावनीर्महीरा पृणन्ति शवसा वर्धयन्ति च ॥ ५ ॥

तुभ्य । इदम् । अग्ने । मधुमत्ऽतमम् । वचः । तुभ्यम् । मनीषा । इयम् । अस्तु । शम् । हृदे ।
त्वाम् । गिरः । सिन्धुम्ऽइव । अवनीः । महीः । आ । पृणन्ति । शवसा । वर्धयन्ति । च ॥५॥

हे ᵛअग्ने ᵛतुभ्य तुभ्यं त्वदर्थं ᵛमधुमत्तमम् अत्यन्तं मधुरम् ᵛइदं ᵛवचः क्रियते । ᵛहृदे हृदि ᵛशं सुखं कुर्वती ᵛइयं ᵛमनीषा स्तुतिः ᵛतुभ्यम् ᵛअस्तु । ᵛगिरः स्तुतिरूपा वाचः ᵛत्वाम् ᵛआ ᵛपृणन्ति पूरयन्ति । ᵛशवसा बलेन ᵛवर्धयन्ति ᵛच । कथमिव । ᵛमहीः महत्यः ᵛअवनीः अवन्यः नद्यः ᵛसिन्धुमिव समुद्रमिव ॥

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥ ६ ॥

त्वाम् । अग्ने । अङ्गिरसः । गुहा । हितम् । अनु । अविन्दन् । शिश्रियाणम् । वनेऽवने ।
सः । जायसे । मथ्यमानः । सहः । महत् । त्वाम् । आहुः । सहसः । पुत्रम् । अङ्गिरः ॥ ६ ॥

हे ᵛअग्ने ᵛअङ्गिरसः ऋषयः ᵛगुहा गुहायां ᵛहितं निहितं निगूढं ᵛवनेवने वृक्षेवृक्षे ᵛशिश्रियाणम् आश्रितं ᵛत्वाम् ᵛअन्वविन्दन् अलभन्त । ᵛमहत् महता ᵛसहः सहसा बलेन युक्तः ᵛसः त्वं ᵛमथ्यमानः ᵛजायसे । हे ᵛअङ्गिरः अङ्गिरसां प्रकृतिभूत ᵛत्वां ᵛसहसः ᵛपुत्रम् ᵛआहुः ॥ शिश्रियाणम् । 'श्रिञ् सेवायाम्' । लिटः कानच् । शपः श्लुः । 'श्लौ' इति द्विर्वचनम् । इयङादेशः । चित्त्वादन्तोदात्तः ॥ ॥ ३ ॥

'प्राग्नये बृहते' इति षड्ृचं द्वादशं सूक्तं सुतंभरस्यार्षं त्रैष्टुभमाग्नेयम् । 'प्राग्नये' इत्यनुक्रान्तम् । प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तं विनियुक्तम् । सूत्रितं च— 'प्राग्नये बृहते प्र वेधसे कवये' (आश्व. श्रौ. ४. १३) इति[1] ॥

प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म ।
घृतं न यज्ञ आस्ये३ सुपूतं गिरं भरे वृषभाय प्रतीचीम् ॥ १ ॥

प्र । अग्नये । बृहते । यज्ञियाय । ऋतस्य । वृष्णे । असुराय । मन्म ।
घृतम् । न । यज्ञे । आस्ये । सुऽपूतम् । गिरम् । भरे । वृषभाय । प्रतीचीम् ॥ १ ॥

---

१. न—इति प्रातरनुवाकन्यायेनेति च ।

vबृहते सामर्थ्यातिशयेन महते vयज्ञियाय यज्ञार्हाय vऋतस्य उदकस्य vवृष्णे वर्षित्रे । ऋतमित्युदकनामसु पाठात् । vअसुराय बलवते ॥ असेरौणादिक उरन्प्रत्ययः ॥ vवृषभाय कामानां वर्षित्रे vअग्नये vमन्म ज्ञानसाधनं[1] vप्रतीचीम् अभिमुखीं vगिरं स्तुतिरूपां वाचं vप्र vभरे प्रणयामि । कथमिव । vसुपूतं सम्यक्संस्कृतम् vआस्ये प्रहुतं vयज्ञे vघृतं vन घृतमिव । आस्ये प्रहुतं घृतं यथा प्रीतिकरं भवति तथा प्रीतिकरीं स्तुतिमित्यर्थः ॥

**ऋतं चिकित्व ऋतमिच्चिकिद्ध्यृतस्य धारा अनु तृन्धि पूर्वीः ।**
**नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः ॥ २ ॥**

ऋतम् । चिकित्वः । ऋतम् । इत् । चिकिद्धि । ऋतस्य । धाराः । अनु । तृन्धि । पूर्वीः ।
न । अहम् । यातुम् । सहसा । न । द्वयेन । ऋतम् । सपामि । अरुषस्य । वृष्णः ॥ २ ॥

vऋतं स्तोत्रं हे vचिकित्वः जानन्नग्ने त्वं vऋतं मया क्रियमाणमिदं स्तोत्रं vचिकिद्धि जानीहि ॥ 'कित ज्ञाने'। जुहोत्यादिः । लोटि रूपम् । vइत् इति पूरणः । ऋतमिति पदस्य परस्मिन्नामन्त्रिते विद्यमानेऽपि छान्दसत्वात्पराङ्गवद्भावाभावः ॥ किंच vपूर्वीः बह्वीः vऋतस्य उदकस्य vधाराः सस्यपोषणार्थमुत्पादयितुम् vअनु vतृन्धि मेघाननुविध्य । vसहसा बलेन युक्तः vअहं vयातुं कर्मणां नाशकरीं हिंसां vन vसपामि न स्पृशामि न करोमीति यावत् । vद्वयेन च सत्यानृताभ्यां[2] यत्किंचिदवैदिकं कृत्यं vन सपामि ॥ 'षप समवाये' इति धातुः ॥ किंतु vअरुषस्य आरोचमानस्य[3] vवृष्णः कामानां वर्षितुस्तव vऋतं स्तोत्रमेव[4] सपामि ॥

**कया नो अग्न ऋतयन्नृतेन भुवो नवेदा उचथस्य नव्यः ।**
**वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः ॥ ३ ॥**

कया । नः । अग्ने । ऋतयन् । ऋतेन । भुवः । नवेदाः । उचथस्य । नव्यः ।
वेद । मे । देवः । ऋतुऽपाः । ऋतूनाम् । न । अहम् । पतिम् । सनितुः । अस्य । रायः ॥ ३ ॥

हे vअग्ने vऋतयन् सर्वप्राणिनां जीवनहेतुकमुदकं कुर्वन्[5] vकया केनापि vऋतेन सत्येन क्रियमाणेन कर्मणा vनः[6] vउचथस्य अस्मदीयस्य स्तोत्रस्य vनवेदाः ज्ञाता vभुवः भवेः । vनव्यः स्तुत्यः vऋतूनां vऋतुपाः । द्वितीयः[7] ऋतुशब्दोऽनुवादकः[7] । vदेवः द्योतमानोऽग्निः vमे मां vवेद वेत्तु । vसनितुः भजमानस्य vअस्य मम vरायः पश्वादिलक्षणस्य धनस्य[8] vपतिं स्वामिनं तमग्निम् vअहं vन जानामि ॥ भुवः । 'भू सत्तायाम्'। लिङर्थे लेटयडागमः । उवङादेशः । नवेदाः । न न वेत्तीति वेत्तीत्यस्मिन्नर्थे वर्तते । कथमेतल्लभ्यते । निपातनात् । द्विनञ्पूर्वस्यासुन्प्रत्ययान्तस्य वेदेरेकस्य

---

१. प-फ-ब–ज्ञानसाधनाम् । २. त–यष्टव्यानृताभ्याम् । ३. घ–रोचमानस्य । ४. ख-च-झ-ण-भ–स्तोत्रं च । ५. त–कुर्वंस्त्वम् । ६. ख-च-झ-ण-न-भ-र–'नः' नास्ति । ७. प-फ-ब–वसन्तादीनां पालकः । ८. ग-ज-ण-श–'धनस्य' नास्ति ।

नञो लोपोऽन्यस्य प्रकृतिभावश्च स्कन्दस्वामिना निपातितः। पाणिनिना तु 'नभ्राण्नपात्०' इति सूत्रे[1] न वेत्तीत्येतस्मिन्नर्थे[1] निपातितः। अस्यार्थस्यानुपपन्नत्वात् स्कन्दस्वामिपक्ष एवाश्रीयते ॥

के ते॑ अग्ने रि॒पवे॒ बन्ध॑नासः॒ के पा॒यवः॑ सनिषन्त द्यु॒मन्तः॑ ।

के धा॒सिम॑ग्ने॒ अनृ॑तस्य पान्ति॒ क आस॑तो॒ वच॑सः सन्ति गो॒पाः ॥ ४ ॥

के । ते॒ । अ॒ग्ने॒ । रि॒पवे॑ । बन्ध॑नासः । के । पा॒यवः॑ । स॒नि॒ष॒न्त॒ । द्यु॒ऽमन्तः॑ ।

के । धा॒सिम् । अ॒ग्ने॒ । अनृ॑तस्य । पा॒न्ति॒ । के । अस॑तः । वच॑सः । स॒न्ति॒ । गो॒पाः ॥ ४ ॥

हे ᵛअग्ने ये ᵛरिपवे स्वकीयस्य शत्रोः ᵛबन्धनासः बन्धकाः स्युः ᵛते त्वत्संबन्धिनस्ते पुरुषाः ᵛके कीदृशाः। सामर्थ्यातिशयादेवंविधा इति केनापि ज्ञातुं न शक्यन्त इत्यर्थः। ये ᵛपायवः जनानां रक्षितारः ᵛद्युमन्तः दीप्तिमन्तः ᵛसनिषन्त दीनेभ्यो धनं प्रयच्छन्ति ते[2] त्वदीयाः[2] कीदृशाः। ये ᵛअनृतस्य असत्यस्य ᵛधासिं धारकं जनं ᵛपान्ति रक्षन्ति ते त्वदीया जनाः ᵛके ᵛसन्ति। न केऽपीत्यर्थः। ये ᵛअसतः दुष्टस्याभिशापादिलक्षणस्य ᵛवचसः ᵛगोपाः गोपायितारः रक्षितारस्ते त्वदीयाः ᵛके सन्ति। न केऽपीत्यर्थः। अथवा ये के जना रिपोर्बन्धकाः। ये के पायवो रक्षितारः सनिषन्त धनं प्रयच्छन्ति द्युमन्तः दीप्तिमन्तः। ये[3] केऽनृतस्यासत्यस्य धासिं धारकं जनं पान्ति अनृतजनितपापात् परिहृत्य सन्मार्गप्रदानेन रक्षन्ति। ये केऽसतोऽभिशापादिलक्षणाद्वचसो गोपा गोपायितारः सन्ति ते सर्वे त्वदीयाः। त्वदुपासकाः[3] इत्यर्थः[4] ॥

सखा॑यस्ते॒ विषु॑णा अग्न ए॒ते शि॒वासः॒ सन्तो॒ अशि॑वा अभूवन् ।

अधू॑र्षत स्व॒यमे॒ते वचो॑भिर्ऋजूय॒ते वृ॑जि॒नानि॑ ब्रु॒वन्तः॑ ॥ ५ ॥

सखा॑यः । ते॒ । विषु॑णाः । अ॒ग्ने॒ । ए॒ते । शि॒वासः॑ । सन्तः॑ । अशि॑वाः । अ॒भू॒व॒न् ।

अधू॑र्षत । स्व॒यम् । ए॒ते । वचः॑ऽभिः । ऋ॒जु॒ऽय॒ते । वृ॒जि॒नानि॑ । ब्रु॒वन्तः॑ ॥ ५ ॥

हे ᵛअग्ने ᵛते तव ᵛसखायः स्तोतारः ᵛविषुणाः विप्रकीर्णाः सर्वत्र व्याप्ताः ᵛएते पूर्वम् ᵛअशिवाः परनिन्दादीनि[5] कुर्वाणास्त्वत्परिचर्यां त्यजन्तोऽभद्राः ᵛसन्तः इदानीं त्वत्परिचर्यां कुर्वन्तः ᵛशिवासः शिवा आढ्याः ᵛअभूवन्। किंच ये ᵛऋजूयते ऋजु सम्यगाचरतेऽपि मह्यं ᵛवचोभिः असाधूक्तिभिः ᵛवृजिनानि कुटिलानि ᵛब्रुवन्तः ते ᵛएते मम सपत्नाः ᵛस्वयम् एव ᵛअधूर्षत अहिंस्यन्त ॥ धूर्वतेर्हिंसाकर्मण इदं रूपम् ॥

---

१. ख-च-झ-ण-भ-र-सूत्रे भवतीत्येकस्मिन्नर्थे। २. ग-घ-ज-श-त्वदीयाः के। ३. ग-ज-प-फ-ये असतः दुष्टस्य अभिशापादिलक्षणस्य वचसः गोपाः गोपायितारः रक्षितारः के ते सन्ति न केऽपि। ४. ख-घ-च-झ-ण-न-भ-र-श-'इत्यर्थः' नास्ति। ५. ग-ज-श-परनिन्दादि।

यस्ते॑ अ॒ग्ने नम॑सा य॒ज्ञमीट्ट॑ ऋ॒तं स पा॑त्यरु॒षस्य॒ वृष्णः॑ ।

तस्य॒ क्षयः॑ पृ॒थुरा सा॒धुरे॑तु प्र॒सर्स्रा॑णस्य॒ नहु॑षस्य॒ शेषः॑ ॥ ६ ॥

यः । ते॒ । अ॒ग्ने॒ । नम॑सा । य॒ज्ञम् । ईट्टे॑ । ऋ॒तम् । सः । पा॒ति॒ । अ॒रु॒षस्य॑ । वृष्णः॑ ।

तस्य॑ । क्षयः॑ । पृ॒थुः । आ । सा॒धुः । ए॒तु॒ । प्र॒ऽसर्स्रा॑णस्य । नहु॑षस्य । शेषः॑ ॥ ६ ॥

हे ᵛअग्ने ᵛयः मनुष्यः ᵛयज्ञं यजनीयं ᵛते त्वां ᵛनमसा स्तोत्रेण ᵛईट्टे स्तौति । यद्वा । ते तुभ्यं यज्ञं यागं नमसान्नरूपेण हविषा ईट्टे यजति ॥ अस्मिन् पक्षे यजेः 'बहुलं छन्दसि' इति शपः श्लुः। 'श्लौ' इति द्विर्वचनम् । 'बहुलं छन्दसि' इति संप्रसारणम् । सवर्णदीर्घः । जकारस्य टकारः ॥ यः[1] ᵛअरुषस्य रोचमानस्य ᵛवृष्णः कामानां वर्षितुरग्नेः ᵛऋतं स्तोत्रं ᵛपाति रक्षति ᵛतस्य यजमानस्य ᵛक्षयः गृहं ᵛपृथुः विस्तीर्णं भवति । पश्वादिलक्षणैर्धनैः संपूर्णं भवतीत्यर्थः । ᵛप्रसर्स्राणस्य प्रकर्षेण त्वत्परिचर्यां[2] गच्छतः ᵛनहुषस्य मनुष्यस्य ᵛसाधुः कामानां साधकः ᵛशेषः । शिष्यत इति शेषः । पुत्रः ᵛआ[3] ᵛएतु आगच्छतु भवत्वित्यर्थः[3] ॥ ॥ ४ ॥

'अर्चन्तस्त्वा' इति षड्चं त्रयोदशं सूक्तं सुतंभरस्यार्षं गायत्रमाग्नेयम् । अनुक्रान्तं च— 'अर्चन्तो गायत्रं तु' इति। प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि आश्विनशस्त्रे[4] इदमादिके द्वे सूक्ते। सूत्रितं च—'अर्चन्तस्त्वेति सूक्ते' (आश्व. श्रौ. ४. १३) इति। आहवनीयोपस्थाने 'त्वमग्ने सप्रथा असि' इत्येका । सूत्रितं च—'सं नः सृज सुमत्या वाजवत्या त्वमग्ने सप्रथा असीति च' (आश्व. श्रौ. ३. १०) इति । अश्वमेधे पौष्णेष्टौ[5] 'त्वमग्ने सप्रथाः' इति प्रथमाज्यभागानुवाक्या । 'त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वन्तौ' (आश्व. श्रौ. १०. ६) इति ॥

अर्च॑न्तस्त्वा हवाम॒हेऽर्च॑न्तः॒ समि॑धीमहि । अग्ने॒ अर्च॑न्त ऊ॒तये॑ ॥ १ ॥

अर्च॑न्तः । त्वा॒ । ह॒वा॒म॒हे॒ । अर्च॑न्तः । सम् । इ॒धी॒म॒हि॒ । अग्ने॑ । अर्च॑न्तः । ऊ॒तये॑ ॥ १ ॥

हे ᵛअग्ने ᵛत्वा त्वाम् ᵛअर्चन्तः पूजयन्तो वयं ᵛहवामहे आह्वयामः । ᵛअर्चन्तः स्तुवन्तो वयम् ᵛऊतये रक्षणाय तर्पणाय वा त्वां ᵛसमिधीमहि समिद्भिः संदीपयामः । अर्चन्त इति तृतीयं पदम् आदरातिशयार्थम् ॥

अ॒ग्नेः स्तोमं॑ मनामहे सि॒ध्रम॒द्य दि॑वि॒स्पृशः॑ । दे॒वस्य॑ द्रवि॒ण॒स्यवः॑ ॥ २ ॥

अ॒ग्नेः । स्तोम॑म् । म॒ना॒म॒हे॒ । सि॒ध्रम् । अ॒द्य । दि॒वि॒ऽस्पृशः॑ । दे॒वस्य॑ । द्र॒वि॒ण॒स्यवः॑ ॥ २ ॥

ᵛद्रविणस्यवः द्रविणं धनमिच्छन्तो वयं ᵛदिविस्पृशः सूर्यरूपेणाकाशं व्याप्नुवतः ᵛदेवस्य द्योतमानस्य ᵛअग्नेः ᵛसिध्रं पुरुषार्थानां साधकं ᵛस्तोमं स्तोत्रम् ᵛअद्य अस्मिन्नहनि ᵛमनामहे ब्रूमः ॥

---

१. ख-च-झ-ण-न-भ-र-सः । २. ग-घ-ज-श-परिचर्याम् । ३. ख-घ-च-झ-ण-त-न-भ-र-श- ऐति आगच्छति भवतीत्यर्थः; ग-ज-ऐतु आगच्छतु भवतीत्यर्थः । ४. झ-र-आश्विनशस्त्रे स (? च) । ५. ख-झ-न-भ-र-श-पौष्ण्येष्टौ ।

अ॒ग्निर्जु॑षत नो॒ गिरो॒ होता॒ यो मानु॑षे॒ष्वा । स य॑क्ष॒द्दैव्यं॒ जन॑म् ॥ ३ ॥

अ॒ग्निः । जु॒ष॒त॒ । नः॒ । गिरः॑ । होता॑ । यः । मानु॑षेषु । आ । सः । य॒क्ष॒त् । दैव्य॑म् । जन॑म् ॥३॥

ᵛहोता देवानामाह्वाता ᵛयः ᵛअग्निः ᵛमानुषेष्वा वसति ᵛसः अग्निः ᵛनः अस्माकं ᵛगिरः स्तुतीः ᵛजुषत सेवताम् । सोऽग्निः ᵛदैव्यं ᵛजनं देवसंबन्धिनं जनं ᵛयक्षत् यजतु ॥

त्वम॑ग्ने स॒प्रथा॑ असि॒ जुष्टो॒ होता॒ वरे॑ण्यः । त्वया॑ य॒ज्ञं वि त॑न्वते ॥ ४ ॥

त्वम् । अ॒ग्ने॒ । स॒ऽप्रथाः॑ । अ॒सि॒ । जुष्टः॑ । होता॑ । वरे॑ण्यः । त्वया॑ । य॒ज्ञम् । वि । त॒न्व॒ते॒ ॥४॥

हे ᵛअग्ने ᵛजुष्टः सर्वदा प्रीतः ᵛवरेण्यः सर्वैर्वरणीयः ᵛहोता ᵛत्वं ᵛसप्रथाः सर्वतः पृथुः ᵛअसि भवसि । तथाह यास्कः—'सप्रथाः सर्वतः पृथुः' ( निरु. ६. ७ ) इति । किंच सर्वे[1] यजमानाः[1] ᵛत्वया साधनेन ᵛयज्ञं ᵛवि ᵛतन्वते ॥

त्वाम॑ग्ने वाज॒सात॑मं॒ विप्रा॑ वर्धन्ति॒ सुष्टु॑तम् । स नो॑ रास्व सु॒वीर्य॑म् ॥ ५ ॥

त्वाम् । अ॒ग्ने॒ । वा॒ज॒ऽसात॑मम् । विप्राः॑ । व॒र्धन्ति॒ । सुऽस्तु॑तम् । सः । नः॒ । रा॒स्व॒ । सु॒ऽवीर्य॑म् ॥ ५ ॥

हे ᵛअग्ने ᵛविप्राः मेधाविनः स्तोतारः ᵛवाजसातमम् । वाजोऽन्नम् । तद्दतं ᵛसुष्टुतं पूर्वैः महर्षिभिः सम्यक् स्तुतं ᵛत्वां ᵛवर्धन्ति । स्तोत्रैर्वर्धयन्ति । ᵛसः त्वं ᵛनः अस्मभ्यं ᵛसुवीर्यं सर्वैः श्लाघनीयं बलं ᵛरास्व देहि ॥

अग्ने॑ ने॒मिर॒राँइ॑व दे॒वांस्त्वं प॑रि॒भूर॑सि । आ राध॑श्चि॒त्रमृ॑ञ्जसे ॥ ६ ॥

अग्ने॑ । ने॒मिः । अ॒रान्ऽइ॑व । दे॒वान् । त्वम् । प॒रि॒ऽभूः । अ॒सि॒ ।

आ । राधः॑ । चि॒त्रम् । ऋ॒ञ्ज॒से॒ ॥ ६ ॥

हे ᵛअग्ने ᵛत्वं ᵛदेवान् ᵛपरिभूरसि । स्वतेजसा परिभवसि । कथमिव । ᵛनेमिः प्रकाशमानः चक्रस्य बाह्यो वलयः ᵛअरानिव नाभावर्पितान् सूक्ष्मान् स्थासकानिव । किंच त्वं[2] ᵛचित्रं नानाविधं ᵛराधः । राध्नुवन्ति साधयन्त्यनेन पुरुषार्थानिति राधो धनम् । ᵛआ ᵛऋञ्जसे । स्तोतृभ्यः प्रसाधय । धननामसु पाठात् 'राधो धनम्' इत्युक्तम् ॥ ॥ ५ ॥

'अग्निं स्तोमेन' इति षडृचं चतुर्दशं सूक्तं सुतंभरस्य आर्षं[3] गायत्रमाग्नेयम् । 'अग्निं स्तोमेन' इत्यनुक्रमणिका । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

अ॒ग्निं स्तोमे॑न बोधय समिधा॒नो अम॑र्त्यम् । ह॒व्या दे॒वेषु॑ नो दधत् ॥ १ ॥

अ॒ग्निम् । स्तोमे॑न । बो॒ध॒य॒ । स॒म्ऽइ॒धा॒नः । अम॑र्त्यम् । ह॒व्या । दे॒वेषु॑ । नः॒ । द॒ध॒त् ॥ १ ॥

---

१. ख-च-झ-ण-न-भ- यजमानाः सर्वे । २. ख-घ-च-झ-ण-न-भ-र-'त्वं' नास्ति । ३. त-आर्षेयम् ।

हे स्तोतः ᵛअमर्त्यम् अमरणधर्माणम्[1] ᵛअग्निं ᵛस्तोमेन स्तोत्रेण ᵛबोधय। स्वाभिलषितार्थसिद्धये प्रबोधय। योऽग्निः ᵛसमिधानः स्तोत्रैः सम्यक् प्रकाशमानः सः ᵛनः ᵛहव्या अस्मदीयानि हव्यानि हवींषि ᵛदेवेषु ᵛदधत् निदधातु ॥

तमध्वरेष्वीळते देवं मर्ता अमर्त्यम्। यजिष्ठं मानुषे जने ॥ २ ॥

तम्। अध्वरेषु। ईळते। देवम्। मर्ताः। अमर्त्यम्। यजिष्ठम्। मानुषे। जने ॥ २ ॥

ᵛमर्ताः मनुष्याः ᵛदेवं द्योतमानम् ᵛअमर्त्यम् अमरणधर्माणं ᵛमानुषे मनुष्याणां संबन्धिनि ᵛजने लोके ᵛयजिष्ठं यष्टृतमं ᵛतम् अग्निम् ᵛअध्वरेषु सप्ततन्तुषु ᵛईळते स्तुवन्ति ॥

तं हि शश्वन्त ईळते स्रुचा देवं घृतश्चुता। अग्निं हव्याय वोळ्हवे ॥ ३ ॥

तम्। हि। शश्वन्तः। ईळते। स्रुचा। देवम्। घृतऽश्चुता। अग्निम्। हव्याय। वोळ्हवे ॥ ३ ॥

ᵛशश्वन्तः बहवः स्तोतारः ᵛतं ᵛदेवम्[2] ᵛअग्निम् ᵛईळते स्तुवन्ति। कीदृशास्ते। ᵛघृतश्चुता घृतं क्षरन्त्या ᵛस्रुचा सहिताः। किमर्थं स्तुवन्ति। ᵛहव्याय हव्यवहनार्थं चरुपुरोडाशादिलक्षणं हविः ᵛवोढवे वोढुम्[3] ॥

अग्निर्जातो अरोचत घ्नन्दस्यूञ्ज्योतिषा तमः। अविन्दद्गा अपः स्वः ॥ ४ ॥

अग्निः। जातः। अरोचत। घ्नन्। दस्यून्। ज्योतिषा। तमः।

अविन्दत्। गाः। अपः। स्वरिति स्वः ॥ ४ ॥

ᵛजातः अरण्योर्मथनेन प्रादुर्भूतः ᵛअग्निः ᵛदस्यून् यज्ञविघ्नकारिणः शत्रून् ᵛघ्नन् हिंसन् ᵛज्योतिषा स्वेन तेजसा ᵛतमः घ्नन् ᵛअरोचत अदीप्यत। किंच ᵛगा ᵛअपः उदकानि ᵛस्वः सूर्यं च ᵛअविन्दत् अवेदयत् ॥

अग्निमीळेन्यं कविं घृतपृष्ठं सपर्यत। वेतु मे शृणवद्धवम् ॥ ५ ॥

अग्निम्। ईळेन्यम्। कविम्। घृतऽपृष्ठम्। सपर्यत। वेतु। मे। शृणवत्। हवम् ॥ ५ ॥

हे जनाः ᵛईळेन्यं स्तुत्यं ᵛकविं क्रान्तदर्शिनं ᵛघृतपृष्ठं दीप्तोपरिभागम् ᵛअग्निं ᵛसपर्यत पूजयत। सोऽग्निः ᵛमे ᵛहवं मदीयमाह्वानं ᵛवेतु कामयताम्। ᵛशृणवत् शृणोतु च ॥

अग्निं घृतेन वावृधुः स्तोमेभिर्विश्वचर्षणिम्। स्वाधीभिर्वचस्युभिः ॥ ६ ॥

अग्निम्। घृतेन। ववृधुः। स्तोमेभिः। विश्वऽचर्षणिम्। सुऽआधीभिः। वचस्युऽभिः ॥ ६ ॥

१. त-अमरणम्। २. त-एतम्। ३. प-फ-ब-वोढुम्। हि पूरणः।

ऋत्विजः vविश्वचर्षणिं विश्वस्य द्रष्टारं vस्वाधीभिः शोभनाध्यानैः vवचस्युभिः स्तुतिकामैर्देवैः समेतम् vअग्निं vघृतेन vस्तोमेभिः स्तोमैः स्तोत्रैः vववृधुः अवर्धयन् ॥ ॥ ६ ॥ ॥ १ ॥

द्वितीयेऽनुवाके अष्टादश[1] सूक्तानि । तत्र ‘ प्र वेधसे ’ इति पञ्चर्चं प्रथमं सूक्तमाङ्गिरसस्य धरुणस्यार्षं त्रैष्टुभमाग्नेयम् । अत्रानुक्रमणिका—‘ प्र वेधसे पञ्चाङ्गिरसो धरुणः ’ इति । प्रातरनुवाके आग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—‘ प्र वेधसे कवये त्वं नो अग्ने वरुणस्य विद्वान् ’ ( आश्व. श्रौ. ४. १३ ) इति[2] ॥

प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय ।
घृतप्रसत्तो असुरः सुशेवो रायो धर्ता धरुणो वस्वो अग्निः ॥ १ ॥

प्र । वेधसे । कवये । वेद्याय । गिरम् । भरे । यशसे । पूर्व्याय ।
घृतऽप्रसत्तः । असुरः । सुऽशेवः । रायः । धर्ता । धरुणः । वस्वः । अग्निः ॥ १ ॥

यः vअग्निः vघृतप्रसत्तः हवीरूपेण घृतेन प्रसन्नः vअसुरः बलवान् vसुशेवः । शोभनं शेवं सुखं यस्यासौ सुशेवः । शेवमिति सुखनामसु पाठात् । vरायः धनस्य vधर्ता पोषकः vधरुणः हविषां धारकः vवस्वः वासकः अग्निः भवति vवेधसे विधात्रे vकवये क्रान्तदर्शे vवेद्याय स्तुत्याय ॥ विदिरयं मनिना समानार्थो मनिश्च स्तुतिकर्मा ॥ vयशसे यशस्विने vपूर्व्याय मुख्याय तस्मा अग्नये vगिरं स्तुतिं vप्र vभरे प्रणयानि ॥

ऋतेन ऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन् ।
दिवो धर्मन्धरुणे सेदुषो नॄञ्जातैरजाताँ अभि ये ननक्षुः ॥ २ ॥

ऋतेन । ऋतम् । धरुणम् । धारयन्त । यज्ञस्य । शाके । परमे । विऽओमन् ।
दिवः । धर्मन् । धरुणे । सेदुषः । नॄन् । जातैः । अजातान् । अभि । ये । ननक्षुः ॥ २ ॥

vये यजमानाः vदिवः द्युलोकस्य vधरुणे धारके vधर्मन् यज्ञे vसेदुषः आसीनान् vनॄन् नेतॄन् vअजातान् देवान् vजातैः मनुष्यैर्ऋत्विग्भिः vअभि vननक्षुः अभिप्राप्नुवन्ति ते यजमानाः vयज्ञस्य vधरुणं धारकम् vऋतं सत्यरूपमग्निं vशाके कर्मणि निमित्ते vपरमे उत्कृष्टे vव्योमन् स्थाने उत्तरवेद्याम् vऋतेन स्तोत्रेण vधारयन्त धारयन्ति ॥

अंहोयुवस्तन्वस्तन्वते वि वयो महद्दुष्टरं पूर्व्याय ।
स संवतो नवजातस्तुतुर्यात्सिंहं न क्रुद्धमभितः परि ष्ठुः ॥ ३ ॥

अंहःऽयुवः । तन्वः । तन्वते । वि । वयः । महत् । दुस्तरम् । पूर्व्याय ।
सः । सम्ऽवतः । नवऽजातः । तुतुर्यात् । सिंहम् । न । क्रुद्धम् । अभितः । परि । स्थुः ॥ ३ ॥

---

१. ग-ज-श-दश । २. झ-त-र- इतीति ।

ये[1] यजमानाः ᵛपूर्व्याय मुख्यायास्मा अग्नये ᵛमहत् अधिकं ᵛदुष्टरं राक्षसैर्दुष्प्रापं ᵛवयः हवीरूपमन्नं प्रयच्छन्ति ते यजमानाः ᵛतन्वः स्वास्तनूः ᵛअंहोयुवः अंहसा वियोजिकाः ᵛवि ᵛतन्वते विस्तारयन्ति । ᵛनवजातः ᵛसः अग्निः ᵛसंवतः संगतान् शत्रून् ᵛतुतुर्यात् तरतु । किंच ᵛअभितः सर्वतो वर्तमानाः शत्रवो मां ᵛपरि वर्जयित्वा ᵛस्थुः तिष्ठेयुः । कथमिव । मृगाः ᵛक्रुद्धं ᵛसिंहं ᵛन सिंहमिव ॥

**मातेव यद्भरसे पप्रथानो जनंजनं धायसे चक्षसे च ।**

**वयोवयो जरसे यद्दधानः परि त्मना विषुरूपो जिगासि ॥ ४ ॥**

माताऽइव । यत् । भरसे । पप्रथानः । जनम्ऽजनम् । धायसे । चक्षसे । च ।

वयःऽवयः । जरसे । यत् । दधानः । परि । त्मना । विषुऽरूपः । जिगासि ॥ ४ ॥

ᵛपप्रथानः सर्वत्र प्रथमानः ᵛयत् यस्त्वं ᵛमातेव जननीव ᵛजनंजनं सर्वं जनं ᵛभरसे बिभर्षि । किंच ᵛधायसे धारणाय ᵛचक्षसे दर्शनाय ᵛच सर्वैः प्रार्थ्यसे। ᵛयत् यदा ᵛदधानः धार्यमाणो भवसि तदा ᵛवयोवयः सर्वमन्नं ᵛजरसे जरयसि । अपि च ᵛविषुरूपः नानारूपः सन् ᵛत्मना आत्मना ᵛपरि ᵛजिगासि सर्वभूतानि परिगच्छसि ॥

**वाजो नु ते शवसस्पात्वन्तमुरुं दोघं धरुणं देव रायः ।**

**पदं न तायुर्गुहा दधानो महो राये चितयन्नत्रिमस्पः ॥ ५ ॥**

वाजः । नु । ते । शवसः । पातु । अन्तम् । उरुम् । दोघम् । धरुणम् । देव । रायः ।

पदम् । न । तायुः । गुहा । दधानः । महः । राये । चितयन् । अत्रिम् । अस्परित्यस्पः ॥५॥

हे ᵛदेव द्योतमानाग्ने[2] ᵛउरुं पृथुं ᵛदोघं कामानां दोग्धारं ᵛरायः धनस्य ᵛधरुणं धारकं ᵛवाजः हविर्लक्षणमन्नं ᵛते त्वदीयस्य ᵛशवसः बलस्य ᵛअन्तं समाप्तिं संपूर्तिं ᵛनु अद्य ᵛपातु रक्षतु । ᵛतायुः[3] ᵛन तस्करो यथा ᵛगुहा गुहायां ᵛपदं द्रव्यं ᵛदधानः धारयन् रक्षति तद्वत्[3] ᵛमहः महते ᵛराये धनाय धनलाभार्थं ᵛचितयन् सन्मार्गं प्रकाशयन् ᵛअत्रिमस्पः । अत्रिमृषिमप्रीणयः । यद्वा[4] तमापद्भ्योऽपारयः[4] ॥ ' स्पृ प्रीणनपारणयोः ' इति धातुः ॥  ॥ ७ ॥

' बृहद्वयः ' इति पञ्चर्चं द्वितीयं सूक्तमात्रेयस्य पूरोरार्षम् । अन्त्या पङ्क्तिः शिष्टा अनुष्टुभः । अग्निर्देवता । तथा चानुक्रान्तं—' बृहत्पूरुः[5] पङ्क्त्यन्तं हि ' इति । प्रातरनुवाके आग्नेये क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चेदमादीनि दश सूक्तानि चतुर्थनवमवर्जितानि । आदितस्त्रिषु सूक्तेष्वन्त्या-

---

१. ख-च-झ-ण-भ-र-श- हे । २. त-द्योतमानरूपाग्ने । ३. ख-च-झ-ण-त-न-भ-र-श–तायुस्तस्करः । तायुरिति स्तेननाम । पदमिव आत्मीयं मार्गमिव गुहा गुहायां दधानः आत्मनः शत्रूणां प्रकाशं निदधानः । ४. ग-घ-ज-' यद्वा...अपारयः ' नास्ति । ५. झ-न-र–बृहत्पुरुः ।

मुद्धरेत् । तथा च सूत्रितं—' बृहद्वय इति दशानां चतुर्थनवमे उद्धरेदुत्तमामुत्तमां चादितस्त्रयाणाम् ' ( आश्व. श्रौ. ४. १३ ) इति[1] ॥

बृहद्वयो हि भानवेऽर्चा देवायाग्नये ।
यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥ १ ॥

बृहत् । वयः । हि । भानवे । अर्च । देवाय । अग्नये ।
यम् । मित्रम् । न । प्रशस्तिऽभिः । मर्तासः । दधिरे । पुरः ॥ १ ॥

यज्ञे भानवे दीप्तिमते अग्नये बृहद्वयः हवीरूपमन्नं दीयते हि । अतस्त्वमपि देवाय द्योतमानाय अग्नये वयः अर्च प्रयच्छ । मर्तासः मनुष्याः यम् अग्निं मित्रं न सखायमिव प्रशस्तिभिः प्रकृष्टाभिः स्तुतिभिः पुरः दधिरे पुरस्कुर्वन्ति ।

स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः ।
वि हव्यमग्निरानुषग्भगो न वारमृण्वति ॥ २ ॥

सः । हि । द्युऽभिः । जनानाम् । होता । दक्षस्य । बाह्वोः ।
वि । हव्यम् । अग्निः । आनुषक् । भगः । न । वारम् । ऋण्वति ॥ २ ॥

यः अग्निः हव्यं हविः[2] आनुषक् देवेष्वनुषक्तं करोति बाह्वोः भुजयोः दक्षस्य बलस्य द्युभिः द्युतिभिर्युक्तः सः अग्निः जनानां यजमानानां होता देवानामाह्वाता भवति । भगो न सूर्य इव वारं वरणीयं धनं वि ऋण्वति विशेषेण प्रयच्छति मनुष्येषु ॥

अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः ।
विश्वा यस्मिन्तुविष्वणि समर्ये शुष्ममादधुः ॥ ३ ॥

अस्य । स्तोमे । मघोनः । सख्ये । वृद्धऽशोचिषः ।
विश्वा । यस्मिन् । तुविऽस्वनि । सम् । अर्ये । शुष्मम् । आऽदधुः ॥ ३ ॥

मघोनः मघवतो धनवतः वृद्धशोचिषः । वृद्धानि प्रवृद्धानि[3] शोचींषि तेजांसि यस्यासौ वृद्धशोचिः । तस्यैवंविधस्याग्नेः स्तोमे स्तोत्रे सख्ये च स्याम[4] । तुविष्वणि बहुशब्दे अर्ये स्वामिनि यस्मिन् अग्नौ विश्वा ॥ ' सुपां सुलुक्° ' इति डादेशः ॥ विश्वे सर्वे ऋत्विजः शुष्मं बलं हविर्भिः स्तोत्रैश्च सम् आदधुः सम्यगादधति ॥

---

१. न–इति प्रातरनुवाकन्यायेनेति च । २. प-फ-ब–हविः । हि पूरणः । ३. घ-श–' प्रवृद्धानि ' नास्ति । ४. त–स्याम । वयमिति शेषः ।

अधा ह्यग्न एषां सुवीर्यस्य मंहना ।
तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः ॥ ४ ॥

अध । हि । अग्ने । एषाम् । सुऽवीर्यस्य । मंहना ।
तम् । इत् । यह्वम् । न । रोदसी इति । परि । श्रवः । बभूवतुः ॥ ४ ॥

हे ᵛअग्ने ᵛअध[1] अथ ᵛएषाम् अस्माकं यजमानानां ᵛसुवीर्यस्य सर्वैः स्पृहणीयस्य बलस्य ᵛमंहना मंहनायै दानाय भव ॥ मंहतिर्दानकर्मा ॥ ᵛरोदसी द्यावापृथिव्यौ ᵛयह्वं ᵛन महान्तं सूर्यमिव ᵛश्रवः सर्वैः श्रवणीयं[2] ᵛतमित् तमग्निमेव ᵛपरि ᵛबभूवतुः परिगृह्णीतः ॥

नू न एहि वार्यमग्ने गृणान आ भर ।
ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे ॥ ५ ॥

नु । नः । आ । इहि । वार्यम् । अग्ने । गृणानः । आ । भर ।
ये । वयम् । ये । च । सूरयः । स्वस्ति । धामहे । सचा । उत । एधि । पृत्ऽसु । नः । वृधे ॥५॥

हे ᵛअग्ने ᵛगृणानः स्तूयमानः सन् ᵛनु क्षिप्रम् ᵛएहि । यज्ञं प्रत्यागच्छ । आगत्य च ᵛनः अस्मभ्यं ᵛवार्यं वरणीयं धनम् ᵛआ ᵛभर संपादय । ᵛये ᵛवयं यजमानाः ᵛये ᵛच ᵛसूरयः स्तोतारः ᵛसचा हविर्भिः सहिता उभे ये वयं ᵛस्वस्ति स्तोत्रं ᵛधामहे कुर्मः । ᵛउत अपि च ᵛपृत्सु पृतनासु ᵛनः अस्माकं ᵛवृधे समृद्धये ᵛएधि भव ॥ ॥ ८ ॥

'आ यज्ञैः' इति पञ्चर्चं तृतीयं सूक्तमात्रेयस्य पूरोरार्षमाग्नेयम् । अन्त्या पङ्क्तिः शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः । 'आ यज्ञैः' इत्यनुक्रमणिका । अन्त्यावर्जं प्रातरनुवाकाश्विनशस्त्रयोः 'बृहद्वयः' इत्यादिदशसूक्तमध्ये विनियोग उक्तः ॥

आ यज्ञैर्देव मर्त्य इत्था तव्यांसमूतये ।
अग्निं कृते स्वध्वरे पूरुरीळीतावसे ॥ १ ॥

आ । यज्ञैः । देव । मर्त्यः । इत्था । तव्यांसम् । ऊतये ।
अग्निम् । कृते । सुऽअध्वरे । पूरुः । ईळीत । अवसे ॥ १ ॥

हे ᵛदेव ᵛमर्त्यः मनुष्य ऋत्विक् ᵛइत्था इत्थं ᵛतव्यांसं स्वतेजोभिः प्रवृद्धम् ᵛअग्निम् ᵛऊतये तर्पणाय ᵛयज्ञैः स्तोत्रैः ᵛआ ह्वयति । किंच ᵛपूरुः मनुष्यः स्तोता ᵛकृते ᵛस्वध्वरे शोभने क्रतौ तम् अग्निम् ᵛअवसे रक्षणाय ᵛईळीत स्तौति ॥

---

१. प-फ-ब–अध हि । २. ख-च-झ-ण-न-भ-र-श–श्रयणीयम् ।

**अस्य हि स्वयशस्तर आसा विधर्मन्मन्यसे ।**
**तं नाकं चित्रशोचिषं मन्द्रं परो मनीषया ॥ २ ॥**

अस्य । हि । स्वयशःऽतरः । आसा । विऽधर्मन् । मन्यसे ।
तम् । नाकम् । चित्रऽशोचिषम् । मन्द्रम् । परः । मनीषया ॥ २ ॥

हे vविधर्मन् । विशिष्टो धर्मो यस्यासौ विधर्मा स्तोता । तस्य संबोधनम् । हे स्तोतः vस्वयशस्तरः सुयशसां मध्येऽतिशयेन सुयशास्त्वं vमनीषया प्रकृष्टबुद्ध्या[1] साधनेन vतं प्रसिद्धम् vअस्य अमुं vहि अग्निम् vआसा आस्येन वाचा vमन्यसे स्तौषि । किंविशिष्टमग्निम् । vनाकं सुखम् । अकं दुःखम् । न विद्यतेऽकं यस्य सः । तं vचित्रशोचिषं चित्रतेजसं vमन्द्रं स्तुत्यं vपरः परस्तात् स्थितम् ॥

**अस्य वासा उ अर्चिषा य आयुक्त तुजा गिरा ।**
**दिवो न यस्य रेतसा बृहच्छोचन्त्यर्चयः ॥ ३ ॥**

अस्य । वै । असौ । ॐ इति । अर्चिषा । यः । अयुक्त । तुजा । गिरा ।
दिवः । न । यस्य । रेतसा । बृहत् । शोचन्ति । अर्चयः ॥ ३ ॥

vयः अग्निः vतुजा जगद्रक्षणसमर्थेन बलेन vगिरा स्तुत्या vअयुक्त संबद्धो भवति[2] vदिवो vन द्योतमानस्यादित्यस्येव vयस्य अग्नेः vरेतसा प्रभया कृत्स्नं जगद्व्याप्तं यस्याग्नेः vबृहत् बृहन्तः vअर्चयः दीप्तयः vशोचन्ति प्रकाशन्ते vअस्य vवै खल्वग्नेः vअर्चिषा प्रभया vअसौ आदित्यः अर्चिष्मान् भवति । vउ इति पूरणः ॥

**अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ आ ।**
**अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते ॥ ४ ॥**

अस्य । क्रत्वा । विऽचेतसः । दस्मस्य । वसु । रथे । आ ।
अध । विश्वासु । हव्यः । अग्निः । विक्षु । प्र । शस्यते ॥ ४ ॥

vविचेतसः सुमतय ऋत्विजः vदस्मस्य[3] दर्शनीयस्य vअस्य[4] अग्नेः vक्रत्वा कर्मणा यज्ञादिना vवसु वसूनि धनानि vरथे vआ दधति । vहव्यः यज्ञार्थमाह्वातव्यः सः vअग्निः vअध अथ उत्पत्त्यनन्तरमेव vविश्वासु सर्वासु vविक्षु प्रजासु vप्र vशस्यते स्तूयते ॥

---

१. ख-च-झ-ण-न-भ-र—प्रकृष्टया । २. ख-च-झ-ण-त-न-भ-र-श—अभवत् । ३. ग-घ-ज—अस्य दस्मस्य । ४. ख-ग-घ-च-ज-झ-ण-न-भ-श—'अस्य' नास्ति ।

नू न इद्धि वार्यमासा सचन्त सूरयः ।
ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय उतैधि पृत्सु नो वृधे ॥ ५ ॥

नु । नः । इत् । हि । वार्यम् । आसा । सचन्त । सूरयः ।
ऊर्जः । नपात् । अभिष्टये । पाहि । शग्धि । स्वस्तये । उत । एधि । पृत्ऽसु । नः । वृधे ॥ ५ ॥

हे अग्ने ᵛनः अस्मभ्यं ᵛवार्यं वरणीयं धनं ᵛनु क्षिप्रं प्रयच्छ[1] । ᵛइद्धि इति पूरणौ । यतः ᵛसूरयः स्तोतारस्त्वत्तः सकाशात् ᵛआसा आस्येन स्तोत्रेण ᵛसचन्त धनं लभन्ते । किंच हे ᵛऊर्जो ᵛनपात् अन्नस्य न पातयितः बलस्य पुत्र वा ᵛअभिष्टये अभीच्छते मह्यमन्नं प्रयच्छेति शेषः । ᵛपाहि । अस्मानापद्भ्यो रक्ष । ᵛस्वस्तये क्षेमाय पश्वादिलक्षणस्य धनस्य क्षेमार्थं ᵛशग्धि त्वां याचे ॥ व्यत्ययेन मध्यमः ॥ शक्तो भवेति वा । हे अग्ने ᵛउत अपि च ᵛपृत्सु पृतनासु ᵛनो ᵛवृधे समृद्धये ᵛएधि भव ॥　　॥ ९ ॥

'प्रातरग्निः' इति पञ्चर्चं चतुर्थं सूक्तम् । अत्रेयमनुक्रमणिका—'प्रातर्मृक्तवाहा[2] द्वितः' इति । मृक्तवाहा इति विशेषणविशिष्ट आत्रेयो द्वित ऋषिः । 'पङ्क्त्यन्तं हि' इति हिशब्दादस्यापि सूक्तस्य पञ्चमी पङ्क्तिः । पङ्क्त्यन्तपरिभाषया शिष्टा अनुष्टुभः । उक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः ॥

प्रातरग्निः पुरुप्रियो विशः स्तवेतातिथिः ।
विश्वानि यो अमर्त्यो हव्या मर्तेषु रण्यति ॥ १ ॥

प्रातः । अग्निः । पुरुऽप्रियः । विशः । स्तवेत । अतिथिः ।
विश्वानि । यः । अमर्त्यः । हव्या । मर्तेषु । रण्यति ॥ १ ॥

ᵛपुरुप्रियः बहुप्रियः ᵛविशः यजमाने धनस्य निवेशकः ᵛअतिथिः । यजमानानां गृहान्प्रति तिथिष्वभ्येतीत्यतिथिः । तथाह यास्कः—'अतिथिरभ्यतितो गृहान्भवत्यभ्येति तिथिषु परकुलानीति वा परगृहाणीति वा' ( निरु. ४. ५ ) इति । एवंविधः ᵛअग्निः ᵛप्रातः ᵛस्तवेत स्तूयते । ᵛअमर्त्यः अमरणधर्मा ᵛयः अग्निः ᵛमर्तेषु मनुष्येषु यजमानेषु स्थितानि ᵛविश्वानि सर्वाणि ᵛहव्या हव्यानि हवींषि ᵛरण्यति कामयते ॥

द्विताय मृक्तवाहसे स्वस्य दक्षस्य मंहना ।
इन्दुं स धत्त आनुषक्स्तोता चित्ते अमर्त्य ॥ २ ॥

द्विताय । मृक्तऽवाहसे । स्वस्य । दक्षस्य । मंहना ।
इन्दुम् । सः । धत्ते । आनुषक् । स्तोता । चित् । ते । अमर्त्य ॥ २ ॥

---

१. ग-घ-ज-यच्छ । २. ख-च-झ-ण-त-न-भ-र-आ यज्ञैः प्रातर्मृक्तवाहा ।

हे अग्ने ᵛद्वितस्य द्वितपुत्राय ᵛमृक्तवाहसे। मृक्तं शुद्धं हविर्देवेभ्यो वहति प्रापयतीति मृक्तवाहाः। तस्मै ᵛस्वस्य आत्मीयस्य ᵛदक्षस्य बलस्य धनस्य वा ᵛमंहना मंहनायै दानाय भव। हे ᵛअमर्त्य नित्याग्ने यतः कारणात् ᵛते तुभ्यं ᵛसः मृक्तवाहाः ᵛआनुषक् सर्वदानुषक्तम् ᵛइन्दुं सोमं ᵛधत्ते धारयति ᵛस्तोता ᵛचित् स्तोता च भवति ॥

तं वो दीर्घायुशोचिषं गिरा हुवे मघोनाम्।

अरिष्टो येषां रथो व्यश्वदावन्नीयते ॥ ३ ॥

तम्। वः। दीर्घायुऽशोचिषम्। गिरा। हुवे। मघोनाम्।

अरिष्टः। येषाम्। रथः। वि। अश्वऽदावन्। ईयते ॥ ३ ॥

हे अग्ने ᵛदीर्घायुशोचिषं दीर्घगमनदीप्तिं ᵛतं ᵛवः। पूजायां बहुवचनम्। त्वां ᵛमघोनां धनिनां कृते ᵛगिरा स्तोत्रेण ᵛहुवे आह्वयामि। हे ᵛअश्वदावन् अश्वानां दातः ᵛयेषां धनिनां[1] ᵛरथः युद्धेषु ᵛअरिष्टः शत्रुभिरहिंसितः ᵛवि ᵛईयते विगच्छतु[2] ॥

चित्रा वा येषु दीधितिरासन्नुक्था पान्ति ये।

स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि ॥ ४ ॥

चित्रा। वा। येषु। दीधितिः। आसन्। उक्था। पान्ति। ये।

स्तीर्णम्। बर्हिः। स्वःऽनरे। श्रवांसि। दधिरे। परि ॥ ४ ॥

ᵛयेषु ऋत्विक्षु ᵛचित्रा नानाविधा ᵛदीधितिः यज्ञविषया क्रिया भवति। ᵛये ᵛआसन् आस्ये ᵛउक्था उक्थानि स्तोत्राणि ᵛपान्ति रक्षन्ति तैर्ऋत्विग्भिः ᵛस्तीर्णं स्तीर्णस्य[3] ᵛबर्हिः बर्हिषः ᵛपरि उपरि ᵛश्रवांसि अन्नानि हवींषि ᵛस्वर्णरे। स्वः स्वर्गं नरं यजमानं नयतीति स्वर्णरो यज्ञः। तस्मिन् ᵛदधिरे[4] निधीयन्ते[5] ॥

ये मे पञ्चाशतं ददुरश्वानां सधस्तुति।

द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणाम् ॥ ५ ॥

ये। मे। पञ्चाशतम्। ददुः। अश्वानाम्। सधऽस्तुति।

द्युऽमत्। अग्ने। महि। श्रवः। बृहत्। कृधि। मघोनाम्। नृऽवत्। अमृत। नृणाम् ॥५॥

---

१. ख-च-झ-ण-त-न-भ-र—धनानाम्। २. ख-च-झ-ण-न-भ-र—गच्छतु। ३. त-र-श—आस्तीर्णस्य। ४. त—निदधिरे। ५. प-फ-ब—निधीयन्ते। वा पूरणः।

ᐯये मघवानो दातारः ᐯमे मह्यं ᐯसधस्तुति स्तुत्या सहितं त्वत्स्तोत्रसमनन्तरम्[१] ᐯअश्वानां ᐯपञ्चाशतं ᐯददुः हे ᐯअमृत ᐯअग्ने त्वं तेषां ᐯमघोनां ᐯनृणां ᐯद्युमत् दीप्तिमत् ᐯमहि महत् ᐯबृहत् परिवृढं ᐯनृवत् परिचारकमनुष्ययुक्तं ᐯश्रवः अन्नं ᐯकृधि कुरु देहीत्यर्थः ॥ ॥ १० ॥

'अभ्यवस्थाः' इति पञ्चर्चं पञ्चमं सूक्तम्। अत्रेयमनुक्रमणिका—'अभ्यवस्था वव्रिर्गायत्र्यावनुष्टुभौ विराड्रूपा' इति। आत्रेयो वव्रिर्ऋषिः। प्रथमाद्वितीये गायत्र्यौ तृतीयाचतुर्थ्यावनुष्टुभौ पञ्चमी विराड्रूपा 'एकादशिनस्त्रयोऽष्टकश्च विराड्रूपा' इत्युक्तलक्षणोपेतत्वात्॥

**अ॒भ्य॑व॒स्थाः प्र जा॑यन्ते॒ प्र व॒व्रेर्व॒व्रिश्चि॑केत। उ॒पस्थे॑ मा॒तुर्वि च॑ष्टे ॥ १ ॥**

अ॒भि। अ॒व॒ऽस्थाः। प्र। जा॒य॒न्ते॒। प्र। व॒व्रेः। व॒व्रिः। चि॒के॒त।

उ॒प॒ऽस्थे॑। मा॒तुः। वि। च॒ष्टे॒ ॥ १ ॥

ᐯवव्रेः ऋषेः ᐯअभि उत्तरोत्तरम् ᐯअवस्थाः अशोभना दशाः ᐯप्र ᐯजायन्ते। तादृशीः ᐯवव्रिः हविषां संभक्ता सोऽग्निः ᐯप्र ᐯचिकेत प्रजानीयात्। ज्ञात्वा चापनयत्विति भावः। योऽग्निः ᐯमातुः पृथिव्याः ᐯउपस्थे समीपे स्थितं पदार्थजातं ᐯवि ᐯचष्टे पश्यति ॥

**जु॒हु॒रे वि चि॒तय॒न्तोऽनि॑मिषं नृ॒म्णं पा॑न्ति। आ दृ॒ळ्हां पुरं॑ विविशुः ॥२॥**

जु॒हु॒रे। वि। चि॒तय॑न्तः। अनि॑ऽमिषम्। नृ॒म्णम्। पा॒न्ति॒।

आ। दृ॒ळ्हाम्। पुर॑म्। वि॒वि॒शुः॒ ॥ २ ॥

ये ᐯवि ᐯचितयन्तः तव प्रभावं जानन्तो जनाः[२] ᐯअनिमिषं सर्वदा ᐯजुहुरे जुहुविरे[३] यज्ञार्थं त्वामाह्वयन्ति, आहूय च ᐯनृम्णं तव[४] बलं हविर्भिः स्तोत्रैश्च ᐯपान्ति रक्षन्ति ते ᐯदृळ्हां शत्रुभिः साधयितुमशक्यां ᐯपुरं पुरीम् ᐯआ ᐯविविशुः प्रविशन्ति। 'शतं पूर्भिरायसीभिर्नि पाहि' (ऋ. सं. ७. ३. ७) इति निगमः॥

**आ श्वै॑त्रे॒यस्य॑ ज॒न्तवो॑ द्यु॒मद्व॑र्धन्त कृ॒ष्टयः॑।**

**नि॒ष्कग्री॑वो बृ॒हदु॑क्थ ए॒ना मध्वा॒ न वा॑ज॒युः ॥ ३ ॥**

आ। श्वै॒त्रे॒यस्य॑। ज॒न्तवः॑। द्यु॒ऽमत्। व॒र्ध॒न्त॒। कृ॒ष्टयः॑।

नि॒ष्कऽग्री॑वः। बृ॒हत्ऽउ॑क्थः। ए॒ना। मध्वा॑। न। वा॒ज॒ऽयुः ॥ ३ ॥

जायन्त इति ᐯजन्तवः। ᐯकृष्टयः मनुष्या ऋत्विजः ᐯमध्वा ᐯन मधुनेव ᐯएना एनया स्तुत्या। यद्वा नकारश्चार्थे। मधुना च ᐯश्वैत्रेयस्य। श्वित्रमन्तरिक्षम्। तत्र भवस्य वैद्युतस्याग्नेः

---

१. ख-च-ण-भ—स्तोत्र°; झ-र—तत्स्तोत्र°। २. ग-घ-ज-श—जनास्त्वा। ३. ग-घ-ज-श—'जुहुविरे' नास्ति। ४. ख-च-ण—ते।

द्युमत् दीप्तिमत् बलम् आ वर्धन्त अभिवर्धयन्ति । किंविधाः कृष्टयः । निष्कग्रीवः निष्केण सुवर्णेनालंकृतग्रीवाः ॥ व्यत्ययेनैकवचनम् ॥ बृहदुक्थः बृहत्स्तोत्राः वाजयुः अन्नकामाः ॥

प्रियं दुग्धं न काम्यमजामि जाम्योः सचा ।

घर्मो न वाजजठरोऽदब्धः शश्वतो दभः ॥ ४ ॥

प्रियम् । दुग्धम् । न । काम्यम् । अजामि । जाम्योः । सचा ।

घर्मः । न । वाजऽजठरः । अदब्धः । शश्वतः । दभः ॥ ४ ॥

जाम्योः द्यावापृथिव्योः सचा सहायभूतोऽग्निः दुग्धं न पय इव काम्यं कमनीयम् अजामि दोषरहितं प्रियम् अस्मदीयं स्तोत्रं शृणोतु । किंविधोऽग्निः । घर्मो न प्रवर्ग्य इव वाजजठरः । वाजोऽन्नं[1] जठरे यस्य सः । घर्मो यथा हव्येनाज्येन पयसासिक्तो वाजजठरस्तद्वत् । हविर्जठर इत्यर्थः । अदब्धः शत्रुभिः स्वयमहिंसितः शश्वतः शाश्वतो नित्यः दभः शत्रूणां हिंसकः ॥

क्रीळन्नो रश्म आ भुवः सं भस्मना वायुना वेविदानः ।

ता अस्य सन्धृषजो न तिग्माः सुसंशिता वक्ष्यो वक्षणेस्थाः ॥ ५ ॥

क्रीळन् । नः । रश्मे । आ । भुवः । सम् । भस्मना । वायुना । वेविदानः ।

ताः । अस्य । सन् । धृषजः । न । तिग्माः । सुऽसंशिताः । वक्ष्यः । वक्षणेऽस्थाः ॥ ५ ॥

हे रश्मे रश्मिमन्नग्ने क्रीळन् वनेषु क्रीडन् भस्मना स्वकार्येण भसितेन वायुना प्रेरकेण मरुता च सं वेविदानः सम्यक् ज्ञायमानस्त्वं नः अस्माकम् आ भुवः । अभिमुखो भव । वक्षणेस्थाः वक्षणे वह्नौ स्थिताः वक्ष्यः । हविर्वहन्तीति वक्ष्यो ज्वालाः । सुसंशिताः सुतीक्ष्णाः धृषजः शत्रूणां धर्षिकाः ताः ज्वालाः अस्य यजमानस्य मम न तिग्माः न तीक्ष्णाः सन् सन्तु ॥ अस्तेर्लेटि रूपम् ॥ ॥ ११ ॥

'यमग्ने' इति चतुर्ऋचं षष्ठं सूक्तमत्रीणां प्रयस्वतामार्षमाग्नेयम् । अन्त्या पङ्क्तिः शिष्टा अनुष्टुभः । तथा चानुक्रान्तं—'यमग्ने चतुष्कं प्रयस्वन्तः पङ्क्त्यन्तं ह' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । अत्रेश्चतुर्वीराख्येऽहीने द्वितीयेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च-'यमग्ने वाजसातमेति द्वितीयेऽहन्याज्यम्' (आश्व. श्रौ. १०. २) इति ॥

---

१. ख-च-झ-ण-त-न-भ-र-वाजोऽन्नं हविः ।

यमग्ने वाजसातम त्वं चिन्मन्यसे रयिम् ।
तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥ १ ॥

यम् । अग्ने । वाजऽसातम । त्वम् । चित् । मन्यसे । रयिम् ।
तम् । नः । गीःऽभिः । श्रवाय्यम् । देवऽत्रा । पनय । युजम् ॥ १ ॥

हे अग्ने हे वाजसातम अत्यन्तमन्नद त्वं यं रयिं धनमस्माभिर्दीयमानं हवीरूपं धनं मन्यसे बुध्यसे । चित् इति पादपूरणः । श्रवाय्यं श्रवणीयं[1] प्रशस्यं[2] गीर्भिः स्तुतिभिः युजं युक्तं नः अस्मदीयं हविर्लक्षणं धनं तं[3] देवत्रा देवेषु पनय[4] प्रापयेत्यर्थः ॥

ये अग्ने नेरयन्ति ते वृद्धा उग्रस्य शवसः ।
अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिरे ॥ २ ॥

ये । अग्ने । न । ईरयन्ति । ते । वृद्धाः । उग्रस्य । शवसः ।
अप । द्वेषः । अप । ह्वरः । अन्यऽव्रतस्य । सश्चिरे ॥ २ ॥

हे अग्ने ये जनाः वृद्धाः पश्वादिलक्षणैर्धनैः समृद्धाः सन्तः ते तुभ्यं नेरयन्ति हवींषि न प्रयच्छन्ति ते उग्रस्य अधिकेन शवसः बलेन अन्नेन वा अप नीताः बलान्नहीना भवन्तीत्यर्थः । किंच अन्यव्रतस्य अन्यद्वैदिकाद्विभक्तं व्रतं कर्म यस्य तस्यासुरस्य द्वेषः स्वत्संबन्धिनं[5] विरोधं ह्वरः अतिहिंसां च अप सश्चिरे आत्मानं प्रापयन्ति ॥

होतारं त्वा वृणीमहेऽग्ने दक्षस्य साधनम् ।
यज्ञेषु पूर्व्यं गिरा प्रयस्वन्तो हवामहे ॥ ३ ॥

होतारम् । त्वा । वृणीमहे । अग्ने । दक्षस्य । साधनम् ।
यज्ञेषु । पूर्व्यम् । गिरा । प्रयस्वन्तः । हवामहे ॥ ३ ॥

हे अग्ने प्रयस्वन्तः अन्नवन्तः एतन्नामका वयं दक्षस्य बलस्य साधनं साधकं[6] साधयितारं त्वां होतारं देवानामाह्वातारं वृणीमहे । किंच यज्ञेषु पूर्व्यं मुख्यं त्वां गिरा स्तुतिरूपया वाचा हवामहे स्तुमः ॥

---

१. ख-च-ण–श्रयणीयम् । २. ग-घ-ज–शस्यम् । ३. ख-च-झ-ण-न-भ-र–तं रयिम् । ४. ख-च-झ-ण-न-भ-र–पनय व्यपनय । ५. ख-च-झ-ण-न-भ-र–तत्संबन्धिनम् । ६. ख-च-झ-ण-न-भ-र–'साधकं' नास्ति ।

इत्था यथा त ऊतये सहसावन्दिवेदिवे ।
राय ऋतायं सुक्रतो गोभिः ष्याम सधमादो वीरैः स्याम सधमादः ॥४॥

इत्था । यथा । ते । ऊतये । सहसाऽवन् । दिवेऽदिवे ।
राये । ऋताय । सुक्रतो इति सुऽक्रतो । गोभिः । स्याम । सधऽमादः ।
वीरैः । स्याम । सधऽमादः ॥ ४ ॥

हे सहसावन् बलवन्नग्ने दिवेदिवे अन्वहं वयं ते तव ऊतये रक्षणाय यथा स्याम तथा इत्था इत्थं कुरु । हे सुक्रतो राये धनाय ऋताय यज्ञाय च यथा स्याम तथा कुरु । किंच वयं[1] गोभिः सधमादः सह माद्यन्तः स्याम । वीरैः पुत्रैश्च सधमादः सह माद्यन्तः स्याम । तथा कुरु ॥ ॥ १२ ॥

'मनुष्वत्त्वा' इति चतुर्ऋचं सप्तमं सूक्तमात्रेयस्य सप्तस्यार्षम् । 'मनुष्वत्सप्तः' इत्यनुक्रमणिका । 'पङ्क्त्यन्तं ह' इति पूर्वत्रोक्तत्वादिदमादीनि त्रीणि सूक्तानि पङ्क्त्यन्तानि । शिष्टा अनुष्टुभः । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥ १ ॥

मनुष्वत् । त्वा । नि । धीमहि । मनुष्वत् । सम् । इधीमहि ।
अग्ने । मनुष्वत् । अङ्गिरः । देवान् । देवऽयते । यज ॥ १ ॥

हे अग्ने त्वा त्वां मनुष्वत् मनुरिव नि धीमहि । मनुःशब्दो मनुपर्यायः ॥ 'नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्' इति भसंज्ञायां रुत्वाभावः ॥ मनुष्वत् मनुरिव त्वा समिधीमहि समिद्भिः संदीपयामः । हे अङ्गिरः अङ्गारात्मकाग्ने[2] देवयते देवकामाय यजमानाय मनुष्वत् मनवे मनोरपत्याय देवान् यज ॥

त्वं हि मानुषे जनेऽग्ने सुप्रीत इध्यसे ।
स्रुचस्त्वा यन्त्यानुषक्सुजात सर्पिरासुते ॥ २ ॥

त्वम् । हि । मानुषे । जने । अग्ने । सुऽप्रीतः । इध्यसे ।
स्रुचः । त्वा । यन्ति । आनुषक् । सुऽजात । सर्पिःऽआसुते ॥ २ ॥

---

१. ख-च-झ-ण-न-भ-र-'वयं' नास्ति । २. त-अङ्गिरात्मकाग्ने ।

हे ᵛअग्ने ᵛत्वं ᵛमानुषे ᵛजने[1] मनुष्यलोके ᵛसुप्रीतः[2] स्तोत्रैः सुष्ठु प्रीतः सन् ᵛइध्यसे दीप्यसे। ᵛस्रुचः हविर्भिः संपूर्णाः ᵛआनुषक् अनुषक्तं यथा भवति तथा ᵛत्वा त्वां ᵛयन्ति प्राप्नुवन्ति। हे ᵛसुजात हे ᵛसर्पिरासुते घृतयुक्तान्नेति ॥

**त्वां विश्वे सजोषसो देवासो दूतमक्रत ।**

**सपर्यन्तस्त्वा कवे यज्ञेषु देवमीळते ॥ ३ ॥**

त्वाम् । विश्वे । सऽजोषसः । देवासः । दूतम् । अक्रत ।

सपर्यन्तः । त्वा । कवे । यज्ञेषु । देवम् । ईळते ॥ ३ ॥

ᵛसजोषसः सह प्रीयमाणाः ᵛविश्वे सर्वे ᵛदेवासः देवाः ᵛत्वां ᵛदूतम् ᵛअक्रत अकुर्वन्[3] । अतः कारणात् हे ᵛकवे क्रान्तदर्शिन् ᵛदेवं द्योतमानं ᵛत्वा[4] त्वां ᵛसपर्यन्तः परिचरन्तो यजमानाः ᵛयज्ञेषु ᵛईळते देवानाह्वातुं याचन्ते ॥

**देवं वो देवयज्ययाग्निमीळीत मर्त्यः ।**

**समिद्धः शुक्र दीदिह्यृतस्य योनिमासदः ससस्य योनिमासदः ॥ ४ ॥**

देवम् । वः । देवऽयज्यया । अग्निम् । ईळीत । मर्त्यः ।

सम्ऽइद्धः । शुक्र । दीदिहि । ऋतस्य । योनिम् । आ । असदः ।

ससस्य । योनिम् । आ । असदः ॥ ४ ॥

ᵛमर्त्यः मनुष्यः ᵛदेवं द्योतमानम् ᵛअग्निम् अग्रण्यं ᵛवः त्वां ᵛदेवयज्यया देवयज्यायै देवयागार्थम् ᵛईळीत स्तोतुमर्हति। हे ᵛशुक्र शोचिष्मन्[5] ᵛसमिद्धः हविर्भिः प्रवृद्धः सन् ᵛदीदिहि दीप्यस्व । ᵛऋतस्य सत्यभूतस्य ᵛससस्य ऋषेर्मम ᵛयोनिं[6] कारणं[6] स्वर्गसाधनं यज्ञस्थानम्[7] ᵛआसदः । देवतारूपेणासीद। आदरातिशयद्योतनार्थं पुनर्वचनम् ॥ ॥ १३ ॥

' प्र विश्वसामन् ' इति चतुरृचमष्टमं सूक्तम् । आत्रेयो विश्वसामा ऋषिः । चतुर्थी पङ्क्तिः शिष्टा अनुष्टुभः । अग्निर्देवता । तथा चानुक्रान्तं-' प्र विश्वसामन्विश्वसाम ' इति । उक्तो विनियोगः प्रातरनुवाकाश्विनशस्त्रयोः ॥

---

१. ख-च-झ-ण-न-भ-र-' जने ' नास्ति । २. प-फ-ब-सुप्रीतः हि । ३. ख-च-ण-भ-अकुर्वत । ४. ख-च-झ-ण-न-भ-र-श-' त्वा ' नास्ति । ५. प-फ-ब-दीप्तामे । ६. ख-च-ण-योनिकरणम्; ग-घ-ज-त-फ-योनिः कारणम्; र-योनिकारणम् । ७. झ-भ-र-योनिं यज्ञस्थानम् ।

प्र विश्वसामन्नत्रिवदर्चा पावकशोचिषे ।
यो अध्वरेष्वीड्यो होता मन्द्रतमो विशि ॥ १ ॥
प्र । विश्वऽसामन् । अत्रिऽवत् । अर्च । पावकऽशोचिषे ।
यः । अध्वरेषु । ईड्यः । होता । मन्द्रऽतमः । विशि ॥ १ ॥

हे विश्वसामन् । ऋषेः संबोधनमेतत् । त्वम् अत्रिवत् अत्रिरिव पावकशोचिषे शोधकदीप्तये तस्मा अग्नये प्र अर्च प्रगाय । यः अग्निः अध्वरेष्वीड्यः सर्वैर्यज्वभिः स्तुत्यः होता देवानामाह्वाता विशि जने मन्द्रतमः स्तुत्यतमः ॥

न्यग्निं जातवेदसं दधाता देवमृत्विजम् ।
प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः ॥ २ ॥
नि । अग्निम् । जातऽवेदसम् । दधात । देवम् । ऋत्विजम् ।
प्र । यज्ञः । एतु । आनुषक् । अद्य । देवव्यचःऽतमः ॥ २ ॥

हे यजमानाः जातवेदसं जातप्रज्ञं जातधनं वा देवं द्योतमानम् ऋत्विजम् ऋतुयष्टारम् अग्निं नि दधात निधत्त । किंच देवव्यचस्तमः देवानामाप्ततमः यज्ञः यज्ञसाधनमस्माभिर्दीयमानं हविः आनुषक् अनुषक्तं यथा भवति तथा अद्य अस्मिन्नहनि तमग्निं प्र एतु प्रगच्छतु[1] ॥

चिकित्विन्मनसं त्वा देवं मर्तास ऊतये ।
वरेण्यस्य तेऽवस इयानासो अमन्महि ॥ ३ ॥
चिकित्वित्ऽमनसम् । त्वा । देवम् । मर्तासः । ऊतये ।
वरेण्यस्य । ते । अवसः । इयानासः । अमन्महि ॥ ३ ॥

हे अग्ने चिकित्विन्मनसम् । चिकित्वित् जानत् मनो यस्यासौ चिकित्विन्मनाः । तं देवं त्वा[2] त्वाम्[2] इयानासः उपगच्छन्तः मर्तासः मनुष्या वयम् ऊतये रक्षणार्थं वरेण्यस्य संभजनीयस्य ते तव अवसः अवसे तर्पणाय अमन्महि स्तुमः ॥

अग्ने चिकिद्ध्यस्य न इदं वचः सहस्य ।
तं त्वा सुशिप्र दम्पते स्तोमैर्वर्धन्त्यत्रयो गीर्भिः शुम्भन्त्यत्रयः ॥ ४ ॥
अग्ने । चिकिद्धि । अस्य । नः । इदम् । वचः । सहस्य ।
तम् । त्वा । सुऽशिप्र । दम्ऽपते । स्तोमैः । वर्धन्ति । अत्रयः । गीःऽभिः । शुम्भन्ति । अत्रयः ॥ ४ ॥

---

१. ग-घ-ज-श-गच्छतु । २. ख-च-झ-ण-न-भ- त्वा; र-श- त्वाम् ।

हे vअग्ने vसहस्य[1] सहसः बलस्य पुत्र vनः अस्मदीयम् vअस्य vइदं परिचरणमिदं vवचः स्तोत्रं च[2] vचिकिद्धि जानीहि । हे vसुशिप्र । शोभने शिप्रे हनू नासिके वा यस्यासौ सुशिप्रः । तस्य संबोधनम् । सुशिप्र सुहनो vदस्पते गृहपते vतं त्वाम्[3] vअत्रयः अत्रिपुत्राः vस्तोमैः स्तोत्रैः vवर्धन्ति वर्धयन्ति । vअत्रयः vगीर्भिः vशुम्भन्ति अलंकुर्वन्ति ॥  ॥ १४ ॥

'अग्ने सहन्तम्' इति चतुर्ऋचं नवमं सूक्तम् । अत्रानुक्रमणिका—'अग्ने द्युम्नो विश्वचर्षणिः' इति । द्युम्न ऋषिः । चतुर्थी पङ्क्तिः । आद्यास्तिस्रोऽनुष्टुभः । अग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोर्दशसूक्तान्तःपातित्वादुक्तो विनियोगः ॥

**अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।**
**विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत् ॥ १ ॥**

अग्ने । सहन्तम् । आ । भर । द्युम्नस्य । प्रऽसहा । रयिम् ।
विश्वाः । यः । चर्षणीः । अभि । आसा । वाजेषु । ससहत् ॥ १ ॥

हे vअग्ने vप्रासहा प्रकृष्टेन बलेन vसहन्तं शत्रूनभिभवन्तं vरयिं पुत्रं vद्युम्नस्य द्युम्नाय मह्यं[4] ऋषये vआ vभर आहर ॥ चतुर्थ्यर्थे षष्ठी ॥ एतदेव विवृणोति । vयः पुत्रः vआसा आस्येन स्तोत्रेण युक्तः सन् vवाजेषु युद्धेषु vअभि आभिमुख्येन गतान् vविश्वाः सर्वान् vचर्षणीः मनुष्यान् शत्रून् vसासहत् अभिभवति ॥

**तमग्ने पृतनाषहं रयिं सहस्व आ भर ।**
**त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः ॥ २ ॥**

तम् । अग्ने । पृतनाऽसहम् । रयिम् । सहस्वः । आ । भर ।
त्वम् । हि । सत्यः । अद्भुतः । दाता । वाजस्य । गोऽमतः ॥ २ ॥

हे vअग्ने vसहस्वः[5] बलवन् vपृतनासहं पृतनाः सेना अभिभवितारं vरयिं पुत्रं त्वम् vआ vभर आहर । vत्वं vहि vसत्यः सत्यभूतः vअद्भुतः महान् vगोमतः गोभिर्युक्तस्य vवाजस्य अन्नस्य vदाता ॥

**विश्वे हि त्वा सजोषसो जनासो वृक्तबर्हिषः ।**
**होतारं सद्मसु प्रियं व्यन्ति वार्या पुरु ॥ ३ ॥**

विश्वे । हि । त्वा । सऽजोषसः । जनासः । वृक्तऽबर्हिषः ।
होतारम् । सद्मऽसु । प्रियम् । व्यन्ति । वार्या । पुरु ॥ ३ ॥

---

१. ग-घ-ज-श-हे सहस्य । २. ग-घ-ज-श-'च' नास्ति । ३. प-फ-ब-त्वा त्वाम् । ४. ख-च-ण-'मह्यं' नास्ति; झ-भ-र-श-मम; न-एतन्नाम । ५. झ-न-भ-र-हे सहस्वः ।

हे अग्ने ᵛसजोषसः सह प्रीयमाणाः ᵛवृक्तबर्हिषः लूनबर्हिषः ᵛविश्वे सर्वे ᵛजनासः जना ऋत्विजः ᵛसद्मसु यज्ञगृहेषु ᵛहोतारं देवानामाह्वातारं ᵛप्रियं सर्वेषां प्रीतिकरं ᵛत्वा त्वां ᵛपुरु पुरूणि बहूनि ᵛवार्या वरणीयानि धनानि ᵛव्यन्ति याचन्ते[1] ॥

स हि ष्मा॑ वि॒श्वच॑र्षणिर॒भिमा॑ति॒ सहो॑ द॒धे ।
अग्न॑ ए॒षु क्षये॒ष्वा रे॒वन्नः॑ शुक्र दीदिहि द्यु॒मत्पा॑वक दीदिहि ॥ ४ ॥

सः । हि । स्म॒ । वि॒श्वऽच॑र्षणिः । अ॒भिऽमा॑ति । सहः॑ । द॒धे ।
अग्ने॑ । ए॒षु । क्षये॑षु । आ । रे॒वत् । न॒ः । शु॒क्र॒ । दी॒दि॒हि॒ । द्यु॒ऽमत् । पा॒व॒क॒ । दी॒दि॒हि॒ ॥४॥

हे ᵛअग्ने ᵛसः लोकेषु प्रसिद्धः ᵛविश्वचर्षणिः ऋषिः ᵛअभिमाति शत्रूणां हिंसकं ᵛसहः बलं ᵛदधे धारयतु । ᵛहि[2] ᵛष्म इति पूरणौ[2] । हे ᵛशुक्र शोचिष्मन् त्वं ᵛनः अस्मदीयेषु ᵛएषु ᵛक्षयेषु गृहेषु ᵛरेवत् धनयुक्तं यथा भवति तथा ᵛआ[3] ᵛदीदिहि आदीप्यस्व[3] । हे ᵛपावक पापानां शोधकाग्ने त्वं ᵛद्युमत् दीप्तियुक्तं यशोयुक्तं[4] च ᵛदीदिहि[4] दीप्यस्व ॥ ॥ १५ ॥

'अग्ने त्वं नः' इति चतुर्ऋचं दशमं सूक्तम् । अत्रानुक्रमणिका—'अग्ने त्वं गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्चैकर्चा द्वैपदम्' इति । 'विंशतिका[5] द्विपदा विराजः' इत्युक्तत्वाच्चतस्रो द्विपदा विराजः । बन्धुः सुबन्धुः श्रुतबन्धुः विप्रबन्धुश्च क्रमेण चतसृणामृषयः । ते च गौपायना लौपायना वा[5] । अग्निर्देवता । महापितृयज्ञे आहवनीयं प्रति गच्छन्त ऋत्विज इदं सूक्तं जपेयुः । तथा च सूत्रितम्—'अथैनमभिसमायन्ति मा प्र गामाग्ने त्वं न इति जपन्तः' (आश्व. श्रौ. २. १९) इति । दशरात्रे षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य 'अग्ने त्वम्' इति द्वे, 'तं त्वा शोचिष्ठ' इत्येका, एवं मिलितो द्वैपदस्तृचः स्तोत्रियः । तथैव सूत्रितम्—'अग्ने त्वं नो अन्तमोऽग्ने भव सुषमिधा' (आश्व. श्रौ. ८. २) इति ॥

अग्ने॒ त्वं नो॒ अन्त॑म उ॒त त्रा॒ता शि॒वो भ॑वा वरू॒थ्यः॑ ।
वसु॑र॒ग्निर्वसु॑श्रवा॒ अच्छा॑ नक्षि द्यु॒मत्त॑मं र॒यिं दाः॑ ॥ १ ॥ २ ॥

अग्ने॑ । त्वम् । न॒ः । अन्त॑मः । उ॒त । त्रा॒ता । शि॒वः । भ॒व॒ । व॒रू॒थ्यः॑ ।
वसुः॑ । अ॒ग्निः । वसु॑ऽश्रवाः । अच्छ॑ । न॒क्षि॒ । द्यु॒मत्ऽत॑मम् । र॒यिम् । दा॒ः ॥ १ ॥ २ ॥

हे ᵛअग्ने ᵛवरूथ्यः वरणीयः संभजनीयः । यद्वा । वरूथैः परिधिभिर्वृतः ᵛत्वं ᵛनः अस्माकम् ᵛअन्तमः अन्तिकतमः ᵛभव । ᵛउत अपि च ᵛत्राता रक्षकः ᵛशिवः सुखकरश्च भव ।

---

१. प-फ-ब-याचन्ते हि । २. ख-च-झ-ण-त-न-भ-र-'हि...पूरणौ' नास्ति । ३. ख-च-ण-आदिदीहि दीप्यस्व; ग-घ-ज-श- दीदिहि दीप्यस्व । ४. ख-च-झ-ण-न-भ-र-'यशोयुक्तं च दीदिहि' नास्ति । ५. ख-च-ण-भ-'विंशतिका...वा' नास्ति ।

वसुः वासकः अग्निः सर्वेषामग्रणीः वसुश्रवाः व्याप्तान्नस्त्वम् अच्छ आभिमुख्येन नक्षि अस्मान् व्याप्नुहि द्युमत्तमम् अतिशयेन दीप्तिमन्तं[1] रयिं पश्वादिलक्षणं धनं दाः अस्मभ्यं देहि ॥

स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ।

तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ३ ॥ ४ ॥

सः । नः । बोधि । श्रुधि । हवम् । उरुष्य । नः । अघऽयतः । समस्मात् ।

तम् । त्वा । शोचिष्ठ । दीदिऽवः । सुम्नाय । नूनम् । ईमहे । सखिऽभ्यः ॥ ३ ॥ ४ ॥

हे अग्ने सः त्वं नः अस्मान् बोधि बुध्यस्व । हवम् अस्मदीयमाह्वानं श्रुधि शृणु । अघायतः अघमिच्छतः समस्मात् सर्वस्माज्जनात् नः अस्मान् उरुष्य रक्ष । हे शोचिष्ठ अतिशयेन[2] शोचिष्मन्[2] दीदिवः स्वतेजोभिर्दीप्ताग्ने तं त्वां[3] सुम्नाय सुखाय । सुम्नमिति सुखनाम । तदर्थं सखिभ्यः समानख्यातिभ्यः पुत्रेभ्यः[4] तदर्थं च नूनम् ईमहे याचामहे ॥ ॥ १६ ॥

‘अच्छा वो अग्निम्’ इति नवर्चमेकादशं सूक्तम् । अत्रानुक्रमणिका—‘अच्छा वो नव वसूयव आनुष्टुभम्’ इति । आत्रेया वसूयुनामान ऋषयः । अनुष्टुप् । मण्डलादिपरिभाषयाग्निर्देवता । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः । प्रातःसवनेऽच्छावाकवदस्वेर्युक्ते ‘अच्छा वो अग्निमवसे’ इत्यृचमनुब्रूयात् । तथा च सूत्रितम्—‘अच्छा वो अग्निमवस इत्यृचमन्वाह’ ( आश्व. श्रौ. ५. ७ ) इति ॥

अच्छा वो अग्निमवसे देवं गासि स नो वसुः ।

रासत्पुत्र ऋषूणामृतावा पर्षति द्विषः ॥ १ ॥

अच्छ । वः । अग्निम् । अवसे । देवम् । गासि । सः । नः । वसुः ।

रासत् । पुत्रः । ऋषूणाम् । ऋतऽवा । पर्षति । द्विषः ॥ १ ॥

हे वसूयवः वः यूयं देवम् अग्निम् अवसे रक्षणाय अच्छा गासि अभिगायत[5] । वसुः अग्निहोत्रार्थं यजमानानां गृहे वासयिता सः अग्निः नः अस्मभ्यं रासत् कामान् ददातु । ऋषूणाम् ऋषीणां पुत्रः । ऋषिभिर्मन्थनेन जनितत्वात् पुत्र इत्युपचर्यते । ऋतावा ऋतावान् सत्यवानुदकवान्वा सोऽग्निः द्विषः अस्माकं शत्रून् पर्षति पारयतु ॥

---

१. त–दीप्तिमत् । २. ग-घ-ज-र-श–अतिशोचिष्मन् । ३. ख-च-झ-ण-न-भ-र–त्वा । ४. ख-च-झ-ण-न-भ-र–‘पुत्रेभ्यः’ नास्ति । ५. ग-घ-ज-श–अभिप्रगायत ।

स हि सत्यो यं पूर्वे चिद्देवासश्चिद्यमीधिरे ।
होतारं मन्द्रजिह्वमित्सुदीतिभिर्विभावसुम् ॥ २ ॥

सः । हि । सत्यः । यम् । पूर्वे । चित् । देवासः । चित् । यम् । ईधिरे ।
होतारम् । मन्द्रऽजिह्वम् । इत् । सुदीतिऽभिः । विभाऽवसुम् ॥ २ ॥

ᵛपूर्वे ᵛचित् पूर्वे महर्षयः ᵛहोतारं देवानामाह्वातारं ᵛमन्द्रजिह्वम् । हविषां प्रदानेन देवानां मादयित्री जिह्वा यस्य सः । तम् । यद्वा मोदनजिह्वम् । तथाह यास्कः—'मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा' ( निरु. ६. २३ ) इति । ᵛसुदीतिभिः शोभनदीप्तिभिर्युक्तं ᵛविभावसुं प्रभाधनं ᵛयम् अग्निम् ईधिरे समैन्धत[1] ᵛदेवासश्चित् देवा अपि ᵛयम् अग्निम् ᵛईधिरे समैन्धत[2] ᵛस ᵛहि अग्निः ᵛसत्यः भवति । सत्यप्रतिश्रवो भवति । ᵛइत् इति पूरणः ॥

स नो धीती वरिष्ठया श्रेष्ठया च सुमत्या ।
अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्य ॥ ३ ॥

सः । नः । धीती । वरिष्ठया । श्रेष्ठया । च । सुऽमत्या ।
अग्ने । रायः । दिदीहि । नः । सुवृक्तिऽभिः । वरेण्य ॥ ३ ॥

ᵛसुवृक्तिभिः स्तुतिभिः स्तूयमान ᵛवरेण्य वरणीय हे ᵛअग्ने ᵛसः त्वं ᵛवरिष्ठया वरतमेन ᵛश्रेष्ठया अतिशयेन प्रशस्येन ᵛनो ᵛधीती धीत्यास्मदीयेन परिचरणात्मकेन कर्मणा ᵛसुमत्या ᵛच । सुमतिरिति[3] शस्त्रमुच्यते । शस्त्रेण च प्रीतः सन् ᵛरायः धनानि ᵛनः अस्मभ्यं ᵛदीदिहि देहि ॥

अग्निर्देवेषु राजत्यग्निर्मर्तेष्वाविशन् ।
अग्निर्नो हव्यवाहनोऽग्निं धीभिः सपर्यत ॥ ४ ॥

अग्निः । देवेषु । राजति । अग्निः । मर्तेषु । आऽविशन् ।
अग्निः । नः । हव्यऽवाहनः । अग्निम् । धीभिः । सपर्यत ॥ ४ ॥

यः ᵛअग्निः ᵛदेवेषु देवानां मध्ये ᵛराजति देवतारूपेण प्रकाशते । यः ᵛअग्निः ᵛमर्तेषु मनुष्येषु ᵛआविशन् आहवनीयादिरूपेण प्रविष्टो भवति । यः ᵛअग्निः ᵛनः अस्माकं ᵛहव्यवाहनः भवति अस्मदीयेषु यज्ञेषु देवतार्थं हव्यानां वोढा भवति । हे यजमानास्तम् ᵛअग्निं ᵛधीभिः स्तुतिभिः ᵛसपर्यत परिचरत ॥

---

१. ख-च-र-श—समैधत; ग-घ-ज-झ—समैधन्त । २. ख-झ-ण-भ-र-श—समैधत; ग—समैधन्त; न—समेन्धन्त । ३. ख-च-ण-भ—सुमतिरेव; झ—सुमतिरिव; न—सुमतिरिह ।

पुत्रकामेष्ट्याम् 'अग्निस्तुविश्रवस्तमम्' इति द्वे स्विष्टकृतो याज्यानुवाक्ये। सूत्रितं च— 'अग्निस्तुविश्रवस्तममिति द्वे संयाज्ये' (आश्व. श्रौ. २. १०) इति॥

अ॒ग्निस्तु॑विश्र॑वस्तमं तु॒विब्र॑ह्माणमु॒त्तमम्।
अ॒तूर्तं॑ श्राव॒यत्प॑तिं पु॒त्रं द॑दाति दा॒शुषे॑॥ ५॥

अ॒ग्निः। तु॒विश्र॑वःऽतमम्। तु॒विऽब्र॑ह्माणम्। उ॒त्ऽत॒मम्।
अ॒तूर्त॑म्। श्र॒व॒यत्ऽप॑तिम्। पु॒त्रम्। द॒दा॒ति॒। दा॒शुषे॑॥ ५॥

ᵛअग्निः ᵛतुविश्रवस्तमम् अतिशयेन बह्वन्नं ᵛतुविब्रह्माणं बहुस्तोत्रम् ᵛउत्तमम् उत्कृष्टम् ᵛअतूर्तं शत्रुभिरहिंसितं ᵛश्रावयत्पतिम्। श्रावयति विश्रुतान् करोति पतीन् पालयितॄन् पितॄनिति स्वकर्मणा पितृणां प्रख्यापक इति श्रावयत्पतिः। तथाविधं ᵛपुत्रं ᵛदाशुषे हवींषि दत्तवते यजमानाय ᵛददाति ददातु॥ ॥ १७॥

अ॒ग्निर्द॑दाति॒ सत्प॑तिं सा॒साह॒ यो यु॒धा नृभिः॑।
अ॒ग्निरत्यं॑ रघु॒ष्यदं॒ जेता॑र॒मप॑राजितम्॥ ६॥

अ॒ग्निः। द॒दा॒ति॒। सत्ऽप॑तिम्। स॒साह॑। यः। यु॒धा। नृऽभिः॑।
अ॒ग्निः। अत्य॑म्। र॒घु॒ऽस्यद॑म्। जेता॑रम्। अप॑राऽजितम्॥ ६॥

ᵛयः पुत्रः ᵛयुधा युद्धेन ᵛनृभिः परिजनैः ᵛससाह शत्रूनभिभवति ᵛसत्पतिं सतां पालयितारं तथाविधं पुत्रम् ᵛअग्निर्ददाति अस्मभ्यं ददातु। किंच ᵛअग्निः ᵛरघुष्यदम्। रघुर्लघुः स्यदो जवो यस्य तम्। ᵛजेतारं शत्रून् ᵛअपराजितं शत्रुभिः ᵛअत्यम्[1]। अतति सततं गच्छतीत्यत्योऽश्वः। तं ददातु॥

अश्वमेधे पौष्ण्यामिष्टौ 'यद्वाहिष्ठम्[2]' इति[2] स्विष्टकृतो याज्या। सूत्रितं च— 'यद्वाहिष्ठं तदग्नय इति संयाज्ये' (आश्व. श्रौ. १०. ६) इति॥

यद्वाहि॑ष्ठं॒ तद॒ग्नये॑ बृ॒हद॑र्च विभावसो।
महि॑षीव॒ त्वद्र॒यिस्त्वद्वाजा॒ उदी॑रते॥ ७॥

यत्। वाहि॑ष्ठम्। तत्। अ॒ग्नये॑। बृ॒हत्। अ॒र्च॒। वि॒भा॒व॒सो॒ इति॑ विभाऽवसो।
महि॑षीऽइव। त्वत्। र॒यिः। त्वत्। वाजाः॑। उत्। ई॒र॒ते॒॥ ७॥

---

१. ख-च-झ-ण-न-भ-र-'अत्यं' नास्ति। २. ख-च-झ-ण-न-भ-र-श-'यद्वाहिष्ठमिति' नास्ति।

ᵛवाहिष्ठं वोढृतमं ᵛयत् स्तोत्रं ᵛतदग्नये क्रियते । अतो हे ᵛविभावसो प्रभाधनाग्ने ᵛबृहत् बह्वन्नं धनं च[1] ᵛअर्च अस्मभ्यं प्रयच्छ । कथमस्यान्नधनप्रदातृत्वमित्यपेक्षायामाह । यतः ᵛत्वत् त्वत्तः[2] सकाशात् ᵛमहिषी महती ᵛरयिः धनम् ᵛउदीरते उद्गच्छति । ᵛवाजाः अन्नानि च ᵛत्वत् त्वत्तः उदीरते उद्गच्छन्ति । इवेति पूरणः ॥

तव॑ द्यु॒मन्तो॑ अ॒र्चयो॒ ग्रावे॒वोच्यते बृ॒हत् ।
उ॒तो ते॑ तन्य॒तुर्य॑था स्वा॒नो अ॑र्त॒ त्मना॑ दि॒वः ॥ ८ ॥

तव॑ । द्यु॒ऽमन्तः॑ । अ॒र्चयः॑ । ग्रावा॑ऽइव । उ॒च्यते॒ । बृ॒हत् ।
उ॒तो इति॑ । ते॒ । त॒न्य॒तुः । य॒था॒ । स्वा॒नः । अ॒र्त॒ । त्मना॑ । दि॒वः ॥ ८ ॥

हे अग्ने ᵛतव ᵛअर्चयः रश्मयः ᵛद्युमन्तः दीप्तिमन्तो भवन्ति[3] । ᵛबृहत् महान् त्वं ᵛग्रावेव अभिषवग्रावेव ᵛउच्यते स्तूयसे । ᵛउतो अपि च ᵛत्मना आत्मना ᵛदिवः द्योतमानस्य ᵛते तव ᵛस्वानः शब्दः ᵛतन्यतुर्यथा मेघगर्जितमिव ᵛअर्त उद्गच्छति ॥

ए॒वाँ अ॒ग्निं व॑सू॒यवः॑ सहसा॒नं व॑वन्दिम ।
स नो॒ विश्वा॒ अति॒ द्विषः॒ पर्ष॑न्ना॒वेव॑ सु॒क्रतुः॑ ॥ ९ ॥

ए॒व । अ॒ग्निम् । व॒सु॒ऽयवः॑ । स॒ह॒सा॒नम् । व॒व॒न्दि॒म ।
सः । नः॒ । विश्वाः॑ । अति॑ । द्विषः॑ । पर्ष॑त् । ना॒वाऽइ॑व । सु॒ऽक्रतुः॑ ॥ ९ ॥

ᵛवसूयवः वसुकामा वयं ᵛसहसानम् अस्माकं बलमाचरन्तम् ᵛअग्निम् एवमुक्तप्रकारेण ᵛववन्दिम स्तुमः । ᵛसुक्रतुः शोभनकर्मा ᵛसः अग्निः ᵛनः अस्मान् ᵛविश्वाः सर्वान् ᵛद्विषः शत्रून् ᵛअति ᵛपर्षत् अतिपारयतु[4] । कथमिव । ᵛनावा साधनेन सिन्धुम् ᵛइव ॥ ॥ १८ ॥

' अग्ने पावक ' इति नवर्चं द्वादशं सूक्तम् । वसूयव ऋषयः । गायत्री छन्दः । अग्निर्देवता । तथा चानुक्रान्तम्—' अग्ने गायत्रम् ' इति । प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—' अग्ने पावक दूतं व इति सूक्ते ' ( आश्व. श्रौ. ४. १३ ) इति । आधाने द्वितीयायामिष्टौ प्रथमस्य हविषः ' अग्ने पावक ' इत्येषा याज्या । सूत्रितं च—' स नः पावक दीदिवोऽग्ने पावक रोचिषा ' ( आश्व. श्रौ. २. १ ) इति ॥

अग्ने॑ पावक रो॒चिषा॑ म॒न्द्रया॑ देव जि॒ह्वया॑ । आ दे॒वान्व॑क्षि॒ यक्षि॑ च ॥१॥

अग्ने॑ । पा॒व॒क॒ । रो॒चिषा॑ । म॒न्द्रया॑ । दे॒व॒ । जि॒ह्वया॑ । आ । दे॒वान् । व॒क्षि॒ । यक्षि॑ । च॒ ॥ १ ॥

---

१. घ-च-ण-भ-वा । २. ख-ग-घ-च-ज-झ-ण-न-भ-र-' त्वत्तः ' नास्ति । ३. ख-च-झ-ण-न-भ-भान्ति । ४. प-फ-ब-अतिपारयत्वेव ।

हे पावक शोधक रोचिषा स्वदीप्त्या मन्द्रया देवानां मादयित्र्या जिह्वया च हे देव द्योतमान अग्ने देवान् आ वक्षि यज्ञार्थमावह । यक्षि च । तान् यज ॥

तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् । देवाँ आ वीतये वह ॥ २ ॥

तम् । त्वा । घृतस्नो इति घृतऽस्नो । ईमहे । चित्रभानो इति चित्रऽभानो । स्वःऽदृशम् । देवान् । आ । वीतये । वह ॥ २ ॥

हे घृतस्नो घृतस्य प्रेरक । यद्वा घृतेन जनित[1] । हे चित्रभानो । चित्रा नानाविधा भानवो रश्मयो यस्यासौ चित्रभानुः । तस्य संबोधनम् । स्वर्दृशं सर्वद्रष्टारं तं[2] त्वा त्वाम् ईमहे याचामहे । अतः वीतये हविषां भक्षणाय देवान् आ वह ॥

वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तमध्वरे ॥ ३ ॥

वीतिऽहोत्रम् । त्वा । कवे । द्युऽमन्तम् । सम् । इधीमहि । अग्ने । बृहन्तम् । अध्वरे ॥ ३ ॥

हे कवे क्रान्तदर्शिन्[3] अग्ने वीतिहोत्र कान्तयज्ञ[4] द्युमन्तं दीप्तिमन्तं बृहन्तं महान्तं त्वा त्वाम् अध्वरे यज्ञे समिधीमहि समिद्भिः संदीपयामः ॥

अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये । होतारं त्वा वृणीमहे ॥ ४ ॥

अग्ने । विश्वेभिः । आ । गहि । देवेभिः । हव्यऽदातये । होतारम् । त्वा । वृणीमहे ॥ ४ ॥

हे अग्ने विश्वेभिः सर्वैः देवेभिः देवैः सह त्वं हव्यदातये हविषां दात्रे यजमानाय तदर्थम् आ गहि यज्ञं प्रत्यागच्छ । यतः होतारं देवानामाह्वातारं त्वा त्वां वृणीमहे प्रार्थयामहे ॥

यजमानाय सुन्वत आग्ने सुवीर्यं वह । देवैरा सत्सि बर्हिषि ॥ ५ ॥

यजमानाय । सुन्वते । आ । अग्ने । सुऽवीर्यम् । वह । देवैः । आ । सत्सि । बर्हिषि ॥ ५ ॥

हे अग्ने सुन्वते अभिषवं कुर्वते यजमानाय सुवीर्यं शोभनं बलम् आ वह प्रापय । किंच देवैः सह बर्हिषि यज्ञे आ सत्सि आसीदेति ॥ ॥ १९ ॥

समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि । देवानां दूत उक्थ्यः ॥ ६ ॥

सम्ऽइधानः । सहस्रऽजित् । अग्ने । धर्माणि । पुष्यसि । देवानाम् । दूतः । उक्थ्यः ॥ ६ ॥

१. ख-च-ण-जरित्र ; झ-न-भ-र-जरित । २. प-फ-ब-तं तादृशम् । ३. ख-च-झ-ण-न-भ-हे क्रान्तदर्शिन् । ४. ख-र-क्रान्तयज्ञम् ; झ-क्रान्तं यज्ञम् ; त-कान्तयज्ञं यद्वा प्रिय(य)ज्ञम् ।

हे सहस्रजित् सहस्रस्य जेतः अग्ने समिधानः हविर्भिः समिध्यमानः उक्थ्यः प्रशस्यस्त्वं देवानां दूतः सन् धर्माणि नः कर्माणि यज्ञादिक्रियाः पुष्यसि पोषयसि ॥

न्य१॒ग्निं जा॒तवे॑दसं होत्र॒वाहं॒ यवि॑ष्ठ्यम् । दधा॑ता दे॒वमृ॒त्विज॑म् ॥ ७ ॥

नि । अ॒ग्निम् । जा॒तऽवे॑दसम् । हो॒त्र॒ऽवाह॑म् । यवि॑ष्ठ्यम् । दधा॑त । दे॒वम् । ऋ॒त्विज॑म् ॥ ७ ॥

हे यजमानाः जातवेदसम् । जातानि भूतानि वेत्तीति जातवेदाः । तं होत्रवाहं होत्रस्य यज्ञस्य वोढारं यविष्ठ्यं युवतमं देवं द्योतमानम् ऋत्विजम् ऋतौ यष्टारम् अग्निं नि दधात निधत्त ॥

प्र य॒ज्ञ ए॒त्वानु॒षग॒द्या दे॒वव्य॑चस्तमः । स्तृ॒णी॒त ब॒र्हिरा॒सदे॑ ॥ ८ ॥

प्र । य॒ज्ञः । ए॒तु॒ । आ॒नु॒षक् । अ॒द्य । दे॒वव्य॑चःऽतमः । स्तृ॒णी॒त । ब॒र्हिः । आ॒ऽसदे॑ ॥ ८ ॥

अद्य अस्मिन्नहनि देवव्यचस्तमः देवैः प्रकाशमानैः स्तोतृभिः व्याप्ततमः[1] यज्ञः यज्ञसाधनं हविः आनुषक् अनुषक्तं यथा भवति तथा प्र एतु देवान् गच्छतु । हे ऋत्विजः आसदे अग्नेरासदनार्थं बर्हिः स्तृणीत ॥

एदं म॒रुतो॑ अ॒श्विना॑ मि॒त्रः सी॑दन्तु॒ वरु॑णः । दे॒वासः॒ सर्व॑या वि॒शा ॥ ९ ॥

आ । इ॒दम् । म॒रुतः॑ । अ॒श्विना॑ । मि॒त्रः । सी॒द॒न्तु॒ । वरु॑णः । दे॒वासः॑ । सर्व॑या । वि॒शा ॥ ९ ॥

मरुतः मरुद्गणाः अश्विना अश्विनौ देवानां भिषजौ मित्रः सूर्यः वरुणः च देवासः एते सर्वे देवाः सर्वया विशा समस्तेन स्वीयेन परिजनेन सार्धम् इदं बर्हिः आ[2] सीदन्तु[2] ॥ ॥२०॥

'अनस्वन्ता' इति षड्ऋचं त्रयोदशं सूक्तम् । अत्रानुक्रमणिका—'अनस्वन्ता षट् त्रैवृष्णपौरुकुत्स्यौ द्वौ त्र्यरुणत्रसदस्यू राजानौ भारतश्चाश्वमेधोऽन्त्यास्तिस्रोऽनुष्टुभो नात्मात्मने दद्यादिति सर्वास्वत्रिं केचिदन्त्यैन्द्राग्नी' इति । त्रिवृष्णस्य पुत्रस्त्र्यरुणः पुरुकुत्सस्य पुत्रस्त्रसदस्युर्भरतस्य पुत्रोऽश्वमेध एते त्रयोऽपि राजानः संभूयास्य सूक्तस्य ऋषयः । यद्वा । अत्रिरेव ऋषिः । आद्यास्तिस्रस्त्रिष्टुभः चतुर्थ्याद्यास्तिस्रोऽनुष्टुभः । षष्ठीन्द्राग्निदेवत्या शिष्टाः पञ्चाग्नेय्यः । विनियोगो लैङ्गिकः ॥

अन॑स्वन्ता॒ सत्प॑तिर्मामहे मे॒ गावा॑ चेति॑ष्ठो॒ असु॑रो म॒घोनः॑ ।
त्रै॒वृ॒ष्णो अ॑ग्ने द॒शभिः॑ स॒हस्रै॒र्वैश्वा॑नर॒ त्र्य॑रुणश्चिकेत ॥ १ ॥

अन॑स्वन्ता । सत्ऽप॑तिः । म॒म॒हे॒ । मे॒ । गावा॑ । चेति॑ष्ठः । असु॑रः । म॒घोनः॑ ।
त्रै॒वृ॒ष्णः । अ॒ग्ने॒ । द॒शऽभिः॑ । स॒हस्रैः॑ । वैश्वा॑नर । त्रिऽअ॑रुणः । चि॒के॒त॒ ॥ १ ॥

---

१. ख-च-ण—व्यष्टृतमः; झ-भ—व्याष्टृतमः; र—व्याप्तृतमः । २. ख-च-झ-ण-त-न-भ-र-श—सीदन्तु आसीदन्तु ।

अत्री राजर्षीणां दानमग्नेः पुरतोऽनेन सूक्तेनावर्णयत् । हे ᵛवैश्वानर विश्वेषां नराणां[1] नेतः ᵛअग्ने ᵛसत्पतिः सतां पालयिता ᵛचेतिष्ठः ज्ञातृतमः ᵛअसुरः बलवान् ᵛमघोनः मघवा धनवान् ॥ प्रथमार्थे ङसिः ॥ ᵛत्रैवृष्णः त्रिवृष्णपुत्रः ᵛत्र्यरुणः[2] त्र्यरुणः इत्येतन्नामा[2] राजर्षिः ᵛअनस्वन्ता अनस्वन्तौ अनसा शकटेन संयुक्तौ[3] ᵛगावा गावावनड्वाहौ गवां हिरण्यानां[4] वा[4] ᵛदशभिः ᵛसहस्रैः सह ᵛमे मह्यं ᵛममहे ददौ । ' महि दाने ' । स राजर्षिः ᵛचिकेत सर्वैर्जनैरनेन दानेन ज्ञायते ॥

**यो मे॑ श॒ता च॑ विंश॒तिं च॒ गोनां॒ हरी॑ च यु॒क्ता सु॒धुरा॒ ददा॑ति ।**
**वैश्वा॑नर॒ सुष्टु॑तो वावृधा॒नोऽग्ने॒ यच्छ॒ त्र्य॑रुणाय॒ शर्म॑ ॥ २ ॥**

यः । मे॒ । श॒ता । च॒ । विं॒शतिम् । च॒ । गोना॑म् । ह॒री इति॑ । च॒ । यु॒क्ता । सु॒ऽधुरा॑ । ददा॑ति ।
वैश्वा॑नर । सु॒ऽस्तु॒तः । व॒वृ॒धा॒नः । अग्ने॑ । यच्छ॑ । त्रिऽअ॑रुणाय । शर्म॑ ॥ २ ॥

ᵛयः त्र्यरुणः ᵛशता ᵛच[5] शतानि सुवर्णानां ᵛगोनां गवां ᵛविंशतिं ᵛच ᵛयुक्ता रथेन युक्तौ ᵛसुधुरा सुधुरौ सुष्ठु धुरं वहन्तौ ᵛहरी अश्वौ ᵛच ᵛमे मह्यं ᵛददाति अददात् हे ᵛवैश्वानर ᵛअग्ने ᵛसुष्टुतः अस्माभिः सम्यक्स्तुतः ᵛववृधानः हविर्भिर्वर्धमानस्त्वं तस्मै ᵛत्र्यरुणाय ᵛशर्म सुखं ᵛयच्छ प्रयच्छ ॥

**ए॒वा ते॑ अग्ने सु॒म॒तिं च॑का॒नो नवि॑ष्ठाय नव॒मं त्र॒सद॑स्युः ।**
**यो मे॒ गिर॑स्तुविजा॒तस्य॑ पू॒र्वीर्यु॒क्तेना॒भि त्र्य॑रुणो गृ॒णाति॑ ॥ ३ ॥**

ए॒व । ते॒ । अ॒ग्ने॒ । सु॒ऽम॒तिम् । च॒का॒नः । नवि॑ष्ठाय । न॒व॒मम् । त्र॒सद॑स्युः ।
यः । मे॒ । गिरः॑ । तु॒वि॒ऽजा॒तस्य॑ । पू॒र्वीः । यु॒क्तेन॑ । अ॒भि । त्रिऽअ॑रुणः । गृ॒णाति॑ ॥ ३ ॥

ᵛयः ᵛत्र्यरुणः ᵛतुविजातस्य बह्वपत्यस्य ᵛमे ᵛपूर्वीः बह्वीः ᵛगिरः स्तुतीः श्रुत्वा प्रीतः सन् ᵛयुक्तेन अभियुक्तेन मनसा ᵛअभि ᵛगृणाति इदं गृहाणेदं गृहाणेति यथा[6] मां ब्रवीति ᵛएव[7] एवं हे ᵛअग्ने ᵛनविष्ठाय अत्यन्तं स्तुत्याय ᵛते तुभ्यं ᵛनवमं नवतमां ᵛसुमतिं स्तुतिं ᵛचकानः कामयमानः ᵛत्रसदस्युः अपि इदं गृहाणेदं गृहाणेति मां प्रार्थितवान् ॥

**यो म॒ इति॑ प्र॒वोच॒त्यश्व॑मेधाय सू॒रये॑ ।**
**दद॑दृ॒चा स॒निं य॒ते दद॑न्मे॒धामृ॑ताय॒ते ॥ ४ ॥**

यः । मे॒ । इति॑ । प्र॒ऽवोच॑ति । अश्व॑ऽमेधाय । सू॒रये॑ ।
दद॑त् । ऋ॒चा । स॒निम् । य॒ते । दद॑त् । मे॒धाम् । ऋ॒त॒ऽय॒ते ॥ ४ ॥

---

१. ख-च-ण—ऋषीणाम् । २. ख-च-ण—त्र्यरुणनामा; ग-घ-ज—अ(त्र्य)रुण एतन्नाम; प-फ-ब—अ(त्र्य)रुणं एतन्नामा; झ-त-भ-र—त्र्यरुणः त्र्यरुण इतिनामा; न—अ(त्र्य)रुण इतिनामा । ३. ख-च-झ-ण-न-भ-र—संपृक्तौ । ४. ग-घ-ज-प-फ-ब—हिरण्यादीनां च; श—हिरण्यादीनां वा । ५. ख-च-झ-ण-न-भ-र—' च ' नास्ति । ६. ग-घ-ज-श—तथा । ७. ख-च-झ-ण-त-न-भ-र-श—' एव ' नास्ति ।

ᐯयः भिक्षमाणोऽर्थी ᐯसूरये प्रेरकाय धनानां दात्रे वास्मै ᐯअश्वमेधाय राजर्षये ᐯमे मह्यं देहि ᐯइति ᐯप्रवोचति प्रब्रवीति । योऽश्वमेधं धनानि भिक्षते इत्यर्थः । ᐯऋचा अग्नेः स्तोत्रेण सह ᐯयते आत्मनः समीपं गच्छते तस्मा अर्थिनेऽश्वमेधः ᐯसनिं धनं ᐯददत् ददाति । हे अग्ने ᐯऋतायते यज्ञमिच्छते तस्मा अश्वमेधाय ᐯमेधां यज्ञविषयां प्रज्ञां ᐯददत् देहि ॥

**यस्यं मा परुषाः शतमुद्धर्षयन्त्युक्षणंः ।**

**अश्वमेधस्य दानाः सोमाइव त्र्याशिरः ॥ ५ ॥**

यस्यं । मा । परुषाः । शतम् । उत्ऽहर्षयन्ति । उक्षणंः ।

अश्वंऽमेधस्य । दानाः । सोमाःऽइव । त्रिऽआशिरः ॥ ५ ॥

ᐯयस्य येन ᐯअश्वमेधस्य अश्वमेधेन ᐯदानाः दत्ताः ᐯपरुषाः कामानां पूरकाः ᐯशतम् ᐯउक्षणः उक्षाणो बलीवर्दाः ᐯमा माम् ᐯउद्धर्षयन्ति उत्कर्षेण हर्षयन्ति हे अग्ने ते उक्षाणः ᐯत्र्याशिरः । दधिसक्तुपयोरूपास्तिस्र आशिरोऽधिश्रयणसाधनभूता येषां ते त्र्याशिरः । ᐯसोमाइव तव प्रीणनाय भवन्तु ॥

**इन्द्राग्नी शतदाव्न्यश्वमेधे सुवीर्यम् ।**

**क्षत्रं धारयतं बृहद्दिवि सूर्यमिवाजरम् ॥ ६ ॥**

इन्द्राग्नी इति । शतऽदाव्नि । अश्वंऽमेधे । सुऽवीर्यम् ।

क्षत्रम् । धारयतम् । बृहत् । दिवि । सूर्यम्ऽइव । अजरम् ॥ ६ ॥

हे ᐯइन्द्राग्नी ᐯशतदाव्नि । शतमपरिमितमर्थिभ्यो धनं ददातीति शतदावा । तस्मिन् ᐯअश्वमेधे राजर्षौ ᐯसुवीर्यं शोभनवीर्यसहितं ᐯबृहत् महत् ᐯअजरं जरारहितं ᐯक्षत्रं धनं ᐯधारयतं निधारयतम् । कथमिव । ᐯदिवि अन्तरिक्षे ᐯसूर्यमिव ॥ ॥ २१ ॥

' समिद्धो अग्निः ' इति षडृचं चतुर्दशं सूक्तम् । अत्रेयमनुक्रमणिका—' समिद्धो विश्ववारात्रेयी त्रिष्टुब्जगती त्रिष्टुबनुष्टुब्गायत्र्यौ ' इति । अत्रिगोत्रोत्पन्ना विश्ववारानामिका अस्य सूक्तस्य ऋषिः । आद्यातृतीये त्रिष्टुभौ द्वितीया जगती चतुर्थ्यनुष्टुबन्त्ये गायत्र्यौ । अग्निर्देवता । सूक्तविनियोगो लैङ्गिकः ॥

**समिद्धो अग्निर्दिवि शोचिरश्रेत्प्रत्यङ्ङुषसमुर्विया वि भाति ।**

**एति प्राची विश्ववारा नमोभिर्देवाँ ईळाना हविषा घृताची ॥ १ ॥**

सम्ऽइद्धः । अग्निः । दिवि । शोचिः । अश्रेत् । प्रत्यङ् । उषसम् । उर्विया । वि । भाति ।

एति । प्राची । विश्वऽवारा । नमःऽभिः । देवान् । ईळाना । हविषा । घृताची ॥ १ ॥

vसमिद्धः सम्यग्दीप्तः vअग्निः vदिवि द्योतमानेऽन्तरिक्षे vशोचिः तेजः vअश्रेत् श्रयति। तथा vउषसं vप्रत्यङ् उषसमभिमुखः सन् vउर्विया उरु विस्तीर्णं vवि vभाति विशेषेण भ्राजते। vनमोभिः स्तोत्रैः vदेवान् इन्द्रादीन् vईळाना स्तुवती vहविषा पुरोडाशादिलक्षणेन युक्तया vघृताची घृताच्या स्रुचा सहिता vविश्ववारा सर्वमपि पापरूपं शत्रुं वारयित्र्येतन्नामिका vप्राची प्राङ्मुखी सती vएति। एवंभूतमग्निं प्रतिगच्छति॥

**समिध्यमानो अमृतस्य राजसि हविष्कृण्वन्तं सचसे स्वस्तये।**
**विश्वं स धत्ते द्रविणं यमिन्वस्यातिथ्यमग्ने नि च धत्त इत्पुरः॥ २॥**

सम्ऽइध्यमानः। अमृतस्य। राजसि। हविः। कृण्वन्तम्। सचसे। स्वस्तये।
विश्वम्। सः। धत्ते। द्रविणम्। यम्। इन्वसि।
आतिथ्यम्। अग्ने। नि। च। धत्ते। इत्। पुरः॥ २॥

हे अग्ने vसमिध्यमानः सम्यगिध्यमानस्त्वम् vअमृतस्य उदकस्य vराजसि ईशिषे। तथा vहविष्कृण्वन्तं पुरोडाशादिहविष्कर्तारं यजमानं vस्वस्तये अविनाशाय vसचसे सेवसे। किंच vयं यजमानम् vइन्वसि गच्छसि vसः यजमानः vविश्वं समस्तं vद्रविणं पश्वादिलक्षणं[1] धनं vधत्ते धारयति। अपि च हे vअग्ने vआतिथ्यम् अतिथिरूपस्य तव योग्यं हविः vपुरः vइत् तव पुरस्तादेव vनि vधत्ते vच स्थापयति च॥

पवित्रेष्ट्यां स्विष्टकृतः 'अग्ने शर्ध' इति याज्या। सूत्र्यते[१] हि[२]—'जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये' (आश्व. श्रौ. २. १२) इति। साकमेधेषु मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालमित्यत्राप्येषैव स्विष्टकृतो याज्या। सूत्रितं च—'जुष्टो दमूना अग्ने शर्ध महते सौभगायेति संयाज्ये' (आश्व. श्रौ. २. १८) इति[३]॥

**अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु।**
**सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि॥ ३॥**

अग्ने। शर्ध। महते। सौभगाय। तव। द्युम्नानि। उत्ऽतमानि। सन्तु।
सम्। जाःऽपत्यम्। सुऽयमम्। आ। कृणुष्व। शत्रुऽयताम्। अभि। तिष्ठ। महांसि॥ ३॥

हे vअग्ने त्वं vमहते प्रभूताय vसौभगाय अस्माकं शोभनधनत्वाय vशर्ध शत्रून् सहस्व। तथा vतव संबन्धीनि vद्युम्नानि धनानि तेजांसि वा vउत्तमानि उत्कृष्टानि vसन्तु भवन्तु। किंच हे अग्ने त्वं[४] vजास्पत्यम्। जा जाया च पतिश्च जायापती। तयोः कर्म जास्पत्यम्। तत् vसुयमं सुष्ठु नियमनो-

---

१. ख-च-झ-ण-भ-वस्वादिलक्षणम्। २. ख-च-झ-ण-न-भ-सूत्रितं च। ३. न-इति। स्नुषाश्वशुरेष्ट्यां एषैव स्विष्टकृतो याज्या। तथैव सूत्रितम्। ४. श-सम्।

पेतम् । अन्योन्यसंश्लिष्टमित्यर्थः । ᵛसम् ᵛआ ᵛकृणुष्व सम्यक् कुरुष्व । अपि च ᵛशत्रूयतां शत्रुमात्मन इच्छतां सपत्नानां ᵛमहांसि तेजांसि ᵛअभि ᵛतिष्ठ आक्रमस्व ॥

समिद्धस्य प्रमहसोऽग्ने वन्दे तव श्रियम् ।

वृषभो द्युम्नवाँ असि समध्वरेष्विध्यसे ॥ ४ ॥

सम्ऽइद्धस्य । प्रऽमहसः । अग्ने । वन्दे । तव । श्रियम् ।

वृषभः । द्युम्नऽवान् । असि । सम् । अध्वरेषु । इध्यसे ॥ ४ ॥

हे ᵛअग्ने ᵛसमिद्धस्य प्रवृद्धस्य[1] ᵛप्रमहसः प्रकृष्टतेजसः ᵛतव संबन्धिनीं ᵛश्रियं दीप्तिं ᵛवन्दे । अहं यजमानः स्तौमि । ᵛवृषभः कामानां वर्षिता त्वं ᵛद्युम्नवान् ᵛअसि धनवान् भवसि । ᵛअध्वरेषु यज्ञेषु ᵛसम् ᵛइध्यसे सम्यग्दीप्यसे ॥

दर्शपूर्णमासयोः 'समिद्धो अग्न आहुत' इति द्वे सामिधेन्यौ । सूत्रितं च-'समिद्धो अग्न आहुतेति द्वे' (आश्व. श्रौ. १. २ ) इति ॥

समिद्धो अग्न आहुत देवान्यक्षि स्वध्वर । त्वं हि हव्यवाळसि ॥ ५ ॥

सम्ऽइद्धः । अग्ने । आऽहुत । देवान् । यक्षि । सुऽअध्वर । त्वम् । हि । हव्यऽवाट् । असि ॥ ५ ॥

हे ᵛआहुत यजमानैः आ समन्तात् हुत हे ᵛस्वध्वर शोभनयज्ञोपेत हे ᵛअग्ने ᵛसमिद्धः सम्यग्दीप्तः ᵛत्वं ᵛदेवान् द्योतमानानिन्द्रादीन् ᵛयक्षि यजस्व । ᵛहि यस्मात् कारणात् हे अग्ने त्वं ᵛहव्यवाट् ᵛअसि हव्यानां वोढा भवसि । अतः कारणात् देवान् यजस्वेति संबन्धः ॥

आ जुहोता दुवस्यताग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनम् ॥ ६ ॥

आ । जुहोत । दुवस्यत । अग्निम् । प्रऽयति । अध्वरे । वृणीध्वम् । हव्यऽवाहनम् ॥ ६ ॥

हे ऋत्विजो यूयम् ᵛअध्वरे अस्मदीययागे ᵛप्रयति प्रवृत्ते सति ᵛहव्यवाहनं हविषां वोढारम् एतन्नामकम् ᵛअग्निम् ᵛआ ᵛजुहोत आ समन्तात् जुहोत । तथा ᵛदुवस्यत परिचरत । ᵛवृणीध्वम् संभजध्वं च हव्यवाहनम् । हव्यवाहननामकस्यैवाग्नेर्देवतासंबन्धो यजमानैर्वरणीयत्वं च तैत्तिरीये स्पष्टमाम्नातं—'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणां सहरक्षा असुराणाम् । त एतर्ह्याशंसन्ते मां वरिष्यते मामिति वृणीध्वं हव्यवाहनमित्याह य एव देवानां तं वृणीते' (तै. सं. २. ५. ८. ६ ) इति ॥ ॥ २२ ॥

'त्र्यर्यमा' इति पञ्चदशर्चं पञ्चदशं सूक्तम् । अत्रानुक्रमणिका—'त्र्यर्यमा पञ्चोना गौरिवीतिः शाक्त्य ऐन्द्रमुशना यदौशनसो वा पादः' इति। शक्तिगोत्रोत्पन्नो गौरिवीतिर्नाम ऋषिः । अनुक्तत्वात्

१. प-फ-ब-सम्यगिद्धस्य ।

त्रिष्टुप्[1]। इन्द्रो देवता मण्डलादिपरिभाषया निवृत्तत्वात्। 'उशना यत्सहस्यैः' इति पादः औशनस ऐन्द्रो वा। आभिप्लविके तृतीयेऽहनि मरुत्वतीये एतन्निविद्धानम्। सूत्रितं च–'तृतीयस्य त्र्यर्यमा यो जात एवेति मध्यंदिनः' (आश्व. श्रौ. ७. ७) इति॥

त्र्यर्यमा मनुषो देवताता त्री रोचना दिव्या धारयन्त।

अर्चन्ति त्वा मरुतः पूतदक्षास्त्वमेषामृषिरिन्द्रासि धीरः॥ १॥

त्री। अर्यमा। मनुषः। देवऽताता। त्री। रोचना। दिव्या। धारयन्त।

अर्चन्ति। त्वा। मरुतः। पूतऽदक्षाः। त्वम्। एषाम्। ऋषिः। इन्द्र। असि। धीरः॥१॥

ᐯमनुषः मनोः संबन्धिनी ᐯदेवताता देवतातौ यज्ञे ᐯत्री त्रीणि ᐯअर्यमा अर्यमाणि यानि तेजांसि सन्ति। तथा[2] ᐯत्री त्रीणि[2] ᐯरोचना रोचमानानि वाय्वग्निसूर्यात्मकानि ᐯदिव्या दिव्यान्यन्तरिक्षे भवानि तानि तेजांसि ᐯधारयन्त मरुतो धारयन्ति। ᐯपूतदक्षाः शुद्धबलाः ᐯमरुतः ᐯत्वा त्वाम् ᐯअर्चन्ति स्तुवन्ति। हे ᐯइन्द्र ᐯधीरः धीमान् ᐯत्वमेषां मरुताम् ᐯऋषिः ᐯअसि द्रष्टा भवसि॥

अनु यदीं मरुतो मन्दसानमार्चन्निन्द्रं पपिवांसं सुतस्य।

आदत्त वज्रमभि यदहिं हन्नपो यह्वीरसृजत्सर्तवा उ॥ २॥

अनु। यत्। ईम्। मरुतः। मन्दसानम्। आर्चन्। इन्द्रम्। पपिऽवांसम्। सुतस्य।

आ। अदत्त। वज्रम्। अभि। यत्। अहिम्। हन्।

अपः। यह्वीः। असृजत्। सर्तवै। ऊँ इति॥ २॥

ᐯयत् यदा ᐯमरुतो ᐯमन्दसानं तृप्यन्तं ᐯसुतस्य अभिषुतं सोमं ᐯपपिवांसं पीतवन्तम् ᐯईम् एनम् ᐯइन्द्रम् ᐯअनु ᐯआर्चन् अन्वस्तुवन्। तदेन्द्रः ᐯवज्रम् ᐯआदत्त आददौ। ततः ᐯयत् यदा ᐯअहिं वृत्रम् ᐯअभि ᐯहन् अभ्यहन् अभिहतवान् तदा ᐯयह्वीः महतीः ᐯअपः वृत्रेण निरुद्धान्युदकानि ᐯसर्तवै स्वैरत्वेन सर्तुं गन्तुम् ᐯअसृजत् निरोधाच्चामुञ्चत्[3]॥

उत ब्रह्माणो मरुतो मे अस्येन्द्रः सोमस्य सुषुतस्य पेयाः।

तद्धि हव्यं मनुषे गा अविन्ददहन्नहिं पपिवाँ इन्द्रो अस्य॥ ३॥

उत। ब्रह्माणः। मरुतः। मे। अस्य। इन्द्रः। सोमस्य। सुऽसुतस्य। पेयाः।

तत्। हि। हव्यम्। मनुषे। गाः। अविन्दत्। अहन्। अहिम्। पपिऽवान्। इन्द्रः। अस्य॥३॥

---

१. त-त्रिष्टुप् छन्दः। २. ख-च-झ-ण-न-भ-र-'तथा त्री त्रीणि' नास्ति; श-त्री त्रीणि। ३. प-फ-ब-निरोधाच्चामुञ्चत्। उ पूरणः।

ˇउत अपि च हे ˇब्रह्माणः बृहन्तो हे ˇमरुतः यूयम् ˇइन्द्रः च ˇसुसुतस्य[1] सुष्ठुभिषुतस्य ˇमे मदीयस्य ˇअस्य ˇसोमस्य इमं सोमम् ॥ द्वितीयार्थे षष्ठी ॥ ˇपेयाः पिबत ॥ पिबतेराशीर्लिङि मध्यमबहुवचनस्यैकवचनम् ॥ ˇतद्धि तत्खलु ˇहव्यं युष्माभिः पीतं सोमात्मकं हविः ˇमनुषे मनुष्याय यजमानाय ˇगाः धेनूर्वृष्टिलक्षणान्युदकानि वा ˇअविन्दत् वेदयति। यजमानं गा लम्भयतीत्यर्थः। किंच ˇअस्य इमं सोमं ˇपपिवान् पीतवान् ˇइन्द्रः ˇअहिं वृत्रम् ˇअहन् अवधीत् ॥

**आद्रोदसी वितरं वि ष्कभायत्संविव्यानश्चिद्भियसे मृगं कः।**

**जिगर्तिमिन्द्रो अपजर्गुराणः प्रति श्वसन्तमव दानवं हन् ॥ ४ ॥**

आत्। रोदसी इति। विऽतरम्। वि। स्कभायत्।

सम्ऽविव्यानः। चित्। भियसे। मृगम्। करिति कः।

जिगर्तिम्। इन्द्रः। अपऽजर्गुराणः। प्रति। श्वसन्तम्। अव। दानवम्। हन्निति हन्॥ ४ ॥

ˇइन्द्रः परमैश्वर्ययुक्तः ˇआत् सोमपानानन्तरं ˇरोदसी द्यावापृथिव्यौ ˇवितरम् अतिशयेन ॥ 'अमु च छन्दसि' इति वेः तरपि कृते अमुप्रत्ययः ॥ ˇवि ˇष्कभायत् व्यस्तभ्नात् चलनरहिते अकरोत्। ˇसंविव्यानश्चित् संवृण्वानः[2] संगच्छमानो वेन्द्रः ॥ व्ययतेर्वा संवरणकर्मणो वेतेर्वा गतिकर्मणो रूपम्। चित् इति एवेत्यस्यार्थे वर्तते ॥ ˇमृगं मृगवत्पलायमानं वृत्रं ˇभियसे भयाय ˇकः अकार्षीत्। करोतेर्लुङि 'मन्त्रे घसह्वर॰' इत्यादिना च्लेर्लोपः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः ॥ इन्द्रः ˇजिगर्तिं गिरन्तमाच्छादयन्तं ˇश्वसन्तं भयार्थं श्वासं कुर्वन्तं ˇदानवं दनोः पुत्रं वृत्रम् ˇअपजर्गुराणः आच्छादनाद्विमोचयन् ˇप्रति प्रतिगत्य ˇअव ˇहन् अवहतवान् ॥

**अध क्रत्वा मघवन्तुभ्यं देवा अनु विश्वे अददुः सोमपेयम्।**

**यत्सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा एतशे कः ॥ ५ ॥**

अध। क्रत्वा। मघऽवन्। तुभ्यम्। देवाः। अनु। विश्वे। अददुः। सोमऽपेयम्।

यत्। सूर्यस्य। हरितः। पतन्तीः। पुरः। सतीः। उपराः। एतशे। करिति कः ॥ ५ ॥

ˇअध अपि च हे ˇमघवन् धनवन्निन्द्र ˇक्रत्वा क्रतुना त्वदीयेन कर्मणा ˇविश्वे सर्वे ˇदेवाः द्योतमाना वह्न्यादयः ˇतुभ्यं त्वदर्थं ˇसोमपेयं सोमपानम् ˇअनु ˇअददुः आनुपूर्व्येण[3] दत्तवन्तः। ततः प्रभृतीन्द्रो देवेभ्यः सर्वेभ्योऽधिकोऽभवदित्यर्थः। तथा च श्रूयते—'स महान्भूत्वा देवता अब्रवीदुद्धारं म उद्धरत' (ऐ. ब्रा. ३. २१) इत्यादि। हे इन्द्र ˇयत् यस्त्वं ˇपतन्तीः आगच्छन्तीः

१. ख–सुषुतस्य। २. प-फ-ब-संवृण्वान एव। ३. त-अनुपूर्वेण।

ᵛपुरः ᵛसतीः पुरस्ताद्भवन्तीः ᵛसूर्यस्य संबन्धिनीः ᵛहरितः वडवाः ᵛउपराः उपरता मन्दगतीः ᵛएतशे एतशाख्याय ऋषये ᵛकः अकार्षीः। एतशो हि स्वश्वपुत्रेण सूर्येण सह स्पर्धामकरोदिति यावत्। तथा च निगमान्तरे—'प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः' ( ऋ. सं. १. ६१. १५ ) इति[1] ॥　　॥ २३ ॥

नव यद॑स्य नव॒तिं च॑ भो॒गान्त्सा॒कं वज्रे॑ण म॒घवा॑ विवृ॒श्चत्।
अर्च॒न्तीन्द्रं॑ म॒रुतः॑ स॒धस्थे॒ त्रैष्टु॑भेन॒ वच॑सा बाधत॒ द्याम् ॥ ६ ॥
नव॑। यत्। अ॒स्य॒। न॒व॒तिम्। च॒। भो॒गान्। सा॒कम्। वज्रे॑ण। म॒घऽवा॑। वि॒ऽवृ॒श्चत्।
अर्च॑न्ति। इन्द्र॑म्। म॒रुतः॑। स॒धऽस्थे॑। त्रैस्तु॑भेन। वच॑सा। बा॒ध॒त॒। द्याम् ॥ ६ ॥

ᵛयत् यदा ᵛमघवा धनवानिन्द्रः। अस्य इत्यनेन शम्बर उच्यते। ᵛअस्य शम्बरस्य संबन्धीनि ᵛनव नवसंख्याकानि ᵛनवतिं ᵛच नवतिसंख्याकानि च ᵛभोगान् पुराणि। भोगान् इत्यन्तोदात्तः पुरवचनः। ᵛसाकं युगपदेव ᵛवज्रेण ᵛविवृश्चत् व्यवृश्चत् अभिनत् तदा ᵛमरुतः ᵛसधस्थे सहस्थाने युद्धे वा स्थितम् ᵛइन्द्रं ᵛत्रैष्टुभेन त्रिष्टुप्छन्दस्केन ᵛवचसा वाग्रूपेण स्तोत्रेण ᵛअर्चन्ति अस्तुवन्। इन्द्र एवं स्तुतः सन् ᵛद्यां मरुद्भिः प्रयुज्यमानेन मन्त्रेण दीप्तं शम्बराख्यमसुरं ᵛबाधत अबाधत पिपीडे ॥

सखा॒ सख्ये॑ अपच॒त्तूय॑म॒ग्निर॒स्य क्रत्वा॑ महि॒षा त्री श॒तानि॑।
त्री सा॒कमिन्द्रो॒ मनु॑षः॒ सरां॑सि सु॒तं पि॑बद्वृ॒त्रह॒त्याय॒ सोम॑म् ॥ ७ ॥
सखा॑। सख्ये॑। अ॒प॒च॒त्। तूय॑म्। अ॒ग्निः। अ॒स्य। क्रत्वा॑। म॒हि॒षा। त्री। श॒तानि॑।
त्री। सा॒कम्। इन्द्रः॑। मनु॑षः। सरां॑सि। सु॒तम्। पि॒ब॒त्। वृ॒त्र॒ऽहत्या॑य। सोम॑म् ॥ ७ ॥

ᵛसखा इन्द्रस्य मित्रभूतः ᵛअग्निः ᵛमहिषा महिषाणां पशूनां ᵛत्री त्रीणि ᵛशतानि शतसंख्याकानि ᵛसख्ये सख्युर्मित्रभूतस्य ᵛअस्य इन्द्रस्य ᵛक्रत्वा कर्मणा निमित्तभूतेन ᵛतूयं क्षिप्रम् ᵛअपचत् पपाच। किंच ᵛइन्द्रः परमैश्वर्ययुक्तः ᵛमनुषः मनोः संबन्धीनि ᵛत्री त्रीणि ᵛसरांसि पात्राणि। अत्र सरःशब्देन पूतभृदाधवनीयद्रोणकलशसंज्ञानि पात्राण्युच्यन्ते। तेषु स्थितं ᵛसुतम् अभिषुतं ᵛसोमं ᵛसाकं युगपदेव ᵛवृत्रहत्याय वृत्रहननाय ᵛपिबत् अपिबत् पपौ ॥

त्री यच्छ॒ता म॑हि॒षाणा॒मघो॒ मास्त्री सरां॑सि म॒घवा॑ सो॒म्यापाः॑।
का॒रं न विश्वे॑ अह्वन्त दे॒वा भर॒मिन्द्रा॑य॒ यदहिं॑ ज॒घान॑ ॥ ८ ॥
त्री। यत्। श॒ता। म॒हि॒षाणा॑म्। अघः॑। माः। त्री। सरां॑सि। म॒घऽवा॑। सो॒म्या। अपाः॑।
का॒रम्। न। विश्वे॑। अ॒ह्व॒न्त॒। दे॒वाः। भर॑म्। इन्द्रा॑य। यत्। अहि॑म्। ज॒घान॑ ॥ ८ ॥

---

१. ख-च-झ-ण-न-भ-इति ह्युक्तम्।

हे इन्द्र त्वं यत्[1] यदा त्री त्रयाणां शता शतसंख्याकानां महिषाणां पशूनां माः मांसानि अघः भक्षितवानसि ॥ घसेरत्तेर्वा रूपम् ॥ यदा च मघवा धनवांस्त्वं सोम्या सोममयानि त्री त्रीणि सरांसि पात्राणि अपाः पीतवानसि । यत् यदेन्द्रः अहिं वृत्रं जघान हतवान् तदा विश्वे सर्वे देवाः भरं सोमपानादिना पूर्णम् इन्द्राय इन्द्रं युद्धार्थम् अह्वन्त आह्वयन्त । तत्र दृष्टान्तः । कारं न स्वामिनः कर्मकरमिव तद्वत् ॥

उशनसस्तोमे 'उशना यत्सहस्यैः' इति मरुत्वतीये सूक्तमुखीया । सूत्रितं च—'उशनसस्तोमेन गरगीर्णमिवात्मानं मन्यमानो यजेतोशना यत्सहस्यैरयातम्' ( आश्व. श्रौ. ९. ५ ) इति ॥

उशना यत्सहस्यै३रयातं गृहमिन्द्र जूजुवानेभिरश्वैः ।
वन्वानो अत्र सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णम् ॥ ९ ॥

उशना । यत् । सहस्यैः । अयातम् । गृहम् । इन्द्र । जूजुवानेभिः । अश्वैः ।
वन्वानः । अत्र । सऽरथम् । ययाथ । कुत्सेन । देवैः । अवनोः । ह । शुष्णम् ॥ ९ ॥

यत् यदा हे इन्द्र त्वम् उशना काव्यश्च सहस्यैः अभिभवनशीलैः जूजुवानेभिः जूजुवानैर्गच्छद्भिः अश्वैः कुत्सस्य गृहम् अयातम् अगच्छतं तदा हे इन्द्र त्वम् अत्र अस्मिन् काले वन्वानः शत्रून् हिंसन् कुत्सेन देवैः च सह सरथं समानमेकं रथं ययाथ जगन्थ । किंच शुष्णम् एतन्नामानमसुरम् अवनोर्ह अहिंसीः खलु ॥

प्रान्यच्चक्रमवृहः सूर्यस्य कुत्सायान्यद्वरिवो यातवेऽकः ।
अनासो दस्यूँरमृणो वधेन नि दुर्योण आवृणङ्मृध्रवाचः ॥ १० ॥

प्र । अन्यत् । चक्रम् । अवृहः । सूर्यस्य । कुत्साय । अन्यत् । वरिवः । यातवे । अकरित्यकः ।
अनासः । दस्यून् । अमृणः । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचः ॥ १० ॥

हे इन्द्र पूर्वं द्विचक्रस्य सूर्यस्य अन्यत् एकं चक्रं प्र अवृहः पृथक् चकर्थ । अन्यत् एकं चक्रं कुत्साय कुत्सस्य वरिवः धनं यातवे प्राप्तुम् अकः अकार्षीः । किंच अनासः आस्यरहितान् । आस्यशब्देन शब्दो लक्ष्यते । अशब्दान् मूकान् दस्यून् असुरान् वधेन आयुधेन वज्रेण अमृणः अहिंसीः । दुर्योणे संग्रामे मृध्रवाचः हिंसितवागिन्द्रियानसुरान् नि अवृणक् नितरां छिन्नवानसि । अमृणो न्यवृणगिति द्विरुक्तिरादरार्था ॥ ॥ २४ ॥

---

१. ख-च-झ-ण-न-भ-र-श-'यत्' नास्ति ।

स्तोमा॑सस्त्वा गौरि॑वीतेरवर्धन्नर॑न्धयो वैदथिनाय॒ पिप्रु॑म् ।
आ त्वामृ॒जिश्वा॑ स॒ख्याय॑ चक्रे॒ पच॑न्प॒क्तीरपि॑बः॒ सोम॑मस्य ॥ ११ ॥

स्तोमा॑सः । त्वा॒ । गौरि॑ऽवीतेः । अ॒व॒र्ध॒न् । अर॑न्धयः । वै॒द॒थि॒नाय॑ । पिप्रु॑म् ।
आ । त्वाम् । ऋ॒जिश्वा॑ । स॒ख्याय॑ । च॒क्रे॒ । पच॑न् । प॒क्तीः । अपि॑बः । सोम॑म् । अ॒स्य॒ ॥११॥

हे इन्द्र ᵛगौरिवीतेः एतन्नामकस्य मन्त्रद्रष्टुर्मम संबन्धीनि[1] ᵛस्तोमासः स्तोत्राणि ᵛत्वा त्वाम् ᵛअवर्धन् वर्धयन्तु । ᵛवैदथिनाय विदथिनः पुत्राय ऋजिश्वनाम्ने ᵛपिप्रुम् एतन्नामकमसुरम् ᵛअरन्धयः वशमनयः । हे इन्द्र ऋजिश्वनामा कश्चिदृषिः ᵛसख्याय तव सखित्वाय ᵛपक्तीः पक्तव्यानि पुरोडाशादीनि ᵛपचन् पाकं कुर्वन् ᵛत्वाम्[2] ᵛआ ᵛचक्रे अभिमुखीचकार । किंच त्वम् ᵛअस्य ऋजिश्वनः संबन्धिनं ᵛसोमम् ᵛअपिबः अपाः ॥

दशपेयेऽहनि मरुत्वतीये शस्त्रे ‘ नवग्वासः ’ इति सूक्तमुखीया । सूत्रितं च—‘ नवग्वासः सुतसोमास इन्द्रं सखा ह यत्र सखिभिर्नवग्वैरिति निविद्धानयोराद्ये ’ ( आश्व. श्रौ. ९. ३ ) इति ॥

नव॑ग्वासः सु॒तसो॑मास॒ इन्द्रं॒ दश॑ग्वासो अ॒भ्य॑र्चन्त्य॒र्कैः ।
गव्यं॑ चिदू॒र्वम॑पि॒धान॑वन्तं॒ तं चि॒न्नरः॑ शशमा॒ना अप॑ व्रन् ॥ १२ ॥

नव॑ऽग्वासः । सु॒तऽसो॑मासः । इन्द्र॑म् । दश॑ऽग्वासः । अ॒भि । अ॒र्च॒न्ति॒ । अ॒र्कैः ।
गव्य॑म् । चि॒त् । ऊ॒र्वम् । अ॒पि॒धान॑ऽवन्तम् । तम् । चि॒त् । नरः॑ । श॒श॒मा॒नाः । अप॑ । व्र॒न् ॥१२॥

ᵛनवग्वासः । सत्रयागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः । दशभिर्मासैः[3] समाप्य ये गतास्ते दशग्वाः । एते उभयविधा अङ्गिरसः ᵛसुतसोमासः अभिषुतसोमाः सन्तः ᵛइन्द्रम् ᵛअर्कैः अर्चनीयैः स्तोत्रैः ᵛअभ्यर्चन्ति अभिष्टुवन्ति । तथा ᵛशशमानाः स्तुवन्तः ᵛनरः नेतारोऽङ्गिरसः ᵛअपिधानवन्तं वलेनासुरेणाच्छादितवन्तं ᵛतं ᵛचित् बहुषु[4] प्रदेशेषु[4] प्रसिद्धमपि ᵛगव्यं ᵛचित् गोसंबन्धिनमपि ᵛऊर्वं समूहम् ᵛअप ᵛव्रन् अपावृण्वन् ॥

परिक्रीनाम्न्येकाहे मरुत्वतीयनिष्केवल्ययोः सूक्तमुखीये ‘कथो नु ते’ इत्याद्ये द्वे ऋचौ । सूत्रितं च—‘ कथो नु ते परि चराणि विद्वानिति द्वे ’ ( आश्व. श्रौ. ९. ५ ) इति ॥

---

१. त–संबन्धिनः । २. ग-घ-ज-झ-त-न-भ-र-श–त्वा त्वाम् । ३. प-फ-ब–दशग्वासः दशभिर्मासैः । ४. ख-च-ण–बहुप्रदेशेषु ।

कथो नु ते परि चराणि विद्वान्वीर्या मघवन्या चकर्थ ।
या चो नु नव्या कृणवः शविष्ठ प्रेदु ता ते विदथेषु ब्रवाम ॥ १३ ॥

कथो इति । नु । ते । परि । चराणि । विद्वान् । वीर्या । मघऽवन् । या । चकर्थ ।
या । चो इति । नु । नव्या । कृणवः । शविष्ठ ।
प्र । इत् । ऊँ इति । ता । ते । विदथेषु । ब्रवाम ॥ १३ ॥

हे ᵛमघवन् धनवन्निन्द्र त्वं ᵛया यानि ᵛवीर्या वीर्याणि ᵛचकर्थ चकृषे अहं तानि वीर्याणि ᵛविद्वान् जानन् ᵛते तुभ्यं ᵛकथो ᵛनु कथं नु ᵛपरि ᵛचराणि परिचर्यां करवाणि । हे ᵛशविष्ठ बलवत्तमेन्द्र त्वं ᵛया ᵛचो यानि चैव ᵛनव्या नव्यानि नूतनानि वीर्याणि ᵛनु क्षिप्रं ᵛकृणवः कुर्याः ᵛते त्वदीयानि ᵛता तानि वीर्याणि ᵛविदथेषु यज्ञेषु ᵛप्रेदु ᵛब्रवाम प्रैव वदाम ॥

एता विश्वा चकृवाँ इन्द्र भूर्यपरीतो जनुषा वीर्येण ।
या चिन्नु वज्रिन्कृणवो दधृष्वान्न ते वर्ता तविष्या अस्ति तस्याः ॥१४॥

एता । विश्वा । चकृऽवान् । इन्द्र । भूरि । अपरिऽइतः । जनुषा । वीर्येण ।
या । चित् । नु । वज्रिन् । कृणवः । दधृष्वान् । न । ते । वर्ता । तविष्याः । अस्ति । तस्याः ॥१४॥

हे ᵛइन्द्र ᵛअपरीतः शत्रुभिरपरिगतस्त्वं ᵛजनुषा जननसिद्धेनात्मीयेन ᵛवीर्येण बलेन ᵛभूरि भूरीणि बहूनि ᵛएता एतानि प्रत्यक्षेणोपलभ्यमानानि ᵛविश्वा विश्वानि व्याप्तानि भुवनजातानि ᵛचकृवान् कृतवानसि[1] । हे ᵛवज्रिन् वज्रवन्निन्द्र ᵛदधृष्वान् सपत्नान् धर्षयंस्त्वं ᵛनु क्षिप्रं ᵛया ᵛचित् यानि च विश्वानि ᵛकृणवः कुर्याः ᵛते त्वदीयस्य ᵛतस्याः ᵛतविष्याः तस्य बलस्य ᵛवर्ता निवारयिता ᵛन कोऽपि ᵛअस्ति ॥

इन्द्र ब्रह्म क्रियमाणा जुषस्व या ते शविष्ठ नव्या अकर्म ।
वस्त्रेव भद्रा सुकृता वसूयू रथं न धीरः स्वपा अतक्षम् ॥ १५ ॥

इन्द्र । ब्रह्म । क्रियमाणा । जुषस्व । या । ते । शविष्ठ । नव्याः । अकर्म ।
वस्त्राऽइव । भद्रा । सुऽकृता । वसुऽयुः । रथम् । न । धीरः । सुऽअपाः । अतक्षम् ॥ १५॥

हे ᵛशविष्ठ बलवत्तम शूरतम वा ᵛइन्द्र[2] ᵛते तुभ्यं ᵛया यानि स्तोत्राणि ᵛनव्याः नूतना अद्यतना वयम् ᵛअकर्म अकुर्म हे इन्द्र त्वं ᵛक्रियमाणा अस्माभिः क्रियमाणानि ᵛब्रह्म ब्रह्माणि

---

१. ख-च-झ-ण-न-भ-र—कृतवान् । २. ख-च-झ-ण-त-न-भ-र—इन्द्र । हि निगमः ( ? ); श—इन्द्र । ब्रह्मेति निगमः ( ? ) ।

तानि स्तोत्राणि जुषस्व सेवस्व । धीरः धीमान् स्वपाः शोभनकर्मा वसूयुः धनकामोऽहं वस्त्रेव वस्त्राणीव भद्रा भद्राणि भजनीयानि सुकृता सुष्टु कृतानि स्तोत्राणि रथं न रथमिव अतक्षम् अकरवम् । स्तोत्राणि उपहारवत्[1] ग्राह्याणीत्यभिप्रायेण वस्त्रनिदर्शनमुक्तम् । रथदृष्टान्तस्तु आगमनसाधनत्वप्रतिपादनाय । स्तोत्राणि स्वीकृत्य मह्यं धनं प्रयच्छेत्यर्थः ॥ ॥ २५ ॥

'क स्य वीरः' इति पञ्चदशर्चं षोडशं सूक्तम् । अत्रानुक्रमणिका—'क स्य बभ्रुर्ऋणंचयोऽप्यत्र राजा स्तुतः' इति । बभ्रुर्ऋषिः । अनुक्तत्वात् त्रिष्टुप् । इन्द्रो देवता । ऋणंचयनामा राजापि क्वचित् स्तूयते । अतः सोऽपि देवता । तीव्रसोमाख्ये एकाहे मरुत्वतीयशस्त्रे इदं सूक्तं निविद्धानम् । सूत्रितं च—'तीव्रसोमेनान्नाद्यकामः क स्य वीरः' ( आश्व. श्रौ. ९. ७ ) इति ॥

**क१ स्य वीरः को अपश्यदिन्द्रं सुखरथमीयमानं हरिभ्याम् ।**
**यो राया वज्री सुतसोममिच्छन्तदोको गन्ता पुरुहूत ऊती ॥ १ ॥**

क्व । स्यः । वीरः । कः । अपश्यत् । इन्द्रम् । सुखऽरथम् । ईयमानम् । हरिऽभ्याम् ।
यः । राया । वज्री । सुतऽसोमम् । इच्छन् । तत् । ओकः । गन्ता । पुरुऽहूतः । ऊती ॥ १ ॥

वज्री वज्रवान् पुरुहूतः बहुभिराहूतः यः इन्द्रः राया देयेन धनेन सह सुतसोममिच्छन् अभिषुतसोमं यजमानमन्विच्छन् ऊती ऊत्यै रक्षायै तत् तस्य यजमानस्य ओकः गृहं गन्ता प्राप्तो भवति वीरः विक्रान्तः स्यः[2] स इन्द्रः क्व कुत्र विद्यते । सुखरथं शोभनाक्षद्वारः[3] रथो यस्य स सुखरथः । सुष्टु खनति लिखति भूमिमिति वा सुखम् । तादृग्रथम् । 'सुहितं खेभ्यः खं पुनः खनतेः' ( निरु. ३. १३ ) इति यास्कः । हरिभ्यां स्ववाहनाभ्याम्[4] अश्वाभ्याम् ईयमानं गच्छन्तम् इन्द्रं कोऽपश्यत् कश्च[5] ददर्श ॥

**अवाचचक्षं पदमस्य सस्वरुग्रं निधातुरन्वायमिच्छन् ।**
**अपृच्छमन्याँ उत ते म आहुरिन्द्रं नरो बुबुधाना अशेम ॥ २ ॥**

अव । अचचक्षम् । पदम् । अस्य । सस्वः । उग्रम् । निऽधातुः । अनु । आयम् । इच्छन् ।
अपृच्छम् । अन्यान् । उत । ते । मे । आहुः । इन्द्रम् । नरः । बुबुधानाः । अशेम ॥ २ ॥

अस्य इन्द्रस्य पदं स्थानम् अवाचचक्षम् अहमवाद्राक्षम् । कीदृशम् । सस्वः अन्तर्हितम् उग्रम् उद्गूर्णम् । किंच इच्छन् इन्द्रमन्विच्छन्नहं निधातुः स्वं स्थापयितुः अस्य इन्द्रस्य पदम् अन्वायम् अन्वगमम् । अन्यान् उत अन्यान् विदुषोऽपि मार्गे[6] इन्द्रम् अपृच्छं पृष्टवानस्मि । पृष्टाः ते मे मह्यम् इन्द्रम् आहुः । किमाहुरित्युच्यते । नरः यज्ञानां नेतारः बुबुधानाः

---

१. त–उपरेवत् । २. ख-च-झ-ण-न-भ-र-श–'स्यः' नास्ति । ३. त–शोभनाख्यद्वारः । ४. ख-च-झ-ण-न-भ-र–स्ववाहकाभ्याम् । ५. ख-च-झ-ण-न-भ–काश्चित् । ६. त–मार्गम् ।

बुभुत्समाना वयम् ᵛअशेम इन्द्रं प्राप्तवन्तः स्मः । यद्यपीन्द्रो विद्यते तथापि दुर्लभश्चेदनुपगन्तव्यः इति बुभुत्समानः स्वभावमपृच्छत् पृष्टैश्च सुलभः इत्युक्त इन्द्रप्राप्त्यर्थं सूक्तशेषमपश्यदित्यर्थः ॥

प्र नु व॒यं सु॒ते या ते॑ कृ॒तानीन्द्र॒ ब्रवा॑म॒ यानि॑ नो॒ जुजो॑षः ।
वेद॒दवि॑द्वाञ्छृ॒णव॑च्च वि॒द्वान्वह॑ते॒ऽयं म॒घवा॒ सर्व॑सेनः ॥ ३ ॥

प्र । नु । व॒यम् । सु॒ते । या । ते॒ । कृ॒तानि॑ । इन्द्र॑ । ब्रवा॑म । यानि॑ । नः॒ । जुजो॑षः ।
वेद॑त् । अवि॑द्वान् । शृ॒णव॑त् । च॒ । वि॒द्वान् । वह॑ते । अ॒यम् । म॒घऽवा॑ । सर्व॑ऽसेनः ॥ ३ ॥

हे ᵛइन्द्र ᵛते त्वदीयानि यानि ᵛकृतानि कर्माणि सन्ति ᵛनु अद्य ᵛवयं स्तोतारः ᵛसुते सोमेऽभिषुते सति तानि कर्माणि ᵛप्र ᵛब्रवाम प्रकर्षेण वदाम । त्वमपि ᵛनः अस्मदर्थं ᵛयानि कर्माणि ᵛजुजोषः असेवथाः तानि कर्माणि ᵛअविद्वान् इतः पूर्वमजानन् जनः ᵛवेदत् जानातु । ᵛविद्वान् ᵛशृणवच्च शृणुयाच्च । यद्वा विद्वान् जानन् पुरुषः शृणवच्च । अजानन्तमपि जनं श्रावयेच्च । ᵛसर्वसेनः सर्वाभिः सेनाभिर्युक्तः ᵛमघवा धनवान् विद्वान् जानन् ᵛअयम् इन्द्रो जानतश्च शृण्वतश्च तान् जनान् प्रति ᵛवहते अश्वैरुह्यते ॥ व्यत्ययेन कर्तृप्रत्ययः ॥ प्रापयति ॥

स्थि॒रं मन॑श्चकृषे जा॒त इ॑न्द्र॒ वेषीदेको॑ यु॒धये॒ भूय॑सश्चित् ।
अश्मा॑नं चि॒च्छव॑सा दिद्युतो॒ वि वि॒दो गवा॑मू॒र्वमु॒स्रिया॑णाम् ॥ ४ ॥

स्थि॒रम् । मनः॑ । च॒कृ॒षे॒ । जा॒तः । इ॒न्द्र॒ । वेषि॑ । इत् । एकः॑ । यु॒धये॑ । भूय॑सः । चि॒त् ।
अश्मा॑नम् । चि॒त् । शव॑सा । दि॒द्यु॒तः॒ । वि । वि॒दः । गवा॑म् । ऊ॒र्वम् । उ॒स्रिया॑णाम् ॥ ४ ॥

हे ᵛइन्द्र ᵛजातः उत्पन्नमात्र एव त्वं ᵛस्थिरं चलनरहितं ᵛमनः चित्तं ᵛचकृषे चकर्थ । सर्वान् बलिष्ठान् जयेयमितीदृशम् । तथा हे इन्द्र ᵛएकः ᵛइत् असहाय एव त्वं ᵛयुधये युद्धाय ᵛभूयसश्चित् बहुतरान् राक्षसादीनपि ᵛवेषि अवेः[1] अगमः[1] । किंच ᵛअश्मानं ᵛचित् गवामावरकं पर्वतमपि ᵛशवसा बलेन ᵛवि ᵛदिद्युतः व्यभिनः । किंच ᵛउस्रियाणां क्षीरमुत्सारयन्तीनां ᵛगवां धेनूनाम् ᵛऊर्वं समूहं ᵛविदः अवेदयः अलम्भयः ॥

प॒रो यत्त्वं प॑र॒म आ॒जनि॑ष्ठाः परा॒वति॒ श्रुत्यं॒ नाम॒ बिभ्र॑त् ।
अत॑श्चि॒दिन्द्रा॑दभयन्त दे॒वा विश्वा॑ अ॒पो अ॑जयद्दा॒सप॑त्नीः ॥ ५ ॥

प॒रः । यत् । त्वम् । प॒र॒मः । आ॒ऽजनि॑ष्ठाः । प॒रा॒ऽवति॑ । श्रु॒त्य॑म् । नाम॑ । बिभ्र॑त् ।
अतः॑ । चि॒त् । इन्द्रा॑त् । अ॒भ॒य॒न्त॒ । दे॒वाः । विश्वाः॑ । अ॒पः । अ॒ज॒य॒त् । दा॒सऽप॑त्नीः ॥५॥

---

१. प-फ-ब-गच्छसि ।

ᵛयत् यदा हे इन्द्र ᵛपरः परस्तादुपरिष्टात् स्थितः ᵛपरमः उत्कृष्टतमः ᵛत्वं ᵛपरावति दूरे ᵛश्रुत्यं श्रवणीयं ᵛनाम नामधेयं ᵛबिभ्रत् धारयन् ᵛआजनिष्ठाः आ समन्तादजायथाः । शेषः परोक्षकृतः । ᵛअतश्चित् अत आरभ्यैव ᵛदेवाः द्योतमानाः अग्न्यादयः ᵛइन्द्रात् ᵛअभयन्त बिभ्युः । ᵛविश्वा ᵛअपः सर्वाण्युदकानि इन्द्रः ᵛअजयत् वशीचक्रे । कीदृशीः । ᵛदासपत्नीः । दासो वृत्रः पतिः पालयिता यासामपां ता इति ॥ ॥ २६ ॥

**तुभ्येदेते मरुतः सुशेवा अर्चन्त्यर्कं सुन्वन्त्यन्धः ।**
**अहिमोहानमप आशयानं प्र मायाभिर्मायिनं सक्षदिन्द्रः ॥ ६ ॥**

तुभ्य । इत् । एते । मरुतः । सुऽशेवाः । अर्चन्ति । अर्कम् । सुन्वन्ति । अन्धः ।
अहिम् । ओहानम् । अपः । आऽशयानम् । प्र । मायाभिः । मायिनम् । सक्षत् । इन्द्रः ॥ ६ ॥

ᵛएते ᵛमरुतः । महद्द्रवन्ति वदन्तीति[1] मरुतः स्तोतारः । ᵛसुशेवाः । शेवमिति सुखनामैतत् । शोभनसुखाः सन्तः । स्तोत्रेण शोभनं सुखमुत्पादयन्त इत्यर्थः । हे इन्द्र ᵛतुभ्येत् तुभ्यमेव ᵛअर्कम् अर्चनीयं स्तोत्रम् ᵛअर्चन्ति स्तुवन्ति कुर्वन्तीत्यर्थः । ᵛअन्धः सोमलक्षणमन्नं ᵛसुन्वन्ति अभिषवं कुर्वन्ति । ᵛइन्द्रः परमैश्वर्ययुक्तः ᵛमायाभिः स्वकीयाभिः शक्तिभिः ᵛअहिं वृत्रं ᵛप्र ᵛसक्षत् अभ्यभवत् । कीदृशम् । ᵛओहानं देवान् बाधमानम् ᵛअपः उदकानि ᵛआशयानम् आवृत्य शयनं कुर्वन्तं ᵛमायिनं कपटवन्तमिति ॥

**वि षू मृधो जनुषा दानमिन्वन्नहन्गवा मघवन्त्संचकानः ।**
**अत्रा दासस्य नमुचेः शिरो यदवर्तयो मनवे गातुमिच्छन् ॥ ७ ॥**

वि । सु । मृधः । जनुषा । दानम् । इन्वन् । अहन् । गवा । मघऽवन् । सम्ऽचकानः ।
अत्र । दासस्य । नमुचेः । शिरः । यत् । अवर्तयः । मनवे । गातुम् । इच्छन् ॥ ७ ॥

हे ᵛमघवन् धनवन्निन्द्र ᵛसंचकानः अस्माभिः स्तूयमानस्त्वम् ॥ संपूर्वः कायतिः शब्दकर्मा । तस्य लडर्थे लिटि रूपम् ॥ ᵛदानं देवानां बाधकं वृत्रमसुरं ᵛगवा वज्रेण ᵛइन्वन् प्रेरयन् हिंसन् ᵛजनुषा जन्मना ᵛमृधः तदनुचरान् राक्षसादीन् शत्रून् ᵛसु सुष्ठु ᵛवि ᵛअहन् विजघन्थ । इन्द्रस्यासुरा जन्मारभ्य शत्रव इत्यर्थः । हे इन्द्र त्वम् ᵛअत्र अस्मिन् युद्धे ᵛमनवे नमुचिनापहृतगोधनाय मह्यं ᵛगातुं सुखम् ᵛइच्छन् अभिलषन् ᵛनमुचेः एतन्नामकस्य ᵛदासस्य[2] उपक्षपयितुरसुरस्य संबन्धि ᵛशिरः शीर्षं ᵛयत् यदा ᵛअवर्तयः अचूर्णयः[3] तदा शत्रून् विजघन्थेति पूर्वेण संबन्धः ॥

---

१. ग-घ-ज-त-प-फ-ब-श–चरन्तीति । २. र-श–' दासस्य ' नास्ति । ३. ख-च-झ-ण-न-भ-र–' अचूर्णयः ' नास्ति ।

युजं हि मामकृथा आदिदिन्द्र शिरो दासस्य नमुचेर्मथायन् ।
अश्मानं चित्स्वर्यं१ वर्तमानं प्र चक्रियेव रोदसी मरुद्भ्यः ॥ ८ ॥

युजम् । हि । माम् । अकृथाः । आत् । इत् । इन्द्र । शिरः । दासस्य । नमुचेः । मथायन् ।
अश्मानम् । चित् । स्वर्यम् । वर्तमानम् । प्र । चक्रियाऽइव । रोदसी इति । मरुत्ऽभ्यः ॥ ८ ॥

हे इन्द्र त्वं स्वर्यं स्वरेण सहितं वर्तमानं भ्रमन्तम् अश्मानं चित् मेघमिव स्थितं दासस्य उपक्षपयितुः नमुचेः असुरस्य शिरः मथायन् चूर्णयन्[1] आदित् अनन्तरमेव मां युजं सखायम् अकृथाः हि चकृषे खलु । तदानीं मरुद्भ्यः त्वत्सहायेभ्यः रोदसी द्यावापृथिव्यौ चक्रियेव चक्रे इव प्र आस्ताम् ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥

स्त्रियो हि दास आयुधानि चक्रे किं मा करन्नबला अस्य सेनाः ।
अन्तर्ह्यख्यदुभे अस्य धेने अथोप प्रैद्युधये दस्युमिन्द्रः ॥ ९ ॥

स्त्रियः । हि । दासः । आयुधानि । चक्रे । किम् । मा । करन् । अबलाः । अस्य । सेनाः ।
अन्तः । हि । अख्यत् । उभे इति । अस्य । धेने इति ।
अथ । उप । प्र । ऐत् । युधये । दस्युम् । इन्द्रः ॥ ९ ॥

दासः उपक्षपयिता नमुचिरसुरः स्त्रियः स्त्रीः[2] आयुधानि युद्धसाधनानि चक्रे हि कृतवान् खलु । इन्द्रेण सह योद्धुं प्रहितवानित्यर्थः । अस्य असुरस्य संबन्धिन्यः अबलाः स्त्रीरूपाः सेनाः मा मां किं करन् । किं कुर्युरिति मन्यमान इन्द्रस्तासां मध्ये अस्य असुरस्य धेने प्रीणयित्र्यौ सुरूपे उभे द्वे स्त्रियौ अन्तः अख्यत् हि गृहमध्ये निदधे खलु । अथ अनन्तरम् इन्द्रः दस्युं नमुचिं युधये युद्धाय उप प्रैत् उपप्रागच्छत् ॥

समत्र गावोऽभितोऽनवन्तेहेह वत्सैर्वियुता यदासन् ।
सं ता इन्द्रो असृजदस्य शाकैर्यदीं सोमासः सुषुता अमन्दन् ॥ १० ॥

सम् । अत्र । गावः । अभितः । अनवन्त । इहऽइह । वत्सैः । विऽयुताः । यत् । आसन् ।
सम् । ताः । इन्द्रः । असृजत् । अस्य । शाकैः ।
यत् । ईम् । सोमासः । सुऽसुताः । अमन्दन् ॥ १० ॥

---

१. ख-च-झ-ण-न-भ-र–'चूर्णयन्' नास्ति । २. ख-च-ण–स्त्रीरूपाणि ।

यत्[1] यदा[2] गावः[2] वत्सैर्वियुताः आसन् वियुक्ता अभवन् अत्र अस्मिन् काले अभितः सर्वतो नमुचिनापहृता गावः इहेह इह चेह च सर्वतः सम् अनवन्त अत्यन्तमगच्छन्। यत् यदा सुषुताः बभ्रुनाम्ना ऋषिणा सुष्ठ्वभिषुताः सोमासः सोमाः ईम् एनमिन्द्रम् अमन्दन् अमादयन् तदा इन्द्रः शाकैः शक्तैर्मरुद्भिः सह अस्य बभ्रोः संबन्धिनीर्नमुचिनापहृताः ताः गाः सम् असृजत् वत्सैः सह समयोजयत् ॥ ॥ २७ ॥

यदीं सोमा बभ्रुधूता अमन्दन्नरोरवीद्वृषभः सादनेषु ।
पुरंदरः पपिवाँ इन्द्रो अस्य पुनर्गवामददादुस्रियाणाम् ॥ ११ ॥

यत् । ईम् । सोमाः । बभ्रुऽधूताः । अमन्दन् । अरोरवीत् । वृषभः । सदनेषु ।
पुरम्ऽदरः । पपिऽवान् । इन्द्रः । अस्य । पुनः । गवाम् । अददात् । उस्रियाणाम् ॥ ११ ॥

यत् यदा बभ्रुधूताः बभ्रुणाभिषुताः सोमाः ईम् एनमिन्द्रम् अमन्दन् अमादयन् तदा वृषभः कामानां वर्षिता इन्द्रः सदनेषु[3] युद्धेषु अरोरवीत् अत्यर्थं शब्दमकरोत्। पुरंदरः पुरां दारयिता अस्य इमं सोमं पपिवान् पीतवान् इन्द्रः पुनः उस्रियाणां क्षीरमुत्स्राविणीः गवां गाः अददात् बभ्रवे ददौ ॥

भद्रमिदं रुशमा अग्ने अक्रन्गवां चत्वारि ददतः सहस्रा ।
ऋणंचयस्य प्रयता मघानि प्रत्यग्रभीष्म नृतमस्य नृणाम् ॥ १२ ॥

भद्रम् । इदम् । रुशमाः । अग्ने । अक्रन् । गवाम् । चत्वारि । ददतः । सहस्रा ।
ऋणम्ऽचयस्य । प्रऽयता । मघानि । प्रति । अग्रभीष्म । नृऽतमस्य । नृणाम् ॥ १२ ॥

रुशम इति कश्चिज्जनपदविशेषः । अत्र रुशमशब्देन तत्रत्या जना उच्यन्ते । रुशमाः ऋणंचयनाम्नो राज्ञः किंकराः हे अग्ने भद्रं कल्याणम् इदं कर्म अक्रन् अकुर्वन् । कीदृशाः । गवां धेनूनां चत्वारि चतुःसंख्यायुक्तानि सहस्रा सहस्राणि ददतः मह्यं प्रयच्छन्तः । राज्ञा हि दीयमानानि धनानि राजपुरुषा एव प्रयच्छन्तीत्यर्थः । नृणां[4] नेतॄणां मध्ये नृतमस्य अतिशयेन नेतृतमस्य ऋणंचयस्य एतन्नामकेन राज्ञा प्रयता प्रयतानि दत्तानि मघानि गोरूपाणि धनानि वयं प्रत्यग्रभीष्म प्रतिगृहीतवन्तः स्मः । पूजार्थं बहुवचनम् ॥

सुपेशसं माव सृजन्त्यस्तं गवां सहस्रै रुशमासो अग्ने ।
तीव्रा इन्द्रममन्दुः सुतासोऽक्तोर्व्युष्टौ परितक्म्यायाः ॥ १३ ॥

सुऽपेशसम् । मा । अव । सृजन्ति । अस्तम् । गवाम् । सहस्रैः । रुशमासः । अग्ने ।
तीव्राः । इन्द्रम् । अममन्दुः । सुतासः । अक्तोः । विऽउष्टौ । परिऽतक्म्यायाः ॥ १३ ॥

---

१. ख-च-झ-ण-न-भ-र-श–' यत् ' नास्ति । २. ग-घ-ज-प-फ-ब–यज्ञगावः । ३. त–सादनेषु ।
४. ख-च-झ-ण-त-न-भ-र-श–नराम् ।

हे अग्ने रुशमासः रुशमा ऋणंचयस्य किंकराः सुपेशसं सुरूपमलंकाराच्छादनादिभिः संस्कृतं[1] मा माम् अस्तं गृहं गवां धेनूनां सहस्रैः सह अव सृजन्ति प्रापयन्ति स्म । तदनन्तरमेव तीव्राः रसवन्तः सुतासः लब्धबहुधनेन मयाभिषुताः सोमाः परितक्म्यायाः । तमसा भूतानि परितस्तकति गच्छतीति परितक्म्या । तस्याः अक्तोः रात्रेः व्युष्टौ व्युच्छने सति । उषःकाले इत्यर्थः । इन्द्रम् अममन्दुः अमादयन् । बभ्रुः गवां प्राप्त्यनन्तरमविलम्बितमेव सोमेनेजे इत्यर्थः ॥

औच्छत्सा रात्री परितक्म्या याँ ऋणंचये राजनि रुशमानाम् ।
अत्यो न वाजी रघुरज्यमानो बभ्रुश्चत्वार्यसनत्सहस्रा ॥ १४ ॥

औच्छत् । सा । रात्री । परिऽतक्म्या । या । ऋणम्ऽचये । राजनि । रुशमानाम् ।
अत्यः । न । वाजी । रघुः । अज्यमानः । बभ्रुः । चत्वारि । असनत् । सहस्रा ॥ १४ ॥

रुशमानां रुशमनाम्नां जनानां राजनि प्रभौ ऋणंचये एतत्संज्ञके तत्समीप एव या रात्रिः परितक्म्या परितो गन्त्री भवति सा रात्री औच्छत् व्युष्टाभवत् । अत्यः सततगामी वाजी न अश्व इव रघुः शीघ्रगामी अज्यमानः प्रेर्यमाणः[2] बभ्रुः एतन्नामक ऋषिः चत्वारि चतुःसंख्याकानि सहस्रा सहस्राणि गोरूपाणि धनानि असनत् अलभत ॥

चतुःसहस्रं गव्यस्य पश्वः प्रत्यग्रभीष्म रुशमेष्वग्ने ।
घर्मश्चित्तप्तः प्रवृजे य आसीदयस्मयस्तम्वादाम विप्राः ॥ १५ ॥

चतुःऽसहस्रम् । गव्यस्य । पश्वः । प्रति । अग्रभीष्म । रुशमेषु । अग्ने ।
घर्मः । चित् । तप्तः । प्रऽवृजे । यः । आसीत् ।
अयस्मयः । तम् । ऊँ इति । आदाम । विप्राः ॥ १५ ॥

हे अग्ने वयं रुशमेषु एतत्संज्ञकेषु जनेषु गव्यस्य गवात्मकस्य पश्वः पशोः पशूनाम् । जातावेकवचनम् । चतुःसहस्रं चत्वारि सहस्राणि प्रत्यग्रभीष्म प्रतिगृहीतवन्तः स्मः । प्रवृजे प्रवृञ्जनार्थं तप्तः संतप्तः शोभनवर्णः घर्मश्चित् महावीर इव अयस्मयः अयोमयो हिरण्मयः यः कलशः आसीत् अभवत् तमु दोहनार्थं कलशं च विप्राः मेधाविनो वयं रुशमेषु आदाम आदत्तवन्तः ॥ ॥ २८ ॥

' इन्द्रो रथाय ' इति त्रयोदशर्चं सप्तदशं सूक्तम् । अवस्युर्नाम[3] आत्रेय ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । ' उग्रमयातं ' ' सं ह यद्वाम् ' इति पादयोः क्रमेण कुत्सोशनसौ विकल्पेन देवता । ' इन्द्राकुत्सा वहमाना ' इत्यस्या इन्द्रः कुत्सश्च । तथा चानुक्रान्तम्—' इन्द्रो रथाय सप्तोनावस्युरुग्रमिति कौत्स्यौशनसौ वा पादौ परैन्द्राकौत्सी ' इति । विनियोगो लैङ्गिकः ॥

---

१. ख-च-ण-त-न-भ-र-श-सत्कृतम् । २. ख-च-झ-ण-न-भ—पूर्यमाणः । ३. ख-ग-घ-च-ज-झ-ण-त-न-भ-श—अवस्युनामा ।

इन्द्रो रथाय प्रवतं कृणोति यमध्यस्थान्मघवा वाजयन्तम् ।
यूथेव पश्वो व्युनोति गोपा अरिष्टो याति प्रथमः सिषासन् ॥ १ ॥

इन्द्रः । रथाय । प्रऽवतम् । कृणोति । यम् । अधिऽअस्थात् । मघऽवा । वाजऽयन्तम् ।

यूथाऽइव । पश्वः । वि । उनोति । गोपाः । अरिष्टः । याति । प्रथमः । सिसासन् ॥ १ ॥

मघवा धनवान् इन्द्रः वाजयन्तम् अन्नमिच्छन्तं यं रथम् अध्यस्थात् अधितिष्ठति तस्मै रथाय प्रवतं प्रवणमार्जिं कृणोति करोति । अपि च गोपाः गोपालः पश्वः यूथेव पशोः पशूनां यूथानि यथा व्युनोति प्रेरयति तथा शत्रुसैन्यानि प्रेरयति । अरिष्टः शत्रुभिः स्वयमहिंसितः प्रथमः देवानां मुख्य इन्द्रः सिषासन् शत्रुधनानीच्छन् याति गच्छति ॥

आ प्र द्रव हरिवो मा वि वेनः पिशङ्गराते अभि नः सचस्व ।
नहि त्वदिन्द्र वस्यो अन्यदस्त्यमेनांश्चिज्जनिवतश्चकर्थ ॥ २ ॥

आ । प्र । द्रव । हरिऽवः । मा । वि । वेनः । पिशङ्गऽराते । अभि । नः । सचस्व ।

नहि । त्वत् । इन्द्र । वस्यः । अन्यत् । अस्ति । अमेनान् । चित् । जनिऽवतः । चकर्थ ॥ २ ॥

हे हरिवः हरिवन्निन्द्र त्वम् आ अस्मानभिमुखं प्र द्रव प्रकर्षेण गच्छ । किंतु मा वि वेनः । वेनतिः कान्तिकर्मा । अस्मासु विगतकामो मा भूः । किंच हे पिशङ्गराते बहुरूपधनेन्द्र नः अस्मान् अभि सचस्व अभिसेवस्व । अपि च हे[1] इन्द्र[1] वस्यः वसीयः श्रेयस्करं त्वत् त्वत्तः अन्यत् नहि अस्ति अन्यद्वस्तुजातं नास्ति । अमेनांश्चित् । मेनाशब्दः स्त्रीवाची । अपगतस्त्रीकांश्चित्[2] जनिवतः जायावतः[3] चकर्थ करोषि ॥

उद्यत्सहः सहस आजनिष्ट देदिष्ट इन्द्र इन्द्रियाणि विश्वा ।
प्राचोदयत्सुदुघा वव्रे अन्तर्वि ज्योतिषा संववृत्वत्तमोऽवः ॥ ३ ॥

उत् । यत् । सहः । सहसः । आ । अजनिष्ट । देदिष्टे । इन्द्रः । इन्द्रियाणि । विश्वा ।

प्र । अचोदयत् । सुऽदुघाः । वव्रे । अन्तः ।

वि । ज्योतिषा । सम्ऽववृत्वत् । तमः । अवरित्यवः ॥ ३ ॥

यत् यदा सहः सूर्यसंबन्धि तेजः सहसः उषःसंबन्धिनस्तेजसः उत् आजनिष्ट उपरिष्टात् प्रादुर्बभूव तदा इन्द्रः विश्वा विश्वानि सर्वाणि इन्द्रियाणि धनानि । इन्द्रियमिति

---

१. ख-च-झ-ण-न-भ-र–' हे इन्द्र ' नास्ति ।　२. त– °स्त्रीकांश्च ।　३. ख-च-झ-ण-न-भ-र– जायावतश्च ।

धननामैतत् । ᵛदेदिष्टे । यजमानेभ्यो दिशति । ᵛवव्रे निवारके पर्वते ᵛअन्तः मध्ये बलेन निरुद्धाः ᵛसुदुघाः सुष्टु दोग्ध्रीर्गाः ᵛप्राचोदयत् प्रैरयत् । ᵛज्योतिषा तेजसा ᵛसंववृत्वत् संवरणशीलं ᵛतमः ᵛवि ᵛअवः निवारितवान् ॥

अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।

ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ४ ॥

अनवः । ते । रथम् । अश्वाय । तक्षन् । त्वष्टा । वज्रम् । पुरुऽहूत । द्युऽमन्तम् ।

ब्रह्माणः । इन्द्रम् । महयन्तः । अर्कैः । अवर्धयन् । अहये । हन्तवै । ऊँ इति ॥ ४ ॥

हे ᵛपुरुहूत बहुभिः आहूतेन्द्र[1] ᵛते त्वदीयं ᵛरथम् ᵛअश्वाय अश्वाभ्यां संयोगार्हम् ᵛअनवः । अनवो मनुष्याः । ऋभवः ᵛतक्षन् अतक्षन् अकुर्वन् । ᵛत्वष्टा च त्वदीयं ᵛवज्रं ᵛद्युमन्तं दीप्तिमन्तम् अकरोत् । ᵛउ अपि च ᵛमहयन्तः ᵛइन्द्रं पूजयन्तः ᵛब्रह्माणः अङ्गिरसः परिवृढा मरुतो वा ᵛअहये अहिं वृत्रं ᵛहन्तवै हन्तुम् ᵛअर्कैः स्तोत्रैः ᵛअवर्धयन् वर्धितवन्तः[2] ॥

वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः ।

अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ ५ ॥

वृष्णे । यत् । ते । वृषणः । अर्कम् । अर्चान् । इन्द्र । ग्रावाणः । अदितिः । सऽजोषाः ।

अनश्वासः । ये । पवयः । अरथाः । इन्द्रऽइषिताः । अभि । अवर्तन्त । दस्यून् ॥ ५ ॥

हे ᵛइन्द्र ᵛयत् यदा ᵛवृषणः सेचनसमर्था मरुतः ᵛवृष्णे कामानां वर्षित्रे ᵛते तुभ्यम् ᵛअर्कं स्तोत्रम् ᵛअर्चान् अस्तुवन् अकुर्वन्नित्यर्थः । तदा ᵛअदितिः अदीनाः ॥ वचनव्यत्ययः ॥ ᵛग्रावाणः अभिषवपाषाणाः[3] ᵛसजोषाः संगता बभूवुरिति शेषः । ᵛअनश्वासः अश्ववर्जिताः ᵛअरथाः रथहीनाः ᵛइन्द्रेषिताः इन्द्रेण प्रेषिताः ᵛपवयः पवमाना गच्छन्तः ᵛये मरुतः ᵛदस्यून् शत्रून् ᵛअभ्यवर्तन्त अभिभूतान् कुर्वन्तो वर्तन्ते स्म ते मरुतोऽर्चानिति संबन्धः ॥ ॥ २९ ॥

प्र ते पूर्वाणि करणानि वोचं प्र नूतना मघवन्या चकर्थ ।

शक्तीवो यद्विभरा रोदसी उभे जयन्नपो मनवे दानुचित्राः ॥ ६ ॥

प्र । ते । पूर्वाणि । करणानि । वोचम् । प्र । नूतना । मघऽवन् । या । चकर्थ ।

शक्तिऽवः । यत् । विऽभराः । रोदसी इति । उभे इति । जयन् । अपः । मनवे । दानुऽचित्राः ॥ ६ ॥

---

१. ख-ग-घ-च-ज-ण-न-आहुतेन्द्र । २. ग-घ-ज-प-फ-ब-वर्धितवन्तः । उ पूरणः । ३. ख-च-झ-ण-न-भ-र-अभिषवण° ।

हे इन्द्र ᵛते त्वदीयानि ᵛपूर्वाणि पुरातनानि ᵛकरणानि कर्माणि ᵛप्र ᵛवोचम् अहं प्रकर्षेण ब्रवीमि । ᵛनूतना नूतनानि नवानि कर्माणि ᵛप्र वोचं प्रब्रवीमि । हे ᵛमघवन् धनवन्निन्द्र ᵛया यानि कर्माणि ᵛचकर्थ कृतवानसि तानि प्र वोचमिति संबन्धः । हे ᵛशक्तीवः शक्तिमन् । शक्तिर्वज्रं कर्म वा । तद्वन्निन्द्र ᵛयत् यस्त्वम् ᵛउभे ᵛरोदसी द्यावापृथिव्यौ ᵛजयन् वशीकुर्वन् ᵛअपः[१] उदकानि[१] ᵛमनवे मनुष्याय ᵛविभराः विविच्य बिभर्षि । कीदृशीः । ᵛदानुचित्राः चित्रदानाः ॥

**तदिन्नु ते करणं दस्म विप्राहिं यद्घ्नन्नोजो अत्रामिमीथाः ।**
**शुष्णस्य चित्परि माया अगृभ्णाः प्रपित्वं यन्नप दस्यूँरसेधः ॥ ७ ॥**

तत् । इत् । नु । ते । करणम् । दस्म । विप्र ।
अहिम् । यत् । घ्नन् । ओजः । अत्र । अमिमीथाः ।
शुष्णस्य । चित् । परि । मायाः । अगृभ्णाः । प्रऽपित्वम् । यन् । अप । दस्यून् । असेधः ॥ ७ ॥

हे ᵛदस्म दर्शनीय ᵛविप्र मेधाविन्निन्द्र त्वम् ᵛअत्र अस्मिँल्लोके ᵛअहिं वृत्रमसुरं ᵛघ्नन् हिंसन् ᵛयत् ᵛओजः यद्बलम् ᵛअमिमीथाः प्रकाशितवानसि ᵛतदिन्नु तत्खलु ᵛते त्वदीयं ᵛकरणं कर्म विद्यते । अपि च ᵛशुष्णस्य ᵛचित् एतन्नामकस्याप्यसुरस्य संबन्धिनीः ᵛमायाः प्रज्ञाः ᵛपरि ᵛअगृभ्णाः परिगृहीतवानसि । हे इन्द्र त्वं ᵛप्रपित्वं संग्रामं समीपं वा ᵛयन् प्राप्नुवन् ᵛदस्यून् असुरान् ᵛअप ᵛअसेधः अपाबाधथाः ॥

**त्वमपो यदवे तुर्वशायारमयः सुदुघाः पार इन्द्र ।**
**उग्रमयातमवहो ह कुत्सं सं ह यद्वामुशनारन्त देवाः ॥ ८ ॥**

त्वम् । अपः । यदवे । तुर्वशाय । अरमयः । सुऽदुघाः । पारः । इन्द्र ।
उग्रम् । अयातम् । अवहः । ह । कुत्सम् । सम् । ह । यत् । वाम् । उशना । अरन्त । देवाः ॥८॥

हे ᵛइन्द्र ᵛत्वं पारे[२] नदीनां तीरे । प्रवृद्धाः[३] इति शेषः । ᵛसुदुघाः ओषधिवनस्पतीन् सुष्ठु दुहतीः ᵛअपः उदकानि ᵛयदवे यदुनामकाय राज्ञे ᵛतुर्वशाय एतन्नामकाय राज्ञे च ᵛअरमयः रमितवानसि । हे इन्द्र युवाम् । त्वं कुत्सश्चेति शेषः । ᵛउग्रम् उद्गूर्णं शुष्णम् ᵛअयातम् अगच्छतम्[४] । तदनन्तरं त्वं शुष्णं हत्वा ᵛकुत्सम् ᵛअवहो ᵛह स्वगृहं प्रापितवानसि खलु । ᵛयत् यदा ᵛवां युवामिन्द्राकुत्सौ ᵛउशना भार्गवः ᵛदेवाः च ᵛसम् ᵛअरन्त ᵛह संभेजिरे खलु ॥

१. ख-च-झ-ण-न-भ-र-'अप उदकानि' नास्ति । २. ग-घ-ज-प-फ-ब-पारः । ३. ग-घ-ज-श-प्रवृद्धः । ४. ग-घ-ज-आगच्छतम् ।

इन्द्राकुत्सा वहमाना रथेना वामत्या अपि कर्णे वहन्तु ।
निः षीमद्भ्यो धमथो निः षधस्थान्मघोनो हृदो वरथस्तमांसि ॥ ९ ॥

इन्द्राकुत्सा । वहमाना । रथेन । आ । वाम् । अत्याः । अपि । कर्णे । वहन्तु ।
निः । सीम् । अत्ऽभ्यः । धमथः । निः । सधऽस्थात् । मघोनः । हृदः । वरथः । तमांसि ॥ ९ ॥

हे इन्द्राकुत्सा इन्द्राकुत्सौ रथेन वहमाना वहमानौ उह्यमानौ[1] वां युवाम् अत्याः अश्वाः कर्णे अपि । स्तोत्राणि कृणोति करोतीति कर्णः स्तोता यजमानो वा । तत्समीपेऽपीति यावत् । आ वहन्तु आ समन्तात् वाहका भवन्तु । युवामपि अद्भ्यः अप्सु प्रविष्टं सीम् एनं शुष्णासुरं निः धमथः अबाधेथाम् । सीमिति शुष्णासुरो बुद्धिस्थः परामृश्यते । सधस्थात् स्वकीयात् स्थानात् निः अबाधेथाम् । मघोनः मघवतो हविष्मतो यजमानस्य हृदः हृदयात् तमांसि अज्ञानरूपाणि पापानि वरथः निवारयथः ॥

वातस्य युक्तान्त्सुयुजश्चिदश्वान्कविश्चिदेषो अजगन्नवस्युः ।
विश्वे ते अत्र मरुतः सखाय इन्द्र ब्रह्माणि तविषीमवर्धन् ॥ १० ॥

वातस्य । युक्तान् । सुऽयुजः । चित् । अश्वान् । कविः । चित् । एषः । अजगन् । अवस्युः ।
विश्वे । ते । अत्र । मरुतः । सखायः । इन्द्र । ब्रह्माणि । तविषीम् । अवर्धन् ॥ १० ॥

कविश्चित् प्राज्ञोऽपि अवस्युः एतन्नामकः एषः मन्त्रद्रष्टा वातस्य वायोर्वेगेन युक्तान् संयुक्तान्[2] सुयुजश्चित् सुष्ठु योजनीयान् अश्वान् अजगन् प्राप्नोत्[3] । अवस्योः सखायः विश्वे सर्वे मरुतः बहवः स्तोतारो हे इन्द्र अत्र अस्मिँल्लोके ते त्वदीयां[4] तविषीं बलं ब्रह्माणि ब्रह्मभिः स्तोत्रैः अवर्धन् अवर्धयन् ॥ ॥ ३० ॥

सूरश्चिद्रथं परितक्म्यायां पूर्वं करदुपरं जूजुवांसम् ।
भरच्चक्रमेतशः सं रिणाति पुरो दधत्सनिष्यति क्रतुं नः ॥ ११ ॥

सूरः । चित् । रथम् । परिऽतक्म्यायाम् । पूर्वम् । करत् । उपरम् । जूजुऽवांसम् ।
भरत् । चक्रम् । एतशः । सम् । रिणाति । पुरः । दधत् । सनिष्यति । क्रतुम् । नः ॥ ११ ॥

इन्द्रः परितक्म्यायां संग्रामे । परितो गच्छन्त्यस्यां भटाः[5] इति परितक्म्या संग्रामः । एतशाख्येन ऋषिणा सह योद्धुः सूरश्चित् सूर्यस्यापि संबन्धिनं जूजुवांसं वेगेन गच्छन्तं रथम्[6] उपरम्[6]

---

१. ख-ग-च-झ-ण-प-फ-ब-भ-र–‘ उह्यमानौ ’ नास्ति । २. ख-च-झ-ण-न-भ-र–‘ संयुक्तान् ’ नास्ति ।
३. ख-च-ग-भ-र–प्राप्नोत्तरम् । ४. र–त्वदीयम् । ५. श–भये । ६. ख-च-झ-ण-न-भ–यम् ; र-रथम् ।

उपरतव्यापारं पूर्वं करत् पुराकरोत् । एतशः एतशाय ॥ विभक्तिव्यत्ययः ॥ इन्द्रः पूर्वं द्विचक्रस्य रथस्यैकं चक्रं भरत् अहरत् । स इन्द्रस्तेन चक्रेणासुरान् सं रिणाति हिनस्ति । अपि च पुरो दधत् अस्मान् पुरस्कुर्वन् नः अस्मदीयं क्रतुं यज्ञं सनिष्यति संभजतु ॥

आयं जना अभिचक्षे जगामेन्द्रः सखायं सुतसोममिच्छन् ।

वदन्ग्रावाव वेदिं भ्रियाते यस्य जीरमध्वर्यवश्चरन्ति ॥ १२ ॥

आ । अयम् । जनाः । अभिऽचक्षे । जगाम । इन्द्रः । सखायम् । सुतऽसोमम् । इच्छन् ।

वदन् । ग्रावा । अव । वेदिम् । भ्रियाते । यस्य । जीरम् । अध्वर्यवः । चरन्ति ॥ १२ ॥

हे जनाः अभिचक्षे युष्मानभिद्रष्टुम् अयम् इन्द्रः सखायं स्तोतारं सुतसोमम् अभिषुतसोमं यजमानम् इच्छन् अभिलषन् आ जगाम आगच्छति[1] । अध्वर्यवः यस्य ग्राव्णः जीरं क्षेपणं प्रेरणं चरन्ति कुर्वन्ति[2] सः ग्रावा सोमाभिषवपाषाणः[3] वदन् शब्दं कुर्वन् वेदिम् अव भ्रियाते अभिह्रियते ॥

ये चाकनन्त चाकनन्त नू ते मर्ता अमृत मो ते अंह आरन् ।

वावन्धि यज्यूँरुत तेषु धेह्योजो जनेषु येषु ते स्याम ॥ १३ ॥

ये । चाकनन्त । चाकनन्त । नु । ते । मर्ताः । अमृत । मो इति । ते । अंहः । आ । अरन् ।

ववन्धि । यज्यून् । उत । तेषु । धेहि । ओजः । जनेषु । येषु । ते । स्याम ॥ १३ ॥

हे इन्द्र धनार्थिनः[4] ये जनास्त्वां चाकनन्त[5] अकामयन्त पुनश्च ते नु क्षिप्रमेव त्वां चाकनन्त हे अमृत अमरणशीलेन्द्र मर्ताः मरणधर्माणः ते जनाः अंहः अनर्थं मो आरन् मा गमन् । मा उ इति निपातसमुदायो मेत्येकनिपातार्थे वर्तते । उत अपि च यज्यून् यजमानान् ववन्धि संभजस्व । येषु जनेषु येषां जनानां मध्ये वयं स्तोतारः ते त्वदीयाः स्याम भवाम हे इन्द्र त्वं तेषु जनेषु ओजः बलं धेहि ॥ ॥ ३१ ॥

' अदर्दरुत्सम् ' इति द्वादशर्चमष्टादशं सूक्तम् । गातुर्नामात्रेय ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । तथा चानुक्रान्तम्—' अदर्दर्द्वादश गातुः ' इति । गतो विनियोगः ॥

---

१. ख-च-झ-ण-न-भ-र–आगच्छन्; श–गच्छति । २. ग-घ-ज–' कुर्वन्ति ' नास्ति । ३. ख-झ-र–सोमाभिषवण° । ४. ग-घ-ज–धनार्थम् । ५. ख-च-झ-ण-त-न-भ-र-श–चाकनन्त कामयन्ते ।

अर्दर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥ १ ॥

अर्दर्दः । उत्सम् । असृजः । वि । खानि । त्वम् । अर्णवान् । बद्बधानान् । अरम्णाः ।
महान्तम् । इन्द्र । पर्वतम् । वि । यत् । वरिति वः ।
सृजः । वि । धाराः । अव । दानवम् । हन्निति हन् ॥ १ ॥

हे इन्द्र त्वम् उत्सम् उत्स्यन्दमानं मेघम् अर्दर्दः विदारितवानसि । तदनन्तरं खानि मेघस्थोदकनिर्गमनद्वाराणि[1] वि असृजः विशेषेण सृष्टवानसि । किंच बद्बधानान् बाध्यमानान्[2] अर्णवान् उदकवतो मेघान् अरम्णाः विसर्जयसि क्षारयसीत्यर्थः । अत्र रम्णातिर्विसर्जनकर्मा । हे इन्द्र यत् यः त्वम् । यदिति लिङ्गव्यत्ययः । महान्तं प्रभूतं पर्वतं मेघं वि वः विवृतवानसि । धाराः अपां वि सृजः विसृष्टवानसि । अपि च दानवं दनोः पुत्रं वृत्रमसुरं यद्बोदकस्य दातारं मेघं वा अव हन् अभिहतवानसि । अत्र निरुक्तम्—'अदृणा उत्सम् । उत्स उत्सदनाद्वोत्स्यन्दनाद्वा उनत्तेर्वा[3] स्यात् । व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतान्' ( निरु. १०. ९ ) इत्यादि ॥

त्वमुत्साँ ऋतुभिर्बद्बधानाँ अरंह ऊधः पर्वतस्य वज्रिन् ।
अहिं चिदुग्र प्रयुतं शयानं जघन्वाँ इन्द्र तविषीमधत्थाः ॥ २ ॥

त्वम् । उत्सान् । ऋतुऽभिः । बद्बधानान् । अरंहः । ऊधः । पर्वतस्य । वज्रिन् ।
अहिम् । चित् । उग्र । प्रऽयुतम् । शयानम् । जघन्वान् । इन्द्र । तविषीम् । अधत्थाः ॥२॥

हे वज्रिन् वज्रवन्निन्द्र त्वम् ऋतुभिः ऋतुषु वृष्टिकालेषु[4] बद्बधानान् प्रतिबध्यमानान् उत्सान् मेघान् प्रतिबन्धनादमोचयः[5] इति शेषः । अपि च पर्वतस्य मेघस्य संबन्धि ऊधः जलम् अरंहः अगमयः[6] । हे उग्र उद्गूर्णबलेन्द्र प्रयुतम् उद्युक्तं शयानं जले शयनं कुर्वन्तम् अहिं चित् वृत्रं च जघन्वान् हतवानसि । हे इन्द्र त्वं तविषीं बलम् अधत्थाः अधारयः । वृत्रवधानन्तरमिन्द्रो लोके प्रख्यातो भवतीत्यर्थः ॥

त्यस्य चिन्महतो निर्मृगस्य वधर्जघान तविषीभिरिन्द्रः ।
य एक इदप्रतिर्मन्यमान आदस्मादन्यो अजनिष्ट तव्यान् ॥ ३ ॥

त्यस्य । चित् । महतः । निः । मृगस्य । वधः । जघान । तविषीभिः । इन्द्रः ।
यः । एकः । इत् । अप्रतिः । मन्यमानः । आत् । अस्मात् । अन्यः । अजनिष्ट । तव्यान् ॥ ३ ॥

---

१. ग-घ-ज-त-श—मेघस्थोदकानि निर्गमनद्वाराणि । २. त-प-फ-ब-र—बाधमानान् । ३. र—उन्नयनाद्वा । ४. ख-च-झ-ण-न-भ-र—वृष्टिकामेषु । ५. ख-च-ण—बन्धादमोचयः; झ-न-भ-र—प्रतिबन्धनादमोचयः । ६. ग-घ-ज-प-फ-ब—अरमयः ।

निर्जघानायुधं शक्रो वृत्रेण क्षिप्तमोजसा । वृत्रस्य गात्रादन्यो यः प्रादुर्भूतो महासुरः ॥ वृत्रं पूर्वं निहत्येन्द्रो द्वितीयं शुष्णसंज्ञकम् । पुनर्जघानेन्द्र इति पराभिः कीर्तयत्यृषिरिति ॥ ᵛइन्द्रः ᵛमहतः प्रभूतस्य[1] ᵛमृगस्य मृगवच्छीघ्रगामिनः ᵛत्यस्य ᵛचित् तस्य वृत्रस्य संबन्धि ᵛवधः आयुधं ᵛतविषीभिः स्वकीयैर्बलैः ᵛनिः ᵛजघान निःशेषेणावधीत् । ᵛएक ᵛइत् असहाय एव ᵛअप्रतिः प्रतिद्वन्द्विरहितः[2] ᵛमन्यमानः आत्मानं ᵛयः अस्तीति शेषः । ᵛआत् तदानीम् ᵛअस्मात् वृत्रात् ᵛतव्यान् प्रवृद्धतरः ᵛअन्यः असुरः शुष्णः[3] ᵛअजनिष्ट प्रादुरभूत् ॥

त्यं चि॑दे॒षां स्व॒धया॒ मद॑न्तं मि॒हो नपा॑तं सु॒वृधं॑ तमो॒गाम् ।
वृष॑प्रभर्मा दा॒नव॑स्य॒ भामं॒ वज्रे॑ण व॒ज्री नि ज॑घान॒ शुष्ण॑म् ॥ ४ ॥

त्यम् । चि॒त् । ए॒षाम् । स्व॒धया॑ । मद॑न्तम् । मि॒हः । नपा॑तम् । सु॒ऽवृध॑म् । त॒मः॒ऽगाम् ।
वृष॑ऽप्रभर्मा । दा॒नव॑स्य । भाम॑म् । वज्रे॑ण । व॒ज्री । नि । ज॒घा॒न॒ । शुष्ण॑म् ॥ ४ ॥

ᵛएषां प्राणिनां ᵛस्वधया अन्नेन ᵛमदन्तं मोदमानं सर्वप्राणिनामन्नं स्वयमेव भुञ्जानं ᵛमिहः सेचनसमर्थस्य मेघस्य ᵛनपातं पातारं रक्षितारम् । अत्र नपाच्छब्दः पातरि वर्तते । ‘प्राणो वै तनूनपात्स हि तन्वः पाति’ (ऐ. ब्रा. २. ४) इति ब्राह्मणम् । ᵛसुवृधं प्रवृद्धं ᵛतमोगां तमः अन्धकारं गच्छन्तं ᵛत्यं ᵛचित् तं च वृत्रं निजघानेति शेषः । ᵛवृषप्रभर्मा वर्षणशीलस्य मेघस्य प्रहर्ता ᵛवज्री वज्रवानिन्द्रः ᵛवज्रेण स्वकीयेनायुधेन ᵛदानवस्य दनुजस्य वृत्रस्य[4] ᵛभामम् । अत्र क्रोधवाचिभामशब्देन क्रोधादुत्पन्नः शुष्णासुरो लक्ष्यते । तं शुष्णासुरं[5] ᵛनि ᵛ जघान हतवान् ॥

त्यं चि॑द॒स्य क्रतु॑भि॒र्निष॑त्तमम॒र्मणो॑ वि॒ददिद॑स्य॒ मर्म॑ ।
यदीं॑ सुक्षत्र॒ प्रभृ॑ता॒ मद॑स्य॒ युयु॑त्सन्तं॒ तम॑सि ह॒र्म्ये धाः ॥ ५ ॥

त्यम् । चि॒त् । अ॒स्य॒ । क्रतु॑ऽभिः । निऽस॑त्तम् । अ॒म॒र्मणः॑ । वि॒दत् । इ॒त् । अ॒स्य॒ । मर्म॑ ।
यत् । ई॒म् । सु॒ऽक्ष॒त्र॒ । प्रऽभृ॑ता । मद॑स्य । युयु॑त्सन्तम् । तम॑सि । ह॒र्म्ये । धाः ॥ ५ ॥

ᵛअमर्मणः मर्महीनमात्मानं मन्यमानस्य ᵛअस्य वृत्रस्य ᵛनिषत्तं निषण्णं ᵛत्यं ᵛचित् त्यत्तदेव । लिङ्गव्यत्ययः । ᵛमर्म प्राणस्थानम् । यत्र स्थाने विद्धो म्रियते तन्मर्मेत्युच्यते । ᵛअस्य वृत्रस्य ᵛक्रतुभिः प्रज्ञानैर्हे इन्द्र त्वं ᵛविददित् अज्ञासीरेव । ᵛयत् यदा हे ᵛसुक्षत्र सुबलेन्द्र त्वं ᵛमदस्य मादकस्य सोमस्य ᵛप्रभृता प्रभृतौ संभरणे सति ᵛयुयुत्सन्तं योद्धुमिच्छन्तम् ᵛईम् एनं वृत्रं ᵛहर्म्ये हारके ᵛतमसि ᵛधाः न्यदधाः । वृत्र इन्द्रस्य भयात् तमसि प्राविशदित्यर्थः ॥

---

१. ख-च-ण–प्रवृद्धस्य । २. ख-झ-र–प्रतिद्वन्द्वरहितः; ग-घ-ज-प-फ-ब–प्रतिबन्धरहितः । ३. ख-च-झ-ण-न-भ-र–‘ शुष्णः ’ नास्ति । ४. ग-घ-ज-श–‘ वृत्रस्य ’ नास्ति । ५. ख-च-झ-ण-त-न-भ-र-श–शुष्णमसुरम् ।

त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम् ।
तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान ॥ ६ ॥

त्यम् । चित् । इत्था । कत्पयम् । शयानम् । असूर्ये । तमसि । ववृधानम् ।
तम् । चित् । मन्दानः । वृषभः । सुतस्य । उच्चैः । इन्द्रः । अपऽगूर्य । जघान ॥ ६ ॥

ᵛसुतस्य अभिषुतेन सोमेन ᵛमन्दानः मोदमानः ᵛवृषभः कामानां वर्षिता ᵛइन्द्रः ᵛउच्चैः ऊर्ध्वम् ᵛअपगूर्य वज्रमुद्यम्य ᵛत्यं ᵛचित् तमेव वृत्रं ᵛजघान अवधीत् । कीदृशम् । ᵛइत्था अमुत्रान्तरिक्षलोके ᵛकत्पयम् । कत् सुखकरं पयो यस्य तम् । ᵛशयानम् अप्सु शयनं कुर्वन्तम् ᵛअसूर्ये सूर्यरहिते ᵛतमसि अन्धकारे ᵛववृधानं वर्धमानम् । ᵛतं ᵛचित् इति पुनर्वचनं पूरणार्थम् ॥ ॥ ३२ ॥

उद्यदिन्द्रो महते दानवाय वधर्यमिष्ट सहो अप्रतीतम् ।
यदीं वज्रस्य प्रभृतौ ददाभ विश्वस्य जन्तोरधमं चकार ॥ ७ ॥

उत् । यत् । इन्द्रः । महते । दानवाय । वधः । यमिष्ट । सहः । अप्रतिऽइतम् ।
यत् । ईम् । वज्रस्य । प्रऽभृतौ । ददाभ । विश्वस्य । जन्तोः । अधमम् । चकार ॥ ७ ॥

ᵛयत् यदा ᵛइन्द्रो ᵛमहते प्रभूताय ᵛदानवाय वृत्रासुराय ᵛसहः शत्रूणामभिभवितृ ᵛअप्रतीतं केनाप्यप्रतिगतं ᵛवधः वज्रम् ᵛउत् ᵛयमिष्ट उदयच्छत् । ᵛयत् यदा ᵛवज्रस्य ᵛप्रभृतौ प्रहृतौ प्रहरणे सति ॥ ' हृग्रहोर्भः° ' इति भत्वम् ॥ ᵛईम् एनं वृत्रं ᵛददाभ अहिंसीत् तदा ᵛविश्वस्य सर्वस्य ᵛजन्तोः प्राणिनः ᵛअधमं नीचं ᵛचकार अकरोत् ॥

त्यं चिदर्णं मधुपं शयानमसिन्वं वव्रं मह्याददुग्रः ।
अपादमत्रं महता वधेन नि दुर्योण आवृणङ्मृध्रवाचम् ॥ ८ ॥

त्यम् । चित् । अर्णम् । मधुऽपम् । शयानम् । असिन्वम् । वव्रम् । महि । आदत् । उग्रः ।
अपादम् । अत्रम् । महता । वधेन । नि । दुर्योणे । अवृणक् । मृध्रऽवाचम् ॥ ८ ॥

ᵛउग्रः उद्गूर्णबलः इन्द्रः ᵛमहि महान्तं ᵛत्यं ᵛचित् तमेव वृत्रम् ᵛआदत् आददौ प्रत्यग्रहीत् । कीदृशम् । ᵛअर्णं गन्तारं जलं मेघं वावृत्य ᵛशयानं शयनं कुर्वन्तम् । स्थितवन्तमित्यर्थः । ᵛमधुपं मधुनोऽम्भसः पातारं[1] पालयितारम् ᵛअसिन्वं सपत्नानवक्षेप्तारम्[2] ॥ अस्यतेरिदं रूपम् ॥ ᵛवव्रं वृण्वन्तं सर्वमप्याच्छादयन्तम् । ' स इमाँल्लोकानवृणोद्यदिमाँल्लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम् '

---

१. ख-च-झ-ण-न-भ-र- ' पातारं ' नास्ति । २. ख-च-झ-ण-न-भ-श-सपत्नानां क्षेप्तारम्; र-सपत्नानाक्षेप्तारम् ।

( तै. सं. २. ५. २. २ ) इति हि तैत्तिरीयकम् । तदनन्तरमिन्द्रः ᵛदुर्योणे संग्रामे ᵛमहता प्रभूतेन ᵛवधेन वज्रेण ᵛअपादं पादरहितम् अमत्रम्[1] अमात्रं परिमाणरहितं ᵛमृध्रवाचं हिंसितवागिन्द्रियम् । जृम्भाभिभूतमित्यर्थः[2] । वृत्रं ᵛनि ᵛअवृणक् नितरामहिंसीत् । 'तस्माज्जञ्भ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहिताम्[3] ' ( तै. सं. २. ५. २. ४ ) इति हि तैत्तिरीयकम् ॥

**को अस्य शुष्मं तविषीं वरात एको धना भरते अप्रतीतः ।**

**इमे चिदस्य ज्रयसो नु देवी इन्द्रस्यौजसो भियसा जिहाते ॥ ९ ॥**

कः । अस्य । शुष्मम् । तविषीम् । वराते । एकः । धना । भरते । अप्रतिऽइतः ।

इमे इति । चित् । अस्य । ज्रयसः । नु । देवी इति ।

इन्द्रस्य । ओजसः । भियसा । जिहाते इति ॥ ९ ॥

ᵛअस्य इन्द्रस्य संबन्धिनीं ᵛशुष्मं शोषणीं[4] ᵛतविषीं बलं ᵛकः ᵛवराते निवारयेत् ॥ शुष्मशब्दस्य स्त्रीलिङ्गविशेषणत्वेऽपि नियतलिङ्गत्वात् पुंल्लिङ्गत्वमेव ॥ ᵛअप्रतीतः केनाप्यप्रतिगत इन्द्रः ᵛएकः असहाय एव ᵛधना धनानि शत्रूणां वसूनि ᵛभरते बिभर्ति हरते वा । ᵛदेवी देव्यौ द्योतमाने ᵛइमे ᵛचित् एव[5] द्यावापृथिव्यौ ᵛज्रयसः वेगवतः ᵛअस्य ᵛइन्द्रस्य संबन्धिनः ᵛओजसः बलादुद्भूतेन ᵛभियसा भयेन ᵛनु क्षिप्रं ᵛजिहाते गच्छतः । चलत इत्यर्थः ॥

**न्यस्मै देवी स्वधितिर्जिहीत इन्द्राय गातुरुशतीव येमे ।**

**सं यदोजो युवते विश्वमाभिरनु स्वधाव्ने क्षितयो नमन्त ॥ १० ॥**

नि । अस्मै । देवी । स्वऽधितिः । जिहीते । इन्द्राय । गातुः । उशतीऽइव । येमे ।

सम् । यत् । ओजः । युवते । विश्वम् । आभिः । अनु । स्वधाऽव्ने । क्षितयः । नमन्त ॥ १० ॥

ᵛस्वधितिः स्वधृतिः स्वेन धृता ᵛदेवी द्योतमाना द्यौः ᵛअस्मै इन्द्राय ᵛनि ᵛजिहीते नीचत्वेन याति । ᵛगातुः भूमिः ᵛउशतीव कामयमाना योषिदिव ᵛइन्द्राय ᵛयेमे आत्मानं नियच्छति । यथेष्टमात्मानं विनियोक्तुं[6] योग्या भवतीत्यर्थः । ᵛयत् यदेन्द्रः ᵛविश्वं समस्तम् ᵛओजः बलम् ᵛआभिः प्रजाभिः ᵛसं ᵛयुवते संयोजयति । इन्द्रः स्वकीयं बलं सर्वासु प्रजासु निहितवानित्यर्थः । ᵛअनु आनुकूल्येन वर्तमानाः ᵛक्षितयः मनुष्याः । क्षितय इति मनुष्यनामैतत् । ᵛस्वधाव्ने[7] बलवते इन्द्राय ᵛनमन्त संनमन्ति प्रह्वीभवन्ति[8] ॥

---

१. ग-घ-ज-त-प-फ-ब-अत्रम् । २. ख-च-झ-ण-भ-र-जम्भ्याभिभूत॰ । ३. झ-र-तदजिहाताम्; त-तदुजिहाताम् । ४. ख-च-ण-भ-शोषणम्; न-शोषिणीम्; भ-शोषणाम् । ५. ग-घ-ज-त-प-फ-ब-र-इमे; श-एते एव । ६. ख-च-ण-नियोक्तुम्; झ-न-भ-र-वियोक्तुम् । ७. ख-च-झ-ण-भ-र-स्वधात्रे स्वधान्नेन । ८. न-पुस्तकेऽस्यानन्तरमेवं पाठो दृश्यते- एकत्रिकनाम्न्येकाहे निष्केवल्यशस्त्रे एकं नु त्वेति सूक्तमुखीया । सूत्रितं च-एकस्य चिन्मे विभ्वस्त्वो न एकं नु त्वा सत्पतिं पाञ्चजन्यमिति ।

एकं नु त्वा सत्पतिं पाञ्चजन्यं जातं शृणोमि यशसं जनेषु ।
तं मे जगृभ्र आशसो नविष्ठं दोषा वस्तोर्हवमानास इन्द्रम् ॥ ११ ॥

एकम् । नु । त्वा । सत्ऽपतिम् । पाञ्चऽजन्यम् । जातम् । शृणोमि । यशसम् । जनेषु ।
तम् । मे । जगृभ्रे । आऽशसः । नविष्ठम् । दोषा । वस्तोः । हवमानासः । इन्द्रम् ॥ ११ ॥

हे इन्द्र त्वा त्वाम् एकं नु[1] मुख्यमेव जनेषु सर्वेषु मनुष्येषु मध्येऽहं मन्त्रद्रष्टा शृणोमि ऋषिमुख्येभ्यः । कीदृशम् । सत्पतिं सतां पालकं पाञ्चजन्यं पञ्चजनेभ्यो मनुष्येभ्यो हितं जातम् उत्पन्नं यशसं यशोयुक्तम् । दोषा क्षपायां वस्तोः वासरे च हवमानासः स्तुवन्तः आशसः कामानां शंसमानाः मे मदीयाः प्रजाः[2] नविष्ठम् अतिशयेन स्तुत्यं तम् इन्द्रं जगृभ्रे गृह्णन्तु स्वीकुर्वन्तु ॥

एवा हि त्वामृतुथा यातयन्तं मघा विप्रेभ्यो ददतं शृणोमि ।
किं ते ब्रह्माणो गृहते सखायो ये त्वाया निदधुः काममिन्द्र ॥ १२ ॥

एव । हि । त्वाम् । ऋतुऽथा । यातयन्तम् । मघा । विप्रेभ्यः । ददतम् । शृणोमि ।
किम् । ते । ब्रह्माणः । गृहते । सखायः । ये । त्वाऽया । निऽदधुः । कामम् । इन्द्र ॥ १२ ॥

एव एवमुक्तप्रकारेण हि ऋतुथा कालेकाले यातयन्तं जन्तून् प्रेरयन्तं हे इन्द्र त्वां[3] विप्रेभ्यः स्तोतृभ्यः मघा मघानि धनानि ददतं यच्छन्तं शृणोमि निशामयामि । एतन्मृषैव प्रतिभाति । हे इन्द्र त्वाया त्वयि ये स्तोतारः कामं स्वकीयाभिलाषं निदधुः न्यक्षिपन् ब्रह्माणः बृहन्तः ते त्वदीयाः सखायः स्तोतारः किं गृहते त्वत्तः किं गृह्णते । ऋषिः स्वकीयाभिलाषप्राप्तिविलम्बनादेवमुक्तवानित्यर्थः ॥ ॥ ३३ ॥ ॥ २ ॥

वेदार्थस्य[4] प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः[4] ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके प्रथमोऽध्यायः समाप्तः ॥

---

१ श–'नु' नास्ति । २. ख-च-ण-भ–प्रजानाः; झ-र–प्रजनाः; न–जनाः । ३. ख-च-झ-ण-त-न-भ-र-श–त्वा त्वाम् । ४. ख-ग-घ-च-ज-ण-प-फ-ब–'वेदार्थस्य ... °महेश्वरः' नास्ति ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
चतुर्थे प्रथमाध्यायं व्याख्याय व्याकृतिक्षमः ।
सुधीः श्रीसायणाचार्यो द्वितीयं व्याचिकीर्षति ॥

तत्रात्रेः पञ्चमे मण्डले तृतीयेऽनुवाके द्वादश सूक्तानि । तत्र 'महि महे' इति दशर्चं प्रथमं सूक्तम् । प्रजापतिपुत्रः संवरणाख्यः[1] ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । तथा चानुक्रान्तं— 'महि दश प्राजापत्यः संवरणः' । विनियोगो लैङ्गिकः ॥

महिं महे तवसें दीध्ये नृनिन्द्रायेत्था तवसे अतंव्यान् ।
यो अस्मै सुमतिं वाजसातौ स्तुतो जनें समर्यश्चिकेतं ॥ १ ॥

महिं । महे । तवसें । दीध्ये । नृन् । इन्द्राय । इत्था । तवसें । अतंव्यान् ।
यः । अस्मै । सुऽमतिम् । वाजंऽसातौ । स्तुतः । जनें । सऽमर्यः । चिकेतं ॥ १ ॥

अहं संवरणः ᵛअतव्यान् अत्यन्तमिव दुर्बलः सन् ᵛमहि महत् प्रभूतं स्तोत्रं ᵛमहे महते ᵛतवसे बलवते ᵛइन्द्राय ᵛइत्था इत्थं वक्ष्यमाणप्रकारेण ᵛदीध्ये दीपयामि प्रकाशयामि । किमर्थम् । ᵛनॄन् । षष्ठ्यर्थे द्वितीया । मनुष्याणामस्मदीयानां ᵛतवसे बलाय । यद्वा । नॄनस्मद्विरोधिनामभिभवायेति शेषः । तदर्थं तवसेऽस्मद्बलाय । ᵛयः[2] इन्द्रः ᵛअस्मै ᵛजने जनाय संवरणाय ᵛवाजसातौ संग्रामे वाजस्य अन्नस्य वा लाभे निमित्ते सति ᵛस्तुतः सन् ᵛसुमतिं ᵛसमर्यः मर्त्यैः स्तोतृभिः सहितो यद्वा सह म्रियमाणैर्युध्यमानैर्मरुदादिभिरथवा समरार्हः ᵛचिकेत जानाति ॥

स त्वं नं इन्द्र धियसानो अर्कैर्हरींणां वृषन्योक्त्रंमश्रेः ।
या इत्था मंघवन्ननु जोषं वक्षो अभि प्रार्यः सक्षि जनान् ॥ २ ॥

सः । त्वम् । नः । इन्द्र । धियसानः । अर्कैः । हरींणाम् । वृषन् । योक्त्रम् । अश्रेः ।
याः । इत्था । मघऽवन् । अनुं । जोषम् । वक्षः । अभि । प्र । अर्यः । सक्षि । जनान् ॥ २ ॥

हे ᵛवृषन् वर्षक ᵛइन्द्र ᵛसः प्रसिद्धः ᵛत्वं ᵛनः अस्मान् ᵛधियसानः ध्यायन् ᵛअर्कैः अर्चनसाधनैः स्तोत्रैर्निमित्तभूतैः ᵛहरीणां रथे नियोज्यानामश्वानां ᵛयोक्त्रं नियोजनरज्जुम् ᵛअश्रेः आश्रयसि । ᵛयाः ॥ लिङ्गव्यत्ययः ॥ यानर्कान् हे ᵛमघवन् ᵛइत्था इत्थं ᵛजोषं प्रीतिम् ᵛअनु ᵛवक्षः अवहः तैर्निमित्तैर्योक्त्रमश्रेरिति । तथा कृत्वा ᵛअर्यः अस्मदरीन् ᵛजनान् ᵛअभि आभिमुख्येन ᵛप्र प्रकृष्टं ᵛसक्षि पराभव ॥

---

१. ग-घ-ज-प-फ-ब-संवरणः । २. ख-च-ण-न-भ-सः ।

न ते त इन्द्राभ्य१स्मदृष्वायुक्तासो अब्रह्मता यदसन् ।
तिष्ठा रथमधि तं वज्रहस्ता रश्मिं देव यमसे स्वश्वः ॥ ३ ॥

न । ते । ते । इन्द्र । अभि । अस्मत् । ऋष्व । अयुक्तासः । अब्रह्मता । यत् । असन् ।
तिष्ठ । रथम् । अधि । तम् । वज्रऽहस्त । आ । रश्मिम् । देव । यमसे । सुऽअश्वः ॥ ३ ॥

हे ऋष्व महन् इन्द्र[1] यत्[2] ये अस्मत् अस्मत्तः त्वद्भक्तेभ्योऽन्ये अयुक्तासः त्वया असंयुक्ताः[3] असन् आसन् अभवन् अब्रह्मता । ब्रह्म परिवृढं कर्म । तद्रहितत्वात् ते नराः ते त्वदीयाः न भवन्ति । अतः अस्मद्यज्ञम्[4] अभि आगन्तुं तं प्रसिद्धं रथमधि तिष्ठ । हे वज्रहस्त इन्द्र देव स्वश्वः त्वं यं रथमारोढुं रश्मिं प्रग्रहम् आ यमसे नियमयसि तमधि तिष्ठ ॥

पुरू यत्त इन्द्र सन्त्युक्था गवे चकर्थोर्वरासु युध्यन् ।
ततक्षे सूर्याय चिदोकसि स्वे वृषा समत्सु दासस्य नाम चित् ॥ ४ ॥

पुरु । यत् । ते । इन्द्र । सन्ति । उक्था । गवे । चकर्थ । उर्वरासु । युध्यन् ।
ततक्षे । सूर्याय । चित् । ओकसि । स्वे । वृषा । समत्ऽसु । दासस्य । नाम । चित् ॥ ४ ॥

हे इन्द्र ते तव यत् यदा स्वभूतानि पुरू पुरूणि बहूनि । उक्था उक्थानि शस्त्राणि सन्ति तदा[5] उर्वरासु सस्योपेतासु भूमिषु निमित्तभूतासु गवे वृष्टयुदकाय युध्यन् जलप्रतिबन्धकान् संहरन् चकर्थ करोषि भेदनम् । कुत्रेति । सूर्याय सूर्यस्य स्वे स्वकीये ओकसि स्थाने । वृषा वर्षिता सन् ततक्षे संपादयसि । समत्सु संग्रामेषु दासस्य वृष्टिप्रतिबन्धकर्तुरेतन्नामकस्य असुरस्य नाम चित् नामापि ततक्षे नाशयसीत्यर्थः[6] ॥

वयं ते त इन्द्र ये च नरः शर्धो जज्ञाना याताश्च रथाः ।
आस्माञ्जगम्यादहिशुष्म सत्वा भगो न हव्यः प्रभृथेषु चारुः ॥ ५ ॥

वयम् । ते । ते । इन्द्र । ये । च । नरः । शर्धः । जज्ञानाः । याताः । च । रथाः ।
आ । अस्मान् । जगम्यात् । अहिऽशुष्म । सत्वा । भगः । न । हव्यः । प्रऽभृथेषु । चारुः ॥ ५ ॥

हे इन्द्र ये च नरः कर्मणां नेतार ऋत्विग्यजमाना वयं स्मः ते वयं ते त्वदीयाः । कीदृशा वयम् । शर्धः बलं जज्ञानाः उत्पादयन्तः स्तुतिभिः याताश्च होतुं त्वां प्राप्ताश्च रथाः

---

१. ख-झ-त-न-भ-र-श—हे इन्द्र । २. श—यत् । सुपो लोपः । ३. ख-च-ण— अयुक्ताः । ४. ख-च-झ-ण-त-भ-र—यद्यज्ञम्; न—यज्ञम् । ५. ख-च-झ-ण-न-भ-र-श—'तदा' नास्ति । ६. ख-च-झ-ण-भ—वयसीत्यर्थः; न-र—वशयसीत्यर्थः; श—नाशयतीत्यर्थः ।

रंहणशीलाश्च । किंच हे अहिशुष्म । अहिरयनात् । सर्वतो व्याप्तबलेन्द्र त्वदनुग्रहात् हव्यः स्तुत्यः प्रतिभटैराह्वातव्यो वा चारुः संगन्ता[1] सत्वा भृत्यादिः प्रभृथेषु संग्रामेषु यज्ञेषु वा अस्मान् आ जगम्यात् आगच्छेत् । भगो न भग इव हव्यश्चारुः । भगदेवो यथास्मत्सहाय आगच्छति तथा भृत्यादिरागच्छेदित्यर्थः ॥ ॥ ५ ॥

पपृक्षेण्यमिन्द्र त्वे ह्योजो नृम्णानि च नृतमानो अमर्तः ।

स न एनीं वसवानो रयिं दाः प्रार्यः स्तुषे तुविमघस्य दानम् ॥ ६ ॥

पपृक्षेण्यम् । इन्द्र । त्वे इति । हि । ओजः । नृम्णानि । च । नृतमानः । अमर्तः ।

सः । नः । एनीम् । वसवानः । रयिम् । दाः । प्र । अर्यः । स्तुषे । तुविऽमघस्य । दानम् ॥ ६ ॥

हे इन्द्र पपृक्षेण्यं संपर्कार्हं पूज्यं वा ओजः बलं त्वे हि त्वयि खलु । त्वदधीनमित्यर्थः । नृतमानः नृत्यन् अमर्तः अमरणधर्मा सः त्वं वसवानः आच्छादयन् स्वतेजसा जगत् नृम्णानि नृमणानि द्रविणानि । वक्ष्यमाणरय्यपेक्षया चशब्दः । एनीम् एतवर्णां श्वेतवर्णां रयिं धनं दाः देहि । अहं च अर्यः ईश्वरस्य तुविमघस्य प्रभूतधनस्य च दानं प्र स्तुषे स्तौमि ॥

एवा न इन्द्रोतिभिरव पाहि गृणतः शूर कारून् ।

उत त्वचं ददतो वाजसातौ पिप्रीहि मध्वः सुषुतस्य चारोः ॥ ७ ॥

एव । नः । इन्द्र । ऊतिऽभिः । अव । पाहि । गृणतः । शूर । कारून् ।

उत । त्वचम् । ददतः । वाजऽसातौ । पिप्रीहि । मध्वः । सुऽसुतस्य । चारोः ॥ ७ ॥

हे शूर इन्द्र एव एवं नः अस्मान् गृणतः स्तुवतः कारून् कर्तॄनृत्विजः ऊतिभिः रक्षणैः अव[2] पालय । उत अपि च वाजसातौ संग्रामे त्वचम् आच्छादकं रूपं ददतः प्रयच्छतः सुषुतस्य सुष्ठुभिषुतस्य चारोः मनोहरस्य मध्वः सोमस्य पिप्रीहि प्रीणयात्मानम् । द्वितीयार्थे षष्ठी । उक्तलक्षणं[3] सोमं पिबेत्यर्थः । अथवा तृतीयार्थे षष्ठी । उक्तलक्षणेन सोमपानेन प्रीणय ॥

उत त्ये मा पौरुकुत्स्यस्य सूरेस्त्रसदस्योर्हिरणिनो रराणाः ।

वहन्तु मा दश श्येतासो अस्य गैरिक्षितस्य क्रतुभिर्नु सश्चे ॥ ८ ॥

उत । त्ये । मा । पौरुऽकुत्स्यस्य । सूरेः । त्रसदस्योः । हिरणिनः । रराणाः ।

वहन्तु । मा । दश । श्येतासः । अस्य । गैरिऽक्षितस्य । क्रतुऽभिः । नु । सश्चे ॥ ८ ॥

---

१. ख-च-झ-ण-न-भ–गन्ता; ग-घ-ज–संगतो; र-श–संगता । २. ग-घ-ज-प-फ-ब–अव पाहि ।
३. ख-च-झ-ण-भ-र–सूक्त° ।

त्रसदस्युश्च विदथो ध्वन्यश्चेति त्रयो नृपाः । अश्वान्धनानि गाश्चादुर्ऋषये तद्वदत्यृषिः ॥ उत अपि च त्ये ते मा । चतुर्थ्यर्थे द्वितीया । मह्यमित्यर्थः । रराणाः ॥ रातेर्दानार्थस्य कर्मणि लिटः कानचि रूपम् ॥ दत्ता इत्यर्थः । पौरुकुत्स्यस्य पुरुकुत्सापत्यस्य सूरेः प्रेरकस्य हिरणिनः हिरण्यवतः अस्य त्रसदस्योः एतन्नामकस्यः राजर्षेः गैरिक्षितस्य गिरिक्षितगोत्रोत्पन्नस्य श्येतासः शुभ्रवर्णाः दश अश्वाः मा मां वहन्तु प्रापयन्तु । अहं च क्रतुभिः कर्मभी रथनियोजनादिभिर्यज्ञादिभिर्वा नु क्षिप्रं सश्चे गच्छेयम् ॥

उत त्ये मा मारुताश्वस्य शोणाः क्रत्वामघासो विदथस्य रातौ ।

सहस्रा मे च्यवतानो ददान आनूकमर्यो वपुषे नार्चत् ॥ ९ ॥

उत । त्ये । मा । मारुतऽअश्वस्य । शोणाः । क्रत्वाऽमघासः । विदथस्य । रातौ ।

सहस्रा । मे । च्यवतानः । ददानः । आनूकम् । अर्यः । वपुषे । न । आर्चत् ॥ ९ ॥

उत अपि च त्ये तेऽश्वा वक्ष्यमाणाः मारुताश्वस्य । मरुत्सदृशवेगाश्ववान्मरुताश्वः । तदपत्यस्य विदथस्य[1] एतन्नामकस्य[1] राज्ञः शोणाः शोणवर्णाः क्रत्वामघासः क्रतुना कर्मणा शीघ्रगमनादिलक्षणेन माहनीया अश्वाः[2] रातौ[3] दाने विनियुक्ता मां वहन्तीति शेषः । किंच सहस्रा सहस्राणि अपरिमितानि धनानि अर्यः पूज्यस्य मे । चतुर्थ्यर्थे षष्ठी । पूज्याय मह्यं च्यवतानः च्यावयन् ददानः प्रयच्छन् सः आनूकम् आभरणं च वपुषे[4] स्वशरीरालंकाराय आर्चत् प्रायच्छत् । न इति चार्थे ॥

उत त्ये मा ध्वन्यस्य जुष्टा लक्ष्मण्यस्य सुरुचो यतानाः ।

मह्ना रायः संवरणस्य ऋषेर्व्रजं न गावः प्रयता अपि ग्मन् ॥ १० ॥

उत । त्ये । मा । ध्वन्यस्य । जुष्टाः । लक्ष्मण्यस्य । सुऽरुचः । यतानाः ।

मह्ना । रायः । सम्ऽवरणस्य । ऋषेः । व्रजम् । न । गावः । प्रऽयताः । अपि । ग्मन् ॥ १० ॥

उत अपि च त्ये ते वक्ष्यमाणाः रायः ध्वन्यस्य ध्वन्यनामकस्य लक्ष्मण्यस्य लक्ष्मणपुत्रस्य राज्ञः संबन्धिनोऽश्वाः जुष्टाः मां[5] प्राप्ताः सुरुचः शोभनदीप्तयः यतानाः वहनाय[6] यतमानाः । रायः[7] मह्ना महत्त्वेन युक्ता रायः प्रयताः दत्ताः सत्यः संवरणस्य ऋषेः अपि ग्मन् अपिगताः प्राप्ताः । मद्गृहमिति शेषः । व्रजं न गावः गोष्ठं गाव इव । यद्वा नेति चार्थे । गावश्च मम व्रजमपिग्मन् । अत्रैन्द्रे सूक्ते ‘ प्रायेणैन्द्रे मरुतो राज्ञां च दानस्तुतयः ’ ( अनु. २. २२ ) इत्युक्तत्वाद्राज्ञां दानस्तुतिरविरुद्धा ॥ ॥ २ ॥

---

१. त–‘ विदथस्यैतन्नामकस्य ’ नास्ति । २. ग-घ-ज-त-प-फ-ब-श–अश्वाः विदथस्य वेदनसाधनस्य । ३. ख-च-झ-ण-न-भ-र–‘ रातौ ’ नास्ति । ४. ग-घ-ज-प-फ-ब–आभूषे । ५. ग-घ-ज–मा । ६. ख-ग-घ-च-ज-ण-प-फ-ब-श–वहमाना; र–वहमानाय । ७. ग-घ-ज-प-फ-ब–रायो धनानि ।

'अजातशत्रुम्' इति नवर्चं द्वितीयं सूक्तं प्राजापत्यस्य संवरणस्यार्षमैन्द्रम्। नवमी त्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः। 'अजातशत्रुं नव त्रिष्टुबन्तम्' इत्यनुक्रमणिका। विनियोगो लैङ्गिकः॥

**अजातशत्रुमजरा स्वर्वत्यनु स्वधामिता दस्ममीयते।**

**सुनोतन पचत ब्रह्मवाहसे पुरुष्टुताय प्रतरं दधातन॥ १॥**

अजातऽशत्रुम्। अजरा। स्वःऽवती। अनु। स्वधा। अमिता। दस्मम्। ईयते।

सुनोतन। पचत। ब्रह्मऽवाहसे। पुरुऽस्तुताय। प्रऽतरम्। दधातन॥ १॥

अजातशत्रुम्। अनुत्पन्नाः शातयितारो यस्य तम्। दस्मं शत्रूणामुपक्षपयितारम् अजरा अक्षीणा स्वर्वती स्वरणवती अमिता अपरिमिता स्वधा अन्नं हविः अनु ईयते अनुप्राप्नोति। तदर्थं हे ऋत्विजः सुनोतन अभिषुणुत। पचत पुरोडाशादिकम्। कस्मै। ब्रह्मवाहसे ब्रह्मणः परिवृढस्य स्तोत्रस्य वाहकाय पुरुष्टुताय बहुभिः स्तुतायेन्द्राय। प्रतरं प्रकृष्टतरं दधातन धारयत स्वस्वोचितकर्म॥

**आ यः सोमेन जठरमपिप्रतामन्दत मघवा मध्वो अन्धसः।**

**यदीं मृगाय हन्तवे महावधः सहस्रभृष्टिमुशना वधं यमत्॥ २॥**

आ। यः। सोमेन। जठरम्। अपिप्रत। अमन्दत। मघऽवा। मध्वः। अन्धसः।

यत्। ईम्। मृगाय। हन्तवे। महाऽवधः। सहस्रऽभृष्टिम्। उशना। वधम्। यमत्॥२॥

यः मघवा सोमेन जठरं स्वकीयम् आ सर्वतः अपिप्रत अपूरयत मध्वः मधुररसस्य[1] अन्धसः सोमस्य[2] पानेन अमन्दत अतृप्यत्। यत् यदा ईम् अयं मृगाय एतन्नामकाय असुराय[3] हन्तवे तं हन्तुं महावधः महावज्रः सहस्रभृष्टिः अपरिमिततेजाः उशना कामयमानः शत्रुं यद्वोशनसा सह वधं वज्रं यमत् उदयच्छत् तदापिप्रत अमन्दत च॥

**यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह।**

**अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः॥ ३॥**

यः। अस्मै। घ्रंसे। उत। वा। यः। ऊधनि। सोमम्। सुनोति। भवति। द्युऽमान्। अह।

अपऽअप। शक्रः। ततनुष्टिम्। ऊहति। तनूऽशुभ्रम्। मघऽवा। यः। कवऽसखः॥३॥

---

१. ग-घ-ज-झ-प-फ-ब-श-मधुररसस्य। २. ग-घ-ज-प-फ-ब-अन्नस्य। ३. ग-घ-ज-प-फ-ब-असुरस्य।

ˇयः यजमानः ˇअस्मै इन्द्राय ˇघ्रंसे । अहर्नामैतत् । गृह्यन्तेऽस्मिन् रसा इति घ्रंसः । तस्मिन् । ˇउत ˇवा अथवा ˇयः यजमानः ˇऊधनि । उद्धततरं भवत्युन्नद्धमिति वोधो रात्रिः । स्नेहप्रदान-रसाभ्यामूधसि रात्रौ च समत्वाद्रात्रिरप्यूध उच्यते । अहनि रात्रौ च ˇसोमं ˇसुनोति सः ˇभवति ˇद्युमान् दीप्तिमान् । ˇअह इति विनिग्रहार्थीयः । किंच ˇशक्रः शक्तोऽयमिन्द्रः ˇततनुष्टिम् । ततं धर्मसंततिं नुदति वष्टि कामयते कामानिति ततनुष्टिः । तं ˇतनूशुभ्रम् । तनूः शुभ्रा शोभनीया अलं-कारादिभिः[1] यस्य तम् । तादृशं स्वपोषकम् अयज्वानम्[2] अप[3] ˇऊहति[3] । अपरोऽपशब्दः पूरणः । ˇमघवा धनवान्[4] ˇयः च ˇकवासखः कुत्सितपुरुषसहायस्तमपोहतीति ॥

**यस्यावधीत्पितरं यस्य मातरं यस्य शक्रो भ्रातरं नात ईषते ।**

**वेतीद्वस्य प्रयता यतंकरो न किल्बिषादीषते वस्व आकरः ॥ ४ ॥**

यस्य । अवधीत् । पितरम् । यस्य । मातरम् । यस्य । शक्रः । भ्रातरम् । न । अतः । ईषते ।

वेति । इत् । ऊँ इति । अस्य । प्रऽयता । यतम्ऽकरः ।

न । किल्बिषात् । ईषते । वस्वः । आऽकरः ॥ ४ ॥

ˇशक्रः शक्तोऽयं ˇयस्य अयज्वनः[5] ˇपितरं ˇअवधीत् हतवान् । ˇयस्य च ˇमातरम् अवधीत् । ˇयस्य च ˇभ्रातरं ˇअतः अस्मादयज्वनः सकाशात् ˇन ˇईषते । न बिभेति न[6] गच्छति[6] वा । किंतु ˇअस्य ˇप्रयता प्रदत्तानि[7] हवींषि ˇवेतीदु कामयत एव । अयज्वानं शिक्षयित्वा नियोजय-तीत्यर्थः । ˇयतंकरः[8] यमनकर्ता ˇवस्वः वसुनः धनस्य ˇआकरः आभिमुख्यकर्ता यः ˇकिल्बिषात् पित्रादिवधयुक्तात्[9] ˇन ˇईषते न चलति न बिभेति वा । इन्द्रस्य अस्तोतॄणां[10] हतिः 'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् अन्तरिक्षे पौलोमान् पृथिव्यां कालकाञ्ज्यानरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छम्' इत्यादिश्रुतिषु प्रसिद्धा ॥

**न पञ्चभिर्दशभिर्वष्ट्यारभं नासुन्वता सचते पुष्यता चन ।**

**जिनाति वेदमुया हन्ति वा धुनिरा देवयुं भजति गोमति व्रजे ॥ ५ ॥**

न । पञ्चऽभिः । दशऽभिः । वष्टि । आऽरभम् । न । असुन्वता । सचते । पुष्यता । चन ।

जिनाति । वा । इत् । अमुया । हन्ति । वा । धुनिः । आ । देवऽयुम् । भजति । गोऽमति । व्रजे ॥५॥

---

१. ख-च-झ-ण-न-भ–अलंकरणादिभिः; ग-घ-ज–अलंकाराः । २. ख-च-झ-ण-त-न-भ-र–यज्वानम् । ३. ख-च-ण-भ–आपोहति; ग-घ-ज-प-फ-ब–अपो अपोहति । ४. ख-च-झ-ण-न-भ-र–'धनवान्' नास्ति । ५. झ-त-र–यज्वनः । ६. ख-झ–नेच्छति । ७. ग-घ-ज-श–दत्तानि । ८. त–यतंकरः यमनकरः । ९. ख-च-झ-ण-त-न-भ-र–पित्रादिधनयुक्तात्; ग-घ-ज-प-फ-ब–पित्रादिवत्; श–पित्रादिना वधयुक्तात् । १०. ख-च-झ-ण-न-भ–स्तोतॄणाम् ।

अयमिन्द्रः ᵛपञ्चभिर्दशभिः वा सहायैः ᵛआरभम् आरम्भं शत्रुहननायालम्बनं ᵛन ᵛवष्टि साहाय्यं नापेक्षत इत्यर्थः । यद्वा । अमुमिन्द्रं पञ्चभिर्दशभिर्वा यज्ञादन्यैरुपायैः आरभम् आरब्धुमुद्योगं कर्तुं न वष्टि न कामयते । ᵛअसुन्वता अभिषवमकुर्वता सह ᵛपुष्यता ᵛचन बन्ध्वादीनपोषयतापि ᵛन ᵛसचते न संगच्छते । असुन्वन्तम् अभिषवमकुर्वाणम् अयष्टारम् अपुष्णन्तं च न प्राप्नोतीत्यर्थः । न केवलमप्राप्तिमात्रं किंतु ᵛजिनाति ᵛवा । वाशब्दश्चार्थे । जिनाति च । बाधते । ᵛइत् इति पूरणः । ᵛहन्ति ᵛवा ᵛअमुया अमुमयष्टारं ᵛधुनिः कम्पकः शत्रूणाम् । ᵛदेवयुं देवमिन्द्रं कामयमानं यजमानं ᵛगोमति ᵛव्रजे ᵛआ ᵛभजति योजयतीत्यर्थः ॥　॥ ३ ॥

वित्वक्षणः समृतौ चक्रमासजोऽसुन्वतो विषुणः सुन्वतो वृधः ।
इन्द्रो विश्वस्य दमिता विभीषणो यथावशं नयति दासमार्यः ॥ ६ ॥

विऽत्वक्षणः । सम्ऽऋतौ । चक्रम्ऽआसजः । असुन्वतः । विषुणः । सुन्वतः । वृधः ।
इन्द्रः । विश्वस्य । दमिता । विऽभीषणः । यथाऽवशम् । नयति । दासम् । आर्यः ॥ ६ ॥

ᵛसमृतौ संग्रामे ᵛवित्वक्षणः विशेषेण तनूकर्ता शत्रूणां तदर्थं ᵛचक्रमासजः रथचक्रस्यासंजयिता ᵛअसुन्वतः अयजमानस्य ᵛविषुणः पराङ्मुखः ᵛसुन्वतः यजमानस्य ᵛवृधः वर्धयिता ᵛइन्द्रः ᵛविश्वस्य ᵛदमिता शिक्षयिता ᵛविभीषणः भयजनकः ᵛआर्यः स्वामी ᵛयथावशं यथेच्छं ᵛदासं दासकर्माणं जनं[1] ᵛनयति स्ववशम् ॥

समीं पणेरजति भोजनं मुषे वि दाशुषे भजति सूनरं वसु ।
दुर्गे चन ध्रियते विश्व आ पुरु जनो यो अस्य तविषीमचुक्रुधत् ॥ ७ ॥

सम् । ईम् । पणेः । अजति । भोजनम् । मुषे । वि । दाशुषे । भजति । सूनरम् । वसु ।
दुःऽगे । चन । ध्रियते । विश्वः । आ । पुरु । जनः । यः । अस्य । तविषीम् । अचुक्रुधत् ॥ ७ ॥

ᵛईम् अयमिन्द्रः ᵛपणेः वणिज[2] इव[2] लुब्धकस्यादातुः ᵛभोजनं धनमन्नं वा ᵛमुषे चोरयितुं ᵛसम् ᵛअजति सम्यक् गच्छति । गत्वा चादाय ᵛदाशुषे हविर्दात्रे यजमानाय ᵛवि ᵛभजति ᵛसूनरं शोभनमनुष्यं ᵛवसु धनम् । अयष्टुर्धनमाकृष्य यष्ट्रे प्रयच्छतीत्यर्थः । न केवलं वणिग्धनप्रदानमात्रं[3] किंतु ᵛपुरु पुरुणि ᵛदुर्गे ᵛचन[4] दुःखेन[4] गन्तव्ये आपद्यपि ᵛविश्वः सर्वोऽपि दातृजनः ᵛआ ᵛध्रियते आस्थाप्यते । ᵛयः ᵛजनः[5] ᵛअस्य इन्द्रस्य ᵛतविषीं बलम् ᵛअचुक्रुधत् विहिताकरणादिना तस्य पणेरजतीति पूर्वशेषः । यद्वा । योऽस्य तविषीमचुक्रुधत् स सर्वोऽपि जनो दुर्गे चनाध्रियत इन्द्रेण ॥ चनेत्येकपदमध्येतृसंप्रदायप्राप्तम् ॥

---

१. ख-च-झ-ण-न-भ-र-' जनं ' नास्ति । २. ख-च-झ-ण-त-भ-र-वणिजमिव । ३. ख-च-ण-वणिक्प्रदान० । ४. ख-च-झ-ण-न-भ-चन दुःखेन; र-च दुःखेन न । ५. झ-न-भ-र-' जनः ' नास्ति ।

सं यज्जनौ सुधनौ विश्वशर्धसाववेदिन्द्रो मघवा गोषु शुभ्रिषु ।
युजं ह्यन्यमकृत प्रवेपन्युदीं गव्यं सृजते सत्वभिर्धुनिः ॥ ८ ॥

सम् । यत् । जनौ । सुऽधनौ । विश्वऽशर्धसौ । अवेत् । इन्द्रः । मघऽवा । गोषु । शुभ्रिषु ।
युजम् । हि । अन्यम् । अकृत । प्रऽवेपनी । उत् । ईम् । गव्यम् । सृजते । सत्वऽभिः । धुनिः ॥८॥

सम् अवेत् संजानाति यत् यदा जनौ परस्परप्रतिद्वन्द्विनौ सुधनौ शोभनधनौ विश्वशर्धसौ व्याप्तबलौ बहूत्साहौ वा मघवा धनवान् इन्द्रः गोषु शुभ्रिषु शोभनासु गोषु निमित्तभूतासु अन्यं यष्टारं युजं सहायम् अकृत कृतवान् प्रवेपनी शत्रूणां प्रवेपनवान् । ईम् अस्मै गव्यं गोसमूहम् उत् सृजते सत्वभिः मरुद्भिः सह धुनिः मेघानां कम्पयिता । इन्द्रो यजमानम् अयजमानं वा यं जानाति गोनिमित्तं[1] ज्ञात्वा यज्वने गोसमूहं प्रयच्छतीत्यर्थः ॥

सहस्रसामाग्निवेशिं गृणीषे शत्रिमग्न उपमां केतुमर्यः ।
तस्मा आपः संयतः पीपयन्त तस्मिन्क्षत्रममवत्त्वेषमस्तु ॥ ९ ॥

सहस्रऽसाम् । आग्निऽवेशिम् । गृणीषे । शत्रिम् । अग्ने । उपऽमाम् । केतुम् । अर्यः ।
तस्मै । आपः । सम्ऽयतः । पीपयन्त । तस्मिन् । क्षत्रम् । अमऽवत् । त्वेषम् । अस्तु ॥९॥

अग्निवेशिसुतं शत्रिमसंख्यातधनप्रदम् । आशास्त ऋषिरन्त्यर्चा प्रजापतिसुतः सुधीः ॥ अर्यः[2] अहं सहस्रसाम् अपरिमितधनप्रदम् आग्निवेशिम् अग्निवेशिसुतं शत्रिम् एतन्नामकं राजर्षिं गृणीषे गृणे स्तौमि । हे अग्ने अङ्गनादिगुणविशिष्टेन्द्र । कीदृशं तम् । उपमाम् उपमानभूतं केतुं प्रज्ञापकं प्रख्यातमित्यर्थः । तस्मा आपः संयतः सम्यक् गच्छन्त्यः पीपयन्त प्यायन्ताम्[3] । तस्मिन् राज्ञि क्षत्रं धनम्[4] अमवत् बलसहितं[4] त्वेषं दीप्तम् अस्तु इति ॥ ॥ ४ ॥

' यस्ते साधिष्ठः ' इत्यष्टर्चं तृतीयं सूक्तम् । अङ्गिरोगोत्रः प्रभूवसुर्नाम ऋषिः । अन्त्या पङ्क्तिः । पङ्क्त्यन्तपरिभाषया शिष्टा अनुष्टुभः । इन्द्रो देवता । ' यस्तेऽष्टौ प्रभूवसुराङ्गिरसः पङ्क्त्यन्तम् ' इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः । आभिप्लविकेषूक्थ्येषु तृतीयसवने आद्य-स्तृचोऽच्छावाकस्य वैकल्पिकोऽनुरूपः । सूत्रितं च—' यस्ते साधिष्ठोऽवसे पुरां भिन्दुर्युवा कविः ' ( आश्व. श्रौ. ७. ८ ) इति । द्वितीयतृतीययोः स्वरसाम्नोश्चाद्यौ तृचावनुरूपौ । ' यस्ते साधिष्ठोऽवस इति षळनुष्टुभः ' ( आश्व. श्रौ. ८. ५ ) इति हि सूत्रितम् ॥

---

१. ख-च-झ-ण-न-भ-र—नोनिमित्तम् । २. ग-घ-ज-प-फ-ब—अर्यः स्वामी । ३. ग-घ-ज-प-फ-ब—पुष्यन्तु । ४. ग-घ-ज-प-फ-ब—बलममवत् गृहयुक्तम् ।

यस्ते साधिष्ठोऽवस इन्द्र क्रतुष्टमा भर ।

अस्मभ्यं चर्षणीसहं सस्निं वाजेषु दुष्टरम् ॥ १ ॥

यः । ते । साधिष्ठः । अवसे । इन्द्र । क्रतुः । तम् । आ । भर ।

अस्मभ्यम् । चर्षणिऽसहम् । सस्निम् । वाजेषु । दुस्तरम् ॥ १ ॥

हे ˅इन्द्र ˅ते तव ˅यः ˅साधिष्ठः अतिशयेन साधकः ˅क्रतुः उक्तलक्षणं कर्म प्रज्ञा वास्ति ˅तं क्रतुं नः ˅अवसे अस्मद्रक्षणाय ˅अस्मभ्यम् ˅आ ˅भर आहर । कीदृशं तम् । ˅चर्षणीसहं सर्वेषां मनुष्याणामभिभवितारं ˅सस्निं संस्नातं शुद्धं ˅वाजेषु संग्रामेषु ˅दुष्टरम् अन्यैरनभिभाव्यम् ॥

यदिन्द्र ते चतस्रो यच्छूर सन्ति तिस्रः ।

यद्वा पञ्च क्षितीनामवस्तत्सु न आ भर ॥ २ ॥

यत् । इन्द्र । ते । चतस्रः । यत् । शूर । सन्ति । तिस्रः ।

यत् । वा । पञ्च । क्षितीनाम् । अवः । तत् । सु । नः । आ । भर ॥ २ ॥

हे ˅इन्द्र ˅ते तव ˅यत् या ऊतयः ˅चतस्रः[1] चतुर्षु[1] वर्णेषु संश्रिताः ˅सन्ति ˅यत्[2] याश्च हे ˅शूर ˅तिस्रः त्रिषु लोकेषु वर्तमानाः ˅यद्वा[3] । वाशब्दश्चार्थे । यत् याश्च ˅पञ्च ˅क्षितीनां पञ्चजनसंबन्धिन्य ऊतयः सन्ति ˅तत्[4] सर्वम्[4] ˅अवः रक्षणं[4] ˅सु सुष्ठु ˅नः अस्मभ्यम् ˅आ ˅भर आहरेति ॥

आ तेऽवो वरेण्यं वृषन्तमस्य हूमहे ।

वृषजूतिर्हि जज्ञिष आभूभिरिन्द्र तुर्वणिः ॥ ३ ॥

आ । ते । अवः । वरेण्यम् । वृषन्ऽतमस्य । हूमहे ।

वृषऽजूतिः । हि । जज्ञिषे । आऽभूभिः । इन्द्र । तुर्वणिः ॥ ३ ॥

हे ˅इन्द्र ˅वृषन्तमस्य फलानां वर्षकतमस्य ˅ते तव ˅अवः रक्षणं गमनं वा ˅वरेण्यं वरणीयम् ˅आ ˅हूमहे आह्वयामः । हे इन्द्र ˅वृषजूतिः वर्षणगमनः ˅तुर्वणिः तूर्णवनिर्हिंसको वा त्वम् ˅आभूभिः सर्वतो भवद्भिर्व्याप्तैर्मरुद्भिः सह अवः[5] ˅हि[5] ˅जज्ञिषे उत्पादयसि खलु । तेऽव आह्वयाम इति । यद्वा । वृषगमनः सन् यस्माद्यज्ञमागत्य फलं जज्ञिषे तस्मात्तेऽवो हूमह इति ॥

---

१. ख-झ–चतसृषु; ग-घ-ज-प-फ-ब–रक्षाः चतस्रः चतसृषु; त-र–चतस्रः चतसृषु । २. ख-च-झ-ण-न-भ-र–' यत् ' नास्ति । ३. ख-च-झ-ण-न-भ-र-श–' यद्वा ' नास्ति । ४. ख-च-झ-ण-न-भ-र–अवो रक्षणं तत्सर्वम् । ५. ख-च-झ-ण-न-भ-र–याहि ।

वृषा ह्यसि राधसे जज्ञिषे वृष्णि ते शवः ।
स्वक्षत्रं ते धृषन्मनः सत्राहमिन्द्र पौंस्यम् ॥ ४ ॥

वृषा । हि । असि । राधसे । जज्ञिषे । वृष्णि । ते । शवः ।
स्वऽक्षत्रम् । ते । धृषत् । मनः । सत्राऽहम् । इन्द्र । पौंस्यम् ॥ ४ ॥

हे इन्द्र राधसे यजमानानां समृद्धये वृषा ह्यसि फलस्य वर्षकोऽसि खलु । यद्वा । वृषा खल्वसि । राधसे धनार्थं जज्ञिषे उत्पद्यसे[1] । ते शवः बलं वृष्णि वर्षितृ । ते मनः स्वक्षत्रं स्वायत्तबलं धृषत् धर्षकं विरोधिनाम् । हे इन्द्र ते पौंस्यं पुंस्त्वं सत्राहं संघहन्तृ ॥

त्वं तमिन्द्र मर्त्यममित्रयन्तमद्रिवः ।
सर्वरथा शतक्रतो नि याहि शवसस्पते ॥ ५ ॥

त्वम् । तम् । इन्द्र । मर्त्यम् । अमित्रऽयन्तम् । अद्रिऽवः ।
सर्वऽरथा । शतक्रतो इति शतऽक्रतो । नि । याहि । शवसः । पते ॥ ५ ॥

हे इन्द्र त्वं तम् अमित्रयन्तं शत्रुत्वमाचरन्तं शत्रुं वेच्छन्तं मर्त्यं हे अद्रिवः वज्रवन्निन्द्र सर्वरथा सर्वत्र व्याप्तेन रथेन ॥ 'सुपां सुलुक्°' इत्याकारः ॥ हे शतक्रतो हे शवसस्पते बलस्य पालक नि याहि नितरां गच्छाभिभवितुम् ॥ ॥ ५ ॥

त्वामिद्वृत्रहन्तम जनासो वृक्तबर्हिषः ।
उग्रं पूर्वीषु पूर्व्यं हवन्ते वाजसातये ॥ ६ ॥

त्वाम् । इत् । वृत्रहन्ऽतम । जनासः । वृक्तऽबर्हिषः ।
उग्रम् । पूर्वीषु । पूर्व्यम् । हवन्ते । वाजऽसातये ॥ ६ ॥

हे वृत्रहन्तम अतिशयेन शत्रूणां[2] हन्तरिन्द्र त्वामित् त्वामेव जनासः जनाः वृक्तबर्हिषः आच्छादितदर्भाः । प्रवृत्तयज्ञा इत्यर्थः । उग्रम् उद्गूर्णबलं पूर्वीषु बह्वीषु प्रजासु मध्ये पूर्व्यं पुरातनं सन्तं वाजसातये संग्रामाय हवन्ते आह्वयन्ते ॥

अस्माकमिन्द्र दुष्टरं पुरोयावानमाजिषु ।
सयावानं धनेधने वाजयन्तमवा रथम् ॥ ७ ॥

अस्माकम् । इन्द्र । दुस्तरम् । पुरःऽयावानम् । आजिषु ।
सऽयावानम् । धनेऽधने । वाजऽयन्तम् । अव । रथम् ॥ ७ ॥

---

१. ख-च-क्ष-ण-त-न-भ-र-वृद्ध उत्पद्यसे । २. ग-घ-ज-वृत्राणाम् ।

हे ᵛइन्द्र ᵛअस्माकं ᵛरथं रंहणस्वभावं वा पुत्रम् ᵛअव रक्ष । कीदृशं रथम् । ᵛदुष्टरं दुःखेन तरणीयम् ᵛआजिषु संग्रामेषु ᵛपुरोयावानं पुरतो मिश्रयितारं ᵛसयावानम् अनुचरैः सह गन्तारं ᵛधनेधने सर्वेषु धनेषु ᵛवाजयन्तं संग्रामं धनं वेच्छन्तम् ॥

अस्माकमिन्द्रेहि नो रथमवा पुरंध्या ।
वयं शविष्ठ वार्यं दिवि श्रवो दधीमहि दिवि स्तोमं मनामहे ॥ ८ ॥

अस्माकम् । इन्द्र । आ । इहि । नः । रथम् । अव । पुरम्ऽध्या ।
वयम् । शविष्ठ । वार्यम् । दिवि । श्रवः । दधीमहि । दिवि । स्तोमम् । मनामहे ॥ ८ ॥

हे ᵛइन्द्र ᵛअस्माकम् अस्मदीय एव सन् ᵛएहि आगच्छ । आगत्य च ᵛपुरंध्या शोभनबुद्ध्या ᵛनः अस्माकं ᵛरथम् ᵛअव रक्ष । ᵛवयं च हे ᵛशविष्ठ अतिशयेन बलवन् त्वदनुग्रहात् ᵛवार्यं वरणीयं ᵛश्रवः अन्नं कीर्तिं वा ᵛदिवि द्योतमाने त्वयि ᵛदधीमहि स्थापयामः । तथा ᵛदिवि त्वयि ᵛस्तोमं स्तोत्रं ᵛमनामहे करवामहे इत्यर्थः ॥ ॥ ६ ॥

'स आ गमत्' इति षड्टचं चतुर्थं सूक्तम् । आङ्गिरसः प्रभूवसुर्ऋषिः । तृतीया जगती शिष्टा अनुक्तत्वात् त्रिष्टुभः । इन्द्रो देवता । अनुक्रान्तं च—'स आ गमत् षट् तृतीया जगती' इति ॥ विनियोगो लैङ्गिकः ॥

स आ गमदिन्द्रो यो वसूनां चिकेतद्दातुं दामनो रयीणाम् ।
धन्वचरो न वंसगस्तृषाणश्चकमानः पिबतु दुग्धमंशुम् ॥ १ ॥

सः । आ । गमत् । इन्द्रः । यः । वसूनाम् । चिकेतत् । दातुम् । दामनः । रयीणाम् ।
धन्वऽचरः । न । वंसगः । तृषाणः । चकमानः । पिबतु । दुग्धम् । अंशुम् ॥ १ ॥

ᵛसः ᵛइन्द्रः अस्मद्यज्ञं प्रति ᵛआ ᵛगमत् आगच्छतु । ᵛयः देवः ᵛवसूनां धनानाम् ॥ कर्मणि षष्ठी ॥ वसूनि धनानि ᵛचिकेतत् जानाति प्रदातुम् । स कीदृशः । ᵛदामनः दाता दानमना वा ᵛरयीणां धनानाम् । गमने दृष्टान्तः । ᵛधन्वचरो ᵛन धनुषा सह संचरन् धानुष्क इव ᵛवंसगः वननीयगमनः ᵛतृषाणः अत्यन्तं तृषितः ᵛचकमानः कामयमानश्च सन् ᵛदुग्धम् अभिषुतम् ᵛअंशुं सोमं ᵛपिबतु ॥

आ ते हनू हरिवः शूर शिप्रे रुहत्सोमो न पर्वतस्य पृष्ठे ।
अनु त्वा राजन्नर्वतो न हिन्वन् गीर्भिर्मदेम पुरुहूत विश्वे ॥ २ ॥

आ । ते । हनू इति । हरिऽवः । शूर । शिप्रे इति । रुहत् । सोमः । न । पर्वतस्य । पृष्ठे ।
अनु । त्वा । राजन् । अर्वतः । न । हिन्वन् । गीःऽभिः । मदेम । पुरुऽहूत । विश्वे ॥ २ ॥

हे इन्द्र हे हरिवः हरिभ्यां तद्वन् शूर ते तव हनू हननसाधने । यद्यप्ययं शिप्रावचनः तथापि पुनः शिप्राभिधानात् गौणोऽवगन्तव्यः । उक्तरूपे संहते वा शिप्रे आ रुहत् आरोहतु प्राप्नोतु सोमः अस्मद्दत्तः । पर्वतस्य पृष्ठे न रुहत् नारोहति । तत्र न तिष्ठतीत्यर्थः । यद्वा । नशब्दः पुरस्तात्प्रयुक्तोऽप्यत्रोपमार्थः । पर्वतस्य पृष्ठे उपरिप्रदेशे सोमो न । तत्र यथा विस्रम्भेण प्रसरति तद्वत् । हे राजन् राजमानेन्द्र त्वा त्वाम् अनु त्वया सह ॥ 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वम् ॥ विश्वे वयम् अर्वतो न अश्वानिव तृणादिभिः गीर्भिः स्तुतिभिः हिन्वन् हिन्वन्तः त्वां प्रीणयन्तः सन्तः मदेम हृष्येम । हे पुरुहूत बहुप्रकारं बहुभिर्वाहूतेन्द्र ॥

**चक्रं न वृत्तं पुरुहूत वेपते मनो भिया मे अमतेरिदद्रिवः ।**

**रथादधि त्वा जरिता सदावृध कुविन्नु स्तोषन्मघवन्पुरूवसुः ॥ ३ ॥**

चक्रम् । न । वृत्तम् । पुरुऽहूत । वेपते । मनः । भिया । मे । अमतेः । इत् । अद्रिऽवः ।

रथात् । अधि । त्वा । जरिता । सदाऽवृध । कुवित् । नु । स्तोषत् । मघऽवन् । पुरुऽवसुः ॥ ३ ॥

हे पुरुहूत बहुभिराहूत हे अद्रिवः वज्रवन्निन्द्र मे मनः अमतेरित् दारिद्र्यादस्तोतुर्वा सकाशात् भिया भीत्या वेपते कम्पते । वृत्तं चक्रं न भूमौ वर्तमानं चक्रमिव । यस्मादेवं तस्मात् रथादधि उपरि स्थितं त्वा त्वां हे सदावृध सर्वदा वर्धमान हे मघवन् इन्द्र जरिता स्तोता पुरूवसुः अहमृषिः कुवित् बहु नु क्षिप्रं स्तोषत् स्तोष्यति स्तूयात् ॥ अत्र कुविच्छब्दयोगेऽपि आख्यातस्य बहुलग्रहणान्निघातः ॥

**एष ग्रावेव जरिता त इन्द्रेयर्ति वाचं बृहदाशुषाणः ।**

**प्र सव्येन मघवन्यंसि रायः प्र दक्षिणिद्धरिवो मा वि वेनः ॥ ४ ॥**

एषः । ग्रावाऽइव । जरिता । ते । इन्द्र । इयर्ति । वाचम् । बृहत् । आशुषाणः ।

प्र । सव्येन । मघऽवन् । यंसि । रायः । प्र । दक्षिणित् । हरिऽवः । मा । वि । वेनः ॥ ४ ॥

एषः जरिता गरिता स्तोता ग्रावेव अभिषवाश्मेव । स यथा रसं जनयति तद्वत् हे इन्द्र ते तुभ्यं वाचं स्तुतिम् इयर्ति प्रेरयतीत्यर्थः । बृहत् महत् प्रभूतं[1] फलम्[1] आशुषाणः आशु संभक्ता सन् हे मघवन् सव्येन हस्तेन रायः धनानि प्र यंसि प्रयच्छसि । दक्षिणित् दक्षिणेनापि प्र यंसीति शेषः । मा वि वेनः विगतकामं मा कार्षीः ॥

---

१. ख-च-झ-ण-न-भ-र-प्रभूतबलम् ।

वृषा॑ त्वा॒ वृष॑णं वर्धतु॒ द्यौर्वृषा॒ वृष॑भ्यां वहसे॒ हरि॑भ्याम् ।
स नो॒ वृषा॒ वृष॑रथः सुशिप्र॒ वृष॑क्रतो॒ वृषा॑ वज्रि॒न्भरे॑ धाः ॥ ५ ॥

वृषा॑ । त्वा॒ । वृष॑णम् । व॒र्ध॒तु॒ । द्यौः । वृषा॑ । वृष॑ऽभ्याम् । व॒ह॒से॒ । हरि॑ऽभ्याम् ।
सः । न॒ः । वृषा॑ । वृष॑ऽरथः । सु॒ऽशि॒प्र॒ । वृष॑क्रतो॒ इति॒ वृष॑ऽक्रतो । वृषा॑ । व॒ज्रि॒न् । भरे॑ । धा॒ः ॥५॥

हे इन्द्र ᵛत्वा त्वाम् ᵛवृषा वर्षित्री ᵛद्यौः द्योतयित्री स्तुतिः ॥ द्योततेर्दीव्यतेर्वा स्तुत्यर्थस्येदं रूपम् ॥ ᵛवृषणं कामानां वर्षकं त्वां ᵛवर्धतु वर्धयतु । ᵛवृषा त्वं ᵛवृषभ्यां सेक्तृभ्यां ᵛहरिभ्यां ᵛवहसे यज्ञं प्रत्युह्यसे । हे ᵛसुशिप्र शोभनहनो ᵛवृषक्रतो वर्षणकर्मन् हे ᵛवज्रिन् वज्रयुक्तेन्द्र ᵛसः त्वं ᵛवृषा ᵛवृषरथः [1]च[1] सन् ᵛनः अस्मान् ᵛभरे संग्रामे भरणवति यज्ञे वा ᵛधाः धारय ॥

यो रोहि॑तौ वा॒जिनौ॑ वा॒जिनी॑वान्त्रि॒भिः श॒तैः सच॑माना॒वदि॑ष्ट ।
यूने॒ सम॑स्मै क्षि॒तयो॑ नमन्तां श्रु॒तर॑थाय मरुतो दुवो॒या ॥ ६ ॥

यः । रोहि॑तौ । वा॒जिनौ॑ । वा॒जिनी॑ऽवान् । त्रि॒ऽभिः । श॒तैः । सच॑मानौ । अदि॑ष्ट ।
यूने॑ । सम् । अ॒स्मै॒ । क्षि॒तयः॑ । न॒म॒न्ता॒म् । श्रु॒तऽर॑थाय । म॒रु॒तः॒ । दु॒व॒ःऽया ॥ ६ ॥

इयं श्रुतरथस्य राज्ञो दानस्तुतिः । ᵛयः राजा ᵛवाजिनीवान् अन्नवान् श्रुतरथः ᵛरोहितौ रोहितवर्णौ ᵛवाजिनौ वेजनवन्तावश्वौ ᵛत्रिभिः ᵛशतैः गवां धनानां वा उक्तसंख्याभिः ᵛसचमानौ संगच्छमानौ ᵛअदिष्ट ॥ ददातेः[2] दिशतेर्वा लुङीदं रूपम् ॥ ᵛयूने सर्वत्र मिश्रयित्रे नित्यतरुणाय वा ᵛअस्मै ᵛश्रुतरथाय ᵛक्षितयः सर्वाः प्रजाः ᵛदुवोया ॥ तृतीयैकवचनस्य याजादेशः ॥ परिचर्यया ᵛसं ᵛनमन्तां प्रणता भवन्तु । सेवन्तामित्यर्थः । हे ᵛमरुतः इति इन्द्रसहायभूतानां मरुतां संबोधनम् ॥　॥ ७ ॥

'सं भानुना' इति पञ्चर्चं पञ्चमं सूक्तमत्रेरार्षं त्रैष्टुभमैन्द्रम् । 'सं भानुना पञ्चात्रिः' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

सं भा॒नुना॑ यतते॒ सूर्य॑स्या॒जुह्वा॑नो घृ॒तपृ॑ष्ठः॒ स्वञ्चाः॑ ।
तस्मा॒ अमृ॑ध्रा उ॒षसो॒ व्यु॑च्छा॒न्य इन्द्रा॑य सु॒नवा॒मेत्याह॑ ॥ १ ॥

सम् । भा॒नुना॑ । य॒त॒ते॒ । सूर्य॑स्य । आ॒ऽजुह्वा॑नः । घृ॒तऽपृ॑ष्ठः । सु॒ऽअञ्चाः॑ ।
तस्मै॑ । अमृ॑ध्राः । उ॒षसः॑ । वि । उ॒च्छा॒न् । यः । इन्द्रा॑य । सु॒नवा॑म । इति॑ । आह॑ ॥ १ ॥

---

१. ख-च-झ-ण-त-न-भ-र–वृषश्च । २. ख-च-झ-ण-न-भ-र-श– दातेः ।

सूर्यस्य भानुना तेजसा सह आजुह्वानः सर्वत्र हूयमानः ॥ कर्मणि कर्तृप्रत्ययः ॥ घृतपृष्ठः प्रदीप्तज्वालो घृतयुक्तपृष्ठप्रदेशो वा स्वञ्चाः स्वञ्चनोऽग्निः सं यतते सम्यक् प्रयत्नं करोति । उदयकाले ह्यग्नयः प्रज्वाल्यन्ते । तस्मात् कारणात् यः यजमानः इन्द्राय[1] सुनवामेत्याह ब्रूतेऽध्वर्युं प्रति तस्मै यजमानाय अमृध्राः अहिंसिताः उषसः व्युच्छान् व्युच्छन्तु । उदयकालेऽग्निः प्रज्वालितस्तस्मात् सोमयागं कुर्म इति यो ब्रूते तस्य सुदिनानि भवन्तीत्यर्थः ॥

समिद्धाग्निर्वनवत्स्तीर्णबर्हिर्युक्तग्रावा सुतसोमो जराते ।
ग्रावाणो यस्येषिरं वदन्त्ययदध्वर्युर्हविषाव सिन्धुम् ॥ २ ॥

समिद्धऽअग्निः । वनवत् । स्तीर्णऽबर्हिः । युक्तऽग्रावा । सुतऽसोमः । जराते ।
ग्रावाणः । यस्य । इषिरम् । वदन्ति । अयत् । अध्वर्युः । हविषा । अव । सिन्धुम् ॥ २ ॥

समिद्धाग्निः प्रदीप्ताग्निः स्तीर्णबर्हिः प्रस्तृतदर्भोऽयं यजमानः वनवत् संभजते । युक्तग्रावा नियुक्ताभिषवपाषाणः सुतसोमः अभिषुतसोमः जराते जरति स्तौति । यस्य अध्वर्योः ग्रावाणः अभिषवसाधनाः इषिरम् एषणीयं गमनशीलं वा शब्दं वदन्ति सः अध्वर्युर्हविषा सह अव अयत् सिन्धुम् । पन्नेजनीः[2] अवगच्छति ॥

वधूरियं पतिमिच्छन्त्येति य ईं वहाते महिषीमिषिराम् ।
आस्य श्रवस्याद्रथ आ च घोषात्पुरु सहस्रा परि वर्तयाते ॥ ३ ॥

वधूः । इयम् । पतिम् । इच्छन्ती । एति । यः । ईम् । वहाते । महिषीम् । इषिराम् ।
आ । अस्य । श्रवस्यात् । रथः । आ । च । घोषात् । पुरु । सहस्रा । परि । वर्तयाते ॥ ३ ॥

इयं वधूः इन्द्रस्य पत्नी पतिमिच्छन्ती स्वप्रियं यज्ञगमनाय प्रवृत्तमिच्छन्ती एति अनुगच्छति । यः इन्द्रः ईम् एनां महिषीं वहाते वहति इषिरां गमनवतीम् अस्य इन्द्रस्य रथः आ अर्वागस्मदभिमुखं श्रवस्यात् अन्नमिच्छति[3] । आ च घोषात् आघुष्यति । शब्दयति । पुरु अत्यधिकं सहस्रा सहस्राणि धनानि परि परितः वर्तयाते वर्तयति[4] । प्रापयति । श्रवस्यादा च घुष्यादिति वा ॥

न स राजा व्यथते यस्मिन्निन्द्रस्तीव्रं सोमं पिबति गोसखायम् ।
आ सत्वनैरजति हन्ति वृत्रं क्षेति क्षितीः सुभगो नाम पुष्यन् ॥ ४ ॥

न । सः । राजा । व्यथते । यस्मिन् । इन्द्रः । तीव्रम् । सोमम् । पिबति । गोऽसखायम् ।
आ । सत्वनैः । अजति । हन्ति । वृत्रम् । क्षेति । क्षितीः । सुऽभगः । नाम । पुष्यन् ॥ ४ ॥

---

१. ख-च-झ-ण-त-न-भ-र-‘ इन्द्राय ’ नास्ति । २. ग-घ-ज-प-फ-ब-अवनेजनीः । ३. ख-च-झ-र-अन्नमिच्छन्तु; न-अन्नमिच्छतु । ४. ख-च-झ-ण-न-भ-र-वर्तयन्ति प्रापयन्ति; ग-घ-ज-प्रापयति ।

ᵛस ᵛराजा ᵛन ᵛव्यथते व्यथितो न भवति । ᵛयस्मिन्[1] राजनि तदीये यज्ञे ᵛइन्द्रः ᵛतीव्रं मदजनकं ᵛसोमं ᵛपिबति ᵛगोसखायम् । विकारे प्रकृतिशब्दः । क्षीरादिमिश्रणवन्तम् ॥ स राजा ᵛसत्वनैः सत्वभिरनुचरैः ᵛआ सर्वतः ᵛअजति गच्छति । ᵛहन्ति च ᵛवृत्रं पापं वैरिणं वा । ᵛक्षेति गच्छति ᵛक्षितीः प्रजाः । अथवा क्षितीर्निवासान्निवसते । ᵛसुभगः शोभनसुखः ᵛनाम नामकं धनमिन्द्रस्य स्तोत्रं वा ᵛपुष्यन् पोषयन् ॥

पुष्यात्क्षेमे अभि योगे भवात्युभे वृतौ संयती सं जयाति ।
प्रियः सूर्ये प्रियो अग्ना भवाति य इन्द्राय सुतसोमो ददाशत् ॥ ५ ॥

पुष्यात् । क्षेमे । अभि । योगे । भवाति । उभे इति । वृतौ । संयती इति सम्ऽयती । सम् । जयाति ।
प्रियः । सूर्ये । प्रियः । अग्ना । भवाति । यः । इन्द्राय । सुतऽसोमः । ददाशत् ॥ ५ ॥

ᵛपुष्यात् पोषयेत् बन्ध्वादीन् । ᵛक्षेमे प्राप्तस्य धनस्य रक्षणे ᵛयोगे अलब्धस्य प्राप्तौ च ᵛअभि ᵛभवाति भवति । अभीत्यनर्थको धात्वर्थानुवादी वा । प्रभुर्भवतीत्यर्थः । तथा ᵛउभे ᵛवृतौ वर्तमाने ᵛसंयती नियते अहोरात्रे ᵛसं ᵛजयाति सम्यक् जयति । ते सुखकरे स्यातामित्यर्थः । किंच सः ᵛप्रियः भवति ᵛसूर्ये तथा ᵛअग्ना अग्नौ ᵛप्रियः भवति ᵛय ᵛइन्द्राय ᵛसुतसोमो ᵛददाशत् सोमं ददाति ॥ ॥ ८ ॥

'उरोष्टे' इति पञ्चर्चं षष्ठं सूक्तमत्रेरार्षमानुष्टुभमैन्द्रम् । 'उरोरानुष्टुभम्' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

उरोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
अधा नो विश्वचर्षणे द्युम्ना सुक्षत्र मंहय ॥ १ ॥

उरोः । ते । इन्द्र । राधसः । विऽभ्वी । रातिः । शतक्रतो इति शतऽक्रतो ।
अध । नः । विश्वऽचर्षणे । द्युम्ना । सुऽक्षत्र । मंहय ॥ १ ॥

हे ᵛइन्द्र ᵛशतक्रतो बहुकर्मन् ᵛते तव ᵛउरोः प्रभूतस्य ᵛराधसः धनस्य ᵛरातिः दानं ᵛविभ्वी महती । ᵛअध अतः कारणात् ᵛनः अस्मभ्यं हे ᵛविश्वचर्षणे सर्वस्य द्रष्टः ᵛसुक्षत्र शोभनधनेन्द्र । क्षत्रमिति धननाम । ᵛद्युम्ना द्युम्नानि धनानि ᵛमंहय प्रयच्छ ॥

यदीमिन्द्र श्रवाय्यमिषं शविष्ठ दधिषे ।
पप्रथे दीर्घश्रुत्तमं हिरण्यवर्ण दुष्टरम् ॥ २ ॥

यत् । ईम् । इन्द्र । श्रवाय्यम् । इषम् । शविष्ठ । दधिषे ।
पप्रथे । दीर्घश्रुत्ऽतमम् । हिरण्यऽवर्ण । दुस्तरम् ॥ २ ॥

---

1. ख-च-ण-तस्मिन् ।

हे इन्द्र शविष्ठ अतिशयेन बलवन् यत् इषम् अन्नं श्रवाय्यं श्रवणीयम् ईं सर्वतः दधिषे धारयसि ददासि वा ॥ इषशब्दो नपुंसकलिङ्गोऽप्यस्ति ॥ हे हिरण्यवर्ण इन्द्र तदन्नं पप्रथे प्रथते । कथम् । दीर्घश्रुत्तमम् अतिदूरश्रवणीयतमम् । सर्वत्र कीर्त्यमित्यर्थः । दुष्टरम् अनभिभाव्यमुक्तलक्षणं प्रथते ॥

शुष्मासो ये ते अद्रिवो मेहना केतसापः ।
उभा देवावभिष्टये दिवश्च ग्मश्च राजथः ॥ ३ ॥

शुष्मासः । ये । ते । अद्रिऽवः । मेहना । केतऽसापः ।
उभा । देवौ । अभिष्टये । दिवः । च । ग्मः । च । राजथः ॥ ३ ॥

हे अद्रिवः वज्रवन्निन्द्र ते त्वदीयाः ये शुष्मासः बलभूता मरुतः सन्ति । कीदृशास्ते । मेहना मंहनीयाः केतसापः प्रज्ञापकं कर्मान्तरिक्षं वा स्पृशन्तः । उभा[1] उभौ देवौ त्वं च मरुत्समूहश्च[2] इत्युभौ युवां दिवश्च द्युलोकात् ग्मश्च भूमेः सकाशात् अभिष्टये अभितो गमनाय राजथः ईशाथे ॥

उतो नो अस्य कस्य चिद्दक्षस्य तव वृत्रहन् ।
अस्मभ्यं नृम्णमा भरास्मभ्यं नृमणस्यसे ॥ ४ ॥

उतो इति । नः । अस्य । कस्य । चित् । दक्षस्य । तव । वृत्रऽहन् ।
अस्मभ्यम् । नृम्णम् । आ । भर । अस्मभ्यम् । नृऽमनस्यसे ॥ ४ ॥

उतो अपि च हे वृत्रहन् इन्द्र नः अस्मभ्यं कस्य चित् अनिर्देश्यस्य दक्षस्य प्रवृद्धस्य दातुर्वा अस्य तव स्वभूतेभ्यः अस्मभ्यम् । पुनःश्रुतिरादरार्था । नृम्णं नृमणं धनम् आ भर आहर । हे इन्द्र यतस्त्वम् अस्मभ्यं नृमणस्यसे धनमिच्छसि ॥

नू त आभिरभिष्टिभिस्तव शर्मञ्छतक्रतो ।
इन्द्र स्याम सुगोपाः शूर स्याम सुगोपाः ॥ ५ ॥

नु । ते । आभिः । अभिष्टिऽभिः । तव । शर्मन् । शतक्रतो इति शतऽक्रतो ।
इन्द्र । स्याम । सुऽगोपाः । शूर । स्याम । सुऽगोपाः ॥ ५ ॥

---

१. ख-च-झ-ण-न-भ-र–'उभा' नास्ति । २. श–मरुद्गणश्च ।

हे शतक्रतो इन्द्र ते तव आभिः अभिष्टिभिः अभिगमनैः नु शीघ्रं समृद्धा भवेमेति शेषः। हे इन्द्र तव शर्मन् शर्मणि सुखे सति सुगोपाः स्याम भवेम। हे शूर तव शर्मणि सुगोपाः शोभनरक्षणाः स्याम भवेम। पुनरुक्तिरादरार्था ॥ ॥ ९ ॥

' यदिन्द्र चित्र ' इति पञ्चर्चं सप्तमं सूक्तमत्रेरार्षमैन्द्रम् । अन्त्या पङ्क्तिः शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः। ' यदिन्द्र पङ्क्त्यन्तम् ' इत्यनुक्रमणिका॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने आद्यस्तृचोऽच्छावाकस्य वैकल्पिकः स्तोत्रियः। सूत्रितं च—' यदिन्द्र चित्र मेहना यस्ते साधिष्ठोऽवसे ' ( आश्व. श्रौ. ७. ८ ) इति ॥

**यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ।**

**राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ १ ॥**

यत् । इन्द्र । चित्र । मेहना । अस्ति । त्वाऽदातम् । अद्रिऽवः ।

राधः । तत् । नः । विदद्वसो इति विदत्ऽवसो । उभयाहस्ति । आ । भर ॥ १ ॥

हे[1] चित्र चायनीय हे अद्रिवः वज्रवन् इन्द्र[2] यत् मेहना मंहनीयं त्वादातं त्वया दातव्यं राधः धनम् अस्ति तत् धनं हे विदद्वसो लब्धधनेन्द्र नः अस्मभ्यम् उभयाहस्ति उभाभ्यां हस्ताभ्याम् आ भर आहर । अत्र 'यदिन्द्र चित्र चायनीय मंहनीयं धनमस्ति' ( निरु.४.४ ) इत्यादिनिरुक्तं द्रष्टव्यम् ॥

**यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर ।**

**विद्याम तस्य ते वयमकूपारस्य दावने ॥ २ ॥**

यत् । मन्यसे । वरेण्यम् । इन्द्र । द्युक्षम् । तत् । आ । भर ।

विद्याम । तस्य । ते । वयम् । अकूपारस्य । दावने ॥ २ ॥

हे इन्द्र यत् द्युक्षम् अन्नं वरेण्यं वरणीयं मन्यसे तत् द्युक्षम् आ[3] भर अस्मभ्यम्[3]। ते तव संबन्धिनः वयं तस्य तादृशस्योक्तलक्षणस्य अकूपारस्य। अकुत्सितः पारोऽन्तो यस्य तादृशस्य अन्नस्य[4] दावने दाने विद्याम स्याम ॥

वाजपेये अतिरिक्तोक्थे[5] ' यत्ते दित्सु ' इत्येषा । सूत्रितं च—' यत्ते दित्सु प्रराध्यं त्वामिच्छवसस्पते ' ( आश्व. श्रौ. ९. ९. ) इति ॥

---

१. र—हे इन्द्र हे । २. त-श—' इन्द्र ' नास्ति । ३. ग-घ-च-ज-ण—अस्मभ्यमाभर; श—अस्मभ्यमाभर आहर । ४. ग-घ-ज-प-फ-ब—द्युम्नस्य । ५. त—अतिरिक्तोक्थ्ये ।

यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत् ।
तेन दृळ्हा चिदद्रिव आ वाजं दर्षि सातये ॥ ३ ॥

यत् । ते । दित्सु । प्रऽराध्यम् । मनः । अस्ति । श्रुतम् । बृहत् ।
तेन । दृळ्हा । चित् । अद्रिऽवः । आ । वाजम् । दर्षि । सातये ॥ ३ ॥

हे इन्द्र ᵛते तव ᵛयत् ᵛदित्सु दानेच्छु ᵛप्रराध्यं प्रकर्षेण स्तुत्यं ᵛश्रुतं विश्रुतं ᵛबृहत् महत् ᵛमनः ᵛअस्ति ᵛतेन मनसा हे ᵛअद्रिवः वज्रवन्निन्द्र ᵛदृळ्हा ᵛचित् दृढमपि ᵛवाजम् अन्नम् ᵛआ ᵛदर्षि आदरयसि ᵛसातये अस्मत्संभजनाय लाभाय वा ॥

मंहिष्ठं वो मघोनां राजानं चर्षणीनाम् ।
इन्द्रमुप प्रशस्तये पूर्वीभिर्जुजुषे गिरः ॥ ४ ॥

मंहिष्ठम् । वः । मघोनाम् । राजानम् । चर्षणीनाम् ।
इन्द्रम् । उप । प्रऽशस्तये । पूर्वीभिः । जुजुषे । गिरः ॥ ४ ॥

ᵛमघोनां हविर्लक्षणधनवतां ᵛवः युष्माकं ᵛमंहिष्ठम् अतिशयेन पूज्यं ᵛचर्षणीनां मनुष्याणां ᵛराजानम् ᵛइन्द्रम् ᵛउप उपेत्य ᵛप्रशस्तये प्रशंसितुं ᵛपूर्वीभिः पुरातनीभिर्वाग्भिः ᵛगिरः स्तोतारः ᵛजुजुषे सेवन्ते ॥

अस्मा इत्काव्यं वच उक्थमिन्द्राय शंस्यम् ।
तस्मा उ ब्रह्मवाहसे गिरो वर्धन्त्यत्रयो गिरः शुम्भन्त्यत्रयः ॥ ५ ॥

अस्मै । इत् । काव्यम् । वचः । उक्थम् । इन्द्राय । शंस्यम् ।
तस्मै । ऊँ इति । ब्रह्मऽवाहसे । गिरः । वर्धन्ति । अत्रयः । गिरः । शुम्भन्ति । अत्रयः ॥५॥

ᵛअस्मा ᵛइत् अस्मा एव ᵛइन्द्राय ᵛकाव्यं कवेः स्तोतुः संबन्धि । यद्वा । ' कु शब्दे ' । शब्दनीयं ᵛवचः वाग्रूपम् ᵛउक्थं शस्त्रं ᵛशंस्यं शंसनीयम् । यस्मादेवं तस्मात् ᵛतस्मा ᵛउ तस्मा इन्द्रायैव ᵛब्रह्मवाहसे परिवृढस्य स्तोत्रस्य वाहकाय ᵛगिरः स्तुतीः ᵛअत्रयः[1] अत्रिगोत्राः ᵛवर्धन्ति वर्धयन्ति । ᵛअत्रयः ᵛगिरः ᵛशुम्भन्ति दीपयन्ति । पुनरुक्तिरादरार्था ॥ ॥ १० ॥

' आ याह्यद्रिभिः ' इति नवर्चमष्टमं सूक्तम् । अत्रेयमनुक्रमणिका—' आ याहि नव त्र्युष्णिगाद्यन्त्यानुष्टुम्मध्ये च सा सौरी तदादीतिहासः स्तुतिकर्मत्वादत्रिर्देवतैव ' इति । कृत्स्नस्य[2] ' ऋषि-

१. ख-च-झ-ण-न-भ-र-श-' अत्रयः ' नास्ति । २. त—कृत्स्नसूक्तस्य ।

श्चान्यस्मात्' (अनु. १२.२) इति परिभाषया अत्रिर्ऋषिः। आद्यास्तिस्र उष्णिहः पञ्चमीनवम्यावनुष्टुभौ शिष्टाश्चतस्रस्त्रिष्टुभः। अत्रेः स्तूयमानत्वात् षष्ठ्याद्याः अत्रिदेवताकाः अभ्यार्षेयाश्च पञ्चमी सूर्यदेवत्या शिष्टा ऐन्द्र्यः। दशरात्रे तृतीयेऽहनि प्रउगशस्त्रे आद्यस्तृच ऐन्द्रः पञ्चमः। सूत्रितं च—'आ याह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभिः' (आश्व. श्रौ. ७. १०) इति। महाव्रतेऽप्यौष्णिहतृचाशीतावयं तृचः॥

आ याह्यद्रिभिः सुतं सोमं सोमपते पिब।
वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥ १ ॥

आ। याहि। अद्रिऽभिः। सुतम्। सोमम्। सोमऽपते। पिब।
वृषन्। इन्द्र। वृषऽभिः। वृत्रहन्ऽतम ॥ १ ॥

हे इन्द्र आ याहि अस्मद्यज्ञमागच्छ। आगत्य च हे सोमपते सोमस्य स्वामिन्निन्द्र अद्रिभिः ग्रावभिः सुतं अभिषुतं सोमं पिब। हे वृषन् फलस्य वर्षयितः वृत्रहन्तम अतिशयेन शत्रूणां हन्तृतम वृषभिः वर्षकैर्मरुद्भिः सहा याहि पिब च॥

वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः।
वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥ २ ॥

वृषा। ग्रावा। वृषा। मदः। वृषा। सोमः। अयम्। सुतः।
वृषन्। इन्द्र। वृषऽभिः। वृत्रहन्ऽतम ॥ २ ॥

ग्रावा अभिषवसाधनः पाषाणः वृषा वर्षकः सोमरसस्य फलस्य वा। मदः सोमपानेन जनितः वृषा वर्षकः। अयं सुतः अभिषुतः सोमः वृषा। तं[1] सोमं वृषभिः सह पिब॥

वृषा त्वा वृषणं हुवे वज्रिञ्चित्राभिरूतिभिः।
वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥ ३ ॥

वृषा। त्वा। वृषणम्। हुवे। वज्रिन्। चित्राभिः। ऊतिऽभिः।
वृषन्। इन्द्र। वृषऽभिः। वृत्रहन्ऽतम ॥ ३ ॥

हे वज्रिन् वज्रवन्[2] इन्द्र वृषा सोमरसस्य सेक्ताहं वृषणं त्वां[3] हुवे आह्वयामि। किमर्थम्। चित्राभिः चायनीयाभिः ऊतिभिः रक्षाभिर्निमित्तभूताभिः। शिष्टं गतम्॥

'ऋजीषी वज्री' इत्येषा ब्राह्मणाच्छंसिनः शस्त्रयाज्या[4]। 'ऋजीषी वज्री वृषभस्तुराषाळिति याज्या' (आश्व. श्रौ. ५. १६) इति हि सूत्रितम्॥

---

१. ग-घ-ज-प-फ-ब—हे वृत्रहन्तम वृषन्निन्द्र तम्। २. ख-ग-घ-च-ज-झ-ण-न-भ-र—'वज्रवन्' नास्ति। ३. ग-घ-ज-प-फ-ब—त्वा त्वाम्। ४. र-श—शस्त्रे याज्या।

ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।
युक्त्वा हरिभ्यामुप यासदर्वाङ्माध्यंदिने सवने मत्सदिन्द्रः ॥ ४ ॥

ऋजीषी । वज्री । वृषभः । तुराषाट् । शुष्मी । राजा । वृत्रऽहा । सोमऽपावा ।
युक्त्वा । हरिऽभ्याम् । उप । यासत् । अर्वाङ् । माध्यंदिने । सवने । मत्सत् । इन्द्रः ॥ ४ ॥

ऋजीषी । सवनद्वयेऽभिषुतस्य गतसारस्य[1] सोमस्य[1] तृतीयसवने आप्यायाभिषुतः[2] योऽस्ति स ऋजीषः सोमः । सोऽस्यास्तीत्यृजीषी । वज्री वज्रवान् वृषभः वर्षिता तुराषाट् तुराणां त्वरमाणानां शत्रूणां सोढा शुष्मी बलवान् राजा ईश्वरः सर्वस्य वृत्रहा वृत्रस्य हन्ता सोमपावा सोमरसस्य पाता एवं महानुभाव इन्द्रः हरिभ्यां युक्त्वा रथं योजयित्वा उप यासत् उपगच्छतु । अर्वाङ् अस्मदभिमुखमागच्छतु । आगत्य[3] च[3] माध्यंदिने सवने मत्सत् माद्यतु सोमेन इन्द्रः ॥

यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः ।
अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥ ५ ॥

यत् । त्वा । सूर्य । स्वःऽभानुः । तमसा । अविध्यत् । आसुरः ।
अक्षेत्रऽवित् । यथा । मुग्धः । भुवनानि । अदीधयुः ॥ ५ ॥

इदमादिचतुर्भिर्मन्त्रैः अत्रीणां कर्म कीर्त्यते । हे सूर्य प्रेरक देव त्वा त्वां यत् यदा आसुरः असुरस्य प्राणापहर्तुरसुर्या वा पुत्रः स्वर्भानुः स्वर्भानुसंज्ञकः तमसा मायानिर्मितेन अविध्यत् आवृणोदित्यर्थः । तदा भुवनानि सर्वाणि अदीधयुः दृश्यन्ते[4] । यथा तत्रत्यः सर्वो जनः अक्षेत्रवित् स्वस्वस्थानमजानन् मुग्धः मूढो भवति तथा ॥ ॥ ११ ॥

स्वर्भानोरध यदिन्द्र माया अवो दिवो वर्तमाना अवाहन् ।
गूळ्हं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाविन्ददत्रिः ॥ ६ ॥

स्वःऽभानोः । अध । यत् । इन्द्र । मायाः । अवः । दिवः । वर्तमानाः । अवऽअहन् ।
गूळ्हम् । सूर्यम् । तमसा । अपऽव्रतेन । तुरीयेण । ब्रह्मणा । अविन्दत् । अत्रिः ॥ ६ ॥

अध अथ जगन्मौढ्यानन्तरं स्वर्भानोः असुरस्य यत् याः मायाः सन्ति । कीदृश्यस्ताः । दिवः द्योतमानादादित्यात् अवः अवस्तात् वर्तमानाः । तदुपरितिरोधानासामर्थ्यादिति[5] भावः ।

---

१. ख-च-ण–गतरसस्य सोमस्य; झ-भ–गतस्य सोमस्य; त–गतसारस्य सोमस्य रसस्य । २. न–आप्यायमानोऽभिषुतः । ३. ग-घ-ज-श–' आगत्य च ' नास्ति । ४. ग-घ-ज-प-फ-ब– न दृश्यन्ते । ५. ग-घ-ज-झ-न-भ-र–°तिरोधानसामर्थ्यात्; प-फ-ब–°तिरोधानादसामर्थ्यात् ।

हे ˇइन्द्र ताः सर्वाः ˇअवाहन् अवहंसि । अथात्रेरेव परोक्षवादः । ˇतमसा अन्धकारेण ˇअपव्रतेन अपगतकर्मणा ˇगूळ्हं ˇसूर्यम् । अन्धकारस्यावरणरूपत्वादपव्रतत्वम् । तथाविधं ˇतुरीयेण ˇब्रह्मणा ' ग्राव्णो ब्रह्मा ' इत्यनेन ˇअत्रिः ˇअविन्दत् लब्धवान् । आवरणापगमोपायं निरावरणं शुद्धं[1] वा[1] सूर्यमिति । पूर्वमन्त्रापेक्षया[2] अस्य तुरीयत्वम् । एकैकं मायांशमेकैकेन मन्त्रेणापनोद्य चतुर्थेन मन्त्रेण निलीनं तमोऽप्यनुददित्यर्थः ॥

**मा मामिमं तव सन्तमत्र इरस्या द्रुग्धो भियसा नि गारीत् ।**
**त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥ ७ ॥**

मा । माम् । इमम् । तव । सन्तम् । अत्रे । इरस्या । द्रुग्धः । भियसा । नि । गारीत् ।
त्वम् । मित्रः । असि । सत्यऽराधाः । तौ । मा । इह । अवतम् । वरुणः । च । राजा ॥७॥

इदं सूर्यवाक्यम् । हे ˇअत्रे ˇमामिमम्[3] ईदृगवस्थं मां ˇतव[4] ˇसन्तं तव[4] स्वभूतम् ˇइरस्या अन्नेच्छया ˇद्रुग्धः द्रोग्धासुरः ˇभियसा भयजनकेन तमसा ˇमा ˇनि ˇगारीत् मा गिरतु । किंच हे मित्र ˇत्वं ˇमित्रः ˇअसि । प्रमीतेः सकाशात् त्राता भवसि । ˇसत्यराधाः सत्यधनश्च । ˇतौ ˇराजा ˇवरुणश्च त्वं च तौ युवां ˇमा माम् ˇइहावतं रक्षतम् । यद्वा । अत्रिरेव मित्र उच्यते । स[5] च[5] वरुणश्च युवाम् ॥

**ग्राव्णो ब्रह्मा युयुजानः सपर्यन् कीरिणा देवान्नमसोपशिक्षन् ।**
**अत्रिः सूर्यस्य दिवि चक्षुराधात्स्वर्भानोरप माया अघुक्षत् ॥ ८ ॥**

ग्राव्णः । ब्रह्मा । युयुजानः । सपर्यन् । कीरिणा । देवान् । नमसा । उपऽशिक्षन् ।
अत्रिः । सूर्यस्य । दिवि । चक्षुः । आ । अधात् । स्वःऽभानोः । अप । मायाः । अघुक्षत् ॥८॥

ˇब्रह्मा ब्राह्मणः ˇअत्रिः[6] ˇग्राव्णः अभिषवसाधनानि[7] ˇयुयुजानः युञ्जन् । इन्द्रार्थं सोममभिषुण्वन्नित्यर्थः। तथा ˇकीरिणा । कीर्यते विक्षिप्यते इति कीरि स्तोत्रम् । तेन ˇदेवान् ˇसपर्यन् पूजयन्[8] किंच ˇनमसा अन्नेन हविर्लक्षणेन नमस्कारेण वा ˇउपशिक्षन् । शिक्षतिर्दानार्थोऽत्र प्रसाधने वर्तते । प्रसाधयन् एवमुक्तैः[8] साधनैः ˇसूर्यस्य सर्वप्रेरकस्य ˇचक्षुः सर्वस्य व्यापकं[9] मण्डलं ˇदिवि अन्तरिक्षे ˇआधात् । निस्तमस्कं कृतवानित्यर्थः । तदेव स्पष्टयति । ˇस्वर्भानोः एतन्नामकस्यासुरस्य ˇमायाः । स्वाश्रयमव्यामोहयन्ती[10] परांस्तु[11] तथा[11] कुर्वती मायेत्युच्यते । तादृशीर्मायाः । यत्तुरीयेण ब्रह्मणेत्युक्तम् । तदेतदुक्तं तुरीयं ब्रह्म । तेनात्रिसहाय इन्द्रः ˇअप ˇअघुक्षत् अपजुगोप न्यवारयदित्यर्थः । अथवा तृतीयपाद एवं व्याख्येयः । सूर्यस्य दिवि पूर्वमावृते प्रकाशे तदपनोद्य[12] स्वकीयं चक्षुराधात् ।

---

१. ख-च-ण-भ—शुद्धं यत्वा; झ—शुभं वा । २. ख-च-झ-ण-भ-र—मन्त्रापेक्षया । ३. ग-घ-ज—मा मामिमं मानवम् । ४. ख-च-झ-ण-त-न-भ-र-श—' तव ' नास्ति । ५. श—' स च ' नास्ति । ६. ग-घ-ज—अत्रिर्मामिहावतमित्युपशिक्षन् । ७. ग-घ-ज—अभिषवसाधनान् । ८. ग-घ-ज-प-फ-ब—पूजयन्नमसा नमोक्तैः । ९. ग-घ-ज-प-फ-ब-र—व्यापकम् । १०. ख-च-झ-ण-त-न-भ-र—स्वाश्रयमव्यामोहन्ती; न—स्वाश्रयममोहयन्ती; श—स्वयमप्यामोहयन्ती । ११. झ-त-न-म-व-श—परांस्तथा । १२. ख-च-झ-ण-त-न-भ-र-श—तदपोद्य ।

निरावरणं[1] तेजःसंस्त्यायं दृष्टवानित्यर्थः। स्वर्भानुमायया सूर्यस्यावृतिर्हारिद्रविके समाम्नाता— 'स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्तस्मै देवाः प्रायश्चित्तमैच्छन्[2] तस्य यत्प्रथमं तमोऽपाघ्नन् सा कृष्णाविरभवत् यद् द्वितीयं सा फाल्गुनी यत्तृतीयं सा वलक्षी यदध्यस्थादपाकृन्तन्' इत्यादि ॥

यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ।

अत्रयस्तमन्वविन्दन्नह्यन्ये अशक्नुवन् ॥ ९ ॥

यम् । वै । सूर्यम् । स्वःऽभानुः । तमसा । अविध्यत् । आसुरः ।

अत्रयः । तम् । अनु । अविन्दन् । नहि । अन्ये । अशक्नुवन् ॥ ९ ॥

अत्रिकृतं सामर्थ्यमनुवदति 'यं 'वै 'सूर्यम् इति । निगदव्याख्यैषा[3] । 'अत्रयस्तं सूर्यम् 'अन्वविन्दन् इन्द्रार्थं सोमयागदेवतास्तुतिनमस्कारैरनुक्रमेणेषदीषत् तमोऽवरुध्य[4] लब्धवन्त इत्यर्थः । 'अन्ये[5] 'नहि 'अशक्नुवन् न लब्धवन्तः खलु[5] ॥ ॥ १२ ॥

'को नु वाम्' इति विंशत्यृचं नवमं सूक्तं भौमस्यात्रेरार्षम्। षोडशीसप्तदश्यावतिजगत्यौ विंश्येकपदा विराट् शिष्टाः सप्तदश त्रिष्टुभः । विश्वे देवा देवता । तथा चानुक्रान्तं—'को नु विंशतिर्वैश्वदेवं वै तत् षोळश्याद्यतिजगत्यावन्त्यैकपदा' इति। विनियोगो लैङ्गिकः ॥

को नु वां मित्रावरुणावृतायन्दिवो वा महः पार्थिवस्य वा दे ।

ऋतस्य वा सदसि त्रासीथां नो यज्ञायते वा पशुषो न वाजान् ॥ १ ॥

कः । नु । वाम् । मित्रावरुणौ । ऋतऽयन् । दिवः । वा । महः । पार्थिवस्य । वा । दे ।

ऋतस्य । वा । सदसि । त्रासीथाम् । नः । यज्ञऽयते । वा । पशुऽसः । न । वाजान् ॥ १ ॥

हे 'मित्रावरुणौ देवौ[6] 'वां युवां[6] 'को 'नु कः खलु यजमानः 'ऋतायन् यज्ञमिच्छन् शक्नुयादिति[7] शेषः । तस्मात् कृपयैव 'दिवः सदसि द्युलोकसंबन्धिनि स्थाने[8] 'महः महतः 'पार्थिवस्य सदसि[9] । 'ऋतस्य उत्पादकस्यान्तरिक्षस्य 'सदसि[10] । तद्धेतुत्वात्ताच्छब्द्यम्। त्रिषु स्थानेषु 'नः अस्मान् 'त्रासीथां रक्षतम्। वाशब्दश्चार्थे। किंच 'यज्ञायते यज्ञमिच्छते[11] 'दे[12] 'वा हविर्दात्रे च[12]

---

१. ख-च-ण-श–निवारणम् । २. ख-च-झ-ण-त-भ-र-श–प्रायश्चित्ति° । ३. ख-च-ण–निगदितं वा व्याख्यैषा; ग-घ-ज–यं सूर्यमासुरः स्वर्भानुस्तमसाविध्यदावृणोत् वै खलु; झ-भ-र–निगदितं व्याख्यैषा; त–निगदितव्याख्यैषा; न–निगदित वा इत्येषा । ४. ग-घ-ज–तमो विरुध्य । ५. ख-च-झ-ण-न-भ-र-श–'अन्ये... खलु' नास्ति । ६. ख-च-ण–देवानां युवाभ्यां ददातुम्; झ-न-भ-र-श–देवौ वां युवाभ्यां दे दातुम् (झ-र–ददातुं)। ७. ख-च-झ-ण-भ–शक्नुवानिति; र–शक्नुवन्निति । ८. ग-घ-ज-प-फ-ब–नास्थे च । ९. ग-घ-ज-प-फ-ब–सदसि च । १०. ग-घ-ज-प-फ-ब–'सदसि' नास्ति । ११. ख-च-झ-ण-न-भ-र–'यज्ञमिच्छते' नास्ति । १२. ख-च-झ-ण-न-भ-र-श–'दे...च' नास्ति ।

मह्यं पशुपो न वाजान् पशुषु सीदतो वाजानन्नानि क्षीरदध्यादीनीव । तानि यथा प्रयच्छथः[1] तद्वद्दतमिति । यद्वा । नशब्दश्चार्थे । पशुपः पशून्वाजांश्च दत्तमित्यर्थः ॥

ते नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतो जुषन्त ।
नमोभिर्वा ये दधते सुवृक्तिं स्तोमं रुद्राय मीळ्हुषे सजोषाः ॥ २ ॥

ते । नः । मित्रः । वरुणः । अर्यमा । आयुः । इन्द्रः । ऋभुक्षाः । मरुतः । जुषन्त ।
नमःऽभिः । वा । ये । दधते । सुऽवृक्तिम् । स्तोमम् । रुद्राय । मीळ्हुषे । सऽजोषाः ॥ २ ॥

ते मित्रादयो देवाः नः अस्माकं सुवृक्तिं स्तोमं शोभनपापादिवर्जनवत्स्तोत्रं नमोभिर्वा[2] हविर्भिश्च[2] जुषन्त सेवन्ताम् । ये दधते धारयन्त्युक्तलक्षणं स्तोत्रम् । देवा द्विविधाः स्तोत्रभाजो हविर्भाजश्च । अत्र स्तोत्रभाज उच्यन्ते । आयुः सततगतिर्वायुरुच्यते । अथ मरुत एव वियुत्य विशेष्यन्ते । रुद्राय मीळ्हुषे ॥ तृतीयार्थे चतुर्थी ॥ रुद्रेण[3] सह सजोषाः सजोषसः सह प्रीयमाणाः । तेषां पुत्रत्वादिति भावः । केचन रुद्राय सजोषा इत्येतत्[4] मित्रादिसर्वदेवताविशेषणमिति कथयन्ति ॥

आ वां येष्ठाश्विना हुवध्यै वातस्य पत्मन्रथ्यस्य पुष्टौ ।
उत वा दिवो असुराय मन्म प्रान्धांसीव यज्यवे भरध्वम् ॥ ३ ॥

आ । वाम् । येष्ठा । अश्विना । हुवध्यै । वातस्य । पत्मन् । रथ्यस्य । पुष्टौ ।
उत । वा । दिवः । असुराय । मन्म । प्र । अन्धांसिऽइव । यज्यवे । भरध्वम् ॥ ३ ॥

अनयाश्विनौ रुद्रश्चोच्यन्ते । हे अश्विना अश्विनौ येष्ठा कामानां यन्तृतमौ वां युवां वातस्य पत्मन् । धर्मसाम्याद्धर्मिग्रहणम् । वायुसमानगतेरश्वस्य गमने प्राप्तौ रथ्यस्य रथस्य पुष्टौ च निमित्ते सति हुवध्यै[5] हुवे आह्वयामि आह्वातुं प्रभवामि[6] । अथवा वायुवद्युवयोः शीघ्रगमनसाधनरथस्य[7] पोषे च निमित्ते सति । उत वा किंचेत्यर्थः । दिवः द्योतमानाय ॥ चतुर्थ्यर्थे षष्ठी ॥ असुराय प्राणापहर्त्रे रुद्राय । यद्वा । द्युलोकसंबन्धिनेऽसुराय प्राणदात्रे सूर्याय वायवे वा यज्यवे यागसाधकाय मन्म मननीयं स्तोत्रं प्र भरध्वं संपादयत हे ऋत्विजः । अन्धांसीव अन्नानि हविर्लक्षणानि[8] हवींषि स्तोत्रं[9] चेत्यर्थः ॥

---

१. प-फ-ब–प्रयच्छतम् । २. ख-च-झ-ण-न-भ-र-श–नमोभिर्हविर्भिः । ३. ग-घ-ज-प-फ-ब–सेक्तेन रुद्रेण । ४. ख-च-ण–इत्यस्मिन्; झ-त-र–इत्येतस्मिन् । ५. ग-घ-ज-प-फ-ब–आहुवध्यै । ६. ख-च-झ-त-न-भ-र–प्रभवामि वा । ७, ख-च–शीघ्रगमने तत्साधनरथस्य; झ-त-न-भ-र-श–शीघ्रगमनतत्साधनरथस्य । ८. ख-ग-घ-च-ज-झ-ण-न-प-फ-ब-भ–'हविर्लक्षणानि' नास्ति । ९. ख-च-ण–'स्तोत्रं' नास्ति ।

प्र सक्षणो दिव्यः कण्वहोता त्रितो दिवः सजोषा वातो अग्निः ।
पूषा भगः प्रभृथे विश्वभोजा आजिं न जग्मुराश्वश्वतमाः ॥ ४ ॥

प्र । सक्षणः । दिव्यः । कण्वऽहोता । त्रितः । दिवः । सऽजोषाः । वातः । अग्निः ।
पूषा । भगः । प्रऽभृथे । विश्वऽभोजाः । आजिम् । न । जग्मुः । आश्वश्वऽतमाः ॥ ४ ॥

अत्र लिङ्गोक्तदेवताः[1] । प्र जग्मुरिति संबन्धः । ᵛसक्षणः यज्ञं सेवमानः शत्रूणां सोढा वा ᵛदिव्यः दिवि भवः ᵛकण्वहोता । कण्वा ऋषयो मेधाविनो वा होतार आह्वातारो यस्य स तथोक्तः । ᵛत्रितः त्रिषु क्षित्यादिस्थानेषु तायमानः[2] ᵛदिवः सूर्येण सह ᵛसजोषाः समानगतिः समानप्रीतिर्वा ᵛवातः उक्तलक्षणकः[3] वायुः ᵛअग्निः ᵛपूषा पोषक एतन्नामा ᵛभगः च ᵛप्रभृथे प्रभरणवत्यस्मिन्यज्ञे उक्ताः सर्वेदेवाः ᵛविश्वभोजाः विश्वरक्षकाः कृत्स्नात्तारो वा ᵛआश्वश्वतमाः प्रकृष्टगमनाश्ववतां श्रेष्ठाः सन्तः ᵛआजिं ᵛन संग्राममिव ᵛप्र ᵛजग्मुः प्रगच्छन्ति ॥

प्र वो रयिं युक्ताश्वं भरध्वं राय एषेऽवसे दधीत धीः ।
सुशेव एवैरौशिजस्य होता ये व एवा मरुतस्तुराणाम् ॥ ५ ॥

प्र । वः । रयिम् । युक्तऽअश्वम् । भरध्वम् । रायः । एषे । अवसे । दधीत । धीः ।
सुऽशेवः । एवैः । औशिजस्य । होता । ये । वः । एवाः । मरुतः । तुराणाम् ॥ ५ ॥

हे मरुतः ᵛवः यूयं ᵛरयिं धनं ᵛयुक्ताश्वम् अश्वसहितमश्वयोग्यं पुत्रं वा ᵛप्र ᵛभरध्वं संपादयत । ᵛरायः धनानि गवाश्वादिलक्षणानि ᵛएषे प्राप्तुम् ᵛअवसे । अव इत्यन्ननाम । अन्नाय प्राप्तानां धनानां रक्षणाय वा ᵛधीः स्तोता ᵛदधीत धारयति स्तुतिम् । स च ᵛऔशिजस्य कक्षीवतः ᵛहोता अग्निः[4] ᵛएवैः गन्तव्यैः कामैर्गमनसाधनैरश्वैर्वा ᵛसुशेवः । शेवमिति सुखनाम । सुसुखो भवतु । हे ᵛमरुतः ᵛतुराणां त्वरमाणानां ᵛवः युष्माकं ᵛये ᵛएवाः कामा अश्वा वा सन्ति तैरिति ॥ ॥ १३ ॥

'प्र वो वायुम्' इति षष्ठी वायव्ये पशौ हविषो याज्या । 'प्र वो वायुं रथयुजं कृणुध्वमुत त्वामदिते महि' ( आश्व. श्रौ. ३. ८ ) इति सूत्रितम् ॥

प्र वो वायुं रथयुजं कृणुध्वं प्र देवं विप्रं पनितारमर्कैः ।
इषुध्यव ऋतसापः पुरंधीर्वस्वीर्नो अत्र पत्नीरा धिये धुः ॥ ६ ॥

प्र । वः । वायुम् । रथऽयुजम् । कृणुध्वम् । प्र । देवम् । विप्रम् । पनितारम् । अर्कैः ।
इषुध्यवः । ऋतऽसापः । पुरम्ऽधीः । वस्वीः । नः । अत्र । पत्नीः । आ । धिये । धुरिति धुः ॥ ६ ॥

---

१. च-झ-ण-त-न-भ-र—लिङ्गोक्ता देवताः । २. ख-च-झ-ण-भ—नीयमानः । ३. ख-च-झ-ण-न—उक्तगुणकः । ४. ख-च-झ-ण-त-न-भ-र—'अग्निः' नास्ति ।

हे मदीया ऋत्विजः वः यूयं वायुं[1] देवं[1] रथयुजं यज्ञगमनाय रथसंबद्धं[2] कृणुध्वं कुरुध्वम् । प्र देवं द्योतमानं विप्रं विशेषेण कामानां पूरकं विप्रवत्पूज्यं वा पनितारम् ॥ कर्मणि कर्तृप्रत्ययः ॥ स्तुत्यमित्यर्थः । फलप्रदातारं वा अर्कैः अर्चनसाधनैर्मन्त्रैः प्र कृणुध्वं स्तुत । किंच इषुध्यवः गन्त्र्यः ऋतसापः यज्ञस्पृशः पुरंधीः पुरंध्यः स्त्रीरूपाः[3] रूपवत्यो वा वस्वीः प्रशंस्याः[4] पत्नीः देवपत्न्यः अत्र अस्मिन् यज्ञे नः अस्मदीयाय[5] धिये[5] कर्मणे तन्निष्पत्तये आ ग्मुः आगतवत्यः ॥

उप व एषे वन्द्येभिः शूषैः प्र यह्वी दिवश्चितयद्भिरर्कैः ।

उषासानक्ता विदुषीव विश्वमा हा वहतो मर्त्याय यज्ञम् ॥ ७ ॥

उप । वः । एषे । वन्द्येभिः । शूषैः । प्र । यह्वी इति । दिवः । चितयत्ऽभिः । अर्कैः ।

उषसानक्ता । विदुषी इवेति विदुषीऽइव । विश्वम् । आ । ह । वहतः । मर्त्याय । यज्ञम् ॥७॥

हे उषासानक्ता अहोरात्राभिमानिदेवते यह्वी महत्यौ वन्द्येभिः वन्दनार्हैरितरैर्देवैः सह दिवः अन्तरिक्षादविशेषेण सर्वप्रदेशात् वः युष्मभ्यम् उप प्र एषे उपप्रापयामि हविः[6] । ईषिः प्रापणकर्मा स्यादुपप्राभिः समन्वितः । शूषैः सुखकरैः चितयद्भिः ज्ञापयद्भिः अर्कैः मन्त्रैः सहोपप्रापयामि । हे उक्तदेवते विश्वं सर्वं कर्तव्यजातं विदुषीइव जानत्याविव मर्त्याय यजमानाय यज्ञम् आ वहतः अभिमुखं प्रापयतः । हेति पूरणः । यद्वा । शूषैरित्यादीनि तृतीयाबहुवचनान्तानि वन्द्येभिरित्यस्य विशेषणानीति केचिदाहुः ॥

अभि वो अर्चे पोष्यावतो नॄन्वास्तोष्पतिं त्वष्टारं रराणः ।

धन्या सजोषा धिषणा नमोभिर्वनस्पतीँरोषधी राय एषे ॥ ८ ॥

अभि । वः । अर्चे । पोष्याऽवतः । नॄन् । वास्तोः । पतिम् । त्वष्टारम् । रराणः ।

धन्या । सऽजोषाः । धिषणा । नमःऽभिः । वनस्पतीन् । ओषधीः । रायः । एषे ॥ ८॥

अहं पोष्यावतः बहुपोष्यजनयुक्तान् नॄन्[7] कर्मनेतॄन्[7] वः युष्मान् अभि अर्चे अभिपूजयामि स्तौमीत्यर्थः । के पुनस्ते यूयम् । उच्यते । वास्तोष्पतिं त्वष्टारं[8] रराणः स्तोत्रादिभिः क्रीडन् हविर्ददद्वा अहम् । धन्या धनकरी सजोषाः इतरदेवैः सह गच्छन्ती प्रीणयन्ती वा धिषणा । वाङ्नामैतत् । वाग्देवता ॥ एता द्वितीयार्थे प्रथमाः ॥ उक्तलक्षणां वाणीं वनस्पतीन् ओषधीः च नमोभिः सह अर्चे इति संबन्धः । किमर्थम् । राय एषे धनानि प्राप्तुम् ॥

---

१. ग-घ-ज–वायुदेवम् । २. ख-ग-घ-च-ज-झ-ण-श–रथसंबन्धम् । ३. ख-च-झ-ण-भ–स्त्रियाः । ४. त–प्रशस्याः । ५. ख-च-ण-भ–अस्मदीये धिये; ग-घ-ज–अस्मदीयया धिये; झ-न-र-श–अस्मदीयधीये । ६. ख-च-झ-ण-त-न-भ-र-श–अर्कं हविः । ७. ख-च-झ-ण-न-भ-र–' नॄन् कर्मनेतॄन ' नास्ति । ८. झ-न-भ–त्वष्टारं च ।

तुजे नस्तने पर्वताः सन्तु स्वैतवो ये वसवो न वीराः ।
पनित आप्त्यो यजतः सदा नो वर्धान्नः शंसं नर्यो अभिष्टौ ॥ ९ ॥

तुजे । नः । तने । पर्वताः । सन्तु । स्वऽएतवः । ये । वसवः । न । वीराः ।
पनितः । आप्त्यः । यजतः । सदा । नः । वर्धात् । नः । शंसम् । नर्यः । अभिष्टौ ॥ ९ ॥

पर्वताः पर्ववन्तः पूरणवन्तो वा मेघाः तने विस्तृते तुजे दाने । यद्वा । तनेति पुत्रनाम ॥ षष्ठ्यर्थे चतुर्थी ॥ पुत्रस्य दान इत्यर्थः । अथवा नः तुजे पुत्रे तने तत्पुत्रे च स्वैतवः शोभनगमनाः सन्तु भवन्तु । कीदृशास्ते । ये वसवः जगतो वासयितारः वीराः न वीरा इव । किंच पनितः स्तुतः आप्त्यः आप्तव्यः सर्वैः यजतः यजनीय आदित्यः सदा सर्वदा नः शंसम् अस्माकं स्तुतिं नर्यः नरेभ्यो हितो देवः अभिष्टौ अभित एषणेऽभिगमने वा सति वर्धात् वर्धयेत् ॥

वृष्णो अस्तोषि भूम्यस्य गर्भं त्रितो नपातमपां सुवृक्ति ।
गृणीते अग्निरेतरी न शूषैः शोचिष्केशो नि रिणाति वना ॥ १० ॥

वृष्णः । अस्तोषि । भूम्यस्य । गर्भम् । त्रितः । नपातम् । अपाम् । सुऽवृक्ति ।
गृणीते । अग्निः । एतरि । न । शूषैः । शोचिःऽकेशः । नि । रिणाति । वना ॥ १० ॥

भूम्यस्य । भूमिः[1] अन्तरिक्षम् । तदर्हस्य । तादृशस्य वृष्णः वर्षकस्य पर्जन्यस्य । अथवा भूम्यो भूमेरेवार्हः तदुचितवृष्टिप्रदानात् । तादृशस्य मेघस्य गर्भं गर्भस्थानीयम् अपां नपातं रक्षकं वैद्युतमग्निं सुवृक्ति । स्तोत्रकर्मैतत् । शोभनपापादिवर्जनवता स्तोत्रेण अस्तोषि स्तुतवानहम् । सः त्रितः तीर्णतमः त्रिषु स्थानेष्वन्येषु त्रित्वापन्नेषु तायमानः अग्निः[2] एतरि गन्तरि मयि शूषैः सुखकरैः रश्मिभिः न गृणीते न गरणं कुरुते न क्रुध्यतीत्यर्थः । किंतु शोचिष्केशः प्रदीप्तरश्मिः सन् वना वनानि नि रिणाति हिनस्ति दहतीत्यर्थः ॥ ॥ १४ ॥

कथा महे रुद्रियाय ब्रवाम कद्राये चिकितुषे भगाय ।
आप ओषधीरुत नोऽवन्तु द्यौर्वना गिरयो वृक्षकेशाः ॥ ११ ॥

कथा । महे । रुद्रियाय । ब्रवाम । कत् । राये । चिकितुषे । भगाय ।
आपः । ओषधीः । उत । नः । अवन्तु । द्यौः । वना । गिरयः । वृक्षऽकेशाः ॥ ११ ॥

वयमत्रयः कथा केन प्रकारेण महे महते रुद्रियाय रुद्रपुत्राय मरुद्गणाय ब्रवाम स्तुतीः । कत् किं च स्तोत्रं राये धनलाभाय चिकितुषे सर्वं जानते भगाय एतन्नामकाय देवाय ब्रवाम ।

---

१. ख-च-झ-ण-त-न-भ-र—भूमम् । २. ख-च-झ-ण-त-न-भ-र—अग्निः किंच भूमोऽग्निः ।

ˇउत अपि च ˇआपः अब्देवताः ˇओषधीः ओषधयः ˇद्यौः द्युदेवता ˇवना वनानि ˇगिरयो ˇवृक्ष-केशाः । वृक्षा एव केशस्थानीया येषां[1] ते । एता उक्ता देवताः ˇनः अस्मान् ˇअवन्तु रक्षन्तु[2] ॥

शृणोतु न ऊर्जां पतिर्गिरः स नभस्तरीयाँ इषिरः परिज्मा ।
शृण्वन्त्वापः पुरो न शुभ्राः परि स्रुचो बबृहाणस्याद्रेः ॥ १२ ॥

शृणोतु । नः । ऊर्जाम् । पतिः । गिरः । सः । नभः । तरीयान् । इषिरः । परिऽज्मा ।
शृण्वन्तु । आपः । पुरः । न । शुभ्राः । परि । स्रुचः । बबृहाणस्य । अद्रेः ॥ १२ ॥

ˇनः अस्माकं ˇगिरः स्तुतीः ˇश्रृणोतु । कः । ˇऊर्जां बलानां ˇपतिः वायुः । अथवा ऊर्जासन्नानां पतिः । प्राणोपाधिकस्य वायोः कृत्स्नात्तृत्वं प्रसिद्धम् । श्रुतिश्च[3] भवति—‘ प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् ’ ( मनु. ५. २८ ) इति । ˇस ˇनभः नभसि चारी ˇतरीयान् तरितव्यः ˇइषिरः गमनशीलः ˇपरिज्मा परितो गन्ता । किंच ˇआपः ˇश्रृण्वन्तु गिरः । कीदृश्यस्ताः[4] । ˇपुरो ˇन पुराणीव ˇशुभ्राः दीप्ताः ˇबबृहाणस्य वर्धमानस्य ˇअद्रेः मेघस्य वा पर्वतस्य[5] वा ˇपरि परितः ˇस्रुचः सरणशीलाः ॥

विदा चिन्नु महान्तो ये व एवा ब्रवाम दस्मा वार्यं दधानाः ।
वयश्चन सुभ्व आव यन्ति क्षुभा मर्तमनुयतं वधस्नैः ॥ १३ ॥

विद । चित् । नु । महान्तः । ये । वः । एवाः । ब्रवाम । दस्माः । वार्यम् । दधानाः ।
वयः । चन । सुऽभ्वः । आ । अव । यन्ति । क्षुभा । मर्तम् । अनुऽयतम् । वधऽस्नैः ॥ १३ ॥

हे ˇमहान्तः मरुतः ˇनु क्षिप्रं यूयं ˇविद जानीथ स्तोत्रम् । हे ˇदस्माः दर्शनीयाः ˇवः युष्मान् ˇये ˇएवाः गन्तारो युष्मान् भजमानाः ˇवार्यं वरणीयं हविः ˇदधानाः ददाना धारयन्तो वा वयं ˇब्रवाम स्तुतिम् । यद्वा । ये वो यूयमित्यर्थः । ये यूयमेवाः अस्मद्यज्ञमभिगन्तारस्ते विद । चिदिति पूरणः । ˇवयश्चन आगन्तारश्चैते मरुतः ˇसुभ्वः सुष्ठु भवन्तः प्रवृद्धाः ˇआ अस्मदभिमुखम् ˇअव ˇयन्ति गच्छन्ति । किं कुर्वन्तः । ˇक्षुभा क्षोभकेण सहितं ˇमर्तं मरणधर्माणं वैरिणम् ˇअनु-यतम् अभिगतं ˇवधस्नैः आयुधैः परिहरन्तः[6] अव यन्ति[6] ॥

आ दैव्यानि पार्थिवानि जन्मापश्चाच्छा सुमखाय वोचम् ।
वर्धन्तां द्यावो गिरश्चन्द्राग्रा उदा वर्धन्तामभिषाता अर्णाः ॥ १४ ॥

आ । दैव्यानि । पार्थिवानि । जन्म । अपः । च । अच्छ । सुऽमखाय । वोचम् ।
वर्धन्ताम् । द्यावः । गिरः । चन्द्रऽअग्राः । उदा । वर्धन्ताम् । अभिऽसाताः । अर्णाः ॥ १४ ॥

---

१. ख-च-ण– येषुं ।　२. ख-च-झ-ण-न-भ-र–‘ रक्षन्तु ’ नास्ति ।　३. झ-त-भ-र–स्तुतिश्च ।
४. ख-च-ण–कीदृशस्ताः;　झ-त-न-भ-र–कीदृशास्ताः ।　५. ख-च-ण–पार्थिवस्य ।　६. झ-त-र-श–परिहरन्नावयन्ति;　भ–परिहरन्नाभिवयन्ति ।

ᵛदैव्यानि देवसंबन्धीनि ᵛपार्थिवानि पृथिवीसंबन्धीनि च ᵛजन्म जन्मानि ᵛअपश्च अपसा ᵛअच्छ अभिप्राप्तुं ᵛसुमखाय शोभनयज्ञाय मरुद्गणाय ᵛवोचं[1] ब्रवीमि । ᵛगिरः स्तुतयः ᵛवर्धन्ताम् । ᵛद्यावः द्योतमानाः स्वप्रतिपाद्यार्थप्रकाशिन्यः ᵛचन्द्राग्राः । आह्लादनं हिरण्यं वाग्रे यासां ताः । तादृश्यः सत्यो वर्धन्ताम् । ᵛअर्णाः नद्यश्च ᵛअभिषाताः मरुद्भिः संभक्ताः ᵛउदा उदकेन ᵛवर्धन्तां समृद्धा भवन्तु ॥

पदेपदे मे जरिमा नि धायि वरूत्री वा शक्रा या पायुभिश्च ।

सिषक्तु माता मही रसा नः स्मत्सूरिभिर्ऋजुहस्तं ऋजुवनिः ॥ १५ ॥

पदेऽपदे । मे । जरिमा । नि । धायि । वरूत्री । वा । शक्रा । या । पायुऽभिः । च ।

सिसक्तु । माता । मही । रसा । नः । स्मत् । सूरिऽभिः । ऋजुऽहस्ता । ऋजुऽवनिः ॥ १५ ॥

ᵛजरिमा स्तुतिः ᵛमे मदीया ᵛपदेपदे तदा तदा भूमौ ᵛनि ᵛधायि निधीयते स्थाप्यते क्रियत इत्यर्थः । ᵛया ᵛच ᵛशक्रा शक्ता सती ᵛपायुभिः रक्षणैः ᵛवरूत्री अस्मदुपद्रववारयित्री भवति । वाशब्दश्चार्थे । ᵛमाता सर्वस्य निर्मात्री ᵛमही महती पूज्या ᵛरसा सारभूता भूमिः ᵛसिषक्तु सेवतां ᵛनः अस्माकं स्तुतिम् । अथवा स्तुता नः अस्मान् सिषक्तु । स्मच्छब्दः प्रशस्तवचनः । प्रशस्तैः ᵛसूरिभिः । मेधाविभिः स्तोतृभिर्निमित्तैः । तेषां परिचर्यया प्रीतेत्यर्थः । ᵛऋजुहस्ता अस्मदनुकूलहस्ता ᵛऋजुवनिः कल्याणदाना भवतु ॥ ॥ १५ ॥

कथा दाशेम नमसा सुदानूनेवया मरुतो अच्छोक्तौ

प्रश्रवसो मरुतो अच्छोक्तौ ।

मा नोऽहिर्बुध्न्यो रिषे धादस्माकं भूदुपमातिवनिः ॥ १६ ॥

कथा । दाशेम । नमसा । सुऽदानून् । एवऽया । मरुतः ।

अच्छऽउक्तौ । प्रऽश्रवसः । मरुतः । अच्छऽउक्तौ ।

मा । नः । अहिः । बुध्न्यः । रिषे । धात् । अस्माकम् । भूत् । उपमातिऽवनिः ॥ १६ ॥

वयं ᵛकथा केन प्रकारेण ᵛदाशेम परिचरेम ᵛनमसा स्तोत्रेणान्नेन वा ᵛसुदानून् शोभनदानान् ᵛमरुतः । ᵛएवया एवं क्रियमाणप्रकारेण ᵛअच्छोक्तौ आभिमुख्येन वचने निमित्ते सति तान् मरुतः कथं परिचरेम । तेषां दुराराध्यत्वादिति[2] भावः । कथम् । ᵛप्रश्रवसः प्रकृष्टान्ना भवन्ति । ᵛअच्छोक्तौ । अभिगन्त्र्युक्तिः स्तुतिर्यस्य तादृशे मयि । यद्वा । प्रश्रवसः प्रकृष्टान्नस्य मम[3] अच्छोक्तौ स्तोत्रनिमित्ते

---

१. त–अवोचम् । २. ख-च-ञ-ण-न-भ-र–दुराराधत्वादिति; ग-घ-ज–दुराराध्यमिति । ३. ख-च-ञ-ण-त-न-भ-र–ममापि ।

सति ᵛमरुतः कथा केन प्रकारेण दाशेम । पुनरुक्तिरादरार्था । ᵛअहिर्बुध्न्यः देवः ᵛनः अस्मान् ᵛरिषे हिंसकाय ᵛमा ᵛधात् मा स्थापयतु । स देवः ᵛअस्माकं ᵛभूत् भवतु ᵛउपमातिवनिः शत्रूणां हन्ता ॥

इति चिन्नु प्रजायै पशुमत्यै देवासो वनते मर्त्यो व आ
देवासो वनते मर्त्यो वः ।
अत्रा शिवां तन्वो धासिमस्या जरां चिन्मे निर्ऋतिर्जग्रसीत ॥ १७ ॥

इति । चित् । नु । प्रऽजायै । पशुऽमत्यै । देवासः । वनते ।
मर्त्यः । वः । आ । देवासः । वनते । मर्त्यः । वः ।
अत्र । शिवाम् । तन्वः । धासिम् । अस्याः । जराम् । चित् । मे । निःऽऋतिः । जग्रसीत ॥ १७ ॥

हे ᵛदेवासः देवाः ᵛवः युष्मान् ᵛइति ᵛचित् इत्थमेव ᵛनु क्षिप्रं ᵛप्रजायै ᵛपशुमत्यै पशुसहितायापत्याय ᵛवनते भजते ᵛमर्त्यः मनुष्यो यजमानः । ᵛआ ᵛदेवासः इति पुनरुक्तिरादरार्था । ᵛअत्र अस्मिन् यज्ञे ᵛशिवां ᵛधासिम् अन्नं ᵛमे मम ᵛअस्याः ᵛतन्वः देवैरनुगृहीतस्य पुत्रस्य करोतु ᵛनिर्ऋतिः देवता । ᵛजरां ᵛचित् जरां च ᵛजग्रसीत ग्रसतु ॥

तां वो देवाः सुमतिमूर्जयन्तीमिषमश्याम वसवः शसा गोः ।
सा नः सुदानुर्मृळयन्ती देवी प्रति द्रवन्ती सुविताय गम्याः ॥ १८ ॥

ताम् । वः । देवाः । सुऽमतिम् । ऊर्जयन्तीम् । इषम् । अश्याम । वसवः । शसा । गोः ।
सा । नः । सुऽदानुः । मृळयन्ती । देवी । प्रति । द्रवन्ती । सुविताय । गम्याः ॥ १८ ॥

हे ᵛदेवाः हे ᵛवसवः वासयितारः ᵛवः युष्माकं स्वभूतां ᵛतां प्रसिद्धां ᵛसुमतिं शोभनमननसाधनाम्[1] । अन्नेन मतिवृद्धिः 'अन्नमयं हि सोम्य मनः' ( छा. उ. ६. ५. ४ ) इत्यादिषु प्रसिद्धा । ᵛऊर्जयन्तीं बलकरीम् ᵛइषम् एषणसाधनमन्नं क्षीरदध्यादिलक्षणं ᵛशसा स्तुत्या ᵛगोः सकाशात् ᵛअश्याम प्राप्नुयाम । ᵛसा ᵛदेवी ᵛनः अस्मान् ᵛसुविताय सुखाय ᵛप्रति ᵛगम्याः प्रतिगम्यात्[2] अभिगच्छेत् । सा इड्देवता[3] विशेष्यते । ᵛसुदानुः शोभनदाना ᵛमृळयन्ती सुखयन्ती ᵛद्रवन्ती अस्मदभिमुखं गच्छन्ती ॥

---

१. ख-च-ण-भ—शोभनसाधनाम्; ग-घ-ज—शोभनमननसाधनभूताम् । २. ग-घ-ज-श—गम्यात । ३. न-श—देवता ।

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु ।
उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ॥ १९ ॥

अभि । नः । इळा । यूथस्य । माता । स्मत् । नदीभिः । उर्वशी । वा । गृणातु ।
उर्वशी । वा । बृहत्ऽदिवा । गृणाना । अभिऽऊर्ण्वाना । प्रऽभृथस्य । आयोः ॥ १९ ॥

'अभि 'गृणातु 'नः अस्मान् 'इळा भूमिः 'यूथस्य गोसंघस्य 'माता निर्मात्री । यद्वा इळा गोरूपधरा मनोः पुत्रीत्याहुः । यद्वा यूथस्य मरुद्गणस्य निर्मात्रीळा माध्यमिकी वाक् । अथवा[१] 'उर्वशी माध्यमिकी वाक्[१] । 'नदीभिः गङ्गादिभिः सह गृणातु । स्मच्छब्दः प्रशस्तवचन इत्युक्तम् । प्राशस्त्यं गृणातु । 'वा अथवा 'उर्वशी 'बृहद्दिवा प्रभूतदीप्तिः 'गृणाना शब्दयन्त्यस्मदीयं कर्म प्रशंसन्ती 'अभ्यूर्ण्वाना आच्छादयन्ती । कम् । 'आयोः आयुं मनुष्यं यजमानम् । केन । 'प्रभृथस्य तेजसो वोदकस्य वा दानेन । 'प्रभृथस्य तेजसो वोदकस्य' ( निरु. ११. ४९ ) इति निरुक्तम् । अथवा प्रभृथस्य प्रभरणवत आयोर्यज्ञमभ्यूर्ण्वानाच्छादयन्ती ॥

सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥ २० ॥

सिसक्तु । नः । ऊर्जव्यस्य । पुष्टेः ॥ २० ॥

'ऊर्जव्यस्य एतन्नामकस्य राज्ञः 'पुष्टेः पोषकस्य संबन्धिनः 'नः अस्मान् 'सिषक्तु सेवताम् । सामर्थ्याद्देवसंघ इति गम्यते । अथवोर्वशी मरुद्गणो वा गृह्यते प्रकृतत्वादिति ॥ ॥ १६ ॥

'प्र शंतमा' इत्यष्टादशर्चं दशमं सूक्तं भौमस्यात्रेरार्षं त्रैष्टुभम् । पूर्वसूक्ते 'वै तत्' इत्युक्तत्वात् इदमपि वैश्वदेवम् । 'तमु ष्टुहि' इत्येकादशी रुद्रदेवत्या । सप्तदश्येकपदा 'एतयोरुपान्त्यैकपदा' इत्यनुक्रमिष्यमाणत्वात् । अत्रानुक्रमणिका—'प्र शंतमा द्व्यूनैकादशी रौद्री' इति । विनियोगो लैङ्गिकः ॥

प्र शंतमा वरुणं दीधिती गीर्मित्रं भगमदितिं नूनमश्याः ।
पृषद्योनिः पञ्चहोता शृणोत्वतूर्तपन्था असुरो मयोभुः ॥ १ ॥

प्र । शम्ऽतमा । वरुणम् । दीधिती । गीः । मित्रम् । भगम् । अदितिम् । नूनम् । अश्याः ।
पृषत्ऽयोनिः । पञ्चऽहोता । शृणोतु । अतूर्तऽपन्थाः । असुरः । मयःऽभुः ॥ १ ॥

'शंतमा[२] अत्यन्तं सुखकरी 'गीः स्तुतिरूपा वाक् 'वरुणं 'मित्रं 'भगमदितिं च 'दीधिती दीधित्या कर्मणा हविष्प्रक्षेपणात्मकेन सह 'नूनम् अवितथं 'प्र 'अश्याः प्राप्नोतु[३] । किंच 'पृषद्योनिः

१. ख-च-झ-ण-त-न-भ-र–'अथवा...वाक्' नास्ति । २. ग-घ-ज-न-श–प्र शंतमा । ३. ख-च-ण-त-न-भ-र–प्राश्नोतु ।

पृषद्वर्णोऽन्तरिक्षस्थः ᵛपञ्चहोता पञ्चविधस्य प्राणापानादिहोमस्य साधको वायुः । यद्वा । पञ्चहोतेति वायोर्नाम । 'वायुः पञ्चहोता स प्राणः' इति हि श्रुतेः । स च ᵛअतूर्तपन्थाः अहिंसितगतिः ᵛअसुरः प्राणस्य दाता ᵛमयोभुः सुखस्यास्पदभूतः । एवमुक्तलक्षणो वायुः ᵛशृणोतु स्तोत्रमिति ॥

प्रति॑ मे॒ स्तोम॒मदि॑तिर्जगृभ्यात्सू॒नुं न मा॒ता हृद्यं॑ सु॒शेव॑म् ।
ब्रह्म॑ प्रि॒यं दे॒वहि॑तं॒ यदस्त्य॒हं मि॒त्रे वरु॑णे॒ यन्म॑यो॒भु ॥ २ ॥

प्रति॑ । मे॒ । स्तोम॑म् । अदि॑तिः । ज॒गृ॒भ्या॒त् । सू॒नुम् । न । मा॒ता । हृद्य॑म् । सु॒ऽशेव॑म् ।
ब्रह्म॑ । प्रि॒यम् । दे॒वऽहि॑तम् । यत् । अस्ति॑ । अ॒हम् । मि॒त्रे । वरु॑णे । यत् । म॒यः॒ऽभु ॥ २ ॥

ᵛमे मदीयं ᵛस्तोमं स्तोत्रम् ᵛअदितिः देवता ᵛप्रति ᵛजगृभ्यात् प्रतिगृह्णातु । ᵛसूनुं ᵛन ᵛमाता स्वतनुजं जननीव । सा यथा प्रतिगृह्यालिङ्ग्य परितुष्यति तद्वदित्यर्थः । कीदृशं तम् । ᵛहृद्यं हृदयंगमं ᵛसुशेवं शोभनसुखकरम् । एतद्द्वयं साधारणम् । किंच ᵛब्रह्म मन्त्रजातं ᵛप्रियं प्रियकरं ᵛदेवहितं देवैः प्राप्यं ᵛयदस्ति यद्ब्रह्म ᵛमयोभु सुखसाधनं तत् ᵛअहं ᵛमित्रे ᵛवरुणे च प्रापयामीति शेषः । यद्वा । मित्रे वरुणे च अहोरात्राभिमानिदेवयोर्यदुक्तलक्षणं ब्रह्म परिवृढं यज्ञादिरूपं कर्मास्ति तदहं धारयामीति ॥

'उदीरय' इत्येषैकादशिने सावित्रे पशौ वपायाज्या । सूत्रितं च— 'उदीरय कवितमं कवीनां भगं धियं वाजयन्तः पुरंधिमिति द्वे' (आश्व. श्रौ. ३. ७) इति ॥

उदी॑रय क॒वित॑मं क॒वीना॑मुन॒त्तैन॑म॒भि मध्वा॑ घृ॒तेन॑ ।
स नो॒ वसू॑नि॒ प्रय॑ता हि॒तानि॑ च॒न्द्राणि॑ दे॒वः स॑वि॒ता सु॑वाति ॥ ३ ॥

उत् । ई॒र॒य॒ । क॒विऽत॑मम् । क॒वीना॑म् । उ॒नत्त॑ । ए॒न॒म् । अ॒भि । मध्वा॑ । घृ॒तेन॑ ।
सः । नः॒ । वसू॑नि । प्रऽय॑ता । हि॒तानि॑ । च॒न्द्राणि॑ । दे॒वः । स॒वि॒ता । सु॒वा॒ति॒ ॥ ३ ॥

अनया सविता च स्तूयते । हे ऋत्विजः ᵛकवीनां ᵛकवितमं क्रान्तदर्शिनम्[1] अमुं पुरोवर्तिनमग्निं सवितारं वा ᵛउदीरय ऊर्ध्वं प्रापयत हर्षयतेत्यर्थः । ᵛएनं देवं ᵛमध्वा मधुरेण सोमरसेन ᵛघृतेन च ᵛअभि ᵛउनत्त अभिषिञ्चत । तर्पयतेत्यर्थः । ᵛसः[2] ᵛसविता ᵛदेवः ᵛनः अस्मभ्यं ᵛवसूनि निवासयोग्यानि गवादिधनानि ᵛप्रयता प्रयतानि ᵛहितानि ᵛचन्द्राणि आह्लादकानि हिरण्यानि ᵛसुवाति प्रयच्छत्वित्यर्थः ॥

समि॑न्द्र णो॒ मन॑सा नेषि॒ गोभि॒ः सं सू॒रिभि॑र्हरिवः॒ सं स्व॒स्ति ।
सं ब्रह्म॑णा दे॒वहि॑तं॒ यदस्ति॒ सं दे॒वानां॑ सुम॒त्या य॒ज्ञिया॑नाम् ॥ ४ ॥

सम् । इ॒न्द्र॒ । नः॒ । मन॑सा । ने॒षि॒ । गोभिः॑ । सम् । सू॒रिऽभिः॑ । ह॒रि॒ऽवः॒ । सम् । स्व॒स्ति ।
सम् । ब्रह्म॑णा । दे॒वऽहि॑तम् । यत् । अस्ति॑ । सम् । दे॒वाना॑म् । सु॒ऽम॒त्या । य॒ज्ञिया॑नाम् ॥ ४ ॥

---

१. ख-च-ण-न-भ-र–क्रान्तदर्शिनां क्रान्तदर्शिनम् । २. ख-च-झ-ण-न-र–'सः' नास्ति ।

हे इन्द्र नः अस्मान् मनसा प्रकृष्टेन चेतसा गोभिः सह सं[1] नेषि नयसि । अस्मान्[2] गाः प्रापयसीत्यर्थः । एवं सर्वत्र । हे हरिवः हरिभ्यां तद्वन् इन्द्र सूरिभिः मेधाविभिः पुत्रैर्ऋत्विग्भिर्वा सं नेषि । तथा स्वस्ति स्वस्तिभिः[3] क्षेमैः सं नेषि । ब्रह्मणा प्रभूतेनान्नेन सं नेषि । यत् अन्नं देवहितम् अस्ति तेन । किंच यज्ञियानां यज्ञार्हाणां देवानां सुमत्या अनुग्रहबुद्ध्या सं नेषि ॥

देवो भगः सविता रायो अंश इन्द्रो वृत्रस्य संजितो धनानाम् ।
ऋभुक्षा वाज उत वा पुरंधिरवन्तु नो अमृतासस्तुरासः ॥ ५ ॥

देवः । भगः । सविता । रायः । अंशः । इन्द्रः । वृत्रस्य । सम्ऽजितः । धनानाम् ।
ऋभुक्षाः । वाजः । उत । वा । पुरम्ऽधिः । अवन्तु । नः । अमृतासः । तुरासः ॥ ५ ॥

अत्र लिङ्गोक्ता देवताः । भगः देवः सविता च रायः धनस्य स्वामी अंशः त्वष्टा वृत्रस्य हन्ता इन्द्रः च एते देवाः धनानां संजितः सम्यग्जेतारः । ऋभुक्षाः ऋभुः वाजः च उत वा अपि च पुरंधिः बहुधीः विभ्वोच्यते । एते च अमृतासः अमृता अमरणधर्माणो भगादिदेवाः तुरासः अस्मद्यज्ञं प्रति त्वरमाणाः सन्तः नः अस्मान् अवन्तु रक्षन्तु ॥ ॥ १७ ॥

मरुत्वतो अप्रतीतस्य जिष्णोरजूर्यतः प्र ब्रवामा कृतानि ।
न ते पूर्वे मघवन्नापरासो न वीर्यं नूतनः कश्चनाप ॥ ६ ॥

मरुत्वतः । अप्रतिऽइतस्य । जिष्णोः । अजूर्यतः । प्र । ब्रवाम । कृतानि ।
न । ते । पूर्वे । मघऽवन् । न । अपरासः । न । वीर्यम् । नूतनः । कः । चन । आप ॥ ६ ॥

वयं यजमानाः मरुत्वतः मरुद्भिस्तद्वत इन्द्रस्य कृतानि कर्माणि प्र ब्रवाम प्रख्यापयाम । कीदृशस्य तस्य । अप्रतीतस्य अप्रतिगतस्य युद्धेऽपलायमानस्य । न केवलं तावन्मात्रम् । जिष्णोः जयनशीलस्य अजूर्यतः अजीर्यमाणस्य[4] । सर्वदा यून इत्यर्थः । अथ प्रत्यक्षेणोच्यते । हे मघवन् इन्द्र ते तव वीर्यं पराक्रमं पूर्वे पुरातनाः पुरुषाः न आपुः । नापरासः अपरेऽपि नापुः । किं बहुना । नूतनः कश्चन[5] आश्चर्यभूतः[5] यः कोऽपि वीर्यं न आप न प्राप्नोति ॥

उप स्तुहि प्रथमं रत्नधेयं बृहस्पतिं सनितारं धनानाम् ।
यः शंसते स्तुवते शंभविष्ठः पुरूवसुरागमज्जोहुवानम् ॥ ७ ॥

उप । स्तुहि । प्रथमम् । रत्नऽधेयम् । बृहस्पतिम् । सनितारम् । धनानाम् ।
यः । शंसते । स्तुवते । शम्ऽभविष्ठः । पुरुऽवसुः । आऽअगमत् । जोहुवानम् ॥ ७ ॥

---

१. ख-च-झ-ण-न-भ-र-श–'सं' नास्ति । २. ख-च-झ-ण-त-न-भ-र-श–अस्मभ्यम् । ३. ख-ग-घ-च-ज-झ-ण-न-भ-र–'स्वस्तिभिः' नास्ति । ४. ख-च-ण–अजूर्यमाणस्य । ५. ख-च-झ-ण-न-भ-र–कश्च आर्यभूतः ।

हे अन्तरात्मन् त्वं प्रथमं मुख्यं प्रकृष्टतममित्यर्थः । रत्नधेयं रमणीयधनदातारं[1] धनानां हविर्लक्षणानां सनितारं संभक्तारम् । अथवा रत्नशब्देन मणिमुक्तादयो गृहीता इह धनशब्देन गवादयः । गवादिदातारं बृहस्पतिं बृहतो मन्त्रस्य पतिं स्वामिनं देवम् उप स्तुहि । यः देवः शंसते शस्त्रैः स्तुवते सामभिर्यजमानाय शंभविष्ठः सुखस्य भावयितृतमो भवति । यश्च जोहुवानम् आह्वयन्तं यजमानं पुरूवसुः प्रभूतधनः सन् आगमत् आगच्छति तमुप स्तुहि ॥

तवोतिभिः सचमाना अरिष्टा बृहस्पते मघवानः सुवीराः ।
ये अश्वदा उत वा सन्ति गोदा ये वस्त्रदाः सुभगास्तेषु रायः ॥ ८ ॥

तव । ऊतिऽभिः । सचमानाः । अरिष्टाः । बृहस्पते । मघऽवानः । सुऽवीराः ।
ये । अश्वऽदाः । उत । वा । सन्ति । गोऽदाः । ये । वस्त्रऽदाः । सुऽभगाः । तेषु । रायः ॥ ८ ॥

हे बृहस्पते तवोतिभिः रक्षाभिः[2] सचमानाः संगच्छमानाः अरिष्टाः अहिंसिताः मघवानः धनवन्तः सुवीराः शोभनपुत्राश्च भवन्ति । ये त्वदनुगृहीताः अश्वदाः बहूनामश्वानां दातारः सन्ति । उत वा अथवा गोदाः सन्ति । ये च वस्त्रदाः सुभगाः शोभनधनाः सन्ति तेषु सर्वेषु रायः धनानि संभवन्त्विति शेषः ॥

विसर्माणं कृणुहि वित्तमेषां ये भुञ्जते अपृणन्तो न उक्थैः ।
अपव्रतान्प्रसवे वावृधानान्ब्रह्मद्विषः सूर्याद्यावयस्व ॥ ९ ॥

विऽसर्माणम् । कृणुहि । वित्तम् । एषाम् । ये । भुञ्जते । अपृणन्तः । नः । उक्थैः ।
अपऽव्रतान् । प्रऽसवे । ववृधानान् । ब्रह्मऽद्विषः । सूर्यात् । यवयस्व ॥ ९ ॥

एषां वक्ष्यमाणानां वित्तं धनं विसर्माणं विसरणशीलं कृणुहि कुरु हे ब्रह्मणस्पते । एषामित्युक्ते केषामित्याह । ये भुञ्जते अपृणन्तः अप्रयच्छन्तः । केभ्यः । उक्थैः स्तुतिप्रतिपादकैः[3] शस्त्रैर्विशिष्टेभ्यः नः अस्मभ्यम् । तान् अपव्रतान् अपगतकर्मणः प्रसवे उत्पत्तिमति मनुष्यलोके ववृधानान् वर्धमानान् ब्रह्मद्विषः ब्राह्मणद्वेष्टॄन् मन्त्रद्वेष्टॄन् वा सूर्यात् यवयस्व पृथक्कुरु । अन्धकारे स्थापयेत्यर्थः ॥

य ओहते रक्षसो देववीतावचक्रेभिस्तं मरुतो नि यात ।
यो वः शमीं शशमानस्य निन्दात्तुच्छ्यान्कामान्करते सिष्विदानः ॥ १० ॥

यः । ओहते । रक्षसः । देवऽवीतौ । अचक्रेभिः । तम् । मरुतः । नि । यात ।
यः । वः । शमीम् । शशमानस्य । निन्दात् । तुच्छ्यान् । कामान् । करते । सिस्विदानः ॥ १० ॥

---

१. झ-त-न-र-श-°धनदानम् । २. झ-न-भ-र-रक्षणाभिः । ३. ख-च-झ-ण-त-न-भ-र-श-स्वस्तुति° ।

vयः यजमानः vरक्षसः बलिनो राक्षसान् vओहते प्रापयति vदेववीतौ । देवानां वीतिः प्राप्तिर्भक्षणं वा यत्र स तथोक्तः । तस्मिन् यज्ञे । अन्यथानुष्ठानादिना आसुरं[1] करोतीत्यर्थः[1] । vतं यजमानम् vअचक्रेभिः अचक्रै रथैर्हे vमरुतो vनि vयात नितरां प्रापयतान्धकारम् । यद्वा । अचक्रेभिरिति पूर्वत्रान्वयः । चक्रशब्देनाङ्गान्युच्यन्ते । पुनःपुनरङ्गरहितैः केवलैरेव प्रधानैरोहते प्रापयति । साङ्गं हि कर्म देवानभ्येति । vयः च vवः युष्माकं vशमीं कर्म स्तुतिलक्षणं vशशमानस्य शंसमानस्य[2] मम संबन्धि vनिन्दात् निन्देत् वैदिकं ज्योतिष्टोमादिरूपं कर्म निन्दति स्वयं च vतुच्छयान् नश्वरान् vकामान् कृष्यादिजनितभोगान् vकरते कुरुते vसिष्विदानः स्विद्यन्नात्मानं क्लेशयन् । अथवा युष्मासु कमनीयान् भोगान् तुच्छयान् करोति ॥ ॥ १८ ॥

**तमु॑ ष्टुहि॒ यः स्वि॒षुः सु॒धन्वा॒ यो विश्व॑स्य॒ क्षय॑ति भेष॒जस्य॑ ।**

**यक्ष्वा॑ म॒हे सौ॑मन॒साय॑ रु॒द्रं नमो॑भिर्दे॒वमसु॑रं दुवस्य ॥ ११ ॥**

तम् । ऊँ इति॑ । स्तु॒हि॒ । यः । सु॒ऽइ॒षुः । सु॒ऽधन्वा॑ । यः । विश्व॑स्य । क्षय॑ति । भे॒ष॒जस्य॑ ।

यक्ष्व॑ । म॒हे । सौ॒म॒न॒साय॑ । रु॒द्रम् । नमः॑ऽभिः । दे॒वम् । असु॑रम् । दु॒व॒स्य॒ ॥ ११ ॥

हे आत्मन् vतमु तमेव रुद्रं vस्तुहि स्तुतिं कुरु । vयः vस्विषुः शोभनबाणः vसुधन्वा च । विरोधिहन्तृत्वात् सुष्ठुत्वम् । vयः च vविश्वस्य vभेषजस्य औषधस्य vक्षयति ईश्वरो भवति । शारीरस्य सांसारिकस्य च अरिष्टस्य शमनाय ईश्वरव्यतिरिक्तस्य[3] औषधस्य अभावाद्भिषक्तमत्वाच्चास्य भेषजस्वामित्वम् । 'भिषक्तमं त्वा भिषजां शृणोमि' (ऋ. सं. २. ३३. ४) इत्यादिश्रुतेः । किंच तमेव vरुद्रं दुःखात्तत्साधनाद्दुरिताद्वा मोचयितारं देवं vयक्ष्व यज च vमहे महते vसौमनसाय सुमनस्त्वाय । ईश्वराराधनाच्चित्तशान्तिः प्रसिद्धा । किंच vनमोभिः हविर्भिर्नमस्कारैर्वा vदेवं द्योतमानम् vअसुरं प्रकृष्टासुम् । बलवन्तमित्यर्थः । यद्वा । प्राणदातारं रुद्रं vदुवस्य परिचरेति ॥

**दमू॑नसो अ॒पसो॒ ये सु॒हस्ता॒ वृष्णः॒ पत्नी॑र्न॒द्यो॑ विभ्वत॒ष्टाः ।**

**सर॑स्वती बृह॒द्दि॒वोत रा॒का द॑श॒स्यन्ती॑र्वरिवस्यन्तु शु॒भ्राः ॥ १२ ॥**

दमू॑नसः । अ॒पसः॑ । ये । सु॒ऽहस्ताः॑ । वृष्णः॑ । पत्नीः॑ । न॒द्यः॑ । वि॒भ्व॒ऽत॒ष्टाः ।

सर॑स्वती । बृ॒ह॒त्ऽदि॒वा । उ॒त । रा॒का । द॒श॒स्यन्तीः॑ । व॒रि॒व॒स्य॒न्तु॒ । शु॒भ्राः ॥ १२ ॥

अत्र लिङ्गोक्तदेवताः । vदमूनसः दानमनसो दान्तमनसो वा vअपसः चमसाश्वरथगवादिशोभनकर्मवन्तः ॥ मत्वर्थो लुप्यते ॥ अत एव vसुहस्ताः कुशलहस्ताः vये सन्ति ते ऋभवः vवृष्णः वर्षकस्येन्द्रस्य vपत्नीः पत्न्यः पालयित्र्यः vनद्यः नदनशीला गङ्गाद्याः vविभ्वतष्टाः ऋभूणां मध्यमेन कृताः vसरस्वती एतन्नामिका नदी वाग्देवी वा vबृहद्दिवा प्रभूतदीप्तिः vउत अपि च vराका देवी च vदशस्यन्तीः दशस्यन्त्यः कामान् प्रयच्छन्त्यः vशुभ्राः दीप्ताः ताश्च vवरिवस्यन्तु अस्मभ्यं धनमिच्छन्तु ॥

---

१. ख-च-ण-आसुरीकरोतीत्यर्थः ; झ-त-र-आसुकरा करोतीत्यर्थः । २. ग-घ-ज-श-'शंसमानस्य' नास्ति । ३. झ-श-ईश्वरस्य व्यतिरिक्तस्य; त-र-ईश्वरस्य वातिरिक्तस्य ।

प्र सू म॒हे सु॑श॒रणा॑य मे॒धां गिरं॑ भरे॒ नव्य॑सीं॒ जाय॑मानाम् ।
य आ॑ह॒ना दु॑हि॒तुर्व॒क्षणा॑सु रू॒पा मि॑ना॒नो अकृ॑णोदि॒दं नः॑ ॥ १३ ॥

प्र । सु । म॒हे । सु॒ऽश॒रणा॑य । मे॒धाम् । गिर॑म् । भ॒रे॒ । नव्य॑सीम् । जाय॑मानाम् ।
यः । आ॒ह॒नाः । दु॒हि॒तुः । व॒क्षणा॑सु । रू॒पा । मि॒ना॒नः । अकृ॑णोत् । इ॒दम् । न॒ः ॥ १३ ॥

ᵛसु सुष्ठु ᵛप्र ᵛभरे प्रकर्षेण संपादयामि ᵛमहे महते ᵛसुशरणाय शोभनरक्षकायेन्द्राय पर्जन्याय वा सुसुखाय वा । किम् । ᵛमेधां मतौ धीयमानां ᵛगिरं स्तुतिम् । कीदृशीम् । ᵛनव्यसीं नवतरामतिशयेन स्तुत्यां वा ᵛजायमानाम् इदानीमुत्पद्यमानाम् । नूतनामित्यर्थः । ᵛयः इन्द्रः पर्जन्यो वा ᵛआहनाः आहन्ता सेक्ता ᵛदुहितुः दुहितृस्थानीयायाः पृथिव्या हिताय ᵛवक्षणासु नदीषु ᵛरूपा रूपाणि ᵛमिनानः कुर्वाणः ᵛइदम् उदकं ᵛनः अस्यभ्यम् ᵛअकृणोत् करोतु ॥

प्र सु॑ष्टु॒तिः स्त॒नय॑न्तं रु॒वन्त॑मि॒ळस्पतिं॑ जरित॒र्नू॒नम॑श्याः ।
यो अ॑ब्दि॒माँ उ॑दनि॒माँ इय॑र्ति॒ प्र वि॒द्युता॒ रोद॑सी उ॒क्षमा॑णः ॥ १४ ॥

प्र । सु॒ऽस्तु॒तिः । स्त॒नय॑न्तम् । रु॒वन्त॑म् । इ॒ळः । पति॑म् । ज॒रि॒तः॒ । नू॒नम् । अ॒श्या॒ः ।
यः । अ॒ब्दि॒ऽमान् । उ॒द॒नि॒ऽमान् । इय॑र्ति । प्र । वि॒ऽद्यु॒ता॑ । रोद॑सी॒ इति॑ । उ॒क्षमा॑णः ॥ १४ ॥

अत्र पर्जन्यः स्तूयते । ᵛसुष्टुतिः शोभना स्तुतिः ᵛस्तनयन्तं गर्जन्तं ᵛरुवन्तं वर्षणजनितं शब्दं कुर्वाणम् ᵛइळः अन्नस्योदकस्य वा ᵛपतिं स्वामिनं हे ᵛजरितः स्तोतस्त्वदीया स्तुतिः ᵛनूनं ᵛप्र ᵛअश्याः प्रकर्षेण व्याप्नोतु । ᵛयः च पर्जन्यः ᵛअब्दिमान् । अब्दिः अपां दानवान् मेघः । तद्वान् । ᵛउदनिमान् उदकवान् ᵛविद्युता तडिता ᵛरोदसी द्यावापृथिव्यौ ᵛउक्षमाणः सिञ्चन् ᵛप्र ᵛइयर्ति गच्छति ॥

ए॒ष स्तोमो॒ मारु॑तं॒ शर्धो॒ अच्छा॑ रु॒द्रस्य॑ सू॒नूँर्यु॑व॒न्यूँरुद॑श्याः ।
कामो॑ रा॒ये ह॑वते मा स्व॒स्त्युप॑ स्तुहि॒ पृष॑दश्वाँ अ॒यासः॑ ॥ १५ ॥

ए॒षः । स्तोम॑ः । मारु॑तम् । शर्ध॑ः । अच्छ॑ । रु॒द्रस्य॑ । सू॒नून् । यु॒व॒न्यून् । उत् । अ॒श्या॒ः ।
काम॑ः । रा॒ये । ह॒व॒ते॒ । मा॒ । स्व॒स्ति । उप॑ । स्तु॒हि॒ । पृष॑त्ऽअश्वान् । अ॒यास॑ः ॥ १५ ॥

ᵛएषः मया संपादितः ᵛस्तोमः स्तोत्रं ᵛमारुतं ᵛशर्धः मरुतां बलम् ᵛअच्छ अभिमुखम् ᵛअश्याः प्राप्नोतु । समुदायरूपेण स्तुत्वा समुदायिरूपेणाह । ᵛरुद्रस्य ᵛसूनून् । एषां रुद्रेण पुत्रत्वेन परिक्लृप्तिरसकृदुक्ता । ᵛयुवन्यून् यूनो मिश्रणेच्छून्वा ᵛउत् उन्नतमत्यधिकम् अश्याः व्याप्नुहि

हे मनः । कामः संकल्पः राये धनार्थं मा मां स्वस्ति अविनश्वरं हवते आह्वयति[1] प्रेरयतीत्यर्थः[1] । यस्मादेवं तस्मात् पृषदश्वान् पृषद्वर्णाश्वोपेतान् अयासः यज्ञगन्तॄन् उप उपेत्य स्तुहि ॥

प्रैष स्तोमः पृथिवीमन्तरिक्षं वनस्पतींरोषधी राये अश्याः ।

देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥ १६ ॥

प्र । एषः । स्तोमः । पृथिवीम् । अन्तरिक्षम् । वनस्पतीन् । ओषधीः । राये । अश्याः ।

देवःऽदेवः । सुऽहवः । भूतु । मह्यम् । मा । नः । माता । पृथिवी । दुःऽमतौ । धात् ॥ १६ ॥

एष स्तोमः स्तुतिः पृथिव्यादिदेवताः प्र अश्याः प्राप्नोतु । किमर्थम् । राये धनार्थम् । देवोदेवः सर्वोऽपि देवः मह्यं मदर्थं सुहवो भूतु स्वाह्वानो भवतु । नः अस्मान् दुर्मतौ माता सर्वस्य निर्मात्री[2] । यद्वा । अत्रेर्भौमत्वाद्विशेषेण माता । तादृशी पृथिवी मा धात् मा स्थापयतु ॥

उरौ देवा अनिबाधे स्याम ॥ १७ ॥

उरौ । देवाः । अनिऽबाधे । स्याम ॥ १७ ॥

हे देवाः युष्माकं संबन्धिनि उरौ महति अनिबाधे नितरां बाधरहिते सुखे स्याम भवेम वयमत्रयः ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।

आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ १८ ॥

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।

आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥ १८ ॥

वयम्[3] अश्विनोः नूतनेन पूर्वमन्यैरननुभूतेन मयोभुवा सुखस्य भावयित्रा सुप्रणीती शोभनप्रणयनवता अवसा रक्षणेन सं गमेम संगच्छेमहि । हे अमृता अमरणावश्विनौ नः अस्मभ्यं रयिं धनम् आ वहतं प्रापयतम् । ओत वीरान् सुवीर्यवतः पुत्रानपि आ वहतम् । विश्वानि सौभगान्यपि आ वहतम् ॥ ॥ १९ ॥

'आ धेनवः' इति सप्तदशर्चमेकादशं सूक्तमत्रेरार्षं त्रैष्टुभं वैश्वदेवम् । अत्रानुक्रमणिका— 'आ धेनवस्त्र्यूनैतयोरुपान्त्यैकपदा' इति । विनियोगो लैङ्गिकः । अपोनप्त्रीये एकधनासु हविर्धानं प्रति नीयमानास्वाद्यानुवचनीया । सूत्रितं च—'आ धेनवः पयसा तूर्ण्यर्था: समन्या यन्त्युप यन्त्यन्याः' (आश्व. श्रौ. ५. १) इति ॥

---

१. ख-च-झ-ण-न-भ-आह्वयतीत्यर्थः । २. ख-च-ण-नेत्री । ३. न-वयमत्रयः ।

आ धेनवः पयसा तूर्ण्यर्था अमर्धन्तीरुप नो यन्तु मध्वा ।
महो राये बृहतीः सप्त विप्रो मयोभुवो जरिता जोहवीति ॥ १ ॥

आ । धेनवः । पयसा । तूर्णिऽअर्थाः । अमर्धन्तीः । उप । नः । यन्तु । मध्वा ।
महः । राये । बृहतीः । सप्त । विप्रः । मयःऽभुवः । जरिता । जोहवीति ॥ १ ॥

धेनवः प्रीणयित्र्यो नद्यः मध्वा मधुरेण पयसा रसेन सहिताः तूर्ण्यर्थाः त्वरमाणगमनाः । 'अर्थोऽर्तेः' ( निरु. १. १८ ) इति यास्कः । अमर्धन्तीः अहिंसन्त्यः सत्यः नः अस्मान् उप आ यन्तु उपागच्छन्तु । तदर्थं महः महते राये धनाय बृहतीः महतीः सप्त सर्पणस्वभावाः सप्तसंख्याकाः[1] 'इमं मे गङ्गे' ( ऋ. सं. १०. ७५. ५ ) इति मन्त्रोक्ता गङ्गाद्या वा । तत्र हि प्राधान्येन सप्तैवोक्ताः । मयोभुवः सुखस्य भावयित्रीः विप्रः विशेषेण प्रीणयिता जरिता स्तोता जोहवीति आह्वयति[2] ॥

आ सुष्टुती नमसा वर्तयध्यै द्यावा वाजाय पृथिवी अमृध्रे ।
पिता माता मधुवचाः सुहस्ता भरेभरे नो यशसावविष्टाम् ॥ २ ॥

आ । सुऽस्तुती । नमसा । वर्तयध्यै । द्यावा । वाजाय । पृथिवी इति । अमृध्रे इति ।
पिता । माता । मधुऽवचाः । सुऽहस्ता । भरेऽभरे । नः । यशसौ । अविष्टाम् ॥ २ ॥

अहं सुष्टुती सुष्टुत्या शोभनस्तोत्रेण नमसा हविषा च अमृध्रे[3] हिंसारहिते द्यावा पृथिवी[3] द्यावापृथिव्यौ आ वर्तयध्यै। आवर्तयितुमिच्छामि वाजाय अन्नार्थम्। 'अन्नं वै वाजः' ( तै. ब्रा. १.३.६.६ ) इति हि श्रुतिः । पिता पालयित्री द्यौः माता निर्मात्री पृथिवी मधुवचाः प्रियवचना सुहस्ता अभिमतदानेन[4] शोभनहस्ता[4] । एते उभयविशेषणे। यशसौ यशोयुक्तौ द्यावापृथिव्यौ भरेभरे सर्वेषु संग्रामेषु यज्ञेषु वा नः अस्मान् अविष्टां रक्षताम्।

अध्वर्यवश्चकृवांसो मधूनि प्र वायवे भरत चारु शुक्रम् ।
होतेव नः प्रथमः पाह्यस्य देव मध्वो ररिमा ते मदाय ॥ ३ ॥

अध्वर्यवः । चकृऽवांसः । मधूनि । प्र । वायवे । भरत । चारु । शुक्रम् ।
होताऽइव । नः । प्रथमः । पाहि । अस्य । देव । मध्वः । ररिम । ते । मदाय ॥ ३ ॥

---

१. ख-च-झ-ण-भ–सप्तसंख्याका वा; त-र–सप्तसंख्या वा । २. ख-झ-भ–आजुह्वयति । ३. ख-च-ण–'अमृध्रे...पृथिवी' नास्ति; झ-न-भ-र–द्यावा पृथिवी । ४. ख-च-झ-ण-त-न-भ-र–'अभिमतदानेन शोभनहस्ता' नास्ति; ग-घ-ज–शोभनहस्ता ।

हे Vअध्वर्यवः अध्वरं युञ्जानाः Vमधूनि मधुररसानि सोमाज्यादीनि Vचकृवांसः कुर्वाणा यूयं Vवायवे प्रथमं Vप्र Vभरत प्रकर्षेण संपादयत Vचारु चरणीयं[1] Vशुक्रं दीप्तं सोमम् । हे वायो त्वं च Vहोतेव होता यथा प्रथमं पिबति तद्वत् Vनः अस्मदर्थम् Vअस्य अमुं सोमं Vप्रथमः इतरदेवेभ्यः पूर्वं Vपाहि पिब । हे Vदेव वायो[2] Vमध्वः मधुरं सोमरसं Vते Vमदाय Vररिम ददाम । वायोः पूर्वपानमसकृत्प्रपञ्चितम् ॥

दश क्षिपो युञ्जते बाहू अद्रिं सोमस्य या शमितारा सुहस्ता ।
मध्वो रसं सुगभस्तिर्गिरिष्ठां चनिश्चदद्दुदुहे शुक्रमंशुः ॥ ४ ॥

दश । क्षिपः । युञ्जते । बाहू इति । अद्रिम् । सोमस्य । या । शमितारा । सुऽहस्ता ।
मध्वः । रसम् । सुऽगभस्तिः । गिरिऽस्थाम् । चनिश्चदत् । दुदुहे । शुक्रम् । अंशुः ॥ ४ ॥

अत्राभिषवस्य प्रतिपाद्यमानत्वात् सोमो देवता । यद्वा ऐन्द्री । Vअद्रिम् अभिषवग्रावाणं Vदश Vक्षिपः दशसंख्याकाः क्षेप्योऽङ्गुलयः Vयुञ्जते गृह्णन्ति । यद्वा । परस्परं युक्ता भवन्ति । Vबाहू अप्यध्वर्युसंबन्धिनौ अद्रिं युञ्जाते । Vया यौ Vसुहस्ता शोभनहननौ[3] Vसोमस्य शमितारौ[4] अभिषोतारौ तौ[5] बाहू युञ्जाते । Vमध्वः मधुरस्य सोमस्य Vरसं Vगिरिष्ठां गिरिस्थायिनं गिरिवदुन्नतप्रदेशस्थितं वा Vसुगभस्तिः शोभनाङ्गुलिरध्वर्युः Vचनिश्चदत् आह्लादयन् ॥ ' चदि आह्लादने ' इत्यस्माद्यङ्लुकि छान्दसं रूपम् । Vदुदुहे दोग्धि । स च Vअंशुः Vशुक्रं निर्मलं रसं Vदुदुहे दुग्धे । यद्वैकं वाक्यम् । अंशुः व्याप्तः[6] सुगभस्तिः सुहस्तोऽध्वर्युः मध्वो रसं दुदुहे दोग्धि ॥

असावि ते जुजुषाणाय सोमः क्रत्वे दक्षाय बृहते मदाय ।
हरी रथे सुधुरा योगे अर्वागिन्द्र प्रिया कृणुहि हूयमानः ॥ ५ ॥

असावि । ते । जुजुषाणाय । सोमः । क्रत्वे । दक्षाय । बृहते । मदाय ।
हरी इति । रथे । सुऽधुरा । योगे । अर्वाक् । इन्द्र । प्रिया । कृणुहि । हूयमानः ॥ ५ ॥

हे इन्द्र Vते तुभ्यं Vजुजुषाणाय सेवमानाय Vसोमः Vअसावि अभिषुतः । किमर्थम् । Vक्रत्वे क्रतवे वृत्रवधादिकर्मणे Vदक्षाय बलाय Vबृहते Vमदाय च । यस्मादेवं तस्मात् हे Vइन्द्र त्वं Vहूयमानः सन् Vसुधुरा शोभनायां धुरि नियुक्तौ Vप्रिया प्रियौ Vहरी अश्वौ Vयोगे योगार्हे युक्ते वा Vरथे योजयित्वा तं रथम् Vअर्वाक् अस्मदभिमुखं Vकृणुहि कुरु ॥ ॥ २० ॥

---

१. न–रमणीयम् । २. ख-च-झ-ण-न-भ-र–वायो देव । ३. न–शोभनहस्तौ । ४. ख-च-झ-ण-न-भ-र–' शमितारौ ' नास्ति । ५. ख-च-झ-ण-न-भ-श–' तौ ' नास्ति । ६. ख-च-ण-भ–व्याप्यः ।

आ नो॑ म॒हीम॒रम॑तिं स॒जोषा॒ ग्नां दे॒वीं नम॑सा रा॒तह॑व्याम् ।
मधो॒र्मदा॑य बृह॒तीमृ॑त॒ज्ञामाग्ने॑ वह प॒थिभि॑र्देव॒यानैः॑ ॥ ६ ॥

आ । न॒ः । म॒हीम् । अ॒रम॑तिम् । स॒ऽजोषाः॑ । ग्नाम् । दे॒वीम् । नम॑सा । रा॒तऽह॑व्याम् ।

मधोः॑ । मदा॑य । बृ॒ह॒तीम् । ऋ॒त॒ऽज्ञाम् । आ । अ॒ग्ने॒ । व॒ह॒ । प॒थिऽभिः॑ । दे॒व॒ऽयानैः॑ ॥ ६ ॥

अत्राग्निं संबोध्य ग्नादेवताया आवाह्यत्वादस्याग्निर्ग्ना वा देवता । हे ᵛअग्ने ᵛसजोषाः अस्माभिः सह प्रीयमाणस्त्वं ᵛग्नां ᵛदेवीं सर्वैर्गन्तव्यामेतन्नामिकां देवताम् । 'मेना ग्ना इति स्त्रीणाम्' ( निरु. ३. २१ ) इति यास्कः । ᵛनः अस्मदर्थं ᵛदेवयानैः देवैर्गन्तव्यैः ᵛपथिभिः मार्गैः ᵛआ अभिमुखम् ᵛआ ᵛवह । कीदृशीम् । ᵛमहीं महतीम् ᵛअरमतिम्[1] आ समन्ताद्रममाणां सर्वत्र गन्त्रीं वा ᵛनमसा स्तोत्रेण सह ᵛरातहव्याम् । रातं दत्तं दानाय संकल्पितं हव्यं यस्यास्ताम् । दत्त-हविष्कामित्यर्थः । किमर्थम् । ᵛमधोः मधुरस्य सोमस्य ᵛमदाय । पुनः कीदृशीम् । ᵛबृहतीं प्रवृद्धाम् ᵛऋतज्ञां यज्ञमभिजानतीम् ॥

प्रवर्ग्ये महावीरेऽज्यमाने 'अञ्जन्ति यम्' इत्येषा । सूत्रितं च—'अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमाने' ( आश्व. श्रौ. ४. ६ ) इति ॥

अ॒ञ्जन्ति॒ यं प्र॒थय॑न्तो॒ न विप्रा॑ व॒पाव॑न्तं॒ नाग्निना॒ तप॑न्तः ।
पि॒तुर्न पु॒त्र उ॒पसि॒ प्रेष्ठ॒ आ घ॒र्मो अ॒ग्निमृ॒तय॑न्नसादि ॥ ७ ॥

अ॒ञ्जन्ति॑ । यम् । प्र॒थय॑न्तः । न । विप्राः॑ । व॒पाऽव॑न्तम् । न । अ॒ग्निना॑ । तप॑न्तः ।

पि॒तुः । न । पु॒त्रः । उ॒पसि॑ । प्रेष्ठः॑ । आ । घ॒र्मः । अ॒ग्निम् । ऋ॒तय॑न् । अ॒सा॒दि॒ ॥ ७ ॥

ᵛयं घर्मं महावीरं ᵛप्रथयन्तो ᵛन । नेति संप्रत्यर्थीयः । अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः[2] । इदानीं प्रथयन्तः ᵛविप्राः मेधाविन ऋत्विजोऽध्वर्य्वादयः ᵛवपावन्तं ᵛन । वपावन्तं प्रवृद्धं पशुं यथाग्नौ तपन्ति तद्वत् ᵛअग्निना ᵛतपन्तः ᵛअञ्जन्ति । ᵛपितुर्न ᵛपुत्र ᵛउपसि ᵛप्रेष्ठः पितुरुपस्थे प्रियतमः पुत्र इव ᵛघर्मः महावीरः । 'यद्ग्राम् इत्यपतत्तद्घर्मस्य घर्मत्वम्' ( तै. आ. ५. १. ५ ) इति हि श्रुतिः । सः ᵛऋतयन् यज्ञमिच्छन् ᵛअग्निम् अग्नौ[3] ᵛआ ᵛअसादि आसादितः । अत्र पितृपुत्रदृष्टान्तः स्फोटादिराहित्येन सुखवासप्रख्यापनार्थः ॥

अच्छा॑ म॒ही बृ॑ह॒ती शंत॑मा॒ गीर्दू॒तो न ग॑न्त्व॒श्विना॑ हु॒वध्यै॑ ।
म॒यो॒भुवा॑ स॒रथा या॑तम॒र्वाग्ग॒न्तं नि॒धिं धुर॑मा॒णिर्न नाभि॑म् ॥ ८ ॥

अच्छ॑ । म॒ही । बृ॒ह॒ती । शम्ऽत॑मा । गीः । दू॒तः । न । ग॒न्तु॒ । अ॒श्विना॑ । हु॒वध्यै॑ ।

म॒यः॒ऽभुवा॑ । स॒ऽरथा॑ । आ । या॒त॒म् । अ॒र्वाक् ।

ग॒न्तम् । नि॒ऽधिम् । धुर॑म् । आ॒णिः । न । नाभि॑म् ॥ ८ ॥

---

१. न—अरमतिमरमणीयम् । २. ख-च-ण-भ— प्रयोग इति यास्कः । ३. ख-च-ण-त—'अग्नौ' नास्ति ।

ᵛअच्छ अभिमुखम् ᵛअश्विना अश्विनौ ᵛहुवध्यै आह्वातुं ᵛगीः अस्मदीया स्तुतिः ᵛदूतो ᵛन दूत इवाह्वातेव ᵛगन्तु गच्छतु। गीर्विशेष्यते। ᵛमही पूज्या ᵛबृहती महती ᵛशंतमा सुखतमा। हे अश्विनौ ᵛमयोभुवा सुखस्य भावयितारौ ᵛसरथा एकरथौ सन्तौ ᵛनिधिं निहितं सोमम् ᵛअर्वाक् अभिमुखं ᵛयातं गच्छतम्। ᵛधुरं भारवाहिकां ᵛनाभिम् ᵛआणिर्न कील इव। यथा निष्कीला नाभी रथं न निर्वहति तद्वत् युवाभ्यां वियुक्तः सोमो यागं न निर्वहतीति ज्ञापयितुमेवं दृष्टान्तितम्[1] ॥

प्र तव्यसो नमउक्तिं तुरस्याहं पूष्ण उत वायोरदिक्षि।
या राधसा चोदितारा मतीनां या वाजस्य द्रविणोदा उत त्मन् ॥ ९ ॥

प्र। तव्यसः। नमःऽउक्तिम्। तुरस्य। अहम्। पूष्णः। उत। वायोः। अदिक्षि।
या। राधसा। चोदितारा। मतीनाम्। या। वाजस्य। द्रविणःऽदौ। उत। त्मन् ॥ ९ ॥

ᵛअहम् ऋषिः ᵛतव्यसः प्रकृष्टबलस्य ᵛतुरस्य त्वरमाणस्य ᵛपूष्णः पोषकस्य देवस्य। उक्तगुणकाय देवाय ᵛउत अपि च ᵛवायोः उक्तलक्षणाय[2] च ᵛनमउक्तिं नम इति वचनं स्तोत्रं ᵛप्र ᵛअदिक्षि प्रदिशामि। ᵛया यौ पूषवायू ᵛराधसा हविर्लक्षणेन निमित्तेन ᵛमतीनां ᵛचोदितारा प्रेरयितारौ[3]। यद्वा। राधसेति षष्ठ्यर्थे तृतीया। राधसो धनस्य मतीनां च चोदयितारौ। यौ च ᵛवाजस्य अन्नस्य संग्रामस्य वा चोदयितारौ तौ देवौ ᵛउत अपि च ᵛत्मन् आत्मन्यनन्यप्रेरणयैव[4] ᵛद्रविणोदौ भवतमिति शेषः ॥

आ नामभिर्मरुतो वक्षि विश्वाना रूपेभिर्जातवेदो हुवानः।
यज्ञं गिरो जरितुः सुष्टुतिं च विश्वे गन्त मरुतो विश्व ऊती ॥ १० ॥

आ। नामऽभिः। मरुतः। वक्षि। विश्वान्। आ। रूपेभिः। जातऽवेदः। हुवानः।
यज्ञम्। गिरः। जरितुः। सुऽस्तुतिम्। च। विश्वे। गन्त। मरुतः। विश्वे। ऊती ॥ १० ॥

हे ᵛजातवेदः जातप्रज्ञाग्ने ᵛहुवानः अस्माभिराहूयमानः सन् ᵛविश्वान् ᵛमरुतः सर्वानपि स्तोत्रभाजो हविर्भाजश्च देवान् ᵛनामभिः इन्द्रवरुणेत्यादिलक्षणैः ᵛआ ᵛवक्षि आवहसि। ᵛरूपेभिः सहस्राक्षवज्रहस्तत्वादिलक्षणै रूपैः ᵛआ वक्षि वहसि यज्ञम्[5]। किंच हे ᵛमरुतः ᵛविश्वे सर्वे यूयं ᵛयज्ञम् अस्मदीयं यज्ञसंबन्धि हविर्वा ᵛजरितुः स्तोतुः संबन्धिनीः ᵛगिरः स्तुतिवचांसि ᵛसुष्टुतिं तत्साध्यां शोभनफलां स्तुतिं च। अवयविन्याः[6] स्तुतेरेकत्वादेकवचनम्। अवयवानां बहुत्वाद्बहुवचनम् ॥ उक्ते यज्ञस्तुती अभिलक्ष्य ᵛगन्त आगच्छत। ᵛविश्वे ᵛच यूयम् ᵛऊती ऊत्या रक्षया च सह गन्त[7] ॥ ॥ २१ ॥

'आ नो दिवः' इत्येकादशी व्यूढे दशरात्रे नवमेऽहनि प्रउगशस्त्रे सारस्वततृचे द्वितीया। सूत्रितं च–'आ नो दिवो बृहतः पर्वतादा सरस्वत्यभि नो नेषि वस्यः' (आश्व. श्रौ. ८.११) इति ॥

---

१. न–दृष्टान्तितम्। तस्माद्युवामायातमागच्छतम्। २. ख-च-ज्ञ-ण-न-भ-र–उक्तगुणाय; त–उक्तगुणकाय। ३. त–चोदितारौ। ४. ग-घ-ज-श–°प्रेरणयैव। ५. ख-च-ज्ञ-ण-न-भ-र–'यज्ञं' नास्ति। ६. ख-च-ज्ञ-ण-त-भ-र–अवयव्याः। ७. ख-च-ण–गन्त आगच्छत; भ–गन्त एत।

आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥ ११ ॥

आ । नः । दिवः । बृहतः । पर्वतात् । आ । सरस्वती । यजता । गन्तु । यज्ञम् ।
हवम् । देवी । जुजुषाणा । घृताची । शग्माम् । नः । वाचम् । उशती । शृणोतु ॥ ११ ॥

ᵛनः अस्माकं ᵛयज्ञं ᵛयजता यष्टव्या देवी ᵛसरस्वती ᵛदिवः द्योतमानात् द्युलोकात् ᵛआ ᵛगन्तु आगच्छतु । तथा ᵛबृहतः महतः ᵛपर्वतात् पर्ववतः पूरणवतः प्रीणनवतो वान्तरिक्षात् मेघाद्वा सरस्वती ᵛआ गन्तु आगच्छतु । अनेन माध्यमिकी वागुच्यते । यद्वा एतत् दिव इत्यस्य विशेषणम् । सन्ति हि द्युलोकस्य त्रीणि पर्वाणि 'तिस्रो दिवः पृथिवीः' इत्यादि श्रुतेः । अस्मिन् पक्षे द्वितीय आकारः पूरणः । तदर्थं ᵛहवम् अस्मदीयमाह्वानं ᵛदेवी सरस्वती ᵛजुजुषाणा स्तुतिं सेवमाना ᵛघृताची घृतमुदकमञ्चती ᵛनः अस्मदीयां ᵛशग्मां सुखकरीं ᵛवाचं स्तुतिम् ᵛउशती कामयमाना सती ᵛशृणोतु ॥

आ वेधसं नीलपृष्ठं बृहन्तं बृहस्पतिं सदने सादयध्वम् ।
सादद्योनिं दम आ दीदिवांसं हिरण्यवर्णमरुषं सपेम ॥ १२ ॥

आ । वेधसम् । नीलऽपृष्ठम् । बृहन्तम् । बृहस्पतिम् । सदने । सादयध्वम् ।
सादत्ऽयोनिम् । दमे । आ । दीदिऽवांसम् । हिरण्यऽवर्णम् । अरुषम् । सपेम ॥ १२ ॥

एषा बार्हस्पत्या । हे ऋत्विजो यूयं ᵛबृहस्पतिं बृहतो मन्त्रस्य स्वामिनं देवं ᵛसदने अस्मद्यागगृहे ᵛआ ᵛसादयध्वं स्थापयध्वम् । कीदृशं देवम् । ᵛवेधसं विविधकर्तारं ᵛनीलपृष्ठं स्निग्धाङ्गं ᵛबृहन्तं महान्तम् । तथा सन्तं वयमृत्विग्यजमानाः ᵛसपेम परिचरेम । स एव विशेष्यते । ᵛसादद्योनिं योनौ सीदन्तं ᵛदमे यागगृहे ᵛआ सर्वतः ᵛदीदिवांसं दीप्यमानं ᵛहिरण्यवर्णम् हितरमणीयवर्णम्[1] ᵛअरुषम् आरोचमानम् । अथवेयमाग्नेयी । बृहतः परिवृढस्य कर्मणः स्वामीति बृहस्पतिरग्निरुच्यते । तथा नीलवर्णधूमपृष्ठत्वसदनसादनहिरण्यवर्णत्वादिलिङ्गैरप्यग्निरेव बृहस्पतिः ॥

आ धर्णसिर्बृहद्दिवो रराणो विश्वेभिर्गन्त्वोमभिर्हुवानः ।
ग्ना वसान ओषधीरमृध्रस्त्रिधातुशृङ्गो वृषभो वयोधाः ॥ १३ ॥

आ । धर्णसिः । बृहत्ऽदिवः । रराणः । विश्वेभिः । गन्तु । ओमऽभिः । हुवानः ।
ग्नाः । वसानः । ओषधीः । अमृध्रः । त्रिधातुऽशृङ्गः । वृषभः । वयःऽधाः ॥ १३ ॥

---

१. ख-च-ण-हितरमणीयम्; ग-घ-ज-र-'हितरमणीयवर्णं' नास्ति ।

इदमाद्यृक्त्रयमाग्नेयम् । अग्निः[1] आ गन्तु आगच्छत्वस्मद्यज्ञं धर्णसिः सर्वस्य धारकः बृहद्दिवः प्रभूतदीप्तिः रराणः रममाणः कामान् प्रयच्छन् वा[2] विश्वेभिः सर्वैः ओमभिः रक्षणैः सह हुवानः आहूयमानः । ग्नाः गन्त्रीर्ज्वालाः ओषधीः च वसानः अमृध्रः अहिंसितः त्रिधातुशृङ्गः त्रिप्रकारशृङ्गवदुन्नतलोहितशुक्लकृष्णवर्णज्वालः[3] वृषभः वर्षिता वयोधाः अन्नस्य दाता हविषो वा धारकः ॥

मातुष्पदे परमे शुक्र आयोर्विपन्यवो रास्पिरासो अग्मन् ।

सुशेव्यं नमसा रातहव्याः शिशुं मृजन्त्यायवो न वासे ॥ १४ ॥

मातुः । पदे । परमे । शुक्रे । आयोः । विपन्यवः । रास्पिरासः । अग्मन् ।

सुऽशेव्यम् । नमसा । रातऽहव्याः । शिशुम् । मृजन्ति । आयवः । न । वासे ॥ १४ ॥

आयोः मनुष्यस्य यजमानस्य विपन्यवः । स्तोतृनामैतत् । स्तोतारो होत्रादयः रास्पिरासः ॥ रा धनं हविर्लक्षणम् । तत्स्पृशन्ति रास्पा जुह्वादयः । तद्वान् रास्पी । तद्वन्तो रास्पिराः ॥ उक्तविधा ऋत्विजः मातुः निर्मातुः पृथिव्याः शुक्रे दीप्ते परमे पदे उत्तरवेद्यां स्थितम् अग्मन् अगमन् भजन्ते[4] । तदर्थं सुशेव्यं सुखाय[5] हितं शिशुम् उत्पन्नमात्रं वासे वासाय नमसा स्तोत्रेण रातहव्याः दत्तहविष्काः[6] इत्यर्थः । तादृशास्ते मृजन्ति संमार्जयन्ति । तत्र दृष्टान्तः । आयवो न लौकिका मनुष्या इव । ते यथा शिशुं वासाय मृजन्ति तद्वत् ॥

बृहद्वयो बृहते तुभ्यमग्ने धियाजुरो मिथुनासः सचन्त ।

देवोदेवः सुहवो भूतु मह्यं मा नो माता पृथिवी दुर्मतौ धात् ॥ १५ ॥

बृहत् । वयः । बृहते । तुभ्यम् । अग्ने । धियाऽजुरः । मिथुनासः । सचन्त ।

देवःऽदेवः । सुऽहवः । भूतु । मह्यम् । मा । नः । माता । पृथिवी । दुःऽमतौ । धात् ॥ १५ ॥

बृहत् प्रभूतं वयः अन्नं हे अग्ने बृहते[7] तुभ्यं धियाजुरः कर्मणा जीर्णाः मिथुनासः पत्नीभिः[8] सहिताः सचन्त सेवन्ते । 'जायापती अग्निमादधीयाताम्' इत्यादिश्रुतेः । अधिकाराध्याये षष्ठे स्त्रिया अप्यधिकारः स च पत्या सह ( पू. मी. ६ . १ . २४ ) इति हि प्रतिपादितम् । अवशिष्टं गतम् ॥

---

१. ख-झ-न-भ-र-'अग्निः' नास्ति । २. ग-घ-ज-'वा' नास्ति । ३. ख-च-झ-ण-न-भ-र-°कृष्णज्वालः श-°कृष्णबहुज्वालः । ४. ख-च-ण-न-'भजन्ते' नास्ति; झ-त-भ-र-अञ्जते । ५. ख-च-झ-ण-भ-सुसुखा; न-र-सुसुखाय । ६. ख-च-ण-दातहव्या हविष्काः; झ-भ-र-दातहव्यहविष्काः; श-दातव्यहविष्काः । ७. ग-घ-च-ज-ण-महते । ८. ख-च-झ-ण-त-न-भ-र-दंपतीभिः ।

उरौ देवा अनिबाधे स्याम ॥ १६ ॥

उरौ । देवाः । अनिऽबाधे । स्याम ॥ १६ ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।

आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ १७ ॥

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।

आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥ १७ ॥

व्याख्याते[1] द्वे[1] ॥ ॥ २२ ॥

'तं प्रत्नथा' इति पञ्चदशर्चं द्वादशं सूक्तम् । अवत्सारो नाम ऋषिः स च कश्यपगोत्रः। यासु ऋक्षु सदापृणबाहुवृक्तादयः श्रुतास्तासु तेऽपि समुच्चीयन्ते । चतुर्दशीपञ्चदश्यौ त्रिष्टुभौ शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः । विश्वे देवा देवता । अनुक्रान्तं च —'तं प्रत्नथा पञ्चोना काश्यपोऽवत्सारोऽन्ये च ऋषयोऽत्र दृष्टलिङ्गा द्वित्रिष्टुबन्तम्' इति ॥ वाजपेये अतिरिक्तोक्थे[2] आदितस्त्रयोदशर्चः शंसनीयाः । सूत्रितं च—'तं प्रत्नथेति त्रयोदशानामेकां शिष्ट्वाहूय दूरोहणं रोहेत्' (आश्व. श्रौ. ९. ९) इति ॥

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।

प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे ॥ १ ॥

तम् । प्रत्नऽथा । पूर्वऽथा । विश्वऽथा । इमऽथा । ज्येष्ठऽतातिम् । बर्हिऽसदम् । स्वःऽविदम् ।

प्रतीचीनम् । वृजनम् । दोहसे । गिरा । आशुम् । जयन्तम् । अनु । यासु । वर्धसे ॥ १ ॥

इयमुत्तरा च द्वे ऐन्द्याविरयाहुः । तत्रोपपत्तिमेवमाहुः । तं प्रत्नथा इत्येषा शुक्रामन्थिग्रहणे विनियुक्ता । ऐन्द्रौ च शुक्रामन्थिनौ । 'यदैन्द्रं शंसति तेन शुक्रामन्थिना उक्थवन्तौ' (ऐ. ब्रा. ३. १) इति हि ब्राह्मणम् । अध्वर्युसंप्रैषोऽपि भवति । 'प्रातःप्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य' (श. ब्रा. ४. २. १. २३) इति । प्रशास्तृप्रैषश्च भवति 'होता यक्षदिन्द्रं प्रातः प्रातःसावस्य' (आश्व. श्रौ. ५. ५) इत्यादि । 'प्रस्थिता इन्द्राय सोमाः' इति[3] याज्या चैन्द्री 'इदं ते सोम्यं मधु' (आश्व. श्रौ. ५. ५) इति । तस्मादैन्द्यौ ॥ ^तम् इन्द्रं ^प्रत्नथा

---

१. ग-घ-च-ण-'हे देवाः युष्मत्संबन्धिनि उरौ महति अनिबाधे नितरां बाधारहिते सुखे स्याम भवेम वयमत्रयः ॥ १६ ॥ वयमश्विनोः नूतनेन पूर्वमन्यैरननुभूतेन मयोभुवा सुखस्य भावयित्रा सुप्रणीति शोभनप्रणयनवता अवसा (रक्षणेन) रक्षणेन संगमेम संगच्छेमहि । हे अमृता अमरणावश्विनौ नवः (नो) अस्मभ्यं रयिं धनमावहतं प्रापयतम् । उत वीरान् सुवीर्यवतः पुत्रान् अपि आवहतम् । विश्वानि सौभगान्यप्यावहतम् ॥ १७ ॥　२. झ-त-न-र-अतिरिक्तोकथ्ये;　३. झ-त-भ-र- इति च ।

पुरातना यजमाना इव ᵛपूर्वथा अस्मदीयाः पूर्वे यथा ᵛविश्वथा विश्वे सर्वे प्राणिनो यथा ᵛइमथा इमे इदानीं वर्तमानाः यजमानाः । ते यथेन्द्रस्य स्तुत्या फलमलभन्त तद्वद्वयमपि हे अन्तरात्मन् त्वमपि ᵛज्येष्ठतातिं ज्येष्ठं ᵛबर्हिषदं बर्हिषि सीदन्तं ᵛस्वर्विदं सर्वज्ञं सर्वस्य लम्भयितारं वा ᵛप्रतीचीनं प्रत्यस्मदभिमुखमञ्चन्तं ᵛवृजनम् । बलनामैतद्बलवति वर्तते । बलवन्तम् ᵛआशुं शीघ्रगामिनं व्याप्तं वा ᵛजयन्तं सर्वमभिभवन्तमिन्द्रं ᵛगिरा स्तुत्या साधनेन ᵛदोहसे धुक्ष्व सर्वदा सर्वान् कामान् । इत्यन्तरात्मनः[1] प्रैषः[1] । ᵛयासु स्तुतिषु ᵛवर्धसे प्रवृद्धो भवसि वर्धयसि वेन्द्रं यया[2] स्तुत्येति । यास्विति व्यत्ययेन बहुवचनम् ॥

श्रि॒ये सु॒दृशी॒रुप॑रस्य॒ याः स्व॑र्वि॒रोच॑मानः क॒कुभा॑मचो॒दते॑ ।
सु॒गो॒पा अ॑सि॒ न दभा॑य सुक्रतो प॒रो मा॒याभि॑रृ॒त आ॑स॒ नाम॑ ते ॥ २ ॥

श्रि॒ये । सु॒ऽदृशीः॑ । उप॑रस्य । याः । स्वः॑ । वि॒ऽरोच॑मानः । क॒कुभा॑म् । अ॒चो॒दते॑ ।
सु॒ऽगो॒पाः । अ॒सि॒ । न । दभा॑य । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ।
प॒रः । मा॒याभिः॑ । ऋ॒ते । आ॒स॒ । नाम॑ । ते॒ ॥ २ ॥

हे इन्द्र ᵛस्वः स्वर्गे[3] ᵛविरोचमानः[3] त्वम् ᵛअचोदते अप्रेरयितुः ॥ षष्ठ्यर्थे चतुर्थी ॥ ᵛउपरस्य मेघस्य संबन्धिन्यः ᵛसुदृशीः सुरोचमानाः ᵛयाः आपः सन्ति तासामपां ᵛककुभां सर्वासां दिशां मध्ये ᵛश्रिये प्राणिनां श्रयणाय प्रेरको भवेति शेषः । हे ᵛसुक्रतो शोभनवृष्टिप्रदानादिकर्मन्निन्द्र[4] त्वं ᵛसुगोपाः प्राणिनां सुष्ठु गोपायितासि । अतः ᵛन ᵛदभाय न दम्भनाय वधाय प्राणिनां न ᵛअसि न प्रभवसि । त्वं च ᵛमायाभिः आसुरीभिः ᵛपरः मायाभ्यः परस्ताद्वर्तमानः । यस्मात् ᵛते त्वदीयं ᵛनाम नामकं रूपम् ᵛऋते सत्यलोके ᵛआस आस्ते ॥

अत्यं॑ ह॒विः स॑चते॒ सच्च॒ धातु॒ चारि॑ष्टगातुः॒ स होता॑ सहो॒भरिः॑ ।
प्र॒सर्स्रा॑णो॒ अनु॑ ब॒र्हिर्वृषा॒ शिशु॒र्मध्ये॒ युवा॒जरो॑ वि॒स्रुहा॑ हि॒तः ॥ ३ ॥

अत्य॑म् । ह॒विः । स॒च॒ते॒ । सत् । च॒ । धातु॑ । च॒ । अरि॑ष्टऽगातुः । सः । होता॑ । स॒हः॒ऽभरिः॑ ।
प्र॒ऽसर्स्रा॑णः । अनु॑ । ब॒र्हिः । वृषा॑ । शिशुः॑ । मध्ये॑ । युवा॑ । अ॒जरः॑ । वि॒ऽस्रुहा॑ । हि॒तः ॥ ३ ॥

इयमाग्नेयी होतृत्वयुवत्वादिलिङ्गैः । अयमग्निः ᵛअत्यं सततमतनार्हं[5] ᵛहविः आज्यादिकं ᵛसचते सेवते । कीदृशं हविः । ᵛसत् । सफलसाधनत्वाद्धविरपि सत् । ᵛधातु ᵛच धारकं सर्वस्य । हूयमानस्य हविष आदित्यद्वारा वृष्टिसाधनत्वात् तया च वृष्ट्या प्रजोत्पत्तेर्धारकत्वम् । तथा हि–

१. ख-च-झ-ण-न-भ-र–' इत्यन्तरात्मनः प्रैषः ' नास्ति । २. ख-झ-न-भ-र–यथा । ३. ख-च-झ-ण–स्वर्गं प्रति रोचमानः; न–स्वर्गं प्रति विरोचमानः; भ-र–स्वर्गं विरोचमानः । ४. ख-ग-घ-च-ज-झ-ण-भ-र-श–°कर्मेन्द्र । ५. ख-ग-घ-च-ज-ण-न-भ–सततगमनार्हम् ।

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ( मनु. ३. ७६ ) इति । अरिष्टगातुः अहिंसितगमनः । सति तस्य गमने यज्ञनिष्पत्त्या[1] फलसिद्धेररिष्टगमनत्वम् । तदेवाह । सः स खलु होता होमनिष्पादकः सहोभरिः बलस्य भर्ता बर्हिः अनु प्रसर्स्राणः प्रकर्षेण सरन् वृषा वर्षकः फलस्य शिशुः स इव रक्षणीयोऽप्रौढो वा युवा सर्वत्र मिश्रयिता अजरः जरारहितः विस्रुहा विस्रुहाणामोषधीनां मध्ये हितः निहितः स्थापितः एवंभूतः सचते ॥

प्र वं एते सुयुजो यामंन्निष्टये नीचीरमुष्मै यम्यं ऋतावृधः ।
सुयन्तुंभिः सर्वशासैरभीशुंभिः क्रिविर्नामानि प्रवणे मुषायति ॥ ४ ॥

प्र । वः । एते । सुऽयुजः । यामन् । इष्टये । नीचीः । अमुष्मै । यम्यः । ऋतऽवृधः ।
सुयन्तुंऽभिः । सर्वऽशासैः । अभीशुंऽभिः । क्रिविः । नामानि । प्रवणे । मुषायति ॥ ४ ॥

एषा सौरी वा । एते[2] रश्मयः सुयुजः सुष्ठु परस्परं संयुक्ताः यामन् यज्ञगमने इष्टये एषणाय नीचीः । नीचं गच्छन्तीति शेषः । अमुष्मै यजमानाय यम्यः यम्या गमनार्हाः । अथवा यमो नियमितादित्यः । तस्य संबन्धिनः । ऋतावृधः यज्ञस्य वर्धयितारश्च । अयमादित्यः सुयन्तुभिः सुगमनैः सर्वशासैः सर्वस्य शासकैः अभीशुभिः रश्मिभिः क्रिविः कर्ता नामानि नामकान्युदकानि[3] प्रवणे निम्ने भूप्रदेशे मुषायति मुष्णाति आदत्ते इत्यर्थः । अथवाग्निनावाह्यस्याग्नेरेतेऽश्वा इष्टये यज्ञगमनाय यामनि रथे सुयुजः प्रगच्छन्ति । शिष्टं समानम् । क्रिविः क्रिविसदृशोऽग्निः प्रवणे नामानि हवींष्युक्तलक्षणाभिर्ज्वालाभिर्मुषायति आदत्ते ॥

संजर्भुराणस्तरुंभिः सुतेगृभं वयाकिनं चित्तगर्भासु सुस्वरुः ।
धारवाकेष्वृजुगाथ शोभसे वर्धस्व पत्नीरभि जीवो अध्वरे ॥ ५ ॥

सम्ऽजर्भुराणः । तरुंऽभिः । सुतेऽगृभंम् । वयाकिनंम् । चित्तऽगर्भासु । सुऽस्वरुः ।
धारऽवाकेषु । ऋजुऽगाथ । शोभसे । वर्धस्व । पत्नीः । अभि । जीवः । अध्वरे ॥ ५ ॥

हे ऋजुगाथ शोभनस्तुतिक[4] अग्ने तरुभिः तरुविकारैर्ग्रहैः सुतेगृभम् अभिषुतेन रसेन गृहीतं वयाकिनम् । कुत्सिता वयाः[5] शाखा वयाका लताः । तद्वन्तं सोमं चित्तगर्भासु चित्तग्राहिणीषु स्तुतिषु स्तुतिभिः सह संजर्भुराणः गृभ्णन् गृह्णन् सुस्वरुः शोभनगमनः शोभनस्तुतिको वा त्वं धारवाकेषु । धारयन्ति वाकान् स्तोत्राणीति धारवाका ऋत्विग्यजमानाः । तेषु मध्ये शोभसे । किंच अध्वरे जीवः सर्वस्य जीवयिता पत्नीः पालयित्रीरोषधीर्ज्वाला वा अभि अभिमुखं वर्धस्व अभिवर्धय ॥　　॥ २३ ॥

---

१. ख-च-ण–यज्ञनिष्पत्ती ।　२. ख-च-झ-ण-भ–एते तव ।　३. त–उदकानि ।　४. ख-च-झ-ण-भ–शोभनस्तुतिकाम; श–शोभनस्तुतिमान् ।　५. ख-च-झ-ण-त-भ-र-श–अला ( अल्पाः ? ) वयाः ।

याद्दगेव ददृशे ताद्दगुच्यते सं छायया दधिरे सिध्रयाप्स्वा ।
महीमस्मभ्यमुरुषामुरु ज्रयो बृहत्सुवीरमनपच्युतं सहः ॥ ६ ॥

यादृक् । एव । ददृशे । तादृक् । उच्यते । सम् । छायया । दधिरे । सिध्रया । अप्ऽसु । आ ।

महीम् । अस्मभ्यम् । उरुऽसाम् । उरु । ज्रयः । बृहत् । सुऽवीरम् । अनपऽच्युतम् । सहः ॥६॥

एषा वैश्वदेवी । ᵛयाद्दगेव ᵛददृशे यादृग्रूपमेव दृश्यते ᵛतादृगुच्यते तादृग्रूपमेवोच्यते । यथा-दृष्टमेव स्तूयते न तु परवचनप्रत्ययेन । यस्मात् ᵛछायया दीप्त्या ᵛसिध्रया साधिकया सह ᵛअप्सु व्यापिकासु स्तुतिषु अप्स्वेव वा ᵛआ ᵛसं ᵛदधिरे सम्यग्धारयन्ति स्वीयं रूपं स्तुतिं वा । ते देवाः ᵛमहीं महतीं पूज्याम् ᵛउरुषां बहुदात्रीं रयिम् ᵛउरु प्रभूतं ᵛज्रयः वेगं ᵛबृहत् महत् ᵛसुवीरं शोभनवीर्यमपत्यम् ᵛअनपच्युतम् अनुपक्षीणं ᵛसहः बलं चाभिभावुकम् ᵛअस्मभ्यं प्रयच्छन्त्वित्यर्थः ॥

वेत्यग्रुर्जनिवान्वा अति स्पृधः समर्यता मनसा सूर्यः कविः ।
घ्रंसं रक्षन्तं परि विश्वतो गयमस्माकं शर्म वनवत्स्वावसुः ॥ ७ ॥

वेति । अग्रुः । जनिऽवान् । वै । अति । स्पृधः । सऽमर्यता । मनसा । सूर्यः । कविः ।

घ्रंसम् । रक्षन्तम् । परि । विश्वतः । गयम् । अस्माकम् । शर्म । वनवत् । स्वऽवसुः ॥ ७॥

इयं सौरी । ᵛसूर्यः देवः ᵛअग्रुः अग्रगामी ᵛजनिवान्वै जन्मवान् जायावान्वा । उषा ह्यस्य जाया । वा इति प्रसिद्धौ । ᵛकविः क्रान्तदर्शी ᵛसमर्यता समरमिच्छता ᵛमनसा ᵛस्पृधः संग्रामान् ᵛअति ᵛवेति अतिगच्छति मन्देहानसुरान् योद्धुम् । ᵛघ्रंसं दीप्तं ᵛगयं गृह-मन्तरिक्षं वा ᵛविश्वतः[1] सर्वतः[1] ᵛरक्षन्तं परिचरेमेति शेषः । स देवः ᵛअस्माकं ᵛशर्म सुखं ᵛपरि सम्यक् ᵛवनवत् दद्यात् । ᵛस्वावसुः स्वायत्तधनः सन् ॥

ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते ।
याद्दश्मिन्धायि तमपस्यया विदद्य उ स्वयं वहते सो अरं करत् ॥ ८ ॥

ज्यायांसम् । अस्य । यतुनस्य । केतुना । ऋषिऽस्वरम् । चरति । यासु । नाम । ते ।

यादृश्मिन् । धायि । तम् । अपस्यया । विदत् ।

यः । ऊँ इति । स्वयम् । वहते । सः । अरम् । करत् ॥ ८॥

इयमाग्नेयी सौरी वा । हे देव ᵛज्यायांसम् अतिशयेन प्रवृद्धम् ᵛअस्य ᵛयतुनस्य । यततिर्गतिकर्मा । गन्तुरस्य सूर्यस्य ॥ कर्मणि षष्ठ्यौ ॥ अमुं गन्तारं ᵛकेतुना प्रज्ञापकेन कर्मणा उदयादिलक्षणेन विशिष्टम्

---

१. ख-च-झ-ण-त-न-भ-र-विश्वं सर्वम्; श-विश्वतः सर्वम् ।

ᵛऋषिस्वरम् ऋषिभिः स्तुत्यं त्वां ᵛचरति गच्छति । भजते यजमानः । केन साधनेन । ᵛयासु स्तुतिषु ᵛते त्वदीयं ᵛनाम नमनं नामकं वा रूपं वर्तते ताभिरित्यर्थः । यद्वा । अस्य यतुनस्य गमनशीलस्य तव केतुना तमोनिर्हरणादिकर्मणा विशिष्टं त्वां चरति । ᵛयादृश्मिन् यादृशे कामे ᵛधायि धत्ते ॥ कर्तरि चिण् ॥ सामर्थ्यान्मनो गम्यते । ᵛतम् । यथानिर्देशं प्रतिनिर्देष्टव्यत्वात्तादृशमित्यर्थो ज्ञातव्यः । तादृशं कामम् ᵛअपस्यया कर्मणा हविःस्तुत्यादिलक्षणेन ᵛविदत् विन्दते । ᵛय ᵛउ य एव स्वयम् अनन्यप्रेरितः सन् स्वमनीषयैव ᵛवहते धारयति फलं ᵛसः ᵛअरम् अलमत्यर्थं ᵛकरत् करोति । अथवा[1] य उ य एव स्वयं वहते स्वयमेवानुतिष्ठति सोऽत्यर्थं कुर्यात् । न ह्यन्येन कारितं फलवद्भवति[2] ॥

समुद्रमासामव तस्थे अग्रिमा न रिष्यति सवनं यस्मिन्नायता ।
अत्रा न हार्दि क्रवणस्य रेजते यत्रा मतिर्विद्यते पूतबन्धनी ॥ ९ ॥

समुद्रम् । आसाम् । अव । तस्थे । अग्रिमा । न । रिष्यति । सवनम् । यस्मिन् । आऽयता ।
अत्र । न । हार्दि । क्रवणस्य । रेजते । यत्र । मतिः । विद्यते । पूतऽबन्धनी ॥ ९ ॥

इयमपि सौरी । ᵛआसां स्तुतीनां ᵛसमुद्रं समुद्रवत्पर्यवसानभूतं सूर्यम् ᵛअग्रिमा अत्यन्तं श्रेष्ठा अस्मदीया स्तुतिः ᵛअव ᵛतस्थे अवगच्छति[2] । यद्वा आसां प्रजानामृत्विजां स्तुतिरिति संबन्धः । ᵛसवनम् । सूयते सोमोऽत्रेति सवनं यज्ञगृहम् । ᵛन ᵛरिष्यति न हिंस्यते । किंतु प्रवर्धते इत्यर्थः । ᵛयस्मिन्नायता विस्तीर्णानि स्तोत्राणि तत्सवनमिति । ᵛअत्र अस्मिन् यजमानगृहे ᵛक्रवणस्य स्तुतिकर्तुः ᵛहार्दि हृदयसंबन्धि हृदयगतं काम्यं फलं ᵛन ᵛरेजते न विचलति । न मृषा भवति । ᵛयत्र यस्मिन् स्तोतृगृहे ᵛमतिः स्तुतिः ᵛपूतबन्धनी पूतं सूर्यम् अनुबध्नती[3] ᵛविद्यते अत्र न रेजत इति ॥

स हि क्षत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः ।
अवत्सारस्य स्पृणवाम रण्वभिः शविष्ठं वाजं विदुषा चिदर्ध्यम् ॥ १० ॥

सः । हि । क्षत्रस्य । मनसस्य । चित्तिऽभिः । एवऽवदस्य । यजतस्य । सध्रेः ।
अवऽत्सारस्य । स्पृणवाम । रण्वऽभिः । शविष्ठम् । वाजम् । विदुषा । चित् । अर्ध्यम् ॥ १० ॥

इयमपि सौरी । ᵛस ᵛहि स खलु सविता देवः सर्वैः स्तुत्यः । सर्वकामपूरक इत्यर्थः । हिशब्दो लोकवेदयोः प्रसिद्धिद्योतकः[4] । तस्मात् सकाशात् । अत्र 'अन्ये च ऋषयोऽत्र दृष्टलिङ्गाः' इत्युक्तत्वात् क्षत्रादय ऋषयः । ᵛक्षत्रस्य ᵛमनसस्य ᵛएवावदस्य ᵛयजतस्य ᵛसध्रेः ᵛअवत्सारस्य चैषामृषीणामस्माकं ᵛरण्वभिः रमणीयाभिः ᵛचित्तिभिः ᵛस्पृणवाम पूरयाम । किम् । ᵛशविष्ठं

---

१. ख-ग-घ-च-ज-ण-न-भ-'अथवा...भवति' नास्ति । २. ख-अभिगच्छति तु; च-झ-ण-त-न-भ-र-अभिगच्छति । ३. ख-च-झ-ण-न-भ-र-श-अनुबध्नन्ती । ४. ख-च-झ-ण-भ-र-प्रसिद्धद्योतकः ।

वाजम् अतिशयेन बलवदन्नम् । 'अन्नं वै वाजः' (तै. ब्रा १. ३. ६. ६) इति श्रुतेः । विदुषा चित् विपश्चिता अर्ध्यं समर्धनीयं स्तृणवाम । क्षत्रादयो वयमिति संबन्धः ॥ २४ ॥

**श्येन आसामदितिः कक्ष्यो३ मदो विश्ववारस्य यजतस्य मायिनः ।**
**समन्यमन्यमर्थयन्त्येतवे विदुर्विषाणं परिपानमन्ति ते ॥ ११ ॥**

श्येनः । आसाम् । अदितिः । कक्ष्यः । मदः । विश्वऽवारस्य । यजतस्य । मायिनः ।
सम् । अन्यम्ऽअन्यम् । अर्थयन्ति । एतवे । विदुः । विऽसानम् । परिऽपानम् । अन्ति । ते ॥ ११ ॥

मददेवत्येयम्[1] । विश्ववारादीनां त्रयाणामृषीणां स्वभूतः आसाम् अपां सोमरसलक्षणानां मदः श्येनः शंसनीयगमनः शीघ्रं पातृसकाशं[2] गन्ता[2] अदितिः अदीनोऽतिसमृद्धः कक्ष्यः कक्ष्यपूरकश्च भवतीति शेषः । ते विश्ववारादयः सत्रे प्रवृत्ताः एतवे सोमं प्राप्तुं तत्पानाय अन्यमन्यं परस्परं सम्[3] अर्थयन्ति याचन्तेऽनुज्ञाम् । ते विषाणं विशेषेण मदस्य दातारं परिपानम् अन्ति अन्तिके विदुः जानन्ति लभन्ते वा ॥

**सदापृणो यजतो वि द्विषो वधीद्बाहुवृक्तः श्रुतवित्तर्यो वः सचा ।**
**उभा स वरा प्रत्येति भाति च यदीं गणं भजते सुप्रयावभिः ॥ १२ ॥**

सदाऽपृणः । यजतः । वि । द्विषः । वधीत् । बाहुऽवृक्तः । श्रुतऽवित् । तर्यः । वः । सचा ।
उभा । सः । वरा । प्रति । एति । भाति । च ।
यत् । ईम् । गणम् । भजते । सुप्रयावऽभिः ॥ १२ ॥

सदापृणः सर्वदा दानशील एतन्नामा यजतः यष्टा च[4] बाहुवृक्तः बाहुभ्यां वृक्तदर्भश्च श्रुतवित् श्रुतस्य वेत्ता च तर्यः च । एतेषां पञ्चानां परस्परापेक्षया प्रत्येकमेकवचनम् । सः सः[5] ऋषिः द्विषः शत्रून् वि वधीत् हिंस्यात् वः युष्माकं सचा सहितः । युष्माभिः सहित इत्यर्थः । सः ऋषिः वरा श्रेष्ठौ उभा उभौ इहलोकपरलोकविषयौ कामौ प्रत्येति अभिगच्छति । भाति च । यत् यस्मात् ईम् एनं गणं देवसंघं सुप्रयावभिः सुष्ठु प्रकर्षेण मिश्रयद्भिः स्तोत्रैः भजते तस्मादेवं भवतीति[6] ॥

---

१. ख-च-झ-ण-भ-र–मददेवयत्येवम् ; न–मद यज । २. च-झ-ण-त-भ-र–मातृसकाशगां माम् ; न–मातृसकाशगामी । ३. ख-च-झ-ण-त-न-भ-र-श–'सम्' नास्ति । ४. ख-च-झ-ण-न-भ–'च' नास्ति । ५. च-त-भ-र–'सः' नास्ति । ६. घ-ज-श–भातीति ।

सुतंभरो यजमानस्य सत्पतिर्विश्वासामूधः स धियामुदञ्चनः ।
भरद्धेनू रसवच्छिश्रिये पयोऽनुब्रुवाणो अध्येति न स्वपन् ॥ १३ ॥

सुतम्ऽभरः । यजमानस्य । सत्ऽपतिः । विश्वासाम् । ऊधः । सः । धियाम् । उत्ऽअञ्चनः ।
भरत् । धेनुः । रसऽवत् । शिश्रिये । पयः । अनुऽब्रुवाणः । अधि । एति । न । स्वपन् ॥ १३ ॥

यजमानस्य अवत्सारस्य मम सुतंभरः यागनिर्वाहक एतन्नामा ऋषिः सत्पतिः सतां विद्यमानानां फलानां पालयिता होता भवतीत्यर्थः । सः च विश्वासां धियां सर्वेषां कर्मणाम् ऊधः उद्धततरं फलम् उदञ्चनः ऊर्ध्वमुद्गमयिता फलप्रापक इत्यर्थः । धेनुः गौः[1] रसवत् सारवत् पयः भरत् अहरत् । तत्र पयः शिश्रिये श्रयति चास्य सामर्थ्यात् । तत्सर्वम् अनुब्रुवाणः अनुक्रमेण संकीर्तयन् न स्वपन् स्वापमकुर्वन् अनवरतम् अध्येति स्मरत्यवत्सारः । सुतंभरस्तादृश इति ॥

यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १४ ॥

यः । जागार । तम् । ऋचः । कामयन्ते । यः । जागार । तम् । ऊँ इति । सामानि । यन्ति ।
यः । जागार । तम् । अयम् । सोमः । आह । तव । अहम् । अस्मि । सख्ये । निऽओकाः ॥ १४ ॥

यः देवः जागार सर्वदा विनिद्रो जागरूको गृहे वर्तते तम् ऋचः सर्वशास्त्रात्मिकाः कामयन्ते । यः च जागार तमु तमेव सामानि स्तोत्ररूपाणि[2] यन्ति प्राप्नुवन्ति । यो जागार तमयम् अभिषुतः सोमः आह वक्ति मां स्वीकुर्विति । हे अग्ने तादृशस्य तव सख्ये समानख्याने हितकरणे न्योकाः नियतस्थानः अहम् अस्मि भवामि ॥

अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति ।
अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १५ ॥

अग्निः । जागार । तम् । ऋचः । कामयन्ते । अग्निः । जागार । तम् । ऊँ इति । सामानि । यन्ति ।
अग्निः । जागार । तम् । अयम् । सोमः । आह । तव । अहम् । अस्मि । सख्ये । निऽओकाः ॥ १५ ॥

पूर्वयैव[3] निगदितव्याख्या । य इत्यस्य स्थानेऽग्निरिति विशेषः ॥　॥ २५ ॥　॥ ३ ॥

अथ चतुर्थेऽनुवाके द्वादश सूक्तानि । तत्र 'विदा दिवः' इत्येकादशर्चं प्रथमं सूक्तम् । सदापृणो नामात्रेय ऋषिः । त्रिष्टुप् छन्दः । 'वै तत्' इत्युक्तत्वादिदमपि वैश्वदेवम् । 'विदा एकादश सदापृणः' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

---

१. ख-च-झ-ण-न-भ-र-'गौः' नास्ति । २. ख-च-झ-ण-न-भ-स्तोत्ररूपाणि सर्वाणि । ३. ख-च-ण-त-भ-र-अग्निर्जागार इति पञ्चदशी पूर्वयैव ।

विदा दिवो विष्यन्नद्रिमुक्थैरायत्या उषसो अर्चिनो गुः ।
अपावृत व्रजिनीरुत्स्वर्गाद्वि दुरो मानुषीर्देव आवः ॥ १ ॥

विदाः । दिवः । विऽस्यन् । अद्रिम् । उक्थैः । आऽयत्याः । उषसः । अर्चिनः । गुः ।
अप । अवृत । व्रजिनीः । उत् । स्वः । गात् । वि । दुरः । मानुषीः । देवः । आवरित्यावः ॥१॥

अत्रेन्द्रादयो लिङ्गोक्तदेवताः । अत्राङ्गिरसां पणिभिरपहृत्य गिरेरधः स्थापितानां गवामिन्द्रेण विमोकः प्रतिपाद्यते । ᵛविदाः अवेदयदिन्द्रः । किम् । गा निगूढा इति संबन्धः । किं कुर्वन् । ᵛउक्थैः अङ्गिरसां स्तुतिभिर्निमित्तभूताभिः ᵛअद्रिं वज्रं ᵛविष्यन् प्रक्षिपन् । रक्षकाणामुपरि गिरिभेदनाय च विष्यन् । ᵛआयत्याः आगामिन्याः ᵛउषसः संबन्धिनः ᵛअर्चिनः रश्मयः ᵛगुः अगच्छन् सर्वत्र प्रसृता अभवन् । ᵛअपावृत अपावृणोत् ᵛव्रजिनीः तमःपुञ्जवतीर्निशाः । ᵛस्वः स्वरणशीलः[1] आदित्यः ᵛउत् ᵛगात् उदगात् । तथा कृत्वा ᵛमानुषीः मनुष्यसंबन्धिनीः ᵛदुरः द्वाराणि ᵛदेवः सूर्यः ᵛवि ᵛआवः व्यवृणोत् । अन्धकारापनयनेन मनुष्यादिव्यवहारायाकरोदित्यर्थः ॥

वि सूर्यो अमतिं न श्रियं सादोर्वाद्गवां माता जानती गात् ।
धन्वर्णसो नद्यः खादोअर्णाः स्थूणेव सुमिता दृंहत द्यौः ॥ २ ॥

वि । सूर्यः । अमतिम् । न । श्रियम् । सात् ।
आ । ऊर्वात् । गवाम् । माता । जानती । गात् ।
धन्वऽअर्णसः । नद्यः । खादःऽअर्णाः । स्थूणाऽइव । सुऽमिता । दृंहत । द्यौः ॥ २ ॥

ᵛसूर्यः देवः ᵛश्रियं दीप्तिं ᵛवि ᵛसात् विभजते प्रकाशयतीत्यर्थः । ᵛअमतिं ᵛन । रूपनामैतत् । रूपमिव द्रव्यम् । यथा द्रव्याणि घटपटादीनि नीलपीतादिरूपं लभन्ते तद्वत् । तथा ᵛगवां रश्मीनां ᵛमाता उषाः ᵛजानती सूर्य उदेष्यति मया च व्युच्छनं[2] कर्तव्यमिति जानती ᵛऊर्वात् महतोऽन्तरिक्षात् ᵛआ ᵛगात् आगच्छति । तथा ᵛनद्यः च ᵛधन्वर्णसः ॥ धन्वतिर्गतिकर्मा । धन्वन्ति गच्छन्त्यर्णांसि यासु तास्तथोक्ताः । दीर्घाभावश्छान्दसः ॥ ᵛखादोअर्णाः भक्षितकूलोदकाः । कूलंकषा इत्यर्थः । नद्यश्चैवंरूपा भवन्ति । किंच ᵛद्यौः च ᵛसुमिता सुष्ठु गृहे[3] स्थापिता[3] ᵛस्थूणेव गृहाधारस्तम्भ इव ᵛदृंहत दृढाभवत्[4] । एतत्सर्वं सूर्यस्याज्ञयेति भावः ॥

अस्मा उक्थाय पर्वतस्य गर्भो महीनां जनुषे पूर्व्याय ।
वि पर्वतो जिहीत साधत द्यौराविवासन्तो दसयन्त भूम ॥ ३ ॥

अस्मै । उक्थाय । पर्वतस्य । गर्भः । महीनाम् । जनुषे । पूर्व्याय ।
वि । पर्वतः । जिहीत । साधत । द्यौः । आऽविवासन्तः । दसयन्त । भूम ॥ ३ ॥

---

१. ख-च-झ-ण-त-न-भ-र-सरणशीलः । २. त-र-व्युच्छन्दनम् । ३. ख-च-ण-गृहस्थापिता ; झ-भ-र-गृहास्थापिता । ४. ख-च-ण-भ-दृढीभवत् ।

ᵛअस्मै मह्यम् ᵛउक्थाय स्तोत्रे ᵛपर्वतस्य पर्ववतो मेघस्य ᵛगर्भः गर्भस्थानीयमुदकं ᵛजिहीत चलति। चालयति वेन्द्रः। कीदृशायास्मै। ᵛमहीनां महतीनां स्तुतीनां[1] ᵛजनुषे उत्पादयित्रे ᵛपूर्व्याय प्रत्नाय। तदेव पुनरुच्यते। ᵛपर्वतः मेघः ᵛवि जिहीत। ᵛद्यौः च ᵛसाधत साधयति वृष्टिम्। ᵛआविवासन्तः सर्वतः परिचरन्तोऽङ्गिरसः ᵛभूम अत्यधिकं ᵛदसयन्त उपक्षपयन्त्यात्मानं कर्मभिः॥

सूक्तेभिर्वो वचोभिर्देवजुष्टैरिन्द्रा न्वग्नी अवसे हुवध्यै।

उक्थेभिर्हि ष्मा कवयः सुयज्ञा आविवासन्तो मरुतो यजन्ति ॥ ४ ॥

सुऽउक्तेभिः। वः। वचःऽभिः। देवऽजुष्टैः। इन्द्रा। नु। अग्नी इति। अवसे। हुवध्यै।

उक्थेभिः। हि। स्म। कवयः। सुऽयज्ञाः। आऽविवासन्तः। मरुतः। यजन्ति ॥ ४ ॥

हे ᵛइन्द्रा हे ᵛअग्नी। परस्परापेक्षया प्रत्येकं द्विवचनम्। यद्यप्येकमेव पदं मध्ये व्यवधानं छान्दसम्। हे इन्द्राग्नी ᵛवः युवाम्॥ व्यत्ययेन बहुवचनम्॥ ᵛदेवजुष्टैः देवैः सेवनीयैः ᵛसूक्तेभिः सूक्तैः सुवचनैः शोभनगुणप्रकाशनप्रवणैः ᵛवचोभिः ᵛअवसे अस्मद्रक्षणाय ᵛहुवध्यै आह्वयामि। ᵛनु क्षिप्रं युवाम् ᵛउक्थेभिः स्तोत्रैः ᵛकवयः अनूचानाः पूर्वे ऋषयः ᵛसुयज्ञाः शोभनयागाः ᵛआविवासन्तः स्तुत्यादिना परिचरन्तः ᵛमरुतः मरुत्सदृशाः कर्मसु शीघ्राः ᵛयजन्ति पूजयन्ति। ᵛहि ᵛस्म इति पूरणौ॥

एतो न्वद्य सुध्यो३ भवाम प्र दुच्छुना मिनवामा वरीयः।

आरे द्वेषांसि सनुतर्दधामायाम प्राञ्चो यजमानमच्छ ॥ ५ ॥

एतो इति। नु। अद्य। सुऽध्यः। भवाम। प्र। दुच्छुनाः। मिनवाम। वरीयः।

आरे। द्वेषांसि। सनुतः। दधाम। अयाम। प्राञ्चः। यजमानम्। अच्छ ॥ ५ ॥

अयमङ्गिरसां वादः। ᵛअद्य अस्मिन् यागदिने ᵛनु क्षिप्रम् ᵛएतो[2] एत गच्छत। ᵛसुध्यः शोभनकर्माणः ᵛभवाम। ᵛदुच्छुनाः द्विषः ᵛप्र ᵛमिनवाम प्रकर्षेण हिंसाम ᵛवरीयः अत्यन्तमित्यर्थः। तदेवोच्यते। ᵛसनुतः संभक्तॄन् ᵛद्वेषांसि यजमानस्य द्वेष्टॄन् ᵛआरे दूरे ᵛदधाम स्थापयाम। यद्वा। सनुतरित्यन्तर्हितनाम। पूर्वं प्रकाशवैरिणां वध उक्त इदानीं प्रच्छन्नानामिति विवेकः। तदर्थं ᵛयजमानं ᵛप्राञ्चः[3] सदापृणमवत्सारं च[4] ᵛअच्छ अभिमुखम्[4] ᵛअयाम गच्छाम॥ ॥ २६ ॥

---

१. ख-च-झ-ण-न-भ-र-'स्तुतीनाम्' नास्ति। २. त-'एतो' नास्ति। ३. ख-च-झ-ण-त-न-भ-र-श-'प्राञ्चः' नास्ति। ४. ख- वाभिमुखम्; च-ण-नाभिमुखम्; झ-न-भ-र-श-वाच्छाभिमुखम्।

एता धियं कृणवामा सखायोऽप या माताँ ऋणुत व्रजं गोः ।
यया मनुर्विशिशिप्रं जिगाय यया वणिग्वङ्कुरापा पुरीषम् ॥ ६ ॥

आ । इत । धियम् । कृणवाम । सखायः । अप । या । माता । ऋणुत । व्रजम् । गोः ।
यया । मनुः । विशिऽशिप्रम् । जिगाय । यया । वणिक् । वङ्कुः । आप । पुरीषम् ॥ ६ ॥

इदमप्यङ्गिरसां वाक्यम् । ^v^एत आगच्छत । आगत्य च ^v^धियं स्तुतिं ^v^कृणवाम करवाम । हे ^v^सखायः परस्परं सखिभूता अङ्गिरस इत्यङ्गिरसां वचनम् । ^v^या धीः ^v^माता गवां निर्मात्री ^v^गोः गवां ^v^व्रजं पणिभिरपहृतम् ^v^अप ^v^ऋणुत अपावृणोत्[1] । ^v^यया च ^v^मनुः ^v^विशिशिप्रं विगतहनुं शत्रुं ^v^जिगाय जितवान् । यद्वा । मनुः सर्वस्य मन्तेन्द्रो विशिशिप्रो वृत्रः । स तमस्माभिः कृतया स्तोमलक्षणया[2] धिया जिगाय । ^v^यया च ^v^वणिक् वणिगिवाल्पेन कर्मणा बहुफलाकाङ्क्षी कक्षीवान् ^v^वङ्कुः जलेच्छया वनगामी ^v^पुरीषं पूरकमुदकम् ^v^आप । 'याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशः' ( ऋ. सं. १. ११२. ११ ) इति हि श्रुतम् ॥

अनूनोदत्र हस्तयतो अद्रिरार्चन्येन दश मासो नवग्वाः ।
ऋतं यती सरमा गा अविन्दद्विश्वानि सत्याङ्गिराश्चकार ॥ ७ ॥

अनूनोत् । अत्र । हस्तऽयतः । अद्रिः । आर्चन् । येन । दश । मासः । नवऽग्वाः ।
ऋतम् । यती । सरमा । गाः । अविन्दत् । विश्वानि । सत्या । अङ्गिराः । चकार ॥ ७ ॥

^v^अत्र अस्मिन् यज्ञे ^v^अद्रिः अभिषवग्रावा ^v^हस्तयतः हस्तेन संहतः सन् ^v^अनूनोत् । नौतिरत्र शब्दमात्रे वर्तते । अशब्दयत् । ^v^येन ग्राव्णा तदभिषवेण ^v^दश ^v^मासः मासान् दशमासपर्यन्तं ^v^नवग्वाः । नवमासपर्यन्तं गवार्थमनुतिष्ठन्तोऽङ्गिरसो नवग्वाः । नवगोयुक्ता वा ^v^आर्चन् अपूजयन्निन्द्रम् । यद्वा । दशसंख्याकमासोपेता दशमासानुष्ठाना अङ्गिरसः अपरे[3] नवग्वाश्चैते सर्वेऽपि येनार्चन्ति । 'नवग्वासः सुतसोमास इन्द्रम्' ( ऋ. सं. ५. २९. १२ ) इति हि निगमः । ^v^ऋतं सत्यं यज्ञं वा ^v^यती प्राप्नुवती ^v^सरमा सरणशीला स्तुतिरूपा वागङ्गिरसां गवार्थमिन्द्रेण प्रहिता देवशुनी वा[4] ^v^गा ^v^अविन्दत् पणिभिरपहृताः । ^v^विश्वानि सर्वाणि स्तुत्यादिलक्षणानि ^v^सत्या सत्यानि ^v^चकार ^v^अङ्गिराः ॥

विश्वे अस्या व्युषि माहिनायाः सं यद्गोभिरङ्गिरसो नवन्त ।
उत्स आसां परमे सधस्थ ऋतस्य पथा सरमा विदद्गाः ॥ ८ ॥

विश्वे । अस्याः । विऽउषि । माहिनायाः । सम् । यत् । गोभिः । अङ्गिरसः । नवन्त ।
उत्सः । आसाम् । परमे । सधऽस्थे । ऋतस्य । पथा । सरमा । विदत् । गाः ॥ ८ ॥

---

१. ख-च-झ-ण-न-भ- गा व्यवृणोत्; त-र-अपाव्यवृणोत् । २. ख-च-झ-ण-न-भ-र-सोमलक्षणया । ३. त-अवरे । ४. ख-च-झ-ण-त-न-भ-र-श-'वा' नास्ति ।

ᐯविश्वे सर्वे ᐯअङ्गिरसः ᐯमाहिनायाः मंहनीयायाः ᐯअस्याः उषसः ᐯव्युषि व्युच्छने सति गवामावरकेऽन्धकारेऽपवृते सति ᐯयत् यदा ᐯगोभिः ᐯसं ᐯनवन्त संजग्मिरे तदा ᐯआसां गवाम् ᐯउत्सः क्षीराद्युत्स्रावः ᐯपरमे उत्कृष्टे ᐯसधस्थे सहस्थाने यज्ञे उपयुक्तोऽभवदित्यर्थः । ᐯऋतस्य सत्यस्य ᐯपथा मार्गेण ᐯसरमा वाक् देवशुनी वा ᐯगाः निगूढाः ᐯविदत् अलभत । यद्वा । आसां गवां परमे सधस्थे सहस्थाने व्रजस्य निगूहनप्रदेश उत्स उदकस्य प्रस्रवणो वर्तते । बिलमित्यर्थः । तेन ऋतस्य उदकस्य पथा मार्गेण सरमा गा विदत् ॥

आ सूर्यो॑ यातु स॒प्ताश्वः॒ क्षेत्रं॒ यद॑स्योर्वि॒या दी॑र्घया॒थे ।
र॒घुः श्ये॒नः प॑तय॒दन्धो॒ अच्छा॒ युवा॑ क॒विर्दी॑दय॒द्गोषु॒ गच्छ॑न् ॥ ९ ॥

आ । सूर्यः॑ । या॒तु॒ । स॒प्तऽअ॑श्वः । क्षेत्र॑म् । यत् । अ॒स्य॒ । उ॒र्वि॒या । दी॒र्घ॒ऽया॒थे ।
र॒घुः । श्ये॒नः । प॒त॒य॒त् । अन्धः॑ । अच्छ॑ । युवा॑ । क॒विः । दी॒द॒य॒त् । गोषु॑ । गच्छ॑न् ॥ ९ ॥

ᐯसूर्यः सर्वस्य प्रेरको देवः ᐯसप्ताश्वः सर्पणस्वभावाश्वोपेतः सप्तसंख्याकाश्वो वा ᐯआ ᐯयातु अस्मदभिमुखमागच्छतु । ᐯयत् यस्मात् ᐯअस्य सूर्यस्य ᐯदीर्घयाथे दीर्घगमने ᐯक्षेत्रं गन्तव्यप्रदेशः ᐯउर्विया उरु अतिप्रभूतायामः । स एव देवः ᐯरघुः लघुगमनः सन् ᐯश्येनः शंसनीयगमनः ᐯअन्धः दीयमानं हविः ᐯअच्छ अभिलक्ष्य ᐯपतयत् आगच्छति । ᐯयुवा सर्वत्र मिश्रयिता ᐯकविः क्रान्तदर्शी सन् ᐯगोषु[१] रश्मिषु ᐯगच्छन्[१] मध्ये[२] वर्तयन्[२] ᐯदीदयत् दीप्यते। यद्वा। श्येनः सुपर्णो[३]ऽन्धोऽच्छ पतयत्[३]। द्युलोकस्थं सोमलक्षणं देवानामन्नमस्मद्यागार्थमानेतुं तदभिमुखमगात् । युवेत्यादि शिष्टं समानम् ॥

आ सूर्यो॑ अरुहच्छु॒क्रमर्णोऽयु॑क्त य॒द्धरितो॑ वी॒तपृ॑ष्ठाः ।
उ॒द्ना न नाव॑मनयन्त॒ धीरा॑ आशृ॒ण्वतीरापो॑ अ॒र्वाग॑तिष्ठन् ॥ १० ॥

आ । सूर्यः॑ । अ॒रु॒ह॒त् । शु॒क्रम् । अर्णः॑ । अयु॑क्त । यत् । ह॒रितः॑ । वी॒तऽपृ॑ष्ठाः ।
उ॒द्ना । न । नाव॑म् । अ॒न॒य॒न्त॒ । धीराः॑ । आ॒ऽशृ॒ण्वतीः॑ । आपः॑ । अ॒र्वाक् । अ॒ति॒ष्ठ॒न् ॥ १० ॥

ᐯसूर्यः देवः ᐯशुक्रं दीप्तम् ᐯअर्णः उदकं प्रति ᐯआ ᐯअरुहत् सर्वतः प्रादुर्भवति । ᐯयत् यस्मात् यदा वा ᐯहरितः अश्वान् ᐯवीतपृष्ठाः कान्तपृष्ठान् ᐯअयुक्त रथे अयोजयत्[४] तदा तं सूर्यं ᐯधीराः धीमन्तो यजमानादयः ᐯउद्ना उदकेन ᐯनावं[५] ᐯन[५] नावमिव ᐯअनयन्त । तदा ᐯआश्रृण्वतीः सर्वतोऽनुज्ञां कुर्वाणाः ᐯआपः ᐯअर्वाक्[६] अवाङ्मुखाः ᐯअतिष्ठन् अभवन् ॥

---

१. ख-च-झ-ण-त-न-भ-र–' गोषु रश्मिषु गच्छन् ' नास्ति । २. ख-च-ण-न-भ–' मध्ये वर्तयन् ' नास्ति । ३. ख-च-ण–सुष्ठु अन्धो अपतयत्; झ-भ-न-र–सुअन्धो अपतयत्; श–अन्धो अपतयत् । ४. ख-च-झ-ण-भ–अयोजत; र–अयोजयत । ५. ख-च-ण–नावम् ; झ–नावमित् ; न-भ–' नावं न ' नास्ति; र-नावमिव । ६. ख-च-झ-ण-न-भ-र–' अर्वाक् ' नास्ति ।

धियं वो अप्सु दधिषे स्वर्षां ययातरन्दश मासो नवग्वाः ।
अया धिया स्याम देवगोपा अया धिया तुतुर्यामात्यंहः ॥ ११ ॥

धियम् । वः । अप्ऽसु । दधिषे । स्वःऽसाम् । यया । अतरन् । दश । मासः । नवऽग्वाः ।
अया । धिया । स्याम । देवऽगोपाः । अया । धिया । तुतुर्याम । अति । अंहः ॥ ११ ॥

हे देवाः ᵛवः[1] युष्माकं ᵛधियं स्तुतिम् ᵛअप्सु[2] अब्निमित्तां[2] ᵛस्वर्षां सर्वस्य दात्रीं ᵛदधिषे धारयामि ॥ व्यत्ययेन मध्यमः ॥ ᵛयया धिया कर्मणा ᵛनवग्वाः अङ्गिरसः ᵛदश ᵛमासः ᵛअतरन् सत्रमनुतिष्ठन्तः[3] ᵛअया अनया ᵛधिया ᵛदेवगोपाः देवैर्गुप्ताः ᵛस्याम भवेम । ᵛअया ᵛधिया ᵛअंहः पापम् ᵛअति[4] ᵛतुतुर्याम अतितरेम[5] ॥ ॥ २७ ॥

‘ हयो न[6] ’ इत्यष्टर्चं द्वितीयं सूक्तं प्रतिक्षत्रस्यार्षम् । अष्टमी द्वितीया च त्रिष्टुभौ शिष्टाः षड् जगत्यः । आदितः षड्वैश्वदेव्यः सप्तम्यष्टम्योर्देवपत्न्यो देवता । तथा चानुक्रान्तं—‘ हयोऽष्टौ प्रतिक्षत्रोऽन्त्यो दृचो देवपत्नीस्तवोऽन्त्या त्रिष्टुप् द्वितीया च ’ इति । सूक्तविनियोगो लैङ्गिकः ॥

हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम् ।
नास्या वश्मि विमुचं नावृतं पुनर्विद्वान्पथः पुरएत ऋजु नेषति ॥ १ ॥

हयः । न । विद्वान् । अयुजि । स्वयम् । धुरि । ताम् । वहामि । प्रऽतरणीम् । अवस्युवम् ।
न । अस्याः । वश्मि । विऽमुचम् । न । आऽवृतम् । पुनः ।
विद्वान् । पथः । पुरःऽएता । ऋजु । नेषति ॥ १ ॥

ᵛहयो ᵛन अश्व इव ᵛविद्वान् सर्वज्ञः प्रतिक्षत्रः ᵛस्वयम् अनन्यप्रेरितः सन् ᵛधुरि यज्ञात्मिकायाम् ᵛअयुजि युक्तोऽभवत् । ᵛतां धुरं ᵛप्रतरणीं प्रकर्षेण तारयित्रीम् ᵛअवस्युवं रक्षयित्रीं ᵛवहामि । धारयाम्यहमध्वर्युर्होता वा । ᵛअस्याः धुरः ᵛविमुचं विमोचनं परित्यागं ᵛन ᵛवश्मि न कामये । ᵛनावृतं ᵛपुनः[7] पुनरावरणं धारणमपि न च वश्मि । मम को[8] भार इति[8] तदेवोच्यते । ᵛविद्वान् मार्गाभिज्ञोऽन्तर्यामी देवः ᵛपुरएता पुरतो गन्ता सन् ᵛपथः यज्ञमार्गान् ᵛऋजु अकुटिलं ᵛनेषति प्रापयति ॥

---

१. ख-च-झ-ण-न-भ-र–‘ वः ’ नास्ति । २. ख-च-झ-ण-न-भ-र–‘ अप्सु अब्निमित्ताम् ’ नास्ति । ३. ग-घ-ज–समनुतिष्ठन्तः; त-र–सर्वत्रमनुतिष्ठन्तः । ४. ख-च-झ-ण-न-भ-र-श–‘ अति ’ नास्ति । ५. ख-च-ण-भ–तरेम । ६. त–न विद्वान् । ७. ख-च-झ-ण-त-न-भ-र–‘ पुनः ’ नास्ति । ८. ख-च-ण–को भारोच्यतेति; झ-त-भ-र–को भारोच्येति; न–को भारो भवतीति; श–को भारो देवोच्यते ।

अग्न इन्द्र वरुण मित्र देवाः शर्धः प्र यन्त मारुतोत विष्णो ।
उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषन्त ॥ २ ॥

अग्ने । इन्द्र । वरुण । मित्र । देवाः । शर्धः । प्र । यन्त । मारुत । उत । विष्णो इति ।
उभा । नासत्या । रुद्रः । अध । ग्नाः । पूषा । भगः । सरस्वती । जुषन्त ॥ २ ॥

हे अग्ने इन्द्र वरुण मित्र हे[1] देवाः यूयं शर्धः बलमस्माकं प्र यन्त प्रापयत ॥ अत्र सर्वत्र पूर्वस्याविद्यमानत्वेनोत्तरस्योत्तरस्य पादादित्वादनिघातः । प्रथमस्य तु स्वत एव पादादित्वम् ॥ उत अपि च हे मारुत मारुतानि मरुतां बलानि हे विष्णो यूयं शर्धः प्र यन्त । विष्णो इत्यस्य उत इत्यनेन व्यवधानान्निघातः ॥ किंच उभा उभौ नासत्या सत्यभूतौ रुद्रः अध अथ ग्नाः एतेषां देवानां स्त्रियश्च पूषा भगः सरस्वती च जुषन्त सेवन्तामस्मदीयं यज्ञं स्तुतिं वा ॥

इन्द्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः ।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥ ३ ॥

इन्द्राग्नी इति । मित्रावरुणा । अदितिम् । स्व१रिति स्वः ।
पृथिवीम् । द्याम् । मरुतः । पर्वतान् । अपः ।
हुवे । विष्णुम् । पूषणम् । ब्रह्मणः । पतिम् । भगम् । नु । शंसम् । सवितारम् । ऊतये ॥ ३ ॥

इन्द्रादिसवित्रन्तान् चतुर्दश देवान् ऊतये अस्मद्रक्षणाय हुवे आह्वयामि स्तौमि[2] वा ॥ स्वरित्यादित्य उच्यते स्वरणात्[2] ॥

उत नो विष्णुरुत वातो अस्रिधो द्रविणोदा उत सोमो मयस्करत् ।
उत ऋभव उत राये नो अश्विनोत त्वष्टोत विभ्वानु मंसते ॥ ४ ॥

उत । नः । विष्णुः । उत । वातः । अस्रिधः । द्रविणःऽदाः । उत । सोमः । मयः । करत् ।
उत । ऋभवः । उत । राये । नः । अश्विना । उत । त्वष्टा । उत । विऽभ्वा । अनु । मंसते ॥४॥

उत अपि च नः अस्माकं विष्णुः व्यापको देवः मयस्करत् । मय इति सुखनाम । सुखं करोतु । उत अपि च वातः वायुः अस्रिधः अहिंसकः सन् मयस्करत् । किंच द्रविणोदाः धनस्य दाता सोमः अपि मयस्करत् । उत अपि च ऋभवः नः अस्मभ्यं राये धनाय अनु मंसते अनुमन्यन्ताम् । उत अश्विना[3] अश्विनौ च उत त्वष्टा देवः उत विभ्वा ऋभूणामन्यतमो देवः । एते सर्वेऽप्यनु मंसते । यद्वा । अनुमंस्त इति प्रत्येकं संबन्धनीयम् ॥

---

१. ग-घ-ज-श–' हे ' नास्ति ।　२. ग-घ-ज–स्वः आदित्यः नु क्षिप्रं प्रशस्यं सवितृविशेषणम् ।
३. ख-च-झ-ण-न-भ-र-श–' अश्विना ' नास्ति ।

उत त्यन्नो मारुतं शर्ध आ गमद्दिविक्षयं यजतं बर्हिरासदे ।
बृहस्पतिः शर्म पूषोत नो यमद्वरूथ्यं१ वरुणो मित्रो अर्यमा ॥ ५ ॥

उत । त्यत् । नः । मारुतम् । शर्धः । आ । गमत् । दिविऽक्षयम् । यजतम् । बर्हिः । आऽसदे ।
बृहस्पतिः । शर्म । पूषा । उत । नः । यमत् । वरूथ्यम् । वरुणः । मित्रः । अर्यमा ॥ ५ ॥

ᵛउत अपि च ᵛत्यत् तत् ᵛमारुतं ᵛशर्धः मरुतां बलं संघः ᵛनः अस्मान् ᵛआ ᵛगमत् आगच्छतु । कीदृशं तच्छर्धः । ᵛदिविक्षयं द्युलोके वर्तमानं ᵛयजतं पूज्यम् । किमर्थमागमनमिति तदुच्यते । ᵛबर्हिः बर्हिषि ᵛआसदे उपवेष्टुम् । उपविश्य हविःस्वीकारायेत्यर्थः । किंच ᵛबृहस्पतिः देवः ᵛशर्म सुखं ᵛयमत् यच्छतु । ᵛउत ᵛनः अस्मभ्यं ᵛपूषा अपि यमत् । कीदृशं शर्म । ᵛवरूथ्यम् । वारयति शीतवातादिकमिति वरूथं गृहम् । तदर्हं वरूथ्यम् । किंच वरुणादयस्त्रयोऽपि प्रत्येकं शर्म यच्छन्तु[1] ॥

उत त्ये नः पर्वतासः सुशस्तयः सुदीतयो नद्य१स्त्रामणे भुवन् ।
भगो विभक्ता शवसावसा गमदुरुव्यचा अदितिः श्रोतु मे हवम् ॥ ६ ॥

उत । त्ये । नः । पर्वतासः । सुऽशस्तयः । सुऽदीतयः । नद्यः । त्रामणे । भुवन् ।
भगः । विऽभक्ता । शवसा । अवसा । आ । गमत् । उरुऽव्यचाः । अदितिः । श्रोतु । मे । हवम् ॥ ६ ॥

ᵛउत अपि च ᵛत्ये ते ᵛपर्वतासः पर्ववन्तः अद्रयः ᵛसुशस्तयः शोभनस्तुतयः किंच ᵛसुदीतयः सुदानाः ᵛनद्यः च ᵛत्रामणे पालने ᵛनः अस्माकं ᵛभुवन् भवन्तु । ᵛभगः देवः ᵛविभक्ता धनानां विभागकर्ता दाता सन् ᵛशवसा अन्नेन ᵛअवसा रक्षणेन च सह ᵛआ ᵛगमत् आगच्छतु । ᵛउरुव्यचाः प्रभूतव्याप्तिः ᵛअदितिः अदीना देवमाता ᵛमे ᵛहवं स्तुतिमाह्वानं वा ᵛश्रोतु शृणोतु ॥

पत्नीसंयाजेषु देवपत्नीनां ‘ देवानां पत्नीः ’ इत्यादिके द्वे याज्यानुवाक्ये । सूत्रितं च— ‘ देवानां पत्नीरुशतीरवन्तु न इति द्वे ’ ( आश्व. श्रौ. १. १० ) इति ॥ आग्निमारुतशस्त्रेऽप्येते । ‘ देवानां पत्नीरुशतीरवन्तु न इति द्वे राकामहमिति द्वे ’ ( आश्व. श्रौ. ५. २० ) इति ॥

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥ ७ ॥

देवानाम् । पत्नीः । उशतीः । अवन्तु । नः । प्र । अवन्तु । नः । तुजये । वाजऽसातये ।
याः । पार्थिवासः । याः । अपाम् । अपि । व्रते । ताः । नः । देवीः । सुऽहवाः । शर्म । यच्छत ॥ ७ ॥

---

१. ख-च-ण-भ–यच्छतु; झ-र–यच्छ ।

vदेवानाम् इन्द्रादीनां vपत्नीः पत्न्यः vउशतीः उशत्योऽस्मदीयां स्तुतिं कर्म वा कामयमानाः vनः अस्मान् vअवन्तु रक्षन्तु । तथा vनः अस्माकं vतुजये बलवते पुत्राय vवाजसातये अन्नलाभाय संग्रामाय वा vप्रावन्तु प्रकर्षेण रक्षन्तु गच्छन्तु वा । vयाः vपार्थिवासः पृथिवीसंबन्धिन्यः vयाः च vअपाम् उदकानां vव्रते कर्मण्यन्तरिक्षे वर्तन्ते vताः हे vदेवीः देव्यो हे vसुहवाः शोभनाह्वाना यूयं vनः अस्मभ्यं vशर्म vयच्छत[1] ॥

उ॒त ग्ना व्य॑न्तु दे॒वप॑त्नीरिन्द्रा॒ण्य१॑ग्नाय्य॒श्विनी॒ राट् ।
आ रोद॑सी वरुणा॒नी शृ॑णोतु॒ व्यन्तु॑ दे॒वीर्य ऋ॒तुर्जनी॑नाम् ॥ ८ ॥

उ॒त । ग्नाः । व्य॒न्तु॒ । दे॒वऽप॑त्नीः । इ॒न्द्रा॒णी । अ॒ग्नायी॑ । अ॒श्विनी॑ । राट् ।
आ । रोद॑सी॒ इति॑ । व॒रु॒णा॒नी । शृ॒णो॒तु॒ । व्यन्तु॑ । दे॒वीः । यः । ऋ॒तुः । जनी॑नाम् ॥ ८ ॥

vउत अपि च vग्नाः स्त्रियः vदेवपत्नीः देवपत्न्यो देवाः पतयो यासां ताः । तादृश्यः vव्यन्तु हविर्भक्षयन्तु । ता विविच्योच्यन्ते । vइन्द्राणी इन्द्रस्य पत्नी vअग्नायी अग्नेः पत्नी vअश्विनी अश्विनोः पत्नी vराट् राजमाना । किंच vरोदसी । 'रुद्रस्य पत्नी' (निरु. ११. ४९) इति यास्केनोक्तम् । एवं सति 'विषितस्तुका रोदसी' (ऋ. सं. १. १६७. ५) इत्यत्र यथाद्युदात्तप्रगृह्यते न[2] स्तः[2] तद्वदत्रापि भाव्यम् । तथापि शाकल्येन महर्षिणैवमुक्तत्वात्तथैव द्रष्टव्यम् । vवरुणानी वरुणस्य पत्नी vआ सर्वतः प्रत्येकं vशृणोतु । किंच vदेवीः पत्नीसंयाजदेव्यः vव्यन्तु खादन्तु[3] हविः । vयः vजनीनां देवजायानाम् vऋतुः कालस्तदभिमानी देवोऽपि शृणोतु वेतु च । अत्र 'अपि च ग्ना व्यन्तु देवपत्न्यः' (निरु. १२. ४६) इत्यादि निरुक्तं द्रष्टव्यम् ॥ ॥ २८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन[4] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके द्वितीयोऽध्यायः समाप्तः ॥

---

१. च-च-ण-भ–यच्छतु; झ-त-न-र–यच्छन्तु । २. ख-च-झ-ण-भ–न; न–'न स्तः' नास्ति
३. ख-च-झ-ण-त-न-भ-श–खादयन्तु; ग-घ-ज-स्वदेयम् । ४. ण–सायणाचार्येण ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ तृतीयोऽध्याय आरभ्यते । तत्र 'प्रयुञ्जती' इति सप्तर्चं तृतीयं सूक्तं प्रतिरथस्यार्षं त्रैष्टुभम् । पूर्वत्र 'वैश्वदेवं वै तत्' इत्युक्तत्वादिदमपि वैश्वदेवम् । 'प्रयुञ्जती सप्त प्रतिरथः' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

प्रयुञ्जती दिव एति ब्रुवाणा मही माता दुहितुर्बोधयन्ती ।
आविवासन्ती युवतिर्मनीषा पितृभ्य आ सदने जोहुवाना ॥ १ ॥

प्रऽयुञ्जती । दिवः । एति । ब्रुवाणा । मही । माता । दुहितुः । बोधयन्ती ।
आऽविवासन्ती । युवतिः । मनीषा । पितृऽभ्यः । आ । सदने । जोहुवाना ॥ १ ॥

एषोषस्या । ᵛप्रयुञ्जती प्राणिनः प्रस्तुतेषु कर्मसु ᵛदिवः द्युलोकात् ᵛएति आगच्छति ᵛब्रुवाणा स्तूयमाना ॥ कर्मणि कर्तृप्रत्ययः ॥ ᵛमही महती ᵛमाता प्रकाशस्य देवानां वा निर्मात्री ᵛदुहितुः भूम्याः ᵛबोधयन्ती बोधं कुर्वाणा । तदुपजीव्यत्वात् दुहितृत्वम्[1] उपचर्यते । यद्वा दुहितुर्दिव इति संबन्धः । उषसो दिवो दुहितृत्वं 'व्युच्छा दुहितर्दिवः' ( ऋ. सं. १.४८.१ ) इत्यादिषु प्रसिद्धम् । अन्यत्र च 'दिवो दुहिता भुवनस्य पत्नी' ( ऋ. सं. ७. ७५. ४ ) इत्युषसः[2] द्युदुहितृत्वम्[3] आम्नातम् । अत इदमधिगम्यते । कदाचिद्द्यौरुषसो जायत उषाश्च दिव इति । 'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये' (ऐ. ब्रा. ३. ३३) इति हि श्रूयते । लिङ्गं च दृश्यते कार्यकारणभावव्यत्यये 'अदितेर्दक्षो अजायत दक्षाद्वदितिः[4]' (ऋ. सं १०. ७२. ४) इति ॥ किंच ᵛआविवासन्ती परिचरन्ती ᵛयुवतिः मिश्रयन्ती सर्वत्र नित्यतरुणी वा ᵛमनीषा स्तुतिमती ᵛपितृभ्यः ॥ तृतीयार्थे पञ्चमी ॥ पितृभिः पालकैर्देवैः सह ᵛसदने यागगृहे ᵛआ सर्वतः ᵛजोहुवाना आहूयमाना । यद्वा । पितृभ्यः कर्मणां पालकेभ्यो यजमानेभ्य इष्टप्रापणेन पालकेभ्यो वा तेषामर्थाय जोहुवाना ॥

अजिरासस्तदप ईयमाना आतस्थिवांसो अमृतस्य नाभिम् ।
अनन्तास उरवो विश्वतः सीं परि द्यावापृथिवी यन्ति पन्थाः ॥ २ ॥

अजिरासः । तत्ऽअपः । ईयमानाः । आतस्थिऽवांसः । अमृतस्य । नाभिम् ।
अनन्तासः । उरवः । विश्वतः । सीम् । परि । द्यावापृथिवी इति । यन्ति । पन्थाः ॥ २ ॥

---

१. ख-च-झ-ण-न-भ—तद्दुहितृत्वम् । २. ख-च-ण—इति च उषसः; झ-त-न-भ-र—चोषसः । ३. ख-च-झ-ण-त-न-भ-र—दुहितृत्वम्; श—दिवो दुहितृत्वम् । ४. ख-च-ण-भ—दक्षाद्वदितिः परि ।

अजिरासः गमनशीलाः। अजिः इरच्प्रत्ययान्तः 'अजिरशिशिर°' (उ. सू. १. ५३) इत्यादिना निपातितः॥ तदपः तदेव प्रकाशनरूपं कर्म यस्य तत्तादृशमहः ईयमानाः गच्छन्तः अमृतस्य सूर्यस्य नाभिं संनाहकं मण्डलम् अमृतस्योदकस्य वा नाभिमन्तरिक्षम् आतस्थिवांसः आतिष्ठन्तः अनन्तासः अपरिमिताः उरवः व्याप्ताः पन्थाः पतनशीला रश्मयः द्यावापृथिवी परि दिवं च पृथिवीं[1] चान्तरिक्षं च विश्वतः परितः यन्ति गच्छन्ति। सीम् इति पूरणः॥

**उक्षा समुद्रो अरुषः सुपर्णः पूर्वस्य योनिं पितुरा विवेश।**

**मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यन्तौ॥ ३॥**

उक्षा। समुद्रः। अरुषः। सुऽपर्णः। पूर्वस्य। योनिम्। पितुः। आ। विवेश।

मध्ये। दिवः। निऽहितः। पृश्निः। अश्मा। वि। चक्रमे। रजसः। पाति। अन्तौ॥ ३॥

सौर्योऽयं तृचः। उक्षा उदकस्य कामानां वा सेक्ता समुद्रः समुन्दनः। यद्वा। संमोदन्ते अस्मिन्[2] देवा इति समुद्रः। अरुषः आरोचमानः सुपर्णः सुगमनः पूर्वस्य। अवयवलक्षणेयम्। पूर्वदिगवयवस्य पितुः पालकस्यान्तरिक्षस्य योनिम् उत्पादकमवयवम् आ विवेश आविष्टवान्। पश्चात् दिवः मध्ये निहितः पृश्निः। प्राश्नुत एनं वर्ण इति पृश्निरादित्यः। अश्मा सर्वत्र व्याप्तः। लुप्तोपमा वा। अश्मसदृशः। रजसः अन्तरिक्षस्य अन्तौ पूर्वापरभागौ वि चक्रमे विक्रमते। पाति च जगत्। जगद्रक्षार्थं क्रमते इत्यर्थः॥

**चत्वार ईं बिभ्रति क्षेमयन्तो दश गर्भं चरसे धापयन्ते।**

**त्रिधातवः परमा अस्य गावो दिवश्चरन्ति परि सद्यो अन्तान्॥ ४॥**

चत्वारः। ईम्। बिभ्रति। क्षेमऽयन्तः। दश। गर्भम्। चरसे। धापयन्ते।

त्रिऽधातवः। परमाः। अस्य। गावः। दिवः। चरन्ति। परि। सद्यः। अन्तान्॥ ४॥

चत्वारः ऋत्विजः ईम् एनमादित्यं क्षेमयन्तः क्षेममात्मन इच्छन्तः बिभ्रति धारयन्ति हविर्भिः[3] स्तुतिभिश्च[3]। किंच दश दिशः गर्भं गर्भवन्मध्ये उत्पन्नमेनं चरसे चरणाय उदयास्तमयव्यवहाराय धापयन्ते गमयन्ति। त्रिधातवः त्रिप्रकाराः शीतोष्णवर्षभेदेन त्रिविधाः अस्य आदित्यस्य परमाः उत्कृष्टाः गावः रश्मयः दिवः अन्तरिक्षस्य अन्तान् परि परितः सद्यः उदयानन्तरमेव चरन्ति[4] गच्छन्ति॥

---

१. ख-च-झ-ण-न-भ-'पृथिवीम्' नास्ति। २. झ-न-र-तस्मिन्। ३. ख-च-झ-ण-त-न-भ-र-'हविर्भिः स्तुतिभिश्च' नास्ति। ४. ख-च-झ-ण-त-न-भ-र-'चरन्ति' नास्ति।

इदं वपुर्निवचनं जनासश्चरन्ति यन्नद्यस्तस्थुरापः ।
द्वे यदीं बिभृतो मातुरन्ये इहेह जाते यम्या३ सबन्धू ॥ ५ ॥

इदम् । वपुः । निऽवचनम् । जनासः । चरन्ति । यत् । नद्यः । तस्थुः । आपः ।
द्वे इति । यत् । ईम् । बिभृतः । मातुः । अन्ये इति ।
इहऽइह । जाते इति । यम्या । सबन्धू इति सऽबन्धू ॥ ५ ॥

जनासः हे जना ऋत्विजः इदं पुरतः दृश्यमानं वपुः शरीरं मण्डलं निवचनं स्तुत्यं भवतीति शेषः । यन्मण्डलमुपजीव्य नद्यः चरन्ति प्रवहन्ति । आपः च यत् मण्डलमधितस्थुः । मण्डलाधीनत्वात्तासाम् । ईम् एतदुक्तलक्षणं यन्मण्डलं द्वे अहोरात्रे मातुः निर्मातुर्मातृस्थानीयादन्तरिक्षात् अन्ये इहेह जाते इह चेह च सूर्ये जाते निष्पन्ने यम्या यम्ये नियमनीये युग्मभूते वा सबन्धू समानबले समानबन्धने उभयोरप्येक एव सूर्यो बन्धकोऽक्षो ययोस्तादृश्यौ बिभृतः धारयतः ॥

वि तन्वते धियो अस्मा अपांसि वस्त्रा पुत्राय मातरो वयन्ति ।
उपप्रक्षे वृषणो मोदमाना दिवस्पथा वध्वो यन्त्यच्छ ॥ ६ ॥

वि । तन्वते । धियः । अस्मै । अपांसि । वस्त्रा । पुत्राय । मातरः । वयन्ति ।
उपऽप्रक्षे । वृषणः । मोदमानाः । दिवः । पथा । वध्वः । यन्ति । अच्छ ॥ ६ ॥

अस्मै सूर्याय धियः स्तुतीः अपांसि कर्माणि च वि तन्वते विस्तारयन्ति यजमानाः । पुत्राय पुत्रस्थानीयाय मातरः निर्मात्र्य उषसो दिशो वा वस्त्रा वस्त्राणि वयन्ति निष्पादयन्ति । वस्त्रसदृशानि तेजांसि निबिडानि संपादयन्तीत्यर्थः । वृषणः सेक्तुः सूर्यस्य उपप्रक्षे उपपर्चने संपर्के सति मोदमानाः हृष्यन्तः वध्वः वधूस्थानीया रश्मयः दिवस्पथा सूर्यसंबन्धिना मार्गेण अच्छ अस्मदभिमुखं यन्ति गच्छन्ति प्रसरन्ति ॥

तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।
अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ ७ ॥

तत् । अस्तु । मित्रावरुणा । तत् । अग्ने । शम् । योः । अस्मभ्यम् । इदम् । अस्तु । शस्तम् ।
अशीमहि । गाधम् । उत । प्रतिऽस्थाम् । नमः । दिवे । बृहते । सदनाय ॥ ७ ॥

अत्र लिङ्गसिद्धा देवताः । हे मित्रावरुणा मित्रावरुणौ तत्[1] इदं सूक्तं शस्तं स्तुतम् अस्तु भवतु । हे अग्ने तत् सूक्तं शस्तम् अस्तु । अस्मभ्यं शं सुखाय योः दुःखानाममिश्रणायेदं

१. ख-ञ-न-भ-र-श- ' तत् ' नास्ति ।

शस्तमस्तु । वयं च ᵛअशीमहि प्राप्नुयाम ᵛगाधं स्थितिम्[1] । ᵛउत अपि च ᵛप्रतिष्ठां स्थितेरविच्छित्तिं चाशीमहि । ᵛनमः नमस्करोमि ᵛदिवे द्योतमानाय सूर्याय ᵛबृहते महते ᵛसादनाय आश्रयाय विश्वस्य ॥ ॥ १ ॥

'कदु प्रियाय' इति पञ्चर्चं चतुर्थं सूक्तम् । प्रतिभानुर्नामात्रेय ऋषिः । जगती छन्दः । विश्वे देवा देवता । अत्रानुक्रमणिका—'कदु पञ्च प्रतिभानुर्जागतम्' इति । आभिप्लविके पञ्चमेऽहनि वैश्वदेवशस्त्रे इदं सूक्तं निविद्धानम् । सूत्रितं च—'कदु प्रियायेति वैश्वदेवम्' (आश्व. श्रौ. ७. ७) इति ॥

कदु॑ प्रि॒याय॒ धाम्ने॑ मनामहे॒ स्वक्ष॑त्राय॒ स्वय॑शसे म॒हे व॒यम् ।
आ॒मे॒न्यस्य॒ रज॑सो॒ यद॒भ्र आँ अ॒पो वृ॑णा॒ना वि॑त॒नोति॑ मा॒यिनी॑ ॥ १ ॥

कत् । ऊँ इति॑ । प्रि॒याय॑ । धाम्ने॑ । म॒ना॒म॒हे॒ । स्वऽक्ष॑त्राय । स्वऽय॑शसे । म॒हे । व॒यम् ।
आ॒ऽमे॒न्यस्य॑ । रज॑सः । यत् । अ॒भ्रे । आ । अ॒पः । वृ॒णा॒ना । वि॒ऽत॒नोति॑ । मा॒यिनी॑ ॥ १ ॥

अत्र वैद्युताग्निसंस्तवः । ᵛकदु कदा । उ इति पूरणः । ᵛप्रियाय सर्वेषां प्रियभूताय । वृष्टिद्वारा हविरादिप्रयोजकत्वात् सर्वप्रियत्वमस्य प्रसिद्धम् । तादृशाय ᵛधाम्ने तेजसे वैद्युताय । उत्तरवाक्ये अभ्रे अपः वितनोति इति वक्ष्यमाणत्वादिदं लभ्यते । कीदृशाय[2] । ᵛस्वक्षत्राय स्वभूतबलाय किंच ᵛस्वयशसे स्वभूतान्नाय । सर्वमप्यन्नं ह्यस्य स्वम् । ᵛमहे महते पूज्याय ᵛवयं कदा ᵛमनामहे स्तवाम । ᵛयत् । उत्तरत्र स्त्रीलिङ्गनिर्देशात् या इति विपरिणमयितव्यम् । या आग्नेयी शक्तिः ᵛआमेन्यस्य समन्तान्मातव्यस्य ᵛरजसः अन्तरिक्षस्य । अपरिमितमपि नभ इयदिति सर्वैर्मीयते । संबन्धिनि ᵛअभ्रे मेघे ᵛआ अधि मेघस्योपरि ᵛअपः उदकानि वृष्टिलक्षणानि ᵛवितनोति विस्तारयति ᵛवृणाना आच्छादयन्ती सेव्यमाना वा ᵛमायिनी । मायेति प्रज्ञानाम । प्रज्ञावती सती । यत् यस्य संबन्धिनी माध्यमिकी वागिति वा योज्यम् ॥

ता अ॑त्नत व॒युनं॑ वी॒रव॑क्षणं समा॒न्या वृ॒तया॒ विश्व॒मा रजः॑ ।
अपो॒ अपा॑ची॒रप॑रा॒ अपे॑जते॒ प्र पूर्वा॑भिस्तिरते देव॒युर्जनः॑ ॥ २ ॥

ताः । अ॒त्न॒त॒ । व॒युन॑म् । वी॒रऽव॑क्षणम् । स॒मा॒न्या । वृ॒तया॑ । विश्व॑म् । आ । रजः॑ ।
अपो॒ इति॑ । अपा॑चीः । अप॑राः । अप॑ । ई॒ज॒ते॒ । प्र । पूर्वा॑भिः । ति॒र॒ते॒ । दे॒व॒ऽयुः । जनः॑ ॥ २ ॥

इयमुषस्या । ᵛताः उषसः ᵛअत्नत वितन्वन्ति । किम् । ᵛवयुनं प्रज्ञानम् । कीदृशम् । ᵛवीरवक्षणम् । वीरैर्ऋत्विग्भिर्वहनीयम् । यद्वा । वक्षणाः कार्यवोढारो येन प्रेर्यन्ते तत्तादृशम् । किंच ᵛसमान्या एकरूपया ᵛवृतया आवरकया दीप्त्या ᵛविश्वम् ᵛआ सर्वमपि ᵛरजः जगत् अत्नत । एवं सति ᵛदेवयुः देवकामः ᵛजनः ᵛअपाचीः अपाञ्चनाः प्रतिनिवृत्तमुखीः ᵛअपराः अन्या आगामिनीः

---

१. ख-च-झ-ण-न-भ-र—स्तुतिम् । २. ख-च-झ-ण-त-न-भ-र—कीदृशाय बलाय ।

उषसः ᵛअपेजते अपचालयति । अपरोऽपशब्दः पूरणः । ᵛपूर्वाभिः ताभिः ᵛप्र ᵛतिरते । प्रपूर्वस्तिरतिर्वर्धनार्थः । वर्धयति स्वमनीषां वर्धते वा स्वयम् ॥

आ ग्राव॑भिरह॒न्ये॑भिर॒क्तुभि॒र्वरि॑ष्ठं॒ वज्र॒मा जि॑घर्ति मा॒यिनि॑ ।
श॒तं वा॒ यस्य॑ प्र॒चर॒न्त्स्वे दमे॑ संव॒र्तय॑न्तो॒ वि च॑ वर्तय॒न्नहा॑ ॥ ३ ॥

आ । ग्राव॑ऽभिः । अ॒हन्ये॑भिः । अ॒क्तुऽभिः॑ । वरि॑ष्ठम् । वज्र॑म् । आ । जि॒घ॒र्ति॒ । मा॒यिनि॑ ।
श॒तम् । वा॒ । यस्य॑ । प्र॒ऽचर॑न् । स्वे । दमे॑ । स॒म्ऽव॒र्तय॑न्तः । वि । च॒ । व॒र्तय॒न् । अहा॑ ॥३॥

अत्र पूर्वार्धे इन्द्र उच्यते उत्तरार्धे इन्द्रात्मा सूर्यः । ᵛआ हूयत इति शेषः । कैः । ᵛअहन्येभिः अहनि संपादितैः ᵛअक्तुभिः रात्रिभिः । तत्र निष्पन्नैरित्यर्थः । तथाविधैः ᵛग्रावभिः । साध्ये साधनशब्दः । ग्रावसाध्यैरभिषवैर्निमित्तभूतैः । आगत्यात्र सोमी[1] सन् ᵛमायिनि वृत्रे निमित्ते सति ᵛवरिष्ठम् उरुतरं ᵛवज्रम् ᵛआ सर्वतः ᵛजिघर्ति दीपयति । ᵛवा[2] किंच । वाशब्दश्चार्थे । ᵛयस्य इन्द्रात्मकस्यादित्यस्य ᵛशतं शतसंख्याका रश्मयः ᵛस्वे ᵛदमे स्वकीये गृहे आकाशे ᵛप्रचरन् प्रचरन्ति । किं कुर्वन्तः । ᵛसंवर्तयन्तः प्राणिनो नाशयन्तः । यद्वा । अहा अहानि दिवसान् संवर्तयन्तः सम्यक् प्रवर्तयन्तः ᵛवि ᵛच ᵛवर्तयन् अहा अहानि निवर्तयन्ति गतान्येव पुनः प्रापयन्ति च । तपनपरिस्पन्दाधीनत्वात्[3] प्राणिनामायुःक्षयस्याहोरात्रादिव्यवहारस्य ॥

ताम॑स्य री॒तिं प॑र॒शोरि॑व॒ प्रत्यनी॑कमख्यं भु॒जे अ॑स्य॒ वर्प॑सः ।
सचा॒ यदि॑ पितु॒मन्त॑मिव॒ क्षयं॒ रत्नं॒ दधा॑ति॒ भर॑हूतये वि॒शे ॥ ४ ॥

ताम् । अ॒स्य॒ । री॒तिम् । प॒र॒शोःऽइ॑व । प्रति॑ । अनी॑कम् । अ॒ख्य॒म् । भु॒जे । अ॒स्य॒ । वर्प॑सः ।
सचा॑ । यदि॑ । पि॒तु॒मन्त॑म्ऽइव । क्षय॑म् । रत्न॑म् । दधा॑ति । भर॑ऽहूतये । वि॒शे ॥ ४ ॥

इयमाग्नेयी । ᵛतां प्रसिद्धाम् ᵛअस्य अग्नेः ᵛरीतिं स्वभावं गतिं वा ᵛपरशोरिव ᵛप्रति परशोः प्रतिनिधिमिव पश्यामि । परशुर्यथा स्वस्वामिनोऽभिमतं[4] साधयति तद्वदित्यर्थः । ᵛअस्य ᵛवर्पसः रूपवतोऽस्यादित्यस्य ᵛअनीकं रश्मिसमूहं ᵛभुजे भोगाय ᵛअख्यं कथयाम्यहम्[5] । ᵛयदि[5] यस्मात् स च देवः ᵛसचा अस्मत्सहायः सन् ᵛपितुमन्तम् अन्नवन्तं ᵛक्षयम् ᵛइव निवासमिव ᵛभरहूतये संग्रामे यज्ञे वा आह्वानयुक्ताय ᵛविशे यजमानाय ᵛरत्नं रमणीयं धनं ᵛदधाति[6] धारयति[6] । उभयमपि ददातीत्यर्थः ॥

---

१. ख-च-झ-ण-त-न-भ-र-श–सोमः । २. ख-च-ण– 'वा' नास्ति । ३. ग-घ-च-ज-ण-श–°परिस्पन्दा° । ४. ख-च-ण–स्वस्वामिने मतम्; झ-त-न-भ-र-श–स्वस्वामिनेऽभिमतम् । ५. ख-च-झ-ण-त-न-भ-र–कथयेयं स्तोत्रम्; श–कथयाम्यहं स्तोत्रं यदि । ६. ख-च-ण–ददाति; झ-त-न-भ-र–दधाति धारयति ददाति ।

स जिह्वया चतुरनीक ऋञ्जते चारु वसानो वरुणो यतन्नरिम् ।
न तस्य विद्म पुरुषत्वता वयं यतो भगः सविता दाति वार्यम् ॥ ५ ॥

सः । जिह्वया । चतुःऽअनीकः । ऋञ्जते । चारु । वसानः । वरुणः । यतन् । अरिम् ।
न । तस्य । विद्म । पुरुषत्वता । वयम् । यतः । भगः । सविता । दाति । वार्यम् ॥ ५ ॥

ᵛसः अग्निः ᵛचतुरनीकः चतुर्दिक्षु प्रसृतज्वालः सन् ᵛजिह्वया ᵛऋञ्जते गच्छति[1] घृतादिकम् । यद्वा । जिह्वया चतुरनीकः सन् ऋञ्जते अलंकरोति स्वात्मानम् । किं कुर्वन् । ᵛचारु रमणीयं तेजः ᵛवसानः आच्छादयन् ᵛवरुणः तमोवारकः सन् ᵛअरिम् अमित्रं ᵛयतन् उद्धरन् । ᵛतस्य । तमित्यर्थः । तं ᵛन ᵛविद्म न जानीमः ᵛवयं ᵛपुरुषत्वता पुरुषत्वेन कामानां[2] पूरकत्वेन वा युक्तम् ॥ अपरो भावप्रत्ययः पूरणः ॥ ᵛयतः अयं ᵛभगः महान् भजनीयः ᵛसविता प्रेरको देवः ᵛदाति यच्छति ᵛवार्यं वरणीयं धनम् ॥ ॥ २ ॥

' देवं वः ' इति पञ्चर्चं पञ्चमं सूक्तमात्रेयस्य प्रतिप्रभस्यार्षम् । त्रैष्टुभं वैश्वदेवम् । ' देवं वः प्रतिप्रभोऽन्त्या तृणपाणिः ' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

देवं वो अद्य सवितारमेषे भगं च रत्नं विभजन्तमायोः ।
आ वां नरा पुरुभुजा ववृत्यां दिवेदिवे चिदश्विना सखीयन् ॥ १ ॥

देवम् । वः । अद्य । सवितारम् । आ । ईषे । भगम् । च । रत्नम् । विऽभजन्तम् । आयोः ।
आ । वाम् । नरा । पुरुऽभुजा । ववृत्याम् । दिवेऽदिवे । चित् । अश्विना । सखिऽयन् ॥ १ ॥

ᵛदेवं द्योतमानं ᵛसवितारं सर्वस्याभ्यनुज्ञातारं ᵛवः । त्वामित्यर्थः । यद्वा होतुरिदं वाक्यम् । वः यजमानेभ्यो युष्मभ्यमर्थाय ᵛअद्य इदानीम् ᵛएषे उपगच्छामि । ᵛभगं ᵛच भजनीयं देवम् ᵛआयोः मनुष्यस्य यजमानस्य ᵛरत्नं रमणीयं हविः ᵛविभजन्तम् । ' भगो वां विभजतु ' इति हि भगस्य विभजनं प्रसिद्धम् । ' रायो विभक्ता संभरश्च वस्वः ' ( ऋ. सं. ४. १७. ११ ), ' भगो विभक्ता शवसा ' ( ऋ. सं. ५. ४६. ६ ) इति च श्रुतिः । यद्वा । चतुर्थ्यर्थे षष्ठी । यजमानार्थं रत्नं रमणीयं धनं विभजन्तम् । हे ᵛनरा नेतारौ हे ᵛपुरुभुजा । पुरु भुञ्जाते इति पुरुभुजौ । हे[3] ᵛअश्विना[3] अश्विनौ ᵛवां युवां ᵛदिवेदिवे प्रतिदिनम् ᵛआ ᵛववृत्याम् आवर्तयाम्यस्मदभिमुखम् । ᵛसखीयन् युवयोः सखित्वमिच्छन् । ᵛचित् इति पूरणः ॥

---

१. झ-न-भ-वाञ्छति । २. ख-च-ण-पूर्णत्वेन; झ-भ-पूर्णत्वेन कामानाम् । ३. ख-च-झ-ण-त-न-भ-र-श-' हे अश्विना ' नास्ति ।

प्रति प्रयाणमसुरस्य विद्वान्त्सूक्तैर्देवं सवितारं दुवस्य ।

उप ब्रुवीत नमसा विजानञ्ज्येष्ठं च रत्नं विभजन्तमायोः ॥ २ ॥

प्रति । प्रऽयानम् । असुरस्य । विद्वान् । सुऽउक्तैः । देवम् । सवितारम् । दुवस्य ।

उप । ब्रुवीत । नमसा । विऽजानन् । ज्येष्ठम् । च । रत्नम् । विऽभजन्तम् । आयोः ॥२॥

ᵛअसुरस्य शत्रूणां निरसितुः सवितुः ᵛप्रति ᵛप्रयाणं प्रत्यागतिं[1] ᵛविद्वान् जानन् ᵛसूक्तैः ᵛसवितारं ᵛदेवं ᵛदुवस्य परिचर हे अन्तरात्मन् । किंच ᵛआयोः मनुष्याय ᵛज्येष्ठं ᵛरत्नं धनं ᵛच ᵛविभजन्तम् । गमयन्तमित्यर्थः । ᵛनमसा नमस्कारेण हविषा वा ᵛविजानन् । विशेषेण ज्ञापयन्नित्यर्थः ॥ यद्वान्तर्णीतण्यर्थोऽयम् ॥ ज्ञापयन् ᵛउप ᵛब्रुवीत स्तौतु भवान् ॥

अदत्रया दयते वार्याणि पूषा भगो अदितिर्वस्त उस्रः ।

इन्द्रो विष्णुर्वरुणो मित्रो अग्निरहानि भद्रा जनयन्त दस्माः ॥ ३ ॥

अदत्रऽया । दयते । वार्याणि । पूषा । भगः । अदितिः । वस्ते । उस्रः ।

इन्द्रः । विष्णुः । वरुणः । मित्रः । अग्निः । अहानि । भद्रा । जनयन्त । दस्माः ॥ ३ ॥

अयमग्निः ᵛअदत्रया अदनीयानि ॥ अदेरौणादिकोऽत्रप्रत्ययः । ' सुपां सुलुक् ' इति याजादेशः । अथवा अत्तीत्यदत्रा जिह्वा । तया ᵛवार्याणि वरणीयानि काष्ठानि ᵛदयते । दयतिरनेककर्मात्र दहने वर्तते । दहतीत्यर्थः । सामर्थ्यादग्निरिति गम्यते । यद्वा । अदनीयानि[2] वरणीयान्यन्नानि दयते । ददाति यजमानाय ॥ ' दय दानगतिहिंसाबलात्यानेषु ' ॥ कीदृशोऽग्निः । ᵛपूषा पोषकः ᵛभगः भजनीयः ᵛअदितिः अखण्डनीयः । यद्वा । पूषादयस्त्रयोऽपि प्रत्येकमदनीयानि वार्याणि चान्नानि दयते । ᵛउस्रः सूर्यः ᵛवस्ते आच्छादयति । सामर्थ्यात्तेजांसि । इन्द्रादयः पञ्चापि देवाः[3] ᵛदस्माः दर्शनीयाः ᵛअहानि सर्वाण्यागन्तॄणि ᵛभद्रा शोभनानि[4] ᵛजनयन्त जनयन्ति । दिवसानां यागदानादिविशिष्टत्वमेव भद्रत्वम् ॥

तन्नो अनर्वा सविता वरूथं तत्सिन्धव इषयन्तो अनु ग्मन् ।

उप यद्वोचे अध्वरस्य होता रायः स्याम पतयो वाजरत्नाः ॥ ४ ॥

तत् । नः । अनर्वा । सविता । वरूथम् । तत् । सिन्धवः । इषयन्तः । अनु । ग्मन् ।

उप । यत् । वोचे । अध्वरस्य । होता । रायः । स्याम । पतयः । वाजऽरत्नाः ॥ ४ ॥

---

१. ख-च-ण-भ–प्रत्यावर्तिम् । २. ख-च-ण-भ–वार्याणि । ३. ख-च-ण–देवताः । ४. ग-घ-ज-श–शोभनीयानि ।

ᵛतत् प्रसिद्धं ᵛवरूथं वरणीयमस्मदभिमतं धनं ᵛनः अस्मभ्यम् ᵛअनर्वा अप्रत्यृतः केनाप्यतिरस्कृतः ᵛसविता देवः प्रयच्छत्विति शेषः । ᵛतत् धनं ᵛसिन्धवः स्यन्दनशीलाः ᵛइषयन्तः गच्छन्त्यो नद्यः ᵛअनु अनुसृत्य ᵛग्मन् गच्छन्तु । धनं दातुं गच्छन्त्वित्यर्थः । ᵛयत् यस्मात् ᵛअध्वरस्य यागस्य ᵛहोता होमनिष्पादकोऽहम् ᵛउप ᵛवोचे उपेत्य ब्रवीमि तस्मात्तत्प्रयच्छन्त्विति शेषः । वयं चात्रयः ᵛरायः धनस्य बहुविधस्य ᵛपतयः स्वामिनः ᵛस्याम भवेम । ᵛवाजरत्नाः अन्नेन बलेन वा रमणीयाः । अथवा यद्यस्माद्वोचे स्तौमि तस्मात् सविता नो वरूथमागच्छतु । तस्मान्नद्यश्च नो वरूथं यज्ञमनु ग्मन् अनुगच्छन्त्विति वा योज्यम् ॥

**प्र ये वसुभ्य ईवदा नमो दुर्ये मित्रे वरुणे सूक्तवाचः ।**
**अवैत्वभ्वं कृणुता वरीयो दिवस्पृथिव्योरवसा मदेम ॥ ५ ॥**

प्र । ये । वसुऽभ्यः । ईवत् । आ । नमः । दुः । ये । मित्रे । वरुणे । सूक्तऽवाचः ।
अव । एतु । अभ्वम् । कृणुत । वरीयः । दिवःपृथिव्योः । अवसा । मदेम ॥ ५ ॥

ᵛये यजमानाः ᵛवसुभ्यः यज्ञनिवासेभ्यो देवेभ्यः ᵛईवत् गमनवत् ᵛनमः अन्नं पश्वात्मकं ᵛप्र ᵛदुः प्रादुः । ᵛये च ᵛमित्रे देवे ᵛवरुणे च ᵛसूक्तवाचः सूक्तवचसो भवन्ति तानस्मान् ᵛअभ्वं महद्धनं तेजो वा ᵛअवैतु अवगच्छतु[1] । हे[2] देवाः[2] ᵛकृणुत कुरुत चैतेभ्यः ᵛवरीयः उरुतरं सुखम् । ᵛदिवस्पृथिव्योः द्यावापृथिव्योः ᵛअवसा रक्षणेन ᵛमदेम हृष्येम[3] ॥ ॥ ३ ॥

‘ विश्वो देवस्य ’ इति पञ्चर्चं षष्ठं सूक्तं स्वस्त्यात्रेयमुनेरार्षं वैश्वदेवम् । पञ्चमी पङ्क्तिः आद्याश्चतस्रोऽनुष्टुभः । तदुक्तमनुक्रमण्याम्—‘ विश्वः स्वस्त्यात्रेयः पङ्क्त्यन्तम् ’ इति । पृष्ठ्याभिप्लवषडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे विश्वो[4] देवस्येति प्रतिपत्तृचस्याद्यः[4] । सूत्रितं च—‘ विश्वो देवस्य नेतुरित्येका ’ ( आश्व. श्रौ. ७. ६ ) इति । आभिप्लविकेषु द्वितीयचतुर्थषष्ठेष्वहःस्वेषैव वैश्वदेवस्य शस्त्रस्य प्रतिपत् । ‘ युग्मेष्वेवमभिप्लवे ’ ( आश्व. श्रौ. ७. ६ ) इति सूत्रितत्वात् ॥

**विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।**
**विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे ॥ १ ॥**

विश्वः । देवस्य । नेतुः । मर्तः । वुरीत । सख्यम् ।
विश्वः । राये । इषुध्यति । द्युम्नम् । वृणीत । पुष्यसे ॥ १ ॥

ᵛविश्वः सर्वः ᵛमर्तः ᵛनेतुः ᵛदेवस्य । सवितुरित्यर्थः । तस्य ᵛसख्यं ᵛवुरीत वृणीत । ᵛविश्वः जनः ᵛराये धनस्य ᵛइषुध्यति ॥ पञ्चमलकारः ॥ ईशीत । तस्यानुग्रहात् सर्वो जनः ᵛद्युम्नं धनं ᵛवृणीत[5] ᵛपुष्यसे पुष्ट्यै पर्याप्तं धनम् ॥

---

१. ग-घ-ज—आगच्छतु । २. ख-च-झ-ण-न-भ-र—‘ हे देवाः ’ नास्ति । ३. ख-च-झ-ण-न-भ-र-श—‘ हृष्येम ’ नास्ति । ४. झ-भ-र—आद्यस्तृचो वैश्वदेवे प्रतिपत्तृचस्याद्यः ; त—आद्यस्तृचो वैश्वदेवे । ५. ख-च-झ-ण-त-न-भ-र-श—वृणीत सवितारम् ।

ते ते देव नेतुर्ये चेमाँ अनुशसे। ते राया ते ह्या३पृचे सचेमहि सचथ्यैः ॥२॥

ते। ते। देव। नेतः। ये। च। इमान्। अनुऽशसे।

ते। राया। ते। हि। आऽपृचे। सचेमहि। सचथ्यैः ॥ २ ॥

हे ^नेतः ^देव ^ते तव स्वभूताः ^ते वयं यजमानाः ^ये ^च अन्ये ^इमान्। विभक्तिव्यत्ययः। इमे होत्रादयः ^अनुशसे शंसितुं प्रभवन्ति तेऽपि त्वदीयाः। यद्वा। इमान् अन्यान् इन्द्रादीन् अनुशसे क्रमेण शंसितुं प्रभवन्ति। 'एकैव वा महानात्मा देवता स सूर्यः स हि सर्वभूतात्मा' इत्युक्तत्वादितरासां देवतानां तदन्तर्भावादिति भावः। न केवलं स्वच्छंसका एवेत्यर्थः। ^ते उभये[1] वयं ^राया धनेन सचेमहि इति संबन्धः। ^ते ^हि ते खलु ^आपृचे आपर्चनीयाः॥ कृत्यार्थे केन्प्रत्ययः। 'कृन्मेजन्तः' इत्यव्ययत्वाद्विभक्तेरदर्शनम्॥ ^सचथ्यैः सर्वैः कामैः ^सचेमहि संगच्छेमहि॥

अतो न आ नॄनतिथीनतः पत्नीर्दशस्यत।

आरे विश्वं पथेष्ठां द्विषो युयोतु यूयुविः॥ ३ ॥

अतः। नः। आ। नॄन्। अतिथीन्। अतः। पत्नीः। दशस्यत।

आरे। विश्वम्। पथेऽस्थाम्। द्विषः। युयोतु। युयुविः॥ ३ ॥

^अतः अस्मिन् यज्ञे॥ सार्वविभक्तिकस्तसिः॥ ^नः अस्माकमृत्विजां ^नॄन् नेतॄन् ^अतिथीन् तद्वत् पूज्यान् देवान् ^आ ^दशस्यत सर्वतः परिचरत। ^अतः अस्मिन् यज्ञे ^पत्नीः देवानां पत्नीरपि दशस्यत हविष्प्रदानादिना। यद्वा। नः अस्मभ्यं नॄन् पुत्रभृत्यादीनतिथीन् पत्नीश्चेतत्त्रयमत्र दशस्यत। हे देवाः प्रयच्छत[2]। ^आरे दूरे ^विश्वं सर्वं ^पथेष्ठां मार्गे वर्तमानं वैरिणं ^द्विषः अन्यानपि द्विषो द्वेष्टॄन् ^युयोतु पृथक्करोतु देवसंघः सविता वा ^यूयुविः[3] सर्वस्यामिश्रयिता पृथक्कर्ता[4]॥

यत्र वह्निरभिहितो दुद्रवद्द्रोण्यः पशुः।

नृमणा वीरपस्त्योऽर्णा धीरेव सनिता॥ ४ ॥

यत्र। वह्निः। अभिऽहितः। दुद्रवत्। द्रोण्यः। पशुः।

नृऽमनाः। वीरऽपस्त्यः। अर्णा। धीराऽइव। सनिता॥ ४ ॥

^यत्र यस्मिन्यज्ञे ^वह्निः यज्ञस्य वोढा ^अभिहितः यूपं प्रापितः ^द्रोण्यः यूपार्हः ^पशुः ^दुद्रवत् गच्छति यूपं प्रति तत्र ^नृमणाः यजमानमनाः सविता ^वीरपस्त्यः। वीरा ऋत्विग्यज-

---

१. ख-च-झ-ण-त-न-भ-र- 'उभये' नास्ति। २. ख-च-झ-ण-त-न-भ-र- 'प्रयच्छत' नास्ति ३. त-युयुविः। ४. ख-च-झ-ण-त-न-भ-र- 'पृथक्कर्ता' नास्ति।

मानाः पुत्रभृत्यादयो वा तद्वत्पस्त्यं गृहं यस्य स तादृशः । प्रेरितगृहो वा[1] । पुत्राद्युपेतगृहप्रदः इत्यर्थः । ᵛसनिता संभक्ता भवति । ᵛअर्णा अरणकुशला ᵛधीरेव[2] योषिदिव । यद्वा । अर्णानि हवींष्यभिलक्ष्य सनिता भवति ॥

एष ते देव नेता रथस्पतिः शं रयिः ।

शं राये शं स्वस्तये इषःस्तुतो मनामहे देवस्तुतो मनामहे ॥ ५ ॥

एषः । ते । देव । नेतरिति । रथःपतिः । शम् । रयिः ।

शम् । राये । शम् । स्वस्तये । इषःऽस्तुतः । मनामहे । देवऽस्तुतः । मनामहे ॥ ५ ॥

हे ᵛनेतः ᵛदेव सवितः ᵛते तव ᵛएषः ᵛरथःपतिः सर्वस्य पालकः ᵛरयिः दातव्यधनवान् ॥ मत्वर्थो लुप्यते ॥ ᵛशं करोत्विति शेषः । वयं च ᵛराये धनस्य ᵛशं सुखाय । यद्वा । राये धनाय ᵛशं[3] सुखाय च ᵛस्वस्तये अविनाशाय[3] ᵛइषःस्तुतः एषणीयस्य सवितुः स्तोतारो वयं ᵛमनामहे स्तुमः । ᵛदेवस्तुतः देवानां देवस्य वा सवितुः स्तोतारः ᵛमनामहे स्तुमः ॥　　॥ ४ ॥

'अग्ने सुतस्य' इति पञ्चदशर्चं सप्तमं सूक्तम् । अत्रेयमनुक्रमणिका—'अग्ने पञ्चोना चतस्रो गायत्र्यः पळुष्णिहस्तिस्रो जगत्यस्त्रिष्टुभो वान्त्ये अनुष्टुभौ' इति । 'ऋषिश्चान्यस्मात्' इति परिभाषया स्वस्त्यात्रेय ऋषिः । आदितश्चतस्रो गायत्र्यः पञ्चम्याद्याः षडुष्णिह एकादश्याद्यास्तिस्रो जगत्यस्त्रिष्टुभो वा चतुर्दशीपञ्चदश्यावनुष्टुभौ विश्वे देवा देवता[4] ॥

अग्ने सुतस्य पीतये विश्वैरूमेभिरा गहि । देवेभिर्हव्यदातये ॥ १ ॥

अग्ने । सुतस्य । पीतये । विश्वैः । ऊमेभिः । आ । गहि । देवेभिः । हव्यऽदातये ॥ १ ॥

हे ᵛअग्ने त्वं ᵛसुतस्य ᵛपीतये सोमपानाय ᵛविश्वैरूमेभिः ऊमैः सर्वैरपि रक्षकैः ᵛदेवेभिः देवैरिन्द्रादिभिः सह ᵛहव्यदातये अस्माकं हविर्दानाय तद्दात्रे यजमानाय वा ᵛआ ᵛगहि आगच्छ ॥

ऋतधीतय आ गत सत्यधर्माणो अध्वरम् । अग्नेः पिबत जिह्वया ॥ २ ॥

ऋतऽधीतयः । आ । गत । सत्यऽधर्माणः । अध्वरम् । अग्नेः । पिबत । जिह्वया ॥ २ ॥

---

१. त–वा पुत्राद्युपेतगृहो वा । २. ख-च-झ-ण-त-न-भ-र–धीरा । ३. ख-च-झ-ण-न-भ-र–'शं ... अविनाशाय' नास्ति । ४. न– देवता । स्मार्ते प्रत्यवरोहणे इदं सूक्तं जप्यम् । चतुर्थ संहाय सौर्याणि स्वस्त्ययनानि च जपित्वेति सूत्रितम् । गुरुणा प्रसक्ष्यमाणः सर्वतोभये होमे कृते स्वस्ति नो मिमीतामिति सूक्तशेषं जपेत् । तथा च सूत्रम्–स्वस्त्यात्रेयं जपति यतैन्द्रं भयामह इति सूक्तशेषमिति । स्मार्ते शान्तिकर्मण्यपि एतत्सूक्तं जप्यम् । गुरुणाभिमृता इति खण्डे उदिते आदित्ये सौर्याणि च स्वस्त्ययनानि च जपेदिति सूत्रात् ।

हे ᵛऋतधीतयः सत्यस्तुतयोऽबाध्यकर्माणो वा देवाः ᵛअध्वरम् अस्मद्यज्ञम् ᵛआ ᵛगत आगच्छत । आगत्य च हे ᵛसत्यधर्माणः सत्यस्य धारयितारो यूयम् ᵛअग्नेः ᵛजिह्वया ᵛपिबत आज्यसोमादिकम् ॥

विप्रेभिर्विप्र सन्त्य प्रातर्यावभिरा गहि । देवेभिः सोमपीतये ॥ ३ ॥

विप्रेभिः । विप्र । सन्त्य । प्रातर्यावऽभिः । आ । गहि । देवेभिः । सोमऽपीतये ॥ ३ ॥

हे ᵛविप्र मेधाविन्[1] विविधकामानां वा पूरक[1] हे ᵛसन्त्य संभजनीयाग्ने ᵛविप्रेभिः उक्तलक्षणैः ᵛप्रातर्यावभिः प्रातःकाले आगन्तृभिः ᵛदेवेभिः देवैः सार्धम् ᵛआ ᵛगहि आगच्छ । किमर्थम् । ᵛसोमपीतये सोमपानाय ॥

अयं सोमश्चमू सुतोऽमत्रे परि षिच्यते । प्रिय इन्द्राय वायवे ॥ ४ ॥

अयम् । सोमः । चमू इति । सुतः । अमत्रे । परि । सिच्यते । प्रियः । इन्द्राय । वायवे ॥ ४ ॥

ᵛअयं पुरतो वर्तमानः ᵛसोमः ᵛचमू चम्वोरन्योः[2] अधिषवणफलकयोः[3] ᵛसुतः अभिषुतः सन् ᵛअमत्रे पात्रे ᵛपरि ᵛषिच्यते पूर्यते । स च ᵛइन्द्राय ᵛवायवे च ᵛप्रियः । तं पातुं हे इन्द्रवायू आगच्छतमिति शेषः ॥

'वायवा याहि' इत्येषा पृष्ठ्यस्य तृतीयेऽहनि प्रउगशस्त्रे वायव्यतृचस्याद्या । सूत्रितं च— 'वायवा याहि वीतय इत्येका वायो याहि शिवा दिव इति द्वे' ( आश्व. श्रौ. ७. १० ) इति ॥

वायवा याहि वीतये जुषाणो हव्यदातये ।
पिबा सुतस्यान्धसो अभि प्रयः ॥ ५ ॥

वायो इति । आ । याहि । वीतये । जुषाणः । हव्यऽदातये ।
पिब । सुतस्य । अन्धसः । अभि । प्रयः ॥ ५ ॥

हे ᵛवायो ᵛप्रयः अन्नं सोमाख्यम् ᵛअभि अभिलक्ष्य ᵛआ ᵛयाहि ᵛवीतये भक्षणाय ᵛजुषाणः प्रीयमाणः ᵛहव्यदातये हविर्दात्रे यजमानाय तदर्थम् । आगत्य च ᵛसुतस्यान्धसः अभिषुतमन्धोऽन्नं सोमलक्षणं ᵛपिब ॥ ॥ ५ ॥

पृष्ठ्यस्य तृतीयेऽहनि प्रउगशस्त्रे ऐन्द्रवायवतृचे[4] 'इन्द्रश्च' इत्यादिके द्वे ऋचौ शंसेत् । तयोः प्रथमां द्वितीयां वावर्त्य तृचं संपादयेत् । तथा च सूत्रितम्— 'इन्द्रश्च वायवेषां सुतानामिति द्वयोरन्यतरां द्विः' ( आश्व. श्रौ. ७. १० ) इति ॥

---

१. ख-च-ण–विविधकामानाम्; ग-घ-ज–मेधाविन्; झ-न-भ-र–विविधकामानां पूरक; त–मेधाविन् विविधं कामानां पूरक । २. न–चम्वोः । ३. झ-न-र–अभिषवण° । ४. ख-च-झ-ण-त-न-भ-र–ऐन्द्रवायवस्तृचः ।

इन्द्रश्च वायवेषां सुतानां पीतिमर्हथः । ताञ्जुषेथामरेपसावभि प्रयः ॥६॥

इन्द्रः । च । वायो इति । एषाम् । सुतानाम् । पीतिम् । अर्हथः ।

तान् । जुषेथाम् । अरेपसौ । अभि । प्रयः ॥६॥

हे वायो त्वं च इन्द्रश्च एषां पुरतो गृहीतानां सुतानाम् अभिषुतानां सोमानां पीतिं पानम् अर्हथः । यस्मादेवं तस्मात् तान् सोमरसान् जुषेथां सेवेथाम् अरेपसौ अहिंसकौ । तदर्थं प्रयः सोमाख्यमन्नमभिलक्ष्यागच्छतमिति शेषः । यद्वा । प्रयः अन्नरूपान्[1] ॥

सुता इन्द्राय वायवे सोमासो दध्याशिरः ।

निम्नं न यन्ति सिन्धवोऽभि प्रयः ॥ ७ ॥

सुताः । इन्द्राय । वायवे । सोमासः । दधिऽआशिरः ।

निम्नम् । न । यन्ति । सिन्धवः । अभि । प्रयः ॥ ७ ॥

इन्द्राय वायवे च सोमासः सोमाः दध्याशिरः दध्याश्रयणाः सुताः अभिषुताः संपादिताः । ते च निम्नं गर्तं सिन्धवः न नद्य इव हे इन्द्रवायू युवाम् अभि यन्ति प्रयः अन्नरूपाः ॥

तृतीयेऽहनि[2] प्रउगशस्त्रे 'सजूर्विश्वेभिः' इति वैश्वदेवस्तृचः । सूत्रितं च—'सजूर्विश्वेभिर्देवेभिरुत नः प्रिया प्रियासु' ( आश्व. श्रौ. ७. १० ) इति ॥

सजूर्विश्वेभिर्देवेभिरश्विभ्यामुषसा सजूः । आ याह्यग्ने अत्रिवत्सुते रण ॥८॥

सऽजूः । विश्वेभिः । देवेभिः । अश्विऽभ्याम् । उषसा । सऽजूः ।

आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ ८ ॥

हे अग्ने विश्वेभिः सर्वैः देवेभिः देवैः सजूः संगतः सन् अश्विभ्यामुषसा च सजूः समानप्रीतिः सन् आ[3] याहि आगहि[3] । अत्रिवत् अत्रिरिव । अत्रेर्यज्ञे यथा तथेत्यर्थः । यद्वा । अत्रिर्यथा यज्ञे रमते तद्वत् सुते अभिषुते सोमे रण रमस्व ॥

उत्तरे द्वे नवमीदशम्यौ स्पष्टे ॥

---

१. ख-च-ण-भ–अन्नरूपांश्च; झ-त-न-र–अन्नरूपान् वा । २. न–दशरात्रे तृतीयेऽहनि । ३. ख-झ-त-न-भ-र–'आयाहि आगहि' नास्ति ।

सजूर्मित्रावरुणाभ्यां सजूः सोमेन विष्णुना ।
आ याह्यग्ने अत्रिवत्सुते रण ॥ ९ ॥

सऽजूः । मित्रावरुणाभ्याम् । सऽजूः । सोमेन । विष्णुना ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ ९ ॥

सजूरादित्यैर्वसुभिः सजूरिन्द्रेण वायुना । आ याह्यग्ने अत्रिवत्सुते रण ॥ १० ॥

सऽजूः । आदित्यैः । वसुऽभिः । सऽजूः । इन्द्रेण । वायुना ।
आ । याहि । अग्ने । अत्रिऽवत् । सुते । रण ॥ १० ॥ ॥ ६ ॥

पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्रे ' स्वस्ति नः ' इति तृचः । सूत्रितं च—' स्वस्ति नो मिमीतामश्विना भग इति तृच इति वैश्वदेवम् ' (आश्व. श्रौ. ८.१) इति । तथा बृहस्पतिसवे वैश्वदेवनिविद्धानार्थोऽयं तृचः । ' स्वस्ति नो मिमीतामश्विना भग इति वैश्वदेवम् ' ( आश्व. श्रौ. ९. ५ ) इति सूत्रितत्वात्[1] ॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ ११ ॥

स्वस्ति । नः । मिमीताम् । अश्विना । भगः । स्वस्ति । देवी । अदितिः । अनर्वणः ।
स्वस्ति । पूषा । असुरः । दधातु । नः । स्वस्ति । द्यावापृथिवी इति । सुऽचेतुना ॥ ११ ॥

नः अस्मभ्यम् अश्विना अश्विनौ स्वस्ति अविनाशं क्षेमं मिमीतां कुरुताम् । भगः च स्वस्ति क्षेमं मिमीताम् । तथा देव्यदितिः च स्वस्ति मिमीताम् । अनर्वणः अप्रत्यृतः पूषा असुरः शत्रूणां निरसिता प्राणानां बलानां दाता वा नः[2] स्वस्ति दधातु । नः अस्मभ्यं द्यावापृथिवी द्यावापृथिव्यावपि सुचेतुना शोभनेन प्रज्ञानेन विशिष्टे स्वस्ति मिमीताम् ॥

स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ १२ ॥

स्वस्तये । वायुम् । उप । ब्रवामहै । सोमम् । स्वस्ति । भुवनस्य । यः । पतिः ।
बृहस्पतिम् । सर्वऽगणम् । स्वस्तये । स्वस्तये । आदित्यासः । भवन्तु । नः ॥ १२ ॥

---

१. न–सूत्रितत्वात् । दीक्षितानामुपतापे निविद्धानार्थमयं तृचः । तथा च सूत्रितं—स्वस्त्यात्रेये निविदं दध्यात् । प्रकृत्या निगद इति । दशरात्रस्य षष्ठेऽहनि वैश्वदेवशस्त्रे स्वस्ति नो मिमीतामिति तृचः । सूत्रितं च–स्वस्ति नो मिमीतामश्विना भग इति तृच इति वैश्वदेवमिति । २. ख-च-झ-ण-त-न-भ-र–भगश्च ।

vस्वस्तये क्षेमाय vवायुमुप vब्रवामहै स्तुम इत्यर्थः । vसोमं चोप ब्रवामहै । vयः च सोमः vभुवनस्य vपतिः पालकः । सर्वलोकजीवनस्य सोमायत्तत्वात् । तथा vसर्वगणं सर्वदेवगणोपेतं vबृहस्पतिं बृहतः कर्मणो मन्त्रस्य पालयितारं vस्वस्तये स्तुमः[1] । vआदित्यासः आदित्या अदितेः पुत्राः सर्वे देवा अरुणादयो द्वादश वा vनः अस्माकं vस्वस्तये vभवन्तु ॥

सत्रमध्ये दीक्षिते व्याधिते सति तस्मिन्नहनि वैश्वदेवशस्त्रेऽयं तृचो निविद्धानार्थः । सूत्रितं च—' स्वस्त्यात्रेये निविदं दध्यात् ' ( आश्व. श्रौ. ६. ९ ) इति । स्वस्त्यात्रेयशब्देनायं तृचो विवक्षित इति तत्र व्याख्यातम् । तथा भयादिके सत्ययं तृचो जप्यः ॥

विश्वे॑ दे॒वा नो॑ अ॒द्या स्व॒स्तये॑ वैश्वान॒रो वसु॑र॒ग्निः स्व॒स्तये॑ ।
दे॒वा अ॑वन्त्वृ॒भवः॑ स्व॒स्तये॑ स्व॒स्ति नो॑ रु॒द्रः पा॒त्वंह॑सः ॥ १३ ॥

विश्वे॑ । दे॒वाः । न॒ः । अ॒द्य । स्व॒स्तये॑ । वै॒श्वा॒न॒रः । वसुः॑ । अ॒ग्निः । स्व॒स्तये॑ ।

दे॒वाः । अ॒व॒न्तु॒ । ऋ॒भवः॑ । स्व॒स्तये॑ । स्व॒स्ति । न॒ः । रु॒द्रः । पा॒तु॒ । अंह॑सः ॥ १३ ॥

vविश्वे सर्वेऽपि vदेवाः vनः अस्मान् vअद्य अस्मिन् यागदिने vस्वस्तये क्षेमाय अवन्तु । vवैश्वानरः । विश्व एनं नरा नयन्तीति वैश्वानरः । vवसुः सर्वस्य वासयिता vअग्निः देवः । ' अयमेवाग्निर्वैश्वानर इति शाकपूणिः ' ( निरु. ७. २३ ) इति यास्कः । सोऽपि vस्वस्तये अवतु । vदेवाः vऋभवः अपि vस्वस्तये vअवन्तु । vरुद्रः दुःखात् द्रावयिता देवोऽपि vअंहसः पापात् vस्वस्ति vपातु vनः अस्मान् ॥

स्व॒स्ति मि॑त्रावरुणा स्व॒स्ति प॑थ्ये रेवति ।
स्व॒स्ति न॒ इन्द्र॑श्चा॒ग्निश्च॑ स्व॒स्ति नो॑ अदिते कृधि ॥ १४ ॥

स्व॒स्ति । मि॒त्रा॒व॒रु॒णा॒ । स्व॒स्ति । प॒थ्ये॒ । रे॒व॒ति॒ ।

स्व॒स्ति । न॒ः । इन्द्रः॑ । च॒ । अ॒ग्निः । च॒ । स्व॒स्ति । न॒ः । अ॒दि॒ते॒ । कृ॒धि॒ ॥ १४ ॥

हे vमित्रावरुणा अहोरात्राभिमानिदेवौ vस्वस्ति कुरुतम् । हे vपथ्ये । पन्थाः[2] अन्तरिक्षमार्गः[2] । तत्र हिता मार्गाभिमानिनी देवी । हे तादृशि vरेवति धनवति देवि vस्वस्ति कृधि । vइन्द्रश्चाग्निश्च प्रत्येकं vनः अस्मभ्यं vस्वस्ति कृधि । हे vअदिते देवि vनः vस्वस्ति vकृधि कुरु ॥

---

१. ख-च-ण–स्तुम इत्यर्थः । २. ख-च-झ-ण-त-न-भ-र–पन्थाः पथ्या स्वस्ति देवमन्तरिक्षमार्गः ; श–पथ्या स्वस्ति देवं पन्था अन्तरिक्षमार्गः ।

स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव ।
पुनर्ददताघ्नता जानता सं गमेमहि ॥ १५ ॥

स्वस्ति । पन्थाम् । अनु । चरेम । सूर्याचन्द्रमसौऽइव ।
पुनः । ददता । अघ्नता । जानता । सम् । गमेमहि ॥ १५ ॥

पन्थां पन्थानं स्वस्ति क्षेमेण अनु चरेम सूर्याचन्द्रमसाविव । तौ यथा निरालम्बे मार्गे राक्षसादिभिरनुपद्रुतौ संचरतस्तद्वत् । किंच वयं प्रवसन्तः पुनर्ददता अभिमतम् अघ्नता चिरकालविलम्बकोपेन[1] अहिंसता जानता अविस्मरता मदीयश्चिरकालं गतः कोऽयमिति संदेहमकुर्वता । मदीयोऽयमिति बुध्यमानेनेत्यर्थः । उक्तलक्षणेन बन्धुजनेन सं गमेमहि संगच्छेमहि[2] । यद्वा । पूर्वार्धं प्रवसतां वाक्यमुत्तरार्धं बन्धूनाम् । वयं बन्धवो ददताभिमतमुपार्जितं यच्छताघ्नता प्रवासकोपेन[3] अहिंसता जानता सस्नेहमधिगच्छता प्रवसता सं गमेमहि ॥ ॥ ७ ॥

'प्र श्यावाश्व' इति सप्तदशर्चमष्टमं सूक्तम् । अत्रेयमनुक्रमणिका—'प्र श्यावाश्व न्यूना श्यावाश्वो मारुतं ह तत्पङ्क्तिः षष्ठ्यन्त्या च' इति । आत्रेयः श्यावाश्व ऋषिः । 'ह तत्' इति प्रयोगात् इदमादीनि दश सूक्तानि मरुद्देवत्यानि । षष्ठी सप्तदशी च पङ्क्त्यौ शिष्टाः पङ्क्त्यन्तपरिभाषयानुष्टुभः । गतो विनियोगः ॥

प्र श्यावाश्व धृष्णुयार्चा मरुद्भिर्ऋक्वभिः ।
ये अद्रोघमनुष्वधं श्रवो मदन्ति यज्ञियाः ॥ १ ॥

प्र । श्यावऽअश्व । धृष्णुऽया । अर्च । मरुत्ऽभिः । ऋक्वऽभिः ।
ये । अद्रोघम् । अनुऽस्वधम् । श्रवः । मदन्ति । यज्ञियाः ॥ १ ॥

हे श्यावाश्व एतन्नामक ऋषे धृष्णुया धृष्णुस्त्वम् ऋक्वभिः[4] स्तुत्यान् मरुद्भिः मरुतः[4] प्र अर्च । द्वितीयार्थे तृतीया । एवं स्वयमेव संप्रेष्यति । यद्वा । यजमानो होतारं श्यावाश्वं ब्रूते । यद्वा । मरुद्भिर्मरुत्सदृशैर्ऋक्वभिः स्तोतृभिः सह स्तोत्रैर्वा अर्च स्तुहीत्यर्थः । ये मरुतः यज्ञियाः यज्ञार्हाः अनुष्वधं प्रत्यहम्[5] । हविर्लक्षणान्नप्रदानं[5] स्वधा । अनु पश्चाद्वा । अद्रोघम् अहिंसकं श्रवः अन्नं लब्ध्वा मदन्ति हृष्यन्ति ॥

---

१. ख-च-ण- विलम्बात् कोपेन । २. ग-घ-ज-श-'संगच्छेमहि' नास्ति । ३. झ-त-न-भ-र-प्रयासकोपेन । ४. ख-च-झ-ण-त-न-भ-र-ऋक्वभिः मरुद्भिः स्तुत्यान् मरुतः ; श-ऋक्वभिः स्तुत्यान् मरुतः । ५. ख-झ-त-न-भ-र-प्रतिहविर्लक्षणप्रदानम् ।

ते हि स्थिरस्य शवसः सखायः सन्ति धृष्णुया ।
ते यामन्ना धृषद्विनस्त्मना पान्ति शश्वतः ॥ २ ॥

ते । हि । स्थिरस्य । शवसः । सखायः । सन्ति । धृष्णुऽया ।
ते । यामन् । आ । धृषत्ऽविनः । त्मना । पान्ति । शश्वतः ॥ २ ॥

ते हि ते खलु स्थिरस्य अविचलितस्य शवसः बलस्य सखायः सन्ति भवन्ति मह्यम् । धृष्णुया धृष्णवः । ते च यामन्ना । आ[1] इति चार्थे । गमनेऽपि धृषद्विनः धर्षणवन्तः[2] त्मना आत्मना अनुग्रहेणैव अस्मदुपकारमनपेक्ष्यैव[3] शश्वतः बहूनस्मान् पुत्रभृत्यादीन् पान्ति रक्षन्ति ॥

ते स्पन्द्रासो नोक्षणोऽति ष्कन्दन्ति शर्वरीः ।
मरुतामधा महो दिवि क्षमा च मन्महे ॥ ३ ॥

ते । स्पन्द्रासः । न । उक्षणः । अति । स्कन्दन्ति । शर्वरीः ।
मरुताम् । अध । महः । दिवि । क्षमा । च । मन्महे ॥ ३ ॥

ते मरुतः स्पन्द्रासः स्पन्दनशीलाः उक्षणः जलस्य सेक्तारश्च । न इति चार्थे । यस्मात् स्पन्द्रा अन्येषां तस्मात् शर्वरीः । शर्वर्यो रात्रयः । कालावयवानित्यर्थः । तान् अति स्कन्दन्ति अतिक्रम्य गच्छन्ति । नित्या इत्यर्थः । यस्मादेत एवंविधास्तस्मात् मरुताम् अध अधुना महः तेजः दिवि द्युलोके क्षमा क्षमायां भूमौ च वर्तमानं मन्महे स्तुमः ॥

मरुत्सु वो दधीमहि स्तोमं यज्ञं च धृष्णुया ।
विश्वे ये मानुषा युगा पान्ति मर्त्यं रिषः ॥ ४ ॥

मरुत्ऽसु । वः । दधीमहि । स्तोमम् । यज्ञम् । च । धृष्णुऽया ।
विश्वे । ये । मानुषा । युगा । पान्ति । मर्त्यम् । रिषः ॥ ४ ॥

हे अध्वर्युहोत्रादयः वः यूयं मरुत्सु धृष्णुया धर्षकेषु दधीमहि ॥ व्यत्ययेनोत्तमः ॥ धत्त । किम् । स्तोमं स्तोत्रं यज्ञं च । इज्यतेऽनेनेति यज्ञं हविः । तदुभयं किमर्थं दीयत इति । ये मरुतः विश्वे सर्वेऽपि मानुषा मानुषाणि युगा युगानि । सर्वेषु कालेष्वित्यर्थः[4] । मर्त्यं मरणधर्माणं यजमानं रिषः हिंसकात् सकाशात् पान्ति रक्षन्ति ॥

---

१. झ-न- इह आ । २. त- धर्षणवर्षणवन्तः । ३. ख-च-ण- अस्मदुपकारानपेक्षया । ४. ख-च-झ-ण-न-भ- लोकेष्वित्यर्थः ।

अर्हन्तो ये सुदानवो नरो असामिशवसः ।
प्र यज्ञं यज्ञियेभ्यो दिवो अर्चा मरुद्भ्यः ॥ ५ ॥

अर्हन्तः । ये । सुऽदानवः । नरः । असामिऽशवसः ।
प्र । यज्ञम् । यज्ञियेभ्यः । दिवः । अर्च । मरुत्ऽभ्यः ॥ ५ ॥

हे होतः हे आत्मन् वा ये अर्हन्तः पूज्याः सुदानवः शोभनदानाः नरः नेतारः कर्मणाम् असामिशवसः अनल्पबलाः सन्ति तेभ्यः यज्ञियेभ्यः यज्ञार्हेभ्यः दिवः द्योतमानेभ्यः मरुद्भ्यः ॥ विभक्तिवचनयोर्व्यत्ययः । यद्वा कर्मणि षष्ठी ॥ दीप्तं यज्ञं यज्ञसाधनं हविः प्र अर्च पूजय प्रयच्छेत्यर्थः । अथवा दिवोऽन्तरिक्षादागतेभ्य इति संबन्धः ॥　　॥ ८ ॥

आ रुक्मैरा युधा नरं ऋष्वा ऋष्टीरसृक्षत ।
अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः ॥ ६ ॥

आ । रुक्मैः । आ । युधा । नरः । ऋष्वाः । ऋष्टीः । असृक्षत ।
अनु । एनान् । अह । विऽद्युतः । मरुतः । जज्झतीःऽइव । भानुः । अर्त । त्मना । दिवः ॥ ६ ॥

नरः वृष्टेर्नेतारः ऋष्वाः महान्तो मरुतः रुक्मैः रोचमानैराभरणविशेषैः आ रोचन्त इति शेषः ॥ उपसर्गश्रुतेः संगतक्रियाध्याहारः ॥ तथा युधा प्रहरणसाधनेनायुधेन आ रोचन्ते । एते मरुतः ऋष्टीः आयुधविशेषान् असृक्षत । प्रक्षिपन्ति मेघभेदार्थम् । एनान् मरुतः विद्युतः अपि जज्झतीरिव शब्दकारिण्य आप इव । ' जज्झतीरापो भवन्ति शब्दकारिण्यः ' ( निरु. ६. १६ ) इति निरुक्तम् । अनु अह अनुगच्छन्त्येव । दिवः द्योतमानस्य मरुद्गणस्य भानुः दीप्तिः त्मना स्वयमेव अर्त निरगात् ॥

ये वावृधन्त पार्थिवा य उरावन्तरिक्ष आ ।
वृजने वा नदीनां सधस्थे वा महो दिवः ॥ ७ ॥

ये । ववृधन्त । पार्थिवाः । ये । उरौ । अन्तरिक्षे । आ ।
वृजने । वा । नदीनाम् । सधऽस्थे । वा । महः । दिवः ॥ ७ ॥

ये मरुतः पार्थिवाः पृथिवीसंबद्धाः सन्तः ववृधन्त वर्धन्ते । ये च उरौ महति अन्तरिक्षे च ववृधन्त । आ इति चार्थे । नदीनां नदनवतीनां वृजने वा बले[1] ववृधन्त । महः महतः दिवः

---

१. त-बले योगे ।

द्युलोकस्य सधस्थे सहस्थाने[1] च ववृधन्त । उभयत्र वाशब्दश्चार्थे । एवं सर्वत्र वर्धमाना मरुतो वृष्टयर्थमृष्टीः असृक्षतेति[2] पूर्वत्र संबन्धः ॥

शर्धो मारुतमुच्छंस सत्यशवसमृभ्वसम् ।
उत स्म ते शुभे नरः प्र स्पन्द्रा युजत त्मना ॥ ८ ॥

शर्धः । मारुतम् । उत् । शंस । सत्यऽशवसम् । ऋभ्वसम् ।
उत । स्म । ते । शुभे । नरः । प्र । स्पन्द्राः । युजत । त्मना ॥ ८ ॥

हे स्तोतः मारुतं शर्धः बलम् उत् उत्कृष्टं शंस स्तुहि । कीदृशं शर्धः । सत्यशवसं सत्यवेगम् ऋभ्वसं महदतिप्रवृद्धम् । उत स्म अपि च नरः वृष्टेर्नेतारः ते मरुतः शुभे उदकार्थं प्र युजत प्रायुञ्जत समयोजयन् त्मना आत्मनैव जगद्रक्षाबुद्ध्यैव स्पन्द्राः चलनस्वभावाः पृषतीरित्यर्थः[3] ॥

उत स्म ते परुष्ण्यामूर्णा वसत शुन्ध्यवः ।
उत पव्या रथानामद्रिं भिन्दन्त्योजसा ॥ ९ ॥

उत । स्म । ते । परुष्ण्याम् । ऊर्णाः । वसत । शुन्ध्यवः ।
उत । पव्या । रथानाम् । अद्रिम् । भिन्दन्ति । ओजसा ॥ ९ ॥

उत स्म अपि च ते[4] मरुतः[4] परुष्ण्याम् एतन्नामिकायां नद्यां वर्तन्ते । ये ऊर्णाः दीप्तीः शुन्ध्यवः शोधिकाः वसत आच्छादयन्ति ते । उत अपि च पव्या नेम्या रथानां स्वकीयानां रथचक्रेण ओजसा बलेन च अद्रिं भिन्दन्ति मेघं गिरिं वा विदारयन्ति ॥

आपथयो विपथयोऽन्तस्पथा अनुपथाः ।
एतेभिर्मह्यं नामभिर्यज्ञं विष्टार ओहते ॥ १० ॥

आऽपथयः । विऽपथयः । अन्तःऽपथाः । अनुऽपथाः ।
एतेभिः । मह्यम् । नामऽभिः । यज्ञम् । विऽस्तारः । ओहते ॥ १० ॥

आपथयः । अस्मदभिमुखा मार्गा येषां ते तादृशाः । विपथयः विष्वङ्मार्गाः अन्तस्पथाः दरीसुषिरादिमार्गाः अनुपथाः अनुकूलमार्गाश्च ये मरुतः सन्ति ते एतेभिः एतैश्चतुर्विधैः नामभिः

---

१. ख-च-झ-ण-त-न-भ–वा सहने; र– वा महते । २. ख-च-झ-ण-न-भ-र–असृजतेति । ३. ख-च-झ-ण-त-न-भ-र–पृथिवीरित्यर्थः । ४. ख-च-झ-ण-त-न-भ-र– एते ।

नामकैः स्वरूपैः ᵛमह्यं मदर्थं ᵛयज्ञं ᵛविस्तारः विस्तृताः सन्तः ᵛओहते वहन्ति । यद्वा । एतैर्नामभिरुदकैः सार्धं यज्ञमोहते ॥ ॥ ९ ॥

अधा नरो न्योहतेऽधा नियुत ओहते ।
अधा पारावता इति चित्रा रूपाणि दर्श्या ॥ ११ ॥

अध । नरः । नि । ओहते । अध । निऽयुतः । ओहते ।
अध । पारावताः । इति । चित्रा । रूपाणि । दर्श्या ॥ ११ ॥

ᵛअध अथ ᵛनरः अभिमतवृष्ट्यादिनेतारः ᵛन्योहते नितरां वहन्ति जगत् । ᵛअध ᵛनियुतः स्वयमेव मिश्रयितारः सन्तः ᵛओहते । ᵛअध अथ ᵛपारावताः । परावद्दूरदेशः[1] । तत्संबन्धिनश्चान्तरिक्षादिदूरदेशे ग्रहतारामेघादिधारकाः सन्त ओहत इत्यर्थः । ᵛइति उक्तप्रकारेण तेषां ᵛरूपाणि ᵛचित्रा नानाविधानि चायनीयानि वा ᵛदर्श्या स्वव्यापारैर्दर्शनीयानि भवन्त्विति शेषः ॥

छन्दःस्तुभः कुभन्यव उत्समा कीरिणो नृतुः ।
ते मे के चिन्न तायव ऊमा आसन्दृशि त्विषे ॥ १२ ॥

छन्दःऽस्तुभः । कुभन्यवः । उत्सम् । आ । कीरिणः । नृतुः ।
ते । मे । के । चित् । न । तायवः । ऊमाः । आसन् । दृशि । त्विषे ॥ १२ ॥

ᵛछन्दस्तुभः छन्दोभिः स्तोतारः[2] ᵛकुभन्यवः उदकेच्छवः ᵛकीरिणः स्तोतारः ᵛउत्सं कूपमपेक्ष्य तृषिताय गोतमाय यान्मरुतः ᵛआ ᵛनृतुः सर्वतोऽकुर्वन् अनयन् वा स्तोत्रम् । यद्वा । ये छन्दःस्तुभश्छन्दोभिः स्तुत्याः । स्तोभतिः स्तुतिकर्मा । कुभन्यवः सेक्तारो वृष्ट्युदकस्य । कुभिरुन्दनकर्मा । कीरिणः स्तोतुर्गोतमस्य पानार्थम् उत्सं कूपम् आ नृतुः आनीतवन्तः । 'असिञ्चन्नुत्सं गोतमाय तृष्णजे' (ऋ. सं. १. ८५. ११) इति ह्युक्तम् ॥ 'नृ नये' इत्यस्य वा नर्ततेर्वा विक्षेपमात्रार्थस्येदं रूपम् ॥ ᵛते मरुतः ᵛके ᵛचित् ᵛमे मह्यं ᵛतायवः ᵛन कदाचिदप्यदृश्यास्तस्करा इव स्थिताः ᵛऊमाः रक्षकाः ᵛदृशि दर्शने ᵛआसन् विषयभूता अभवन् । केचित् ᵛत्विषे शरीरदीह्यै बलाय वा आसन् । प्राणरूपेणेति भावः ॥

य ऋष्वा ऋष्टिविद्युतः कवयः सन्ति वेधसः ।
तमृषे मारुतं गणं नमस्या रमया गिरा ॥ १३ ॥

ये । ऋष्वाः । ऋष्टिऽविद्युतः । कवयः । सन्ति । वेधसः ।
तम् । ऋषे । मारुतम् । गणम् । नमस्य । रमय । गिरा ॥ १३ ॥

---

१. त– पारवद्दूरदेशः । २. ख-च-ण–स्तुतौ विक्षिप्ताः ।

^ये मरुतः ^ऋष्वाः दर्शनीयाः ^ऋष्टिविद्युतः आयुधैर्विद्योतमानाः ^कवयः मेधाविनः ^वेधसः सर्वस्य[1] विधातारः[1] ^सन्ति ^तं तेषां ^मारुतं ^गणं ^रमया रमणीयया ^गिरा स्तुत्या हे ^ऋषे श्यावाश्व ^नमस्य परिचर स्तुहि ॥

अच्छ॑ ऋषे॒ मारु॑तं ग॒णं दा॒ना मि॒त्रं न यो॒षणा॑ ।

दि॒वो वा॑ धृष्णव॒ ओज॑सा स्तु॒ता धी॒भिरि॑षण्यत ॥ १४ ॥

अच्छ॑ । ऋ॒षे॒ । मारु॑तम् । ग॒णम् । दा॒ना । मि॒त्रम् । न । यो॒षणा॑ ।

दि॒वः । वा॒ । धृ॒ष्ण॒वः॒ । ओज॑सा । स्तु॒ताः । धी॒भिः । इ॒ष॒ण्य॒त॒ ॥ १४ ॥

हे ^ऋषे ^मारुतं ^गणं मरुत्संघं ^मित्रं ^न आदित्यमिव ^दाना हविर्दानेन ^योषणा। यौतेरिदं रूपम्। यौतीति योषा स्तुतिः। तया च ^अच्छ अभिगच्छेति शेषः। ऋषेरुत्तरार्धः[2] प्रत्यक्षवादः। ^ओजसा बलेन हे ^धृष्णवः धर्षका मरुतः ^दिवो ^वा द्युलोकाद्वा। वाशब्दश्रुतेः इतरलोकद्वयाद्वा। ^धीभिः अस्मदीयाभिः स्तुतिभिः ^स्तुताः ^इषण्यत गच्छत[3] यज्ञम् ॥

नू म॑न्वा॒न ए॑षां दे॒वाँ अच्छा॒ न व॒क्षणा॑ ।

दा॒ना स॑चेत सू॒रिभि॒र्याम॑श्रुतेभिर॒ञ्जिभिः॑ ॥ १५ ॥

नु । म॒न्वा॒नः । ए॒षा॒म् । दे॒वान् । अच्छ॑ । न । व॒क्षणा॑ ।

दा॒ना । स॒चे॒त॒ । सू॒रिऽभिः॑ । याम॑ऽश्रुतेभिः । अ॒ञ्जिऽभिः॑ ॥ १५ ॥

^नु क्षिप्रम् ^एषां मरुताम्। एतान् मरुत इत्यर्थः। ^मन्वानः स्तुवन् ^देवान् मरुद्व्यतिरिक्तान् ^वक्षणा वहनेन निमित्तेन ^अच्छ अभिप्राप्तुं ^न मनुते। स स्तोता ^सूरिभिः मेधाविभिः[4] ^यामश्रुतेभिः शीघ्रगमनेन विश्रुतैः ^अञ्जिभिः फलस्य व्यञ्जकैर्मरुद्भिः ॥ सर्वाः पञ्चम्यर्थे तृतीयाः ॥ उक्तलक्षणेभ्यो मरुद्भ्यः ^दाना अभिमतदानानि ^सचेत संगच्छते ॥

प्र ये मे॑ ब॒न्ध्वे॒षे गां वोच॑न्त सू॒रयः॒ पृश्निं॑ वोचन्त मा॒तर॑म् ।

अधा॑ पि॒तर॑मि॒ष्मिणं॑ रु॒द्रं वो॑चन्त॒ शिक्व॑सः ॥ १६ ॥

प्र । ये । मे॒ । ब॒न्धु॒ऽए॒षे । गाम् । वोच॑न्त । सू॒रयः॑ । पृश्नि॑म् । वो॒च॒न्त॒ । मा॒तर॑म् ।

अध॑ । पि॒तर॑म् । इ॒ष्मिण॑म् । रु॒द्रम् । वो॒च॒न्त॒ । शिक्व॑सः ॥ १६ ॥

---

१. ग-घ-च-ज-ण—सर्वविधातारः; त-न-र—सर्वत्र विधातारः। २. त-न-र—उत्तरार्धः। ३. च-ण—आगच्छत। ४. ख-च-झ-ण-त-न-भ-र—मेधाविभिः प्रेरयितृभिः।

ये मरुतः मे मह्यं बन्धवेषे स्वेषां बन्धूनामन्वेषणे सति सूरयः प्रेरकाः गां माध्यमिकां वाचं गोदेवतां वा प्र वोचन्त प्रावोचन् ॥ अविशिष्टमृषेर्वाक्यम् । ऋषिः[1] मरुद्वाक्यमनुवदति । तस्मादुत्तरयोः आख्यातयोः[2] यच्छब्दानन्वयान्निघातः ॥ ते पृश्निं द्युदेवतां पृश्निवर्णां गां वा मातरं वोचन्त अब्रुवन् । 'पृश्नियै वै पयसो मरुतो जाताः' (तै. सं. २. २. ११. ४) इति श्रुतेः । अध अथ पितरं स्वकीयम् इष्मिणं गमनवन्तमन्नवन्तं वा रुद्रं वोचन्त शिक्वसः शक्तास्ते । मरुतां रुद्रेण पुत्रत्वपरिग्रहो बहुकृत्व उपपादितः ॥

सप्त मे सप्त शाकिन एकमेका शता ददुः ।
यमुनायामधि श्रुतमुद्राधो गव्यं मृजे नि राधो अश्व्यं मृजे ॥ १७ ॥

सप्त । मे । सप्त । शाकिनः । एकम्ऽएका । शता । ददुः ।
यमुनायाम् । अधि । श्रुतम् । उत् । राधः । गव्यम् । मृजे । नि । राधः । अश्व्यम् । मृजे ॥१७॥

सप्त सप्तसंख्याकाः[3] संघाः । 'सप्तगणा वै मरुतः' (तै. सं. २. २. ११. १) इति श्रुतेः । अदितिगर्भे वर्तमानं वायुमिन्द्रः प्रविश्य सप्तधा विदार्य पुनरेकैकं सप्तधा व्यदारयत् ते एकोनपञ्चाशन्मरुद्गणा अभवन्निति पुराणेषु प्रसिद्धम् । ते च सप्तसंख्याकाः शाकिनः सर्वमपि कर्तुं शक्ताः । ते च एकमेका एकैको गणः मे मह्यं शता शतसंख्याकानि गवाश्वयूथानि ददुः दत्तवन्तः प्रयच्छन्त्विति वा आशीः । तैर्दत्तं यमुनायां नद्याम् अधि । अयं सप्तम्यर्थानुवादी[4] । तत्र श्रुतं प्रसिद्धं गव्यं गोसमूहात्मकं गोसंबन्धि वा राधः धनम् उत् मृजे उन्मार्जयामि । तथा तैर्दत्तम् अश्व्यम् अश्वसमूहात्मकं तत्संबन्धि वा राधः धनं[5] नि मृजे निमार्ज्मि ॥ ॥ १० ॥

'को वेद जानम्' इति षोडशर्चं नवमं सूक्तम् । श्यावाश्व ऋषिः । आद्यापञ्चमीदशम्येकादशीपञ्चदश्यः ककुभः षष्ठीसप्तमीनवमीत्रयोदशीचतुर्दशीषोडश्यः सतोबृहत्योऽष्टमी द्वादशी च गायत्र्यौ द्वितीया बृहती तृतीयानुष्टुप् चतुर्थी पुरउष्णिक् । मरुतो देवता । तथा चानुक्रान्तं—'को वेद षोळश ककुब्बृहत्यनुष्टुप् पुरउष्णिक् ककुप्सतोबृहत्यौ गायत्री सतोबृहती ककुभौ गायत्री सतोबृहत्यौ ककुप्सतोबृहती' इति । विनियोगो लैङ्गिकः ॥

को वेद जानमेषां को वा पुरा सुम्नेष्वास मरुताम् ।
यद्युयुज्रे किलास्यः ॥ १ ॥

कः । वेद । जानम् । एषाम् । कः । वा । पुरा । सुम्नेषु । आस । मरुताम् ।
यत् । युयुज्रे । किलास्यः ॥ १ ॥

---

१. ख-च-झ-ण-त-न-भ-र—मे ऋषिः । २. ख-च-झ-ण-त-भ-र—निघातयोः । ३. ख-च-झ-भ-र—सप्तसंख्याकाः एतत्संख्याकाः । ४. ख-च-झ-ण-त-न-भ-र—पञ्चम्यर्थानुवादी । ५. ख-च-झ-ण-त-न-भ-र—'धनं' नास्ति ।

^v^एषाम् ॥ मरुतां पूर्वसूक्ते प्रस्तुतत्वादत्रान्वादेशविषयत्वादेषामित्यस्य निघातता ॥ ^v^जानम् उत्पत्तिं ^v^को ^v^वेद जानाति कः पुमान् । ^v^को ^v^वा ^v^पुरा पूर्वमप्येषां ^v^मरुतां ^v^सुम्नेषु सुखेषु ^v^आस भवति । ^v^यत् यदा एते ^v^किलास्यः किलासीः । पृषतीः[1] इत्यर्थः । ताः ^v^युयुज्रे रथे योजितवन्तः तदैषां स्थितिं बललक्षणानि सुखानि च को जानातीत्यर्थः । वेगविषये[2] सर्वत्र वायोरुपमास्पदत्वादिति भावः ॥

ऐतान्रथेषु तस्थुषः कः शुश्राव कथा ययुः ।

कस्मै सस्रुः सुदासे अन्वापय इळाभिर्वृष्टयः सह ॥ २ ॥

आ । एतान् । रथेषु । तस्थुषः । कः । शुश्राव । कथा । ययुः ।

कस्मै । सस्रुः । सुऽदासे । अनु । आपयः । इळाभिः । वृष्टयः । सह ॥ २ ॥

^v^एतान् मरुतः ^v^रथेषु ^v^तस्थुषः स्थितवतः ^v^कः ^v^आ ^v^शुश्राव श्रावयेदित्यर्थः । यद्वा । एतेषां क्रोशध्वनिं रथध्वनिं च कः शृणुयात् । ^v^कथा कथं ^v^ययुः गच्छन्ति तदपि को जानाति । यद्वा । तान् कथमन्ये देवादयोऽनुगच्छेयुः । ^v^कस्मै ^v^सुदासे सुदानाय ^v^आपयः बन्धुभूता व्याप्ताः ^v^वृष्टयः वर्षकाः ॥ अयं कर्तरि क्तिच् ॥ ^v^इळाभिः बहुविधैरन्नैः ^v^सह सहिताः ^v^अनु ^v^सस्रुः अनुक्रमेण अवतरेयुः[3] ॥

ते म आहुर्य आययुरुप द्युभिर्विभिर्मदे ।

नरो मर्या अरेपस इमान्पश्यन्निति ष्टुहि ॥ ३ ॥

ते । मे । आहुः । ये । आऽययुः । उप । द्युऽभिः । विऽभिः । मदे ।

नरः । मर्याः । अरेपसः । इमान् । पश्यन् । इति । स्तुहि ॥ ३ ॥

ऋषिर्ऋग्द्वयाभ्यां मरुत्प्रादुर्भावमाख्यास्यन् अनया प्रादुर्भूतान् पश्यन्नाह । ^v^ते मरुतः इत्थं लपते ^v^मे मह्यम् ^v^आहुः ^v^ये ^v^उप ^v^आययुः ये मरुतो मां प्राप्ताः । कैः साधनैः । ^v^द्युभिः द्योतमानैः ^v^विभिः गन्तृभिरश्वैः । किमर्थम् । ^v^मदे मदाय सोमपानजनिताय । किमाहुरिति तदनुब्रूते । ^v^नरः नेतारः ^v^मर्याः मनुष्येभ्यो हिताः ^v^अरेपसः अलेपास्ते । हे ऋषे ^v^इमान् अस्मान् ^v^पश्यन् तथा[4] स्थितान् चक्षुषावलोकयन् ^v^स्तुहि ^v^इति आहुः । यद्वा । इति इत्थं पश्यन् स्तुहीति ॥

ये अञ्जिषु ये वाशीषु स्वभानवः स्रक्षु रुक्मेषु खादिषु ।

श्राया रथेषु धन्वसु ॥ ४ ॥

ये । अञ्जिषु । ये । वाशीषु । स्वऽभानवः । स्रक्षु । रुक्मेषु । खादिषु ।

श्रायाः । रथेषु । धन्वऽसु ॥ ४ ॥

---

१. ख-च-झ-ण-न-भ-र-पृषत्यः; श-पृषतः । २. ख-च-झ-ण-भ-देशविषये; न-देवाविषये । ३. ख-च-झ-ण-न-भ-अवतरेयुः वृष्टयन्नानि; त-र-अवतरेयुः वृष्टयन्नादीनि । ४. ख-च-झ-ण-त-न-भ-र-यथा ।

अनया मरुतां स्वरूपं निरूपयति । हे मरुतो युष्माकं ᵛये प्रसिद्धाः ᵛस्वभानवः स्वदीप्तयः ᵛअञ्जिषु आभरणेषु ᵛश्रायाः आश्रयभूताः सन्ति । ᵛये च ᵛवाशीषु आयुधेषु । ये च ᵛस्रक्षु माल्येषु । ये ᵛरुक्मेषु उरोभूषणेषु । ये च ᵛखादिषु हस्तपादस्थितकटकेषु । ' हस्तेषु खादिश्च कृतिश्च ' ( ऋ. सं. १. १६८. ३ ), ' पत्सु खादयः ' ( ऋ. सं. ५. ५४. ११ ) इति हि श्रुती भवतः । ᵛरथेषु ᵛधन्वसु च ये च स्वभानवः श्रायाः सन्ति । ' सुधन्वान इषुमन्तः ', ' सुरथाः पृश्निमातरः ' ( ऋ. सं. ५. ५७. २ ) इति च निगमः । तान् सर्वान् स्तुम इति शेषः । यद्वा । ये स्वभानवः स्वायत्तदीप्तयो मरुतोऽञ्जिष्वाभरणेषु निमित्तेषु श्राया आश्रया भविष्यामः । ये च वाशीषु निमित्तेषु । एवं सर्वत्र योज्यम् । तादृग्विधानिमान्पश्यन् स्तुहीति पूर्वत्र संबन्धः । तेषामेव इदं वाक्यम् ॥

युष्माकं स्मा रथाँ अनु मुदे दधे मरुतो जीरदानवः ।
वृष्टी द्यावो यतीरिव ॥ ५ ॥

युष्माकम् । स्म । रथान् । अनु । मुदे । दधे । मरुतः । जीरऽदानवः ।
वृष्टी । द्यावः । यतीःऽइव ॥ ५ ॥

हे ᵛजीरदानवः शीघ्रदाना हे ᵛमरुतः ᵛयुष्माकं ᵛरथान् ᵛअनु उद्दिश्य ᵛमुदे मोदाय ᵛदधे धारयामि करोमीत्यर्थः । सामर्थ्यात् स्तुतीरिति लक्ष्यते । ᵛस्म[1] इति पूरणः[1] । ᵛवृष्टी वृष्ट्या[2] ᵛयतीः सर्वत्र गच्छन्तीः ᵛद्यावः दीप्तीरिव दृश्यमानान् रथानिति संबन्धः ॥ ॥ ११ ॥

कारीर्यां तिस्रः पिण्ड्यो होतव्याः । तत्र द्वितीयायाः ' आ यं नरः ' इत्यनुवाक्या । सूत्रितं च—' आ यं नरः सुदानवो ददाशुषे विद्युन्महसो नरो अश्मदिद्यवः ' ( आश्व. श्रौ. २. १३ ) इति ॥

आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
वि पर्जन्यं सृजन्ति रोदसी अनु धन्वना यन्ति वृष्टयः ॥ ६ ॥

आ । यम् । नरः । सुऽदानवः । ददाशुषे । दिवः । कोशम् । अचुच्यवुः ।
वि । पर्जन्यम् । सृजन्ति । रोदसी इति । अनु । धन्वना । यन्ति । वृष्टयः ॥ ६ ॥

ᵛनरः नेतारः ᵛसुदानवः शोभनदाना मरुतः ᵛयं ᵛकोशम् । मेघनामैतत् । अपां कोशवद्धारकं मेघं ᵛददाशुषे हविर्दत्तवते यजमानाय ᵛदिवः अन्तरिक्षात् ᵛआ ᵛअचुच्यवुः आच्यावयन्ति ᵛपर्जन्यं मेघं ᵛरोदसी ᵛअनु द्यावापृथिव्यावनुसृत्य ᵛवि ᵛसृजन्ति विमोक्षयन्ति । पश्चात् ᵛधन्वना सर्वत्र गच्छतोदकेन सह ᵛवृष्टयः वृष्टिप्रदा मरुतः ᵛयन्ति सर्वत्र व्याप्नुवन्ति ॥

---

१. ख-च-झ-ण-न-भ-र-' स्मेति पूरणः ' नास्ति । २. त-वृष्टये ।

ततृदानाः सिन्धवः क्षोदसा रजः प्र सस्रुर्धेनवो यथा ।
स्यन्ना अश्वाइवाध्वनो विमोचने वि यद्वर्तन्त एन्यः ॥ ७ ॥

ततृदानाः । सिन्धवः । क्षोदसा । रजः । प्र । सस्रुः । धेनवः । यथा ।
स्यन्नाः । अश्वाःऽइव । अध्वनः । विऽमोचने । वि । यत् । वर्तन्ते । एन्यः ॥ ७ ॥

सिन्धवः स्यन्दमाना अपः ततृदानाः निर्भिन्दन्तः[1] मेघान्[1] मरुतः क्षोदसा उदकेन सह रजः अन्तरिक्षं प्र सस्रुः प्रसरन्ति । धेनवो यथा पयः सिञ्चन्त्यो नवप्रसूताः[2] गाव इव । किंच दृष्टान्तान्तरम् । स्यन्नाः आशुगतयः अश्वाइव अश्वाः[3] यथा अध्वनः विमोचने मनुष्याणामध्वविमोकाय संचरन्ति तथेत्यर्थः । यत् यदा एन्यः । नदीनामैतत् । नद्यः वि[4] वर्तन्ते[4] विविधं संचरन्ति । अथवा प्रतिनिवृत्य वर्तन्ते । प्रवर्धन्त इत्यर्थः । तदैवं[5] कुर्वन्तीति पूर्वत्रान्वयः ॥

आ यात मरुतो दिव आन्तरिक्षादमादुत । माव स्थात परावतः ॥ ८ ॥

आ । यात । मरुतः । दिवः । आ । अन्तरिक्षात् । अमात् । उत ।
मा । अव । स्थात । पराऽवतः ॥ ८ ॥

हे मरुतः परावतः अत्यन्तदूरदेशात् दिवः द्युलोकात् आ यात । तथा अन्तरिक्षात् आ यात । उत अपि च अमात् अस्माल्लोकादा यात । परावत इत्यत्रापि[6] वा योज्यम् । परावतो दूरदेशे तत्र तत्र द्युलोकादौ माव स्थात अवस्थितिं मा कुरुत ॥

मा वो रसानितभा कुभा क्रुमुर्मा वः सिन्धुर्नि रीरमत् ।
मा वः परि ष्ठात्सरयुः पुरीषिण्यस्मे इत्सुम्नमस्तु वः ॥ ९ ॥

मा । वः । रसा । अनितभा । कुभा । क्रुमुः । मा । वः । सिन्धुः । नि । रीरमत् ।
मा । वः । परि । स्थात् । सरयुः । पुरीषिणी । अस्मे इति । इत् । सुम्नम् । अस्तु । वः ॥९॥

हे मरुतः वः युष्मान् रसा । नदीनामैतत् । ‘ रसा नदी भवति ’ ( निरु. ११. २५ ) इति निरुक्तम् । रसनवती शब्दवती । अनितभा । इता प्राप्ता भा यस्याः सा इतभा । न तादृश्यनितभा । कुभा कुत्सितदीप्तिश्च मा नि रीरमत् मा[7] निकृष्टं[7] रमतु । क्रुमुः सर्वत्रक्रमणः सिन्धुः समुद्रश्च मा नि रीरमत् । तथा पुरीषिणी । पुरीषमुदकम् । तद्वती सरयुः अपि मा परि ष्ठात्

---

१. ख-च-ण-भ–तरन्तः; झ–तितरन्तः; त-न-र–वितरन्तः । २. ख-च-झ-ण-त-न-भ-र–नवप्रसूतिकाः । ३. ग-घ-ज-र-श–‘ अश्वाः ’ नास्ति । ४. ख-च-ण-त-भ–विमोकाय वर्तन्ते; न–विमोकाय विवर्तन्ते । ५. ख-च-झ-ण-न-भ-र-श–तदेवम् । ६. ख-च-ण-त-न-भ-र–इत्यत्र । ७. ख-च-ण-त-न-भ-र–निकृष्टम्; श–निकृष्टं मा ।

परितस्तिष्ठतु मा निरुणद्धु । अस्मे इत् अस्मास्वेव अस्तु सुम्नं त्वदागमनजनितं सुखं वः युष्माकं संबन्धि युष्मत्स्वभूतम् ।

तं वः शर्धं रथानां त्वेषं गणं मारुतं नव्यसीनाम् ।
अनु प्र यन्ति वृष्टयः ॥ १० ॥

तम् । वः । शर्धम् । रथानाम् । त्वेषम् । गणम् । मारुतम् । नव्यसीनाम् ।
अनु । प्र । यन्ति । वृष्टयः ॥ १० ॥

तं मारुतमित्यनेन संबध्यते । वः युष्माकं प्रेरकं नव्यसीनां नूतनानां रथानां शर्धं बलं त्वेषं दीप्तं तं मारुतं गणं च स्तौमीत्यर्थः । यद्वा । रथानां रंहणशीलानां वो युष्माकं शर्धं परेषामभिभावुकं गणं स्तौमीत्येकमेव वाक्यम् । अथ परोक्षकृतः । वृष्टयः युष्मान् अनु प्र यन्ति प्रकर्षेण गच्छन्ति[1] । यद्वा । वर्षका मरुतोऽनु अनुकूलं प्रकृष्टं यन्ति गच्छन्ति ॥ ॥ १२ ॥

शर्धंशर्धं व एषां व्रातंव्रातं गणंगणं सुशस्तिभिः ।
अनु क्रामेम धीतिभिः ॥ ११ ॥

शर्धम्ऽशर्धम् । वः । एषाम् । व्रातम्ऽव्रातम् । गणम्ऽगणम् । सुशस्तिऽभिः ।
अनु । क्रामेम । धीतिऽभिः ॥ ११ ॥

हे मरुतः एषां वः युष्माकं शर्धंशर्धं तत्तद्बलं व्रातंव्रातम् । अविवक्षितगणः[2] व्रातः । तं तं व्रातं वः गणंगणं तं तं सप्तसप्तसमुदायात्मकं गणंगणं च सुशस्तिभिः शोभनस्तुतिभिः धीतिभिः कर्मभिर्हविष्प्रदानादिलक्षणैः अनु क्रामेम अनुगच्छेम ॥

कस्मा अद्य सुजाताय रातहव्याय प्र ययुः । एना यामेन मरुतः ॥ १२ ॥
कस्मै । अद्य । सुऽजाताय । रातऽहव्याय । प्र । ययुः । एना । यामेन । मरुतः ॥ १२ ॥

अद्य अस्मिन् दिने कस्मै सुजाताय रातहव्याय दत्तहविष्काय प्र ययुः प्रकर्षेण गच्छेयुः एना अनेन यामेन रथेन मरुतः ॥

येन तोकाय तनयाय धान्यं बीजं वहध्वे अक्षितम् ।
अस्मभ्यं तद्धत्तन यद्व ईमहे राधो विश्वायु सौभगम् ॥ १३ ॥

येन । तोकाय । तनयाय । धान्यम् । बीजम् । वहध्वे । अक्षितम् ।
अस्मभ्यम् । तत् । धत्तन । यत् । वः । ईमहे । राधः । विश्वऽआयु । सौभगम् ॥ १३ ॥

---

१. ख-च-ण-वाञ्छति; भ–वाञ्छयन्ति । २. त-न-र-विवक्षितगणः ।

हे मरुतः $^{v}$येन सदयेन मनसा $^{v}$तोकाय पुत्राय $^{v}$तनयाय तत्पुत्राय धनाय वा $^{v}$धान्यं $^{v}$बीजम् $^{v}$अक्षितम् अक्षीणं $^{v}$वहध्वे धारयध्वे तेन चित्तेन $^{v}$अस्मभ्यं $^{v}$तत् धान्यं बीजं $^{v}$धत्तन । $^{v}$यत् च $^{v}$वः युष्मान् $^{v}$ईमहे याचामहे $^{v}$राधः धनं $^{v}$विश्वायु सर्वान्नोपेतं कृत्स्नायुष्योपेतं वा $^{v}$सौभगं सौभाग्यं च तद्दत्तनेति समन्वयः ॥

अतीयाम निदस्तिरः स्वस्तिभिर्हित्वावद्यमरातीः ।
वृष्ट्वी शं योराप उस्रि भेषजं स्याम मरुतः सह ॥ १४ ॥

अति । इयाम । निदः । तिरः । स्वस्तिऽभिः । हित्वा । अवद्यम् । अरातीः ।
वृष्ट्वी । शम् । योः । आपः । उस्रि । भेषजम् । स्याम । मरुतः । सह ॥ १४ ॥

हे मरुतो वयं[1] $^{v}$स्वस्तिभिः क्षेमैः $^{v}$अवद्यं पापं $^{v}$हित्वा परित्यज्य $^{v}$निदः निन्दकान् $^{v}$अरातीः शत्रून् $^{v}$तिरः प्राप्तान् । यद्वा तिरः अन्तर्हितम् । $^{v}$अतीयाम अतिक्रम्य गच्छेम तिरस्कुर्म इत्यर्थः । अनेनानिष्टपरिहारः प्रार्थित उत्तरेणेष्टप्राप्तिरुच्यते । $^{v}$वृष्ट्वी वृष्टिषु युष्मत्प्रेरितासु सतीषु $^{v}$शं सुखं $^{v}$योः पापानां यावनं[2] च $^{v}$आपः उदकानि ॥ शसः स्थाने जस् ॥ $^{v}$उस्रि गोयुक्तं $^{v}$भेषजम् । यद्यप्येतदुदकनाम तथापि पृथगपामभिधानादत्र तद्धेतुकार्यमन्नमुच्यते । तत् सर्वं $^{v}$सह $^{v}$स्याम लभेमहि हे $^{v}$मरुतः वयम् । यद्वा । आपो युष्मत्प्रेरिता उक्तं सर्वं कुर्वन्तु । वयं सर्वे सहैव स्याम भवेम युष्मत्स्वभूताः ॥

सुदेवः समहासति सुवीरो नरो मरुतः स मर्त्यः ।
यं त्रायध्वे स्याम ते ॥ १५ ॥

सुऽदेवः । समह । असति । सुऽवीरः । नरः । मरुतः । सः । मर्त्यः ।
यम् । त्रायध्वे । स्याम । ते ॥ १५ ॥

हे $^{v}$समह । प्रशस्तवचनः समहशब्दः । हे पूजित मरुतां गण $^{v}$सः[3] $^{v}$मर्त्यः च[3] $^{v}$सुदेवः कल्याणमरुत्संज्ञकदेवोपेतः $^{v}$असति भवति । हे $^{v}$नरः नेतारो हे $^{v}$मरुतः सः[4] $^{v}$सुवीरः शोभनपुत्राद्युपेतश्च असति भवति । $^{v}$यं मर्त्यं $^{v}$त्रायध्वे पालयध्वे । एवं[5] भवति $^{v}$ते वयं $^{v}$स्याम युष्मदीयाः ॥

स्तुहि भोजान्त्स्तुवतो अस्य यामनि रणन्गावो न यवसे ।
यतः पूर्वाँइव सखीँरनु ह्वय गिरा गृणीहि कामिनः ॥ १६ ॥

स्तुहि । भोजान् । स्तुवतः । अस्य । यामनि । रणन् । गावः । न । यवसे ।
यतः । पूर्वान्ऽइव । सखीन् । अनु । ह्वय । गिरा । गृणीहि । कामिनः ॥ १६ ॥

---

१. ख-च-झ-ण-न-भ-र- यम् । २. ख-च-झ-ण-त-न-भ-र- यवनम् । ३. ग-घ-ज-र-श- ‘ स मर्त्यश्च ’ नास्ति । ४. ग-घ-ज- स मर्त्यः । ५. त-य एवम् ।

हे ऋषे ᵛस्तुवतः स्तुतिं कुर्वतः ᵛअस्य यजमानस्य ᵛयामनि यज्ञे ᵛभोजान् दातॄन् मरुतः ᵛस्तुहि । ᵛगावो ᵛन ᵛयवसे । तृणादिभक्षणाय गच्छन्त्यः[1] गावो यथा रमन्ते तद्वन्मरुतोऽपि ᵛरणन् रमन्ताम् । ᵛयतः गच्छतो मरुतः ᵛपूर्वान् पुरातनान् ᵛसखीन् ᵛइव ᵛअनु ᵛह्वय आह्वय । ᵛकामिनः स्तुतीच्छावतो मरुतः ᵛगिरा स्तुत्या ᵛगृणीहि स्तुहि ॥ ॥ १३ ॥

' प्र शर्धाय ' इति पञ्चदशर्चं दशमं सूक्तं श्यावाश्वस्यार्षं मरुद्देवताकम्[2] । चतुर्दशी त्रिष्टुप् शिष्टा जगत्यः । ' प्र शर्धाय पञ्चोना जागतमुपान्त्या त्रिष्टुप् ' इत्यनुक्रान्तम् । सूक्तविनियोगो लैङ्गिकः । आग्नेन्द्रामारुत्यां प्रधानस्य याज्या । सूत्रितं च—' प्र शर्धाय मारुताय स्वभानव इत्यैन्द्रीमनूच्य मारुत्या यजेत् ' ( आश्व. श्रौ. २. ११ ) इति ॥

**प्र शर्धा॑य॒ मारु॑ताय॒ स्वभा॑नव इ॒मां वाच॑मनजा पर्वत॒च्युते॑ ।**

**घ॒र्म॒स्तुभे॑ दि॒व आ पृ॑ष्ठ॒यज्व॑ने द्यु॒म्नश्र॑वसे॒ महि॑ नृ॒म्णम॑र्चत ॥ १ ॥**

प्र । शर्धा॑य । मारु॑ताय । स्वऽभा॑नवे । इ॒माम् । वाच॑म् । अ॒न॒ज॒ । प॒र्व॒त॒ऽच्यु॒ते॑ ।

घ॒र्म॒ऽस्तुभे॑ । दि॒वः । आ । पृ॒ष्ठ॒ऽयज्व॑ने । द्यु॒म्नऽश्र॑वसे । महि॑ । नृ॒म्णम् । अ॒र्च॒त ॥ १ ॥

प्र अनजेति संबन्धः । ᵛमारुताय मरुत्संबन्धिने ᵛशर्धाय बलाय ᵛइमां क्रियमाणां ᵛवाचं[3] स्तुतिं ᵛप्र ᵛअनज प्रापय । ᵛस्वभानवे स्वायत्ततेजसे ᵛपर्वतच्युते पर्वतस्य च्यावयित्रे ᵛघर्मस्तुभे घर्मस्य स्तोभयित्रे ᵛदिव ᵛआ द्युलोकादागच्छते ᵛपृष्ठयज्वने[4] षट् पृष्ठैः रथन्तरबृहदादिभिरीजानाय ᵛद्युम्नश्रवसे द्योतमानान्नाय ᵛमहि महत् प्रभूतं ᵛनृम्णं[5] धनं हविर्लक्षणम् ᵛअर्चत ददतेत्यर्थः ॥

कारीर्यां प्रथमस्याः[6] पिण्ड्याः[6] ' प्र वो मरुतः ' इति याज्या । सूत्रितं च–' प्र वो मरुतस्तविषा आ यं नरः ' ( आश्व. श्रौ. २. १३ ) इति ॥

**प्र वो॑ मरुतस्त॒वि॒षा उ॑द॒न्यवो॑ वयो॒वृधो॑ अश्व॒युजः॒ परि॑ज्रयः ।**

**सं वि॒द्युता॒ दध॑ति॒ वाश॑ति त्रि॒तः स्वर॒न्त्यापो॒ऽवना॒ परि॑ज्रयः ॥ २ ॥**

प्र । वः॒ । म॒रु॒तः॒ । त॒वि॒षाः । उ॒द॒न्यवः॑ । व॒यः॒ऽवृधः॑ । अ॒श्व॒ऽयुजः॑ । परि॑ऽज्रयः ।

सम् । वि॒ऽद्युता॑ । दध॑ति । वाश॑ति । त्रि॒तः । स्वर॑न्ति । आपः॑ । अ॒वना॑ । परि॑ऽज्रयः ॥ २ ॥

हे ᵛमरुतः ᵛवः युष्माकं गणाः ᵛप्र प्रादुर्भवन्ति । कीदृशा गणाः । ᵛतविषाः दीप्ता महान्तो वा ᵛउदन्यवः उदकेच्छवो जगद्रक्षणार्थं[7] ᵛवयोवृधः अन्नस्य वर्धयितारः ᵛअश्वयुजः गमनाय रथेऽश्वानां योक्तारः ᵛपरिज्रयः परितो गन्तारः ᵛविद्युता ᵛसं ᵛदधति संगच्छन्ते । तदानीं ᵛत्रितः त्रिषु स्थानेषु

---

१. ख-च-झ-ण-भ—वाञ्छन्त्यः । २. ख-च-ण-भ—मरुद्देवताकं च । ३. ख-च-झ-ण-न-भ-र-श—' वाचं ' नास्ति । ४. ख-च-झ-ण-त-न-भ-र— यद्वा पृष्ठयज्वने । ५. त—द्युम्नम् । ६. ख-च-झ-ण-भ—प्रथमायाः पिण्डयाः; न—प्रथमायां पिण्डयाम् । ७. ख-च-झ-ण-न-भ-र—जगद्रक्षार्थम् ।

तायमानो मेघो मरुद्गणो वा वाशति शब्दयति । अस्मिन् पक्षे संघवादः[1] अयम् । तदा आपः परिज्रयः परितो गन्त्र्य आपः अवना अवनौ भूमौ स्वरन्ति अधः पतन्ति ॥

'विद्युन्महसः' इति तृतीया कारीर्यामिव द्वितीयस्याः पिण्ड्या याज्या । सूत्रितं च–'विद्युन्महसो नरोऽश्मदिद्यवः कृष्णं नियानं हरयः सुपर्णाः' ( आश्व. श्रौ. २. १३ ) इति ॥

**विद्युन्महसो नरो अश्मदिद्यवो वातत्विषो मरुतः पर्वतच्युतः ।**

**अब्दया चिन्मुहुरा ह्रादुनीवृतः स्तनयदमा रभसा उदोजसः ॥ ३ ॥**

विद्युत्ऽमहसः । नरः । अश्मऽदिद्यवः । वातऽत्विषः । मरुतः । पर्वतऽच्युतः ।

अब्दऽया । चित् । मुहुः । आ । ह्रादुनिऽवृतः । स्तनयत्ऽअमाः । रभसाः । उत्ऽओजसः ॥३॥

विद्युन्महसः विद्योतमानतेजसः नरः वृष्ट्यादेर्नेतारः अश्मदिद्यवः व्याप्तायुधा अश्मसारमयायुधा वा वातत्विषः प्राप्तदीप्तयः पर्वतच्युतः पर्वतानां मेघानां वा च्यावयितारः अब्दया मुहुः उदकानां दातारः ॥ जसः[2] याजादेशः । चिदिति पूरणः ॥ ह्रादुनीवृतः ह्रादुन्याः अशनेः[3] प्रवर्तकाः स्तनयदमाः । अमाशब्दः साहित्यवाची । शब्दोपेतगणा इत्यर्थः । रभसाः वृष्ट्यर्थमुद्युञ्जानाः उदोजसः उद्धतबलाः[4] मरुतः वृष्ट्यर्थं प्रादुर्भवन्तीत्यर्थः ॥

**व्य१क्तून्रुद्रा व्यहानि शिक्वसो व्य१न्तरिक्षं वि रजांसि धूतयः ।**

**वि यदज्राँ अजथ नाव ईं यथा वि दुर्गाणि मरुतो नाह रिष्यथ ॥ ४ ॥**

वि । अक्तून् । रुद्राः । वि । अहानि । शिक्वसः । वि । अन्तरिक्षम् । वि । रजांसि । धूतयः ।

वि । यत् । अज्रान् । अजथ । नावः । ईम् । यथा ।

वि । दुःऽगानि । मरुतः । न । अह । रिष्यथ ॥ ४ ॥

हे रुद्राः रुद्रपुत्रा मरुतः अक्तून् रात्रीः वि अजथ इत्युत्तरार्धगतेन संबध्यते । एवं सर्वत्रेति । क्षिपथेति तस्यार्थः । अहानि अपि वि अजथ । हे शिक्वसः शक्ताः सर्वमपि कर्तुम् अन्तरिक्षं वि अजथ । तथा रजांसि वि अजथ । हे धूतयः कम्पकाः यत् यदा अज्रान् मेघान् वि[5] अजथ[5] गमयथ नाव ईं ताः यथा समुद्रं तद्वत् दुर्गाणि शत्रुनगराणि वि अजथ हे मरुतो नाह रिष्यथ नैव हिंसथ ॥

---

१. ख-च-ण–सर्वदः; झ-त-भ–संवादः; न–संप्रवादः; श–संविद्युता । २. र-श– शसः । ३. ख-च-झ-ण-न-भ-र–'अशनेः' नास्ति । ४. ख-च-ण–बहुलाः; झ-न-र–उद्गतबलाः; भ–हुतबलाः । ५. झ-त-भ-र–विव्यथ ।

तद्वी॒र्यं॑ वो मरुतो महित्व॒नं दी॒र्घं त॑तान॒ सूर्यो॒ न योज॑नम् ।
एता॒ न यामे॒ अगृ॑भीतशोचि॒षोऽन॑श्वदां॒ यन्न्यया॑तना गि॒रिम् ॥ ५ ॥

तत् । वी॒र्य॑म् । व॒ः । म॒रु॒त॒ः । म॒हि॒ऽत्व॒नम् । दी॒र्घम् । त॒ता॒न॒ । सूर्यः॑ । न । योज॑नम् ।
एताः॑ । न । यामे॑ । अगृ॑भीतऽशोचिषः । अन॑श्वऽदाम् । यत् । नि । अया॑तन । गि॒रिम् ॥ ५ ॥

हे ᵛमरुतः ᵛवः युष्माकं ᵛतद्वीर्यं प्रसिद्धं सामर्थ्यं ᵛमहित्वनं महत्त्वं ᵛदीर्घम् अत्यन्तमायतं ᵛततान तनोति । लोके ᵛसूर्यो ᵛन ᵛयोजनं सूर्यस्तेज इव । ᵛएता ᵛन[१] एतवर्णा देवानामश्वा इव । ते यथा ᵛयामे[२] गमने योजनं[२] दीर्घं तन्वन्ति तद्वदित्यपरो दृष्टान्तः । ते च ᵛअगृभीतशोचिषः अगृहीततेजस्काः । यद्वैतन्मरुतां विशेषणम् । हे मरुतो यूयमगृभीतशोचिषः सन्तः ᵛयत् यदा ᵛअनश्वदां व्यापकोदकादातारं पणिभिरपहृतानामश्वानामप्रदातारं वा ᵛगिरिं मेघं पर्वतं वा ᵛन्ययातन निहतवन्तः[३] स्थ[३] ॥ ॥ १४ ॥

अभ्रा॑जि॒ शर्धो॑ मरुतो॒ यद॑र्ण॒सं मोष॑था वृ॒क्षं क॑प॒नेव॑ वेधसः ।
अध॑ स्मा नो अ॒रम॑तिं सजोषस॒श्चक्षु॑रिव॒ यन्त॒मनु॑ नेषथा सु॒गम् ॥ ६ ॥

अभ्रा॑जि । शर्धः॑ । म॒रु॒त॒ः । यत् । अ॒र्ण॒सम् । मोष॑थ । वृ॒क्षम् । क॒प॒नाऽइ॑व । वे॒ध॒स॒ः ।
अध॑ । स्म॒ । न॒ः । अ॒रम॑तिम् । स॒ऽजो॒ष॒स॒ः ।
चक्षुः॑ऽइव । यन्त॑म् । अनु॑ । ने॒ष॒थ॒ । सु॒ऽगम् ॥ ६ ॥

हे ᵛवेधसः वृष्टेर्विधातारो हे ᵛमरुतः ᵛशर्धः भवतां गणम् ᵛअभ्राजि भ्राजते । ᵛयत् यस्मात् ᵛअर्णसम् उदकवन्तं ᵛवृक्षम् । वृश्च्यते विदार्यत इति वृक्षो मेघः । तं ᵛमोषथ ताडयथेत्यर्थः । ᵛकपनेव[४] । इवेत्यनर्थकः । कम्पनाः सन्तः । यद्वा । कपनाः क्रमयो वृक्षं घुणादयः । ते यथा मुष्णन्ति तद्वत् । ᵛअध अपि च । ᵛस्म इति पूरणः । ᵛनः अस्मान् । मामित्यर्थः । हे ᵛसजोषसः युष्मासु परस्परं समानप्रीतयो यूयम् ᵛअरमतिम् आरमणं धनादिकं प्रति ᵛयन्तं गच्छन्तम् ᵛअनु ᵛनेषथ अनुक्रमेण नयथ ᵛसुगं सुगमनं मार्गम् । तत्र दृष्टान्तः । ᵛचक्षुरिव । तद्यथा मार्गप्रदर्शनेन[५] नायकं[५] भवति तद्वत् ॥

---

१. ख-च-झ-ण-त-न-भ-र-श–' न ' नास्ति । २. ख-च-ण–ते यजनम्; झ-न-भ–मे यजनम्; र–यामे यजनम्; श–यामे गमनाय योजनम् । ३. ख-च-ण–निहतवन्तः स्थाः; ग-घ-ज-श–निहतवन्तः । ४. त–कपना इव । ५. ख-ग-घ-च-ज-ण–मार्गप्रदर्शने नायकम्; श–मार्गप्रदर्शननायकम् ।

**न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति ।**
**नास्य राय उप दस्यन्ति नोतय ऋषिं वा यं राजानं वा सुषूदथ ॥ ७ ॥**

न । सः । जीयते । मरुतः । न । हन्यते । न । स्रेधति । न । व्यथते । न । रिष्यति ।
न । अस्य । रायः । उप । दस्यन्ति । न । ऊतयः ।
ऋषिम् । वा । यम् । राजानम् । वा । सुसूदथ ॥ ७ ॥

हे मरुतः यूयं यम् ऋषिं मन्त्रद्रष्टारं ब्राह्मणं राजानं वा सुषूदथ[1] क्षारयथ प्रेरयथ सत्कर्मसु सः ऋषी राजा वा न जीयते। अन्यैर्न पराभाव्यते ॥ 'जि जये' 'ज्या वयोहानौ' इत्यस्य वा रूपम् ॥ हे मरुतः न हन्यते । न हिंस्यते अत्यर्थं प्राणैर्न वियुज्यते । न स्रेधति न क्षीयते । न व्यथते न पीड्यते । न रिष्यति न हिंस्यते । अत्र हिंसा बाधमात्रम् । अस्य रायः धनानि न उप[2] दस्यन्ति नोपक्षीयन्ते । तथा नोतयः रक्षा अप्युप दस्यन्ति ॥

कारीर्यामेव तृतीयस्याः पिण्डया याज्या 'नियुत्वन्तः' इत्येषा । सूत्रितं च—'नियुत्वन्तो ग्रामजितो यथा नरोऽग्ने बाधस्व वि मृधो वि दुर्गहा' ( आश्व. श्रौ. २. १३ ) इति ॥

**नियुत्वन्तो ग्रामजितो यथा नरोऽर्यमणो न मरुतः कवन्धिनः ।**
**पिन्वन्त्युत्सं यदिनासो अस्वरन्व्युन्दन्ति पृथिवीं मध्वो अन्धसा ॥ ८ ॥**

नियुत्वन्तः । ग्रामऽजितः । यथा । नरः । अर्यमणः । न । मरुतः । कवन्धिनः ।
पिन्वन्ति । उत्सम् । यत् । इनासः । अस्वरन् ।
वि । उन्दन्ति । पृथिवीम् । मध्वः । अन्धसा ॥ ८ ॥

नियुत्वन्तः नियुत्संज्ञकैरश्वैस्तद्वन्तो मरुतः ग्रामजितः संघात्मकस्य पदार्थस्य विश्लेषयितारः नरः नराकारा नेतारो वा । मरुतो नियुत्वन्तः । अयं शब्दोऽत्राश्वसामान्ये वर्तते । नितरां यवनवन्तोऽश्ववन्तो ग्रामजितो ग्रामस्य जेतारो नर इव मनुष्या इव तथा भवन्ति । अर्यमणो न अर्यमप्रभृतय आदित्या इव । दीप्ता इति शेषः । तादृशाः मरुतः कवन्धिनः उदकवन्तो भवन्ति । यत् यदा इनासः ईश्वराः उत्सं कूपादिनिम्नप्रदेशं मेघं वा पिन्वन्ति प्याययन्त्युदकेन । यदा अस्वरन् शब्दयन्ति यदा व्युन्दन्ति पृथिवीं मध्वः मधुरस्योदकस्य अन्धसा सारेण[3] तदैवं भवति। यद्वा । यदास्वरन् तदा पिन्वन्त्युत्समिनासः तदान्धसः पृथिवीं व्युन्दन्तीति ॥

---

१. ख-च-ञ-ण--न-भ-र-यं सुषूदथ । २. त-तु उप । ३. ख-अन्नेन ।

प्रवत्वतीयं पृथिवी मरुद्भ्यः प्रवत्वती द्यौर्भवति प्रयद्भ्यः ।
प्रवत्वतीः पथ्या अन्तरिक्ष्याः प्रवत्वन्तः पर्वता जीरदानवः ॥ ९ ॥

प्रवत्वती । इयम् । पृथिवी । मरुत्ऽभ्यः । प्रवत्वती । द्यौः । भवति । प्रयत्ऽभ्यः ।
प्रवत्वतीः । पथ्याः । अन्तरिक्ष्याः । प्रवत्वन्तः । पर्वताः । जीरऽदानवः ॥ ९ ॥

ᵛइयं ᵛपृथिवी ᵛमरुद्भ्यः मरुतामर्थाय ᵛप्रवत्वती । प्रवन्तः प्रकर्षवन्तो विस्तीर्णाः प्रदेशा यस्यां सा प्रवत्वती । तादृशी ᵛभवति । कृत्स्नापि भूमिः मरुत्परा[1] भवतीत्यर्थः । तां सर्वामपि व्याप्नुवन्तीति यावत् । तथा ᵛद्यौः अपि ᵛप्रयद्भ्यः प्रकर्षेण गच्छद्भ्यस्तेभ्यः ᵛप्रवत्वती भवति । सापि मरुतां संचाराय । तथा ᵛअन्तरिक्ष्याः अन्तरिक्षे भवाः ᵛपथ्याः स्नुगतयोऽपि ᵛप्रवत्वतीः प्रवत्वत्यो मरुद्भ्यो भवन्ति । ᵛपर्वताः[2] अद्रयो मेघा वा ᵛप्रवत्वन्तः भवन्ति ᵛजीरदानवः क्षिप्रदाना मरुद्भ्यः ॥

यन्मरुतः सभरसः स्वर्णरः सूर्य उदिते मदथा दिवो नरः ।
न वोऽश्वाः श्रथयन्ताह सिस्रतः सद्यो अस्याध्वनः पारमश्नुथ ॥ १० ॥

यत् । मरुतः । सऽभरसः । स्वःऽनरः । सूर्ये । उत्ऽइते । मदथ । दिवः । नरः ।
न । वः । अश्वाः । श्रथयन्त । अह । सिस्रतः । सद्यः । अस्य । अध्वनः । पारम् । अश्नुथ ॥ १० ॥

हे ᵛमरुतः ᵛसभरसः सहबलाः ᵛस्वर्णरः सर्वस्य नेतारो यूयं ᵛयत् यदा ᵛसूर्ये ᵛउदिते उद्गते मध्याह्ने ᵛमदथ सोमेन हे ᵛदिवः द्युलोकस्य ᵛनरः नेतारः । यदा सोमं पातुमिच्छथेत्यर्थः । तदा ᵛवोऽश्वाः ᵛसिस्रतः सरन्तः ᵛन ᵛअह ᵛश्रथयन्त नैव श्लथयन्ति । ᵛसद्यः तदानीमेव ᵛअस्याध्वनः देवयजनमार्गस्य ᵛपारमश्नुथ व्याप्नुथ । यद्वा । यदा सोमेन मदथ तदा त्वदीया अश्वा न शिथिला भवन्ति । यूयं च कृत्स्नस्य लोकत्रयमार्गस्य पारमश्नुथ ॥ ॥ १५ ॥

अंसेषु व ऋष्टयः पत्सु खादयो वक्षःसु रुक्मा मरुतो रथे शुभः ।
अग्निभ्राजसो विद्युतो गभस्त्योः शिप्राः शीर्षसु वितता हिरण्ययीः ॥ ११ ॥

अंसेषु । वः । ऋष्टयः । पत्ऽसु । खादयः । वक्षःऽसु । रुक्माः । मरुतः । रथे । शुभः ।
अग्निऽभ्राजसः । विऽद्युतः । गभस्त्योः ।
शिप्राः । शीर्षऽसु । विऽतताः । हिरण्ययीः ॥ ११ ॥

---

१. ख-च-ण-मरुच्चाराः; झ-म-मरुच्चाराय; त-र-मरुत्साराय; न-मरुतामर्थाय; श-मरुदर्थाय।
२. झ-न-म-र-तं पर्वताः।

हे ᐯमरुतः ᐯवः युष्माकम् ᐯअंसेषु ᐯऋष्टयः आयुधानि भासन्त इति शेषः । ᐯपत्सु ᐯखादयः कटकाः । ᐯवक्षःसु ᐯरुक्माः हाराः । ᐯरथे ᐯशुभः मधुराप्रुषा आपः । ᐯअग्निभ्राजसः अग्निदीप्ताः ᐯविद्युतो ᐯगभस्त्योः हस्तयोर्भासन्त इत्यर्थः । ᐯशीर्षसु शिरःसु ᐯहिरण्ययीः[1] हिरण्मय्यः[1] ᐯशिप्राः उष्णीषमय्यः ᐯवितताः विस्तृताः । प्रतिवाक्यं वितता इति वा संबन्धनीयम् ॥

**तं नाकमर्यो अगृभीतशोचिषं रुशत्पिप्पलं मरुतो वि धूनुथ ।**

**समच्यन्त वृजनातित्विषन्त यत्स्वरन्ति घोषं विततमृतायवः ॥ १२ ॥**

तम् । नाकम् । अर्यः । अगृभीतऽशोचिषम् । रुशत् । पिप्पलम् । मरुतः । वि । धूनुथ ।

सम् । अच्यन्त । वृजना । अतित्विषन्त । यत् ।

स्वरन्ति । घोषम् । विऽततम् । ऋतऽयवः ॥ १२ ॥

हे ᐯमरुतः ᐯअर्यः गन्तारो यूयं ᐯतं प्रसिद्धं ᐯनाकम् आदित्यम् । नास्मिन्नकमस्तीति नाकः । ᐯअगृभीतशोचिषम् असुरैरनपहृततेजस्कं तं ᐯरुशत् शुभ्रवर्णं ᐯपिप्पलम् उदकं ᐯवि ᐯधूनुथ विविधं चालयथ॥ अयं द्विकर्मकः ॥ ᐯयत् यदा ᐯवृजना बलानि ᐯसमच्यन्त संगता बलिनो भवथ । हविर्भिः अस्मद्दत्तैरिति भावः । पश्चात् ᐯअतित्विषन्त दीप्ता भवथ ॥ उभयत्र पुरुषव्यत्ययः ॥ यद्वा । यदासुरा वृजना बलैः समच्यन्त अतित्विषन्त तदा ᐯघोषं भयजनकं शब्दं ᐯविततं विस्तृतं ᐯस्वरन्ति कुरुतेत्यर्थः। ᐯऋतायवः उदकमिच्छन्तो यूयम् । यद्वा । उत्तरार्धं ऋत्विग्यजमानपरतया व्याख्येयः । यत् यदा ऋतायवः यज्ञकामा यजमानादयो यदा समच्यन्त संगताः वृजना बलान्यतित्विषन्त च स्वरन्ति घोषं स्तोत्रं विततं तदानीं पिप्पलं वि धूनुथेति संबन्धः ॥

**युष्मादत्तस्य मरुतो विचेतसो रायः स्याम रथ्यो३ वयस्वतः ।**

**न यो युच्छति तिष्यो३ यथा दिवो३स्मे रारन्त मरुतः सहस्रिणम् ॥ १३ ॥**

युष्माऽदत्तस्य । मरुतः । विऽचेतसः । रायः । स्याम । रथ्यः । वयस्वतः ।

न । यः । युच्छति । तिष्यः । यथा । दिवः । अस्मे इति । ररन्त । मरुतः । सहस्रिणम् ॥ १३ ॥

हे ᐯविचेतसः विविधप्रज्ञा हे ᐯमरुतः ᐯयुष्मादत्तस्य युष्माभिर्दत्तस्य ᐯवयस्वतः अन्नवतः ᐯरायः धनस्य ᐯस्याम भवेम स्वामिनः । के । ᐯरथ्यः रथस्वामिनो वयम् । ᐯयः युष्माभिर्दत्तो राः ᐯन ᐯयुच्छति न च्यवते । ᐯयथा ᐯदिवः सकाशात् ᐯतिष्यः आदित्यो न युच्छति । तथा ᐯअस्मे अस्मासु ᐯसहस्रिणम् अपरिमितं ᐯरारन्त रमयत हे ᐯमरुतः ॥

---

१. त–हिरणमयीर्हिरण्यमयीः ।

यूयं र॒यिं म॑रुतः स्पा॒र्हवी॑रं यू॒यमृषि॑मवथ॒ साम॑विप्रम् ।
यू॒यमर्व॑न्तं भर॒ताय॒ वाजं॑ यू॒यं ध॑त्थ॒ राजा॑नं श्रु॒ष्टिम॑न्तम् ॥ १४ ॥

यू॒यम् । र॒यिम् । म॒रु॒तः॒ । स्पा॒र्हऽवी॑रम् । यू॒यम् । ऋषि॑म् । अ॒व॒थ॒ । साम॑ऽविप्रम् ।
यू॒यम् । अर्व॑न्तम् । भ॒र॒ताय॑ । वाज॑म् । यू॒यम् । ध॒त्थ॒ । राजा॑नम् । श्रु॒ष्टिऽम॑न्तम् ॥ १४ ॥

हे ᵛमरुतः ᵛयूयं ᵛरयिं धनं ᵛस्पार्हवीरं स्पृहणीयैर्वीरैः पुत्रभृत्यादिभिरुपेतं ᵛधत्थ दत्थ । हे मरुतः ᵛयूयं ᵛसामविप्रं साम्नां विविधं प्रेरयितारं यद्वा सामसहिता विप्रा यस्य तादृशम् ᵛऋषिमवथ रक्षथ । हे ᵛयूयम् ᵛअर्वन्तम् अश्वं ᵛवाजम् अन्नं च ᵛभरताय देवान् बिभ्रते श्यावाश्वाय धत्थ । हे मरुतः ᵛयूयं ᵛराजानं दीप्तं स्वामिनं वा ᵛश्रुष्टिमन्तं सुखवन्तम् । पुत्रमित्यर्थः । धत्थ ॥

तद्वो॑ यामि॒ द्रवि॑णं सद्यऊतयो॒ येना॒ स्व१॒॑र्ण त॒तना॑म॒ नॄँर॒भि ।
इ॒दं सु मे॑ मरुतो हर्यता॒ वचो॒ यस्य॒ तरे॑म॒ तर॑सा श॒तं हिमाः॑ ॥ १५ ॥

तत् । वः॒ । या॒मि॒ । द्रवि॑णम् । स॒द्यः॒ऽऊ॒त॒यः॒ । येन॑ । स्वः॑ । न । त॒तना॑म । नॄन् । अ॒भि ।
इ॒दम् । सु । मे॒ । म॒रु॒तः॒ । ह॒र्य॒त॒ । वचः॑ । यस्य॑ । तरे॑म । तर॑सा । श॒तम् । हिमाः॑ ॥ १५ ॥

हे ᵛसद्यऊतयः । तदानीमेव रक्षा येषां ते तादृशाः । सद्योगमना वा ᵛवः युष्मान् ᵛतत् ᵛद्रविणं धनं ᵛयामि याचामहे[1] । ᵛयेन धनेन ᵛनॄन् अस्मत्पुत्रभृत्यादीन् ᵛअभि ᵛततनाम ᵛस्वर्ण आदित्य इव रश्मीन् । हे ᵛमरुतः ᵛमे मम स्वभूतम् ᵛइदम् इदानीं क्रियमाणं ᵛवचः स्तोत्रं ᵛसु सुष्ठु ᵛहर्यत कामयध्वम्[2] । ᵛयस्य स्तोत्रवचसः ᵛतरसा बलेन ᵛशतं शतसंख्याकान् ᵛहिमाः हेमन्तान् ᵛतरेम शतसंवत्सरं जीवेमेत्यर्थः ॥ ॥ १६ ॥

‘ प्रयज्यवः ’ इति दशर्चमेकादशं सूक्तं श्यावाश्वस्यार्षं मारुतम् । दशमी त्रिष्टुप् शिष्टा जगत्यः । ‘ प्रयज्यवो दशान्त्या त्रिष्टुप् ’ इत्यनुक्रमणिका । आभिप्लविके षष्ठेऽहन्याग्निमारुत इदं सूक्तं मारुतनिविद्धानीयम् । सूत्रितं च—‘ प्रयज्यव इमं स्तोममित्याग्निमारुतम् ’ ( आश्व. श्रौ. ७. ७ ) इति ॥

प्रय॑ज्यवो म॒रुतो॒ भ्राज॑दृष्टयो बृ॒हद्वयो॑ दधिरे रु॒क्मव॑क्षसः ।
ईय॑न्ते॒ अश्वैः॑ सु॒यमे॑भिरा॒शुभिः॒ शुभं॑ या॒तामनु॒ रथा॑ अवृत्सत ॥ १ ॥

प्र॒ऽय॑ज्यवः । म॒रुतः॑ । भ्राज॑त्ऽऋष्टयः । बृ॒हत् । वयः॑ । द॒धि॒रे॒ । रु॒क्मऽव॑क्षसः ।
ईय॑न्ते । अश्वैः॑ । सु॒ऽयमे॑भिः । आ॒शुऽभिः॑ । शुभ॑म् । या॒ताम् । अनु॑ । रथाः॑ । अ॒वृ॒त्स॒त ॥ १ ॥

१. ख-च-ण-याचामि । २. झ-त-न-र-कामयत ।

ᵛप्रयज्यवः प्रकर्षेण यष्टारः ᵛभ्राजदृष्टयः दीप्तायुधाः ᵛमरुतः ᵛबृहत् प्रभूतं ᵛवयः यौवनलक्षणं प्रभूतमन्नं वा ᵛदधिरे धारयन्ति । ᵛरुक्मवक्षसः हारायतवक्षस्काः । ते मरुतः ᵛसुयमेभिः सुखेन नियमितुं शक्यैः ᵛआशुभिः शीघ्रगैः ᵛअश्वैः ᵛईयन्ते प्राप्यन्ते । ᵛशुभं शोभनं यथा भवति तथा । यद्वा । उदकमभिलक्ष्य ᵛयातां गच्छतां मरुतां ᵛरथाः अपि ᵛअनु ᵛअवृत्सत अनुवर्तन्ते ॥

स्वयं दधिध्वे तविषीं यथा विद बृहन्महान्त उर्विया वि राजथ ।
उतान्तरिक्षं ममिरे व्योजसा शुभं यातामनु रथा अवृत्सत ॥ २ ॥

स्वयम् । दधिध्वे । तविषीम् । यथा । विद । बृहत् । महान्तः । उर्विया । वि । राजथ ।
उत । अन्तरिक्षम् । ममिरे । वि । ओजसा । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ २ ॥

हे मरुतो यूयं ᵛस्वयम् असहायेनैव ᵛदधिध्वे धारयध्वे कुरुध्व इत्यर्थः । किम् । ᵛतविषीं बलं सामर्थ्यम् । ᵛयथा ᵛविद जानीथ । अप्रतिबद्धसामर्थ्या इत्यर्थः । हे ᵛमहान्तः यूयम् ᵛउर्विया उरवः सन्तः ᵛवि ᵛराजथ । ᵛउत अपि च ᵛअन्तरिक्षम् ᵛओजसा बलेन ᵛवि ᵛममिरे व्यामुथ । शुभमित्यादि गतम् ॥

साकं जाताः सुभ्वः साकमुक्षिताः श्रिये चिदा प्रतरं वावृधुर्नरः ।
विरोकिणः सूर्यस्येव रश्मयः शुभं यातामनु रथा अवृत्सत ॥ ३ ॥

साकम् । जाताः । सुऽभ्वः । साकम् । उक्षिताः । श्रिये । चित् । आ । प्रऽतरम् । ववृधुः । नरः ।
विऽरोकिणः । सूर्यस्यऽइव । रश्मयः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ३ ॥

ᵛसाकं सहैव ᵛजाताः उत्पन्नाः ᵛसुभ्वः सुष्ठु भवन्तः । महान्त इत्यर्थः । तथैव ᵛसाकं सहैव ᵛउक्षिताः सेक्तारो वर्षकाः ᵛश्रिये ᵛचित् शोभाया एव ᵛप्रतरं प्रकृष्टतरम् ᵛआ सर्वतः ᵛववृधुः अवर्धयन् । ᵛनरः कर्मणां नेतारः ᵛविरोकिणः विरोचमानाः ᵛसूर्यस्येव ᵛरश्मयः सूर्यरश्मय इव । शुभमित्यादि गतम् ॥

आभूषेण्यं वो मरुतो महित्वनं दिदृक्षेण्यं सूर्यस्येव चक्षणम् ।
उतो अस्माँ अमृतत्वे दधातन शुभं यातामनु रथा अवृत्सत ॥ ४ ॥

आऽभूषेण्यम् । वः । मरुतः । महिऽत्वनम् । दिदृक्षेण्यम् । सूर्यस्यऽइव । चक्षणम् ।
उतो इति । अस्मान् । अमृतऽत्वे । दधातन । शु .म् । याताम् । अनु । रथाः । अवृत्सत ॥ ४ ॥

हे ᵛमरुतः ᵛवः युष्माकं ᵛमहित्वनं महत्त्वम् ᵛआभूषेण्यं स्तुत्यम् । किंच ᵛसूर्यस्येव ᵛचक्षणं रूपमिव ᵛदिदृक्षेण्यं दर्शनीयम् । ᵛउतो अपि च ᵛअस्मान् ᵛअमृतत्वे मोक्षे स्वर्ग इत्यर्थः । तत्र ᵛदधातन धारयत । शिष्टं गतम् ॥

कारीर्यां प्रथमस्याः पिण्ड्याः ' उदीरयथा ' इत्यनुवाक्या । सूत्रितं च—' उदीरयथा मरुतः समुद्रतः प्र वो मरुतस्तविषा उदन्यवः ' ( आश्व. श्रौ. २. १३ ) इति ॥

उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उप दस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत ॥ ५ ॥

उत् । ईरयथ । मरुतः । समुद्रतः । यूयम् । वृष्टिम् । वर्षयथ । पुरीषिणः ।
न । वः । दस्राः । उप । दस्यन्ति । धेनवः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥५॥

हे ᵛमरुतः ᵛयूयं ᵛसमुद्रतः समुद्द्रवणसाधनादन्तरिक्षात् ᵛउदीरयथ प्रेरयथ ᵛवृष्टिम् । अयमेवार्थः पुनरुच्यते । हे ᵛपुरीषिणः । पृणतेः प्रीणातेर्वा पुरीषमुदकम् । हे तद्वन्तो यूयं वृष्टिं ᵛवर्षयथ । हे ᵛदस्राः दर्शनीयाः शत्रूणामुपक्षपयितारो वा ᵛवः युष्माकं ᵛधेनवः प्रीणयितारो मेघाः ᵛन ᵛउप ᵛदस्यन्ति न शुष्यन्ति ॥ ॥ १७ ॥

यदश्वान्धूर्षु पृषतीरयुग्ध्वं हिरण्ययान्प्रत्यत्काँ अमुग्ध्वम् ।
विश्वा इत्स्पृधो मरुतो व्यस्यथ शुभं यातामनु रथा अवृत्सत ॥ ६ ॥

यत् । अश्वान् । धूःऽसु । पृषतीः । अयुग्ध्वम् । हिरण्ययान् । प्रति । अत्कान् । अमुग्ध्वम् ।
विश्वाः । इत् । स्पृधः । मरुतः । वि । अस्यथ ।
शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ६ ॥

हे मरुतो यूयं ᵛयत् यदा ᵛअश्वान् ᵛधूर्षु रथसंबन्धिनीषु ᵛअयुग्ध्वं योजितवन्तः स्थ । कीदृशानश्वान् । ᵛपृषतीः । पृषत्यो मरुतामित्युक्तत्वात् पृषद्वर्णा वडवाः । सारङ्गी वात्राश्वशब्दवाच्या । ᵛहिरण्ययान् हिरण्यवर्णान् ᵛअत्कान् कवचान्[1] ᵛप्रति ᵛअमुग्ध्वं प्रत्यमुञ्चत । एवं कृत्वा ᵛविश्वा ᵛइत् ᵛस्पृधः सर्वानपि संग्रामान् हे ᵛमरुतः ᵛव्यस्यथ विक्षिपथ । शुभमित्यादि गतम् ॥

न पर्वता न नद्यो वरन्त वो यत्राचिध्वं मरुतो गच्छथेदु तत् ।
उत द्यावापृथिवी याथना परि शुभं यातामनु रथा अवृत्सत ॥ ७ ॥

न । पर्वताः । न । नद्यः । वरन्त । वः ।
यत्र । अचिध्वम् । मरुतः । गच्छथ । इत् । ऊँ इति । तत् ।
उत । द्यावापृथिवी इति । याथन । परि । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥७॥

---

१. ख-च-ण-म-शरान् ।

हे मरुतः वः युष्मान् पर्वताः शिलोच्चयाः न वरन्त न वारयन्तु तथा नद्यः च न वारयन्तु । किंतु यत्र यस्मिन् यज्ञादिस्थाने अचिध्वं जानीथ[1] संकल्पयथ तत् स्थानं गच्छथेदु गच्छथैव । उत अपि च द्यावापृथिवी च परि परितः याथन याथ वृष्ट्यर्थमिति ॥

**यत्पूर्व्यं मरुतो यच्च नूतनं यदुद्यते वसवो यच्च शस्यते ।**

**विश्वस्य तस्य भवथा नवेदसः शुभं यातामनु रथा अवृत्सत ॥ ८ ॥**

यत् । पूर्व्यम् । मरुतः । यत् । च । नूतनम् । यत् । उद्यते । वसवः । यत् । च । शस्यते ।

विश्वस्य । तस्य । भवथ । नवेदसः । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ८ ॥

हे मरुतः यूयं यत् पूर्व्यं पूर्वतनं पूर्वमनुष्ठितं यत् कर्मास्ति तदित्यर्थः । यच्च नूतनं कर्मास्ति । यत्[2] च उद्यते ऊर्ध्वं[3] प्राप्यते स्तूयते[3] इत्यर्थः । हे[4] वसवः वासकाः[4] यच्च शस्यते शंसनं क्रियते तस्य विश्वस्य उक्तस्य[5] नवेदसः जानन्तः भवथ ॥

**मृळत नो मरुतो मा वधिष्टनास्मभ्यं शर्म बहुलं वि यन्तन ।**

**अधि स्तोत्रस्य सख्यस्य गातन शुभं यातामनु रथा अवृत्सत ॥ ९ ॥**

नवेदा इति मेधातिथि ताम्रलिप

मृळत । नः । मरुतः । मा । वधिष्टन । अस्मभ्यम् । शर्म । बहुलम् । वि । यन्तन ।

अधि । स्तोत्रस्य । सख्यस्य । गातन । शुभम् । याताम् । अनु । रथाः । अवृत्सत ॥ ९ ॥

हे मरुतः नः अस्मान् मृळत सुखयत । मा वधिष्टन । असम्यक्करणादिजनितेन कोपेन मा वधिध्वम्[6] । किंतु अस्मभ्यं शर्म सुखं बहुलम् अत्यधिकं वि यन्तन कुरुत । किंच स्तोत्रस्य स्तोत्रं सख्यस्य सख्यम् अधि गातन अधिगच्छत । स्तुतिमनुभूयास्मासु सख्यं कुरुतेत्यर्थः ॥

**यूयमस्मान्नयत वस्यो अच्छा निरंहतिभ्यो मरुतो गृणानाः ।**

**जुषध्वं नो हव्यदातिं यजत्रा वयं स्याम पतयो रयीणाम् ॥ १० ॥**

यूयम् । अस्मान् । नयत । वस्यः । अच्छ । निः । अंहतिऽभ्यः । मरुतः । गृणानाः ।

जुषध्वम् । नः । हव्यऽदातिम् । यजत्राः । वयम् । स्याम । पतयः । रयीणाम् ॥ १० ॥

---

१. ख-च-ण–गमनाय । २. ख-च-झ-ण-न-भ–हे वसवः निवासयितारः यत्; र–हे वसवः वासयितारः यत् । ३. श–उद्धार्यते उच्चार्यते स्वर्यते । ४. ख-च-झ-ण-न-भ-र–' हे वसवो वासकाः ' नास्ति । ५. ग-घ-ज-श–उत्कृष्टस्य । ६. ख-च-झ-ण-न-भ-र–वधध्वम् ।

हे ᵛमरुतः ᵛयूयमस्मान् ᵛवस्यः वसीयो धनं स्वर्गादिलक्षणं स्थानं वा ᵛअच्छ अभिलक्ष्य ᵛनयत प्रापयत। किंच ᵛअंहतिभ्यः पापेभ्यः ᵛनिः नयत निर्गमयत ᵛगृणानाः स्तूयमानाः॥ कर्मणि कर्तृप्रत्ययः॥ ᵛजुषध्वं सेवध्वं ᵛनः अस्माकं[1] ᵛहव्यदातिं हविर्दानवन्तं यज्ञं हे ᵛयजत्राः यष्टव्या यूयम्। ᵛवयं च ᵛरयीणां बहुविधानां धनानां ᵛपतयः ᵛस्याम भवेम॥ ॥ १८ ॥

ᵛअग्ने शर्धन्तम्' इति नवर्चं द्वादशं सूक्तं श्यावाश्वस्यार्षं मारुतम्। तृतीयासप्तम्यौ सतोबृहत्यौ शिष्टा बृहत्यः। 'अग्ने नव बार्हतं तृतीयासप्तम्यौ सतोबृहत्यौ' इत्यनुक्रमणिका॥

अग्ने॒ शर्ध॑न्तमा ग॒णं पि॒ष्टं रु॒क्मेभि॑र॒ञ्जिभिः॑।
विशो॑ अ॒द्य म॒रुता॒मव॑ ह्वये दि॒वश्चि॑द्रोच॒नादधि॑॥ १॥

अग्ने॑। शर्ध॑न्तम्। आ। ग॒णम्। पि॒ष्टम्। रु॒क्मेभिः॑। अ॒ञ्जिभिः॑।
विशः॑। अ॒द्य। म॒रुता॑म्। अव॑। ह्व॒ये॒। दि॒वः। चि॒त्। रो॒च॒नात्। अधि॑॥ १॥

हे ᵛअग्ने ᵛशर्धन्तं शत्रूनभिभवन्तं यज्ञायोत्सहमानं वा ᵛगणं मरुतां गणम् ᵛआ ह्वयेति शेषः। कीदृशं गणम्। ᵛरुक्मेभिः रुक्मैः[2] रोचमानैः ᵛअञ्जिभिः आभरणैश्च ᵛपिष्टम् अवयवितं युक्तमित्यर्थः। ᵛअद्य अस्मिन् यागदिने ᵛमरुतां ᵛविशः प्रजाः। गणानित्यर्थः। तान् ᵛरोचनात् रोचमानात् ᵛदिवः द्युलोकात्। ᵛअधि इति पञ्चम्यर्थानुवादी। ᵛचित् पूरणः[3]। ᵛअव अवस्तादस्मदभिमुखं ᵛह्वये आह्वयामि॥

यथा॑ चि॒न्मन्य॑से हृ॒दा तदिन्मे॑ जग्मुरा॒शसः॑।
ये ते॒ नेदि॑ष्ठं॒ हव॑नान्या॒गम॒न्तान्व॑र्ध भी॒मसं॑दृशः॥ २॥

यथा॑। चि॒त्। मन्य॑से। हृ॒दा। तत्। इत्। मे॒। जग्मुः॑। आ॒ऽशसः॑।
ये। ते॒। नेदि॑ष्ठम्। हव॑नानि। आ॒ऽगम॑न्। तान्। व॒र्ध॒। भी॒मऽसं॑दृशः॥ २॥

हे अग्ने त्वं ᵛहृदा हृदयेन मरुतः ᵛयथा ᵛचिन्मन्यसे। चिदिति पूजायाम्। येन प्रकारेण अतिपूजितं जानासि। तेष्वादरं करोषीत्यर्थः। ᵛतदित् तथैव ᵛमे मदर्थं ᵛजग्मुः गच्छन्तु ᵛआशसः आशंसितार इच्छन्तः शत्रून् हिंसन्तो वा। अनन्तरं ᵛये मरुतः ᵛनेदिष्ठम् अत्यन्तान्तिकं संनिधावेव ᵛते तव ᵛहवनानि आह्वानानि श्रुत्वा ᵛआगमन् आगच्छन्ति ᵛतान् ᵛभीमसंदृशः कालविलम्बासहनेन भयंकरदर्शनान् ᵛवर्ध वर्धय हविष्प्रापणेन॥

---

१. ख-च-झ-ण-त-न-भ-र—अस्मद्दत्तम्। २. ख-च-झ-ण-न-भ-र-श—'रुक्मैः' नास्ति। ३. ख-च-झ-ण-न-भ-र—'चित् पूरणः' नास्ति; श-चिदिति पूरणः।

मीळ्हुष्मतीव पृथिवी पराहता मदन्त्येत्यस्मदा ।
ऋक्षो न वो मरुतः शिमीवाँ अमो दुध्रो गौरिव भीमयुः ॥ ३ ॥

मीळ्हुष्मतीऽइव । पृथिवी । पराऽहता । मदन्ती । एति । अस्मत् । आ ।
ऋक्षः । न । वः । मरुतः । शिमीऽवान् । अमः । दुध्रः । गौःऽइव । भीमऽयुः ॥ ३ ॥

मीळ्हुष्मती प्रबलस्वामिका पराहता अन्यैरभिभूता पृथिवी इव । अत्र पृथिवीशब्दः तदधिष्ठितां प्रजां लक्षयति । सा यथा स्वस्वामिनमुपद्रुताभिगच्छति तद्वदिति । मरुतां साकल्येन सर्वथा प्रासेर्दृष्टान्तः । एवं मदन्ती हृष्यन्ती मरुत्सेना अस्मत् अस्मानित्यर्थः । आ एति आगच्छति । हे मरुतः वः युष्माकम् अमः बलं गणः ऋक्षो न अग्निरिव[1] शिमीवान् कर्मवान् दुध्रः दुर्धरः गौरिव भीमयुः भीमैर्वृषभैः युक्तः[2] गौरिव । स यथा शिमीवान् कर्मवान् ॥

नि ये रिणन्त्योजसा वृथा गावो न दुर्धुरः ।
अश्मानं चित्स्वर्यं१ पर्वतं गिरिं प्र च्यावयन्ति यामभिः ॥ ४ ॥

नि । ये । रिणन्ति । ओजसा । वृथा । गावः । न । दुःऽधुरः ।
अश्मानम् । चित् । स्वर्यम् । पर्वतम् । गिरिम् । प्र । च्यवयन्ति । यामऽभिः ॥ ४ ॥

ये मरुतः ओजसा स्वीयेन बलेन नि रिणन्ति हिंसन्ति शत्रून् वृथा अनायासेन स्वसंचारमात्रेण गावो न दुर्धुरः दुःखेन हिंस्या अश्वा इव । ते मरुतः स्वर्यं शब्दयन्तम् अश्मानं व्याप्तं पर्वतं जगत्पूरकोदकवन्तम् । 'पर्ववान्पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा' ( निरु. १. २० ) इति निरुक्तम् । तादृशं गिरिं मेघम् । यद्वा । पर्वतमिति विशेष्यं गिरिमिति विशेषणम् निगिरत्युदकमिति गिरिः । तं यामभिः गमनैः प्र च्यावयन्ति उदकनिर्गमनार्थम् ॥

उत्तिष्ठ नूनमेषां स्तोमैः समुक्षितानाम् ।
मरुतां पुरुतममपूर्व्यं गवां सर्गमिव ह्वये ॥ ५ ॥

उत् । तिष्ठ । नूनम् । एषाम् । स्तोमैः । सम्ऽउक्षितानाम् ।
मरुताम् । पुरुऽतमम् । अपूर्व्यम् । गवाम् । सर्गम्ऽइव । ह्वये ॥ ५ ॥

हे मरुतो यूयम् उत्तिष्ठ उत्तिष्ठत ॥ व्यत्ययेनैकवचनम् ॥ नूनं निश्चयम् एषां स्तोमैः स्तोत्रैः समुक्षितानां वर्धितानां मरुताम् । यद्वा । स्तोमैरुपह्वय इति संबन्धः । तादृशां मरुतां पुरुतमं प्रभूततमम् अपूर्व्यम् । न विद्यते पूर्वः[3] येभ्यस्तमपूर्व्यं सर्गं संघं गवाम् उदकानां प्रसिद्धानां गवां वा सर्गं संघम् इव ह्वये आह्वये ॥　　॥ १९ ॥

---

१. ख-झ-न-भ-र–अग्नीव । २. त-युक्ता । ३. ख-च-झ-ण-त-न-भ-र–पूर्वार्हः ।

युङ्ग्ध्वं ह्यरुषी रथे युङ्ग्ध्वं रथेषु रोहितः ।
युङ्ग्ध्वं हरी अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ॥ ६ ॥

युङ्ग्ध्वम् । हि । अरुषीः । रथे । युङ्ग्ध्वम् । रथेषु । रोहितः ।
युङ्ग्ध्वम् । हरी इति । अजिरा । धुरि । वोळ्हवे । वहिष्ठा । धुरि । वोळ्हवे ॥ ६ ॥

हे मरुतो यूयं ᵛरथे युष्मदीये सर्वेषां साधारणभूते ᵛअरुषीः आरोचमाना वडवाः ᵛयुङ्ग्ध्वं योजयध्वम् । तथा ᵛरथेषु युष्मदीयेषु ᵛरोहितः रोहितवर्णाः ᵛयुङ्ग्ध्वं । ᵛहरी अश्वौ ᵛअजिरा अजिरावाशुगमनौ ᵛधुरि ᵛवोळ्हवे वहनाय ᵛयुङ्ग्ध्वम् । आदरार्थं पुनर्वचनम्[1] । ᵛवहिष्ठा वोढृतमौ अश्वौ ᵛधुरि ᵛवोळ्हवे ॥

उत स्य वाज्यरुषस्तुविष्वणिरिह स्म धायि दर्शतः ।
मा वो यामेषु मरुतश्चिरं करत्प्र तं रथेषु चोदत ॥ ७ ॥

उत । स्यः । वाजी । अरुषः । तुविऽस्वनिः । इह । स्म । धायि । दर्शतः ।
मा । वः । यामेषु । मरुतः । चिरम् । करत् । प्र । तम् । रथेषु । चोदत ॥ ७ ॥

ᵛउत अपि च ᵛस्यः सः ᵛवाजी वेजनवान्[2] ᵛअरुषः आरोचमानः ᵛतुविष्वणिः प्रभूतध्वनिरश्वः । अरुष इत्यनेन रोहित इत्युक्तं भवति । ‘ प्रष्टिर्वहति रोहितः ’ ( ऋ. सं. १. ३९. ६ ) इति ह्युक्तम् । ᵛइह इदानीं ᵛदर्शतः दर्शनीयः सन् ᵛधायि रथे नियोजितः । ᵛस्म इति पूरणः । हे ᵛमरुतः ᵛवो ᵛयामेषु गमनेषु सोऽश्वः ᵛचिरं विलम्बं ᵛमा ᵛकरत् मा करोतु । ᵛतं ᵛरथेषु । रथे युक्तमिति शेषः । ᵛप्र ᵛचोदत प्रेरयत । यथा विलम्बं न कुर्यात्तथा प्रेरयत ॥

रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।
आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥ ८ ॥

रथम् । नु । मारुतम् । वयम् । श्रवस्युम् । आ । हुवामहे ।
आ । यस्मिन् । तस्थौ । सुऽरणानि । बिभ्रती । सचा । मरुत्ऽसु । रोदसी ॥ ८ ॥

ᵛवयम् आत्रेयाः ᵛरथं रंहणस्वभावं ᵛमारुतं मरुतां संबन्धिनं रथं ᵛश्रवस्युम् अन्नेच्छुं ᵛनु अद्य ᵛआ ᵛहुवामहे आह्वयामः । ᵛयस्मिन् रथे ᵛसुरणानि जलानि ᵛबिभ्रती धारयन्ती ᵛरोदसी रुद्रस्य पत्नी मरुतां माता । यद्वा रुद्रो वायुः । तत्पत्नी माध्यमिका देवी ᵛमरुत्सु ᵛसचा सहिता ᵛआ ᵛतस्थौ आस्थितवती तं रथमाहुवे[3] ॥

---

१. ख-च-झ-ण-त-न-र–पुनरुच्यते । २. ख-च-ण– स वेगवान्; झ-न-भ-र–वेगवान् । ३. ख-ग-घ-च-ज-ण–रथमाहुवेम ।

तं वः शर्धं रथेशुभं त्वेषं पनस्युमा हुवे ।

यस्मिन्त्सुजाता सुभगा महीयते सचा मरुत्सु मीळ्हुषी ॥ ९ ॥

तम् । वः । शर्धम् । रथेऽशुभम् । त्वेषम् । पनस्युम् । आ । हुवे ।

यस्मिन् । सुऽजाता । सुऽभगा । महीयते । सचा । मरुत्ऽसु । मीळ्हुषी ॥ ९ ॥

हे मरुतः ᵛवः ᵛशर्धं युष्मदीयं बलं गणं ᵛरथेशुभं रथे शोभनं ᵛत्वेषं दीप्तं ᵛपनस्युं स्तुत्यम् ᵛआ ᵛहुवे आह्वये। ᵛयस्मिन् शर्धे ᵛसुजाता सुष्ठु प्रवृद्धा[1] ᵛसुभगा शोभनभाग्यातिमहती ᵛमीळ्हुषी । 'मीळ्हुष्टम शिवतम' इत्यादौ दर्शनात् मीढ्वान् रुद्रः। तत्पत्नी मीळ्हुषी। ᵛमरुत्सु ᵛसचा सह ᵛमहीयते पूज्यते ᵛतं शर्धमा हुवे। आपस्तम्बोऽपि रुद्रपत्नीं[2] मीळ्हुषीसंज्ञया व्यवजहार—'उत्तरया दक्षिणस्यामीशानमावाहयति लौकिक्या वाचोत्तरस्यां मीळ्हुषीं मध्ये जयन्तम्' (आप. गृ. २०. १-३) इति ॥ ॥ २० ॥ ॥ ४ ॥

पञ्चमेऽनुवाके षोडश सूक्तानि। तत्र 'आ रुद्रासः' इत्यष्टर्चं प्रथमं सूक्तं श्यावाश्वस्यार्षं मारुतम्। सप्तम्यष्टम्यौ त्रिष्टुभौ शिष्टाः षट् जगत्यः। 'आरुद्रासोऽष्टौ द्वित्रिष्टुबन्तम्' इत्यनुक्रमणिका। विनियोगो लैङ्गिकः ॥

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन ।

इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥ १ ॥

आ । रुद्रासः । इन्द्रऽवन्तः । सऽजोषसः । हिरण्यऽरथाः । सुविताय । गन्तन ।

इयम् । वः । अस्मत् । प्रति । हर्यते । मतिः ।

तृष्णऽजे । न । दिवः । उत्साः । उदन्यवे ॥ १ ॥

हे ᵛरुद्रासः रुद्रपुत्राः ᵛइन्द्रवन्तः इन्द्रेण युष्मत्स्वामिना तद्वन्तः ᵛसजोषसः परस्परं समानप्रीतयः ᵛहिरण्यरथाः हिरण्मयरथाः सन्तः ᵛसुविताय सुगमनाय तत्साधनाय सुष्ठु सर्वैर्गन्तव्याय यज्ञाय तदर्थम् ᵛआ ᵛगन्तन आगच्छत। किमत्र विद्यते इति तदुच्यते। ᵛइयम् ᵛअस्मत् अस्मदीया ᵛमतिः स्तुतिः ᵛवः युष्मान् ᵛप्रति ᵛहर्यते कामयते। तस्मादागच्छत। ᵛउदन्यवे उदकेच्छवे ᵛतृष्णजे गोतमाय ᵛदिवः द्युलोकसकाशात् ᵛउत्साः उदकनिष्यन्दा यथा युष्माभिः प्रेरितास्तद्वदस्मदर्थमपि आगत्याभिमतं ददतेत्यर्थः ॥

---

१. ख-च-झ-ण-न-भ-प्रसिद्धा। २. ख-च-झ-ण-न-भ-सपत्नीम्।

वाशीमन्त ऋष्टिमन्तो मनीषिणः सुधन्वान इषुमन्तो निषङ्गिणः ।
स्वश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभम् ॥ २ ॥

वाशीऽमन्तः । ऋष्टिऽमन्तः । मनीषिणः । सुऽधन्वानः । इषुऽमन्तः । निषङ्गिणः ।
सुऽअश्वाः । स्थ । सुऽरथाः । पृश्निऽमातरः । सुऽआयुधाः । मरुतः । याथन । शुभम् ॥ २ ॥

हे मरुतः यूयं वाशीमन्तः । वाशीति तक्षणसाधनमायुधम् । तद्वन्तः स्थ । ऋष्टिमन्तः । ऋष्टिर्नाम छुरिका । तद्वन्तः स्थ । एवं सर्वत्र योज्यम् । मनीषिणः मनस ईश्वरा मनस्विनः सुधन्वानः शोभनधनुष्काः इषुमन्तः बाणवन्तः निषङ्गिणः निषङ्गवन्तः स्वश्वाः स्थ शोभनाश्वाः भवथ । सुरथाः शोभनरथाः पृश्निमातरः पृश्नेः पुत्राः स्वायुधाः खड्गपरश्वादिसकलायुधोपेताः । एवं महात्मानः सन्तः शुभं शोभनं यथा भवति तथा शुभमुदकाय वा रथेन[१] याथन[१] गच्छथ[२] ॥

धूनुथ द्यां पर्वतान्दाशुषे वसु नि वो वना जिहते यामनो भिया ।
कोपयथ पृथिवीं पृश्निमातरः शुभे यदुग्राः पृषतीरयुग्ध्वम् ॥ ३ ॥

धूनुथ । द्याम् । पर्वतान् । दाशुषे । वसु । नि । वः । वना । जिहते । यामनः । भिया ।
कोपयथ । पृथिवीम् । पृश्निऽमातरः । शुभे । यत् । उग्राः । पृषतीः । अयुग्ध्वम् ॥ ३ ॥

हे मरुतः द्याम्[३] । दिवीत्यर्थः । पर्वतान् मेघान् दाशुषे हविर्दात्रे यजमानाय वसु धनानि[४] च धूनुथ प्रापयथ[५] । वः युष्माकं यामनः गमनस्य भिया भीत्या वना वनानि वृक्षादिसमूहाः नि जिहते नितरां कम्पन्ते । अवनता भृशं शंसन्तीत्यर्थः । हे पृश्निमातरः पृश्नेः पुत्राः । 'पृश्नियै वै पयसो मरुतो जाताः' (तै. सं. २. २.११.४) इति हि श्रुतिः । हे[६] मरुतः[६] पृथिवीं कोपयथ अभिवृष्ट्या[७] क्षोभयथ[८] । हे उग्राः उद्गूर्णबला यूयं यत् यदा शुभे उदकार्थं पृषतीः युष्मदीयाः अश्वाः अयुग्ध्वं योजयथ तदा कोपयथ पृथिवीम् ॥

वातत्विषो मरुतो वर्षनिर्णिजो यमाइव सुसदृशः सुपेशसः ।
पिशङ्गाश्वा अरुणाश्वा अरेपसः प्रत्वक्षसो महिना द्यौरिवोरवः ॥ ४ ॥

वातऽत्विषः । मरुतः । वर्षऽनिर्निजः । यमाःऽइव । सुऽसदृशः । सुऽपेशसः ।
पिशङ्गऽअश्वाः । अरुणऽअश्वाः । अरेपसः । प्रऽत्वक्षसः । महिना । द्यौःऽइव । उरवः ॥ ४ ॥

---

१. ख-ग-घ-च-ज-ण-त-न-भ—याथन; झ—योथन; र—यथेन । २. ख-च-ण-न-भ—गच्छत; झ—गच्छ ।
३. ख-च-झ-ण-त-न-भ-र—यदा द्याम् । ४. ख-च-झ-ण-न-भ-र—धनार्थम्; त—धनानि चाथ च ।
५. ख-च-ण-न-भ—क्षारयथ; झ—धक्षारयथ; र—धक्षार; श—चाथव । ६. ख-ग-घ-च-ज-ण-न-भ-श—'हे मरुतः' नास्ति; र—हे । ७. ख-झ—अभीतिवृष्टया; न-भ—अतिवृष्टषा । ८. ख-झ-त-न-भ-र—क्षुभ्यथ ।

vवातत्विषः सर्वदा संप्राप्तदीप्तयः[1] vवर्षनिर्णिजः वृष्टेः शोधयितारः । अथवा निर्णिगिति रूपनाम । वर्षमेव रूपं येषां ते तादृशाः । वृष्टिप्रदा इत्यर्थः । vयमाइव युगलोत्पन्ना इव vसुसदृशः परस्परं बलरूपादिभिरत्यन्तं सरूपाः vसुपेशसः शोभनरूपाः vपिशङ्गाश्वाः पिशङ्गवर्णाश्वोपेतास्तथा vअरुणाश्वाः vअरेपसः अपापाः vप्रत्वक्षसः प्रकृष्टं तनूकर्तारो द्वेष्टॄणां vमहिना महत्त्वेन vद्यौरिव अन्तरिक्षमिव vउरवः विस्तीर्णाः । उक्तलक्षणा नाम भेजिर इत्युत्तरेण संबन्धः ॥

पुरुद्रप्सा अञ्जिमन्तः सुदानवस्त्वेषसंदृशो अनवभ्रराधसः ।
सुजातासो जनुषा रुक्मवक्षसो दिवो अर्का अमृतं नाम भेजिरे ॥ ५ ॥

पुरुऽद्रप्साः । अञ्जिऽमन्तः । सुऽदानवः । त्वेषऽसंदृशः । अनवभ्रऽराधसः ।
सुऽजातासः । जनुषा । रुक्मऽवक्षसः । दिवः । अर्काः । अमृतम् । नाम । भेजिरे ॥५॥

vपुरुद्रप्साः प्रभूतोदकाः vअञ्जिमन्तः आभरणवन्तः vसुदानवः शोभनदानाः vत्वेषसंदृशः दीप्तरूपाः vअनवभ्रराधसः अनवभ्रष्टधनाः vसुजातासः शोभनजननाः[2] vजनुषा जन्मनैवोक्तरूपाः vरुक्मवक्षसः हारवक्षस्काः vअर्काः पूज्या मरुतः vदिवः द्युलोकादागत्य vअमृतम् अमरणसाधनं vनाम उदकं नमनहेतुकमुक्तलक्षणं हविर्वा vभेजिरे लब्धवन्तः ॥ ॥ २१ ॥

ऋष्टयो वो मरुतो अंसयोरधि सह ओजो बाह्वोर्वो बलं हितम् ।
नृम्णा शीर्षस्वायुधा रथेषु वो विश्वा वः श्रीरधि तनूषु पिपिशे ॥ ६ ॥

ऋष्टयः । वः । मरुतः । अंसयोः । अधि । सहः । ओजः । बाह्वोः । वः । बलम् । हितम् ।
नृम्णा । शीर्षऽसु । आयुधा । रथेषु । वः । विश्वा । वः । श्रीः । अधि । तनूषु । पिपिशे ॥६॥

हे vमरुतः vवः युष्माकम् vअंसयोरधि vऋष्टयः आयुधविशेषा हिताः आश्रिताः । वक्ष्यमाणहितशब्दो विपरिणन्तव्यः । अधीति सप्तम्यर्थानुवादी । तथा vवः vबाह्वोः अधि vसहः शत्रूणामभिभावुकम् vओजः । ओजो नामाष्टमो धातुः[3] । तद्रूपं vबलं vहितं निहितम् । vशीर्षसु शिरःसु vनृम्णा नृम्णानि हिरण्यमयानि[4] पट्टोष्णीषादीनि निहितानि । vरथेषु vआयुधा आयुधानि युद्धसाधनानि निहितानि । vवः vश्रीः युष्माकं कान्तिः vतनूषु युष्मदीयेषु vअधि vपिपिशे अधिष्ठिता आश्रिता ॥

---

१. ख-च-ण–सर्वत्रप्रदीप्तयः; ग-घ-ज–सर्वदीप्तयः; श–सर्वदेशे प्राप्तदीप्तयः । २. ख-च-ण-श–शोभनजाताः । ३. न– धातुः । रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः इति सप्तधातूनां सारोऽष्टमस्तु ओजसोऽपि मुखे यो (या) कान्तिर्भाति स ओजो बलं च लक्ष्यते । ४. ख-च-ण-भ-श–हिरण्मयानि ।

गोमदश्वावद्रथवत्सुवीरं चन्द्रवद्राधो मरुतो ददा नः ।
प्रशस्तिं नः कृणुत रुद्रियासो भक्षीय वोऽवसो दैव्यस्य ॥ ७ ॥

गोऽमत् । अश्वऽवत् । रथऽवत् । सुऽवीरम् । चन्द्रऽवत् । राधः । मरुतः । दद । नः ।
प्रऽशस्तिम् । नः । कृणुत । रुद्रियासः । भक्षीय । वः । अवसः । दैव्यस्य ॥ ७ ॥

हे मरुतः नः अस्मभ्यं गोमत् बहुभिर्गोभिरुपेतम् अश्वावत् बहुभिरश्वैरुपेतं रथवत् रथोपेतं सुवीरं सुष्ठु पुत्रोपेतं[1] चन्द्रवत् हिरण्योपेतं राधः अन्नं दद ददत ॥ व्यत्ययेन एकवचनम्[2] । अथवा लोडर्थस्य लिटो मध्यमबहुवचनम् ॥ हे रुद्रियासः रुद्रपुत्रा मरुतः नः अस्मदीयां प्रशस्तिम् । समृद्धिमित्यर्थः । तां कृणुत कुरुत । वः युष्माकं स्वभूतम् अवसः अवः रक्षणं दैव्यस्य दैव्यं देवार्हं भक्षीय भजेय ॥

हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः ।
सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥ ८ ॥

हये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः । ऋतऽज्ञाः ।
सत्यऽश्रुतः । कवयः । युवानः । बृहत्ऽगिरयः । बृहत् । उक्षमाणाः ॥ ८ ॥

हये हे नरः नेतारः मरुतः नः अस्मान् मृळत सुखयत अस्मभ्यं हिताय वा सुखिनो भवत । हे तुवीमघासः[3] प्रभूतधनाः अमृताः अमरणस्वभावाः ऋतज्ञाः उदकस्य यज्ञस्य वा ज्ञातारः । कर्तार इत्यर्थः । सत्यश्रुतः सत्येन सत्यफलत्वेन प्रसिद्धाः कवयः मेधाविनः युवानः नित्यतरुणाः बृहद्गिरयः प्रभूतस्तुतयः बृहत् अत्यधिकम् उक्षमाणाः हविर्भिः सेविताः[4] उदकं वा सिञ्चन्तो यूयं मृळत ॥ ॥ २२ ॥

'तमु नूनम्' इत्यष्टर्चं द्वितीयं सूक्तं श्यावाश्वस्यार्षं त्रैष्टुभं मारुतम् । 'तमु' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

तमु नूनं तविषीमन्तमेषां स्तुषे गणं मारुतं नव्यसीनाम् ।
य आश्वश्वा अमवद्वहन्त उतेशिरे अमृतस्य स्वराजः ॥ १ ॥

तम् । ऊँ इति । नूनम् । तविषीऽमन्तम् । एषाम् । स्तुषे । गणम् । मारुतम् । नव्यसीनाम् ।
ये । आशुऽअश्वाः । अमऽवत् । वहन्ते । उत । ईशिरे । अमृतस्य । स्वऽराजः ॥ १ ॥

---

१. ख-च-झ-ण-न-भ-र–' रथवत्... पुत्रोपेतं ' नास्ति । २. ख-च-ण-भ–बहुवचनेन; झ-त-न-र–बहुवचनम् । ३. त–तुविमघासः । ४. ख-च-झ-ण-त-भ-र–सेकिताः; श–सेचिताः ।

˅तमु तमेव पूर्वं स्तुतमेव ˅मारुतं मरुतां संबन्धिनं तं ˅गणं ˅तविषीमन्तं दीप्तिमन्तं ˅नूनम् अद्य ˅स्तुषे । कीदृशां मरुताम् । ˅नव्यसीनाम् ॥ लिङ्गव्यत्ययः ॥ नवतराणां स्तुत्यानां वा । ˅एषां[1] मारुतं गणम् । गणावयवभूता मरुतः । कीदृशा इत्युच्यते । ˅ये मरुतः ˅आश्वश्वाः शीघ्रगाम्यश्वोपेताः ˅अमवत् बलवन्तो यथा भवन्ति तथा ˅वहन्ते[2] गच्छन्ति[2]. ˅उत अपि च ˅ईशिरे ईश्वरा भवन्ति ˅अमृतस्य उदकस्य ˅स्वराजः स्वायत्तदीप्तयः स्वयमेव राजमानाः तेषां गणं स्तुषे ॥

त्वेषं गणं तवसं खादिहस्तं धुनिव्रतं मायिनं दातिवारम् ।

मयोभुवो ये अमिता महित्वा वन्दस्व विप्र तुविराधसो नॄन् ॥ २ ॥

त्वेषम् । गणम् । तवसम् । खादिऽहस्तम् । धुनिऽव्रतम् । मायिनम् । दातिऽवारम् ।

मयःऽभुवः । ये । अमिताः । महिऽत्वा । वन्दस्व । विप्र । तुविऽराधसः । नॄन् ॥ २ ॥

˅त्वेषं दीप्तं ˅गणं मारुतं ˅तवसं बलवन्तं ˅खादिहस्तं कटकहस्तं ˅धुनिव्रतं कम्पयितृकर्माणं ˅मायिनं प्रज्ञावन्तं ˅दातिवारं दत्तधनं हे ˅विप्र होतः ˅वन्दस्व स्तुहीति संबन्धः । ˅ये मरुतः ˅मयोभुवः सुखस्य भावयितारः ˅महित्वा महत्त्वेन ˅अमिताः अपरिच्छिन्नाः । तान् ˅तुविराधसः प्रभूतधनान् ˅नॄन् नेतॄन् वन्दस्व ॥

आ वो यन्तूदवाहासो अद्य वृष्टिं ये विश्वे मरुतो जुनन्ति ।

अयं यो अग्निर्मरुतः समिद्ध एतं जुषध्वं कवयो युवानः ॥ ३ ॥

आ । वः । यन्तु । उदऽवाहासः । अद्य । वृष्टिम् । ये । विश्वे । मरुतः । जुनन्ति ।

अयम् । यः । अग्निः । मरुतः । सम्ऽइद्धः । एतम् । जुषध्वम् । कवयः । युवानः ॥ ३ ॥

˅ये ˅विश्वे व्याप्ताः ˅मरुतः ˅वृष्टिं ˅जुनन्ति प्रेरयन्ति ते ˅उदवाहासः उदकस्य वोढारो मरुतः ˅अद्य इदानीं ˅वः युष्मान् ˅आ ˅यन्तु आगच्छन्तु हे ऋत्विग्यजमानाः । अथ प्रत्यक्षवादः । हे ˅मरुतः[3] ˅यः[4] प्रसिद्धः ˅अयम्[4] ˅अग्निः ˅समिद्धः सम्यक् दीपितः ˅एतम् अग्निं ˅जुषध्वं सेवध्वं हे ˅कवयः मेधाविनः हे ˅युवानः नित्यतरुणाः सर्वत्र व्याप्ता वा ॥

यूयं राजानमिर्यं जनाय विभ्वतष्टं जनयथा यजत्राः ।

युष्मदेति मुष्टिहा बाहुजूतो युष्मत्सदश्वो मरुतः सुवीरः ॥ ४ ॥

यूयम् । राजानम् । इर्यम् । जनाय । विभ्वऽतष्टम् । जनयथ । यजत्राः ।

युष्मत् । एति । मुष्टिऽहा । बाहुऽजूतः । युष्मत् । सत्ऽअश्वः । मरुतः । सुऽवीरः ॥ ४ ॥

---

१. ख-च-झ-ण-त-न-भ-र-' एषां ' नास्ति । २. ख-च-ण-भ-वहन्तो गच्छन्ति; झ-त-न-र-वहन्तो गच्छन्तः; श-वहन्ति गच्छन्तः । ३. झ-न-भ-मरुतः यूयम् । ४. ख-ग-घ-च-ज-ण-अयं प्रसिद्धो यः ।

हे मरुतः[1] vयूयं vजनाय यजमानाय vराजानं स्वामिनं राजमानं वा vइयँ शत्रूणां प्रेरकं च्यावयितारं vविभ्वतष्टम् । विभ्वा नाम ऋभूणां मध्यमः । स कुशली । तेन निर्मितम् । अत्यन्तरूपवन्तमित्यर्थः । तादृशं पुत्रं vजनयथ उत्पादयथ हे vयजत्राः यष्टव्याः । हे vमरुतः vयुष्मत् युष्मत्तः vएति गच्छति पुत्रः । कीदृशः । vमुष्टिहा । मुष्टिशब्दो बाहूपलक्षकः । स्वभुजबलेनैव हन्ता शत्रूणाम् । तदेवोच्यते । vबाहुजूतः । बाहुः प्रेरकः शत्रूणां यस्य तादृशः पुत्र एति । तथा vयुष्मत् युष्मत्तः vसदश्वः विद्यमानाश्वः । बह्वश्वः इत्यर्थः । vसुवीरः शोभनवीर्यः पुत्र एति । जायते इत्यर्थः ॥

वरुणप्रघासे मारुत्या आमिक्षायाः ‘ अराइव ’ इति याज्या । सूत्रितं च— ‘ अराइवेदचरमा अहेवेमं मे वरुण श्रुधि ’ ( आश्व. श्रौ. २. १७ ) इति । एकादशिने मारुते पशावेवैव पशुपुरोडाशस्य याज्या । सूत्रितं च—‘ अराइवेदचरमा अहेव या वः शर्म शशमानाय सन्ति ’ ( आश्व. श्रौ. ३. ७ ) इति ॥

अराइवेदचरमा अहेव प्रप्र जायन्ते अकवा महोभिः ।

पृश्नेः पुत्रा उपमासो रभिष्ठाः स्वया मत्या मरुतः सं मिमिक्षुः ॥ ५ ॥

अराःऽइव । इत् । अचरमाः । अहाऽइव । प्रऽप्र । जायन्ते । अकवाः । महःऽभिः ।

पृश्नेः । पुत्राः । उपऽमासः । रभिष्ठाः । स्वया । मत्या । मरुतः । सम् । मिमिक्षुः ॥ ५ ॥

vअराइवेत् रथशङ्कव इव vअचरमाः अनिकृष्टाः । सर्वसमाः सहैवोत्पन्नाश्चेत्यर्थः । vअहेव अहानीव । दिवसा यथा सर्वेऽपि षष्टिघटिकात्मकास्तद्वत्सप्तसंख्योपेतसप्तगणरूपेण समा इत्यर्थः । अनेन दृष्टान्तद्वयेन वैसादृश्याभावः[2] प्रतिपादितः । एवमुक्तलक्षणाः vमहोभिः तेजोभिः vप्रप्र vजायन्ते प्रकर्षेण प्रादुर्भवन्ति ॥ एकः ‘ प्रसमुपोदः पादपूरणे ’ ( पा. सू. ८. १. ६ ) इत्युपसर्गाभ्यासः स च पूरणः ॥ ते च vअकवाः अनल्पाः । यद्वा महोभिरित्यस्य विशेषणम् । vपृश्नेः माध्यमिकाया वाचो गोरूपाया अन्तरिक्षस्य वा पुत्रस्थानीयाः vउपमासः प्रत्येकं समानाः vरभिष्ठाः प्रकृष्टवेगाः । एवं महानुभावाः vमरुतः vस्वया vमत्या स्वकीययैवानुग्रहबुद्ध्या vसं vमिमिक्षुः वृष्ट्या सम्यक् सिञ्चन्ति ॥

यत्प्रायासिष्ट पृषतीभिरश्वैर्वीळुपविभिर्मरुतो रथेभिः ।

क्षोदन्त आपो रिणते वनान्यवोस्त्रियो वृषभः क्रन्दतु द्यौः ॥ ६ ॥

यत् । प्र । अयासिष्ट । पृषतीभिः । अश्वैः । वीळुपविऽभिः । मरुतः । रथेभिः ।

क्षोदन्ते । आपः । रिणते । वनानि । अव । उस्त्रियः । वृषभः । क्रन्दतु । द्यौः ॥ ६ ॥

---

१. झ-त-र–राजानः । २. ख-च-ण–एव सादृश्यभावः ; झ-न-भ–एव सादृश्याभावः; श–वैसादृश्यभावः ।

हे मरुतः यत् यदा प्रायासिष्ट प्रगच्छथ पृषतीभिः पृषत्संज्ञकैः अश्वैः वाहनसाधनैरश्वैः । अश्वशब्दोऽत्र वाहनसामान्यवचनः । अतः पुँल्लिङ्गता[1] । तथान्यत्र—' यदश्वान्धूर्षु पृषतीरयुग्ध्वम् ' ( ऋ. सं. ५. ५५. ६ ) । रोहिदश्वोऽजाश्व इति सामानाधिकरण्यप्रयोगः । एवंभूताश्वयुक्तैः वीळुपविभिः दृढरथनेमिभिः रथेभिः[2] प्रायासिष्ट । यद्वा । अश्वै रथैश्च सह मरुतो यदा प्रायासिष्ट तदा आपः क्षोदन्ते क्षरन्ति । वनानि वृक्षसमूहाः रिणते हिंस्यन्ते वेगेन भज्यन्ते । उस्रियः उस्राः सूर्यरश्मयः । तत्संबन्धी पर्जन्यः वृषभः अपां वर्षिता द्यौः द्योतमानः अव क्रन्दतु अवाङ्मुखं शब्दयतु वृष्ट्यर्थम् ॥

प्रथिष्ट यामन्पृथिवी चिदेषां भर्तेव गर्भं स्वमिच्छवो धुः ।
वातान्ह्यश्वान्धुर्यायुयुज्रे वर्षं स्वेदं चक्रिरे रुद्रियासः ॥ ७ ॥

प्रथिष्ट । यामन् । पृथिवी । चित् । एषाम् । भर्ताऽइव । गर्भम् । स्वम् । इत् । शवः । धुः ।
वातान् । हि । अश्वान् । धुरि । आऽयुयुज्रे । वर्षम् । स्वेदम् । चक्रिरे । रुद्रियासः ॥ ७ ॥

एषां मरुतां यामन् यामनि गमने पृथिवी चित् भूमिः । चिदिति पूरणः । प्रथिष्ट प्रख्याताभवत् । गर्भयोग्याभवदित्यर्थः । ते च मरुतः भर्ता लौकिकः पतिः गर्भम् इव भार्यायाः तथा भूम्याः स्वमित् स्वभूतं गर्भं गर्भस्थानीयं शवः उदकं धुः स्थापितवन्तः । हि यस्मात् वातान् गन्तॄन् अश्वान् धुरि रथसंबन्धिन्याम् आयुयुज्रे आयोजितवन्तः तस्मात् वर्षं स्वेदं स्वेदस्थानीयं वृष्टिसंस्त्यायं चक्रिरे कुर्वन्ति रुद्रियासः रुद्रपुत्राः ॥

हये नरो मरुतो मृळता नस्तुवीमघासो अमृता ऋतज्ञाः ।
सत्यश्रुतः कवयो युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥ ८ ॥

हये । नरः । मरुतः । मृळत । नः । तुविऽमघासः । अमृताः । ऋतऽज्ञाः ।
सत्यऽश्रुतः । कवयः । युवानः । बृहत्ऽगिरयः । बृहत् । उक्षमाणाः ॥ ८ ॥

' हये नरः ' इत्यष्टमी गता[3] ॥　　　　॥ २३ ॥

' प्र वः स्पट् ' इत्यष्टर्चं तृतीयं सूक्तं श्यावाश्वस्यार्षं मारुतम् । अष्टमी त्रिष्टुप् शिष्टाः सप्त जगत्यः । ' प्र वः स्पट् त्रिष्टुबन्तम् ' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

---

१. ख-च-झ-ण-त-न-भ-र–पुंलिंगनाम । २. न–रथेभिः रथैः । ३. ख-च-ण–पुस्तकेष्वस्य मन्त्रस्य संपूर्णं भाष्यं विद्यते ।

प्र वः स्पळक्रन्त्सुविताय दावनेऽर्चा दिवे प्र पृथिव्या ऋतं भरे ।
उक्षन्ते अश्वान्तरुषन्त आ रजोऽनु स्वं भानुं श्रथयन्ते अर्णवैः ॥ १ ॥

प्र । वः । स्पट् । अक्रन् । सुविताय । दावने । अर्च । दिवे । प्र । पृथिव्यै । ऋतम् । भरे ।
उक्षन्ते । अश्वान् । तरुषन्ते । आ । रजः । अनु । स्वम् । भानुम् । श्रथयन्ते । अर्णवैः ॥ १ ॥

हे मरुतः वः युष्मभ्यं सुविताय सुष्ठु प्राप्तव्याय दावने हविष्प्रदानाय स्पट् स्प्रष्टा होता प्र प्रकर्षेण अक्रन् क्रन्दति स्तौति । वः युष्मान् वा सुष्ठु प्राप्तव्याय दानायाक्रन् ॥ क्रन्दतेः शब्दकर्मणो लडर्थे लङि तिपि रूपम् ॥ हे होतः दिवे द्योतमानाय द्युदेवाय प्र अर्च प्रकर्षेण स्तुहि हे आत्मन् । तथा पृथिव्यै[1] पृथिव्याश्च ऋतं स्तोत्रं भरे संपादयामि । द्यावापृथिव्यावपि मरुतामाधारत्वादत्र निपातभाजौ भवतः । किंच ते मरुतः अश्वान् व्यापकानुदकसंघान् उक्षन्ते सिञ्चन्ति । रजः आ अन्तरिक्षमा[2] सर्वतः तरुषन्ते तरन्ति संचरन्ति । स्वं भानुं स्वकीयं तेजः अर्णवैः मेघैः सह अनु श्रथयन्ते अनुश्लेषयन्ति अनुकूलं प्रापयन्तीत्यर्थः ॥

अमादेषां भियसा भूमिरेजति नौर्न पूर्णा क्षरति व्यथिर्यती ।
दूरेदृशो ये चितयन्त एमभिरन्तर्महे विदथे येतिरे नरः ॥ २ ॥

अमात् । एषाम् । भियसा । भूमिः । एजति । नौः । न । पूर्णा । क्षरति । व्यथिः । यती ।
दूरेऽदृशः । ये । चितयन्ते । एमऽभिः । अन्तः । महे । विदथे । येतिरे । नरः ॥ २ ॥

एषाम् ॥ अन्वादेशविषयत्वादनुदात्तः ॥ एषां मरुतां भियसा भयेन भूमिः एजति कम्पते नौर्न पूर्णा प्राणिभिः । सा यथोदकमध्ये क्षरति चलति व्यथिः व्यथिता यती गच्छन्ती । एतदुभयं नौविशेषणम् । दूरेदृशः दूरे दृश्यमाना अपि ये मरुतः एमभिः गमनैः चितयन्ते ज्ञायन्ते ते महान्तो मरुतः विदथे यज्ञे महे महते हविषे हविर्भक्षणाय[3] अन्तः द्यावापृथिव्योर्मध्ये येतिरे यतन्ते । नरः नेतारो मरुतः ॥

गवामिव श्रियसे शृङ्गमुत्तमं सूर्यो न चक्षू रजसो विसर्जने ।
अत्या इव सुभ्वश्चारवः स्थन मर्या इव श्रियसे चेतथा नरः ॥ ३ ॥

गवाम्ऽइव । श्रियसे । शृङ्गम् । उत्ऽतमम् । सूर्यः । न । चक्षुः । रजसः । विऽसर्जने ।
अत्याःऽइव । सुऽभ्वः । चारवः । स्थन । मर्याःऽइव । श्रियसे । चेतथ । नरः ॥ ३ ॥

---

१. ख-च-झ-ण-न-भ-र– ‘ पृथिव्यै ’ नास्ति । २. ख-च-झ-ण-त-न-भ-र–तदर्थमन्तरिक्षस्य; श–तदर्थमन्तरिक्षम् । ३. च-ण–हविर्भक्षणायास्मा(मा?)त् स्वस्थानात् ।

हे मरुतो यूयं ᵛगवां ᵛशृङ्गम् ᵛइव ᵛउत्तमम् उत्कृष्टमुष्णीषपट्टादिकं ᵛश्रियसे श्रिये धारयथेति शेषः । ᵛसूर्यो ᵛन सूर्य इव । स यथा ᵛरजसः तेजसः ᵛविसर्जने ᵛचक्षुः दर्शनसाधनं मण्डलं धत्ते तद्वद्रजसो वृष्टेर्विसर्जने विसर्जनाय चक्षुः सर्वस्य प्रकाशकं तेजो धारयथ । ᵛअत्याइव अश्वाइव ᵛसुभ्वः सुष्ठु सर्वत्र भवन्तो वेगवन्तः ᵛचारवः दर्शनीयाः ᵛस्थन भवथ । ᵛमर्याः मर्त्याः यजमानाः ᵛइव । ते यथा ᵛश्रियसे जानन्ति यज्ञादिकं तद्वच्छ्रिये ᵛचेतथ हे ᵛनरः नेतारो मरुतः ॥

**को वो महान्ति महतामुदश्नवत्कस्काव्या मरुतः को ह पौंस्या ।**

**यूयं ह भूमिं किरणं न रेजथ प्र यद्भरध्वे सुविताय दावने ॥ ४ ॥**

कः । वः । महान्ति । महताम् । उत् । अश्नवत् ।

कः । काव्या । मरुतः । कः । ह । पौंस्या ।

यूयम् । ह । भूमिम् । किरणम् । न । रेजथ । प्र । यत् । भरध्वे । सुविताय । दावने ॥ ४ ॥

हे ᵛमरुतः ᵛवः युष्माकं ᵛमहतां पूज्यानां ᵛकः यजमानः ᵛमहान्ति श्रेयांसि ᵛउदश्नवत् उत्कृष्टं प्राप्नुयात् । ᵛकः च तदर्थं ᵛकाव्या काव्यानि कवीनां युष्माकं संबन्धीनि स्तोत्राणि उदश्नवत्[1] । ᵛको ᵛह कश्च ᵛपौंस्या पौंस्यानि पराक्रमान्[2] उदश्नवत् । आदरार्थं पुनर्वचनम् । ᵛयूयं ᵛह यूयं खलु ᵛभूमिं ᵛकिरणं ᵛन किरणमिव ᵛरेजथ[3] । किरणं यथा वृष्ट्यर्थं चालयथ तद्वद्भूमिं रेजथ । ᵛयत् यस्मात् ᵛसुविताय सुष्ठु प्राप्तव्याय । प्राप्तव्यस्येत्यर्थः । तादृशस्य धनस्य वृष्ट्युदकस्य[4] वा ᵛदावने दानाय ᵛप्र ᵛभरध्वे प्रकर्षेण संपादयथ वृष्टिम् । यस्माद्यूयमेवं कुरुथ तस्मात्क एवं करोतीत्यर्थः ॥

**अश्वाइवेदरुषासः सबन्धवः शूराइव प्रयुधः प्रोत युयुधुः ।**

**मर्याइव सुवृधो वावृधुर्नरः सूर्यस्य चक्षुः प्र मिनन्ति वृष्टिभिः ॥ ५ ॥**

अश्वाःऽइव । इत् । अरुषासः । सऽबन्धवः । शूराःऽइव । प्रऽयुधः । प्र । उत । युयुधुः ।

मर्याःऽइव । सुऽवृधः । ववृधुः । नरः । सूर्यस्य । चक्षुः । प्र । मिनन्ति । वृष्टिऽभिः ॥ ५ ॥

मरुत एते ᵛअश्वाइव शीघ्रगन्तारः ᵛअरुषासः आरोचमानाः ᵛसबन्धवः । समान एक एव बन्धुर्बन्धको रुद्रो येषां ते तादृशाः । परस्परं बन्धवः स्नेहयुक्ता वा ᵛशूराः भटाः ᵛइव ᵛप्रयुधः प्रयोद्धारो वैरिभिः सह तादृशाः ᵛउत अपि च ᵛप्र ᵛयुयुधुः प्रकर्षेण युध्यन्ते । ᵛमर्याइव मनुष्या यथा वर्धन्ते तथा ᵛसुवृधः सुष्ठु वर्धयितारो वर्धमाना वा ᵛनरः नेतारः ᵛववृधुः वर्धन्ते । एवं महात्मानः[5] ᵛसूर्यस्य ᵛचक्षुः तेजःसमूहं मण्डलं वा ᵛवृष्टिभिः ᵛप्र ᵛमिनन्ति प्रकर्षेण हिंसन्ति आवृण्वन्तीत्यर्थः ॥

---

१. ख-ग-घ-च-ज-ण-त-न-भ-र-श- कः उदश्नवत् । २. ख-च-झ-ण-त-न-भ-र- पराक्रमाणि । ३. ख-च-झ-ण-न-भ-रेजयथ । ४. ख-च-झ-ण-त-न-भ-र-वृष्ट्युदकाय । ५. ख-झ-न-भ-महात्मनः ।

ते अज्येष्ठा अकनिष्ठास उद्भिदोऽमध्यमासो महसा वि वावृधुः ।
सुजातासो जनुषा पृश्निमातरो दिवो मर्या आ नो अच्छा जिगातन ॥ ६ ॥

ते । अज्येष्ठाः । अकनिष्ठासः । उत्ऽभिदः । अमध्यमासः । महसा । वि । ववृधुः ।
सुऽजातासः । जनुषा । पृश्निऽमातरः । दिवः । मर्याः । आ । नः । अच्छ । जिगातन ॥६॥

vते मरुतः vअज्येष्ठाः vअकनिष्ठासः अकनिष्ठाः vउद्भिदः उद्भेदयितारः शत्रूणाम् vअमध्यमासः अमध्यमाः सर्वप्रकारैः समाः vमहसा तेजसा vवि vववृधुः विवर्धन्ते । vसुजातासः सुष्ठु संभूताः vजनुषा जन्मना vपृश्निमातरः पृश्नेः पुत्राः vमर्याः मनुष्येभ्यो हिता यूयं vदिवः सकाशात् vनः अस्मान् vअच्छ अभिमुखम् vआ vजिगातन सर्वतः प्रशंसत साध्वनुष्ठितमिति । उत्तरार्धः प्रत्यक्षकृतः । यद्वा । ये सुजाता जनुषा पृश्निमातरश्च तान् दिव आगतान् हे ऋत्विजो मर्या यूयमा जिगातन आगच्छत ते नोऽच्छ आगच्छतास्मदभिमुखम् ॥

वयो न ये श्रेणीः पप्तुरोजसान्तान्दिवो बृहतः सानुनस्परि ।
अश्वास एषामुभये यथा विदुः प्र पर्वतस्य नभनूँरचुच्यवुः ॥ ७ ॥

वयः । न । ये । श्रेणीः । पप्तुः । ओजसा । अन्तान् । दिवः । बृहतः । सानुनः । परि ।
अश्वासः । एषाम् । उभये । यथा । विदुः । प्र । पर्वतस्य । नभनून् । अचुच्यवुः ॥ ७ ॥

vये मरुतः vवयो vन पक्षिण इव vश्रेणीः पङ्क्तयः[1] सन्तः[1] vओजसा बलेन vदिवः अन्तरिक्षस्यादित्यस्य वा vअन्तान् पर्यन्तान् vबृहतः महतः vसानुनः समुन्नतस्याकाशवलयस्य vपरि परितः vपप्तुः पतन्ति vएषाम् vअश्वासः अश्वाः vपर्वतस्य मेघस्य vनभनून् ॥ भनतेः[2] शब्दकर्मणो नभ्राडितिवत् नभनवः ॥ उदकानि vप्र vअचुच्यवुः च्यावयन्ति । vउभये देवा मनुष्याश्च vयथा vविदुः जानन्ति तथा । मनुष्याणां ज्ञानं प्रसिद्धम् । देवाश्च वृष्टौ सत्यामाग्रयणादौ हविष्प्रदानेन जानन्ति । देवानां वृष्टिसंपूर्तिपरिज्ञानमाश्वलायनेनोक्तम्—' यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेत ' इत्युपक्रम्य ' अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याग्रयणेन हि यजते ' ( आश्व. श्रौ. २. ९ ) इति ॥

मिमातु द्यौरदितिर्वीतये नः सं दानुचित्रा उषसो यतन्ताम् ।
आचुच्यवुर्दिव्यं कोशमेत ऋषे रुद्रस्य मरुतो गृणानाः ॥ ८ ॥

मिमातु । द्यौः । अदितिः । वीतये । नः । सम् । दानुऽचित्राः । उषसः । यतन्ताम् ।
आ । अचुच्यवुः । दिव्यम् । कोशम् । एते । ऋषे । रुद्रस्य । मरुतः । गृणानाः ॥ ८ ॥

---

१. ख-च-झ-ण-त-न-भ-र—पङ्क्तीः । २. त-न-र—नभतेः ।

नः अस्मदर्थं द्यौः अन्तरिक्षं मिमातु निर्मिमातु वृष्टिम् । तदनुकूलं करोत्वित्यर्थः । कीदृशी । अदितिः अदीना । यद्वा । द्यौर्मिमात्वदितिर्भूमिश्च मिमातु सुखम् । किमर्थम् । वीतये उत्पत्तये प्रजननाय वा । दानुचित्राः विचित्रप्रकाशादिदानाः उषसः सं यतन्ताम् । हे ऋषे त्वया गृणानाः स्तूयमानाः मरुतः रुद्रस्य । पुत्रा इति[1] शेषः[1] । एते[2] दिव्यं कोशं मेघमुदकम् आचुच्यवुः आच्यावयन्ति ॥ द्विकर्मकोऽयम् ॥　　॥ २४ ॥

'ईळे अग्निं स्ववसम्' इत्यष्टर्चं चतुर्थं सूक्तं श्यावाश्वस्यार्षम् । सप्तम्यष्टम्यौ जगत्यौ शिष्टाः षट् त्रिष्टुभः । मरुद्देवताकमग्निमरुद्देवताकं वा । 'ईळे द्विजगत्यन्तमाग्नेयं च वा' इति । सूक्तविनियोगो लैङ्गिकः । आद्या कारीर्यां सामिधेनीषु याज्या । सूत्रितं च—'ईळे अग्निं स्ववसं नमोभिरिति धाय्ये' ( आश्व. श्रौ. २. १३ ) इति ॥

**ईळे अग्निं स्ववसं नमोभिरिह प्रसत्तो वि चयत्कृतं नः ।**

**रथैरिव प्र भरे वाजयद्भिः प्रदक्षिणिन्मरुतां स्तोममृध्याम् ॥ १ ॥**

ईळे । अग्निम् । सुऽअवसम् । नमःऽभिः । इह । प्रऽसत्तः । वि । चयत् । कृतम् । नः ।

रथैःऽइव । प्र । भरे । वाजयत्ऽभिः । प्रऽदक्षिणित् । मरुताम् । स्तोमम् । ऋध्याम् ॥ १ ॥

अहं श्यावाश्वः अग्निं स्ववसं स्वायत्तरक्षणं नमोभिः स्तोत्रैः ईळे स्तौमि । तत्स्तोत्रं कृतम् इह इदानीं प्रसत्तः प्रसन्नः प्रकर्षेण यज्ञं प्राप्तो वा सन् नः अस्मदर्थं वि चयत् विजानातु । वाजयद्भिः अन्नमिच्छद्भिः स्तोत्रैः रथैरिव रथैर्यथाभिमतं प्राप्नुवन्ति तद्वद्बृंहणसाधनैः प्र भरे प्रकर्षेण संपादयाम्यभिमतम् । प्रदक्षिणित् प्रादक्षिण्येन गच्छन् मरुतां स्तोमं स्तोत्रम् ऋध्यां वर्धयेयम् ॥

**आ ये तस्थुः पृषतीषु श्रुतासु सुखेषु रुद्रा मरुतो रथेषु ।**

**वना चिदुग्रा जिहते नि वो भिया पृथिवी चिद्रेजते पर्वतश्चित् ॥ २ ॥**

आ । ये । तस्थुः । पृषतीषु । श्रुतासु । सुऽखेषु । रुद्राः । मरुतः । रथेषु ।

वना । चित् । उग्राः । जिहते । नि । वः । भिया ।

पृथिवी । चित् । रेजते । पर्वतः । चित् ॥ २ ॥

ये मरुतः रुद्राः रुद्रपुत्राः आ तस्थुः आतिष्ठन्ति पृषतीषु मरुतां वाहनेषु श्रुतासु श्रान्तासु प्रसिद्धासु वा सुखेषु । खमाकाशं छिद्रम् । शोभनरथाक्षद्वारेषु रथेषु रथान् आ तस्थुः आतिष्ठन्ति । हे उग्राः उद्गूर्णबला मरुतो यूयं यदा रथमारूढाः स्थ तदानीं वना चित् वनान्यपि नि जिहते न्यग्गच्छन्ति वः युष्माकं भिया

---

१. ग-घ-ज-र-श-इत्यर्थः । २. झ-त-न-भ-र-ते ।

भीत्या । पृथिवी चित् पृथिव्यपि रेजते । पर्वतश्चित् पर्वतोऽपि रेजते कम्पते । उत्तरार्धः प्रत्यक्षकृतः । पूर्वार्धे य एवमकुर्वन् तेषां स्तोममृध्यामिति पूर्वत्रान्वयः[1] ॥

कारीर्यां मारुतस्य सप्तकपालस्य ‘ पर्वतश्चित् ’ इत्येषा याज्या । सूत्रितं च— ‘ पर्वतश्चिन्महि वृद्धो बिभाय सृजन्ति रश्मिमोजसा ’ ( आश्व. श्रौ. २. १३ ) इति ॥

पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः ।
यत्क्रीळथ मरुत ऋष्टिमन्त आपइव सध्र्यञ्चो धवध्वे ॥ ३ ॥

पर्वतः । चित् । महि । वृद्धः । बिभाय । दिवः । चित् । सानु । रेजत । स्वने । वः ।
यत् । क्रीळथ । मरुतः । ऋष्टिऽमन्तः । आपःऽइव । सध्र्यञ्चः । धवध्वे ॥ ३ ॥

हे मरुतः वः युष्माकं स्वने भयंकरशब्दे सति पर्वतश्चित् पर्वतोऽपि महि महान् वृद्धः सन्नपि बिभाय बिभेति । दिवश्चित् अन्तरिक्षस्यापि सानु समुच्छ्रितः[2] प्रदेशः[2] रेजत[3] कम्पते[3] । यत् यदा क्रीळथ हे मरुतः यूयम् ऋष्टिमन्तः आयुधवन्तः सन्तस्तदा आपइव उदकानीव सध्र्यञ्चः सहाञ्चनाः धवध्वे धावध्वे गच्छथ ॥

वराइवेद्रैवतासो हिरण्यैरभि स्वधाभिस्तन्वः पिपिश्रे ।
श्रिये श्रेयांसस्तवसो रथेषु सत्रा महांसि चक्रिरे तनूषु ॥ ४ ॥

वराःऽइव । इत् । रैवतासः । हिरण्यैः । अभि । स्वधाभिः । तन्वः । पिपिश्रे ।
श्रिये । श्रेयांसः । तवसः । रथेषु । सत्रा । महांसि । चक्रिरे । तनूषु ॥ ४ ॥

वराइव विवाहयोग्या युवान इव । ते यथा रैवतासः धनवन्तः हिरण्यैः हिरण्यमयैराभरणविशेषैः स्वधाभिः उदकैश्च तन्वः स्वीयानि शरीराणि अभि पिपिश्रे संयोजयन्ति अलंकुर्वन्ति तद्वदेते मरुतोऽपि रैवतासः धनवन्तः हिरण्यैः हिरण्यस्थानीयैर्विद्युदाख्यैराभरणैः स्वधाभिश्च तन्वः स्वीयानि शरीराणि पिपिश्रे । श्रिये शोभायै श्रेयांसः श्रेष्ठाः तवसः बलवन्तो मरुतः रथेषु सत्रा सत्यं सह वा तनूषु महांसि चक्रिरे कृतवन्तः । सर्वाभरणैरुदकैश्चोपेताः रथानधिष्ठाय[4] शरीरेषु तेजांस्यधारयन्नित्यर्थः[5] ॥

---

१. ख-च-झ-ण-भ-र–पूर्वत्र; न–पूर्वत्र संबन्धः । २. ख-च-झ-ण-त-न-भ-र–समुच्छ्रितप्रदेशम् । ३. ख-च-झ-ण-त-न-भ-र–रेजथ ( रेजत-न ) कम्पयथ ( कम्पयथे-झ ) । ४. ख-च-ण-न–रथेऽधिष्ठाय; झ-भ-र–रथाधिष्ठाय । ५. ग-घ-ज–°धारयन्नित्यर्थः । इत्यूरणः ।

अज्येष्ठासो अकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय ।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥ ५ ॥

अज्येष्ठासः । अकनिष्ठासः । एते । सम् । भ्रातरः । ववृधुः । सौभगाय ।
युवा । पिता । सुऽअपाः । रुद्रः । एषाम् । सुऽदुघा । पृश्निः । सुऽदिना । मरुत्ऽभ्यः ॥५॥

अज्येष्ठासः अकनिष्ठासः परस्परं ज्येष्ठकनिष्ठभावरहिताः सहैवोत्पन्नाः समानबलाः एते मरुतः भ्रातरः परस्परं भ्रातृभूताः सन्तः सौभगाय सुभगत्वाय सं ववृधुः वर्धन्ते । युवा नित्यतरुणः स्वपाः शोभनकर्मा एषां मरुतां रुद्रः पिता सुदुघा सुष्ठु दोग्ध्री पृश्निः गोदेवता मातृभूता मरुद्भ्यः मरुदर्थं सुदिना शोभनदिनानि । अकुरुतामिति शेषः ॥

यदुत्तमे मरुतो मध्यमे वा यद्वावमे सुभगासो दिवि ष्ठ ।
अतो नो रुद्रा उत वा न्वस्याग्ने वित्ताद्धविषो यद्यजाम ॥ ६ ॥

यत् । उत्ऽतमे । मरुतः । मध्यमे । वा । यत् । वा । अवमे । सुऽभगासः । दिवि । स्थ ।
अतः । नः । रुद्राः । उत । वा । नु । अस्य । अग्ने । वित्तात् । हविषः । यत् । यजाम ॥६॥

हे मरुतः यूयं यदुत्तमे[1] उत्कृष्टे उत्तमे चरमे वा दिवि द्युलोके मध्यमे वा दिवि यद्वावमे दिवि हे सुभगासः स्थ भवथ । ' त्रयो वा इमे त्रिवृतो लोकास्तिस्रो दिवः पृथिवी ' इत्यादिश्रुतेर्द्युलोकस्य त्रैविध्यम् । अतः अस्मात् स्थानत्रयात् नः अस्मदर्थं हे रुद्राः आगच्छतेति शेषः । उत वा अथवा नु अद्य यद्यजाम यद्धविः प्रक्षिपाम हे अग्ने त्वम् अस्य हविषः एतद्धविः वित्तात् विद्धि[2] ॥

अग्निश्च यन्मरुतो विश्ववेदसो दिवो वहध्व उत्तरादधि ष्णुभिः ।
ते मन्दसाना धुनयो रिशादसो वामं धत्त यजमानाय सुन्वते ॥ ७ ॥

अग्निः । च । यत् । मरुतः । विश्वऽवेदसः । दिवः । वहध्वे । उत्ऽतरात् । अधि । स्नुऽभिः ।
ते । मन्दसानाः । धुनयः । रिशादसः । वामम् । धत्त । यजमानाय । सुन्वते ॥ ७ ॥

हे विश्ववेदसः सर्वस्य ज्ञातारो विश्वधना वा हे मरुतः यत्[3] यूयं अग्निश्च दिवः द्युलोकात् उत्तरात् उत्कृष्टतरात् अधि उपरि स्नुभिः सानुभिरुपरिप्रदेशे वहध्वे उह्यध्वे । तत्र निवसथेत्यर्थः । यद्वा स्नुशब्देन तत्सदृशा अश्वा उच्यन्ते । तैर्वोह्यध्वे । ते यूयं मन्दसानाः मोद-

---

१. त–उत् । २. ग-घ-ज-श–वेत्थ । ३. ख-च-झ-ण-त-न-भ-र– ' यत् ' नास्ति ।

माना अस्मदीयैः स्तोत्रैर्हविर्भिश्च धुनयः शत्रूणां कम्पयितारः रिशादसः अस्मद्धिंसकानामत्तारः सन्तः वामं वननीयं धनं धत्त दत्त यजमानाय सुन्वते अभिषवं कुर्वते ॥

'अग्ने मरुद्भिः' इत्यष्टम्याग्निमारुतस्य याज्या । 'अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः' ( आश्व. श्रौ. ५. २० ) इति[1] सूत्रितत्वात् ॥

**अग्ने॑ म॒रुद्भिः॑ शु॒भय॑द्भि॒र्ऋक्व॑भिः॒ सोमं॑ पिब मन्दसा॒नो ग॑ण॒श्रिभिः॑ ।**
**पा॒व॒केभि॑र्विश्वमि॒न्वेभि॑रा॒युभि॒र्वैश्वा॑नर प्र॒दिवा॑ के॒तुना॑ स॒जूः ॥ ८ ॥**

अग्ने॑ । म॒रुत्ऽभिः॑ । शु॒भय॑त्ऽभिः । ऋक्व॑ऽभिः । सोम॑म् । पि॒ब । म॒न्द॒सा॒नः । ग॒ण॒श्रिऽभिः॑ ।
पा॒व॒केभिः॑ । वि॒श्व॒म्ऽइ॒न्वेभिः॑ । आ॒युऽभिः॑ । वैश्वा॑नर । प्र॒ऽदिवा॑ । के॒तुना॑ । स॒ऽजूः ॥ ८ ॥

हे अग्ने मरुद्भिः सह मन्दसानः सन् सोमं पिब । कीदृशैः मरुद्भिः[2] । शुभयद्भिः शोभमानैरन्यान् शोभयद्भिर्वा ऋक्वभिः स्तुत्यैः गणश्रिभिः गणभावमाश्रयद्भिः पावकेभिः शोधकैः विश्वमिन्वेभिः विश्वं वृष्ट्या प्रीणयद्भिः आयुभिः आयुष्मद्भिः[3] । हे वैश्वानर विश्वनरहिताग्ने प्रदिवा पुराणेन केतुना ज्वालापुञ्जेन सजूः सहितः ॥ ॥ २५ ॥

'के ष्ठा नरः' इत्येकोनविंशत्यृचं पञ्चमं सूक्तम् । अत्रानुक्रमणिका—'के ष्ठैकोना गायत्रं श्यावाश्वोऽत्र वैददश्वी तरन्तपुरुमीळ्हौ दार्भ्य[4] रथवीतिं मरुतश्च दानतुष्टः प्रशशंस बुद्ध्वा च तरन्तमहिषीं शशीयसीं[5] पञ्चम्यनुष्टुप् नवमी सतोबृहती' इति । श्यावाश्व ऋषिः । पञ्चम्यनुष्टुप् नवमी सतोबृहती शिष्टा गायत्र्यः । आद्याश्चतस्रो मरुद्देवताकाः । 'सनत्सा' इत्यादीनां चतसृणां शशीयसी[6] नाम तरन्तस्य राज्ञो भार्या देवता । 'उत मेऽरपत्' इत्यस्या वैददश्विः पुरुमीळ्हो देवता । 'यो मे धेनूनाम्' इत्यस्या वैददश्विस्तरन्तो राजा देवता । 'य ईं वहन्ते' इत्याद्याः षण्मारुत्यः । 'एतं मे' इत्यस्य तृचस्य दार्भ्यो[7] रथवीतिर्नाम राजा देवता । विनियोगो लैङ्गिकः ॥

अत्राश्चर्यं पुरावृत्तमाहुरागमपारगाः । अर्चनानाः पुरात्रेयो दार्भ्येण[8] रथवीतिना ॥ आर्त्विज्याय वृतो यज्ञे वितते हौत्र आस्थितः । रथवीतिसुतां कन्यां ददर्श पितुरन्तिके ॥ ययाचे स्वकुमाराय श्यावाश्वाय च तां सुताम् । स प्रदानमना भार्यामपृच्छत्किं प्रयच्छसि ॥ इति पृष्टा पुनः प्राह कथमस्मै प्रदास्यसि । इतः पूर्वं सुता दत्ता नासीदनृषये क्वचित् ॥ तत्तथैवेति निश्चित्य प्रत्याचष्टार्चनानसम् । श्यावाश्वः संस्थिते यज्ञे तेन राज्ञा निराकृतः ॥ तत्प्रत्याशान्वितो विप्रस्तपस्तेपे सुदारुणम् । ब्रह्मचर्यरतः शान्तो भिक्षार्थं पर्यटन् द्विजः ॥ तरन्तमहिषीं साध्वीं बिभिक्षेऽसौ शशीयसीम्[9] । सा संप्राप्यान्तिकं पत्युः प्रोवाचागतवानृषिः ॥ इत्युक्तो नृपतिर्भार्यां प्रत्याहैनं प्रपूजय । सानुज्ञाता गवां यूथं प्रादादाभरणानि च ॥ तरन्तोऽपि पुनस्तस्मै प्रादाद्धनमपेक्षितम् । दत्वा च

---

१. न–इति याज्येति । २. ख-च-झ-ण-न-भ-र-श–मरुद्भिः सह । ३. ख-च-झ-ण-त-भ-र–'आयुष्मद्भिः' नास्ति ; न– गन्तृभिः । ४. त– दाल्भ्यम् । ५. ख-च-झ-ण-त-न-भ-र–शसीयसीम् । ६. ख-च-झ-ण-त-न-भ-र–शसीयसी । ७. ख-च-झ-ण-त-न-भ-र–दाल्भ्यः । ८. ख-च-झ-ण-त-न-भ-र--श-दाल्भ्येन; ग-घ-ज–दाभ्येन । ९. झ-त-न-भ-र-श–शसीयसीम् ।

पुरुमीळ्हस्य स्वानुजस्यान्तिकं प्रति ॥ प्रेरयामास तमृषिं सोऽपि त्वां मानयिष्यति ॥ तथेति राज्ञो वचनं निशम्य तद्भार्यया दर्शितसर्वमार्गः । गच्छन् शनैरर्धपथे मरुद्गणान् समानरूपान् स्वदिदृक्षयागतान् ॥ विलोक्य विप्रः सभयः प्रणम्य कृताञ्जलिः कण्टकिताङ्गसंघः । तुष्टाव हृष्टान्मरुतो विशिष्टैरर्थैर्वचोभिः परितुष्टचित्तः ॥ संप्राप्य सर्वं स्वमनीषितं तदा मरुद्गणेभ्यो मुदितात्मवद्धयः[1] ॥ तदाभवदृषिः सूक्तद्रष्टा श्यावाश्वनामकः । पश्चात्पुनर्गृहं गत्वा भूयो लब्ध्वा गवां शतम् ॥ दार्भ्यो[2] मन्त्रदृशे राज्ञ्या चोदितः स्वसुतां ददौ । पुरुमीळ्हस्तरन्तश्च तद्भार्या च शशीयसी[3] ॥ दार्भ्यो[4] यो रथवीत्याख्यः सप्त ये मरुतां गणाः । ते[5] तस्मै यत्[5] ददुस्तुष्टास्तत्के ष्ठेत्यत्र वर्ण्यते ॥

के ष्ठा न॒रः॒ श्रेष्ठ॑तमा॒ य एक॑एक आ॒य॒य । प॒र॒मस्याः॑ परा॒वतः॑ ॥ १ ॥

के । स्थ॒ । न॒रः॒ । श्रेष्ठ॑ऽतमाः । ये । एकः॑ऽएकः । आ॒ऽय॒य । प॒र॒मस्याः॑ । प॒रा॒ऽवतः॑ ॥ १ ॥

हे ᵛनरः नेतारो मरुतः ᵛश्रेष्ठतमाः अत्यन्तं श्रेष्ठा यूयं ᵛके ᵛष्ठ के स्थ के भवथ । एवं स्वरूपानिश्चयात् संदिह्य ब्रवीति । ᵛये यूयम् ᵛएकएकः प्रत्येकम् ᵛआयय आगच्छथ । कस्मादित्युच्यते । ᵛपरमस्याः ᵛपरावतः अत्यन्तदूरदेशात् । अन्तरिक्षादित्यर्थः ॥

क्व॑१॒ वोऽश्वाः॒ क्वा॒३॒॑भीश॑वः क॒थं शे॑क क॒था य॑य । पृ॒ष्ठे सदो॑ न॒सोर्यमः॑ ॥२॥

क्व॑ । वः॒ । अश्वाः॑ । क्व॑ । अ॒भीश॑वः । क॒थम् । शे॒क॒ । क॒था । य॒य॒ ।

पृ॒ष्ठे । सदः॑ । न॒सोः॑ । यमः॑ ॥ २ ॥

हे मरुतः ᵛवः युष्माकम् ᵛअश्वाः ᵛक्व कुत्रस्थाः । ᵛक्व च ᵛ अभीशवः बन्धनरज्जवः । ᵛकथं च ᵛशेक शीघ्रं गन्तुं शक्ता भवथ । ᵛकथा कथं ᵛयय याताः स्थ । ᵛपृष्ठे अश्वानां पृष्ठदेशे ᵛसदः । सीदति तिष्ठत्यत्रेति सदः पर्याणम् । तच्च[6] दृश्यते । तथा ᵛनसोः नासिकयोः ᵛयमः नियमिता पलायनप्रतिबन्धकारी पशोर्नासिकयोर्दृश्यते । तस्मादश्वादिलिङ्गैः कुत्रापि त्वरितगमना इव प्रतिभान्ति के यूयमिति देवत्वमनवधार्याह ॥

ज॒घने॒ चोद॑ एषां॒ वि स॒क्थानि॒ नरो॑ यमुः । पु॒त्र॒कृ॒थे न जन॑यः ॥ ३ ॥

ज॒घने॑ । चोदः॑ । ए॒षा॒म् । वि । स॒क्थानि॑ । नरः॑ । य॒मुः॒ । पु॒त्र॒ऽकृ॒थे । न । जन॑यः ॥ ३ ॥

ᵛएषाम् अश्वानां ᵛजघने हन्तव्यप्रदेशे ᵛचोदः प्रेरिका कशा अराग्रकाष्ठविशेषो वा वर्तते । शीघ्रगमनाय ताडयन् वर्तत इत्यर्थः । ᵛसक्थानि ऊरुप्रदेशान् ᵛनरः नेतारो मरुतः ᵛवि विविच्य ᵛयमुः नियच्छन्ति । आशुधावनेन विवृता भवन्तीत्यर्थः । विवृतौ दृष्टान्तः । ᵛपुत्रकृथे

---

१. त–मुदितात्मविद्धयः । २. झ-त-न-भ-र– ततः ; श–दाल्भ्यः । ३. त– शसीयसी । ४. त–दाल्भ्यः । ५. श–ततस्तस्मै । ६. ग-घ-ज-श–तत्र ।

पुत्रकरणे उत्पादने ^जनयः ^न अपत्योत्पादयित्र्यो योषित इव । ता यथा पुत्रोत्पादनकामाः[1] संगमसमये[2] ऊरू विवृतौ कुर्वन्ति तद्वदित्यर्थः ॥

परा वीरास एतन मर्यासो भद्रजानयः । अग्नितपो यथासथ ॥ ४ ॥

परा । वीरासः । इतन । मर्यासः । भद्रऽजानयः । अग्निऽतपः । यथा । असथ ॥ ४ ॥

कशाताडनादिलिङ्गेन जिगमिषून् मत्वा ब्रूते । हे ^वीरासः वीराः अमित्राणामीरयितारो हे ^मर्यासः मर्त्येभ्यो हिता हे ^भद्रजानयः । भद्रः स्तुत्यो जानिर्जन्म येषां ते तथोक्ताः । रुद्रपुत्राः इत्यर्थः । ^अग्नितपः अग्निना तप्तास्ताम्रादयः ^यथा दीप्तास्तद्वत् प्रदीप्ताः ^असथ भवथ । अथवाग्नितप्ता दग्धदेहा यथा पलायन्ते तथा भवथेति ॥

सनत्साश्व्यं पशुमुत गव्यं शतावयम् ।
श्यावाश्वस्तुताय या दोर्वीरायोपबर्बृहत् ॥ ५ ॥

सनत् । सा । अश्व्यम् । पशुम् । उत । गव्यम् । शतऽअवयम् ।
श्यावाश्वऽस्तुताय । या । दोः । वीराय । उपऽबर्बृहत् ॥ ५ ॥

^सा तरन्तमहिषी मह्यं ^सनत् प्रादात् । किम् । ^अश्व्यम् अश्वात्मकं तत्समूहात्मकं वा ^पशुम् । जातावेकवचनम् । ^उत अपि च ^गव्यं गोसमूहात्मकं पशुं ^शतावयम् अनेकैरविभिर्युक्तं सनदिति । सेत्युक्तं केत्याह । ^या ^श्यावाश्वस्तुताय श्यावाश्वेन मया स्तुताय ^वीराय तरन्ताय ^दोः स्वकीयं भुजम् ^उपबर्बृहत् उपोदयच्छदालिङ्गनाय सा सनदिति । यतः[3] भर्तृप्रेमास्पदा तस्मादेव बहु धनं दातुं शक्तेत्यर्थः ॥ ॥ २६ ॥

उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी । अदेवत्रादराधसः ॥ ६ ॥

उत । त्वा । स्त्री । शशीयसी । पुंसः । भवति । वस्यसी । अदेवऽत्रात् । अराधसः ॥ ६ ॥

^उत अपि च ^त्वा एका[4] ^शशीयसी[5] । शशीयसी[6] इत्येतन्महिष्या नाम । सैव ^स्त्री[7] । यद्वा । उतेत्ययमेवकारार्थे । स्त्रीषु सैव प्रशस्येत्यर्थः ॥ ' त्वसमसिमनेमेत्यनुच्चानि ' इति वचनात् त्वेति निघातः ॥ सैव ^पुंसः पुरुषात् ^वस्यसी वसीयसी ^भवति । कस्मात्पुंस इत्युच्यते । ^अदेवत्रात् । देवाः[8] अनेन[8] त्रायन्ते स्तुत्यादिना सः[9] देवत्रः । न देवत्रः अदेवत्रः[9] । तस्मात् ^अराधसः । राधो धनम् । दानार्हधनरहितात् । लुब्धकादित्यर्थः ॥

---

१. ग-घ-ज-श–पुत्रोत्पादनकाले । २. ख-च-झ-ण-भ–संगमाय ; न–संगमने । ३. ख-च-झ-ण-त-भ-र–अनया ; न–अतो या । ४. ख-झ-न-भ-र– ' एका ' नास्ति । ५. झ-न-भ-र–शसीयसी । ६. झ-न-भ-र–शसीयसी । ७. त–स्त्रीनाम । ८. त-श–देवत्रान्ययेन । ९. ग-घ-ज– यं स अत्र देवत्रः ; श–स देवत्रः ।

**वि या जानाति जसुरिं वि तृष्यन्तं वि कामिनम् । देवत्रा कृणुते मनः ॥७॥**

वि । या । जानाति । जसुरिम् । वि । तृष्यन्तम् । वि । कामिनम् ।

देवऽत्रा । कृणुते । मनः ॥ ७ ॥

या शशीयसी जसुरिं व्यथितम् । जसिस्ताडनकर्मा उपक्षपणकर्मा[1] वा । तं वि जानाति । तथा तृष्यन्तं वि जानाति । कामिनं धनाद्यभिलाषवन्तं वि जानाति । अनुकम्पया[2] अभिमतं दत्तवतीत्यर्थः । देवत्रा देवेषु मनः कृणुते कुरुते देवप्रीत्यर्थं प्रदानबुद्धिं करोति या सैव स्त्रीति पूर्वत्र संबन्धः ॥

**उत घा नेमो अस्तुतः पुमाँ इति ब्रुवे पणिः । स वैरदेय इत्समः ॥ ८ ॥**

उत । घ । नेमः । अस्तुतः । पुमान् । इति । ब्रुवे । पणिः ।

सः । वैरऽदेये । इत् । समः ॥ ८ ॥

उत घ अपि च । घेति पूरणः । नेमः । 'त्वो नेम इत्यर्धस्य' ( निरु. ३. २० ) इति निरुक्तम् । नेमोऽर्धः । जायापत्योर्मिलित्वैककार्यकर्तृत्वादेक एव पदार्थः । 'अर्धं शरीरस्य भार्या[3]' इत्यादिस्मृतेः । शशीयस्या अर्धभूतस्तरन्तः पुमान् अस्तुतः इति ब्रुवे । बहुधा स्तुतोऽपि गुणस्यातिबाहुल्यादस्तुत एवेति ब्रुवे पणिः स्तोताहम् । सः च तरन्तः वैरदेये । वीरा धनानां प्रेरयितारो दानशीलाः । तैर्दातव्यं धनं देयम् । तस्मिन् धने समः । सर्वेभ्यो दातेत्यर्थः । इत् इति पूरणः ॥

**उत मेऽरपद्युवतिर्ममन्दुषी प्रति श्यावाय वर्तनिम् ।**
**वि रोहिता पुरुमीळ्हाय येमतुर्विप्राय दीर्घयशसे ॥ ९ ॥**

उत । मे । अरपत् । युवतिः । ममन्दुषी । प्रति । श्यावाय । वर्तनिम् ।

वि । रोहिता । पुरुऽमीळ्हाय । येमतुः । विप्राय । दीर्घऽयशसे ॥ ९ ॥

उत अपि च श्यावाय श्यावाश्वाय मे मह्यम् अरपत् अलपत् । स्पष्टमाचष्ट । किम् । वर्तनिं मार्गम् । कीदृशी सा । युवतिः प्रवृत्तयौवना प्रति ममन्दुषी प्रतिमोदमाना । कस्मै[4] । दीर्घयशसे प्रभूतान्नाय प्रभूतकीर्तये वा पुरुमीळ्हाय एतन्नामकाय प्रभूतगृहाय विप्राय[5] ॥ 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' ( पा. सू. २. ३. १४ ) इति चतुर्थी ॥ पुरुमीळ्हं प्राप्तुमित्यर्थः । तदर्थं रोहिता रोहितवर्णावश्वौ शशीयस्या दत्तौ वि येमतुः[6] । धृतवन्तावित्यर्थः । या अश्वाभ्यां युक्ते रथे स्थापयित्वा पुरुमीळ्हगृहस्य मार्गं प्रदर्शयन्ती पुरतो गता सैव पुंसो भवति वस्यसीति पूर्वत्र संबन्धः ॥

---

१. श–उपक्षेपणकर्मा । २. त–कामिनि । ३. ख-च-झ-ण-त-न-भ-र–यस्य भार्या । ४. ख-च-झ-ण-न-भ-र– कस्मै विप्राय मेधाविने । ५. त–'विप्राय' नास्ति । ६. ख-त-न-भ-र– येमतुः विशेषेण यमयतुः ; च-ण–येमतुः विशेषेण यमतुः ।

यो मे धेनूनां शतं वैददश्विर्यथा ददत् । तरन्तइव मंहना ॥ १० ॥

यः । मे । धेनूनाम् । शतम् । वैदत्ऽअश्विः । यथा । ददत् । तरन्तःऽइव । मंहना ॥१०॥

इयं पुरुमीळ्हस्तुतिः । ^v^वैददश्विः पुरुमीळ्होऽपि ^v^यो ^v^मे मह्यं ^v^धेनूनां ^v^शतं ^v^यथा येन प्रकारेण ^v^ददत् दत्तवान्[1] । तथा ^v^मंहना मंहनीयानि धनान्यपि ददत् ^v^तरन्तइव । स यथा धेनुशतं बहुविधं धनं च दत्तवान् तद्वद्वैददश्विः पुरुमीळ्होऽपि ददत् । तं स्तुवे[2] इति शेषः ॥ ॥ २७ ॥

य ईं वहन्त आशुभिः पिबन्तो मदिरं मधु । अत्र श्रवांसि दधिरे ॥ ११ ॥

ये । ईम् । वहन्ते । आशुऽभिः । पिबन्तः । मदिरम् । मधु । अत्र । श्रवांसि । दधिरे ॥११॥

इदानीं मरुत एवैत इति निश्चित्य[3] जनप्रसिद्धैः[3] माहात्म्यैः स्तौति । ^v^ये मरुतः ^v^ईम् इदानीम् ^v^आशुभिः शीघ्रगामिभिरश्वैः ^v^वहन्ते उह्यन्ते । किं कुर्वन्तः । ^v^मदिरं मदकरं ^v^मधु सोमरसं ^v^पिबन्तः । पाथेयत्वेन धृतं सोममित्यर्थः । ते मरुतः ^v^अत्र अस्मिन् देशे ^v^श्रवांसि स्तुतिजनितानि यशांसि ^v^दधिरे धारयन्ति ॥

येषां श्रियाधि रोदसी विभ्राजन्ते रथेष्वा । दिवि रुक्मइवोपरि ॥ १२ ॥

येषाम् । श्रिया । अधि । रोदसी इति । विऽभ्राजन्ते । रथेषु । आ ।

दिवि । रुक्मःऽइव । उपरि ॥ १२ ॥

^v^येषां मरुतां ^v^श्रिया कान्त्या ^v^रोदसी द्यावापृथिव्यौ ^v^अधि अधिष्ठिते भवत इति शेषः । यस्मादेते मरुतः ^v^रथेषु ^v^विभ्राजन्ते विशेषेण दीप्यन्ते । ^v^आ इति चार्थे । तत्र दृष्टान्तः । ^v^उपरि उपरिभूते ^v^दिवि द्युलोके ^v^रुक्मः रोचमानः आदित्यः ^v^इव । यद्वा । उपरि रथस्योपरीति वा योज्यम् ॥

युवा स मारुतो गणस्त्वेषरथो अनेद्यः । शुभंयावाप्रतिष्कुतः ॥ १३ ॥

युवा । सः । मारुतः । गणः । त्वेषऽरथः । अनेद्यः । शुभम्ऽयावा । अप्रतिऽस्कुतः ॥ १३ ॥

^v^स ^v^मारुतो ^v^गणः ^v^युवा सर्वत्र मिश्रयिता नित्यतरुणो वा ^v^त्वेषरथः दीप्तरथः ^v^अनेद्यः अनिन्द्यः ^v^शुभंयावा शोभनं गन्ता ^v^अप्रतिष्कुतः अप्रतिगतोऽप्रतिशब्दितो वा । एवं महानुभावो गणो दीप्यत इति ॥

को वेद नूनमेषां यत्रा मदन्ति धूतयः । ऋतजाता अरेपसः ॥ १४ ॥

कः । वेद । नूनम् । एषाम् । यत्र । मदन्ति । धूतयः । ऋतऽजाताः । अरेपसः ॥ १४ ॥

---

१. झ-र-ददतु । २. ख-च-झ-ण-त-न-भ-र-स्तुवते । ३. झ-भ-र-निश्चित्येजनीप्रसिद्धैः ; त-निश्चित्य प्रसिद्धैः ; न-निश्चित्य इदानीं प्रसिद्धैः ।

ˇएषां मरुतां स्थानं ˇको ˇवेद को जानाति । ˇनूनम्[1] इदानीं[1] ˇयत्र स्थाने ˇधूतयः शत्रूणां कम्पकाः ˇमदन्ति हृष्यन्ति ˇऋतजाताः जलार्थमुत्पन्ना यज्ञे वा प्रादुर्भूताः ˇअरेपसः अपापाः॥

**यूयं मर्तं विपन्यवः प्रणेतारं इत्था धिया । श्रोतारो यामहूतिषु ॥ १५ ॥**

**यूयम् । मर्तम् । विपन्यवः । प्रऽनेतारः । इत्था । धिया । श्रोतारः । यामऽहूतिषु ॥ १५ ॥**

हे ˇविपन्यवः स्तुतिकामा मरुतः ˇयूयं ˇमर्तं मरणस्वभावं यजमानम् ˇइत्था अनया ˇधिया इदानीं कृतप्रकारयानुग्रहबुद्ध्या ईदृशेन स्तुतिकर्मणा वा निमित्तेन ˇप्रणेतारः प्रकर्षेण प्रापयितारोऽभिमतं स्वर्गादिकम् । ˇयामहूतिषु । यामो गमनम् । तदर्था हूतयो यस्मिन्निति यामहूतयो यज्ञाः । तेषु ˇश्रोतारः आह्वानानाम् ॥　　॥ २८ ॥

**ते नो वसूनि काम्या पुरुश्चन्द्रा रिशादसः । आ यज्ञियासो ववृत्तन ॥१६॥**

**ते । नः । वसूनि । काम्या । पुरुऽचन्द्राः । रिशादसः । आ । यज्ञियासः । ववृत्तन ॥ १६ ॥**

हे ˇरिशादसः हिंसकानां शत्रूणामत्तारो हे ˇयज्ञियासः यज्ञार्हाः ˇपुरुश्चन्द्राः प्रभूताह्लादकधनाः ˇते यूयं ˇनः अस्मभ्यं ˇवसूनि निवासयोग्यानि धनानि ˇकाम्या स्पृहणीयानि ˇआ ˇववृत्तन आवर्तयथेत्यर्थः । मरुतां दानप्रशंसाया अपेक्षितत्वान्न प्रार्थनोचिता ॥

**एतं मे स्तोममूर्म्ये दार्भ्याय परा वह । गिरो देवि रथीरिव ॥ १७ ॥**

**एतम् । मे । स्तोमम् । ऊर्म्ये । दार्भ्याय । परा । वह । गिरः । देवि । रथीःऽइव ॥ १७ ॥**

संपन्नऋषिभावस्य श्यावाश्वस्यार्चनानसः । रथवीतिसुतायाश्च विवाहं शौनकोऽब्रवीत् ॥ कथम् । मरुत्सु तु प्रयातेषु श्यावाश्वः सुमहायशाः । प्रादुर्भूतार्षमात्मानं ज्ञात्वात्रिकुलनन्दनः ॥ रथवीतेर्दुहितरमगच्छन्मनसा तदा । स सत्यमृषिमात्मानं प्रवक्ष्यन्नथवीतये ॥ एतं मे स्तोममित्याभ्यां दौत्ये रात्रिं न्यवेदयत् । ऋषेर्नियोगमाज्ञाय देव्या राज्या प्रचोदितः ॥ आदाय कन्यकां दातुमुपेयायार्चनानसम् । पादौ तस्योपसंगृह्य स्थित्वा प्रह्वः कृताञ्जलिः । रथवीतिरहं दार्भ्य[2] इति नाम शशंस सः । मया संयोगमिच्छन्तं त्वां प्रत्याचक्षि[3] यत्[3] पुरा ॥ तत्क्षमस्व नमस्तेऽस्तु मे मा स्म भगवन् क्रुधः[4] ॥ ऋषेः पुत्रः स्वयमृषिः पितासि भगवन्नृषे[5] । हन्त प्रतिगृहाणेमां स्नुषामित्येनमब्रवीत् ॥ तस्मै ददावश्वशतं स राजा स्वलंकृतां चापि सुतां स्नुषार्थम् । विवाहकालेऽपि ददौ नरेन्द्रः शतं हयानां दुहितुः सहस्रम् ॥ गवां सहस्रं वसु च प्रभूतं तसुं तपोऽन्तेऽथ वनं जगामेति ॥ हे ˇऊर्म्ये रात्रि देवि । ऊर्म्येति रात्रिनाम । ˇमे मदीयम् ˇएतं ˇस्तोमं मरुद्भ्यः कृतं स्तोत्रमहं मन्त्रदृक् भूत्वा मरुतः स्तुतवानित्येवं ˇदार्भ्याय श्यावाश्वाय ˇपरा पराङ्मुखी दार्भ्याभिमुखी सती ˇवह प्रापयेत्यर्थः । तदेवादरार्थमुच्यते । हे रात्रि ˇदेवि ˇगिरः स्तुतीर्मरुद्विषयाः परा वह ˇरथीरिव । रथी यथा रथेऽभिप्रेतं वसु स्थापयित्वा अभिमतं[6] देशं[6] प्रापयति तद्वत् ॥

---

१ ख-च-ज्ञ-ण-त-न-भ-र-श– ' नूनमिदानीं ' नास्ति । २. ख-च-ण-भ-श–दाल्भ्य । ३. ख-च-ण–प्रत्याचिक्षिपम् । ४. ज्ञ-त-न-भ-र क्रुधीः । ५. र–भगवान्नृषेः । ६. त–अभिमतप्रदेशम् ।

उत मे वोचतादिति सुतसोमे रथवीतौ । न कामो अप वेति मे ॥ १८ ॥

उत । मे । वोचतात् । इति । सुतऽसोमे । रथऽवीतौ । न । कामः । अप । वेति । मे ॥ १८ ॥

हे[1] ऊर्म्ये[1] ᵛउत अपि च ᵛमे मां ᵛवोचतात् ब्रूहि । किमित्युच्यते । ᵛइति इत्थम् । कथमिति । ᵛसुतसोमे कृतसोमयागे ᵛरथवीतौ राज्ञि ᵛमे ᵛकामः तत्पुत्रीविषयः ᵛन ᵛअप ᵛवेति नापगच्छति न विरमते इतीत्थं वोचतात् ॥

एष क्षेति रथवीतिर्मघवा गोमतीरनु । पर्वतेष्वपश्रितः ॥ १९ ॥

एषः । क्षेति । रथऽवीतिः । मघऽवा । गोऽमतीः । अनु । पर्वतेषु । अपऽश्रितः ॥ १९ ॥

कन्यां दत्त्वा कृतार्थं तं श्यावाश्वोऽथ वनं गतम् । रथवीतिं तपस्यन्तं संप्रेक्ष्यार्षेण चक्षुषा । रम्ये हिमवतः पृष्ठ एष क्षेतीति सोऽब्रवीत् ॥ ᵛएषः ᵛरथवीतिः ᵛमघवा धनवान् ᵛगोमतीरनु उदकवतीर्नदीरनु अनुसृत्य नदीनां तीरे ᵛक्षेति निवसति ᵛपर्वतेषु हिमवत्पर्वतप्रान्तेषु ᵛअपश्रितः आश्रितः ॥ ॥ २९ ॥

'ऋतेन ऋतम्' इति नवर्चं षष्ठं सूक्तमात्रेयस्य श्रुतविद आर्षं त्रैष्टुभं मैत्रावरुणम् । तथा चानुक्रम्यते—'ऋतेन नव श्रुतविन्मैत्रावरुणं वै तत्' इति । 'वै तत्' इत्युभयोः प्रयोगात्तुह्यादिपरिभाषयैतदादीन्येकादश सूक्तानि मित्रावरुणदेवत्यानि । विनियोगो लैङ्गिकः ॥

ऋतेन ऋतमपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचन्त्यश्वान् ।
दश शता सह तस्थुस्तदेकं देवानां श्रेष्ठं वपुषामपश्यम् ॥ १ ॥

ऋतेन । ऋतम् । अपिऽहितम् । ध्रुवम् । वाम् । सूर्यस्य । यत्र । विऽमुचन्ति । अश्वान् ।
दश । शता । सह । तस्थुः । तत् । एकम् । देवानाम् । श्रेष्ठम् । वपुषाम् । अपश्यम् ॥ १ ॥

ᵛसूर्यस्य ᵛऋतं सत्यभूतं मण्डलम् ᵛऋतेन उदकेन ᵛअपिहितम् आच्छादितं ᵛध्रुवं शाश्वतमपश्यमिति संबन्धः । यत्र ᵛवां युवाभ्यां स्थितिस्तत्[2] इत्यर्थः । सूर्यमण्डले मित्रावरुणयोः स्थितिः 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः' (ऋ. सं. १. ११५. १), 'उद्वां चक्षुर्वरुण सुप्रतीकं देवयोः' (ऋ. सं. ७. ६१. १) इति[3] 'चक्षुर्मित्रस्य वरुणस्य[3]' (ऋ. सं. ७. ६३. १) इत्यादिषु प्रसिद्धा । ᵛयत्र यस्मिन् मण्डले स्थितान् ᵛअश्वान् ᵛविमुचन्ति विमोचयन्ति स्तोतारः । मन्देहादिभिर्निरुद्धानित्यर्थः । अथवा शीघ्रधावनाय स्तुत्या प्रेरयन्ति । यस्मिंश्च मण्डले ᵛदश ᵛशता शतानि सहस्रसंख्याका रश्मयः ᵛतस्थुः तिष्ठन्ति तादृशं ᵛदेवानां ᵛवपुषां वपुष्मतां तेजोवतामग्न्यादीनां ᵛश्रेष्ठं प्रशस्यम् ॥ मत्वर्थलक्षणा अथवा व्यधिकरणषष्ठी ॥ देवानां वपुषां शरीराणां श्रेष्ठम् । मण्डलं

१. ख-च-झ-ण-न-भ-र-'हे ऊर्म्ये' नास्ति; ग-घ-ज-हे ऊर्म्ये रात्रिदेवि । २. ख-च-ण-न-स्थितम्; ग-घ-ज-स्थितिः; झ-भ-र-स्थितः तम; त-स्थितः; श-स्थितिस्तम् । ३. र-'इति...वरुणस्य' नास्ति ।

हि सूर्यस्य वपुःस्थानीयम् । ᵛतत् मण्डलम् ᵛअपश्यम् । अथवा वां युवयोर्मध्ये सूर्यस्य मण्डलमपश्यमिति व्याख्येयं ‘मैत्रं वा अहः’ ( तै. ब्रा. १. ७. १०. १ ) इति श्रुतेर्मित्रस्यैव सूर्यत्वादित्याशयेन ॥

तत्सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुह्रे ।
विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥ २ ॥

तत् । सु । वाम् । मित्रावरुणा । महिऽत्वम् । ईर्मा । तस्थुषीः । अहऽभिः । दुदुह्रे ।
विश्वाः । पिन्वथः । स्वसरस्य । धेनाः । अनु । वाम् । एकः । पविः । आ । ववर्त ॥ २ ॥

हे ᵛमित्रावरुणा ᵛवां युवयोः ᵛतत्[1] ᵛमहित्वं महत्त्वं ᵛसु सुष्टु अतिप्रशस्तमित्यर्थः । किं तदित्युच्यते । ᵛईर्मा सततगन्ता सर्वस्य प्रेरको वादित्यः ᵛअहभिः अहोभिर्वर्षर्तुसंबन्धिभिः ᵛतस्थुषीः स्थावरभूता अपः ᵛदुदुह्रे दुग्धे। किंच ᵛस्वसरस्य स्वयं सर्तुरादित्यस्य ᵛविश्वाः सर्वाः ᵛधेनाः लोकानां प्रीणयित्रीर्वृतीः ᵛपिन्वथः वर्धयथः । ᵛवां युवयोः ᵛएकः अप्रतियोगी ᵛपविः । पविरिति रथस्य नेमिः ‘पवी रथनेमिर्भवति’ ( निरु ५. ५ ) इति यास्कवचनात् । तथाप्यत्र लक्षितलक्षणया रथे वर्तते केवलचक्रस्यावर्तनायोगात् । युवयोरेको रथः ᵛअनु ᵛआ ᵛववर्त अनुक्रमेण परिभ्रमति ॥

अधारयतं पृथिवीमुत द्यां मित्रराजाना वरुणा महोभिः ।
वर्धयतमोषधीः पिन्वतं गा अव वृष्टिं सृजतं जीरदानू ॥ ३ ॥

अधारयतम् । पृथिवीम् । उत । द्याम् । मित्रऽराजाना । वरुणा । महःऽभिः ।
वर्धयतम् । ओषधीः । पिन्वतम् । गाः ।
अव । वृष्टिम् । सृजतम् । जीरदानू इति जीरऽदानू ॥ ३ ॥

हे ᵛमित्रराजाना । मित्रभूताः स्तोतारो राजानः स्वामिन ईश्वरा भवन्ति ययोः[2] सकाशात्[2] तौ मित्रराजानौ। हे ᵛवरुणा ॥ प्रतियोग्यपेक्षया द्विवचनम् । अत्र पादादित्वादाद्यं पदं न निहन्यते । वरुणेत्येतस्य तु ‘आमन्त्रितं पूर्वमविद्यमानवत्’ इति पूर्वस्याविद्यमानवत्त्वेनास्यैव पादादित्वादनिघातत्वं युक्तम्। नैवं भवति। ‘नामन्त्रिते समानाधिकरणे सामान्यवचनम्’ इति वरुणेत्येतस्यामन्त्रितसमानाधिकरणत्वादस्य च सामान्यवचनत्वादविद्यमानवत्त्वाभावेन पादादित्वाभावादुत्तरस्य निघातत्वं युक्तम् ॥ हे देवौ ᵛमहोभिः तेजोभिः स्वसामर्थ्यैः ᵛपृथिवीमुत अपि च ᵛद्याम् ᵛअधारयतम्। हे देवौ युवाम् ᵛओषधीः ᵛवर्धयतं वृष्टिप्रेरणेन। ᵛगाः ᵛपिन्वतं गवाश्वादीन् वर्धयतम् । तदर्थं ᵛवृष्टिम् ᵛअव ᵛसृजतम् अवाङ्मुखं प्रेरयतं हे ᵛजीरदानू क्षिप्रदानौ ॥

---

१. त–यत् । २. ख-च-ण–उपासकत्वात्; झ-भ-र–उपासकावशातौ; न–उपासका ययोः ।

आ वामश्वासः सुयुजो वहन्तु यतरश्मय उप यन्त्वर्वाक् ।
घृतस्य निर्णिगनु वर्तते वामुप सिन्धवः प्रदिवि क्षरन्ति ॥ ४ ॥

आ । वाम् । अश्वासः । सुऽयुजः । वहन्तु । यतऽरश्मयः । उप । यन्तु । अर्वाक् ।
घृतस्य । निःऽनिक् । अनु । वर्तते । वाम् । उप । सिन्धवः । प्रऽदिवि । क्षरन्ति ॥ ४ ॥

हे मित्रावरुणौ वां युवाम् अश्वासः अश्वाः सुयुजः सुष्ठु रथे युक्ताः सन्तः आ वहन्तु । यतरश्मयः सारथिनियतप्रग्रहास्ते अर्वाक् उप यन्तु । घृतस्य उदकस्य निर्णिक् रूपं वाम् अनु वर्तते अनुगच्छति । किंच प्रदिवि । पुराणनामैतत् । पुराणाः सिन्धवः उप क्षरन्ति उपगच्छन्ति युवयोरनुग्रहात् ॥

अनु श्रुताममतिं वर्धदुर्वीं बर्हिरिव यजुषा रक्षमाणा ।
नमस्वन्ता धृतदक्षाधि गर्ते मित्रासाथे वरुणेळास्वन्तः ॥ ५ ॥

अनु । श्रुताम् । अमतिम् । वर्धत् । उर्वीम् । बर्हिःऽइव । यजुषा । रक्षमाणा ।
नमस्वन्ता । धृतऽदक्षा । अधि । गर्ते । मित्र । आसाथे इति । वरुण । इळासु । अन्तरिति ॥५॥

श्रुतां विश्रुताम् अमतिम् । रूपनामैतत् । शरीरदीप्तिमित्यर्थः । ताम् अनु वर्धत् अनुवर्धयन्तौ । बर्हिः यज्ञः । सः इव स यथा यजुषा मन्त्रेण रक्ष्यते तद्वत् उर्वीं रक्षमाणा पालयन्तौ नमस्वन्ता अन्नवन्तौ हे धृतदक्षा आत्तबलौ हे मित्र हे वरुण हे मित्रावरुणौ युवामुक्तलक्षणौ सन्तौ इळासु यागभूमिषु अन्तः मध्ये गर्ते अधि रथे आसाथे उपविशथः । ' रथोऽपि गर्त उच्यते ' ( निरु. ३. ५ ) इति यास्कः । ' आ रोहथो वरुण मित्र गर्तम् ' ( ऋ. सं. ५. ६२. ८ ) इति ॥ ॥ ३० ॥

अक्रविहस्ता सुकृते परस्पा यं त्रासाथे वरुणेळास्वन्तः ।
राजाना क्षत्रमहृणीयमाना सहस्रस्थूणं बिभृथः सह द्वौ ॥ ६ ॥

अक्रविऽहस्ता । सुऽकृते । परःऽपा । यम् । त्रासाथे इति । वरुणा । इळासु । अन्तरिति ।
राजाना । क्षत्रम् । अहृणीयमाना । सहस्रऽस्थूणम् । बिभृथः । सह । द्वौ ॥ ६ ॥

अक्रविहस्ता अकृपणहस्तौ । दानशूरावित्यर्थः । कस्मै । सुकृते शोभनस्तुतिकर्त्रे परस्पा परस्तात् पातारौ रक्षितारौ हे वरुणा मित्रावरुणौ युवां यं यजमानम् इळासु यागभूमिषु अन्तः मध्ये त्रासाथे रक्षथः तस्मै सुकृते अक्रविहस्ता परस्पा च भवथ इति संबन्धः । किंच युवां राजाना राजमानौ अहृणीयमाना अक्रुध्यन्तौ द्वौ परस्परं सह साहित्येन क्षत्रं धनं सहस्रस्थूणम् अने-

काववष्टम्भकस्तम्भोपेतं सौधादिरूपं गृहं च बिभृथः धारयथः सुकृते यजमानाय । अथवा । क्षत्रं बलमपरिमिताभिः स्थूणाभिरुपेतं रथं चागमनार्थं[1] सह धारयथः ॥

हिरण्यनिर्णिगयो अस्य स्थूणा वि भ्राजते दिव्यश्वाजनीव ।
भद्रे क्षेत्रे निमिता तिल्विले वा सनेम मध्वो अधिगर्तस्य ॥ ७ ॥

हिरण्यऽनिर्निक् । अयः । अस्य । स्थूणा । वि । भ्राजते । दिवि । अश्वाजनीऽइव ।
भद्रे । क्षेत्रे । निऽमिता । तिल्विले । वा । सनेम । मध्वः । अधिऽगर्तस्य ॥ ७ ॥

अनयो रथः हिरण्यनिर्णिक् हिरण्यरूपः । निर्णिगिति रूपनाम । अस्य रथस्य स्थूणा कीलकादयः अयः । हिरण्यनामैतत् । अयोविकारा इत्यर्थः । अयोमया वा । तादृशो रथः दिवि अन्तरिक्षे वि भ्राजते । किमिव । अश्वाजनीव । अश्वा व्यापनशीला मेघाः । तानजति गच्छतीत्यश्वाजनी विद्युत् । सेव[2] दिवि भ्राजते । किंच भद्रे कल्याणे स्तुत्ये वा क्षेत्रे देवयजने तिल्विले वा ॥ ‘ तिल स्नेहने ’ । तिलुः स्निग्धा इला भूमिर्यस्य तत् क्षेत्रं तिल्विलं देवयजनम् । घृतसोमादिना स्निग्धे भद्रे च क्षेत्रे निमिता स्थूणा यूपयष्टिरवस्थितः । मध्वः मधुपूर्णं गर्तस्य[3] गर्तं रथं[3] सनेम संभजेम ॥ कर्मणि षष्ठ्यौ । अधीति पूरणः ॥ अथवा गर्तस्याधि रथस्योपरि मध्वो मधु सोमरसं सनेम स्थापयेमेत्यर्थः[4] ॥

हिरण्यरूपमुषसो व्युष्टावयःस्थूणमुदिता सूर्यस्य ।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च ॥ ८ ॥

हिरण्यऽरूपम् । उषसः । विऽउष्टौ । अयःऽस्थूणम् । उत्ऽइता । सूर्यस्य ।
आ । रोहथः । वरुण । मित्र । गर्तम् । अतः । चक्षाथे इति । अदितिम् । दितिम् । च ॥ ८ ॥

उषसो व्युष्टौ । प्रातःकाल इत्यर्थः । सूर्यस्य उदिता उदितावुदये । स एव कालः प्रकारान्तरेणोक्तः । तस्मिन् काले हिरण्यरूपम् अयःस्थूणम् अयोमयशङ्कुं[5] गर्तं रथं हे वरुण हे मित्र युवां गर्तम् आ रोहथः यज्ञं प्राप्तुम्[6] । अतः अस्माद्धेतोः अदितिम् अखण्डनीयां भूमिं दितिं खण्डितां प्रजादिकां च चक्षाथे पश्यथः ॥

दाक्षायणयज्ञे ‘ यद्बंहिष्ठम् ’ इति नवमी द्वितीयस्याममावास्यायां मैत्रावरुणस्य हविषो याज्या । सूत्रितं च—‘ आ नो मित्रावरुणा यद्बंहिष्ठं नातिविधे सुदानू ’ ( आश्व. श्रौ. २. १४ )

---

१. ख-च-ण-श—वागमनार्थम् । २. ख-च-झ-ण-त-न-भ-र—सा च; श—सा । ३. ख-च-ण—गर्त्यस्य रथम्; झ-भ—गर्तस्य वा रथम्; त—गर्तस्य गर्ते रथम्; न—गर्तस्य वा रथस्य । ४. ख-च-झ-ण-त-भ-र-श— स्थापयामेत्यर्थः; न—स्थापयमित्यर्थः । ५. न—अयोमयस्तभकम् । ६ ख-च-झ-ण-त-भ-र—प्राप्तः; न— प्राप्तैः; श— प्राप्नुतः ।

इति । मैत्रावरुणे पशौ हविष एषैव याज्या । सूत्रितं च—' यद्बंहिष्ठं नातिविधे सुदानू हिरण्यगर्भः समवर्तताग्रे ' ( आश्व. श्रौ. ३. ८ ) इति ॥

यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा ।

तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्याम ॥ ९ ॥

यत् । बंहिष्ठम् । न । अतिऽविधे । सुदानू इति सुऽदानू ।

अच्छिद्रम् । शर्म । भुवनस्य । गोपा ।

तेन । नः । मित्रावरुणौ । अविष्टम् । सिसासन्तः । जिगीवांसः । स्याम ॥ ९ ॥

हे ᵛसुदानू शोभनदानौ हे ᵛभुवनस्य ᵛगोपा युवां ᵛबंहिष्ठं बहुतमं ᵛयत् ᵛअच्छिद्रम् अनवच्छिन्नं ᵛशर्म सुखं गृहं वा ᵛनातिविधे अतिवेद्धुमशक्यं शर्मेति शर्मविशेषणम् ॥ ' व्यध ताडने ' इत्यस्मादत्युपपदे कृत्यार्थे केन् संप्रसारणं च ॥ तादृशं शर्म धारयथः[1] ᵛतेन शर्मणा ᵛनः अस्मान् ᵛअविष्टं रक्षतम् । हे ᵛमित्रावरुणौ ᵛसिषासन्तः धनानि संभक्तुमिच्छन्तो वयं ᵛजिगीवांसः शत्रूणां धनानि जेतुमिच्छन्तः ᵛस्याम भवेम[2] ॥ ॥ ३१ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन[3] विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये चतुर्थाष्टके तृतीयोऽध्यायः समाप्तः ॥

---

१. ख-झ-न-भ-र–धारयतः । २. ख-च-झ-ण-न-भ–भवाम । ३ झ–सायणाचार्येण ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अष्टकस्य चतुर्थस्य तृतीयो व्याकृतः स्फुटम् ।
अध्यायः सायणार्येण चतुर्थो व्याकरिष्यते ॥

'ऋतस्य गोपौ' इति सप्तर्चं सप्तमं सूक्तम् । अत्रेयमनुक्रमणिका—'ऋतस्य सप्तार्चनाना जागतम्' इति । आत्रेयोऽर्चनाना नाम ऋषिः । जगती छन्दः । तुह्यादिपरिभाषया मित्रावरुणौ देवता । विनियोगो लैङ्गिकः ॥

ऋतस्य गोपावधि तिष्ठथो रथं सत्यधर्माणा परमे व्योमनि ।
यमत्र मित्रावरुणावथो युवं तस्मै वृष्टिर्मधुमत्पिन्वते दिवः ॥ १ ॥

ऋतस्य । गोपौ । अधि । तिष्ठथः । रथम् । सत्यऽधर्माणा । परमे । विऽओमनि ।
यम् । अत्र । मित्रावरुणा । अवथः । युवम् । तस्मै । वृष्टिः । मधुऽमत् । पिन्वते । दिवः ॥१॥

हे ऋतस्य उदकस्य[1] गोपौ रक्षितारौ सत्यधर्माणा सत्यधर्माणौ[2] युवां रथम् अधि तिष्ठथः । आरोहथोऽस्मद्यज्ञमागमनार्थम् । कुत्र । परमे व्योमनि निरतिशये आकाशे । हे मित्रावरुणौ युवं युवाम् अत्र अस्मिन् यज्ञे यं यजमानम् अवथः रक्षथः तस्मै यजमानाय वृष्टिः पर्जन्यः मधुमत् उदकं दिवः द्युलोकात् पिन्वते सिञ्चति वर्धयति ॥

सम्राजावस्य भुवनस्य राजथो मित्रावरुणा विदथे स्वर्दृशा ।
वृष्टिं वां राधो अमृतत्वमीमहे द्यावापृथिवी वि चरन्ति तन्यवः ॥ २ ॥

सम्ऽराजौ । अस्य । भुवनस्य । राजथः । मित्रावरुणा । विदथे । स्वःऽदृशा ।
वृष्टिम् । वाम् । राधः । अमृतऽत्वम् । ईमहे । द्यावापृथिवी इति । वि । चरन्ति । तन्यवः ॥२॥

हे मित्रावरुणा[3] मित्रावरुणौ सम्राजौ सम्यक् राजमानौ युवाम् अस्य भुवनस्य राजथः ईशाथे । स्वर्दृशा स्वर्गस्य द्रष्टारौ युवां विदथे अस्मद्यज्ञे सम्राजाविति संबन्धः । वां युवां वृष्टिं राधः धनं वृष्ट्याख्यं धनम् अमृतत्वं स्वर्गं च ईमहे प्रार्थयामहे[4] । युवयोः तन्यवः विसृता रश्मयः द्यावापृथिवी वि चरन्ति विविधं[5] प्राप्नुवन्ति । अथवा वृष्टिं धनममृतत्वं चेमहे ॥

---

१. ख-झ-भ-उदकस्य वा; त-यज्ञस्योदकस्य वा ; न-उदकस्य यज्ञस्य वा । २. ख-च-झ-ण-त-न-भ-र-सत्यकर्माणौ । ३. च-झ-न-भ-र-श-'मित्रावरुणा' नास्ति । ४. ख-च-झ-ण-त-न-भ-र-प्रार्थयामि । ५. ख-च-झ-ण-न-भ-'विविधं' नास्ति ।

सम्राजा उग्रा वृषभा दिवस्पती पृथिव्या मित्रावरुणा विचर्षणी ।
चित्रेभिरभ्रैरुप तिष्ठथो रवं द्यां वर्षयथो असुरस्य मायया ॥ ३ ॥

सम्ऽराजौ । उग्रा । वृषभा । दिवः । पती इति ।
पृथिव्याः । मित्रावरुणा । विचर्षणी इति विऽचर्षणी ।
चित्रेभिः । अभ्रैः । उप । तिष्ठथः । रवम् । द्याम् । वर्षयथः । असुरस्य । मायया ॥ ३ ॥

"सम्राजौ"[1] सम्यक् राजमानौ "उग्रा उद्गूर्णबलौ "वृषभा वर्षितारौ "दिवः द्युलोकस्य "पती स्वामिनौ "पृथिव्याः च पती "विचर्षणी सर्वस्य द्रष्टारौ मित्रावरुणौ । एवं महानुभावौ "चित्रेभिः चायनीयैः "अभ्रैः मेघैः सह "रवं स्तोत्रम् "उप "तिष्ठथः । पश्चात् "द्यां च "वर्षयथः "असुरस्य उदकनिरसितुः पर्जन्यस्य "मायया प्रज्ञया सामर्थ्येन ॥

माया वां मित्रावरुणा दिवि श्रिता सूर्यो ज्योतिश्चरति चित्रमायुधम् ।
तमभ्रेण वृष्ट्या गूहथो दिवि पर्जन्य द्रप्सा मधुमन्त ईरते ॥ ४ ॥

माया । वाम् । मित्रावरुणा । दिवि । श्रिता । सूर्यः । ज्योतिः । चरति । चित्रम् । आयुधम् ।
तम् । अभ्रेण । वृष्ट्या । गूहथः । दिवि । पर्जन्य । द्रप्साः । मधुऽमन्तः । ईरते ॥ ४ ॥

हे "मित्रावरुणा "वां युवयोः "माया "दिवि "श्रिता आश्रिता । कैषा युवयोर्मायोच्यते । "सूर्यः सर्वस्य प्रेरकः "ज्योतिः दीप्यमानः "चित्रं चायनीयम् "आयुधम् उक्तलक्षणायुधरूपः "चरति परिभ्रमत्यन्तरिक्षे । शत्रुमारकत्वादायुधमुच्यते । "तं सूर्यम् "अभ्रेण मेघेन "वृष्ट्या "दिवि "गूहथः गोपायथः । हे "पर्जन्य देव[2] मित्रावरुणाभ्यां वृष्ट्यर्थं प्रेरितेन त्वया "मधुमन्तः "द्रप्साः "ईरते ईर्यन्ते । त्वत्सृष्टा वा गच्छन्ति ॥

रथं युञ्जते मरुतः शुभे सुखं शूरो न मित्रावरुणा गविष्टिषु ।
रजांसि चित्रा वि चरन्ति तन्यवो दिवः सम्राजा पयसा न उक्षतम् ॥५॥

रथम् । युञ्जते । मरुतः । शुभे । सुऽखम् । शूरः । न । मित्रावरुणा । गोऽइष्टिषु ।
रजांसि । चित्रा । वि । चरन्ति । तन्यवः । दिवः । सम्ऽराजा । पयसा । नः । उक्षतम् ॥५॥

हे मित्रावरुणौ युवयोरनुग्रहात् "मरुतः "शुभे उदकार्थं "सुखं शोभनाक्षद्वारं "रथं "युञ्जते अश्वैर्योजयन्ति । "शूरो "न शूर इव । स यथा युद्धार्थं रथं युनक्ति तद्वत् । "गविष्टिषु गवामुदकानाम्

---

१. ख-च-ज्ञ-ण-न-भ-र-श-सम्राजा । २. ख-च-ज्ञ-ण-न-भ-र-देव त्वया ।

एषणेषु निमित्तेषु ᵛचित्रा चायनीयानि ᵛरजांसि लोकान् ᵛतन्यवः ततास्ते मरुतः ᵛवि ᵛचरन्ति विविधं चरन्ति । तस्मात् तैः सहितौ हे ᵛसम्राजा युवां ᵛदिवः द्युलोकात् ᵛपयसा उदकेन ᵛनः अस्मान् ᵛउक्षतं सिञ्चतम् ॥

वाचं सु मित्रावरुणाविरावतीं पर्जन्यश्चित्रां वदति त्विषीमतीम् ।
अभ्रा वसत मरुतः सु मायया द्यां वर्षयतमरुणामरेपसम् ॥ ६ ॥

वाचम् । सु । मित्रावरुणौ । इराऽवतीम् । पर्जन्यः । चित्राम् । वदति । त्विषिऽमतीम् ।
अभ्रा । वसत । मरुतः । सु । मायया । द्याम् । वर्षयतम् । अरुणाम् । अरेपसम् ॥ ६ ॥

हे ᵛमित्रावरुणौ युवयोरनुग्रहात् ᵛपर्जन्यः मेघः ᵛसु सुष्टु ᵛइरावतीम् अन्नवतीं अन्नसाधिकां ᵛचित्रां चायनीयां ᵛत्विषीमतीं दीप्तिमतीं ᵛवाचं गर्जनशब्दं ᵛवदति । शब्दयति वृष्टयर्थम् । ᵛमरुतः च ᵛअभ्रा अभ्राणि मेघान् ᵛसु सुष्टु ᵛवसत आच्छादयन्ति ᵛमायया स्वप्रज्ञया । युवां च पर्जन्येन मरुद्भिश्च सह ᵛअरुणाम् अरुणवर्णाम् ᵛअरेपसम् अपापां वृष्टयविघातिनीं ᵛद्यां ᵛवर्षयतम् ॥

धर्मणा मित्रावरुणा विपश्चिता व्रता रक्षेथे असुरस्य मायया ।
ऋतेन विश्वं भुवनं वि राजथः सूर्यमा धत्थो दिवि चित्र्यं रथम् ॥ ७ ॥

धर्मणा । मित्रावरुणा । विपःऽचिता । व्रता । रक्षेथे इति । असुरस्य । मायया ।
ऋतेन । विश्वम् । भुवनम् । वि । राजथः ।
सूर्यम् । आ । धत्थः । दिवि । चित्र्यम् । रथम् ॥ ७ ॥

हे ᵛमित्रावरुणा[1] ᵛविपश्चिता[2] प्राज्ञौ युवां ᵛधर्मणा जगद्धारकेण वृष्टयादिलक्षणेन कर्मणा ᵛव्रता यज्ञादिकर्माणि ᵛरक्षेथे पालयथः[2] । ᵛअसुरस्य मेघानां निरसितुः पर्जन्यस्य ᵛमायया प्रज्ञया च ᵛऋतेन उदकेन यज्ञेन वा निमित्तेन ᵛविश्वं ᵛभुवनं सर्वं भूतजातं ᵛवि ᵛराजथः विदीपयथः[3] इत्यर्थः । ᵛसूर्यमा सूर्यं च ᵛचित्र्यं पूज्यं ᵛरथं रंहणस्वभावं ᵛदिवि द्युलोके ᵛधत्थः धारयथो जगदुपकारार्थम् ॥ ॥ १ ॥

'वरुणं वः' इति सप्तर्चमष्टमं सूक्तमर्चनानस आर्षं मैत्रावरुणम् । पङ्क्त्यन्तपरिभाषयानुष्टुभम् । अन्त्या पङ्क्तिः । 'वरुणं पङ्क्त्यन्तं तु' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

---

१. ख-च-झ-ण-न-भ-मित्रावरुणौ । २. ख-च-झ-ण-त-न-भ-र-युवां धर्मणा जगद्धारकेण विपश्चिता स्तुत्येनेत्यर्थः । व्रता व्रतेन कर्मणा । अथवा विपश्चिता । स्तोतृनामैतत् । यजमानेन वृष्ट्या जगद्रक्षणस्य यजमानोऽपि कारणम् । तत्कृतयाहुत्या ( तत्कृतया स्तुत्या-ख-च-ण ) वृष्टयुत्पत्तेः व्रता व्रतेन युवयोः कर्मणा । ३. ख-च-झ-ण-न-भ-र-रक्षेथे ।

वरु॑णं वो रि॒शाद॑समृ॒चा मि॒त्रं ह॑वामहे ।
परि॑ व्र॒जेव॑ बा॒ह्वोर्ज॑ग॒न्वांसा॒ स्व॑र्णरम् ॥ १ ॥

वरु॑णम् । व॒ः । रि॒शाद॑सम् । ऋ॒चा । मि॒त्रम् । ह॒वा॒म॒हे॒ ।
परि॑ । व्र॒जाऽइ॑व । बा॒ह्वोः । ज॒ग॒न्वांसा॑ । स्वः॑ऽनरम् ॥ १ ॥

ᵛवः युवयोर्मध्ये ॥ व्यत्ययेन बहुवचनम् ॥ ᵛरिशादसम् । रिशन्ति हिंसन्तीति रिशाः शत्रवः । तेषां प्रेरकं ᵛस्वर्णरं स्वर्गस्य नेतारम् । एतद्व्यवहितमप्युभयत्र संबध्यते । एवंविधं ᵛवरुणम् उक्तलक्षणं ᵛमित्रं च ᵛऋचा मन्त्रेण ᵛहवामहे आह्वयामः । अथ अवयुत्योच्यते। ᵛव्रजेव गोयूथानीव ᵛबाह्वोः बलेन ᵛपरि ᵛजगन्वांसा परिगच्छन्तौ ॥

ता बा॒हवा॑ सु॒चे॒तुना॒ प्र य॑न्तमस्मा॒ अर्च॑ते ।
शेवं॒ हि जा॒र्यं॑ वां॒ विश्वा॑सु क्षासु जोगु॑वे ॥ २ ॥

ता । बा॒हवा॑ । सु॒ऽचे॒तुना॑ । प्र । य॒न्त॒म् । अ॒स्मै॒ । अर्च॑ते ।
शेव॑म् । हि । जा॒र्य॑म् । वा॒म् । विश्वा॑सु । क्षासु॑ । जोगु॑वे ॥ २ ॥

ᵛता तौ युवां ᵛबाहवा बाहुना ᵛसुचेतुना सुष्ठु प्रज्ञात्रा । प्रयासभूयस्त्वं जानता इत्यर्थः । यद्यपि आत्मैव ज्ञाता न हस्तः तथापि तद्धर्ममत्रारोप्य स्तूयते । यद्वा एतत् तौ इत्यस्य विशेषणम् । सुज्ञानाविस्यर्थः । शोभनहस्तेन ᵛअस्मै ᵛअर्चते स्तुवते मह्यं ᵛप्र ᵛयन्तम् अभिमतं सुखं प्रगमयतम्[1]॥ अन्तर्भावितण्यर्थो द्रष्टव्यः । यमिर्दानकर्मा वा द्रष्टव्यः ॥ प्रयच्छतमित्यर्थः । ᵛजार्यं स्तुत्यं ᵛशेवं सुखं ᵛवां युवयोः संबन्धि युवाभ्यां कृतं वा ᵛविश्वासु सर्वासु ᵛक्षासु भूमिषु ᵛजोगुवे गच्छति व्याप्नोति । ' अवते गवते ' ( नि. २. १४. २८ ) इति गतिकर्मसु पाठात् अयमपि गतिकर्मा । अथवा जोगुवे सर्वत्र शब्दयामीत्यर्थः ॥

यन्नू॒नम॒श्यां गतिं॑ मि॒त्रस्य॑ यायां प॒था ।
अस्य॑ प्रि॒यस्य॒ शर्म॒ण्यहिं॑सानस्य सश्चिरे ॥ ३ ॥

यत् । नू॒नम् । अ॒श्याम् । गति॑म् । मि॒त्रस्य॑ । या॒या॒म् । प॒था ।
अस्य॑ । प्रि॒यस्य॑ । शर्म॑णि । अहिं॑सानस्य । स॒श्चि॒रे॒ ॥ ३ ॥

ᵛयत् यदा ᵛनूनम् इदानीं ᵛगतिं गमनम् ᵛअश्यां प्राप्नुयाम् ॥ यद्योगादनिघातः ॥ तदा ᵛमित्रस्य मित्रभूतस्य ᵛपथा मार्गेण मित्रप्रापकेण मार्गेण ᵛयायां गच्छेयम् । ' मित्रो नयतु विद्वान् '

---

१. ख-च-झ-ण-न-भ–प्रगमयति तम्; र–गमयति तम् ।

( ऋ. सं. १. ९०. १ ) इत्यादिषु मित्रस्येष्टदेशगमयितृत्वं प्रसिद्धम्। न केवलमहमेक एव गन्ता किंतु सर्वेऽपि तथागमन्नित्याह। ᵛअस्य ᵛप्रियस्य। मित्रस्येत्यर्थः। ᵛअहिंसानस्य अहिंसतः। यतोऽयमहन्ता अतः प्रिय इत्यर्थः। तस्य ᵛशर्मणि सुखे गृहे स्थाने वा ᵛसश्चिरे संगताः॥

युवाभ्यां मित्रावरुणोपमं धेयामृचा।
यद्ध क्षये मघोनां स्तोतॄणां च स्पूर्धसे॥ ४॥

युवाभ्याम्। मित्रावरुणा। उपऽमम्। धेयाम्। ऋचा।
यत्। ह। क्षये। मघोनाम्। स्तोतॄणाम्। च। स्पूर्धसे॥ ४॥

हे ᵛमित्रावरुणा ᵛयुवाभ्यां दातव्यम् ᵛउपमम् उप समीपे मीयमानं धनम् ᵛऋचा स्तुत्या साधनेन ᵛधेयां धारयामि। ᵛयद्ध यत् खलु युवाभ्यां सकाशादाप्तं धनं ᵛमघोनां धनवतामदातॄणां ᵛस्तोतॄणां ᵛच ᵛक्षये गृहे ᵛस्पूर्धसे स्पर्धनाय भवति। धनिकानां स्तोतॄणां च धनाधिक्यविषये स्पर्धा भवतीत्यर्थः। अपरिमितं धनं भवतीति भावः॥

आ नो मित्र सुदीतिभिर्वरुणश्च सधस्थ आ।
स्वे क्षये मघोनां सखीनां च वृधसे॥ ५॥

आ। नः। मित्र। सुदीतिऽभिः। वरुणः। च। सधऽस्थे। आ।
स्वे। क्षये। मघोनाम्। सखीनाम्। च। वृधसे॥ ५॥

हे ᵛमित्र त्वं च ᵛवरुणश्च ᵛसुदीतिभिः सुदीप्तियुक्तौ युवां ᵛनः अस्माकं[1] ᵛसधस्थे सहस्थाने यज्ञे ᵛआ गच्छतम्। द्वितीय आकारोऽनर्थक आदरार्थो वा। किमर्थमित्युच्यते। ᵛमघोनां धनवतां हविष्मतां ᵛसखीनां ᵛच युवयोः सखिभूतानामस्माकं ᵛक्षये गृहे ᵛस्वे स्वकीये ᵛवृधसे वर्धनाय।

युवं नो येषु वरुण क्षत्रं बृहच्च बिभृथः।
उरु णो वाजसातये कृतं राये स्वस्तये॥ ६॥

युवम्। नः। येषु। वरुणा। क्षत्रम्। बृहत्। च। बिभृथः।
उरु। नः। वाजऽसातये। कृतम्। राये। स्वस्तये॥ ६॥

हे ᵛवरुणा मित्रावरुणौ ᵛयुवं युवां ᵛनः अस्माकं ᵛक्षत्रं बलं ᵛबृहत् ब्रह्म परिवृढमन्नं ᵛच ᵛयेषु स्तोत्रेषु निमित्तेषु ᵛबिभृथः धारयथः युवाभ्यां धृतम् अन्नं[2] च ᵛनः अस्मभ्यं ᵛवाजसातये अन्नस्य लाभाय यज्ञाय वा ᵛराये धनाय ᵛस्वस्तये क्षेमाय च ᵛउरु विस्तीर्णं ᵛकृतं कुरुतम्॥

---

१. श–अस्मभ्यम्। २. ख-च-झ-ण-न-भ–धनमन्नम्।

उच्छन्त्यां मे यजता देवक्षत्रे रुशद्गवि ।
सुतं सोमं न हस्तिभिरा पड्भिर्धावतं नरा बिभ्रतावर्चनानसम् ॥ ७ ॥

उच्छन्त्याम् । मे । यजता । देवऽक्षत्रे । रुशत्ऽगवि ।
सुतम् । सोमम् । न । हस्तिऽभिः । आ । पट्ऽभिः । धावतम् । नरा ।
बिभ्रतौ । अर्चनानसम् ॥ ७ ॥

उच्छन्त्याम् उषसि । मे सोममिति संबन्धः । यजता यष्टव्यौ रुशद्गवि रोचमानरश्मौ प्रातःसवने देवक्षत्रे देवानां क्षत्रं बलं यस्मिन् यज्ञे[1] तद्देवक्षत्रम् । तस्मिन् मे मदीयं सुतम् अभिषुतं सोमं न । नेति संप्रत्यर्थे । इदानीं हस्तिभिः हस्तवद्भिः ॥ हन्तेर्गतिकर्मणो हस्तशब्दः ॥ गमनसाधनपादवद्भिरित्यर्थः । पड्भिः[2] पादवद्भिश्च पादचतुष्टयोपेतैरश्वैः आ[3] धावतम् आगच्छतं[3] नरा हे नेतारौ मित्रावरुणौ ॥ अर्चनानसं[4] बिभ्रतौ अर्चनानसमृषिं धारयन्तौ युवाम्[4] ॥ ॥ २ ॥

' यश्चिकेत ' इति षड़ृचं नवमं सूक्तं रातहव्यस्यात्रेयस्यार्षं मैत्रावरुणम् । ' यश्चिकेत षड्रातहव्यः ' इत्यनुक्रमणिका । ' पङ्क्त्यन्तं तु ' इत्युक्तत्वात् पङ्क्त्यन्तपरिभाषयानुष्टुभम् । अन्त्या पङ्क्तिः । विनियोगो लैङ्गिकः ॥

यश्चिकेत स सुक्रतुर्देवत्रा स ब्रवीतु नः ।
वरुणो यस्य दर्शतो मित्रो वा वनते गिरः ॥ १ ॥

यः । चिकेत । सः । सुऽक्रतुः । देवऽत्रा । सः । ब्रवीतु । नः ।
वरुणः । यस्य । दर्शतः । मित्रः । वा । वनते । गिरः ॥ १ ॥

यः स्तोता चिकेत जानाति स्तुतिं युवयोः स सुक्रतुः स एव शोभनकर्मा देवत्रा देवेषु स्तोतृमध्ये । यद्वा[5] देवेषु मध्ये[5] । युवयोरेव स्तुतिं यश्चिकेत स सुक्रतुरिति । सः सुकर्मा नः अस्माकं ब्रवीतु स्तुतिं[6] परम्[6] उपदिशतु । यश्च दर्शतः दर्शनीयः वरुणः दर्शनीयः मित्रो वा मित्रश्च । वाशब्दश्चार्थे । गिरः अस्मदीयाः स्तुतीः वनते संभजते ॥

ता हि श्रेष्ठवर्चसा राजाना दीर्घश्रुत्तमा ।
ता सत्पती ऋतावृध ऋतावाना जनेजने ॥ २ ॥

ता । हि । श्रेष्ठऽवर्चसा । राजाना । दीर्घश्रुत्ऽतमा ।
ता । सत्पती इति सत्ऽपती । ऋतऽवृधा । ऋतऽवाना । जनेऽजने ॥ २ ॥

---

१. ख-च-झ-ण-त-न-भ-र- गृहे । २. ख-च-झ-ण-त-न-भ-र-पड्भिरा । ३. ख-च-झ-ण-त-न-भ-र-धावतं गच्छतम् । ४. ख-च-झ-ण-न-भ-र- ' अर्चनानसं...युवां ' नास्ति । ५. ख-ग-घ-च-ज-ण-त-न-भ-श- ' यद्वा...मध्ये ' नास्ति । ६. ख-च-झ-ण-न-भ-र-स्तुतिपरम् ।

ᵛता ᵛहि तौ खलु मित्रावरुणौ ᵛश्रेष्ठवर्चसा प्रशस्ततेजस्कौ ᵛराजाना ईश्वरौ ᵛदीर्घश्रुत्तमा दूरदेशादाह्वानश्रोतृतमौ[८] । ᵛता तौ ᵛसत्पती सतां यजमानानां स्वामिनौ ᵛऋतावृधा यज्ञस्योदकस्य वा वर्धयितारौ ᵛजनेजने सर्वेषु स्तोतृषु निमित्तेषु ᵛऋतावाना गमनवन्तौ ॥

**ता वा॑मिया॒नोऽव॑से॒ पूर्वा॒ उप॑ ब्रुवे॒ सचा॑ ।**

**स्वश्वा॑सः॒ सु चे॒तुना॒ वाजाँ॑ अ॒भि प्र दा॒वने॑ ॥ ३ ॥**

ता । वा॒म् । इ॒या॒नः । अव॑से । पूर्वौ॑ । उप॑ । ब्रु॒वे॒ । सचा॑ ।

सु॒ऽअश्वा॑सः । सु । चे॒तुना॑ । वाजा॑न् । अ॒भि । प्र । दा॒वने॑ ॥ ३ ॥

ᵛता तौ ᵛपूर्वौ पुरातनौ ᵛवां युवाम् ᵛइयानः गच्छन् ᵛअवसे रक्षणाय ᵛसचा सह ᵛउप ᵛब्रुवे उपेत्य स्तौमि । ᵛस्वश्वासः स्वश्वा वयमात्रेयाः । ᵛसुचेतुना शोभनप्रज्ञानौ युवां ᵛवाजानभि अन्नान्यभिलक्ष्य ᵛप्र प्रकर्षेण ᵛदावने दानाय स्तुम इति शेषः । यद्वा । स्वश्वासः स्वश्वौ ॥ द्वितीया-द्विवचनस्य जसादेशः ॥ उप ब्रुव इति संबन्धः ॥

**मि॒त्रो अं॒हो॑श्चि॒दादु॒रु क्षया॑य गा॒तुं व॑नते ।**

**मि॒त्रस्य॒ हि प्र॒तूर्व॑तः सुम॒तिरस्ति॑ विध॒तः ॥ ४ ॥**

मि॒त्रः । अं॒होः । चि॒त् । आत् । उ॒रु । क्षया॑य । गा॒तुम् । व॒न॒ते॒ ।

मि॒त्रस्य॑ । हि । प्र॒ऽतूर्व॑तः । सु॒ऽम॒तिः । अस्ति॑ । वि॒ध॒तः ॥ ४ ॥

ᵛमित्रः देवः ᵛअंहोश्चित् अंहस्वतोऽपि स्तोतुः ᵛआत् अनन्तरमेव ᵛउरु उरवे ᵛक्षयाय गृहाय निवासाय वा ᵛगातुम् उपायं ᵛवनते प्रयच्छति । ᵛमित्रस्य ᵛहि मित्रस्य खलु देवस्य ᵛसुमतिः शोभनबुद्धिः ᵛप्रतूर्वतः प्रकर्षेण हिंसतोऽपि ᵛविधतः परिचरतः शुश्रूषकस्य ᵛअस्ति हि भवति खलु ॥

**व॒यं मि॒त्रस्याव॑सि॒ स्याम॑ स॒प्रथ॑स्तमे ।**

**अ॒ने॒ह॒स॒स्त्वोत॑यः स॒त्रा वरु॑णशेषसः ॥ ५ ॥**

व॒यम् । मि॒त्रस्य॑ । अव॑सि । स्याम॑ । स॒प्रथः॑ऽतमे ।

अ॒ने॒ह॒सः॑ । त्वाऽऊ॑तयः । स॒त्रा । वरु॑णऽशेषसः ॥ ५ ॥

ᵛवयं यजमानाः ᵛमित्रस्य दुःखनिवारकस्य देवस्य ᵛसप्रथस्तमे सर्वतः पृथुतमे ᵛअवसि रक्षणे वयं ᵛस्याम भवेम । किंच ᵛअनेहसः अपापाः ᵛत्वोतयः त्वया रक्षिताः ᵛवरुणशेषसः । शेष इत्य-पत्यनाम । वारकाः पुत्रा येषां ते । तादृशाः ᵛसत्रा वयं सर्वे सहैव भवेम ॥

---

८. ख-च-झ-ण-त-भ-र–दूरदेशाह्वान°; न–दूरदेशायाह्वान° ।

युवं मित्रेमं जनं यतथः सं च नयथः ।
मा मघोनः परि ख्यतं मो अस्माकमृषीणां गोपीथे न उरुष्यतम् ॥ ६ ॥

युवम् । मित्रा । इमम् । जनम् । यतथः । सम् । च । नयथः ।
मा । मघोनः । परि । ख्यतम् । मो इति । अस्माकम् । ऋषीणाम् ।
गोऽपीथे । नः । उरुष्यतम् ॥ ६ ॥

हे मित्रा मित्रावरुणौ युवं युवाम् इमं जनं स्तोतारं मां प्रति यतथः गच्छथः । आगत्य च सं च नयथः संनयथश्च । कामान् प्रापयथः । यद्वा । यतथ इत्यन्तर्णीतण्यर्थोऽयम् । अहनि यतथः व्यापारेषु गमयथः । रात्रौ च सं नयथः । निर्व्यापारं कारयथः । मघोनः हविर्लक्षणान्नवतोऽस्मान् मा परि ख्यतं मा परित्यजतम् । मो मैव ऋषीणाम् अस्माकं पुत्रानपि परि ख्यतम् । किंतु गोपीथे । गौः सोमरसः । तस्य पानं यस्मिन् स गोपीथो यज्ञः । तस्मिन् नः उरुष्यतं रक्षतम् ॥ ॥ ३ ॥

' आ चिकितान ' इति षड्टचं दशमं सूक्तं रातहव्यस्यार्षम्[1] आनुष्टुभं मैत्रावरुणम् । अत्रानुक्रमणिका—' आ चिकितानानुष्टुभं तु ' इति । आद्यस्तृचो दशरात्रे चतुर्थेऽहनि प्रउगशस्त्रे मैत्रावरुणस्य । सूत्रितं च—' आ चिकितान सुक्रतू त्यमु वो अप्रहणम् ' ( आश्व. श्रौ. ७. ११ ) इति ॥

आ चिकितान सुक्रतू देवौ मर्त रिशादसा ।
वरुणाय ऋतपेशसे दधीत प्रयसे महे ॥ १ ॥

आ । चिकितान । सुक्रतू इति सुऽक्रतू । देवौ । मर्त । रिशादसा ।
वरुणाय । ऋतऽपेशसे । दधीत । प्रयसे । महे ॥ १ ॥

हे चिकितान जानन् स्तुतिं[2] हे[2] मर्त मनुष्य[3] रातहव्य त्वमिति तस्यैव संबोधनम् । सुक्रतू शोभनकर्माणौ रिशादसा हिंसकानां हिंसकौ देवौ आ आकारयेति शेषः । आहूय च ऋतपेशसे । पेश इति रूपनाम । ऋतमुदकम् । उदकमेव[4] रूपं[4] यस्य तादृशाय वरुणाय[5] प्रयसे ॥ मत्वर्थो लुप्यते ॥ हविर्लक्षणान्नवते महे महते पूज्याय दधीत दद्याः । हविरिति शेषः । द्वितीयार्थे वा चतुर्थी । महद्धविर्दधीत । महतोऽन्नस्य लाभायेति वा योज्यम् ॥

---

१ ख-च-झ-ण-त-भ-र-श्यावाश्वस्यार्षम् । २ झ-त-न-र-स्तुतिज्ञ । ३ झ-न-र-' मनुष्य ' नास्ति । ४ न-मेघरूपम् । ५. ख-च-झ-ण-त-न-भ-र-श- ' वरुणाय ' नास्ति ।

ता हि क्षत्रमविंह्रुतं सम्यगसुर्यं१माशाते ।
अधं व्रतेव मानुंषं स्वर्१ण धायि दर्शतम् ॥ २ ॥

ता । हि । क्षत्रम् । अविंऽह्रुतम् । सम्यक् । असुर्यंम् । आशाते इति ।
अधं । व्रताऽइंव । मानुंषम् । स्वंः । न । धायि । दर्शतम् ॥ २ ॥

^ता ^हि । हीति हेतौ । यस्मात् ता तौ ^क्षत्रं बलम् ^अविह्रुतम् अहिंस्यम् ^असुर्यम् असुरविघाति[1] महद्बलं ^सम्यक् ^आशाते व्याप्नुतः ^अध अतो हेतोः ^मानुषं मनुष्येषु प्रवृत्तं ^व्रतेव कर्मेव तद्यथा मनुष्येषु नियतं ^स्वर्ण सूर्य इव स यथा दिवि दृश्यते तद्वत् ^दर्शतं दर्शनीयं बलं ^धायि यज्ञे[2] निहितम् ॥

ता वामेषे रथानामुर्वीं गव्यूंतिमेषाम् ।
रातहंव्यस्य सुष्टुतिं दधृक्स्तोमैर्मनामहे ॥ ३ ॥

ता । वाम् । एषे । रथानाम् । उर्वीम् । गव्यूंतिम् । एषाम् ।
रातऽहंव्यस्य । सुऽस्तुतिम् । दधृक् । स्तोमैः । मनामहे ॥ ३ ॥

हे मित्रावरुणौ ^ता तौ प्रसिद्धौ ^वां युवां ^रथानाम् अस्मदीयानाम् ^एषां पुरतो वर्तमानानाम् ^उर्वीं प्रभूतां ^गव्यूतिम् अतिविस्तृतं मार्गम् ^एषे गन्तुम् । मार्गरक्षणायेत्यर्थः ॥ तुमर्थेऽसेन्प्रत्ययः ॥ तदर्थं वां ^मनामहे स्तुमः ^रातहव्यस्य ऋषेः रातहव्यसंबन्धिभिः[3] ^सुष्टुतिं सुष्टुतिभिः शोभनस्तुतिसाधनैः ^स्तोमैः ^दधृक् धर्षकौ[4] युवाम् ॥

अधा हि काव्या युवं दक्षस्य पूर्भिरद्भुता ।
नि केतुना जनांनां चिकेथे पूतदक्षसा ॥ ४ ॥

अधं । हि । काव्या । युवम् । दक्षस्य । पूःऽभिः । अद्भुता ।
नि । केतुना । जनांनाम् । चिकेथे इति । पूतऽदक्षसा ॥ ४ ॥

^अध अपि च । ^हि[5] प्रसिद्धौ[5] । ^काव्या स्तुत्यौ ^युवं युवां ^दक्षस्य प्रवृद्धस्य मम ^पूर्भिः पूरकैः स्तवैः हे ^अद्भुता महान्तावाश्चर्यभूतौ सन्तौ ^केतुना प्रज्ञानेनानुकूलेन मनसा ^जनानां यजमानानामित्यर्थः । स्तोत्रं ^नि ^चिकेथे नितरां[6] जानीथः । हे ^पूतदक्षसा शुद्धबलौ युवाम् ॥

---

१. ख-च-झ-ण-त-न-भ-र–असुरविघाति मत् (महत्-न) हन्तुमित्यर्थः; ग-घ-ज– 'असुरविघाति' नास्ति ; श–अनुघातिमहन् हे । २. ख-च-झ-ण-न-भ-र– 'यज्ञे' नास्ति । ३. ख-च-झ-ण-त-न-भ-र-श– रातहव्यसंबन्धिनः । ४. ख-च-ण–धारकौ ; झ-न-भ– धर्मकौ ; श–वर्षकौ । ५. ख-च-झ-ण-न-भ-र– 'हि प्रसिद्धौ' नास्ति । ६. ख-च-झ-ण-त-न-भ-र– 'नितरां' नास्ति ।

तदृतं पृथिवि बृहच्छ्रवएष ऋषीणाम् ।
ज्रयसानावरं पृथ्वति क्षरन्ति यामभिः ॥ ५ ॥

तत् । ऋतम् । पृथिवि । बृहत् । श्रवःऽएषे । ऋषीणाम् ।
ज्रयसानौ । अरम् । पृथु । अति । क्षरन्ति । यामऽभिः ॥ ५ ॥

हे Vपृथिवि देवि त्वयि Vतत् सर्वैरध्यर्थमानत्वेन प्रसिद्धं Vबृहत् प्रभूतम् Vऋतम् उदकम् Vऋषीणां स्तोतॄणामस्माकं Vश्रवएषे अन्नस्यैषणे सति Vज्रयसानौ गच्छन्तौ ॥ ' छन्दस्यसानच् शुजॄभ्याम् ' ( उ. सू. २. २४३ ) इत्यसानच् ज्रयतेरपि[1] भवति[1] । ' चितः ' इत्यन्तोदात्तः ॥ Vअरम् अलमत्यर्थं Vपृथु यथा भवति तथा Vयामभिः गमनैः Vअति Vक्षरन्ति अत्यर्थं वर्षतः ॥ व्यत्ययेन बहुवचनम् ॥

आ यद्वामीयचक्षसा मित्रा वयं च सूरयः ।
व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ॥ ६ ॥

आ । यत् । वाम् । ईयऽचक्षसा । मित्रा । वयम् । च । सूरयः ।
व्यचिष्ठे । बहुऽपाय्ये । यतेमहि । स्वऽराज्ये ॥ ६ ॥

हे Vईयचक्षसा व्याप्तदर्शनौ हे Vमित्रा मित्रावरुणौ Vवां युवां Vयत्[2] ये[2] Vवयं Vच Vसूरयः स्तोतारः Vआ आह्वयामः । Vव्यचिष्ठे अत्यन्तविस्तृते Vबहुपाय्ये बहुभिर्गन्तव्ये बहुभी रक्षितव्ये वा Vस्वराज्ये स्वराट्त्वाय एवंविधराज्यार्थं Vयतेमहि गच्छेम ॥ ॥ ४ ॥

' बळित्था देव ' इति पञ्चर्चमेकादशं सूक्तम् । अत्रेयमनुक्रमणिका—' बळित्था पञ्च यजतः ' इति । यजतो नामात्रेय ऋषिः । ' आनुष्टुभं तु ' इत्युक्तत्वादिदमप्यानुष्टुभम् । मित्रावरुणौ देवता । विनियोगो लैङ्गिकः ॥

बळित्था देव निष्कृतमादित्या यजतं बृहत् ।
वरुण मित्रार्यमन्वर्षिष्ठं क्षत्रमाशाथे ॥ १ ॥

बट् । इत्था । देवा । निःऽकृतम् । आदित्या । यजतम् । बृहत् ।
वरुण । मित्र । अर्यमन् । वर्षिष्ठम् । क्षत्रम् । आशाथे इति ॥ १ ॥

---

१. ख-च-झ-ण-न-भ-र- ' ज्रयतेरपि भवति ' नास्ति । २. ख-च-झ-ण-त-न-भ-र- ' यत् ये ' नास्ति ; ग-घ-ज-तत् ये ; श- पतये ।

हे ᵛदेवा[1] द्योतमानौ हे ᵛआदित्या अदितेः पुत्रौ हे ᵛवरुण हे ᵛअर्यमन् अरीणां नियमितः ᵛमित्र देव युवां ᵛवट् सत्यं ᵛनिष्कृतम्[2] अबाध्यम् ᵛइत्था इत्थम् इदानीं वर्तमानप्रकारेण ᵛयजतं यष्टव्यं ᵛबृहत् अतिप्रवृद्धं ᵛवर्षिष्ठं प्रवृद्धतमं ᵛक्षत्रं बलम् ᵛआशाथे अश्नुवाथे[3] । यद्वा अर्यमा पृथगेव निर्दिष्टव्यः । द्विवचनं बहुवचनीकर्तव्यम्[4] ॥

आ यद्योनिं हिरण्ययं वरुण मित्र सदथः ।
धर्तारा चर्षणीनां यन्तं सुम्नं रिशादसा ॥ २ ॥

आ । यत् । योनिम् । हिरण्ययम् । वरुण । मित्र । सदथः ।
धर्तारा । चर्षणीनाम् । यन्तम् । सुम्नम् । रिशादसा ॥ २ ॥

ᵛयत् यस्मात् ᵛहिरण्ययं हितरमणीयं ᵛयोनिं यज्ञभूमिं हे ᵛवरुण हे ᵛमित्र ᵛआ ᵛसदथः आगच्छथः तस्मात् ᵛचर्षणीनां मनुष्याणां ᵛधर्तारा धारकौ च हे ᵛरिशादसा हिंसकानां क्षेप्तारौ युवाम् अस्मभ्यं ᵛसुम्नं सुखं ᵛयन्तं कुरुतमित्यर्थः ॥

विश्वे हि विश्ववेदसो वरुणो मित्रो अर्यमा ।
व्रता पदेव सश्चिरे पान्ति मर्त्यं रिषः ॥ ३ ॥

विश्वे । हि । विश्वऽवेदसः । वरुणः । मित्रः । अर्यमा ।
व्रता । पदाऽइव । सश्चिरे । पान्ति । मर्त्यम् । रिषः ॥ ३ ॥

ᵛविश्वे ᵛहि सर्वेऽपि । हीति चार्थे । ᵛविश्ववेदसः सर्वविदः सर्वधना वा ᵛवरुणो ᵛमित्रो ᵛअर्यमा चैते त्रयः सर्वे ᵛव्रता अस्मदीयानि कर्माणि ᵛपदेव पदानीव[5] स्थानानीव ᵛसश्चिरे संगता भवन्ति । आगत्य च मां ᵛमर्त्यं ᵛरिषः हिंसकात् ᵛपान्ति रक्षन्ति ॥

ते हि सत्या ऋतस्पृश ऋतावानो जनेजने ।
सुनीथासः सुदानवोंऽहोश्चिदुरुचक्रयः ॥ ४ ॥

ते । हि । सत्याः । ऋतऽस्पृशः । ऋतऽवानः । जनेऽजने ।
सुऽनीथासः । सुऽदानवः । अंहोः । चित् । उरुऽचक्रयः ॥ ४ ॥

---

१. ख-च-ण-देवे ; झ-न-भ-र-श- देवौ । २. ख-च-झ-ण-त-न-भ-र-श- ' निष्कृतं ' नास्ति । ३. न-र-आश्नुवाथे । ४. ख-च-ण-न-भ-श-बहुवचनं कर्तव्यम् । ५. ख-च-झ-ण-न-भ-र- ' पदानीव ' नास्ति ।

ते हि खलु[1] सत्याः सत्यभूताः सत्यफला वा ऋतस्पृशः उदकस्पर्शस्य[2] कर्तारः ऋतावानः यज्ञवन्तः जनेजने सर्वेषु यजमानेषु सुनीथासः सुनयनाः सुदानवः सुदानाः । हीति प्रसिद्धवाची सर्वत्र संबन्धनीयः । एवं महानुभावा वरुणादयः अंहोश्चित् । चिदप्यर्थे । पापिनोऽपि स्वस्तोतुः उरुचक्रयः प्रभूतधनादिकर्तारः ॥

**को नु वां मित्रास्तुतो वरुणो वा तनूनाम् ।**

**तत्सु वामेषते मतिरत्रिभ्य एषते मतिः ॥ ५ ॥**

कः । नु । वाम् । मित्र । अस्तुतः । वरुणः । वा । तनूनाम् ।

तत् । सु । वाम् । आ । ईषते । मतिः । अत्रिऽभ्यः । आ । ईषते । मतिः ॥ ५ ॥

हे मित्र वां युवयोर्मध्ये त्वं च वरुणो वा को नु अस्तुतः । सर्वैरस्तूयमानः कोऽस्ति । उभावपि स्तुत्यावित्यर्थः । तनूनाम् इति तृतीयार्थे षष्ठी । तनुभिः स्तुतिभिः[3] अस्तुत इति संबन्धः ॥ अत्र मित्रशब्देन मित्रस्यैकस्यैव संबोधनं 'वरुणेळास्वन्तः' ( ऋ. सं. ५. ६२. ६ ) इत्यत्रेवात्र द्विवचनसूचकस्याकारस्य अनाम्नानात्[4]। लोकेषु बहुषु संनिहितेषु एकमेव संबोध्य युवयोरिदं युष्माकमिदमिति प्रयुञ्जते ॥ तत् तस्मात् यस्मात्सर्वे स्तुवन्ति तस्मात् । तनूनामित्येतत् व्यवहितमप्युत्तरत्र वा योज्यम् । तनूनाम् अल्पमतीनामस्माकं मतिः स्तुतिः वां युवां सुष्ठु[5] एषते अभिगच्छति । अत्रिभ्यः अत्रिगोत्रेभ्योऽस्मभ्यम् अस्मदीयमतिः एषते । आदरार्थं पुनर्वचनम् ॥ ॥ ५ ॥

'प्र वो मित्राय' इति पञ्चर्चं द्वादशं सूक्तमात्रेयस्य यजतस्यार्षं गायत्रं मैत्रावरुणम् । तथा चानुक्रम्यते— 'प्र वो गायत्रम्' इति । अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रे एतत्सूक्तम् । सूत्रितं च—'प्र वो मित्राय प्र मित्रयोर्वरुणयोः' ( आश्व. श्रौ. ५. १० ) इति । अभिप्लवषडहे पृष्ठ्यषडहे च स्तोमनिमित्तावापार्थमिदमादीनि द्वितीयवर्जितानि चत्वारि सूक्तानि । तथैव सूत्रितं— 'प्र वो मित्रायेति चतुर्णां द्वितीयमुद्धरेत्' ( आश्व. श्रौ. ७. ५ ) इति ॥

**प्र वो मित्राय गायत वरुणाय विपा गिरा । महिक्षत्रावृतं बृहत् ॥ १ ॥**

प्र । वः । मित्राय । गायत । वरुणाय । विपा । गिरा । महिऽक्षत्रौ । ऋतम् । बृहत् ॥ १ ॥

हे मदीया ऋत्विजः वः । यूयमित्यर्थः । मित्राय वरुणाय च विपा व्याप्तया गिरा स्तुत्या प्र गायत स्तुतिं कुरुत । स्तुत्या स्तुवतेत्येतत् पाकं पचतीतिवत् । हे महिक्षत्रौ प्रभूतबलौ युवाम् ऋतं यज्ञं बृहत महत् अतिप्रशस्तम् । स्तुत्यर्थमागच्छतमिति शेषः । अथवा महत् प्रभूतम् ऋतं स्तोत्रं शृणुतमिति शेषः ॥

---

१. झ-न-भ-र- ते खलु । २. ख-च-ण—उदकस्पृशः तस्य ; ग-घ-ज-श—उदकस्य ; झ-त-भ-र—उदकस्पृशत्वस्य । ३. ख-च-ण-अल्पस्तुतिभिः ; झ-र- अस्तुतिभिः । ४. ख-च-ण-भ—अभावात् ; झ—अनास्तोमात ; त-र-श—आम्नानात् । ५. ख-च-झ-ण-त-न-भ-र- 'सुष्ठु' नास्ति ।

स॒म्राजा॒ या घृ॒तयो॑नी मि॒त्रश्चो॒भा वरु॑णश्च । दे॒वा दे॒वेषु॑ प्रश॒स्ता ॥ २ ॥

स॒म्ऽराजा॑ । या । घृ॒तयो॑नी॒ इति॑ घृ॒तऽयो॑नी । मि॒त्रः । च॒ । उ॒भा । वरु॑णः । च॒ ।

दे॒वा । दे॒वेषु॑ । प्र॒ऽश॒स्ता ॥ २ ॥

ᵛया यौ ᵛमित्रश्च ᵛवरुणश्च । परस्परापेक्षया चशब्दः । ᵛउभा उभौ ᵛसम्राजा सर्वस्य स्वामिनौ ᵛघृतयोनी उदकस्योत्पादकौ ᵛदेवा[1] द्योतमानौ ᵛदेवेषु मध्ये ᵛप्रशस्ता प्रकर्षेण स्तुत्यौ[2] । तौ गायतेति पूर्वत्रान्वयः ॥

ता नः॑ शक्तं॒ पार्थि॑वस्य म॒हो रा॒यो दि॒व्यस्य॑ । महि॑ वां क्ष॒त्रं दे॒वेषु॑ ॥ ३ ॥

ता । नः॒ । श॒क्त॒म् । पार्थि॑वस्य । म॒हः । रा॒यः । दि॒व्यस्य॑ । महि॑ । वा॒म् । क्ष॒त्रम् । दे॒वेषु॑ ॥३॥

ᵛता तौ देवौ ᵛनः अस्मदर्थं ᵛपार्थिवस्य पृथिवीसंबद्धस्य ᵛदिव्यस्य दिवि भवस्य च ᵛमहः महतः ᵛरायः धनस्य ᵛशक्तं समर्थौ भवतम् । दातुमिति शेषः । हे देवौ ᵛवां युवयोः ᵛमहि महत् पूज्यं ᵛक्षत्रं बलं ᵛदेवेषु प्रसिद्धं स्तुम इति शेषः ॥

ऋ॒तमृ॒तेन॒ सप॑न्तेषि॒रं दक्ष॑माशाते । अ॒द्रुहा॑ दे॒वौ व॑र्धेते ॥ ४ ॥

ऋ॒तम् । ऋ॒तेन॑ । सप॑न्ता । इ॒षि॒रम् । दक्ष॑म् । आ॒शा॒ते॒ इति॑ । अ॒द्रुहा॑ । दे॒वौ । व॒र्धे॒ते॒ इति॑ ॥४॥

ᵛऋतेन उदकेन निमित्तेन ᵛऋतं यज्ञं ᵛसपन्ता स्पृशन्तौ ᵛइषिरम् एषणवन्तं ᵛदक्षं प्रवृद्धं यजमानं हविर्वा[3] ᵛआशाते व्याप्नुतः । ᵛअद्रुहा अद्रोग्धारौ ᵛदेवौ मित्रावरुणौ युवां ᵛवर्धेते प्रवृद्धौ भवतः ॥

वृ॒ष्टिद्या॑वा री॒त्या॑पेषस्पती॒ दानु॑मत्याः । बृ॒हन्तं॒ गर्त॑माशाते ॥ ५ ॥

वृ॒ष्टिऽद्या॑वा । री॒तिऽआ॑पा । इ॒षः । प॒ती॒ इति॑ । दानु॑ऽमत्याः ।

बृ॒हन्त॑म् । गर्त॑म् । आ॒शा॒ते॒ इति॑ ॥ ५ ॥

ᵛवृष्टिद्यावा । वृष्ट्यर्था द्यौः स्तुतिर्ययोस्तौ वृष्टिद्यावा । अथवा वृष्टिर्वर्षिका द्यौरन्तरिक्षं याभ्यां तौ तादृशौ । ᵛरीत्यापा ॥ ' री गतिरेषणयोः ' ॥ रीतिः प्राप्तिः । सैव[4] आपा आप्तिः[4] अभिमत-प्राप्तिर्ययोस्तौ तादृशौ । ᵛइषः अन्नस्य ᵛपती स्वामिनौ । वृष्टिप्रदत्वात् स्वामित्वम् । ᵛदानुमत्याः दानवत्याः । दातुमुचितायाः[5] इत्यर्थः । एतदिड्विशेषणम् । एवं महानुभावौ ᵛबृहन्तं महान्तं ᵛगर्तं रथम् ᵛआशाते व्याप्नुतः । अधितिष्ठतो यागार्थम् ॥ ॥ ६ ॥

---

१. ख-च-झ-ण-न-भ-र-श–देवौ । २. ख-च-ण–स्तुतौ; त–स्तुत्या । ३. ख-च-झ-ण-न-भ-र–बर्हिर्वा । ४. ख-च-झ-ण-त-न-भ-र– सैव आप्तिः ; ग-घ-ज–सैव अपा । ५. ख-च-झ-ण-न-भ-र–दानमुचितायाः ; ग-घ-ज-श– दातृमुचितायाः ।

'त्री रोचना' इति चतुर्ऋचं त्रयोदशं सूक्तम्। उरुचक्रिर्नामात्रेय ऋषिः। त्रिष्टुप् छन्दः[1]। मित्रावरुणौ देवता। अनुक्रम्यते च—'त्री रोचना चतुष्कमुरुचक्रिः' इति। विनियोगो लैङ्गिकः ॥

त्री रो॒च॒ना व॑रुण॒ त्रीँरु॒त द्यून्त्रीणि॑ मित्र धारयथो॒ रजां॑सि।
वा॒वृ॒धा॒नाव॒मतिं॑ क्ष॒त्रिय॒स्यानु॑ व्र॒तं रक्ष॑माणावजु॒र्यम् ॥ १ ॥

त्री। रो॒च॒ना। व॒रु॒ण॒। त्रीन्। उ॒त। द्यून्। त्रीणि॑। मि॒त्र॒। धा॒र॒य॒थः॒। रजां॑सि।
व॒वृ॒धा॒नौ। अ॒मति॑म्। क्ष॒त्रिय॑स्य। अनु॑। व्र॒तम्। रक्ष॑माणौ। अ॒जु॒र्यम् ॥ १ ॥

हे ᵛवरुण हे ᵛमित्र युवां ᵛत्री त्रीणि ᵛरोचना रोचनानि[2] द्युलोकान् धारयथ इति संबन्धः। ᵛउत अपि च ᵛत्रीन् ᵛद्यून् द्योतमानानन्तरिक्षलोकान् ᵛधारयथः। तथा ᵛत्रीणि ᵛरजांसि भूलोकान्। कीदृशौ युवाम्। ᵛवावृधानौ[3] वर्धमानौ[3] ᵛक्षत्रियस्य। क्षत्रं बलम्। तद्वत इन्द्रस्य। यद्वा। क्षत्रियजातीयस्य यजमानस्य ᵛअमतिम्। रूपनामैतत्। रूपं ᵛव्रतं कर्म च ᵛअजुर्यम् अजीर्णमविरतं वा ᵛरक्षमाणौ ॥

इरा॑वती॑र्वरुण धे॒नवो॑ वां॒ मधु॑मद्वां॒ सिन्ध॑वो मित्र दुह्रे।
त्रय॑स्तस्थुर्वृष॒भास॑स्तिसृ॒णां धि॒षणा॑नां रेतो॒धा वि द्यु॒मन्तः॑ ॥ २ ॥

इरा॑ऽवतीः। व॒रु॒ण॒। धे॒नवः॑। वा॒म्। मधु॑ऽमत्। वा॒म्। सिन्ध॑वः। मि॒त्र॒। दु॒ह्रे॒।
त्रयः॑। त॒स्थुः॒। वृ॒ष॒भासः॑। ति॒सृ॒णाम्। धि॒षणा॑नाम्। रे॒तः॒ऽधाः। वि। द्यु॒ऽमन्तः॑ ॥ २ ॥

हे ᵛवरुण हे ᵛमित्र ᵛवां युवयोराज्ञया ᵛधेनवः गावः ᵛइरावतीः। इरा क्षीरलक्षणा। तद्वत्यो भवन्ति। तथा ᵛसिन्धवः स्यन्दनशीला मेघा नद्यो वा ᵛमधुमत् मधुररसमुदकं ᵛदुह्रे दुहन्ति। तथा ᵛत्रयः त्रिसंख्याकाः ᵛवृषभासः वर्षितारः ᵛरेतोधाः उदकस्य धारकाः ᵛद्युमन्तः दीप्तिमन्तोऽग्निवाय्वादित्याः ᵛतिसृणां त्रिसंख्याकानां ᵛधिषणानां स्थानानां[4] पृथिव्यन्तरिक्षद्युलोकानां[4] स्वामिनः सन्तः ᵛवि विविधं प्रत्येकं ᵛतस्थुः तिष्ठन्ति। युवयोरनुग्रहात् त्रयोऽपि देवास्त्रिषु स्थानेषु वर्तन्ते इत्यर्थः ॥

प्रा॒तर्दे॒वीमदि॑तिं जोहवीमि म॒ध्यंदि॑न॒ उदि॑ता॒ सूर्य॑स्य।
रा॒ये मि॑त्रावरुणा स॒र्वता॒तेळे॑ तो॒काय॒ तन॑याय॒ शं योः ॥ ३ ॥

प्रा॒तः। दे॒वीम्। अदि॑तिम्। जो॒ह॒वी॒मि॒। म॒ध्यंदि॑ने। उत्ऽइ॑ता। सूर्य॑स्य।
रा॒ये। मि॒त्रा॒व॒रु॒णा॒। स॒र्वऽता॑ता। ईळे॑। तो॒काय॑। तन॑याय। शम्। योः ॥ ३ ॥

---

१. ख-च-झ-ण-त-न-भ-र-श-'छन्दः' नास्ति। २. ख-च-झ-ण-भ-र-श- रोचमानानि; न- रोचनानि रोचमानानि। ३. ख-च-ण-भ-'वावृधानौ वर्धमानौ' नास्ति। ४. ख-च-ण-'स्थानानां... ०लोकानां' नास्ति; झ-त-न-भ-र-श- स्थानानाम्।

अहमृषिः ᵛप्रातः प्रातःकाले ᵛअदितिम् अखण्डनीयां देवानां जननीं ᵛदेवीं द्योतमानां ᵛजोहवीमि आह्वयामि[1]। तथा ᵛमध्यंदिने ᵛसूर्यस्य ᵛउदिता उदितौ तत्समृद्धिकाले माध्यंदिने सवने जोहवीमि । हे ᵛमित्रावरुणा युवां ᵛराये धनप्राप्तये सर्वतातौ यज्ञे ᵛईळे स्तौमि । पुनः किमर्थम् । ᵛतोकाय पुत्राय ᵛतनयाय तत्पुत्राय च ᵛशम् अरिष्टशमनाय ᵛयोः सुखस्य मिश्रणाय चेळे इति ॥

या धर्तारा रजसो रोचनस्योतादित्या दिव्या पार्थिवस्य ।
न वां देवा अमृता आ मिनन्ति व्रतानि मित्रावरुणा ध्रुवाणि ॥ ४ ॥

या । धर्तारा । रजसः । रोचनस्य । उत । आदित्या । दिव्या । पार्थिवस्य ।
न । वाम् । देवाः । अमृताः । आ । मिनन्ति । व्रतानि । मित्रावरुणा । ध्रुवाणि ॥ ४ ॥

ᵛया यौ ᵛरोचनस्य रोचमानस्य ᵛरजसः लोकस्य । स्वर्गाख्यस्येत्यर्थः । ᵛउत अपि च ᵛपार्थिवस्य रजसः या यौ धर्तारौ[2] ᵛआदित्या अदितेः पुत्रौ ᵛदिव्या दिवि भवौ तौ युवामीळे इति पूर्वत्र संबन्धः । हे ᵛमित्रावरुणा ᵛवां युवयोः ᵛध्रुवाणि ᵛव्रतानि कर्माणि ᵛदेवाः अन्ये इन्द्रादयः ᵛअमृताः अमरणधर्माणोऽपि ᵛन ᵛआ ᵛमिनन्ति न हिंसन्ति । यतो ध्रुवाण्यत इत्यभिप्रायः ॥ ॥ ७ ॥

'पुरूरुणा' इति चतुर्ऋचं चतुर्दशं सूक्तमुरुचक्रेरार्षं गायत्रं मैत्रावरुणम् । 'पुरूरुणा गायत्रं तु' इत्यनुक्रमणिका । पृष्ठ्याभिप्लवषडहयोः प्रातःसवने आवापार्थत्वेन इदमपि सूक्तं पूर्वसूक्तेन सह । 'प्र वो मित्रायेति चतुर्णां द्वितीयमुद्धरेत्' इति ह्युक्तम् । चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणशस्त्रे आद्यस्तृचः षडहस्तोत्रियसंज्ञकः । सूत्रितं च— 'पुरूरुणा चिद्ध्यस्ति प्रति वां सूर उदिते' ( आश्व. श्रौ. ७. २ ) इति ॥

पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र वंसि वां सुमतिम् ॥ १ ॥

पुरुऽउरुणा । चित् । हि । अस्ति । अवः । नूनम् । वाम् । वरुण ।
मित्र । वंसि । वाम् । सुऽमतिम् ॥ १ ॥

हे मित्रावरुणौ ᵛवां युवयोः ᵛपुरूरुणा ᵛचित् ॥ अत्र सोः 'सुपां सुलुक्' इत्याकारः ॥ पुरोरपि बहु उरु बहुतरम् । अथवा पुरु च तदुरु च पुरूरु । अत्यन्तमुरुतरमित्यर्थः । तादृक् ᵛअवः रक्षणं ᵛनूनं निश्चयेन ᵛअस्ति । ᵛहि प्रसिद्धौ । चिदिति पूरणः । हे ᵛवरुण हे ᵛमित्र ᵛवां युवयोः ᵛसुमतिम् अनुग्रहबुद्धिं ᵛवंसि संभजेय । यस्मादवोऽस्ति तस्माद्वंसीति भावः ॥

---

१. त–आह्वयामीति । २. झ–त–न–र–धर्तारौ तौ ।

ता वां सम्यगद्रुह्वाणेषमश्याम धायसे । वयं ते रुद्रा स्याम ॥ २ ॥

ता । वाम् । सम्यक् । अद्रुह्वाणा । इषम् । अश्याम । धायसे । वयम् । ते । रुद्रा । स्याम ॥२॥

हे ᐯअद्रुह्वाणा हे अद्रोग्धारौ ᐯता तौ प्रसिद्धौ ᐯवां युवां ᐯसम्यक् । स्तुम इति शेषः । स्तोतारो वयम् ᐯइषम् अन्नं ᐯधायसे पानाय भोजनाय ᐯअश्याम प्राप्नुयाम । हे ᐯरुद्रा दुःखात् द्रावयितारौ रुद्भिः[1] द्रवणीयौ वा ᐯते स्तोतारः ᐯवयं ᐯस्याम भवेम । समृद्धा इति शेषः । युवाभ्यां स्वभूता वा स्याम ॥

पातं नो रुद्रा पायुभिरुत त्रायेथां सुत्रात्रा । तुर्याम दस्यूंन्तनूभिः ॥ ३ ॥

पातम् । नः । रुद्रा । पायुऽभिः । उत । त्रायेथाम् । सुऽत्रात्रा । तुर्याम । दस्यून् । तनूभिः॥३॥

हे ᐯरुद्रा उक्तरूपौ देवौ युवां ᐯनः अस्मान् ᐯपायुभिः रक्षणैः ᐯपातं रक्षतम् । ᐯउत अपि च ᐯसुत्रात्रा शोभनेन त्राणेन[2] ᐯत्रायेथां पालयेथाम्[3] । इष्टप्राप्त्यनिष्टपरिहारभेदेन भेदः । स्तोत्रादि-वैकल्यात् शत्रोर्वा त्रायेथाम् अभिमतप्रापणेन रक्षतमित्यर्थः । वयं च ᐯतनूभिः पुत्रादिभिः सहिताः स्वीयैरङ्गैर्वा ᐯदस्यून् शत्रून् ᐯतुर्याम हिंस्याम तरेम वा ॥

मा कस्याद्भुतक्रतू यक्षं भुजेमा तनूभिः । मा शेषसा मा तनसा ॥ ४ ॥

मा । कस्य । अद्भुतक्रत इत्यद्भुतऽक्रतू । यक्षम् । भुजेम । तनूभिः ।

मा । शेषसा । मा । नसा ॥ ४ ॥

हे ᐯअद्भुतक्रतू आश्चर्यकर्माणौ वयं ᐯकस्य अन्यस्य कस्यचन ᐯयक्षं पूजितं धनं ᐯमा ᐯभुजेम मा भुञ्जीमहि ᐯतनूभिः अस्मदीयैः[4] अवयवैः । युवयोरनुग्रहात् समृद्धा वयम् अन्ययाचितधनेन शरीरपोषं न कुर्म इत्यर्थः । तथा ᐯशेषसा अपत्येन सहिताः ᐯमा भुजेम । ᐯतनसा पौत्रादिना सहिताः ᐯमा भुजेम । अस्मत्कुले न केऽपि भुञ्जीमहीत्यर्थः ॥ ॥ ८ ॥

‘ आ नो गन्तम् ’ इति तृचात्मकं पञ्चदशं सूक्तं बाहुवृक्तस्यात्रेयस्यार्षं गायत्रं मैत्रावरुणम् । ‘ आ नस्तृचं बाहुवृक्तः ’ इत्यनुक्रमणिका । उक्तः सूक्तविनियोगः । अग्निष्टोमे प्रातः-सवने मैत्रावरुणशस्त्रे अयमनुरूपस्तृचः । सूत्रितं च—‘ आ नो मित्रावरुणा नो गन्तं रिशादसा ’ ( आश्व. श्रौ. ५. १० ) इति ॥

आ नो गन्तं रिशादसा वरुण मित्र बर्हणा । उपेमं चारुमध्वरम् ॥ १ ॥

आ । नः । गन्तम् । रिशादसा । वरुण । मित्र । बर्हणा । उप । इमम् । चारुम् । अध्वरम् ॥१॥

---

१. ख-च-झ-ण-न-भ-र– रुद्भिः । २. ख-च-झ-ण-र–त्राणनेन ; ग-घ-ज-श–‘ त्राणेन ’ नास्ति । ३. ग-घ-ज– ‘ पालयेथां ’ नास्ति ; त–पालयेताम् ; र–पालयताम् ; श–पालनम् । ४. ख-च-झ-ण-त-न-भ-र-श–मदीयैः ।

हे ᵛवरुण हे ᵛमित्र हे ᵛरिशादसा शत्रूणां प्रेरकौ युवां ᵛनः अस्माकम् ᵛइमं ᵛचारुं चरणीयम्[1] ᵛअध्वरम् अहिंसकं यज्ञम् ᵛउप ᵛआ ᵛगन्तम् उपागच्छतम् । कीदृशौ । ᵛबर्हणा परिबर्हणौ निबर्हणौ[2] हन्तारौ शत्रूणाम्[2] ॥

विश्व॑स्य॒ हि प्रचे॑तसा॒ वरु॑ण॒ मित्र॒ राज॑थः । ईशा॒ना पि॑प्यतं॒ धियः॑ ॥ २ ॥

विश्व॑स्य । हि । प्र॒ऽचे॒त॒सा॒ । वरु॑ण । मित्र॑ । राज॑थः । ईशा॒ना । पिप्य॒त॒म् । धियः॑ ॥ २ ॥

हे[3] ᵛमित्र हे ᵛवरुण[3] ᵛप्रचेतसा प्रकृष्टज्ञानौ युवां ᵛविश्वस्य ᵛराजथः सर्वस्य स्वामिनौ भवथः । ᵛहि इति प्रसिद्धौ । हे ᵛईशाना अस्माकमीश्वरौ युवां ᵛधियः अस्मदीयानि कर्माणि ᵛपिप्यतं प्याययतं फलैः[4] ॥

उप॑ नः सु॒तमा ग॑तं॒ वरु॑ण॒ मित्र॑ दा॒शुषः॑ । अ॒स्य सोम॑स्य पी॒तये॑ ॥ ३ ॥

उप॑ । न॒ः । सु॒तम् । आ । ग॒त॒म् । वरु॑ण । मित्र॑ । दा॒शुषः॑ । अ॒स्य । सोम॑स्य । पी॒तये॑ ॥३॥

ᵛनः अस्माकं ᵛसुतम् अभिषुतं सोमं प्रति हे[5] ᵛवरुण हे ᵛमित्र[5] युवाम् ᵛउप ᵛआ ᵛगतम् उपागच्छतम् । ᵛदाशुषः हविर्दातुर्मम ᵛअस्य ᵛसोमस्य ᵛपीतये पानाय ॥ ॥ ९ ॥

‘ आ मित्रे वरुणे ’ इति तृचात्मकं षोडशं सूक्तं बाहुवृक्तस्यार्षमौष्णिहं मैत्रावरुणम् । ‘ आ मित्र औष्णिहम् ’ इत्यनुक्रमणिका । दशरात्रे तृतीयेऽहनि प्रउगशस्त्रेऽयं मैत्रावरुणस्य तृचः । सूत्रितं च—‘ आ मित्रे वरुणे वयमश्विनावेह गच्छतम् ( आश्व. श्रौ. ७. १० ) इति ॥

आ मि॒त्रे वरु॑णे व॒यं गी॒र्भिर्जु॑हुमो अ॒त्रिवत् । नि ब॒र्हिषि॑ सदतं॒ सोम॑पीतये ॥ १ ॥

आ । मि॒त्रे । वरु॑णे । व॒यम् । गीः॒ऽभिः । जु॒हु॒मः॒ । अ॒त्रि॒ऽवत् ।

नि । ब॒र्हिषि॑ । स॒द॒त॒म् । सोम॑ऽपीतये ॥ १ ॥

ᵛवयम् आत्रेयाः ᵛमित्रे ᵛवरुणे मित्रावरुणयोः[6] अर्थाय ᵛगीर्भिः मन्त्रैः ᵛआ ᵛजुहुमः ᵛअत्रिवत् अस्मद्गोत्रप्रवर्तकोऽत्रिरिव । तस्मात् हे[7] मित्रावरुणौ[7] ᵛसोमपीतये ᵛबर्हिषि ᵛनि ᵛसदतं निषीदतम् ॥

---

१. त-न-रमणीयम् । २. ख-च-झ-ण-न-भ-र-‘ निबर्हणौ...शत्रूणां ’ नास्ति । ३. ख-च-झ-ण-त-न-भ-र-श- ‘ हे ... वरुण ’ नास्ति । ४. ख-च-झ-ण-त-न-भ-र- ‘ फलैः ’ नास्ति । ५. ख-च-ण- हे मित्र हे वरुण । ६. ख-च-झ-ण-न-भ- मित्रावरुणयोरागतयोः ; त-र- मित्रावरुणयोर्गतयोः । ७. ख-च-झ-ण-त-भ-र- तत् ; न- ‘ हे मित्रावरुणौ ’ नास्ति ।

व्रतेन स्थो ध्रुवक्षेमा धर्मणा यातयज्जना ।
नि बर्हिषि सदतं सोमपीतये ॥ २ ॥

व्रतेन । स्थः । ध्रुवऽक्षेमा । धर्मणा । यातयत्ऽजना ।
नि । बर्हिषि । सदतम् । सोमऽपीतये ॥ २ ॥

हे मित्रावरुणौ युवां <sup>v</sup>धर्मणा जगद्धारकेण <sup>v</sup>व्रतेन कर्मणा योगेन <sup>v</sup>ध्रुवक्षेमा <sup>v</sup>स्थः अविचलितस्थानौ भवथः। <sup>v</sup>यातयज्जना। यातयन्तः कर्मसु प्रवर्तयन्तो जना ऋत्विजो ययोस्तौ यातयज्जनौ । अथवा यातयन्तः शत्रून् हिंसन्तो जना भृत्या ययोस्तौ । शिष्टं गतम् ॥

मित्रश्च नो वरुणश्च जुषेतां यज्ञमिष्टये ।
नि बर्हिषि सदतां सोमपीतये ॥ ३ ॥

मित्रः । च । नः । वरुणः । च । जुषेताम् । यज्ञम् । इष्टये ।
नि । बर्हिषि । सदताम् । सोमऽपीतये ॥ ३ ॥

<sup>v</sup>मित्रश्च <sup>v</sup>वरुणश्च उभौ <sup>v</sup>नः अस्माकं <sup>v</sup>यज्ञम् <sup>v</sup>इष्टये अभीष्टाय[1] <sup>v</sup>जुषेतां सेवेताम् । आगत्य च <sup>v</sup>बर्हिषि <sup>v</sup>नि <sup>v</sup>सदतां निषीदतां सोमपानाय ॥ ॥ १० ॥ ॥ ५ ॥

षष्ठेऽनुवाके पञ्चदश सूक्तानि । तत्र ' यदद्य स्थः ' इति दशर्चं प्रथमं सूक्तमात्रेयस्य पौरनाम्नः आर्षमानुष्टुभमाश्विनम् । अनुक्रान्तं च—' यदद्य दश पौर आश्विनं तदानुष्टुभं तु ' इति । ' तत् ' इत्युक्तत्वादिदमादीनि षट् सूक्तान्याश्विनानि । ' आनुष्टुभं तु ' इति तुशब्दादिदमुत्तरं च द्वे आनुष्टुभे । प्रातरनुवाक आश्विने क्रतावानुष्टुभे छन्दस्याश्विनशस्त्रे चेदमादिके द्वे सूक्ते । ' यदद्य स्थ इति सूक्ते ' ( आश्व. श्रौ. ४. १५ ) इति सूत्रितम् ॥

यदद्य स्थः परावति यदर्वावत्यश्विना ।
यद्वा पुरू पुरुभुजा यदन्तरिक्ष आ गतम् ॥ १ ॥

यत् । अद्य । स्थः । पराऽवति । यत् । अर्वाऽवति । अश्विना ।
यत् । वा । पुरु । पुरुऽभुजा । यत् । अन्तरिक्षे । आ । गतम् ॥ १ ॥

हे <sup>v</sup>पुरुभुजा बहुषु यज्ञेषु भोक्तारौ अधिकं रक्षितारौ वा हे <sup>v</sup>अश्विना <sup>v</sup>यत् यदि <sup>v</sup>अद्य अस्मिन् काले <sup>v</sup>परावति अत्यन्तं दूरदेशे द्युलोके <sup>v</sup>स्थः भवथः । <sup>v</sup>यत् वा <sup>v</sup>अर्वावति अरणवति गन्तुं शक्ये प्रदेशे अन्तिके स्थः । <sup>v</sup>यत् यदि <sup>v</sup>वा अथवा <sup>v</sup>पुरु बहुप्रदेशेषु स्थः । <sup>v</sup>यत् यदि <sup>v</sup>अन्तरिक्षे स्थः तस्मात्सर्वस्मात् अद्य <sup>v</sup>आ <sup>v</sup>गतम् आगच्छतम् ॥

---

१. ख-ग-घ-च-ज-झ-ण-भ-श—अभीष्ट्ये ।

इह त्या पुरुभूतमा पुरू दंसांसि बिभ्रता ।

वरस्या याम्यध्रिगू हुवे तुविष्टमा भुजे ॥ २ ॥

इह । त्या । पुरुऽभूतमा । पुरु । दंसांसि । बिभ्रता ।

वरस्या । यामि । अध्रिगू इत्यध्रिऽगू । हुवे । तुविःऽतमा । भुजे ॥ २ ॥

ᵛइह अस्मिन् यज्ञे ᵛत्या तौ ᵛपुरुभूतमा पुरूणां बहूनां यजमानानां भावयितृतमौ ᵛपुरु पुरूणि ᵛदंसांसि कर्माणि ᵛबिभ्रता धारयन्तौ ᵛवरस्या वरणीयौ ᵛअध्रिगू अन्यैः अधृतगमनकर्माणौ ᵛयामि उपागच्छामि । ᵛतुविष्टमा प्रभूततमौ ᵛभुजे भोगाय पालनाय वा ᵛहुवे आह्वयामि ॥

ईर्मान्यद्वपुषे वपुश्चक्रं रथस्य येमथुः ।

पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथः ॥ ३ ॥

ईर्मा । अन्यत् । वपुषे । वपुः । चक्रम् । रथस्य । येमथुः ।

परि । अन्या । नाहुषा । युगा । मह्ना । रजांसि । दीयथः ॥ ३ ॥

हे अश्विनौ युवां ᵛरथस्य युष्मदीयस्य ᵛअन्यत् ᵛचक्रम् ᵛईर्मा ॥ अर्तेः ईर्मा इति रूपम् । गन्तर्यादित्ये ᵛवपुषे तस्य शोभायै ᵛवपुः वपुष्मत् तेजोवत् चक्रं ᵛयेमथुः नियमितवन्तौ स्थः । ᵛअन्या अन्येन चक्रेण ᵛमह्ना महत्त्वेन स्वसामर्थ्येन ᵛनाहुषा ᵛयुगा । नहुषा मनुष्याः । तेषां युगा युगोपलक्षितान् कालान् प्रातरादिसवनान् अहोरात्रादिकालान् वा ᵛरजांसि लोकांश्च ᵛपरि ᵛदीयथः परिगच्छथः । 'न्यघ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः' ( ऋ. सं १. ३०. १९ ) इत्युक्तम् ॥

तदू षु वामेना कृतं विश्वा यद्वामनु ष्टवे ।

नाना जातावरेपसा समस्मे बन्धुमेयथुः ॥ ४ ॥

तत् । ऊँ इति । सु । वाम् । एना । कृतम् । विश्वा । यत् । वाम् । अनु । स्तवे ।

नाना । जातौ । अरेपसा । सम् । अस्मे इति । बन्धुम् । आ । ईयथुः ॥ ४ ॥

हे ᵛविश्वा व्याप्तौ ᵛयत् येन स्तोत्रेण ᵛवां युवाम् ᵛअनु ᵛष्टवे अनुस्तुवे ᵛतदु । उ इति पूरणः । ᵛएना अनेन पौरेण[1] ᵛसु[2] सुष्ठु ᵛवां युवाभ्यां ᵛकृतं संपादितं भवतु । ᵛनाना पृथगेव ᵛजातौ समृद्धौ ᵛअरेपसा अपापौ ᵛअस्मे अस्मभ्यं ᵛबन्धुम् अन्नं धनं वा ᵛसम् ᵛआ ᵛईयथुः सम्यक् गमयथः । सम्यक् प्रयच्छतमित्यर्थः ॥

१. न- पौरेण मया । २. ख-च-झ-ण-भ-र- मा ; श- 'सु' नास्ति ।

आ यद्वां सूर्या रथं तिष्ठद्रघुष्यदं सदा ।
परि वामरुषा वयो घृणा वरन्त आतपः ॥ ५ ॥

आ । यत् । वाम् । सूर्या । रथम् । तिष्ठत् । रघुऽस्यदम् । सदा ।
परि । वाम् । अरुषाः । वयः । घृणा । वरन्ते । आऽतपः ॥ ५ ॥

हे अश्विनौ ᵛवां युवयोः ᵛसदा[1] सर्वदा[1] ᵛरघुष्यदं शीघ्रगं ᵛरथं ᵛसूर्या युवयोः पत्नी ᵛयत् यदा ᵛआ ᵛतिष्ठत् आस्थितवती तदा ᵛवां[2] ᵛपरि ᵛवरन्ते परितो वृण्वन्ति । के । ᵛअरुषाः आरोचमानाः ᵛघृणा दीप्ताः ᵛआतपः आतापनाः[3] शत्रूणां ᵛवयः अश्वाः । अथवा आतपः इति विशेष्यम् । वयो गन्तार उक्तलक्षणा आतपः सर्वतस्तापयित्र्यो दीप्तयः परि वरन्ते ॥ ॥ ११ ॥

युवोरत्रिश्चिकेतति नरा सुम्नेन चेतसा ।
घर्मं यद्वामरेपसं नासत्यास्ना भुरण्यति ॥ ६ ॥

युवोः । अत्रिः । चिकेतति । नरा । सुम्नेन । चेतसा ।
घर्मम् । यत् । वाम् । अरेपसम् । नासत्या । आस्ना । भुरण्यति ॥ ६ ॥

हे ᵛनरा नेतारावश्विनौ ᵛयुवोः युवयोः । युवामित्यर्थः । ᵛअत्रिः अस्मत्पिता ऋषिः ᵛसुम्नेन सुखेन अग्निदाहोपशमरूपेण हेतुना ᵛचेतसा आदरयुक्तेन मनसा ᵛचिकेतति जानाति । स्तुतवानित्यर्थः । सति दुःखे सुखमपेक्षते[4] । दुःखस्य कः प्रसङ्ग इत्यत आह । ᵛयत् यस्मात् हे[5] नासत्यौ[5] ᵛवां युवयोः ᵛआस्ना आस्येन तन्निष्पन्नेन[6] स्तोत्रेण ᵛघर्मं दीप्तं दहन्तमग्निमसुरः स्वदाहाय प्रक्षिप्तम् ᵛअरेपसम् अपापं सुखकरं ᵛभुरण्यति प्राप्तवान् ॥ भुरण्यतिर्गतिकर्मा ॥ अत्रेरग्नेः सकाशात् रक्षणं ' हिमेनाग्निं घ्रंसम् ' ( ऋ. सं १. ११६. ८ ), ' युवमृबीसमुत तप्तमत्रये ' ( ऋ. सं. १०. ३९. ९ ) इत्यादिभिः स्पष्टं प्रदर्शितम् ॥

उग्रो वां ककुहो ययिः शृण्वे यामेषु संतनिः ।
यद्वां दंसोभिरश्विनात्रिर्नराववर्तति ॥ ७ ॥

उग्रः । वाम् । ककुहः । ययिः । शृण्वे । यामेषु । सम्ऽतनिः ।
यत् । वाम् । दंसःऽभिः । अश्विना । अत्रिः । नरा । आऽववर्तति ॥ ७ ॥

---

१. ख-च-झ-ण-न-भ-र- ' सदा सर्वदा ' नास्ति । २. ख-च-ण-भ-वां सदा । ३. ख-च-झ-ण-श-आतपनाः । ४. झ-सुखपेक्षते ; त-सुमुक्षतेः ; र-सुखमुपेक्षते ; श-सुखमुक्षत । ५. ख-च-झ-ण-त-न-भ-र- ' हे नासत्यौ ' नास्ति । ६. झ-र-तजानिष्पन्नेन ; न-तज्जन्येन ।

ᵛउग्रः उद्गूर्णबलः ᵛवां युवयोः[1] ᵛककुहः उच्छ्रितो महान् ᵛययिः गन्ता ᵛसंतनिः सततं गच्छन् रथः ᵛयामेषु गमनेषु यज्ञेषु वा ᵛशृण्वे श्रूयते । हे[2] ᵛअश्विना हे ᵛनरा[2] ᵛयत् यस्मात् ᵛवां युवां ᵛदंसोभिः कर्मभिः ᵛअत्रिः अस्मत्पिता ᵛआववर्तति आवर्तयति ॥

मध्वं ऊ षु मधूयुवा रुद्रा सिषक्ति पिप्युषी ।

यत्समुद्राति पर्षथः पक्काः पृक्षो भरन्त वाम् ॥ ८ ॥

मध्वः । ऊँ इति । सु । मधुऽयुवा । रुद्रा । सिसक्ति । पिप्युषी ।

यत् । समुद्रा । अति । पर्षथः । पक्वाः । पृक्षः । भरन्त । वाम् ॥ ८ ॥

हे ᵛमधूयुवा मधुरस्य सोमादेर्मिश्रयितारौ हे ᵛरुद्रा । रुत् स्तुतिः । तया द्रवणीयौ[3] रुद्रपुत्रौ वा[4] वां[4] ᵛमध्वः मधुररसेन ᵛसु ᵛपिप्युषी सुष्ठु प्याययन्ती स्तुतिरस्मत्कृता ᵛसिषक्ति सेवते । ᵛयत् यदा ᵛसमुद्रा समुद्द्रवणसाधनानि अन्तरिक्षाणि ᵛअति ᵛपर्षथः अतिपारयथः । यज्ञं प्राप्नुथः[5] इत्यर्थः । ᵛपक्वाः ᵛपृक्षः अन्नानि हविर्लक्षणानि ᵛवां ᵛभरन्त भ्रियन्ते यजमानैः ॥

सत्यमिद्वा उं अश्विना युवामाहुर्मयोभुवा ।

ता यामन्यामहूतमा यामन्ना मृळयत्तमा ॥ ९ ॥

सत्यम् । इत् । वै । ऊँ इति । अश्विना । युवाम् । आहुः । मयःऽभुवा ।

ता । यामन् । यामऽहूतमा । यामन् । आ । मृळयत्ऽतमा ॥ ९ ॥

हे ᵛअश्विना ᵛयुवां ᵛसत्यमित् सत्यमेव । ᵛवै इति पादपूरणः । ᵛमयोभुवा सुखस्य भावयितारौ ᵛआहुः पुराविदः । ᵛता तौ सुखकरत्वेन प्रसिद्धौ युवां ᵛयामन् यज्ञे ᵛयामहूतमा गमनार्थं भृशमाह्वातव्यौ भवतमिति शेषः । ᵛयामन् अस्मद्यज्ञे अस्मदर्थागमने वा ᵛमृळयत्तमा चातिशयेन सुखयितारौ भवतम् । आकारश्चार्थे[6] ॥

इमा ब्रह्माणि वर्धनाश्विभ्यां सन्तु शंतमा ।

या तक्षाम रथाँइवावोचाम बृहन्नमः ॥ १० ॥

इमा । ब्रह्माणि । वर्धना । अश्विऽभ्याम् । सन्तु । शम्ऽतमा ।

या । तक्षाम । रथान्ऽइव । अवोचाम । बृहत् । नमः ॥ १० ॥

---

१. ख-ञ-त-न-भ-र—युवाम् । २ ख-च-ण—हे अश्विना अश्विनौ हे नरा नेतारौ । ३. त—द्रावणीयौ । ४. त—वां युवाम् । ५. ख-च-ञ-ण-न-भ-र—प्राप्नुथः । ६. ख-च-ञ-ण-त-न-भ-र— 'आकारश्चार्थे' नास्ति ।

अथ स्तुतिं निगमयति । <sup>v</sup>इमा इमानि इदानीं कृतानि <sup>v</sup>ब्रह्माणि परिवृढानि स्तोत्राणि <sup>v</sup>अश्विभ्यां <sup>v</sup>वर्धना वर्धनानि समर्धकानि <sup>v</sup>शंतमा सुखतमानि <sup>v</sup>सन्तु । <sup>v</sup>या यानि <sup>v</sup>तक्षाम संपादयाम <sup>v</sup>रथानिव शिल्पी तद्वत्तक्षाम तानि सन्तु । वयं <sup>v</sup>बृहत् प्रभूतं प्रभूतफलप्रदं <sup>v</sup>नमः नमस्कारोक्तिम् <sup>v</sup>अवोचाम ॥ ॥ १२ ॥

' कूष्ठः ' इति दशर्चं द्वितीयं सूक्तं पौरस्त्यार्षम् । ' कूष्ठः ' इत्यनुक्रमणिका । पूर्वत्र तुशब्दात् इदमप्यानुष्टुभम् । ' आश्विनं तत् ' इति पूर्वोक्तत्वात् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

कूष्ठो देवावश्विनाद्या दिवो मनावसू ।

तच्छ्रवथो वृषण्वसू अत्रिर्वामा विवासति ॥ १ ॥

कूऽस्थः । देवौ । अश्विना । अद्य । दिवः । मनावसू इति ।

तत् । श्रवथः । वृषण्वसू इति वृषण्ऽवसू । अत्रिः । वाम् । आ । विवासति ॥ १ ॥

हे <sup>v</sup>देवौ हे <sup>v</sup>मनावसू स्तुतिधनौ <sup>v</sup>अश्विना <sup>v</sup>अद्य अस्मिन् यागदिने <sup>v</sup>दिवः द्युलोकात् आगत्य <sup>v</sup>कूष्ठः । व्यत्ययेनैकवचनम् । कौ[1] भूमौ[1] तिष्ठन्तौ सन्तौ <sup>v</sup>तत् स्तोत्रं <sup>v</sup>श्रवथः शृणुथः । हे <sup>v</sup>वृषण्वसू वर्षकधनौ <sup>v</sup>वाम् <sup>v</sup>अत्रिः अत्रेः पुत्रः <sup>v</sup>आ <sup>v</sup>विवासति सर्वतः परिचरति ॥ अथवा कू इत्यस्य निपातस्य स्थ इत्याख्यातेन ' सह ' इति योगविभागात् समासः । ऐकस्वर्यं चाध्येतृसमयप्राप्तम् । ' अराइव ' ( ऋ. सं. ५. ५८. ५ ) इत्यत्र यथेवशब्दः, ' कूचिज्जायते ' ( ऋ. सं. १०. ४. ५ ), ' कूचित्सन्तम् ' ( ऋ. सं. १०. ९३. ११ ) इत्यादिवदत्रापि द्रष्टव्यम् ॥ क स्थितौ भवथः । अत्रिर्युवां स्तौति तं[2] शृणुथ इत्यर्थः ॥

कुह त्या कुह नु श्रुता दिवि देवा नासत्या ।

कस्मिन्ना यतथो जने को वां नदीनां सचा ॥ २ ॥

कुह । त्या । कुह । नु । श्रुता । दिवि । देवा । नासत्या ।

कस्मिन् । आ । यतथः । जने । कः । वाम् । नदीनाम् । सचा ॥ २ ॥

<sup>v</sup>त्या तौ <sup>v</sup>देवा देवौ <sup>v</sup>नासत्या अश्विनौ <sup>v</sup>कुह कुत्र तिष्ठतः । <sup>v</sup>नु अद्य <sup>v</sup>कुह <sup>v</sup>श्रुता कुत्र श्रुतौ <sup>v</sup>दिवि द्युलोके निवसत इति शेषः । अथ प्रत्यक्षकृतः । हे देवौ युवां <sup>v</sup>कस्मिन् <sup>v</sup>जने यजमाने <sup>v</sup>आ <sup>v</sup>यतथः आगच्छथः । <sup>v</sup>कः स्तोता <sup>v</sup>वां युवयोः <sup>v</sup>नदीनां स्तुतीनां <sup>v</sup>सचा सहायः स्यात् ॥

---

१. ख-च-झ-ण-त-न-भ-र- ' कौ भूमौ ' नास्ति । २. त-न-र-श- ताम् ।

कं या॑थः॒ कं ह॑ ग॒च्छ॒थः॒ कम॒च्छा॑ यु॒ञ्जाथे॒ रथ॑म् ।

कस्य॒ ब्रह्मा॑णि रण्यथो व॒यं वा॑मुश्मसी॒ष्टये॑ ॥ ३ ॥

कम् । या॒थः॒ । कम् । ह॒ । ग॒च्छ॒थः॒ । कम् । अच्छ॑ । यु॒ञ्जाथे॒ इति॑ । रथ॑म् ।

कस्य॑ । ब्रह्मा॑णि । र॒ण्य॒थः॒ । व॒यम् । वा॒म् । उ॒श्म॒सि॒ । इ॒ष्टये॑ ॥ ३ ॥

हे अश्विनौ युवां ᵛकं यजमानं यज्ञं वा प्रति ᵛयाथः । अध्वानमुल्लङ्घ्य[1] याथः[2] । ᵛकं ᵛह कं च प्रति ᵛगच्छथः । गत्वा च केन सह संगतौ भवथः । ᵛकं च ᵛअच्छ अभिप्राप्तुं ᵛयुञ्जाथे योजयथः ᵛरथम् अश्वैः । ᵛकस्य ᵛब्रह्माणि परिवृढानि स्तोत्राणि ᵛरण्यथः रमेथे । ᵛवयं च ᵛवां युवाम् ᵛइष्टये गमनायैषणाय वा ᵛउश्मसि कामयामहे तस्मात् कस्य चन[2] यागं प्रति न गन्तव्यमित्यर्थः ॥

पौ॒रं चि॒द्ध्यु॑द॒प्रुतं॒ पौर॑ पौ॒राय॒ जिन्व॑थः ।

यदी॑ गृभी॒तता॑तये सि॒ह॑मिव द्रु॒हस्प॒दे ॥ ४ ॥

पौ॒रम् । चि॒त् । हि । उ॒द॒ऽप्रुत॑म् । पौर॑ । पौ॒राय॑ । जिन्व॑थः ।

यत् । ई॒म् । गृ॒भी॒त॒ऽता॑तये । सि॒हम्॒ऽइ॑व । द्रु॒हः । प॒दे ॥ ४ ॥

हे ᵛपौर । इदमश्विनोः संबोधनम् । पौरेण स्तुत्यत्वेन संबन्धात् अश्विनावपि पौरौ । उभयोः छान्दसमेकवचनम् । हे पौरसंबन्धिनावश्विनौ युवां ᵛपौरम्[3] । ᵛचित् इति पूरणः । पौरेण वृष्ट्यर्थं प्रार्थ्यमानत्वेन संबन्धात् मेघोऽपि पौरः । तम् ᵛउदप्रुतम्[4] उदकप्लावकं मेघं पौराय ऋषये मह्यं ᵛजिन्वथः प्रेरयथः[5] । ᵛयत् यौ युवां ᵛगृभीततातये गृहीतयज्ञसंतानाय पौराय ᵛईम् एनं मेघं प्रति गच्छथः ᵛद्रुहः द्रोहस्य ᵛपदे स्थानेऽरण्यदेशे ᵛसिंहमिव गर्जन्तं प्रबलं सिंहं यथा बलात् च्यावयन्ति शूरास्तद्वत् जिन्वथ इति ॥

प्र च्यवा॑नाज्जुजु॒रुषो॑ व॒व्रिमत्कं॒ न मु॑ञ्चथः ।

यु॒वा यदी॑ कृ॒थः पुन॒रा काम॑मृण्वे व॒ध्व॑ः ॥ ५ ॥

प्र । च्यवा॑नात् । जु॒जु॒रुषः॑ । व॒व्रिम् । अत्क॑म् । न । मु॒ञ्च॒थः॒ ।

युवा॑ । यदि॑ । कृ॒थः । पुन॒रिति॑ । आ । काम॑म् । ऋ॒ण्वे॒ । व॒ध्वः॑ ॥ ५ ॥

---

१. ख-च-झ-ण-त-न-भ-र-उल्लङ्घयथः । २. ख-न ; झ-वचन । ३. ख-झ-ण-न-भ- पौरं चित् । ४. ख-च-ण-भ- उदप्रुतं उदप्लुतम् । ५. ख-च-झ-ण-न-भ-र- 'प्रेरयथः' नास्ति ।

ᵛच्यवानात् ऋषेः ᵛजुजुरुषः जरसा जीर्णात् सकाशात् ᵛवव्रिं हेयं पुराणं रूपम् ᵛअत्कं ᵛन कवचमिव ᵛप्र ᵛमुञ्चथः प्रमुञ्चतम्। 'प्रामुञ्चतं द्रापिमिव च्यवानात्' (ऋ. सं. १. ११६. १०) इत्यादि मन्त्रान्तरम्। ᵛयदि यदा ᵛपुनः[1] ᵛयुवा ᵛकृथः। युवानं कुरुथ इत्यर्थः। तदा ᵛवध्वः सुरूपायाः स्त्रियः ᵛकामं कमनीयं[2] रूपम् ᵛआ[2] ᵛऋण्वे प्राप्तवान्॥ ॥ १३ ॥

अस्ति हि वामिह स्तोता स्मसि वां संदृशि श्रिये।

नू श्रुतं म आ गतमवोभिर्वाजिनीवसू ॥ ६ ॥

अस्ति। हि। वाम्। इह। स्तोता। स्मसि। वाम्। सम्ऽदृशि। श्रिये।

नु। श्रुतम्। मे। आ। गतम्। अवःऽभिः। वाजिनीवसू इति वाजिनीऽवसू ॥ ६ ॥

हे अश्विनौ ᵛवां ᵛस्तोता पौरः ᵛअस्ति ᵛहि वर्तते खलु। हे देवौ ᵛवां ᵛसंदृशि संदर्शने संनिधाने ᵛस्मसि स्मः भवेम। किमर्थम्। ᵛश्रिये। ᵛनु अद्य ᵛमे मदीयमाह्वानं ᵛश्रुतं शृणुतम्। श्रुत्वा ᵛआ ᵛगतम् आगच्छतम्। किं तूष्णीं नेत्याह। ᵛअवोभिः रक्षणैः सह ᵛवाजिनीवसू अन्नवसू[3] ॥

को वामद्य पुरूणामा वव्ने मर्त्यानाम्।

को विप्रो विप्रवाहसा को यज्ञैर्वाजिनीवसू ॥ ७ ॥

कः। वाम्। अद्य। पुरूणाम्। आ। वव्ने। मर्त्यानाम्।

कः। विप्रः। विप्रऽवाहसा। कः। यज्ञैः। वाजिनीवसू इति वाजिनीऽवसू ॥ ७ ॥

हे ᵛवाजिनीवसू अन्नवसू ᵛवां युवाम् ᵛअद्य अस्मिन् दिने ᵛपुरूणां ᵛमर्त्यानां मध्ये ᵛकः ᵛआ ᵛवव्ने सर्वतो भजति। हे ᵛविप्रवाहसा विप्रैर्मेधाविभिर्वहनीयौ ᵛको ᵛविप्रः मेधावी वव्ने। ᵛकः यजमानः ᵛयज्ञैः वव्ने। अत्यन्तविलम्बमसहमानः[4] पुनःपुनर्ब्रूते ॥

आ वां रथो रथानां येष्ठो यात्वश्विना।

पुरू चिदस्मयुस्तिर आङ्गूषो मर्त्येष्वा ॥ ८ ॥

आ। वाम्। रथः। रथानाम्। येष्ठः। यातु। अश्विना।

पुरु। चित्। अस्मऽयुः। तिरः। आङ्गूषः। मर्त्येषु। आ ॥ ८ ॥

---

१. ख-च-झ-ण-न-भ-र– 'पुनः' नास्ति। २. ख-च-झ-ण-त-न-भ-र– आ कमनीयं रूपम्। ३. ख-च-झ-ण-त-न-भ-र– 'अन्नवसू' नास्ति। ४. त–°सहमानः सन्।

हे vअश्विना अश्विनौ vवां युवयोः vरथः एको रथः vरथानां vप्रेष्ठः इतरदेवरथानां[1] मध्ये अतिशयेन गन्ता सन् vआ vयातु । कीदृशः सन् । vपुरू vचित् बहूनपि[2] अस्मद्विरोधिनः vतिरः हिंसकः तिरस्कर्ता वा vअस्मयुः अस्मान् कामयमानः vमर्त्येषु सर्वेषु यजमानेषु मध्ये vआङ्गूषः स्तुत्यः । आकारः पूरणः । अथवा आङ्गूषः[3] स्तोमः । स्तवोऽस्मयुरस्मान् बलैर्योक्तुं कामयमानो मर्त्येषु मर्त्यैरस्मदीयैर्ऋत्विग्भिः प्रेरितः सन् । उक्तलक्षणाश्विनो रथस्य वा स्तुतिः आ सर्वतः पुरू चित् पुरूण्यपि शत्रुबलानि तिरः तिरस्करोति ॥

**शमू षु वां मधूयुवास्माकमस्तु चर्कृतिः ।**
**अर्वाचीना विचेतसा विभिः श्येनेव दीयतम् ॥ ९ ॥**

शम् । ऊँ इति । सु । वाम् । मधुऽयुवा । अस्माकम् । अस्तु । चर्कृतिः ।
अर्वाचीना । विऽचेतसा । विऽभिः । श्येनाऽइव । दीयतम् ॥ ९ ॥

हे vमधूयुवा मधुमन्तौ vवां युवाभ्यां vचर्कृतिः पुनःपुनः करणं युवाभ्यामर्थाय पुनःपुनः क्रियमाणं स्तोत्रं युवयोरागमनस्याभ्यासो वा vअस्माकं vसु सुष्ठु vशमु सुखकरमेव vअस्तु भवतु । हे vअर्वाचीना अर्वागस्मदभिमुखाञ्चनौ हे vविचेतसा विशिष्टप्रज्ञौ vश्येनेव श्येनाविव vविभिः गन्तृभिरश्वैः vदीयतं गच्छतम् ॥

**अश्विना यद्ध कर्हि चिच्छुश्रूयातमिमं हवम् ।**
**वस्वीरू षु वां भुजः पृञ्चन्ति सु वां पृचः ॥ १० ॥**

अश्विना । यत् । ह । कर्हि । चित् । शुश्रूयातम् । इमम् । हवम् ।
वस्वीः । ऊँ इति । सु । वाम् । भुजः । पृञ्चन्ति । सु । वाम् । पृचः ॥ १० ॥

हे vअश्विना युवां vयद्ध यत्र vकर्हि vचित् स्थितवन्तौ भवथः तत्र vइमं मे vहवम् आह्वानं vशुश्रूयातं शृणुतम् । श्रुत्वागच्छतमित्यर्थः । किमर्थमित्युच्यते । vवस्वीः प्रशस्याः vभुजः धनानि हविर्लक्षणानि vसु सुष्ठु vवां युवां vपृञ्चन्ति मिश्रयन्ति प्राप्नुवन्ति । vउ इति पूरणः । कीदृश्यो भुजः । vवां युवां vसु सुष्ठु vपृचः संपर्चनाः । युवां प्राप्तुं कामयमाना इत्यर्थः । अथवा सु पृचः सुसंपर्चनाः स्तोतारो वस्वीर्भुजो वां सुष्ठु पृञ्चन्ति संपर्चयन्ति ॥ ॥ १४ ॥

'प्रति प्रियतमम्' इति नवर्चं तृतीयं सूक्तम् । अवस्युर्नामात्रेय ऋषिः । पङ्क्तिश्छन्दः । अश्विनौ देवता । अनुक्रान्तं च—'प्रति नवावस्युः पाङ्क्तम्' इति । प्रातरनुवाके आश्विने क्रतौ पाङ्क्ते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । 'प्रति प्रियतममिति पाङ्क्तम्' ( आश्व. श्रौ. ४. १५ ) इति हि सूत्रितम्[4] ॥

---

१. ख-च-झ-ण-न-भ-र-इतरदेशरथानाम् । २. ख-च-झ-ण-त-न-भ-र-श-बहून्यपि । ३. ख-च-झ-ण-न-भ-र-'आङ्गूषः' नास्ति । ४. न-सूत्रितम् । प्रातरनुवाकन्यायेनेति च प्रतिप्रियतममित्युपसंतनुयादिति च ।

प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवम् ॥ १ ॥

प्रति । प्रियऽतमम् । रथम् । वृषणम् । वसुऽवाहनम् ।
स्तोता । वाम् । अश्विनौ । ऋषिः । स्तोमेन । प्रति । भूषति ।
माध्वी इति । मम । श्रुतम् । हवम् ॥ १ ॥

हे ᵛअश्विनौ । एकः प्रतिशब्दोऽनुवादः । ᵛवां युवयोः ᵛप्रियतमं ᵛरथं ᵛस्तोता ᵛऋषिः अवस्युः ᵛस्तोमेन ᵛप्रति ᵛभूषति अलंकरोति । कीदृशं रथम् । ᵛवृषणं वर्षितारं फलानां ᵛवसुवाहनं धनानां वाहकम् । ईदृशं रथमागमनाय स्तौतीत्यर्थः । तस्मात् हे ᵛमाध्वी मधुविद्यावेदितारौ ᵛमम ᵛहवम् आह्वानं ᵛश्रुतं शृणुतम् ॥

अत्यायातमश्विना तिरो विश्वा अहं सना ।
दस्रा हिरण्यवर्तनी सुषुम्ना सिन्धुवाहसा माध्वी मम श्रुतं हवम् ॥ २ ॥

अतिऽआयातम् । अश्विना । तिरः । विश्वाः । अहम् । सना ।
दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । सुऽसुम्ना । सिन्धुऽवाहसा ।
माध्वी इति । मम । श्रुतम् । हवम् ॥ २ ॥

हे ᵛअश्विना ᵛअत्यायातम् । सर्वान् यजमानान् अतिक्रम्यागच्छतम् । यथा ᵛअहम् ऋषिः ᵛविश्वाः सर्वा अस्मद्विरोधिप्रजाः[1] ᵛसना सदा तिरस्करोमि । अथवाहं तिरः । ‘ तिरः सत इति प्राप्तस्य ’ ( निरु. ३. २० ) इति निरुक्तम् । प्राप्ता विश्वाः सर्वाः क्रिया युष्मदीयाः अनुतिष्ठेयमित्यर्थः । सना सनातनौ ᵛदस्रा शत्रूणामुपक्षपयितारौ ᵛहिरण्यवर्तनी हिरण्यरथौ ᵛसुषुम्ना सुधनौ ᵛसिन्धुवाहसा नदीनां प्रवाहयितारौ वृष्टिप्रेरणेन । तादृशौ युवामत्यायातम् ॥

आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।
रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतं हवम् ॥ ३ ॥

आ । नः । रत्नानि । बिभ्रतौ । अश्विना । गच्छतम् । युवम् ।
रुद्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । जुषाणा । वाजिनीवसू इति वाजिनीऽवसू ।
माध्वी इति । मम । श्रुतम् । हवम् ॥ ३ ॥

---

१. ख-च-ण-भ- °प्रज्ञाः ।

हे अश्विना नः अस्मभ्यं रत्नानि रमणीयानि धनानि बिभ्रतौ धारयन्तौ युवं युवां नोऽस्मान् वा आ गच्छतम् । हे रुद्रा रुद्रपुत्रौ स्तुत्यौ वा हे वाजिनीवसू वाजिनधनौ युवां हिरण्यवर्तनी हिरण्यरथौ जुषाणा यज्ञं सेवमानौ सन्तौ आ गच्छतमिति । माध्वी इत्यादि गतम् ॥

सुष्टुभो वां वृषण्वसू रथे वाणीच्याहिता ।

उत वां ककुहो मृगः पृक्षः कृणोति वापुषो माध्वी मम श्रुतं हवम् ॥ ४ ॥

सुऽस्तुभः । वाम् । वृषण्वसू इति वृषण्ऽवसू । रथे । वाणीची । आऽहिता ।

उत । वाम् । ककुहः । मृगः । पृक्षः । कृणोति । वापुषः ।

माध्वी इति । मम । श्रुतम् । हवम् ॥ ४ ॥

हे[1] वृषण्वसू वर्षधनौ वर्षितारौ वा वसूनां[1] हे अश्विनौ सुष्टुभः सुस्तोतुर्मम वाणीची वाग्रूपा स्तुतिः वां युवयोः रथे आहिता स्थापिता । अस्माभिः कृतेत्यर्थः । उत अपि च वां युवाभ्यां ककुहः महान् मृगः[2] मृगयिता[2] वापुषः वपुष्मान् यजमानः पृक्षः अन्नं हविः कृणोति करोति । तस्मात् मम हवं श्रुतम् इति ॥

बोधिन्मनसा रथ्येषिरा हवनश्रुता ।

विभिश्च्यवानमश्विना नि याथो अद्वयाविनं माध्वी मम श्रुतं हवम् ॥ ५ ॥

बोधित्ऽमनसा । रथ्या । इषिरा । हवनऽश्रुता ।

विऽभिः । च्यवानम् । अश्विना । नि । याथः । अद्वयाविनम् ।

माध्वी इति । मम । श्रुतम् । हवम् ॥ ५ ॥

हे अश्विना बोधिन्मनसा बुध्यमानमनस्कौ रथ्या रथस्वामिनौ इषिरा शीघ्रगन्तारौ सर्वैर्गन्तव्यौ वा हवनश्रुता हवनस्य स्तुतेः श्रोतारौ युवां विभिः[3] अश्वैः[3] च्यवानम् ऋषिम् अद्वयाविनं मायारहितं[4] नि याथः । यथा तमृषिं प्राप्तवन्तौ तद्वत् मां प्रति पथि[5] नि याथः नितरामागच्छतम्[6] । ‘ प्र च्यवानाज्जुजुरुषो वव्रिम् ’ ( ऋ. सं. ५. ७४. ५ ) इति ह्युक्तम् ॥　　॥ १५ ॥

---

१. ख-च-झ-ण-न-भ-र– ‘ हे...वसूनां ’ नास्ति ; त–हे वर्षितारौ वा वसूनाम् ।　२. ख-च-झ-ण-त-भ-र– ययिर्गन्ता ; ग-घ-ज-श–मृगो मृगयिता ययिर्गन्ता ; न–मृगो ययिर्गन्ता ।　३. ख-च-झ-ण-त-न-भ-र–‘ विभिरश्वैः ’ नास्ति ।　४. ख-च-झ-ण-त-न-भ-र–‘ मायारहितं ’ नास्ति ।　५. त–मयि ।　६. ख-च-झ-ण-त-न-भ-श– °गच्छतम् । माध्वी इत्यादि गतम् ।

आ वां नरा मनोयुजोऽश्वासः प्रुषितप्सवः ।
वयो वहन्तु पीतये सह सुम्नेभिरश्विना माध्वी मम श्रुतं हवम् ॥ ६ ॥

आ । वाम् । नरा । मनःऽयुजः । अश्वासः । प्रुषितऽप्सवः ।
वयः । वहन्तु । पीतये । सह । सुम्नेभिः । अश्विना ।
माध्वी इति । मम । श्रुतम् । हवम् ॥ ६ ॥

हे ᵛनरा कर्मणां नेतारौ हे ᵛअश्विना अश्विनौ[1] ᵛवां युवां ᵛमनोयुजः मनोमात्रेण युज्यमानाः । सुशिक्षिता इत्यर्थः । ᵛप्रुषितप्सवः विचित्ररूपाः ᵛवयः शीघ्रगन्तारः ᵛअश्वासः अश्वाः ᵛआ ᵛवहन्तु ᵛपीतये सोमपानाय । ᵛसुम्नेभिः ᵛसह अस्मभ्यं देयैः सुखैस्तत्साधनैर्धनादिभिर्वा सह वहन्तु ॥

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवम् ॥ ७ ॥

अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि । वेनतम् ।
तिरः । चित् । अर्यऽया । परि । वर्तिः । यातम् । अदाभ्या ।
माध्वी इति । मम । श्रुतम् । हवम् ॥ ७ ॥

हे ᵛअश्विनौ ᵛइह अस्मिन् यज्ञे ᵛआ ᵛगच्छतम् । हे ᵛनासत्यौ ᵛमा ᵛवि ᵛवेनतं विगतकामौ मा भवतम् । 'वेनतिः कान्तिकर्मा' ( नि. १०. ३८ ) । हे ᵛअदाभ्या अहिंस्यौ पूज्यौ ᵛअर्यया अर्यौ स्वामिनौ युवाम् ॥ 'सुपां सुलुक्°' इत्यादिना सुपो याजादेशः ॥ ᵛतिरश्चित् अन्तर्हितात् दूरदेशादपि युवां ᵛवर्तिः अस्मद्यज्ञगृहं ᵛपरि ᵛयातम् आगच्छतम् ॥

अस्मिन्यज्ञे अदाभ्या जरितारं शुभस्पती ।
अवस्युमश्विना युवं गृणन्तमुप भूषथो माध्वी मम श्रुतं हवम् ॥ ८ ॥

अस्मिन् । यज्ञे । अदाभ्या । जरितारम् । शुभः । पती इति ।
अवस्युम् । अश्विना । युवम् । गृणन्तम् । उप । भूषथः ।
माध्वी इति । मम । श्रुतम् । हवम् ॥ ८ ॥

---

१. ख-च-झ-ण-न-भ-र-श-' अश्विनौ ' नास्ति ।

हे ᵛअदाभ्या अहिंस्यौ हे ᵛशुभस्पती उदकस्य स्वामिनौ ᵛअश्विना अश्विनौ[1] ᵛयुवं युवाम् ᵛअस्मिन्[2] ᵛयज्ञे[2] ᵛजरितारं स्तोतारम् ᵛअवस्युं ᵛगृणन्तं स्तुवन्तं माम् ᵛउप ᵛभूषथः उपप्राप्नुतम् ॥

अभू॑दु॒षा रुश॑त्पशु॒राग्निर॑धाय्यृ॒त्वियः॑ ।
अयो॑जि वां वृषण्वसू॒ रथो॑ दस्रा॒वम॑र्त्यो॒ माध्वी॒ मम॑ श्रुतं॒ हव॑म् ॥ ९ ॥

अभू॑त् । उ॒षाः । रुश॑त्ऽपशुः । आ । अ॒ग्निः । अ॒धा॒यि॒ । ऋ॒त्वियः॑ ।
अयो॑जि । वा॒म् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । रथः॑ । द॒स्रौ॒ । अम॑र्त्यः ।
माध्वी॒ इति॑ । मम॑ । श्रु॒त॒म् । हव॑म् ॥ ९ ॥

ᵛउषाः व्युष्टिः ᵛअभूत् । अग्निः च ᵛरुशत्पशुः दीप्तपशुमान् । प्रकाशितहविरित्यर्थः । अथवा पशवः किरणाः । रुशद्रश्मिः सन् ᵛअधायि वेद्यामधीयत[3] अग्निः आहवनीयः ᵛऋत्वियः ऋतौ काले भवः । हे ᵛवृषण्वसू प्रदत्तधनौ हे ᵛदस्रौ ᵛवां युवयोः ᵛअमर्त्यः अमरणधर्मा ध्रुवः ᵛरथः ᵛअयोजि । अश्वैर्युक्तो भवत्वित्यर्थः ॥ ' छन्दसि लुङ्लङ्लिटः ' इत्यनेकेष्वर्थेषु लुङ् भवति । इह प्रार्थनायाम् । माध्वी इत्यादि गतम् ॥ ॥ १६ ॥

' आ भात्यग्निः ' इति पञ्चर्चं चतुर्थं सूक्तं भौमस्यात्रेरार्षं त्रैष्टुभमाश्विनम् । अत्रानुक्रमणिका— ' आ भाति पञ्चात्रिः ' इति । प्रवर्ग्येऽभिष्टवार्थमिदं सूक्तम् । सूत्रितं च—' आ भात्यग्निर्ग्रावाणेव ' ( आश्व. श्रौ. ४. ६ ) इति । प्रातरनुवाके आश्विने क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदमादिके द्वे सूक्ते । सूत्र्यते हि—' आ भात्यग्निरिति सूक्ते ' ( आश्व. श्रौ. ४. १५ ) इति । अप्तोर्यामे होतुरतिरिक्तोक्थ्ये इदं सूक्तम् । सूत्रितं च—' आ भात्यग्निः क्षेत्रस्य पतिना वयमिति परिधानीया ' ( आश्व. श्रौ. ९. ११ ) इति ॥

आ भा॑त्य॒ग्निरु॒षसा॒मनी॑क॒मुद्विप्रा॑णां देव॒या वाचो॑ अस्थुः ।
अ॒र्वाञ्चा॑ नू॒नं र॑थ्ये॒ह या॑तं पीपि॒वांस॑मश्विना घ॒र्मम॑च्छ ॥ १ ॥

आ । भा॒ति॒ । अ॒ग्निः । उ॒षसा॑म् । अनी॑कम् । उत् । विप्रा॑णाम् । दे॒व॒ऽयाः । वाचः॑ । अ॒स्थुः॒ ।
अ॒र्वाञ्चा॑ । नू॒नम् । र॒थ्या॒ । इ॒ह । या॒त॒म् । पी॒पि॒ऽवांस॑म् । अ॒श्वि॒ना॒ । घ॒र्मम् । अच्छ॑ ॥ १ ॥

ᵛउषसामनीकम् अनीकभूतः । अनीकं मुखम् । उषसि प्रबुध्यमान इत्यर्थः । तादृशः ᵛअग्निः ᵛआ ᵛभाति दीप्यते । यद्वा । उषसां मुखम् आ भाति दीपयति । उषःकाले ह्यग्नयः प्रतिबोध्यन्ते । किंच ᵛविप्राणां मेधाविनां स्तोतॄणां ᵛदेवयाः देवकामाः ᵛवाचः स्तोत्राणि ᵛउत् ᵛअस्थुः उत्तिष्ठन्ति[4] ।

---

१. ग-घ-ज-झ- ' अश्विनौ ' नास्ति । २. ख-च-झ-ण-त-न-भ-र- ' अस्मिन् यज्ञे ' नास्ति । ३. ख-च-ण-न-वेद्यामाधीयते ; ग-घ-ज-झ-भ-र-वेद्यामधीयते । ४. ख-च-झ-ण-न-भ-र - ' उत्तिष्ठन्ति ' नास्ति ।

यस्मादेवं तस्मात् हे ᵛरथ्या रथस्वामिनावश्विनौ ᵛअर्वाञ्चा अस्मदभिमुखाञ्चनौ ᵛनूनम् अद्यास्मिन् यागदिने ᵛइह आ ᵛयातम् । कं प्रति । ᵛपीपिवांसं स्वाङ्गैः[1] परिवृढं ᵛघर्मं प्रदीप्तं यज्ञम् । यद्वा । पीपिवांसमाप्यायितं वसतीवरीभिः क्षरद्रूपं[1] सोमरसम् । अथवा घृतादिना पीपिवांसं घर्मं प्रवर्ग्यम् ᵛअच्छ अभिलक्ष्य इह यातम्[2] । प्रवर्ग्येऽस्य सूक्तस्य विनियोगः ॥

न सँस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठा ॥ २ ॥

न । सम्ऽकृतम् । प्र । मिमीतः । गमिष्ठा । अन्ति । नूनम् । अश्विना । उपऽस्तुता । इह ।
दिवा । अभिऽपित्वे । अवसा । आऽगमिष्ठा । प्रति । अवर्तिम् । दाशुषे । शम्ऽभविष्ठा ॥२॥

अश्विनौ ᵛसंस्कृतं घर्मं ᵛन ᵛप्र ᵛमिमीतः न हिंस्ताम्[3] । किंतु ᵛअन्ति अन्तिके घर्मसमीपे ᵛनूनम् इदानीम् ᵛइह यज्ञे ᵛगमिष्ठा गन्तृतमौ[4] ᵛअश्विना अश्विनौ ᵛउपस्तुता उपस्तुतौ भवतः[5] । ᵛदिवाभिपित्वे दिवसस्याभिपतने प्रातःकाले ᵛअवसा रक्षणेन[6] सह ᵛआगमिष्ठा आगन्तृतमौ[7] । ᵛअवर्तिं ᵛप्रति[8] द्वन्द्वभूतौ । वर्तिर्जीवनम् । तदभावोऽवर्तिः । तद्रहितमन्नं यथा भवति तथागन्तृतमौ । आगत्य च[8] ᵛदाशुषे हविर्दत्तवते यजमानाय ᵛशंभविष्ठा सुखस्य भावयितारौ भवताम्[9] ॥

उता यातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥ ३ ॥

उत । आ । यातम् । सम्ऽगवे । प्रातः । अह्नः । मध्यंदिने । उत्ऽइता । सूर्यस्य ।
दिवा । नक्तम् । अवसा । शम्ऽतमेन । न । इदानीम् । पीतिः । अश्विना । आ । ततान ॥३॥

अह्नो द्वेधा त्रेधा पञ्चधा पञ्चदशधा[10] समानाः[10] विभागाः सन्ति । इह पञ्चधा विभाग आत्तः । ᵛउत अपि च ᵛआ ᵛयातम् आगच्छतम् । कदा ᵛसंगवे संगवकाले । संगच्छन्ते गावो दोहभूमिं[11] यस्मिन् काले स संगवः । रात्र्यपरकाले हि गावो वने हिमतृणानि भक्षयित्वा[12] पुनर्दोहाय संगवे प्रतिनिवर्तन्ते । तथा ᵛप्रातः प्रातःकालेऽपि । तथा ᵛमध्यंदिने ᵛअह्नः मध्यकाले ᵛसूर्यस्य ᵛउदिता उदितौ अभ्युदये अत्यन्तप्रवृद्धसमये अपराह्णे इत्यर्थः । एतत् सायाह्नस्याप्युपलक्षणम् । न केवलम्

---

१. ख-च-झ-ण-न-भ-र–आप्यायितं घर्मं क्षरद्रूपम् । २. त– यागे आयातम् । ३. ख-च-झ-ण-त-न-भ-र–हिंस्तम् । ४. ख-च-झ-ण-त-न-भ-र–गन्तृतमौ युवाम् । ५. ख-च-झ-ण-त-न-भ-र–भवतम् । ६. त–रक्षणेनान्नेन च । ७. त–आगन्तृतमौ । नाशयन्ताविति शेषः । अथवा । ८. ख-झ-भ-र –' प्रति...च ' नास्ति ; न–दारिद्र्यं नाशयन्तौ । ९. ख-च-झ-ण-न-भ-र –भवतां ' नास्ति ; ग-घ-ज-त–भवतम् । १०. त–पञ्चदशधेतिमाना ; भ–पञ्चदशधात्मना । ११. ग-घ-ज– ' दोहभूमिं ' नास्ति । १२. त–भक्षयन्ति भक्षयित्वा च ।

उक्तेष्वेव कालेषु किं[1] तर्हि[?] ᵛदिवा ᵛनक्तं सर्वदा ᵛशंतमेन सुखतमेन ᵛअवसा रक्षणेन हविषा वा निमित्तेन आ[2] यातम् । किमर्थमागम्यते[3] पूर्वमेवान्यैर्देवैः स्वीकृतत्वात् नेत्याह । ᵛइदानीम् अपि ᵛपीतिः इतरदेवानां पानं ᵛन ᵛआ ᵛततान न तनोति ᵛअश्विना अश्विनौ विहायेति शेषः ॥

**इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।**

**आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्ता ॥ ४ ॥**

इदम् । हि । वाम् । प्रऽदिवि । स्थानम् । ओकः । इमे । गृहाः । अश्विना । इदम् । दुरोणम् ।

आ । नः । दिवः । बृहतः । पर्वतात् । आ । अत्ऽभ्यः ।

यातम् । इषम् । ऊर्जम् । वहन्ता ॥ ४ ॥

हे ᵛअश्विना ᵛवां युवयोः ᵛप्रदिवि पुराणम् ᵛइदं[4] ᵛहि[4] ᵛओकः निवासयोग्यं ᵛस्थानम् उत्तरवेद्याख्यम् । अथ सौमिकवेद्यभिप्रायेणाह । ᵛइमे ᵛगृहाः प्राचीनवंशादयः । ᵛइदं ᵛदुरोणं देवयजनगृहम् । ᵛनः अस्मदर्थं ᵛदिवः द्युलोकात् ᵛबृहतः ᵛपर्वतात् पर्ववतो मेघात् ᵛअद्भ्यः अपां कारणादन्तरिक्षात् ᵛआ ᵛयातम् आगच्छतम् । किं तूष्णीम् । न । ᵛइषमूर्जं च अन्नं बलं च । बलसाधनमन्नं सारभूतमित्यर्थः । तादृशं ᵛवहन्ता वहन्तौ ॥

**समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।**

**आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५ ॥**

सम् । अश्विनोः । अवसा । नूतनेन । मयःऽभुवा । सुऽप्रनीती । गमेम ।

आ । नः । रयिम् । वहतम् । आ । उत । वीरान् । आ । विश्वानि । अमृता । सौभगानि ॥५॥

वयं ᵛसं ᵛगमेम संगच्छेम ᵛअश्विनोः ᵛनूतनेन ᵛअवसा अनन्यकृतेन रक्षणेन ᵛमयोभुवा सुखस्य भावयित्र्या ᵛसुप्रणीती सुप्रणीत्या सुष्ठ्वागमनेन च । अपि वैते उभे अवसो विशेषणे । उक्तलक्षणेन सं गमेम । ᵛनः अस्मभ्यं ᵛरयिम् ᵛआ ᵛवहतम् । ᵛउत ᵛवीरान् पुत्रादीन् ᵛआ वहतम् । हे ᵛअमृता अमरणधर्माणौ ᵛविश्वानि[5] ᵛसौभगानि सुभगत्वानि ᵛआ वहतम् ॥ ॥ १७ ॥

‘ प्रातर्यावाणा ’ इति पञ्चर्चं पञ्चमं सूक्तमात्रेयं त्रैष्टुभमाश्विनम् । ‘ प्रातर्यावाणा ’ इति ह्यनुक्रान्तम् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः । अप्तोर्यामे मैत्रावरुणातिरिक्तोक्थ्ये इदमेव शस्यम् । तथा च सूत्रितं—‘ प्रातर्यावाणा क्षेत्रस्य पते मधुमन्तमूर्मिम् ’ ( आश्व. श्रौ. ९. ११ ) इति ॥

---

१. ख-च-ण–नेत्याह ; झ-भ-र–तेन्याहावा ; न –‘ किं तर्हि ’ नास्ति। २. ख-च-झ-ण-न-भ-र – ‘ आ ’ नास्ति। ३. ख-च-झ-ण-न-भ-र–किमर्थं गम्यते। ४. ख-च-झ-ण-त-न-भ-र-श – ‘ इदं हि ’ नास्ति। ५. त–विश्वा विश्वानि।

**प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।**
**प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥ १ ॥**

प्रातःऽयावाना । प्रथमा । यजध्वम् । पुरा । गृध्रात् । अररुषः । पिबातः ।

प्रातः । हि । यज्ञम् । अश्विना । दधाते इति । प्र । शंसन्ति । कवयः । पूर्वऽभाजः ॥ १ ॥

हे मदीया ऋत्विजः vप्रातर्यावाणा प्रातरेव यज्ञं[1] गन्तारौ[1] vप्रथमा अत एवेतरेभ्यो देवेभ्यः पूर्वभाविनौ प्रकृष्टतमौ वा अश्विनौ vयजध्वम् । किमर्थं प्रथमयागनियोगः[2] । उच्यते । vगृध्रात् अभिकाङ्क्षतः vअररुषः अदातुः रक्षःप्रभृतेः vपुरा पूर्वं vपिबातः पिबताम् । अनागतौ कथं यष्टुं शक्याविल्यत आह । vअश्विना अश्विनौ vप्रातर्हि vयज्ञं vदधाते धारयतः संभजतः । vपूर्वभाजः पूर्वकालीनाः vकवयः अनूचाना ऋषयः प्रातरेवैतौ vप्र vशंसन्ति । ' ये वा अनूचानास्ते कवयः ' ( ऐ. ब्रा. २. ३८ ) इति हि निगमः ॥

**प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।**
**उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ॥ २ ॥**

प्रातः । यजध्वम् । अश्विना । हिनोत । न । सायम् । अस्ति । देवऽयाः । अजुष्टम् ।

उत । अन्यः । अस्मत् । यजते । वि । च । आवः । पूर्वःऽपूर्वः । यजमानः । वनीयान् ॥२॥

हे मदीयाः पुरुषाः vअश्विना अश्विनौ vप्रातः प्रातरेव vयजध्वं पूजयध्वं स्तुध्वम् । vहिनोत प्रहिणुत हवींषि । vसायं सायंकाले हविः vदेवयाः देवगामि vन vअस्ति न विद्यते । देवा न स्वीकुर्वन्तीत्यर्थः । vअजुष्टम् असेव्यं तद्भवति । ' पूर्वाह्णो वै देवानाम् ' इति हि श्रुतिः । vउत[3] vअस्मत् अस्मत्तः vअन्यः कोऽपि vयजते यजेत सोमेन vवि vचावः वितर्पयेच्च हविषा । अतोऽस्मास्वन्येषु च मध्ये vपूर्वःपूर्वो vयजमानः यः पूर्वःपूर्वो यष्टा भवति सः vवनीयान् देवानां संभजनीयः संभाव्यो भवति ॥

' हिरण्यत्वक् ' इत्येषाश्विने पशौ हविषो याज्या । ' हिरण्यत्वङ्मधुवर्णो घृतस्नुरभि क्रत्वेन्द्र भूरध ज्मन् ' ( आश्व. श्रौ. ३. ८ ) इति हि सूत्रितम् ॥

**हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम् ।**
**मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥ ३ ॥**

हिरण्यऽत्वक् । मधुऽवर्णः । घृतऽस्नुः । पृक्षः । वहन् । आ । रथः । वर्तते । वाम् ।

मनःऽजवाः । अश्विना । वातऽरंहाः । येन । अतिऽयाथः । दुःऽइतानि । विश्वा ॥ ३ ॥

---

१. झ-भ-र—यज्ञगन्तारौ । २. ख-च-ण-भ—प्रथमं यागविनियोगः ; झ-न—प्रथमयागविनियोगः ।
३. ख-च-झ-ण-न-भ-र —' उत ' नास्ति ।

वां युवयोः रथः पृक्षः अन्नममृतं वहन् आ वर्तते अस्मदभिमुखमागच्छति । कीदृशो रथः । हिरण्यत्वक् हिरण्याच्छादितरूपः[1] हिरण्यावृतः मधुवर्णः मनोहरवर्णः घृतस्नुः उदकस्य प्रस्नवनः मनोजवाः मनोवेगः वातरंहाः वातसदृशवेगः । हे अश्विना येन रथेन विश्वा सर्वाणि दुरितानि दुर्गमनान् मार्गान् अतियाथः अतिक्रम्य गच्छथः ॥

यो भूयि॑ष्ठं॒ नास॑त्याभ्यां वि॒वेष॒ चनि॑ष्ठं पि॒त्वो रर॑ते विभा॒गे ।
स तो॒कम॑स्य पीपर॒च्छमी॑भि॒रनू॑र्ध्वभासः स॒दमि॑त्तुतु॒र्यात् ॥ ४ ॥

यः । भूयि॑ष्ठम् । नास॑त्याभ्याम् । वि॒वेष॑ । चनि॑ष्ठम् । पि॒त्वः । रर॑ते । वि॒ऽभा॒गे ।
सः । तो॒कम् । अ॒स्य॒ । पी॒प॒र॒त् । शमी॑भिः । अनू॑र्ध्वऽभासः । स॒दम् । इ॒त् । तु॒तु॒र्या॒त् ॥४॥

यः यजमानः विभागे हविर्विभागवति[2] यागे नासत्याभ्याम् अश्विभ्यां भूयिष्ठं चनिष्ठम् । 'चन इत्यन्ननाम' ( निरु. ६. १६ )। बह्वन्नं कर्म विवेष करोति । पित्वः ॥ कर्मणि षष्ठी ॥ अन्नं च ररते ददाति सः यजमानः अस्य आत्मन एव तोकं पुत्रं पीपरत् पालयेत्[3] शमीभिः कर्मभिः । अनूर्ध्वभासः अनुन्नततेजस्कान् । यद्वा । ऊर्ध्वभासोऽग्नयः । अग्निरहितानयष्टॄन् सदमित् सदव तुतुर्यात् हिंस्यात् ॥

सम॒श्विनो॒रव॑सा॒ नूत॑नेन मयो॒भुवा॑ सु॒प्रणी॑ती गमेम ।
आ नो॑ र॒यिं व॑हत॒मोत वी॒राना विश्वा॑न्यमृता॒ सौभ॑गानि ॥ ५ ॥

सम् । अ॒श्विनोः॑ । अव॑सा । नूत॑नेन । म॒यः॒ऽभुवा॑ । सु॒ऽप्रनी॑ती । ग॒मे॒म॒ ।
आ । नः॒ । र॒यिम् । व॒ह॒त॒म् । आ । उ॒त । वी॒रान् । आ । विश्वा॑नि । अ॒मृ॒ता॒ । सौभ॑गानि ॥५॥

'समश्विनोः' इति पञ्चमी गता* ॥  ॥ १८ ॥

'अश्विनावेह' इति नवर्चं षष्ठं सूक्तम् । अत्रानुक्रमणिका—'अश्विनौ नव सप्तवध्रिरुष्णिगादि चतुर्थी त्रिष्टुप्पञ्चानुष्टुभः' इति । सप्तवध्रिर्नामात्रेय ऋषिः । आदितस्तिस्र उष्णिहश्चतुर्थी त्रिष्टुप् शिष्टाः पञ्चानुष्टुभः । प्रातरनुवाक आश्विने क्रतौ औष्णिहे छन्दसि आश्विने शस्त्रे चाद्यस्तृचो विनियुक्तः । सूत्रितं च—'अश्विना वर्तिरस्मदाश्विनावेह गच्छतमिति तृचौ' ( आश्व. श्रौ. ४. १५ ) इति । दशरात्रे तृतीयेऽहनि प्रउगशस्त्रेऽयमाश्विनस्तृचः । सूत्रितं च—'अश्विनावेह गच्छतमा याह्यद्रिभिः सुतम्' ( आश्व. श्रौ. ७. १० ) इति ॥

---

१. ख-च-ण-भ-हिरण्यवद्धितरूपः । २. त-हविर्भागवति । ३. ख-च-ण-पालयत ; झ-त-न-भ-र-पालयत । * ख-च-ण-पुस्तकेष्वस्य मन्त्रस्य संपूर्णं भाष्यं विद्यते (पूर्वसूक्तान्ते द्रष्टव्यम् )।

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
हंसाविव पततमा सुताँ उप ॥ १ ॥

अश्विनौ । आ । इह । गच्छतम् । नासत्या । मा । वि । वेनतम् ।
हंसौऽइव । पततम् । आ । सुतान् । उप ॥ १ ॥

हे अश्विनौ इह अस्मिन् यागे आ गच्छतम् । हे नासत्या मा वि वेनतम् । वेनतिः कान्तिकर्मा । मा विकामौ भवतम् । निःस्पृहावकामौ वा न भवतमित्यर्थः । हंसाविव तौ यथा निर्मलोदकमागच्छतस्तद्वत् सुतान् अभिषुतान् सोमान् उप आ पततम् उपागच्छतम् ॥

अश्विना हरिणाविव गौराविवानु यवसम् । हंसाविव पततमा सुताँ उप ॥२॥

अश्विना । हरिणौऽइव । गौरौऽइव । अनु । यवसम् ।
हंसौऽइव । पततम् । आ । सुतान् । उप ॥ २ ॥

हे अश्विनौ हरिणाविव गौराविव गौरमृगाविव च । तौ यथा यवसं[1] घासम्[1] अनु धावतः ताविव हंसाविव च सोममागच्छतम् ॥

अश्विना वाजिनीवसू जुषेथां यज्ञमिष्टये । हंसाविव पततमा सुताँ उप ॥३॥

अश्विना । वाजिनीवसू इति वाजिनीऽवसू । जुषेथाम् । यज्ञम् । इष्टये ।
हंसौऽइव । पततम् । आ । सुतान् । उप ॥ ३ ॥

हे वाजिनीवसू अन्नार्थं वासयितारौ अश्विना यज्ञम् अस्मदीयम् इष्टये अभीष्टायैषणाय वा जुषेथां सेवेथाम् ॥

अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा ।
श्येनस्य चिज्जवसा नूतनेनागच्छतमश्विना शंतमेन ॥ ४ ॥

अत्रिः । यत् । वाम् । अवऽरोहन् । ऋबीसम् । अजोहवीत् । नाधमानाऽइव । योषा ।
श्येनस्य । चित् । जवसा । नूतनेन । आ । अगच्छतम् । अश्विना । शम्ऽतमेन ॥ ४ ॥

---

१. ख-च-झ-ण-त-न-भ-र-यवसे घासाय ।

ᐯअत्रिः अस्मत्पिता ᐯयत् यदा ᐯवां युवाम् ᐯअजोहवीत् अस्तौषीत् ᐯनाधमाना याचमाना ᐯयोषा योषिदिव। सा यथा पतिं प्रीणयति तद्वत् कुर्वन् ᐯऋबीसं तुषाग्निमग्निकुण्डे क्षिप्तः सन् ᐯअवरोहन् विमुञ्चन् अजोहवीत्। ᐯश्येनस्य ᐯचिज्जवसा श्येनस्य गरुत्मत इव वेगेन। चिदित्युपमार्थे। अथवा श्येनस्य जवसा वेगेन ᐯनूतनेन प्रथमोत्पन्नेन सततं गच्छतः श्येनस्य प्रथमजवेन ᐯशंतमेन अस्माकं सुखतमेन च रथेन तं रक्षितुम् ᐯआगच्छतं हे ᐯअश्विना ॥ ॥ १९ ॥

अत्र ब्रुवन्तीतिहासं सप्तवध्रेः पुराविदः। भ्रातृव्याः पेटिकायां तमृषिं प्रक्षिप्य[1] यत्नतः ॥ मुद्रां कृत्वा गृहे स्वीये रक्षयित्वा न्यवेशयन्। न संगच्छेत भार्यां स्वां यथा रात्रौ तथा कृतम् ॥ प्रातःप्रातः समुद्घाट्य निर्मथिष्यन्ति तं मुनिम्। एवं स्थित्वा चिरं कालं पेटायां दुःखितः कृशः[2] ॥ उपायं चिन्तयामास निर्गमस्य चिरं मुनिः। हृदि निश्चित्य नासत्यावस्तौषीद्दृष्टमानसः ॥ तमश्विनौ समागत्य समुद्घाट्य च पेटिकाम्। उद्धृत्य तमृषिं शीघ्रं तावदृष्टौ[3] बभूवतुः ॥ स ऋषिर्भार्यया सार्धं रमित्वाथ[4] पुनर्भयात्। प्रातरेत्य पुनः पेटां प्रविश्य प्रागिव स्थितः। पेटानिवाससमये दृष्टवानृग्द्वयं तदा[5] ॥

**वि जिहीष्व वनस्पते योनिः सूष्यन्त्याइव ।**

**श्रुतं मे अश्विना हवं सप्तवध्रिं च मुञ्चतम् ॥ ५ ॥**

वि। जिहीष्व। वनस्पते। योनिः। सूष्यन्त्याःऽइव।

श्रुतम्। मे। अश्विना। हवम्। सप्तऽवध्रिम्। च। मुञ्चतम् ॥ ५ ॥

हे ᐯवनस्पते वनस्पतिविकाररूपे पेटिके ᐯवि ᐯजिहीष्व विगच्छ। विवृता भव। ᐯसूष्यन्त्याइव प्रसवोन्मुख्याः स्त्रियाः ᐯयोनिः इव भगो यथा विव्रियते तथा त्वमपि विवृता भव। तदर्थं हे ᐯअश्विना अश्विनौ ᐯमे ᐯहवम् आह्वानं ᐯश्रुतं श्रृणुतम्। श्रुत्वा च ᐯसप्तवध्रिं ᐯच मामृषिं ᐯमुञ्चतं मोचयतम् ॥

**भीताय नाधमानाय ऋषये सप्तवध्रये ।**

**मायाभिरश्विना युवं वृक्षं सं च वि चाचथः ॥ ६ ॥**

भीताय। नाधमानाय। ऋषये। सप्तऽवध्रये।

मायाभिः। अश्विना। युवम्। वृक्षम्। सम्। च। वि। च। अचथः ॥ ६ ॥

---

१. त-प्रक्षेप्य। २. ख-च-झ-ण-त-न-भ-र-शिशुः। ३. न-तावदृश्यौ ४. त-रमयित्वा। ५. ख-च-झ-ण-त-न-भ-र-तथा।

भीताय निर्गमात् बिभ्युषे नाधमानाय विमोक्षं याचमानाय सप्तवध्रये ऋषये हे अश्विना अश्विनौ युवं युवां मायाभिः वृक्षं वृक्षविकारां पेटिकां सं[1] चाचथः मम निर्गमार्थं संगच्छथः । वि अचथः च विभक्तं कुरुथः[1] ॥

यथा वातः पुष्करिणीं समिङ्गयति सर्वतः ।
एवा ते गर्भ एजतु निरैतु दशमास्यः ॥ ७ ॥

यथा । वातः । पुष्करिणीम् । सम्ऽइङ्गयति । सर्वतः ।
एव । ते । गर्भः । एजतु । निःऽऐतु । दशऽमास्यः ॥ ७ ॥

एतदादि ऋक्त्रयं गर्भस्राविण्युपनिषत् । एतदाद्यृक्त्रयेणासौ सप्तवध्रिः स्वयोषितः । गर्भिण्याः प्रसवायाशु स्तुतवानश्विनावृषिः ॥ यथा वातः पुष्करिणीं सरआदिकं सर्वतः समिङ्गयति सम्यक् चालयति एव एवं तव गर्भः एजतु कम्पताम्[2] इतस्ततः संचरतु । दशमास्यः दश मासान् गर्भे स्थितः निरैतु निर्गच्छतु ॥

यथा वातो यथा वनं यथा समुद्र एजति ।
एवा त्वं दशमास्य सहावेहि जरायुणा ॥ ८ ॥

यथा । वातः । यथा । वनम् । यथा । समुद्रः । एजति ।
एव । त्वम् । दशऽमास्य । सह । अव । इहि । जरायुणा ॥ ८ ॥

वातो यथा कम्पमानो वनं कम्पयति स्वयम् । यथा समुद्रश्चलति चाल्यते वाथ वायुना ॥ स्थित्वा दशैव मासांस्त्वं गर्भोल्बेन सुवेष्टितः । निर्गच्छ जठरान्मातुर्जरया सहितः पतेत् ॥

दश मासाञ्छशयानः कुमारो अधि मातरि ।
निरैतु जीवो अक्षतो जीवो जीवन्त्या अधि ॥ ९ ॥

दश । मासान् । शशयानः । कुमारः । अधि । मातरि ।
निःऽऐतु । जीवः । अक्षतः । जीवः । जीवन्त्याः । अधि ॥ ९ ॥

दश मासानुषित्वासौ जननीजठरे सुखम् । निर्गच्छतु सुखं जीवो जननी चापि जीवतु ॥ ॥ २० ॥

---

१. ख-च-झ-ण-न-भ-र-सं चाचथः संगच्छथः वि चाचथः विभक्तं कुरुथः ; त-श- सं चाचथः । प्रविष्टे मयि निर्गते वा प्रविष्टशंकापनोदार्थं व्यचथश्च विगमयतम् । मम निर्गमार्थं संगच्छथः व्यचथश्च विभक्तं कुरुथः । २. ख-च-झ-ण-न-भ-र-कम्पयताम् ।

'महे नो अद्य' इति दशर्चं सप्तमं सूक्तमात्रेयस्य सत्यश्रवस आर्षं पाङ्क्तमुषस्यम् । अनुक्रम्यते च — 'महे दश सत्यश्रवा उषस्यं तु पाङ्क्तम्' इति । प्रातरनुवाके उषस्ये क्रतौ पाङ्क्ते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्र्यते हि—'महे नो अद्येति पाङ्क्तम्' ( आश्व. श्रौ. ४. १४ ) इति ॥

महे नो अद्य बोधयोषो राये दिवित्मती ।

यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १ ॥

महे । नः । अद्य । बोधय । उषः । राये । दिवित्मती ।

यथा । चित् । नः । अबोधयः । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ १ ॥

अद्य अस्मिन् यागदिने हे उषः उषोदेवि दिवित्मती दीप्तिमती त्वं नः अस्मान् महे महते राये धनप्राप्तये बोधय प्रज्ञापय । प्रकाशयेत्यर्थः । सति प्रकाशे क्रतुद्वारा द्रव्यस्योपार्जयितुं शक्यत्वात् । यथा चित् यथैव पूर्वं नः अस्मान् अबोधयः अतीतेषु दिवसेषु यथा बोधितवती तद्वदद्यापि इत्यर्थः । हे सुजाते शोभनप्रादुर्भूते[1] अश्वसूनृते । अश्वार्था प्रियसत्यात्मिका स्तुतिवाक् यस्याः सा । हे तादृशि देवि वाय्ये वय्यपुत्रे सत्यश्रवसि मय्यनुगृहाणेत्यर्थः ॥

या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।

सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ २ ॥

या । सुऽनीथे । शौचत्ऽरथे । वि । औच्छः । दुहितः । दिवः ।

सा । वि । उच्छ । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ २ ॥

हे दिवः दुहितः दिवः सूर्यस्य पुत्र्युषः या त्वं सुनीथे एतन्नामके[2] शौचद्रथे शुचद्रथस्यापत्ये पूर्वं व्यौच्छः व्यवासयस्तमांसि सा त्वं सहीयसि अतिशयेन बलवति वाय्ये वय्यपुत्रे सत्यश्रवसि मयि व्युच्छ तमो विवासय । 'उच्छी विवासे' । विवासो वर्जनम् । शिष्टमुक्तम् ॥

सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।

यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥

सा । नः । अद्य । आभरत्ऽवसुः । वि । उच्छ । दुहितः । दिवः ।

यो इति । वि । औच्छः । सहीयसि । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥३॥

---

१. ख-च-झ-ण-न-भ-र –'शोभनप्रादुर्भूते' नास्ति । २. ख-च-झ-ण-न-भ-र–एतन्नामिके ।

हे ˇदुहितर्दिवः उषः ˇआभरद्वसुः आहृतधना ˇसा प्रसिद्धा त्वं ˇनः अस्माकम् ˇअद्य अस्मिन् दिने ˇव्युच्छ तमो विवासय । हे ˇसहीयसि ˇयो या । उकारोऽनर्थकः । या त्वं पूर्वं ˇव्यौच्छः साद्यापीति ॥

अभि ये त्वा विभावरि स्तोमैर्गृणन्ति वह्नयः ।
मघैर्मघोनि सुश्रियो दामन्वन्तः सुरातयः सुजाते अश्वसूनृते ॥ ४ ॥

अभि । ये । त्वा । विभाऽवरि । स्तोमैः । गृणन्ति । वह्नयः ।
मघैः । मघोनि । सुऽश्रियः । दामन्ऽवन्तः । सुऽरातयः । सुऽजाते । अश्वऽसूनृते ॥ ४ ॥

हे ˇविभावरि प्रकाशोपेते ॥ विभाशब्दात् ‘ छन्दसीवनिपौ ’ इति वनिप् । भातेर्वा कर्तरि वनिप् ॥ उषः ˇत्वा त्वाम् ˇअभि प्रति ˇये ˇवह्नयः वोढारः ऋत्विजः स्तोतारः ˇस्तोमैः स्तोत्रैः ˇगृणन्ति स्तुवन्ति ते स्तोतारः ˇमघैः हे ˇमघोनि धनैर्धनवति त्वदनुग्रहात् ˇसुश्रियः भवन्ति । सुष्ठ्वर्थिभिराश्रयणीया भवन्ति । ˇदामन्वन्तः दानवन्तो भवन्ति । ˇसुरातयः । रातिर्दानम् । सुदानाश्च भवन्ति ॥

यच्चिद्धि ते गणा इमे छदयन्ति मघत्तये ।
परि चिद्वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अश्वसूनृते ॥ ५ ॥

यत् । चित् । हि । ते । गणाः । इमे । छदयन्ति । मघत्तये ।
परि । चित् । वष्टयः । दधुः । ददतः । राधः । अह्रयम् । सुऽजाते । अश्वऽसूनृते ॥ ५ ॥

हे उषः ˇयच्चिद्धि । हीति पूरणः । यत् ये केचन ˇते तव स्वभूताः ˇइमे पुरतो वर्तमानाः ˇगणाः संघभूताः ˇमघत्तये धनदातये धनदानाय[1] धनवत्त्वाय वा ˇछदयन्ति उपच्छन्दयन्ति ते सर्वेऽप्यस्मान् ˇपरि ˇदधुः परितो धारयन्ति ˇवष्टयः अस्मानेव कामयमानाः । किं कुर्वन्तः । ˇअह्रयम् अह्रियमाणमक्षीणमलज्जावहं वा ˇराधः धनं हविर्लक्षणं ˇददतः यजन्त इत्यर्थः । अर्थिभ्योऽक्षीणं ददतो वा । ये त्वां हविर्ददतः स्तुवन्ति ते सर्वेऽप्यस्मदर्थमेव फलं धारयन्ति । स्तुवन्तीत्यर्थः । अथवा यच्चिद्धीत्यत्र[2] यद्यपीति व्याख्येयम् । तस्मिन् पक्षे उत्तरवाक्ये तथापीत्यध्याहार्यम् । अवशिष्टं समानम् ॥ ॥ २१ ॥

ऐषु धा वीरवद्यश उषो मघोनि सूरिषु ।
ये नो राधांस्यह्रया मघवानो अरासत सुजाते अश्वसूनृते ॥ ६ ॥

आ । एषु । धाः । वीरऽवत् । यशः । उषः । मघोनि । सूरिषु ।
ये । नः । राधांसि । अह्रया । मघऽवानः । अरासत । सुऽजाते । अश्वऽसूनृते ॥ ६ ॥

---

१. ख-च-झ-ण-भ–धनदत्ताय ; न-र–धनदत्त्वाय ; श– धनवत्तये । २. झ-भ– यद्यर्द्धत्यत्र ; न– यच्चिदित्यत्र ; र–यद्यद्धीत्यत्र ।

हे ^vउषः देवि ^vमघोनि मघवति त्वम् ^vएषु[1] ^vसूरिषु स्तोतृषु वा ^vवीरवद्यशः वीरैः पुत्रादिभिरुपेतमन्नं यशो वा ^vआ ^vधाः आधेहि। आदेहि आनय ^vये ^vमघवानः धनवन्तः सूरयः ^vनः अस्मभ्यं तव स्तोतृभ्यः ^vराधांसि धनानि ^vअह्रया अक्षीणानि ^vअरासत ददुः तेष्वित्यर्थः ॥

तेभ्यो॑ द्यु॒म्नं बृ॒हद्यश॑ उषो॑ मघो॒न्या व॑ह ।
ये नो॒ राधां॒स्यश्व्या॑ ग॒व्या भज॑न्त सू॒रय॑: सुजा॑ते॒ अश्व॑सूनृते ॥ ७ ॥

तेभ्य॑: । द्यु॒म्नम् । बृ॒हत् । यश॑: । उष॑: । म॒घो॒नि॒ । आ । व॒ह॒ ।
ये । न॒: । राधां॑सि । अश्व्या॑ । ग॒व्या । भज॑न्त । सू॒रय॑: । सुऽजा॑ते । अश्व॑ऽसूनृते ॥ ७ ॥

हे ^vउषो ^vमघोनि त्वं ^vतेभ्यो ^vद्युम्नं द्योतमानं हिरण्यादिरूपं धनं ^vबृहद्यशः महदन्नं महतीं कीर्तिं वा तेभ्यो यजमानेभ्यः ^vआ ^vवह । ^vये आढ्याः ^vनः अस्मभ्यं ^vराधांसि धनानि ^vअश्व्या अश्वैर्युक्तानि ^vगव्या गोभिर्युक्तानि गोसमूहानश्वसमूहान् च[2] ^vभजन्त[2] भजेरन् ददुः ^vसूरयः दातारः॥

उ॒त नो॒ गोम॑ती॒रिष॒ आ व॑हा दुहितर्दिवः ।
सा॒कं सूर्य॑स्य र॒श्मिभि॑: शु॒क्रैः शोच॑द्भिर॒र्चिभि॒: सुजा॑ते॒ अश्व॑सूनृते ॥ ८ ॥

उ॒त । न॒: । गोऽम॑तीः । इष॑: । आ । व॒ह॒ । दु॒हि॒त॒: । दि॒व॒: ।
सा॒कम् । सूर्य॑स्य । र॒श्मिऽभि॑: । शु॒क्रैः । शोच॑त्ऽभिः । अ॒र्चिऽभि॑: ।
सुऽजा॑ते । अश्व॑ऽसूनृते ॥ ८ ॥

^vउत अपि च ^vनः अस्मभ्यं ^vगोमतीः गोभिरुपेतानि ^vइषः अन्नानि ^vआ ^vवह आनय हे ^vदिवः ^vदुहितः उषः । कदा । ^vसूर्यस्य ^vरश्मिभिः ^vसाकं ^vशोचद्भिः दीपयद्भिः ^vशुक्रैः निर्मलैः ^vअर्चिभिः अग्नेस्तेजोभिश्च साकम् । सूर्योदयकालेऽग्नीन्धनकाले चेत्यर्थः ॥

व्यु॑च्छा दुहितर्दिवो॒ मा चि॒रं त॑नुथा॒ अप॑: ।
नेत्त्वा॑ स्ते॒नं यथा॑ रि॒पुं तपा॑ति॒ सूरो॑ अ॒र्चिषा॒ सुजा॑ते॒ अश्व॑सूनृते ॥ ९ ॥

वि । उ॒च्छ॒ । दु॒हि॒त॒: । दि॒व॒: । मा । चि॒रम् । त॒नु॒था॒: । अप॑: ।
न । इत् । त्वा॒ । स्ते॒नम् । यथा॑ । रि॒पुम् । तपा॑ति । सूर॑: । अ॒र्चिषा॑ ।
सुऽजा॑ते । अश्व॑ऽसूनृते ॥ ९ ॥

---

१. ख-च-झ-ण-त-न-भ-र-श- 'एषु' नास्ति। २. ख-च-ण-न-भ-र-चेति विभजन्त ; ग-घ-ज-श- भजन्त ; झ- चेति भजन्त ।

हे ᵛदिवः ᵛदुहितः उषः त्वं ᵛव्युच्छ विभातं कुरु । ᵛअपः अस्मदीयं कर्म प्रति ᵛचिरं विलम्बं ᵛमा ᵛतनुथाः मा[1] कृथाः[1] । ᵛत्वा त्वां ᵛरिपुं ᵛस्तेनं ᵛयथा संतापयति राजादिः तद्वत् ᵛसूरः सूर्यः ᵛअर्चिषा तेजसा ᵛनेत् नैव ᵛतपाति तप्यात् । शीघ्रं नोदेस्वित्यर्थः ॥

एतावद्वेदुषस्त्वं भूयो वा दातुमर्हसि ।

या स्तोतृभ्यो विभावर्युच्छन्ती न प्रमीयसे सुजाते अश्वसूनृते ॥ १० ॥

एतावत् । वा । इत् । उषः । त्वम् । भूयः । वा । दातुम् । अर्हसि ।

या । स्तोतृऽभ्यः । विभाऽवरि । उच्छन्ती । न । प्रऽमीयसे । सुऽजाते । अश्वऽसूनृते ॥ १० ॥

हे ᵛउषः त्वमस्मभ्यं ᵛवा अथवा दित्सितं किम्[2] ᵛएतावत् एव[2] । इच्छब्द एवकारार्थः । अस्मिन् सूक्ते प्रार्थितमेवेत्यर्थः । अथवा ᵛभूयः ᵛदातुमर्हसि । अप्रार्थितमपि । यद्दातव्यमस्ति तत्सर्वं देहि इत्यर्थः । हे ᵛविभावरि उषः ᵛया त्वं ᵛस्तोतृभ्यः तेषां लौकिकवैदिकव्यवहारार्थं व्युच्छन्ती तमो विवासयन्ती ᵛन ᵛप्रमीयसे न हंसि । न क्रुध्यसीत्यर्थः । सा त्वं दातुमर्हसीति ॥ ' मीञ् हिंसायाम् ' इत्यस्मात् श्नास्थाने व्यत्ययेन श्यन् ॥ ॥ २२ ॥

' द्युतद्यामानम् ' इति षड़ृचमष्टमं सूक्तम् । अत्रानुक्रमणिका—' द्युतद्यामानं षट् ' इति । सत्यश्रवा ऋषिः । अनुक्तत्वात् त्रिष्टुप् । ' उषस्यं तु ' इत्युक्तत्वात् उषाः[3] देवता[3] । प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च—' द्युतद्यामानमुषो वाजेन ' ( आश्व. श्रौ. ४. १४ ) इति ॥

द्युतद्यामानं बृहतीमृतेन ऋतावरीमरुणप्सुं विभातीम् ।

देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥ १ ॥

द्युतत्ऽयामानम् । बृहतीम् । ऋतेन । ऋतऽवरीम् । अरुणऽप्सुम् । विऽभातीम् ।

देवीम् । उषसम् । स्वः । आऽवहन्तीम् ।

प्रति । विप्रासः । मतिऽभिः । जरन्ते ॥ १ ॥

ᵛद्युतद्यामानं दीप्तरथां ᵛबृहतीं महतीम् ᵛऋतेन सत्येन यज्ञेन वा ᵛऋतावरीम् ऋतवतीम् ᵛअरुणप्सुम् अरुणरूपां ᵛविभातीं व्युच्छन्तीं ᵛदेवीं द्योतमानाम् ᵛउषसं ᵛस्वरावहन्तीं सूर्यं गच्छन्तीम् । एवं महानुभावाम् उषसं[4] ᵛविप्रासः मेधाविन ऋत्विजः ᵛमतिभिः स्तुतिभिः ᵛप्रति[5] ᵛजरन्ते स्तुवन्ति ॥

---

१. ग-घ-ज-झ-त-र-श–' मा कृथाः ' नास्ति । २. ख-च-ण-न–किमेतावदित् किमेतावदेव ; झ-त-भ-र–किमेतावत् हे यदित् । ३. ग-घ-ज-झ-न-भ-र-श– उषोदेवता । ४. त–उषसं प्रति । ५. ख-च-ण-त– ' प्रति ' नास्ति ।

एषा जनं दर्शता बोधयन्ती सुगान्पथः कृण्वती यात्यग्रे ।
बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अह्नाम् ॥ २ ॥

एषा । जनम् । दर्शता । बोधयन्ती । सुऽगान् । पथः । कृण्वती । याति । अग्रे ।
बृहत्ऽरथा । बृहती । विश्वम्ऽइन्वा । उषाः । ज्योतिः । यच्छति । अग्रे । अह्नाम् ॥ २ ॥

ᵛदर्शता दर्शनीया ᵛएषा उषाः ᵛबोधयन्ती । कम् । ᵛजनम् । प्रसुप्तमित्यर्थः । ᵛपथः ᵛसुगान् सुगमनान् ᵛकृण्वती ᵛअग्रे सूर्यस्य पुरस्तात् ᵛयाति गच्छति । कीदृश्युषाः ᵛबृहद्रथा प्रभूतरथा ᵛबृहती महती ᵛविश्वमिन्वा विश्वं व्याप्नुवाना विश्वतर्पणा वा । ईदृशी ᵛउषाः ᵛअह्नाम् ᵛअग्रे ᵛज्योतिः तेजः ᵛयच्छति ॥

एषा गोभिररुणेभिर्युजानास्रेधन्ती रयिमप्रायु चक्रे ।
पथो रदन्ती सुवितायं देवी पुरुष्टुता विश्ववारा वि भाति ॥ ३ ॥

एषा । गोभिः । अरुणेभिः । युजाना । अस्रेधन्ती । रयिम् । अप्रऽआयु । चक्रे ।
पथः । रदन्ती । सुवितायं । देवी । पुरुऽस्तुता । विश्वऽवारा । वि । भाति ॥ ३ ॥

ᵛएषा उषाः ᵛअरुणेभिः अरुणवर्णैः ᵛगोभिः बलीवर्दैः रथं ᵛयुजाना योजयन्ती ᵛअस्रेधन्ती अशुष्यन्त्यक्षीणा वा । किम् । ᵛरयिं धनम् ᵛअप्रायु अप्रगन्तृ अविचलितं ᵛचक्रे करोति । किं कुर्वती । ᵛपथः मार्गान् ᵛरदन्ती प्रकाशयन्ती । किमर्थम् । ᵛसुविताय सुष्ठु गमनाय ᵛदेवी द्योतमाना ᵛपुरुष्टुता बहुभिः स्तुता ᵛविश्ववारा सर्वैर्वरणीया ᵛवि ᵛभाति प्रकाशं करोति ॥

एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात् ।
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ ४ ॥

एषा । विऽएनी । भवति । द्विऽबर्हाः । आविःऽकृण्वाना । तन्वम् । पुरस्तात् ।
ऋतस्य । पन्थाम् । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥ ४ ॥

ᵛएषा उषाः ᵛव्येनी ᵛभवति विशेषेण श्वेता भवति ᵛद्विबर्हाः द्वयोः प्रथममध्यमयोः स्थानयोः[1] परिवृढोषाः पश्चात् ᵛतन्वं स्वीयां तनूम् ᵛआविष्कृण्वाना प्रकटीकुर्वती । कुत्र । ᵛपुरस्तात् पूर्वस्यां दिशि । किंच ᵛऋतस्य आदित्यस्य ᵛपन्थां पन्थानं ᵛसाधु सम्यक् ᵛअन्वेति । किंच ᵛप्रजानतीव विश्वं प्रज्ञापयन्ती । इवेति संप्रत्यर्थे । ᵛन ᵛदिशो ᵛमिनाति न हिनस्ति । प्रत्युत दिशः प्रकाशयति । अथवा प्रजानतीव अनुगन्तव्यमिति प्रकर्षेण अवगच्छन्ती[2] च[2] ऋतस्य पन्थामन्वेति ॥

---

१. ग-घ-ज-श- ‘ स्थानयोः ’ नास्ति । २. ख-च-ज्ञ-ण-न-भ-अवगच्छन्तीव ।

एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् ।
अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥ ५ ॥

एषा । शुभ्रा । न । तन्वः । विदाना । ऊर्ध्वाऽइव । स्नाती । दृशये । नः । अस्थात् ।
अप । द्वेषः । बाधमाना । तमांसि ।
उषाः । दिवः । दुहिता । ज्योतिषा । आ । अगात् ॥ ५ ॥

एषा उषाः शुभ्रा न शुभ्रवर्णा निर्मला स्वलंकृता योषिदिव तन्वः अङ्गानि विदाना प्रज्ञापयन्ती स्नाती स्नानं कुर्वाणा ऊर्ध्वेव उन्नतेव स्नानादुत्तिष्ठन्तीव नः अस्मदर्थम् अस्माकं पुरतो वा दृशये सर्वेषां दर्शनाय उत् अस्थात् पूर्वस्यां दिशि उत्तिष्ठति[1]। किं कुर्वती । द्वेषः द्वेष्याणि तमांसि अप बाधमाना दिवो दुहिता उषाः ज्योतिषा तेजसा सह आगात् आगच्छति ॥

एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते अप्सः ।
व्यूर्ण्वती दाशुषे वार्याणि पुनर्ज्योतिर्युवतिः पूर्वथाकः ॥ ६ ॥

एषा । प्रतीची । दुहिता । दिवः । नॄन् । योषाऽइव । भद्रा । नि । रिणीते । अप्सः ।
विऽऊर्ण्वती । दाशुषे । वार्याणि । पुनः । ज्योतिः । युवतिः । पूर्वऽथा । अकरित्यकः ॥६॥

एषा उषाः प्रतीची अभिमुखा सती दिवः दुहिता नॄन् सर्वान् प्राणिनः प्रति भद्रा योषेव कल्याणवेषा योषिदिव अप्सः रूपं नि रिणीते प्रेरयति । किंच दाशुषे हविर्दात्रे यजमानाय वार्याणि[2] वरणीयानि धनानि व्यूर्ण्वती प्रयच्छन्ती युवतिः नित्ययौवना सर्वत्र मिश्रयन्ती वा पुनः अद्यापि पूर्वथा पूर्वमिव ज्योतिः तेजः अकः करोति ॥ ॥ २३ ॥

' युञ्जते मनः ' इति पञ्चर्चं नवमं सूक्तम् । अत्रेयमनुक्रमणिका—' युञ्जते पञ्च श्यावाश्वः सावित्रं तु जागतम् ' इति। श्यावाश्वो नामात्रेय ऋषिः । जगती छन्दः । सविता देवता । पृष्ठ्याभिप्लव-षडहयोः प्रथमेऽहनि वैश्वदेवशस्त्रे सावित्रनिविद्धानमिदम्। सूत्रितं च—' युञ्जते मन इहेह व इति चतस्रः ' ( आश्व. श्रौ. ७. ५ ) इति । आद्या ग्रावस्तोत्रेऽपि । सूत्रितं च—' युञ्जते मन उत युञ्जते धिय आ तू न इन्द्र क्षुमन्तम् ' ( आश्व. श्रौ. ५. १२ ) इति ॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ १ ॥

युञ्जते । मनः । उत । युञ्जते । धियः । विप्राः । विप्रस्य । बृहतः । विपःऽचितः ।
वि । होत्राः । दधे । वयुनऽवित् । एकः । इत् । मही । देवस्य । सवितुः । परिऽस्तुतिः ॥१॥

१. ख-च-झ-ण-भ- उत्तिष्ठती ; ग-घ-ज-र-श—उत्तिष्ठन्ती । २. ख-च-झ-ण-न-भ-र- किंच वार्याणि ।

ᐯविप्राः मेधाविन ऋत्विग्यजमानाः[1] ᐯमनः स्वीयं सर्वेषु कर्मसु ᐯयुञ्जते योजयन्ति। सवित्रनुग्रहाय संकल्पं कुर्वन्तीत्यर्थः। ᐯउत अपि च ᐯधियः कर्माण्यपि ᐯयुञ्जते प्राप्नुवन्ति। कस्यानुज्ञयेत्युच्यते। ᐯविप्रस्य मेधाविनः ᐯबृहतः महतः ᐯविपश्चितः स्तुत्यस्य ज्ञानवतो वा सवितुः अनुज्ञयेति। 'सविता वै प्रसवानामीशे' (ऐ. ब्रा. ७. १६) इति हि श्रुतिः। स एव सविता ᐯहोत्राः सप्तहोत्रकाणामुचिताः क्रियाः ᐯवयुनावित्। वयुनमिति प्रज्ञानाम। तत्तदनुष्ठानविषयप्रज्ञावेत्ता ᐯएक ᐯइत् एक एव ᐯवि ᐯदधे करोति। पृथक्पृथगवधारयति[2]। किंच तस्य ᐯसवितुः ᐯदेवस्य ᐯपरिष्टुतिः स्तुतिः ᐯमही महती अतिप्रभूता। स्तुत्यगोचरेत्यर्थः॥

हविर्धानप्रवर्तने रराट्यामवनद्धायां 'विश्वा रूपाणि' इत्येषानुवचनीया। सूत्रितं च— 'विश्वा रूपाणि प्रति मुञ्चते कविरिति व्यवस्तायाम्' (आश्व. श्रौ. ४. ९) इति॥

**वि॒श्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे।**
**वि नाक॑मख्यत्सवि॒ता वरे॑ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति॥ २॥**

विश्वा॑। रू॒पाणि॑। प्रति॑। मु॒ञ्च॒ते॒। क॒विः। प्र। अ॒सा॒वी॒त्। भ॒द्रम्। द्वि॒ऽपदे॑। चतुः॑ऽपदे।
वि। नाक॑म्। अ॒ख्य॒त्। स॒वि॒ता। वरे॑ण्यः। अनु॑। प्र॒ऽयान॑म्। उ॒षसः॑। वि। रा॒ज॒ति॒॥२॥

ᐯकविः मेधावी सविता ᐯविश्वा सर्वाणि ᐯरूपाणि आत्मनि ᐯप्रति ᐯमुञ्चते बध्नाति धारयति। किंच ᐯभद्रं कल्याणं गमनादिविषयं ᐯप्रासावीत् अनुजानाति। कस्मै। ᐯद्विपदे मनुष्याय[3] ᐯचतुष्पदे गवाश्वादिकाय। किंच ᐯसविता सर्वस्य प्रेरको देवः ᐯवरेण्यः वरणीयः सन् ᐯवि ᐯअख्यत् ख्यापयति प्रकाशयति। किम्। ᐯनाकम्। नास्मिन्नकं दुःखमस्तीति नाकः स्वर्गः। यजमानार्थं स्वर्गं प्रकाशयतीत्यर्थः। स देवः ᐯउषसः ᐯप्रयाणम् उदयम् ᐯअनु ᐯवि ᐯराजति प्रकाशते। सवितुरुदयात् पूर्वं ह्युषा उदेति॥

**यस्य॑ प्र॒याण॒मन्व॒न्य इद्य॒युर्दे॒वा दे॒वस्य॑ महि॒मान॒मोज॑सा।**
**यः पार्थि॑वानि विम॒मे स एत॑शो॒ रजां॑सि दे॒वः स॑वि॒ता म॑हित्व॒ना॥ ३॥**

यस्य॑। प्र॒ऽयान॑म्। अनु॑। अ॒न्ये। इत्। य॒युः। दे॒वाः। दे॒वस्य॑। म॒हि॒मान॑म्। ओज॑सा।
यः। पार्थि॑वानि। वि॒ऽम॒मे। सः। एत॑शः। रजां॑सि। दे॒वः। स॒वि॒ता। म॒हि॒ऽत्व॒ना॥ ३॥

ᐯअन्य ᐯइत् ᐯदेवाः अन्येऽप्यग्न्यादयः ᐯयस्य ᐯदेवस्य द्योतमानस्य सवितुः ᐯप्रयाणमनु ᐯययुः गच्छन्ति प्राप्नुवन्ति। किम्। ᐯमहिमानं महत्त्वम्। सवितुरुदयाभावे अग्निहोत्राद्यनिष्पत्तेस्तेषां हविःस्तुत्याद्यभावात्। ᐯओजसा बलेन च युक्ता भवन्ति। ᐯयः ᐯसविता ᐯपार्थिवानि ᐯरजांसि

---

१. ख-च-ण—ऋत्विजः यजमानाः। २. ख-च-ण—पृथक्पृथग्धारयति; ज्ञ-त-न-भ-र— पृथक्पृथग्वा धारयति। ३. त-न-भ-र— मनुष्यादये।

पृथिव्यादिलोकान् ᵛमहित्वना स्वमहत्त्वेन ᵛविममे परिच्छिनत्ति ᵛसः ᵛदेवः ᵛएतशः एतवर्णः शुभ्रः शोभमानः सन् । राजते इति शेषः । ' युवशा ताकृणोतन ' ( ऋ. सं. १. १६१. ७ ) इत्यादिवत् एतश इत्यादिशकारोपजनश्छान्दसः ॥

उत यासि सवितस्त्रीणि रोचनोत सूर्यस्य रश्मिभिः समुच्यसि ।
उत रात्रीमुभयतः परीयस उत मित्रो भवसि देव धर्मभिः ॥ ४ ॥

उत । यासि । सवितरिति । त्रीणि । रोचना । उत । सूर्यस्य । रश्मिऽभिः । सम् । उच्यसि ।
उत । रात्रीम् । उभयतः । परि । ईयसे । उत । मित्रः । भवसि । देव । धर्मऽभिः ॥ ४ ॥

हे ᵛसवितः देव ᵛउत अपि च ᵛत्रीणि ᵛरोचना रोचमानान् द्युलोकान् ᵛयासि गच्छसि । ' तिस्रो दिवः पृथिवीः ' ( ऋ. सं. ४. ५३. ५ ) इत्युक्तम् । ᵛउत अपि च ᵛसूर्यस्य ᵛरश्मिभिः ᵛसमुच्यसि संगच्छसि ॥ ' उच समवाये ' इत्यस्येदं रूपम् ॥ उदयात् पूर्वभावी सविता उदयास्तमयवर्ती सूर्य इति । ᵛउत अपि च ᵛरात्रीमुभयतः उभयपार्श्वे ᵛपरीयसे परिगच्छसि । ᵛउत अपि च हे ᵛदेव सवितस्त्वं ᵛधर्मभिः जगद्धारकैः कर्मभिः ᵛमित्रो ᵛभवसि मित्राख्यो देवो भवसि । अथवा प्रकाशादिप्रदानेन सखा भवसि सर्वजगताम् ॥

उतेशिषे प्रसवस्य त्वमेक इदुत पूषा भवसि देव यामभिः ।
उतेदं विश्वं भुवनं वि राजसि श्यावाश्वस्ते सवितः स्तोममानशे ॥ ५ ॥

उत । ईशिषे । प्रऽसवस्य । त्वम् । एकः । इत् । उत । पूषा । भवसि । देव । यामऽभिः ।
उत । इदम् । विश्वम् । भुवनम् । वि । राजसि ।
श्यावऽअश्वः । ते । सवितरिति । स्तोमम् । आनशे ॥ ५ ॥

हे सवितः ᵛत्वमेक ᵛइत् एक एव ᵛप्रसवस्य सर्वकर्मानुज्ञाकरणस्य ᵛईशिषे समर्थो भवसि । ये लौकिकं गमनादिरूपं वैदिकमग्निहोत्रादिरूपं कर्मानुतिष्ठन्ते तेषां सर्वेषामनुज्ञातुमेक एव प्रभवसि । ᵛउत अपि च ᵛपूषा पोषकः ᵛभवसि हे ᵛदेव ᵛयामभिः गमनैः । ᵛउत अपि च ᵛइदं ᵛविश्वं ᵛभुवनं भूतजातं ᵛवि ᵛराजसि ईशिषे धारयितुम् । यस्मादेवं महानुभावस्तस्मात् हे ᵛसवितः ᵛते तुभ्यं ᵛश्यावाश्वः ऋषिः ᵛस्तोमं स्तोत्रम् ᵛआनशे व्याप्नोति करोति । इत्येवमात्मानं परोक्षतया निर्दिशन्नाह ॥ ॥ २४ ॥

' तत्सवितुः ' इति नवर्चं दशमं सूक्तं श्यावाश्वस्यार्षम् । अत्रेयमनुक्रमणिका—' तत्सवितुर्नव गायत्रमाद्यानुष्टुप् ' इति । प्रथमानुष्टुप् शिष्टा गायत्र्यः । ' सावित्रं तु ' इत्युक्तत्वात् सावित्रम् ।

अग्निष्टोमे वैश्वदेवशस्त्रस्याद्यस्तृचः प्रतिपत् 'अद्या नो देव' इत्यनुचरः । सूत्रितं च—'तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ' ( आश्व. श्रौ. ५.१८ ) इति[1] ॥

तत्स॑वि॒तुर्वृ॑णीमहे व॒यं दे॒वस्य॒ भोज॑नम् । श्रेष्ठं॑ सर्व॒धात॑मं॒ तुरं॒ भग॑स्य धीमहि ॥ १ ॥

तत् । स॒वि॒तुः । वृ॒णी॒म॒हे॒ । व॒यम् । दे॒वस्य॑ । भोज॑नम् ।

श्रेष्ठ॑म् । स॒र्व॒ऽधात॑मम् । तु॒रम् । भग॑स्य । धी॒म॒हि॒ ॥ १ ॥

ᵛतत् प्राप्यत्वेन प्रसिद्धं ᵛभोजनं भोग्यं धनं ᵛवयं स्तोतारः ᵛवृणीमहे प्रार्थयामः । कस्य धनम् । ᵛसवितुः प्रेरकस्य ᵛदेवस्य स्वभूतम् । लब्ध्वा च ᵛश्रेष्ठं प्रशस्यं ᵛसर्वधातमं सर्वधातृतमम् । सर्वभोगप्रदमित्यर्थः । ᵛतुरं शत्रूणां हिंसकम् । धनेन शत्रून् हन्तुं शक्यत्वात् । तादृशं धनं ᵛभगस्य भजनीयस्य सवितुरनुग्रहात् ᵛधीमहि धारयाम । उपभोगं करवामेत्यर्थः । अथवा धनं वृणीमहे अर्थित्वाच्च लभेमहीति ॥

अस्य॒ हि स्वय॑शस्तरं सवि॒तुः कच्च॒न प्रि॒यम् । न मि॒नन्ति॑ स्व॒राज्य॑म् ॥ २ ॥

अस्य॑ । हि । स्वय॑शःऽतरम् । स॒वि॒तुः । कत् । च॒न । प्रि॒यम् ।

न । मि॒नन्ति॑ । स्व॒ऽराज्य॑म् ॥ २ ॥

ᵛअस्य ᵛसवितुः ᵛस्वयशस्तरं स्वयमसाधारणं यशो यस्यातिशयेन भवति तत्तादृशं ᵛप्रियं सर्वेषां प्रियभूतं ᵛस्वराज्यं स्वयमेव राजमानत्वमैश्वर्यं ᵛकच्चन केचिदप्यसुरादयः ᵛन ᵛमिनन्ति न हिंसन्ति ॥

स हि रत्ना॑नि दा॒शुषे॑ सुवाति॑ सवि॒ता भग॑: । तं भा॒गं चि॒त्रमी॑महे ॥ ३ ॥

सः । हि । रत्ना॑नि । दा॒शुषे॑ । सु॒वाति॑ । स॒वि॒ता । भग॑: ।

तम् । भा॒गम् । चि॒त्रम् । ई॒म॒हे॒ ॥ ३ ॥

ᵛस ᵛहि स खलु ᵛसविता ᵛभगः भजनीयो देवः ᵛदाशुषे हविर्दात्रे मह्यं ᵛरत्नानि रमणीयानि धनानि ᵛसुवाति प्रेरयति प्रयच्छति । ᵛतं देवं ᵛभागं भजनीयं ᵛचित्रं चायनीयं धनम् ᵛईमहे याचामहे ॥

'अद्या नः' इति चतुर्थीपञ्चमीभ्याममनोज्ञस्वप्नदर्शने प्रत्यृचं जुहुयात् । 'अद्या नो देव सवितरिति द्वाभ्याम्' ( आश्व. गृ. ३. ६. ६ ) इति हि सूत्रितम् ॥

---

१. न– इति । उपनयने अञ्जल्यवक्षारणे तत्सवितुरित्येषा । सूत्रितं च– तत्सवितुर्वृणीमहे इति पूर्णेनास्य पूर्णमवक्षारयतीति । तथा पुनरुपनयने गायत्र्या स्थानेऽप्येषा । सूत्रितं च–परिदानकालश्च तत्सवितुर्वृणीमहे इति सावित्रीमिति ।

अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुःष्वप्न्यं सुव ॥ ४ ॥

अद्य । नः । देव । सवितरिति । प्रजाऽवत् । सावीः । सौभगम् ।

परा । दुःऽस्वप्न्यम् । सुव ॥ ४ ॥

हे ᵛसवितः ᵛदेव ᵛनः अस्मभ्यम् ᵛअद्य अस्मिन् यागदिने ᵛप्रजावत् पुत्राद्युपेतं ᵛसौभगं धनं ᵛसावीः प्रेरय । ᵛदुःष्वप्न्यं दुःस्वप्नं दुःस्वप्नवहुःखकरं दारिद्र्यं ᵛपरा ᵛसुव दूरे प्रेरय ॥

विश्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्न आ सुव ॥ ५ ॥

विश्वानि । देव । सवितः । दुःऽइतानि । परा । सुव ।

यत् । भद्रम् । तत् । नः । आ । सुव ॥ ५ ॥

हे ᵛसवितः ᵛदेव त्वं ᵛविश्वानि ᵛदुरितानि ᵛपरा ᵛसुव । ᵛयद्भद्रं प्रजापशुगृहादिकं ᵛतत् ᵛनः अस्मभ्यम् ᵛआ ᵛसुव अस्मदभिमुखं प्रेरय[1] । 'प्रजा वै भद्रं पशवो भद्रं गृहं भद्रम्' इति हि श्रुतिः ॥ ॥ २५ ॥

अनागसो अदितये देवस्य सवितुः सवे । विश्वा वामानि धीमहि ॥ ६ ॥

अनागसः । अदितये । देवस्य । सवितुः । सवे ।

विश्वा । वामानि । धीमहि ॥ ६ ॥

वयमनुष्ठातारः ᵛसवितुः प्रेरकस्य ᵛदेवस्य ᵛसवे अनुज्ञायां सत्याम् ᵛअदितये अखण्डनीयायै देव्यै भूम्यै ᵛअनागसः स्याम अनपराधिनो भवेम । भूम्यां हि पापाः संभवन्ति । अपगतेष्वागःसु ᵛविश्वा सर्वाणि ᵛवामानि वननीयानि धनानि ᵛधीमहि धारयाम ॥

चातुर्मास्येषु वैश्वदेवे पर्वणि सावित्रस्य द्वादशकपालस्य 'आ विश्वदेवम्' इत्यनुवाक्या । सूत्रितं च—'आ विश्वदेवं सत्पतिं वाममद्य सवितः' ( आश्व. श्रौ. २.१६ ) इति । प्रायणीये एषैव सवितुरनुवाक्या । सूत्रितं च—'आ विश्वदेवं सत्पतिं य इमा विश्वा जातानि' ( आश्व. श्रौ. ४. ३ ) इति । देवसुवां हविःषु एषैव सवितुरनुवाक्या । सूत्रितं च—'आ विश्वदेवं सत्पतिं न प्रमिये सवितुर्दैव्यस्य तत्' ( आश्व. श्रौ. ४. ११ ) इति ॥

आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे । सत्यसवं सवितारम् ॥ ७ ॥

आ । विश्वऽदेवम् । सत्ऽपतिम् । सुऽउक्तैः । अद्य । वृणीमहे ।

सत्यऽसवम् । सवितारम् ॥ ७ ॥

---

१. ख-च-ञ-ण-भ-र-प्रेरय प्रजापशुगृहादिकं प्रेरय ; त-प्रेरय प्रजापशुगृहादिकम् ।

ᵛविश्वदेवम्। विश्वे देवा यस्य वशे भवन्ति तं तादृशम्। स हि सर्वात्मा, 'इन्द्रं मित्रं वरुणमग्निमाहुः' (ऋ. सं. १. १६४. ४६) इत्यादिश्रुतेः इतरेषां तद्विभूतित्वात्। ᵛसत्पतिं सतामनुष्ठातॄणां पालकं ᵛसत्यसवं सत्यानुज्ञं ᵛसवितारं देवम् ᵛअद्य अस्मिन् यागदिने ᵛसूक्तैः ᵛआ ᵛवृणीमहे संभजामहे ॥

य इमे उभे अहनी पुर एत्यप्रयुच्छन्। स्वाधीर्देवः सविता ॥ ८ ॥

यः। इमे इति। उभे इति। अहनी इति। पुरः। एति। अप्रऽयुच्छन्।

सुऽआधीः। देवः। सविता ॥ ८ ॥

ᵛयः ᵛसविता ᵛदेवः ᵛस्वाधीः शोभनाध्यानः सुकर्मा वा सन् ᵛइमे ᵛअहनी रात्र्यहनी तयोः ᵛपुरः पुरस्तात् ᵛअप्रयुच्छन् अप्रमाद्यन् ᵛएति गच्छति तम् आ वृणीमहे इति संबन्धः ॥

प्रायणीये 'य इमा विश्वा' इति सवितुर्याज्या। सूत्रितं च— 'य इमा विश्वा जातानि सुत्रामाणं पृथिवीं द्यामनेहसम्' (आश्व. श्रौ. ४. ३) इति। अश्वमेधेऽश्वमुत्सृज्यानुसवनं सावित्रीष्टिः कार्या। तस्यामेषा माध्यंदिने सवनेऽनुवाक्या। सूत्रितं च—'य इमा विश्वा जातान्या देवो यातु सविता सुरत्नः' (आश्व. श्रौ. १०.६) इति ॥

य इमा विश्वा जातान्याश्रावयति श्लोकेन। प्र च सुवाति सविता ॥ ९ ॥

यः। इमा। विश्वा। जातानि। आऽश्रवयति। श्लोकेन। प्र। च। सुवाति। सविता ॥९॥

ᵛयः देवः ᵛइमा इमानि ᵛविश्वा सर्वाणि ᵛजातानि उत्पन्नान् प्राणिनः। जङ्गमानित्यर्थः। तान् ᵛश्लोकेन यशसा ᵛआश्रावयति। सर्वेऽप्यस्य स्तुतिं शृण्वन्तीत्यर्थः। अथवा गर्जनशब्देन सर्वाणि इमान्युत्पन्नान्याश्रावयति वृष्ट्युन्मुखः सन्। किंच ᵛसविता ᵛप्र ᵛसुवाति ᵛच[1] प्रेरयति तं वृणीमहे इति[2] ॥  ॥ २६ ॥

'अच्छा वद' इति दशर्चमेकादशं सूक्तं भौमस्यात्रेरार्षम्। अत्रेयमनुक्रमणिका—'अच्छ दशात्रिः पार्जन्यमुपाद्यास्तिस्रो जगत्य उपान्त्यानुष्टुप्' इति। 'यत्पर्जन्य' इत्येषा नवम्यनुष्टुप्‌ 'वि वृक्षान्' इत्याद्यास्तिस्रो जगत्यः शिष्टाः षट् त्रिष्टुभः। पर्जन्यो देवता। अनेन सूक्तेन प्रत्यृचं वा दिशः उपस्थेयाः। सूत्रितं च—'संस्थितायां सर्वा दिश उपतिष्ठेताच्छा वद तवसं गीर्भिराभिरिति चतसृभिः प्रत्यृचं सूक्तेन[3] वा' (आश्व. श्रौ. २. १३) इति ॥

अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास।
कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम् ॥ १ ॥

अच्छ। वद। तवसम्। गीःऽभिः। आभिः। स्तुहि। पर्जन्यम्। नमसा। आ। विवास।

कनिक्रदत्। वृषभः। जीरऽदानुः। रेतः। दधाति। ओषधीषु। गर्भम् ॥ १ ॥

---

१. ग-घ-ज- 'च' नास्ति। २. ग-घ-ज-इति। च पूरणः। ३. त-सूक्तेन सूक्तेन।

हे स्तोतः ᵛतवसं बलवन्तं ᵛपर्जन्यम् ᵛअच्छ अभिप्राप्य ᵛवद प्रार्थय। पर्जन्यशब्दो यास्केन बहुधा निरुक्तः—'पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानाम्' (निरु. १०. १०) इति। ᵛआभिः ᵛगीर्भिः स्तुतिवाग्भिः ᵛस्तुहि। ᵛनमसा अन्नेन[१] हविर्लक्षणेन ᵛआ[१] ᵛविवास सर्वतः परिचर। यः पर्जन्यः ᵛवृषभः अपां वर्षिता ᵛजीरदानुः क्षिप्रदानः ᵛकनिक्रदत् गर्जनशब्दं कुर्वन् ᵛओषधीषु ᵛगर्भं गर्भस्थानीयं ᵛरेतः उदकं ᵛदधाति स्थापयति तं स्तुहि ॥

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात्।
उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः ॥ २ ॥

वि। वृक्षान्। हन्ति। उत। हन्ति। रक्षसः। विश्वम्। बिभाय। भुवनम्। महाऽवधात्।
उत। अनागाः। ईषते। वृष्ण्यऽवतः। यत्। पर्जन्यः। स्तनयन्। हन्ति। दुःऽकृतः ॥२॥

अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः। तदेवात्र लिख्यते—'पर्जन्यो[२] विहन्ति वृक्षान्विहन्ति च रक्षांसि सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् महान् ह्यस्य वधः। अप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृतः' (निरु. १०·११) इति ॥

रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान्कृणुते वर्ष्याँ३ अह।
दूरात्सिंहस्य स्तनथा उदीरते यत्पर्जन्यः कृणुते वर्ष्यं१ नभः ॥ ३ ॥

रथीऽइव। कशया। अश्वान्। अभिऽक्षिपन्। आविः। दूतान्। कृणुते। वर्ष्यान्। अह।
दूरात्। सिंहस्य। स्तनथाः। उत्। ईरते। यत्। पर्जन्यः। कृणुते। वर्ष्यम्। नभः ॥३॥

ᵛरथीव रथस्वामीव। स यथा कशया अश्वान् अभिक्षिपन् दूतान् भटान् आविष्करोति तद्वदसौ पर्जन्योऽपि ᵛकशया ᵛअश्वान् मेघान् ᵛअभिक्षिपन् अभिप्रेरयन् ᵛवर्ष्यान् वर्षकान् ᵛदूतान् दूतवत् वृष्टिप्रेरकान् मेघान् मरुतो वा ᵛआविः ᵛकृणुते प्रकटयति। ᵛअह इति पूरणः। एवं सति ᵛसिंहस्य। सहतेर्हिंसतेर्वा शब्दकर्मणः सिंहशब्दः। अवर्षणेनाभिभवितुः शब्दयितुर्वा मेघस्य ᵛस्तनथाः गर्जनशब्दाः ᵛदूरात् ᵛउदीरते उद्गच्छन्ति। कदा। ᵛयत् यदा ᵛपर्जन्यः ᵛनभः अन्तरिक्षं ᵛवर्ष्यं वर्षोपेतं ᵛकृणुते करोति तदा ॥

'प्र वाताः' इति[३] चतुर्थी पर्जन्यस्य[४] चरोर्याज्या। सूत्रितं च—'प्र वाता वान्ति पतयन्ति विद्युत इत्यग्न्याधेयप्रभृति' (आश्व. श्रौ. २·१५) इति ॥

---

१. ख-च-ण— हविर्लक्षणेनान्नेन। २. त—पर्जन्यस्तृपेराद्यन्तविपरीतस्य। ३. त—वान्तीति।
४. ख-च-ण—पार्जन्यस्य।

प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।
इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥ ४ ॥

प्र । वाताः । वान्ति । पतयन्ति । विऽद्युतः ।
उत् । ओषधीः । जिहते । पिन्वते । स्वरिति स्वः ।
इरा । विश्वस्मै । भुवनाय । जायते । यत् । पर्जन्यः । पृथिवीम् । रेतसा । अवति ॥ ४ ॥

ᵛप्र[1] ᵛवान्ति ᵛवाताः[1] वृष्ट्यर्थम् । ᵛपतयन्ति गच्छन्ति समन्तात् संचरन्ति ᵛविद्युतः । ᵛओषधीः ओषधयः ᵛउत् ᵛजिहते उद्गच्छन्ति प्रवर्धन्ते । ᵛस्वः अन्तरिक्षं ᵛपिन्वते क्षरति । ᵛइरा भूमिः ᵛविश्वस्मै सर्वस्मै ᵛभुवनाय सर्वजगद्धिताय ᵛजायते समर्था भवति । कदैवमिति । ᵛयत् यदा ᵛपर्जन्यः देवः ᵛपृथिवीं ᵛरेतसा उदकेन ᵛअवति रक्षति[2] अभिगच्छति वा तदैवं भवति ॥

यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवज्जर्भुरीति ।
यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥ ५ ॥

यस्य । व्रते । पृथिवी । नन्नमीति । यस्य । व्रते । शफऽवत् । जर्भुरीति ।
यस्य । व्रते । ओषधीः । विश्वऽरूपाः । सः । नः । पर्जन्य । महि । शर्म । यच्छ ॥ ५ ॥

ᵛयस्य पर्जन्यस्य ᵛव्रते कर्मणि ᵛपृथिवी ᵛनन्नमीति अत्यर्थं नमति सर्वेषामधो भवति । ᵛयस्य ᵛव्रते ᵛशफवत् पादोपेतं गवादिकं ᵛजर्भुरीति भ्रियते पूर्यते गच्छतीति वा । ᵛयस्य ᵛव्रते कर्मणि ᵛओषधीः ओषध्यः ᵛविश्वरूपाः नानारूपा भवन्ति हे ᵛपर्जन्य ᵛसः महांस्त्वं ᵛनः अस्मभ्यं ᵛमहि ᵛशर्म महत् सुखं ᵛयच्छ प्रयच्छ ॥　　॥ २७ ॥

दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥ ६ ॥

दिवः । नः । वृष्टिम् । मरुतः । ररीध्वम् । प्र । पिन्वत । वृष्णः । अश्वस्य । धाराः ।
अर्वाङ् । एतेन । स्तनयित्नुना । आ । इहि । अपः । निऽसिञ्चन् । असुरः । पिता । नः ॥ ६ ॥

हे ᵛमरुतः यूयं ᵛदिवः अन्तरिक्षसकाशात् ᵛनः अस्मदर्थं ᵛवृष्टिं ᵛररीध्वं दत्त । ᵛवृष्णः वर्षकस्य ᵛअश्वस्य व्यापकस्य मेघस्य संबन्धिन्यः ᵛधाराः उदकधाराः ᵛप्र ᵛपिन्वत प्रक्षरत । हे

---

१. त-प्रवाता वाती(न्ती)ति वाताः । २. त-न-र- क्षरति ।

पर्जन्य त्वम् ᵛएतेन ᵛस्तनयित्नुना गर्जता मेघेन सह ᵛअर्वाङ् अस्मदभिमुखम् ᵛएहि आगच्छ। किं कुर्वन्। ᵛअपः अम्भांसि ᵛनिषिञ्चन् स देवः ᵛअसुरः उदकानां निरसितापि सन् ᵛनः अस्माकं ᵛपिता पालकश्च ॥

अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन।

दृतिं सु कर्ष विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥ ७ ॥

अभि। क्रन्द। स्तनय। गर्भम्। आ। धाः। उदन्ऽवता। परि। दीय। रथेन।

दृतिम्। सु। कर्ष। विऽसितम्। न्यञ्चम्। समाः। भवन्तु। उत्ऽवतः। निऽपादाः ॥७॥

ᵛअभि भूम्यभिमुखं ᵛक्रन्द शब्दय। तदेव पुनरुच्यते दार्ढ्याय। ᵛस्तनय गर्ज। ᵛगर्भं गर्भस्थानीयमुदकम् ओषधीषु ᵛआ ᵛधाः आधेहि। तदर्थम् ᵛउदन्वता उदकवता ᵛरथेन ᵛपरि ᵛदीय परितो गच्छ। ᵛदृतिं दृतिवदुदकधारकं मेघं ᵛविषितं विशेषेण सितं बद्धं ᵛन्यञ्चं न्यक् अधोमुखं ᵛसु[1] सुष्ठु ᵛकर्ष आकर्ष वृष्ट्यर्थम्। यद्वा। विषितं विमुक्तबन्धनमेवं कर्ष। एवं कृते[1] ᵛउद्वतः ऊर्ध्ववन्तः उन्नतप्रदेशाः ᵛनिपादाः न्यग्भूतपादा निकृष्टपादा वा निम्नोन्नतप्रदेशाः[2] ᵛसमाः एकरथाः ᵛभवन्तु उदकपूर्णा भवन्त्वित्यर्थः ॥

महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिताः पुरस्तात्।

घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः ॥ ८ ॥

महान्तम्। कोशम्। उत्। अच। नि। सिञ्च।

स्यन्दन्ताम्। कुल्याः। विऽसिताः। पुरस्तात्।

घृतेन। द्यावापृथिवी इति। वि। उन्धि। सुऽप्रपानम्। भवतु। अघ्न्याभ्यः ॥ ८ ॥

हे पर्जन्य त्वं ᵛमहान्तं प्रवृद्धं ᵛकोशं कोशस्थानीयं मेघम् ᵛउदच[3] उद्गच्छ। उद्गमय वा। तथा कृत्वा ᵛनि ᵛषिञ्च नीचैः क्षारय। ᵛकुल्याः नद्यः ᵛविषिताः विष्यूताः सत्यः ᵛस्यन्दन्तां प्रवहन्तु ᵛपुरस्तात् पूर्वाभिमुखम्। प्रायेण नद्यः प्राच्यः[4] स्यन्दन्ते। ᵛघृतेन उदकेन ᵛद्यावापृथिवी दिवं च पृथिवीं च ᵛव्युन्धि क्लेदय अत्यधिकम्। ᵛअघ्न्याभ्यः गोभ्यः ᵛसुप्रपाणं सुष्ठु प्रकर्षेण पातव्यमुदकं ᵛभवतु ॥

---

१. त–कुरु। २. ख-च-ण–पाषाणादिनिम्नोन्नताः ; झ-न-र–निम्नोन्नताः प्रदेशाः ; भ–पाषाणादिनिम्नोन्नताः प्रदेशाः। ३. ख-च-झ-ण-त-न-भ-र-श–उत्कृष्टमुदच। ४. त–प्राच्याः।

यत्पर्जन्य कनिक्रदत्स्तनयन् हंसि दुष्कृतः ।
प्रतीदं विश्वं मोदते यत्किं च पृथिव्यामधि ॥ ९ ॥

यत् । पर्जन्य । कनिक्रदत् । स्तनयन् । हंसि । दुःऽकृतः ।
प्रति । इदम् । विश्वम् । मोदते । यत् । किम् । च । पृथिव्याम् । अधि ॥ ९ ॥

हे पर्जन्य यत् यदा त्वं कनिक्रदत् अत्यर्थं शब्दयन् स्तनयन् दुष्कृतः पापकृतो मेघान् हंसि विदारयसि तदानीम् इदं विश्वं जगत् प्रति मोदते । विश्वं विशेष्यते । यत्किं च पृथिव्यामधि भूम्यामधिष्ठितं यच्चराचरात्मकं तदिदं विश्वं मोदते हृष्यति । वृष्टेः सर्वजगत्प्रीतिकारणत्वं प्रसिद्धम् ॥

अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ ।
अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषाम् ॥ १० ॥

अवर्षीः । वर्षम् । उत् । ऊँ इति । सु । गृभाय । अकः । धन्वानि । अतिऽएतवै । ऊँ इति ।
अजीजनः । ओषधीः । भोजनाय । कम् । उत । प्रऽजाभ्यः । अविदः । मनीषाम् ॥ १० ॥

इयमतिवृष्टिविमोचनी । हे पर्जन्य त्वम् अवर्षीः वृष्टवानसि । वर्षमुदु षू गृभाय उत्कृष्टं[1] सु सुष्ठु गृभाय गृहाण । परिहरेत्यर्थः । धन्वानि[2] निरुदकप्रदेशान् अकः[2] जलवतः कृतवानसि । किमर्थम् । अत्येतवा उ अतिक्रम्य गन्तुम् । ओषधीः अजीजनः उदपादयः । किमर्थम् । भोजनाय धनाय भोगाय वा । कम् इत्ययं 'शिशिरं जीवनाय कम्' इतिवत्पादपूरणः ( निरु. १. १० ) । उत अपि च प्रजाभ्यः सकाशात् मनीषां स्तुतिम् अविदः प्राप्तवानसि ॥　　॥ २८ ॥

'बळित्था' इति तृचात्मकं द्वादशं सूक्तं भौमस्यात्रेरार्षं पृथिवीदेवताकमानुष्टुभम् । अनुक्रान्तं च—'बळित्था तृचं पार्थिवमानुष्टुभम्' इति । सूक्तविनियोगो लैङ्गिकः । आद्या देवानां हविःषु पृथिव्या अनुवाक्या । 'बळित्था पर्वतानां दृळ्हा चिद्या वनस्पतीन्' ( आश्व. श्रौ. ६. १४ ) इति हि सूत्रितम् । भूमिस्तोमे चैषा मरुत्वतीयशस्त्रे सूक्तमुखीया ( आश्व. श्रौ. ९. ५ ) ॥

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ १ ॥

बट् । इत्था । पर्वतानाम् । खिद्रम् । बिभर्षि । पृथिवि ।
प्र । या । भूमिम् । प्रवत्वति । मह्ना । जिनोषि । महिनि ॥ १ ॥

---

१. झ-त-भ-र—उदुत्कृष्टम् । २. ख-च-झ-ण-त-न-भ-र—जलवतः ( त-जलप्रदेशान् ) धन्वानि निरुदकप्रदेशानकः ।

द्विरूपा पृथिवी चैषा प्रत्यक्षा[1] देवतापि[1] च । मध्यस्थाना देवतोक्ता सात्र संबोध्य[2] वर्ण्यते[2] ॥ हे ^v^पृथिवि प्रथनवति मध्यस्थानदेवते । त्वम् ^v^इत्था इत्थम् अमुत्र अन्तरिक्षे वा ^v^बट् सत्यं ^v^पर्वतानां मेघानां वा ^v^खिद्रं खेदनं भेदनं ^v^बिभर्षि धारयसि । हे ^v^महिनि महति हे ^v^प्रवत्वति प्रकर्षवति प्रवणोदकवति वा ^v^या त्वं ^v^भूमिं प्रत्यक्षां पृथिवीं ^v^मह्ना महत्त्वेन महतोदकेन वा ^v^प्र ^v^जिनोषि प्रकर्षेण प्रीणयसि ॥

**स्तोमा॑सस्त्वा विचारिणि॒ प्रति॑ ष्टोभन्त्य॒क्तुभि॑ः ।**

**प्र या वाजं॒ न हेष॑न्तं पे॒रुमस्य॑स्यर्जुनि ॥ २ ॥**

स्तोमा॑सः । त्वा॒ । वि॒ऽचा॒रि॒णि॒ । प्रति॑ । स्तो॒भ॒न्ति॒ । अ॒क्तुऽभि॑ः ।

प्र । या । वाज॑म् । न । हेष॑न्तम् । पे॒रुम् । अस्य॑सि । अ॒र्जु॒नि॒ ॥ २ ॥

हे ^v^विचारिणि विविधं चरणशीले पृथिवि[3] देवि[3] ^v^त्वा त्वां ^v^स्तोमासः स्तोतारः ^v^अक्तुभिः गमनशीलैः स्तोत्रैः ^v^प्रति ^v^ष्टोभन्ति अभिष्टुवन्ति[4] । किंच ^v^या त्वं ^v^हेषन्तं शब्दयन्तं ^v^वाजं ^v^न अश्वमिव उद्वृत्तं ^v^पेरुं पूरकं मेघं ^v^प्र ^v^अस्यसि प्रक्षिपसि हे ^v^अर्जुनि शुभ्रवर्णे गमनशीले वा ॥

देवानां हविःषु ‘ दृळ्हा चित् ’ इति पृथिव्या याज्या । एषैव भूमिस्तोमे निष्केवल्ये सूक्तमुखीया । सूत्रं तु पूर्वमेवोदाहृतम् ॥

**दृ॒ळ्हा चि॒द्या व॒नस्पती॑न्क्ष्म॒या दर्ध॒र्ष्योज॑सा ।**

**यत्ते॑ अ॒भ्रस्य॑ वि॒द्युतो॑ दि॒वो वर्ष॑न्ति वृ॒ष्टय॑ः ॥ ३ ॥**

दृ॒ळ्हा । चि॒त् । या । व॒नस्पती॑न् । क्ष्म॒या । दर्धि॑र्षि । ओज॑सा ।

यत् । ते॒ । अ॒भ्रस्य॑ । वि॒ऽद्युत॑ः । दि॒वः । वर्ष॑न्ति । वृ॒ष्टय॑ः ॥ ३ ॥

हे पृथिवि[5] ^v^या त्वं ^v^दृळ्हा ^v^चित् ॥ ‘ सुपां सुलुक्° ’ इति तृतीयाया आकारः ॥ दृढया ^v^क्ष्मया भूम्या सह ^v^वनस्पतीन् वृक्षान् ^v^ओजसा बलेन ^v^दर्धर्षि धारयसि । अथवा दृढेति[6] विधेयविशेषणम् । वनस्पतीन् दृढान् कृत्वा धारयसि इत्यर्थः । ^v^यत् यस्याः[7] ^v^ते तव संबन्धिनः ^v^वृष्टयः वर्षका मेघाः ^v^विद्युतः[8] विद्योतमानात्[8] ^v^अभ्रस्य ॥ पञ्चम्यर्थे षष्ठी ॥ अभ्रात् अपां हर्तुः ^v^दिवः[9] अन्तरिक्षात् आदित्याद्वा ^v^वर्षन्ति । अथवा[10] यत् यस्यास्ते तवाभ्रस्य मेघस्य वृष्टय उदकसंघाता विद्युतो विद्योतमानाया दिवः सकाशात् वर्षन्ति पतन्ति[10] ॥ ॥ २९ ॥

---

१. र–प्रत्यक्षदेवतापि । २. त–संबोध्यते । ३. त–पृथिवीदेवि । ४. ख-ग-घ-च-ज-झ-ण-न-भ-श–अभिस्तुवन्ति । ५. त–पृथिवि देवि । ६. त–दृळ्हेति । ७. त– अस्याः । ८. ख-च-झ-ण-न-भ-र–दिवो द्योतमानात् । ९. ख-च-झ-ण-त-न-भ-र– दिवः नीचैः । १०. ख-ग-घ-च-ज-झ-ण-न-भ–अथवा... पतन्ति ’ नास्ति ।

' प्र सम्राजे ' इत्यष्टर्चं त्रयोदशं सूक्तमात्रेयं त्रैष्टुभं वारुणम् । अनुक्रम्यते च—' प्र सम्राजेऽष्टौ वारुणम् ' इति । विनियोगो लैङ्गिकः ॥

प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।

वि यो जघान शमितेव चर्मोपस्तिरे पृथिवीं सूर्याय ॥ १ ॥

प्र । सम्ऽराजे । बृहत् । अर्च । गभीरम् । ब्रह्म । प्रियम् । वरुणाय । श्रुताय ।

वि । यः । जघान । शमिताऽइव । चर्म । उपऽस्तिरे । पृथिवीम् । सूर्याय ॥ १ ॥

अत्रिः[1] स्वात्मानं संबोध्य ब्रवीति । हे अत्रे[2] त्वं सम्राजे सम्यक् राजमानायेश्वराय श्रुताय सर्वत्र श्रूयमाणाय वरुणाय उपद्रवस्य निवारकाय जनानामावरकाय चैतन्नामकाय देवाय बृहत् प्रभूतं गभीरं दुरवगाहं बह्वर्थोपेतं प्रियं प्रियभूतं[3] ब्रह्म स्तोत्ररूपं कर्म प्र अर्च प्रार्चय । प्रोच्चारयेत्यर्थः । यः वरुणः शमितेव चर्म शमिता पशुविशसनकर्ता[4] यथोपस्तरणाय चर्म हन्ति तद्वत् पृथिवीं विस्तीर्णमन्तरिक्षम् ॥ ' तृतीयस्यां[5] पृथिव्याम् ' ( तै. सं. १. २. १२. १ ) इति श्रुतेः अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वम् ॥ सूर्याय सूर्यस्य उपस्तिरे आस्तरणाय वि जघान विस्तारयामास । विस्तृतं हि व्यवहारयोग्यं भवति तस्मात् व्यवहाराय अन्तरिक्षं विस्तारितवान् । ' उरुं हि राजा वरुणश्चकार ' ( ऋ. सं. १. २४. ८ ) इति ह्युक्तम्[6] ॥

वनेषु व्य१न्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु ।

हृत्सु क्रतुं वरुणो अप्स्व१ग्निं दिवि सूर्यमदधात्सोममद्रौ ॥ २ ॥

वनेषु । वि । अन्तरिक्षम् । ततान । वाजम् । अर्वत्ऽसु । पयः । उस्रियासु ।

हृत्ऽसु । क्रतुम् । वरुणः । अप्ऽसु । अग्निम् ।

दिवि । सर्यम् । अदधात् । सोमम् । अद्रौ ॥ २ ॥

अयं वरुणः वनेषु वृक्षाग्रेषु अन्तरिक्षं वि ततान विस्तारितवान् । तथा वाजसनेयकं —' वनेषु हीदमेषु वृक्षाग्रेष्वन्तरिक्षं विततं तस्मादाह वनेषु व्यन्तरिक्षं ततान ' इति । वाजं बलम् अर्वत्सु अश्वेषु वि ततान । पयः क्षीरम् उस्रियासु गोषु । उस्रियेति गोनाम उस्राविणोऽस्यां भोगा इति तद्व्युत्पत्तिः । हृत्सु हृदयेषु क्रतुं कर्मसंकल्पम् । यद्धि मनसा ध्यायति[7] तत्कर्मणा करोति । अप्सु उदकेषु अग्निं वैद्युतमौर्वं वा । सर्वत्र वि ततानेति संबन्धः । किंच दिवि द्युलोके सूर्यम् अदधात् स्थापितवान् । सोमं च अद्रौ पर्वतेऽदधात् ॥

---

१. ख-च-झ-ण-भ-र- अत्र । २. ख-च-ण-र- क्षत्रज्ञ ; झ-न-भ-क्षेत्रज्ञ । ३. ख-च-ण-प्रियरूपम् । ४. ख-च-ण-पशुविवासनकर्ता ; ग-घ-ज-पशुवियांसनकर्ता ; श-पशुवर्पा समानकर्ता । ५. त-द्वितीयस्यां तृतीयस्याम् । ६. झ-त-न-भ-र- ह्यत्र निरुक्तम् । ७. ख-च-ण-भ-ध्यायति तद्वाचा वदति ।

नीचीनबारं वरुणः कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ ३ ॥

नीचीनऽबारम् । वरुणः । कवन्धम् । प्र । ससर्ज । रोदसी इति । अन्तरिक्षम् ।
तेन । विश्वस्य । भुवनस्य । राजा । यवम् । न । वृष्टिः । वि । उनत्ति । भूम ॥ ३ ॥

नीचीनबारम् अधोमुखबिलं प्र ससर्ज कृतवान् । कम् । कवन्धम् । कवनमुदकम् । तत् धीयतेऽत्रेति कवन्धो मेघः । तं तथाकरोत् । अथवा कवन्धमुदकम् । तदुदकं नीचीनबारं नीचीननिर्गमनबिलं चकार । मेघं विदार्य उदकमधोमुखं चकारेत्यर्थः । किं प्रतीत्युच्यते । रोदसी द्यावापृथिव्यौ अन्तरिक्षं च प्रति । लोकत्रयहितायेत्यर्थः । तेन उदकेन विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा स्वामी वरुणः भूम भूमिं व्युनत्ति क्लेदयति । वृष्टिः सेक्ता पुमान् यवं न यवमिव यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वत् भूमिं सर्वत्रोनत्ति । अथवा वृष्टिर्वरुण इति संबन्धः । वर्षकः पर्जन्य इत्यर्थः । अस्मिन् पक्षे यवं पुरुष इवेति पुरुषशब्दोऽध्याहार्यः । अत्र 'नीचीनबारं वरुणः कवन्धम्' (निरु. १०. ४) इत्यादिनिरुक्तं द्रष्टव्यम् ॥

उनत्ति भूमिं पृथिवीमुत द्यां यदा दुग्धं वरुणो वष्ट्यादित् ।
सम्भ्रेण वसत पर्वतासस्तविषीयन्तः श्रथयन्त वीराः ॥ ४ ॥

उनत्ति । भूमिम् । पृथिवीम् । उत । द्याम् । यदा । दुग्धम् । वरुणः । वष्टि । आत् । इत् ।
सम् । अभ्रेण । वसत । पर्वतासः । तविषीऽयन्तः । श्रथयन्त । वीराः ॥ ४ ॥

वरुणः भूमिं पृथिवीं प्रथितमन्तरिक्षम् । अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुक्तम् । उत अपि च द्यां द्युलोकम् उनत्ति क्लेदयति । यदा अयं दुग्धम् उदकपूरणं वष्टि कामयते । अथवा दुग्धमुदकम् । तेन तत्कार्यमोषध्यादिकं लक्ष्यते । ओषध्यादयः प्रवर्धन्तामिति यदा कामयते आदित् अनन्तरमेव सं वसत समाच्छादयन्ति । के । पर्वतासः पर्ववन्तः[1] अद्रयः । केन । अभ्रेण मेघेन । किंच तविषीयन्तः बलमिच्छन्तः वीराः विशेषेण वृष्टेः प्रेरयितारो मरुतः श्रथयन्त श्रथयन्ति मेघान् ॥

इमामू ष्वासुरस्य श्रुतस्य महीं मायां वरुणस्य प्र वोचम् ।
मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण ॥ ५ ॥

इमाम् । ऊँ इति । सु । आसुरस्य । श्रुतस्य । महीम् । मायाम् । वरुणस्य । प्र । वोचम् ।
मानेनऽइव । तस्थिऽवान् । अन्तरिक्षे ।
वि । यः । ममे । पृथिवीम् । सूर्येण ॥ ५ ॥

---

१. ख-च-ण–पर्वताः ; झ-भ–पर्वतः ।

ᵛआसुरस्य असुरसंबन्धिनः। असुराणामस्य च वध्यघातकभावः संबन्धः। असुरहन्तुरित्यर्थः। अथवा असुरो मेघः। प्राणदानात् तत्संबन्धिनः ᵛश्रुतस्य विश्रुतस्य ᵛमहीं महतीम् ᵛइमां[1] ᵛमायां प्रज्ञां ᵛप्र ᵛवोचं प्रब्रवीमि। कैषा मायेति सोच्यते। ᵛयः वरुणः ᵛअन्तरिक्षे ᵛतस्थिवान् तिष्ठन् ᵛमानेनेव दण्डेनेव ᵛसूर्येण ᵛपृथिवीम् अन्तरिक्षं ᵛवि ᵛममे परिच्छिनत्ति तस्यैषा माया॥ ॥ ३० ॥

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष।
एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥ ६ ॥

इमाम्। ऊँ इति। नु। कविऽतमस्य। मायाम्। महीम्। देवस्य। नकिः। आ। दधर्ष।
एकम्। यत्। उद्ना। न। पृणन्ति। एनीः। आऽसिञ्चन्तीः। अवनयः। समुद्रम् ॥ ६ ॥

ᵛकवितमस्य प्रकृष्टप्रज्ञस्य ᵛदेवस्य द्योतमानस्य स्तुत्यस्य वा वरुणस्य ᵛइमां सर्वप्रसिद्धां ᵛमहीं महतीं ᵛमायां प्रज्ञां ᵛनकिः नैव ᵛआ ᵛदधर्ष न हिनस्ति कश्चिदपि। ᵛऊ ᵛनु इति पूरणौ। ᵛयत् यस्मात् ᵛएकं ᵛसमुद्रम् ᵛउद्ना उदकेन ᵛन ᵛपृणन्ति न पूरयन्ति। काः। ᵛएनीः एन्यः शुभ्रा गमनशीला वा ᵛआसिञ्चन्तीः उदकमासेचयन्त्यः[2] ᵛअवनयः नद्यः। बह्वयो नद्यः सर्वदोदकेन पूरयन्त्योऽपि नैकमपि समुद्रं पूरयन्तीति। इदं वरुणस्य[3] महत् कर्म[3] इति। अत्र अन्तरिक्षविस्तारादि-समुद्रापूरणपर्यन्तं कर्म परमेश्वरस्यैवोचितं न वरुणस्येति न वाच्यं तस्य वरुणादिरूपावस्थानात्। एष ब्रह्मेत्यादिश्रुतेः॥

अर्यम्यं वरुण मित्र्यं वा सखायं वा सदमिद्भ्रातरं वा।
वेशं वा नित्यं वरुणारणं वा यत्सीमागश्चकृमा शिश्रथस्तत् ॥ ७ ॥

अर्यम्यम्। वरुण। मित्र्यम्। वा। सखायम्। वा। सदम्। इत्। भ्रातरम्। वा।
वेशम्। वा। नित्यम्। वरुण। अरणम्। वा।
यत्। सीम्। आगः। चकृम। शिश्रथः। तत् ॥ ७ ॥

हे ᵛवरुण ᵛअर्यम्यम्। अर्यमैवार्यम्यः॥ स्वार्थिको यत्। अर्तेरिदं रूपम्॥ प्रदातारमित्यर्थः। अथवा ईरणात् मननात् च शास्तीत्यर्यमा गुरुः। तम्। ᵛवा अथवा ᵛमित्र्यम्॥ ‘ जिमिदा स्नेहने ’ इत्यस्मात् मित्रम्[4]। स्वार्थिको यत्॥ अनुरक्तमित्यर्थः। ᵛवा अथवा ᵛसखायं समानख्यानं ᵛसदमित् सर्वदैव ᵛभ्रातरं ᵛवा। ᵛनित्यं[5] निरन्तरं[5] ᵛवेशं निकटनिकेतनवर्तिनं ᵛवा। ᵛअरणं ᵛवा अशब्दमित्यर्थः[6]। अथवा अरणमदातारं वा नित्यं निरन्तरम्। एतान् प्रति ᵛयत्सीं यदेतत् ᵛआगः अपराधं ᵛचकृम ᵛतत् ᵛशिश्रथः अस्मत्तो विनाशय॥

---

१. ख-च-झ-ण-न-भ-र–‘ इमां ’ नास्ति। २. ख-च-झ-ण-न-भ-र–उदकमासिञ्चयन्त्यः। ३. ख-च-ण-भ–वरुणमहत्त्वमिति ; झ–वरुणमहत्त्वामेति ; न-र–वरुणमहत्कर्मेति। ४. ख-च-झ-ण-त-न-भ-र– ‘ मित्रं ’ नास्ति। ५. ख-च-झ-ण-त-न-भ-र– ‘ नित्यं निरन्तरं ’ नास्ति। ६. त–अशब्द्यमित्यर्थः।

कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता वि ष्य शिथिरेव देवाधा ते स्याम वरुण प्रियासः ॥ ८ ॥

कितवासः । यत् । रिरिपुः । न । दीवि । यत् । वा । घ । सत्यम् । उत । यत् । न । विद्म ।
सर्वा । ता । वि । स्य । शिथिराऽइव । देव । अध । ते । स्याम । वरुण । प्रियासः ॥ ८ ॥

कितवासः कितवा द्यूतकृतः । किं तवास्ति सर्वं मया जितमिति वदतीति[1] कितवः[1] । ते[2] दीवि न देवने द्यूते यथा यद्रिरिपुः लेपयन्ति पापमारोपयन्ति तथास्मासु द्वेष्टारो मयि त्वमेतत् पापमकरोः इत्याक्षिपन्ति । अत्र पुरस्तादुपचारोऽपि नकार उपमार्थीयः । वा अथवा । घ इति पूरणः । यत् पापं सत्यम् आरोपमन्तरेण कृतवन्तः स्मः । उत अपि च यत् कृतं पापं न विद्म न जानीमः ता तानि सर्वा सर्वाणि शिथिरेव शिथिलानीव शिथिलबन्धनानि फलानीव वि ष्य विमोचय ॥ स्यतिरुपसृष्टो विमोचने ॥ हे देव अध अनन्तरं ते तव प्रियासः प्रियाः स्याम भवेम ॥ ॥ ३१ ॥

' इन्द्राग्नी यम् ' इति षडृचं चतुर्दशं सूक्तमत्रेरार्षमानुष्टुभमैन्द्राग्नम् । षष्ठी विराट्पूर्वा । ' आद्यौ दशकावष्टकास्त्रयः ' ( अनु. ९. ११ ) इति परिभाषितत्वात् । तथा चानुक्रान्तम्— ' इन्द्राग्नी षळैन्द्राग्नमानुष्टुभं विराट्पूर्वान्तम् ' इति । विनियोगो लैङ्गिकः ॥

इन्द्राग्नी यमवथ उभा वाजेषु मर्त्यम् ।
दृळ्हा चित्स प्र भेदति द्युम्ना वाणीरिव त्रितः ॥ १ ॥

इन्द्राग्नी इति । यम् । अवथः । उभा । वाजेषु । मर्त्यम् ।
दृळ्हा । चित् । सः । प्र । भेदति । द्युम्ना । वाणीःऽइव । त्रितः ॥ १ ॥

हे इन्द्राग्नी उभा उभौ परस्परावियुक्तौ युवां यं मर्त्यम् अवथः रक्षथः वाजेषु संग्रामेषु सः मर्त्यः दृळ्हा चित् दृढान्यपि द्युम्ना द्योतमानानि धनानि शत्रुसंबन्धीनि भेदति[3] भिनत्ति । त्रितः ऋषिः वाणीरिव प्रतिवादिवाक्यानीव । अथवा त्रिषु स्थानेषु वर्तमानोऽग्निः शत्रूणां वाक्यानीव ॥

या पृतनासु दुष्टरा या वाजेषु श्रवाय्या ।
या पञ्च चर्षणीरभीन्द्राग्नी ता हवामहे ॥ २ ॥

या । पृतनासु । दुस्तरा । या । वाजेषु । श्रवाय्या ।
या । पञ्च । चर्षणीः । अभि । इन्द्राग्नी इति । ता । हवामहे ॥ २ ॥

---

१. ख-च-ण-भ- वदन्तीति कितवाः । २. न-र-न । ३. ख-ग-घ-च-ज-ण-भ-श-प्रभेदति ।

ᵛया यौ ᵛइन्द्राग्नी ᵛपृतनासु ᵛदुष्टरा दुष्टरौ अनभिभाव्यौ । ᵛया यौ च ᵛवाजेषु संग्रामेषु अन्नेषु वा ᵛश्रवाय्या श्रवाय्यौ स्तुत्यौ । ᵛया यौ ᵛपञ्च ᵛचर्षणीः । चर्षणयो मनुष्याः । तान् ᵛअभि। रक्षतः इति शेषः । ᵛता तौ महानुभावौ ᵛहवामहे स्तुमः ॥

तयोरिदमवच्छवस्तिग्मा दिद्युन्मघोनोः ।

प्रति द्रुणा गभस्त्योर्गवां वृत्रघ्न एषते ॥ ३ ॥

तयोः । इत् । अमऽवत् । शवः । तिग्मा । दिद्युत् । मघोनोः ।

प्रति । द्रुणा । गभस्त्योः । गवाम् । वृत्रऽघ्ने । आ । ईषते ॥ ३ ॥

ᵛअमवत् अभिभावुकं ᵛशवः बलं ᵛतयोरित् तयोरेव। ᵛमघोनोः मघवतोः अन्नवतोर्धनवतोर्वा तयोः ᵛदिद्युत् वज्रं ᵛतिग्मा[1] तीक्ष्णं वर्तते ᵛगभस्त्योः हस्तयोः । एवंभूतौ देवौ ᵛगवाम् उदकानां पणिभिरपहृतानां वा गवां लाभाय ᵛद्रुणा द्रुमविकारेण गमनशीलेन वा एकेन रथेन ᵛवृत्रघ्ने आवरकमेघहननाय तथाविधवृत्रासुरवधाय वा ᵛप्रति ᵛईषते प्रतिगच्छतः ॥

ता वामेषे रथानामिन्द्राग्नी हवामहे ।

पती तुरस्य राधसो विद्वांसा गिर्वणस्तमा ॥ ४ ॥

ता । वाम् । एषे । रथानाम् । इन्द्राग्नी इति । हवामहे ।

पती इति । तुरस्य । राधसः । विद्वांसा । गिर्वणःऽतमा ॥ ४ ॥

हे देवौ ᵛता तौ वक्ष्यमाणगुणौ ᵛवां युवां ᵛहवामहे स्तुमः । किमर्थम् । ᵛरथानाम् ᵛएषे युद्धे रथानां प्रेरणाय । कीदृशौ युवाम् । ᵛइन्द्राग्नी इन्द्रमग्निं च परस्परयुग्मभूतौ ᵛतुरस्य जङ्गमरूपस्य ᵛराधसः धनादिलक्षणस्य ᵛपती स्वामिनौ ᵛविद्वांसा सर्वज्ञौ ᵛगिर्वणस्तमा गीर्भिर्वननीयतमौ। ईदृशौ युवां हवामहे ॥

ता वृधन्तावनु द्यून्मर्ताय देवावदभा ।

अर्हन्ता चित्पुरो दधेऽशेव देवावर्वते ॥ ५ ॥

ता । वृधन्तौ । अनु । द्यून् । मर्ताय । देवौ । अदभा ।

अर्हन्ता । चित् । पुरः । दधे । अंशाऽइव । देवौ । अर्वते ॥ ५ ॥

ᵛता तौ ᵛअनु ᵛद्यून् प्रतिदिनं ᵛवृधन्तौ वर्धमानौ । सर्वदा प्रवृद्धावित्यर्थः । वर्धने दृष्टान्तः । मर्तेव मनुष्याविव। तौ यथा प्रतिदिनं वर्धेते । ᵛदेवौ द्योतमानौ ᵛअदभा अहिंस्यौ ᵛअर्हन्ता

---

१. ख-च-झ-ण-न-भ-र- तिग्मम् ।

ऋ. २-१२५

ᵛचित् प्रकर्षेण पूज्यौ । चिदिति पूजायाम् । तादृशौ महानुभावौ ᵛदेवौ ᵛअर्वते अश्वलाभाय ᵛपुरो ᵛदधे पुरस्कुर्वे । ᵛअंशेव । अंशो नाम द्वादशादित्यमध्यवर्ती देवः । स भगस्याप्युपलक्षकः । अंशाविव आदित्याविव । दीप्ताविव्यर्थः ॥

एवेन्द्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभिः ।
ता सूरिषु श्रवो बृहद्रयिं गृणत्सु दिधृतमिषं गृणत्सु दिधृतम् ॥ ६ ॥

एव । इन्द्राग्निऽभ्याम् । अहावि । हव्यम् । शूष्यम् । घृतम् । न । पूतम् । अद्रिऽभिः ।
ता । सूरिषु । श्रवः । बृहत् । रयिम् । गृणत्ऽसु । दिधृतम् ।
इषम् । गृणत्ऽसु । दिधृतम् ॥ ६ ॥

ᵛएव एवमिदानीं क्रियमाणप्रकारेण । स्तुतिसाहित्येनेत्यर्थः । ᵛइन्द्राग्निभ्यां ᵛहव्यं हविः ᵛअहावि परित्यक्तमासीत् । कीदृशं तत् । ᵛशूष्यं बलकरम् । किमिव । ᵛअद्रिभिः ग्रावभिः ᵛपूतम् अभिषुतं ᵛघृतं ᵛन सोमरसमिव । तद्यथा युवाभ्यां प्रदीयते तद्वच्चरुपुरोडाशादिकमपि । ᵛता तौ देवौ ᵛसूरिषु मेधाविष्वस्मासु ᵛबृहत् प्रभूतं ᵛश्रवः अन्नं यशो वा ᵛरयिं[1] धनं च[1] ᵛदिधृतं धारयतम् ᵛइषम् अन्नं ᵛगृणत्सु स्तुवत्सु ᵛदिधृतम् । पुनरुक्तिरादरार्था ॥ ॥ ३२ ॥

'प्र वो महे' इति नवर्चं पञ्चदशं सूक्तम् एवयामरुदाख्यस्य आत्रेयस्य मुनेरार्षं मरुद्देवताकमतिजगतीच्छन्दस्कम् । तथा चानुक्रमणिका—'प्र वो नवैवयामरुन्मारुतमतिजागतम्' इति । दशरात्रे षष्ठेऽहनि तृतीयसवनेऽच्छावाकशस्त्रे इदं सूक्तम् । सूत्रितं च—'एवयामरुदुक्तो वृषाकपिना' (आश्व. श्रौ. ८. ४) इति ॥

प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
प्र शर्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ १ ॥

प्र । वः । महे । मतयः । यन्तु । विष्णवे । मरुत्वते । गिरिऽजाः । एवयामरुत् ।
प्र । शर्धाय । प्रऽयज्यवे । सुऽखादये । तवसे । भन्दत्ऽइष्टये । धुनिऽव्रताय । शवसे ॥ १ ॥

ᵛप्र ᵛयन्तु प्रगच्छन्तु ᵛगिरिजाः वाचि निष्पन्नाः ᵛमतयः स्तुतयः । कस्मै । ᵛवः तुभ्यम् । वचनव्यत्ययः । ᵛविष्णवे व्याप्तायेन्द्राय विष्णवे वा ᵛमरुत्वते मरुद्भिस्तद्वते । कस्य स्तुतय इत्युच्यते । ᵛएवयामरुत् एतन्नामकस्य ऋषेः ॥ षष्ठ्या लुक् ॥ अथवा अयमृषिर्गिरिजाः स्तुतेर्जनयिता भवति । उत्तरार्धे मरुत्स्तुतिः । किंच ᵛप्र यन्तु स्तुतयः । कस्मै । ᵛशर्धाय बलाय मारुताय । इतरत् सर्वं बलविशेषणम् । ᵛप्रयज्यवे प्रकर्षेण यष्टव्याय ᵛसुखादये शोभनाभरणाय । खादिः आभरणविशेषः । 'हस्तेषु खादिश्च' (ऋ. सं. १. १६८. ३); 'पत्सु खादयः' (ऋ. सं. ५. ५४. ११) इति च श्रुतेः । ᵛतवसे

---

१. ख-च-ज्ञ-ण-त-न-भ-र- 'रयिं धनं च' नास्ति ।

बलवते भन्ददिष्टये। स्तुतिरूपा इष्टिर्यस्य तद्भन्ददिष्टि। तस्मै धुनिव्रताय मेघानां चालनं कर्म यस्य तादृशाय शवसे गमनवते ॥

प्र ये जाता महिना ये च नु स्वयं प्र विद्मना ब्रुवत एवयामरुत् ।
क्रत्वा तद्वो मरुतो नाधृषे शवो दाना मह्ना तदेषामधृष्टासो नाद्रयः ॥ २ ॥

प्र । ये । जाताः । महिना । ये । च । नु । स्वयम् । प्र । विद्मना । ब्रुवते । एवयामरुत् ।
क्रत्वा । तत् । वः । मरुतः । न । आऽधृषे । शवः ।
दाना । मह्ना । तत् । एषाम् । अधृष्टासः । न । अद्रयः ॥ २ ॥

ये महिना महता विष्णुना इन्द्रेण वा सह प्र जाताः प्रादुर्भूतास्तान् ब्रुवते। ये च नु क्षिप्रं स्वयम् एव विद्मना यज्ञगमनविषयज्ञानेन सह प्र जाताः प्रादुर्भूतास्तान् मरुतः एवयामरुत् ब्रुवते स्तौति[1] ॥ प्रेत्ययमाख्यातेन वा संबन्धनीयः। ब्रुवते इति व्यत्ययेन बहुवचनम्। एकवचने वा छान्दसः शः। निघाताभावश्छान्दसः ॥ अथ प्रत्यक्षवादः। हे मरुतः वः युष्माकं तत् प्रसिद्धं शवः बलं क्रत्वा चालनादिरूपेण कर्मणा युक्तं न आधृषे कैश्चिदपि आधर्षणीयं न भवति। अन्येषामसुरादीनां क्रत्वा कर्मणा वा अनभिभाव्यं भवति ॥ कृत्यार्थे केन् ॥ किंच एषां वः तत्[2] बलं दाना अभिमतदानेन मह्ना महत्त्वेन च उपेतम्। यूयं प्रबलाः। अधृष्टासः अधर्षणीयाः। तत्र दृष्टान्तः। अद्रयः न। ते यथा अधृष्यास्तद्वत् यूयमपि ॥

प्र ये दिवो बृहतः शृण्विरे गिरा सुशुक्वानः सुभ्व एवयामरुत् ।
न येषामिरी सधस्थ ईष्ट आँ अग्नयो न स्वविद्युतः प्र स्पन्द्रासो धुनीनाम् ॥३॥

प्र । ये । दिवः । बृहतः । शृण्विरे । गिरा । सुऽशुक्वानः । सुऽभ्वः । एवयामरुत् ।
न । येषाम् । इरी । सधऽस्थे । ईष्टे । आ ।
अग्नयः । न । स्वऽविद्युतः । प्र । स्पन्द्रासः । धुनीनाम् ॥ ३ ॥

ये मरुतः बृहतः महतः[3] दिवः द्युलोकादागच्छन्तः प्र[4] शृण्विरे श्रूयन्ते तान् मरुतः गिरा एवयामरुत् स्तुतवान्[5]। कीदृशास्ते। सुशुक्वानः दीप्ताः सुभ्वः सुष्ठु भवन्तः। येषां मरुतां सधस्थे सहस्थाने स्वकीये निवासे तिष्ठताम्[6] इरी ईरिता प्रेरिता[6] न ईष्टे आ न ईशते च चालयितुम्। आ इति चार्थे। अग्नयो न अग्नय इव स्वविद्युतः स्वयमेव विद्योतमानाः धुनीनां नदीनां स्पन्द्रासः वर्षणेन चालयितारश्च ॥

---

१. ख-च-ज्ञ-ण-त-न-भ-र- 'स्तौति' नास्ति। २. ख-च-ज्ञ-ण-त-न-भ-र- 'तत्' नास्ति। ३. ग-घ-ज-न-र-श- 'महतः' नास्ति। ४. ख-च-ज्ञ-ण-त-न-भ-र- 'प्र' नास्ति। ५. त-र-श- स्तुतवान्। तान् शृण्विरे। ६. ख-च-ज्ञ-ण-न-भ-र- 'तिष्ठताम्... प्रेरिता' नास्ति।

स चक्रमे महतो निरुरुक्रमः समानस्मात्सदस एवयामरुत् ।

यदायुक्त त्मना स्वादधि ष्णुभिर्विष्पर्धसो विमहसो जिगाति शेवृधो नृभिः ॥४॥

सः । चक्रमे । महतः । निः । उरुऽक्रमः । समानस्मात् । सदसः । एवयामरुत् ।

यदा । अयुक्त । त्मना । स्वात् । अधि । स्नुऽभिः ।

विऽस्पर्धसः । विऽमहसः । जिगाति । शेऽवृधः । नृऽभिः ॥ ४ ॥

✓सः मरुद्गणः ✓महतः प्रवृद्धात् ✓समानस्मात् सर्वेषां साधारणात् ✓सदसः स्थानात् अन्तरिक्षात् ✓उरुक्रमः विस्तीर्णक्रमणः सन् ✓निः ✓चक्रमे निरगच्छत् । ✓एवयामरुत् ऋषिः ✓यदा ✓स्वात् स्वकीयस्थानात् । ✓अधि इति पञ्चम्यर्थानुवादी । ✓त्मना आत्मनैव ✓स्नुभिः गन्तृभिः ✓नृभिः स्वनेतृभिरश्वैः ✓अयुक्त युक्तोऽभवत् आगमनप्रार्थनाय । अथ बहुवदुच्यते । तदानीं ✓विस्पर्धसः विविधस्पर्धाः । अहं पुरतो गच्छाम्यहं पुरतो गच्छामीति तेषां स्पर्धा । अथवा विगतस्पर्धाः । न ह्येषां सार्धं स्पर्धकाः सन्ति । ✓विमहसः विशिष्टबलाः ✓शेवृधः शेवस्य सुखस्य वर्धयितारः ✓जिगाति निर्गच्छन्ति । व्यत्ययेन एकवचनम्[1] ॥

स्वनो न वोऽमवान्रेजयद्वृषा त्वेषो ययिस्तविष एवयामरुत् ।

येना सहन्त ऋञ्जत स्वरोचिषः स्थारश्मानो हिरण्ययाः

स्वायुधास इष्मिणः ॥ ५ ॥

स्वनः । न । वः । अमऽवान् । रेजयत् । वृषा । त्वेषः । ययिः । तविषः । एवयामरुत् ।

येन । सहन्तः । ऋञ्जत । स्वऽरोचिषः ।

स्थाःऽरश्मानः । हिरण्ययाः । सुऽआयुधासः । इष्मिणः ॥ ५ ॥

हे मरुतः ✓वः युष्माकं ✓स्वनः वेगजनितः शब्दः ✓न ✓रेजयत् न कम्पयत्वेवयामरुतं माम् ॥ 'सुपां सुलुक्०' इति द्वितीयायाः[2] लुक्[2] ॥ स्वनो विशेष्यते । ✓अमवान् बलवान् ✓वृषा वर्षिता वृष्टेः ✓त्वेषः दीप्तः ✓ययिः[3] गन्ता ✓तविषः प्रवृद्धः[3] । ✓येन स्वनेन ✓सहन्तः शत्रूनभिभवन्तो यूयम् ✓ऋञ्जत प्रसाधयथ ॥ लडर्थे लोट् ॥ कीदृशा यूयम् । ✓स्वरोचिषः स्वायत्तरश्मयः ✓स्थारश्मानः स्थिररश्मयः ✓हिरण्ययाः हिरण्याभरणाः ✓स्वायुधासः स्वायत्तायुधाः ✓इष्मिणः अन्नवन्तो गमनवन्तो वा ॥ ॥३३॥

---

१. ख-च-झ-ण-त-न-भ-र- बहुवचनम् । २. न-श- द्वितीयालुक् । ३. ख-च-झ-ण-न-भ-र- तविषो गन्ता ।

अपारो वो महिमा वृद्धशवसस्त्वेषं शवोऽवत्वेवयामरुत् ।
स्थातारो हि प्रसितौ संदृशि स्थन ते न उरुष्यता निदः
शुशुक्वांसो नाग्नयः ॥ ६ ॥

अपारः । वः । महिमा । वृद्धऽशवसः । त्वेषम् । शवः । अवतु । एवयामरुत् ।
स्थातारः । हि । प्रऽसितौ । सम्ऽदृशि । स्थन ।
ते । नः । उरुष्यत । निदः । शुशुक्वांसः । न । अग्नयः ॥ ६ ॥

हे मरुतः ᵛवः युष्माकं ᵛमहिमा ᵛअपारः अनवधिकः । हे ᵛवृद्धशवसः प्रवृद्धबलाः ᵛत्वेषं दीप्तं ᵛशवः युष्माकं बलम् ᵛअवतु रक्षतु एवयामरुतं[1] माम् ॥ द्वितीयैकवचनस्य लुक् ॥ यूयं ᵛप्रसितौ प्रबलबन्धने नियमनवति यज्ञे ᵛसंदृशि संदर्शने निमित्ते ᵛस्थातारो ᵛहि स्थाननियमेन तिष्ठन्तो भवथ खलु । ᵛते ᵛनः अस्मान् ᵛनिदः निन्दकात् शत्रोः सकाशात् ᵛउरुष्यत रक्षत । ᵛअग्नयः इव ᵛशुशुक्वांसः यूयमिति ॥

ते रुद्रासः सुमखा अग्नयो यथा तुविद्युम्ना अवन्त्वेवयामरुत् ।
दीर्घं पृथु पप्रथे सद्म पार्थिवं येषामज्मेष्वा महः शर्धांस्यद्भुतैनसाम् ॥ ७ ॥

ते । रुद्रासः । सुऽमखाः । अग्नयः । यथा । तुविऽद्युम्नाः । अवन्तु । एवयामरुत् ।
दीर्घम् । पृथु । पप्रथे । सद्म । पार्थिवम् ।
येषाम् । अज्मेषु । आ । महः । शर्धांसि । अद्भुतऽएनसाम् ॥ ७ ॥

ᵛते मरुतः ᵛरुद्रासः रुद्रपुत्राः ᵛसुमखाः शोभनयज्ञाः ᵛअग्नयो ᵛयथा अग्नय इव ᵛतुविद्युम्नाः प्रभूतदीप्तयः । अथवा अग्निसदृशास्तुविद्युम्नाः प्रभूतधनाः ᵛअवन्तु रक्षन्तु ᵛएवयामरुत् एतन्नामानमृषिं माम् । ᵛपार्थिवम् । पृथिव्यत्रान्तरिक्षम् । तत्संबन्धि ᵛदीर्घम् आयतं ᵛपृथु विस्तीर्णं ᵛसद्म सदनं ᵛपप्रथे मरुद्भिः प्रथितमभूत् । ᵛअद्भुतैनसाम् अपापानां ᵛयेषाम् ᵛअज्मेषु गमनेषु ᵛमहः महान्ति ᵛशर्धांसि च ᵛआ गच्छन्तीति शेषः ॥

अद्वेषो नो मरुतो गातुमेतन श्रोता हवं जरितुरेवयामरुत् ।
विष्णोर्महः समन्यवो युयोतन स्मद्रथ्यो॒ न दंसनाप द्वेषांसि सनुतः ॥ ८ ॥

अद्वेषः । नः । मरुतः । गातुम् । आ । इतन । श्रोत । हवम् । जरितुः । एवयामरुत् ।
विष्णोः । महः । सऽमन्यवः । युयोतन ।
[illegible] रथ्यः । न । दंसना । अप । द्वेषांसि । सनुतरिति ॥ ८ ॥

---

१. ख-च-झ-न-भ- एवयामरुदेवामरुतम् ।

हे ᵛमरुतः ᵛअद्वेषः अद्वेषसो यूयं ᵛनः अस्माकं ᵛगातुं गमनस्वभावं स्तोत्रं प्रति ᵛएतन आगच्छत। तदर्थं ᵛजरितुः स्तोतुः ᵛएवयामरुत् एवयामरुतो मम ᵛहवं ᵛश्रोत शृणुत। ᵛविष्णोः व्यापकस्येन्द्रस्य ᵛमहः महतः हे ᵛसमन्यवः समानयज्ञा यूयं ᵛस्मत्। अयं प्रशस्तनाम। प्रशस्ताः ᵛरथ्यो ᵛन रथिनो योद्धार इव। ते यथा शत्रूनपाकुर्वन्ति तद्वदस्माकं ᵛदंसना कर्मणा ᵛसनुतः। अन्तर्हितनामैतत्। अन्तर्हितान् ᵛद्वेषांसि द्वेष्टॄन् ᵛअप ᵛयुयोतन दूरे वियोजयत पृथक्कुरुत ॥

अध्यायोपाकरणोत्सर्गयोः विनियुक्ता[1] (आश्व. गृ. ३. ५)॥

**गन्ता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवयामरुत्।**
**ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः**
**स्यात दुर्धर्तवो निदः ॥ ९ ॥**

गन्त। नः। यज्ञम्। यज्ञियाः। सुऽशमि। श्रोत। हवम्। अरक्षः। एवयामरुत्।
ज्येष्ठासः। न। पर्वतासः। विऽओमनि।
यूयम्। तस्य। प्रऽचेतसः। स्यात। दुःऽधर्तवः। निदः ॥ ९॥

हे ᵛयज्ञियाः मरुतः यूयं ᵛनः अस्माकं ᵛयज्ञं ᵛगन्त आगच्छत। ᵛसुशमि शोभनकर्म यथा भवति तथा। सुकर्मत्वायेत्यर्थः। तदर्थं नः ᵛहवम् अस्मदीयमाह्वानं ᵛश्रोत शृणुत। ᵛअरक्षः रक्षोवर्जिता यूयम्॥ लिङ्गवचनयोर्व्यत्ययः॥ ᵛज्येष्ठासो ᵛन ज्येष्ठा इव ᵛपर्वतासः विन्ध्यादय इवातिप्रवृद्धाः ᵛव्योमनि अन्तरिक्षे वर्तमानाः ᵛप्रचेतसः ᵛयूयं ᵛतस्य ᵛनिदः निन्दकस्य ᵛदुर्धर्तवः दुर्धराः ᵛस्यात भवत॥ ॥ ३४ ॥

॥ इति पञ्चमे मण्डले षष्ठोऽनुवाकः समाप्तं चात्रेयं पञ्चमं मण्डलम्॥

---

१. न- विनियुक्ता। गन्ता नो यज्ञमिति चोत्तरा च। अथातोऽध्यायोपाकरणमिति खण्डे गन्ता नो यज्ञं यज्ञियाः सुषमित्युपक्रम्य इति द्वृचा इति तथोत्सर्ग इति च सूत्रात्।

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | २४ | प्रवधर्यंत | प्रवर्धयत |
| ११ | २१ | संबन्धींनि | संबन्धीनि |
| १२ | १२ | इध्यमानोः | इध्यमानो |
| ४१ | २२ | सहितस्वम् | सहितस्त्वम् |
| १०८ | ११ | पुराडाशस्य | पुरोडाशस्य |
| १५३ | १२ | वद्विषयं | त्वद्विषयं |
| १७१ | १० | ᵛजेता। | ᵛजेता |
| १७३ | १८ | वयसाममनोज्ञां | वयसाममनोज्ञा |
| १९४ | ३ | पोषयितु | पोषयितुः |
| २०७ | ५ | प्रय | प्र य. |
| २०९ पृष्ठादारभ्य २२३ पृष्ठपर्यन्तं 'द्वितीयोऽष्टकः' इत्यस्य स्थाने 'तृतीयोऽष्टकः' इति पठनीयम्। | | | |
| २०९ | ६ | समिरोहत्सुयमा | सीमरोहत्सुयमा |
| २३१ | ३१ | बोरकादेशः | वोरकादेशः |
| २३९ | १९ | असूयँ | असूयं |
| २४२ | १ | हविष्प्रदातृभ्य | हविष्प्रदातृभ्यः[१] |
| २४५ | १७ | मार्गः | मार्गैः |
| २५९ | १६ | ड्वसंज्ञायाम् | ड्रुसंज्ञायाम् |
| २६० | ७ | भस्म्सात्कुरु | भस्मसात्कुरु |
| २७६ | २२ | वयौहानौ | वयोहानौ |
| ३०० | १४ | °र्गीभिः | °र्गीर्भिः |
| ३२० | १२ | उद्वह | उद्वह |
| ३२४ | २८ | ब्रते | ब्रूते |
| ३२५ | १६ | द्विर्वचनस्य | द्विवचनस्य |
| ३२७ | ४ | उतृदिः[३] | उतृदिर्[३] |
| ३२८ | २१ | सतसतः | सतःसतः |
| ३३१ | १ | प्रभूत | प्रभूतं |
| ३४१ | २५ | °नाम्न्यकाहे | °नाम्न्येकाहे |
| ३४२ | २६ | आङि ' | ' आङि |
| ३४५ | ७ | कलशः | कलशः । |
| ३४९ | १६ | पञ्चम्यर्थं | पञ्चम्यर्थे |
| ३५० | २० | थाथघन्क्ता° | थाथघन्क्त° |
| ३५२ | ६ | विप्रकृष्टाद्शात् | विप्रकृष्टादेशात् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३९९ | २६ | त्वां | त्वा |
| ४०७ | ८ | इपुयुधी° | इषियुधी° |
| ४०९ | २९ | महामते | महाव्रते |
| ४३० | २४ | याहीती | याहीति |
| ४४० | २९ | अनैकैः | अनेकैः |
| ४४६ | ९ | भ्रियत | ह्रियत |
| ४४७ | २३ | उमे | उभे |
| ५०९ | २३ | धातोर्वैधः | धातोर्वैध |
| ५६२ | २५ | ख-ग-ण-न-भ-मनुष्या | ख-ग-ण-भ-न मनुष्या |
| ५७८ | २६ | °द्वक्तृभेद | °द्वक्तृभेद |
| ५८१ | १३ | आपः | अपः |
| ६२० | २२ | मन्दयध्य | मन्दयध्यै |
| ६२३ | १८ | चकर्थं | चकर्थ |
| ६५९ | ५ | कष्टिऽप्रः | कृष्टिऽप्रः |
| ,, | ,, | अभिऽर्भतिम् | अभिऽर्भूतिम् |
| ६६५ | २ | जानः | जातः |
| ६६९ | ४ | ओजः | आजेः |
| ६९३ | २४ | द्विपाच्च° | द्विपाच्च° |
| ७२१ | ८ | निषष्णो | निषण्णो |
| ७५६ | १८ | उपदेशे शिति | उपदेशेऽशिति |
| ८२० | ४ | एतन्नामकस्यः | एतन्नामकस्य |
| ९०७ | २४ | शु म् | शुभम् |
| ९३६ | १२ | शत्रणाम् | शत्रूणाम् |
| ९४७ | ९ | यज्ञभमिम् | यज्ञभूमिम् |
| ९५१ | २१ | नूलम् | नूनम् |
| ९५२ | १४ | अद्भुतक्रत | अद्भुतक्रतू |
| ९५२ | १५ | नसा | तनसा |
| ९६९ | १३ | सदव | सदैव |

---

## द्वितीयभागे

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ११ | २५ | वृधि | वृधि | २०५ | १३ | याह्यर्वाङ | याह्यर्वाङ् |
| १५ | १९ | वसव: | वसव: | २०८ | १२ | वर्तनिम् | वर्तनिम् |
| ३१ | २५ | °मर्प्रयच्छ° | °मर्प्रयुच्छ° | २१३ | २२ | अश्नोते | अश्नोते[४] |
| ३६ | २ | मधुपृचं | मधुपृचं | २१७ | २० | वृद्धि: | वृद्धि: |
| ४६ | २४ | जिगीवां लक्ष° | जिगीवाँ लक्ष° | २२९ | १२ | जातवेदसे | जातऽवेदसे |
| | | | | २३५ | २५ | देवास: | देवास: |
| ५१ | २१ | पीयुर्षम् | पीयूर्षम् | २४१ | २८ | अप्सु | अप्ऽसु |
| ५५ | ९ | दधिरे | दधिरे | २५९ | २८ | पितराऽइव | पितराऽइव |
| ५७ | २२ | अप: | अप: | २६८ | २६ | नयतु | नयतु[६] |
| ५९ | १९ | वीरान्यवृंण° | वीरान्यावृंण° | २९१ | ६ | सुम्नयु: | सुम्नऽयु: |
| ५९ | २० | भूम्या | भूम्या: | २९४ | २७ | दीदिवांस° | दीदिवांस° |
| ६० | २२ | यजत° | यजत° | ३०५ | ९ | यद्वत्त° | यद्वृत्त° |
| ६६ | २१ | यदाशुभि: | यदाशुभि: | ३३२ | १२ | सख्यं | सख्यं |
| ७५ | ८ | अशीत्या | अशीत्या | ३६२ | ३ | अच्छ | अच्छ |
| ७७ | २४ | अतसाय्य: | अतसाय्यं: | ३७१ | २० | समी | समी |
| ८९ | १३ | बृहस्पते | बृहस्पते | ३८२ | १७ | यवम् | युवम् |
| ९६ | १७ | | विश्वं | ३८६ | ६ | अपऽसु | अप्ऽसु |
| १०२ | २४ | शृण्वन्ति | शृण्वन्ति | ३८९ | १० | °र्देवेभि | °र्देवेभि: |
| १५० | १९ | ᵛच | ᵛच[२] | ४१९ | ८ | मुग्रमुतये | °मुग्रमुतये |
| १५४ | २५ | चाशन्होतर्नि | चोशन्होतर्नि | ४४७ | २३ | उमे | उभे |
| १६२ | ७ | रयीणाम् | रयीणाम् | ५०२ | १ | °र्यज्ञियानां | र्यज्ञियानां |
| १६४ | १० | तनूनाम् | तनूनाम् | ५१४ | १६ | मित्राय | मित्राय |
| १६४ | १९ | °त्यक्षी इव | °त्यक्षीऽइव | ५२४ | २१ | त्वा | त्वा |
| १७५ | ४ | सामगाऽइव | सामगा:ऽइव | ५३० | २६ | अरुपितम् | अरुपितम् |
| १७८ | ४ | अपऽसु | अप्ऽसु | ५४८ | ११ | रथीर्ऋतस्य | रथीर्ऋतस्य |
| १९८ | २४ | प्रति | प्रति | ५५७ | ८ | न्यङ्कुत्ता° | न्यङ्कुत्ता° |
| २०३ | २१ | अमृक्ते | अमृक्ते | ५६२ | १० | स्य | स्य |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ५६३ | ७ | अर्कैः | अर्कैः | ६८० | २० | पथः | पथः |
| ५७६ | २१ | वयोऽधाः | वयःऽधाः | ६८३ | ९ | अग्रं | अग्रं |
| ५७८ | १ | मघवा | मघवा | ६९७ | १७ | देवानां | देवीनां |
| ५८६ | १६ | दळ्हा° | दृळ्हा° | ७०८ | ७ | अर्कैः | अर्कैः |
| ५८७ | ६ | सुतरणाँ | सुतरणाँ | ७२७ | ५ | शुनःऽशेपम् | शुनःशेपम् |
| ६०७ | १३ | °विवेनं तमि° | °विवेनन्तमि° | ७४६ | २० | पितूनाम° | पितूनाम° |
| ६०७ | १५ | अविऽवेनम् | अविऽवेनन् | ८३० | १५ | घोषात्पुरु | घोषात्पुरू |
| ६१७ | २ | भुरण्यन् | भुरण्यन् | ८४१ | ९ | एषे | आ । ईषे |
| ६१७ | १३ | प्रसितस्य | प्रसितस्य | ८६२ | २२ | यादृश्मिन् | यादृश्मिन् |
| ६२० | २२ | मन्दयध्य | मन्दयध्यै | ८९० | १० | जज्झंतीरिव | जझ्झंतीरिव |
| ६२० | २३ | सुतीर्थाभयं | सुतीर्थाभयं | ८९० | १२ | जज्झंतीःऽइव | जझ्झंतीःऽ-इव |
| ६३० | २० | कधि | कृधि | | | | |
| ६४६ | २० | चमसम् | चमसम् | ९०७ | २३ | दिदृक्षेण्यम् | दिदृक्षेण्यम् |
| ६४७ | २ | गणं | गणं | ९०९ | १९ | °मस्मान्नयत | °मस्मान्नयत |
| ६४७ | ४ | गणम् | गणम् | ९१० | ९ | अञ्जिभिः | अञ्जिऽभिः |
| ६५० | १९ | आनश | आनश | ९२३ | १२ | सुऽअर्वसम् | सुऽअर्वसम् |
| ६५८ | ११ | यतीषु | यतीषु | ९२३ | २१ | सुऽखेषु | सुऽखेषु |
| ६६२ | १२ | अपामग्ने° | अपामग्ने° | ९३० | १९ | स | सः |
| ६६४ | ४ | २.१३ | २.२४० | ९४९ | २ | घृतयोनी | घृतयोनी |
| ६६६ | २ | सुप्रयसा | सुप्रयसा | ९५० | १४ | इराऽवतीः | इराऽवतीः |
| ६६८ | २० | नव्यसीभिः | नव्यसीभिः | ९५६ | १६ | °मसुरः | °मसुरैः |
| ६६९ | १८ | उपमस्य | उपऽमस्य | ९६९ | १३ | सदव | सदैव |
| ६७० | १ | राजा | राजा | ९७० | १६ | पततम् | पततम् |
| ६७० | २ | क्रतुं | क्रतुं | ९७० | १७ | वाजि वसू | वाजिनीवसू |
| ६७० | ४ | उपमस्य | उपऽमस्य | ९८५ | ११ | | °विश्वरूपाः |
| ६७१ | १४ | वरते | वरते | ९८७ | १८ | देवानां | देवीनां |
| ६७९ | १५ | रथम् | रथम् | ९८९ | १९ | सर्यम् | सूर्यम् |
| ६८० | २० | स्वधया | स्वधया | | | | |

